**संबन्धोऽभिधीयते । सर्वोऽप्ययं वेदः प्रत्यक्षानुमानाभ्यामनवगतेष्टानिष्टप्राप्तिपरिहारोपायप्रकाशनपरः सर्वपुरुषाणां निसर्गत एव तत्प्राप्तिपरिहारयोरिष्टत्वात् । दृष्टविषये चेष्टानिष्टप्राप्तिपरिहारोपायज्ञानस्य प्रत्यक्षानुमानाभ्यामेव**

वैशिष्ट्येऽपि कर्मकाण्डेन नियतपूर्वापरभावानुपपत्तिलभ्यः सम्बन्धो वक्तव्यः । स च परीक्षकविप्रतिपत्तेरशक्यो विशेषतो ज्ञातुमित्याशङ्कयाऽऽह—**तस्येति** । प्रतिज्ञातं सम्बन्धं प्रकटयितुमसिद्धप्रमाणभावानां वेदान्तानां संबन्धाभिधानावसराभावात्तत्प्रामाण्यं प्रतिपाद्य पश्चात्तेषां कर्मकाण्डेन संबन्धविशेषवचनमुचितमिति मन्वानस्तत्प्रामाण्यं साधयति—**सर्वोऽपीति** । प्रत्यक्षानुमानाभ्यामित्यागमातिरिक्तप्रमाणोपलक्षणार्थम् । एषोऽर्थोऽध्ययनविध्युपात्तः सर्वोऽपि काण्डद्वयात्मको वेदो मानान्तरानधिगतं यदिष्टोपायादि तज्ज्ञापनपरस्तथा चाज्ञातज्ञापकत्वाविशेषात्तुल्यं प्रामाण्यं काण्डयोरिति । अथवा वेदनं वेदोऽनुभवः । स च शब्देतरमानायोग्यो रूपादिहीनत्वात् । 'एतदप्रमयम्' इति हि श्रुतिः । स चेष्टानिष्टप्राप्तिपरिहारोपायस्तस्यैव तत्तदात्मनाऽवस्थानात् । 'सच्च त्यच्चाभवत्', इत्यादिश्रुतेः । स च प्रकाशनः सर्वप्रकाशकत्वात् । 'तमेव भान्तमनुभाति सर्वम्' इति श्रुतेः । स च परोऽविद्यातत्कार्यातीतत्वात् । 'विरजः पर आकाशात्' इत्यादिश्रुतेः । एवरूपो वेदपदवेदनीयश्चिदेकरसः प्रत्यग्धातुरेव सर्वोऽपि कार्यकारणात्मकः प्रपञ्चः । 'आत्मैवेदं सर्वम्' इति श्रुतेः । तथा च यथोक्तं वस्तु प्रकाशयन्तो वेदान्ता विधिवाक्यवत्प्रमाणमिति । अथवा प्रत्यक्षादिनाऽनवगतो योऽसंविष्टप्राप्त्याद्युपायो ब्रह्मात्मा तस्य प्रकाशनपरः सर्वोऽप्ययं वेदः । तस्यैवाज्ञातत्वात्तत्र कर्मकाण्डं कर्मानुष्ठानप्रयुक्तबुद्धिशुद्धिद्वारा ब्रह्माधिगतावारादुपकारकम् । 'विविदिषन्ति यज्ञेन' इति श्रुतेः । ज्ञानकाण्डं तु साक्षादेव तत्रोपयुक्तम् । परमपुरुषस्यौपनिषदत्वश्रवणात् । 'सर्वे वेदा यत्पदमामनन्ति' इति च श्रुतेः । तद्युक्तं कर्मकाण्डवज्ज्ञानकाण्डस्यापि प्रामाण्यमिति । अधिकारिसौलभ्यप्रतिपादनद्वारा ज्ञानकाण्डप्रामाण्यमेव स्फुटयति—**सर्वपुरुषाणामिति** । अयमर्थः—सुखं मे स्याद्दुःखं मा भूदिति स्वभावतः शास्त्रं विना सर्वेषां पुरुषाणामनवच्छिन्नसुखादिमात्रेऽभिलाषोपलम्भात्तन्मात्रस्य च मोक्षत्वात्तत्कामिनो ज्ञानकाण्डाधिकारिणः सुलभत्वात्तस्मिन्प्रमां स्वार्थविषयामादधत्कथं तदप्रमाणमिति । ननु वेदस्य कार्यपरतया प्रामाण्यात्कर्मकाण्डवत्काण्डान्तरस्यापि कार्यपरतया प्रामाण्यमेष्टव्यमिति नेत्याह—**दृष्टविषय इति** । [11]क्रियाकारकफलेतिकर्तव्यतानामन्यतमस्मिन्कार्ये समीहितप्राप्त्याद्युपायभूते

१. इष्टप्राप्त्यनिष्टपरिहारोपायप्रदर्शनपरः । प्रत्यक्षेणानुमानेन यस्तूपायो न बुध्यते । "एनं विदन्ति वेदेन तस्माद्वेदस्य वेदता" इत्युक्तत्वात् ।

२. प्रत्यक्षेण भोजनं तृप्तिं चोपलभ्य तयोः अन्वयव्यतिरेकलिङ्गेन कार्यकारणभावोऽनुमीयते भोजनं तृप्तिसाधनं तदन्वयानुविधाय्यन्वयकत्वे सति तद्व्यतिरेकानुविधायिव्यतिरेकादिति प्रयोगः ।

३. परीक्षकविप्रतिपत्तिः केचन पूर्वोत्तरमीमांसे एकं शास्त्रं ततः तदध्ययनानन्तरमिति वदन्ति । केचन कर्मकाण्डप्रतिपाद्यकर्मानुष्ठानानन्तरमित्यूचुः । अतो विप्रतिपत्तिः ।

४. उपमानार्थापत्त्यनुपलब्धीत्यर्थः ।

५. काण्डद्वयं कर्मकाण्डं ज्ञानकाण्डञ्च । उपासनाया मानसकर्मत्वात् कर्मकाण्डेऽन्तर्भावः ।

६. वेदोऽनुभवः तद्रूपं ब्रह्मेत्यर्थः ।

७. "एतदप्रमयं" अप्रमेयं "अनाशिनोऽप्रमेयस्य" इति गीताभाष्ये आत्मनः प्रमाणप्रवृत्तेः पूर्वमेव स्वप्रकाशतया सिद्धत्वादात्मा न प्रमाणवेद्य । "न ह्यात्मानमप्रमाय कश्चित् प्रमाणव्यापारे प्रवर्तते" इत्युक्तम् । शब्देनापि लक्षणयैवात्मा वेद्यः, न तु शक्त्या । तदुक्तं "चकितमभिधत्ते श्रुतिरपि" इति ।

८. "आत्मैवेदं सर्वमि"ति बाधाया सामानाधिकरण्यं, यदिदं सर्वं तदात्मैव तद्व्यतिरेकेण नास्तीत्यर्थः ।

९. अज्ञानविषयो ब्रह्मैव, घटकादिकं तु अज्ञानविषयतावच्छेदकमेव । तस्य जडत्वेन तत्राज्ञानाप्रसक्तेः । अत एव वार्तिके—"अतोऽनुभव एवैको विषयोऽज्ञातलक्षणः" इति ।

१०. आराद् दूरे उपकारकं चित्तशुद्धिद्वारा परम्परया साधनम् ।

११. प्राभाकराः आहुः लोके गामानयेतिवाक्यात् सेवकप्रवृत्तिमुपलभ्य सर्वा प्रवृत्तिः कार्यताज्ञानसाध्येति व्युत्पत्तिर्भवति । ततश्च यत्र कार्यताबोधकं पदं नास्ति तत्र "सत्यं ज्ञानमनन्तं ब्रह्मे"त्यादौ कार्यतावाचिपदमध्याहृत्यैवोपासनादिरूपं कार्यमेव विधेयं, सिद्धबोधिपदैर्व्युत्पत्तिश्च नास्तीति । तन्निरासाय, क्रिया कारकेति । तथा च व्युत्पत्तिकाले कार्यताज्ञानमपेक्षितं यद्यपि, तथापि तस्य प्रत्यक्षादिना लब्धत्वान्न पदानां कार्यान्विते शक्तिः स्वीकार्या । सिद्धबोधिपदैर्व्युत्पत्तिश्च "पुत्रस्ते जातः" इत्यादौ प्रदर्शिता समन्वयसूत्रभामत्याम् ।

सिद्धत्वात्तत्राऽऽगमान्वेषणा। न चासति जन्मान्तरसंबन्ध्यात्मास्तित्वविज्ञाने जन्मान्तरेष्टानिष्टप्राप्तिपरिहारेच्छा स्यात्; स्वभाववादिदर्शनात्। तस्माज्जन्मान्तरसंबन्ध्यात्मास्तित्वे जन्मान्तरेष्टानिष्टप्राप्तिपरिहारोपायविशेषे च शास्त्रं प्रवर्तते। "येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके" इत्युपक्रम्य "अस्तीत्येवोपलब्धव्य" इत्येवमादि-निर्णयदर्शनात्। "यथा च मरणं प्राप्य" इत्युपक्रम्य—"योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः। स्थाणुमन्येऽनुसंयन्ति
५ यथाकर्म यथाश्रुतम्॥" इति च "स्वयं ज्योतिः" इत्युपक्रम्य "तं विद्याकर्मणी समन्वारभेते" "पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन" इति च। "ज्ञपयिष्यामि" इत्युपक्रम्य "विज्ञानमयः" इति च व्यतिरिक्तात्मास्तित्वम्।

व्युत्पत्तिकाले प्रत्यक्षादिसिद्धे तथाविधकार्यधियोऽन्यथालब्धत्वात्तत्र नाऽऽगमोऽनुसवेय.। न हि लोकवेदयोस्तद्भिन्नते अलौकिके तस्मिन्नव्युत्पत्तिप्रसङ्गात्। नचाव्युत्पन्नानि पदानि बोधकान्यतिप्रसङ्गात्। न च ब्रह्मण्यपि तुल्या व्युत्पत्त्य-नुपपत्तिः। तस्मिन्ब्रह्मत्वेनाऽऽत्मत्वेन च प्रसिद्धे। तत्तत्सामान्योपाधौ विज्ञानादिपदानां व्युत्पत्तेः सुकरत्वात्। तानि-
१० चालौकिकमखण्ड प्रत्यग्ब्रह्म [3]निर्लुंठितसामान्यविशेष लक्षणया बोधयन्ति। तस्माद्ब्रह्मैव वेदप्रमाणकं न कार्यमिति भावः। किंच तिष्ठतु वेदान्तप्रामाण्य कर्मकाण्डेऽपि व्यतिरिक्तात्मास्तित्ववादी सिद्धेऽर्थे प्रामाण्यमावश्यकम्। तदभावे तत्प्रामाण्यायोगात्। न हि भविष्यद्देहसंबन्ध्यात्मसद्भावानधिगमे पारलौकिकप्रवृत्तिविश्रम्भ.। तस्मात्कर्मकाण्डप्रामाण्य-मिच्छता सिद्धेऽर्थे भविष्यद्देहसंबन्धिन्यात्मनि स्वर्गादौ च तत्प्रामाण्यस्याभ्युपेयत्वात्कार्ये वेदप्रामाण्यानियमाद्वेदान्ताना-मपि स्वार्थे मानत्वं सिध्यतीत्याह—**न चेति**। ननु देहान्तरसबन्ध्यात्मज्ञान विनाऽपि विधिवशाददृष्टार्थक्रियासु प्रवृत्तिः
१५ स्यादिति नेत्याह—**स्वभावेति**। यदाऽऽत्मा देहान्तरसबन्धी शास्त्रान्मानान्तराच्च न प्रमितस्तदा भोक्तुरनवगमान्न प्रेक्षापूर्वकारी यागाद्यनुतिष्ठेत्। लोकायतस्य व्यतिरिक्तात्मास्तित्वमजानतो जन्मान्तरेष्टानिष्टप्राप्तिहानीच्छया वैदिक-क्रियास्वप्रवृत्तिदर्शनात्। अतो नातिरिक्तात्मज्ञान विना [6]सांपरायिके प्रवृत्तिरित्यर्थः। ननु विधयः साधनविशेषं बोधयन्तो नातिरिक्तात्मास्तित्ववादौ मानं वाक्यभेदप्रसङ्गादित्यत आह—**तस्मादिति**। अतिरिक्तात्मधिय विना पार-लौकिकप्रवृत्त्यनुत्पत्त्या कर्मकाण्डप्रामाण्यायोगादिति यावत्। विधीनां श्रुत्यर्थाभ्यामुभयार्थत्वमविरुद्धमित्यर्थः। न-
२० केवलं विधिभिरेवार्थादाक्षिप्तमतिरिक्तात्मास्तित्वं किंतु श्रुत्याऽपि स्वमुखेनोक्तमित्याह—**येयमिति**। निर्णयदर्शनाद्व्य-तिरिक्तात्मास्तित्वमिति संबन्धः। तत्रैव प्रकृतोपयोगित्वेनोपक्रमोपसंहारान्तरे दर्शयति—**यथा चेति**। पूर्ववदेव सबन्धद्योतनार्थं चकारः उपक्रमोपसंहारैकरूप्यात्कठवल्लीनामतिरिक्तात्मास्तित्वे तात्पर्यमुक्त्वा बृहदारण्यकवाक्य-स्यापि तत्र तात्पर्यमाह—**स्वयमिति**। न हि प्रसिद्धजडत्वस्य देहादेः स्वयंज्योतिष्ट्वमिति ज्योतिर्ब्राह्मणगतोपक्रमस्तद्वि-षयो देहादिव्यतिरिक्तात्मानमधिकरोति। त प्रेतं विद्याकर्मणी पूर्वोपार्जिते फलदानायानुगच्छत। स च गत्वा ज्ञान-
२५ कर्मानुगुण फलमनु भवतीति शारीरकब्राह्मणगतोपसंहारोऽपि जन्मान्तरसंबन्धविषयः। नचात्रैव भस्मीभवतो देहादेर्जन्मान्तरसबन्धो युक्तः। तेनाऽऽत्मा देहादिव्यतिरिक्तो जन्मान्तरसबन्धी सिद्धो ब्राह्मणाभ्यामित्यर्थः। अजात-शत्रुब्राह्मणे च व्येव त्वा ज्ञपयिष्यामीत्युपक्रमो व्यतिरिक्तात्मास्तित्वविषयः। न हि प्रत्यक्षे देहादौ जिज्ञासाऽस्ति। तत्रैवोपसंहारे "य एष विज्ञानमयः पुरुषः" इति विज्ञानमयविशेषणादतिरिक्तात्मास्तित्वं दर्शितं न हि देहादेर्विज्ञान-मयत्वमस्ति तस्मात्तदप्युपक्रमोपसहाराभ्या व्यतिरिक्तात्मास्तित्वं गमयतीत्याह—**ज्ञपयिष्यामीत्युपक्रम्येति**। नचोदा-
३० हृताना वाक्यानामप्रामाण्यम्। तत्प्रामाण्यस्यौत्पत्तिकसूत्र[7]हेत्वविशेषादभ्युपेयत्वादिति भावः।

---

१. स्वभाववाद—जलशैत्यादिवत् सर्वं स्वभावसिद्धं, न कारणात्कार्यमिति वादः।

२. अव्युत्पन्नपदाना बोधकत्वे भाषानभिज्ञस्यापि बोधः स्यात्।

३. सामान्यविशेषरहित शुद्धत्वात्।

४. परलोकसञ्चार्यात्माभावे परलोकार्थकर्मवाक्यस्याप्रामाण्यं स्यात्।

३५ ५. स्वर्गादौ—"यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम्।
अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम्॥" इति वाक्यात् स्वर्गपदार्थविज्ञानम्। यत्र साधनार्जन-दुःखं नास्ति, फलानुभवानन्तरं व्याध्यादि च नास्ति। केवलमिच्छया सर्वे पदार्थाः लभ्यन्त इत्यर्थः।

६. साम्परायिक = परलोकसाधन कर्म।

७ औत्पत्तिकं सूत्र—औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः। तस्य ज्ञानमुपदेशः, अव्यतिरेकश्चार्थे अनुपलब्धे
४० तत्प्रमाणं बादरायणस्यानपेक्षत्वात् ( पू मी १-१-५ ) इति सूत्रे वेदसामान्यस्यानपेक्षत्वेन प्रामाण्यमुक्तम्।

### देहान्तरानुयाय्यात्मा न प्रत्यक्षः

**तत्प्रत्यक्षविषयमेवेति चेत् । न, वादिविप्रतिपत्तिदर्शनात् । न हि देहान्तरसंबन्धिन आत्मनः प्रत्यक्षेणास्तित्वविज्ञाने लोकायतिका बौद्धाश्च नः प्रतिकूलाः स्युर्नास्त्यात्मेति वदन्तः । न हि घटादौ प्रत्यक्षविषये कश्चिद्विप्रतिपद्यते नास्ति घट इति । स्थाण्वादौ पुरुषादिदर्शनान्नेति चेत् । न । निरूपितेऽभावात् । न हि प्रत्यक्षेण निरूपिते स्थाण्वादौ विप्रतिपत्तिर्भवति । वैनाशिकास्त्वहमिति प्रत्यये जायमानेऽपि देहान्तरव्यतिरिक्तस्य नास्तित्वमेव प्रतिजानते ।** ५

### अनुमानान्नात्मसिद्धिः

**तस्मात्प्रत्यक्षविषयवैलक्षण्यात्प्रत्यक्षान्नाऽऽत्मास्तित्वसिद्धिः । तथाऽनुमानादपि । श्रुत्याऽऽत्मास्तित्वे लिङ्गस्य दर्शितत्वाल्लिङ्गस्य च प्रत्यक्षविषयत्वान्नेति चेत् । न, जन्मान्तरसंबधस्याग्रहणात् । आगमेन त्वात्मास्तित्वेऽवगते वेदप्रदर्शितलौकिकलिङ्गविशेषैश्च, तदनुसारिणो मीमांसकास्तार्किकाश्चाहंप्रत्ययलिङ्गानि च वैदिकान्येव स्वमति-**

यथोक्तात्मन्यहंप्रत्ययो मानं तत्र देहाकारास्फुरणादतिरिक्तात्मास्तित्वस्य तेनैव स्फूर्त्युपपत्तेरतो न तत्र १० श्रुतिप्रामाण्यमिति शङ्कते—**तत्प्रत्यक्षेति** । प्रत्यक्षस्य विषयोऽवकाशो यस्मिन्नित्यतिरिक्तात्मास्तित्वमुच्यते । यद्यपि व्यतिरिक्तात्मास्तित्व त्वदभिप्रायेणाहंधीगोचरस्तथाऽपि न सा व्यतिरेकमात्मनो गोचरयति युक्त्यागमविवेकशून्यानामहंप्रत्ययभाजां व्यतिरेकप्रत्ययप्राप्तौ विपश्चिता विप्रतिपत्त्यभावप्रसङ्गादिति परिहरति—**न वादीति** । वेदप्रतिकूलावादिनो नास्तिका नैव विवादं मुञ्चन्तीत्याह—**न हीति** । तेषु प्रातिकूल्यसंभावनार्थं विशेषणं नेत्यादि । इति वदन्तः सन्तो नोऽस्माकं प्रतिकूला न हि स्युरेवं वेदनस्यैवासंभवादध्यक्षविरोधादिति योजना । प्रत्यक्षे विषये विप्रतिपत्त्यभावे १५ दृष्टान्तमाह—**न हीति** । तत्र व्यभिचारं शङ्कते—**स्थाण्वादाविति** । प्रत्यक्षे धर्मिणि स्थाणुर्वा पुरुषो वेति विप्रतिपत्तेरुपलम्भान्न प्रत्यक्षे विप्रतिपत्त्यभावो व्यभिचारादिति शङ्कार्थः । आदिपदेन पाषाणादौ गजादिविप्रतिपत्तिः संगृह्यते । किं प्रत्यक्षमात्रे विप्रतिपत्तिः किंवा तेन विविक्ते प्रतिपन्ने । नाऽऽद्योऽङ्गीकारात् । नचैवमात्मनि प्रत्यक्षे विप्रतिपत्तावपि नाऽऽगमान्वेषणा । तेनैव तन्निरासेन तन्निर्णयादिति मन्वानो द्वितीयं दूषयति—**नेत्यादिना** । प्रत्यक्षतो विविक्तेऽर्थे विप्रतिपत्त्यभावं प्रपञ्चयति—**न हीति** । आत्मनः स्थूलदेहव्यतिरिक्तत्वं न प्रत्यक्षमिति प्रतिपाद्य २० सूक्ष्मदेहव्यतिरिक्तत्वमपि नाहंप्रत्ययग्राह्यमित्याह—**वैनाशिकास्त्विति** । ते खल्वहमिति धियमनुभवन्ति । तथाऽपि देहान्तरं स्थूलदेहातिरिक्त सूक्ष्मं तत्र प्रधानभूताया बुद्धेरतिरिक्तस्याऽऽत्मनो नास्तित्वमेव पश्यन्ति । तन्नाहंधिया सूक्ष्मदेहातिरिक्तात्मसिद्धिरित्यर्थः ।

किंच प्रत्यक्षस्य विषयो रूपादिस्तद्राहित्यं तद्वैलक्षण्यं तदात्मनोऽस्ति । "अशब्दमस्पर्शमरूपम्" इत्यादिश्रुतेः न हि रूपादि तदाधारं विना प्रत्यक्षं क्रमते । अतो न देहाद्यतिरिक्तात्मास्तित्वस्य प्रत्यक्षात्प्रसिद्धिरित्याह—**तस्मादिति** । प्रत्यक्षतो विविक्ते विप्रतिपत्त्ययोगात् । प्रकृते च तद्दर्शनादिति यावत् । अथेच्छादयः क्वचिदाश्रिता २५ गुणत्वाद्रूपवदित्यनुमानादतिरिक्तात्मसिद्धिरिति नेत्याह—**तथेति** । नाऽऽत्मास्तित्वप्रसिद्धिरिति सबन्धार्थस्तथाशब्दः । अयं भावः—इच्छादीनां स्वातन्त्र्ये स्वरूपासिद्धिः पारतन्त्र्ये परस्पराश्रयत्वमाधारस्येदानीमेव साध्यमानत्वात् । क्वचिच्छब्देन चाऽऽश्रयमात्रवचने सिद्धसाधनत्वं मनसस्तदाश्रयस्य सिद्धत्वादात्मोक्तौ च दृष्टान्तस्य साध्यविकलतेति । "यः प्राणेन प्राणिति" इत्यादिश्रुत्या प्राणनादिव्यापाराख्यस्य लिङ्गस्याऽऽत्मास्तित्वे प्रदर्शितत्वात्तस्य च व्याप्तिसापेक्षस्य प्रत्यक्षादिसिद्धात्मविषयत्वान्न तस्य शब्दैकगम्यतेति शङ्कते—**श्रुत्येति** । आत्मनः स्वातन्त्र्येण लिङ्गगम्यत्वाभिप्रायेण श्रुत्या लिङ्गं नोपन्यस्तमिति परिहरति—**नेति** । योऽचेतनव्यापारः स चेतनाधिष्ठानपूर्वको यथा ३० रथादिव्यापारः । प्राणनादिव्यापारस्याप्यचेतनव्यापारत्वाच्चेतनाधिष्ठानपूर्वकत्वमिति संभावनामात्रेण लिङ्गोपन्यासः । न हि निश्चायकत्वेन तदुपन्यस्यते । आत्मनो जन्मान्तरसंबन्धस्य प्रमाणान्तरेणाग्रहणात्तद्व्याप्तलिङ्गायोगादित्याह—**जन्मान्तरेति** । ननु व्यतिरिक्तात्मास्तित्वमागमैकगम्यं चेत्कथं तत्प्रत्यक्षमनुमेयं चेति वादिनो वदन्तीति तत्राऽऽह— ३५ **आगमेन त्विति** । "येयं प्रेते विचिकित्से"त्याद्यागमेन "को ह्येवान्यात्" इत्यादिवेदोक्तैश्च प्राणनादिभिर्लौकिकैर्लिङ्गविशेषैरात्मास्तित्वे सिद्धे यथोक्तात्मसिद्धिमनुसरन्तो वादिनो वैदिकमेवाहंप्रत्ययं प्रतिलभमाना वैदिकान्येव च लिङ्गानि पश्यन्तः स्वोत्प्रेक्षानिर्मितानि तानीति कल्पयन्तो द्विधाऽऽत्मानं वदन्ति । वस्तुतस्त्वात्मा यथोक्तश्रुत्यैकसमधिगम्य इत्यर्थः ।

---

१. प्रत्यक्षश्चानुमेयश्चात्मेति । ४०

**प्रभवानीति कल्पयन्तो वदन्ति प्रत्यक्षश्चानुमेयश्चाऽऽत्मेति । सर्वथाऽप्यस्त्यात्मा देहान्तरसंबन्धीत्येवं प्रतिपत्तुर्देहान्त-**

**अज्ञाननिवर्तकब्रह्मज्ञानायोपनिषदारम्भः**

**रगतेष्टानिष्टप्राप्तिपरिहारोपायविशेषार्थिनस्तद्विशेषज्ञापनाय कर्मकाण्डमारब्धम् । न त्वात्मन इष्टानिष्टप्राप्तिपरि-
हारेच्छाकारणमात्मविषयमज्ञानं कर्तृभोक्तृस्वरूपाभिमानलक्षणं तद्विपरीतब्रह्मात्मस्वरूपविज्ञानेनापनीतम् ।
५ यावद्धि तन्नापनीयते तावदय कर्मफलरागद्वेषादिस्वाभाविकदोषप्रयुक्तः शास्त्रविहितप्रतिषिद्धातिक्रमेणापि प्रवर्त-
मानो मनोवाक्कायैर्दृष्टादृष्टानिष्टसाधनान्यधर्मसंज्ञकानि कर्माण्युपचिनोति बाहुल्येन स्वाभाविकदोषबलीयस्त्वात् ।
ततः स्थावरान्ताऽधोगतिः । कदाचिच्छास्त्रकृतसंस्कारबलीयस्त्वम् । ततो मनआदिभिरिष्टसाधनं बाहुल्येनोपचिनोति**

**धर्मविभागः**

**धर्माख्यम् । तद्द्विविधम्—ज्ञानपूर्वकं केवलं च । तत्र केवलं पितृलोकादिप्राप्तिफलम् । ज्ञानपूर्वकं देवलोकादिब्रह्म-
१० लोकान्तप्राप्तिफलम् । तथा च शास्त्रम् "आत्मयाजी श्रेयान्देवयाजिनः" इत्यादि । स्मृतिश्च "द्विविधं कर्म वैदिकम्"
इत्याद्या । साम्ये च धर्माधर्मयोर्मनुष्यत्वप्राप्तिः । एव ब्रह्माद्या स्थावरान्ता स्वाभाविकाविद्यादिदोषवतो धर्माधर्म-**

तस्यास्येत्यादिना काण्डयो॰ सम्बन्धं प्रतिज्ञाय तादर्थ्येन सिद्धेऽर्थे वेदान्तप्रामाण्य सर्वोऽपीत्यादिना
प्रसाध्याधुना कर्मभि शुद्धबुद्धेर्वैराग्यादिद्वारा ज्ञानोत्पत्तिरिति तयो॰ सबन्ध कथयति—**सर्वथाऽपीति**। आगमान्मा-
नान्तराद्वा व्यतिरिक्तात्मास्तित्वप्रतिपत्तावपीत्यर्थ॰ । पुरुषार्थोपायविशेषार्थिनस्तज्ज्ञापनार्थं कर्मकाण्डमारब्ध चेत्तर्हि
१५ तत्रोक्तकर्मभिरेव विवक्षितपुमर्थसिद्धेर्वेदान्तारम्भवैयर्थ्यान्न सबन्धोक्ति॰ सावकाशेत्याशङ्क्याऽऽह—**नत्विति**।
आत्माज्ञान खल्वनर्थकारणमन्वयव्यतिरेकशास्त्रगम्य मिथ्याज्ञानकार्यलिङ्गक च । तच्चाकर्तृभोक्तृब्रह्मात्मज्ञानाद-
पनेयम् । न हि तत्कर्मकाण्डोक्तैरेव कर्मभि शक्यमपनेतु विरोधाभावात् । तस्मात्तद्धानार्थं ज्ञानसिद्धये वेदान्तारम्भ-
भवादुक्तसबन्धसिद्धिरित्यर्थ॰ । यदि कर्मभिरज्ञान न निवर्तते । मा निवर्तिष्ट । सत्येव तस्मिन्कर्मवशान्मोक्ष स्या-
दित्याशङ्क्याऽऽह—**यावद्धीति**। सम्यग्ज्ञानमेव साक्षान्मोक्षहेतुर्न कर्म । तत्तु प्रणाड्या तदुपयोगि । न हि सत्येवाज्ञाने
२० मुक्ति. । तस्मिन्सति ससारस्य दुर्वारत्वात् । तस्मात्कर्मकाण्डस्य वैराग्यद्वारा प्रवेशो मुक्ताविति भाव॰ । अयमित्यज्ञो
निर्दिश्यते । रागद्वेषादीत्यादिशब्देनाविद्यास्मिताभिनिवेशादयो गृह्यन्ते । दोषाणा स्वाभाविकत्वं शास्त्रानपेक्षत्वम् ।
अपिकार॰ सभावनार्थं । दृष्टत्वमन्वयव्यतिरेकसिद्धत्वम् । अदृष्टत्वं शास्त्रमात्रगम्यत्वम् । अधर्मोपचयप्राचुर्ये
हेतुमाह—**स्वाभाविकेति**। अथ वैराग्यार्थं कर्मफल प्रपञ्चयन्नधर्मफलमाह—**तत इति**। उक्तं हि—

"शरीरजै॰ कर्मदोषैर्याति स्थावरता नर." इति ।

२५ तत्किं पुण्योपचयाभावादनवकाश स्वर्गादिफलमिति नेत्याह—**कदाचिदिति**। शास्त्रीयसस्कारस्य बलीयस्त्वे
फलितमाह—**तत इति**। आदिशब्दो वाग्देहविषय. । फलविभाग वक्तु कर्म भिनत्ति—**तद्द्विविधमिति**। तस्य
मुक्तिफलत्व निरसितु फल विभजते—**तत्रेति**। केवलमिष्टादिकर्मेति शेषः । 'कर्मणा पितृलोक.' इति हि वक्ष्यति ।
तन्मिन्फले नानात्वमभिप्रेत्याऽऽदिशब्द । 'विद्यया देवलोक' इति श्रुतिमाश्रित्याऽऽह—**ज्ञानेति**। देवलोको
यस्याऽऽदिर्ब्रह्मलोको यस्यान्तस्तस्यार्थस्य प्राप्तिरेव फलमस्येति विग्रह । उक्तेऽर्थे शातपथी श्रुतिं प्रमाणयति—
३० **तथा चेति**। सर्वत्र परमात्मभावनापुर.सर नित्य कर्मानुतिष्ठन्नात्मयाजी, कामनापुर सर देवान्यजमानो देवयाजी ।
तयोर्मध्ये कतर श्रेयानिति विचारे सत्यात्मयाजी श्रेयानिति निर्णय कृत । अतो ज्ञानपूर्वकं कर्म देवलोकस्य कामना-
पूर्व तु पितृलोकस्य प्रापकमित्यर्थ. ।

'प्रवृत्त च निवृत्त च द्विविधं कर्म वैदिकम् । इह वाऽमुत्र वा काम्य कर्म कीर्त्यते ॥
निष्काम ज्ञानपूर्वं तु निवृत्तमभिधीयते ।'

३५ इत्यादि मनुस्मृतिं चात्रैवोदाहरति—**स्मृतिश्चेति** । धर्माधर्मयोरेकैकस्य फलमुक्त्वा मिश्रयो॰ फलमाह—**साम्ये
चेति**। उक्तं हि—'उभाभ्या पुण्यपापाभ्या मानुष्य लभतेऽवश' इति ।

त्रिविधमपि कर्मफल वैराग्यार्थ सक्षिप्योपसहरति—**एवमिति**। सा चाविद्याकृतत्वादनर्थरूपेत्याह—

---

१. सर्वथाऽपीति—आगमादेव देहान्तरसम्बन्ध्यात्मास्तित्वावगम इति स्वमतम् । परे त्वनुमानात्तदवगमं मन्यन्ते
तथा वा भवतु नाम तादृशात्मगतेष्टानिष्टप्राप्तिपरिहारोपाय॰ आगमेनैव ज्ञातव्यस्तदर्थ कर्मकाण्डारम्भ । यद्यपि
४० सामान्यत॰ उपायनामान्यमवगम्येत, तथापि साधनविशेषोऽग्निहोत्रादि. आगमेनैव बोधनीय ।

**साधनकृता संसारगतिर्नामरूपकर्माश्रया। तदेवेदं व्याकृतं साध्यसाधनरूपं जगत्प्रागुत्पत्तेरव्याकृतमासीत्। स एष बीजाङ्कुरादिवदविद्याकृतः संसार आत्मनि क्रियाकारकफलाध्यारोपणलक्षणोऽनादिरनन्तोऽनर्थ इत्येतस्माद्विरक्तस्य**

**अश्वोपासनविधानफलम्**

**अविद्यानिवृत्तये तद्विपरीतब्रह्मविद्याप्रतिपत्त्यर्थोपनिषदारभ्यते। अस्य त्वश्वमेधकर्मसंबन्धिनो विज्ञानस्य प्रयोजनं येषामश्वमेधे नाधिकारस्तेषामस्मादेव विज्ञानात्तत्फलप्राप्तिः। "विद्यया वा कर्मणा वा" "तद्धैतल्लोकजिदेव" इत्येवमादिश्रुतिभ्यः। कर्मविषयत्वमेव विज्ञानस्येति चेत्। न। "योऽश्वमेधेन यजते य उ चैनमेवं वेद" इति विकल्पश्रुतेः। विद्याप्रकरणे चाऽऽम्नानात्। कर्मान्तरे च संपादनदर्शनाद्विज्ञानात्तत्फलप्राप्तिरस्तीत्यवगम्यते।** ५

**स्वाभाविकेति**। विचित्रकर्मजन्यतया तस्या वैचित्र्यमाह—**धर्माधर्मेति**। तर्हि धर्माधर्माभ्यामेव तन्निर्माणसंभवात्कृतमविद्ययेत्यत आह—**नामेति**। तेषा सूक्ष्मावस्थाऽविद्या तदालम्बनेति यावत् धर्मादेरविद्यायाश्च निमित्तत्वोपादानत्वाभ्यामुयोग इति भावः। ननु ससारगतेराविद्यत्वमयुक्तं प्रत्यक्षादिप्रतिपन्नत्वा'त्तन्नामरूपाभ्यामेव व्याक्रिय'तेति श्रुतौ च नामरूपात्मनो जगतोऽभिव्यक्तिश्रवणान्न च प्रामाणिकस्याविद्याकृतत्वमत आह—**तदेवेदमिति**। जगतः स्वरूपमात्मा तत्राध्यस्तत्वात्तस्मादात्मतत्त्वेऽनभिव्यक्ते प्रत्यक्षादिना श्रुत्या चाभिव्यक्तमिव दृश्यमानमपि जगदनभिव्यक्तमेवेति न तस्याविद्याकृतत्वक्षतिरिति भावः। अविद्याकृता संसारगतिमनुभाषते—**स एष इति**। नन्वविद्याकृतत्वे कथमनादित्वमित्याशङ्क्य तस्य प्रवाहरूपेणेत्याह—**बीजाङ्कुरादिवदिति**। चैतन्यवदात्मनि तस्याविद्याकृतत्वानुपपत्तिमाशङ्क्य नानारूपत्वेन ततो विलक्षणत्वादेकरूपे युक्त तस्य कल्पितत्वमित्याह—**क्रियेति** तर्हि कादाचित्कतया साधनापेक्षामन्तरेण नाशो भविष्यतीत्याशङ्क्याऽऽह—**अनादिरिति**। अनादेरपि संसारस्य प्रागभाववन्निवृत्ति स्यादितिचेत्तथाऽपिःब्रह्मविद्यामन्तरेण नाशो नास्तीत्याह—**अनन्त इति**। प्रयत्नतो हेयत्व द्योतयितुमनर्थ इति विशेषणम्। नैसर्गिक इति पाठे तु कारणरूपेण तत्त्वमुन्नेयम्। यस्मात्कर्म संसारफलं न मोक्ष फलयति तस्मात्सनिदानसंसारनिवर्तकात्मज्ञानार्थत्वेन साधनचतुष्टयसपन्नमधिकारिणमधिकृत्य वेदान्तारम्भ. संभवतीत्युपसंहरति—**इत्येतस्मादिति**। १०, १५

यथोक्तज्ञानार्थत्वेनोपनिषदारम्भे 'ब्रह्म वा इदमग्र आसीत्' इत्यारब्धव्यं तस्मादारभ्य ज्ञानोपदेशात् 'उषा वा अश्वस्य' इत्यारम्भस्तु न युक्तः साक्षादत्र तदनुक्तेरित्याशङ्क्यास्मादारभ्योपनिषदारम्भेऽभीष्टं फलमभिधित्समानः प्रथममश्वमेधोपासनफलमाह—**अस्य त्विति**। राजयज्ञत्वादश्वमेधस्य तदनधिकारिणामपि ब्राह्मणादीनां तत्फलार्थिनामस्मादेवोपासनात्तदाप्तिरिति मत्वा श्रुतौ तदुपासनोक्तित्यर्थं। किमत्र नियामकमित्याशङ्क्य विकल्पश्रवणं केवलस्यापि ज्ञानस्य साधनत्वं सूचयतीत्यर्थतो विकल्पश्रुतिमुदाहरति—**विद्ययेति**। तत्फलप्राप्तिरिति पूर्वेण सम्बन्ध। तत्रैव श्रुत्यन्तरमाह—**तद्धेति** तदेतत्प्राणदर्शनं लोकप्राप्तिसाधन प्रसिद्धमिति यावत्। आदिशब्देन केवलोपास्त्या ब्रह्मलोकाप्तिवादिन्य. श्रुतयो गृह्यन्ते[3]। अश्वमेधे यदुपासनं तस्याप्यश्वादिवत्तच्छेषत्वेन फलवत्त्वान्न स्वातन्त्र्येण तद्वत्त्वमङ्गेषु स्वतन्त्रफलाभावादिति शङ्कते—**कर्मविषयत्वमिति**। ज्ञानस्य क्रत्वर्थत्व दूषयति—**नेति**। पूर्वत्रार्थतो दर्शिता विकल्पश्रुतिमत्र हेतुतया स्वरूपतोऽनुक्रामति—**योऽश्वमेधेनेति**। "सर्व पाप्मान तरति तरति ब्रह्महत्या"मिति संबन्धः। ज्ञानकर्मणोस्तुल्यफलत्वस्य न्याय्यत्वादिति शेषः। उपास्तिफलश्रुतेरर्थवादत्वमाशङ्क्याश्वमेधवदुपास्तेरपि कर्मत्वाद्विहितत्वात्कर्मप्रकरणाद्व्युत्थितत्वाच्च मैवमित्याह—**विद्येति**। फलश्रुतेरर्थवादत्वाभावे हेत्वन्तरमाह—**कर्मान्तरे चेति**। अश्वमेधातिरिक्ते कर्मणि 'अयं वाव लोकोऽग्निरि'त्यादौ चित्याग्न्यादावेतल्लोकादिसपादनस्य स्वतन्त्रफलोपासनस्य दर्शनान्न फलश्रुतेरर्थवादतेत्यर्थ। अश्वमेधोपासन न क्रत्वर्थ किन्तु पुरुषार्थ तत्र चाधिकारोऽश्वमेधक्रत्वनधिकारिणामपीत्येतावदेवेष्टं चेदुपासने कर्मप्रकरणस्थेऽपि तल्लाभाद्विद्याप्रकरणे नास्याध्ययनमर्थवदित्या- २०, २५, ३०

१. विद्यया=उपासनेन, कर्मणा=अनुष्ठानेन वेति विकल्प उक्तः। इदमेव "योऽश्वमेधेन यजते य उ चैनमेवं वेद" इति तैत्तिरीयकसंहितायामुक्तम्। ३५

२. कर्मान्तरे सम्पादनं—प्राप्यलोकस्य कर्मान्तरे सम्पादन तथा—चयनगताग्नावेतल्लोकसम्पादनमेतल्लोकरूपेण ध्यानम्। एतदेतल्लोकप्राप्तिसाधनम्।

३ ताश्च उपकोसलविद्याशाण्डिल्यविद्यादयः। तत्र तत्र तेऽर्चिषमभिसम्भवन्त्यर्चिषोह इत्यादिनोत्तरायणमार्गश्रुते। अहङ्ग्रहोपासकाना सर्वेषां ब्रह्मलोकप्राप्तेर्निर्णीतत्वाच्च "कार्यं बादरिरस्य गत्युपपत्तेरि"ति सूत्रेण (ब्र. सूत्र. ४-३-७)। ४०

सर्वेषां च कर्मणां परं कर्माश्वमेधः[1]। समष्टिव्यष्टिप्राप्तिफलत्वात्[2]। तस्य चेह ब्रह्मविद्याप्रारम्भ आम्नानं सर्वकर्मणां

**नित्यानां मुक्तिफलत्वशंका**

संसारविषयत्वप्रदर्शनार्थम्[3]। तथा च दर्शयिष्यति फलमशनायां मृत्युभावम्। न[4] नित्यानां संसारविषयफलत्वमिति चेत्। न। सर्वकर्मफलोपसंहारश्रुतेः। सर्वं हि पत्नीसंबद्धं कर्म। "जाया मे स्यात्" "एतावान्वै कामः" इति
५ निसर्गत एव सर्वकर्मणां काम्यत्वं दर्शयित्वा पुत्रकर्मापरविद्यानां च "अयं लोकः पितृलोको देवलोकः" इति फलं दर्शयित्वा त्र्यन्नात्मकतां चान्त उपसंहरिष्यति "त्रयं वा इदं नाम रूपं कर्म" इति सर्वकर्मणां फलं व्याकृतं संसार एवेति। इदमेव त्रयं प्रागुत्पत्तेस्तर्ह्यव्याकृतमासीत्। तदेव पुनः सर्वप्राणिकर्मवशाद्व्याक्रियते बीजादिव वृक्षः। सोऽयं व्याकृताव्याकृतरूपसंसारोऽविद्याविषयः क्रियाकारकफलात्मकतयाऽऽत्मरूपत्वेनाध्यारोपितोऽविद्ययैव

शङ्कयाऽऽह—सर्वेषां चेति। परत्वे हेतु—समष्टीति। अनुवृत्तव्यावृत्तरूपहिरण्यगर्भप्राप्तिहेतुत्वात्तस्य श्रेष्ठतेत्यर्थः।
१० तस्य पुण्यश्रेष्ठत्वेऽपि प्रकृते किमायातं तदाह—तस्य चेति। यदा क्रतुप्रधानस्याश्वमेधस्योपास्तिसहितस्यापि संसारफलत्वं तदाऽल्पीयसामग्निहोत्रादीनां संसारफलत्वं किंवाच्यमित्यस्मिन्कर्मराशौ बन्धहेतौ विरक्ताः साधनचतुष्टयविशिष्टा ज्ञानमपेक्षमाणास्तदुपाये श्रवणादावेव सर्वकर्मसंन्यासपूर्वके कथं प्रवर्तेरन्नित्याशयवती श्रुतिरुपासनाविद्यारम्भेऽभिदधाति। तेनोषा वा अश्वस्येत्याद्युपनिषदारम्भो युक्तोऽस्य विशिष्टाधिकारिसमर्पकत्वादित्यर्थः। उपासनफलस्य संसारगोचरत्वमेव कुतः सिद्धमत आह—तथा चेति। 'अशनाया हि मृत्युः' 'स वै नैव रेमे' 'सोऽबिभे'दिति
१५ भयारत्यादिश्रवणादुपास्तियुक्तक्रतुफलस्य सूत्रस्य बन्धमध्यपातित्वाद्विशिष्टोऽपि क्रतुर्न मुक्तये पर्याप्नोतीत्यर्थः।

उक्ते सर्वकर्मणां बन्धफलत्वे नित्यनैमित्तिकानां न तत्फलत्वं तेषां विध्युद्देशे फलाश्रुतेर्नष्टाश्वदग्धरथन्यायेन मुक्तिफलत्वलाभादिति शङ्कते—न नित्यानामिति। 'एतावान्वै काम' इति सर्वकर्मणामविशेषेण फलसम्बन्धश्रवणात्पश्चादेश्च काम्यफलत्वस्य तद्विध्युद्देशवशात्सिद्धत्वा'त्कर्मणा पितृलोक' इति वाक्यस्य नित्यादिकर्मफलविषयत्वान्न मोक्षफलत्वाशङ्केति परिहरति—नेति। उक्तमेव स्फुटयति—सर्वं हीति। पत्नीसम्बन्धे मानमाह—जायेति।
२० तथाऽपि कथं कर्मणः सर्वस्य कामोपायत्वं तत्राऽऽह—एतावान्वै काम इति। कथं तर्हि तेषां फलभेदो लभ्यते तत्राऽऽह—पुत्रेति। अथैव फलविभागे कथं समष्टिव्यष्टिप्राप्तिफलत्वमश्वमेधस्योक्तमत आह—त्र्यन्नात्मकतां चेति। अस्याध्यायस्यावसाने कर्मफलस्य हिरण्यगर्भरूपतां त्रयमित्याद्या श्रुतिरुपसंहरिष्यतीत्यर्थः। उपसंहारश्रुतेस्तात्पर्यमाह—सर्वकर्मणामिति। कर्मफलं संसारश्चेत्प्रागुदनुष्ठानात्तदभावान्मुक्तानां पुनर्बन्धः स्यादित्याशङ्कयाऽऽह—इदमेवेति। तर्हि तस्यामवस्थायामिति यावत्। तस्य पुनर्व्याकरणे कारणमाह—तदेवेति। व्याकृताव्याकृतात्मनः संसारस्य प्रामाणिकत्वेन
२५ सत्यत्वमाशङ्क्याविद्याकृतत्वेन तन्मिथ्यात्वमुक्तं स्मारयति—सोऽयमिति। स एव हि भ्रान्तिविषयो न प्रामाणिकस्तत्कुतोऽस्य सत्यतेत्यर्थः। कथमस्याऽऽत्मन्यद्वये कूटस्थे प्राप्तिरित्याशङ्क्याऽऽह—क्रियेति। समारोपे मूलकारणमाह—

---

१. परमश्वमेधः तस्यैव "तरति ब्रह्महत्यामि"त्यनेन ब्रह्महत्याख्यमहापातकनिवर्तकत्वश्रवणात्। "ब्रह्महत्याश्वमेधाभ्यां न परं पुण्यपापयोरि"त्युक्तेश्च।

२. सर्वलिङ्गशरीरेष्वनुग्राहकत्वेन समष्टिः। स्वयमपि पृथक्लिङ्गशरीराभिमानितया व्यष्टिः।

३० ३. प्रदर्शनार्थं कैमुतिकन्यायेनेति शेषः।

४. नित्यानामग्निहोत्रादीनां फलं नोक्तं, मुक्तिसाधनञ्च कर्म नोक्तम्। अत उभयाकाङ्क्षया नित्यकर्मणां मुक्तिफलत्वमस्त्वित्यर्थः।

५. नित्यानामपि पत्नीसम्बद्धत्वादग्निहोत्रादीनाम् एतावान् = सर्वं पत्नीसम्बद्धं कर्मेत्यर्थः। कामः काम्य एवेत्यर्थः। नित्यादीनामपि स्वर्गादिफलमस्ति। "तद्यथा आम्रे फलार्थे निर्मिते छायागन्धावनूत्पद्येते। एवं धर्मं चर्य-
३५ माणमर्था अनूत्पद्यन्ते" इति आपस्तम्बस्मृतेः। अतो न तस्य मुक्तिः फलम्। त्रयं वा इदमिति अध्यायान्ते "नामरूपकर्मात्मकः प्रपञ्च" इत्युक्त्वा स "प्राणेन" हिरण्यगर्भेण छन्न इत्युक्तेः सर्वं हिरण्यगर्भात्मकमित्यर्थः।

६. अशनाया—अशितुमिच्छा अश्वमेधफलभूतस्य हिरण्यगर्भस्य जाता, ततस्तन्निवृत्तये कुमारभक्षणे प्रवृत्तः स एव मृत्युः।

**मूर्तामूर्ततद्वासनात्मकः, अतो विलक्षणोऽनामरूपकर्मात्मकोऽद्वयो नित्यशुद्धबुद्धमुक्तस्वभावोऽपि क्रियाकारकफल-भेदादिविपर्ययेणावभासते । अतोऽस्मात्क्रियाकारकफलभेदस्वरूपादेतावदिदमिति साध्यसाधनरूपाद्विरक्तस्य कामादिदोषकर्मबीजभूताविद्यानिवृत्तये रज्ज्वामिव सर्पविज्ञानापनयाय ब्रह्मविद्याऽऽरम्यते ।**

**इति सम्बन्धभाष्यम्**

**अविद्ययेति** । आत्मन्यविद्यारोपित द्वैतमित्यत्र 'द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं चे'त्यादिवाक्यं प्रमाणयति—**मूर्तेति** । ५ नन्वात्मन्यारोपो नोपपद्यते तस्य नित्यशुद्धबुद्धमुक्तस्वभावस्य द्वैतविलक्षणत्वादसति सादृश्येऽध्यासासिद्धेरत आह—**अत इति** । संसाराद्वैलक्षण्यमेव प्रकटयति—**अनामेति** । आदिपदेनान्येऽपि विपर्ययभेदाः संगृह्यन्ते । आरोपे प्रमिणोमि करोमि भुञ्जे चेत्यनुभवं प्रमाणयति—**अवभासत इति** । आत्मन्यध्यासः सादृश्याद्यभावेऽपि नभसि मलिनत्वादिव-द्यतोऽनुभूयतेऽत सविलासाविद्यानिवर्तकब्रह्मविद्यार्थत्वेनोपनिपदारम्भः सभवतीत्युपसंहरति—**अत इति** । एतावदित्य-नर्थात्मत्वोक्तिः । तत्त्वज्ञानादज्ञाननिवृत्तौ दृष्टान्तमाह—**रज्ज्वामिवेति** । १०

इति सम्बन्धभाष्यटीका

ॐ। उषा वा अश्वस्य मेध्यस्य शिरः। सूर्यश्चक्षुर्वातः प्राणो व्यात्तमग्निर्वैश्वानरः, संवत्सर आत्माऽश्वस्य मेध्यस्य। द्यौः पृष्ठमन्तरिक्षमुदरं पृथिवी पाजस्यं दिशः पार्श्वे अवान्तरदिशः पर्शव ऋतवोऽङ्गानि मासाश्चार्धमासाश्च पर्वाण्यहोरात्राणि प्रतिष्ठा

तत्र तावदश्वमेधविज्ञानाय[1] "उषा वा अश्वस्य" इत्यादि। तत्राश्वविषयमेव दर्शनमुच्यते प्राधान्या-
५ दश्वस्य। प्राधान्यं च तन्नामाङ्कितत्वात्क्रतोः प्राजापत्यत्वाच्च[2]। उषा इति ब्राह्मो मुहूर्त[3] उषाः। वैशब्दः स्मारणार्थः प्रसिद्धं कालं स्मारयति। शिरः प्राधान्यात्। शिरश्च प्रधानं शरीरावयवानाम्। मेध्यस्य मेधार्हस्य यज्ञियस्योषाः शिर इति सम्बन्धः। कर्माङ्गस्य[4] पशोः संस्कर्तव्यत्वात्कालादिदृष्टयः शिरआदिषु क्षिप्यन्ते। प्राजापत्यत्वं च प्रजापतिदृष्टयध्यारोपणात्। काललोकदेवतात्वाध्यारोपणं[5] च प्रजापतित्वकरणं पशोः। एवंरूपो हि प्रजापतिः। विष्णुत्वादिकरणमिव प्रतिमादौ। सूर्यश्चक्षुः शिरसोऽनन्तरत्वात्सूर्याधिदैवतत्वाच्च। वातः प्राणो
१० वायुस्वाभाव्यात्। व्यात्तं विवृतं मुखमग्निर्वैश्वानरः। वैश्वानर इत्यग्नेर्विशेषणम्[6]। वैश्वानरो नामाग्निर्विवृतं मुखमित्यर्थो मुखस्याग्निदैवतत्वात्। संवत्सर आत्मा संवत्सरो द्वादशमासस्त्रयोदशमासो वा। आत्मा

एवमुपनिषदारम्भे स्थिते प्राथमिकब्राह्मणयोरवान्तरतात्पर्यमाह—तत्र तावदिति। आद्यस्य पुनरवान्तर-तात्पर्यं दर्शयति—तत्रेति। नन्वश्वमेधस्याङ्गबाहुल्ये कस्मादश्वस्याङ्गविषयमेवोपासनमुच्यते तत्राऽऽह—प्राधान्यादिति तदेव कथमिति तदाह—प्राधान्यं चेति। प्रजापतिदेवताकत्वाच्चाश्वस्य प्राधान्यमित्याह—प्राजापत्यत्वाच्चेति।
१५ प्रतीकमादाय व्याचष्टे—उषा इत्यादिना। स्मारणार्थत्वमेव निपातस्य स्फुटयति—प्रसिद्धमिति। शास्त्रीये[7] लौकिके च व्यवहारे प्रसिद्धो ब्राह्मो मुहूर्तस्त कालमिति यावत्। उपसि शिर शब्दप्रयोगे दिनावयवेषु तस्य प्राधान्य हेतुमाह—प्राधान्यादिति। तथापि कथ तत्र तच्छब्दप्रयोगस्तत्राऽऽह—शिरश्चेति। आश्वमेधिकाश्वशिरस्युषसो दृष्टिः कर्तव्येत्याह—अश्वस्येति। कालादिदृष्टिरश्वाङ्गेषु किमिति क्षिप्यतेऽश्वाङ्गदृष्टिरेव तेषु किं न स्यादित्याशङ्क्याऽऽह—कर्माङ्गस्येति। अङ्गेष्वनङ्गमतिक्षेपे हेत्वन्तरमाह—प्राजापत्यत्वं चेति। अश्वस्य सेत्स्यतीति शेष, तत्र हेतु—प्रजापतीति। ननु
२० कालादिदृष्टयोऽश्वावयवेष्वारोप्यन्ते न तस्य प्रजापतित्व क्रियते तत्राऽऽह—कालेति। कालाद्यात्मको हि प्रजापतिः। तथा च यथा प्रतिमायां विष्णुत्वकरण तद्दृष्टिस्तथा कालादिदृष्टिरश्वावयवेषु तस्य प्रजापतित्वकरणम्। अश्वमेधाधिकारी हि सत्यश्वे कर्मणो वीर्यवत्तरत्वार्थं कालादिदृष्टीरश्वावयवेषु कुर्यात्। तदनधिकारी त्वश्वाभावे स्वात्मानमश्वं कल्पयित्वा स्वशिर प्रभृतिषु कालादिदृष्टिकरणेन प्रजापतित्व सपाद्य प्रजापतिरस्मीति ज्ञानात्तद्भाव प्रतिपद्येतेति भावः। चक्षुपि सूर्यदृष्टौ हेतुमाह—शिरस इति। उपमोऽनन्तरत्र सूर्ये दृष्टं चक्षुषि च शिरसोऽनन्तरत्वं दृश्यते
२५ तस्मात्तत्र तद्दृष्टिर्युक्तेत्यर्थः। तत्रैव हेत्वन्तरमाह—सूर्येति। "आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत्" इति श्रुतेश्चक्षुषि सूर्योऽधिष्ठात्री देवता तेन सामीप्यात्तत्र तद्दृष्टिरित्यर्थः। अश्वप्राणे वायुदृष्टौ चलनस्वाभाव्यं हेतुः। अश्वस्य विदारिते मुखे भवत्वग्निदृष्टिस्तथाऽपि पर्यायोपादान व्यर्थमित्याशङ्क्य क्रव्यादादिव्यावृत्त्यर्थं विशेषणमित्याह—वैश्वानर इत्यग्नेरिति। "अग्निर्वाग्भूत्वा मुख प्राविशत्" इति श्रुतिमाश्रित्य मुखे तद्दृष्टौ हेतुमाह—मुखस्येति। अधिक-

---

१ अश्वमेधविज्ञानाय = अश्वमेधाङ्गभूताश्वाद्यङ्गोपासनाविधानाय।
३० २ प्राजापत्यत्वाच्च—"अश्वस्तूपरो गोमृगस्ते प्राजापत्या" इति श्रुत्या अश्वयागः प्रजापतिदैवत्यः।
३ ब्राह्मो मुहूर्त—सूर्योदयात्प्राचीनं घटिकाद्वयम्।
४ कर्माङ्गस्येति—"आदित्यादिमतयश्चाङ्ग उपपत्ते" (ब्र. सू ४-१-६) इत्यधिकरणे कर्माङ्गानि उद्गीथादीनि आदित्यादिदृष्ट्या संस्कार्याणि न तु आदित्यादीना संस्कार्यत्व कर्मणि अङ्गत्वाभावात् आज्यावेक्षणादिवत् संस्कृताना यागे उपयोगात्। प्रजापतिः काललोकादिरूप, तेषामश्वावयवेष्वारोपात् अश्वस्य प्रजापतिरूपत्वसम्पत्ति।
३५ ५ काललोकेति—अश्वस्य शिरः उष कालः पृष्ठ द्युलोक इत्यादिरूपेण। सूर्यश्चक्षु इति च देवतारोप।
६ अग्निः इत्येवोक्ते क्रव्यात् श्मशानाग्निः प्रतीयेत तद्वारणाय वैश्वानर इति विशेषण जाठराग्निरित्यर्थ।
७ शास्त्रीये व्यवहारे—ब्राह्मे मुहूर्ते उत्थाय धर्ममर्थांश्च चिन्तयेदित्यादौ। लौकिके—कृष्यादौ।

**नक्षत्राण्यस्थीनि नभो मांसानि। ऊवध्यं सिकताः सिन्धवो गुदा यकृच्च क्लोमानश्च पर्वता ओषधयश्च वनस्पतयश्च लोमान्युद्यन्पूर्वार्धो निम्लोचञ्जघनार्धो यद्विजृम्भते तद्विद्योतते यद्विधूनुते तत्स्तनयति यन्मेहति तद्वर्षति वागेवास्य वाक् ॥१॥**

शरीरम्। कालावयवानां च संवत्सरः शरीरं शरीरं चाऽऽत्मा। "मध्यं ह्येषामङ्गानामात्मा" इति श्रुतेः। अश्वस्य मेध्यस्येति सर्वत्रानुषङ्गार्थं पुनर्वचनम्। द्यौः पृष्ठम् ऊर्ध्वत्वसामान्यात्। अन्तरिक्षमुदरं सुषिरत्वसामान्यात्। ५
पृथिवी पाजस्यं पादस्यमिति वर्णव्यत्ययेन पादासनस्थानमित्यर्थः। दिशश्चतस्रोऽपि पार्श्वे पार्श्वेन दिशां सम्बन्धात्। पार्श्वयोर्दिशां च संख्यावैषम्यादयुक्तमिति चेत्। न। सर्वमुखत्वोपपत्तेरश्वस्य पार्श्वाभ्यामेव सर्वदिशां सम्बन्धाददोषः। अवान्तरदिश आग्नेय्याद्याः पर्शवः पार्श्वास्थीनि। ऋतवोऽङ्गानि संवत्सरावयवत्वादङ्गसाधर्म्यात्। मासाश्चार्धमासाश्च पर्वाणि संधयः संधिसामान्यात्। अहोरात्राणि प्रतिष्ठाः। बहुवचनात्प्राजापत्यदैवपित्र्यमानुषाणि प्रतिष्ठाः पादाः प्रतितिष्ठत्येतैरिति। अहोरात्रैर्हि कालात्मा प्रतितिष्ठत्यश्वश्च पादैः। नक्षत्राण्यस्थीनि शुक्लत्व- १०
सामान्यात्। नभो नभस्था मेघा अन्तरिक्षस्योदरत्वोक्तेर्मांसान्युदकरुधिरसेचनसामान्यात्। ऊवध्यमुदरस्थमर्धजीर्णमशनं सिकता विश्लिष्टावयवत्वसामान्यात्। सिन्धवः स्यन्दनसामान्यान्नद्यो गुदा नाड्यो बहुवचनाच्च। यकृच्च क्लोमानश्च हृदयस्याधस्ताद्दक्षिणोत्तरौ मांसखण्डौ। क्लोमान इति नित्यं बहुवचनमेकस्मिन्नेव। पर्वताः काठिन्यादुच्छ्रितत्वाच्च। ओषधयश्च क्षुद्राः स्थावरा वनस्पतयो महान्तो लोमानि केशाश्च यथासम्भवम्। उद्यन्नुद्गच्छन्भवति सविताऽऽमध्याह्नादश्वस्य पूर्वार्धो नाभेरूर्ध्वमित्यर्थः। निम्लोचन्नस्तं यन्नामध्याह्नाज्जघनार्धोऽपरार्धः पूर्वापरत्व १५
साधर्म्यात्। यद्विजृम्भते गात्राणि विनामयति विक्षिपति तद्विद्योतते विद्योतनं मुखघनविदारणसामान्यात्।

मासमनुसृत्य त्रयोदशमासो वेत्युक्तम्। शरीरे संवत्सरदृष्टिरित्यत्राऽऽत्मत्वं हेतुमाह—कालेति। आत्मा हस्तादीनामङ्गानामिति शेषः। कालावयवानां संवत्सरस्याऽऽत्मत्ववदङ्गानां शरीरस्याऽऽत्मत्वे प्रमाणमाह—मध्यं हीति। पुनरुक्तेरर्थवत्त्वमाह—अश्वस्येति। पृष्ठे द्युलोकदृष्टौ हेतुमाह—ऊर्ध्वत्वेति। उदरेऽन्तरिक्षदृष्टौ निमित्तमाह—सुषिरत्वेति। पादा अस्यन्ते यस्मिन्निति व्युत्पत्तिमाश्रित्य विवक्षितमाह—पादेति। अश्वस्य हि खुरे पादासनत्व- २०
सामान्यात्पृथिवीदृष्टिरित्यर्थः। पार्श्वयोर्दिक्चतुष्टयदृष्टौ हेतुमाह—पार्श्वेनेति। द्वे पार्श्वे चतस्रश्च दिशस्तत्र कथं तयोस्तदारोपणं द्वाभ्यामेव द्वयोः सम्बन्धादिति शङ्कते—पार्श्वयोरिति। यद्यपि द्वे दिशौ द्वाभ्यां पार्श्वाभ्यां संबध्येते तथाऽप्यश्वस्य प्राङ्मुखत्वे प्रत्यङ्मुखत्वे च दक्षिणोत्तरयोस्तन्मुखत्वे च प्राक्प्रतीच्योर्दिशोस्ताभ्यां सम्बन्धसंभवात्तत्र तद्दृष्टिरविरुद्धेति परिहरति—नेत्यादिना। तदुपपत्तौ चाश्वस्य चरिष्णुत्वं हेतूकर्तव्यम्। पार्श्वास्थिष्ववान्तरदिगामारोपे पार्श्वदिक्संबन्धो हेतुः। ऋतवः संवत्सरस्याङ्गानि हस्तादीनि च देहस्यावयवास्तस्मादृतुदृष्टिरङ्गेषु कर्तव्येत्याह— २५
ऋतव इति। अस्ति मासादीनां संवत्सरसंधित्वमस्ति च शरीरसंधित्वं पर्वणामतस्तेषु मासादिदृष्टिरित्याह—संधीति। युगसहस्राभ्यां प्राजापत्यमेकमहोरात्रम्। अयनाभ्यां दैवम्। पक्षाभ्यां पित्र्यम्। षष्टिघटिकाभिर्मानुषमिति भेदः। प्रतिष्ठाशब्दस्य पादविषयत्वं व्युत्पादयति—प्रतितिष्ठतीति। पादेष्वहोरात्रदृष्टिसिद्ध्यर्थं युक्तिमुपपादयति—अहोरात्रैरिति। अस्थिषु नक्षत्रदृष्टौ हेतुमाह—शुक्लत्वेति। नभःशब्देनान्तरिक्षं किमिति न गृह्यते मुख्ये सत्युपचारायोगादित्याशङ्क्य पुनरुक्तिं परिहर्तुमित्याह—अन्तरिक्षस्येति। उदकं सिञ्चन्ति मेघा मांसानि रुधिरमतः सेककर्तृत्व- ३०
सामान्यान्मांसेषु मेघदृष्टिरित्याह—उदकेति। अश्वजठरविपरिवर्तिन्यर्धजीर्णे सिकतादृष्टौ हेतुमाह—विश्लिष्टेति। किमिति गुदशब्देन पायुरेव न गृह्यते शिराग्रहणे हि मुख्यार्थातिक्रमः स्यात्तत्राऽऽह—बहुवचनाच्चेति। चकारोऽवधारणार्थः। यद्यपि बहूक्त्या शिराभ्योऽर्थान्तरमपि गुदशब्दमर्हति तथाऽपि स्यन्दनसादृश्यात्तास्वेव सिन्धुदृष्टिरिति तासामिह ग्रहणमिति भावः। कुतो मांसखण्डयोर्द्वित्वमेकत्र बहुवचनाद्बहुत्वप्रतीतेरित्याशङ्क्य दारा इतिवद्बहूक्तेर्गतिमाह—क्लोमान इति। तयोः पर्वतदृष्टौ हेतुद्वयमाह—काठिन्यादित्यादिना। क्षुद्रत्वसाधर्म्यादोषधिदृष्टिर्लोमसु ३५
महत्त्वसामान्याद्वनस्पतिदृष्टिश्चाश्वकेशेषु कर्तव्येत्याह—यथासंभवमिति। पूर्वत्वसामान्यान्मध्याह्नात्प्रागवस्थादित्यदृष्टिरश्वस्य नाभेरूर्ध्वभागे कर्तव्येत्याह—उद्यन्नित्यादिना। अपरत्वसादृश्यादश्वस्य नाभेरपरार्धे मध्याह्नादनन्तरभाव्यादित्यदृष्टिः कार्येत्याह—निम्लोचन्नित्यादिना। विजृम्भत इत्यादौ प्रत्ययार्थो न विवक्षितः। विजृम्भणं मुखविदारणं विद्योतनं पुनर्मेघगतमतो विद्योतनदृष्टिर्जृम्भणे कर्तव्येत्याह—मुखेति। स्तनयतीति स्तनितमुच्यते तद्-

**अहर्वा अश्वं पुरस्तान्महिमाऽन्वजायत तस्य पूर्वे समुद्रे योनी रात्रिरेनं पश्चान्महिमाऽन्वजायत तस्यापरे समुद्रे योनिरेतौ वा अश्वं महिमानावभितः संबभूवतुः। हयो भूत्वा देवानवहद्वाजी गन्धर्वानर्वाऽसुरानश्वो मनुष्यान्समुद्र एवास्य बन्धुः समुद्रो योनिः ॥२॥**

**इति प्रथमाध्यायस्य प्रथमं ब्राह्मणम्**

५ यद्विधूनुते गात्राणि कम्पयति तत्स्तनयति गर्जनशब्दसामान्यात्। यन्मेहति मूत्रं करोत्यश्वस्तद्वर्षति वर्षणं तत्सेचनसामान्यात्। वागेव शब्द एवास्याश्वस्य वागिति नात्र कल्पनेत्यर्थः ॥१॥

अहर्वा इति। सौवर्णराजतौ महिमाख्यौ ग्रहावश्वस्याग्रतः पृष्ठतश्च स्थाप्येते तद्विषयमिदं दर्शनम्। अहः सौवर्णो ग्रहो दीप्तिसामान्याद्धि। अहरश्वं पुरस्तान्महिमाऽन्वजायतेति कथम्? अश्वस्य प्रजापतित्वात्। प्रजापतिर्ह्यादित्यादिलक्षणोऽह्ना लक्ष्यते। अश्वं लक्षयित्वाऽजायत सौवर्णो महिमा ग्रहो वृक्षमनु विद्योतते विद्युदिति
१० यद्वत्। तस्य ग्रहस्य पूर्वे पूर्वः समुद्रे समुद्रो योनिर्विभक्तिव्यत्ययेन। योनिरित्यासादनस्थानम्। तथा रात्री राजतो ग्रहो वर्णसामान्याज्जघन्यत्वसामान्याद्वा। एनमश्वं पश्चात्पृष्ठतो महिमाऽन्वजायत तस्यापरे समुद्रे योनिः। महिमा महत्त्वात्। अश्वस्य हि विभूतिरेषा यत्सौवर्णो राजतश्च ग्रहावुभयतः स्थाप्येते। तावेतौ वै महिमानौ

दृष्टिर्गात्रकम्पे कर्तव्येत्यत्र हेतुमाह—गर्जनेति। मूत्रकरणे वर्षणदृष्टौ कारणमाह—सेचनेति। अश्वस्य हेषितशब्दे नास्त्यारोपणमित्यतो न सादृश्यं वक्तव्यमित्याह—नात्रेति। ॥१॥

१५ अश्वावयवेषु कालादिदृष्टीर्विधायाश्व प्रजापतिरूप विवक्षित्वा कण्डिकान्तर गृहीत्वा तात्पर्यमाह—अहरित्यादिना। ग्रहौ हवनीयद्रव्याधारौ पात्रविशेषावग्रत पृष्ठतश्चेति सज्ञपनात्प्रागूर्ध्वं चेति यावत्। प्रसिद्धा तावदहनि दीप्ति सौवर्णे च ग्रहे साऽस्त्यतस्तस्मिन्नहर्दृष्टिरिति दर्शनं विभजते—अहरिति। अश्वसज्ञपनात्पूर्वं यो महिमाख्यो ग्रहः स्थाप्यते स चेदहर्दृष्ट्योपास्यते कथं सोऽश्वमन्वजायतेति पश्चादश्वस्य तज्जन्मवाचोयुक्तिरिति शङ्कते—अहरश्वमिति। नाय पश्चादर्थोऽनुशब्द किंतु लक्षणार्थं। तथा चाश्वस्य प्रजापतिरूपत्वात्तं लक्षयित्वा ग्रहस्य
२० यथोक्तस्य प्रवृत्तेरुपदेशादश्वमन्वजायतेत्यविरुद्धमिति परिहरति—अश्वस्येति। तदेव स्फुटयति—प्रजापतिरिति। काललोकदेवतात्मा प्रजापतिरश्वात्मना दृश्यमानोऽत्राहर्दृष्ट्या दृष्टेन ग्रहेण लक्ष्यते। तथा चाश्वमन्वजायतेति[2] श्रुतिरविरुद्धेत्यर्थः। अनुशब्दो न पश्चाद्वाचीत्यत्र दृष्टान्तमाह—वृक्षमिति। यदा वृक्षं लक्षयित्वा तस्याग्रे विद्युद्विद्योतते तदा वृक्षमनु विद्योतते सेति प्रयुज्यते। तथाऽत्राप्यनुशब्दो न पश्चादर्थ इत्यर्थः। यत्र च स्थाने ग्रहः स्थाप्यते तत्पूर्वसमुद्रदृष्ट्या ध्येयमित्याह—तस्येति। पूर्वत्वमत्र सादृश्यम्। कथ सप्तमी प्रथमार्थे योज्यते छन्दस्यर्थानुसारेण
२५ व्यत्ययसभवादित्याह—विभक्तीति। यथा सौवर्णे ग्रहेऽहर्दृष्टिरुपदिष्टा तथा राजते ग्रहे रात्रिदृष्टिः कर्तव्येत्याह—तथेति। अस्ति हि चन्द्रातपवत्त्वाद्रात्रेः शौक्ल्यमस्ति च राजतस्य ग्रहस्य तद्युक्त तत्र रात्रिदर्शनमित्याह—वर्णेति। रजत सुवर्णाज्जघन्यमह्नश्च रात्रिरतो वा सादृश्यात्तत्र रात्रिदृष्टिरित्याह—जघन्येति। प्रजापतिरूपं प्रकृतमश्वं लक्षयित्वा तत्सज्ञपनात्पश्चादस्य प्रवृत्ति दर्शयति—एनमिति। तदासादनस्थाने पश्चिमसमुद्रदृष्टिर्विधेयेत्याह—तस्येति। कथमेतौ ग्रहौ महिमाख्यावुक्तौ महत्त्वोपेतत्वादित्याह—महिमेति। अथाश्वविषय दर्शनमादिश्य ग्रहविषयं तदादिशतो

---

३० १. अहर्वा अश्वमित्यादि—अश्वमेध सोमयागविशेषः। तत्र च आग्रयणग्रहस्य उक्थ्यग्रहस्य च सोमरसपूरणमध्यकाले 'य प्राणत' 'य आत्मदा' इति मन्त्राभ्या द्वौ ग्रहौ गृह्येते। तयोर्मध्ये प्रथमः सुवर्णमयः द्वितीय राजत। तौ चाश्वस्य मरणात्पूर्वं पश्चाच्च पुरत पश्चाद्भागे च स्थाप्येते यथाक्रम सौवर्ण पुरस्तात् राजतः पश्चात्। तौ च महिमपदेन व्यह्नियेते। "महिमानौ गृह्येते" इत्यादौ। तयोः महत्त्वञ्च यजमानस्य महत्त्वप्रापकत्वात्। तदुक्त ब्राह्मणे "प्रजापतिरकामयत महानन्नादः स्यामिति। स एतावश्वमेधे महिमानावपश्यत्। तावगृह्णीत। ततो वै
३५ स महानन्नादोऽभवत् यः कामयेत महानन्नाद स्यामिति। स एतावश्वमेधे महिमानौ गृह्णीत" इति। तयोर्मध्ये सौवर्णग्रहस्यहोमः वपाहोमात्पूर्वं क्रियते। इतरस्तु ततः परमिति विशेषः। अश्वस्य संज्ञपनात् प्रागूर्ध्वञ्चेति टीका कथमागतेति न ज्ञायते पूर्वोक्तस्तु कल्पसूत्रे दृश्यते।

२ अश्वमन्वजायत—अश्वं प्रजापतिरूपमुपलक्ष्य सौवर्णग्रह अजायत तत्र स्थाप्यत इत्यर्थः। अहर्दृष्ट्या दृष्टेन सौवर्णग्रहेण प्रजापतिरुपलक्ष्यते। वृक्षमनुविद्योतते विद्युदितिवत्।

अथ प्रथमाध्यायस्य द्वितीयं ब्राह्मणम्

**नैवेह किंचनाग्र आसीन्मृत्युनैवेदमावृतमासीदशनाययाऽशनाया हि मृत्युस्त-न्मनोऽकुरुताऽऽत्मन्वी स्यामिति। सोऽर्चन्नचरत्तस्यार्चत आपोऽजायन्तार्चते वै मे कमभूदिति तदेवार्कस्यार्कत्वं कँ ह वा अस्मै भवति य एवमेतदर्कस्यार्कत्वं वेद ॥१॥**

महिमाख्यौ ग्रहावश्वमभितः सम्बभूवतुरुक्तलक्षणावेव सम्भूतौ। इत्थमसावश्वो महत्त्वयुक्त इति पुनर्वचनं ५ स्तुत्यर्थम्। तथा च हयो भूत्वेत्यादि स्तुत्यर्थमेव। हयो हिनोतेर्गतिकर्मणो विशिष्टगतिरित्यर्थः। जातिविशेषो वा। देवानवहद्देवत्वमगमयत्प्रजापतित्वात्, देवानां वा वोढाऽभवत्। ननु निन्दैव वाहनत्वम्। नैष दोषः। वाहनत्वं स्वाभाविकमश्वस्य स्वाभाविकत्वादुच्छ्रायप्राप्तिर्देवादिसंबन्धोऽश्वस्येति स्तुतिरेवैषा। तथा वाज्यादयो जातिविशेषाः वाजी भूत्वा गन्धर्वानवहदित्यनुषङ्गः। तथाऽर्वा भूत्वाऽसुरान्। अश्वो भूत्वा मनुष्यान्। समुद्र एवेति परमात्मा बन्धुर्बन्धनं बध्यतेऽस्मिन्निति। समुद्रो योनिः कारणमुत्पत्तिं प्रति। एवमसौ शुद्धयोनिः शुद्धस्थितिरिति स्तूयते १० "अप्सु योनिर्वा अश्वः" इति श्रुतेः प्रसिद्ध एव वा समुद्रो योनिः ॥२॥

इति प्रथमाध्यायस्य प्रथमं ब्राह्मणम्

अथाग्नेरश्वमेधोपयोगिकस्योत्पत्तिरुच्यते।[1] तद्विषयदर्शनविवक्षयैवोत्पत्तिः स्तुत्यर्था। नैवेह किंचनाग्र आसीत्। इह संसारमण्डले किंचन किंचिदपि नामरूपप्रविभक्तविशेषं नैवाऽऽसीन्न बभूव। अग्रे प्रागुत्पत्तेर्मनआदेः। किं शून्यमेव बभूव ? शून्यमेव स्यात् "नैवेह किंचन" इति श्रुतेः। न कार्यं कारणं वाऽऽसीत्; उत्पत्तेश्च। उत्पद्यते १५ हि घटः। अतः प्रागुत्पत्तेर्घटस्य नास्तित्वम्।

वाक्यभेदः स्यान्नेत्याह—**अश्वस्येति**। किमत्र नियामकमित्याशङ्क्य पुनरुक्तिरिति मत्वाऽऽह—**ताविद्यादिना**। वैशब्दार्थकथनम्—**एवेति**। वाक्यशेषोऽप्यत्रानुगुणीभवतीत्याह—**तथा चेति**। हयशब्दनिष्पत्तिपुरःसरं तदर्थमाह—**हय इति**। वाज्यादिशब्दाना जातिविशेषवाचित्वादत्रापि तदेव ग्राह्यमिति पक्षान्तरमाह—**जातीति**। देवानां देवत्वप्रापकत्वं कथमस्येत्याशङ्क्याह—**प्रजापतित्वादिति**। अश्वं स्तोतुमारभ्य कल्पान्तरोक्त्या तन्निन्दावचनमनुचि- २० तमिति शङ्कते—**नन्विति**। उपक्रमविरोधो नास्तीति परिहरति—**नैत्यादिना**। समुत्पद्य भूतानि द्रवन्त्यस्मिन्निति व्युत्पत्त्या परमगम्भीरस्येश्वरस्य समुद्रशब्दतामाह—**परमात्मेति**। तत्र योनित्वमुत्पादकत्व बन्धुत्वं स्थापकत्वं समुद्रत्वं विलापकत्वमिति भेद। अथ परमात्मयोनित्वादिवचनमुपास्याश्वस्य क्वोपयुज्यते तत्राऽऽह—**एवमिति**। श्रुत्यन्तरा-नुरोधेन समुद्रो योनिरित्यत्र समुद्रशब्दस्य रूढिमनुजानाति—**अप्सुयोनिरिति** ॥२॥

इति प्रथमाध्यायस्य प्रथम ब्राह्मणम् ॥१॥ २५

अश्वादिदर्शनोक्त्यनन्तरमग्निदर्शनं वक्तुं ब्राह्मणान्तरमवतारयति—**अथेति**। नैवेहेत्यादौ तद्दृष्टिर्नास्तीति चेत्सत्यं तत्राग्नेर्जन्म वक्तुं भूमिका क्रियत इत्याह—**अग्नेरिति**। वायोरग्निरित्यादौ प्रसिद्ध तज्जन्मेति चेत्सत्यं तद्विशेषस्यात्र जन्मोक्तिरित्याह—**अश्वमेधेति**। दर्शने विधित्सिते किं जन्मोक्त्येति चेत्तत्राऽऽह—**तद्विषयेति**। अग्नि-दर्शनस्य विधातुमिष्टस्य सिद्धयर्थमुपास्याग्निस्तुतिफला तदुत्पत्तिरिष्टा शुद्धजन्मत्वादुत्कृष्टत्वेनायमुपास्यो राजादिव-दित्यर्थः। तात्पर्यमुक्त्वा वाक्यमादायाक्षराणि व्याचष्टे—**नैवेत्यादिना**। नामरूपाभ्या विभक्तो विशेषो यस्मिन्निति ३० बहुव्रीहि। अत्र शून्यवादी लब्धावकाशोऽविमृश्य परेष्टश्रुत्यवष्टम्भेन स्वपक्षमाह—**किमित्यादिना**। कार्यस्य प्रागसत्त्वे हेत्वन्तरमाह—**उत्पत्तेश्चेति**। विमत प्रागसदुत्पद्यमानत्वाद्यन्नैवं न तदेवं यथा परेष्टं ब्रह्मेत्यर्थः। हेत्वसिद्धिं शङ्कित्वो-त्तरमाह—**उत्पद्यते हीति**। घटग्रहण कार्यमात्रस्योपलक्षणार्थम्। उक्तमनुमान निगमयति—**अत इति**।

---

१. अश्वमेधोपयोगिकस्याग्नेरिति अश्वमेधाङ्गस्येत्यर्थ। तत्राग्निचयनं नित्य प्रकृतौ ज्योतिष्टोमे त्वनित्यम् "अग्निः सोमाङ्ग वेच्छतामि"तिशास्त्रात् तस्य स्थण्डिलरूपस्य विराडात्मनोपासनमत्र विधीयते। उपास्यप्रशंसार्थं ३५ प्रजापतेः विशुद्धोत्पत्त्यादिकमित्यर्थः। वार्तिकम्—१-९

### शून्यवादिन आक्षेपः समाधिश्च

ननु कारणस्य न नास्तित्वं मृत्पिण्डादिदर्शनात्। यन्नोपलभ्यते तस्यैव नास्तिताऽस्तु कार्यस्य न तु कारणस्योपलभ्यमानत्वात्। न। प्रागुत्पत्तेः सर्वानुपलम्भात्। अनुपलब्धिश्चेदभावहेतुः[1] सर्वस्य जगतः प्रागुत्पत्तेर्न कारणं कार्यं वोपलभ्यते। तस्मात्सर्वस्यैवाभावोऽस्तु। न। "मृत्युनैवेदमावृतमासीत्" इति श्रुतेः। यदि हि
५ किंचिदपि नाऽऽसीद्येनाऽऽव्रियते यच्चाऽऽव्रियते तदा नावक्ष्यन्मृत्युनैवेदमावृतमिति। न हि भवति गगनकुसुमच्छन्नो वन्ध्यापुत्र इति। ब्रवीति च मृत्युनैवेदमावृतमासीदिति। तस्माद्येनाऽऽवृतं कारणेन यच्चाऽऽवृतं कार्यं प्रागुत्पत्तेस्त-दुभयमासीच्छ्रुतेः [2]प्रामाण्यादनुमेयत्वाच्च। [3]अनुमीयते च प्रागुत्पत्तेः कार्यकारणयोरस्तित्वम्। कार्यस्य हि सतो जायमानस्य कारणे सत्युत्पत्तिदर्शनात्। असति चादर्शनात्। जगतोऽपि प्रागुत्पत्तेः कारणास्तित्वमनुमीयते घटादिकारणास्तित्ववत्।

१० ### [5]नानुपमृद्य प्रादुर्भाव इति न्यायेन शून्यशङ्का

घटादिकारणस्याप्यसत्त्वमेवानुपमृद्य मृत्पिण्डादिकं घटाद्यनुत्पत्तेरिति चेन्न। मृदादेः कारणत्वात्।

तत्र तार्किको ब्रूते—नन्विति। यदुक्तं न कार्यं कारणं वाऽऽसीदिति तत्र भागे बाधो भागे चानुमतिरित्यर्थः। कार्यस्यापि कथं प्रागसत्त्वोपपत्तिरित्याशङ्क्याऽऽह—यन्नेति। एतेनानुमानस्य सिद्धसाध्यतोक्ता। कार्यवत्कारणस्यापि प्रागसत्त्वं किं न स्यादित्याशङ्क्योक्तहेत्वभावान्नैवमित्याह—नन्विति। शून्यवाद्याह—न प्रागुत्पत्तेरिति। विमतं
१५ प्रागसद्योग्यत्वे सति तदाऽनुपलब्धत्वात्समनवत्। न चासिद्धो हेतुः श्रुतेरनतिशङ्क्यत्वात्। तद्विरोधे सत्युपलब्धेराभा-सत्वादित्यर्थः। तदेव प्रपञ्चयति—अनुपलब्धिश्चेदिति। कार्यवत्कारणस्यापि प्रागसत्त्वे प्राप्ते सिद्धान्तयति—नेत्यादिना। नैवेत्यादिश्रुतिरव्यक्तनामरूपादिविषया न प्रागसत्त्वं कार्यकारणयोराह। अन्यथा वाक्यशेषविरोधा-दित्यर्थः। श्रुतिं विवृणोति—यदि हीति। द्वयोरसत्त्वे का वाचोयुक्तेरनुपपत्तिस्तत्राऽऽह—न हीति। मा तर्हि वाक्य-मेव भूदित्याशङ्क्याऽऽह—ब्रवीति चेति। मृत्युनेत्यादिवाक्यार्थमुपसंहरति—तस्मादिति। श्रुतेः प्रामाण्यादिति।
२० तत्प्रामाण्यस्य प्रमाणलक्षणे स्थितत्वादिति यावत्। परकीयेऽनुमाने श्रुतिविरोधमभिधायानुमानविरोधमाह—अनु-मेयत्वाच्चेति। कार्यकारणयोः सत्त्वस्यानुमेयतया तदसत्त्वमनुमातुमशक्यम्। [4]उपजीव्यविषयतया सत्त्वानुमानस्य बलीयस्त्वादित्यर्थः। कार्यकारणयोः सत्त्वानुमानं प्रतिज्ञाय प्रथमं कारणसत्त्वमनुमिनोति—अनुमीयते चेत्यादिना। कार्यस्य सत्त्वेऽनुमानमाह—कार्यस्य हीति। विमतं पूर्वं सत् कार्यत्वात्कुम्भवदित्यर्थः।

[5]नानुपमृद्य प्रादुर्भावादिति न्यायेन दृष्टान्तस्य साध्यवैकल्यं चोदयति—घटादीति। न तावदसिद्धो घटः
२५ स्वकारणमुपमृद्नात्यसतोऽकारकत्वात्सिद्धस्य तूपमर्दकत्वेनासत्पूर्वकत्वमिति कुतः साध्यविकलतेत्याह—नेति। किंचान्वयिद्रव्यमेव सर्वत्र कारणं न पिण्डाकारविशेषोऽनन्वयादनवस्थानाच्चेति कुतः साध्यवैकल्यमित्याह—

---

१ अभावहेतुः अभावोपलम्भहेतुः। विमते कार्यकारणे उत्पत्तेः पूर्वमसती योग्यत्वे सति तदाऽनुपलभ्यमानत्वात् इति पूर्वपक्ष्यनुमानम्। विमतं कार्यकारणोभयमुत्पत्तेः पूर्वं सत् तदाऽनुपलम्भेऽपि "इदमावृतमासीत्" इति श्रुत्या तयोः सद्भावप्रतिपादनात् तथा चान्धकारस्थघटादिवत् योग्यानुपलब्धेरभावात् न तयोः प्रागसत्त्वसिद्धिः।
३० पूर्वपक्षोक्तानुमाने हेतौ योग्यत्वरूपविशेषणासिद्धिः दोषः उक्तः।

२ वेदप्रामाण्यं पूर्वमीमांसाया प्रथमाध्याये प्रतिपादितम्। प्रथमपादे विधेः द्वितीयेऽर्थवादमन्त्रयोः चतुर्थे नामधेयानां प्रामाण्योक्तेः। प्रामाण्यस्वतस्त्वञ्च "अर्थेऽनुपलब्धे तत् प्रमाणमनपेक्षत्वात् ( मी० १-१-५ ) इत्यनेनोक्तम्।

३ अनुमीयते चेति—कार्यं कारणपूर्वकं कारणान्वयव्यतिरेकानुविधाय्यन्वयव्यतिरेकत्वात् यदेवं तदेवं यथा घटः दण्डपूर्वकः।

३५ ४. उपजीव्यविषयतयेति—असत्त्वानुमानं कार्यकारणयोरसत्त्वं वक्तुं कार्यकारणे पक्षीकृत्य तयोः असत्त्वं साधयति। तथा च पक्षसाधकतया सत्त्वानुमानं प्रबलमित्यर्थः।

५ नानुपमृद्येति—न्यायदर्शने सूत्रं "अभावाद्भावोत्पत्तिर्नानुपमृद्यप्रादुर्भावात्" इति पूर्वपक्षसूत्रम्। तदर्थश्च—अनुपमृद्य कारणमविनाश्य प्रादुर्भावो जन्म नास्ति बीजोपमर्दनादङ्कुरोत्पत्तिदर्शनात्। अनेन विमतं सत्पूर्वकं कार्यत्वात् कुम्भवत् इत्यनुमाने बौद्धेन साध्यवैकल्यमुद्भाव्यते।

मृत्सुवर्णादि हि तत्र कारणं घटरुचकादेर्न पिण्डाद्याकारविशेषः। तदभावे भावात्। असत्यपि पिण्डाद्याकारविशेषे मृत्सुवर्णादिकारणद्रव्यमात्रादेव घटरुचकादिकार्योत्पत्तिर्दृश्यते तस्मान्न पिण्डाकारविशेषो घटरुचकादिकारणम्। असति तु मृत्सुवर्णादिद्रव्ये घटरुचकादिर्न जायत इति मृत्सुवर्णादिद्रव्यमेव कारणं न तु पिण्डाकारविशेषः। सर्वं हि कारणं कार्यमुत्पादयत्पूर्वोत्पन्नस्याऽऽत्मकार्यस्य [3]तिरोधानं कुर्वत्कार्यान्तरमुत्पादयति। एकस्मिन्कारणे युगपदनेककार्यविरोधात्। न च पूर्वकार्योपमर्दे कारणस्य स्वात्मोपमर्दो भवति। तस्मात्पिण्डाद्युपमर्दे कार्योत्पत्तिदर्शनमहेतुः ५ प्रागुत्पत्तेः कारणासत्त्वे।

### मृदादेरेव कारणता न पिण्डादेरिति सिद्धान्तः

पिण्डादिव्यतिरेकेण मृदादेरसत्त्वादयुक्तमिति चेत्। पिण्डादिपूर्वकार्योपमर्दे मृदादिकारणं नोपमृद्यते घटादिकार्यान्तरेऽप्यनुवर्तत इत्येतदयुक्तम्। पिण्डघटादिव्यतिरेकेण मृदादिकारणस्यानुपलम्भादिति चेन्न। मृदादिकारणानां घटाद्युत्पत्तौ पिण्डादिनिवृत्तावनुवृत्तिदर्शनात्। सादृश्यादन्वयदर्शनं न कारणानुवृत्तेरिति चेन्न। १० पिण्डादिगतानां मृदाद्यवयवानामेव घटादौ प्रत्यक्षत्वेऽनुमानाभासात्सादृश्यादिकल्पनानुपपत्तेः।

### प्रत्यक्षविरोधे अनुमानस्यानुत्थानम्

न च प्रत्यक्षानुमानयोर्विरुद्धाव्यभिचारिता[4]। प्रत्यक्षपूर्वकत्वादनुमानस्य सर्वत्रैवानाश्वासप्रसङ्गात्।

मृदादेरिति। तदेव स्फुटयति—मृत्सुवर्णादीति। तत्रेति दृष्टान्तोक्ति। किंचान्वयव्यतिरेकाभ्यां कारणमवधेयम्। नच पिण्डाभावे घटो न भवतीति व्यतिरेकोऽस्ति। पिण्डाभावेऽपि शकलादिभ्योऽपि घटाद्युद्भवोपलम्भादित्याह— १५ तदभाव इति। तदेव स्फुटयति—असत्यपीति। त्वन्मतेऽपि व्यतिरेकराहित्यं तुल्यमित्याशङ्क्याऽऽह—असतीति। मृदाद्येव घटादिकारणं चेत्किमिति पिण्डादौ सत्येव ततो घटाद्यनुत्पत्तिरित्याशङ्क्याऽऽह—सर्वमिति। ब्रह्मणि त्वविद्यावशादुत्पत्तिरिति भाव[5]। अन्वयिद्रव्यं पूर्वोत्पन्नस्वकार्यतिरोधानेन कार्यान्तरं जनयति चेत्कार्यतादात्म्येन स्वयमपि नश्येत्तत्रोत्तरकार्योत्पत्तिहेत्वभावादित्याशङ्क्याऽऽह—न चेति। कार्यान्तरेऽप्यनुवृत्तिदर्शनात्कार्यान्तरात्मना भावाच्चेत्यर्थः। अन्वयिद्रव्यस्यैव कारणत्वे फलितमाह—तस्मादिति। २०

अन्वयिनो मृदादेर्मानाभावेनाभावान्न कारणतेति शङ्कते—पिण्डादीति। तदेव चोद्यं विवृणोति—पिण्डादीत्यादिना। मृद्घट. सुवर्णं कुण्डलमित्यादितादात्म्यप्रत्ययस्य पिण्डाद्यतिरिक्तमृदाद्यभावेऽनुपपत्तेरनुगत मृदाद्युपेयमिति परिहरति—नेति। किंच या पिण्डात्मना पूर्वेद्युर्मृदासीत्सैव घटाद्यभूदिति प्रत्यभिज्ञया मृदोऽन्वयिन्याः सिद्धेस्तत्कारणत्वं दुरपह्नवमित्याह—मृदादीति। यत्सत्तत्क्षणिक यथा दीप. सन्तश्चेमे भावा इत्यनुमानात्सर्वार्थाना क्षणिकत्वसिद्धेरन्वयदृष्टि सादृश्याद्भ्रान्तिरिति शङ्कते—सादृश्यादिति। प्रत्यभिज्ञासिद्धस्थाय्यर्थविरुद्धं क्षणिकार्थबोधिलिङ्ग- २५ मनुष्णतानुमानवन्न मानमिति दूषयति—नेत्यादिना। सादृश्यादीत्यादिशब्देन प्रत्यभिज्ञाभ्रान्तित्वादि गृह्यते।

---

१. तदभावे भावादित्येतद्विवृणोति—असत्यपीति।

२ मृदादेः कारणत्वेऽन्वयव्यतिरेकौ दर्शयति—असति त्विति।

३. तिरोधान कुर्वत्—पूर्वकार्यं नाशयत् पूर्वकार्यस्य स्वाधिकरणे कार्यान्तरप्रतिबन्धकत्वात् तन्नाशादेव कार्यान्तरमुत्पद्यते। ३०

४. विरुद्धाव्यभिचारिता—विरुद्धयोर्हेत्वोस्तुल्यलक्षणयोरेकत्र धर्मिणि सन्निपात. विरुद्धाव्यभिचारी। यथा—शब्दोऽनित्य' बाह्येन्द्रियग्राह्यत्वे सति सामान्यवत्त्वात् घटवत्। शब्दो नित्य. श्रावणत्वात् शब्दत्ववत्। विरुद्धसाध्यद्वयाव्यभिचारिहेतुद्वयमेकत्र भवति चेत् विरुद्धाव्यभिचारी। यद्यपि उभयोर्हेत्वोः अव्यभिचारित्वं न सम्भवति तथापि प्रतितन्त्राभिप्रायेणेदमुक्तम्। यदा वादी स्वहेतोः तर्कबलात् अव्यभिचारित्वमितरस्य कालात्ययापदिष्टत्व च कर्तुं न शक्नोति तदैवायं हेत्वाभासः ( न्यायभूषणे ) इदमपि अनुमानद्वयप्रयोग एव भवेत्। ३५ प्रकृते तु प्रत्यक्षेण मृदः कारणत्व दृश्यते। अनुमानेन क्षणिकत्व साधनीयम्। समयो. विरुद्धाव्यभिचारिता न विपमबलयो.।

५ ब्रह्मणि त्विति—ब्रह्मणि पूर्वकार्यतिरोधानमविद्यया भवति।

६. अनुष्णतानुमानवत्—यथाऽग्नि. अनुष्ण. पदार्थत्वात् इत्यनुमान प्रत्यक्षबाधितं तथा प्रत्यक्षेण तदेवेदमिति

यदि च क्षणिकं सर्वं तदेवेदमिति गम्यमानं त[1]द्बुद्धेरप्यन्यतद्बुद्ध्यपेक्षत्वे तस्या अप्यन्यतद्बुद्ध्यपेक्षत्वमित्यनवस्थायां तत्सदृशमिदमित्यस्या अपि बुद्धेर्मृषात्वात्सर्वत्रानाश्वासत्वैव। [2]तदिदंबुद्ध्योरपि कर्त्रभावे सम्बन्धानुपपत्तिः। सादृश्यात्तत्सम्बन्ध इति चेन्न। तदिदंबुद्ध्योरितरेतरविषयत्वानुपपत्तेः। [3]असति चेतरेतरविषयत्वे सादृश्यग्रहणानुपपत्तिः। असत्येव सादृश्ये तद्बुद्धिरिति चेन्न। तदिदंबुद्ध्योरपि सादृश्यबुद्धिवदसद्विषयत्वप्रसङ्गात्। असद्विषयत्वमेव सर्वबुद्धीनामस्त्विति चेन्न। [4]बुद्धिबुद्धेरप्यसद्विषयत्वप्रसङ्गात्। तदप्यस्त्विति चेन्न; सर्वबुद्धीनां मृषात्वेऽसत्यबुद्ध्यनुपपत्तेः। तस्मादसदेतत्सादृश्यात्तद्बुद्धिरिति। अतः सिद्धः प्राक्कार्योत्पत्तेः कारणसद्भावः। कार्यस्य चाभिव्यक्तिलिङ्गत्वात् कार्यस्य च सद्भावः प्रागुत्पत्तेः सिद्धः।

## अभिव्यक्तिलिङ्गात् कार्यसत्त्वानुमानम्

कथमभिव्यक्तिलिङ्गत्वात्, अभिव्यक्ति लिङ्गमस्येति। अभिव्यक्ति साक्षाद्विज्ञानालम्बनत्वप्राप्तिः। यद्धि प्रत्यक्षात्कारणैक्य गम्यते। अनुमानात्तद्भेद.। अतो द्वयो[5]र्विरुद्धत्वस्याव्यभिचारित्वान्नाध्यक्षेणानुमानबाधो वैपरीत्यसंभवादित्याशङ्क्याऽऽह—नचेति। प्रत्यभिज्ञामुपजीव्यक्षणिकत्वानुमानाप्रवृत्तावप्युजीव्यजातीयत्वात्तत्प्राबल्यादुपजीवकजातीयकमुक्तानुमानं दुर्बलं तद्बाध्यमित्यर्थ.। प्रत्यभिज्ञा स्वार्थे स्वतो न मानं बुद्ध्यन्तरसंवादादेव बुद्धीनां मानत्वस्य बौद्धैरिष्टत्वात्। न च बुद्ध्यन्तरं स्थायित्वसाधकमस्तीति प्रत्यभिज्ञायमानस्यापि क्षणिकत्वमित्याशङ्क्याऽऽह—सर्वत्रेति। प्रसङ्गमेव प्रकटयति—यदि चेति। क्षणिकत्वादिबुद्धेरपि स्वार्थे स्वतो मानत्वाभावात्तादृग्बुद्ध्यन्तरापेक्षायां तस्यापि तथात्वेनानवस्थानाद्बुद्धेः स्वत.प्रामाण्यमुपेयम्। तथा च प्रत्यभिज्ञानं सर्वं नयैवान्नावादित्यर्थः। किंच प्रत्यभिज्ञाया भ्रान्तित्वं वदता स्वरूपानपह्नवात्तदिदंबुद्ध्योः [6]सामानाधिकरण्येन संबन्धो वाच्यः, स च वक्तुं न शक्यते क्षणद्वयसंबन्धिनो द्रष्टुरभावादित्याह—तदिदमिति। असति सबन्धे बुद्ध्योः सादृश्यात्तद्[7]बुद्धिरिति शङ्कते—सादृश्यादिति। तयोः स्वसंवेद्यत्वाद्ग्राहकान्तरस्य चाभावान्न सादृश्यसिद्धिरिति दूषयति—न तदिदंबुद्ध्योरिति। तथाऽपि किमिति सादृश्यासिद्धिरित्याशङ्क्याऽऽह—असति चेति। सादृश्यासिद्धिमभ्युपेत्य शङ्कते—असत्येवेति। यत्र सत्येवार्थे धीस्तत्रैव साधकापेक्षा नान्यत्रेति भावः। तत्र बाह्यार्थवादिनं प्रत्याह—न तदिदंबुद्ध्योरिति। विज्ञानवाद्याह—असदिति। तथा सत्यनालम्बनं क्षणिकविज्ञानमित्यस्यापि ज्ञानस्यासद्विषयतया विज्ञानवादासिद्धिरित्याह—नेति। शून्यवाद्याह—तदपीति। सर्वा धीरसद्विषयेत्येषा धीरसद्विषया स्यात्ततश्च सर्वबुद्धेरसद्विषयत्वासिद्धिरिति दूषयति—नेत्यादिना। परपक्षासंभवात्तत्प्रत्यभिज्ञाया. स्थायिहेतुसिद्धौ दृष्टान्तस्य साध्यवैकल्यं परिहृत्यावान्तरप्रकृतमुपसंहरति—तस्मादिति। सम्प्रति कारणसत्त्वानुमान निगमयति—अत इति। कार्यकारणयोर्द्वयोरपि प्रागुत्पत्ते. सत्त्वमनुमेयमिति प्रतिज्ञाय कारणास्तित्वं प्रपञ्चितमिदानी कार्यास्तित्वानुमानं दर्शयति—कार्यस्य चेति। प्रागुत्पत्ते. सद्भाव. प्रसिद्ध इति चकारार्थः। प्रतिज्ञाभाग विभजते—कार्यस्येति।

हेतुभागमाक्षिपति—कथमिति। अभिव्यक्तिलिङ्गमस्येति व्युत्पत्त्या कथमभिव्यक्तिलिङ्गत्वादिति कार्यसत्त्वे हेतुरुच्यते सिद्धे हि सत्त्वेऽभिव्यक्तिलिङ्गमस्येति सिध्यति तद्बलाच्च सत्त्वसिद्धिरित्यन्योन्याश्रयादित्यर्थः। सम्प्रतिपन्न-

---

ज्ञानात् सादृश्यकल्पनादिकं बाधितम्। स्यात् सत्प्रतिपक्षवत्। अत्र तु प्रत्यक्षं प्रबलमुपजीव्यत्वात्, अनुमानं तु दुर्बलम्। अतः नात्र विरुद्धाव्यभिचारिता ( वा० ५९ )।

१. तद्बुद्धेरन्यबुद्ध्यपेक्षत्वं—इदं बौद्धमतं क्षणिकबुद्धेः बुद्ध्यन्तरसंवादादेव प्रामाण्यमिति तथा चानवस्थापत्त्या बुद्धेः स्वतः प्रमात्वं ततश्च प्रत्यभिज्ञाया अबाधेनात्मस्थिरतासिद्धिः।

२ तदिदंबुद्ध्योरिति—बाह्यार्थवादी असत्यपि सादृश्ये क्षणिकपदार्थयोः सादृश्यबुद्धि वदति। तदा च तस्या असद्विषयत्वप्रसंगः।

३. असति चेति—द्वयो बुद्ध्योः इतरेतरविषयत्वाभावे उभयं सदृशमिति ग्रहणानुपपत्तिरित्यर्थं।

४. बुद्धिबुद्धेरिति—अनालम्बनं ज्ञानमिति बुद्धेरपि असद्विषयत्वे निरालम्बनवादासिद्धिः।

५. विरुद्धत्वस्येति—द्वयो प्रत्यक्षानुमानयो. विरुद्धत्वस्य नियतत्वात् प्रत्यक्षेणेतरबाधो भवतु इत्युक्तेऽनुमानेनैव प्रत्यक्षबाधो भवत्विति शङ्का न चैतद्युक्तमित्यभिप्रायेण प्रत्यक्षस्योपजीव्यजातीयत्वेनानुमानात्प्रबलत्वादित्यर्थः।

६. सामानाधिकरण्येन—एकात्मवृत्तया सम्बन्धो वाच्य.।

७ तद्बुद्धि. अभेदबुद्धिः।

**लोके प्रावृतं तमआदिना घटादि वस्तु तदालोकादिना प्रावरणतिरस्कारेण विज्ञानविषयत्वं प्राप्नुवत्प्राक्सद्भावं न व्यभिचरति[1]। तथेदमपि जगत्प्रागुत्पत्तेरित्यवगच्छामः। न ह्यविद्यमानो घट उदितेऽप्यादित्य उपलभ्यते।**

**पिण्डावस्था घटमावृणोति घटोत्पत्तौ च तन्निवृत्तिः**

**न। तेऽविद्यमानत्वाभावादुपलभ्येतैवेति चेत्। न हि तव घटादि कार्यं कदाचिदप्यविद्यमानमित्युदित आदित्य उपलभ्येतैव। मृत्पिण्डेऽसंनिहिते तमआद्यावरणे चासति विद्यमानत्वादिति चेत्। न। द्विविधत्वादावरणस्य। घटादिकार्यस्य द्विविधं ह्यावरणं मृदादेरभिव्यक्तस्य तमःकुड्यादि प्राङ्मृदोऽभिव्यक्तेर्मृदाद्यवयवानां पिण्डादिकार्यान्तररूपेण संस्थानम्। तस्मात्प्रागुत्पत्तेर्विद्यमानस्यैव घटादिकार्यस्याऽऽवृतत्वादनुपलब्धिः। नष्टोत्पन्नभावाभावशब्दप्रत्ययभेदस्त्वभिव्यक्तितिरोभावयोर्द्विविधत्वापेक्षः। पिण्डकपालादेरावरणवैलक्षण्यादयुक्तमिति चेत्। तमःकुड्यादि हि घटाद्यावरणं घटादिभिन्नदेशं दृष्टं न तथा घटादिभिन्नदेशे दृष्टे पिण्डकपाले। तस्मात्पिण्डकपालसंस्थानयोर्विद्यमानस्यैव घटस्याऽऽवृतत्वादनुपलब्धिरित्ययुक्तमावरणधर्मवैलक्षण्यादिति चेत्। न। क्षीरोदकादेः क्षीराद्यावरणेनैकदेशत्वदर्शनात्[2]। घटादिकार्ये कपालचूर्णाद्यवयवानामन्तर्भावादनावरणत्वमिति चेत्। न।**

याऽभिव्यक्त्या विप्रतिपन्नं सत्त्वं साध्यते तन्नान्योन्याश्रयत्वमिति परिहरति—**अभिव्यक्तिरिति**। कथं तर्हीहानुमानं प्रयोक्तव्यमित्याशङ्क्य प्रथमं व्याप्तिमाह—**यद्धीति**। यदभिव्यज्यमानं तत्प्रागभिव्यक्तेरस्ति यथा तमोन्तःस्थं घटादीत्यर्थः। संप्रत्यनुमिनोति—**तथेति**। विमत प्रागभिव्यक्तेः सत् अभिव्यक्तिविषयत्वात् यद्धयभिव्यज्यते तत्प्राक्सत्संप्रतिपन्नवदित्यर्थः। ननु तमोन्तःस्थो घटोऽभिव्यञ्जकसामीप्यादभिव्यज्यते न तत्र प्राक्कालिकं सत्त्वं प्रयोजकमित्याशङ्क्याऽऽह—**न हीति**।

उक्तेऽनुमाने कार्यस्य सदोपलब्धिप्रसङ्गं विपक्षे बाधकमाशङ्कते—**नेत्यादिना**। उक्तानुमाननिषेधो नञर्थः। अविद्यमानत्वाभावादिति च्छेदः। अनुमाने बाधकोपन्यासं विवृणोति—**न हीति**। वर्तमानवदतीतमागामि च घटादि सदेव चेदुपलब्धिसामग्र्या सत्या तद्वत्प्रागजनेर्नाशाच्चोर्ध्वमुपलभ्येत न चैवमुपलभ्यते तस्मादयुक्तं कार्यस्य सदा सत्त्वमित्यर्थः। मृत्पिण्डग्रहणं विरोधिकार्यान्तरोपलक्षणार्थम्। असन्निहिते सतीति च्छेदः। न तावद्विद्यमानत्वमात्रं कार्यस्य सदोपलम्भापादकं सतोऽपि घटादेरभिव्यक्त्यनभिव्यक्त्योरुपलब्धत्वादिति समाधत्ते—**नेति**। अभिव्यक्तिसामग्रीसत्त्व त्वभिव्यक्तिसाधकं न तु सतस्तत्सामग्रीनियमोऽस्तीत्यभिप्रेत्याऽऽह—**द्विविधत्वादिति**। उत्पन्नस्य कुड्याद्यावरणमनुत्पन्नस्य विशिष्ट कारणमिति द्वैविध्यमेव प्रतिज्ञापूर्वकं साधयति—**घटादीति**। यदोपलभ्यमानकारणावयवाना कार्यान्तराकारेण स्थितिस्तदा नेदं कार्यमुपलभ्यते तन्नान्यदा चोपलभ्यत इत्यन्वयव्यतिरेकसिद्धं कारणस्य कार्यान्तररूपेण स्थितस्य कार्यावरकत्वमिति द्रष्टव्यम्। विशिष्टस्य कारणस्याऽऽवरकत्वसिद्धौ सिद्धमर्थमाह—**तस्मादिति**। प्राक्कार्यास्तित्वे सिद्धे सदा तदुपलब्धिप्रसङ्गबाधकं निराकृत्य नष्टो घटो नास्तीत्यादिप्रयोगप्रत्ययभेदानुपपत्ति बाधकान्तरमाशङ्क्याऽऽह—**नष्टेति**। कपालादिना तिरोभावे नष्टव्यवहारः पिण्डाद्यावरणभङ्गेनाभिव्यक्तावुत्पन्नव्यवहारो दीपादिना तमोनिरासेनाभिव्यक्तौ भावव्यवहारः पिण्डादिना तिरोभावेऽभावव्यवहारः। तदेवं कार्यस्य सदा सत्त्वेऽपि प्रयोगप्रत्ययभेदसिद्धिरित्यर्थः॥ पिण्डादि न घटाद्यावरणं तेन समानदेशत्वात्। यद्यस्याऽऽवरणं न तत्तेन समानदेशं यथा कुड्यादीति शङ्कते—**पिण्डेति**। व्यतिरेक्यनुमानं विवृणोति—**तम इत्यादिना**। अनुमानफलं निगमयति—**तस्मादिति**। किमिदं समानदेशत्वं किमेकाश्रयत्वं किंवैककारणत्वमिति विकल्प्याऽऽद्यं विरुद्धत्वेन दूषयति—**नेत्यादिना**। क्षीरेण संकीर्णस्योदकादेरान्नियमाणस्येति यावत्। द्वितीयमुत्थापयति—**घटादीति**। यस्येदं कार्यं तस्मिन्मृदात्मनि तेषामवस्थानात्तद्वत्तेषामनावरणत्वमित्यर्थः। घटावस्थमृन्मात्रवृत्तिकपालादेर्घटानावरणत्वमिष्टमेवेति सिद्ध-

१. अभिव्यक्तिः साक्षात्कारविषयत्व तच्च प्रत्यक्षे विषयस्य कारणत्वात् पूर्वं सत एव। अतः घटस्य पूर्वसद्भावसिद्धिः।

२. यत् यदेकाश्रयं तत् तदावरणं न भवतीति व्याप्तिः तत्र क्षीरेणैकाश्रयं जलं क्षीरेणाव्रियमाणत्वात् विरुद्धं यत् यदेककारणकं तत् तेन नाव्रियते इति व्याप्तौ घट एव व्यभिचारः घटः कपालादिकारणकः तेन चाव्रियत इति। तत्र घटावस्थाया घटानावरणत्वमिष्टमेव घटनाशानन्तरं घटकारणकपालादिसत्त्वेऽपि घटादेरव्यक्तत्वात् आवृतत्वमेव।

विभक्तानां कार्यान्तरत्वादावरणत्वोपपत्तेः ।

पिण्डस्यावरकत्वे तन्निरासाय घटोत्पत्तौ व्यापारसामञ्जस्यम्

आवरणाभाव एव यत्नः कर्तव्य इति चेत्पिण्डकपालावस्थयोर्विद्यमानमेव घटादिकार्यमावृतत्वान्नोपलभ्यत
इति चेत् । घटादिकार्यार्थिना तदावरणविनाश एव यत्नः कर्तव्यो न घटाद्युत्पत्तौ । न चैतदस्ति तस्मादयुक्तं
५ विद्यमानस्यैवाऽऽवृतत्वादनुपलब्धिरिति चेत् । न । अनियमात् । न हि विनाशमात्रप्रयत्नादेव घटाद्यभिव्यक्ति-
र्नियता । तमआद्यावृते घटादौ प्रदीपाद्युत्पत्तौ प्रयत्नदर्शनात् । सोऽपि तमोनाशायैवेति चेत् । दीपाद्युत्पत्तावपि
यः प्रयत्नः सोऽपि तमस्तिरस्करणाय तस्मिन्नष्टे घटः स्वयमेवोपलभ्यते । न हि घटे किञ्चिदाधीयत इति चेत् । न ।
प्रकाशवतो घटस्योपलभ्यमानत्वात् । यथा प्रकाशविशिष्टो घट उपलभ्यते प्रदीपकरणेन न तथा प्राक्प्रदीपकरणात् ।
तस्मान्न तमस्तिरस्कारायैव प्रदीपकरणं किं तर्हि प्रकाशवत्त्वाय प्रकाशवत्त्वेनैवोपलभ्यमानत्वात् । क्वचिदावरण-
१० विनाशेऽपि यत्नः स्यात् । यथा कुड्यादिविनाशे । तस्मान्न नियमोऽस्त्यभिव्यक्त्यर्थिनाऽऽवरणविनाश एव यत्नः
कार्य इति नियमार्थवत्त्वाच्च । कारणे वर्तमानं कार्यं कार्यान्तराणामावरणमित्यवोचाम । तत्र यदि पूर्वाभि-
व्यक्तस्य कार्यस्य पिण्डस्य व्यवहितस्य वा कपालस्य विनाश एव यत्नः क्रियेत तदा विदलचूर्णाद्यपि कार्यं
जायेत । तेनाप्यावृतो घटो नोपलभ्यत इति पुनः प्रयत्नान्तरापेक्षैव । तस्माद्घटाद्यभिव्यक्त्यर्थिनो नियत एव
कारकव्यापारोऽर्थवान् । तस्मात्प्रागुत्पत्तेरपि सदेव कार्यम् ।

१५ पूर्वं घटसत्त्वे युक्त्यन्तरम्

अतीतानागतप्रत्ययभेदाच्च । अतीतो घटोऽनागतो घट इत्येतयोश्च प्रत्यययोर्वर्तमानघटप्रत्ययवन्न
निर्विषयत्वं युक्तम् । अनागतार्थिप्रवृत्तेश्च । न ह्यसत्यर्थितया प्रवृत्तिर्लोके दृष्टा । योगिनां चातीतानागतज्ञानस्य
सत्यत्वात् । असंश्चेद्भविष्यद्घट ऐश्वरं भविष्यद्घटविषयं प्रत्यक्षज्ञानं मिथ्या स्यात् । न च प्रत्यक्षमुपचर्यते ।

साध्यता । अव्यक्तघटावस्थमृद्वृत्तिकपालादेरनावरणत्वसाधने हेत्वसिद्धिर्घटस्य कपालादेश्चाऽऽश्रयमृदवयवभेदादिति
२० दूषयति—न, विभक्तानामिति ।

विद्यमानस्यैवाऽऽवृतत्वादनुपलब्धिश्चेदावरणतिरस्कारे यत्नः स्यान्न घटादेरुत्पत्तावतोऽनुभवविरोधः सत्कार्य-
वादिनः स्यादिति शङ्कते—आवरणेति । तदेव प्रपञ्चयति—पिण्डेति । यत्राऽऽवृतं वस्तु व्यज्यते तत्राऽऽवरणभङ्ग
एव यत्न इति व्याप्त्यभावान्नानुभवविरोधोऽस्तीति दूषयति—नानियमादिति । अनियमं साधयति—न हीति ।
तमसाऽऽवृते घटादौ दीपोत्पत्तौ यत्नोऽस्तीत्यत्र चोदयति—सोऽपीति । अनुभवविरोधमाशङ्क्योक्तमेव व्यनक्ति—
२५ दीपादीति । दीपस्तमस्तिरयति चेत्कथं कुम्भोपलब्धिरत आह—तस्मिन्निति । तत्र हेतुमाह—न हीति । अनुभवमनुसृत्य
परिहरति—नेत्यादिना । किमिदानीमावरणभङ्गे प्रयत्नो नेत्येव नियमोऽस्तु नेत्याह—क्वचिदिति । अनियमं निगम-
यन्ननुभवविरोधाभावमुपसंहरति—तस्मादिति । किंचाभिव्यञ्जकव्यापारे सति नियमेन घटो व्यज्यते तदभावे नेत्य-
न्वयव्यतिरेकावधारितो घटार्थः कुलालादिव्यापारस्तस्यार्थवत्त्वार्थमभिव्यक्त्यर्थ एव प्रयत्नो वक्तव्य आवरण-
भङ्गस्त्वार्थिक इत्याह—नियमेति । उक्तं स्मारयन्नेतदेव विवृणोति—कारण इत्यादिना । आवृतिभङ्गार्थे यत्ने यतो
३० घटानुपलब्धिरतस्तदुपलब्ध्यर्थत्वेन नियतः सन्यत्नः सफलः स्यादिति फलितमाह—तस्मादिति । प्रकृतमभिव्यक्ति-
लिङ्गकमनुमानं निर्दोषत्वादादेयं मन्वानस्तत्फलमुपसंहरति—तस्मात्प्रागिति ।

कार्यस्य सत्त्वे युक्त्यन्तरमाह—अतीतेति । विमतं सदर्थं प्रमाणत्वात्संप्रतिपन्नवदित्यर्थः । तदेवानुमानं
विशदयति—अतीत इति । अत्रैवोपपत्त्यन्तरमाह—अनागतेति । आगामिनि घटे तदर्थित्वेन लोके प्रवृत्तिर्दृष्टा न
चात्यन्तासति सा युक्ता तेन तस्यासद्विलक्षणतेत्यर्थः । किंच योगिनामीशस्य चातीतादिविषयं प्रत्यक्षज्ञानमिष्टं तच्च
३५ विद्यमानोपलम्भनमतो घटस्य सदा सत्त्वमित्याह—योगिनां चेति । ईश्वरसमुच्चयार्थश्चकारः । भविष्यद्ग्रहणमतीतो-
पलक्षणार्थम् । ऐश्वरं योगिकं चेति द्रष्टव्यम् । प्रसङ्गस्येष्टत्वमाशङ्क्याऽऽह—न चेति । अधिकबलं हि बाधकं न

१ विभक्तानामिति—घटावस्थमृदि वर्तमानकपालं न घटावरकम् । अतो घटानावरणत्वमिष्टमिति सिद्धसाधनम् ।
अव्यक्तघटावस्थमृदि वर्तमानकपालाः न घटदेशा अतस्तत्र घटदेशत्वात् इति हेतुरसिद्धः ।

२. अनागतार्थिप्रवृत्तिः भाविघटविषया प्रवृत्तित्वात् । तेन सद्विषयत्वमनागतार्थिप्रवृत्तेः ।

४० ३. विमतम्—अतीतो घटप्रत्ययः सदर्थः विद्यमानवस्तुविषयः प्रत्ययत्वात् वर्तमानघटप्रत्ययवदिति प्रयोगः ।

४. ऐश्वरम् ईश्वरवृत्तिज्ञानं सद्विषयम् ।

**घटसद्भावे ह्यनुमानमवोचाम। विप्रतिषेधाच्च। यदि घटो भविष्यतीति कुलालादिषु व्याप्रियमाणेषु घटार्थं प्रमाणेन निश्चितम्। येन च कालेन घटस्य सम्बन्धो भविष्यतीत्युच्यते तस्मिन्नेव काले घटोऽसन्निति विप्रतिषिद्धमभिधीयते। भविष्यन्घटोऽसन्निति न भविष्यतीत्यर्थः। अयं घटो न वर्तत इति यद्वत्।**

**घटार्थं प्रवृत्त्यापि घटस्य प्राक्सत्त्वानुमानम्**

**अथ प्रागुत्पत्तेर्घटोऽसन्नित्युच्येत घटार्थं प्रवृत्तेषु कुलालादिषु तत्र यथा व्यापाररूपेण वर्तमानास्तावत् कुलालादयस्तथा घटो न वर्तत इत्यसच्छब्दस्यार्थश्चेन्न विरुध्यते। कस्मात्? स्वेन हि भविष्यद्रूपेण घटो वर्तते। न हि पिण्डस्य वर्तमानता कपालस्य वा घटस्य भवति। न च तयोर्भविष्यत्ता घटस्य। तस्मात्कुलालादिव्यापारवर्तमानतायां प्रागुत्पत्तेर्घटोऽसन्निति न विरुध्यते। यदि घटस्य यत्स्वं भविष्यत्ता कार्यरूपं तत्प्रतिषिध्येत तत्प्रतिषेधे विरोधः स्यात्। ननु तद्भवान्प्रतिषेधति, न च सर्वेषां क्रियावतामेकैव वर्तमानता भविष्यत्त्वं वा।**

**अभावानामधिकरणस्वरूपत्वादपि न पूर्वं घटाभावः**

**अपि च चतुर्विधानामभावानां घटस्येतरेतराभावो घटादन्यो दृष्टो यथा घटाभावः पटादिरेव न घटस्वरूपमेव। न च घटाभावः सन्पटोऽभावात्मकः किं तर्हि भावरूप एव। एवं घटस्य प्राक्प्रध्वंसात्यन्ताभावा-**

चानतिशयाद्देशादिज्ञानादधिकबलं ज्ञानं दृष्टमतो बाधकाभावाच्च तन्मिथ्येत्यर्थः। तस्य सम्यक्त्वेऽपि पूर्वोत्तरकालयोरसद्घटविषयत्वं किं न स्यादित्याशङ्क्याऽऽह—**घटेति**। पूर्वोत्तरकालयोरिति शेषः। घटस्य प्रागसत्त्वाभावे हेत्वन्तरमाह—**विप्रतिषेधादिति**। स हि कारकव्यापारदशायामसन्निति कोऽर्थः किं तस्य भविष्यत्त्वादि तदा नास्ति किंवाऽर्थक्रियासामर्थ्यम्? आद्ये व्याहतिं साधयति—**यदीति**। घटार्थं कुलालादिषु व्याप्रियमाणेषु सत्सु घटो भविष्यतीति प्रमाणेन निश्चितं चेत्कथं तद्विरुद्धं प्रागसत्त्वमुच्यते। कारकव्यापारावच्छिन्नेन हि कालेन घटस्य भविष्यत्त्वेनातीतत्वेन वा भविष्यत्यभूदिति वा सबन्धो विवक्ष्यते। तथा च तस्मिन्नेव काले घटस्य तथाविधसत्त्वनिषेधे व्याहतिरतिव्यक्तेत्यर्थः। तामेवाभिनयति—**भविष्यन्निति**। यो हि कारकव्यापारदशाया भविष्यत्त्वादिरूपेणास्ति स तदा नास्तीत्युक्ते तस्य तस्यामवस्थायां तेनाऽऽकारेणासत्त्वमर्थो भवति। तथा च घटो यदा येनाऽऽकारेणास्ति स तदा तेनाऽऽकारेण नास्तीति व्याहतिरित्यर्थः।

द्वितीयमुत्थापयति—**अथेति**। प्रागुत्पत्तेर्घटार्थं कुलालादिषु प्रवृत्तेषु सोऽसन्नित्यसच्छब्दार्थं स्वयमेव विवेचयति—**तत्रेत्यादिना**। तत्र सिद्धान्ती ब्रूते—**न विरुध्यत इति**। कथं पुनः सत्कार्यवादिनस्तदसत्त्वमविरुद्धमित्याह—**कस्मादिति**। प्रागुत्पत्तेस्तुच्छव्यावृत्तिरूपं सत्त्वं घटस्य सिषाधयिषितं तच्चेद्भवानपि तस्य सदातनमनर्थक्रियासामर्थ्यं निषेधन्ननुमन्यते नाऽऽवयोर्विप्रतिपत्तिरित्यभिप्रेत्याऽऽह—**स्वेन हीति**। ननु त्वन्मते सर्वस्य मृन्मात्रत्वाविशेषात्पिण्डादेर्वर्तमानता घटस्य स्यात्तस्य चातीतता भविष्यत्ता च पिण्डकपालयोः स्यादिति साङ्कर्यमाशङ्क्याऽऽह—**न हीति**। व्यवहारदशाया यथाप्रतिभासमनिर्वाच्यसंस्थानभेदाश्रयणादित्यर्थः। प्रागवस्थाया घटस्यार्थक्रियासामर्थ्यलक्षणसत्त्वनिषेधे विरोधाभावमुपपादितमुपसंहरति—**तस्मादिति**। उक्तमेव व्यतिरेकद्वारा विवृणोति—**यदीत्यादिना**। यदा कारकाणि व्याप्रियन्ते तदा घटोऽसन्निति तस्य भविष्यत्त्वादिरूपं तत्काले निषिध्यते चेदुक्तविधया व्याघातः स्यात्। न च तस्य तस्मिन्काले भविष्यत्त्वादिरूपं तत्त्वं निषिध्यते। अर्थक्रियासामर्थ्यस्यैव निषेधात्तत्र तद् विरोधावकाशोऽस्तीत्यर्थः। न हि पिण्डस्येत्यादिना साकर्यसमाधिरुक्तस्तमिदानीं सर्वतन्त्रसिद्धान्ततया स्फुटयति—**न चेति**। भविष्यत्त्वमतीतत्वं चेति शेषः।

कार्यस्य प्रागुत्पत्तेर्नाशाच्चोर्ध्वमसत्त्वाभावे हेत्वन्तरमाह—**अपि चेति**। तदेवानुमानतया स्पष्टयितुं दृष्टान्तं साधयति—**चतुर्विधानामिति**। षष्ठी निर्धारणे। घटान्योन्याभावस्य घटादन्यत्वे तत्राप्यन्योन्याभावान्तराङ्गीकारादन-

१ यदि घटेति—घटार्थं कुलालादिष्विति त्वन्वयः।
२ असन्निति—घटः व्यापारविशिष्टरूपेणासन्निति न विरुध्यते।
३. व्यापाररूपेण जलाहरणव्यापारविशिष्टरूपेण।
४ न च सर्वेषामिति—एकैव वर्तमानता भविष्यत्ता अतीतता वा किन्तु भिन्ना, उत्पत्तेः पूर्वं वर्तमानता सूक्ष्मता अनभिव्यक्तरूपेण, भविष्यत्ता व्यापारविशिष्टत्वेन, अतीतता स्थूलरूपेणेत्यर्थः।
५. एवमिति—स्यात् घटान्योन्याभाववत् अभावत्वाविशेषादिति शेषः तदाह—घटेनेति घटाभावत्वादित्यत्रेत्यर्थः।

नामपि घटादन्यत्वं स्यात् । घटेन व्यपदिश्यमानत्वाद्घटस्येतरेतराभाववत् । तथैव भावात्मकताऽभावानाम् । एवं च सति घटस्य प्रागभाव इति न घटस्वरूपमेव प्रागुत्पत्तेर्नास्ति । अथ घटस्य प्रागभाव इति घटस्य यत्स्वरूपं तदेवोच्येत घटस्येतिव्यपदेशानुपपत्तिः । अथ कल्पयित्वा व्यपदिश्येत शिलापुत्रकस्य[2] शरीरमिति यद्वत् । तथाऽपि घटस्य प्रागभाव इति कल्पितस्यैवाभावस्य घटेन व्यपदेशो न घटस्वरूपस्यैव । अथार्थान्तरं घटाद्घटस्याभाव
५ इत्युक्तोत्तरमेतत् ।

### अभावस्य कारणसत्तासम्बन्धानुपपत्त्या प्राक् घटसत्ता

किञ्चान्यत्प्रागुत्पत्तेः शशविषाणवदभावभूतस्य घटस्य स्वकारणसत्तासम्बन्धानुपपत्तिः । द्विनिष्ठत्वात्सम्बन्धस्य । अयुतसिद्धानामदोष इति चेत् । न । भावाभावयोरयुतसिद्धत्वानुपपत्तेः । भावभूतयोर्हि युतसिद्धताऽयुतसिद्धता वा स्यान्न तु भावाभावयोरभावयोर्वा तस्मात्सदेव कार्यं प्रागुत्पत्तेरिति सिद्धम् ।

१० वस्थेत्याशङ्क्याऽऽह—दृष्ट इति । न यौक्तिकमन्यत्व किंतु घटो न भवति पट इति प्रातीतिकं तथा च घटाभाव पटादिरेवेति पटादेस्ततोऽन्यत्वाद्घटान्योन्याभावस्यापि घटादन्यत्वसिद्धिरित्यर्थः[1] । ननु घटाभावः पटादिरित्ययुक्त विशेषणत्वेन घटस्यापि पटादावन्तर्भावप्रसङ्गादिति चेन्नैव दृष्टपदेन निराकृतत्वात् । घटाभावस्य पटादित्वाभावेऽपि न[3] स्वातन्त्र्यमभावत्वविरोधात् । नापि तदन्योन्याभाव पटादेर्धर्मं ससर्गाभावान्तर्भावापातात् । न[4] च स घटस्यैव धर्मः स्वरूप वा घटो घटो न भवतीतिप्रतीत्यभावादित्यभिप्रेत्याऽऽह—न घटस्वरूपमेवेति । यदि प्रतीतिमा-
१५ श्रित्य घटान्योन्याभाव. पटादिरिष्यते तदा पटादेर्भावस्याभावत्वविधानाद्व्याघात इत्याशङ्क्याऽऽह—न चेति । स्वरूपपररूपाभ्या सर्वं सदसदात्मकमिति हि वृद्धा[5] । तथा च पटादे. स्वेनाऽऽत्मना भावत्व घटतादात्म्याभावात्तदभावत्व चेत्यव्याहतिरित्यर्थः । सिद्धे प्रतीत्यनुसारिणि दृष्टान्ते विवक्षितमनुमानमाह—एवमिति । किंच तेषामभावाना घटाद्भिन्नत्वात्पटवदेव सत्त्वमेष्टव्यमित्यनुमानान्तरमाह—तथेति । अनुमानफल कथयति—एवं चेति । तेषा घटादन्यत्वे[6] तस्यानाद्यनन्तत्वमद्वयत्वं सर्वात्मत्व च प्राप्नोति । सत्त्वे च तेषामभावाभावान्न भावाभावयोर्मिथ संगतिरित्यर्थः । ननु
२० प्रसिद्धोऽभावो भाववदशक्योऽपह्नोतुमिति चेत्स तर्हि घटस्य स्वरूपमर्थान्तर वेति विकल्प्याऽऽद्यमनूद्य दूषयति—अथेत्यादिना । प्रागभावादेर्घटत्वेऽपि संबन्ध कल्पयित्वा घटस्येत्युक्तिरिति शङ्कते—अथेति । सबन्धस्य कल्पितत्वे संबन्धिनोऽप्यभावस्य तथात्व स्यादिति दूषयति—तथाऽपीति । यत्र सबन्ध कल्पयित्वा व्यपदेशस्तत्र न वास्तवो भेदो यथा राहुशिरसोस्तथाऽत्रापि कल्पिते संबन्धे भेदस्य तथात्वाद्वास्तवत्वं संबन्धिनोरन्यतरस्य स्यात् । न चाभावस्तथा सापेक्षत्वादतो[7] घटस्तथेत्यर्थः । कल्पान्तरमनुवदति—अथेति । अनुमानफलं वदद्भिर्घटस्य कारणात्मना ध्रुवत्ववचनेन
२५ समाहितमेतदित्याह—उक्तोत्तरमिति ।

असत्कार्यवादे दोषान्तरमाह—किंचेति । स्वहेतुसबन्धः सत्तासबन्धो वा जन्मेति तार्किका । न च प्रागुत्पत्तेरसत सबन्धस्तस्य सतोर्वृत्तेरित्यर्थः । युतसिद्धयो रज्जुघटयोर्मिथ संयोगे पृथक्सिद्धिरपेक्ष्यतेऽयुतसिद्धाना परस्परपरिहारेण प्रतीत्यनर्हाणा कार्यकारणादीनां मिथोयोगे पृथक्सिद्ध्यभावो न दोपमावहतीति शङ्कते—अयुतेति । परिहरति—नेति । उक्तमेव स्फोरयति—भावेति । व्यवहारदृष्ट्या कार्यकारणयो साधिता तुच्छव्यावृत्तिमुपसहरति—
३० तस्मादिति । नैवेहेत्यत्र सर्वस्य प्रागुत्पत्तेरसत्त्वशङ्का मृत्युनेत्यादिवाक्यव्याख्यानेन निरस्ता । सप्रति मृत्युशब्दस्य

---

१. घटादन्यत्व पटस्वरूपत्वादित्यर्थः । २. शिलापुत्रक अल्परिमाणा शिला ।

३ न स्वातन्त्र्यम्—घटाभावस्य पटत्वेन स्वतन्त्रव्यवहारार्हता । संसर्गाभावान्तर्भावप्रसंगात् घटाभावः पटे वर्तमानः अधिकरणस्वरूप तथा चान्योऽन्याभावस्य पटरूपत्वे तयोरैक्यापत्ति ।

४. न च स घटान्योऽन्याभावः न घटस्वरूपमेव । तथा सति घट घटो नेति धीप्रसगात् ।

३५ ५. मीमांसावार्तिके ।

६. तेषा प्राक्प्रध्वसान्योन्याभावानां घटादन्यत्वे तेषा घटसम्बन्धाभावात् घटस्य नित्यत्वसिद्धिः । घटादन्यत्वे तेषामभावानामुत्पत्त्यादिविकाराभावात् नित्यत्वमद्वयत्वं सर्वात्मत्वं ब्रह्मरूपेण स्यात् । पटस्वरूपत्वे च घटादेरभावाभावात् न भावाभावसम्बन्ध ।

७. सापेक्षत्वादिति—राहो शिरः इत्यत्र शिरसि राहुसम्बन्धं प्रकल्प्य राहो शिरः इत्युच्यते । तत्र शिरसः
४० प्रतियोगिसापेक्षस्य मिथ्यात्व राहोः सत्यत्वम् । तद्वत् घटस्य प्रागभाव इत्युक्ते. घटसापेक्षप्रागभावस्य मिथ्यात्व घटस्य च सत्यत्व स्यादित्यर्थ. ।

किंलक्षणेन मृत्युनाऽऽवृतमित्यत आह—अशनाययाऽशितुमिच्छाऽशनाया सैव मृत्योर्लक्षणं तया लक्षितेन मृत्युनाऽशनायया। कथमशनाया मृत्युरिति। उच्यते—अशनाया हि मृत्युः। हिशब्देन प्रसिद्धं हेतुमवद्योतयति। यो ह्यशितुमिच्छति सोऽशनायानन्तरमेव हन्ति जन्तून्। तेनासावशनायया लक्ष्यते मृत्युरित्यशनाया हीत्याह। बुद्ध्यात्मनोऽशनाया धर्म इति स एष बुद्ध्यवस्थो हिरण्यगर्भो मृत्युरित्युच्यते। तेन मृत्युनेदं कार्यमावृतमासीत्। यथा पिण्डावस्थया मृदा घटादय आवृताः स्युरिति तद्वत्। तन्मनोऽकुरुत। तदिति मनसो निर्देशः। स प्रकृतो मृत्युर्वक्ष्यमाणकार्यसिसृक्षया तत्कार्यालोचनक्षमं मनःशब्दवाच्यं सङ्कल्पादिलक्षणमन्तःकरणमकुरुत कृतवान्। केनाभिप्रायेण मनोऽकरोदिति। उच्यते—आत्मन्वी आत्मवानस्यां भवेयम्। अहमनेनाऽऽत्मना मनसा मनस्वी स्यामित्यभिप्रायः। स प्रजापतिरभिव्यक्तेन मनसा समनस्कः सन्नर्चन्नर्चयन्पूजयन्नात्मानमेव कृतार्थोऽस्मीत्यचरत् चरणमकरोत्। तस्य प्रजापतेरर्चतः पूजयत आपो रसात्मिकाः पूजाङ्गभूता अजायन्तोत्पन्नाः। अत्राऽऽकाशप्रभृतीनां त्रयाणामुत्पत्त्यनन्तरमिति वक्तव्यं श्रुत्यन्तरसामर्थ्याद्विकल्पासम्भवाच्च सृष्टिक्रमस्य। अर्चते पूजां कुर्वते वै मे मह्यं कमुदकमभूदित्येवममन्यत यस्मान्मृत्युस्तदेव हेतोरर्कस्याग्नेरश्वमेधक्रतूपयोगिकस्यार्कत्वमर्कत्वे हेतुरित्यर्थः। अग्नेरर्कनामनिर्वचनमेतत्। अर्चनात्सुखहेतुपूजाकरणादप्सम्बन्धाच्चाग्नेरेतद्गौणं नामार्क इति। य एवं यथोक्तमर्कस्यार्कत्वं वेद जानाति। कमुदकं वा नामसामान्यात्। ह वा इत्यवधारणार्थौ भवत्येवेति। अस्मा एवंविद एवंविदर्थं भवति ॥१॥

अर्थान्तरे रूढत्वान्न तेनाऽऽवरणं जगतः संभवतीत्याक्षिपति—किंलक्षणेनेति। अनभिव्यक्तनामरूपमध्यक्षाद्ययोग्यमपञ्चीकृतपञ्चमहाभूतावस्थातिरिक्तं मायारूपं साभासं मृत्युरित्युच्यते। न हि सर्वं कार्यमवान्तरकारणाद्वृत्तमर्हतीत्यभिप्रेत्याह—अत आहेति। कथं यथोक्तो मृत्युरशनायया लक्ष्यते। न हि मूलकारणस्याशनायादिमत्त्वम्। अशनायापिपासे प्राणस्येति स्थितेरिति शङ्कते—कथमिति। मूलकारणस्यैव सूत्रत्वं प्राप्तस्य सर्वसंहर्तृत्वान्मृत्युत्वे सति वाक्यशेषोपपत्तिरिति परिहरति—उच्यत इति। प्रसिद्धमेव प्रकटयति—यो हीति। तथापि प्रसिद्धं मृत्युं हित्वा कथं हिरण्यगर्भोपादानमत आह—बुद्ध्यात्मन इति। उक्तं हेतुं कृत्वा फलितमाह—इति स इति। ननु न तेन जगदाव्रियते मूलकारणेनैव तदावरणात्तत्कथं वाक्योपक्रमोपपत्तिरत आह—तेनेति। ननु हिरण्यगर्भे प्रकृते कथं स्रष्टरि नपुंसकप्रयोगस्तत्राऽऽह—तदिति मनस इति। वाक्यार्थमधुना कथयति—स प्रकृत इति। भूतसृष्ट्यतिरेकेण भौतिकस्य मनसः सृष्टिरयुक्तेति मत्वा पृच्छति—केनेति। अपञ्चीकृतानां भूतानां हिरण्यगर्भदेहभूतानां प्रागेवालब्धात्मकत्वात्तेभ्यो मनोव्यक्तिरविरुद्धेति मन्वानो ब्रूते—उच्यत इति। स्वात्मवत्त्वस्य स्वाभाविकत्वान्न तदाशंसनीयमित्याशङ्क्य वाक्यार्थमाह—अहमिति। मनसो व्यक्तस्योपयोगमाह—स प्रजापतिरिति। ननु तैत्तिरीयकाणामाकाशादिसृष्टिरुच्यते तत्कथमिहापामादौ सृष्टिवचनं तत्राऽऽह—अत्रेति। सप्तम्या हिरण्यगर्भकर्तृकमर्गोक्तिः। त्रयाणां पञ्चीकृतानामिति यावत्। नन्वाकाशाद्या तैत्तिरीये सृष्टिरिह त्वबाद्येत्युदितानुदितहोमवद्विकल्पो भविष्यति नेत्याह—विकल्पेति। पुरुषतन्त्रत्वात्क्रियाया युक्तो विकल्पः सिद्धेऽर्थे तु पुरुषानधीने नासौ संभवत्यतः सृष्टिर्विवक्षिता चेदकाशाद्येव सा युक्ता विद्याप्रधानत्वात्तु नाऽऽदरः सृष्टाविति भावः। अपामादौ सृष्टिवचनमनुपयुक्तं न स्रष्टुस्ताभिरेव पूजा सिध्यतीत्याशङ्क्याऽऽश्वमेधिकाग्नेरर्कनामसिद्ध्यर्थं तदुपयोगमुपन्यस्यति—अर्चत इति। कोऽसौ हेतुरित्यपेक्षायामर्चतिपदावयवस्यार्कशब्देन सङ्गतिरिति मन्वानः सन्नाह—अर्कत्वमिति। एवं मृत्योरर्कत्वेऽपि कथमग्नेरर्कत्वमित्याशङ्क्य मृत्युसंबन्धादित्याह—अग्नेरिति। किमर्थमग्नेरर्कनामनिर्वचनमित्याशङ्क्यापूर्वसंज्ञायोगस्य फलान्तराभावादुपासनार्थमित्याह—अग्नेरिति। निर्वचनमेव स्फोरयति—अर्चनादिति। फलवत्त्वाच्च यथोक्तनामवतोऽग्नेरुपास्तिरत्र विवक्षितेत्याह—य एवमिति ॥१॥

---

१. बुद्ध्यात्मन इति—समष्टिलिङ्गशरीराभिमानी हिरण्यगर्भः लिङ्गशरीरमध्ये बुद्धेः प्राधान्यात् बुद्ध्यात्मन इत्युक्तम्।

२. तदिति—तच्छब्दो मनसो विशेषणं न तु हिरण्यगर्भपरामर्शी। तच्छब्दार्थः कार्यालोचनक्षममिति। अत्र वार्तिके 'तद्धेदं तर्ह्यव्याकृतमासीदि'ति वक्ष्यमाणमनुसृत्य तत् मूलकारणं ब्रह्म मनः स्रष्टव्यार्थविषयं संकल्पाख्यव्यापारमकरोत् इति व्याख्यान्तरमुक्तम्। तदेवात्र टीकाया मायारूपं साभासं मृत्युरित्युक्तम्।

३. अपञ्चीकृतभूतसृष्टिः आकाशप्रभृति भवति ईश्वरकर्तृका। तैः अपञ्चीकृतैरेव हिरण्यगर्भसृष्टिः। पञ्चीकरणमपि

**आपो वा अर्कस्तद्यदपाँ शर आसीत्तत्समहन्यत। सा पृथिव्यभवत्त-स्यामश्राम्यत्तस्य श्रान्तस्य तप्तस्य तेजो रसो निरवर्ततग्निः ॥२॥ स त्रेधात्मानं व्यकुरुतादित्यं तृतीयं वायुं तृतीयँ स एष प्राणस्त्रेधा विहितः।**

आपो वा अर्कः। कः पुनरसावर्क इति। उच्यते—आपो वै या अर्चनाङ्गभूतास्ता एवार्कोऽग्नेरर्कस्य
५ हेतुत्वात्। अप्सु वाग्निः प्रतिष्ठित इति। न पुनः साक्षादेवार्कस्ताः, तासामप्रकरणात्। अग्नेश्च प्रकरणम्। वक्ष्यति चायमग्निरर्क इति। तत्तत्र यदपां शर इव शरो दध्न इव मण्डभूतमासीत्तत्समहन्यत संघातमापद्यत तेजसा बाह्यान्तः पच्यमानं लिङ्गव्यत्ययेन वा योऽपां शरः स समहन्यतेति सा पृथिव्यभवत्स संघातो येयं पृथिवी साऽभवत्। ताभ्योऽद्भ्योऽण्डमभिनिर्वृत्तमित्यर्थः। तस्यां पृथिव्यामुत्पादितायां स मृत्युः प्रजापतिरश्राम्यच्छ्रमयुक्तो बभूव। सर्वो हि लोकः कार्यं कृत्वा श्राम्यति। प्रजापतेश्च तन्महत्कार्यं यत्पृथिवीसर्गः। किं तस्य श्रान्तस्येत्युच्यते—
१० तस्य श्रान्तस्य तप्तस्य खिन्नस्य तेजोरसस्तेज एव रसस्तेजोरसोरसः सारो निरवर्तत प्रजापतिशरीरान्निष्क्रान्त इत्यर्थः। कोऽसौ निष्क्रान्तोऽग्निः सोऽण्डस्यान्तर्विराट्प्रजापतिः प्रथमजः कार्यकरणसंघातवाञ्जातः "स वै शरीरी प्रथमः" इति स्मरणात् ॥२॥

स च जातः प्रजापतिस्त्रेधा त्रिप्रकारमात्मानं स्वयमेव कार्यकरणसंघातं व्यकुरुत व्यभजदित्येतत्। कथं

अपामर्कत्वश्रवणान्नाग्नेरर्कत्वमिति शङ्कते—कः पुनरिति। प्रकरणमाश्रित्य तासामर्कत्वमौपचारिकमित्युत्तर-
१५ माह—उच्यत इति। तास्वन्तर्हिरण्मयमण्ड सवभूवेति श्रुतिमनुसरन्नुपचारे हेत्वन्तरमाह—अप्सु चेति। मुख्यमर्कत्व-मपा वारयति—न पुनरिति। ननु "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्याना समवाये पारदौर्बल्यमर्थविप्रकर्षात्" इतिन्यायात्प्रकरणादापो वा अर्क इति वाक्य बलवदित्याशङ्क्य वाक्यसहकृत प्रकरणमेव केवलवाक्याद्बलवदित्याशय-वानाह—वक्ष्यति चेति। भूतान्तरसहितास्वप्सु कारणभूतासु पृथिवीद्वारा पार्थिवोऽग्निः प्रतिष्ठित इत्युक्तमिदानी पृथिवीसर्गं ताभ्यो दर्शयति—तदित्यादिना। अप्सु भूतान्तरसहितासूत्पन्नासु सतीष्विति सप्तम्यर्थः। शर इव शर
२० इत्युक्तमेव व्याचष्टे—दध्न इवेति। संघाते सहकारिकारणमाह—तेजसेति। यत्तदिति पदे नपुंसकत्वेन श्रुते कथं तयोः शरशब्देन कारणस्योच्छूनत्ववाचिना पुल्लिङ्गेनान्वयस्तत्राऽऽह—लिङ्गव्यत्ययेनेति। उक्तानुपपत्तिद्योतनार्थो वाशब्दः। व्यत्ययेनान्वयमेवाभिनयति—योऽपामिति। वाक्यतात्पर्यमाह—ताभ्य इति। स्थूलप्रपञ्चात्मकविराजः सूक्ष्मप्रपञ्चा-त्मकसूत्रादुत्पत्तिं वक्तुं पातनिकामाह—तस्यामिति। उक्तेऽर्थे लोकप्रसिद्धिमनुकूलयति—सर्वो हीति। इदानीं विराडु-त्पत्तिमुपदिशति—किं तस्येत्यादिना। अग्निशब्दार्थं स्फुटयति—सोऽण्डस्येति। तस्य प्रथमशरीरित्वे मानमाह—
२५ स वा इति ॥२॥

विराजो ध्यानार्थमवच्छेदभेदमाह—स चेति। कोऽस्य त्रेधाभावस्य कर्तेति वीक्षायामाह—स्वयमेवेति।

---

ईश्वरकृतमेव। पञ्चीकृतसृष्टिस्तु जीवकर्तृका, तत्रापि प्रथममाकाशसृष्टिः—इत्यभिप्रायेण आकाशादित्रयानन्तर-मित्युक्तम् आकाशवायुतेज सृष्ट्युत्तरमित्यर्थः।

१. अर्कः जलं तत्स्रष्टा हिरण्यगर्भश्च। तदात्मना उपास्यत्वात् अश्वमेधाङ्गभूतचित्याग्निरप्यर्कः।
३० २. अप्सु पञ्चभूतेषु प्रतिष्ठित लोकात्मा विराडित्यर्थः।
३ लिङ्गव्यत्ययेन नपुंसकस्य पुंल्लिगतया विपरिणामेन।
४. तेजोरसः तेज इति ज्ञानमुच्यते प्रकाशात्मकत्वात्। रस इति प्राण उच्यते। ततः अप्रतिहतज्ञानशक्तिक्रिया-शक्तियुक्तः विराडजायत-(वा) निरवर्तत—सूत्रस्य स्थूलदेहावच्छेदार्थं तेज रसश्च निष्क्रान्तौ इत्यर्थ.—(वा)।
५. स त्रेधेति—स. हिरण्यगर्भ इत्यर्थ. न विराट् तत्र 'स एष प्राणस्त्रेधा विहित' इति वाक्यशेषे प्राणाख्यहिरण्य-
३५ गर्भस्य त्रिधाभावोक्तेः—वा।
६. श्रुतिलिङ्गादीना मध्ये पूर्वापूर्वापेक्षया उत्तरोत्तरस्य दौर्बल्यं, अत्र "आपो वा अर्क" इति वाक्यमप्यस्ति तेन वाक्यसहकृत प्रकरण केवलवाक्यात् प्रबलम्।

**तस्य प्राची दिक्शिरोऽसौ चासौ चेर्मौ। अथास्य प्रतीची दिक्पुच्छमसौ चासौ च सक्थ्यौ दक्षिणा चोदीची च पार्श्वे द्यौः पृष्ठमन्तरिक्षमुदरमियमुरः स एषोऽप्सु प्रतिष्ठितो यत्र क्व चैति तदेव प्रतितिष्ठत्येवं विद्वान् ॥३॥**

**सोऽकामयत द्वितीयो म आत्मा जायेतेति स मनसा वाचं मिथुनँ समभवदशनाया मृत्युस्तद्यद्रेत आसीत्स संवत्सरोऽभवत्। न ह पुरा ततः** ५

त्रेधेत्याह—आदित्यं तृतीयमग्निवाय्वपेक्षया त्रयाणां पूरणमकुरुतेत्यनुवर्तते। तथाऽग्न्यादित्यापेक्षया वायुं तृतीयम्। तथा वाय्वादित्यापेक्षयाग्निं तृतीयमिति द्रष्टव्यम्। सामर्थ्यस्य तुल्यत्वात्त्रयाणां संख्यापूरणत्वे। स एष प्राणः सर्वभूतानामात्माऽप्यग्निवाय्वादित्यरूपेण विशेषतः स्वेनैव मृत्य्वात्मना त्रेधा विहितो विभक्तो न विराट्स्वरूपोपमर्दनेन। तस्यास्य प्रथमजस्याग्नेरश्वमेधोपयोगिकस्यार्कस्य विराजश्चित्यात्मकस्याश्वस्येव दर्शनमुच्यते। सर्वा हि पूर्वोक्तोत्पत्तिरस्य स्तुत्यर्थेत्यवोचाम—इत्थमसौ शुद्धजन्मेति। तस्य प्राची दिक्शिरो विशिष्टत्वसामान्यात्। असौ १० चासौ चैशान्याग्नेय्यावीर्मौ बाहू। ईरयतेर्गतिकर्मणः। अथास्याग्नेः प्रतीची दिक्पुच्छं जघन्यो भागः। प्राङ्मुखस्य प्रत्यग्दिक्सम्बन्धात्। असौ चासौ च वायव्यनैर्ऋत्यौ सक्थ्यौ सक्थिनी पृष्ठकोणत्वसामान्यात्। दक्षिणा चोदीची च पार्श्वे उभयदिक्सम्बन्धसामान्यात्। द्यौः पृष्ठमन्तरिक्षमुदरमिति पूर्ववत्। इयमुरः अधोभागत्वसामान्यात्। स एषोऽग्निः प्रजापतिरूपो लोकाद्यात्मकोऽग्निरप्सु प्रतिष्ठितः। "एवमिमे लोका अप्स्वन्त." इति श्रुतेः। यत्र क्व च यस्मिन्कस्मिंश्चिदेति गच्छति तदेव तत्रैव प्रतितिष्ठति स्थितिं लभते। कोऽसावेवं यथोक्तमप्सु प्रतिष्ठितत्व- १५ मग्नेर्विद्वान्विजानन्गुणफलमेतत् ॥३॥

सोऽकामयत योऽसौ मृत्युः सोऽबादिक्रमेणाऽऽत्मनाऽऽत्मानमण्डस्यान्तः कार्यकरणसंघातवन्तं विराज-

कथमेकस्य त्रिधात्वमन्यथा वा कथमेकत्वमित्याह—कथमिति। मृदो घटशरावाद्यनेकरूपत्ववद्विराजो बहुरूपत्वं साधयति—आहेत्यादिना। कथमग्निं तृतीयमित्यश्रुतं कल्प्यते तत्राऽऽह—सामर्थ्यस्येति। वाय्वादित्ययोरिवाग्नेरपि संख्यापूरणत्वशक्तेरविशिष्टत्वादग्निं तृतीयमकुरुतेत्युपसंख्यायते स त्रेधाऽऽत्मानमिति चोपक्रमादित्यर्थः। ननु किमयं त्रेधाभावो २० विराट्स्वरूपोपमर्दनं क्रियते ? न हि स तस्मिन्सत्येव युक्तो विरोधादित्याह—स एष इति। यथा तन्त्ववस्थानुपमर्दनेन मूलकारणात्पटो जायते तथा सर्वेषां भूतानां प्राणतया साधारणोऽप्ययं स्वेनैव स्वतन्त्रेणानुगतेन मृत्युरूपेण त्रेधाविभागस्य कर्ता। न चैकस्य बहुरूपत्वविरोधो मायाविवदुपपत्तेरित्यर्थः। तस्य प्राचीत्यादेस्तात्पर्यमाह—तस्येति। उक्तानि विशेषणानि प्रकरणाविच्छेदार्थमनूद्यन्ते। अग्निविषयं दर्शनमिदानीमुच्यते चेन्नैवेहेत्यादि पूर्वोक्तमनर्थकमित्याशङ्क्याऽऽह—सर्वा हीति। स्तुतिमेवाभिनयति—इत्थमिति। कर्माङ्गस्याग्ने संस्कर्तव्यत्वाच्चित्याग्निशिरसि प्राचीदृष्टिः २५ कर्तव्येत्याह—तस्येति। आरोपे सादृश्यमाह—विशिष्टत्वेति। शिरसोऽनन्तरभावित्वात्तद्वाह्वोरैशान्यादिदृष्टिमाह—असौ चेति। कथमीर्मशब्दो बाहुवाचीत्याशङ्क्य तदुत्पत्तिमाह—ईरयतेरिति। गत्यर्थयोगादीर्मशब्दो बाहुमधिकरोतीत्यर्थः। तत्पुच्छादिषु प्रतीच्यादिदृष्टीरध्यस्यति—अथेत्यादिना। चित्यस्याग्नेः शिरसि बाह्वोः प्राच्यादिदृष्टिकरणानन्तरमित्यर्थः। सक्थिपदं पृष्ठनिष्ठोन्नतास्थिद्वयविषयम्। उभयशब्देन प्राचीप्रतीचीद्वयं गृह्यते। उरसि पृथिवीदृष्टिमाह—इयमिति। उपास्यमग्निमुक्तमनुवदति—स एष इति। तस्योपासनार्थमेवाप्सु प्रतिष्ठितत्वं गुणमुपदिशति— ३० अग्निरिति। भूतान्तरसहितानामपां सर्वलोककारणत्वादशेषलोकात्मकोऽग्निस्तत्र प्रतिष्ठितः संभवतीत्यत्र श्रुत्यन्तरं संवादयति—एवमिति। यथैतेषु लोकेषु सर्वं कार्यं प्रतिष्ठितं तथेति यावत्। लोकशब्देन स्थूलानां भूतानां सन्निवेशविशेषा गृह्यन्ते। अप्सु भूतान्तरसहितासु कारणभूतास्विति यावत्। फलश्रुतिं व्याचष्टे—यत्रेति। अथोपास्तिफलमपपुनर्मृत्युं जयतीत्यादिना वक्ष्यते। किमिदमस्थाने फलसंकीर्तनमत आह—गुणेति ॥३॥

उत्तरग्रन्थमवतार्य तस्य पूर्वग्रन्थेन सम्बन्धं वक्तुं वृत्तं कीर्तयति—सोऽकामयतेत्यादिना। अवान्तरव्यापार- ३५

---

१. अश्वमेधोपयोगिकस्य तदुपयोगिनः अंगस्य इमे लोका', तदात्मकोऽग्नि'।

संवत्सर आस तमेतावन्तं कालमबिभः। यावान्संवत्सरस्तमेतावतः कालस्य परस्तादसृजत। तं जातमभिव्याददात्स भाणकरोत्सैव वागभवत् ॥४॥

स ऐक्षत यदि वा इममभिमꣳस्ये कनीयोऽन्नं करिष्य इति स तया वाचा तेनात्मनेदꣳ सर्वमसृजत यदिदं किंचर्चो यजूꣳषि सामानि च्छन्दाꣳसि यज्ञान्प्रजाः

५ मग्निमसृजत त्रेधा चाऽऽत्मानमकुरुतेत्युक्तम्। स किंव्यापारः सन्नसृजतेति। उच्यते[1]—स मृत्युरकामयत कामितवान्। किम्। द्वितीयो मे ममाऽऽत्मा शरीरं येनाहं शरीरी स्यां स जायेतोत्पद्येतेत्येवमेतत् अकामयत। स एवं कामयित्वा मनसा पूर्वोत्पन्नेन वाचं त्रयीलक्षणां मिथुनं द्वंद्वभावं समभवत्संभवनं कृतवान्मनसा त्रय्यालोचितवांस्त्रयीविहितं सृष्टिक्रमं मनसाऽऽन्वालोचयदित्यर्थः। कोऽसावशनायया लक्षितो मृत्युः। अशनाया मृत्युरित्युक्तम्। तमेव परामृशत्यन्यत्र प्रसङ्गो मा भूदिति। तद्यद्रेत आसीत्। तत्र मिथुने यद्रेत आसीत्प्रथम-
१० शरीरिणः प्रजापतेरुत्पत्तौ कारणं रेतो बीजं ज्ञानकर्मरूपं त्रय्यालोचनायां यद्दृष्टवानासीज्जन्मान्तरकृतम्। तद्भावभावितोऽपः सृष्ट्वा तेन रेतसा बीजेनाप्स्वनुप्रविश्याण्डरूपेण गर्भीभूतः स संवत्सरोऽभवत्संवत्सरकालनिर्माता संवत्सरः प्रजापतिरभवत्। न ह पुरा पूर्वं ततस्तस्मात्संवत्सरकालनिर्मातुः प्रजापतेः संवत्सरः कालो नाम नाऽऽस न बभूव ह। तं संवत्सरकालनिर्मातारमन्तर्गर्भं प्रजापतिं यावानिह प्रसिद्धः काल एतावन्तमेतावत्संवत्सरपरिमाणं कालमबिभर्भृतवान्मृत्युः। यावान्संवत्सर इह प्रसिद्धस्ततः परस्तात्कि कृतवान्। तमेतावतः कालस्य
१५ संवत्सरमात्रस्य परस्तादूर्ध्वमसृजत सृष्टवानण्डमभिनदित्यर्थः। तमेवं कुमारं जातमग्निं प्रथमशरीरिणमशनायावत्त्वान्मृत्युरभिव्याददान्मुखविदारणं कृतवानत्तुम्। स च कुमारो भीतः स्वाभाविक्याऽविद्यया युक्तो भाणित्येवं शब्दमकरोत्। सैव वागभवद्वाक्शब्दोऽभवत् ॥४॥

स ऐक्षत स एवं भीतं कृतरवं कुमारं दृष्ट्वा मृत्युरैक्षतेक्षितवान्। अशनायावानपि यदि कदाचिदिमं कुमारमभिमंस्ये। अभिपूर्वो मन्यतिर्हिंसार्थः। हिंसिष्य इत्यर्थः। कनीयोऽन्नं करिष्ये कनीयोऽल्पमन्नं करिष्य
२० मन्तरेण कर्तृत्वानुपपत्तिरिति मत्वा-पृच्छति—स किं व्यापार इति। कामनादिरूपमवान्तरव्यापारमुत्तरवाक्यावष्टम्भेन दर्शयति—उच्यत इति। कामनाकार्यं मनःसंयोगमुपन्यस्यति—स एवमिति। कोऽयं मनसा सह वाचो द्वंद्वभावस्तत्राऽऽह—मनसेति। वाक्यार्थमेव स्फुटयति—त्रयीविहितमिति। वेदोक्तसृष्टिक्रमालोचनं प्रजापतेर्नेदं प्रथमं संसारस्यानादित्वादिति वक्तुमनुशब्दः। "सोऽकामयत"इत्यादौ सर्वनाम्नोऽव्यवहितविराड्विषयत्वमाशङ्क्य परिहरति—कोऽसावित्यादिना। कथं तया मृत्युर्लक्ष्यते तत्राऽऽह—अशनायेति। किमिति तर्हि पुनरुक्तिरित्याशङ्क्याऽऽह—तमेवेति।
२५ अन्यत्रानन्तरप्रकृते विराडात्मनीति यावत्। अवान्तरव्यापारान्तरमाह—तदित्यादिना। प्रसिद्धं रेतो व्यावर्तयति—ज्ञानेति। ननु प्रजापतेर्न ज्ञानं कर्म वा संभवति तत्रानधिकारादित्याशङ्क्याऽऽसीदित्यस्यार्थमाह—जन्मान्तरेति। वाक्यस्यापेक्षितं पूरयित्वा वाक्यान्तरमादाय व्याकरोति—तद्भावेत्यादिना। ननु संवत्सरस्य प्रागेव सिद्धत्वान्न प्रजापतेस्तन्निर्माणेन तदात्मत्वमित्याशङ्क्योत्तरं वाक्यमुपादत्ते—न ह पुरेति। तद्व्याचष्टे—पूर्वमिति। प्रजापतेरादित्यात्मकत्वात्तदधीनत्वाच्च संवत्सरव्यवहारस्याऽऽदित्यात्पूर्वं तद्व्यवहारो नाऽऽसीदेवेत्यर्थः। कियन्तं कालमण्डरूपेण
३० गर्भो बभूवेत्यपेक्षायामाह—तमित्यादिना। अवान्तरव्यापारमनेकविधमभिधाय विराडुत्पत्तिमाकाङ्क्षाद्वारोपसंहरति—यावानित्यादिना। केयं पूर्वमेव गर्भतया विद्यमानस्य विराजः सृष्टिस्तत्राऽऽह—अण्डमिति। विराडुत्पत्तिमुक्त्वा शब्दमात्रस्य सृष्टिं विवक्षुर्भूमिकां करोति—तमेवमिति। अयोग्येऽपि पुत्रभक्षणे प्रवर्तकं दर्शयति—अशनायावत्त्वादिति। विराजो भयकारणमाह—स्वाभाविक्येति। इन्द्रियं देवता च व्यावर्तयति—वाक्शब्द इति ॥४॥

इदानीमृगादिसृष्टिमुपदेष्टुं पातनिकां करोति—स इत्यादिना। ईक्षणप्रतिबन्धकसद्भावं दर्शयति—अशनाया-
३५ वानपीति। अभिपूर्वो मन्यतिरिति। रुद्रोऽस्य पशूनभिमन्येत नास्य रुद्रः पशूनभिमन्यत इत्यादि शास्त्रमत्र प्रमाणयित-

---

१. पूर्वमप्तृसर्ग उक्तः "तेजो रसो निरवर्ततग्निः" इति। सम्प्रति अन्नसर्ग उच्यते अशनायावत अन्नाण्वेक्षणात्—इत्यपि वार्तिककाराः इमं खण्डमवतारयन्ति। पूर्वमग्निप्राणयोः सृष्टिरुक्ता सम्प्रति संवत्सरात्मका दिव्यसृष्टिरुच्यते इत्यपि वार्त्तिके। मनःशब्देन ज्ञानमुच्यते ज्ञानं कर्म भावना इत्येतत्त्रयं प्रजापतेः सृष्ट्यादावाविरभवत्। स एव तेन हैमं पिण्डमसृजत् ततः संवत्सरोऽजायत—( वा )

**पशून्। स यद्यदेवासृजत तत्तदत्तुमध्रियत सर्वं वा अत्तीति तददितेरदितित्वं सर्वस्यैतस्यात्ता भवति सर्वमस्यान्नं भवति य एवमेतददितेरदितित्वं वेद ॥५॥ सोऽकामयत भूयसा यज्ञेन भूयो यजेयेति। सोऽश्राम्यत्स तपोऽतप्यत**

इत्येवमीक्षित्वा तद्भक्षणादुपरराम। बहु ह्यन्नं कर्तव्यं दीर्घकालभक्षणाय न कनीयः। तद्भक्षणे हि कनीयोऽन्नं स्याद्बीजभक्षण इव सस्याभावः। स एवं प्रयोजनमन्नबाहुल्यमालोच्य तयैव त्रय्या वाचा पूर्वोक्तया तेनैव चाऽऽत्मना ५ मनसा मिथुनीभावमालोचनमुपगम्योपगम्येदं सर्वं स्थावरं जङ्गमं चासृजत यदिदं किंच यत्किंचेदम्। किं तत्। ऋचो यजूंषि सामानि च्छन्दांसि च सप्त गायत्र्यादीनि स्तोत्रशस्त्रादिकर्माङ्गभूतांस्त्रिविधान्मन्त्रान्गायत्र्यादिच्छन्दोविशिष्टान्यज्ञांश्च तत्साध्यान्प्रजास्तत्कर्त्रीः पशूंश्च ग्राम्यानारण्यान्कर्मसाधनभूतान्। ननु त्रय्या मिथुनीभूतयाऽसृजतेत्युक्तमृगादीनीह कथमसृजतेति। नैष दोषः। मनसस्त्वव्यक्तोऽयं मिथुनीभावस्त्रय्या, बाह्यास्तु ऋगादीनां विद्यमानानामेव कर्मसु विनियोगभावेन व्यक्तीभावः सर्ग इति। स प्रजापतिरेवमन्नवृद्धिं बुद्ध्वा यद्यदेव क्रियां क्रिया- १० साधनं फलं वा किंचिदसृजत तत्तदत्तुं भक्षयितुमध्रियत धृतवान्मनः सर्वं कृत्स्नं वै यस्मादत्तीति तत्तस्माददितेरदितिनाम्नो मृत्योरदितित्वं प्रसिद्धम्। तथा च मन्त्रः "अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता" इत्यादिः। सर्वस्यैतस्य जगतोऽन्नभूतस्यात्ता सर्वात्मनैव भवत्यन्यथा विरोधात्। न हि कश्चित्सर्वस्यैकोऽत्ता दृश्यते तस्मात्सर्वात्मा भवतीत्यर्थः। सर्वमस्यान्नं भवत्यत एव सर्वात्मनो ह्यत्तुः सर्वमन्नं भवतीत्युपपद्यते। य एवमेतद्यथोक्तमदितेर्मृत्योः प्रजापतेः सर्वस्यादनाददितित्वं वेद तस्यैतत्फलम् ॥५॥ १५

सोऽकामयतेत्यश्वाश्वमेधयोर्निर्वचनार्थमिदमाह। भूयसा महता यज्ञेन भूयः पुनरपि यजेयेति। जन्मान्तरकरणापेक्षया भूयःशब्दः। स प्रजापतिर्जन्मान्तरेऽश्वमेधेनायजत। स तद्भावभावित एव कल्पादौ व्यावर्तत।

व्यम्। अन्नस्य कनीयस्त्वे का हानिरित्याशङ्क्याऽऽह—बहु हीति। तथाऽपि विराजो भक्षणे का क्षतिस्तत्राऽऽह—तद्भक्षणे हीति। तस्यान्नात्मकत्वात्तदुत्पादकत्वाच्चेति शेषः। कारणनिवृत्तौ कार्यनिवृत्तिरित्यत्र दृष्टान्तमाह—बीजेति। यथोक्तेक्षणानन्तर मिथुनभावद्वारा त्रयीसृष्टिं प्रस्तौति—स एवमिति। ननु विराजः सृष्ट्या स्थावरजङ्गमा- २० त्मनो जगत सृष्टेरुक्तत्वात्किं पुनरुक्त्येत्याशयेन पृष्ट्वा परिहरति—किं तदिति। गायत्र्यादीनीत्यादिपदेनोष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगतीछन्दास्युक्तानि। केवलानां छन्दसा सर्गासंभवात्तदारूढानामृग्यजुःसामात्मनां मन्त्राणां सृष्टिरत्र विवक्षितेत्याह—स्तोत्रेति। उद्गात्रादिना गीयमानमृग्जातं स्तोत्रं तदेव होत्रादिना शस्यमानं शस्त्रम्। स्तुतमनुशंसतीति हि श्रुतिः। यन्न गीयते न च शस्यतेऽध्वर्युप्रभृतिभिश्च प्रयुज्यते तदप्यत्र ग्राह्यमित्यभिप्रेत्याऽऽदिपदम् (यजूंषि)। अत एव त्रिविधानित्युक्तम्। अजादयो ग्राम्याः पशवो गवयादयस्त्वारण्या इति भेदः। कर्मसाधनभूतानसृजतेति २५ संबन्धः। स मनसा वाचं मिथुनं समभवदित्युक्तत्वात्प्रागेव त्रय्याः सिद्धत्वान्न तस्याः सृष्टिः श्लिष्टेति शङ्कते—नन्विति। व्यक्ताव्यक्तविभागेन परिहरति—नेत्यादिना। इति मिथुनीभावसर्गयोरुपपत्तिरिति शेषः। अत्तृसर्गश्चान्नसर्गश्चेति द्वयमुक्तम्। इदानीमुपास्यस्य प्रजापतेर्गुणान्तरं निर्दिशति—स प्रजापतिरित्यादिना। कथं मृत्योरदितिनामत्वं सिद्धवदुच्यते तत्राऽऽह—तथा चेति। अदितेः सर्वात्मत्वं वदता मन्त्रेण सर्वकारणस्य मृत्योरदितिनामत्वं सूचितमिति भावः। मृत्योरदितित्वविज्ञानवतोऽवान्तरफलमाह—सर्वस्येति। सर्वात्मनेति कुतो विशिष्यते तत्राऽऽह—अन्यथेति। ३० सर्वरूपेणावस्थानाभावे सर्वान्नभक्षणस्याशक्यत्वादित्यर्थः। विरोधमेव साधयति—न हीति। फलस्योपासनाधीनत्वात्प्रजापतिमदितिनामानमात्मत्वेन ध्यायन्ध्येयात्मा भूत्वा तत्तद्रूपत्वमापन्नः सर्वस्यान्नस्यात्ता स्यादित्यर्थः। अन्नमन्नमेवास्य सदा न कदाचित्तदस्यात्तृ भवतीति वक्तुमनन्तरवाक्यमादत्ते—सर्वमिति। अत एवेत्युक्तं व्यक्तीकरोति—सर्वात्मनो हीति ॥५॥

उपास्तिविधौ सफले सति समाप्तिरेव ब्राह्मणस्योचिता किमुत्तरग्रन्थेनेत्याशङ्क्य प्रतीकमादाय तात्पर्यमाह— ३५ सोऽकामयतेत्यादिना। तदेवाश्वमेधस्याश्वमेधत्वमित्येतदन्तं वाक्यमिदमा निर्दिश्यते। भूयोदक्षिणाकत्वादश्वमेधस्य

१. ननु 'सर्वस्यात्ता भवती'त्यनेनैव सर्वस्यान्नत्वे सिद्धे किमर्थं सर्वमस्यान्नं भवतीति चेन्न अन्नमन्नमेवास्य सदा, न कदाचित्तदस्यात्तृ भवतीति वक्तुं तदुक्तम्—वा० ।

तस्य श्रान्तस्य तप्तस्य यशो वीर्यमुदक्रामत् । प्राणा वै यशो वीर्यं तत्प्राणेषूत्क्रान्तेषु शरीरँ श्वयितुमध्रियत तस्य शरीर एव मन आसीत् ॥६॥

सोऽकामयत मेध्यं म इदँ स्यादात्मन्व्यनेन स्यामिति । ततोऽश्वः समभवद्यदश्वत्तन्मेध्यमभूदिति

सोऽश्वमेधक्रियाकारकफलात्मत्वेन निर्वृत्तः सन्नकामयत भूयसा यज्ञेन भूयो यजेयेत्येवं महत्कार्यं कामयित्वा
५ लोकवदश्राम्यत् । स तपोऽतप्यत । तस्य श्रान्तस्य तप्तस्येति पूर्ववत् । यशो वीर्यमुदक्रामदिति स्वयमेव पदार्थमाह । प्राणाश्चक्षुरादयो वै यशो यशोहेतुत्वात्तेषु हि सत्सु ख्यातिर्भवति । तथा वीर्यं बलमस्मिञ्शरीरे । न ह्युत्क्रान्तप्राणो यशस्वी बलवान्वा भवति । तस्मात्प्राणा एव यशो वीर्यं चास्मिञ्शरीरे । तदेवं प्राणलक्षणं यशो वीर्यमुदक्राम-दुत्क्रान्तवत् । तदेवं यशोवीर्यभूतेषु प्राणेषूत्क्रान्तेषु शरीराग्निष्क्रान्तेषु तच्छरीरं प्रजापतेः श्वयितुमुच्छूनभावं गन्तुमध्रियतामेध्यं चाभवत् । तस्य प्रजापतेः शरीरान्निर्गतस्यापि तस्मिन्नेव शरीरे मन आसीत् । यथा कस्य-
१० चित्प्रिये विषये दूरं गतस्यापि मनो भवति तद्वत् ॥६॥

स तस्मिन्नेव शरीरे गतमनाः सन्किमकरोदिति । उच्यते—सोऽकामयत कथं मेध्यं मेधार्हं यज्ञियं मे ममेदं शरीरं स्यात् । किंचाऽऽत्मन्व्यात्मवांश्चानेन शरीरेण शरीरवान्स्यामिति प्रविवेश । यस्मात्तच्छरीरं मद्वियोगादगतयशोवीर्यं सदश्वदश्वयत्ततस्तमादश्वः समभवत् । ततोऽश्वनामा प्रजापतिरेव साक्षादिति स्तूयते । यस्माच्च पुनस्तत्प्रवेशाद्गतयशोवीर्यत्वादमेध्यं सन्मेध्यमभूत्तदेव तस्मादेवाश्वमेधस्याश्वमेधनाम्नः क्रतोरश्वमेधत्वमश्वमेधनाम-
१५ लाभः । क्रियाकारकफलात्मको हि क्रतुः । स च प्रजापतिरेवेति स्तूयते । क्रतुनिर्वर्तकस्याश्वस्य प्रजापतिरुक्तमुषा वा अश्वस्य मेध्यस्येत्यादिना । तस्यैवाश्वस्य मेध्यस्य प्रजापतिस्वरूपस्याग्नेश्च यथोक्तस्य क्रतुफलात्मरूपतया

भूयस्त्वम् । इतिशब्दोऽकामयतेत्यनेन संबध्यते । कथं पुनस्तेन यक्ष्यमाणस्य प्रजापत्तेर्भूय.शब्दोक्तिः । न हि स पूर्वमश्वमेधमन्वतिष्ठत्कर्मानधिकारित्वात्तत्राऽऽह—जन्मान्तरेति । तदेव स्पष्टयति—स प्रजापतिरिति । अथातीते जन्मनि यजमानोऽश्वमेधस्य कर्ताऽभूत् । अधुना हिरण्यगर्भो भूयो यजेयेत्याह । तथाच कर्तृभेदाद्भूय शब्दासामञ्जस्यमत आह—
२० स तद्भावेति । स प्रजापतिरश्वमेधवासनाविशिष्टो ज्ञानकर्मफलत्वेन कल्पादौ निर्वृत्तो भूयो यजेयेत्याह कर्तृभोक्त्रोरैक्येन साधकफलावस्थयोर्यजमानसूत्रयोर्भेदाभावादित्यर्थ. । प्रजापतिरीश्वरो न तस्य दु.खात्मकक्रत्वनुष्ठानेच्छा युक्तेत्याशङ्क्य प्रकृतिवशात्तदुपपत्तिमभिप्रेत्याऽऽह—सोऽश्वमेधेति । कथमेतावता विवक्षिता स्तुतिः सिद्धेत्याशङ्क्याऽऽह—एवमिति । श्रमकार्यमाह—स तप इति । चक्षुरादीनां यशस्त्वे हेतुमाह—यशोहेतुत्वादिति । तदेव साधयति—तेषु हीति । प्राणा एवेति तथाशब्दार्थः । सत्सु हि तेषु शरीरे बलं भवतीति पूर्ववदेव हेतुरुन्नेय. । उक्तमर्थं व्यतिरेकद्वारा स्फोरयति—न
२५ हीति । प्राणानां यशस्त्वं वीर्यत्वं चोपसंहृत्य वाक्यार्थं निगमयति—तदेवमिति । तत्प्राणेष्वित्यादि व्याचष्टे—तदेवमित्यादिना । शरीरान्निर्गतस्य प्रजापतेर्मुक्तत्वमाशङ्क्याऽऽह—तस्येति ॥६॥

सम्यग्ज्ञानाभावादासङ्गे सत्यपि न पुनस्तस्मिन्प्रवेशो युक्त. परित्यक्तपरिग्रहायोगादिति शङ्कते—स तस्मिन्निति । अज्ञानवशात्परित्यक्तपरिग्रहोऽपि संभवतीत्याह—उच्यत इति । वीतदेहस्य कामनाऽयुक्तेति शङ्कते—कथमिति । सामर्थ्यातिशयादशरीरस्यापि प्रजापतेस्तदुपपत्तिरिति मन्वानो ब्रूते—मेध्यमिति । कामनाफलमाह—इति प्रविवेशेति ।
३० तथापि कथं प्रकृतनिरुक्तिसिद्धिरित्याशङ्क्याऽऽह—यस्मादिति । यच्छब्दो यस्मादिति व्याख्यातः । देहस्याश्वत्वेऽपि कथं प्रजापतेस्तथात्वमित्याशङ्क्य तत्तादात्म्यादित्याह—तत इति । अश्वस्य प्रजापतित्वेन स्तुतत्वात्तस्योपास्यत्व फलतीति भाव. । तथापि कथमश्वमेधनामनिर्वचनमित्याशङ्क्याऽऽह—यस्माच्चेति । क्रतोस्तदात्मकस्य प्रजापतेरिति यावत् । देहो हि प्राणवियोगादश्वयत्पुनस्तत्प्रवेशाच्च मेधार्होऽभूदतः सोऽश्वमेधस्तत्तादात्म्यात्प्रजापतिरपि तथेत्यर्थः । ननु प्रजापतित्वेनाश्वमेधस्य स्तुतिर्निष्प्रयोगिनी, अग्नेरुपास्यत्वेन प्रस्तुतत्वात्क्रतूपासनाभावादत आह—क्रियेति । ननु
३५ क्रत्वङ्गस्याश्वस्याश्वमेधक्रत्वात्मनश्चाग्नेरुक्तरीत्या स्तुतत्वात्तदुपास्तेश्च प्रागेवोक्तत्वादेष ह वा अश्वमेधमित्यादिवाक्य नोपयुज्यते तत्राऽऽह—क्रतुनिर्वर्तकस्येति । उक्तं च चित्यस्याग्नेस्तस्य प्राची दिगित्यादिना प्रजापतित्वमिति शेषः । अश्वोपासनमग्न्युपासनं चैकमेवेति वक्तुमुत्तरं वाक्यमित्याह—तस्यैवेति । य एवमेतददितेरदितित्व वेदेत्यादौ प्रागेव

१. यशो वीर्यं प्राणा इत्येतदुपलक्षणं लिङ्गशरीरस्य । लिङ्गशरीरोत्क्रान्तौ हि शरीरस्योच्छ्वयनम् । तस्योत्क्रान्तस्य पूर्वशरीरे मन आसीत् प्राचीनसंगवशात् ब्रह्मसाक्षात्काराभावात्—वा० ।

तदेवाश्वमेधस्याश्वमेधत्वम् । एष ह वा अश्वमेधं वेद य एनमेवं वेद । तमनवरुध्यैवामन्यत । तं संवत्सरस्य परस्तादात्मन आलभत । पशून्देवताभ्यः प्रत्यौहत् । तस्मात्सर्वदेवत्यं प्रोक्षितं प्राजापत्यमालभन्ते । एष ह वा अश्वमेधो य एष तपति तस्य संवत्सर आत्माय-मग्निरर्कस्तस्येमे लोका आत्मानस्तावेतावर्काश्वमेधौ । सो पुनरेकैव देवता भवति मृत्यु-रेवापपुनर्मृत्युं जयति नैनं मृत्युराप्नोति मृत्युरस्यात्मा भवत्येतासां देवतानामेको भवति ॥७॥　५

## इति प्रथमाध्यायस्य द्वितीयं ब्राह्मणम्

समस्योपासनं[1] विधातव्यमित्यारभ्यते । पूर्वत्र क्रियापदस्य विधायकस्याश्रुतत्वात्क्रियापदापेक्षत्वाच्च प्रकरणस्याय-मर्थोऽवगम्यते । एष ह वा अश्वमेधं क्रतुं वेद यः कश्चिदेनमश्वमग्निरूपमर्कं च यथोक्तमेवं वक्ष्यमाणेन समासेन प्रदर्श्यमानेन विशेषणेन विशिष्टं वेद स एषोऽश्वमेधं[2] वेद नान्यः । तस्मादेवं वेदितव्य इत्यर्थः । कथं, तत्र पशुविषयमेव तावद्दर्शनमाह । तत्र प्रजापतिर्भूयसा यज्ञेन भूयो यजेयेति कामयित्वाऽऽत्मानमेव पशुं मेध्यं कल्पयित्वा तं पशु-　१० मनवरुध्यैवोत्सृष्टं पशुमवरोधमकृत्वैव मुक्तप्रग्रहममन्यताचिन्तयत् । तं संवत्सरस्य पूर्णस्य परस्तादूर्ध्वमात्मने आत्मार्थमालभत । प्रजापतिदेवताकत्वेनेत्येतत्, आलभताऽऽलम्भं कृतवान् । पशूनन्यान्ग्राम्यानारण्यांश्च देवताभ्यो यथादैवतं प्रत्यौहत्प्रतिगमितवान् । यस्माच्चैवं प्रजापतिरमन्यत तस्मादेवमन्योऽप्युक्तेन विधिनाऽऽत्मानं पशुमश्वं मेध्यं कल्पयित्वा सर्वदेवत्योऽहं प्रोक्ष्यमाण आलभ्यमानस्त्वहं मद्देवत्य एव स्याम् । अन्य इतरे पशवो ग्राम्यारण्या यथादैवतमन्याभ्यो देवताभ्य आलभ्यन्ते मदवयवभूताभ्य एवेति विद्यात् । अत एवेदानीं सर्वदेवत्यं प्रोक्षितं　१५ प्राजापत्यमालभन्ते याज्ञिकाः ।

एवमेष ह वा अश्वमेधो य एष तपति यस्त्वेवं पशुसाधनकः क्रतुः स एष साक्षात्फलभूतो निर्दिश्यत एष ह वा अश्वमेधः । कोऽसौ य एष सविता[3] तपति जगदवभासयति तेजसा । तस्यास्य क्रतुफलात्मनः संवत्सरः कालविशेष आत्मा शरीरं तन्निर्वर्त्यत्वात्संवत्सरस्य । तस्यैव क्रत्वात्मनोऽग्निसाध्यत्वाच्च फलस्य

विहितमुपासनं किं पुनरारम्भेणेत्याशङ्क्याऽऽह—पूर्वत्रेति । यद्यपि विधिरदितित्वं वेदेति श्रुतस्तथाऽपि स गुणोपास्ति-　२० विधिर्न प्रधानविधिः । अत्र तु प्रधानविधिरुपास्तिप्रकरणत्वादपेक्ष्यते । अतोऽश्वमेधं वेदेति प्रधानविधिरिति भाव: । तात्पर्यमुक्त्वा वाक्यमादायाक्षराणि व्याकरोति—एष इति । यथोक्तमित्युत्तरत्र प्रजापतित्वमनुकृष्यते । तमनवरुध्ये-त्यादि प्रदर्श्यमानविशेषणम् । विधिरत्र स्पष्टो न भवतीत्याशङ्क्याऽऽह—तस्मादिति । अश्वमेधो विशेष्यत्वेन संबध्यते । एवंशब्दात्प्रसिद्धार्थत्वं भाति कुतो विधिरित्याह—कथमिति । एष ह वा अश्वमेधं वेदेत्यादौ विवक्षितस्य विधेर्भूमिका करोति—तत्रेत्यादिना । उपास्तिविधिप्रस्तावः सप्तम्यर्थः । कथं नु पशुविषयं दर्शनं तद्दर्शयति—तत्रेति । एवमनन्तर-　२५ वाक्ये प्रवृत्ते सतीति यावत् । अथ विवक्षितविधिमभिदधाति—यस्माच्चेति । प्रजापतिरित्थं फलावस्थायाममन्यतेत्यत्र किं प्रमाणमित्याशङ्क्य सम्प्रति तत्कार्यभूतासु प्रजासु तथाविधचेष्टादृष्टिरित्याह—अत एवेति । प्रोक्षितं मन्त्रसंस्कृतं पशुमिति यावत् ।

फलावस्थप्रजापतिवदित्येवंशब्दार्थः । उपासनविधिरुक्त: सम्प्रति प्रतीकमादाय तात्पर्यमाह—एष इति । द्विविधो हि क्रतुः कल्पितपशुहेतुको बाह्यतद्धेतुकश्च । स च द्विप्रकारोऽपि फलरूपेण स्थित. सवितैवेत्युपास्तिफल　३० वक्तुमेतद्वाक्यमित्यर्थ । विशेषोक्तिं विना नास्ति बुभुत्सोपशान्तिरित्याह—कोऽसाविति । क्रतुफलात्मकः सविता मण्डलं देवता वेति सन्देहे द्वितीय गृहीत्वा तस्येत्यादि व्याचष्टे—तस्यास्येति । आदित्योदयास्तमयाभ्यामहोरात्रद्वारा संवत्सर-व्यवस्थानात्तन्निर्मातुस्तस्य युक्तं तत्तादात्म्यमित्यर्थ । क्रतोरादित्यत्वमुक्त्वा तदङ्गस्याग्नेस्तद्वक्तुमयमग्निरर्क इति वाक्यं तस्यार्थमाह—तस्यैवेति । ननु पूर्वोक्तस्यैवाग्नेरादित्यत्व कुतो नियम्यतेऽन्यश्चित्योऽग्निरन्यश्चाग्निरादित्य. किं

१. समस्योपासन उषा वेत्युक्तमश्वम् अश्वमेधक्रत्वात्मकं चाग्निं मिलित्वा उपासनमत्र विधेयम् ।　३५
२. अश्वमेध वेदेति—प्रधानविधि. । अदितित्वं वेदेति—गुणविधि: ।
३. सवितृरूपः प्रजापतिः अग्नि. चित्याग्निः तत्साध्यः क्रतु सोऽपि प्रजापतिरेव ।

## अथ प्रथमाध्यायस्य तृतीयं ब्राह्मणम्

**द्वया ह प्राजापत्या देवाश्चासुराश्च । ततः कानीयसा एव देवा ज्यायसा असु-**
**रास्त एषु लोकेष्वस्पर्धन्त ते ह देवा ऊचुर्हन्तासुरान्यज्ञ उद्गीथेनात्ययामेति ॥१॥**

क्रतुरूपेणैव निर्देशः । अयं पार्थिवोऽग्निरर्कः साधनभूतः । तस्य चार्कस्य क्रतौ चित्यस्यैते लोकास्त्रयो-
५ ऽप्यात्मानः शरीरावयवाः । तथाच व्याख्यातं तस्य प्राचीदिगित्यादिना । तावग्न्यादित्यावेतौ यथाविशेषितावर्का-
श्वमेधौ क्रतुफले अर्को यः पार्थिवोऽग्निः स साक्षात्क्रतुरूपः क्रियात्मकः क्रतोरग्निसाध्यत्वात्तद्रूपेणैव निर्देशः ।
क्रतुसाध्यत्वाच्च फलस्य क्रतुरूपेणैव निर्देश आदित्योऽश्वमेध इति । तौ साध्यसाधनौ क्रतुफलभूतावग्न्यादित्यौ सा
उ पुनर्भूय एकैव देवता भवति । का सा, मृत्युरेव । पूर्वमप्येकैवाऽऽसीत्क्रियासाधनफलभेदाय विभक्ता । तथा चोक्तं
"स त्रेधाऽऽत्मानं व्यकुरुत" इति । सा पुनरपि क्रियानिर्वृत्त्युत्तरकालमेकैव देवता भवति मृत्युरेव फलरूपः । यः
१० पुनरेवमेनमश्वमेधं मृत्युमेकां देवतां वेदाहमेव मृत्युरस्म्यश्वमेध एका देवता मद्रूपाश्वाग्निसाधनसाध्येति ।
सोऽपजयति पुनर्मृत्युं पुनर्मरणं सकृन्मृत्वा पुनर्मरणाय न जायत इत्यर्थः । अपजितोऽपि मृत्युरेनं पुनराप्नुयादित्या-
शङ्क्याऽऽह—नैनं मृत्युराप्नोति । कस्मात् । मृत्युरस्यैवंविद आत्मा भवति । किंच मृत्युरेव फलरूपः सर्वेतासां
देवतानामेको भवति तस्यैतत्फलम् ॥७॥

इति प्रथमाध्यायस्य द्वितीयं ब्राह्मणम्

१५ द्वया हेत्याद्यस्य कः सम्बन्धः । कर्मणां ज्ञानसहितानां परा गतिरुक्ता । मृत्य्वात्मभावोऽश्वमेधगत्युक्त्या ।
अथेदानीं मृत्य्वात्मभावसाधनभूतयोः कर्मज्ञानयोर्यत उद्भवस्तत्प्रकाशनार्थमुद्गीथब्राह्मणमारभ्यते । ननु मृत्य्वात्म-
भावः पूर्वत्र ज्ञानकर्मणोः फलमुक्तम् । उद्गीथज्ञानकर्मणोस्तु मृत्य्वात्मभावातिक्रमणं फलं वक्ष्यति । अतो भिन्न-
विषयत्वात्फलस्य न पूर्वकर्मज्ञानोद्भवप्रकाशनार्थत्वमिति चेत् । नायं दोषः । अग्न्यादित्यात्मभावस्योद्गीथफलस्य
पूर्वत्राप्येतदेव फलमुक्तमेतासां देवतानामेको भवतीति । ननु मृत्युमतिक्रान्त इत्यादि विरुद्धम् । न, स्वाभाविक-

२० न स्यादित्याशङ्क्याऽऽह—तस्य चेति । तथाऽपि कथं तस्यैवाऽऽदित्यत्वं तत्राऽऽह—तया चेति । तस्य प्राचीत्यादिना
लोकात्मकत्वं चित्याग्नेरुक्तं तदिहाप्युच्यते तस्मात्तस्यैवात्राऽऽदित्यत्वमिष्टमित्यर्थः । अग्न्यादित्ययोरस्य लोकवेदसिद्ध-
त्वान्न तयोरेकेन क्रतुना तादात्म्यमित्याशङ्क्याऽऽह—ताविति । यथाविशेषितत्वमादित्यस्याश्वत्वम् । कुतस्तस्य चार्कस्य
क्रतुरूपत्वं साधनत्वेन भेदादित्याशङ्क्योपचारादित्याह—क्रियात्मक इति । तथाऽपि कथमादित्यस्य क्रतुतादात्म्योक्ति-
रित्याशङ्क्याऽऽह—क्रतुसाध्यत्वादिति । नन्वादित्यस्य क्रतुफलत्वेन क्रतुत्वे तद्धेतोरग्नेस्तादात्म्ययोगाद्युक्त-
२५ मग्नेरादित्यत्वमित्याशङ्क्याऽऽह—ताविति । क्रतुफलत्वात्तदात्मा सविता तद्धेतुश्चित्योऽग्निस्तावुभौ जगत्सृष्टिस्थितिः
पालनादिव्यापारौ सन्तावेकैव प्राणाख्या देवतेति तयोरैक्योक्तिरित्यर्थः । एकैवेत्युक्ते प्रकृतयोरग्न्यादित्ययोरन्यतरपरिशेष
शङ्कते—का सेति । कथं द्वयोरेकत्वमेकत्वे वा कथं द्वित्वं तत्राऽऽह—पूर्वमपीति । उक्तेऽर्थे वाक्योपक्रममनुकूलयति—
तथा चेति । पुनरित्यादेरर्थं निगमयति—सा पुनरिति । ननु फलकथनार्थमुपक्रम्य प्राणात्मनाऽग्न्यादित्ययोरेकत्वं
वदता प्रक्रान्तं विस्मृतमिति नेत्याह—यः पुनरिति । एकत्वमभिहितम् ॥७॥

३० इति प्रथमाध्यायस्य द्वितीयं ब्राह्मणम् ॥२॥

ब्राह्मणान्तरमवतार्य तस्य पूर्वेण सम्बन्धाभावेन सोऽस्तीत्याशङ्कते—द्वया हेत्याद्यस्येति । [illegible] सम्बन्धं
वक्तुं वृत्तं कीर्तयति—कर्मणामिति । सा काष्ठा सा परा गतिरिति श्रुतेस्तत्र परा गतिर्मुक्तिरित्याशङ्क्याऽऽह—
मृत्य्वात्मभाव इति । अश्वमेधोपासनस्य नाश्वमेधस्य केवलस्य वा फलमुक्तं नोपास्त्यन्तराणां कर्मान्तराणां केवला-
नामुक्ताश्वमेधस्यैक्योपास्त्यन्तराणां केवलानां समुच्चितानां च फलमुपलक्षयितुमित्याह—अश्वमेधेति । वृत्तमनूद्योत्तर-
३५ ब्राह्मणस्य तात्पर्यमाह—अथेति । ज्ञानयुक्तानां कर्मणां संसारफलत्वप्रकाशनार्थमिति यावत् । ज्ञानकर्मणोरुद्भवस्य

१. मूर्त्या अत्यनाद. [illegible] ज्ञानकर्मणोरुद्भवप्रकाशनार्थमुद्गीथ [illegible] ज्ञानं तदर्थम् उद्गीथस्य तृतीयब्राह्मणम्—टी० ।

पाप्मासङ्गविषयत्वादतिक्रमणस्य । कोऽसौ स्वाभाविकः पाप्मासङ्गो मृत्युः । कुतो वा तस्योद्भवः । केन वा तस्यातिक्रमणम् । कथं वेत्येतस्यार्थस्य प्रकाशनायाऽऽख्यायिकाऽऽरभ्यते । कथम्—द्वया द्विप्रकाराः । हेति पूर्ववृत्तावद्योतको निपातः । वर्तमानप्रजापतेः पूर्वजन्मनि यद्वृत्तं तदेव द्योतयति हशब्देन । प्राजापत्याः प्रजापतेर्वृत्तजन्मावस्थस्यापत्यानि प्राजापत्याः । के ते । देवाश्चासुराश्च । तस्यैव प्रजापतेः प्राणा वागादयः । कथं पुनस्तेषां देवासुरत्वम् । उच्यते—शास्त्रजनितज्ञानकर्मभाविता द्योतनाद्देवा भवन्ति । त एव स्वाभाविकप्रत्यक्षानुमानजनितदृष्टप्रयोजनकर्मज्ञानभाविता असुराः । स्वेष्वेवासुषु रमणात्सुरेभ्यो वा देवेभ्योऽन्यत्वात् । यस्माच्च दृष्टप्रयोजनज्ञानकर्मभाविता असुराः, ततस्तस्मात्कानीयसाः कनीयांस एव कानीयसाः स्वार्थेऽपि वृद्धिः कनीयांसोऽल्पा एव देवाः । ज्यायसा असुरा ज्यायांसोऽसुराः । स्वाभाविकी हि कर्मज्ञानप्रवृत्तिर्महत्तरा प्राणानां शास्त्रजनितायाः कर्मज्ञानप्रवृत्तेः । दृष्टप्रयोजनत्वात् । अत एव कनीयस्त्वं देवानां शास्त्रजनितप्रवृत्तेरल्पत्वात् । अत्यन्तयत्नसाध्या हि सा ।

ते देवाश्चासुराश्च प्रजापतिशरीरस्था एषु लोकेषु निमित्तभूतेषु स्वाभाविकेतरकर्मज्ञानसाध्येष्वस्पर्धन्त स्पर्धां कृतवन्तः । देवानां चासुराणाञ्च वृत्त्युद्भवाभिभवौ स्पर्धा कदाचिच्छास्त्रजनितकर्मज्ञानभावनारूपा वृत्तिः प्राणानामुद्भवति । यदा चोद्भवति तदा दृष्टप्रयोजना प्रत्यक्षानुमानजनितकर्मज्ञानभावनारूपा तेषामेव प्राणानां वृत्तिरा-

प्राणस्य स्वरूपं निरूपयितु ब्राह्मणमित्युत्थाप्योत्थापकत्वं सम्बन्धमुक्तमाक्षिपति—नन्विति । मृत्युमतिक्रान्तो दीप्यत इति मृत्योरतिक्रमस्य वक्ष्यमाणज्ञानकर्मफलत्वात्पूर्वत्र च तद्भावस्य तत्फलस्योक्तत्वादुभयस्यापि फलस्य भेदात्पूर्वोत्तरयोर्ज्ञानिकर्मणोर्विषयशङ्कितोद्देश्यभेदान्न पूर्वोक्तयोस्तयोरुद्भवकारणप्रकाशनार्थं ब्राह्मणमित्यर्थः । पूर्वोत्तरज्ञानकर्मफलभेदाभावादेकविषयत्वात्तदुद्भावकप्रकाशनार्थं ब्राह्मणं युक्तमिति परिहरति—नायमिति । वाक्यशेषविरोधं शङ्कित्वा दूषयति—नन्वित्यादिना । स्वाभाविक शास्त्रानाधेयो योऽयं पाप्मा विषयासङ्गरूपः स मृत्युस्तस्यातिक्रमणं वाक्यशेषे कथ्यते न हि हिरण्यगर्भाख्यमृत्योरतः पूर्वोक्तज्ञानकर्मभ्या तुल्यविषयत्वमेवोत्तरज्ञानकर्मणोरित्यर्थः । ज्ञानकर्मणोरुद्भावकत्वं वक्तु ब्राह्मणमारभ्यतामाख्यायिका तु किमर्थेत्याशङ्क्य तस्यास्तात्पर्यमाह—कोऽसाविति । कथं यथोक्तो ब्राह्मणाख्यायिकयोरर्थं शक्यो ज्ञातुमित्याकाङ्क्षा निक्षिप्याक्षराणि व्याकरोति—कथमित्यादिना । निपातार्थमेव स्फुटयति—वर्तमानेति । प्रजापतिशब्दो भविष्यद्वृत्त्या यजमानं गोचरयतीत्याह—वृत्तेति । इन्द्रादयो देवा विरोचनादयश्चासुरा इत्याशङ्कां वारयति—तस्यैवेति । यजमानेषु प्राणेषु देवत्वमसुरत्वं च विरुद्धं न सिध्यतीति शङ्कते—कथमिति । तेषु तदुभयमौपाधिकं साधयति—उच्यत इति । शास्त्रानपेक्षयोर्ज्ञानकर्मणोरुत्पादकमाह—प्रत्यक्षेति । संनिधानासंनिधानाभ्यां प्रमाणद्वयोक्तिः । स्वेष्वेवासुषु रमणं नामाऽऽत्मंभरित्वम् । तत इत्यादिवाक्यद्वयं व्याचष्टे—यस्माच्चेति । देवानामल्पत्वं प्रपञ्चयति—स्वाभाविकी हीति । महत्तरत्वे हेतुर्दृष्टप्रयोजनत्वादिति । असुराणां बहुत्वं प्रपञ्चयति—शास्त्रजनितेति । असुराणां बाहुल्यमिति शेषः । तदेव साधयति—अत्यन्तेति ।

उभयेषां देवासुराणां मिथः सघर्षं दर्शयति—देवाश्चेति । कथं ब्रह्मादीनां स्थावरान्तानां भोगस्थानानां स्पर्धानिमित्तत्वमित्याशङ्क्य तेषां शास्त्रीयेतरज्ञानकर्मसाध्यत्वात्तयोश्च देवासुरजयाधीनत्वात्तस्य च स्पर्धापूर्वकत्वात्परम्परया लोकानां तन्निमित्तत्वमित्यभिप्रेत्य विशिनष्टि—स्वाभाविकेति । का पुनरेषा स्पर्धा नामेत्याशङ्क्याऽऽह—देवानां चेति । तामेव सफलां विवृणोति—कदाचिदित्यादिना । अधिकृतैरसुरपराजये देवजये च प्रयतितव्य-

१. तस्यैव प्रजापतेः—अत्र प्रजापतिः यजमानः ज्ञानकर्मोपदेशस्य मनुष्याधिकारत्वात् । तदीयकर्मज्ञानजन्यत्वात् तदीयप्राणाः शुद्ध्यशुद्धिजाः—त एव देवासुरपदाभ्यामुच्यन्ते—वा० ।

२. इह वागादिपदैः तदधिष्ठातृदेवता विवक्षिताः ।

३. वागादीनां देवासुरत्वेन भेदोक्तिः उपाधिभेदात् शास्त्रीयसंस्कारवत्त्वतदभावाभ्याम् ।

४. स्वाभाविकी प्रवृत्तिस्तु जन्मान्तरीयसंस्कारवशात् या स्वभावेन सुखसाधने भवति ।

५. प्राणानामिन्द्रियाणाम् ।

६. शास्त्रजनितप्रवृत्तिः शास्त्राधीनेष्टसाधनत्वज्ञानजनिता शास्त्रीयकर्मसु प्रवृत्तिः ।

७. सन्निधानं प्रत्यक्षसिद्धार्थानाम्, असन्निधानमनुमानशब्दोपास्थापितानाम् ।

सुर्यभिभूयते। स देवानां जयोऽसुराणां पराजयः। कदाचित्तद्विपर्ययेण देवानां वृत्तिरभिभूयत आसुर्या उद्भवः।
सोऽसुराणां जयो देवानां पराजयः। एवं देवानां जये धर्मभूयस्त्वादुत्कर्ष आ प्रजापतित्वप्राप्तेः। असुरजयेऽध-
र्मभूयस्त्वादपकर्ष आ स्थावरत्वप्राप्तेः। उभयसाम्ये मनुष्यत्वप्राप्तिः। त एवं कनीयस्त्वादभिभूयमाना असुरैर्देवा
बाहुल्यादसुराणां किं कृतवन्त इत्युच्यते—ते देवा असुरैरभिभूयमाना ह किलोचुरुक्तवन्तः। कथम्। हन्तेदानीम-
५ स्मिन्यज्ञे ज्योतिष्टोम उद्गीथेनोद्गीथकर्मपदार्थकर्तृस्वरूपाश्रयणेनात्ययामातिगच्छामः। असुरानभिभूय स्वं
देवभावं शास्त्रप्रकाशितं प्रतिपद्यामह इत्युक्तवन्तोऽन्योन्यम्। उद्गीथकर्मपदार्थकर्तृस्वरूपाश्रयणं च ज्ञानकर्मस्याम्।
कर्म वक्ष्यमाणं मन्त्रजपलक्षणं विधित्स्यमानं तदेतानि जपेदिति। ज्ञानं त्विदमेव निरूप्यमाणम्। नन्विदमभ्यारो-
हजपविधिशेषोऽर्थवादो न ज्ञाननिरूपणपरम्। न; य एवं वेदेति वचनात्। उद्गीथप्रस्तावे पुराकल्पश्रवणादुद्गीथ-
विधिपरमिति चेत्। न। अप्रकरणात्। उद्गीथस्य चान्यत्र विहितत्वात् विद्याप्रकरणत्वाच्चास्य। अभ्यारोहजपस्य
१० चानित्यत्वात्। एवंवित्प्रयोज्यत्वात्। विज्ञानस्य च नित्यवच्छ्रवणात्। "तद्धैतल्लोकजिदेव" इति च श्रुतेः।
प्राणस्य वागादीनां च शुद्ध्यशुद्धिवचनात्। न ह्यनुपास्यत्वे प्राणस्य शुद्धिवचनं वागादीनां च सहोपन्यस्तानाम-
शुद्धिवचनं वागादिनिन्दया मुख्यप्राणस्तुतिश्चाभिप्रेतोपपद्यते। मृत्युमतिक्रान्तो दीप्यत इत्यादिफलवचनं च।
प्राणस्वरूपापत्तेर्हि फलं तद्यद्वागादीनामग्न्यादिभावः।

## प्राणस्य विशुद्ध्यादिगुणव्यवस्थापनम्

१५ भवतु नाम प्राणस्योपासनं न तु विशुद्ध्यादिगुणवत्तेति। ननु स्याच्छ्रुतत्वात्। न स्यादुपास्यत्वे स्तुत्यर्थ-
त्वोपपत्तेः। न। अविपरीतार्थप्रतिपत्तेः श्रेयःप्राप्त्युपपत्तेर्लोकवत्। यो ह्यविपरीतमर्थं प्रतिपद्यते लोके स इष्टं प्राप्नो-

मित्यनुग्रहबुद्ध्या जयफलमाह—एवमिति। आकाङ्क्षापूर्वकमनन्तरवाक्यमादाय व्याकरोति—त एवमित्यादिना।
योऽयमुद्गीथो नाम कर्माङ्गभूतः पदार्थस्तत्कर्तुः प्राणस्य स्वरूपाश्रयणमेव कथं सिध्यतीत्याशङ्क्याऽऽह–उद्गीथेति। किं
तत्कर्म किं वा ज्ञानं तदाह–कर्मेति। तदेतान्यसतो मा सद्गमयेत्यादीनि यजूंषि जपेदिति विधित्स्यमानमिति योजना।

२० ह्वया हेत्यादि न ज्ञाननिरूपणपरं जपविधिशेषत्वेनार्थवादत्वात्तत्कुतोऽत्र ज्ञानस्य निरूप्यमाणत्वमित्या-
क्षिपति—नन्विति। आभिमुख्येनाऽऽरोहति देवभावमनेनेत्यभ्यारोहो मन्त्रजपस्तद्विधिशेषोऽर्थवादो ह्वया हेत्यादि-
वाक्यमित्यर्थः। उपास्तिविधिश्रवणात्तत्परं वाक्यं न जपविधिशेष इति दूषयति—नेति। मा भूज्जपविधिशेषस्त-
थाऽप्युद्गायेत्यौद्गात्रस्य कर्मणः संनिधाने पुरातनकल्पनाप्रकारस्य ह्वया हेत्यादिना श्रवणात्तद्विधिशेषोऽर्थवादोऽयमिति
शङ्कते—उद्गीथेति। नेदं वाक्यं ज्ञानं चोद्गीथविधिशेषस्तत्प्रकरणस्यान्वाभावेन सनिध्यभावादिति दूषयति—नाप्र-
२५ करणादिति। उद्गीथस्तर्हि क्व विधीयते न खल्वविहितमङ्गं भवति तत्राह—उद्गीथस्य चेति। अन्यत्रेति
कर्मकाण्डोक्तिः। अथोद्गायेत्युद्गीथविधिरपीह प्रतीयते तत्कथं सनिधिरपोद्यते तत्राऽऽह—विद्येति। उद्गीथविधिरिह
प्रतीयमानः प्राणस्योद्गातृदृष्ट्योपासनविधिरन्यथा प्रकरणविरोधादित्यर्थः। जपविधिशेषत्वमुद्गीथविधिशेषत्वं वा
ज्ञानस्य नास्तीत्युक्तम्। इदानीं जपविधिशेषत्वाभावे युक्त्यन्तरमाह—अभ्यारोहेति। अनित्यत्वं साधयति–एवमिति।
प्राणविज्ञानवताऽनुष्ठेयो जपो न तद्विज्ञानात्प्रागस्ति। तेनासौ पश्चाद्भावी प्रागेव सिद्धं विज्ञानं प्रयोजयतीत्यर्थः।
३० तस्यापि प्राचीनत्वं कथमित्याशङ्क्याऽऽह—विज्ञानस्य चेति। य एवं विद्वान्पौर्णमासीं यजत' इतिवद्य एवं वेदेति
विज्ञानं श्रुतम्। न हि प्रयाजादि पौर्णमासीप्रयोजकम्। तस्या एव तत्प्रयोजकत्वात्। तथा प्राणवित्प्रयोज्यो जपो
न विज्ञानप्रयोजकः तस्य स्वप्रयोजकत्वेन प्रागेव सिद्धेरावश्यकत्वादित्यर्थः। फलवत्त्वाच्च प्राणविज्ञानं स्वतन्त्रं
विवित्सितमित्याह—तद्धेति। प्राणोपास्तेर्विवक्षितत्वे हेत्वन्तरमाह—प्राणस्येति। 'यद्धि स्तूयते तद्विधीयते' इति
न्यायमाश्रित्योक्तमेव प्रपञ्चयति—न हीति। इतश्च प्राणोपास्तिरत्र विवित्सितेत्याह—मृत्युमिति। फलवचनं
३५ प्राणस्यानुपास्यत्वे नोपपद्यत इति संबन्धः। उक्तमेव व्यनक्ति—प्राणेति। मृत्युमोक्षणानन्तरं वागादीनां यदग्न्यादित्वं
फलं तदध्यात्मपरिच्छेदं हित्वोपासितुराधिदैविकप्राणस्वरूपापत्तेरुपपद्यते। तस्माद्विवित्सितैवात्र प्राणोपास्तिरित्यर्थः।

उक्तन्यायेन प्राणोपास्तिमुपेत्य प्राणदेवतां शुद्ध्यादिगुणवतीमाक्षिपति—भवत्विति। यथा प्राणस्योपास्तिः
शास्त्रदृष्टत्वादिष्टा तथाऽस्य गुणसंबन्धः श्रुतत्वादेष्टव्य उपास्तावुपास्ये च गुणवति प्राणे प्रामाणिकत्वप्राप्तेरविशेषा-

त्यनिष्टाद्वा निवर्तते न विपरीतार्थप्रतिपत्त्या। तथेहापि श्रौतशब्दजनितार्थप्रतिपत्तौ श्रेयःप्राप्तिरुपपन्ना न विपर्यये। न चोपासनार्थश्रुतशब्दोत्थविज्ञानविषयस्यायथार्थत्वे प्रमाणमस्ति। न च तद्विज्ञानस्यापवादः श्रूयते। ततः श्रेयःप्राप्तिदर्शनाद्यथार्थतां प्रतिपद्यामहे। विपर्यये चानर्थप्राप्तिदर्शनात्। यो हि विपर्ययेणार्थं प्रतिपद्यते लोके पुरुषं स्थाणुरित्यमित्रं मित्रमिति वा सोऽनर्थं प्राप्नुवन्दृश्यते। आत्मेश्वरदेवतादीनामप्ययथार्थानामेव चेद्ग्रहणं श्रुतितोऽनर्थप्राप्त्यर्थं शास्त्रमिति ध्रुवं प्राप्नुयाल्लोकवदेव, न चैतदिष्टम्। तस्माद्यथाभूतानेवाऽऽत्मेश्वरदेवतादीन्ग्राहयत्युपासनार्थं शास्त्रम्। नामादौ ब्रह्मदृष्टिदर्शनादयुक्तमिति चेत्स्फुटं नामादेरब्रह्मत्वं तत्र ब्रह्मदृष्टिं स्थाण्वादाविव पुरुषदृष्टिं विपरीतां ग्राहयच्छास्त्रं दृश्यते। तस्माद्यथार्थमेव शास्त्रतः प्रतिपत्तेः श्रेय इत्ययुक्तमिति चेत्। न। प्रतिमावद्भेदप्रतिपत्तेः। नामादावब्रह्मणि ब्रह्मदृष्टिं विपरीतां ग्राहयति शास्त्रं स्थाण्वादाविव पुरुषदृष्टिमिति नैतत्साध्ववोचः। कस्मात्? भेदेन हि ब्रह्मणो नामादिवस्तुप्रतिपन्नस्य नामादौ विधीयते ब्रह्मदृष्टिः प्रतिमादाविव विष्णुदृष्टिः। १०

ब्रह्मप्रतिपादनं नाम ब्रह्मेतिवत् नोपासनापरम्

आलम्बनत्वेन हि नामादिप्रतिपत्तिः प्रतिमादिवदेव न तु नामाद्येव ब्रह्मेति। यथा स्थाणावनिज्ञाते न स्थाणुरिति पुरुष एवायमिति प्रतिपद्यते विपरीतं, न तु तथा नामादौ ब्रह्मदृष्टिर्विपरीता। ब्रह्मदृष्टिरेव केवला;

दिति सिद्धान्ती ब्रूते—नन्विति। प्राणस्योपास्यत्वेऽपि विशुद्ध्यादिगुणवादस्य स्तुत्यर्थत्वेनार्थवादत्वसंभवान्न यथोक्ता देवता स्यादिति पूर्ववाद्याह—न स्यादिति। विशुद्ध्यादिगुणवादस्यार्थवादत्वेऽपि नाभूतार्थवादत्वमिति परिहरति— १५ नेति। विशुद्ध्यादिगुणविशिष्टप्राणदृष्टेरत्र फलप्राप्तिः श्रुता न सा ज्ञानस्य मिथ्यार्थत्वे युक्ता सम्यग्ज्ञानादेव पुमर्थप्राप्तेः संभवादतः स्तुतिरपि यथार्थैवेत्यर्थः। लोकदृष्टान्तं व्याचष्टे—यो हीति। इहेति वेदाख्यदार्ष्टान्तिकोक्तिः। ननु विशुद्ध्यादिगुणवती देवतां वदन्ति वाक्यान्युपासनाविध्यर्थत्वान्न स्वार्थे प्रामाण्य प्रतिपद्यन्ते तत्राऽऽह—न चेति। अन्यपराणामपि वाक्याना मानान्तरसंवादविसंवादयोरसतो. स्वार्थे प्रामाण्यमनुभवानुसारिभिरेष्टव्यमित्यर्थः। ननु प्राणस्य विशुद्ध्यादिवादो न स्वार्थे मानमन्यपरत्वादादित्ययूपादिवाक्यवदत आह—न चेति। आदित्ययूपादिवाक्यार्थ- २० ज्ञानस्य प्रत्यक्षादिनाऽपवादवद्विशुद्ध्यादिगुणविज्ञानस्य नापवादः श्रुतस्तस्माद्विशुद्ध्यादिवादस्य स्वार्थे मानत्वमप्रत्यूहमित्यर्थं। विशुद्ध्यादिगुणकप्राणविज्ञानात्फलश्रवणात्तद्वादस्य यथार्थत्वमेवेत्युपसंहरति—तत इति। लोकवद्वेदेऽपि सम्यग्ज्ञानादिष्टप्राप्तिरनिष्टपरिहारश्चेत्यन्वयमुखेनोक्तमर्थं व्यतिरेकमुखेनापि समर्थयते—विपर्यये चेत्यादिना। शास्त्रस्यानर्थार्थत्वमिष्टमिति शङ्कां निराचष्टे—न चेति। अपौरुषेयस्यासंभावितसर्वदोषस्याशेषपुरुषार्थहेतोः शास्त्रस्यानर्थार्थत्वमेष्टुमशक्यमित्यर्थ। शास्त्रस्य यथाभूतार्थत्वं निगमयति—तस्मादिति। उपासनार्थं ज्ञानार्थं चेति शेषः। २५ शास्त्राद्यथार्थप्रतिपत्तेः श्रेयःप्राप्तिरित्यत्र व्यभिचारं चोदयति—नामादाविति। तदेव स्फुटयति—स्फुटमिति। अब्रह्मणि ब्रह्मदृष्टिरतस्मिंस्तद्बुद्धित्वान्मिथ्या धी सा च यावन्नाम्नो गतमित्यादिश्रुत्या फलवती ततः शास्त्राद्यथार्थप्रतिपत्तेरेव फलमित्ययुक्तमित्यर्थः। भेदाग्रहपूर्वकोऽन्यस्यान्यात्मतावभासो मिथ्याज्ञानमत्र तु भेदे भासमानेऽन्यत्रान्यदृष्टिर्विधीयते। यथा विष्णोर्भेदे प्रतिमाया गृह्यमाणे तत्र विष्णुदृष्टिः क्रियते तन्नेद मिथ्याज्ञानमित्याह—नेति। नञर्थं स्पष्टयति—नामादाविति। प्रश्नपूर्वकं हेतुं व्याचष्टे—कस्मादिति। ३०

प्रतिमाया विष्णुदृष्टिं प्रत्यालम्बनत्वमेव न विष्णुतादात्म्य नामादेस्तु ब्रह्मतादात्म्यं श्रुतमिति वैषम्यमाशङ्क्याऽऽह—आलम्बनत्वेनेति। उक्तमर्थं वैधर्म्यदृष्टान्तेन स्पष्टयति—यथेति। कर्ममीमांसको ब्रह्मविद्वेषं प्रकटयन्प्रत्यवतिष्ठते—ब्रह्मेति। केवला तद्दृष्टिरेव नाम्नि चोद्यते चोदनावशाच्च फल सेत्स्यति ब्रह्म तु नास्ति मानाभावादित्यर्थः।

१. अन्यपराणामिति—अयं देवताधिकरणन्यायः। तत्र अन्यपराणामपि 'वज्रहस्तः पुरन्दर' इत्यादिवाक्यानां स्वार्थे प्रामाण्यम् अवान्तरतात्पर्यं चाभ्युपगतं तन्न्यायेनात्रोक्तप्राणविशुद्धे ध्येयत्वमेवेत्यर्थ। ३५
२. 'आदित्यो यूपः' इति घृतेन कृताञ्जनस्य यूपस्य स्तुतिः। सारूप्यादादित्यत्वोक्तिः। आदित्यपदं न सूर्यपरं यूपे तद्बाधात् अतः सारूप्यात् गौणम्।
३. अयमाहार्यारोपः जानन्नेव भेदमभेदारोपणात्। स्थाणुपुरुषदृष्टिस्तु भ्रमः।

नास्ति ब्रह्मेति चेत् । एतेन प्रतिमाब्राह्मणादिषु विष्ण्वादिदेवपित्रादिदृष्टीनां तुल्यता । न । ऋगादिषु पृथिव्यादिदृष्टिदर्शनात् । विद्यमानपृथिव्यादिवस्तुदृष्टीनामेवर्गादिविषये क्षेपदर्शनात् । तस्मात्तत्सामान्यान्नामादिषु ब्रह्मादिदृष्टीनां विद्यमानब्रह्मादिविषयत्वसिद्धिः ।

## ब्रह्मदृष्टेः सत्यविषयत्वनियमः

५ एतेन प्रतिमाब्राह्मणादिषु विष्ण्वादिदेवपित्रादिबुद्धीनां च सत्यवस्तुविषयत्वसिद्धिः । मुख्यापेक्षत्वाच्च गौणत्वस्य । पञ्चाग्न्यादिषु चाग्नित्वादेर्गौणत्वान्मुख्याग्न्यादिसद्भाववन्नामादिषु ब्रह्मत्वस्य गौणत्वान्मुख्यब्रह्मसद्भावोपपत्तिः क्रियार्थैश्चाविशेषाद्विद्यार्थानाम् । यथा च दर्शपूर्णमासादिक्रियैवंफला विशिष्टेतिकर्तव्यतैवंक्रमप्रयुक्ताङ्गा चेत्येतदलौकिकं वस्तु प्रत्यक्षाद्यविषयं तथाभूतं च वेदवाक्यैरेव ज्ञाप्यते । तथा परमात्मेश्वरदेवतादिवस्तु अस्थूलादिधर्मकमशनायाद्यतीतं चेत्येवमादिविशिष्टमिति वेदवाक्यैरेव ज्ञाप्यत इत्यलौकिकत्वात्तथाभूतमेव
१० भवितुमर्हतीति । न च क्रियार्थैर्वाक्यैर्ज्ञानवाक्यानां बुद्ध्युत्पादकत्वे विशेषोऽस्ति । न चानिश्चिता विपर्यस्ता वा परमात्मादिवस्तुविषया बुद्धिरुत्पद्यते । अनुष्ठेयाभावादयुक्तमिति चेत् । क्रियार्थैर्वाक्यैस्त्र्यंशा भावनानुष्ठेया ज्ञाप्यतेऽलौकिक्यपि । न तथा परमात्मेश्वरादिविज्ञानेऽनुष्ठेयं किंचिदस्ति । अतः क्रियार्थैः साधर्म्यमित्ययुक्तमिति चेत् । न । ज्ञानस्य तथाभूतार्थविषयत्वात् । न ह्यनुष्ठेयस्य त्र्यंशस्य भावनाख्यस्यानुष्ठेयत्वात्तथात्वं किं तर्हि

अथ यथा देवानां प्रतिमादिषूपास्यमानानामन्यत्र सत्त्वं यथा च वस्त्राद्यात्मनां पितॄणां ब्राह्मणादिदेहे तर्प्यमाणानामन्यत्र
१५ सत्त्वं तथा ब्रह्मणोऽपि नामादावुपास्यत्वादन्यत्र सत्त्वं भविष्यतीत्याशङ्क्याऽऽह—एतेनेति । नामादौ ब्रह्मदर्शनेनेति यावत् । दृष्टान्तासिद्धेर्न क्वापि ब्रह्मास्तीति भावः । सत्यज्ञानादिलक्षणं ब्रह्म नास्तीत्ययुक्तम् "सदेव सोम्येदम्" इत्यादिश्रुतेरित्याह—नेति । किंच ब्रह्मदृष्टिः सत्यार्था शास्त्रीयदृष्टित्वादियमेवर्गग्निः सामेतिदृष्टिवदित्याह—ऋगादिष्विति । तदेवं स्पष्टयति—विद्यमानेति । तामिर्दृष्टिभिः सामान्यं दृष्टित्वं तस्मादिति यावत् ।

यत्तु दृष्टान्तासिद्धिरिति तत्राऽऽह—एतेनेति । ब्रह्मदृष्टेः सत्यार्थत्ववचनेनेति यावत् । ब्रह्मास्तित्वे हेत्वन्तर-
२० माह—मुख्यापेक्षत्वादिति । उक्तमेव विवृणोति—पञ्चेति । पञ्चाग्नयो द्युपर्जन्यपृथिवीपुरुषयोषितः । आदिपदं वागवेन्द्रादिग्रहार्थम् । ननु वेदान्तवेद्यं ब्रह्मोच्यते न च तेभ्यस्तद्धीः सिध्यति तेषां विधिवंधुर्येणाप्रामाण्यात्तत्कुतो ब्रह्मसिद्धिरत आह—क्रियार्थैश्चेति । विमतं स्वार्थे प्रमाणमज्ञातज्ञापकत्वात्संमतवत् । अतो वेदान्तशास्त्रादेव ब्रह्मसिद्धिरित्यर्थः । सिद्धसाध्यार्थभेदेन वैषम्यादविशिष्टत्वमनिष्टमित्याशङ्क्योक्तं विवृणोति—यथा चेति । विशिष्टत्वं स्वरूपोपकारित्वं फलोपकारित्वं च । पञ्चमोक्तं प्रकारं परामृष्टुमेवमित्यादिदृष्टम् । अलौकिकत्व साधयति—प्रत्यक्षादीति । किञ्च
२५ वेदान्तानामप्रामाण्यं बुद्ध्यनुत्पत्तेर्वा संशयाद्युत्पत्तेर्वा ? नाऽऽद्य इत्याह—न चेति । न द्वितीय इत्याह—न चानिश्चितेति । कोटिद्वयास्पर्शित्वादबाधाच्चेत्यर्थः । क्रियार्थैर्वाक्यैर्विद्यार्थानां वाक्यानां साधर्म्यमुक्तमाक्षिपति—अनुष्ठेयेति । साधर्म्यस्यायुक्तत्वमेव व्यनक्ति—क्रियार्थैरिति । वाक्योत्थबुद्धेर्यथार्थत्वाद्विषयभावेपि वाक्यप्रामाण्यमज्ञातज्ञापकत्वेनाविरुद्धमिति

---

१. दर्शपूर्णमासक्रिया—दर्शसंज्ञकेष्टिः पूर्णमाससंज्ञकेष्टिश्च । एवंफला स्वर्गफला, विशिष्टेतिकर्तव्यताका संकल्पमारभ्य ब्राह्मणतर्पणान्ताङ्गकलापयुक्ता । एवंक्रमयुक्ता अङ्गक्रमः वेदेनैवोक्तः श्रुत्यर्थपाठादिभि तत्प्रमाणे निर्णीतः ।
३० २. प्रत्यक्षादेर्विषयत्वं यत्र नास्तीति विगृह्य प्रत्यक्षादिनिरूपितविषयतारहितेत्यर्थे व्याख्येयम् । विषयशब्दस्य नित्यपुंल्लिङ्गतया तत्पुरुषसमासे वस्तुविशेषणत्वायोगात् ।
३. क्रियार्थवाक्यानि 'अग्निहोत्रं जुहुयादि'त्यादीनि तैः साध्यसाधनेतिकर्तव्यतारूपांशत्रयविशिष्टार्थभावना बोध्यते ।
४. साध्यं स्वर्गादि, साधनं अग्निहोत्रहोम', इतिकर्तव्यता अङ्गकलाप. । तस्या. अनुष्ठानमग्निहोत्रस्य यथावदनुष्ठानेन सिध्यति ।
३५ ५. स्वरूपोपकारित्वम्—यागस्वरूपोपकारि किञ्चिदङ्गं यथा द्रव्यं देवता च । देवतोद्देशेन द्रव्यत्यागरूपत्वाद्यागस्य ।
६. फलोपकार्यङ्गं प्रयाजादियागाः ते च प्रकरणादङ्गतया गृहीताः ।
७. पञ्चमोक्तमिति—पूर्वमीमांसायां पञ्चमाध्याये क्रमविचारः । तत्र यः प्रकार. श्रुत्यर्थपाठादिभि उपदिष्ट. स ग्राह्यः एवमित्यनेन ।

प्रमाणसमधिगतत्वात् । न च तद्विषयाया बुद्धेरनुष्ठेयविषयत्वात्तथात्वं किं तर्हि वेदवाक्यजनितत्वादेव ।

सिद्धार्थपरवाक्यप्रामाण्यसिद्धान्तः

वेदवाक्याधिगतस्य वस्तुनस्तथात्वे सत्यनुष्ठेयत्वविशिष्टं चेदनुतिष्ठति नो चेदनुष्ठेयत्वविशिष्टं नानुतिष्ठति । अननुष्ठेयत्वे वाक्यप्रमाणत्वानुपपत्तिरिति चेत् । न ह्यनुष्ठेयेऽसति पदानां संहतिरुपपद्यते । अनुष्ठेयत्वे तु सति तादर्थ्येन पदानि संहन्यन्ते । तत्रानुष्ठेयनिष्ठं वाक्यं प्रमाणं भवतीदमनेनैवं कर्तव्यमिति । न त्विदमनेनैवमित्ये- ५ वंप्रकाराणां पदशतानामपि वाक्यत्वमस्ति 'कुर्यात्क्रियेत कर्तव्यं भवेत्स्यादिति पञ्चमम्' इत्येवमादीनामन्यतमेऽसति अतः परमात्मेश्वरादीनामवाक्यप्रमाणत्वम् । पदार्थत्वे च प्रमाणान्तरविषयत्वम् । अतोऽसदेतदितिचेत् । न । अस्ति मेरुर्वर्णचतुष्टयोपेत इत्येवमाद्यननुष्ठेयेऽपि वाक्यदर्शनात् । न च मेरुर्वर्णचतुष्टयोपेत इत्येवमादिवाक्यश्रवणे मेर्वादावनुष्ठेयत्वबुद्धिरुत्पद्यते । तथाऽस्तिपदसहितानां परमात्मेश्वरादिप्रतिपादकवाक्यपदानां विशेषणविशेष्यभावेन संहतिः केन वार्यते । १०

परमात्मनि प्रयोजनसत्त्वादपि वेदान्तप्रामाण्यम्

मेर्वादिज्ञानवत्परमात्मज्ञाने प्रयोजनाभावादयुक्तमिति चेत् । न । "ब्रह्मविदाप्नोति परम्" "भिद्यते हृदयग्रन्थिः" इति फलश्रवणात्, संसारबीजाविद्यादिदोषनिवृत्तिदर्शनाच्च । अनन्यशेषत्वाच्च तज्ज्ञानस्य जुह्वामिव फलश्रुतेरर्थवादत्वानुपपत्तिः । प्रतिषिद्धानिष्टफलसंबन्धश्च वेदादेव विज्ञायते । न चानुष्ठेयः सः । न च परिहरति—न ज्ञानस्येति । अनुष्ठेयनिष्ठत्वमन्तरेण कुतो वस्तुनि प्रयोगप्रत्यययोस्तथार्थत्वमित्याशङ्क्य तयोर्विषयतया १५ तथार्थत्वं तदपेक्षस्वप्रामाण्यार्थत्वं वेति विकल्प्याऽऽद्यं दूषयति—न हीति । तदुभयविषयस्य कर्तव्यार्थस्य तथात्वं न कर्तव्यत्वापेक्षं किंतु मानगम्यत्वादन्यथा विप्रलम्भकविधिवाक्येऽपि तथात्वापत्तेरित्यर्थः । द्वितीयं प्रत्याह—न चेति । बुद्धिग्रहणं प्रयोगोपलक्षणार्थम् । कर्तव्यतार्थविषयप्रयोगादेर्नानुष्ठेयविषयत्वान्मानत्वं किंतु प्रमाकरणत्वात्तज्जन्यत्वाच्चान्यथोक्तातिप्रसक्तितादवस्थ्यादतोऽनुष्ठेयनिष्ठत्वं मानत्वेऽनुपयुक्तमित्यर्थः ।

कुतस्तर्हि कार्याकार्यधियावित्याशङ्क्याऽऽह—वेदेति । वैदिकस्यार्थस्याबाधेन तथार्थत्वे सिद्धे समीहितसाध- २० नत्वविशिष्टं चेद्वस्तु तदा कर्तव्यमिति धियाऽनुतिष्ठति । तच्चेदनिष्टसाधनत्वविशिष्टं तदा न कार्यमिति धिया नानुतिष्ठति । अतो मानात्तस्यानुष्ठानाननुष्ठानहेतू कार्याकार्यधियावित्यर्थः । तथाऽपि ब्रह्मणो वाक्यार्थत्वं पदार्थत्वं वा ? नाऽऽद्य इत्याह—अननुष्ठेयत्व इति । तस्याकार्यत्वेऽपि वाक्यार्थत्वं किं न स्यादित्याशङ्क्याह—न हीति । उभयत्रासतीतिच्छेदः । द्वितीयं दूषयति—पदार्थत्वे चेति । ब्रह्मणः शास्त्रार्थत्वमेतदित्युच्यते कार्यास्पृष्टेऽर्थे वाक्यप्रामाण्यं दृष्टान्तेन साधयति—नेत्यादिना । शुक्लकृष्णलोहितमिश्रलक्षणं वर्णचतुष्टयं तद्विशिष्टो मेरुरस्तीत्यादिप्रयोगे मेर्वादावकार्येऽपि २५ सम्यग्धीदर्शनात्तत्त्वमसिवाक्यादपि कार्यास्पृष्टे ब्रह्मणि सम्यग्ज्ञानसिद्धिरित्यर्थः । दृष्टान्तेऽपि कार्यधीरेव वाक्यादुदेतीत्याशङ्क्याऽऽह—न चेति । ननु तत्र क्रियापदाधीना पदसंहतिर्युक्ता वेदान्तेषु पुनस्तदभावात्पदसंहत्ययोगात्कुतो वाक्यप्रमाणत्वं ब्रह्मणः सम्भवति तत्राऽऽह—तथेति ।

विमतमफलं सिद्धार्थज्ञानत्वात्संमतवदित्यनुमानात्तत्त्वमादेः सिद्धार्थस्यायुक्तं मानत्वमिति शङ्कते—मेर्वादीति । श्रुतिविरोधेनानुमानं धुनीते—नेत्यादिना । विद्वदनुभवविरोधाच्च नैवमित्याह—संसारेति । फलश्रुतेरर्थवादत्वेना- ३०

१. कुर्यादित्यादि—"एतत्स्यात् सर्ववेदेषु नियतं विधिलक्षणम्" । इत्युत्तरार्धं । तत्र विधिः इष्टसाधनत्वं तस्य लक्षणं प्रतिपादकमित्यर्थः । केवललिङादेः प्रयोगानर्हतया सर्वधात्वर्थानुगमकाः कृ-भू-अस्तयः प्रयुक्ताः । कुर्यादिति करोतु इत्यस्योपलक्षणम् । क्रियेत इति कर्मणि प्रयोगः तत्रापि विधिशक्तिरस्त्येव । तथा च यजेत, अध्येतव्यः, आग्नेयो भवति । दण्डी भवेत्, दण्डिना भवितव्यं, दण्डिना भूयेत, इत्यादयः उदाहार्याः एवमस्धातोरपि । जन्मार्थ. भूधातुः, जन्मफलभूतसत्तार्थक. अस्-धातुः इति भेदः । ३५

२. अस्तिपदेति—'यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपः' 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्येवमादीना चेत्यर्थः ।

३ जुह्वामिवेति—'यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति'—इति वाक्ये फलश्रवणमर्थवादः । ननु पर्णतया जुहूकरणस्य तत् फलमिति 'द्रव्यसंस्कारकर्मसु फलश्रुतिरर्थवादः स्यादि'त्यधिकरणे निर्णीतम् वाक्यभेदापत्तेः (पू० मी०) ।

४. प्रयोग शब्दप्रयोगः ।

प्रतिषिद्धविषये प्रवृत्तक्रियस्याकरणादन्यदनुष्ठेयमस्ति । अकर्तव्यताज्ञाननिष्ठतैव हि परमार्थतः प्रतिषेधविधीनां स्यात् ।

### निषेधवाक्यवत् अनुष्ठेयाभावेऽपि वेदान्तानां प्रामाण्यम्

क्षुधार्तस्य प्रतिषेधज्ञानसंस्कृतस्याभक्ष्येऽभोज्ये वा प्रत्युपस्थिते कलञ्जाभिशस्तान्नादाविदं भक्ष्यम् अदो
५ भोज्यमिति वा ज्ञानमुत्पन्नं तद्विषयया प्रतिषेधज्ञानस्मृत्या बाध्यते । मृगतृष्णिकायामिव पेयज्ञान तद्विषययाथात्म्यविज्ञानेन, तस्मिन्बाधिते स्वाभाविकविपरीतज्ञानेऽनर्थकरी तद्भक्षणभोजनप्रवृत्तिर्न भवति । विपरीतज्ञाननिमित्तायाः प्रवृत्तेर्निवृत्तिरेव न पुनर्यत्नः कार्यस्तदभावे । तस्मात्प्रतिषेधविधीनां वस्तुयाथात्म्यज्ञाननिष्ठतैव न पुरुषव्यापारनिष्ठतागन्धोऽप्यस्ति । तथेहापि परमात्मादियाथात्म्यज्ञानविधीनां तावन्मात्रपर्यवसानतैव स्यात् । तथा तद्विज्ञानसंस्कृतस्य तद्विपरीतार्थज्ञाननिमित्तानां प्रवृत्तीनामनर्थार्थत्वेन ज्ञायमानत्वात् परमात्मादियाथा-

१० मानत्वादनुमानाबाधकतेत्याशङ्क्याऽऽह–अनन्येति । पर्णमयीत्वाधिकरणन्यायेन जुह्वाः फलश्रुतेरर्थवादत्वं युक्तम् । ब्रह्मधियोऽन्यशेषत्वप्रापकाभावात्तत्फलश्रुतेरर्थवादत्वासिद्धिरिति । अन्यथा शारीरकानारम्भ. स्यादित्यर्थ । श्रुत्यनुभवाभ्या वाक्योत्थज्ञानस्य फलवत्त्वदृष्टेर्युक्ता कार्यास्पृष्टेऽस्वार्थे तत्त्वमस्यादेर्मानतेत्युक्तं सम्प्रति शास्त्रस्य कार्यपरत्वानियमे हेत्वन्तरमाह—प्रतिषिद्धेति । यद्यपि कलञ्जभक्षणादेरधःपातस्य च सम्बन्धो न कलञ्जं भक्षयेदित्यादिवाक्यात्प्रतीयते तथाऽपि तस्यानुष्ठेयत्वाद्वाक्यस्यानुष्ठेयनिष्ठत्वसिद्धिरित्याशङ्क्याऽऽह—न चेति । सम्बन्धस्याभावार्थत्वान्नानुष्ठेयतेत्यर्थं ।
१५ अभक्षणादि कार्यमिति विधिपरत्वमेव निषेधवाक्यस्य किं न स्यादित्याशङ्क्याऽऽह—न चेति । तस्यापि कार्यार्थत्वे विधिनिषेधभेदभङ्गान्नञश्च स्वसम्बन्ध्यभावबोधने मुख्यस्यार्थान्तरे वृत्तौ लक्षणापातान्निषिद्धविषये रागादिना प्रवृत्तक्रियावतो निषेधशास्त्रार्थधीसंस्कृतस्य निषेधश्रुतेरकरणात्प्रसक्तक्रियानिवृत्त्युपलक्षितादौदासीन्यादन्यदनुष्ठेय न प्रतिभातीत्यर्थः । भावविषय कर्तव्यत्वं विधीनामर्थोऽभावविषयं तु निषेधानामिति विशेषमाशङ्क्याह—अकर्तव्यतेति । अभावस्य भावार्थत्वाभावात्कर्तव्यताविषयत्वासिद्धिरिति हिशब्दार्थः ।

२० प्रतिषेधज्ञानवतोऽपि कलञ्जभक्षणादिज्ञानदर्शनात्तन्निवृत्तेर्नियोगाधीनत्वात्तन्निष्ठमेव वाक्यमेष्टव्यमिति चेन्नेत्याह–क्षुधार्तस्येति । विषलिप्तबाणहतस्य पशोर्मांसं कलञ्जं ब्रह्मवधाद्यभिशापयुक्तस्यान्नपानाद्यभोज्यं तस्मिन्नभक्ष्येऽभोज्ये च प्राप्ते यद्भ्रमजानं क्षुत्क्षामस्योत्पन्न तन्निषेधधीसस्कृतस्य तद्धीस्मृत्या बाध्यमित्यत्र लौकिकदृष्टान्तमाह–मृगतृष्णिकायामिति । तथाऽपि प्रवृत्त्यभावसिद्धये विधिरर्थ्यतामिति चेन्नेत्याह—तस्मिन्निति । तदभाव प्रवृत्त्यभावो न विधिजन्यप्रयत्नसाध्यो निमित्ताभावेनैव सिद्धेरित्यर्थ । दृष्टान्तमुपसहरति—तस्मादिति । दार्ष्टान्तिकमाह—तथेति । न केवलं
२५ तत्त्वमस्यादिवाक्याना सिद्धवस्तुमात्रपर्यवसानता किंतु सर्वकर्मनिवर्तकत्वमपि सिध्यतीत्याह—तथेति । अकर्त्रभोक्तृ ब्रह्माहमितिज्ञानसंस्कृतस्य प्रवृत्तीनामभाव स्यादिति संबन्ध । अस्माद्ब्रह्मभावाद्विपरीतोऽर्थो यस्य कर्तृत्वादिज्ञानस्य

---

१. अकर्तव्यतेति—प्रभाकरमतम्—'न हिंस्यादि'त्यादौ हिंसाद्यकरणं विधेयं न तु प्रतिषेधमात्रमिति । तदत्र निषिध्यते ।

२. मानत्वमिति—अनधिगताबाधितप्रयोजनवदर्थज्ञानजनकत्व प्रमाणलक्षणम् । प्रयोजनाभावे च तत्त्वमादिवाक्य-
३० ममानमित्यर्थ ।

३ अधःपातः नरकपातः ।

४. प्रतीयत इति—निषेधसमभिव्याहृतलिङः निवर्तना अर्थं । तत. निवर्तनाविषयत्वेन कलञ्जभक्षणादे अनिष्टसाधनत्वमनुमीयते । तत ततो निवृत्तिः इति भाट्टाः । न्यायमते तु बलवदनिष्टाननुबन्धित्वमपि लिङर्थ तस्य नञर्थेऽन्वयात् बलवदनिष्टजनकत्व शाब्दमिति भेदः ।

३५ ५. संबन्धस्य भक्षणनरकसंबन्धस्य । अभावार्थत्वात्–भावार्थ धात्वर्थः कृतिसाध्यः तन्निष्ठत्वाभावात् संबन्धस्येत्यर्थः ।

६ अभक्षणादि—भक्षणाभावसंकल्पादीत्यर्थः ।

७. अर्थान्तरे संकल्पे ।

८. प्रसक्तेति-रागप्राप्तभक्षणादिक्रियानिवृत्त्युपलक्षितमौदासीन्य तूष्णीभाव ।

९. तद्विपरीतार्थः कर्तृत्वभोक्तृत्वरूप ।

त्म्यज्ञानस्मृत्या स्वाभाविके तन्निमित्तविज्ञाने बाधितेऽभावः स्यात्। ननु कलञ्जादिभक्षणादेरनर्थार्थत्ववस्तुया-थात्म्यज्ञानस्मृत्या स्वाभाविके तद्भक्ष्यत्वादिविपरीतज्ञाने निवर्तिते तद्भक्षणाद्यनर्थप्रवृत्त्यभाववदप्रतिषेधविषय-त्वाच्छास्त्रविहितप्रवृत्त्यभावो न युक्त इति चेत्। न। विपरीतज्ञाननिमित्तत्वानर्थार्थत्वाभ्यां तुल्यत्वात्। कलञ्ज-भक्षणादिप्रवृत्तेर्मिथ्याज्ञाननिमित्तत्वमनर्थार्थत्वं च यथा तथा शास्त्रविहितप्रवृत्तीनामपि। तस्मात्परमात्मयाथात्म्य-विज्ञानवतः शास्त्रविहितप्रवृत्तीनामपि मिथ्याज्ञाननिमित्तत्वेनानर्थार्थत्वेन च तुल्यत्वात्परमात्मज्ञानेन विपरीतज्ञाने ५ निवर्तिते युक्त एवाभावः।

### नित्यकर्मणामज्ञानप्रयुक्तत्वमेव न तु केवलशास्त्रप्रयुक्तता

ननु तत्र युक्तो नित्यानां तु केवलशास्त्रनिमित्तत्वादनर्थार्थत्वाभावाच्चाभावो न युक्त इति चेत्। न। अविद्यारागद्वेषादिदोषवतो विहितत्वात्। यथा स्वर्गकामादिदोषवतो दर्शपूर्णमासादीनि काम्यानि कर्माणि विहितानि तथा सर्वानर्थबीजाविद्यादिदोषवतस्तज्जनितेष्टानिष्टप्राप्तिपरिहाररागद्वेषादिदोषवतश्च तत्प्रेरिताविशेष- १० प्रवृत्तेरिष्टानिष्टप्राप्तिपरिहारार्थिनो नित्यानि कर्माणि विधीयन्ते न केवलं शास्त्रनिमित्तान्येव। न चाग्निहोत्रदर्श-पूर्णमासचातुर्मास्यपशुबन्धसोमानां कर्मणां स्वतः काम्यनित्यत्वविवेकोऽस्ति। कर्तृगतेन हि स्वर्गादिकामदोषेण कामार्थता। तथाऽविद्यादिदोषवतः स्वभावप्राप्तेष्टानिष्टप्राप्तिपरिहारार्थिनस्तदर्थान्येव नित्यानीति युक्तं तं प्रति विहितत्वात्। न परमात्मयाथात्म्यविज्ञानवतः शमोपायव्यतिरेकेण किंचित्कर्म विहितमुपलभ्यते। कर्मनिमित्त-

तन्निमित्तानामनर्थार्थत्वेन ज्ञायमानत्वादिति हेतुः। कदा पुनस्तासामभावः स्यादत आह—परमात्मादीति। भ्रान्ति- १५ प्राप्तभक्षणादिनिरासेन निवृत्तिनिष्ठतया निषेधवाक्यस्य मानत्ववत्तत्त्वमादेरपि प्रत्यगज्ञानोत्थकर्तृत्वादिनिवर्तकत्वेन मानत्वोपपत्तिरिति समुदायार्थः। दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमाशङ्कते—नन्विति। तस्य निषिद्धत्वादनर्थार्थत्वमेव यद्वस्तुयाथात्म्यं तज्ज्ञानेन निषेधे कृते तत्संस्कारद्वारा संपादितस्मृत्या शास्त्रीयज्ञानेन विपरीतज्ञाने बाधिते तत्कार्य-प्रवृत्त्यभावो निमित्ताभावे नैमित्तिकाभावन्यायेन युक्तो न तथाऽग्निहोत्रादिप्रवृत्त्यभावो युक्तः। ब्रह्मविदाऽग्निहोत्रादि न कर्तव्यमिति निषेधानुपलम्भादित्यर्थः। तत्त्वमस्यादिवाक्येनार्थान्निषिद्धमग्निहोत्रादीति मन्वानः साम्यमाह— २० नेत्यादिना। शास्त्रीयप्रवृत्तीनां गर्भवासादिहेतुत्वादनर्थार्थत्वमहं कर्तेत्याद्यभिमानकृतत्वेन विपरीतज्ञाननिमित्तत्वम्। एतदेव दृष्टान्तावष्टम्भेन स्पष्टयति—कलञ्जेति।

काम्यानामज्ञानहेतुत्वानर्थार्थत्वाभ्यां विदुषस्तेषु प्रवृत्त्यभावो युक्तो नित्यानां तु शास्त्रमात्रप्रयुक्तानुष्ठानत्वान्ना-ज्ञानकृतत्वं प्रत्यवायाख्यानर्थध्वंसित्वाच्च नानर्थकरत्वमतस्तेषु प्रवृत्त्यभावो युक्तो न भवतीति शङ्कते—नन्विति। नित्यानां शास्त्रमात्रकृतानुष्ठानत्वमसिद्धमिति परिहरति—नेत्यादिना। तदेव प्रपञ्चयति—यथेति। अविद्यादीत्यादि-शब्देनास्मितादिक्लेशचतुष्टयोक्तिः। तैरविद्यादिभिर्जनितेष्टप्राप्तौ तादृगनिष्टप्राप्तौ च क्रमेण रागद्वेषवत. पुरुषस्येष्ट- २५ प्राप्तिमनिष्टपरिहारं च वाञ्छतस्ताभ्यामेव रागद्वेषाभ्यामिष्टं मे भूयादनिष्टं मा भूदित्यविशेषकामनाभिः प्रेरिताविशेषप्रवृत्तियुक्तस्य नित्यानि विधीयन्ते। स्वर्गकामः पशुकाम इति विशेषार्थिनः काम्यानि। तुल्यं नूभयेषां केवल-शास्त्रनिमित्तत्वमित्यर्थः। किंच काम्यानां दुष्टत्वं ब्रुवता नित्यानामपि तदिष्टमुत्पत्तिविनियोगप्रयोगाधिकारविधिरूपे विशेषाभावादित्याह—न चेति। कथं तर्हि काम्यनित्यविभागस्तत्राऽऽह—कर्तृगतेनेति। स्वर्गकामः पशुकाम इति विशेषार्थिनः काम्यविधिरिष्टं मे स्यादनिष्टं मा भूदित्यविशेषकामप्रेरिताविशेषितप्रवृत्तिमतो नित्यविधिरित्युक्तमित्यर्थः। ३० नन्वविद्यादिदोषवतो नित्यानि कर्माणीत्ययुक्तं परमात्मज्ञानवतोऽपि यावज्जीवश्रुतेस्तेषामनुष्ठेयत्वादित्याशङ्क्य श्रुतेरवि-रक्तविषयत्वान्मैवमित्याह—न परमात्मेति। "योगारूढस्य तस्यैव शमः कारणमुच्यते" इति स्मृतेर्ज्ञानपरिपाके कारणं कर्मोपशम एव प्रतीयते न तथा कर्मविधिरित्यर्थः। न केवलं विहितं नोपलभ्यते न संभवति चेत्याह—कर्मनिमित्तेति।

---

१ अविशेषप्रवृत्तेः लौकिककर्मणि वा स्तम्भनोच्चाटनादिप्रवृत्तेर्वा संभवात्। तद्व्यावर्तयितुं शास्त्रेण नित्यानि विहितानि यथा सन्ध्यायां गायत्रीजपः। बुद्धिप्रेरकस्य सवितुः ध्यानं विषयमानुकूल्येन लाभकरप्रवृत्तिषु ३५ प्रेरणकरत्वेन दृष्टार्थमपि।

२ शमोपाय. कर्मनिवृत्तिरूपोपायः।

३. तन्निमित्तानां प्रवृत्तीनां बाध इति संबन्ध.।

देवतादिसर्वसाधनविज्ञानोपमर्देन ह्यात्मज्ञानं विधीयते ।

**ब्रह्मज्ञानिनः कर्मप्रवृत्त्यनुपपत्तिः**

न चोपमर्दितक्रियाकारकादिविज्ञानस्य कर्मप्रवृत्तिरुपपद्यते । विशिष्टक्रियासाधनादिविज्ञानपूर्वकत्वात्क्रिया-प्रवृत्तेः । न हि देशकालाद्यनवच्छिन्नास्थूलाद्वयादिब्रह्मप्रत्ययधारिणः कर्मावसरोऽस्ति । भोजनादिप्रवृत्त्यवसरवत्स्या-
५ दिति चेत् । न, अविद्यादिकेवलदोषनिमित्तत्वाद्भोजनादिप्रवृत्तेरावश्यकत्वानुपपत्तेः । न तु तथाऽनियतं कदाचि-त्क्रियते कदाचिन्न क्रियते चेति नित्यं कर्मोपपद्यते । केवलदोषनिमित्तत्वात्तु भोजनादिकर्मणोऽनियतत्वं स्यात् दोषो-द्भवाभिभवयोरनियतत्वात्कामानामिव काम्येषु । शास्त्रनिमित्तकालाद्यपेक्षत्वाच्च नित्यानामनियतत्वानुपपत्तिः दोषनिमित्तत्वे सत्यपि यथा काम्याग्निहोत्रस्य शास्त्रविहितत्वात्सायंप्रातःकालाद्यपेक्षत्वमेवम् । तद्भोजनादिप्रवृत्तौ

यदा नासि त्वं संसारी किंत्वकर्त्रभोक्तृ ब्रह्मासीति श्रुत्या ज्ञाप्यते तदा देवतायाः संप्रदानत्वं करणत्वं व्रीह्यादेरित्येतत्
१० सर्वमुपमृदितं भवति । तत्कथमकर्त्रादिज्ञानवतः संभवति कर्मविधिरित्यर्थः ।

उपमृदितमपि वासनावशादुद्भविष्यति । ततश्च विदुषोऽपि कर्मविधिः स्यादित्याशङ्क्याऽऽह—न चेति । वास-नावशादुद्भूतस्याऽऽभासत्वादात्मस्मृत्या पुनः पुनर्बाधाच्च विदुषो न कर्मप्रवृत्तिरित्यर्थः । किञ्चानवच्छिन्नं ब्रह्मास्मीति स्मरतस्तदात्मकस्य देशादिसापेक्षं कर्म निरवकाशमित्याह—नहीति । विदुषो भिक्षाटनादिवत्कर्मावसरः स्यादिति शङ्कते—भोजनादीति । अपरोक्षज्ञानवतो वा परोक्षज्ञानवतो वा भोजनादिप्रवृत्तिः ? नाऽऽद्यः । अनभ्युपगमात्तत्प्रवृ-
१५ त्तेर्बाधितानुवृत्तिमात्रत्वादग्निहोत्रादेरबाधिताभिमाननिमित्तस्य तथात्वानुपपत्तेरित्यभिप्रेत्याऽऽह—नेति । न द्वितीयः । परोक्षज्ञानिनः शास्त्रानपेक्षक्षुत्पिपासादिदोषकृतत्वात्तत्प्रवृत्तेरिष्टत्वादित्याह—अविद्यादीति । अग्निहोत्राद्यपि तथा स्यादिति चेन्नेत्याह—न त्विति । भोजनादिप्रवृत्तेरावश्यकत्वानुपपत्तिं विवृणोति—केवलेति । न तु तथेत्यादि प्रपञ्चयति—शास्त्रनिमित्तेति । तर्हि शास्त्रविहितकालाद्यपेक्षत्वान्नित्यानामदोषप्रभवत्वं भवेदित्याशङ्क्याऽऽह—दोषेति । एवं दोषकृतत्वेऽपि नित्यानां शास्त्रसापेक्षत्वात्कालाद्यपेक्षत्वमविरुद्धमित्याह—एवमिति । भोजनादेर्दोषकृतत्वेऽपि—
२० 'चातुर्वर्ण्यं चरेद्भैक्षं' 'यतीनां तु चतुर्गुणम्' इत्यादिनियमवद्विदुषोऽग्निहोत्रादिनियमोऽपि स्यादिति शङ्कते—तद्भोजना-दीति । विदुषो नास्ति भोजनादिनियमोऽतिक्रान्तविधित्वात् । न चैतावता यथेष्टचेष्टापत्तिः अधर्माधीनाऽविवेककृता हि सा । न च तौ विदुषो विद्येते अतोऽविद्यावस्थायामप्यसती यथेष्टचेष्टा विद्यादशायां कुतः स्यात् । संस्कारस्याप्य-भावात् । बाधितानुवृत्तेश्च । अग्निहोत्रादेस्त्वनाभासत्वान्न बाधितानुवृत्तिरित्याह—नेति । किंचाविदुषां विधिरिप्सूणामेव नियमः । तेषां विधिनिषेधगोचरत्वात् । न च तेषामप्येष ज्ञानोदयपरिपन्थी । तस्यान्यनिवृत्तिरूपस्य स्वयंक्रियात्वा-

२५ १. देवतादिसाधनानि यानि तेषु मिथ्यात्वबुद्धिः, तेषु संप्रदानत्वकरणत्वादौ च मिथ्यात्वेनाभावबुद्धिश्च ।
२. विज्ञानोपमर्देन—क्रियाकारकादिभेदज्ञाननिवृत्तिफलमात्मज्ञानं विधत्ते अज्ञातमात्मानं ज्ञापयति । तृतीया फले हेतौ । ज्ञानस्य विधिश्चाज्ञातज्ञानजननम् ।
३. उपमर्दितेति—इद व्रीह्यादि पुरोडाशादि वा साधनम् 'अनेन देवता प्रीणनीये'ति भावना च नोत्पद्येत । तेषां मिथ्यात्वेन निश्चितत्वात् श्रुत्यनुभवाभ्याम् ।
३० ४. केवलेति—नित्यं कर्म शास्त्रेण अविद्यादिदोषेण च प्रयोज्यं ततो नियतम् । भोजनादिकं तु दोषमात्रेण प्रयोज्यम् अतोऽनियतम् । कदाचित् क्रियते कदाचिन्न क्रियते इत्यनियतं ब्रह्मवित्सु वर्तते । अतः दोषोद्भवाभिभवयोर-नित्यत्वं कादाचित्कमित्युक्तम् । प्रयोज्यत्वं अनुष्ठाप्यत्वं ।
५. ब्रह्मविदां भिक्षाचरणे 'चातुर्वर्ण्यं चरेदि'त्युक्तम् । 'शौचं तु यतीनां चतुर्गुणं गृहस्थापेक्षया कर्तव्यमि'त्युक्तं धर्मशास्त्रे । एते नियमाः भिक्षादिक्रियाया न प्रयोजकाः क्षुधाऽभावे भिक्षाऽनाचरणात् क्षुत्पीडया यदा भिक्षार्थं
३५ गम्यते तदा नियमा अनुरोद्धव्या इत्यर्थः । यद्यपि नियमविधौ 'व्रीहिभिर्यजेत' इत्यादौ इतरनिवृत्तिः अर्थात् न तु शब्दात् । अतः व्रीहिभिरेव कर्तव्यो यागः इतरधान्यैः न कर्तव्य इत्यर्थः । तथाप्यत्र नियमपदं इतरव्यावृत्तिं शब्दादेव बोधयति भिक्षाचरणस्य क्षुधादिप्रयुक्ततयाऽनुष्ठानात् । तत्र शास्त्रानपेक्षणात् इतरव्यावृत्तेरेव च अपेक्षणात् । अत इतरनिवृत्त्या यदनुष्ठीयते यतिभि तेनैव नियमोऽनुष्ठितो भवति अर्थात् क्रियाया एव प्रयोजकत्व न तु निवृत्तिरूपस्याभावस्य ।

**ते[1] ह वाचमूचुस्त्वं न उद्गायेति तथेति तेभ्यो वागुदगायत् । यो वाचि भोगस्तं देवेभ्य आगायद्यत्कल्याणं वदति तदात्मने । ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाविध्यन्त्स यः स पाप्मा यदेवेदमप्रतिरूपं वदति स एव स पाप्मा ॥२॥**

**नियमवत्स्यादिति चेत् । न, नियमस्याक्रियात्वात्क्रियायाश्चाप्रयोजकत्वान्नासौ ज्ञानस्यापवादकरः । तस्मात्परमात्मयाथात्म्यज्ञानविधेरपि तद्विपरीतस्थूलद्वैतविज्ञाननिवर्तकत्वात्सामर्थ्यात्सर्वकर्मप्रतिषेधविध्यर्थत्वं सम्पद्यते । ५ कर्मप्रवृत्त्यभावस्य तुल्यत्वाद्यथा प्रतिषेधविषये । तस्मात्प्रतिषेधविधिवच्च वस्तुप्रतिपादनं तत्परत्वं च सिद्धं शास्त्रस्य ॥१॥**

भावात् । नापि स क्रियामाक्षिपन्ब्रह्मविद्यां प्रतिक्षिपति । अन्यनिवृत्त्यात्मनस्तदाक्षेपकत्वासिद्धेरित्याह—**नियमस्येति ।** कर्मसु रागादिमतोऽधिकाराद्विरक्तस्य ज्ञानाधिकाराज्ज्ञानिनो हेत्वभावादेव कर्माभावात्तस्य भोजनाद्यतुल्यात्वात्तत्त्वमादेः सर्वव्यापारोपरमात्मकज्ञानहेतोर्निवर्तकत्वेन प्रामाण्यं प्रतिपादितमुपसंहरति—**तस्मादिति ।** तस्य विधिरुत्पादकं १० वाक्यम् । तस्य निषेधवाक्यवत्तत्त्वज्ञानहेतोस्तद्विरोधिमिथ्याज्ञानध्वंसित्वादशेषव्यापारनिवर्तकत्वेन कूटस्थवस्तुनिष्ठस्य युक्तं प्रामाण्यम् । मिथ्याज्ञानध्वंसे हेत्वभावे फलाभावन्यायेन सर्वकर्मनिवृत्तेरित्यर्थः । तत्पदोपात्तं हेतुमेव स्पष्टयति—**कर्मप्रवृत्तीति ।** यथा प्रतिषेध्ये भक्षणादौ प्रतिषेधशास्त्रवशात्प्रवृत्त्यभावस्तथा तत्त्वमस्यादिवाक्यसामर्थ्यात्कर्मस्वपि प्रवृत्त्यभावस्य तुल्यत्वात्प्रामाण्यमपि तुल्यमित्यर्थः प्रतिषेधशास्त्रसाम्ये तत्त्वमस्यादिशास्त्रस्योच्यमाने तथैव निवृत्तिनिष्ठत्वं स्यान्न वस्तुप्रतिपादकत्वमित्याशङ्क्याऽऽह—**तस्मादिति ।** प्रतिषेधो हि प्रसक्तक्रिया निवर्तयंस्तदुपलक्षितौ- १५ दासीन्यात्मके वस्तुनि पर्यवस्यति । तथा तत्त्वमस्यादिवाक्यस्यापि वस्तुप्रतिपादकत्वमविरुद्धमित्यर्थः । वेदान्तानां सिद्धे प्रामाण्यवदर्थवादादीनामन्यपराणामपि संवादविसंवादयोरभावे स्वार्थे मानत्वसिद्धौ सिद्धा विशुद्ध्यादिगुणवती प्राणदेवतेति चकारार्थः ॥१॥

---

१. ते ह वाचमूचुरित्यादि—अत्र ब्रह्मसूत्रतृतीयतृतीये वाजसनेयके च विचारः—'ते ह वाचमूचुर्हन्तासुरान् यज्ञ उद्गीथेनात्ययामेति 'ते ह वाचमूचुरित्यादि' । ततः आसुरपाप्मविद्धत्वेन वागादीन् निन्दित्वा मुख्यप्राणः २० परिगृह्यते—'अथ हेममासन्यमि'ति । छान्दोग्ये च 'ते देवा उद्गीथमाजह्रुरि'त्युपक्रम्य 'य एवायं मुख्यः प्राणस्तमुद्गीथमुपासाचक्रिरे' इत्यादिना मुख्यप्राणः परिगृह्यते । उभयत्र प्राणोपासनमेव विधीयते इति विद्याऽभेद । यद्यपि वाजसनेयके 'त्वं न उद्गाये'ति उद्गीथकर्तृत्वेन प्राण उच्यते इतरत्र तु 'तमुद्गीथमुपासांचक्रिरे' इत्युद्गीथत्वेनेति विद्याभेदः प्रतीयते तथापि देवासुरयुद्धादिबहुतरसाम्याद्विद्यैकत्वमिति प्राप्ते 'न वा प्रकरणभेदात् परोवरीयस्त्वादिवत्' इति विद्याभेदः सिद्धान्तितः छान्दोग्ये 'ओमित्येतदक्षरमुद्गीथमि'ति २५ उद्गीथावयवे ओंकारे प्राणः उपास्यः श्रूयते इतरत्र तु उद्गीथशब्देन सकला उद्गीथभक्तिः ग्राह्या तस्याश्च कर्ता यः ऋत्विक् सः प्राणत्वेनोपास्यः इति कर्मभेद इति ।

ननु 'ओमित्येतदक्षरमुद्गीथमि'त्यत्र ओंकारोद्गीथयोः सामानाधिकरण्य श्रूयमाणम् अध्यासे वा अपवादे वा एकत्वे वा विशेषणविशेष्यभावे वा इति चतुर्विधे कीदृगमिति निर्धारयितुमशक्यत्वादनिर्धारणमिति पूर्वपक्षे व्याप्तेश्च समञ्जस इति सिद्धान्तः । ओंकारस्य सर्ववेदव्यापिनो ग्रहणप्रसक्तौ उद्गीथ इति ३० विशेषणं तया चोद्गीथावयवे ओंकारे प्राणदृष्टिविधिरिति सिद्धान्त ।

२. नियमस्येति-नियम इतरव्यावृत्तिः । अतः तस्य ब्रह्मविदनुष्ठाने न प्रयोजकत्वम् । क्रिया तु अग्निहोत्रादिका सापि विद्वत्कृता न प्रयोजिका, तस्या ब्रह्मविदि दृश्यमानाया अप्रयोजकत्व आभासरूपतया, अननुष्ठापकत्वं परोक्षज्ञानवता क्रियमाणस्य तु प्रयोजकत्वमिष्टमेव न तावता साक्षात्कारवतः कर्माधिकारः ।

३ स्थूलद्वैतादिनिवर्तकत्वात्—इदं च अस्थूलादिवाक्येन ब्रह्मणि प्रपञ्चाभावनिश्चयाद्भवति । ३५

४. सामर्थ्यात् तदन्यथानुपपत्त्या सर्वकर्मनिवर्तकता ।

५ प्रकृते योजयति—वेदान्तानामिति ।

६ संवादविसंवादयोरभावे—'अग्निर्हिमस्य भेषजमि'त्यादिवाक्यानि नापूर्वार्थानि प्रत्यक्षादिसंवादात् । 'पाषाणाः प्लवन्ते' इत्यादीनि प्रत्यक्षविसंवादात् न स्वार्थे प्रमाणानि 'वज्रहस्तः पुरन्दर' इत्यादीनि तु प्रमाणान्तरविरोधाविरोधयोरभावात् स्वार्थे प्रमाणानि इति देवताधिकरणन्यायः अत्रोपनिबद्धः । ४०

ते देवा हेवं विनिश्चित्य वाचं वागभिमानिनीं देवतामूचुरुक्तवन्तः। त्वं नोऽस्मभ्यमुद्गायौद्गात्रं कर्म
कुरुष्व वाग्देवतानिर्वर्त्यमौद्गात्रं कर्म दृष्टवन्तः। तामेव च वाचं देवतां जपमन्त्राभिधेयामसतो मा सद्गमयेति।
अत्र चोपासनायाः कर्मणश्च कर्तृत्वेन वागादय एव विवक्ष्यन्ते। कस्मात् ? यस्मात्परमार्थतस्तत्कर्तृकस्तद्विषय एव
च सर्वो ज्ञानकर्मसंव्यवहारः। वक्ष्यति हि "ध्यायतीव लेलायतीव" इत्यात्मकर्तृकत्वाभावं विस्तरतः षष्ठे। इहापि
५ चाध्यायान्त उपसंहरिष्यत्यव्याकृतादिक्रियाकारकफलजातम् "त्रयं वा इदं नाम रूपं कर्म" इत्यविद्याविषयम्।
अव्याकृतात्तु यत्परं परमात्माख्यं विद्याविषयमनामरूपकर्मात्मकं नेति नेतीतीतरप्रत्याख्यानेनोपसंहरिष्यति पृथक्।
यस्तु वागादिसमाहारोपाधिपरिकल्पितः संसार्यात्मा तं च वागादिसमाहारपक्षपातिनमेव दर्शयिष्यति"एतेभ्यो
भूतेभ्यः समुत्थाय तान्येवानुविनश्यती"ति। तस्माद्युक्ता वागादीनामेव ज्ञानकर्मकर्तृत्वफलप्राप्तिविवक्षा। तथेति
तथाऽस्त्विति देवैरुक्ता वागेभ्योऽर्थिभ्योऽर्थायोदगायदुद्गानं कृतवती। कः पुनरसौ देवेभ्योऽर्थायोद्गानकर्मणा वाचा
१० निर्वर्तितः कार्यविशेष इति। उच्यते—यो वाचि निमित्तभूतायां वागादिसमुदायस्य य उपकारो निष्पद्यते वदनादि-
व्यापारेण स एव। सर्वेषां ह्यसौ वाग्वदनाभिनिर्वृत्तो भोगः फलम्। तं भोगं सा त्रिषु पवमानेषु कृत्वाऽवशिष्टेषु

ज्ञानमिह परीक्ष्यमाणमित्येतत्प्रसङ्गागत विचारं परिसमाप्य ते ह वाचमित्यादि व्याचष्टे—ते देवा इति।
अचेतनाया वाचो नियोज्यत्वं वारयति—वागभिमानिनीमिति। नियोक्तृणा देवानामभिप्रायमाह—वाग्देवतेति।
नन्वौद्गात्रं कर्म जपमन्त्रप्रकाश्या देवता निर्वर्तयिष्यति नतु वाग्देवतेति तत्राऽऽह—तामेवेति। असतो मा सद्गमयेति
१५ जपमन्त्राभिधेया दृष्टवन्त इति पूर्वेण सम्बन्ध। वागाद्याश्रय कर्तृत्वादि दर्शयतोऽर्थवादस्य प्रासङ्गिकं तात्पर्यमाह—
अत्र चेति। आत्माश्रये कर्तृत्वादाववभासमाने तस्य वागाद्याश्रयत्वमयुक्तमित्याह—कस्मादिति। परस्य जीवस्य वा
कर्तृत्वादि विवक्षितमिति विकल्प्याऽऽद्यं दूषयति—यस्मादिति। विचारदशाया वागादिसङ्घातस्य क्रियादिशक्तिमत्त्वा-
त्कर्तृत्वादिस्तदाश्रयो यस्मात्प्रतीतस्तस्मात्परस्याऽऽत्मनः स्वतस्तच्छक्तिशून्यस्य न तदाश्रयत्वमित्यर्थः। किञ्चाविद्याश्रयः
सर्वो व्यवहारो न तद्धीने परस्मिन्नवतरतीत्याह—तद्विषय इति। "कर्ता शास्त्रार्थवत्त्वात्" इति न्यायेन कर्तृत्वमात्मनो-
२० ऽङ्गीकर्तव्यमित्याशङ्क्य 'यथा च तक्षोभयथा' इति न्यायादौपाधिकं तस्मिन्कर्तृत्वमित्यभिप्रेत्याऽऽह—वक्ष्यति हीति।
यदुक्तमविद्याविषय. सर्वो व्यवहार इति तत्र वाक्यशेषमनुकूलयति—इहापीति। इतश्च परस्मिन्नात्मनि कर्तृत्वादि-
व्यवहारो नास्तीत्याह—अव्याकृतात्त्विति। अनामरूपकर्मात्मकमित्यस्मादुपरिष्टात्तत्पदमध्याहर्तव्य पृथगविद्याविषया-
त्क्रियाकारकफलजातादिति शेष। मा भूत्परमात्मा कर्तृत्वाद्याश्रयो जीवस्तु स्यादिति द्वितीयमाशङ्क्याऽऽह—यस्त्विति।
जीवशब्दवाच्यस्य विशिष्टस्य कल्पितत्वान्न तात्त्विकं कर्तृत्वादिक किन्तु तद्द्वारा स्वरूपे समारोपितमिति भावः।
२५ आत्मनि तात्त्विककर्तृत्वाद्यभावे फलितमर्थवादतात्पर्यमुपसंहरति—तस्मादिति।

तात्पर्यमर्थवादस्योक्त्वा नियुक्तया वाग्देवतया यत्कृत तदुपन्यस्यति—तथेत्यादिना। उद्गातृत्व जपमन्त्र-
प्रकाश्यत्व चाऽऽत्मनोऽङ्गीकृत्य वागुद्गाने प्रवृत्ता चेत्तया कश्चिदुपकारो देवानामुद्गानेन निर्वर्तनीय स च नास्तीति
शङ्कते—क. पुनरिति। वदनादिव्यापारे सति य सुखविशेष सङ्घातस्य निष्पद्यते स एव कार्यविशेष इत्याह—
उच्यत इति। यो वाचीति प्रतीकमादाय व्याख्यायते कथ पुनर्वाचो वचन चक्षुषो दर्शनमित्यादिना निष्पन्न फलं
३० सर्वसाधारणमित्याशङ्क्यानुभवमनुसृत्याऽऽह—सर्वेषामिति। किञ्च देवार्थमुद्गायन्त्या वाच स्वार्थमपि किञ्चिदुद्गान-

---

१ वागादिसमाहारपक्षपाती तत्तादात्म्याध्यासपरिनिष्पन्नस्वरूपो जीव तथैवाविद्यात्मकः। तान्येवानुविनश्यति
इति—मैत्रेयी प्रति याज्ञवल्क्योपदेश। वस्तुतस्तु विनाश न जीवस्वरूपस्य, अपि तु सुषुप्तिप्रलययोः तदुपाधेरे-
वेत्यर्थ। इद चोत्तरत्र मानाऽससर्गस्त्वस्य भवति इति याज्ञवल्क्योक्त्या गम्यते। ज्ञानकर्म उपासनारूप कर्म।

२ 'ब्रह्म वा इदमग्र आसीदि'त्यस्मिन् खण्डे 'अह ब्रह्मास्मि' इति ब्रह्माभेदज्ञानवत सर्वात्मत्व प्रतिपाद्य ततः
३५ 'यत्सप्तान्नानी'त्यारभ्याविद्याविषय' प्रपञ्च विस्तरेण निरूपित। अन्ते च 'त्रय वा इदमि'त्यनेन अविद्या-
विषयस्य सर्वस्य नामरूपकर्मस्वन्तर्भाव्य सर्वस्य ब्रह्मणि प्रतिष्ठितत्वमुक्तम्। 'तदेतत् त्रयमेकमयमात्मा' इत्य-
नेनेत्यर्थ.। अत करणानामेव कर्तृत्व वक्तव्य नात्मन. तस्य निर्विकारत्वादित्यर्थ।

३. कर्ता शास्त्रार्थवत्त्वात् ( ब्र. सू २-३-१३ ) आत्मा जीव. कर्ता यजेत दद्यात् जुहुयात् इत्यादिशास्त्रस्य
एवं 'एष हि द्रष्ट श्रोता' इत्यादेश्चान्यथा वैयर्थ्यापातात् इति प्रसाध्य तत्कर्तृत्व न स्वाभाविकमपि तु अन्तः-
४० करणाद्युपाधितादात्म्याध्यासकृतम्। कृत्यादे अन्त करणधर्मत्वात् इत्यर्थः।

**अथ ह प्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्यः प्राण उदगायद्यः प्राणे भोगस्तं देवेभ्य आगायद्यत्कल्याणं जिघ्रति तदात्मने। ते विदुरनेन वै न उद्गात्राऽत्येष्यन्तीति तमभिद्रुत्य पाप्मनाविध्यन्त्स यः स पाप्मा यदेवेदमप्रतिरूपं जिघ्रति स एव स पाप्मा ॥३॥**

**अथ ह चक्षुरूचुस्त्वं न उद्गायेति तथेति तेभ्यश्चक्षुरुदगायत्। यश्चक्षुषि भोगस्तं देवेभ्य आगायद्यत्कल्याणं पश्यति तदात्मने। ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविध्यन्त्स यः स पाप्मा यदेवेदमप्रतिरूपं पश्यति स एव स पाप्मा ॥४॥** ५

नवसु स्तोत्रेषु वाचनिकमार्त्विज्यं फलं यत्कल्याणं शोभनं वदति वर्णानभिनिर्वर्तयति तदात्मने मह्यमेव। तद्धच-साधारणं वाग्देवताया: कर्म यत्सम्यग्वर्णानामुच्चारणमतस्तदेव विशेष्यते यत्कल्याणं वदतीति। यत्तु वदनकार्यं सर्वसंघातोपकारात्मकं तद्याजमानमेव। तत्र कल्याणवदनात्मसबन्धासङ्गावसरं देवताया रन्ध्रं प्रतिलभ्य ते विदुरसुराः कथमनेनोद्गात्रा नोऽस्मान्स्वाभाविकं ज्ञानं कर्म चाभिभूयातीत्य शास्त्रजनितकर्मज्ञानरूपेण ज्योतिषोद्- १० गात्रात्मनाऽत्येष्यन्त्यतिगमिष्यन्तीत्येवं विज्ञाय तमुद्गातारमभिद्रुत्याभिगम्य स्वेनाऽऽसङ्गलक्षणेन पाप्मनाऽविध्यं-स्ताडितवन्तः सयोजितवन्त इत्यर्थः। स यः स पाप्मा यः प्रजापतेः पूर्वजन्मावस्थस्य वाचि क्षिप्तः स एष प्रत्यक्षी-क्रियते। कोऽसौ। यदेवेदमप्रतिरूपं अननुरूपं शास्त्रप्रतिषिद्धं वदति येन प्रयुक्तोऽसभ्यबीभत्सानृताद्यनिच्छन्नपि वदति। अनेन कार्येणाऽप्रतिरूपवदनेनानुगम्यमानः प्रजापतेः कार्यभूतासु प्रजासु वाचि वर्तते। स एवाप्रतिरूप-वदनेनानुमितः स प्रजापतेर्वाचि गतः पाप्मा कारणानुविधायि हि कार्यमिति ॥२॥ १५

मस्ति। तथा च ज्योतिष्टोमे[2] द्वादश स्तोत्राणि तत्र त्रिषु पवमानाख्येषु स्तोत्रेषु याजमानं फलमुद्गानेन कृत्वा शिष्टेषु नवसु स्तोत्रेषु यत्कल्याणवदनसामर्थ्यं तदात्मने स्वार्थमेवाऽऽगायदित्याह—तं भोगमिति। ऋत्विजा क्रीतत्वान्न फल-सम्बन्धः सम्भवतीत्याशङ्क्याऽऽह—वाचनिकमिति। 'अथाऽऽत्मनेऽन्नाद्यमागायत्' इति श्रुतमित्यर्थः। कल्याणवदनसा-मर्थ्यस्य स्वार्थत्वं समर्थयते—तद्धीति। कल्याणवदनं वाचोऽसाधारणं चेत्कस्तर्हि यो वाचीत्यादेर्विषयस्तत्राऽऽह—यत्त्विति। २०

वाग्देवतायामसुराणामवकाशं दर्शयति—तत्रेति। स्वार्थे परार्थे चोद्गाने सतीति यावत्। कल्याणवदनस्या-ऽऽत्मना वाचैव सम्बन्धे योऽयमासङ्गोऽभिनिवेशः स एवावसरो देवतायास्तमवसर प्राप्येत्यर्थः। अवसरमेव व्याकरोति—रन्ध्रमिति। अस्मानतीत्येति सम्बन्धः।[1] कोऽसावसुरात्ययस्त व्याचष्टे—स्वाभाविकमिति। तत्रोपायमुपन्यस्यति—शास्त्रेति। असुरानभिभूय केनाऽऽत्मना देवाः स्थास्यन्तीति विवक्षायामाह—ज्योतिषेति। प्रजापतेर्वाचि पाप्मा क्षिप्तो-ऽसुरैरिति कुतोऽवगम्यते तत्राऽऽह—स यः स पाप्मेति। प्रतिषिद्धवदनमेव पाप्मेत्ययुक्तमदृष्टस्य क्रियातिरिक्तत्वाङ्गीका- २५ रादित्याशङ्क्याऽऽह—येनेति। असभ्यं सभानर्हं स्त्रीवर्णनादि। बीभत्सं भयानकं प्रेतादिवर्णनम्। अनृतमयथादृष्ट-वचनम्। आदिशब्दात्पिशुनत्वं गृह्यते। किमत्र प्रजापतेर्वाचि पाप्मसत्त्वे मानमुक्त भवतीत्याशङ्क्य स एव स पाप्मेति व्याकरोति—अनेनेति। प्राजापत्यासु प्रजासु प्रतिपन्नेनासत्यवदनादिना लिङ्गेन तद्वाचि पाप्माऽनुमीयते। विमत पाप्मपूर्वकं प्रतिकूलधीविषयत्वाद्दु.खवद्य स पाप्मा प्रजावाच्यनुमितः स एव प्रजापतिवाचि पाप्मान गमयति। विमत कारणपूर्वकं कार्यत्वाद्घटवत्। न च प्रजागत दुरितं प्राजापत्य तद्विना हेत्वन्तरादेव स्यात्कारणानुविधायित्वात्कार्यस्य। ३० न च तत्कारणेऽपि परस्मिन्प्रसङ्ग. 'अपापविद्धम्' इति श्रुतेः। न च 'न ह वै देवान्पाप गच्छति' इति श्रुतेर्न सूत्रेऽपि पापवेधस्तस्य फलावस्थस्यापापत्वेऽपि यजमानावस्थस्य तद्भावादित्यर्थः। आद्यसकाराभ्या कारणस्थ पाप्मानमनूद्य तस्यैव कार्यस्थत्वमुच्यते। उत्तराभ्यां तु कार्यस्थ पाप्मानमनूद्य तस्यैव कारणस्थत्वमिति विभागः ॥२॥

---

१. अस्मानित्यस्य विवरणं स्वाभाविकं कर्म ज्ञान चेति

२. ज्योतिष्टोमे द्वादशस्तोत्राणि वहिष्पवमानं, माध्यन्दिनपवमान., आर्भवपवमानश्च त्रिषु सवनेपु। चत्वार्याज्यानि ३५ चत्वारि पृष्ठानि अन्तिममग्निष्टोमस्तोत्रं 'अथात्मनेऽन्नाद्यमागायत्' इत्युक्त्या त्रिषु पवमानेपु यजमानफलार्थं गानं कृत्वा अवशिष्टेपु नवसु स्वफलार्थं गान कृतवतीत्यर्थः।

अथ ह श्रोत्रमूचुस्त्वं न उद्गायेति तथेति तेभ्यः श्रोत्रमुदगायद्यः श्रोत्रे भोगस्तं
देवेभ्य आगायद्यत्कल्याणँ शृणोति तदात्मने। ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति
तमभिद्रुत्य पाप्मनाविध्यन्स यः स पाप्मा यदेवेदमप्रतिरूपँ शृणोति स एव स पाप्मा ॥५॥
अथ ह मन ऊचुस्त्वं न उद्गायेति तथेति तेभ्यो मन उदगायद्यो मनसि भोगस्तं
५ देवेभ्य आगायद्यत्कल्याणँ संकल्पयति तदात्मने। ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति
तमभिद्रुत्य पाप्मनाविध्यन्त्स यः स पाप्मा यदेवेदमप्रतिरूपँ संकल्पयति स
एव स पाप्मैवमु खल्वेता देवताः पाप्मभिरुपासृजन्नेवमेनाः पाप्मनाविध्यन् ॥६॥
अथ हेममासन्यं प्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्य एष प्राण उदगायत्ते
विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाविव्यत्सन्स यथाऽश्मा-
१० नमृत्वा लोष्टो विध्वँसेतैवँ हैव विध्वँसमाना विष्वञ्चो विनेशुस्ततो
देवा अभवन् परासुरा भवत्यात्मना परास्य द्विषन्भ्रातृव्यो भवति य एवं वेद ॥७॥

तथैव घ्राणादिदेवता उद्गीथनिर्वर्तकत्वाज्जपमन्त्रप्रकाश्या उपास्याश्चेति क्रमेण परीक्षितवन्तः। देवानां चैतन्निश्चितमासीत्। वागादिदेवता. क्रमेण परीक्ष्यमाणाः कल्याणविषयविशेषात्मसंबन्धासङ्गहेतोरासुरपाप्म-संसर्गादुद्गीथनिर्वर्तनासमर्थाः। अतोऽनभिधेया असतो मा सद्गमयेत्यनुपास्याश्चाशुद्धत्वादितराव्यापकत्वाच्चेति।
१५ एवमु खल्वनुक्ता अप्येतास्त्वगादिदेवताः कल्याणाकल्याणकार्यदर्शनादेवं वागादिवदेवैनाः पाप्मनाऽविध्यन्पाप्मना विद्धवन्त इति यदुक्तं तत्पाप्मभिरुपासृजन्पाप्मभिः संसर्गं कृतवन्त इत्येतत् ॥३-४-५-६॥

वागादिदेवता उपासीना अपि मृत्य्वतिगमनायाशरणाः सन्तो देवाः क्रमेण। अथानन्तरं हेममित्यभिनय-प्रदर्शनम्। आसन्यमास्ये भवमासन्यं मुखान्तर्बिलस्थं प्राणमूचुस्त्वं न उद्गायेति। तथेत्येवं शरणमुपगतेभ्यः स एष प्राणो मुख्य उदगायदित्यादि पूर्ववत्। पाप्मनाऽविव्यत्सन्वेधनं कर्तुमिष्टवन्तस्ते च दोषासंसर्गिणं सन्तं
२० मुख्य प्राणम् स्वेनाऽऽसङ्गदोषेण वागादिषु लब्धप्रसरास्तदभ्यासानुवृत्त्या संश्लिष्यमाणा विनेशुर्विनष्टा विध्वस्ताः। कथमिवेति दृष्टान्त उच्यते—स यथा स दृष्टान्तो यथा–लोकेऽश्मानं पाषाणमृत्वा गत्वा प्राप्य लोष्टः पांसुपिण्डः पाषाणचूर्णनायाश्मनि निक्षिप्तः स्वयं विध्वंसेत विस्रसेत विचूर्णीभवेत्, एवं हैव यथाऽयं दृष्टान्त एवमेव विध्वंसमाना विशेषेण ध्वसमाना विष्वञ्चो नानागतयो विनेशुर्विनष्टा यतस्ततस्तस्मादसुरविनाशाद्देवत्वप्रतिबन्ध-भूतेभ्यः स्वाभाविकासङ्गजनितपाप्मभ्यो वियोगादसंसर्गधर्ममुख्यप्राणाश्रयबलाद्देवा वागादयः प्रकृता अभवन्।
२५ किमभवन्। स्वं देवतारूपमग्न्याद्यात्मकं वक्ष्यमाणम् पूर्वमप्यग्न्याद्यात्मान एव सन्तः स्वाभाविकेन पाप्मना

वाग्देवताया जपमन्त्रप्रकाश्यत्वमुपास्यत्वञ्च नेति निर्धार्यविशिष्टपर्यायचतुष्टयस्य तात्पर्यमाह—तथैवेति। परीक्षाफलनिर्णयमाह—देवानाञ्चेति। अनुपास्यत्वे हेत्वन्तरमाह—इतरेति। इतर कार्यकरणसङ्घातस्तस्मिन्न-व्यापकत्वं परिच्छिन्नत्वमतश्चानुपास्यत्व जपमन्त्राप्रकाश्यत्वञ्चेत्यर्थं। उक्तैरिन्द्रियैरनुक्तेन्द्रियाण्युपलक्षणीयानीति विवक्षित्वोपसंहरति—एवमिति। वागादिवत्त्वगादिषु कल्पकाभावान्न पाप्मवेधोऽस्तीत्याशङ्क्याऽऽह—कल्याणेति।
३० पाप्मभिरुपासृजन्पाप्मनाऽविध्यन्नित्यनयोरस्ति पौनरुक्त्यमित्याशङ्क्य व्याख्यानव्याख्येयभावान्नैवमित्याह—इति यदुक्तमिति ॥३-४-५-६॥

सम्प्रति मुख्यप्राणस्य मन्त्रप्रकाश्यत्वमुपास्यत्वं च वक्तुमुत्तरवाक्यमुपादाय व्याकरोति—वागादीति। क्रमेणोपा-सीना इति सम्बन्ध. वागादिषु नैराश्यानन्तर्यमथशब्दार्थ। विवक्षितार्थज्ञापकोऽसाधारणो देहतदवयवव्यापारोऽभिनय.। दोषासंसर्गिण दोषेण संसृष्ट कर्तुमिच्छा कुतो जातेत्याशङ्क्याऽऽह—स्वेनेति। तदभ्यासानुवृत्त्या तस्य पाप्मसंसर्गकर-
३५ णस्याभ्यासवशादिति यावत्। उक्तमर्थं दृष्टान्तेन स्पष्टयति—कथमित्यादिना। असुरनाशेनाऽऽसङ्गजनितपाप्मवियोगे हेतुमाह—असंसर्गेति। वक्ष्यमाणं सोऽग्निरभवदित्यादिनेति शेष.। वागादीना स्थिताना नष्टाना च कुतोऽन्यादि-रूपत्वमित्याशङ्क्याह—पूर्वमपीति। न तर्हि तेषा परिच्छेदाभिमान. स्यादित्याशङ्क्याऽऽह—स्वाभाविकेनेति। परि-

**ते होचुः क्व नु सोऽभूद्यो न इत्थमसक्तेत्ययमास्येऽन्तरिति सोऽयास्य आङ्गिरसोऽङ्गानां हि रसः ॥८॥**

तिरस्कृतविज्ञानाः पिण्डमात्राभिमाना आसन्। ते तत्पाप्मवियोगादुज्झित्वा पिण्डमात्राभिमानं शास्त्रसमर्पित-वागाद्यग्न्याद्यात्माभिमाना बभूवुरित्यर्थः। किंच ते प्रतिपक्षभूता असुराः पराऽभवन्नित्यनुवर्तते। पराभूता विनष्टा इत्यर्थः। यथा [1]पुराकल्पेन वर्णितः पूर्वयजमानोऽतिक्रान्तकालिक एतामेवाऽऽख्यायिकारूपां श्रुतिं दृष्ट्वा तेनैव क्रमेण वागादिदेवताः परीक्ष्य ताश्चापोह्याऽऽसङ्गपाप्मास्पददोषवत्त्वेनादोषास्पदं मुख्यं प्राणमात्मत्वेनोपगम्य ५ वागाद्याध्यात्मिकपिण्डमात्रपरिच्छिन्नात्माभिमानं हित्वा वैराजपिण्डाभिमानं वागाद्यग्न्याद्यात्मविषयं वर्तमान-प्रजापतित्वं शास्त्रप्रकाशितं प्रतिपन्नस्तथैवायं यजमानस्तेनैव विधिना भवति प्रजापतित्वरूपेणाऽऽत्मना परा चास्य प्रजापतित्वप्रतिपक्षभूतः पाप्मा द्विषन्भ्रातृव्यो भवति। यतोऽद्वेष्टाऽपि भवति कश्चिद्भ्रातृव्यो भरतादितुल्यो यस्त्विन्द्रियविषयासङ्गजनितः पाप्मा भ्रातृव्यो द्वेष्टा च। [2]पारमार्थिकात्मस्वरूपतिरस्करणहेतुत्वात्। स च पराभवति विशीर्यते लोष्टवत्[3]प्राणपरिष्वङ्गात्। कस्यैतत्फलमित्याह—य एवं वेद। यथोक्तं प्राणमात्मत्वेन प्रतिपद्यते १० पूर्वयजमानवदित्यर्थः ॥७॥

फलमुपसंहृत्याधुनाऽऽख्यायिकारूपमेवाऽऽश्रित्याऽऽह। कस्माच्च हेतोर्वागादीन्मुक्त्वा मुख्य एव प्राण आत्मत्वेनाऽऽश्रयितव्य इति तदुपपत्तिनिरूपणाय यस्मादयं वागादीनां पिण्डादीनां च साधारण आत्मेत्येतमर्थमा-ख्यायिकया दर्शयन्त्याह श्रुतिः—ते [4]प्रजापतिप्राणा मुख्येन प्राणेन परिप्रापितदेवस्वरूपा होचुरुक्तवन्तः फलावस्थाः।

च्छेदाभिमानादग्न्याद्यात्माभिमानस्य बलवत्त्वं सूचयति—शास्त्रेति। न केवलमस्त्रोक्तानामेवासुराणामसंसर्गधर्मिप्राणा- १५ श्रयाद्विनाशः किन्तु तत्तुल्यजातीयानामपीत्यभिप्रेत्याऽऽह—किञ्चेति।

वागादीनामग्न्यादिभावापत्तिवचनेन तत्संहृतस्य यजमानस्य देवताप्राप्तिरासुरपाप्मध्वंसश्च फलमित्युक्तं तत्र पूर्वकल्पीययजमानस्यातिशयशालित्वाद्यथोक्तफलवत्त्वेऽपि नेदानींतनस्यैवमित्याशङ्क्य भवतीत्यादिश्रुतिमवतारयति—यथेति। पूर्वकल्पनाप्रकारेण पूर्वजन्मस्थो यजमानः शास्त्रप्रकाशितं वर्तमानप्रजापतित्वं प्रतिपन्नो यथेति सम्बन्धः। पूर्वयजमान इत्यस्य व्याख्या अतिक्रान्तकालिक इति। पुराकल्पनेव दर्शयति—एतामिति। तेनेति श्रुत्युक्तेनेत्येतत्। २० तेनैव विधिना श्रुतिप्रकाशितेन क्रमेण मुख्यं प्राणमात्मत्वेनोपगम्येति शेषः। सपत्नो भ्रातृव्यस्तस्य द्विषन्निति कुतो विशेषणमर्थसिद्धत्वाद्द्वेषस्येत्याशङ्क्याऽऽह—यत इति। तस्य द्वेष्टृत्वनियमे हेतुमाह—पारमार्थिकेति। अ[5]परिच्छिन्नदेव-तात्वमत्र पारमार्थिकमात्मस्वरूपं विवक्षितं तत्तिरस्करणकारणत्वाद्रूपपाप्मनो विशेषणमर्थवदिति शेषः। '[6]यदाग्नेयोऽ-ष्टाकपाल' इतिवद्य एवं वेदेति प्रसिद्धार्थोपबन्धेऽपि विधिपरं वाक्यमतश्चैवं विद्यादिति विवक्षितमित्यभिप्रेत्याऽऽह—यथोक्तमिति ॥७॥ २५

फलवत्प्रधानोपास्तेरुक्तत्वात्ते होचुरित्याद्युत्तरवाक्यं गुणोपास्तिपरमित्याह—फलमिति। फलवन्तं प्रधानविधि-मुक्त्वा सम्प्रत्याख्यायिकामेवाऽऽश्रित्य गुणविशिष्टं प्राणोपासनमाहानन्तरश्रुतिरित्यर्थः। शङ्कोत्तरत्वेन चोत्तरग्रन्थम-वतारयति—कस्माच्चेति। विशुद्धत्वस्योक्तत्वाद्धेत्वन्तरं जिज्ञास्यमिति द्योतयितुं चशब्दः। करणानां कार्यस्य तदवयवानां च प्राणो यस्मादात्मा व्यापकस्तस्मात्स एवाश्रयितव्य इत्युपपत्तिनिरूपणार्थं तस्य व्यापकत्वमित्येतमर्थमाख्यायिकया दर्शयन्ती श्रुतिर्हेत्वन्तरमाहेति योजना। तच्छब्दस्तस्मादर्थे। प्राणस्याऽऽत्मत्वादि व्यक्तीकर्तुमाख्यायिकाश्रुति ३०

---

१. पुराकल्पः अर्थवादेषु कश्चित्प्रभेदः। बहुकर्तृकमुपाख्यानं पुराकल्पः—मीमांसावार्तिकम्।

२. अत्र पारमार्थिकपदेन ब्रह्मात्मस्वरूपं न ग्राह्यं प्राणात्मोपासकस्य ब्रह्मभावासंभवात्. अपि तु हिरण्यगर्भ-रूपदेवतासायुज्यमित्यर्थः।

३. प्राणपरिष्वङ्गः प्राणस्यात्मत्वेन निश्चयः।

४. प्रजापतिप्राणाः प्रजापतेः साधकावस्थस्य प्राणाः। ३५

५. अपरिच्छिन्नात्मा हिरण्यगर्भः समष्टिप्राणः।

६. यदाग्नेय इति यच्छब्दस्यानुवादत्वद्योतकत्वात् विधिप्रतिबन्धकत्वं स्वघटितवाक्ये। तथापि 'यदाग्नेयोऽष्टा-कपालो भवति' इत्यत्र विधित्वभङ्गीकृतं पूर्वमीमांसायां 'तद्गुणास्तु विधीयेरन्' इत्याग्नेयाधिकरणे तद्वत् प्रकृतेऽपि यच्छब्दो न विधिप्रतिबन्धकः अप्राप्तार्थत्वादित्यर्थः।

**सा वा एषा देवता दूर्नाम दूरँ ह्यस्या मृत्युर्दूरँ ह वा अस्मान्मृत्युर्भवति य एवं वेद ॥९॥**

किमित्याह । क्व न्विति वितर्के । क्व नु कस्मिन्नु सोऽभूत् । कः । यो नोऽस्मानित्थमेवमसक्त सञ्जितवान्देवभावमात्मत्वेनोपगमितवान् । स्मरन्ति हि लोके केनचिदुपकृता उपकारिणं लोकवदेव स्मरन्तो विचारयमाणाः कार्यकरणसंघात आत्मन्येवोपलब्धवन्तः । कथम्, अयमास्येऽन्तरिति, आस्ये मुखे य आकाशस्तस्मिन्नन्तरयं प्रत्यक्षो वर्तत
५ इति । सर्वो हि लोको विचार्याध्यवस्यति । तथा देवाः । यस्मादयमन्तराकाशे वागाद्यात्मत्वेन विशेषमनाश्रित्य वर्तमान उपलब्धो देवैः, तस्मात्स प्राणोऽयास्यो विशेषानाश्रयाच्चासक्तः सञ्जितवान्वागादीन् । अत एवाऽऽङ्गिरस आत्मा कार्यकरणानाम् । कथमाङ्गिरसः । प्रसिद्धं ह्येतदङ्गानां कार्यकरणलक्षणानां रसः सार आत्मेत्यर्थः । कथं पुनरङ्गरसत्वं तदपाये शोषप्राप्तेरिति वक्ष्यामः । यस्माच्चायमङ्गरसत्वाद्विशेषानाश्रितत्वाच्च कार्यकरणानां साधारण आत्मा विशुद्धश्च तस्माद्वागादीनपास्य प्राण एवाऽऽत्मत्वेनाऽऽश्रयितव्य इति वाक्यार्थः । आत्मा
१० ह्यात्मत्वेनोपगन्तव्योऽविपरीतबोधाच्छ्रेयःप्राप्तेर्विपर्यये चानिष्टप्राप्तिदर्शनात् ॥८॥

स्यान्मतं प्राणस्य विशुद्धिरसिद्धेति । ननु परिहृतमेतद्वागादीनां कल्याणवदनाद्यासङ्गवत्प्राणस्यासङ्गास्पदत्वाभावेन । बाढम्, किन्त्वाङ्गिरसत्वेन वागादीनामात्मत्वोक्त्या वागादिद्वारेण शवस्पृष्टितस्पृष्टेरिवाशुद्धता शङ्क्यत इति । आह—शुद्ध एव प्राणः । कुतः, सा वा एषा देवता दूर्नाम यं प्राणं प्राप्याश्मानमिव लोष्टवद्विध्वस्ता असुरास्तं परामृशति—सेति । सैवैषा येयं वर्तमानयजमानशरीरस्था देवैर्निर्धारिताऽयमास्येऽन्तरिति । देवता च
१५ सा स्यात् । उपासनक्रियायाः कर्मभावेन गुणभूतत्वात् । यस्मात्सा दूर्नाम दूरित्येवं ख्याता । नामशब्दः ख्यापनपर्यायः । तस्मात्प्रसिद्धाऽस्या विशुद्धिर्दूर्नामत्वात् । कुतः पुनर्दूर्नामत्वमित्याह—दूरं दूरे हि यस्मादस्याः प्राणदेवताया मृत्युरासङ्गलक्षणः पाप्माऽसंश्लेषधर्मित्वात्प्राणस्य समीपस्थस्यापि दूरता मृत्योस्तस्माद्दूरित्येवं ख्यातिरेव प्राणस्य विशुद्धिज्ञापिका । विदुषः फलमुच्यते—दूरं ह वा अस्मान्मृत्युर्भवति । अस्मादेवंविदो य एवं वेद तस्मादेवमिति

विभजते—ते प्रजापतीति । वागादयश्चेत्प्राणमाश्रित्य फलावस्थास्तर्हि किमिति प्राणं स्मरन्ति प्राप्तफलत्वादित्या-
२० शङ्क्याऽऽह—स्मरन्ति हीति । विचारफलमुपलब्धिं कथयति—लोकवदिति ।

तामेवोपलब्धिमाकाङ्क्षाद्वारेण विवृणोति—कथमिति । दृष्टान्तं स्पष्टयति—सर्वो हीति । तथा देवा विचार्य प्राणमास्यान्तराकाशस्थं निर्धारितवन्त इत्याह—तथेति । किमनया कथया सिद्धमित्याशङ्क्याऽऽह—यस्मादिति । उपलब्धिसिद्धेऽर्थे युक्तिं समुच्चिनोति—विशेषेति । सर्वानेव वागादीनविशेषेणाग्न्यादिभावेन प्राण सञ्जितवान् । न चामध्यस्थ साधारणं कार्यं निर्वर्तयति । अतो युक्तितोऽप्ययमास्यान्तराकाशे वर्तमान सिद्ध इत्यर्थः । अयास्यत्वव-
२५ दाङ्गिरसत्व गुणान्तरं दर्शयति—अत एवेति । सर्वसाधारणत्वादेवेति यावत् । तथाऽपि कुतोऽस्याङ्गिरसत्व साधारणेऽपि नभसि तदनुपलब्धेरित्याशङ्क्य परिहरति—कथमित्यादिना । अङ्गेषु चरमधातो सारत्वप्रसिद्धेर्न प्राणस्य तथात्वमिति शङ्कित्वा समाधत्ते—कथं पुनरित्यादिना । कस्माच्च हेतोरित्यादिचोद्यपरिहारमुपसंहरति—यस्माच्चेति । वाक्यार्थं प्रपञ्चयति—आत्मा हीति ॥८॥

प्राणस्य शुद्धत्वाद्व्यापकत्वाच्चोपास्यत्वमुक्तं तस्य शुद्धत्वं वागादिवदसिद्धमित्याशङ्कते—स्यान्मतमिति ।
३० शङ्कामाक्षिप्य समाधत्ते—नन्वित्यादिना । शवेन स्पृष्टिर्यस्यास्ति तेन स्पृष्टोऽपरस्तस्याशुद्धतावदशुद्धवागादिसम्बन्धादशुद्धत्वाशङ्का प्राणस्योन्मिषतीत्यर्थः । तात्पर्यं दर्शयन्नुत्तरवाक्यमुत्तरत्वेनावतारयति—आहेति । नन्वत्र प्राणो नोच्यते स्त्रीलिङ्गेनार्थान्तरोक्तिप्रतीतेरित्याशङ्क्याऽऽह—यं प्राणमिति । तस्यामूर्तस्य परोक्षत्वादपरोक्षवाची च कथमेतच्छब्दो युज्यते तत्राऽऽह—सैवेति । कथ प्राणे देवताशब्दो न हि तस्य तच्छब्दत्व प्रसिद्धमित्याशङ्क्याऽऽह—देवता चेति । यागे हि देवता कारकत्वेन गुणभूता प्रसिद्धा । तथा प्राणोऽपि द्रव्याद्यन्यत्वे सति विहितक्रियागुणत्वाद्देवतेत्यर्थः । प्राणोपास्ते-
३५ र्द्विविधं फल पापहानिर्देवताभावश्च तत्र पापहानेरेव प्रधानफलस्यात्र श्रवणाद्दूर्गुणविशिष्टप्राणोपास्तिरिह विवक्षितेति वाक्यार्थमाह—यस्मादिति । न तावत्प्राणदेवताया दूर्नामत्व निरूढ तत्र तच्छब्दप्रसिद्धेरदर्शनान्नापि यौगिकं प्राणस्य प्रत्यग्वृत्तेर्दूरत्वाभावादित्याक्षिपति—कुतः पुनरिति । परिहरति—आहेति । कथं पाप्मसन्निधौ वर्तमानस्य ततो दूरत्वमित्याशङ्क्याऽऽह—असंश्लेषेति । उपास्ते सदा भावयतीति यावत् । ब्रह्मज्ञानादिव प्राणतत्त्वज्ञानात्फलसिद्धि-

**सा वा एषा देवतैतासां देवतानां पाप्मानं मृत्युमपहत्य यत्रासां दिशामन्तस्तद्गमयांचकार तदासां पाप्मनो विन्यदधात्तस्मान्न जनमियान्नान्तमियान्नेत् पाप्मानं मृत्युमन्ववायानीति ॥१०॥**

प्रकृतं विशुद्धिगुणोपेतं प्राणमुपास्त इत्यर्थः। उपासनं नामोपास्यार्थवादे यथा देवतादिस्वरूपं श्रुत्या ज्ञाप्यते तथा मनसोपगम्याऽऽसनं चिन्तनं लौकिकप्रत्ययाव्यवधानेन यावत्तद्देवतादिस्वरूपात्माभिमानाभिव्यक्तिरिति लौकिकात्माभिमानवत्। "देवो भूत्वा देवानप्येति" "किंदेवतोऽस्यां प्राच्यां दिश्यसि" इत्येवमादिश्रुतिभ्यः ॥९॥ 　५

सा वा एषा देवता। दूरं ह वा अस्मान्मृत्युर्भवतीत्युक्तम्। कथं पुनरेवंविदो दूरं मृत्युर्भवतीति। उच्यते। एवंवित्त्वविरोधात्। इन्द्रियविषयसंसर्गासङ्गजो हि पाप्मा प्राणात्माभिमानिनो हि विरुध्यते। वागादिविशेषात्माभिमानहेतुत्वात्स्वाभाविकाज्ञानहेतुत्वाच्च। शास्त्रजनितो हि प्राणात्माभिमानस्तस्मादेवंविदः पाप्मा दूरं भवतीति युक्तं विरोधात्तदेतत्प्रदर्शयति—सा वा एषा देवतेत्युक्तार्थम्। एतासां वागादीनां देवतानां पाप्मानं मृत्युं स्वाभाविकाज्ञानप्रयुक्तेन्द्रियविषय संसर्गासङ्गजनितेन हि पाप्मना सर्वो म्रियते स ह्यतो मृत्युस्तं प्राणात्माभिमानरूपाभ्यो देवताभ्योऽपच्छिद्यापहत्य प्राणात्माभिमानमात्रतयैव प्राणोऽपहन्तेत्युच्यते। विरोधादेव तु पाप्मैवंविदो दूरंगमो भवति। किं पुनश्चकार देवतानां पाप्मानं मृत्युमपहत्येति, उच्यते—यत्र यस्मिन्नासां प्राच्यादीनां दिशामन्तोऽवसानं तत्तत्र गमयांचकार गमनं कृतवानित्येतत्। ननु नास्ति दिशामन्तः कथमन्तं 　१०

संभवे किं सदा तद्भावनयेत्याशङ्क्य भावनापर्यायोपासनशब्दार्थमाह—उपासनं नामेति। दीर्घकालादरनैरन्तर्यरूपविशेषणत्रयं विवक्षित्वाऽऽह—लौकिकेति। तस्य मर्यादा दर्शयति—यावदिति। मनुष्योऽहमितिवद्देवोऽहमिति यस्य जीवत एवाभिमानाभिव्यक्तिस्तस्यैव देहपातादूर्ध्वं तद्भावः फलतीत्यत्र प्रमाणमाह—देवो भूत्वेति। का देवता रूप तवेति किंदेवतोऽसीति तद्भावो भातीत्यर्थः ॥९॥ 　१५

कण्डिकान्तरमवतार्य वृत्तं कीर्तयति—सा वा इति। नित्यानुष्ठानात्पापहानिर्धर्मात्पापक्षयश्रुतेः। न चेदमुपासनं नित्यं नैमित्तिकं वा देवतात्मत्वकामिनो विधानात्तत्कथं पापमेवंविदो दूरे भवतीत्याक्षिपति—कथं पुनरिति। विरोधिसन्निपाते पूर्वध्वंसमावश्यकं मन्वानः समाधत्ते—उच्यत इति। उक्तमेव व्यनक्ति—इन्द्रियेति। इन्द्रियाणां विषयेषु संसर्गे योऽभिनिवेशस्तेन जनित. पाप्मा परिच्छेदाभिमानोऽपरिच्छिन्ने प्राणात्मन्यात्माभिमानवतो विरुध्यते परिच्छेदापरिच्छेदयोर्विरोधस्य प्रसिद्धत्वादित्यर्थः। विरोध साधयति—वागादीति। पाप्मनो वागादिविशेषवत्यात्मनि विशिष्टेऽभिमानहेतुत्वादाधिदैविकापरिच्छिन्नाभिमाने [3]ध्वंसो युज्यते। दृश्यते हि चण्डालभाण्डावलम्बिनो जलस्य गङ्गाद्यविशेषभावापत्तावपेयत्वनिवृत्तिः। 　२०

"अशुच्यपि पयः प्राप्य गङ्गा याति पवित्रताम्" 　२५

—इति न्यायादित्यर्थः। यन्नैसर्गिकाज्ञानजन्यं तदागन्तुकप्रमाणज्ञानेन निवर्तते यथा रज्जुसर्पादिज्ञानं नैसर्गिकाज्ञानजन्यश्च पाप्मा तेन प्रामाणिकप्राणविज्ञानेन तद्ध्वस्तिरित्याह—स्वाभाविकेति। नन्वभिमानयोर्विरोधाविशेषाद्बाध्यबाधकत्वव्यवस्थायोगाद्द्वयोरपि मिथो बाध स्यात्तत्राऽऽह—शास्त्रजनितो हीति। उक्तमेव पापध्वंसरूपं विद्याफलं प्रपञ्चयितुमुत्तरवाक्यमित्याह—तदेतदिति। मृत्युमपहत्य यत्राऽऽसा दिशामन्तस्तद्गमयाचकारेति सम्बन्धः। कथ पाप्मा मृत्युरुच्यते तत्राऽऽह—स्वाभाविकेति। अपहत्येत्यत्र पूर्ववदन्वय.। प्राणदेवता चेत्पाप्मानं हन्ति सदैव किं न हन्यादित्याशङ्क्याऽऽह—प्राणात्मेति। भवतु प्राणो वागादीना पाप्मनोऽपहन्ता विद्वांस्तु किमायातमित्याशङ्क्याऽऽह—विरोधादेवेति। 　३०

अनन्ताकाशदेशत्वाद्दिशामन्ताभावाद्यत्राऽऽसामित्याद्ययुक्तमिति शङ्कते—नन्विति। शास्त्रीयज्ञानकर्मसंस्कृतो जनो मध्यदेशः प्रसिद्धस्यापि तदधिष्ठितत्वेन मध्यदेशत्वात्तत्राप्यन्त्यजाधिष्ठितदेशस्य पापीयस्त्वस्वीकारादतस्तं जनं

---

१. वागादीनि—वागादिविशेषेषु अभिमानः अहंकारः तद्धेतुकत्वात् स्वाभाविकमनादिसिद्धं यज्ज्ञान तद्धेतुकत्वाच्चेत्यर्थः। वागादिविशेषात्माभिमानहेतुत्वादिति बहुव्रीहिः। एवमग्रेऽपि। 　३५

२. प्राणात्माभिमान एवात्र प्राण उच्यते इत्यर्थः।

३. अभिमाने सति ध्वसः इत्याध्याहार्यम्।

सा वा एषा देवतैतासां देवतानां पाप्मानं मृत्युमपहत्याथैना मृत्युमत्यवहत् ॥११॥

स वै वाचमेव प्रथमामत्यवहत्; सा यदा मृत्युमत्यमुच्यत
सोऽग्निरभवत्; सोऽयमग्निः परेण मृत्युमतिक्रान्तो दीप्यते ॥१२॥

गमितवानिति। उच्यते—श्रौतविज्ञानवज्जनावधिनिमित्तकल्पितत्वाद्दिशां तद्विरोधिजनाध्युषित एव देशो
५ दिशामन्तो देशान्तोऽरण्यमिति यद्वदित्यदोषः। तत्तत्र गमयित्वाऽऽसां देवतानां पाप्मन इति द्वितीयाबहुवचनं
विन्यदधाद्विविधं न्यग्भावेनावधात्स्थापितवती प्राणदेवता प्राणात्माभिमानशून्येष्वन्त्यजनेष्विति सामर्थ्यादिन्द्रिय-
संसर्गजो हि स इति प्राण्याश्रयताऽवगम्यते। तस्मात्तमन्त्यं जनं नेयान्न गच्छेत्संभाषणदर्शनादिभिर्न संसृजेत्।
तत्संसर्गे पाप्मना संसर्गः कृतः स्यात्पाप्माश्रयो हि सः। तज्जननिवासं चान्तं दिगन्तशब्दवाच्यं नेयाज्जनशून्यमपि
जनमपि तद्देशवियुक्तमित्यभिप्रायः। नेदिति परिभयार्थे निपातः। इत्थं जनसंसर्गे पाप्मानं मृत्युमन्ववायानीति।
१० अनु अव अयानीत्यनुगच्छेयमित्येवं भीतो न जनमन्तं चेयादिति पूर्वेण संबन्धः ॥१०॥

सा वा एषा देवता, तदेतत्प्राणात्मज्ञानकर्मफलं वागादीनामग्न्याद्यात्मत्वमुच्यते। अथैना मृत्युमत्यवहत्।
यस्मादाध्यात्मिकपरिच्छेदकरः पाप्मा मृत्युः प्राणात्मविज्ञानेनापहतस्तस्मात्स प्राणोऽपहन्ता पाप्मनो मृत्योः।
तस्मात्स एव प्राण एना वागादिदेवताः प्रकृतं पाप्मानं मृत्युमतीत्यावहत्प्रापयत्स्वं स्वमपरिच्छिन्नमग्न्यादि-
देवतात्मरूपम् ॥११॥

१५ स वै वाचमेव प्रथमामत्यवहत्। स प्राणो वाचमेव प्रथमां प्रधानामित्येतत्। उद्गीथकर्मणीतरकरणा-
पेक्षया साधकतमत्वं प्राधान्यं तस्याः। तां प्रथमामत्यवहद्वहनं कृतवान्। तस्याः पुनर्मृत्युमतीत्योढायाः किं
रूपमित्युच्यते—सा वाग्यदा यस्मिन्काले पाप्मानं मृत्युमत्यमुच्यतातीत्यामुच्यत मोचिता स्वयमेव तदा
सोऽग्निरभवत्सा वाक्पूर्वमप्यग्निरेव सती मृत्युवियोगेऽप्यग्निरेवाभवत्। एतावांस्तु विशेषो मृत्युवियोगे
सोऽयमतिक्रान्तोऽग्निः परेण मृत्युं परस्तान्मृत्योर्दीप्यते। प्राङ्मोक्षान्मृत्युप्रतिबद्धोऽध्यात्मवागात्मना, नेदानीमिव
२० दीप्तिमानासीदिदानीं तु मृत्युं परेण दीप्यते मृत्युवियोगात् ॥१२॥

तदधिष्ठितं च देशमवधिं कृत्वा तेनैव निमित्तेन दिशा कल्पितत्वादानन्त्याभावात्पूर्वोक्तजनातिरिक्तजनस्य तदधि-
ष्ठितदेशस्य चान्तत्वोक्तेर्मध्यदेशादन्यो देशो दिशामन्त इत्युक्ते न काचिदनुपपत्तिरिति परिहरति—उच्यत इति। किमित्य-
न्त्यजनेष्वित्यधिकावापः क्रियते तत्राऽऽह—इति सामर्थ्यादिति। देशमात्रे पाप्मावस्थानानुपपत्तेरित्यर्थ.। तामेवानुपपत्तिं
साधयति—इन्द्रियेति। भवतु यथोक्तो दिशामन्तस्तथा च पाप्मससर्गोऽस्तु तथाऽपि किमायातमित्याशङ्क्य तस्य
२५ शिष्टैस्त्याज्यत्वमित्याह—तस्मादिति। निषेधद्वयस्य तात्पर्यमाह—जनशून्यमपीति। प्राणोपास्तिप्रकरणे निषेधश्रुते-
स्तदुपासकेनैवाय निषेधोऽनुष्ठेयो न सर्वैरित्याशङ्क्याऽऽह—नेदित्यादिना। इत्थ श्रुत्युक्तं निषेधं न चेदह कुर्यां तत.
पाप्मानमनुगच्छेय निषेधातिक्रमादिति सर्वस्य भयं जायते न प्राणोपासकस्यैव। अत सर्वोऽपि पापाद्भीतो नोभय
गच्छेद्वाक्यं[1] हि प्रकरणाद्बलवदित्यर्थः ॥१०॥

द्विविधमुपास्तिफल पापहानिर्देवताभावश्च। तत्र पापहानिमुपदिशता प्रासङ्गिकः, साधारणो निषेधो दर्शितः।
३० सम्प्रति देवताभाव वक्तुमुत्तरवाक्यमिति प्रतीकोपादानपूर्वकमाह—सा वा एषेति। अथशब्दावद्योतितमर्थं कथयति—
यस्मादिति। पाप्मापहन्तृत्वमनूद्यावशिष्ट भागं व्याचष्टे—तस्मात्स एवेति ॥११॥

सामान्योक्तमर्थं विशेषेण प्रपञ्चयति—स वै वाचमित्यादिना। कथ वाच. प्राथम्य तदाह—उद्गीथेति।
वाचो मृत्युमतिक्रान्ताया रूप प्रश्नपूर्वकं प्रदर्शयति—तस्या इति। अनग्नेरग्नित्वविरोध धुनीते—सा वागिति।
पूर्वमपि वाचोऽग्नित्वे नोपासनालभ्य तदग्नित्वमित्याशङ्क्याऽऽह—एतावानिति। उक्तं विशेषं विशदयति—
३५ प्रागिति ॥१२-१३-१४-१५॥

---

१. वाक्य हीति—श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यासु प्रकरणापेक्षया वाक्यप्राबल्यस्य जैमिनिसूत्रोक्तत्वात्।
अत्र प्राणोपासकस्य प्रकरणित्वेऽपि 'न जनमियादि'ति वाक्य प्रबलम्।

अथ प्राणमत्यवहत्; स यदा मृत्युमत्यमुच्यत स वायुर-
भवत्; सोऽयं वायुः परेण मृत्युमतिक्रान्तः पवते ॥१३॥
अथ चक्षुरत्यवहत्; तद्यदा मृत्युमत्यमुच्यत स आदित्योऽ-
भवत्; सोऽसावादित्यः परेण मृत्युमतिक्रान्तस्तपति ॥१४॥
अथ श्रोत्रमत्यवहत्; तद्यदा मृत्युमत्यमुच्यत ता ५
दिशोऽभवंस्ता इमा दिशः परेण मृत्युमतिक्रान्ताः ॥१५॥
अथ मनोऽत्यवहत्; तद्यदा मृत्युमत्यमुच्यत स चन्द्रमा अभवत्; सोऽसौ चन्द्रः
परेण मृत्युमतिक्रान्तो भात्येवं ह वा एनमेषा देवता मृत्युमतिवहति य एवं वेद ॥१६॥
अथात्मनेऽन्नाद्यमागायद्धि किञ्चान्नमद्यतेऽनेनैव तदद्यत इह प्रतितिष्ठति ॥१७॥

तथा प्राणो घ्राणो वायुरभवत् । स तु पवते मृत्युं परेणातिक्रान्तः । सर्वमन्यदुक्तार्थम् ॥१३॥ १०
तथा चक्षुरादित्योऽभवत्स तु तपति ॥१४॥
तथा श्रोत्रं दिशोऽभवत् । दिशः प्राच्यादिविभागेनावस्थिताः ॥१५॥

मनश्चन्द्रमा भाति । यथा पूर्वंयजमानं[1] वागाद्यग्न्यादिभावेन मृत्युमत्यवहत् । एवमेनं वर्तमानयजमानमपि ह वा एषा प्राणदेवता मृत्युमतिवहति वागाद्यग्न्यादिभावेनैवं यो वागादिपञ्चकविशिष्टं प्राणं वेद । "तं यथा यथोपासते तदेव भवति" इति श्रुतिः ॥१६॥ १५

अथाऽऽत्मने । यथा वागादिभिरात्मार्थमागानं कृतं तथा मुख्योऽपि प्राणः सर्वप्राणसाधारणं प्राजापत्यफल-मागानं कृत्वा त्रिषु पवमानेष्वथानन्तरं शिष्टेषु नवसु स्तोत्रेष्वात्मन आत्मार्थमन्नाद्यमन्नं च तदाद्यं चान्नाद्य-मागायत् । कर्तुः[2] कामसंयोगो वाचनिक इत्युक्तम् । कथं पुनस्तदन्नाद्यं प्राणेनाऽऽत्मार्थमागीतमिति गम्यत इत्यत्र हेतुमाह—यत्किंचेति सामान्यान्नमात्रपरामर्शार्थः । हीति हेतोः । यस्माल्लोके प्राणिभिर्यत्किञ्चिदन्नमद्यते भक्ष्यते तदनेनैव प्राणेनैव । अन इति प्राणस्याऽऽख्या प्रसिद्धा अनःशब्दः सान्तः शकटवाची, यस्त्वन्यः स्वरान्तः स २० प्राणपर्यायः प्राणेनैव तदद्यत इत्यर्थः । किंच न केवलं प्राणेनाद्यत एवान्नाद्यं तस्मिञ्छरीराकारपरिणतेऽन्नाद्य इह प्रतितिष्ठति प्राणस्तस्मात्प्राणेनाऽऽत्मनः प्रतिष्ठार्थमागीतमन्नाद्यम् । यदपि प्राणेनान्नादनं तदपि प्राणस्य प्रतिष्ठार्थ-मेवेति न वागादिष्विव कल्याणासङ्गजपाप्मसंभवः प्राणेऽस्ति ॥१७॥

वागादीनामग्न्यादिदेवतात्वप्राप्तावुपासकस्य किमायातं न हि तदेव तस्य फलमित्याशङ्क्याऽऽह—यथेति । देवतात्वप्रतिबन्धकान्पाप्मनः सर्वानपोह्योक्तवर्त्मना वागादीनामुपासकोपाधिभूतानामग्न्यादिदेवताप्त्यैव सोऽपि सदा २५ प्राणमात्मत्वेन ध्यायन्भावनावलाद्वैराज पदं पूर्वयजमानवदाप्नोतीति भावः । कस्येदं फलमित्याकाङ्क्षायामुपासकं विशिनष्टि—यो वागादीति । उक्तोपासनस्य प्रागुक्त फलमनुगुणमित्यत्र मानमाह—तं यथेति ॥१६॥

उपास्यस्य प्राणस्य कार्यकरणसङ्घातस्य विधारकत्वं नाम गुणान्तर वक्तुमुत्तरवाक्यं, तदादाय व्याकरोति—अथेत्यादिना । कथमुद्गातुर्विक्रीतस्य फलसम्बन्धस्तत्राऽऽह—कर्तुरिति । अन्नागानमार्त्विज्यमित्यत्र प्रश्नपूर्वकं वाक्य-शेषमनुकूलयति—कथमित्यादिना । तमेव हेतुमाह—यस्मादिति । प्राणेनैव तदद्यत इति सम्बन्ध । यस्मादित्यस्य ३० तस्मादित्यादिभाष्येणान्वय । अनितेर्धातोरनशब्दश्चेत्प्राणपर्यायस्तर्हि कथं शकटे तच्छब्दप्रयोगस्तत्राऽऽह—अन.शब्द इति । इतश्च प्राणस्य स्वार्थमन्नागान युक्तमित्याह—किञ्चेति । प्राणेन वागादिवदात्मार्थमन्नमागीत चेत्तर्हि तस्यापि पाप्मवेधः स्यादित्याशङ्क्याऽऽह—यदपीति । इहान्ने देहाकारपरिणते प्राणस्तिष्ठति तदनुसारिणश्च वागादय स्थिति-भाजोऽतः स्थित्यर्थं प्राणस्यान्नमिति न पाप्मवेधस्तस्मिन्नस्तीत्यर्थः ॥१७॥

---

१. पूर्वयजमान वागादि इत्युभयत्र द्वितीया द्विकर्मकत्वात् वहधातोः ग्रामम् अजामतिवहतीतिवत् । ३५
२. कर्तुः कामसयोग—इति उद्गाता गानकर्ता यजमानेन दक्षिणा दत्त्वा मदर्थं गानं कुरु इति वृत. । तेन क्रियमाण कर्म यजमानस्यैव फलं दद्यात् नोद्गातु इति सामान्यतो मर्यादा विशेपवचनमस्ति चेत् तस्यापि उद्गातु.

ते देवा अब्रुवन्नेतावद्वा इदं सर्वं यदन्नं तदात्मन आगासीरनु नोऽस्मिन्नन्न
आभजस्वेति ते वै माऽभिसंविशतेति तथेति तं समन्तं परिण्यविशन्त ।
तस्माद्यदनेनान्नमत्ति तेनैतास्तृप्यन्त्येवं ह वा एनं स्वा अभिसंविशन्ति
भर्ता स्वानां श्रेष्ठः पुर एता भवत्यन्नादोऽधिपतिर्य एवं वेद य
५ उ हैवंविदं स्वेषु प्रति प्रतिर्बुभूषति न हैवालं भार्येभ्यो भवत्यथ य
एवैतमनुभवति यो वैतमनु भार्यान् बुभूर्षति स हैवालं भार्येभ्यो भवति ॥१८॥

ते देवाः। नन्ववधारणमयुक्तं प्राणेनैव तदद्यत इति। वागादीनामप्यन्ननिमित्तोपकारदर्शनात्[1]। नैष
दोषः। प्राणद्वारत्वात्तदुपकारस्य। कथं प्राणद्वारकोऽन्नकृतो वागादीनामुपकार इत्येतमर्थं प्रदर्शयन्नाह—ते
१० वागादयो देवाः स्वविषयद्योतनाद्देवा अब्रुवन्नुक्तवन्तो मुख्यं प्राणमिदमेतावन्नातोऽधिकमस्ति। वा इति स्मरणार्थः।
इदं तत्सर्वमेतावदेव, किं, यदन्नं प्राणस्थितिकरमद्यते लोके तत्सर्वमात्मन आत्मार्थमागासीरागीतवानस्यागाने-
नाऽऽत्मसात्कृतमित्यर्थः। वयं चान्नमन्तरेण स्थातुं नोत्सहामहे। अतोऽनु पश्चान्नोऽस्मानस्मिन्नन्न आत्मार्थे तवान्न
आभजस्वाऽऽभाजयस्व। णिचोऽश्रवणं छान्दसम्। अस्मांश्चान्नभागिनः कुरु। इतर आह—ते यूयं यद्यन्नार्थिनो वै
मा मामभिसंविशत समन्तो मामाभिमुख्येन निविशतेत्येवमुक्तवति प्राणे तथेत्येवमिति तं प्राणं परिसमन्तं
१५ परिसमन्तान्न्यविशन्त निश्चयेनाविशन्त तं प्राणं परिवेष्ट्य निविष्टवन्त इत्यर्थः। तथा निविष्टानां प्राणानुज्ञया तेषां
प्राणेनैवाद्यमानं प्राणस्थितिकरं सदन्नं तृप्तिकरं भवति न स्वातन्त्र्येणान्नसम्बन्धो वागादीनाम्। तस्माद्युक्तमेवाव-
धारणमनेनैव तदद्यत इति। तदेव चाऽऽह—तस्माद्यस्मात्प्राणाश्रयतयैव प्राणानुज्ञयाऽभिसंनिविष्टा वागादिदेव-
तास्तस्माद्यदन्नमनेन प्राणेनात्ति लोकस्तेनान्नेनैता वागाद्यास्तृप्यन्ति। वागाद्याश्रयं प्राणं यो वेद वागादयश्च
पञ्च प्राणाश्रया इति तमप्येवमेव ह वै स्वा ज्ञातय अभिसंविशन्ति वागादय इव प्राणम्। ज्ञातीनामाश्रयणीयो
२० भवतीत्यभिप्रायः। अभिसंनिविष्टानां च स्वानां प्राणवदेव वागादीनां स्वान्नेन भर्ता भवति। तथा श्रेष्ठः पुरोऽग्रत
एता गन्ता भवति वागादीनामिव प्राणः। तथाऽन्नादोऽनामयावीत्यर्थः अधिपतिरधिष्ठाय च पालयिता स्वतन्त्रः

भर्ता श्रेष्ठ. पुरो गन्तेत्यादिगुणविधानार्थं वाक्यान्तरमादत्ते—ते देवा इति। तस्य विवक्षितमर्थं वक्तुमादा-
वाक्षिपति—नन्विति। अयुक्तत्वे हेतुमाह—वागादीनामिति। अवधारणानुपपत्तिं दूषयति—नैष दोष इति। यथा
२५ प्राणस्योपकारोऽन्नकृतो न वागादिद्वारकस्तथा तेषामपि नासौ प्राणद्वारको विशेषाभावादिति शङ्कते—कथमिति।
वाक्येन परिहरति—एतमर्थमिति। आह विशेषमिति शेषः। तेषां देवत्वं साधयति—स्वविषयेति। तत्र प्रसिद्धिं
प्रमाणयितुं वैशब्द इत्याह—वा इति। स्मरणार्थ इति। तत्प्रसिद्धस्यार्थस्येति शेषः। वाक्यार्थमाह—इदं तदिति।
एतावत्त्वमेव व्याचष्टे—तत्सर्वमिति। किमिदं प्राणार्थमन्नागानं नाम तदाह—आगानेनेति। का पुनरेतावता भवतां
क्षतिस्तत्राऽऽह—वयञ्चेति। अन्नमन्तरेण ममापि स्थातुमशक्तेर्मदर्थं तदागीतमिति चेत्तत्राऽऽह—अत इति। आभजस्वेति
३० श्रूयमाणे कथमन्यथा व्याख्यायते तत्राऽऽह—णिच इति। तवैवान्नस्वामित्वमस्माकमपि तत्र प्रवेशमात्रं स्थित्यर्थमपे-
क्षितमिति वाक्यार्थमाह—अस्मांश्चेति। वैशब्दो यद्यर्थे प्रयुक्तः। प्राणं परिवेष्ट्य तदनुज्ञया वागादीनामन्नादिनामवस्थाने
चेत्तेषामपि प्राणवदन्नसम्बन्धः स्यादित्याशङ्क्याऽऽह—तथेति। त्यक्तप्राणस्यान्नबलाद्वागादिस्थित्यनुपलब्धेरित्यर्थः।
वागादीनामन्नजन्योपकारस्य प्राणद्वारत्वे सिद्धे फलितमाह—तस्मादिति।

तेषामन्नकृतोपकारस्य प्राणद्वारकत्वे वाक्यशेषं संवादयति—तदेवेति। विद्याफलं दर्शयन्गुणजातमुपदिशति—
३५ वागादीति। वेदनमेव व्याचष्टे—वागादयश्चेति। स च प्राणोऽहमस्मीति वेदेति चकारार्थः। अनामयावी व्याधिरहितो

फलमङ्गीकृतं शास्त्रेषु 'अध्वर्यो किमत्र, भद्र, तन्नौ सह' इत्यादिषु अत्रापि 'आत्मने' इति वचनात्। काम्यमान-
फलं उद्गानकर्तु ऋत्विजः फलमित्यर्थः।

१. अन्नेन निमित्तेनोपकारदर्शनादित्यर्थः।

**सोऽयास्य आङ्गिरसोऽङ्गानां हि रसः प्राणो वा अङ्गानां रसः प्राणो हि वा अङ्गानां-**
**रसस्तस्माद्यस्मात्कस्माच्चाङ्गात्प्राण उत्क्रामति तदेव तच्छुष्यत्येष हि वा अङ्गानां रसः ॥१९॥**

**एष उ एव बृहस्पतिर्वाग्वै बृहती तस्या एष पतिस्तस्मादु बृहस्पतिः ॥२०॥**

पतिः प्राणवदेव वागादीनां य एवं प्राणं वेद तस्यैतद्यथोक्तं फलं भवति। किंच य उ हैवंविदं प्राणविदं प्रति स्वेषु ज्ञातीनां मध्ये प्रतिः प्रतिकूलो बुभूषति प्रतिस्पर्धीभवितुमिच्छति सोऽसुरा इव प्राणप्रतिस्पर्धिनो न हैवालं न ५ पर्याप्तो भार्येभ्यो भरणीयेभ्यो भवति भर्तुमित्यर्थः। अथ पुनर्य एव ज्ञातीनां मध्य एतमेवंविदं वागादय इव प्राणमन्वनुगतो भवति यो वै तमेवंविदमन्वेवानुवर्तयन्नेवाऽऽत्मीयान्भार्यान्बुभूर्षति भर्तुमिच्छति यथैव वागादयः प्राणानुवृत्त्याऽऽत्मबुभूर्षव आसन्। स हैवालं पर्याप्तो भार्येभ्यो भरणीयेभ्यो भवति भर्तुं नेतरः स्वतन्त्रः। सर्वमेतत्प्राणगुणविज्ञानफलमुक्तम् ॥१८॥

कार्यकरणानामात्मत्वप्रतिपादनाय प्राणस्याऽऽङ्गिरसत्वमुपन्यस्तं सोऽयास्य आङ्गिरस इति। अस्माद्धे- १० तोरयमाङ्गिरस इत्याङ्गिरसत्वे हेतुर्नोक्तस्तद्धेतुसिद्ध्यर्थमारभ्यते। तद्धेतुसिद्ध्यायत्तं हि कार्यकरणात्मत्वं प्राणस्य। अनन्तरं च वागादीनां प्राणाधीनतोक्ता। सा च कथमुपपादनीयेत्याह—सोऽयास्य आङ्गिरस इत्यादि यथोपन्यस्त-मेवोपादीयत उत्तरार्थम्। प्राणो वा अङ्गानां रस इत्येवमन्तं वाक्यं यथाव्याख्यातार्थमेव पुनः स्मारयति। कथं, प्राणो वा अङ्गानां रस इति। प्राणो हि। हिशब्दः प्रसिद्धौ। अङ्गानां रसः। प्रसिद्धमेतत्प्राणस्याङ्गरसत्वं न वागादीनाम्। तस्माद्युक्तं प्राणो वा इति स्मारणम्। कथं पुनः प्रसिद्धत्वमित्यत आह—तस्माच्छब्द उपसंहारार्थं १५ उपरिहेतुत्वेन सम्बध्यते। यस्माद्यतोऽवयवात् अनुक्तविशेषात् यस्मात् कस्मात् यतः कुतश्चिच्चाङ्गात् शरीरा-वयवादविशेषितात्प्राण उत्क्रामत्यपसर्पति तदेव तत्रैव तदङ्गं शुष्यति नीरसं भवति शोषमुपैति। तस्मादेष हि वा अङ्गानां रस इत्युपसंहारः। अतः कार्यकरणानामात्मा प्राण इत्येतत्सिद्धम्। आत्मापाये हि शोषो मरणं स्यात्तस्मात्तेन जीवन्ति प्राणिनः सर्वे। तस्मादपास्य वागादीन्प्राण एवोपास्य इति समुदायार्थः ॥१९॥

एष उ। न केवलं कार्यकरणयोरेवाऽऽत्मा प्राणो रूपकर्मभूतयोः किं तर्हि ऋग्यजुःसाम्नां नामभूताना- २०

दीप्ताग्निरिति यावत्। सम्प्रति प्राणविद्यां स्तोतुं तद्विद्यावद्विद्वेषिणो दोषमाह—किञ्चेति। इदानीं प्राणविद प्रत्यनुरागे लाभं दर्शयति—अथेत्यादिना। ते देवा अब्रुवन्नित्यादौ गुणविधिर्विवक्षितो न विशिष्टविधिर्गुणफलस्यैवात्र श्रवणा-दित्याह—सर्वमेतदिति ॥१८॥

उत्तरग्रन्थस्य व्यवहितेन सम्बन्धं वक्तु व्यवहितमनुवदति—कार्यकरणानामिति। अनन्तरग्रन्थमवतारयति—अस्मादिति। किमित्याङ्गिरसत्वसाधको हेतुः साधनीयस्तत्राऽऽह—तद्धेत्विति। सम्प्रत्यव्यवहितं सम्बन्धं दर्शयति— २५ अनन्तरं चेति। प्रकारान्तरं बुभुत्स्यमानमिति सूचयितुं चशब्दः। तर्हि यदुपपादनीयं तदुच्यतां किमित्युक्तस्य पुनरुक्ति-रित्याशङ्क्याऽऽह—उत्तरार्थमिति। प्रतिज्ञानुवादो वक्ष्यमाणहेतोरुपयोगीत्यर्थः। यथोपन्यस्तमेवेत्यादि प्रपञ्चयति—प्राणो वा इति। उक्तार्थनिर्णयहेतुं पृच्छति—कथमिति। तत्र प्रसिद्धिं हेतुं कुर्वन्परिहरति—प्राणो हीति। प्रसिद्धिमेव प्रकटयति—प्रसिद्धमिति। स्मारणं प्रसिद्धस्याऽऽङ्गिरसत्वस्येति शेषः। प्रसिद्धिरसिद्धेति शङ्कते—कथमिति। तामन्वयव्यतिरेकाभ्यां साधयति—अत आहेति। पदार्थमुक्त्वा वाक्यार्थमाह—यस्मात्कस्मादिति। उक्तेन व्यतिरेके- ३० णानुक्तमन्वयं समुच्चेतुं चशब्दः। तस्माच्छब्दस्योपरिभावेन सम्बन्धमुक्तं स्फुटयति—तस्मादिति। अन्वयव्यतिरेका-भ्यामङ्गरसत्वे प्राणस्य सिद्धे फलितमाह—अत इति। उक्तन्यायादङ्गरसत्वे सिद्धेऽपि कथमात्मत्वं सिध्येदित्याशङ्क्या-ऽऽह—आत्मेति। अस्तु प्राणः सङ्घातस्याऽऽत्मा तथाऽपि किं स्यात्तदाह—तस्मादिति। भवतु प्राणाधीनं सङ्घातस्य जीवनं तथाऽपि कथं तस्यैवोपास्यत्वमित्याशङ्क्याऽऽह—तस्मादपास्येति ॥१९॥

बृहस्पत्यादिधर्मकं[1] प्राणोपासनं वक्तुं वाक्यान्तरमवतारयति—एष इति। तस्य विधान्तरेण तात्पर्यमाह— ३५ न केवलमिति। कार्यं स्थूलशरीरं प्रत्यक्षतो निरूप्यमाणं रूपात्मकं करणं च ज्ञानक्रियाशक्तिमत्कर्मभूतं तयोरात्मा प्राण

---

१. बृहस्पतिधर्मकं बृहस्पतित्वधर्मकम्।

**एष उ एव ब्रह्मणस्पतिर्वाग्वै ब्रह्म तस्या एष पतिस्तस्मादु ब्रह्मणस्पतिः ॥२१॥**

मात्मेति सर्वात्मकतया प्राणं स्तुवन्महीकरोत्युपास्यत्वाय—एष उ। प्रकृत एव आङ्गिरसो बृहस्पतिः। कथं बृहस्पतिरिति। उच्यते—वाग्वै बृहती बृहतीछन्दः षट्त्रिंशदक्षरा। अनुष्टुप्च वाक्। कथम्। "वाग्वा अनुष्टुप्"
५ इति श्रुतेः। सा च वागनुष्टुब्बृहत्यां छन्दस्यन्तर्भवति। अतो युक्तं वाग्वै बृहतीति प्रसिद्धवद्वक्तुम्। बृहत्यां च सर्वा ऋचोऽन्तर्भवन्ति प्राणसंस्तुतत्वात्। "प्राणो बृहती प्राण ऋच इत्येव विद्यात्" इति श्रुत्यन्तरात्। वागात्मत्वाच्चर्चां प्राणेऽन्तर्भावः। तत्कथमित्याह—तस्या वाचो बृहत्या ऋच एष प्राणः पतिः। तस्या निर्वर्तकत्वात्। कौष्ठ्याग्निप्रेरितमारुतनिर्वर्त्या हि ऋक्। पालनाद्वा वाचः पतिः प्राणेन हि पाल्यते वाक्। अप्राणस्य शब्दोच्चारणसामर्थ्याभावात्। तस्मादु बृहस्पतिर्ऋचां प्राण आत्मेत्यर्थः ॥२०॥

१० तथा यजुषाम्। कथम्, एष उ एव ब्रह्मणस्पतिः। वाग्वै ब्रह्म ब्रह्म यजुस्तच्च वाग्विशेष एव। तस्या वाचो यजुषो ब्रह्मण एष पतिस्तस्माद् ब्रह्मणस्पतिः पूर्ववत्। कथं पुनरेतदवगम्यते बृहतीब्रह्मणोर्ऋग्यजुष्ट्वं न पुनरन्यार्थत्वमिति। उच्यते—वाचोऽन्ते सामसामानाधिकरण्यनिर्देशाद्वाग्वै सामेति। तथा च वाग्वै बृहती वाग्वै ब्रह्मेति च वाक्समानाधिकरणयोर्ऋग्यजुष्ट्वं युक्तम्। परिशेषाच्च। साम्न्यभिहित ऋग्यजुषी एव परिशिष्टे। वाग्विशेषत्वाच्च वाग्विशेषौ हि ऋग्यजुषी। तस्मात्तयोर्वाचा समानाधिकरणता युक्ता अविशेषप्रसङ्गाच्च।
१५ सामोद्गीथ इति च स्पष्टं विशेषाभिधानत्वम्। तथा बृहतीब्रह्मशब्दयोरपि विशेषाभिधानत्वं युक्तम्। अन्यथाऽनि-

इत्युक्त्वा नामराशेरपि तथेति वक्तु कण्डिकाचतुष्टयमित्यर्थः। किमिति प्राणस्याऽऽत्मत्वेन सर्वात्मत्वोक्त्या स्तुतिरित्याशङ्क्याऽऽह—उपास्यत्वायेति। उशब्दोऽप्यर्थो बृहस्पतिशब्दादुपरि सबध्यते। 'बृहस्पतिर्देवाना पुरोहित आसीत्' इति श्रुतेर्देवपुरोहितो बृहस्पतिरुच्यते तत्कथं प्राणस्य बृहस्पतित्वमिति शङ्कते—कथमिति। देवपुरोहित व्यावर्तयितुमुत्तर-
२० वाक्येनोत्तरमाह—उच्यत इति। प्रसिद्धवचनं कथमित्याशङ्क्याऽऽह—बृहतीछन्द इति। सप्त हि गायत्र्यादीनि प्रधानानि च्छन्दासि तेषा मध्यमं छन्दो बृहतीत्युच्यते। सा च बृहती षट्त्रिंशदक्षरा प्रसिद्धेत्यर्थः। भवतु यथोक्ता बृहती तथाऽपि कथम् 'वाग्वै बृहती' इत्युक्तं तत्राऽऽह—अनुष्टुप् चेति। द्वात्रिंशदक्षरा तावदनुष्टुबिष्टा, सा चाष्टाक्षरैश्चतुर्भि पादै षट्त्रिंशदक्षराया बृहत्यामन्तर्भवत्यवान्तरसंख्याया महासंख्यायामन्तर्भावादित्याह—सा चेति। वागनुष्टुभोरनुष्टुब्बृहत्योश्चोक्तमैक्यमुपजीव्य फलितमाह—अत इति। भवतु वागात्मिका बृहती तथाऽपि तत्पतित्वेन प्राणस्य कथ-
२५ मृक्पतित्वमित्याशङ्क्याऽऽह—बृहत्या चेति। सर्वात्मकप्राणरूपेण बृहत्या. स्तुतत्वात्तत्र सर्वासामृचामन्तर्भाव. सम्भवति, तस्मात्प्राणस्य बृहस्पतित्वे सिद्धमृक्पतित्वमित्यर्थः। प्राणरूपेण स्तुता बृहतीत्यत्र प्रमाणमाह—प्राणो बृहतीति। तथाऽपि प्राणस्य विवक्षितमृगात्मत्वं कथ सिध्यतीत्याशङ्क्याऽऽह—प्राण इति। तस्य तदात्मत्वे हेत्वन्तरमाह—वागात्मत्वादिति। तासा तदात्मत्वेऽपि कथ प्राणेऽन्तर्भावो न हि घटो मृदात्मा पटेऽन्तर्भवतीति शङ्कते—तत्कथमिति। प्राणस्य वाङ्निष्पादकत्वात्तद्भूतानामृचा कारणे प्राणे युक्तोऽन्तर्भाव इत्याह—आहेत्यादिना। प्राणस्य तन्निवर्तकत्वेऽपि
३० न तस्मिन्वाचोऽन्तर्भावो न हि घटस्य कुलालेऽन्तर्भाव इत्याशङ्क्याऽऽह—कौष्ठ्येति। कोष्ठनिष्ठेनाग्निना प्रेरितस्तद्गतो वायुरूर्ध्वं गच्छन्कण्ठादिभिरभिहन्यमानो व तया व्यज्यते तदात्मिका च वाङ्निर्णीता देवताधिकरण ऋक्च वागात्मिकोक्ता तद्युक्त तस्याः प्राणेऽन्तर्भूतत्वमित्यर्थः। ऋगात्मत्व प्राणस्य प्रकारान्तरेण साधयति—पालनाद्वेति। सत्ताप्रदत्वे सति स्थापकत्व तादात्म्यव्याप्तमित्यभिप्रेत्योपसहरति—तस्मादिति ॥२०

यजुषामात्मेति पूर्वेण सम्बन्ध। नियतपादाक्षराणामृचा प्राणत्वे कुतस्तद्विपरीतानां यजुषा तत्त्वमिति
३५ शङ्कित्वा परिहरति—कथमिति। तथाऽपि कथ प्राणो यजुषामात्मेत्याशङ्क्याऽऽह—वाग्वै ब्रह्मेति। निवर्तकत्वं पालयितृत्व चात्रापि तुल्यमित्याह—पूर्ववदिति। रूढिमाश्रित्य शङ्कते—कथ पुनरिति। वाक्यशेषविरोधान्नात्र रूढिः सम्भवतीति परिहरति—उच्यत इति। वाग्वै सामेत्यन्ते वाच सामसामानाधिकरण्येन निर्देशाद्वेदाधिकारोऽयमिति योजना। तथाऽपि कथमृक्त्व यजुष्ट्वं वा बृहतीब्रह्मणोरिति तत्राऽऽह—तथा चेति। परिशेषमेव दर्शयति—साम्नीति। इतश्च वाक्समानाधिकृतयोर्बृहतीब्रह्मणोर्ऋग्यजुष्ट्वमेष्टव्यमित्याह—वाग्विशेषत्वाच्चेति। तत्रैव हेत्वन्तरमाह—अवि-

**एष उ एव साम वाग्वै सामैष सा चामश्चेति तत्साम्नः सामत्वम् । यद्वेव समः प्लुषिणा समो मशकेन समो नागेन सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेण तस्माद्वेव सामाश्नुते साम्नः सायुज्यं सलोकतां य एवमेतत्साम वेद ॥२२॥**

र्धारितविशेषयोरानर्थक्यापत्तेश्च विशेषाभिधानस्य वाङ्मात्रत्वे चोभयत्र पौनरुक्त्यात् । ऋग्यजुःसामोद्गीथशब्दानां च श्रुतिष्वेवंक्रमदर्शनात् ॥२१॥　५

एष उ एव साम । कथमित्याह—वाग्वै सा यत्किंचित्स्त्रीशब्दाभिधेयं सा वाक् । सर्वस्त्रीशब्दाभिधेयवस्तुविषयो हि सर्वनाम साशब्दः । तथा अम एष प्राणः सर्वपुंशब्दाभिधेयवस्तुविषयोऽमःशब्दः । "केन मे पौंस्नानि नामान्याप्नोतीति प्राणेनेति ब्रूयात्केन मे स्त्रीनामानीति वाचा" इति श्रुत्यन्तरात् । वाक्प्राणाभिधानभूतोऽयं सामशब्दः तथा प्राणनिर्वर्त्यस्वरादिसमुदायमात्रं गीतिः सामशब्देनाभिधीयते । अतो न प्राणवाग्व्यतिरेकेण सामनामास्ति किंचित्स्वरवर्णादेश्च प्राणनिर्वर्त्यत्वात्प्राणतन्त्रत्वाच्च । एष उ एव प्राणः साम यस्मात्साम । सामेति १० वाक्प्राणात्मक सा चामश्चेति तत्तस्मात्साम्नो गीतिरूपस्य स्वरादिसमुदायस्य सामत्वं तत्प्रगीतं भुवि । यद्वु एव समस्तुल्यः सर्वेण वक्ष्यमाणेन प्रकारेण तस्माद्वा सामेत्यनेन सबन्धः । वाशब्दः सामशब्दलाभनिमित्तप्रकारान्तरनिर्देशसामर्थ्यलभ्यः । केन पुनः प्रकारेण प्राणस्य तुल्यत्वमित्युच्यते—समः प्लुषिणा पुत्तिकाशरीरेण समो मशकेन मशकशरीरेण समो नागेन हस्तिशरीरेण सम एभिस्त्रिभिर्लोकैः त्रैलोक्यशरीरेण प्राजापत्येन समोऽनेन

शेषेति । प्रसङ्गमेव व्यतिरेकमुखेन विवृणोति—सामेति । द्वितीयश्चकारोऽवधारणार्थः । किञ्च वाग्वै बृहती वाग्वै १५ ब्रह्मेति वाक्याभ्या बृहतीब्रह्मणोर्वागात्मत्वं सिद्धं, न च तयोर्वाङ्मात्रत्व वाक्यद्वयेऽपि वाग्वै वागिति पौनरुक्त्यप्रसङ्गात्तस्माद्बृहतीब्रह्मणोरेष्टव्यमृग्यजुष्ट्वमित्याह—वाङ्मात्रत्वे चेति । तत्रैव स्थानमाश्रित्य[1] हेत्वन्तरमाह—ऋगिति ॥२१॥

ऋग्यजुष्ट्वं प्राणस्य प्रतिपाद्य तस्यैव सामत्वं साधयति—एष इत्यादिना । तदेव स्पष्टयति—सर्वेति । साशब्दो हि सर्वनाम । तथा च यः स्त्रीलिङ्गः सर्वशब्दस्तेनाभिधेय वस्तु वागित्यर्थः । अमः प्राण इत्युक्तमुपपादयति—सर्वपुंशब्देति । पुंलिङ्गेन सर्वेण शब्देनाभिधेयं वस्तु प्राण इत्यर्थः । तत्र श्रुत्यन्तरं प्रमाणयति—केनेति । आचार्यस्य २० शिष्यं प्रत्येतद्वाक्यम् । पौस्नानि पुंसो वाचकानि । तथाऽपि कस्य सामशब्दवाच्यत्वमित्याशङ्क्य फलितमाह—वागिति । वागुपसर्जनः प्राणः सामशब्दाभिधेय एकवचननिर्देशादित्यर्थः । ननु 'गीतिषु सामाख्ये'ति न्यायाद्विशिष्टा काचिद्गीति' सामेत्युच्यते तत्कुतो वागुपसर्जनस्य प्राणस्य सामत्वमत आह—तथेति । प्राणस्य सामत्वे सतीति यावत् । प्रगीते मन्त्रवाक्ये सामशब्दस्य वृद्धैरिष्टत्वादस्ति प्राणादिव्यतिरेकेण सामेत्याशङ्क्याऽऽह—स्वरेति । आदिपदेन पदवाक्यादिग्रहः । वागुपसर्जने प्राणे मुख्य[2] सामशब्दस्तत्सम्बन्धादितरत्र गौणो मञ्चादिशब्दवदित्यर्थः । उक्तेऽर्थे तत्साम्नः २५ सामत्वमिति वाक्यं योजयति—यस्मादिति । इदं सामेद सामेति यद्व्यवह्रियते तद्वाक्प्राणात्मकमेवोच्यते सा चामश्चेति व्युत्पत्तेर्यस्मादेवं तस्मात्प्रसिद्धस्य साम्नो यत्सामत्वं तन्मुख्यसामनिर्वर्त्यत्वाद्गौणमेव सदध्येतृव्यवहारे प्रसिद्धमिति योजना ।

प्रकारान्तरेण प्राणस्य सामत्वमुपासनार्थमुपन्यस्यति—यदित्यादिना । प्रकारान्तरद्योती वाशब्दोऽत्र न श्रूयत इत्याशङ्क्याऽऽह—वाशब्द इति । निमित्तान्तरमेव प्रश्नपूर्वकं प्रकटयति—केनेत्यादिना । ननु प्राणस्य तत्तच्छरीर- ३० परिमाणत्वे परिच्छिन्नत्वादानन्त्यानुपपत्तिस्तत्कथमस्य विरुद्धेषु शरीरेषु समत्वमित्याशङ्क्याऽऽह—पुत्तिकादीति ।

---

१ स्थानमाश्रित्य—स्थान क्रमबोधकप्रमाणम् । श्रुत्यर्थपाठस्थानमुख्यप्रवृत्तिरूपाणि षट् प्रमाणानि क्रमे । तत्र चतुर्थं प्रमाणं स्थानम् । ब्राह्मणे येन क्रमेण यागा आम्नाताः तेनैव क्रमेण याज्यापुरोनुवाक्यामन्त्राः मन्त्रकाण्डे पठिता. । तत्र प्रथमयागस्य प्रथमयाज्यापुरोनुवाक्यामन्त्रयुगलं द्वितीयस्य द्वितीयमिति संबन्धोऽङ्गीकृतः पूर्वकाण्डे । अत्रापि अन्यत्र'ऋचो यजूंषि सामानी'ति क्रमदर्शनात् प्रथम ऋक्पाठानन्तर श्रुतब्रह्मशब्दः ३५ यजु.परः साम्न तृतीयत्वात् इत्यर्थ. । यद्वा तत्स्थानापन्नः तद्धर्मान् लभत इति न्यायेन द्वितीयं स्थानं यजुषः तत्स्थानापन्नं ब्रह्म तच्च यजुधर्म यजुष्ट्वं लभते ।

२. मुख्यतामेति—वागुपसर्जनः प्राणः सामपदार्थः तेन निर्वर्त्यत्वात् स्वरसमूहे सामशब्दप्रयोगः ।

**एष उ वा उद्गीथः प्राणो वा उत्प्राणेन हीदँ सर्वं-**
**मुत्तब्धं वागेव गीथोच्च गीथा चेति स उद्गीथः ॥२३॥**

**तद्धापि ब्रह्मदत्तश्चैकितानेयो राजानं भक्षयन्नुवाचायं त्यस्य राजा मूर्धानं विपातयता-**
**द्यदितोऽयास्य आङ्गिरसोऽन्येनोदगायदिति वाचा च ह्येव स प्राणेन चोदगायदिति ॥२४॥**

५ जगद्रूपेण हैरण्यगर्भेण पुत्तिकादिशरीरेषु गोत्वादिवत्कार्त्स्न्येन, परिसमाप्त इति समत्वं प्राणस्य। न पुनः शरीरमात्रपरिमाणेनैवामूर्तत्वात्सर्वगतत्वाच्च। न च घटप्रासादादिप्रदीपवत्संकोचविकासितया शरीरेषु तावन्मात्रं समत्वम्। "त एते सर्व एव समाः सर्वेऽनन्ताः" इति श्रुतेः। सर्वगतस्य तु शरीरेषु शरीरपरिमाणवृत्तिलाभो न विरुध्यते। एवं समत्वात्सामाख्यं प्राणं वेद यः श्रुतिप्रकाशितमहत्त्वं तस्यैतत्फलम् अश्नुते व्याप्नोति साम्नः प्राणस्य सायुज्यं सयुग्भावं समानदेहेन्द्रियाभिमानत्वं सालोक्यं समानलोकतां वा भावनाविशेषतो य एवमेतद्यथोक्तं
१० साम प्राणं वेद। आ प्राणात्माभिमानाभिव्यक्तेरुपास्त इत्यर्थः ॥२२॥

एष उ वा उद्गीथः उद्गीथो साम सामावयवो भक्तिविशेषो नोद्गानम्। सामाधिकारात्। कथमुद्गीथः प्राणः प्राणो वा उत्प्राणेन हि यस्मादिदं सर्वं जगदुत्तब्धमूर्ध्वं स्तब्धमुत्तम्भितं विधृतमित्यर्थः। उत्तब्धार्थविद्योतकोऽयमुच्छब्दः प्राणगुणाभिधायकः। तस्मादुत्प्राणो वागेव गीथा शब्दविशेषत्वादुद्गीथभक्तेः। गायतेः शब्दार्थत्वात्सा वागेव। न ह्युद्गीथभक्तेः शब्दव्यतिरेकेण किंचिद्रूपमुत्प्रेक्ष्यते। तस्माद्युक्तमवधारणं वागेव गीथेति।
१५ उच्च प्राणो गीथा च प्राणतन्त्रा वागित्युभयमेकेन शब्देनाभिधीयते स उद्गीथः ॥२३॥

उक्तार्थदार्ढ्यायाख्यायिकाऽऽरभ्यते—तद्धापि तत्तत्रैतस्मिन्नुक्तेऽर्थे हाप्याख्यायिकाऽपि श्रूयते ह स्म। ब्रह्मदत्तो नामतः चिकितानस्यापत्यं चैकितानस्तदपत्यं युवा चैकितानेयो राजानं यज्ञे सोमं भक्षयन्नुवाच। किम् अयं चमसस्थो मया भक्ष्यमाणो राजा त्यस्य तस्य ममानृतवादिनो मूर्धानं शिरो विपातयताद्विस्पष्टं पातयतु। तोरयं तातङादेश

समशब्दस्य यथाश्रुतार्थत्वं किं न स्यादित्याशङ्क्याऽऽह—न पुनरिति। आधिदैविकेन रूपेणामूर्तत्वं सर्वगतत्वं च
२० द्रष्टव्यम्। ननु प्रदीपो घटे सङ्कुचति प्रासादे च विकसति तथा प्राणोऽपि मशकादिशरीरेषु सङ्कोचमिभादिदेहेषु विकासं चाऽऽपद्यतामिति समत्वासिद्धिरित्याशङ्क्याऽऽह—न चेति। प्राणस्य सर्वगतत्वे समत्वश्रुतिविरोधमाशङ्क्याऽऽह—सर्वगतस्येति। खण्डादिषु[1] गोत्ववच्छरीरेषु सर्वत्र स्थितस्य प्राणस्य तत्तच्छरीरपरिमाणाया वृत्तेर्लाभ। सम्भवति सर्वगतस्यैव नभसस्तत्र तत्र कूपकुम्भाद्यवच्छेदोपलम्भादित्यर्थः। फलश्रुतिमवतार्य व्याकरोति—एवमिति। फलविकल्पे हेतुमाह—भावनेति। वेदनं व्याकरोति—आ प्राणेति। इदञ्च फलं मध्यप्रदीपन्यायेनोभयतः सम्बद्धमव-
२५ धेयम् ॥२२॥

प्रस्तावादिशब्दवदुद्गीथशब्दस्यापि भक्तिविशेषे रूढत्वादुद्गीथेनात्ययामेत्यत्र चौद्गात्रे कर्मणि प्रयुक्तत्वात्कथमुद्गीथः प्राण इत्याशङ्क्याऽऽह—उद्गीथो नामेति। नञ्पदस्योभयतः सम्बन्धः। सामशब्दितस्य प्राणस्य प्रकृतत्वादिति हेतुमाह—सामाधिकारादिति। न तावदुद्गीथशब्दस्य प्राणे रूढिस्तस्य तस्मिन्वृद्धप्रयोगादर्शनान्नापि योगोऽवयववृत्तेरदृष्टेरिति शङ्कते—कथमिति। योगवृत्तिमुपेत्य परिहरति—प्राण इति। उच्छब्दो नास्यार्थस्य वाचको
३० निपातत्वादित्याशङ्क्याऽऽह—उत्तब्धेति। तथाऽपि कथं प्राणो वा उदित्युक्तं तत्राऽऽह—प्राणेति। 'वायुर्वै गौतम तत्सूत्रम्' इत्यादिश्रुतेरित्यर्थः। उद्गीथभक्तेः शब्दविशेषत्वेऽपि गीथा वागिति कथमुच्यते तत्राऽऽह—गायतेरिति। अथावधारणं साधयति—न हीति। तथाऽपि कथं प्राणस्योद्गीथत्वमित्याशङ्क्य वागुपसर्जनस्य तस्य तथात्वं कथयति—उच्चेति ॥२३॥

तद्धापीत्यादिवाक्यस्य प्रकृतानुपयोगमाशङ्क्याऽऽह—उक्तार्थेति। उद्गीथदेवता प्राणो न वागादिरित्यु-
३५ क्तार्थः। 'जीवति तु वंश्ये युवा' (पा० सू० ४।१।१६३) इति स्मरणात्पित्रादौ वंश्ये जीवति पौत्रप्रभृतेर्यदपत्यं तद्युवसञ्ज्ञकमिति द्रष्टव्यम्। क्रियापदनिष्पत्तिप्रकारं सूचयति—तोरिति। तुप्रत्ययस्यायमाशिषि विषये तातङादेशः 'तुह्योस्तातङाशिष्यन्यतरस्याम्' (पा० सू० ७।१।३५) इति स्मरणादित्यर्थः। मूर्धपातप्रापकं दर्शयति—यदीति।

१. खण्डादियुक् खण्डः छिन्नावयवः पदादिषु गौणः। आदिपदात् मुण्डः। स च शृंगरहितो गौः।

**तस्य हैतस्य साम्नो यः स्वं वेद भवति हास्य स्वं तस्य वै स्वर एव स्वं तस्मादार्त्विज्यं करिष्यन्वाचि स्वरमिच्छेत तया वाचा स्वरसम्पन्नयार्त्विज्यं कुर्यात्तस्माद्यज्ञे स्वरवन्तं दिदृक्षन्त एव। अथो यस्य स्वं भवति भवति हास्य स्वं य एवमेतत्साम्नः स्वं वेद ॥२५॥**

आशिषि लोड्विपातयतादिति। यद्यहमनृतवादी स्यामित्यर्थः। कथं पुनरनृतवादित्वप्राप्तिरिति। उच्यते—यद्यदितोऽस्मात्प्रकृतात्प्राणाद्वाक्संयुक्तादयास्यो मुख्यप्राणाभिधायकेनायस्याङ्गिरसशब्देनाभिधीयते विश्वसृजां पूर्वर्षीणां सत्र उद्गाता सोऽन्येन देवतान्तरेण वाक्प्राणव्यतिरिक्तेनोदगायदुद्गानं कृतवान्। ततोऽहमनृतवादी स्यां तस्य मम देवताविपरीतप्रतिपत्तुर्मूर्धानं विपातयत्वित्येवं शपथं चकारेति विज्ञाने प्रत्ययदार्ढ्यकर्तव्यतां दर्शयति। तमिममाख्यायिकानिर्धारितमर्थं स्वेन वचसोपसंहरति श्रुतिः—वाचा च प्राणप्रधनया प्राणेन च स्वस्याऽऽत्मभूतेन सोऽयास्य आङ्गिरस उद्गातोदगायदित्येषोऽर्थो निर्धारितः शपथेन ॥२४॥　५–१०

तस्य हैतस्य। तस्येति प्रकृतं प्राणमभिसंबध्नाति। हैतस्येति मुख्यं व्यपदिशत्यभिनयेन। साम्नः सामशब्दवाच्यस्य प्राणस्य यः स्वं धनं वेद तस्य ह किं स्यात्। भवति हास्य स्वम्। फलेन प्रलोभ्याभिमुखीकृत्य शुश्रूषव आह—तस्य वै साम्नः स्वर एव स्वम्। स्वर इति कण्ठगतं माधुर्यं तदेवास्य स्वं विभूषणम्। तेन हि भूषितमृद्धिमल्लक्ष्यत उद्गानम्। यस्मादेवं तस्मादार्त्विज्यमृत्विक्कर्मोद्गानं करिष्यन्वाचि विषये वाचि वागाश्रितं स्वरमिच्छेत साम्नो धनवत्तां स्वरेण चिकीर्षुरुद्गाता। इदं तु प्रासङ्गिकं विधीयते साम्नः सौस्वर्येण स्वरवत्त्वप्रत्यये कर्तव्य इच्छामात्रेण सौस्वर्यं न भवतीति दन्तधावनतैलपानादि सामर्थ्यात्कर्तव्यमित्यर्थः। तयैवं संस्कृतया वाचा स्वरसंपन्नयाऽऽर्त्विज्यं कुर्यात्। तस्मात् यस्मात्साम्नः स्वभूतः स्वरः तेन स्वेन भूषितं साम, अतो यज्ञे स्वरवन्तमुद्गातारं दिदृक्षन्त एव द्रष्टुमिच्छन्त एव धनिनमिव लौकिकाः। प्रसिद्धं हि लोकेऽथो अपि यस्य स्वं धनं भवति तं धनिनं दिदृक्षन्त इति। सिद्धस्य गुणविज्ञानफलसम्बन्धस्योपसंहारः क्रियते—भवति हास्य स्वं य एवमेतत्साम्नः स्वं वेदेति ॥२५॥　१५–२०

अनृतवादित्वस्य प्रापकाभावादप्राप्तिरिति शङ्कते—कथं पुनरिति। उद्गानस्य बुद्धादिसन्निधानात्तद्देवता प्रजापत्यादिलक्षणा किं तस्मिन्देवता किंवा वर्णस्वरादिसन्निधानात्तद्देवतैव तत्र देवतेति विप्रतिपत्तेरनृतवादित्वे शङ्किते ब्रह्मदत्तः शपथेन निर्णयं चकारेत्याह—उच्यत इति। प्राणाद्वाक्संयुक्तादन्येनायास्यो यद्युदगायदिति सम्बन्धः। नन्वयास्याङ्गिरसशब्दवाच्यो मुख्यप्राणो देवतात्वान्नोद्गाता भवितुमुत्सहते तत्राऽऽह—मुख्येति। उक्तार्थदार्ढ्यायेत्युक्तमुपसहरति—इति विज्ञान इति। उक्तरीत्या शपथक्रियया प्राण एवोद्गीथदेवतेत्यस्मिन्विज्ञाने प्रत्ययो विश्वासस्तस्य यद्दार्ढ्यं तस्य कर्तव्यत्वमाख्यायिकया दर्शयति श्रुतिरिति यावत्। आख्यायिकार्थस्यैव वाचेत्यादिनोक्तेः पौनरुक्त्यमित्याशङ्क्याऽऽह—तमिममिति। शपथस्य स्वातन्त्र्येणाप्रामाण्येऽपि श्रुतिमूलतया प्रामाण्यं सिध्यतीति भावः ॥२४॥　२५

उद्गीथदेवता प्राण एवेति निर्धार्य स्वसुवर्णप्रतिष्ठागुणविधानार्थमुत्तरकण्डिकात्रयमवतारयति—तस्येत्यादिना। किमित्यादौ फलमभिलप्यते तत्राऽऽह—फलेनेति। सौस्वर्यं साम्नो भूषणमित्यत्रानुभवमनुकूलयति—तेन हीति। कथं तर्हि कण्ठगतं माधुर्यं सम्पादनीयमित्याशङ्क्याऽऽह—यस्मादिति। प्राणोऽहं ममैव गीतिभावमापन्नस्य सौस्वर्यं धनमिति प्रकृते प्राणविज्ञाने गुणविधिर्विवक्षितश्चेत्किमित्युद्गातुरन्यत्कर्तव्यमुपदिश्यत इत्याशङ्क्य दृष्टफलतयेत्याह—इदं त्विति। अथेच्छाया कर्तव्यत्वेन विहिताया तावन्मात्रे सिद्धेऽपि कथं सौस्वर्यं सिध्येन्नहि स्वर्गकामनामात्रेण स्वर्गः सिध्यत्यत आह—साम्न इति। तस्य सुस्वरत्वेन तच्छब्दितस्य प्राणस्योपासकात्मकस्य स्वरवत्त्वप्रत्यये कार्ये सति विहितेच्छामात्रेण साम्नः न सौस्वर्यं भवतीत्यस्मात्सामर्थ्याद्दन्तधावनादि कर्तव्यमित्येतदत्र विधित्सितमिति योजना। सौस्वर्यस्य सामभूषणत्वे गमकमाह—तस्मादिति। दृष्टान्तमनन्तरवाक्यावष्टम्भेन स्पष्टयति—प्रसिद्धं हीति। भवति हास्य स्वमिति प्रागेवोक्तत्वादनर्थिका पुनरुक्तिरित्याशङ्क्याऽऽह—सिद्धस्येति ॥२५॥　३०–३५

तस्य हैतस्य साम्नो यः सुवर्णं वेद भवति हास्य सुवर्णं तस्य वै स्वर एव सुवर्णं भवति हास्य सुवर्णं य एवमेतत्साम्नः सुवर्णं वेद ॥२६॥

तस्य हैतस्य साम्नो यः प्रतिष्ठां वेद प्रति ह तिष्ठति तस्य वै वागेव प्रतिष्ठा वाचि हि खल्वेष एतत्प्राणः प्रतिष्ठितो गीयतेऽन्न इत्यु हैक आहुः ॥२७॥

५ अथातः पवमानानामेवाभ्यारोहः स वै खलु प्रस्तोता साम प्रस्तौति स यत्र प्रस्तुयात्तदेतानि जपेत्। असतो मा सद्गमय तमसो मा ज्योतिर्गमय

अथान्यो गुणः सुवर्णवत्तालक्षणो विधीयते। असावपि सौस्वर्यमेव। एतावान्विशेषः पूर्वं कण्ठगतमाधुर्यमिद तु लाक्षणिकं सुवर्णशब्दवाच्यं, तस्य हैतस्य साम्नो यः सुवर्णं वेद भवति हास्य सुवर्णम्। सुवर्णशब्दसामान्यात्स्वर-सुवर्णयोः। लौकिकमेव सुवर्णं गुणविज्ञानफलं भवतीत्यर्थः। तस्य वै स्वर एव सुवर्णम्। भवति हास्य सुवर्णं य १० एवमेतत्साम्नः सुवर्णं वेदेति पूर्ववत्सर्वम् ॥२६॥

तथा प्रतिष्ठागुणं विधित्सन्नाह—तस्य हैतस्य साम्नो य प्रतिष्ठां वेद। प्रतितिष्ठत्यस्यामिति प्रतिष्ठा वाक्तां प्रतिष्ठां साम्नो गुणं यो वेद स प्रतितिष्ठति ह। "तं यथा यथोपासते" इति श्रुतेस्तद्गुणत्वं युक्तम्। पूर्ववत्फलेन प्रतिलोभिताय का प्रतिष्ठेति शुश्रूषव आह तस्य वै साम्नो वागेव। वागिति जिह्वामूलीयादीनां स्थानानामाख्या। सैव प्रतिष्ठा। तदाह—वाचि हि जिह्वामूलीयादिषु हि यस्मात्प्रतिष्ठितः सन्नेष प्राण एतद्गान गीयते गीतिभावमा- १५ पद्यते तस्मात्साम्नः प्रतिष्ठा वाक्। अन्ने प्रतिष्ठितो गीयत इत्युहैकेऽन्य आहुः। इह प्रतितिष्ठतीति युक्तम्। अनि-र्धारितत्वादेकीयपक्षस्य विकल्पेन प्रतिष्ठागुणविज्ञानं कुर्याद्वाग्वा प्रतिष्ठाऽन्नं वेति ॥२७॥

एवं प्राणविज्ञानवतो जपकर्म विधित्स्यते। यद्विज्ञानवतो जपकर्मण्यधिकारस्तद्विज्ञानमुक्तम्। अथानन्तरं यस्माच्चैवं विदुषा प्रयुज्यमानं देवभावायाभ्यारोहफलं जपकर्म, अतस्तस्मात्तद्विधीयत इह। तस्य चोद्गीथ-सम्बन्धात्सर्वत्र प्राप्तौ पवमानानामिति वचनात् पवमानेषु त्रिष्वपि कर्तव्यतायां प्राप्तायां पुनः कालसङ्कोच करोति। २० स वै खलु प्रस्तोता साम प्रस्तौति। स प्रस्तोता यत्र यस्मिन्काले साम प्रस्तुयात्प्रारभेत तस्मिन्काल एतानि जपेत्। अस्य च जपकर्मण आख्याऽभ्यारोह इति। आभिमुख्येनाऽऽरोहत्यनेन जपकर्मणैवंविद्देवभावमात्मान-मित्यभ्यारोहः। एतानीति बहुवचनात्त्रीणि यजूंषि। द्वितीयानिर्देशाद्ब्राह्मणोत्पन्नत्वाच्च यथापठित एव स्वरः प्रयोक्तव्यो न मान्त्रः। याजमानं जपकर्म। एतानि तानि यजूंषि—'असतो मा सद्गमय' 'तमसो मा ज्योतिर्गमय'

साम्नो गुणान्तरमवतारयति—अथेति। तर्हि पुनरुक्ति स्यात्तत्राऽऽह—एतावानिति। लाक्षणिक कण्ठ्योऽय २५ वर्णो दन्त्योऽयमिति लक्षणज्ञानपूर्वकं सुष्ठु वर्णोच्चारण ममैव सामशब्दितप्राणभूतस्य धनमिति यावत्। लाक्षणिक-सौस्वर्यगुणवत्प्राणविज्ञानवतो यथोक्तफललाभे हेतुमाह—सुवर्णशब्देति। वाक्यार्थमाह—लौकिकमेवेति। फलेन प्रलोभ्याभिमुखीकृत्य किं तत्सुवर्णमिति शुश्रूषवे ब्रूते—तस्येति। गुणविज्ञानफलमुपसहरति—भवतीति। साम्नस्तच्छब्दवाच्यस्य प्राणस्य स्वरूपभूतस्येति यावत् ॥२६॥

उपास्यस्य प्रतिष्ठागुणत्वेऽपि कथमुपासकस्य तद्गुणत्व तत्राऽऽह—तं यथेति। आदिपदादुर शिर कण्ठ- ३० दन्तौष्ठनासिकातालूनि गृह्यन्ते। किमित्यष्टौ स्थानानि वागित्युच्यन्ते तत्राऽऽह—वाचि हीति। पक्षान्तरमाह—अन्न-इति। अन्नशब्देन तत्परिणामो देहो गृह्यते। एकीयपक्षे युक्तिमाह—इहेति। कथ तर्हि प्रतिष्ठागुणस्य प्राणस्य विज्ञान कर्तव्यमत आह—अनिर्धारितत्वादिति ॥२७॥

अथातः पवमानानामित्यादिवाक्यमवतारयति—एवमिति। तत्राथशब्द व्याचष्टे—यद्विज्ञानवत इति। अत शब्दार्थमाह—यस्माच्चेति। इहेति प्राणविदुक्ति। कदा तर्हि जपकर्म कर्तव्य तत्राऽऽह—तस्येति। उद्गीथे-३५ नात्ययाम त्व न उद्गायेति च प्रकरणादुद्गीथेन सम्बन्धाज्जपस्य सर्वत्रोद्गानकाले प्राप्तो पवमानानामेवेति वचना-त्कालनियमसिद्धिरित्यर्थः। स वै खल्वित्यादिवाक्यतात्पर्यमाह—पवमानेष्विति। ननु कर्तव्यत्वेनाभ्यारोह श्रूयते जपकर्म विधित्सितमिति चोच्यते किं केन सङ्गतमित्याशङ्क्याऽऽह—अस्य चेति। अभ्यारोहशब्दस्य न तत्र रूढिर्वृद्ध-प्रयोगाभावादित्याशङ्क्याऽऽह—आभिमुख्येनेति। यजुर्मन्त्राणामनियतपादाक्षरत्वादसतो मा सद्गमयेत्यारभ्यैको वा

मृत्योर्माऽमृतं गमयेति स य दाहासतो मा सद्गमयेति मृत्युर्वा असत्सदमृतं मृत्योर्मामृतं गमयामृतं मा कुर्वित्येवैतदाह तमसो मा ज्योतिर्गमयेति मृत्युर्वै तमो ज्योतिरमृतं मृत्योर्मामृतं गमयाऽमृतं मा कुर्वित्येवैतदाह मृत्योर्मामृतं गमयेति नात्र तिरोहितमिवास्ति । अथ यानीतराणि स्तोत्राणि तेष्वात्मनेऽन्नाद्यमागायेत्तस्मादु तेषु वरं वृणीत यं कामं कामयेत तमागायति तद्धैतल्लोकजिदेव न हैवालोक्यताया आशास्ति य एवमेतत्साम वेद ॥२८॥ ५

इति प्रथमाध्यायस्य तृतीयं ब्राह्मणम्

'मृत्योर्माऽमृतं गमय' इति । मन्त्राणामर्थस्तिरोहितो भवतीति स्वयमेव व्याचष्टे ब्राह्मण मन्त्रार्थम् । स मन्त्रो यदाह यदुक्तवान्कोऽसावर्थं इत्युच्यते 'असतो मा सद्गमय' इति । मृत्युर्वा असत्स्वाभाविककर्मविज्ञाने मृत्युरित्युच्येते । असदत्यन्ताधोभावहेतुत्वात् । सदमृतं सच्छास्त्रीयकर्मविज्ञाने । अमरणहेतुत्वादमृतम् । तस्मादसतो मा मां कर्मणो १० ज्ञानाच्च सच्छास्त्रीयकर्मविज्ञाने गमय देवभावसाधनात्मभावमापादयेत्यर्थः । तत्र वाक्यार्थमाह—अमृतं वा कुर्वित्येवैतदाहेति । तथा तमसो मा ज्योतिर्गमयेति । मृत्युर्वै तमः सर्वं ह्यज्ञानमावरणात्मकत्वात्तमस्तदेव च मरणहेतुत्वान्मृत्युः । ज्योतिरमृतं पूर्वोक्तविपरीतं दैवं स्वरूपम् । प्रकाशात्मकत्वाज्ज्ञानं ज्योतिस्तदेवामृतमविनाशात्मकत्वात्तस्मात्तमसो मा ज्योतिर्गमयेति । पूर्ववन्मृत्योर्माऽमृतं गमयेत्यादि । अमृतं मा कुर्वित्येवैवाह । दैवं प्राजापत्यं फलभावमापादयेत्यर्थः । पूर्वो मन्त्रोऽसाधनस्वभावात्साधनभावमापादयेति । द्वितीयस्तु साधन- १५ भावादप्यज्ञानरूपात्साध्यभावमापादयेति । मृत्योर्माऽमृतं गमयेति पूर्वयोरेव मन्त्रयोः समुच्चितोऽर्थस्तृतीयेन मन्त्रेणोच्यत इति प्रसिद्धार्थतैव । नात्र तृतीये मन्त्रे तिरोहितमन्तर्हितमिवार्थरूपं पूर्वयोरिव मन्त्रयोरस्ति यथाश्रुत एवार्थः । याजमानमुद्गानं कृत्वा पवमानेषु त्रिष्वथानन्तरं यानीतराणि शिष्टानि स्तोत्राणि तेष्वात्मनेऽन्नाद्यमागायेत् । प्राणविदुद्गाता प्राणभूतः प्राणवदेव यस्मात्स एष उद्गातैवं प्राणं यथोक्तं वेत्यतः प्राणवदेव तं कामं साध-

द्वौ वा मन्त्रावित्याशङ्क्याऽऽह—एतानीति । यद्यमी याजुषा मन्त्रास्तर्हि मान्त्रेण स्वरेण वैभाषिकग्रन्थोक्तेन २० भाव्यमित्याशङ्क्याऽऽह—द्वितीयेति । यत्र स्वरो विवक्षितस्तत्र तृतीयानिर्देशो दृश्यते । 'उच्चैरृचा क्रियत उच्चैः साम्नोपांशु यजुषा' इति । प्रकृते तु द्वितीयानिर्देशाज्जपकर्ममात्र प्रतीयते मान्त्रस्तु स्वरो न प्रतिभातीत्यर्थ । केन तर्हि स्वरेण प्रयोगो मन्त्राणामिति चेत्तत्राऽऽह—ब्राह्मणेति । भवतु शातपथेन स्वरेण मन्त्राणा प्रयोगस्तथाऽपि किमार्त्विज्य किंवा याजमानं जपकर्मेति वीक्षायामाह—याजमानमिति ।

व्याचिख्यासितयजुषा स्वरूपं दर्शयति—एतानीति । मन्त्रार्थशब्देन पदार्थो वाक्यार्थस्तत्फलं चेति त्रयमु- २५ च्यते । लौकिकं तमो व्यावर्तयति—सर्वं हीति । पूर्वोक्तपदेन व्याख्यातं तमो गृह्यते । वैपरीत्ये हेतुमाह—प्रकाशात्मकत्वादिति । ज्ञान तेन साध्यमिति यावत् । पदार्थोक्तिसमाप्तावितिशब्दः । उत्तरवाक्याभ्या वाक्यार्थस्तत्फलं चेति द्वय क्रमेणोच्यत इत्याह—पूर्ववदिति । फलवाक्यमादाय पूर्वस्माद्विशेषं दर्शयति—अमृतमिति । प्रथमद्वितीयमन्त्रयोरर्थभेदाप्रतीतेः पुनरुक्तिमाशङ्क्यावान्तरभेदमाह—पूर्वो मन्त्र इति । तथाऽपि तृतीये मन्त्रे पुनरुक्तिस्तदवस्थेत्याशङ्क्याऽऽह—पूर्वयोरिति । ३०

वृत्तमनूद्योत्तरवाक्यमवतार्य व्याचष्टे—याजमानमिति । यथा प्राणस्त्रिषु पवमानेषु साधारणमागानं कृत्वा शिष्टेषु स्तोत्रेषु स्वार्थमागानमकरोत्तथेत्याह—प्राणविदिति । तद्विदोऽपि तद्वदागाने योग्यतामाह—प्राणभूत इति ।

---

१ भाषिक ग्रन्थ इति—वाजसनेयिशाखायाः स्वरविधायकग्रन्थ भाषिको नाम । तत्र मन्त्रेषु य स्वरः तद्विपरीतो ब्राह्मणे प्रयोज्य इत्युक्तम्—'उदात्तमनुदात्तमनन्त्यमि'ति विपरीतस्वरविधानात् यथा 'अग्ने नय' इति मान्त्रः स्वर. ब्राह्मणे तु 'अग्ने नय इति । अस्य च मन्त्रेषु गणनाभावात् ब्राह्मण एवोत्पन्नत्वात् ब्राह्मणस्वर एव प्रयोज्य इति । ३५

यितुं समर्थस्तस्माद्यजमानस्तेषु स्तोत्रेषु प्रयुज्यमानेषु वरं वृणीत यं कामं कामयेत तं कामं वरं वृणीत प्रार्थयेत। यस्मात्स एष एवंविदुद्गातेति तस्माच्छब्दात्प्रागेव सम्बध्यते। आत्मने वा यजमानाय वा यं कामं कामयेत इच्छत्युद्गाता तमागायत्यागानेन साधयति। एवं तावज्ज्ञानकर्मभ्यां प्राणात्मापत्तिरित्युक्तम्। तत्र नास्त्याशङ्का-सम्भवः। अतः कर्मापाये प्राणापत्तिर्भवति वा न वेत्याशङ्क्यते तदाशङ्कानिवृत्त्यर्थमाह—तद्धैतल्लोकजिदेवेति।
५ तद्ध तदेतत्प्राणदर्शनं कर्मवियुक्तं केवलमपि लोकजिदेवेति लोकसाधनमेव। न ह एवालोक्यतायाः अलोकार्हत्वा-याऽऽशाऽऽशंसनं प्रार्थनं नैवास्ति ह। न हि प्राणात्मन्युत्पन्नात्मभिमानस्य तत्प्राप्त्याशंसनं सम्भवति। न हि ग्रामस्थः कदा ग्रामं प्राप्नुयामित्यरण्यस्थ इवाऽऽशास्ते। असंनिकृष्टविषये ह्यनात्मन्याशंसनं न तत्स्वात्मनि सम्भवति तस्मान्नाऽऽशाऽऽस्ति कदाचित्प्राणात्मभावं न प्रपद्येयमिति। कस्यैतत्। य एवमेतत्साम प्राणं यथोक्तं निर्धारितमहिमानं वेदाहमस्मि प्राण इन्द्रियविषयासङ्गैरासुरैः पाप्मभिरधर्षणीयो विशुद्धो वागादिपञ्चकं च
१० मदाश्रयत्वादग्न्याद्यात्मरूपं स्वाभाविकविज्ञानोत्थेन्द्रियविषयाङ्गजनितासुरपाप्मदोषवियुक्तं सर्वभूतेषु च मदा-श्रयान्नाद्योपयोगबन्धनमात्मा चाहं सर्वभूतानामाङ्गिरसत्वादृग्यजुःसामोद्गीथभूतायाश्च वाच आत्मा तद्व्याप्ते-स्तन्निर्वर्तकत्वाच्च मम साम्नो गीतिभावमापद्यमानस्य वाह्यं धनं भूषणं सौस्वर्यं ततोऽप्यान्तरं सौवर्ण्यं लाक्षणिकं सौस्वर्यं गीतिभावमापद्यमानस्य मम कण्ठादिस्थानानि प्रतिष्ठा। एवंगुणोऽहं पुत्तिकादिशरीरेषु कार्त्स्न्येन परिसमाप्तोऽमूर्तत्वात्सर्वगतत्वाच्चेत्या एवमभिमानाभिव्यक्तेर्वेदोपास्त इत्यर्थः ॥२८॥

१५ इति प्रथमाध्यायस्य तृतीयं ब्राह्मणम्

हेतुवाक्यमादौ योजयति—यस्मादिति। प्रतिज्ञावाक्यं व्याचष्टे—तस्मादिति। किमिति व्यत्यासेन वाक्यद्वयव्याख्यान-मित्याशङ्क्यार्थाच्चेति[1] न्यायेन पाठक्रममनादृत्येति परिहरति—यस्मादित्यादिना। स एष एवंविदुद्गाताऽऽत्मने यजमानाय वा यं कामं कामयते तमागानेन साधयति यस्मादिति हेतुग्रन्थस्तस्मादिति प्रतिज्ञाग्रन्थात्प्रागेव सम्बध्यत इति योजना।

२० वृत्तं कीर्तयति—एवं तावदिति। तत्र कर्मसमुच्चिते ज्ञाने देवतात्मी शङ्कासम्भवो नास्ति मिथः सहकृतयोर्ज्ञान-कर्मणोस्तदाप्तिहेतुत्वादित्याह—तत्रेति। समनन्तरं वाक्यमवतारयति—अत इति। समुच्चयात्फलाप्तेर्दृष्टत्वादिति यावत्। न हेत्यादिना पदानि छिन्दन्वाक्यमादाय व्याकरोति—अलोकार्हत्वायेति। तदेव स्फुटयति—न हीति। तत्र दृष्टान्तमाह—न हीति। दृश्यमानमाशसनं तर्हि कस्मिन्विषये स्यादित्याशङ्क्याऽऽह—असन्निकृष्टेति। प्राणात्मना व्यवस्थितस्य विदुषस्तदात्मभावं कदाचिदहं न प्रपद्येयमित्याशसनं नास्तीति निगमयति—तस्मादिति।

२५ कर्मसमुच्चितादुपासनात्केवलाच्च प्राणात्मत्वं फलमुक्तं तत्र समुच्चितादुद्गातुर्यजमानस्य वा फलं केवलाच्चो-पासनात्तयोरन्यतरस्यान्यस्य वा कस्यचिदिति जिज्ञासमानः शङ्कते—कस्येति। ज्ञानकर्मणोरुभयत्र समभावादुभयोरपि वचनात्फलसिद्धिः। आश्रमान्तरविषयं तु केवलज्ञानस्य लोकजयहेतुत्वमित्यभिप्रेत्याऽऽह—य एवमिति। एवशब्दस्य प्रकृतपरामर्शित्वात्पूर्वोक्तं सर्वं वेद्यस्वरूपं संक्षिपति—अहमस्मीत्यादिना। तस्य वागादिभ्यो विशेषं दर्शयति—इन्द्रियेति। किमिदानीं प्राणस्यैवोपास्यतया वागादिपञ्चकमुपेक्षितमिति नेत्याह—वागादीति। तस्य प्राणाश्रयत्वेऽपि
३० कुतो देवतात्वमासङ्गपाप्मविद्धत्वादित्याशङ्क्याऽऽह—स्वाभाविकेति। अन्नकृतोपकारं प्राणद्वारा वागादौ स्मारयति—सर्वेति। रूपकर्मात्मके जगति प्राणस्य स्वरूपमनुसन्धत्ते—आत्मा चेति। नामात्मके जगति प्राणस्याऽऽत्मत्वमुक्तं स्मार-यति—ऋगिति। सति सामत्वे गीतिभावावस्थाया प्राणस्योक्तं वाह्यमान्तरं च सौस्वर्यं सौवर्ण्यमिति गुणद्वयमनुवदति—ममेति। तस्यैव वैकल्पिकी प्रतिष्ठामुक्तामनुस्मारयति—गीतीति। य एवमित्यादिनोक्तं परामृशति—एवङ्गुणोऽह-मिति। इत्येवमभिमानाभिव्यक्तिपर्यन्तं यो ध्यायति तस्येदं फलमित्युपसंहरति—इतीति ॥२८॥

३५ इति प्रथमाध्यायस्य तृतीयं ब्राह्मणम् ॥ ३ ॥

---

१. अर्थाच्चेति। पाठक्रमापेक्षया अर्थक्रमो बलीयान् यथा 'अग्निहोत्रं जुहोति' इति विधाय 'यवागूं पचती'ति। अत्र पाठक्रमापेक्षया अर्थक्रमस्य बलवत्त्वमुक्तम् ( पू० मी० ५-१-२ )

## अथ प्रथमाध्यायस्य चतुर्थं ब्राह्मणम्

**आत्मैवेदमग्र आसीत्पुरुषविधः सोऽनुवीक्ष्य नान्यदात्मनोऽपश्यत्सोऽहमस्मीत्यग्रे व्याहरत्ततोऽहंनामाभवत्तस्मादप्येतर्ह्यामन्त्रितोऽहमयमित्येवाग्र उक्त्वाथान्यन्नाम प्रब्रूते यदस्य भवति स यत्पूर्वोऽस्मात्सर्वस्मात्सर्वान्पाप्मन औषत्तस्मात्पुरुष ओषति ह वै स तं योऽस्मात्पूर्वो बुभूषति य एवं वेद ॥१॥** ५

आत्मैवेदमग्र आसीत्। ज्ञानकर्मभ्यां समुच्चिताभ्यां प्रजापतित्वप्राप्तिर्व्याख्याता केवलप्राणदर्शनेन[1] च तद्धैतल्लोकजिदेवेत्यादिना। प्रजापतेः फलभूतस्य सृष्टिस्थितिसंहारेषु जगतःस्वातन्त्र्यादिविभूत्युपवर्णनेन ज्ञानकर्मणोः वैदिकयोः फलोत्कर्षो वर्णयितव्य इत्येवमर्थमारभ्यते। तेन च कर्मकाण्डविहितज्ञानकर्मस्तुतिः कृता भवेत्सामर्थ्यात्। विवक्षितं त्वेतत्। सर्वमप्येतज्ज्ञानकर्मफलं संसार एव भयारत्यादियुक्तत्वश्रवणात्कार्यकरणलक्षणत्वाच्च स्थूलव्यक्तानित्यविषयत्वाच्चेति ब्रह्मविद्यायाः केवलाया वक्ष्यमाणाया मोक्षहेतुत्वमित्युत्तरार्थं चेति। न हि १० संसार[2]विषयात्साध्यसाधनादिभेदलक्षणादविरक्तस्याऽऽत्मैकत्वज्ञानविषयेऽधिकारोऽतृषितस्येव पाने। तस्माज्ज्ञान-

ब्राह्मणान्तरमवतार्य पूर्वेण सम्बन्धं वक्तु वृत्तं कीर्तयति—**आत्मैवेत्यादिना**। केवलप्राणदर्शनेन च प्रजापतित्वप्राप्तिर्व्याख्यातेति सम्बन्धः। इदानीमात्मेत्यादेस्तद्धेदमित्यत प्राक्तनग्रन्थस्याऽऽपाततस्तात्पर्यमाह—**प्रजापतेरिति**। आदिपदेन सर्वात्मत्वादि गृह्यते। फलोत्कर्षोपवर्णनं कुत्रोपयुज्यते तत्राऽऽह—**तेन चेति**। कर्मकाण्डपदेन पूर्वग्रन्थोऽपि संगृहीतः। फलातिशयो हेत्वतिशयापेक्षोऽन्यथाऽऽकस्मिकत्वापातादतो ज्ञानकर्मफलभूतसूत्रविभूतिरुच्यमाना ज्ञानकर्मणो- १५ र्महत्त्वं दर्शयतीत्याह—**सामर्थ्यादिति**। आपातिकं तात्पर्यमुक्त्वा परमतात्पर्यमाह—**विवक्षितं त्विति**। किञ्च विमतं संसारान्तर्भूतं कार्यकरणात्मत्वादस्मदादिकार्यकरणवदित्याह—**कार्येति**। प्राजापत्यपदस्य संसारान्तर्भूतत्वे हेत्वन्तरमाह—**स्थूलेति**। स्थूलत्वं साधयति—**व्यक्तेति**। अनित्यत्वाद्दृश्यत्वाच्च प्रजापतित्वं संसारान्तर्गतमित्याह—**अनित्येति**। इतिशब्दो विवक्षितार्थसमाप्त्यर्थः। किमित्येतद्विवक्षितमुपवर्ण्यते तत्राऽऽह—**ब्रह्मविद्याया इति**। तच्चेदं विवक्षितार्थवचनमेकाकिन्या विद्याया वक्ष्यमाणाया मुक्तिहेतुत्वमित्युत्तरार्थमिति द्रष्टव्यम्। यदा हि कर्मज्ञानफलं २० प्रजापतित्वं संसार इत्युच्यते तदा तत्पर्यन्तात्सर्वस्मात्तस्माद्विरक्तस्य वक्ष्यमाणविद्यायामधिकार सेत्स्यतीत्यर्थः। अथ यस्य कस्यचिदर्थितामात्रेण तत्राधिकारसम्भवाद्वैराग्यं न मृग्यमित्याशङ्क्याऽऽह—**न हीति**। उभयत्रापि विषयशब्दः पूर्वेण समानाधिकरणः। विवक्षितमर्थमुपसंहरति—**तस्मादिति**। वैराग्यमन्तरेण ज्ञानानधिकाराज्ज्ञानादिफलस्य प्रजापतित्वस्योत्कर्षवतः संसारत्ववचनं ततो विरक्तस्य वक्ष्यमाणविद्यायामधिकारार्थम्। विरक्तस्य विद्याधिकारे

---

१. प्राणविद्यामधिकृत्य तृतीयाध्यायस्य तृतीयपादे—अन्यथात्वं शब्दादिति चेन्नाविशेषात् इत्यधिकरणे विचारितं— २५ वाजसनेयके 'ते ह देवा ऊचुर्हन्तासुरान् यज्ञ उद्गीथेनात्ययामेति ते ह वाचमूचु' इत्युपक्रम्य वागादीन् आसुरपाप्मविद्धत्वेन निन्दित्वा मुख्यप्राणपरिग्रहः पठ्यते 'अथ हेममासन्यं प्राणमूचुः' इत्यादिना। तथा छान्दोग्ये 'तद्ध देवा उद्गीथमाजह्रुरनेनैनानभिभविष्याम' इत्युपक्रम्य वागादीन् निन्दित्वा मुख्य. प्राण. परिगृह्यते 'अथ यएवाय मुख्य. प्राणस्तमुद्गीथमुपासाञ्चक्रिरे' इत्यादिना। तत्र एका विद्या स्यात् तत्र वागादिनिन्दया प्राणपरिग्रहस्य प्राणविद्येति समाख्यायाश्चाभेदात् इति पूर्वपक्षयित्वा विद्याभेदः समर्थित.—न वा प्रकरणभेदात् ३० परोवरीयस्त्वादिवत् इति सूत्रेण। अयमर्थ. छान्दोग्ये उद्गीथावयव ओकारः प्राणदृष्ट्या उपास्य. 'ओमित्येतदक्षरमुद्गीथमुपासीत' इत्यारम्भात्। अत्र तु उद्गीथपदेन समग्रा उद्गीथभक्ति. ग्राह्या तस्य चोद्गाता ऋत्विक् प्राणदृष्ट्या उपास्यः इति विद्याभेद सिद्धान्तित।

२. संसारविषयात्—संसाररूपाद्विषयात्। आत्मैकत्वज्ञानविषये आत्मैकत्वरूपे विषये। तदेतत्पदनीयमात्मतत्त्वं सर्वैः गमनीयं सर्वोत्कृष्टफलत्वादित्यर्थः।

कर्मफलोत्कर्षोपवर्णनमुत्तरार्थम्। तथा च वक्ष्यति–'तदेतत्पदनीयमस्य' 'तदेतत्प्रेयः पुत्रादि'त्यादि। आत्मैव। आत्मेति
प्रजापतिः प्रथमोऽण्डजः शरीर्यभिधीयते। वैदिकज्ञानकर्मफलभूतः स एव। किम् ? इदं शरीरभेदजातं तेन प्रजापति-
शरीरेणाविभक्तमात्मैवाऽऽसीदग्रे प्राक्शरीरान्तरोत्पत्तेः। स च पुरुषविधः पुरुषप्रकारः शिरःपाण्यादिलक्षणो विराट्
स एव प्रथमः संभूतोऽनुवीक्ष्यान्वालोचनं कृत्वा कोऽहं किंलक्षणो वाऽऽस्मीति नान्यद्वस्त्वन्तरमात्मनः प्राणपिण्डा-
५ त्मकात्कार्यकरणरूपान्नापश्यन्न ददर्श। केवलं त्वात्मानमेव सर्वात्मानमपश्यत्। तथा पूर्वजन्मश्रौतविज्ञानसंस्कृतः
सोऽहं प्रजापतिः सर्वात्माऽहमस्मीत्यग्रे व्याहरद्व्याहृतवान्। ततस्तस्माद्यतः पूर्वज्ञानसंस्कारादात्मानमेवाहमित्यभ्य-
धादग्रे तस्मादहंनामाऽभवत् "तस्योपनिषदहमि"ति श्रुतिप्रदर्शितमेव नाम वक्ष्यति। तस्माद्यस्मात्कारणे प्रजापतावेवं
वृत्तं तस्मात्तत्कार्यभूतेषु प्राणिष्वेतर्ह्येतस्मिन्नपि काल आमन्त्रितः कस्त्वमित्युक्तः सन्नहमयमित्येवाग्र उक्त्वा
कारणात्माभिधानेनाऽऽत्मानमभिधायाग्रे पुनर्विशेषनामजिज्ञासवेऽथानन्तरं विशेषपिण्डाभिधानं देवदत्तो यज्ञदत्तो
१० वेति प्रब्रूते कथयति यन्नामास्य विशेषपिण्डस्य मातापितृकृतं भवति तत्कथयति। स च प्रजापतिरतिक्रान्तजन्मनि
सम्यक्कर्मज्ञानभावनानुष्ठानैः साधकावस्थायां यद्यस्मात्कर्मज्ञानभावनानुष्ठानैः प्रजापतित्वं प्रतिपित्सूनां पूर्वः

मोक्षादपि वैराग्यं स्यादित्याशङ्क्याऽऽह—तथा चेति। ननु मोक्षार्थं विद्याया प्रवर्तितव्यं मोक्षश्चापुरुषार्थत्वान्न
प्रेक्षावता प्रार्थ्यते तत्राऽऽह—तदेतदिति।

१५ आपातिकमनापातिकञ्च तात्पर्यमुक्त्वा प्रतीकमादायाक्षराणि व्याकरोति—आत्मैवेति। तस्याश्वमेधाधिकारे
प्रकृतत्वं सूचयति—अण्डज इति। पूर्वस्मिन्नपि ब्राह्मणे तस्य प्रस्तुतत्वमस्तीत्याह—वैदिकेति। स एवाऽऽसीदिति
सम्बन्धः। स्थित्यवस्थायामपि प्रजापतिरेव समष्टिदेहस्तत्तद्व्यष्ट्यात्मना तिष्ठतीति विशेषासिद्धिरित्याशङ्क्याऽऽह—
तेनेति। आत्मशब्देन परस्यापि ग्रहसम्भवे किमिति विराडेवोपादीयत इत्याशङ्क्य वाक्यशेषादित्याह—स चेति।
वक्ष्यमाणमन्वालोचनादि विराडात्मकर्तृकमेवेत्याह—स एवेति। स्वरूपधर्मविषयौ द्वौ विमर्शौ। नान्यदिति वाक्यमा-
२० दायाक्षराणि व्याचष्टे—वस्त्वन्तरमिति। दर्शनशक्त्यभावादेव वस्त्वन्तरं प्रजापतिर्न दृष्टवानित्याशङ्क्याऽऽह—
केवलं त्विति। सोऽहमित्यादि व्याचष्टे—तथेति। यथा सर्वात्मा प्रजापतिरहमिति पूर्वस्मिञ्जन्मनि श्रौतेन विज्ञानेन
संस्कृतो विराडात्मा तथेदानीमपि फलावस्थः सोऽहं प्रजापतिरस्मीति प्रथमं व्याहृतवानिति योजना। व्याहरणफल-
माह—तत इति। किमिति प्रजापतेरहमिति नामोच्यते साधारणं हीदं सर्वेषामित्याशङ्क्योपासनार्थमित्याह—तस्येति।
आध्यात्मिकस्य चाक्षुषस्य पुरुषस्याहमिति रहस्यं नामेति यतो वक्ष्यत्यत श्रुतिसिद्धमेवैतन्नामास्य ध्यानार्थमिहोक्त-
२५ मित्यर्थः। प्रजापतेरहंनामत्वे लोकप्रसिद्धिं प्रमाणयितुमुत्तरं वाक्यमित्याह—तस्मादिति।

उपासनार्थं प्रजापतेरहंनामोक्त्वा पुरुषनामनिर्वचनं करोति—स चेत्यादिना। पूर्वस्मिञ्जन्मनि साधकाव-
स्थायां कर्माद्यनुष्ठानैरहमहमिकया प्रजापतित्वप्रेप्सूनां मध्ये पूर्वो यः सम्यक्कर्माद्यनुष्ठानैः सर्वं प्रतिबन्धकं यस्माददहत्त-

---

१. 'आत्मैवेदमि'त्यत्र आत्मशब्दस्य विराट्पुरुषपरत्वं भाष्यकारैरुक्तम्। वार्तिककारैस्तु भाष्याशयं यथाश्रुतं
विशदीकृत्य आत्मशब्दस्य स्वप्रकाशशुद्धात्मपरत्वमपि सम्भवदुक्तितया वक्तुं शक्यत इत्यभिहितम्। तत्पक्षे
३० आत्मा शुद्धं ब्रह्म अग्रे सृष्टेः प्रागासीत् स च कोशपञ्चकतादात्म्याध्यासात्—कोशपञ्चकतां प्राप्तः। अत एव पुरुष-
विधः पुरुषाकारः। एवं श्रुतिः शुद्धोऽपि संसारी जात इत्यनुक्रोशं दर्शयति इति। इतः परं सोऽनुवीक्ष्येत्यस्य
विराडेवेत्यर्थः। विशिष्टाद्वैतिनस्तु 'आत्मैवेत्यत्र आत्मा महाविष्णुरूपः परमात्मा तस्यैव पुरुषविधशब्देन पुरुष
पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेद इति श्रुतेरित्याहुः। परं तु 'सोऽहमस्मी'त्यग्रे इत्यत्र अहमस्मि इत्यहंकाररूपो
हिरण्यगर्भः उच्यते इत्याहुः तस्यैव भयारत्यादिसम्भवादिति। एवं व्याख्याने सोऽहमस्मीत्यग्रे इत्यत्र तच्छब्देन
३५ पूर्वप्रकृतं नारायणं त्यक्त्वा अप्रकृतग्रहणं दोष एव। पुरुषविधशब्दस्य न परमात्मनि रूढिः 'मूर्धैव सुतेजा'
इत्यादिना मूर्धादिकल्पनया पुरुषाकारत्वं कल्पितमेव तस्य। स्वयं 'अशब्दमरूपमस्थूलमनणु'इत्यादिशास्त्रात्।
अस्माकं तु आत्मशब्देन परमात्मग्रहेऽपि वार्तिके तस्य अध्यासात् पुरुषाकारत्वं प्राप्तमिति पुरुषविधत्वोपपत्तिः
इत्युक्तम्। भाष्ये तु आत्मशब्दः हिरण्यगर्भपर एवेत्युक्तम्।
२ वक्ष्यति—अत्रैव पञ्चमाध्याये पञ्चमब्राह्मणे आदित्यान्तर्गतस्य ब्रह्मणः 'अहरि'ति नाम चक्षुष्युपास्यस्याध्यात्मि-
४० कस्य 'अहमि'ति नाम उपासनार्थमुक्तम्। इदमेव तदित्यर्थः।

**सोऽबिभेत्तस्मादेकाकी बिभेति स हायमीक्षां चक्रे यन्मदन्यन्नास्ति कस्मान्नु बिभेमीति तत एवास्य भयं वीयाय कस्माद्ध्यभेष्यद्द्वितीयाद्वै भयं भवति ॥२॥**

प्रथमः सन्नस्मात्प्रजापतित्वप्रतिपित्सुसमुदायात्सर्वस्मादादावौषददहत् । किमासङ्गाज्ञानलक्षणान्सर्वान्पाप्मनः प्रजापतित्वप्रतिबन्धकारणभूतान् । यस्मादेवं तस्मात्पुरुषः पूर्वमौषदिति पुरुषः । यथाऽयं प्रजापतिरोषित्वा प्रतिबन्धकान्पाप्मनः सर्वान्पुरुषः प्रजापतिरभवदेवमन्योऽपि ज्ञानकर्मभावनानुष्ठानवह्निना केवलज्ञानबलाद्वौषति भस्मीकरोति ह वै स तं कं ? योऽस्माद्विदुषः प्रथमः प्राजापतिर्बुभूषति भवितुमिच्छति तमित्यर्थः । तं दर्शयति—य एवं वेदेति । सामर्थ्याज्ज्ञानभावनाप्रकर्षवान् । नन्वनर्थाय प्राजापत्यप्रतिपित्सैवंविदा चेद्दह्यते । नैष दोषः । ज्ञानभावनोत्कर्षाभावात्प्रथमं प्रजापतित्वप्रतिपत्त्यभावमात्रत्वाद्दाहस्य । उत्कृष्टसाधनः प्रथमं प्रजापतित्वं प्राप्नुवन्न्यूनसाधनो न प्राप्नोतीति स तं दहतीत्युच्यते न पुनः प्रत्यक्षमुत्कृष्टसाधनेनेतरो दह्यते । यथा लोक आजिसृतां यः प्रथममाजिमुपसर्पति तेनेतरे दग्धा इवापहृतसामर्थ्या भवन्ति तद्वत् ॥१॥

यदिदं तुष्टूषितं कर्मकाण्डविहितज्ञानकर्मफलं प्राजापत्यलक्षणं नैव तत्संसारविषयमत्यक्रामदितीममर्थं प्रदर्शयिष्यन्नाह—सोऽबिभेत्स प्रजापतिर्योऽयं प्रथमः शरीरी पुरुषविधो व्याख्यातः सोऽबिभेद्भीतवानस्मदादिवदेवेत्याह । यस्मादयं पुरुषविधः शरीरकरणवानात्मनाशविपरीतदर्शनवत्त्वादबिभेत्तस्मात्तत्सामान्यादद्यत्वेऽप्येकाकी बिभेति । किंचास्मदादिवदेव भयहेतुविपरीतदर्शनापनोदकारणं यथाभूतात्मदर्शनं सोऽयं प्रजापतिरीक्षामीक्षणं चक्रे कृतवान्ह । कथमित्याह—यद्यस्मान्मत्तोऽन्यदात्मव्यतिरेकेण वस्त्वन्तरं प्रतिद्वंद्वीभूतं नास्ति तस्मिन्नात्मविनाशहेत्वभावे कस्मान्नु बिभेमीति । तत एव यथाभूतात्मदर्शनादस्य प्रजापतेर्भयं वीयाय विस्पष्टमपगतवत् । तस्य प्रजापतेर्यद्भयं तत्केवलाविद्यानिमित्तमेव परमार्थदर्शनेऽनुपपन्नमित्याह—कस्माद्ध्यभेष्यत्किमित्यसौ भीतवान्पर-

स्मात्स प्रजापतिः पुरुषः इति योजना । उक्तमेव स्फुटयति—प्रथमः सन्निति । सर्वस्मादस्मात्प्रजापतित्वप्रतिपित्सुसमुदायात्प्रथमः सन्नौषदिति सम्बन्धः । आकाङ्क्षापूर्वकं दाह्यं दर्शयति—किमित्यादिना । पूर्वं प्रजापतित्वप्रतिबन्धकप्रध्वंसित्वे सिद्धमर्थमाह—यस्मादिति ।

पुरुषगुणोपासकस्य फलमाह—यथेति । अय प्रजापतिरिति भविष्यद्वृत्त्या साधकोक्तिः, पुरुषः प्रजापतिरिति फलावस्थः स कथ्यते । कोऽसावोषतीत्यपेक्षायामाह—तं दर्शयतीति । पुरुषगुणः प्रजापतिरहमस्मीति यो विद्यात्सोऽन्यानोषतीत्यर्थः । विद्यासाम्ये कथमेषा व्यवस्थेत्याशङ्क्याऽऽह—सामर्थ्यादिति । हेतुसाम्ये दाहकत्वानुपपत्तेस्तत्प्रकर्षवानितरान्दहतीत्यर्थः । प्रसिद्धं दाहमादाय चोदयति—नन्विति । तथा च तत्प्रेप्सायोगात्तदुपास्त्यसिद्धिरित्यर्थः । विवक्षितं दाहं दर्शयन्नुत्तरमाह—नैष दोष इति । तदेव स्पष्टयति—उत्कृष्टेति । प्राप्नुवन्भवतीति शेषः औपचारिकं दाहं दृष्टान्तेन साधयति—यथेति । आजिर्मर्यादा ता सरन्ति धावन्तीत्याजिसृतस्तेषामिति यावत् ॥१॥

ज्ञानकर्मफलं सौत्रं पदमुत्कृष्टत्वान्मुक्तिस्तदन्यमुक्त्यभावात्तद्धेतुसम्यग्धीसिद्धये प्रवृत्तिरनर्थिकेत्याशङ्क्य सोऽबिभेदित्यस्य तात्पर्यमाह—यदिदमिति । तुष्टूषितं स्तोतुमभिप्रेतमिति यावत् । आह विवक्षितार्थसिद्ध्यर्थं हेतुं भयभाक्त्वमिति शेषः । ज्ञानकर्मफलं त्रैलोक्यात्मकसूत्रत्वमुत्कृष्टमपि संसारान्तर्भूतमेव न कैवल्यमिति वक्तुमुत्तरं वाक्यमित्यर्थः । अहमेकाकी कोऽपि मां हनिष्यतीत्यात्मनाशविषयविपरीतज्ञानवत्त्वात्प्रजापतिर्भीतवानित्यत्र किं प्रमाणमित्याशङ्क्य कार्यगतेन भयलिङ्गेन कारणे प्रजापतौ तदनुमेयमित्याह—यस्मादिति । तत्सामान्यादेकाकित्वाविशेषादिति यावत् । प्रजापतेः संसारान्तर्भूतत्वे हेत्वन्तरमाह—किञ्चेति । यथाऽस्मदादिभी रज्ज्वस्थाण्वादौ सर्पपुरुषादिभ्रमजनितभयनिवृत्तये विचारेण तत्त्वज्ञानं सम्पाद्यते तथा प्रजापतिरपि भयस्य तद्धेतोश्च विपरीतधियो ध्वस्तिहेतुं तत्त्वज्ञानं विचार्य सम्पादितवानित्यर्थः । परमार्थदर्शनमेव प्रश्नपूर्वकं विशदयति—कथमित्यादिना । तस्मिन्नित्यत्र तस्मादित्यादि पठितव्यम् ।

मच्छब्दोपलक्षितं प्रत्यक्चैतन्यमद्वितीयब्रह्मरूपेण ज्ञात्वा सहेतुं भीतिं प्रजापतिरक्षिपदित्युक्तमिदानीं तत्त्वज्ञानफलमाह—तत इति । कस्माद्धीत्यादेरुत्तरस्य पूर्वेण पौनरुक्त्यमित्याशङ्क्य विदुषो हेत्वभावान्न भयमित्युक्तसमर्थनार्थत्वादुत्तरस्य नैवमित्याह—तस्येत्यादिना । अनुपपत्तौ हेतुमाह—यस्मादिति । परमार्थदर्शनेऽपि वस्त्वन्तरात्किमिति

मार्थनिरूपणायां भयमनुपपन्नमेवेत्यभिप्राय । यस्माद्द्वितीयाद्वस्त्वन्तराद्वै भयं भवति । द्वितीयं च वस्त्वन्तरम विद्याप्रत्युपस्थापितमेव । नह्यदृश्यमानं द्वितीय भयजन्मनो हेतुः । "तत्र को मोहः कः शोक एकत्वमनुपश्यत" इति मन्त्रवर्णात् । यच्चैकत्वदर्शनेन भयमपनुनोदापनोदितं तद्युक्तम् । कस्मात् ? द्वितीयाद्वस्त्वन्तराद्वै भयं भवति तदेकत्वदर्शनेन द्वितीयदर्शनमपनीतमिति नास्ति यतः ।

५ ## प्रजापतेः एकत्वज्ञाने कारणानुपपत्तिशङ्का

अत्र चोदयन्ति—कुतः प्रजापतेरेकत्वदर्शनं जातं को वाऽस्मा उपदिदेश ? अथानुपदिष्टमेव प्रादुरभूत् । अस्मदादेरपि तथा प्रसङ्गः । अथ जन्मान्तरकृतसंस्कारहेतुकम् । एकत्वदर्शनानर्थक्यप्रसङ्गः । यथा प्रजापतेरतिक्रान्तजन्मावस्थस्यैकत्वदर्शनं विद्यमानमप्यविद्याबन्धकारणं नापनिन्ये । यतोऽविद्यासंयुक्त एवायं जातोऽबिभेत् । एवं सर्वेषामेकत्वदर्शनानर्थक्यं प्राप्नोति । अन्त्यमेव निवर्तकमिति चेत् । न । पूर्ववत्पुनः प्रसङ्गेनानैकान्त्यात् ।
१० तस्मादनर्थकमेवैकत्वदर्शनमिति ।

भयं न भवतीत्याशङ्क्याऽऽह—द्वितीयाद्वेति । अन्वयव्यतिरेकाभ्यां द्वैतस्याविद्याप्रत्युपस्थापितत्वेऽपि कुतस्तदुत्थद्वैतदर्शनं भयकारणं न भवतीत्याशङ्क्याऽऽह—न हीति । तत्त्वज्ञाने सत्यज्ञानायोगात्तदुत्थं द्वैतं तद्दर्शनं चायुक्तमित्यतो हेत्वभावाद्भयानुपपत्तिरित्यर्थः । अद्वैतज्ञाने भयनिवृत्तिरित्यत्र मन्त्रं संवादयति—तत्रेति । विराडैक्यदर्शनेनैव प्रजापतेर्भयमपनीतं नाद्वैतदर्शनेनेत्यस्मिन्नर्थेऽपि यन्मदन्यन्नास्तीत्यादि शक्यं व्याख्यातुमित्याशङ्क्याङ्गीकुर्वन्नाह—यच्चेति ।
१५ तदेव प्रश्नद्वारा प्रकटयति—कस्मादित्यादिना ।

प्रथमव्याख्यानानुसारेण चोद्यमुत्थापयति—अत्रेति । प्रजापतेर्ब्रह्मात्मैक्यज्ञानाद्भीतिध्वस्तिरुक्ता न च तस्य तज्ज्ञानं युक्तं हेत्वभावादित्याह—कुत इति । यस्मादस्माकमैक्यधीस्तस्मादेव तस्यापि स्यादित्याशङ्क्याऽऽह—को वेति । न हि तस्य शास्त्रश्रवणमाचार्याभावान्नापि संन्यासस्तस्य त्रैवर्णिकविषयत्वान्नापि शमादि ऐश्वर्यासक्तत्वादतोऽस्मासु प्रसिद्धश्रवणादिविद्याहेत्वभावान्न प्रजापतेरैक्यधीर्युक्तेत्यर्थः । उपदेशानपेक्षमेव प्रजापतेरैक्यज्ञानं प्रादुर्भूतमिति
२० शङ्कते—अथेति । अतिप्रसक्त्या प्रत्याह—अस्मदादेरिति । प्रजापतेर्यजमानावस्थायामाचार्यस्य सत्त्वाच्छ्रवणाद्यावृत्तेरैक्यज्ञानोदयात्तत्संस्कारोत्थं तथाविधमेव तज्ज्ञानं फलावस्थायामपि स्यादिति चोदयति—अथेति । दूषयति—एकत्वेति । अज्ञानध्वंसित्वेनार्थवत्त्वमित्याशङ्क्याऽऽह—यथेति । तत्र गमकमाह—यत इति । दार्ष्टान्तिकमाह—एवमिति । नन्वस्मिन्नेव जन्मनि प्रजापतेरैक्यधीरनपेक्षा जायते 'ज्ञानमप्रतिघं यस्य' इति स्मृतेः । न च तदुत्पत्त्यनन्तरमेव सहेतु बन्धनं निरुणद्धि भयारत्यादिफलेन प्रारब्धकर्मणा प्रतिबन्धादतो मरणकालिकं तदज्ञानध्वंसीति शङ्कते—अन्त्यमेवेति ।
२५ प्रवृत्तफलस्य कर्मणः स्वोपपादकाज्ञानलेशाद्विज्ञानशक्तिप्रतिबन्धकत्वेऽपि, जन्मान्तरादिसर्वसंसारहेत्वज्ञानध्वंसिज्ञानसामर्थ्यप्रतिबन्धकत्वे मानाभावान्मध्ये जातं ज्ञानमनिवर्तकमित्यशक्यं वक्तुम् । अन्त्यस्य च ज्ञानस्य निवर्तकत्वे नान्त्यत्वं

---

१. द्वितीयाद्वै इत्यादि—न च 'स वै नैव रेमे' इत्यनेन 'द्वितीयाद्वै' इति श्रुतेर्विरोध इति वाच्यं द्वितीयाद्वै भयमिति तत्त्वज्ञानिनं विवेकवतश्चाभिप्रायेण प्रवृत्तम् । 'स वै नैव रेमे' इति अज्ञं शरीराभिमानिनमपेक्ष्य । अत्र विराडैक्यदर्शनेन भयमपनीतमिति वक्तुं न शक्यते । 'द्वितीयाद्वै भयं भवती'ति द्वितीयसामान्यस्य भयहेतुत्वोक्तेः तत्काले महाभूतानां सद्भावात् । अपि च आधिकारिकपुरुषाणां प्रजापत्यादीनां 'ज्ञानमप्रतिघं यस्य'
३० इत्यादौ जन्मत एव तत्त्वज्ञानवत्त्वोक्तेः तस्य पूर्वसंस्कारोद्बोधेन तत्त्वसाक्षात्कारोत्पत्तिरेव न्याय्या । न च अरत्यादिश्रवणं 'स वै नैव रेमे' इत्याद्युक्तं तस्मिन् निरस्ताविद्ये न संगच्छत इति वाच्यम् । व्यासपराशरप्रभृतीनां तत्त्वविदामपि प्रारब्धकर्मवशादरत्यादिदर्शनात् प्रजापतेरपि प्रारब्धवशात् तदुत्पत्तेः । एतेन "तथा सति आत्मरतेस्तस्य 'नैव रेमे' इत्यरते रिरंसायाश्चानुपपत्तेः" इति रंगभाष्यं प्रत्युक्तं यावदधिकारमवस्थितिराधिकारिकाणामिति न्यायात् । अपि च स्वविरुद्धस्य द्वितीयस्याभावात् इति तत्काले निश्चेतुमपि न शक्यं
३५ यद्वर्तते महाभूतादिस्वकारणं तत् स्वविरुद्धं वा न वेत्यनिश्चयात् । अदृश्यमानं विरुद्धं द्वितीयं पिशाचादिकं भवेदपीति शङ्कया तस्य मनसि स्थैर्यं न स्यात् । अपि च पुत्रादपि धनभाजां भीतिः इति न्यायेन स्वानुकूलेष्वपि भाविप्रातिकूल्यमाशङ्क्य भीतिस्संभवत्येव । अद्वितीयब्रह्मसाक्षात्कारो जात इति भगवत्पादमते एव भयहेत्वदर्शनोपपत्तिः ।

**विशुद्धसत्त्वस्य प्रजापतेः विनोपदेशं महावाक्यस्मरणात् साक्षात्कारः**

**नैष दोषः। उत्कृष्टहेतूद्भवत्वाल्लोकवत्। यथा पुण्यकर्मोद्भवैर्विविक्तैः कार्यकरणैः संयुक्ते जन्मनि सति प्रज्ञामेधास्मृतिवैशारद्यं दृष्टं तथा प्रजापतेर्धर्मज्ञानवैराग्यैश्वर्यविपरीतहेतुसर्वपाप्मदाहाद्विशुद्धैः कार्यकरणैः संयुक्तमुत्कृष्टं जन्म तदुद्भवं चानुपदिष्टमेव युक्तमेकत्वदर्शनं प्रजापतेः। तथा च स्मृतिः 'ज्ञानमप्रतिघं यस्य वैराग्यं च जगत्पतेः। ऐश्वर्यं चैव धर्मश्च सहसिद्धं चतुष्टयम् ॥' इति। सहसिद्धत्वे भयानुपपत्तिरिति चेत्। न ह्यादित्येन सह तम उदेति। न, अन्यानुपदिष्टार्थत्वात्सहसिद्धवाक्यस्य। श्रद्धातात्पर्यप्रणिपातादीनामहेतुत्वमिति चेत्। स्यान्मतम्—"श्रद्धावान् लभते ज्ञानं तत्परः संयतेन्द्रियः" "तद्विद्धि प्रणिपातेन" इत्येवमादीनां श्रुतिस्मृतिविहितानां ज्ञानहेतूनामहेतुत्वं प्रजापतेरिव जन्मान्तरकृतधर्महेतुत्वे ज्ञानस्येति चेत्। न, निमित्तविकल्पसमुच्चयगुणवदगुणवत्त्वभेदोपपत्तेः। लोके हि नैमित्तिकानां कार्याणां निमित्तभेदोऽनेकधा विकल्प्यते। तथा निमित्तसमुच्चयः तेषां च विकल्पितानां समुच्चितानां च पुनर्गुणवदगुणवत्त्वकृतो भेदो भवति। तद्यथा—रूपज्ञान एव तावन्नैमित्तिके कार्ये तमसि विनाऽऽलोकेन चक्षूरूपसन्निकर्षो नक्तंचराणां रूपज्ञाने निमित्तं भवति। मन एव केवलं रूपज्ञाननिमित्तं योगिनाम्। अस्माकं तु सन्निकर्षालोकाभ्यां सह। तथाऽऽदित्यचन्द्राद्यालोकभेदैः समुच्चिता निमित्तभेदा भवन्ति। तथाऽऽलोकविशेषगुणवदगुणवत्त्वेन भेदाः स्युः। एवमेवाऽऽत्मैकत्वज्ञानेऽपि क्वचिज्जन्मान्तरकृतं कर्म निमित्तं भवति**

हेतुः। यजमानान्तरस्यान्त्ये ज्ञाने तद्ध्वंसित्वादृष्टेरन्त्यत्वस्याज्ञानध्वंसित्वेनानियमात्। न च यजमानान्तरे प्रजापतौ चान्त्यं ज्ञान ज्ञानत्वादज्ञानध्वंसि, पूर्वज्ञानेषु बन्धहेत्वज्ञानध्वंसित्वादृष्टेर्ज्ञानत्वहेतोरनैकान्त्यात्। न चान्त्यमैक्यज्ञानमैक्यज्ञानत्वादज्ञानध्वंसीति युक्तम्। उपान्त्यतादृग्ज्ञानवदन्त्येऽपि तदयोगात्। उपान्त्ये हेतोरनैकान्त्यादित्यभिप्रेत्य दूषयति—**नेत्यादिना**। कल्पसकारणाभावात्तदन्तरेण चोत्पत्तावतिप्रसङ्गात्संस्काराधीनत्वेऽपि विशेषाभावादन्त्यस्य च ज्ञानस्याज्ञानध्वंसित्वासिद्धेरयुक्त प्रजापतेरेकत्वदर्शनमित्युपसंहरति—**तस्मादिति**।

प्रजापतेः सुप्तप्रतिबुद्धवत्प्रकृष्टादृष्टोत्थकार्यकरणवत्त्वात्पूर्वकल्पीयपदपदार्थवाक्यस्मरणवत स्मृतिविपरिवर्तिनो वाक्याद्विचार्यमाणाददृष्टसहकृतात्तत्त्वज्ञानं स्याल्लोके विशिष्टादृष्टोत्थकार्यकरणाना प्रज्ञाद्यतिशयदर्शनात्तेन च ज्ञानेन जन्मान्तरहेत्वविद्याक्षयेऽप्यारब्ध कर्म तज्जं भयारत्याद्यविद्यालेशतो भविष्यतीति परिहरति—**नैष दोष इति**। संगृहीतमर्थ समर्थयते—**यथेत्यादिना**। धर्मादिचतुष्टयाद्विपरीतमधर्मादिचतुष्टय तत्र हेतो. सर्वस्य पाप्मनो ज्ञानाद्यतिशयेन नाशादिति यावत्। उत्कृष्टत्व प्रकृष्टज्ञानादिशालित्वम्। उक्तजन्मफलमाह—**तदुद्भवञ्चेति**। तस्य ज्ञानादिवैशारद्ये पौराणिकी स्मृतिमुदाहरति—**तथा चेति**। अप्रतिघमप्रतिबद्ध निरङ्कुशमित्येतत्प्रत्येकं संबध्यते यस्यैतच्चतुष्टयं सहसिद्ध स निरवर्ततेति सम्बन्धः।

सहसिद्धत्वस्मृतेः 'सोऽबिभेत्' इतिश्रुतिविरुद्धत्वादप्रामाण्यमिति विरोधाधिकरणन्यायेन शङ्कते—**सहसिद्धत्व इति**। सत्येव सहजे ज्ञाने स्वहेतोर्भयमपि स्यादिति चेन्नेत्याह—**न हीति**। अन्येनाऽऽचार्येणानुपदिष्टमेव प्रजापतेर्ज्ञानमुदेतीत्येवमर्थपरत्वात्सहसिद्धवाक्यस्य। तज्ज्ञानात्प्राक्तस्य भयमविरुद्धमूर्ध्वं चाज्ञानलेशादतो न विरोध श्रुतिस्मृत्योरिति समाधत्ते—**नेत्यादिना**। ज्ञानोत्पत्तेराचार्याद्यनपेक्षत्वे श्रद्धादिविधानानर्थक्यादनेकश्रुतिस्मृतिविरोधं स्यादिति शङ्कते—**श्रद्धेति**। आदिपदेन शमादिग्रहः। अस्मदादिषु तेषां हेतुत्वमिति चेन्नेत्याह—**प्रजापतेरिवेति**। चोदितं विरोधं निराकरोति—**नेत्यादिना**। निमित्ताना विकल्पः समुच्चयो गुणवत्त्वमगुणत्त्वमित्यनेन प्रकारेण कार्योत्पत्तौ विशेषसम्भवान्न श्रद्धादिविध्यानर्थक्यमित्यर्थः।

सङ्ग्रहवाक्य विवृणोति—**लोके हीति**। तद्धि सर्वं विकल्पादि यथा ज्ञातु शक्यं तथैकस्मिन्नेव नैमित्तिके रूपज्ञानाख्यकार्ये दर्शयामीत्याह—**तद्यथेति**। तत्र विकल्पमुदाहरति—**तमसीत्यादिना**। समुच्चयं दर्शयति—**अस्माकं त्विति**। विकल्पितानां समुच्चितानां च निमित्तानां गुणवदगुणवत्त्वप्रयुक्तं भेदं कथयति—**तथेति**। आलोकविशेषस्य गुणवत्त्वं बहुलत्वमगुणवत्त्व मन्दप्रभत्व चक्षुरादेर्गुणवत्त्वं निर्मलत्वादि तिमिरोपहतत्वादि चागुणवत्त्वमिति भेद.।

दृष्टान्तं प्रतिपाद्य दार्ष्टान्तिकमाह—**एवमिति**। तथाऽन्यस्यापि प्रजापतितुल्यस्य वामदेवादेर्जन्मान्तरीयसाधनवशादीश्वरानुग्रहादस्मिञ्जन्मनि स्मृतवाक्यादैक्यज्ञानमुदेतीति शेषः। भृगुस्तत्तुल्यो वाऽधिकारी क्वचिदित्युच्यते।

**स वै नैव रेमे तस्मादेकाकी न रमते स द्वितीयमैच्छत् । स हैतावानास यथा स्त्रीपुमांसौ संपरिष्वक्तौ स इममेवात्मानं द्वेधापातयत्ततः पतिश्च पत्नी चाभवतां तस्मादिदमर्धबृगलमिव स्व इति ह स्माह याज्ञवल्क्यस्तस्मादयमाकाशः स्त्रिया पूर्यत एव तां समभवत्ततो मनुष्या अजायन्त ॥३॥**

५ यथा प्रजापतेः । क्वचित्तपो निमित्तम् । "तपसा ब्रह्म विजिज्ञासस्व" इति श्रुतेः । क्वचित् "आचार्यवान्पुरुषो वेद" "श्रद्धावांल्लभते ज्ञानम्" "तद्विद्धि प्रणिपातेन" "आचार्याद्धैव" "द्रष्टव्यः श्रोतव्यः" इति श्रुतिस्मृतिभ्य एकान्तज्ञानलाभनिमित्तत्वं श्रद्धाप्रभृतीनाम् । अधर्मादिनिमित्तवियोगहेतुत्वात् । वेदान्तश्रवणमनननिदिध्यासनानां च साक्षाज्ज्ञेयविषयत्वात् । पापादिप्रतिबन्धक्षये चाऽऽत्ममनसोर्भूतार्थज्ञाननिमित्तस्वाभाव्यात् । तस्मादहेतुत्वं न जातु ज्ञानस्य श्रद्धाप्रणिपातादीनामिति ॥२॥

१० इतश्च संसारविषय एव प्रजापतित्वं यतः स प्रजापतिर्वै नैव रेमे रतिं नान्वभवदरत्याऽऽविष्टोऽभूदित्यर्थोऽस्मदादिवदेव । यत इदानीमपि तस्मादेकाकित्वादिधर्मवत्त्वादेकाकी न रमते रतिं नानुभवति रतिर्नामेष्टार्थसंयोगजा क्रीडा । तत्प्रसङ्गिन इष्टवियोगान्मनस्याकुलीभावोऽरतिरित्युच्यते । स तस्या अरतेरपनोदाय द्वितीयमरत्यपघातसमर्थं स्त्रीवस्त्वैच्छद्गृद्धिमकरोत् । तस्य चैवं स्त्रीविषयं गृध्यतः स्त्रिया परिष्वक्तस्येवाऽऽत्मनो भावो बभूव । स तेन सत्येप्सुत्वादेतावानेतत्परिमाण आस बभूव ह । किंपरिमाण इत्याह—यथा लोके स्त्रीपुमांसावरत्यपनोदाय संपरिष्वक्तौ यत्परिमाणौ स्यातां तथा तत्परिमाणो बभूवेत्यर्थः । स तथा तत्परिमाणमेवेममात्मानं द्वेधा द्विप्रकारमपातयत्पातितवान् । इममेवेत्यवधारणं मूलकारणाद्विराजो विशेषणार्थम् । न क्षीरस्य सर्वोपमर्देन दधिभावाप-

तपोऽन्वयव्यतिरेकाख्यमालोचनम् । श्वेतकेतुप्रभृतिषु ज्ञाननिमित्ताना समुच्चयं दर्शयति—क्वचिदित्यादिना । एकान्तं नियतमावश्यकं ज्ञानोदयलाभे निमित्तत्वमिति यावत् । अथ प्रणिपातादिव्यतिरेकेण न प्रजापतेरपि ज्ञानं सम्भवति

२० सामग्र्यभावादत आह—अधर्मादीति । प्रणिपातादेर्ज्ञानोदयप्रतिबन्धकनिवर्तकत्वात्प्रजापतेश्च तन्निवृत्तेर्जन्मान्तरीयसाधनायत्तत्वादाधुनिकप्रणिपातादिना विना स्मृतवाक्यादेवैक्यधीः सम्भवतीत्यर्थः । तर्हि श्रवणादिव्यतिरेकेणापि प्रजापतेर्ज्ञानं स्यादित्याशङ्क्याऽऽह—वेदान्तेति । न तैर्विना ज्ञानं कस्यचिदपि स्यात्प्रजापतेस्तु जन्मान्तरीयश्रवणवशादिदानीमनुस्मृतवाक्यात्तदुत्पत्तिरिति शेषः । तर्हि श्रद्धादिकमपि प्रतिबन्धकनिवर्तकत्वेन प्रजापतेरादरणीयं तन्निवृत्तिमन्तरेण ज्ञानोत्पत्त्यनुपपत्तेरित्याशङ्क्याऽऽह—पापादीति । आत्ममनसोर्मिथः संयुक्तयोः सम्बन्धि यत्पापं यत्कार्यं च

२५ रागादि तेन ज्ञानोत्पत्तौ प्रतिबन्धस्य पूर्वोक्तेन न्यायेन क्षये सति प्रजापतेरीश्वरानुग्रहात्स्मृतवाक्यस्य परमार्थज्ञानोत्पत्तौ केवलस्य निमित्तत्वात्तस्याऽऽधुनिकश्रद्धाद्यतिरेकेण ज्ञानोदयेऽपि न तद्विधिवैयर्थ्यम् । अस्माकं तद्वशादेव तदुत्पत्तेर्वाक्यतात्पर्यादिज्ञान सर्वेषामेव ज्ञानसाधनमाचार्यादिषु पुनर्विकल्पसमुच्चयावित्यर्थः । अधिकारिभेदेन ज्ञानहेतुषु विकल्पेऽपि तेषामस्मासु समुच्चयान्न श्रुतिस्मृतिविरोधोऽस्तीत्युपसंहरति—तस्मादिति ॥२॥

प्रजापतेर्भयाविष्टत्वेन ससारान्तर्भूतत्वमुक्तमिदानीं तत्रैव हेत्वन्तरमाह—इतश्चेति । अरत्याविष्टत्वे प्रजापतेरे-

३० काकित्वं हेतू करोति—यत इति । कार्यस्थारति कारणस्यारतेर्लिङ्गमित्यनुमानं सूचयति—इदानीमपीति । आदिपदेन भयाविष्टत्वादिग्रहः अरतिं प्रतियोगिनिरुक्तिद्वारा निर्वक्ति—रतिर्नामेति । कथं तर्हि यथोक्तारतिनिरसनमित्याशङ्क्य स द्वितीयमैच्छदित्येतद्व्याचष्टे—स तस्या इति । स हेत्यस्य वाक्यस्य पातनिकाङ्करोति—तस्येति । तेन भावेनेति यावत् । कथमभिमानमात्रेण यथोक्तपरिमाणत्वं तत्राऽऽह—सत्येति । निपातोऽवधारणे । तस्यैव पुनरनुवादोऽन्वयार्थः । परिमाणमेव प्रश्नपूर्वकं विवृणोति—किमित्थ दिना । सम्प्रति स्त्रीपुंसयोरुत्पत्तिमाह—स तयेति । ननु

३५ द्वैधाभावो विराजो वा ससक्तस्त्रीपुपिण्डस्य वा ? नाऽऽद्यः । सशब्देन विराड्ग्रहायोगात्तस्य कर्मत्वाद्द्वितीये त्वात्मशब्दानुपपत्तिस्तत्राऽऽह—इममिति । तथा च सशब्देन कर्तृतया विराड्ग्रहणमविरुद्धमित्यर्थः । तदेव स्फुटयति—

---

१. श्वेतकेतोः प्रणिपातः, उपदेश पदे पदे संशयनिराकरणेन विचारदार्ढ्यं च ज्ञानहेतु. ।

**सो हेयमीक्षांचक्रे कथं नु माऽऽत्मन एव जनयित्वा सम्भवति हन्त तिरोऽसानीति सा गौरभवदृषभ इतरस्ताँ समेवाभवत्ततो गावोऽजायन्त बडबेतराऽभवदश्ववृष इतरो गर्दभीतरा गर्दभ इतरस्ताँ समेवाभवत्तत एकशफमजायताजेतराभवद्बस्त इतरोऽविरितरा मेष इतरस्ताँ समेवाभवत्ततोऽजावयोऽजायन्तैवमेव यदिदं किंच मिथुनमा पिपीलिकाभ्यस्तत्सर्वमसृजत ॥४॥** ५

त्तिवद्विराट्सर्वोपमर्वंनैतावानास। किं तर्ह्यात्मना व्यवस्थितस्यैव विराजः सत्यसंकल्पत्वादात्मव्यतिरिक्तं स्त्रीपुंसपरिष्वक्तपरिमाणं शरीरान्तरं बभूव। स एव च विराट् तथाभूतः स हैतावानासेति सामानाधिकरण्यात्। ततस्तस्मात्पातनात्पतिश्च पत्नी चाभवतामिति दंपत्योर्निर्वचनं लौकिकयोरत एव तस्माद्यस्मादात्मन एवार्धः पृथग्भूतो येयं स्त्री तस्मादिदं शरीरमात्मनोऽर्धबृगलमर्धं च तद्बृगलं च तदर्धबृगल विदलमर्धविदलमिवेत्यर्थः। प्राक्स्त्र्युद्वहनात्कस्यार्धबृगलमित्युच्यते स्वः आत्मन इति। एवमाह स्मोक्तवान्किल याज्ञवल्क्यो यज्ञस्य वल्को वक्ता यज्ञ- १० वल्कस्तस्यापत्यं याज्ञवल्क्यो दैवरातिरित्यर्थः। ब्रह्मणो वाऽपत्यं यस्मादयं पुरुषार्ध आकाशः स्त्र्यर्धशून्यः पुनरुद्वहनात्तस्मात्पूर्यते स्त्र्यर्धेन पुनः संपुटीकरणेनेव विदलार्धः। तां स प्रजापतिर्मन्वाख्यः शतरूपाख्यामात्मनो दुहितरं पत्नीत्वेन कल्पितां समभवन्मैथुनमुपगतवान्। ततस्तस्मात्तदुपगमनान्मनुष्या अजायन्तोत्पन्नाः ॥३॥

सा शतरूपा उ हेयं सेयं दुहितृगमने स्मार्तं प्रतिषेधमनुस्मरन्तीक्षांचक्रे। कथं न्विदमकृत्यं यन्मा मामात्मन एव जनयित्वोत्पाद्य सम्भवत्युपगच्छति। यद्यप्ययं निर्घृणोऽहं हन्तेदानीं तिरोऽसानि जात्यन्तरेण तिरस्कृता भवानी- १५ त्येवमीक्षित्वाऽसौ गौरभवत्। उत्पाद्यप्राणिकर्मभिश्चोद्यमानायाः पुनः पुनः सैव मतिः शतरूपाया मनोश्चाभवत्। ततश्च ऋषभ इतरः। तां समेवाभवदित्यादि पूर्ववत्। ततो गावोऽजायन्त। तथा बडबेतराऽभवदश्ववृष इतरः। तथा गर्दभीतरा गर्दभ इतरः। तत्र बडबाश्ववृषादीनां संगमात्तत एकशफमेकखुरमश्वाश्वतरगर्दभाख्यं त्रयमजायत। तथाऽजेतराऽभवद्बस्तश्छाग इतरः। तथाऽविरितरा मेष इतरः तां समेवाभवत् तां तामिति वीप्सा। तामजां

नेत्यादिना। कस्य तर्हि द्विधाकरणमित्याशङ्क्याऽऽह—**किं तर्हीति**। तच्च द्विधाकरणकर्मेति शेषः। कथं तर्हि तत्रा- २० ऽऽत्मशब्दः संभवतीत्याशङ्क्याऽऽह—**स एव चेति**। तथाभूतः संसक्तजायापुंपरिमाणोऽभूदिति यावत्।

न केवलं मनुः शतरूपेत्यनयोरेव दम्पत्योरिद निर्वचनं किन्तु लोकप्रसिद्धयोः सर्वयोरेव तयोरेतद्द्रष्टव्यं सर्वत्रास्य सम्भवादित्याह—**लौकिकयोरिति**। उक्ते निर्वचने लोकानुभवमनुकूलयति—**तस्मादिति**। प्रागिति सहधर्मचारिणीसम्बन्धात्पूर्वमित्यर्थः। आकाङ्क्षाद्वारा षष्ठीमादायानुभवमवलम्ब्य व्याचष्टे—**कस्येत्यादिना**। बृगलशब्दो विकारार्थः। अनुभवसिद्धेऽर्थे प्रामाणिकसम्मतिमाह—**एवमिति**। द्वेधापातने सत्येको भागः पुरुषोऽपरस्तु स्त्रीत्यत्रैव २५ हेत्वन्तरमाह—**यस्मादिति**। उद्वहनात्प्रागवस्थायामाकाशः पुरुषार्धः स्त्र्यर्धशून्यो यस्मादसंपूर्णो वर्तते तस्मादुद्वहनेन प्राप्तस्त्र्यर्धेन पुनरितरो भागः पूर्यते यथा विदलार्धोऽसम्पूर्णः सम्पुटीकरणेन पुनः सम्पूर्णः क्रियते तद्वदिति योजना। पूर्वमपि स्वाभाविकयोग्यतावशेन संसर्गोऽभूदनादित्वात्संसारस्येति सूचयितुं पुनरित्युक्तम्। पुरुषार्धस्येतरार्धस्य च मिथः सम्बन्धान्मनुष्यादिसृष्टिरित्याह—**तामित्यादिना** ॥३॥

**स्मार्तं प्रतिषेधमिति**। 'न सगोत्रां समानप्रवरां भार्यां विन्देते'त्यादिकमिति यावत्। 'अकृत्यं हीदं यद्दुहि- ३० तृगमनं मातृतश्चाऽऽपञ्चमात्पुरुषात्पितृतश्चाऽऽसप्तमादि'ति स्मृतेरिति मत्वाऽऽह—**कथमिति**। तयोर्जात्यन्तरगमनं कथमित्याशङ्क्याऽऽह—**यद्यपीति**। शतरूपायां गोभावमापन्नायामृषभादिभावो मनोर्भवतु तावता यथोक्तदोषपरिहारस्तयोर्वडवादिभावे तु न कारणमस्तीत्याशङ्क्याऽऽह—**उत्पाद्येति**। ततस्तया गोभावादनन्तरमिति यावत्। गवां जन्मार्थं मिथः सम्भवनं ततःशब्दार्थः। तत्र तेषामुत्पत्तौ सत्यामिति यावत्। वाक्यद्वये वीप्सा विवक्षितेत्याह—**तामिति**। तामेवाभिनयति—**तामजामिति**। तां वडवा ता गर्दभी चेत्यपि द्रष्टव्यम्। ततो मिथः सम्भवनाद्यथोक्तादिति यावत्। ३५

१. मातृत इति—'पञ्चमी मातृपक्षात्तु पितृपक्षात्तु सप्तमीम्। गृहस्थ उद्वहेत्कन्यां न्यायेन विधिनोत्तमाम्॥' इति नारदस्मृतिः। 'बाहुभ्यां राजन्यो मनुष्याणां तमिन्द्रो देवतान्वसृज्यत तस्मात्ते वीर्यावन्त'–इति ( तै० सं० ७-१ )।

सोऽवेदहं वाव सृष्टिरस्म्यहं हीदं सर्वमसृक्षीति ततः
सृष्टिरभवत्सृष्ट्यां हास्यैतस्यां भवति य एवं वेद ॥५॥

अथेत्यभ्यमन्थत्स मुखाच्च योनेर्हस्ताभ्यां चाग्निमसृजत तस्मादेतदुभयमलो-
मकमन्तरतोऽलोमका हि योनिरन्तरतः । तद्यदिदमाहुरमुं यजामुं यजेत्येकैकं
५ देवमेतस्यैव सा विसृष्टिरेष उ ह्येव सर्वे देवाः । अथ यत्किंचेदमार्द्रं
तद्रेतसोऽसृजत तदु सोम एतावद्वा इदं सर्वमन्नं चैवान्नादश्च सोम एवान्न-
मग्निरन्नादः सैषा ब्रह्मणोऽतिसृष्टिः । यच्छ्रेयसो देवानसृजताथ यन्मर्त्यः
सन्नमृतानसृजत तस्मादतिसृष्टिरतिसृष्ट्यां हास्यैतस्यां भवति य एवं वेद ॥६॥

तामवि चेति समभवदेवेत्यर्थः । ततोऽजाश्चावयश्चाजावयोऽजायन्त । एवमेव यदिदं किंच यत्किञ्चेदं मिथुनं
१० स्त्रीपुंसलक्षणं द्वंद्वमापिपीलिकाभ्यः पिपीलिकाभिः सहानेनैव न्यायेन तत्सर्वमसृजत जगत्सृष्टवान् ॥४॥

स प्रजापतिः सर्वमिदं जगत्सृष्ट्वाऽवेत् । कथम् अहं वावाहमेव सृष्टिः सृज्यत इति सृष्टं जगदुच्यते सृष्टिरिति । यन्मया सृष्टं जगन्मदभेदत्वादहमेवास्मि न मत्तो व्यतिरिच्यते । कुत एतत् । अहं हि यस्मादिदं सर्वं जगदसृक्षि सृष्टवानस्मि तस्मादित्यर्थः । यस्मात्सृष्टिशब्देनाऽऽत्मानमेवाभ्यधात्प्रजापतिस्तस्मात्सृष्टिरभवत्सृष्टिनामाभवत् सृष्ट्यां जगति हास्य प्रजापतेरेतस्यामेतस्मिञ्जगति स प्रजापतिवत्स्रष्टा भवति स्वात्मनोऽनन्यभूतस्य
१५ जगतः । कः ? य एवं प्रजापतिवद्यथोक्तं स्वात्मनोऽनन्यभूतं जगत्साध्यात्माधिभूताधिदैवं जगदहमस्मीति वेद ॥५॥

एवं स प्रजापतिर्जगदिदं मिथुनात्मकं सृष्ट्वा ब्राह्मणादिवर्णनियन्त्रीर्देवताः सिसृक्षुरादौ । अथेति शब्दद्वयमभिनयप्रदर्शनार्थम् । अनेन प्रकारेण मुखे हस्तौ प्रक्षिप्याभ्यमन्थदाभिमुख्येन मन्थनमकरोत् । स मुखं हस्ताभ्यां मथित्वा मुखाच्च योनेर्हस्ताभ्यां च योनिभ्यामग्निं ब्राह्मणजातेरनुग्रहकर्तारमसृजत्सृष्टवान् । यस्माद्दाहकस्याग्नेर्योनिरेतदुभयं हस्तौ मुखं च तस्मादुभयमप्येतदलोमकं लोमविवर्जितम् । किं सर्वमेव । न । अन्तरतोऽभ्यन्तरतः अस्ति
२० हि योन्या सामान्यमुभयस्यास्य । किम् ? अलोमका हि योनिरन्तरतः स्त्रीणाम् । तथा ब्राह्मणोऽपि मुखादेव जज्ञे प्रजापतेः । तस्मादेकयोनित्वाज्ज्येष्ठेनेवानुजोऽनुगृह्यतेऽग्निना ब्राह्मणः । तस्माद्ब्राह्मणोऽग्निदेवत्यो मुखवीर्यश्चेति श्रुतिस्मृतिसिद्धम् । तथा बलाश्रयाभ्यां बाहुभ्या बलभिदादिकं क्षत्त्रियजातिनियन्तारं क्षत्रियं च । तस्मादैन्द्रं क्षत्त्रं विशेषाणामानन्त्यात्प्रत्येकमुपदेशासम्भव मन्वान. सक्षिप्योपसंहरन्ति—एवमेवेति । तद्विभजते—इदं मिथुनमिति । पशुकर्मप्रयोगो न्याय ॥४॥

२५ यद्यपि मन्वादिसृष्टिरेवोक्ता तथाऽपि सर्वा सृष्टिरुक्तैवेति सिद्धवत्कृत्याऽऽह—स प्रजापतिरिति । अवगतिं प्रश्नपूर्वकं विशदयति—कथमित्यादिना । कथं सृष्टिरस्मीत्यवधार्यते कर्तृक्रिययोरेकत्वायोगादित्याशङ्क्याऽऽह—सृज्यत इतीति । पदार्थमुक्त्वा वाक्यार्थमाह—यन्मयेति । जगच्छब्दादुपरि तच्छब्दमध्याहृत्याहमेव तदस्मीति सम्बन्धः । तत्र हेतुमाह—मदभेदत्वादिति । एवकारार्थमाह—नेति । मदभेदत्वादित्युक्तमाक्षिप्य समाधत्ते—कुत इत्यादिना । न हि सृष्टं स्रष्टुरर्थान्तरं तस्यैव तेन तेन मायाविवदवस्थानादित्यर्थः । तत. सृष्टिरित्यादि व्याचष्टे—यस्मादिति ।
३० किमर्थं स्रष्टुरेषा विभूतिरुपदिष्टेत्याशङ्क्याऽऽह—सृष्ट्यामिति । जगति भवतीति सम्बन्धः । वाक्यार्थमाह—प्रजापतिवदिति ॥५॥

ननु सर्वा सृष्टिरुक्तोक्तश्च प्रजापतेर्विभूतिसङ्कीर्तनफलं किमवशिष्यते यदर्थमुत्तरं वाक्यमित्याशङ्क्याऽऽह—एवमिति । आदावभ्यमन्थदिति सम्बन्ध. । अभिनयप्रदर्शनमेव विशदयति—अनेनेति । मुखादेरग्निं प्रति योनित्वे गमकमाह—यस्मादिति । प्रत्यक्षविरोधं शङ्कित्वा दूषयति—किमित्यादिना । हस्तयोर्मुखे च योनिशब्दप्रयोगे
३५ निमित्तमाह—अस्ति हीति । प्रजापतेर्मुखादित्यमग्नि. सृष्टोऽपि कथं ब्राह्मणमनुगृह्णाति तत्राऽऽह—तथेति । उक्तेऽर्थे श्रुतिस्मृतिसंवादं दर्शयति—तस्मादिति । 'आग्नेयो वै ब्राह्मण' इत्याद्या श्रुतिस्तदनुसारिणी च स्मृतिर्द्रष्टव्या ।

'अग्निमसृजत' इत्येतदुपलक्षणार्थमित्यभिप्रेत्य सृष्ट्यन्तरमाह—तथेति । बलभिदिन्द्रः । आदिशब्देन वरुणादिर्गृह्यते । क्षत्त्रियं चासृजतेत्यनुवर्तते । उक्तमर्थं प्रमाणेन द्रढयति—तस्मादिति । 'ऐन्द्रो राजन्य:'

बाहुवीर्यं चेति श्रुतौ स्मृतौ चावगतम् । तथोरुन ईहाश्रयाद्वस्वादिलक्षणं विशो नियन्तारं विशं च । तस्मात्कृष्यादिपरो वस्वादिदेवत्यश्च वैश्यः । तथा पूषणं पृथ्वीदेवतां शूद्रं च पद्भ्यां परिचरणक्षममसृजतेति श्रुतिस्मृतिप्रसिद्धेः । तत्र क्षत्त्रादिदेवतासर्गमिहानुक्तं वक्ष्यमाणमप्युक्तवदुपसंहरति सृष्टिसाकल्यानुकीर्त्यै । यथेयं श्रुतिर्व्यवस्थिता तथा प्रजापतिरेव सर्वे देवा इति निश्चितोऽर्थः । स्रष्टुरनन्यत्वात्सृष्टानाम् । प्रजापतिनैव तु सृष्टत्वाद्देवानाम् । अथैवं प्रकरणार्थे व्यवस्थिते तत्स्तुत्यभिप्रायेणाविद्वन्मतान्तरनिन्दोपन्यासः । अन्यनिन्दाऽन्यस्तुतये । तत्तत्र कर्मप्रकरणे ५ केवलयाज्ञिका यागकाले यदिदं वच आहुरमुमग्निं यजामुमिन्द्रं यजेत्यादि नामशस्त्रस्तोत्रकर्मादिभिन्नत्वाद्भिन्नमेवाग्न्यादिदेवमेकैकं मन्यमाना आहुरित्यभिप्रायः । तन्न तथा विद्यात् । यस्मादेतस्यैव प्रजापतेः सा विसृष्टिर्देवभेदः सर्वं एष उ ह्येष प्रजापतिरेव प्राणः सर्वे देवाः ।

### प्रजापतिर्जीवो वा ब्रह्मेति शंका

अत्र विप्रतिपद्यन्ते । पर एव हिरण्यगर्भ इत्येके । संसारीत्यपरे । पर एव तु मन्त्रवर्णात् । "इन्द्रं मित्रं १० वरुणमग्निमाहुः" इति श्रुतेः । "एष ब्रह्मैष इन्द्र एष प्रजापतिरेते सर्वे देवाः" इति च श्रुतेः । स्मृतेश्च—"एतमेके वदन्त्यग्निं मनुमन्ये प्रजापतिम्" इति । "योऽसावतीन्द्रियोऽग्राह्यः सूक्ष्मोऽव्यक्तः सनातनः । सर्वभूतमयोऽचिन्त्यः

### सिद्धान्तः

स एव स्वयमुद्बभौ" ॥ इति च । संसार्येव वा स्यात् । "सर्वान्पाप्मन औषत्" इति श्रुतेः । न ह्यसंसारिणः

इत्याद्या श्रुतिस्तदनुसारिणी च स्मृतिरवधेया । विश चासृजतेति पूर्ववत् । ईहाश्रयादूरुतो जातत्वं वस्वादेर्ज्येष्ठत्वं च १५ तच्छब्दार्थः । 'पद्भ्या शूद्रो अजायत' इत्याद्या श्रुतिस्तथाविधा च स्मृतिरनुसर्तव्या । अग्निसर्गस्य वक्ष्यमाणेन्द्रादिसर्गोपलक्षणत्वे सति सृष्टिसाकल्यादेष उ एव सर्वे देवा इत्युपसंहारसिद्धिरिति फलितमाह—तत्रेति । उक्तेन वक्ष्यमाणोपलक्षणं सर्वशब्दः सूचयतीति भावः । किञ्च सृष्टिरत्र न विवक्षिता किन्तु येन प्रकारेण सृष्टिश्रुतिः स्थिता तेन प्रकारेण देवतादि सर्वं प्रजापतिरेवेति विवक्षितमित्याह—यथेति । तत्र हेतुमाह—स्रष्टुरिति । तथाऽपि कथं देवतादि सर्वं प्रजापतिमात्रमित्याशङ्क्याऽऽह—प्रजापतिनेति । २०

तद्यदिदमित्यादिवाक्यस्य तात्पर्यमाह—अथेति । स्रष्टा प्रजापतिरेव सृष्टं सर्वं कार्यमिति प्रकरणार्थे पूर्वोक्तप्रकारेण व्यवस्थिते सत्यनन्तरं तस्यैव स्तुतिविवक्षया तद्यदिदमित्याद्यविद्वन्मतान्तरस्य निन्दार्थं वचनमित्यर्थः । मतान्तरे निन्दितेऽपि कथं प्रकरणार्थः स्तुतो भवतीत्याशङ्क्याऽऽह—अन्येति । एकैकं देवमित्यस्य तात्पर्यमाह—नामेति । काठकं कालापकमितिवन्नामभेदात्क्रतुषु तत्तद्देवतास्तुतिभेदाद्घटशकटादिवदर्थक्रियाभेदाच्च प्रत्येकं देवाना भिन्नत्वात्कर्मिणामेतद्वचनमित्यर्थं । आदिशब्देन रूपादिभेदात्तद्भिन्नत्व सगृह्णाति । नन्वत्र कर्मिणा निन्दा न प्रतिभाति २५ तन्मतोपन्यासस्यैव प्रतीतेरित्याशङ्क्याह—तन्नेति । एकस्यैव प्राणस्यानेकविधो देवताप्रभेदः शाकल्यब्राह्मणे वक्ष्यत इति विवक्षित्वा विशिनष्टि—प्राण इति ।

अग्न्यादयो देवाः सर्वं प्रजापतिरेवेत्युक्तं सम्प्रति तत्स्वरूपनिर्दिधारयिषया तत्र विप्रतिपत्तिं दर्शयति—अत्रेति । हिरण्यगर्भस्य परत्वमाद्ये द्वितीये कल्पे संसारित्वं विधेयमिति विभागः । तत्र पूर्वपक्षं गृह्णाति—पर एवेति । नन्वेकस्यानेकात्मकत्वं मन्त्रवर्णादवगम्यते नतु परमात्मत्व प्रजापतेरित्याशङ्क्य ब्राह्मणवाक्यमुदाहरति— ३० एष इति । ब्रह्मप्रजापती सूत्रविराजौ । एषशब्दः परात्मविषयः । स्मृतेश्च पर एव हिरण्यगर्भ इति सम्बन्धः । तत्रैव वाक्यान्तरं पठति—योऽसाविति । कर्मेन्द्रियाविषयत्वमतीन्द्रियत्वम् । अग्राह्यत्वं ज्ञानेन्द्रियाविषयत्वम् । तत्र हेतुमाह—सूक्ष्मोऽव्यक्त इति । न च तस्यासत्त्वं प्रमात्रादिभावाभावसाक्षित्वेन सदा सत्त्वादित्याह—सनातन इति । इतश्च तस्य नासत्त्व सर्वेषामात्मत्वादित्याह—सर्वेति । अन्तःकरणाविषयत्वमाह—अचिन्त्य इति । योऽसौ परमात्मा यथोक्तविशेषणः स एव स्वयं विराडात्मना भूतवानित्याह—स एवेति । ३५

१ वस्वादिलक्षणं विशमसृजत—वसवो रुद्रा आदित्या इत्यादि अत्रैवोपरिष्टात् 'पद्भ्या शूद्रो अजायत' 'पूषणमियं वै पूषा' इत्यादि उपदिष्टम् ।

२. शाकल्यब्राह्मणे—'कतम एको देव'इति 'प्राण'इति इत्युक्त्वा 'स होवाच महिमानएवैषामेते'इति एकस्यैव देवस्य महिमा अन्ये देवा इत्यर्थ. । 'इन्द्र मित्रं वरुणमग्निमाहु अथो दिव्य स सुपर्णो गरुत्मान् । एकं सद्विप्रा बहुधा वदन्ति'—इति ऋग्वेदे । ४०

पाप्मदाहप्रसङ्गोऽस्ति। भयारतिसंयोगश्रवणाच्च "अथ यन्मर्त्यः सन्नमृतानसृजत" इति च। "हिरण्यगर्भं पश्यत जायमानम्" इति च मन्त्रवर्णात्। स्मृतेश्च कर्मविपाकप्रक्रियायाम्—"ब्रह्मा विश्वसृजो धर्मो महानव्यक्तमेव च। उत्तमां सात्त्विकीमेतां गतिमाहुर्मनीषिणः" इति। अथैवं विरुद्धार्थानुपपत्तेः प्रामाण्यव्याघात इति चेन्न। कल्पनान्तरोपपत्तेरविरोधात्। उपाधिविशेषसम्बन्धाद्विशेषकल्पनान्तरमुपपद्यते। "आसीनो दूरं व्रजति शयानो याति

५ सर्वतः। कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हति" इत्येवमादिश्रुतिभ्यः। उपाधिवशात्संसारित्वं न परमार्थतः। स्वतोऽसंसार्येव। एवमेकत्वं नानात्वं च हिरण्यगर्भस्य। तथा सर्वजीवानाम्। "तत्त्वमसि" इति श्रुतेः। हिरण्यगर्भस्तूपाधिशुद्ध्यतिशयापेक्षया प्रायशः पर एवेति श्रुतिस्मृतिवादाः प्रवृत्ताः। संसारित्वं तु क्वचिदेव दर्शयन्ति। जीवानां तूपाधिगताशुद्धिबाहुल्यात्संसारित्वमेव प्रायशोऽभिलप्यते व्यावृत्तकृत्स्नोपाधिभेदापेक्षया तु सर्वः परत्वेना-

अत्र विषये तार्किकमतनिरासः

१० भिधीयते श्रुतिस्मृतिवादैः। तार्किकैस्तु परित्यक्तागमबलैरस्ति नास्ति कर्ताऽकर्तेत्यादि विरुद्धं बहु तर्कयद्भिराकुली-

मन्त्रब्राह्मणस्मृतिषु परस्य सर्वदेवतात्मत्वदृष्टेरत्र च सूत्रस्य तत्प्रतीतेस्तस्य परत्वमित्युक्तमिदानीं पूर्वपक्षान्तरमाह—संसार्येवेति। सर्वपाप्मदाहश्रवणमात्रेण कथं प्रजापते संसारित्व तत्राऽऽह—न हीति। 'अन्तस्तद्धर्मोपदेशादि'त्यत्र परस्यापि सर्वपाप्मोदयाङ्गीकारान्नेद संसारित्वे लिङ्गमित्याशङ्क्याऽऽह—भयेति। असृजतेति च श्रवणादिति सम्बन्धः। न केवलं मर्त्यत्वश्रुतेरेव संसारित्वं किन्तु जन्मश्रुतेश्चेत्याह—हिरण्यगर्भमिति। यथोक्तहेतूनां

१५ संसार्येव स्यादिति प्रतिज्ञयाऽन्वयः। कर्मफलदर्शनाधिकारे ब्रह्मेत्याद्यायाः स्मृतेश्च तत्फलभूतस्य प्रजापतेः संसारित्वमेवेत्याह—स्मृतेश्चेति। विराड्ब्रह्मेत्युच्यते। विश्वसृजो मन्वादयः। धर्मस्तदभिमानिनी देवता यमः। महान्प्रकृतेराद्यो विकारः सूत्रम्। अव्यक्तं प्रकृतिरिति भेदः। अस्तु तर्हि द्विविधवाक्यवशात्प्रजापते संसारित्वमसंसारित्वं चेत्याशङ्क्याऽऽह—अथेति। तद्द्विविधवाक्यश्रवणानन्तर्यमथशब्दार्थः। एवंशब्दः संसारित्वासंसारित्वप्रकारपरामर्शार्थः। विरोधकृतमप्रामाण्य निराकरोति—नेत्यादिना। स्वतोऽसंसारित्व कल्पनया च ससारित्वमिति कल्पनान्तरसम्भवा-

२० द्द्विविधश्रुतीनामविरोधात्प्रामाण्यसिद्धिरित्यर्थः। कल्पनया ससारित्वमित्येतद्विशदयति—उपाधीति। औपाधिकी परस्य विशेषकल्पनेत्यत्र प्रमाणमाह—आसीन इति। स्वारस्येन कूटस्थोऽप्यात्मा मनसः शीघ्रं दूरगमनदर्शनात्तदुपाधिको दूरं व्रजति। यथा स्वप्ने शयानोऽपि मनसो गतिभ्रान्त्या सर्वत्र यातीव भाति तथा जागरेऽपीत्यर्थः। कल्पितेन हर्षादिविकारेण स्वाभाविकेन तदभावेन च युक्तमात्मानं न कश्चिदपि निश्चेतुं शक्नोतीत्याह—कस्तमिति। आदिपदेन 'ध्यायती'वेत्यादिश्रुतयो गृह्यन्ते।

२५ उदाहृतश्रुतीनां तात्पर्यमाह—उपाधीति। किं तर्हि पारमार्थिकं तदाह—स्वत इति। पूर्वेण सम्बन्धः। हिरण्यगर्भस्य वास्तवमवास्तवं च रूपं निरूपितमुपसहरति—एवमिति। तस्याप्यस्मदादिवन्न स्वतो ब्रह्मत्व किन्तु संसारित्वमेव स्वाभाविकमित्याशङ्क्य दृष्टान्तस्य साध्यविकलतामाह—तथेति। सर्वजीवानामेकत्वं नानात्वञ्चेति पूर्वेण सम्बन्धः। तेषां स्वतो ब्रह्मत्वे प्रमाणमाह—तत्त्वमिति। कस्तर्हि हिरण्यगर्भे विशेषो येनासावस्मदादिभिरुपास्यते तत्राऽऽह—हिरण्यगर्भस्त्विति। ननु श्रुतिस्मृतिवादेषु क्वचित्तस्य ससारित्वमपि प्रदर्श्यते सत्य तत्तु

३० कल्पितमित्यभिप्रेत्याऽऽह—संसारित्वं त्विति। अस्मदादिषु तुल्यमेतदित्याशङ्क्याऽऽह—जीवानां त्विति। कथं तर्हि 'तत्त्वमसि' 'क्षेत्रज्ञं चापि मां विद्धि' इत्यादिश्रुतिस्मृतिवादाः सङ्गच्छन्ते तत्राऽऽह—व्यावृत्तेति।

स्वमते तत्त्वनिश्चयमुक्त्वा, परमते तदभावमाह—तार्किकैस्त्विति। नन्वेकजीववादेऽपि सर्वव्यवस्थानुप-

---

१. कल्पनान्तर—औपाधिकरूपकल्पनम्।

२. 'शयानो याति सर्वतः' सर्वत्र व्याप्त इव दृश्यते उपाधिविलयात् इति काठकभाष्ये। अत्र तु स्वप्ने इत्यस्य

३५ स्वप्नावस्थायामित्यर्थं गृहीत्वा मनसो गतिभ्रान्त्येत्युक्तम्।

३. क्वचिदेव अत्रैव भयारत्यादिश्रवणात्।

४. परित्यक्तागमबलैः वेदादेव पदार्थान् निरूपयितु अनिच्छद्भिः युक्त्यैव प्रपञ्च निरूपयद्भिः। अस्ति स्थिर आत्मेति-वैशेषिकादयः क्षणिकज्ञानसमुदाय एवात्मा इति बौद्धः स्थिरः कर्तेति वैशेषिकाः अकर्तेति साङ्ख्या योगाश्च, ऽस्तीति कर्तेतीति च नैयायिका, नास्तीति बौद्धतार्किकाः इति विवेकः। श्रद्धेति 'श्रद्धा वा आपः' इति श्रुतेः

४० श्रद्धाशब्देनाप उच्यन्ते प्रकृते च जलप्रचुरसोमाज्यादिग्रहणम्। तस्य च द्रवत्वादार्द्रत्वं जले शैत्योपलम्भश्च प्रसिद्धः।

कृतः शास्त्रार्थः। तेनार्थनिश्चयो दुर्लभः। ये तु केवलशास्त्रानुसारिणः शान्तदर्पास्तेषां प्रत्यक्षविषय इव निश्चितः शास्त्रार्थो देवतादिविषयः। तत्र प्रजापतेरेकस्य देवस्यान्नान्नादलक्षणो भेदो विवक्षित इति। तत्राग्निरुक्तोऽन्नादोऽन्नाद्यः सोम इदानीमुच्यते। अथ यत्किञ्चेदं लोक आर्द्रं द्रवात्मकं तद्रेतस आत्मनो बीजादसृजत। "रेतस आपः" इति श्रुतेः। द्रवात्मकश्च सोमः। तस्माद्यदार्द्रं प्रजापतिना रेतसः सृष्टं तदु सोम एव। एतावद्वा एतावदेव नातोऽधिकमिदं सर्वम्। किं तत्। अन्नं चैव सोमो द्रवात्मकत्वादाप्यायकम्। अन्नादश्चाग्निरौष्ण्याद्रूक्षत्वाच्च। तत्रैवमवध्रियते ५ सोम एवान्नं यदद्यते सोम इत्यर्थः। य एवात्ता स एवाग्निः। अर्थबलाद्ध्यवधारणम्। अग्निरपि क्वचिद्धूयमानः[1] सोमपक्षस्यैव। सोमोऽपीज्यमानो[2]ऽग्निरेवात्तृत्वात्। एवमग्नीषोमात्मकं जगदात्मत्वेन पश्यन्न केनचिद्दोषेण लिप्यते। प्रजापतिश्च भवति। सैषा ब्रह्मणः प्रजापतेरतिसृष्टिरात्मनोऽप्यतिशया। का सेत्याह—यच्छ्रेयसः प्रशस्यतरानात्मनः सकाशाद्यस्मादसृजत देवांस्तस्माद्देवसृष्टिरतिसृष्टिः। कथं पुनरात्मनोऽतिशया सृष्टिरित्यत आह—अथ यद्यस्मान्मर्त्यः[3] सन्मरणधर्मा सन्नमृतानमरणधर्मिणो देवान्कर्मज्ञानवह्निना सर्वानात्मनः पाप्मन ओषित्वाऽसृजत, तस्मादियमति- १० सृष्टिरुत्कृष्टज्ञानस्य फलमित्यर्थः। तस्मादेतामतिसृष्टिं प्रजापतेरात्मभूतां यो वेद स एतस्यामतिसृष्ट्यां प्रजापतिरिव भवति प्रजापतिवदेव स्रष्टा भवति ॥६॥

पत्तेस्तत्त्वनिश्चयदौर्लभ्यं तुल्यमिति चेन्नेत्याह—ये त्विति। स्वप्नवत्प्रबोधात्प्रागशेषव्यवस्थासम्भवादूर्ध्वं च तदभावस्येष्टत्वादेकमेव ब्रह्मानाद्यविद्यावशादशेषव्यवहारास्पदमिति पक्षे न काचन दोषकलेति भावः।

सर्वदेवतात्मकस्य प्रजापतेः स्वतोऽसंसारित्वं कल्पनया वैपरीत्यमिति स्थिते सत्यथेत्याद्युत्तरग्रन्थस्य १५ तात्पर्यमाह—तत्रेति। विवक्षित इत्युत्तरग्रन्थप्रवृत्तिरिति शेषः। तस्य विषयं परिशिनष्टि—तत्राग्निरिति। अत्राद्ययोर्निर्धारणार्था सप्तमी। सम्प्रति प्रतीकमादायाक्षराणि व्याकरोति—अथेति। अत्तुः सर्गानन्तर्यमथशब्दार्थः रेतसः सकाशादपां सर्गेऽपि सोमशब्दे किमायातमित्याशङ्क्याऽऽह—द्रवात्मकश्चेति। श्रद्धाख्याहुतेः सोमोत्पत्तिश्रवणात्तत्र शैत्योपलब्धेश्चेति भावः।

सोमस्य द्रवात्मकत्वे फलितमाह—तस्मादिति। अग्नीषोमयोरन्नान्नादयोः सृष्टावपि जगति स्रष्टव्यान्तरमव- २० शिष्टमस्तीत्याशङ्क्याऽऽह—एतावदिति। आप्यायकः सोमो द्रवात्मकत्वादन्नं चाऽऽप्यायकं प्रसिद्धं तस्मादुपपन्नं सोमस्यान्नत्वमित्याह—द्रवात्मकत्वादिति। सोम एवान्नमग्निरन्नाद इत्यवधारणस्य विवक्षितमर्थमाह—तत्रेति। यथोक्तं वाक्यं सप्तम्यर्थः। यथाश्रुतमवधारणमवधीर्य कुतो विधान्तरेण तद्व्याख्यानमित्याशङ्क्याऽऽह—अर्थबलाद्धीति। अन्नादस्य संहर्तृत्वादग्नित्वमन्नस्य च संहरणीयतया सोमत्वमवधारयितुं युक्तमित्यर्थः। नन्वन्नस्य सोमत्वेन न नियमोऽग्नेरपि जलादिना संहारान्न चात्तुरग्नित्वेन नियमः सोमस्यापि कदाचिदिज्यमानत्वेनात्तृत्वात्त- २५ त्कुतोऽर्थबलमित्याशङ्क्याऽऽह—अग्निरपीति। सोऽपि संहार्यश्चेत्सोम एव स च संहर्ता चेदग्निरेवेत्यवधारणसिद्धिरित्यर्थः। प्रजापतेः सर्वात्मत्वमुपक्रम्य जगतो द्वेधाविभक्तत्वाभिधानं कुत्रोपयुक्तमित्याशङ्क्य तस्य सूत्रे पर्यवसानात्तस्मिन्नात्मबुद्ध्योपासकस्य सर्वदोषराहित्यं फलमत्र विवक्षितमित्याह—एवमिति। अनुग्राहकदेवसृष्टिमुक्त्वा तदुपासकस्य फलोक्त्यर्थमादौ देवसृष्टिं स्तौति—सैषेति। 'अग्निर्मूर्धा' इत्यादिश्रुतेरग्न्यादयोऽस्यावयवास्तत्कथं तत्सृष्टिस्ततोऽतिशयवतीत्याशङ्कते—कथमिति। प्रजापतेर्यजमानावस्थापेक्षया देवसृष्टेरुत्कृष्टत्ववचनमविरुद्धमिति ३० परिहरति—अत आहेति। देवसृष्टेरतिसृष्टित्वाभावशङ्कानुवादार्थोऽथशब्दः। ज्ञानस्येत्युपलक्षणं कर्मणोऽपीति द्रष्टव्यम्। अतिसृष्ट्यामित्यादि व्याचष्टे—तस्मादिति। देवादिस्रष्टा तदात्मा प्रजापतिरहमेवेत्युपासितुस्तद्भावापत्त्या तत्स्रष्टृत्वं फलतीत्यर्थः ॥६॥

---

१. क्वचिद्धूयमानत्वेन, पशुयागे मथनेनाग्निमुत्पाद्य तं आहवनीये प्रहरन्ति अत्राग्निः हूयमानः सोमपक्षस्य भवेत्।
२. सोमोऽपीति-द्वितीये आज्यभागे सोमो देवता।
३. मर्त्यः सन् साधकावस्थायामित्यर्थः। ३५

तद्धेदं[1] तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेव व्याक्रियतासौ नामायमिदं रूप इति तदिदमप्येतर्हि नामरूपाभ्यामेव व्याक्रियतेऽसौ नामायमिदं रूप इति स एष इह प्रविष्टः। आ नखाग्रेभ्यो यथा क्षुरः क्षुरधानेऽवहितः स्याद्विश्वंभरो वा विश्वंभरकुलाये तं न पश्यन्ति। अकृत्स्नो हि स[2] प्राणन्नेव प्राणो नाम भवति।

५ "तद्धेदं तर्ह्यव्याकृतमासीत्" सर्वं वैदिकं साधनं ज्ञानकर्मलक्षणं कर्त्राद्यनेककारकापेक्षं प्रजापतित्वफलावसानं साध्यमेतावदेव यदेतद्व्याकृतं जगत्संसारः। अथैतस्यैव साध्यसाधनलक्षणस्य व्याकृतस्य जगतो व्याकरणात् प्राग्बीजावस्था या तां निर्दिदिक्षत्यङ्कुरादिकार्यानुमितामिव वृक्षस्य, कर्मबीजोऽविद्याक्षेत्रो ह्यसौ संसारवृक्षः समूल उद्धर्तव्य इति। तदुद्धरणे हि पुरुषार्थपरिसमाप्तिः। तथा चोक्तम्—"ऊर्ध्वमूलोऽवाक्शाखः"[3] इति काठके। गीतासु

पूर्वोत्तरग्रन्थयोः सम्बन्धं वक्तुं प्रतीकमादाय वृत्तं कीर्तयति—तद्धेत्यादिना। तस्याऽऽदेयत्वार्थं वैदिक-
१० मित्युक्तम्। साधनमित्युक्ते मुक्तिसाधनं पुरः स्फुरति तन्निरस्यति—ज्ञानेति। एकरूपस्य मोक्षस्यानेकरूपं न साधनं भवतीति भावः। मुक्तिसाधनं मानवस्तुतन्त्रं तत्त्वज्ञानमिदं तु कारकसाध्यमतोऽपि न तद्धेतुरित्याह—कर्त्रादीति। किञ्चेदं प्रजापतित्वफलावसानम्। 'मृत्युरस्याऽऽत्मा भवति' इति श्रुतेः। न च तदेव कैवल्यं भयारत्यादिश्रवणादतोऽपि नेदं मुक्त्यर्थमित्याह—प्रजापतित्वेति। किञ्च नित्यसिद्धा मुक्तिरिदं तु साध्यफलमतोऽपि न मुक्तिहेतुरित्याह—साध्यमिति। किञ्च मुक्तिर्व्याकृतादर्थान्तर'मन्यदेव तद्विदितादि'त्यादिश्रुतेः। इदं तु नामरूपं व्याकृतमतोऽपि न
१५ तद्धेतुरित्याह—एतावदेवेति। सम्प्रत्यव्याकृतकण्डिकामवतारयन्प्रवेशवाक्यात्प्राक्तनस्य तद्धेदमित्यादेर्वाक्यस्य तात्पर्यमाह—अथेति। ज्ञानकर्मफलोक्त्यान्तर्यमथशब्दार्थं। बीजावस्था साभासप्रत्यगविद्या तस्या निर्देष्टुमिष्टत्वमेव न साक्षान्निर्देश्यत्वमनिर्वाच्यत्वादिति वक्तुं निर्दिदिक्षतीत्युक्तम्। वृक्षस्य बीजावस्था लोको निर्दिशतीति सम्बन्धः। यज्ज्ञाने पुमर्थासिस्तदेव वाच्यं किमिति प्रत्यगविद्योच्यते तत्राऽऽह—कर्मेति। उद्धर्तव्य इति तन्मूलनिरूपणमर्थवदितिशेषः। अथ पुरुषार्थमर्थयमानस्य तदुद्धारोऽपि क्वोपयुज्यते तत्राऽऽह—तदुद्धरणे हीति। ननु संसारस्य मूलमेव
२० नास्ति स्वभाववादात्प्रधानाद्वेव वा तन्मूलं नाज्ञातं ब्रह्मेत्याशङ्क्य श्रुतिस्मृतिभ्यां परिहरति—तथा चेति। ऊर्ध्वमुत्कृष्टं कारणं कार्यापेक्षया परमव्याकृतं मूलमस्येत्यूर्ध्वमूलो हिरण्यगर्भादयो मूलापेक्षयाऽवाच्यः शाखा इत्य-

---

१ तद्धेदमिति। अत्रायं विचारः प्रथमचतुर्थे प्रवर्तितः 'कारणत्वेन चाकाशादिषु यथा व्यपदिष्टोक्तेः' इत्यधिकरणे। तथा हि न ब्रह्मणः जगत्कारणत्वं तत्र गतिसामान्यं वा प्रतिपत्तुं शक्यते। प्रतिवेदान्तं भिन्नभिन्ना सृष्टिरीतिः दृश्यते। क्वचित् 'सदेवेदमि'त्यादौ सत्पूर्विका क्वचिद्'सदेवेदमग्र आसीत्' 'तस्मादसतस्सज्जायत' इत्यादौ असत्-
२५ पूर्विका। तथा क्रमविषयेऽपि क्वचिदाकाशपूर्विका क्वचित् तेजआदिका क्वचित् प्राणादिकेति। क्वचित् स्वयं कर्तृका यथा 'तद्धेद तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यामेव व्याक्रियत' इति। उच्यते। 'समाकर्षात्' इति ब्रह्मसूत्रं 'असद्वा इदमग्र आसीदि'त्यत्र असदाकृष्य 'सोऽकामयत' इति असदाकृष्य कामयितृत्वोक्त्या तस्य सत्त्वं सूच्यते। अव्याकृतवाक्येऽपि 'स एष इह प्रविष्ट' इत्यव्याकृतस्य यः व्याकर्ता ईश्वरः स एष इत्यत्र परामृश्यते। एवमन्यत्रापि। तथा च न स्वयं व्याकृतत्वं प्रपञ्चस्येति। 'तद्धेदं' इत्यादेः रङ्गभाष्ये इत्थं विवरणमुपलभ्यते
३० इदं मिथुनादिलक्षणम्। जगत् अव्याकृतं सूक्ष्मचिदचिद्विशिष्टं ब्रह्मासीत्। अव्यक्तशरीरकं ब्रह्म आसीत्। तच्च नामरूपव्याकरणेन स्थूलचिदचिदभूत्। सः चिदचिद्विशिष्टं ब्रह्म इह देवमनुष्यादिशरीरेषु प्रविष्टः इति व्याचक्रुः स्वमतानुगुण्याय।

२. 'ऊर्ध्वमूलोऽवाक् शाख' इति। उत्तरवाक्ये 'तदेव शुक्रं तद्ब्रह्मे'त्यत्र ऊर्ध्वपदार्थः तच्छब्देन ग्राह्यः तदेव शुक्रं ब्रह्मेत्युक्त्या वृक्षस्याब्रह्मत्वं छेद्यत्वं च सूचितम्। गीतावाक्ये च—'असंगशस्त्रेण दृढेन छित्वे'ति तस्य छेद्यत्वं
३५ कण्ठत एवोक्तम्। पुराणे च—उत्तरत्र 'एतच्छित्वा च भित्वा च' इति कण्ठत एव तस्य च्छेद्यत्वमुच्यते।

३. अत्र जगत्कारणं ब्रह्ममात्रं प्राविशत् 'सः प्राणन्नेव प्राणो भवती'त्यादिरीत्या व्याख्याने ब्रह्मैव जीवभावमापद्यत इति यथाश्रुतार्थस्य तदनभिमतत्वात् सः चिदचिद्विशिष्टं ब्रह्म प्राविशत् इत्यर्थः. ब्रह्मणः सर्वगतत्वात्

**वदन्वाक्पश्यंश्चक्षुः शृण्वञ्श्रोत्रं मन्वानो मनस्तान्यस्यैतानि कर्मनामान्येव। स योऽत एकैकमुपास्ते न स वेदाकृत्स्नो ह्येषोऽत एकैकेन भवत्यात्मेत्येवोपासीतात्र ह्येते सर्व एकं भवन्ति। तदेतत्पदनीयमस्य सर्वस्य यदयमात्मानेन ह्येतत्सर्वं वेद। यथा ह वै पदेनानुविन्देदेवं कीर्तिं श्लोकं विन्दते य एवं वेद ॥७॥**

च "ऊर्ध्वमूलमधःशाखम्" इति। "पुराणे च—"ब्रह्मवृक्षः सनातनः" इति। तद्धेदं तदिति बीजावस्थं जगत्प्रागुत्प- ५

### तद्धेदमित्यादेः व्याख्या

त्तेस्तर्हि तस्मिन्काले परोक्षत्वात्सर्वनाम्नाऽप्रत्यक्षाभिधानेनाभिधीयते। भूतकालसंबन्धित्वादव्याकृतभाविनो जगतः। सुखग्रहणार्थमैतिह्यप्रयोगो हशब्दः। एवं ह तदाऽऽसीदित्युच्यमाने सुखं तां परोक्षामपि जगतो बीजावस्थां प्रतिपद्यते युधिष्ठिरो ह किल राजाऽऽसीदित्युक्ते यद्वत्। इदमिति व्याकृतनामरूपात्मकं साध्यसाधनलक्षणं यथावर्णितमभिधीयते। तदिदंशब्दयोः परोक्षप्रत्यक्षावस्थजगद्वाचकयोः सामानाधिकरण्यादेकत्वमेव परोक्षप्रत्यक्षावस्थस्य १० जगतोऽवगम्यते तदेवेदमिदमेव च तदव्याकृतमासीदिति। अथैवं सति नासत उत्पत्तिर्न सतो विनाशः कार्यस्येत्य-

वाक्शाख'। एवम् 'ऊर्ध्वमूलमधःशाखम्' इत्यादिगीतापि नेतव्या। अस्ति हि संसारस्य मूलम्। 'नेदममूलं भविष्यति' इति श्रुतेस्तच्चाज्ञात ब्रह्मैवेति श्रुतिस्मृतिप्रसिद्धमिति भावः।

'सम्प्रति प्रतीकमादय पदानि व्याचष्टे—तद्धेत्यादिना। अप्रत्यक्षाभिधानेन तदिति सर्वनाम्ना बीजावस्थं जगदभिधीयते। परोक्षत्वादिति सम्बन्धः। कथ जगतो बीजावस्थत्वमित्याशङ्क्य तर्हीत्यस्यार्थमाह—प्रागिति। १५ कथं तस्य परोक्षत्व तत्राऽऽह—भूतेति। निपातार्थमाह—सुखेति। हशब्दार्थमभिनयति—किलेति। यथावर्णितमित्यनर्थत्वेन ससारेऽसारत्वोक्तिः। पदद्वयसामानाधिकरण्यलब्धमर्थमाह—तदिदमिति। एकत्वमभिनयेनोदाहरति—तदेवेति। एकत्वावगतिफलं कथयति—अथेति। सामानाधिकरण्यवशादेकत्वे निश्चिते सत्यनन्तरम्—'नासतो विद्यतो भावो नाभावो विद्यते सतः' इति स्मृतिरनुसृता भवतीति भावः।

---

पूर्वमेव शरीरेषु सत्त्वात् कथं प्रवेशः इति चेत् विशिष्टप्रवेशोक्त्या विशेषणप्रवेशः अभिप्रेतः। तत्र च पूर्वमेव २० शरीरादिषु स्थितस्य कथं वाऽन्तर्यामितयापि प्रवेश संगच्छते। मूर्तस्य हि प्रवेश संभवेत् इति प्रश्नः अस्त्येव। अपि च प्रवेशपूर्वकाले शरीरादिषु असति जीवे कथमन्तर्यामितया प्रवेशः। पूर्वं जीव प्रविष्टः तदनु ईश्वरः अन्तर्यामितया प्रविष्ट इति श्रुतिवाक्यं चेत्तत्संगच्छेत। सहैवेश्वरेण जीवः प्रविष्ट इति श्रुत्यर्थो भवति विशिष्टं ब्रह्म प्राविशदित्युक्तेः। तत्रापि सकलचिद्विशिष्टं एकैकस्मिन् शरीरे न प्राविशत् अपि तु एकैकं जीवमादायैकैकं शरीरमिति वक्तव्यम्। अपि च अचित्पदेन कीदृशं जडमादायेति वक्तव्यम्। प्राणमादायेत्युक्ते ऐतरेयके प्राणस्य २५ प्रथक् प्रवेशोक्तिर्विरुध्येत। सः इति व्याकर्तृब्रह्ममात्रपरस्य शब्दस्य चिदचिद्विशिष्टे लक्षणादोष। भगवत्पादमते तु ब्रह्मैव जीवरूपेण शरीर प्रविश्य 'प्राणन्नेव प्राणो भवती' त्युक्तिरेव साधीयसी। स चात्मा दर्शन-श्रवण-प्राणनादिषु एकैकविशेषणविशिष्टतया न ज्ञातव्य. अपि तु सर्वं ज्ञानं क्रियात्मकं यत्रैकं भवति स आत्मेति ज्ञातव्य। सर्वमाप्नोति इत्यात्मा इति विग्रहात्। रङ्गभाष्यकारास्तु अन्तर्यामी परमात्मैव प्राणिति पश्यति शृणोति इत्यादिव्यवहारभाक् इति वदन्ति। तन्मते जीवेश्वरयोरत्यन्त भेदात् जीवधर्माणां ३० ईश्वरे व्यवहारो दुरुपपाद। 'आत्मत्येवोपासीत' इत्यत्र सकलचिदचिद्विशिष्ट इत्यर्थोऽपि दुर्लभः चेतनधर्माणमेव प्रकृतत्वात्। प्राणिति पश्यति इत्यादीना जीवधर्माणामपि अपृथक् सिद्धत्वात् ब्रह्मणि सम्भवोऽस्तीति मते जीवगतरागद्वेषादिहेयगुणानामपीश्वरे प्रसक्ति को वा निवारयितुं शक्नुयात्।

१. सामानाधिकण्यात् समानविभक्तिकपदद्वयप्रयोगात्।

२. अप्रत्यक्षाभिधानं तत् 'इदमः प्रत्यक्षगत समीपतरवर्तिचैतदो विजानीयात्। अदसस्तु विप्रकृष्टं तदिति ३५ परोक्षे विजानीयादि'ति प्राचीनोक्ते.।

वधृतं भवति। तदेवंभूतं जगदव्याकृतं सन्नामरूपाभ्यामेव नाम्ना रूपेणैव च व्याक्रियत। व्याक्रियतेति कर्मकर्तृ-
प्रयोगात्तत्स्वयमेवाऽऽत्मैव व्याक्रियत वि आ अक्रियत विस्पष्टं नामरूपविशेषावधारणमर्यादं व्यक्तीभावमापद्यत।

## सृष्टिकर्ता आक्षेपाल्लभ्यते

सामर्थ्यादाक्षिप्तनियन्तृकर्तृसाधनक्रियानिमित्तम्। असौनामेति सर्वनाम्नाऽविशेषाभिधानेन नाममात्रं व्यपदिशति।
५ देवदत्तो यज्ञदत्त इति वा नामास्येत्यसौनामाऽयम्। तथेदमिति शुक्लकृष्णादीनामविशेषः। इदं शुक्लमिदं कृष्णं
वा रूपमस्येतीदंरूपः। तदिदमव्याकृत वस्त्वेतर्ह्येतस्मिन्नपि काले नामरूपाभ्यामेव व्याक्रियतेऽसौनामाऽयमिदंरूप
इति। यदर्थः सर्वशास्त्रारम्भो यस्मिन्नविद्यया स्वाभाविक्या कर्तृक्रियाफलाध्यारोपणा कृता यः कारणं सर्वस्य
जगतो यदात्मके नामरूपे सलिलादिव स्वच्छान्मलमिव फेनमव्याकृते व्याक्रियेते यश्च ताभ्यां नामरूपाभ्यां विल-

अज्ञात ब्रह्म जगतो मूलमित्युक्त्वा तद्विवर्तो जगदिति निरूपयति—**तदेवम्भूतमिति**। तृतीयामित्थम्भा-
१० वार्थत्वेन व्याचष्टे—**नाम्नेति**। क्रियापदप्रयोगाभिप्राय तदनुवादपूर्वकमाह—**व्याक्रियतेति**। तत्र पदच्छेदपूर्वकं
तद्वाच्यमर्थमाह—**व्याक्रियतेत्यादिना**। स्वयमेवेति कुतो विशेष्यते कारणमन्तरेण कार्योत्पत्तिरयुक्तेत्याशङ्क्याऽऽह—
**सामर्थ्यादिति**। निर्हेतुकार्यसिद्ध्यनुपपत्त्याऽऽक्षिप्तो नियन्ता जनयिता कर्ता चोत्पत्तौ साधनक्रियाकरणव्यापारस्तन्नि-
मित्त तदपेक्ष्य व्यक्तिभावमापद्यतेति योजना। नामसामान्यं देवदत्तादिना विशेषनाम्ना संयोज्य सामान्यविशेषवानर्थो
नामव्याकरणवाक्ये विवक्षित इत्याह—**असावित्यादिना**। असौशब्दः श्रौतोऽव्ययत्वेन नेय[2]। रूपसामान्यं शुक्ल-
१५ कृष्णादिना [ विशेषेण ] सयोज्योच्यते रूपव्याकरणवाक्येनेत्याह—**तथेत्यादिना**। अव्याकृतमेव व्याकृतात्मना
व्यक्तमित्येतत्सुप्तप्रबुद्धदृष्टान्तेन स्पष्टयति—**तदिदमिति**।

तद्धेत्यत्र मूलकारणमुक्त्वा तन्नामरूपाभ्यामित्यादिना तत्कार्यमुक्तमिदानी प्रवेशवाक्यस्थसशब्दापेक्षित-
मर्थमाह—**यदर्थं इति**। काण्डद्वयात्मनो वेदस्याऽऽरम्भो यस्य परस्य प्रतिपत्त्यर्थो विज्ञायते, कर्मकाण्ड हि स्वार्थानुष्ठाना-
हितचित्तशुद्धिद्वारा तत्त्वज्ञानोपयोगीष्यते ज्ञानकाण्ड तु साक्षादेव तत्रोपयुज्यते 'सर्वे वेदा यत्पदमामनन्ति' इति च
२० श्रूयते स[3] परोऽत्र प्रविष्टो देहादाविति योजना। सर्वस्याऽऽम्नायस्य ब्रह्मात्मनि समन्वयमुक्त्वा तत्र विरोधसमाधानार्थ-
माह—**यस्मिन्निति**। अध्यासस्य चतुर्विधख्यातीनामन्यतमत्व[4] वारयति—**अविद्ययेति**। तस्या मिथ्याज्ञानत्वेन
सादित्वादनाद्यध्यासहेतुत्वासिद्धिरित्याशङ्क्याऽऽह—**स्वाभाविक्येति**। विद्याप्रागभावत्वमविद्याया व्यावर्तयति—
**कर्त्रिति**। न हि तदुपादानत्वमभावत्वे सम्भवति नचोपादानान्तरमस्तीति भावः। अन्वयस्तु सर्वत्र यच्छब्दस्य पूर्ववद्
द्रष्टव्यः। आत्मनि कर्तृत्वाध्यासस्याविद्याकृतत्वोक्त्या समन्वये विरोधः समाहितः। संप्रत्यध्यासकारणस्योक्तत्वेऽपि
२५ निमित्तोपादानभेदं साङ्ख्यवादमाशङ्क्योक्तमेव कारणं तद्भेदनिराकरणार्थं कथयति—**यः कारणमिति**। श्रुतिस्मृति-
वादेषु परस्य तत्कारणत्वं प्रसिद्धमिति भावः। नामरूपात्मकस्य द्वैतस्याविद्याविद्यमानदेहत्वाद्विद्यापनोद्यत्वं सिध्य-
तीत्याह—**यदात्मके इति**। व्याकर्तुरात्मनः स्वभावत शुद्धत्वे दृष्टान्तमाह—**सलिलादिति**। व्याक्रियमाणयोर्नामरूपयोः
स्वतोऽशुद्धत्वे दृष्टान्तमाह—**मलमिवेति**। यथा फेनादि जलोत्थ तन्मात्रमेव तथाऽज्ञातब्रह्मोत्थं जगद्ब्रह्ममात्रं तज्ज्ञान-
बाध्यञ्चेति भावः। नित्यशुद्धत्वादिलक्षणमपि वस्तु न स्वतोऽज्ञाननिवर्तकं केवलस्य तत्साधकत्वाद्वाक्योत्थबुद्धिवृत्त्या-
३० रूढं तु तथेति मन्वानो ब्रूते—**यश्चेति**। 'आकाशो ह वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म' इति
श्रुतिमाश्रित्याऽऽह—**ताभ्यामिति**। नामरूपात्मकद्वैतासस्पर्शित्वादेव नित्यशुद्धत्वमशुद्धद्वैतसम्बन्धाधीनत्वात्तत्राविद्या

---

१ एतर्हि इति मूलस्य इदानी सुप्तप्रतिबुद्धवदित्यर्थ.।

२. अव्ययत्वेनेति—व्यत्ययानुशासनेनेतिपाठ उभयत्रापि पाणिनिव्याकरणाननुगतत्व हेतुः।

३. 'स एष इह प्रविष्ट' इत्यत्र सशब्देन पूर्वप्रकृतमव्याकृतं परामृश्यते तच्च भाष्ये यदर्थं इत्यनेनोक्त टीकाया
३५ परोऽत्र प्रविष्ट.।

४. चतुर्विधख्यातय —आत्मख्याति विज्ञानवादिबौद्धानाम्, असत्ख्याति. माध्यमिकानाम्, अख्याति प्राभाकर-
साङ्ख्ययो, अन्यथाख्याति. न्यायमीमासयो, पञ्चमख्यातिस्तु अनिर्वचनीयख्यातिः सिद्धान्तिनाम्। अविद्याया.
अभावत्वे उपादानत्वासम्भव. उपादानत्वस्य भावधर्मत्वादित्यर्थः।

क्षणः स्वतो नित्यशुद्धबुद्धमुक्तस्वभावः स एषोऽव्याकृते आत्मभूते नामरूपे व्याकुर्वन्ब्रह्मादिस्तम्बपर्यन्तेषु देहेष्विह कर्मफलाश्रयेष्वशनायादिमत्सु प्रविष्टः ।

अव्याकृतशब्दस्य नियन्तृविशिष्टजगत्परत्वात् सशब्देन नियन्तृलाभः

नन्वव्याकृतं स्वयमेव व्याक्रियतेत्युक्तं कथमिदमिदानीमुच्यते पर एव त्वात्माऽव्याकृतं व्याकुर्वन्निह प्रविष्ट इति । नैष दोषः । परस्याप्यात्मनोऽव्याकृतजगदात्मत्वेन विवक्षितत्वात् । आक्षिप्तनियन्तृकर्तृक्रियानिमित्तं हि जगदव्याकृतं व्याक्रियतेत्यवोचाम । इदंशब्दसामानाधिकरण्याच्चाव्याकृतशब्दस्य । यथेदं जगन्नियन्त्राद्यनेककारकनिमित्तादिविशेषवद्व्याकृतं तथाऽपरित्यक्तान्यतमविशेषवदेव तदव्याकृतम् । व्याकृताव्याकृतमात्रं तु विशेषः । दृष्टश्च लोके विवक्षातः शब्दप्रयोगो ग्राम आगतो ग्रामः शून्य इति । कदाचिद्ग्रामशब्देन निवासमात्रविवक्षायां ग्रामः शून्य इति शब्दप्रयोगो भवति कदाचिन्निवासिजनविवक्षायां ग्राम आगत इति कदाचिदुभयविवक्षायामपि ग्रामशब्दप्रयोगो भवति ग्रामं च न प्रविशेदिति यथा तद्वदिहापि जगदिदं व्याकृतमव्याकृतं चेत्यभेदविवक्षायामात्मानात्मनोर्भवति व्यपदेशः । तथेदं जगदुत्पत्तिविनाशात्मकमिति केवलजगद्व्यपदेशः । तथा महानज आत्माऽस्थूलोऽनणुः

व्यापिनः परस्य कथं प्रवेशकथनोपपत्तिः

स एष नेति नेतीत्यादिकेवलात्मव्यपदेशः । ननु परेण व्याकर्त्रा व्याकृतं सर्वतो व्याप्तं सर्वदा जगत्स कथमिह प्रविष्टः परिकल्प्यते । अप्रविष्टो हि देशः परिच्छिन्नेन प्रवेष्टुं शक्यते यथा पुरुषेण ग्रामादिर्नाऽऽकाशेन किंचिन्नित्यप्रवि-

प्रवेशोपपादने पक्षभेदाः तेषां निरासश्च

ष्टत्वात्, पाषाणसर्पादिवद्धर्मान्तरेणेति चेत् । अथापि स्यान्न पर आत्मा स्वेनैव रूपेण प्रविवेश किं तर्हि तत्स्थ एव

प्रयोजिकेत्यभिप्रेत्य तत्सम्बन्धं निषेधति—बुद्धेति । तस्मादेव दुःखाद्यनर्थासंस्पर्शित्वमाह—मुक्तेति । विद्यादशायां शुद्ध्यादिसद्भावेऽपि बन्धावस्थायां नैवमिति चेन्नेत्याह—स्वभाव इति । अव्याकृतवाक्योक्तमज्ञातं परमात्मानं परामृशति—स इति । तमेव कार्यस्थं प्रत्यक्त्वं निर्दिशति—एष इति । आत्मा हि स्वतो नित्यशुद्धत्वादिरूपोऽपि स्वाविद्यावष्टम्भान्नामरूपे व्याकरोतीति तत्सर्जनस्याविद्यामयत्वं विवक्षित्वाऽऽह—अव्याकृते इति । तयोरात्मना व्याकृतत्वे तदतिरेकेणाभावः फलतीति मत्वा विशिनष्टि—आत्मेति । जनिमन्मात्रमिहशब्दार्थं कथयति—ब्रह्मादीति । तत्रैव दुःखादिसम्बन्धो नाऽऽत्मनीति मन्वानो विशिनष्टि—कर्मेति । ब्रह्मात्मैक्ये पदद्वयसामानाधिकरण्याधिगते हेतुमाह—प्रविष्ट इति ।

परमात्मा स्रष्टा सृष्टे प्रविष्टो जगतीत्यादिष्टमाक्षिपति—नन्विति । पूर्वापरविरोधं समाधत्ते—नेत्यादिना । व्याक्रियतेति कर्मकर्तृप्रयोगाज्जगत्कर्तुरविवक्षितत्वमुक्तमित्याशङ्क्याह—आक्षिप्तेति । मुच्यते वत्सः स्वयमेवेतिवत्कर्मकर्तरि लकारो व्याकरणसौकर्यापेक्षया सत्येव कर्तरि निर्वहतीति भावः । अव्याकृतशब्दस्य नियन्त्रादियुक्तजगद्वाचित्वे हेत्वन्तरमाह—इदंशब्देति । कथमुक्तसामानाधिकरण्यमात्रादव्याकृतस्य जगतो नियन्त्रादियुक्तत्वं तत्राऽऽह—यथेति । नियन्त्रादीत्यादिशब्देन कर्तृकरणादिग्रहणम् । निमित्तादीत्यादिपदेनोपादानमुच्यते । विमतं नियन्त्रादिसापेक्षं कार्यत्वात्संप्रतिपन्नवदित्यर्थः । कस्तर्हि प्रागवस्थे सम्प्रतितने च जगति विशेषस्तत्राऽऽह—व्याकृतेति । कथं पुनरव्याकृतशब्देन जगद्वाचिना परो गृह्यत एकस्य शब्दस्यानेकार्थत्वायोगादत आह—दृष्टश्चेति । उक्तमेव स्फुटयति—कदाचिदिति । उभयविवक्षया ग्रामशब्दप्रयोगस्य दार्ष्टान्तिकमाह—तद्वदिति । इहेत्यव्याकृतवाक्योक्तिः । निवासमात्रविवक्षया ग्रामशब्दप्रयोगस्य दार्ष्टान्तिकमाह—तथेति । निवासिजनविवक्षया तत्प्रयोगस्यापि दार्ष्टान्तिकं कथयति—तथा महानिति ।

अव्याकृतवाक्ये परस्य प्रकृतत्वात्तस्य प्रवेशवाक्ये सशब्देन परामृष्टस्य सृष्टे कार्ये प्रवेश उक्तस्तच्च प्रकारान्तरेणाऽऽक्षिपति—नन्विति । कथमितिसूचितामनुपपत्तिमेव स्पष्टयति—अप्रविष्टो हीति । दृष्टान्तावष्टम्भेन प्रवेशवादी शङ्कते—पाषाणेति । तदेव विवृणोति—अथापीत्यादिना । परस्य परिपूर्णस्य क्वचित्प्रवेशाभावेऽपीति यावत् ।

१. भाष्ये चोक्तं परस्याप्यात्मन. स इत्यनेन परामर्शात् तदिदमुक्तं 'यथा महानज आत्मा स' इति परामृष्टः इति ।

२. तथेदमिति—इदंशब्दार्थः व्याकृतं जगत् तदभिन्नमव्याकृतं तत्र नियन्ता परमात्माप्यन्तर्भूतः । स च 'स एष' इत्यत्र परामृश्यते यथा ग्रामं न प्रविशेदित्यत्र जनाः तन्निवासश्चेत्युभयपरामर्शः ।

धर्मान्तरेणोपजायते तेन प्रविष्ट इत्युपचर्यते। यथा पाषाणे सहजोऽन्तस्थः सर्पो नारिकेले वा तोयम्। न। "तत्सृष्ट्वा तदेवानुप्राविशत्" इति श्रुतेः। यः स्रष्टा स भावान्तरमनापन्न एव कार्यं सृष्ट्वा पश्चात्प्राविशदिति हि श्रूयते। यथा भुक्त्वा गच्छतीति भुजिगमिक्रिययोः पूर्वापरकालयोरितरेतरविच्छेदोऽविशिष्टश्च कर्ता तद्वदिहापि स्यान्नतु तत्स्थस्यैव भावान्तरेणोपजननं एतत्सम्भवति। न च स्थानान्तरेण वियुज्य स्थानान्तरसंयोगलक्षणः
५ प्रवेशो निरवयवस्यापरिच्छिन्नस्य दृष्टः। सावयव एव प्रवेशश्रवणादिति चेन्न। "दिव्यो[2] ह्यमूर्तः पुरुषः" "निष्कलं निष्क्रियम्" इत्यादिश्रुतिभ्यः सर्वव्यपदेश्यधर्मविशेषप्रतिषेधश्रुतिभ्यश्च। प्रतिबिम्बप्रवेशवदिति चेन्न। वस्त्वन्तरेण विप्रकर्षानुपपत्तेः।

अन्ये पक्षाः श्रुतिविरुद्धाः

द्रव्ये गुणप्रवेशवदिति चेत्। न। अनाश्रितत्वात्। नित्यपरतन्त्रस्यैवाऽऽश्रितस्य गुणस्य द्रव्ये प्रवेश
१० उपचर्यते। न तु ब्रह्मणः स्वातन्त्र्यश्रवणात्तथा प्रवेश उपपद्यते। फले बीजवदिति चेन्न। सावयवत्ववृद्धिक्षयोत्पत्ति-

परस्य संसारित्वप्रसक्तिनिरासः

विनाशादिधर्मवत्त्वप्रसङ्गात्। न चैवंधर्मवत्त्वं ब्रह्मणः "अजोऽजर" इत्यादिश्रुतिन्याय[3]विरोधात्। अन्य एव संसारी

तच्छब्दः दृष्टकार्यविषयः। धर्मान्तरं जीवाख्यम्। दृष्टान्तं व्याचष्टे—यथेति। पाषाणाद्बाह्यः सर्पादिस्तत्र प्रविष्ट इति शङ्कापोहार्थं सहजविशेषणम्। सर्पादिरश्मादिरूपेण स्थितभूतपञ्चकपरिणामत्वात्तत्र सहजत्वं पाषाणादौ यानि भूतानि
१५ स्थितानि तेषां परिणामः सर्पादिस्तद्रूपेण तत्र भूतानामनुप्रवेशवदपरिच्छिन्नस्यापि परस्य जीवाकारेण बुद्ध्यादौ प्रवेशसिद्धिरित्यर्थः। आक्षेपं करोति—नेति। तदेव स्पष्टयति—यः स्रष्टेति।

ननु तक्ष्णा निर्मिते वेश्मनि ततोऽन्यस्यापि प्रवेशो दृश्यते तथा परेण सृष्टे जगत्यन्यस्य प्रवेशो भविष्यति नेत्याह—यथेति। पाषाणसर्पन्यायेन कार्यस्थस्यैव परस्य जीवाख्ये परिणामे तत्सृष्ट्वेत्यादिश्रवणमनुपपन्नमिति व्यतिरेकं दर्शयति—नत्विति। अस्तु तर्हि परस्य मार्जारादिवत्पूर्वावस्थानत्यागेनावस्थानान्तरसंयोगात्मा प्रवेशो नेत्याह—
२० न चेति। निरवयवेऽपरिच्छिन्नश्चाऽऽत्मा तस्य स्थानान्तरेण वियोगं प्राप्य स्थानान्तरेण सह संयोगलक्षणो यः प्रवेशः स सावयवे परिच्छिन्ने च मार्जारादौ दृष्टप्रवेशसदृशो न भवतीति योजना। वियुज्येति पाठे तु स्फुटैव योजना।

प्रवेशश्रुत्या निरवयवत्वासिद्धिं शङ्कते—सावयव इति। प्रवेशश्रुतेरन्यथोपपत्तेर्वक्ष्यमाणत्वान्नैवमिति परिहरति—नेत्यादिना। अमूर्तत्वं निरवयवत्वम्। पुरुषत्वं पूर्णत्वम्। प्रकारान्तरेण प्रवेशोपपत्तिं शङ्कते—प्रतिबिम्बेति। आदित्यादौ जलादिना संनिकर्षादिसम्भवात्प्रतिबिम्बाख्यप्रवेशोपपत्तिः। आत्मनि तु परस्मिन्नसङ्गेऽनवच्छिन्ने
२५ केनचिदपि तदभावान्न यथोक्तप्रवेशसिद्धिरित्याह—न वस्त्वन्तरेणेति। प्रकारान्तरेण प्रवेशं चोदयति—द्रव्य इति। परस्यापि कार्ये प्रवेश इति शेषः। गुणापेक्षया परस्य वैलक्षण्यं दर्शयन्परिहरति—नेत्यादिना। स्वातन्त्र्यश्रवणमेष सर्वेश्वर इत्यादि।

पनसादिफले बीजस्य प्रवेशवत्कार्ये परस्य प्रवेशः स्यादिति शङ्कित्वा दूषयति—फल इत्यादिना। विनाशादीत्यादिशब्देनानात्मत्वानीश्वरत्वादि गृह्यते। प्रसङ्गस्येष्टत्वमाशङ्क्य निराचष्टे—न चेति। जन्मादीनां धर्माणां
३० धर्मिणो भिन्नत्वाभिन्नत्वासम्भवादित्यादिन्यायः। बीजफलयोरवयवावयवित्वं पाषाणसर्पयोराधाराधेयत्वमित्यपुनरुक्तिः[4]। परस्य सर्वप्रकारप्रवेशासम्भवे प्रवेशश्रुतेरालम्बनं वाच्यमित्याशङ्क्य पूर्वपक्षमुपसंहरति—अन्य एवेति। जगतो हि परः स्रष्टेति वेदान्तमर्यादा स्रष्टैव च प्रवेष्टा प्रविश्य व्याकरवाणीति प्रवेशव्याकरणयोरेककर्तृत्वश्रुतेस्तस्मात्तस्मादन्यस्य

---

१. प्रविष्टः इत्युपचर्यते यथा अन्तस्थः तथा तत्स्थोऽपि अन्तःप्रविष्ट उच्यते अन्तःस्थत्वगुणयोगात् सर्वव्यपदेश्यधर्माणां निषेधः।

३५ २. दिव्य इत्यनेन अभौतिकत्वस्य अमूर्त इति नावयवत्वस्य पुरुष इति परिच्छेदस्य प्रतिषेधात्। न तु ब्रह्मण इति गुणः द्रव्यपरतन्त्रः ब्रह्म तु स्वतन्त्रं अतः गुणवत् प्रवेशानुपपत्तिः।' स्वतन्त्र इति 'एष सर्वेश्वर' इतिश्रुतेः।

३. न्यायविरोधात् न्यायश्च एते उत्पत्त्यादयो धर्माः ब्रह्मणो भिन्नाश्चेत् ब्रह्मनित्यमेव तैः असम्बन्धात्। अभेदे च ब्रह्मणो विकारत्वेन अब्रह्मत्वप्रसङ्गात्।

४. बीजफलयो सावयवत्वं पाषाणसर्पयो आधाराधेयत्वं इति धर्मवैलक्षण्यमिति सूचितम्।

परिच्छिन्न इह प्रविष्ट इति चेन्न। "सेयं देवतैक्षत" इत्यारभ्य "नामरूपे व्याकरवाणि" इति तस्या एव प्रवेशव्याकरणकर्तृत्वश्रुतेः। तथा "तत्सृष्ट्वा तदेवानुप्राविशत्" "स[1] एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत" "सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन्यदास्ते" "त्वं कुमार उत वा कुमारी त्वं जीर्णो दण्डेन वञ्चसि" "पुरश्चक्रे द्विपदः" "रूपं रूपम्" इति च मन्त्रवर्णान्न परादन्यस्य प्रवेशः। प्रविष्टानामितरेतरभेद त्परानेकत्वमिति चेत्। न। "एको[2] देवो बहुधा सन्निविष्टः" "एकः स[3]न्बहुधा विचार" "त्वमेकोऽसि बहूननुप्रविष्ट" "एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा" इत्यादिश्रुतिभ्यः। प्रवेश उपपद्यते नोपपद्यत इति तिष्ठतु तावत्प्रविष्टानां ५

## सुखित्वादिभेदात् जीवभेदशंका तत्समाधानञ्च

संसारित्वात्तदनन्यत्वाच्च परस्य संसारित्वमिति चेत्। न। अशनायाद्यत्ययश्रुतेः। सुखित्वदुःखित्वादिदर्शनान्नेति चेत्। न। "न लिप्यते लोकदुःखेन बाह्यः" इति श्रुतेः। प्रत्यक्षादिविरोधादयुक्तमिति चेत्। न। उपाध्याश्रयजनितविशेषविषयत्वात्प्रत्यक्षादेः। "न दृष्टेर्द्रष्टारं पश्येर्विज्ञातारमरे केन विजानीयात्" "अविज्ञातं विज्ञातृ" इत्यादिश्रुतिभ्यो नाऽऽत्मविषयं विज्ञानं किं तर्हि बुद्ध्याद्युपाध्यात्मप्रतिच्छायाविषयमेव सुखितोऽहं दुःखितोऽहमि- १०

प्रवेशो न युक्तिमानिति सिद्धान्तयति—नेत्यादिना। तत्रैव तैत्तिरीयश्रुति संवादयति—तथेति। ऐतरेयश्रुतिरपि यथोक्तमर्थमुपोद्बलयतीत्याह—स एतमेवेति। श्रीनारायणाख्यमन्त्रमप्यत्रानुकूलयति—सर्वाणीति[4]। वाक्यान्तरमुदाहरति—त्वं कुमार इति। अत्रैव वाक्यशेपस्याऽऽनुगुण्यं दर्शयति—पुर इति। उदाहृतश्रुतीना तात्पर्यमाह—न परादिति। परस्य प्रवेशे प्रविशता मिथो भेदात्तदभिन्नस्य तस्यापि नानात्वप्रसक्तिरिति शङ्कते—प्रविष्टानामिति। न परस्यानेकत्वमेकत्वश्रुतिविरोधादिति परिहरति—नेत्यादिना। विचार विचचारेति यावत्। परस्य प्रवेशे नानात्वप्रसङ्ग प्रत्याख्याय दोषान्तरं चोदयति—प्रवेश इति। तेषा संसारित्वेऽपि परस्य किमायात तदाह—तदनन्यत्वादिति। श्रुत्यवष्टम्भेन दूपयति—नेति। १५

अनुभवमनुसृत्य शङ्कते—सुखित्वेति। नासंसारित्वमिति शेषः। गूढाभिसन्धिरुत्तरमाह—नेति। आगमो हि परस्यासंसारित्वे मानं त्वयोच्यते स चाध्यक्षविरुद्धो न स्वार्थे मान न च वैपरीत्य ज्येष्ठत्वेन बलवत्त्वादिति शङ्कते—प्रत्यक्षादीति। शङ्किते पूर्ववादिनि स्वाशयमाविष्कृतवति सिद्धान्ती स्वाभिसन्धिमाह—नोपाधीति। उपाधिरन्तःकरणं तदाश्रयत्वेन जनितो विशेषश्चिदाभासस्तद्गतदुःखादिविषयत्वात्प्रत्यक्षादेराभासत्वात्तेनाऽऽत्मन्यसंसारित्वागमस्य न विरोधोऽस्तीत्यर्थः। किञ्च प्रत्यक्षादीनामनात्मविषयत्वादात्मविषयत्वाच्चाऽऽगमस्य भिन्नविषयतया नानयोर्मिथो विरोधोऽस्तीत्यभिप्रेत्याऽऽत्मनोऽध्यक्षाद्यविषयत्वे श्रुतीरुदाहरति—न दृष्टेरिति। सुख्यहमित्यादिप्रतिभासस्य तर्हि का गतिरित्याशङ्क्य पूर्वोक्तमेव स्मारयति—किं तर्हीति। बुद्ध्यादिरुपाधिस्तत्राऽऽत्मप्रतिच्छाया तत्प्रतिबिम्बस्तद्विषयमेव सुख्यहमित्यादिविज्ञानमिति योजना। आत्मनो दुःखित्वाभावे हेत्वन्तरमाह—अयमिति। अयं देहोऽहमिति दृश्येन द्रष्टुस्तादात्म्याध्यासदर्शनाद्दृश्यविशिष्टस्यैव प्रत्यक्षविषयत्वान्न केवलस्याऽऽत्मनो दुःखादिससारोऽस्तीत्यर्थं किञ्चास्थूलादिविशेषणमक्षर प्रक्रम्य तस्यैव प्रत्यगात्मत्व दर्शयन्ती श्रुतिरात्मन ससारित्व वारयतीत्याह—नान्यदिति। किञ्च पादयोर्दुःख शिरसि दुःखमिति देहावयवावच्छिन्नत्वेन तत्प्रतीतेस्तद्धर्मत्वनिश्चयान्नाऽऽत्मनि संसारित्व प्राणाणिकमित्याह—देहेति। २० २५ ३०

श्रुतिवशादात्मनः संसारित्वं शङ्कते—आत्मनस्त्विति। सुख तावदात्माश्रय'मात्मनस्तु कामाये'ति सुखसाधनस्याऽऽत्मार्थत्वश्रुतेरतस्तदविनाभूतं दुःखमपि तत्रेत्यात्मन्यससारित्वमयुक्तमित्यर्थः। आविद्यकससारित्वानुवादे-

---

१. स एतमेव स स्रष्टा 'एतमेव सीमानं केशविभागावसानं विदार्य भित्वा प्रापद्यतेत्यन्वय.।

२ एको देव इति—स्वयमेक एव देव. तत्तच्छरीरेषु तत्तच्छरीरानुसारेण बहुधाऽवस्थित.। ३५

३. एकस्सन्निति ईश्वररूपेणैक एव सन् बहुधा भूत्वा विचार. विविधचरणवान् भवति।

४. श्रीनारायणाख्येति—पुरुषसूक्तस्य नारायणेति सञ्ज्ञा। अत एव पुरुषेण नारायणेनोपतिष्ठते इति श्रौतसूत्रे तत्र नारायणपदप्रयोगः।

त्येवमादिप्रत्यक्षविज्ञानम् । अयमहमिति विषयेण विषयिणः सामानाधिकरण्योपचारात् । "नान्यदतोऽस्ति द्रष्टृ" इत्यन्यात्मप्रतिषेधाच्च । देहावयवविशेष्यत्वाच्च सुखदुःखयोर्विषयधर्मत्वम् । "आत्मनस्तु कामाय" इत्यात्मार्थश्रुतेरयुक्तत्वमिति चेन्न । "यत्र वा अन्यदिव स्यादि"त्यविद्याविषयात्मार्थत्वाभ्युपगमात् । "तत्केन कं पश्येत्" "नेह नानाऽस्ति किंचन" "तत्र को मोहः कः शोक एकत्वमनुपश्यतः" इत्यादिना विद्याविषये तत्प्रतिषेधाच्च
५ नाऽऽत्मधर्मत्वम् ।

### तार्किकमतविरोधपरिहारः

तार्किकसमयविरोधादयुक्तमिति चेन्न । युक्त्याऽप्यात्मनो दुःखित्वानुपपत्तेः । नहि दुःखेन प्रत्यक्षविषयेणाऽऽत्मनो विशेष्यत्वं प्रत्यक्षाविषयत्वात् । आकाशस्य शब्दगुणवत्त्ववदात्मनो दुःखित्वमिति चेन्न एकप्रत्ययविषयत्वानुपपत्तेः । नहि सुखग्राहकेण प्रत्यक्षविषयेण प्रत्ययेन नित्यानुमेयस्याऽऽत्मनो विषयीकरणमुपपद्यते तस्य च विषयी-
१० करण आत्मन एकत्वाद्विषय्यभावप्रसङ्गः । एकस्यैव विषयविषयित्वं दीपवदिति चेन्न । युगपदसंभवादात्मन्यंशानुपपत्तेश्च । एतेन विज्ञानस्य ग्राह्यग्राहकत्वं प्रत्युक्तम् । प्रत्यक्षानुमानविषययोश्च दुःखात्मनोर्गुणगुणित्वेनानुमानम् । दुःखस्य नित्यमेव प्रत्यक्षविषयत्वाद्रूपादिसामानाधिकरण्याच्च । मनःसंयोगजत्वेऽप्यात्मनि दुःखस्य सावयवत्व-

नाऽऽत्मनोऽनतिशयानन्दत्वप्रतिपादकमात्मनस्तु कामायेत्यादिवाक्यमिति मत्वाऽऽह—नेति । तदाविद्यकसंसारानुवादीत्यत्र गमकमाह—यत्रेति । अनेन हि वाक्येनाविद्यावस्थायामेवाऽऽत्मार्थत्वं सुखादेरभ्युपगम्यते । अतो न
१५ तस्याऽऽत्मधर्मत्वमित्यर्थः । आत्मनि संसारित्वस्याप्रतिपाद्यत्वेऽपि गमकमाह—तत्केनेति । आत्मनोऽसंसारित्वे विद्वदनुभवमनकूलयितुं चशब्द. ।

तर्कशास्त्रप्रामाण्यादात्मनः ससारित्वमिति शङ्कते—तार्किकेति । बुद्ध्यादिचतुर्दशगुणवानात्मेति तार्किकसमयस्तेन विरोधात्तस्यासंसारित्वमयुक्त तर्कविरुद्धो हि सिद्धान्तो भवतीत्यर्थ. । सर्वतर्कविरोधी वा कतिपयतर्कविरोधी वा सिद्धान्त ? नाऽऽद्य । तार्किकादिसिद्धान्तस्यापि मिथो वैदिकतर्कैश्च विरोधादसिद्धिप्रसङ्गात् । द्वितीये
२० तु श्रौततर्काविरोधादात्मासंसारित्वसिद्धान्तोऽपि सिध्येदित्यभिसन्धायाऽऽह—न युक्त्याऽपीति । किञ्च दु खादिरात्मधर्मो न भवति वेद्यत्वाद्रूपादिवदित्याह—नहीति । प्रत्यक्षाविषयत्वोक्त्या प्रतीचस्तद्विषयदुःखाविशेष्यत्वमुक्तमयुक्तं प्रत्यक्षाप्रत्यक्षयो' शब्दाकाशयोरिव दु'खात्मनोरपि गुणगुणित्वसम्भवादिति शङ्कते—आकाशस्येति । यत्र धर्मधर्मिभावस्तत्रैकज्ञानगम्यत्वं दृष्टं यथा शुक्लो घट इति तद्व्यापक व्यावर्तमान दु.खात्मनोर्धर्मधर्मित्वं व्यावर्तयति शब्दाकाशयोरपि गुणगुणिभावो नास्माकं सम्मत' शब्दतन्मात्रमाकाशमिति स्थितेरित्याशयेनाऽऽह—नैकेति ।
२५ कथं तदनुपपत्तिस्तत्राऽऽह—नहीति । नित्यानुमेयस्येति जरत्तार्किकमतानुसारेण साङ्ख्यसमयानुसारेण चोक्तम् । आधुनिकं तार्किकं प्रत्याह—तस्य चेति । सुखादिवदात्मनोऽपि प्रत्यक्षेण विषयीकरणे सत्येकस्मिन्देहे तदैक्यसम्मतेरात्मान्तरस्य तत्रायोगादेकत्र भोक्तृद्वयानिष्टे. पुरुषान्तरस्यान्यं प्रत्यप्रत्यक्षत्वाद्द्रष्टृभावादात्मदृश्यत्वासिद्धिरित्यर्थ. । दीपस्य स्वव्यवहारहेतुत्वेन विषयविषयित्ववदेकस्यैवाऽऽत्मनो द्रष्टृदृश्यत्वसिद्धेर्द्रष्ट्रभावो नास्तीति शङ्कते—एकस्यैवेति । आत्मनो विषयविषयित्व कार्त्स्न्येनांशाभ्या वा । आद्येऽपि युगपत्क्रमेण वा । नाऽऽद्य इत्याह—न
३० युगपदिति । क्रियाया गुणत्वं कर्तृत्व तत्र प्राधान्यं कर्मत्वमतो युगपदेकक्रिया प्रत्येकस्य साकल्येन गुणप्रधानत्वायोगान्नैवमित्यर्थः । न द्वितीय. । एकभावेऽन्याभावादिति मत्वा कल्पान्तरं प्रत्याह—आत्मनीति । एतेन प्रदीपदृष्टान्तोऽपि प्रतिनीतस्तस्यांशाभ्या तद्भावे प्रकृताननुकूलत्वात् ।

ननु विज्ञानवादिनो युगपदेकस्य विज्ञानस्य साकल्येन ग्राह्यग्राहकत्वमुपयन्ति तथा त्वदात्मनोऽपि स्यात्तत्राऽऽह—एतेनेति । एकस्योभयत्वनिरासेनेत्यर्थ. । मा भूत्प्रत्यक्षमागमिकं पारिभाषिक वाऽऽत्मनः ससारित्वम् ।
३५ आनुमानिकं तु भविष्यति दु खादि क्वचिदाश्रितं गुणत्वाद्रूपादिवदित्याश्रये सिद्धे परिशेषादात्मनस्तदाश्रयत्वादित्याशङ्क्याऽऽह—प्रत्यक्षेति । नहि मिथो विरुद्धयोर्गुणगुणित्वमनुमेयं दुःखादेश्च साभासबुद्धिस्थत्वात्पारिशेष्यासिद्धिरित्यर्थ. । साभासान्त.करणनिष्ठदु:खादीत्यत्र प्रमाणाभावात्कथं सिद्धसाधनत्वमित्याशङ्क्य दुःख्यहमित्यादिप्रत्यक्षस्य तत्र प्रमाणत्वादुक्तानुमानस्य सिद्धसाध्यतया परिशेषासिद्धिरित्याह—दुःखस्येति । यत्र रूपादिमति देहे दाहच्छेदादि दृष्टं तत्रैव तत्कृतदु.खाद्युपलम्भान्नाऽऽत्मनस्तद्वत्त्वमिति हेत्वन्तरमाह—रूपादिति ।
४० यत्त्वात्ममन'सयोगादात्मनि बुद्ध्यादयो नव वैशेषिका गुणा भवन्तीति तद्दूषति—मनःसंयोगजत्वेऽपीति । दुःखस्याऽऽत्मनि मन.सयोगजत्वेऽभ्युपगतेऽपि मनोवदात्मन. सयोगित्वात्सावयवत्वादिप्रसङ्गादात्मत्वमेव न स्यादित्यर्थः ।

विक्रियावत्त्वानित्यत्वप्रसङ्गात्। नह्यविकृत्य संयोगिद्रव्यं गुणः कश्चिदुपजनापायन्वा दृष्टः क्वचित्। न च निरवयवं विक्रियमाणं दृष्टं क्वचिदनित्यगुणाश्रयं वा नित्यम्। न चाऽऽकाश आगमवादिभिर्नित्यतयाऽभ्युपगम्यते। न चान्यो दृष्टान्तोऽस्ति। विक्रियमाणमपि तत्प्रत्ययानिवृत्तेर्नित्यमेवेति चेन्न। द्रव्यस्यावयवान्यथात्वव्यतिरेकेण विक्रियानुपपत्तेः। सावयवत्वेऽपि नित्यत्वमिति चेन्न। सावयवस्यावयवसंयोगपूर्वकत्वे सति विभागोपपत्तेः। वज्रादिष्वदर्शनान्नेति चेन्न। अनुमेयत्वात्संयोगपूर्वत्वस्य। तस्मान्नाऽऽत्मनो दुःखाद्यनित्यगुणाश्रयत्वोपपत्तिः। परस्या- ५
दुःखित्वेऽन्यस्य च दुःखिनोऽभावे दुःखोपशमनाय शास्त्रारम्भानर्थक्यमिति चेन्न। अविद्याध्यारोपितदुःखित्वभ्रमापो-

सिद्धान्ते स्रष्टुः शरीरप्रवेशप्रकारः

हार्थत्वात्। आत्मनि प्रकृतसंख्यापूरणभ्रमापोहवत्कल्पितदुःख्यात्माभ्युपगमाच्च। जलसूर्यादिप्रतिबिम्बवदात्मप्रवेशश्च प्रतिबिम्बवद्व्याकृते कार्य उपलभ्यत्वम्। प्रागुत्पत्तेरनुपलब्ध आत्मा पश्चात्कार्ये च सृष्टे व्याकृते बुद्धेरन्तरुपलभ्यमानः सूर्यादिप्रतिबिम्बवज्जलादौ कार्यं सृष्ट्वा प्रविष्ट इव लक्ष्यमाणो निर्दिश्यते "स एष इह प्रविष्टः" १०
"तत्सृष्ट्वा तदेवानुप्राविशत्" "स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत" "सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य" इत्येवमादिभिः। न तु सर्वगतस्य निरवयवस्य दिग्देशकालान्तरापक्रमणप्राप्तिलक्षणः प्रवेशः कदाचिदप्युपपद्यते। न च परादात्मनोऽन्योऽस्ति द्रष्टा "नान्यदतोऽस्ति द्रष्टृ" "नान्यदतोऽस्ति

तत्र संयोगित्वेन सक्रियत्वं साधयति—नहीति। सम्प्रति सक्रियत्वेन सावयवत्वं प्रतिपादयति—न चेति। यद्वा दुःखाद्यात्मनो विक्रियेति कैश्चिदिष्टत्वात्तस्य सक्रियत्वमविरुद्धमित्याशङ्क्याऽऽह—न चेति। आत्मा न परिणामी १५
निरवयवत्वान्नभोवदिति भावः। किञ्चाऽऽत्मा न गुणी नित्यत्वात्सामान्यवदित्याह—अनित्येति। नित्यं पश्याम इति शेषः। वाशब्दो नञनुकर्षणार्थः।

आकाशे व्यभिचारमाशङ्क्याऽऽह—न चेति। आकाशस्य नित्यत्वं चेत् 'आत्मन आकाशः सम्भूतः' इत्यादिश्रुतिविरोधः स्यादिति सूचयितुमागमवादिभिरित्युक्तम्। परमाण्वादौ व्यभिचारमाशङ्क्याऽऽह—न चान्य इति। न तावदणवः सन्ति व्यणुकेतरसत्त्वे मानाभावाद्दिशश्चाऽऽकाशेऽन्तर्भवन्ति कालस्तु 'सर्वे निमेषा जज्ञिरे' इत्यादिश्रुतेरुत्पत्तिमान्मनोऽप्यन्नमयं श्रुतिप्रसिद्धमतो न क्वचिद्व्यभिचार इति भावः। यस्मिन्विक्रियमाणे तदेवेदमिति बुद्धिर्न विहन्यते २०
तदपि नित्यमिति न्यायेन परिणामवादी शङ्कते—विक्रियमाणमिति। तत्प्रत्ययस्तदेवेदमिति प्रत्ययः। विक्रियां वदता द्रव्यस्यावयवान्यथात्वं वाच्यं तदेव तस्यानित्यत्वमत्यन्ताभावस्य प्रामाणिकत्वे दुर्वचत्वादिति परिहरति—न द्रव्यस्येति।

आत्मनः सक्रियत्वं सावयवत्वं वाऽस्तु तथाऽपि नानित्यत्वमिति स्याद्वादी शङ्कते—सावयवत्वेऽपीति। २५
यत्सावयवं तदवयवसंयोगकृतं यथा पटादि तथा सति संयोगस्य विभागावसानत्वादवयवविभागे द्रव्यनाशोऽवश्यम्भावीति दूषयति—न सावयवस्येति। यत्सावयवं तदवयवसंयोगपूर्वकमिति न व्याप्तिः। सावयवेष्वेव वज्रादिष्ववयवसंयोगपूर्वकत्वे प्रमाणाभावादिति शङ्कते—वज्रादिष्विति। विमतमवयवसंयोगपूर्वकं सावयवत्वात्पटवदित्यनुमानेन परिहरति—नानुमेयत्वादिति। आत्मनो मनःसंयोगजन्यदुःखादिगुणत्वे सावयवत्वसक्रियत्वानित्यत्वादिप्रसङ्गं प्रतिपाद्य प्रकृतमुपसंहरति—तस्मादिति। ३०

आत्मनोऽनर्थध्वंसार्थशास्त्रारम्भान्यथानुपपत्त्या संसारित्वमर्थापत्त्या शङ्कते—परस्येति। अविद्याविद्यमानमात्मस्थमनर्थभ्रमं निराकर्तुं तदारम्भः सम्भवतीत्यन्यथोपपत्त्या समाधत्ते—नाविद्येति। परस्यैवाविद्याकृतसंसारित्वभ्रान्तिध्वंसार्थं शास्त्रमित्येतद्दृष्टान्तेन स्पष्टयति—आत्मनीति। यत्तु परस्यादुःखित्वमन्यस्य च दुःखिनोऽसत्त्वं तत्राऽऽह—कल्पितेति। न तावत्परस्मादन्यो दुःखी 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिश्रुतेः। स पुनरनाद्यनिर्वाच्याज्ञानसम्बन्धात्तज्जन्यैर्बुद्ध्यादिभिरैक्याध्यासमापन्नः संसरति। तथा च कल्पिताकारद्वारा दुःखिनः परस्याऽऽत्मनोऽङ्गीकाराच्छास्त्रार्थापत्तेरुत्थानमित्यर्थः। परस्य प्रवेशे प्राप्तां दोषपरम्परां पराकृत्य तत्प्रवेशस्वरूपं निरूपयति—जलेति। ३५
यथा जले सूर्यादेः प्रतिबिम्बलक्षणः प्रवेशो दृश्यते तथाऽऽत्मनोऽपि सृष्टे कार्ये काल्पनिकः प्रवेश इत्यर्थः। अनवच्छिन्नाद्वयचिद्धातोर्वस्त्वन्तरेण सन्निकर्षासम्भवान्न प्रतिबिम्बाख्यप्रवेशः सम्भवतीत्याशङ्क्य वस्त्वन्तरकल्पनया कल्पितसन्निकर्षाद्यादाय प्रतिबिम्बपक्षं साधयति—आत्मेति। तदेव प्रपञ्चयति—प्रागुत्पत्तेरित्यादिना।

स्वाभिप्रेतं प्रवेशं प्रतिपाद्य परेष्टं प्रत्याचष्टे—न त्विति। कुतश्चिद्दिशो देशात्कालाच्चापक्रमणेन दिगन्तरे ४०

श्रोतृ" इत्यादिश्रुतेरित्यवोचाम ।,उपलब्ध्यर्थत्वाच्च सृष्टिप्रवेशस्थित्यप्ययवाक्यानाम् उपलब्धेः पुरुषार्थत्वश्रवणात् । "आत्मानमेवावेत् तस्मात्तत्सर्वमभवत्" "ब्रह्मविदाप्नोति परम्" "स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति" "आचार्यवान्पुरुषो वेद तस्य तावदेव चिरम्" इत्यादिश्रुतिभ्यः । "ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्" "तद्धयग्र्यं सर्वविद्यानां प्राप्यते ह्यमृतं ततः" इत्यादिस्मृतिभ्यश्च । भेददर्शनापवादाच्च सृष्ट्यादिवाक्यानामात्मैकत्व-
५ दर्शनार्थपरत्वोपपत्तिः । तस्मात्कार्यस्थस्योपलभ्यत्वमेव प्रवेश इत्युपचर्यते ।

प्रवेशे दृष्टान्ताः

आ नखाग्रेभ्यो नखाग्रमर्यादमात्मनश्चैतन्यमुपलभ्यते । तत्र कथमिव प्रविष्ट इत्याह—यथा लोके क्षुरधाने क्षुरो धीयतेऽस्मिन्निति क्षुरधानं तस्मिन्नापितोपस्कराधाने क्षुरोऽन्तःस्थ उपलभ्यतेऽवहितः प्रवेशितः स्याद्यथा वा विश्वंभरोऽग्निर्विश्वस्य भरणात् । विश्वंभरकुलाये नीडेऽग्निः काष्ठादावविहितः स्यादित्यनुवर्तते तत्र हि स मथ्यमान
१० उपलभ्यते । यथा च क्षुरः क्षुरधान एकदेशेऽवस्थितो यथा चाग्निः काष्ठादौ सर्वतो व्याप्यावस्थित एव सामान्यतो विशेषतश्च देहं संव्याप्यावस्थित आत्मा । तत्र हि स प्राणनादिक्रियावान्दर्शनादिक्रियावांश्चोपलभ्यते । तस्मात्तत्रैवं प्रविष्टं तमात्मानं प्राणनादिक्रियाविशिष्टं न पश्यन्ति नोपलभन्ते । नन्वप्राप्तप्रतिषेधोऽयं तं न पश्यन्तीति दर्शनस्य अप्रकृतत्वात् । नैष दोषः । सृष्ट्यादिवाक्यानामात्मैकत्वप्रतिपत्त्यर्थपरत्वात्प्रकृतमेव तस्य दर्शनम् । "रूपं रूपं प्रति-

अकृत्स्नत्वोपपादनम्

१५ रूपो बभूव तदस्य रूपं प्रतिचक्षणाय" इति मन्त्रवर्णात् । तत्र प्राणनादिक्रियाविशिष्टस्य दर्शने हेतुमाह—अकृत्स्नोऽसमस्तो हि यस्मात्स प्राणनादिक्रियाविशिष्टः । कुतः पुनरकृत्स्नत्वमिति । उच्यते । प्राणन्नेव प्राणनक्रियामेव कुर्वन्प्राणो नाम प्राणसमाख्यः प्राणाभिधानो भवति । प्राणनक्रियाकर्तृत्वाद्धि प्राणः प्राणितीत्युच्यते नान्या क्रियां

देशान्तरे कालान्तरे च प्राप्तिलक्षण इति यावत् । यत्तु परस्मादन्यस्य प्रवेष्टृत्वमिति तत्राऽऽह—न चेति । अथेदं प्रवेशादि वस्तुतो विद्यमानमस्तु किमित्याविद्य कल्प्यते तत्राऽऽह—उपलब्धेति । आत्मज्ञानार्थत्वेन प्रवेशादीना
२० कल्पितत्वात्तद्वाक्याना न स्वार्थे पर्यवसानमित्यर्थ. । फलवत्सनिधावफलं तदङ्गमिति न्यायमाश्रित्योक्तमेव प्रपञ्चयति—उपलब्धेरित्यादिना । तत शब्दो भक्तियोगपरामर्शी । तदित्यात्मज्ञानमुच्यते । तस्याग्र्यत्व साधयति—प्राप्यते ह्येति । सृष्ट्यादिवाक्यानामैक्यज्ञानार्थत्वे हेत्वन्तरमाह—भेदेति । कल्पितं प्रवेश प्रतिपादितमुपसहरति—तस्मादिति ।

का पुनरस्य प्रवेशस्य मर्यादित्याशङ्क्याऽऽह—आ नखाग्रेभ्य इति । सम्भवति मर्यादान्तरे किमिति प्रवेशस्येयमेव मर्यादित्याशङ्क्याऽऽह—नखाग्रेति । दृष्टान्तद्वयमाकाङ्क्षापूर्वकमुत्थापयति—तत्रेति । प्रवेशाधारो देहादिः
२५ सप्तम्यर्थः । प्रथमोदाहरणप्रतीकोपादानम्—यथेति । तद्व्याचष्टे—लोक इति । तत्र प्रवेशितत्व क्षुरस्य कथ सिद्धमत आह—अन्तःस्थ उपलभ्यत इति । विश्वम्भरशब्दस्याग्निविषयत्व व्युत्पादयति—विश्वस्येति । तस्य तद्भर्तृत्व महाभूतत्वाज्जाठरत्वाद्वा द्रष्टव्यम् । काष्ठादावग्नेरवहितत्वे युक्तिमाह—तत्रेति । दृष्टान्तद्वये विवक्षितमशमनूद्य दार्ष्टान्तिकमाह—यथेत्यादिना । आत्मनो जाग्रत्स्वप्नयोर्देहे द्वयी वृत्ति स्वापे तु सामान्यवृत्तिरेवेत्यवान्तरविभागमाह—तत्र ह्येति । अवस्थाद्वय सप्तम्यर्थ; । न केवल विशेषवृत्तिरेव तदोपलभ्या किन्तु सामान्यवृत्तिश्चेति चकारार्थ ।
३० अवस्थान्तरे सैवेत्यपि तस्यैवार्थ । वाक्यन्तरमवतारयितु भूमिकामाह—तस्मादिति । यस्मादुभयी वृत्तिरात्मनः शरीरे दृश्यते तस्मात्तत्रैव जलसूर्यवदविद्यया प्रविष्टोऽयमिति योजना । व्याकृताज्जगत. सकाशादात्मान पृथक्कर्तुं तं न पश्यन्तीति वाक्य तद्व्याचष्टे—तमात्मानमिति । विशिष्टं पश्यन्तोऽपि केवलमात्मान न पश्यन्तीति यावत् । चाक्षुपत्वनिषेधस्येष्टत्वमाशङ्क्य व्याचष्टे—नोपलभन्त इति ।

उक्तनिषेधमाक्षिपति—नन्विति । प्रतिषेध्यस्य प्राप्ति दर्शयन्परिहरति—नेत्यादिना । 'तन्नामरूपाभ्यां' । स
३५ एष इत्यादिवाक्याना ज्ञानार्थत्वे मानमाह—रूपमिति । विशिष्टस्य दर्शनेऽपि पूर्णस्यादर्शने हेतूक्तिरनन्तरवाक्यमित्याह—तत्रेति । प्रतिज्ञावाक्यार्थे स्थिते सतीति यावत् । तस्मात्तद्दर्शनेऽपि पूर्णस्यादर्शनमिति शेषः । विशिष्टस्यापि पूर्णत्व-मात्मत्वादन्यथा प्राणनादिकर्तृत्वायोगादिति शङ्कते—कुत इति । प्राणनादिक्रियाकर्ता प्राणादिभिः सहतत्वात्पूर्णो न भवतीत्युत्तरवाक्यैरुत्तरमाह—उच्यत इति । आत्मनि प्राणशब्दप्रवृत्तिमुपपादयति—प्राणनक्रियाकर्तृत्वाद्धीति । तत्कर्तृत्वादात्मा प्राण उच्यते प्राणितीति व्युत्पत्तेरिति योजना । सदृष्टान्तमेवकारार्थमाह—नान्यामिति । एवकारार्थ-
४० मनूद्य हेत्वर्थमुपसंहरति—तस्मादिति ।

कुर्वन् । यथा लावकः पाचक इति । तस्मात्क्रियान्तरविशिष्टस्यानुपसंहारादकृत्स्नो हि सः । तथा वदन्वदनक्रियां कुर्वन्वक्तीति वाक्पश्यंश्चक्षुश्चष्ट इति चक्षुर्दृष्टा शृण्वञ्शृणोति श्रोत्रम् । प्राणन्नेव प्राणो वदन्वागित्याभ्यां क्रियाशक्त्युद्भवः प्रदर्शितो भवति, पश्यंश्चक्षुः शृण्वञ्श्रोत्रमित्याभ्यां विज्ञानशक्त्युद्भवः प्रदर्श्यते । नामरूपविषयत्वाद्धि ज्ञानशक्तेः श्रोत्रचक्षुषी विज्ञानस्य साधने विज्ञानं तु नामरूपसाधनम् । न हि नामरूपव्यतिरिक्तं विज्ञेयमस्ति । तयोश्चोपलम्भे करणं चक्षुःश्रोत्रे । क्रिया च नामरूपसाध्या प्राणसमवायिनी । तस्याः प्राणाश्रयाया अभिव्यक्तौ ५ वाक्करणम् । तथा पाणिपादपायूपस्थाख्यानि । सर्वेषामुपलणार्था वाक् । एतदेव हि सर्वं व्याकृतम् । "त्रयं वा इदं नाम रूपं कर्म" इति हि वक्ष्यति । मन्वानो मनो मनुत इति ज्ञानशक्तिविकासानां साधारणं करणं मनो मनुतेऽनेनेति पुरुषस्तु कर्ता सन्मन्वानो मन इत्युच्यते । तान्येतानि प्राणादीन्यस्यात्मनः कर्मनामानि कर्मजानि नामानि कर्मनामान्येव नतु वस्तुमात्रविषयाणि[1] । अतो न कृत्स्नात्मवस्त्ववद्योतकानि । एवं ह्यसावात्मा प्राणनादिक्रियया तत्त-

एकैकक्रियाविशिष्टत्वेनोपासने दोषः　　१०

क्रियाजनितप्राणादिनामरूपाभ्यां व्याक्रियमाणोऽवद्योत्यमानोऽपि । स योऽतोऽस्मात्प्राणनादिक्रियासमुदायादेकैकं प्राणं चक्षुरिति वा विशिष्टमनुपसंहृतेतरविशिष्टक्रियात्मकं मनसाऽयमात्मेत्युपास्ते चिन्तयति न स वेद न जानाति ब्रह्म । कस्मात् ? अकृत्स्नोऽसमस्तो हि यस्मादेष आत्माऽस्मात्प्राणनादिसमुदायात् । अतः प्रविभक्त एकैकेन विशेषणेन विशिष्ट इतरधर्मान्तरानुपसंहाराद्भवति । यावदयमेवं वेद पश्यामि शृणोमि स्पृशामीति वा स्वभावप्रवृत्तिविशिष्टं वेद तावदञ्जसा कृत्स्नमात्मानं न वेद । कथं पुनः पश्यन्वेदेत्याह—आत्मेत्येवाऽऽत्मेति प्राणादीनि विशेषणानि १५ यान्युक्तानि तानि यस्य स आप्नुवंस्तान्यात्मेत्युच्यते । स तथा कृत्स्नविशेषोपसंहारी सन्कृत्स्नो भवति । वस्तु-

स्वापावस्थायां समस्तकरणोपसंहारेऽपि प्राणस्य व्यापारदर्शनात्प्राधान्यावगमात्प्राणन्नित्यादिवाक्यमादौ व्याख्याय क्रियाशक्तित्वेन प्राणसादृश्याद्वाचो वदन्नित्येतत्पूर्वकमुत्तरवाक्यानि व्याचष्टे—तथेत्यादिना । प्राणनवदनाभ्यामनुक्तकर्मेन्द्रियव्यापारमुपलक्ष्य वाक्यद्वयतात्पर्यमाह—प्राणन्नेवेति । प्राणवागाद्युपाधिद्वारेणाऽऽत्मनीति शेषः । दृष्टिश्रुतिभ्यामनुक्तज्ञानेन्द्रियव्यापारोपलक्षणं कृत्वाऽनन्तरवाक्ययोस्तात्पर्यमाह—पश्यन्निति । चक्षुराद्युपाधिद्वाराऽऽत्मनीति २० पूर्ववत् । उक्तबुद्धीन्द्रियव्यापाराभ्यामनुक्तं तद्व्यापारमुपलक्ष्याऽऽत्मनः स्प्रष्टृत्वादिपरिच्छेदो न सिध्यति सम्बन्धं विनोपलक्षणायोगादित्याशङ्क्याऽऽह—नामरूपेत्यादिना । प्रकाश्यप्रकाशकातिरिक्तज्ञेयाभावात्तदुपलम्भे च चक्षुःश्रोत्रयोरिव त्वगादेरपि करणत्वादेकार्थत्वरूपसंबन्धादुपलक्षणसंभवादात्मनः स्प्रष्टृत्वादिसिद्धिरित्यर्थः । तथाप्युक्तकर्मेन्द्रियव्यापारेणानुक्ततद्व्यापारोपलक्षणादात्मनो न गन्तृत्वादिपरिच्छेदः सङ्गच्छते विना सम्बन्धमुपलक्षणासिद्धेरित्याशङ्क्याऽऽह—क्रिया चेत्यादिना । सर्वा क्रिया नामरूपव्यङ्ग्या प्राणाश्रया च तत्र प्राणाश्रयनामविषयोच्चारणक्रिया- २५ व्यञ्जकत्वं वाचो हस्तादीनां तदाश्रयादानादिव्यञ्जकता तस्मादेकाश्रय[2]क्रियाव्यञ्जकत्वयोगादुपलक्षणसम्भवादात्मनो गन्तृत्वादिसिद्धिरित्यर्थः । शक्तिद्वयोद्भवोक्त्या समस्तसंसारस्य प्रतीच्यध्यासोऽत्र विवक्षित इत्याह—एतदेवेति । उद्भूतं शक्तिद्वयमेतच्छब्दार्थः, उक्तेऽर्थे वाक्यशेषमनुकूलयति—त्रयमिति । आत्मा मन्वानः सन्मन इत्युच्यते मनुत इति व्युत्पत्तेरिति वाक्यान्तरं व्याचष्टे—मन्वान इति । करणे प्रसिद्धस्य मनःशब्दस्य कथमात्मनि वृत्तिरित्याशङ्क्य व्युत्पत्तिभेदमाह—ज्ञानशक्तीत्यादिना । आत्मादिशब्देभ्यो विशेषमाह—तानीति । कृत्स्नात्मवस्त्ववद्योतकानि न ३० भवन्तीत्येतदेव स्फुटयति—एवं हीति । प्राणादीनां कर्मनामत्वे सतीति यावत् । अवद्योत्यमानोऽपि न कृत्स्नो दृष्टः स्यादिति शेषः ।

अकृत्स्नदर्शिनोऽप्यात्मदर्शित्वमाशङ्क्याऽऽह—स य इति । आत्मोपासितुरात्मदर्शनासत्त्वमयुक्तमिति शङ्कित्वा परिहरति—कस्मादित्यादिना । तस्माद्विशिष्टात्मदर्शी न ब्रह्मात्मत्वदर्शीति शेषः । उपास्तिज्ञानमुपास्त इति न जानाति स्वभावादुपासनमित्युक्तत्वात् । तथा च जानन्न जानातीति व्याहतिरित्याशङ्क्याऽऽह—यावदिति । ३५ एवं वेदेत्येतदेव विव्रियते—पश्यामीत्यादिना । आकाङ्क्षापूर्वकं विद्यासूत्रमवतारयति—कथमिति । तत्र व्याख्येयं पदमादत्ते—आत्मेतीति । तद्व्याचष्टे—प्राणादीनीति । तस्मिन्दृष्टे पूर्वोक्तदोषराहित्यं दर्शयति—स तथेति ।

---

१. वस्तुमात्रविषयाणि सिद्धवस्तुनि तात्पर्यवन्ति ।

२ एकाश्रयेति—एक आश्रयो मनः तद्गतक्रियावृत्तयो मननाद्याः, तद्व्यञ्जकः आत्मनः तत्र प्रतिबिम्बित्वात् ।

मात्ररूपेण हि प्राणाद्युपाधिविशेषक्रियाजनितानि विशेषणानि व्याप्नोति। तथा च वक्ष्यति—"ध्यायतीव लेलायतीव" इति। तस्मादात्मेत्येवोपासीत। एवं कृत्स्नो ह्यसौ स्वेन वस्तुमात्ररूपेण गृह्यमाणो भवति। कस्मात्कृत्स्न इत्याशङ्क्याऽऽह—अत्रास्मिन्नात्मनि हि यस्मान्निरुपाधिके जलसूर्यप्रतिबिम्बभेदा इवाऽऽदित्ये प्राणाद्युपाधिकृता विशेषाः प्राणादिकर्मजनामा भधेया यथोक्ता ह्येत एकमभिन्नतां भवन्ति प्रतिपद्यन्ते।

५

## विद्यासूत्रे विधिविमर्शः

आत्मेत्येवोपासीतेति नापूर्वविधिः। पक्षे प्राप्तत्वात्। "यत्साक्षादपरोक्षाद्ब्रह्म" "कतम आत्मेति योऽयं विज्ञानमय." इत्येवमाद्यात्मप्रतिपादनपराभिः श्रुतिभिरात्मविषयं विज्ञानमुत्पादितम्। तत्राऽऽत्मस्वरूपविज्ञानेनैव तद्विषयानात्माभिमानबुद्धिः कारकादिक्रियाफलाध्यारोपणात्मिकाऽविद्या निवर्तिता। तस्यां निवर्तितायां कामादिदोषानुपपत्तेरनात्मचिन्तानुपपत्तिः। पारिशेष्यादात्मचिन्तैव। तस्मात्तदुपासनमस्मिन्पक्षे न विधातव्यं प्राप्तत्वात्।

१० तिष्ठतु तावत्पाक्षिक्यात्मोपासनप्राप्तिर्नित्या वेति। अपूर्वविधिः स्यात्। ज्ञानोपासनयोरेकत्वे तदप्राप्तत्वात्। न स वेदेति विज्ञानं प्रस्तुत्याऽऽत्मेत्येवोपासीतेत्यभिधानाद्वेदोपासनशब्दयोरेकार्थताऽवगम्यते "अनेन ह्येतत्सर्वं वेद" "आत्मानमेवावेत्" इत्यादिश्रुतिभ्यश्च विज्ञानमुपासनम्। तस्य चाप्राप्तत्वाद्विध्यर्हत्वम्।

न च स्वरूपान्वाख्याने पुरुषप्रवृत्तिरुपपद्यते। तस्मादपूर्वविधिरेवायम्। कर्मविधिसामान्याच्च। यथा

तत्तद्विशेषणव्याप्तिद्वारेणेति यावत्। कथ तत्तद्विशेषोपसहारी तेन तेनाऽऽत्मना तिष्ठन्कृत्स्न. स्यात्तत्राह—**वस्तु-**

१५ **मात्रेणे**ति। स्वतोऽस्य प्राणनादिसम्बन्धे सम्भवति किमित्युपाधिसम्बन्धेनेत्याशङ्क्याऽऽह—**तथा चे**ति। आत्मनि सर्वोपसंहारवति दृष्टे पूर्वोक्तदोषाभावात्त पश्यन्नेवाऽऽत्मदर्शीत्युपसहरति—**तस्मा**दिति। यथोक्तात्मोपासने पूर्वोक्तदोषाभावे प्रागुक्तमेव हेतु स्मारयति—**एवमि**ति। तस्यार्थं स्फोरयति—**स्वेने**ति। वाङ्मनसातीतेनाकार्यकरणेन प्रत्यग्भूतेनेति यावत्। आकाङ्क्षापूर्वकमुत्तरवाक्यमवतार्य व्याकरोति—**कस्मादि**त्यादिना। तस्माद्यथोक्तमात्मानमेवोपासीतेति शेष। अस्यैव द्योतको द्वितीयो हिशब्द।

२० विद्यासूत्र विधिस्पर्शं विना विवक्षितेऽर्थे व्याख्यायापूर्वविधिरयमिति पक्ष प्रत्याह—**आत्मेत्येवे**ति। अत्यन्ताप्राप्तार्थो ह्यपूर्वविधिर्यथा स्वर्गकामोऽग्निहोत्र जुहुयादिति। नायं तथा पक्षे प्राप्तत्वादात्मोपासनस्य। तस्य तत्प्राप्तिश्च पुरुषविशेषापेक्षया विचारावसाने स्पष्टीभविष्यतीत्यर्थ। इदानीमात्मज्ञानस्याविधेयत्वख्यापनार्थं वस्तुस्वभावालोचनया नित्यप्राप्तिमाह—**यत्साक्षा**दिति। उत्पाद्यतामुक्तश्रुतिभिरात्मविज्ञान किं तावतेत्यत आह—**तत्रे**ति। कारकादीत्यादिपदं तदवान्तरभेदविषयम्। नन्वविद्यायामपनीतायामपि रागद्वेषादिसद्भावाद्वैधी प्रवृत्तिः

२५ स्यान्नहि विद्वदविदुषोर्व्यवहारे कश्चिद्विशेष 'पश्वादिभिश्चाविशेषा'दितिन्यायादत आह—**तस्या**मिति। बाधितानुवृत्तिमात्राच्च वैधी प्रवृत्तिरबाधिताभिमानमन्तरेण तदयोगादिति भाव। विदुष सुषुप्ततुल्यत्व व्यावर्तयति—**पारिशेष्या**दिति। श्रौतज्ञानात्पूर्वमपि सर्वासा चित्तवृत्तीना जन्मनैवाऽऽत्मचैतन्यव्यञ्जकत्वात्प्राप्तमात्मज्ञान श्रौते तु ज्ञाने नास्त्यनात्मेति स्फुरणमात्मज्ञानमेवेति नित्यप्राप्तिमभिप्रेत्याऽऽह—**तस्मा**दिति। अस्मिन्पक्ष इति नित्यप्राप्तत्वपक्षोक्तिः। अपूर्वविधिवादी शङ्कते—**तिष्ठतु ताव**दिति। सर्वेषा स्वभावतो विषयप्रवणानीन्द्रियाणि नाऽऽत्मज्ञान-

३० वार्तामपि मृष्यन्ते तदत्यन्ताप्राप्तत्वादात्मज्ञाने भवत्यपूर्वविधिरिति भाव। विशिष्टस्याधिकारिण शाब्दज्ञान शब्दादेव सिद्धमिति कथमप्राप्तिरित्याशङ्क्याऽऽह—**ज्ञाने**ति। न खल्वत्र शाब्दज्ञान विवक्षितं किन्तूपासनम्। उपासनं नाम मानस कर्म तदेव ज्ञानावृत्तिरूपत्वाज्ज्ञानमित्येकत्वे सत्यप्राप्तत्वाद्विधेयमित्यर्थं। तयोरेकत्व विवृणोति—**ने**त्यादिना। अनेन हीत्यादौ वेदशब्दस्यार्थान्तरविषयत्ववन्न स वेदेत्यत्रापि किं न स्यादित्याशङ्क्याऽऽह—**अनेने**ति। उक्तश्रुतिभ्यो यद्विज्ञान श्रुत तदुपासनमेवेति योजना। 'स योऽत एकैकमुपास्ते' इत्युपक्रमात् 'आत्मेत्येवोपासीत'

३५ इत्युपसहाराच्च न स वेदेत्यत्र तावद्वेदशब्दस्योपासनार्थत्वमेष्टव्यमन्यथोपक्रमोपसंहारविरोधात्। तथा चार्थवंशसासम्भवादुपासनमेव सर्वत्र वेदन तच्च सर्वथैवाप्राप्तमिति तस्मिन्नपूर्वविधि स्यादिति भावः।

इतश्च तस्मिन्नेष्टव्यो विधिरित्याह—**न चे**ति। अत. प्रवर्तको विधिरुपेय इति शेषः। स चात्यन्ताप्राप्तविषयत्वान्नियमादिरूपो न भवतीत्याह—**तस्मा**दिति। आत्मोपास्तिर्विधेयेत्यत्र हेत्वन्तरमाह—**कर्मविधी**ति।

---

१. आत्मेति—अत्रात्मनोपासनविधिर्नास्ति अपि त्वात्मज्ञानमात्रमात्मस्वरूपबोधकवाक्यप्राप्तमनूद्यते, अन्ते 'अनेन

४० ह्येतत् सर्वं वेद' इति एकविज्ञानेन सर्वविज्ञानोक्तेः उपासनेन तदलाभात्। अतः विधिं निराकर्तुमारभते-आत्मेति।

"यजेत जुहुयात्" इत्यादयः कर्मविषयो न तैरस्य "आत्मेत्येवोपासीत आत्मा वा अरे द्रष्टव्यः" इत्याद्यात्मोपासनविधेर्विशेषोऽवगम्यते। मानसक्रियात्वाच्च विज्ञानस्य। यथा "यस्यै देवतायै हविर्गृहीतं स्यात्तां मनसा ध्यायेद्वषट्करिष्यन्"त्याद्या मानसी क्रिया विधीयते, तथा "आत्मेत्येवोपासीत" "मन्तव्यो निदिध्यासितव्यः" इत्याद्या क्रियैव विधीयते ज्ञानात्मिका। तथाऽवोचाम वेदोपासनशब्दयोरेकार्थत्वमिति।

उपासनविधेरंशत्रयोद्भावनम्　　५

भावनांशत्रयोपपत्तेश्च। यथा हि यजेतेत्यस्यां भावनायां किङ्केन कथमिति भाव्याद्याकाङ्क्षापनयकारणमंशत्रयमवगम्यते, तथोपासीतेत्यस्यामपि भावनाया विधीयमानायां किमुपासीत केनोपासीत कथमुपासीतेत्यस्यामाकाङ्क्षायामात्मानमुपासीत मनसा त्यागब्रह्मचर्यशमदमोपरमतितिक्षादीतिकर्तव्यतासंयुक्तः इत्यादि शास्त्रेणैव समर्थ्यतेंऽशत्रयम्। यथा च कृत्स्नस्य दर्शपूर्णमासादिप्रकरणस्य दर्शपूर्णमासादिविध्युद्देशत्वेनोपयोगः। एवमौपनिषदात्मोपासनप्रकरणस्याऽऽत्मोपासनविध्युद्देशत्वेनैवोपयोगः। नेति नेत्यस्थूलमेकमेवाद्वितीयमशनायाद्यतीतः १० इत्येवमादिवाक्यानामुपास्यात्मस्वरूपविशेषसमर्पणेनोपयोगः। फलञ्च मोक्षोऽविद्यानिवृत्तिर्वा।

कर्मात्मज्ञानविध्यो. शब्दानुसारेणाविशेषमभिदधाति—यथेत्यादिना। सम्प्रत्यर्थतोऽप्यविशेषमाह्—मानसेति। तदेव दृष्टान्तेन स्पष्टयति—यथेति। यदि क्रिया विधीयते कथ ज्ञानात्मिकेति विशेष्यते तत्राऽऽह्—तथेति।

इतश्चाऽऽत्मोपासने विधिरस्तीत्याह्—भावनेति। वेदान्तेषु भावनापेक्षितांशत्रयोपपत्ति विशदयितुं दृष्टान्तमाह्—यथेति। भावनाया विधीयमानत्वे सतीति शेषः। प्रेरणाधर्मकः शब्दव्यापार. स्वज्ञानकरणकः १५ स्तुत्यादिज्ञानेतिकर्तव्यताकः पुरुषप्रयत्नभाव्यनिष्ठ शब्दभावनोच्यते। स्वर्गं यागेन प्रयाजादिभिरुपकृत्य साधयेदिति पुरुषप्रवृत्तिरर्थभावनेति विभाग· दृष्टान्तस्थमर्थं दार्ष्टान्तिके योजयति—तथेत्यादिना। त्यागो निषिद्धकाम्यवर्जनम्। उपरमो नित्यनैमित्तिकत्याग। तितिक्षादीत्यादिपद समाधानादिसंग्रहार्थमित्यंशत्रयमिति सम्बन्धः। शास्त्रं 'शान्तो दान्त' इत्यादि। उक्तप्रकारमंशत्रयमन्यदपि सुलभमिति वक्तुमादिपदम्। विधियुक्ताना वेदान्ताना कार्यपरत्वेऽपि तद्धीनाना तेषां वस्तुपरतेत्याशङ्क्याऽऽह्—यथा चेति। विध्युद्देशत्वेन तच्छेषत्वेनेति यावत्। अस्थूलादिवाक्या- २० नामारोपितद्वैतनिषेधेनाद्वयं वस्तु समर्पयता कथमुपास्तिविधिशेषत्वमित्याशङ्क्याऽऽह्—नेत्यादिना। 'ब्रह्म वेद ब्रह्मैव भवति' 'तरति शोकमात्मवित्' इत्यादीना फलार्पकत्वेनोपास्तिविध्युपयोगमभिप्रेत्याऽऽह्—फलञ्चेति। मोक्षो ब्रह्मप्राप्तिः।

---

१. क्रियैव विधेया यत्नसाध्यत्वात् ननु ज्ञानं यथाप्रमाणं जायमानत्वात् तदाह्—मानसेति। 'यस्यै देवतायै हविर्गृहीत स्यात् तां देवतां मनसा ध्यायेत्'। इति वाक्यमधिकृत्य संकर्षकाण्डे चतुर्थतृतीयपादे सप्तमाधिकरणे विचारः कृत। तथा हि—किमस्मिन् वाक्ये देवतारूपध्यान विवक्षित उत् २५ देवतावाचिशब्दध्यानमिति संशय. पूर्वकाण्डे नवमाध्याये यद्यपि विग्रहादिपञ्चक निरस्तं तथापि स नाधिकरणार्थः न देवतातः कर्मफल न देवताप्रयुक्ता धर्मा. न स्वरूपेण देवता कर्मण्यङ्गभावं प्रतिपद्यते इत्यधिकरणार्थ.। यत्र पुनः देवताध्यानमुपदिश्यते तत्रेतिहासपुराणमन्त्रार्थवादेभ्य. स्मृतिभ्यश्च देवतास्वरूप ध्यातव्यमिति प्राप्ते ब्रूमः—देवतासम्बन्धिनः शब्दस्यैव ध्येयत्वं श्रुतिसमवायात् 'आग्नेयमैन्द्रम्' इत्यादौ श्रुत्यैव देवताप्रातिपदिकस्य तद्धितेन ध्येयत्वं, नार्थे, मुख्यत्वाच्च—मुख्यश्च प्राधान्याच्छब्द. जघन्यश्चार्थः पश्चाद्भावात्। ३० तस्माच्छब्द एव ध्यातव्य इति सिद्धान्त·।

२. भावनांशत्रयेति—आत्मानमुपासीत इत्यत्र लिङर्थ शब्दभावना लिङ्त्वेनोच्यते अर्थभावना तु तिप्त्वेन। तत्र शब्दभावना प्रेरणेत्युच्यते। सा च लौकिकलिङः अयमत्र प्रवर्ततामित्याकारकोऽभिप्रायविशेष· वैदिकलिङ्स्तु उच्चारकपुरुषाभावात् तादृशाभिप्रायसमानाकार धर्मविशेष. लिङ्निष्ठोऽभ्युपेयते तस्या अप्यंशत्रय—किं ? अर्थभावनारूपा प्रवृत्तिः। केन ? लिङादिज्ञानेन। कथम् ? अर्थवादजन्यप्राशस्त्यज्ञानेनोपकृत्येति प्रतिपादितम्। अर्थ- ३५ भावनायास्तु—किम् ? इति फलजिज्ञासा, सा स्वर्गादिना अन्यत्र पूर्यते अत्र तु मोक्ष एव फलं तस्यैवात्मोपासनफलत्वात् 'केन: ? आत्मोपासनेन' अत्र आत्मानमिति द्वितीया 'तृतीयार्थे आत्मविशिष्टोपासन विधीयते' इत्यत्र भाष्यतात्पर्य यथाश्रुते आत्मनः उपासने गुणभूतत्वात् न फलत्वम्—'अध्वर्युं वृणीते' इत्यत्र अध्वर्युविशिष्टवरणं विधेयं कर्मकरणाय तद्वत्।

३. विध्युद्देशत्वेन विधिप्रदेशत्वेन तत्र विहिताना विधिशेषत्वात्। ४०

### "आत्मेत्येवोपासीत" इत्यस्य व्याख्यान्तरम्

अपरे वर्णयन्त्युपासनेनाऽऽत्मविषयं विशिष्टं विज्ञानान्तरं भावयेत्तेनाऽऽत्मा ज्ञायतेऽविद्यानिवर्तकञ्च तदेव नाऽऽत्मविषयं वेदवाक्यजनितं विज्ञानमिति। एतस्मिन्नर्थे वचनान्यपि—"विज्ञाय[1] प्रज्ञां कुर्वीत" "द्रष्टव्यः श्रोतव्यो

### आत्मज्ञाने विधिनिरासः

५ मन्तव्यो निदिध्यासितव्यः" "सोऽन्वेष्टव्यः स विजिज्ञासितव्यः" इत्यादीनि। न, अर्थान्तराभावात्। न च "आत्मेत्येवोपासी०" इत्यपूर्वविधिः। कस्मात्। आत्मस्वरूपकथनानात्मप्रतिषेधवाक्यजनितविज्ञानव्यतिरेकेणार्थान्तरस्य[2] कर्तव्यस्य मानसस्य बाह्यस्य वाऽभावात्। तत्र हि विधेः साफल्यं यत्र विधिवाक्यश्रवणमात्रजनितविज्ञानव्यतिरेकेण पुरुषप्रवृत्तिर्गम्यते। यथा "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्येवमादौ।

नहि दर्शपूर्णमासविधिवाक्यजनितविज्ञानमेव दर्शपूर्णमासानुष्ठानम्। तच्चाधिकाराद्यपेक्षानुभावि। न तु
१० "नेति नेति" इत्याद्यात्मप्रतिपादकवाक्यजनितविज्ञानव्यतिरेकेण दर्शपूर्णमासादिवत्पुरुषव्यापारः सम्भवति। सर्वव्यापारोपशमहेतुत्वात्तद्वाक्यजनितविज्ञानस्य। न ह्युदासीनविज्ञानं प्रवृत्तिजनकमब्रह्मानात्मविज्ञाननिवर्तकत्वाच्च "एकमेवाद्वितीयम्" "तत्त्वमसि" इत्येवमादिवाक्यानाम्। न च तन्निवृत्तौ प्रवृत्तिरुपपद्यते विरोधात्।

वाक्यजनितविज्ञानमात्रान्नाब्रह्मानात्मविज्ञाननिवृत्तिरिति चेन्न। "तत्त्वमसि" "नेति नेति" "आत्मैवेदम्" "एकमेवाद्वितीयम्" "ब्रह्मैवेदममृतम्" "नान्यदतोऽस्ति द्रष्टृ" "तदेव ब्रह्म त्वं विद्धि" इत्यादिवाक्यानां तद्वादि-
१५ त्वात्। द्रष्टव्यविधेर्विषयसमर्पकाण्येतानीति चेन्न अर्थान्तराभावादित्युक्तोत्तरत्वात्। आत्मवस्तुस्वरूपसमर्पकैरेव वाक्यैस्तत्त्वमसीत्यादिभिः श्रवणकाल एव तद्दर्शनस्य कृतत्वाद्द्रष्टव्यविधेर्नानुष्ठानान्तरं कर्तव्यमित्युक्तोत्तरमेतत्।

आत्मोपासन विधेयमिति पक्षमुक्त्वा पक्षान्तरमाह—अपर इति। तस्यानुपयोगमाशङ्क्याऽऽह—तेनेति। शाब्दस्य ज्ञानस्याससृष्टापरोक्षात्मविषयत्वाभावमितिशब्देन हेतू करोति। ज्ञानान्तरं वेदान्तेषु विधेयमित्यत्र मानमाह—एतस्मिन्निति। पक्षद्वये प्राप्ते प्रथमपक्ष प्रत्याह—नार्थान्तराभावादिति। तत्र नञर्थमेव स्वयं
२० व्याचष्टे—न चेति। शाब्दज्ञानवतो विषयाभावान्न विधिः सम्भवत्यविद्यातत्कार्यनिवृत्तौ स्वयं फलावस्थत्वाच्चेत्यर्थं। हेतुभाग प्रश्नपूर्वकं विवृणोति—कस्मादित्यादिना। आत्मोपदेशेनानात्मनिषेधद्वारा वाक्योत्थज्ञानातिरेकेणेति यावत्। कर्तव्यान्तराभावेऽपि वाक्यजन्यविज्ञानमेव विधेय स्यादित्याशङ्क्याऽऽह—तत्र हीति।

दृष्टान्तेऽपि वाक्योत्थज्ञानातिरेकेण पुरुषप्रवृत्तिरसिद्धेत्याशङ्क्याऽऽह—न हीति। तदनुष्ठानं तर्हि वाक्यार्थज्ञानाधीनमिति व्यर्थो विधिस्तत्राऽऽह—तच्चेति। अधिकारो विधिपुरुषसम्बन्धस्तत्कृतज्ञानापेक्षमनुष्ठानमित्यर्थ-
२५ वान्विधिरित्यर्थं। तर्हि प्रकृतेऽपि वाक्योत्थज्ञानव्यतिरेकेण पुरुषव्यापारसम्भवाद्विधिसाफल्यमित्याशङ्क्याऽऽह—नत्विति। अथ विमत प्रवर्तक वैदिकज्ञानत्वाद्विधिवाक्योत्थज्ञानवदित्याशङ्क्य प्रवर्तकविषयत्वमुपाधिरित्याह—नहीति। मिथ्याज्ञानानिवर्तकत्वमुपाध्यन्तरमाह—अब्रह्मेति। वाक्योत्थज्ञानस्य तन्निवर्तकत्वेऽपि प्रवर्तकत्व किं न स्यादित्याशङ्क्याऽऽह—न चेति।

द्वितीयोपाधेः साधनव्याप्तिं शङ्कते—वाक्येति। ब्रह्मात्मैक्यधीपरवाक्योत्थविज्ञानस्याज्ञानतत्कार्यध्वंसित्व-
३० ध्रौव्यान्न साधनव्याप्तिरित्याह—नेत्यादिना। तद्वादित्वाद्वस्तुपरत्वादिति यावत्। उक्ताना वाक्याना विध्यपेक्षितार्थसमर्पकत्वेन तच्छेषत्व शङ्कितमनुभाषते—द्रष्टव्येति। सिद्धान्तोपक्रमेण समाहितमेतदित्याह—नेति। तदेव स्पष्टयति—

---

१. विज्ञाय—साक्षात्कृत्य प्रज्ञा—आत्मज्ञानावृत्तिमित्यर्थं।

२. आत्मस्वरूपकथनं 'सत्य ज्ञानमनन्त ब्रह्मे'त्यादिना। अनात्मप्रतिषेधः 'नेति नेती'त्यनेन। उभाभ्या शुद्धं ब्रह्म निर्गुणं ज्ञायते। तेनैवाविद्यानिवृत्तिसिद्धेः प्राप्तव्याभावात् न विधिना प्रयोजनम्।

३५ ३ अनात्मवस्तुभेदाः अनात्मवस्तुविशेषाः, अनात्मन. मिथ्याभूतस्य सत्यत्वेन ग्रहणमनर्थाय यथा मिथ्याभूतस्यसर्पस्य सत्यरज्जुत्वेन ग्रहणम्।

४. अधिकारो विधिपुरुषसम्बन्ध इति। फलभोक्तृत्वसमानाधिकरण कर्तृत्वमधिकारः।

५. दृष्टान्ते साध्यव्यापक पक्षे आत्मज्ञानबोधकवाक्येषु तदभावात् साधनाव्यापकता—अत उपाधिः। मिथ्याज्ञाननिवर्तकत्वोपाधिरपि एवमेवोपपादनीयः।

### स्वरूपज्ञानं वेदान्तवाक्यैरेव जायते न तत्र विध्यपेक्षा

आत्मस्वरूपान्वाख्यानमात्रेणाऽऽत्मविज्ञाने विधिमन्तरेण न प्रवर्तत इति चेन्न। आत्मवादिवाक्यश्रवणेनाऽऽत्मविज्ञानस्य जनितत्वात्किं भोः कृतस्य करणम्। तच्छ्रवणेऽपि न प्रवर्तत इति चेन्न। अनवस्थाप्रसङ्गात्। यथाऽऽत्मवादिवाक्यार्थश्रवणे विधिमन्तरेण न प्रवर्तते तथा विधिवाक्यार्थश्रवणेऽपि विधिमन्तरेण न प्रवर्तिष्यत इति विध्यन्तरापेक्षा। तथा तदर्थश्रवणेऽपीत्यनवस्था प्रसज्येत। ५

वाक्यजनितात्मज्ञानस्मृतिसन्ततेः श्रवणविज्ञानमात्रादर्थान्तरत्वमिति चेन्नार्थप्राप्तत्वात्। यदैवाऽऽत्मप्रतिपादकवाक्यश्रवणादात्मविषयं विज्ञानमुत्पद्यते तदैव तदुत्पद्यमानं तद्विषयं मिथ्याज्ञानं निवर्तयदेवोत्पद्यते। आत्मविषयमिथ्याज्ञाननिवृत्तौ च तत्प्रभवाः स्मृतयो न भवन्ति स्वाभाविक्योऽनात्मवस्तुभेदविषयाः। अनर्थत्वावगतेश्च। आत्मावगतौ हि सत्यामन्यद्वस्त्वनर्थत्वेनावगम्यते। अनित्यदुःखाशुद्ध्यादिबहुदोषवत्त्वादात्मवस्तुनश्च तद्विलक्षणत्वात्। तस्मादनात्मविज्ञानस्मृतीनामात्मावगतेरभावप्राप्तिः। पारिशेष्यादात्मैकत्वविज्ञानस्मृतिसन्ततेरर्थत एव भावान्न विधेयत्वम्। शोकमोहभयायासादिदुःखदोषनिवर्तकत्वाच्च तत्स्मृतेः। विपरीतज्ञानप्रभवो हि शोकमोहादिदोषः। तथा च "तत्र को मोहः" "विद्वान्न बिभेति कुतश्चन" "अभयं वै जनक प्राप्तोऽसि" "भिद्यते हृदयग्रन्थिः" इत्यादिश्रुतयः। १०

### चित्तवृत्तिनिरोधविधिनिरासः

निरोधस्तर्ह्यर्थान्तरमिति चेत्। अथापि स्याच्चित्तवृत्तिनिरोधस्य वेदवाक्यजनितात्मविज्ञानादर्थान्तरत्वात् तन्त्रान्तरेषु च कर्तव्यतयाऽवगतत्वाद्विधेयत्वमिति चेन्न। मोक्षसाधनत्वेनानवगमात्[1]। नहि वेदान्तेषु १५

आत्मेति। परोक्तमुद्भावयति—आत्मस्वरूपेति। कुत्र तर्हि विधिरात्मज्ञाने वा वाक्यश्रवणे वा तदर्थज्ञानस्मृतिसन्ताने वा चित्तवृत्तिनिरोधे वा? नाऽऽद्य इत्याह—नाऽऽत्मवादीति। द्वितीत शङ्कते—तच्छ्रवणेऽपीति। अनिष्टार्थवादिवाक्यस्यासत्यादिलक्षणस्य विधिं विना श्रवणात्तत्त्वमादेरपि तस्मादृते श्रवणमविरुद्धमित्यभिसन्धाय दोषान्तरमाह—नेत्यादिना। तत्त्वमादिश्रवणप्रयोजको विधिरात्मनोऽपि प्रयुङ्क्ते श्रवणमिति चेन्नैवं स खल्वध्ययनविधिरन्यो वा? आद्ये तदपेक्षया श्रुतस्य तत्त्वमस्यादे. स्वार्थबोधित्वं कर्मवाक्यवदिति स्वार्थनिष्ठत्वाविशेष:, द्वितीये तस्याप्रमाणत्वात्तदीयस्वपरनिर्वाहकत्व दूरोत्सारितमित्यभिप्रेत्यानवस्था विवृणोति—यथेत्यादिना। २०

तृतीयमाशङ्कते—वाक्यजनितेति। तत सा विधेयेति शेप:। तस्या विधेयत्वं दूपयति—नेति। अर्थप्राप्ति विवृणोति—यदैवेति। अनात्मस्मृतिहेत्वज्ञाननिवृत्तौ तत्कार्यस्मृत्यनुपपत्तेः स्वभावबलप्राप्तैवाऽऽत्मस्मृतिरित्युक्तमिदानीमनात्मस्मृतेरनर्थत्वस्यान्वयव्यतिरेकसिद्धत्वाच्चाऽऽत्मस्मृति' स्वभावप्राप्तेत्याह—अनर्थत्वेति। अनात्मनोऽनर्थत्वनिश्चयाच्च तदीयस्मृत्यनुपपत्तावितरस्मृतिरर्थप्राप्तेत्याह—आत्मावगताविति। आत्मनश्च परमेष्टत्वावगमादर्थप्राप्ता तदीयस्मृतिरित्याह—आत्मवस्तुनश्चेति। अर्थप्राप्त्या विधेयत्वाभावमुपसहरति—तस्मादिति। अनात्मस्मृतिहेत्वज्ञानाभावादिस्तच्छब्दार्थः। अर्थत चिदेकरसात्मस्वभावबलादिति यावत्। दृष्टफलत्वाच्चाऽऽत्मस्मृतिर्न विधेयेत्याह—शोकेति। मिथ्याज्ञानमेव सा निवर्तयति न शोकादीत्याशङ्क्याऽऽह—विपरीतेति। आत्मस्मृतेः शोकादिनिवर्तकत्वे मानमाह—तथा चेति। २५ ३०

चतुर्थमुत्थापयति—निरोधस्तर्हीति। यदि वाक्योत्थज्ञानादेरविधेयत्वं तर्हि चित्तवृत्तिनिरोधो मुक्तिसाधनत्वेन विधीयतां तस्योक्तज्ञानादेरर्थान्तरत्वादित्यर्थः। चोद्यमेव विवृणोति—अथापीति। अर्थान्तरत्वात्तस्य विधेयतेति शेषः। तस्य मुक्तिहेतुत्वेन विधेयत्वे योगशास्त्रं सम्वादयति—तन्त्रान्तरेष्विति। 'अथ योगानुशासनमि'ति

---

१. मोक्षसाधनत्वेनानवगमात्—इदमेवावलम्ब्य श्रीमधुसूदनसरस्वतीभिः गीतागूढार्थदीपिकाया ६-२९ श्लोके चित्तनाशस्य ध्यानयोगः ज्ञानञ्चेति साधनद्वयसत्वेऽपि प्रथममुपाय प्रपञ्चसत्यत्ववादिनः प्रतिपेदिरे। द्वितीयं तु औपनिषदाः श्रीभगवत्पादानुयायिन' प्रतिपेदिरे। तेषा साक्षिणि कल्पितस्य प्रपञ्चस्य विचारदार्ढ्येनाभावदर्शनादेव लयः चित्तलयादेव चित्तादर्शनमुपपद्यते। अत एव भगवत्पादाः ब्रह्मविदां योगापेक्षा न व्युत्पादयाम्बभूवुरित्याहुः। वार्तिककाराश्च निदिध्यासनशब्दः न ध्यानमनुपयोगात् अपि तु 'अपरायत्तबोधो हि निदिध्यासनमुच्यते' इत्यादिना श्रवणमनने कृत्वा स्थितस्य वाक्यार्थज्ञानान्तरायहीनस्यानायासेन वाक्यीयो वाक्यार्थबोधो निदिध्यासनमित्याहुः। अत एव श्रीनीलकण्ठीयतत्स्थलीयटीका न भाष्यानुसारीति गम्यते। ३५ ४०

ब्रह्मात्मविज्ञानादन्यत्परमपुरुषार्थसाधनत्वेनावगम्यते। "आत्मानमेवावेत्तस्मात्सर्वमभवत्" "ब्रह्मविदाप्नोति परम्" "स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति" "आचार्यवान्पुरुषो वेद तस्य तावदेव चिरम्" "अभयं हि वै ब्रह्म भवति य एवं वेद" इत्येवमादिश्रुतिशतेभ्य । अनन्यसाधनत्वाच्च निरोधस्य न ह्यात्मविज्ञानतत्स्मृतिसन्तानव्यतिरेकेण चित्तवृत्तिनिरोधस्य साधनमस्ति। अभ्युपगम्येदमुक्तं न तु ब्रह्मविज्ञानव्यतिरेकेणान्यन्मोक्षसाधनमवगम्यते।

५ **भावनाया आकांक्षात्रयाभावाख्यायं विधिः**

आकाङ्क्षाभावाच्च भावनाभावः। यदुक्तं यजेतेत्यादौ किङ्केन कथमिति भावनाकाङ्क्षायां फलसाधनेतिकर्तव्यताभिराकाङ्क्षापनयनं यथा तद्वदिहाप्यात्मविज्ञानविधावप्युपपद्यत इति। तदसत्। एकमेवाद्वितीयं 'तत्त्वमसि' 'नेति नेत्यनन्तरमबाह्यमयमात्मा ब्रह्मे'त्यादिवाक्यार्थविज्ञानसमकालमेव सर्वाकाङ्क्षाविनिवृत्तेः। न च वाक्यार्थविज्ञाने विधिप्रयुक्तः प्रवर्तते। विध्यन्तरप्रयुक्तौ चानवस्थादोषमवोचाम। न चैकमेवाद्वितीय ब्रह्मेत्यादि-

१० वाक्येषु विधिरवगम्यते। आत्मस्वरूपान्वाख्यानेनैवावसितत्वात्।

वस्तुस्वरूपान्वाख्यानमात्रत्वादप्रामाण्यमिति चेत्। अथापि स्याद्यथा 'सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्व'-

निःश्रेयसहेतुः समाधिः सूत्रितस्तस्य च लक्षणमुक्तं 'योगश्चित्तवृत्तिनिरोध' इति। तन्निरोधावस्थायां चाऽऽत्मनः स्वरूपप्रतिष्ठत्वं कैवल्यमाख्यातं तदा द्रष्टुः स्वरूपेऽवस्थानमित्येवं योगशास्त्रे मुक्तिहेतुत्वेनेष्टो निरोधविधिरित्यर्थः। योगशास्त्रादपि बलवती श्रुतिमाश्रित्योत्तरमाह—नेत्यादिना। चित्तवृत्तिनिरोधस्य मुक्तिहेतुत्वेऽपि न विधेयत्वं विधिं

१५ विना तत्सिद्धेरित्याह—अनन्येति। न तावद्यथाकथञ्चिन्निरोधो विधेयः सर्वस्यापि तत्सम्भवाद्विधिवैयर्थ्यान्नापि सर्वात्मना तन्निरोधो विधेयो ज्ञानादेव तत्सिद्धेर्विध्यानर्थक्यादित्यर्थः। 'नान्यः पन्था विद्यते' 'ज्ञानादेव तु कैवल्यमि'त्यादिशास्त्रमनुसरन्नुपेत्यवाद त्यजति—अभ्युपगम्येति। निरोधस्य मुक्तिहेतुत्वमिदमा परामृष्टम्। योगशास्त्रमपि श्रुतिस्मृतिविरोधे न प्रमाणम्। 'एतेन योगः प्रत्युक्त' इति न्यायादिति भावः।

वेदान्तेषु विधेयाभावोक्त्या विधिर्निरस्तः सम्प्रत्यंशत्रयवती भावना तेष्वस्तीत्युक्तं दूषयति—आकाङ्क्षेति।

२० तदेव स्फुटयितुमुक्तमनुवदति—यदुक्तमिति। आगमावष्टम्भेन निराचष्टे—तदसदिति। विधिमन्तरेण वाक्यार्थज्ञाने प्रवृत्त्ययोगाद्विध्यमेव ज्ञानं सर्वाकाङ्क्षानिवर्तकमित्याशङ्क्याऽऽह—न चेति। यथा कर्मकाण्डे स्वाध्यायविधेरर्थावबोधपर्यन्तत्वेन ज्योतिष्टोमादिविध्यर्थज्ञाने विध्यन्तरं नापेक्षते तथा ज्ञानकाण्डेऽपि स्यादित्यर्थः। तत्रापि वेदः कृत्स्नोऽधिगन्तव्य इति विध्यन्तरप्रयुक्तमेव वाक्यार्थज्ञानमित्याशङ्क्याऽऽह—विध्यन्तरेति। श्रुतहान्यश्रुतकल्पनाप्रसङ्गाच्च न विधिशेषत्वं वेदान्तानामित्याह—न चेति।

२५ वेदान्ताः स्वार्थे न मानं सिद्धार्थवाक्यत्वात्सोऽरोदीदित्यादिवदित्यनुमानात्तेषां विधिशेषत्वं प्रामाण्यार्थमेष्ट-

---

१. वस्तुस्वरूपान्वाख्याने दृष्टान्त 'सोऽरोदीदि'त्यादि 'सोऽरोदीद्यदरोदीत् तद्रुद्रस्य रुद्रत्वं यदश्रवीयत तद्रजतं हिरण्यमभवत् तस्माद्बर्हिषि रजतं न देयं अश्रुजं हि' ( तै० सं० १-५-१ ) इत्यर्थवादः। यज्ञे रजते दक्षिणात्वेन न देयमिति निषेधस्य अर्थवाद । रजतदाननिन्दामात्रपर्यवसायी न तु कथायामस्य तात्पर्यमित्यर्थः। वस्तुस्वरूपान्वाख्यानमात्रत्वात् अप्रामाण्यम्। स्वमुख्यार्थे अप्रामाण्य कार्यान्वयाभावात् सिद्धार्थस्येत्यर्थः। निषेधैकवाक्यतया

३० निन्दाबोधकत्वेन प्रामाण्यं सिद्धान्ते।

२. निरोध चित्तवृत्तिनिरोध, स च योगतन्त्रे सम्यगेव निरूप्यते। स चात्र नापेक्षितः। मोक्षसाधनेषु शमदमादिष्वन्तर्भावात्। तत्रोपरतिः संन्यास, इदमपि ज्ञानसाधनत्वेन कीर्त्यते न तु मोक्षाय। तत्र ज्ञानस्यैव हेतुत्वश्रवणात्।

३. एतेन योगः प्रत्युक्त इति द्वितीयाध्यायप्रथमपादगतं द्वितीयाधिकरणसूत्रम्। तदर्थश्च एतेन साङ्ख्यस्मृतिनिरा-

३५ करणहेतुना स च हेतुः स्वतन्त्रप्रधानाभ्युपगमस्य श्रुतिविरुद्धत्वात्। महदाद्यलौकिकपदार्थाभ्युपगमादिरूपः। तेन न्यायेन योगोऽपि निरसनीयः। योगोक्तासनप्राणायामादयस्तु स्वीक्रियन्ते तत्रैव शास्त्रतात्पर्यात्। प्रधानादौ तु न तात्पर्यमित्यर्थः।

४. वेदान्ता स्वार्थे न मानं सिद्धार्थवाक्यत्वादित्यनुमाने फलवन्निश्चितज्ञानाजनकत्वमुपाधिः 'सोऽरोदीत्' इत्याद्यर्थवादे साध्यव्यापकत्वात् पक्षे साधनाव्यापकत्वाच्चेति भावः।

मित्येवमादौ वस्तुस्वरूपान्वाख्यानमात्रत्वादप्रामाण्यमेवमात्मार्थवाक्यानामपीति चेन्न। विशेषात्। न वाक्यस्य वस्त्वन्वाख्यानं क्रियान्वाख्यानं वा प्रामाण्याप्रामाण्यकारणं किं तर्हि निश्चितफलवद्विज्ञानोत्पादकत्वम्। तद्यत्रास्ति तत्प्रमाणं वाक्यं यत्र नास्ति तदप्रमाणम्।

**फलवन्निश्चितज्ञानजनकत्वात् प्रामाण्यं वेदान्ते**

किञ्च भोः पृच्छामस्त्वामात्मस्वरूपान्वाख्यानपरेषु वाक्येषु फलवन्निश्चितं च विज्ञानमुत्पद्यते न वा। ५ उत्पद्यते चेत्कथमप्रामाण्यमिति। किंवा न पश्यस्यविद्याशोकमोहभयादिसंसारबीजदोषनिवृत्तिं विज्ञानफलम्। न शृणोषि वा किं "तत्र को मोहः कः शोक एकत्वमनुपश्यत." "मन्त्रविदेवास्मि नाऽऽत्मवित्सोऽहं भगवः शोचामि तं मा भगवाञ्छोकस्य पारं तारयतु" इत्येवमाद्युपनिषद्वाक्यशतानि। एवं विद्यते किं सोऽरोदीदित्यादिषु निश्चितं फलवच्च विज्ञानम्। न चेद्विद्यतेऽस्त्वप्रामाण्यम्। तदप्रामाण्ये फलवन्निश्चितविज्ञानोत्पादकस्य किमित्यप्रामाण्यं स्यात्। तदप्रामाण्ये च दर्शपूर्णमासादिवाक्येषु को विश्रम्भः। १०

ननु दर्शपूर्णमासादिवाक्यानां पुरुषप्रवृत्तिविज्ञानोत्पादकत्वात्प्रामाण्यम्। आत्मविज्ञानवाक्येषु तन्नास्तीति। सत्यमेवम्। नैष दोषः। प्रामाण्यकारणोपपत्तेः प्रामाण्यकारणं च यथोक्तमेव नान्यत्। अलङ्कारश्चायं यत्सर्व-

**प्रज्ञां कुर्वीतेत्यस्य न ज्ञानावृत्तिविधायकता**

प्रवृत्तिबीजनिरोधफलवद्विज्ञानोत्पादकत्वमात्मप्रतिपादकवाक्यानां नाप्रामाण्यकारणम्। यत्तूक्तं "विज्ञाय प्रज्ञां कुर्वीते"त्यादिवचनानां वाक्यार्थविज्ञानव्यतिरेकेणोपासनार्थत्वमिति। सत्यमेतत्। किन्तु नापूर्वविध्यर्थता पक्षे १५ प्राप्तस्य नियमार्थतैव।

व्यमिति शङ्कते—वस्तुस्वरूपेति। तदेवानुमान प्रपञ्चयति—अथापीति। विधेरश्रुतत्वेऽपीति यावत्। फलवन्निश्चित-[1] ज्ञानाजनकत्वमुपाधिरिति मन्वानः समाधत्ते—न विशेषादिति। नञर्थं स्पष्टयति—न वाक्यस्येति। विशेषं व्याचष्टे—किं तर्हीति। तस्य प्रामाण्यप्रयोजकत्वमन्वयव्यतिरेकाभ्यां दर्शयति—तद्यत्रेति। सामान्यन्यायं प्रकृते योजयन्पृच्छति—किञ्चेति। किं तेषु तादृग्ज्ञानमुत्पद्यते न वेति प्रश्नार्थः। द्वितीयेऽनुभवविरोधः स्यादिति मत्वा पक्षान्तरमनूद्य २० प्रत्याह—उत्पद्यते चेदिति। प्रामाण्ये हेतुसद्भावान्नाप्रामाण्यमित्यर्थः। निश्चितज्ञानजनकत्वेऽपि फलवत्त्वविशेषण-मसिद्धमित्याशङ्क्याऽऽह—किंवेति। विद्वदनुभवफलश्रुतिसिद्ध विशेषणमिति भावः। दृष्टान्तं विघटयितुं प्रश्नान्तरं प्रस्तौति—एवमिति। वेदान्तेष्विवेति यावत्। किंवा नेति शेषः। आद्ये साध्यवैकल्यं मत्वा द्वितीयं दूषयति—न चेदिति। तर्हि तद्दृष्टान्तेन तत्त्वमस्यादेरपि स्यादप्रामाण्यमित्याशङ्क्याऽऽह—तदप्रामाण्य इति। विमतं स्वार्थे मानं यथोक्तज्ञानजनकत्वाद्दर्शादिवाक्यवदिति भावः। विपक्षे दोषमाह—तदप्रामाण्ये चेति। २५

प्रवर्तकज्ञानजनकत्वमुपाधिरिति शङ्कते—नन्विति। साधनव्याप्तिं धुनीते—आत्मेति। प्रवर्तकधीजनकत्वं धर्मिणि नास्तीत्यङ्गीकरोति—सत्यमिति। तर्हि यथोक्तोपाधिसद्भावादनुमानानुत्थानमित्याशङ्क्याऽऽह—नैष दोष इति। न हि प्रवर्तकधीजनकत्वं प्रामाण्ये कारणं निषेधवाक्येष्वप्रामाण्यप्रसङ्गात्। न च निवर्तकधीजनकत्वमपि तथा; विधावप्रामाण्यप्रसङ्गात्। नोभयं प्रत्येकमभयकारणत्वाभावेनाप्रामाण्यादिति भावः। वेदान्तेषु प्रवर्तकधीजन-कत्वाभावो न केवलमदोषः किन्तु गुण इत्याह—अलङ्कारश्चेति। 'आत्मानं चेदि'त्यादिश्रुते'रेतद्बुध्वे'त्यादिस्मृतेश्चाऽऽत्म- ३० ज्ञानं कृतकृत्यतानिदानम्। न च ज्ञानस्य प्रवर्तकत्वे तद्युक्तं प्रवृत्तीनां क्लेशाक्षेपकत्वादतो यथोक्तज्ञानजनकत्वं वाक्यानां भूषणमेवेत्यर्थः। शब्दोत्थं ज्ञानं विधेयमिति प्रतिक्षिप्य पूर्वोक्तपक्षान्तरमनुवदति—यत्तूक्तमिति। उपासनार्थत्वमित्यात्मोपासनेन तत्साक्षात्कारं भावयेदित्येवमर्थत्वमित्यर्थः। अभ्युपगमवादेन परिहरति—सत्यमिति। यथोक्तेषु वाक्येष्वात्मोपासनं तत्साक्षात्कारमुद्दिश्य विधीयते चेत्प्रकृतेऽपि वाक्ये तत्सम्भवान्नापूर्वविधिरिति प्रक्रमो भज्येतेत्याशङ्क्याऽऽह—किन्त्विति। कथं तर्हि विध्यङ्गीकारवाचोयुक्तिरित्याशङ्क्याऽऽह—पक्ष इति। यथा पक्षे ३५ प्राप्तस्यावघातस्य व्रीहीनवहन्तीति नियमरूपो विधिरङ्गीकृतस्तथाऽऽत्मोपासनस्यापि पक्षे प्राप्तस्य तदेव कर्तव्यं नानात्मोपासनमिति यो नियमस्तदर्थता प्रकृतवाक्यस्येति न प्रक्रमविरोधोऽस्तीत्यर्थः।

---

१. फलवन्निश्चितज्ञानाजनकत्वं दृष्टान्ते रुद्ररोदनवाक्ये साध्यव्यापकं पक्षे च वेदान्ते तदस्तीति तदजनकत्वाभावात् साधनाव्याप्तिः।

कथं पुनरुपासनस्य पक्षप्राप्तिर्यावता पारिशेष्यादात्मविज्ञानस्मृतिसन्ततिर्नित्यैवेत्यभिहितम् । बाढम् । यद्यप्येवं शरीरारम्भकस्य कर्मणो नियतफलत्वात्सम्यग्ज्ञानप्राप्तावप्यवश्यम्भाविनी प्रवृत्तिर्वाङ्मनःकायानाम् । लब्धवृत्तेः कर्मणो बलीयस्त्वान्मुक्तेष्वादिप्रवृत्तिवत् । तेन पक्षे प्राप्तं ज्ञानप्रवृत्तिदौर्बल्यम् । तस्मात्त्यागवैराग्यादि-साधनबलावलम्बेनाऽऽत्मविज्ञानस्मृतिसन्ततिर्नियन्तव्या भवति । न त्वपूर्वा कर्तव्या प्राप्तत्वादित्यवोचाम । तस्मात्
५ प्राप्तविज्ञानस्मृतिसन्ताननियमविध्यर्थानि विज्ञाय प्रज्ञां कुर्वीतेत्यादिवाक्यान्यन्यार्थासम्भवात् ।

आत्मेत्येवोपासीत इतिशब्दात् उपासनपरत्वस्य निषेधः

[ननु] अनात्मोपासनमिदमितिशब्दप्रयोगात् । यथा 'प्रियमित्येनदुपासीते' त्यादौ न प्रियादिगुण एवोपास्यः किं तर्हि प्रियादिगुणवत्प्राणाद्येवोपास्यम् । तथेहापीतिपरात्मशब्दप्रयोगादात्मगुणवदनात्मवस्तूपास्यमिति गम्यते । आत्मोपास्यत्ववाक्यवैलक्षण्याच्च । परेण च वक्ष्यत्यात्मानमेव लोकमुपासीतेति । तत्र च वाक्य आत्मैवोपास्य-
१० त्वेनाभिप्रेतो द्वितीयाश्रवणादात्मानमेवेति । इह तु न द्वितीया श्रूयत इतिपरश्चाऽऽत्मशब्द आत्मेत्येवोपासीतेति । अतो नाऽऽत्मोपास्य आत्मगुणश्चान्य इति त्ववगम्यते । न । वाक्यशेष आत्मन उपास्यत्वेनावगमात् । अस्यैव वाक्यस्य शेष आत्मैवोपास्यत्वेनावगम्यते । "तदेतत्पदनीयमस्य सर्वस्य यदयमात्मा" "अन्तरतरं यदयमात्मा" "आत्मानमेवावेदि"ति ।

प्रविष्टस्य दर्शनप्रतिषेधादनुपास्यत्वमिति चेत् । यस्याऽऽत्मनः प्रवेश उक्तस्तस्यैव दर्शनं वार्यते "तं न
१५ पश्यन्ती"ति प्रकृतोपादानात् । तस्मादात्मनोऽनुपास्यत्वमेवेति चेन्न । अकृत्स्नत्वदोषात् । दर्शनप्रतिषेधोऽकृत्स्न-

पाक्षिकी प्राप्तिमुक्तामाक्षिपति—कथमिति । का पुनरत्रानुपपत्तिरित्याशङ्क्याऽऽह—यावतेति । आत्मनि वाक्योत्थे विज्ञाने सत्यनात्मस्मृतिहेतूना मिथ्याज्ञानादीनामपनीतत्वाद्धेत्वभावे फलाभाव इति न्यायेन तासामसम्भ-वादात्मस्मृतिसन्ततिरेव पुनः सदा स्यात्प्रकारान्तरायोगादिति सिद्धान्तिनोक्तत्वान्नाऽऽत्मोपासनस्य पक्षे प्राप्तिरित्यर्थः । तस्य नित्यप्राप्तिमुक्तामङ्गीकरोति—बाढमिति । तर्हि नियमविधिवाचोयुक्तिरयुक्तेत्याशङ्क्याऽऽह—यद्यपीति । आत्मनि
२० नित्यापरोक्षसविदेकतानें स्मरण विस्मरणं वा यद्यपि नोपपद्यते तथाऽपि तयोस्तस्मिन्ननुभवसिद्धत्वान्नियमविधेः सावकाशत्वमित्याशयेनाऽऽह—शरीरेति । अथाऽऽरब्धफलस्यापि कर्मणः सम्यग्ज्ञानान्निवृत्तेर्न विदुषो वागादीना प्रवृत्तिरत आह—लब्धेति । यथा मुक्तस्येषुपाषाणादेरप्रतिबन्धाद्यावद्वेगं प्रवृत्तिरवश्यम्भाविनी तथा प्रवृत्तफलस्य कर्मणो ज्ञानेनोपजीव्यतया ततो बलवत्त्वात्तद्वशाद्विदुषोऽपि यावद्भोग वागादिप्रवृत्तिध्रौव्यमित्यर्थः । आरब्धकर्म-प्राबल्ये फलितमाह—तेनेति । आरब्धस्य कर्मणो यथोक्तेन न्यायेन प्राबल्ये तद्वशात्क्षुधादिदोषो यदोद्भवति तदाऽऽत्मनि
२५ विस्मरणादिसम्भवात्तज्ज्ञानप्राप्तेः पाक्षिकत्वादवश्यम्भाविकमपेक्षया तद्दौर्बल्यं स्यादित्यर्थः । तथाऽपि नियमविध्यङ्गी-कारस्य किमायातं तदाह—तस्मादिति । ज्ञानस्य पक्षे प्राप्तत्व तच्छब्दार्थः । आदिपदं ब्रह्मचर्यशमदमादिसंग्रहार्थम् । विज्ञायेत्यादिवाक्याना नियमविध्यर्थत्वमुपसंहरति—तस्मादिति । आदिपदेन प्रकृतमपि वाक्यं संगृह्यते । तच्छब्दार्थ-मेव स्पष्टयति—अन्यार्थेति ।

शाब्दज्ञानादेव पुमर्थसिद्धेस्तस्य तदावृत्तेस्तृतीयज्ञानस्य वा विधेयत्वाभावाद्वेदान्ताः शुद्धे सिद्धेऽर्थे मान-
३० मित्युक्तमिदानीमितिशब्दप्रयुक्त चोद्यमुत्थापयति—अनात्मेति । आत्मशब्दादूर्ध्वमितिशब्दप्रयोगादात्मशब्दार्थस्योपा-स्यत्वेनाविवक्षितत्वादात्मगुणकस्यानात्मनोऽव्याकृतशब्दितस्य प्रधानस्योपासनमस्मिन्वाक्ये विवक्षितमित्यर्थः । उक्तमेवार्थं दृष्टान्तेन स्पष्टयति—यथेत्यादिना । अनात्मोपासनमेवात्र विधित्सितमित्यत्र हेत्वन्तरमाह—आत्मेति । तदेव प्रपञ्चयति—परेणेति । ततो वैलक्षण्यं दर्शयति—इह त्विति । वैलक्षण्यान्तरमाह—इतिपरश्चेति । वैलक्षण्यफल-माह—अत इति । नात्रानात्मोपासनं विवक्षितमिति परिहरति—नेत्यादिना । हेत्वर्थं स्फुटयति—अस्यैवेति ।
३५ आत्मनश्चेदुपास्यत्वं तदा प्रक्रमविरोधः स्यादिति शङ्कते—प्रविष्टस्येति । आत्मनो दर्शनप्रतिषेधं प्रकटयति—यस्येति । तस्यैवेति नियमे हेतुमाह—प्रकृतेति । तच्छब्दस्य प्रकृतपरामर्शित्वात्प्रविष्टस्य च प्रकृतत्वात्तस्य तेनोपादाना-दिति हेत्वर्थः । पूर्वपक्षं निगमयति—तस्मादिति । प्राणनादिविशिष्टस्य परिच्छिन्नत्वात्तस्य दृष्टत्वेऽपि पूर्णस्य न

१. प्राणादीत्यादिना चक्षुरादेः ग्रहः ।
२. इत्यादौ 'सत्यमित्येतदुपासीत' इत्यादेः ग्रहणम् ।

त्स्वदोषाभिप्रायेण नाऽऽत्मोपास्यत्वप्रतिषेधाय। प्राणनादिक्रियाविशिष्टत्वेन विशेषणात्। आत्मनश्चेदुपास्यत्वमनभिप्रेतं प्राणनाद्येकैकक्रियाविशिष्टस्याऽऽत्मनोऽकृत्स्नत्ववचनमनर्थकं स्या'दकृत्स्नो ह्येषोऽत एकैकेन भवती'ति। अतोऽनेकैकविशिष्टस्त्वात्मा कृत्स्नत्वादुपास्य एवेति सिद्धम्।

## इतिपरत्वोक्तेरभिप्रायनिरूपणम्

यस्त्वात्मशब्दस्येतिपरः प्रयोग आत्मशब्दप्रत्यययोरात्मतत्त्वस्य परमार्थतोऽविषयत्वज्ञापनार्थम्। अन्यथाऽऽत्मानमुपासीतेत्येवमवक्ष्यत्। तथा चार्थादात्मनि शब्दप्रत्ययावनुज्ञातौ स्याताम्। तच्चानिष्टम्। "नेति नेति" "विज्ञातारमरे केन विजानीयात्" "अविज्ञातं विज्ञातृ" "यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह" इत्यादिश्रुतिभ्यः। यस्त्वात्मानमेव लोकमुपासीतेति तदनात्मोपासनप्रसङ्गनिवृत्तिपरत्वान्न वाक्यान्तरम्। ५

अनिर्ज्ञातत्वसामान्यादात्मा ज्ञातव्योऽनात्मा च। तत्र कस्मादात्मोपासन एव यत्न आस्थीयत आत्मेत्येवोपासीतेति नेतरविज्ञान इति। अत्रोच्यते—तदेतदेव प्रकृतं पदनीयं गमनीयं नान्यदस्य सर्वस्येति निर्धारणार्था षष्ठी। अस्मिन्सर्वस्मिन्नित्यर्थः। यदयमात्मा यदेतदात्मतत्त्वं, किं न विज्ञातव्यमेवान्यत् न किं तर्हि ज्ञातव्यत्वेऽपि न पृथग्ज्ञानान्तरमपेक्षत आत्मज्ञानात्। कस्मात्। अनेनाऽऽत्मना ज्ञातेन हि यस्मादेतत्सर्वमनात्मजातमन्यद्यत्तत्सर्वं समस्तं वेद जानाति। नन्वन्यज्ञानेनान्यन्न ज्ञायत इति। अस्य परिहारं दुन्दुभ्यादिग्रन्थेन वक्ष्यामः। १०

कथं पुनरेतत्पदनीयमिति। उच्यते—यथा ह वै लोके पदेन गवादिखुराङ्कितो देशः पदमित्युच्यते तेन पदेन नष्टं विविदिसितं पशुं पदेनान्वेषमाणोऽनुविन्देल्लभेत। एवमात्मनि लब्धे सर्वमनुलभत इत्यर्थः। नन्वात्मनि १५

दृष्टेति निषेधश्रुतिपर्यवसानान्नोपक्रमविरोधोऽस्तीति परिहरति—नेत्यादिना। तदेव विशदयति—दर्शनेति। कथमयमभिप्रायमेद श्रुतेरवगम्यते तत्राऽऽह—प्राणनादीति। प्राणन्नेवेत्यादिना। क्रियाविशेषविशिष्टत्वेनाऽऽत्मनो विशेषणात्तस्य दृष्टत्वेऽपि नासौ परिपूर्णो दृष्टः स्यादिति श्रुतेराशयो लक्ष्यते केवलस्य तु तस्योपास्यत्वमभिसंहितमकृत्स्नत्वदोषाभावादित्यर्थः उक्तमर्थं व्यतिरेकमुखेन साधयति—आत्मनश्चेदिति। तस्यानुपास्यत्वार्थं तद्वचनमर्थवदित्याशङ्क्य तदुपास्यत्वनिषेधस्याऽऽत्मोपास्यत्वे पर्यवसानमभिप्रेत्याऽऽह—अतोऽनेकैकेति। २०

उपक्रमोपसंहाराभ्यामुपास्यत्वमात्मनो दर्शितमिदानीमितिशब्दप्रयोगादनात्मोपासनमिदमित्युक्तं प्रत्याह—यस्त्विति। प्रयोगशब्दादुपरिष्टात्सशब्दो द्रष्टव्यः। इतिशब्दस्य यथोक्तार्थत्वाभावे दोषमाह—अन्यथेति। न चाऽऽत्मनः स्वातन्त्र्येणानुपास्यत्वार्थमितिशब्दोऽर्थवान्पूर्वापरवाक्यविरोधादिति द्रष्टव्यम्। इतिशब्दमन्तरेण वाक्यप्रयोगे दोषमाह—तथेति। तस्य शब्दप्रत्ययविषयत्वमिष्टमेवेति चेत्तत्राऽऽह—तच्चेति। आत्मोपास्यत्ववाक्यवैलक्षण्यादनात्मोपासनमेतदित्युक्तं तद्दूषयति—यस्त्विति। २५

आत्मैव ज्ञातव्यो नानात्मेति प्रतिज्ञायामत्र हीत्यादिना हेतुरुक्त सम्प्रति तदेतत्पदनीयमित्यादिवाक्यापोह्यं चोद्यमुत्थापयति—अनिर्ज्ञातत्वेति। उत्तरमाह—अत्रेति। निर्धारणमेव स्फोरयति—अस्मिन्निति। नान्यदित्युक्तत्वादनात्मनो विज्ञातव्यत्वाभावश्चेदनेन हीत्यादिशेषविरोधः स्यादिति शङ्कते—किं नेति। तस्याज्ञेयत्व निषेधति—नेति। तस्यापि ज्ञातव्यत्वे नान्यदिति वचनमनवकाशमित्याह—किं तर्हीति। तस्य सावकाशत्वं दर्शयति—ज्ञातव्यत्वेऽपीति। आत्मनः सकाशादनात्मनोऽर्थान्तरत्वात्तस्याऽऽत्मज्ञानाज्ज्ञातव्यत्वायोगाज्ज्ञातव्यत्वे ज्ञानान्तरमपेक्षितव्यमेवेति शङ्कते—कस्मादिति। उत्तरवाक्येनोत्तरमाह—अनेनेति। आत्मन्यनात्मजातस्य कल्पितत्वात्तस्य तदतिरिक्तस्वरूपाभावात्तज्ज्ञानेनैव ज्ञातत्वसिद्धेर्नास्ति ज्ञानान्तरापेक्षेत्यर्थः। लोकदृष्टिमाश्रित्यानेनेत्यादिवाक्यार्थमाक्षिपति—नन्विति। आत्मकार्यत्वादनात्मनस्तस्मिन्नन्तर्भावात्तज्ज्ञानेन ज्ञानमुचितमिति परिहरति—अस्येति। ३०

सत्योपायाभावादात्मतत्त्वस्य पदनीयत्वासिद्धिरिति शङ्कते—कथमिति। असत्यस्यापि श्रुत्याचार्यादेरर्थक्रियाकारित्वसम्भवादात्मतत्त्वस्य पदनीयत्वोपपत्तिरित्याह—उच्यत इति। विविदिसित लब्धुमिष्टम्। अन्वेषणोपायत्वं दर्शयितुं पदेनेति पुनरुक्तिः। अनेनेत्यत्र वेदेति ज्ञानेनोपक्रम्यानुविन्देदिति लाभमुक्त्वा कीर्तिमित्यादिश्रुतौ पुनर्ज्ञानार्थेन ३५

१. वक्ष्याम इति—मैत्रेयीब्राह्मणे यथा दुन्दुभिदृष्टान्तेन दुन्दुभिशब्दसामान्यग्रहणात् तद्विशेषा गृह्यन्ते विशेषाणां सामान्ये कल्पितत्वात्—एवं आत्मज्ञानेन सर्वं विदितं भवति तत्र कल्पितत्वात्।

**तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मा । स योऽन्य-मात्मनः प्रियं ब्रुवाणं ब्रूयात्प्रियं रोत्स्यतीतीश्वरो ह तथैव स्यादात्मानमेव प्रियमुपासीत स य आत्मानमेव प्रियमुपास्ते न हास्य प्रियं प्रमायुकं भवति ॥८॥**

ज्ञाते सर्वमन्यज्ज्ञायत इति ज्ञाने प्रकृते कथं लाभोऽप्रकृत उच्यत इति । न । ज्ञानलाभयोरेकार्थत्वस्य विवक्षित-
५ त्वात् । आत्मनो ह्यलाभोऽज्ञानमेव । तस्माज्ज्ञानमेवाऽऽत्मनो लाभो नानात्मलाभवदप्राप्तप्राप्तिलक्षण आत्मलाभो लब्धृलब्धव्ययोर्भेदाभावात् ।

आत्मलाभ आत्मज्ञानमेव न प्राप्तिः

यत्र ह्यात्मनोऽनात्मा लब्धव्यो भवति तत्राऽऽत्मा लब्धाऽलब्धव्योऽनात्मा । स चाप्राप्त उत्पाद्यादिक्रियाव्यव-हितः कारकविशेषोपादानेन क्रियाविशेषमुत्पाद्य लब्धव्यः । स त्वप्राप्तप्राप्तिलक्षणोऽनित्यो मिथ्याज्ञानजनितकाम-
१० क्रियाप्रभवत्वात्स्वप्ने पुत्रादिलाभवत् । अयं तु तद्विपरीत आत्मा । आत्मत्वादेव नोत्पाद्यादिक्रियाव्यवहितः ।

नित्यलब्धस्वरूपत्वेऽपि सत्यविद्यामात्रं व्यवधानम् । यथा स्वरूपेण गृह्यमाणाया अपि शुक्तिकाया विपर्ययेण रजताभासाया अग्रहणं विपरीतज्ञानव्यवधानमात्रं तथा ग्रहणं ज्ञानमात्रमेव विपरीतज्ञानव्यवधानापोहार्थत्वा-ज्ज्ञानस्य । एवमिहाप्यात्मनोऽलाभोऽविद्यामात्रव्यवधानम् । तस्माद्विद्यया तदपोहनमात्रमेव लाभो नान्यः कदा-चिदप्युपपद्यते । तस्मादात्मलाभे ज्ञानादर्थान्तरसाधनस्याऽऽनर्थक्यं वक्ष्यामः । तस्मान्निराशङ्कमेव ज्ञानलाभयोरे-
१५ कार्थत्वं विवक्षन्नाह—ज्ञानं प्रकृत्यानुविन्देदिति । विन्दतेर्लाभार्थत्वात् । गुणविज्ञानफलमिदमुच्यते—यथाऽयमात्मा नामरूपानुप्रवेशेन ख्यातिं गत आत्मेत्यादिनामरूपाभ्यां प्राणादिसंहतिं च श्लोकं प्राप्तवानित्येवं यो वेद स कीर्तिं ख्यातिं श्लोकं च सङ्घातमिष्टैः सह विन्दते लभते । यद्वा यथोक्तं वस्तु यो वेद मुमुक्षूणामपेक्षितं कीर्तिशब्दितमैक्य-ज्ञानं तत्फलं श्लोकशब्दितां मुक्तिमाप्नोतीति मुख्यमेव फलम् ॥७॥

विदितोपसंहारादनुविन्देदिति श्रुतेरुपक्रमोपसंहारविरोधः स्यादिति शङ्कते—नन्विति । शङ्कितं विरोधं निरा-
२० करोति—नेति । कथं तयोरैकार्थ्यं ग्रामादौ तदेकत्वाप्रसिद्धेरित्याशङ्क्याऽऽह—आत्मन इति । ग्रामादावप्राप्ते प्राप्तिरेव लाभो न ज्ञानमात्रं तथाऽत्रापि किं न स्यादित्याशङ्क्याऽऽह—नेत्यादिना ।

ज्ञानलाभशब्दयोरर्थभेदस्तर्हि कुत्रेत्याशङ्क्याऽऽह—यत्र हीति । अनात्मनि लब्धृलब्धव्ययोर्ज्ञातृज्ञेययोश्च भेदे क्रियाभेदात्फलभेदसिद्धिरित्यर्थः । नन्वात्मलाभोऽपि ज्ञानाद्भिद्यते लाभत्वादनात्मलाभवदित्याशङ्क्य ज्ञानहेतुमात्रान-धीनत्वमुपाधिरित्याह—स चेति । अप्राप्तत्वं व्यक्तीकरोति—उत्पाद्येति । तदव्यवधानमेव साधयति—कारकेति ।
२५ किञ्चानात्मलाभोऽविद्याकल्पितः कादाचित्कत्वात्सम्मतवदित्याह—स त्विति । किञ्चासावविद्याकल्पितोऽप्रामा-णिकत्वात्सम्प्रतिपन्नवदित्याह—मिथ्येति । प्रकृते विशेषं दर्शयति—अयं त्विति । वैपरीत्यमेव स्फोरयति—आत्मत्वादिति । आत्मनस्तर्हि नित्यलब्धत्वान्न तत्रालब्धत्वबुद्धिः स्यादित्याशङ्क्याऽऽह—नित्येति । आत्मन्यलाभोऽज्ञानं लाभस्तु ज्ञानमित्येतद्दृष्टान्तेन स्पष्टयति—यथेत्यादिना । शुक्तिकायाः स्वरूपेण गृह्यमाणाया अपीति योजना । आत्म-लाभोऽविद्यानिवृत्तिरेवेत्यत्रोक्तं वक्ष्यमाणं च गमकं दर्शयति—तस्मादिति । अविरोधमुपसंहरति—तस्मादित्यादिना ।
३० तयोरेकार्थत्वेऽपि कथमनुविन्देदिति मध्ये प्रयुज्यते तत्राऽऽह—विन्दतेरिति । आदिमध्यावसानानामविरोधमुक्त्वा कीर्तिमित्यादिवाक्यमवतार्य व्याकरोति—गुणेत्यादिना । इतिशब्दादुपरिष्टाद्यथेत्यस्य सम्बन्धः । ज्ञानस्तुतिश्चात्र विवक्षिता ज्ञानिनामीदृक्फलस्यानभिलषितत्वादिति द्रष्टव्यम् ॥७॥

---

१ तदेतत्पुत्रात्—इत्यत्र पुत्रादिभ्यः प्रियतरः परमात्मा इति परे । यत्र जीवात्मनः पुत्रादिभ्यः प्रियत्वेन लोकसिद्धस्य कुतो न ग्रहणमिति प्रश्नस्य नोत्तरं परमात्मा अस्तीति ज्ञानमेव येषां नास्ति तेषां पुत्रादिभ्यः प्रियतमः
३५ परमात्मा इति वक्तुमेव न शक्यं, किं च 'रोत्स्यति' इत्यत्र मरिष्यतीत्यर्थः एवात्र वक्तव्यः । परमात्मनः आत्मशब्देन ग्रहणे न 'हास्य प्रियं प्रमायुकं मरणशीलं भवती'ति नोपपद्यते परमात्मनः मरणाप्रसक्तेः । अतः आत्मशब्देन जीव एव ग्राह्यः न परमात्मा इति ज्ञेयम् ।

२. गुणविज्ञानफलं आत्मनः नामरूपानुप्रवेशेन ख्यातिरेको गुणः संघातरूपत्वमपरो गुणः फलं च ख्यातिः, प्रसिद्धिः संघातः, इष्टैः सह संयोगः संघातः, दृष्टान्ते प्राणादिभिः संहतिः ।

कुतश्चाऽऽत्मतत्त्वमेव ज्ञेयमनादृत्यान्यदित्याह—तदेतदात्मतत्त्वं प्रेयः प्रियतरं पुत्रात् । पुत्रो हि लोके प्रियः प्रसिद्धस्तस्मादपि प्रियतरमिति निरतिशयप्रियत्वं दर्शयति । तथा वित्ताद्धिरण्यरत्नादेस्तथाऽन्यस्माद्यद्यल्लोके प्रियत्वेन प्रसिद्धं तस्मात्सर्वस्मादित्यर्थः । तत्कस्मादात्मतत्त्वमेव सर्वस्मात्प्रियतरं न प्राणादीति । उच्यते—अन्तरतरं बाह्यात्पुत्रवित्तादेः प्राणपिण्डसमुदायो ह्यन्तरोऽभ्यन्तरः सन्निकृष्ट आत्मनः । तस्मादप्यन्तरादन्तरतरं यदयमात्मा यदेतदात्मतत्त्वम् । यो हि लोके निरतिशयप्रियः स सर्वप्रयत्नेन लब्धव्यो भवति । तथाऽयमात्मा सर्वलौकिक- ५ प्रियेभ्यः प्रियतमः । तस्मात्तल्लाभे महान्यत्न आस्थेय इत्यर्थः । कर्तव्यताप्राप्तमप्यन्यप्रियलाभे यत्नमुज्झित्वा ।

### आत्मप्रियस्यैवोपादेयत्वे हेतुः

कस्मात्पुनरात्मानात्मप्रिययोरन्यतरप्रियहानेनेतरप्रियोपादानप्राप्तावात्मप्रियोपादानेनैवेतरहानं क्रियते न विपर्यय इति । उच्यते—स यः कश्चिदन्यमनात्मविशेषं पुत्रादिकं प्रियतरमात्मनः सकाशाद्ब्रुवाणं ब्रूयादात्मप्रियवादी । किम् । प्रियं तवाभिमतं पुत्रादिलक्षणं रोत्स्यतीत्यावरणं प्राणसंरोधं प्राप्स्यति विनङ्क्ष्यतीति । स १० कस्मादेवं ब्रवीति । यस्मादीश्वरः समर्थः पर्याप्तोऽसावेवं वक्तुं ह यस्मात्तस्मात्तथैव स्याद्यत्तेनोक्तं प्राणसंरोधं प्राप्स्यति । यथाभूतवादी हि सः । तस्मात्स ईश्वरो वक्तुम् । ईश्वरशब्दः क्षिप्रवाचीति केचित् । भवेद्यदि प्रसिद्धिः स्यात् । तस्मादुज्झित्वाऽन्यत्प्रियमात्मानमेव प्रियमुपासीत । स य आत्मानमेव प्रियमुपास्ते आत्मैव प्रियो नान्योऽस्तीति प्रतिपद्यतेऽन्यल्लौकिकं प्रियमप्यप्रियमेवेति निश्चित्योपास्ते चिन्तयति न हास्यैवंविदः प्रियं प्रमायुकं प्रमरणशीलं भवति । नित्यानुवादमात्रमेतदात्मविदोऽन्यस्य प्रियस्याप्रियस्य चाभावात् । आत्मप्रियग्रहण- १५

आत्मनः पदनीयत्वे तस्यैवाज्ञातत्वसम्भवो हेतुरुक्तोऽधुना तत्रैव हेत्वन्तरत्वेनोत्तरवाक्यमवतारयति—कुतश्चेति । अन्यदनात्मेति यावत् । विरक्तस्य पुत्रे प्रीत्यभावात्कथमात्मनस्तस्मात्प्रियतरत्वमित्याशङ्क्याऽऽह—पुत्रो हीति । प्रियतरमात्मतत्त्वमिति शेषः । लोकदृष्टिमेवावष्टभ्याऽऽह—तथेति । वित्तपदेन मानुषवित्तवद्दैवं वित्तमपि गृह्यते । विशेषाणामानन्त्यात्प्रत्येकं प्रदर्शनमशक्यमित्याशयेनाऽऽह—तथाऽन्यस्मादिति । पुत्रादौ प्रीतिव्यभिचारेऽपि २० प्राणादौ तदव्यभिचारादात्मनो न प्रियतमत्वमिति शङ्कते—तत्कस्मादिति । पदान्तरमादाय व्याकुर्वन्परिहरति—उच्यत इत्यादिना । अन्तरतरत्वे प्रियतमत्वसाधने हेतुरात्मत्वमित्यभिप्रेत्य विशेष्यं व्यपदिशति—यदयमिति । आत्मनो निरतिशयप्रेमास्पदत्वेऽपि कुतस्तस्यैव पदनीयत्वमित्याशङ्क्य वाक्यार्थमाह—यो हीत्यादिना । पुत्रादिलाभे दारादीना कर्तव्यत्वेन प्राप्तप्रयत्नविरोधादात्मलाभे प्रयत्नः सुकरो न भवतीत्याशङ्क्याऽऽह—कर्तव्यतेति ।

आत्मनो निरतिशयप्रेमास्पदत्वे युक्तिं पृच्छति—कस्मादिति । आत्मप्रियस्योपादानमनुसन्धानमितरस्या- २५ नात्मप्रियस्य हानमननुसन्धानम् । विपर्ययोऽनात्मनि पुत्रादावभिनिवेशेनाऽऽत्मप्रियस्याननुसन्धानमिति विभागः । युक्तिलेशं दर्शयितुमनन्तरवाक्यमवतारयति—उच्यत इति । यः कश्चिदात्मप्रियवादी स तस्मादन्यं प्रियं ब्रुवाणं प्रति ब्रूयादिति सम्बन्धः । वक्तव्यं प्रश्नपूर्वकं प्रकटयति—किमित्यादिना । आत्मप्रियवादिन्येवं वदत्यपि पुत्रादिनाशस्तद्वाक्यार्थो नियतो न सिध्यतीत्याशङ्क्य परिहरति—स कस्मादित्यादिना । हशब्दोऽवधारणार्थः समर्थपदादुपरि सम्बध्यते । तस्मादेव वक्तीति शेषः उक्तं सामर्थ्यमनूद्य फलितमाह—यस्मादिति । अथाऽऽत्मप्रियवादिना यथोक्तं ३० सामर्थ्यमेव कथं लब्धमित्याशङ्क्याऽऽह—यथेति । 'अतोऽन्यदार्तमि'त्यनात्मनो विनाशित्वाद्विनाशिनश्च दुःखात्मकत्वात्तत्प्रियत्वस्य भ्रान्तिमात्रत्वादात्मनस्तद्वैपरीत्यान्मुख्या प्रीतिस्तत्रैवानात्मन्यमुख्येति भावः । पक्षान्तरमनूद्य वृद्धप्रयोगाभावेन दूषयति—ईश्वरशब्द इति । अनात्मन्यमुख्या प्रीतिरिति स्थिते फलितमाह—तस्मादिति । उपास्तिमनूद्य तत्फलं कथयति—स य इति । अनुवादद्योतको हशब्दः प्रियमात्मसुखं तस्यापि लौकिकसुखवन्नाशः सुखत्वादित्याशङ्किते तन्निरासार्थमनुवादमात्रमत्र विवक्षितमित्याह—नित्येति । फलश्रुतेर्गत्यन्तरमाह—आत्मप्रियेति । महद्धीदमात्मप्रियग्रहणं यत्तन्निष्ठस्य प्रियं न प्रणश्यति तस्मात्तदनुसन्धानं कर्तव्यमिति स्तुत्यर्थं फलकीर्तनमित्यर्थः । ३५ पक्षान्तरमाह—प्रियगुणेति । यो मन्दः सन्नात्मदर्शी तस्य प्रियगुणविशिष्टात्मोपासने प्रियं प्राणादि न नश्यतीति

१. रोत्स्यति—रुधिरावरणे प्राणसंरोधं प्राणः स्वकार्यान्निरुद्धो भविष्यति । रोदयितीति वार्तिकसारः ।
२. नित्यप्राप्तस्यानुवादः आत्मभिन्नमन्यन्नास्त्येव तस्मात्तस्य नाशे आशंका नास्ति आत्मैव प्रियः स च नित्यः ।

तदाहुर्यद्ब्रह्मविद्यया सर्वं भविष्यन्तो मनुष्या मन्यन्ते ।
किमु तद्ब्रह्मावेद्यस्मात्तत्सर्वमभवदिति ॥९॥

स्तुत्यर्थं वा प्रियगुणफलविधानार्थं वा मन्दात्मदर्शिनस्ताच्छील्यप्रत्ययोपादानात् ॥८॥

सूत्रिता ब्रह्मविद्याऽऽत्मेत्येवोपासीतेति यदर्थोपनिषत्कृत्स्नाऽपि । तस्यैतस्य सूत्रस्य व्याचिख्यासुः प्रयो-
५ जनाभिधित्सयोपोद्जिघांसति—तदिति वक्ष्यमाणमनन्तरवाक्येऽवद्योत्यं वस्त्वाहुर्ब्राह्मणा ब्रह्म विविदिषवो जन्म-
जरामरणप्रबन्धचक्रभ्रमणकृतायासदुःखोदकापारमहोदधिप्लवभूतं गुरुमासाद्य तत्तीरमुत्तितीर्षवो धर्माधर्मसाधनत-
त्फललक्षणात्साध्यसाधनरूपान्निर्विण्णास्तद्विलक्षणनित्यनिरतिशयश्रेयःप्रतिपित्सवः । किमाहुरित्याह—यद्ब्रह्मविद्यया
ब्रह्म परमात्मा तद्यया वेद्यते सा ब्रह्मविद्या तया ब्रह्मविद्यया सर्वं निरवशेषं भविष्यन्तो भविष्याम इत्येवं
मनुष्या यन्मन्यन्ते । मनुष्यग्रहणं विशेषतोऽधिकारज्ञापनार्थम् । मनुष्या एव हि विशेषतोऽभ्युदयनिःश्रेयससा-
१० धनेऽधिकृता इत्यभिप्रायः । यथा कर्मविषये फलप्राप्तिं ध्रुवां कर्मभ्यो मन्यन्ते तथा ब्रह्मविद्यायाः सर्वात्मभाव-
फलप्राप्तिं ध्रुवामेव मन्यन्ते । वेदप्रामाण्यस्योभयत्राविशेषात् ।

फलं विधातुं फलवचनमित्यर्थः । नन्वात्मानं प्रियमुपासीनस्य प्रियं प्राणादि विद्यासामर्थ्यान्न नश्यति तथा च
मन्दविशेषण मन्दमित्याशङ्क्याऽऽह—ताच्छील्येति । ताच्छील्येऽर्थे विहितस्योकञ्प्रत्ययस्य श्रुत्योपादानात्स्वभाव-
हानायोगाच्च प्रमरणशीलत्वाभावेऽपि प्राणादेरात्यन्तिकमप्रमरणमविवक्षितमित्यर्थः ॥८॥

१५ तदाहुरित्यादेर्गतेन ग्रन्थेन सम्बन्ध वक्तुं वृत्त कीर्तयति—सूत्रितेति । तस्या प्रमाणमाह—यदर्थेति । तर्हि
सूत्रव्याख्यानेनैव सर्वोपनिषदर्थसिद्धेस्तदाहुरित्यादि वृथेत्याशङ्क्याऽऽह—तस्येति । विद्यासूत्र व्याख्यातुमिच्छन्ती
श्रुति सूत्रितविद्याविवक्षितप्रयोजनाभिधानायोपोद्घात चिकीर्षति । प्रतिपाद्यमर्थं बुद्धौ संगृह्य तादर्थ्येनार्थान्तरोप-
वर्णनस्य तथात्वाच्चिन्ता प्रकृतसिद्ध्यर्थामुपोद्घात प्रचक्षत इति न्यायादित्यर्थः । यद्ब्रह्मविद्ययेत्यादिवाक्यप्रकाश्यं
चोद्यं तच्छब्देनोच्यते प्रकृतसम्बन्धासम्भवादित्याह—तदितीति । ब्राह्मणमात्रस्य चोद्यकर्तृत्व व्यावर्तयति—ब्रह्मेति ।
२० उत्प्रेक्षया[3] ब्रह्मवेदनेच्छावत्त्व व्यावर्तयितु तदेव विशेषण विभजते—जन्मेति । जन्म च जरा च मरणञ्च तेषा प्रबन्धे
प्रवाहे चक्रवदनवरत भ्रमणेन कृत यदायासात्मक दु ख तदेवोदक यस्मिन्नपारे ससाराख्ये महोदधौ तत्र प्लवभूतं
तरणसाधनमिति यावत् । तत्तीर तस्य ससारसमुद्रस्य तीर पर ब्रह्मेत्यर्थं । तेषा विविदिषायाः साफल्यार्थं
तत्प्रत्यनीके संसारे वैराग्यं दर्शयति—धर्मेति । निर्वेदस्य निरङ्कुशत्व वारयति—तद्विलक्षणेति । उत्तरवाक्यमवतार्थं
व्याचष्टे—किमित्यादिना । अथ परा यया तदक्षरमधिगम्यत इति श्रुत्यन्तरमाश्रित्याऽऽह—यद्ययेति । मनुष्या यन्मन्यन्ते
२५ तत्र विरुद्धं वस्तु भातीति शेषः । मनुष्यग्रहणस्य कृत्यमाह—मनुष्येति । ननु देवादीनामपि विद्याधिकारो देवता-
धिकरणन्यायेन वक्ष्यते तत्कुतो मनुष्याणामेवाधिकारज्ञापनमित्यत आह—मनुष्या इति । विशेषतः सर्वाविसंवादेनेति
यावत् । तथाऽपि किमिति ते ज्ञानान्मुक्ति सिद्धवद्ब्रुवन्तीत्याशङ्क्याऽऽह—यथेति । उभयत्र कर्मब्रह्मणोरिति यावत् ।

---

१. ब्रह्मविद्यया सर्वं भविष्यन्त. इत्यस्य ब्रह्म सर्वं सर्वोपादानत्वात्, उपादानाभिन्नत्वादुपादेयस्य, जडप्रपञ्चस्य ब्रह्म
उपादान चेतनास्तु परमार्थतो ब्रह्मैव । अत सर्वभाव उपपन्न । परे तु 'सर्वं भविष्यन्त.' सर्वशब्दवाच्य-
३० ब्रह्माविर्भाव इति व्याचक्षु । कथमयमर्थं सर्व भविष्यन्त इति तै वक्तव्यम् अव्याख्यानमेवेदम् । अस्मिन् मते
'ब्रह्म आत्मानमेवावेत् अह ब्रह्मास्मीति तस्मात् तत् सर्वमभवत्' इति वाक्य ब्रह्मवेदने अन्योपायनिषेध
आत्मानमेवावेत् न त्वन्यदुपास्यम् इति लक्षणयापि दुर्विभाव्या व्याख्या रचयन्ति । रचयित्वा तदीयव्याख्यैव
श्रेष्ठेति वदन्ति । इद सर्वं वेदानणनुगुमेव । अस्माकं तु ब्रह्मैव ससारे निमग्नं अहं ब्रह्मास्मीत्यवेत् । तस्मात्तत्
सर्वमभवत् अविद्यया असर्वात्मक सत् विद्यया अविद्यानिवृत्तौ सर्वभाव अनुभूयमानोऽभूत् एतमर्थ चतुर्थाध्या-
३५ येऽत्रैव अहमेवेद सर्वोऽस्मीति मन्यते सोऽस्य परमो लोक इति स्वप्नगताभिमानमाचष्टे न तत्र परोक्षार्थग्रहणं
सभवति ।

२ विशेषतोऽधिकारः देवादीनामधिकार कैश्चिदङ्गीक्रियत एव । तत्तु क्वाचित्कं भोगासक्तत्वात् साधनचतुष्टयस्य
दुस्सपादत्वाच्च ।

३. उत्प्रेक्षया कुतूहलेन ।

**ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेत् । अहं ब्रह्मास्मीति तस्मात्तत्सर्वम-भवत्तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणां तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्चेति । तदिदमप्येतर्हि य एवं वेदाहं ब्रह्मास्मीति स इदं सर्वं भवति तस्य ह न देवाश्च नाभूत्या**

तत्र विप्रतिषिद्धं वस्तु लक्ष्यतेऽतः पृच्छामः—किमु तद्ब्रह्म यस्य विज्ञानात्सर्वं भविष्यन्तो मनुष्या मन्यन्ते तत्किमवेद्यस्माद्विज्ञानात्तद्ब्रह्म सर्वमभवत् । ब्रह्म च सर्वमिति श्रूयते । तद्यद्यविज्ञाय किञ्चित्सर्वमभवत्तथान्येषामप्यस्तु किं ब्रह्मविद्यया । अथ विज्ञाय सर्वमभवद्विज्ञानसाध्यत्वात्कर्मफलेन तुल्यमेवेत्यनित्यत्वप्रसङ्गः सर्वभावस्य ब्रह्मविद्याफलस्य । अनवस्थादोषश्च तदप्यन्यद्विज्ञाय सर्वमभवत्ततः पूर्वमप्यन्यद्विज्ञायेति । न तावदविज्ञाय सर्वमभवत् । शास्त्रार्थवैरूप्यदोषात् । फलानित्यत्वदोषस्तर्हि, नैकोऽपि दोषोऽर्थविशेषोपपत्तेः ॥९॥ ५

अपरं ब्रह्म ब्रह्मशब्दार्थं इति मतम् १०

यदि किमपि विज्ञायैव तद्ब्रह्म सर्वमभवत्पृच्छामः किमु तद्ब्रह्मावेद्यस्मात्तत्सर्वमभवदिति । एवं चोदिते सर्वदोषानागन्धितं प्रतिवचनमाह—ब्रह्मापरं, सर्वभावस्य साध्यत्वोपपत्तेः । न हि परस्य ब्रह्मणः सर्वभावापत्तिविज्ञानसाध्या । विज्ञानसाध्यां च सर्वभावापत्तिमाह—तस्मात्तत्सर्वमभवदिति । तस्माद्ब्रह्म वा इदमग्र आसीदित्यपरं ब्रह्मेह भवितुमर्हति । मनुष्याधिकाराद्वा तद्भावी ब्राह्मणः स्यात् । सर्वं भविष्यन्तो मनुष्या मन्यन्त इति

उत्तरवाक्यमुपादत्ते—तत्रेति । मनुष्याणा मतं तच्छब्दार्थ । वस्तुशब्देन ज्ञानात्फलमुच्यते । आक्षेपगर्भस्य चोद्यस्य प्रवृत्तौ विरोधप्रतिभासो हेतुरित्यतः शब्दार्थ । तद्ब्रह्म परिच्छिन्नमपरिच्छिन्नं वेति कुतो ब्रह्मणि चोद्यते तत्राऽऽह—यस्येति । प्रश्नान्तर करोति—तत्किमिति । ब्रह्म स्वात्मानमज्ञासीदतिरिक्त वेति प्रश्नस्य प्रसङ्गं दर्शयति—यस्मादिति । सर्वस्य व्यतिरिक्तविषये ज्ञानं प्रसिद्ध तत्किं विचारेणेत्याशङ्क्याऽऽह—ब्रह्म चेति । सर्वं खल्विदं ब्रह्मेत्यादौ ब्रह्मणः सर्वात्मत्वश्रवणादतिरिक्तविषयाभावादात्मानमेवावेदिति पक्षस्य सावकाशतेत्यर्थः । किंशब्दस्य प्रश्नार्थत्वमुक्त्वाऽऽक्षेपार्थमाह—तद्यदीति । ब्रह्म हि किञ्चिदज्ञात्वा सर्वमभवज्ज्ञात्वा वा ? नाऽऽद्यो ब्रह्मविद्यानर्थक्यादित्युक्त्वा द्वितीयमनुवदति—अथेति । स्वरूपमन्यद्वा ज्ञात्वा ब्रह्मणः सर्वापत्तिरिति विकल्प्योभयत्र साधारणं दूषणमाह—विज्ञानेति । द्वितीये दोषान्तरमाह—अनवस्थेति । बहिरेवाऽऽक्षेपं परिहरति—न तावदिति । अज्ञात्वैव ब्रह्मणः सर्वभावोऽस्मदादेस्तु ज्ञानादिति शास्त्रार्थे वैरूप्यम् । न चास्मदादेरपि तदन्तरेण तद्भावः शास्त्रानर्थक्यात् । ज्ञानाद्ब्रह्मणः सर्वभावपक्षे स्वोक्तं दोषमाक्षेप्ता स्मारयति—फलेति । स्वतोऽपरिच्छिन्नं ब्रह्माविद्यातत्कार्यसम्बन्धात्परिच्छिन्नवद्भाति तन्निवृत्त्यौपाधिकं सर्वभावस्य साध्यत्व न चानवस्था ज्ञेयान्तरानङ्गीकारान्नापि [स्व] क्रिया विरोधो विषयत्वमन्तरेण वाक्यीयबुद्धिवृत्तौ स्फुरणादिति परिहरति—नैकोऽपीति । एतेन विद्यावैयर्थ्यमपि परिहृतमित्याह—अर्थेति । यद्यपि ब्रह्मापरिच्छिन्नं नित्यसिद्धं तथाऽपि तत्राविद्यातत्कार्यध्वंसरूपस्यार्थविशेषस्य ज्ञानादुपपत्तेर्न तद्वैयर्थ्यमित्यर्थः ॥९॥ १५ २० २५

इदानी प्रश्नमनूद्य तदुत्तरत्वेन ब्रह्मेत्यादिश्रुतिमवतारयति—यदीत्यादिना । तत्र वृत्तिकृतां मतानुसारेण ब्रह्मशब्दार्थमाह—ब्रह्मेति । तस्य परिच्छिन्नत्वाज्ज्ञानेन सर्वभावस्य साध्यत्वसम्भवादिति हेतुमाह—सर्वभावस्येति । सिद्धान्ते यथोक्तहेत्वनुपपत्ति दोषमाह—न हीति । सा तर्हि विज्ञानसाध्या मा भूदित्यत आह—विज्ञानेति । हिरण्यगर्भस्य नोपदेशजन्यज्ञानाद्ब्रह्मभावः 'सहसिद्धं चतुष्टयम्' इति स्मृतेः । स्वाभाविकज्ञानवत्त्वात्तस्मात्तत्सर्वम- ३०

१. 'अहं मनुरभवं सूर्यश्चे'त्यस्य ममात्मैव मन्वाद्यात्मेत्यर्थं इत्यूचु इदमपि ममान्तर्यामी अन्यस्यापीत्यभिप्रायस्य सर्वसाधारणत्वात् न वामदेवापेक्षा । तदिदमसारम् ।

२ अह ब्रह्मास्मि ब्रह्मात्मकोऽहं ब्रह्म ममात्मा अन्तर्यामीत्यर्थः इदमपि समानाधिकरणनिर्देशस्याभेदपरत्वोल्लङ्घनमित्यनुपादेयम् । आत्मा ह्येषा स भवति तेषा नियन्ता भवति । इदमप्यपार्थम् । ३५

३. मनुष्याणां शास्त्रस्य मनुष्याधिकारत्वात् ब्रह्मविद्यारुचिः शीघ्रा सर्वसम्मतस्य । द्वैतैकत्वरूपमपरं ब्रह्म प्रपञ्चात् भिन्नाभिन्नं ब्रह्मविद्याहेतोः तादृगहेतुनेत्यर्थ । पूर्वोक्तरीतौ अस्वरसादाह—मनुष्याधिकारत्वादिति अस्य विवरण टीकायां स्पष्टम् ।

ईशते । आत्मा ह्येषाꣳ स भवति अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहम-
स्मीति न स वेद यथा पशुरेवꣳ स देवानाम् । यथा ह वै बहवः पशवो
मनुष्यं भुञ्ज्युरेवमेकैकः पुरुषो देवान्भुनक्त्येकस्मिन्नेव पशावादीयमानेऽप्रियं
भवति किमु बहुषु तस्मादेषां तन्न प्रियं यदेतन्मनुष्या विद्युः ॥१०॥

५ हि मनुष्याः प्रकृतास्तेषां चाभ्युदयनिःश्रेयससाधने विशेषतोऽधिकार इत्युक्तम् । न परस्य ब्रह्मणो नाप्यपरस्य प्रजापतेः । अतो द्वैतैकत्वापरब्रह्मविद्यया कर्मसहितयाऽपरब्रह्मभावमुपसम्पन्नो भोज्याद्गणावृत्तः सर्वप्राप्त्योच्छिन्न-कामकर्मबन्धनः परब्रह्मभावी ब्रह्मविद्याहेतोर्ब्रह्मेत्यभिधीयते । दृष्टश्च लोके भाविनी वृत्तिमाश्रित्य शब्दप्रयोगो यथौदनं पचतीति, शास्त्रे च परिव्राजकः सर्वभूताभयदक्षिणामित्यादि, तथेहेति केचिद्ब्रह्म ब्रह्मभावी पुरुषो ब्राह्मण इति व्याचक्षते ।

१० **ब्रह्मभावी पुरुषो ब्रह्मेति पक्षनिरासः**

तन्न, सर्वभावापत्तेरनित्यत्वदोषात् । न हि सोऽस्ति लोके परमार्थतो यो निमित्तवशाद्भावान्तरमापद्यते नित्यश्चेति । तथा ब्रह्मविज्ञाननिमित्तकृता चेत्सर्वभावापत्तिर्नित्या चेति विरुद्धम् । अनित्यत्वे च कर्मफलतुल्य-तेत्युक्तो दोषः । अविद्याकृतासर्वत्वनिवृत्तिं चेत्सर्वभावापत्तिं ब्रह्मविद्याफलं मन्यसे ब्रह्मभाविपुरुषकल्पना व्यर्था स्यात् । प्राग्ब्रह्मविज्ञानादपि सर्वो जन्तुर्ब्रह्मत्वान्नित्यमेव सर्वभावापन्नः परमार्थतः, अविद्यया त्वब्रह्मत्वमसर्वत्वं
१५ चाध्यारोपितं यथा शुक्तिकायां रजतं व्योम्नि वा तलमलवत्त्वादि तथेह ब्रह्मण्यध्यारोपितमविद्ययाऽब्रह्मत्वमस-र्वत्वं च ब्रह्मविद्यया निवर्त्यत इति मन्यसे यदि तदा युक्तं यत्परमार्थत आसीत्परं ब्रह्म ब्रह्मशब्दस्य मुख्यार्थभूतं ब्रह्म वा इदमग्र आसीदित्यस्मिन्वाक्य उच्यत इति वक्तुम् । यथाभूतार्थवादित्वाद्वेदस्य नत्वियं कल्पना युक्ता ब्रह्मशब्दार्थविपरीतो ब्रह्मभावी पुरुषो ब्रह्मेत्युच्यत इति । श्रुतहान्यश्रुतकल्पनाया अन्याय्यत्वात् महत्तरे प्रयोजनान्तरेऽसति ।

२० भवदिति चोपदेशाधीनमीसाध्योऽसौ श्रुतौ । न चाऽऽसीदित्यतीतकालावच्छेदस्निकाले तस्मिन्युज्यते । समवर्ततेति च जन्ममात्रं श्रूयते । कालात्मके तत्सम्बन्धस्य स्वाश्रयपराहतत्वान्मनुष्याणां प्रकृतत्वाच्च नापरं ब्रह्मेह ब्रह्मशब्दमित्य-परितोषाद्वृत्तिकारमतं हित्वा ब्रह्मेति ब्रह्मभावी पुरुषो निर्दिश्यत इति भर्तृप्रपञ्चोक्तिमाश्रित्य तन्मतमाह—मनुष्येति । तदेव प्रपञ्चयति—सर्वमित्यादिना । द्वैतैकत्व सर्वजगदात्मकमपरं हिरण्यगर्भाख्यं ब्रह्म तस्मिन्विद्या हिरण्यगर्भोऽहमित्यहङ्ग्रहोपास्तिस्तया समुच्चितया तद्भावमिहैवोपगतो हिरण्यगर्भपदे यद्भोज्यं ततोऽपि दोष-
२५ दर्शनाद्विरक्तः सर्वकर्मफलप्राप्त्या निवृत्तकामादिनिगडः साध्यान्तराभावाद्विद्यामेवार्थयमानस्तद्वशाद्ब्रह्मभावी जीवोऽस्मिन्वाक्ये ब्रह्मशब्दार्थ इति फलितमाह—अत इति । कथं ब्रह्मभाविनि जीवे ब्रह्मशब्दस्य प्रवृत्तिरित्या-शङ्क्याऽऽह—दृष्टश्चेति । आदिशब्देन "गृहस्थ. सदृशी भार्या विन्देते"त्यादि गृह्यते । इहेति प्रकृतवाक्यकथनम् ।

भर्तृप्रपञ्चव्याख्यानं दूषयति—तन्नेति । ब्रह्मशब्देन परस्मादर्थान्तरस्य ग्रहे तस्य सर्वभावापत्तेः साध्यत्वाद-नित्यत्वापत्तेर्न तन्मतमुचितमित्यर्थः । साध्यस्यापि मोक्षस्य नित्यत्वमाशङ्क्य यत्कृतकं तदनित्यमिति न्याय-
३० माश्रित्याऽऽह—न हीति । सामान्यन्यायं प्रकृते योजयति—तथेति । भवतु सर्वभावापत्तेरनित्यत्वं का हानिस्तत्राऽऽह—अनित्यत्वे चेति । किञ्च जीवस्याब्रह्मत्व तवाविद्याकृतं पारमार्थिकं वेति विकल्प्याऽऽद्यमनूद्य दूषयति—अविद्याकृतेति । तत्रानुवादभागं विभजते—प्रागित्यादिना । ब्रह्मभाविपुरुषकल्पना व्यर्थेत्युक्तं व्यक्तीकरोति—तदेति । तस्मिन्पक्षे यद्ब्रह्मज्ञानात्पूर्वमपि परमार्थतः परं ब्रह्माऽऽसीत्तदेव प्रकृते वाक्ये ब्रह्मशब्देनोच्यत इति युक्तं वक्तुं तद्धि ब्रह्मशब्दस्य मुख्यमालम्बनमिति योजना । गौर्वाहीक इतिवदमुख्यार्थोऽपि ब्रह्मशब्दो निर्वहतीत्याशङ्क्याऽऽह—यथेति । निरतिशय-
३५ महत्त्वसम्पन्नं वस्तु ब्रह्मशब्देन श्रुतमश्रुतस्तु ब्रह्मभावी पुरुषः श्रुतहान्या चाश्रुतकल्पना न न्यायवती तस्मात्तत्कल्पना न युक्तेति व्यावर्त्यमाह—नत्विति ।

अग्निरधीतेऽनुवाकमित्यादौ श्रुतहान्याऽश्रुतोपादानं दृष्टमित्याशङ्क्याऽऽह—महत्तर इति । तत्राग्निशब्दस्य मुख्यार्थत्वे सत्यन्विताभिधानानुपपत्त्या वाक्यार्थसिद्धेस्तज्ज्ञाने प्रयोजने श्रुतमपि हित्वाऽश्रुतं गृह्येत प्रकृते त्वमति प्रयोजनविशेषे श्रुतहान्यादिर्न युक्तिमतीत्यर्थः । मनुष्याधिकारं निर्वोढुं ब्रह्मभाविपुरुषकल्पनेत्याशङ्क्य महत्तर-
४० विशेषणम् । यद्ब्रह्मविद्ययेति परस्यापि तुल्यमधिकृतत्वं तस्य चाविद्याद्वाराऽविकारित्वमविरुद्धमित्यग्रे स्फुटीमविष्य-

अविद्याकृतव्यतिरेकेणाब्रह्मत्वमसर्वत्वञ्च विद्यत एवेति चेन्न। तस्य ब्रह्मविद्ययाऽपोहानुपपत्तेः। नहि क्वचित्साक्षाद्वस्तुधर्मस्यापोढ्री दृष्टा कर्त्री वा ब्रह्मविद्या। अविद्यायास्तु सर्वत्रैव निर्वातिका दृश्यते। तथेहाप्यब्रह्मत्व-मसर्वत्वं चाविद्याकृतमेव निवर्त्यतां ब्रह्मविद्यया। नतु पारमार्थिकं वस्तु कर्तुं निवर्तयितुं वाऽर्हति ब्रह्मविद्या। तस्माद्व्यर्थैव श्रुतहान्यश्रुतकल्पना।

### ब्रह्माश्रिता अविद्येति सिद्धान्तपक्षः

५

ब्रह्मण्यविद्यानुपपत्तिरिति चेन्न। ब्रह्मणि विद्याविधानात्। नहि शुक्तिकायां रजताध्यारोपणेऽसति शुक्तिकात्वं ज्ञाप्यते चक्षुर्गोचरापन्नायामियं शुक्तिका न रजतमिति। तथा सदेवेदं सर्वं ब्रह्मैवेदं सर्वमात्मैवेदं सर्वं नेदं द्वैतमस्त्यब्रह्मेति ब्रह्मण्येकत्वविज्ञानं न विधातव्यं ब्रह्मण्यविद्याध्यारोपणायामसत्याम्। न ब्रूमः शुक्तिकायामिव ब्रह्मण्यतद्धर्माध्यारोपणा नास्तीति। किं तर्हि न ब्रह्म स्वात्मन्यतद्धर्माध्यारोपनिमित्तमविद्याकर्तृ चेति।

भवत्वेवं नाविद्याकर्तृ भ्रान्तं च ब्रह्म। किन्तु नैवाब्रह्माविद्याकर्ता चेतनो भ्रान्तोऽन्य इष्यते। "नान्योऽतोऽस्ति विज्ञाता" "नान्यदतोऽस्ति विज्ञातृ" "तत्त्वमसि" "आत्मानमेवावेत् अहं ब्रह्मास्मि" "अन्योऽसावन्योऽहमस्मीति न स वेद" इत्यादिश्रुतिभ्यः। स्मृतिभ्यश्च—"समं सर्वेषु भूतेषु" "अहमात्मा गुडाकेश" "शुनि चैव श्वपाके च" "यस्तु सर्वाणि भूतानि" "यस्मिन्सर्वाणि भूतानि" इति च मन्त्रवर्णात्। १०

### शास्त्रोपदेशस्यार्थवत्त्वोपपत्तिः

नन्वेवं शास्त्रोपदेशानर्थक्यमिति। बाढमेवमवगतेऽस्त्वेवाऽऽनर्थक्यम्। अवगमानर्थक्यमपीति चेन्न। अनवगमनिवृत्तेर्दृष्टत्वात्। तन्निवृत्तेरप्यनुपपत्तिरेकत्व इति चेन्न। दृष्टविरोधात्। दृश्यते ह्येकत्वविज्ञानादेवानवग- १५

तीति भाव.। द्वितीयं कल्पमुत्थापयति—अविद्येति। ब्रह्मविद्यावैयर्थ्यंप्रसङ्गान्मैवमिति दूषयति—न तस्येति। अनुपपत्तिमेव साधयति—न हीति। साक्षादारोपमन्तरेणेति यावत्। वस्तुधर्मस्य परमार्थभूतस्य पदार्थस्येत्यर्थः। विद्यायास्तर्हि कथमर्थवत्त्वं तत्राऽऽह—अविद्यायास्त्विति। सर्वत्र शुक्त्यादावेति यावत्। विमतमविद्यात्मकं विद्यानिवर्त्यत्वाद्रजतादिवदित्यभिप्रेत्य दार्ष्टान्तिकमाह—तथेति। विमतं न कारक विद्यात्वाच्छुक्तिविद्यावदित्याशयेनाऽऽह—न त्विति। अब्रह्मत्वादेर्वास्तवत्वायोगादयुक्ता ब्रह्मभाविपुरुषकल्पनेत्युपसंहरति—तस्मादिति। २०

ब्रह्मण्यविद्यानिवृत्तिर्विद्याफलमित्यत्र चोदयति—ब्रह्मणीति। नहि सर्वज्ञे प्रकाशैकरसे ब्रह्मण्यज्ञानमादित्ये तमोवदुपपन्नमिति भाव। तस्याज्ञातत्वमज्ञत्व वाऽऽक्षिप्यते ? नाऽऽद्य इत्याह—न ब्रह्मणीति। नहि तत्त्वमसीति विद्याविधान विज्ञाते ब्रह्मणि युक्तं पिष्टपिष्टिप्रसङ्गात्। अतस्तदज्ञातमेष्टव्यमित्यर्थं। ब्रह्मात्मैक्यमज्ञातं शास्त्रेण ज्ञाप्यते तद्विषय च श्रवणादि विधीयते तेन तस्मिन्नज्ञातत्वमेष्टव्यमित्युक्तमर्थं- दृष्टान्तेन साधयति—न हीति। मिथ्याज्ञानस्याज्ञानाव्यतिरेकाद्ब्रह्मण्यविद्याध्यारोपणाया शुक्तौ रूप्यारोपण दृष्टान्तितमिति द्रष्टव्यम्। कल्पान्तरमालम्बते—न ब्रूम इति। ब्रह्माविद्याकर्तृ न भवतीत्यस्य यथाश्रुतो वाऽर्थस्तदन्यस्तदाश्रयोऽस्तीति वा ? तत्राऽऽद्यमङ्गीकरोति—भवत्विति। अनादित्वादविद्याया. कत्रपेक्षाभावात् विना च द्वारं ब्रह्मणि भ्रान्त्यनभ्युपगमादित्यर्थं। द्वितीयं प्रत्याह—किं त्विति। ब्रह्मणोऽन्यश्चेतनो नास्तीत्यत्र श्रुतिस्मृतीरुदाहरति—नान्योऽतोऽस्तीत्यादिना। ब्रह्मणोऽन्योऽचेतनोऽपि नास्तीत्यत्र मन्त्रद्वयं पठति—यस्त्विति। २५ ३०

ब्रह्मणोऽन्यस्याज्ञस्याभावे दोषमाशङ्कते—नन्विति। किमिदमानर्थक्यमवगतेऽनवगते वा चोद्यते तत्राऽऽद्यमङ्गीकरोति—बाढमिति। द्वितीये नोपदेशानर्थक्यमवगमार्थत्वादिति द्रष्टव्यम्। उपदेशवद्वगमस्यापि स्वप्रकाशे वस्तुनि नोपयोगोऽस्तीति शङ्कते—अवगमेति। अनुभवमनुसृत्य परिहरति—न। अनवगमेति। सा वस्तुनो भिन्ना चेदद्वैतहानिरभिन्ना चेज्ज्ञानाधीनत्वासिद्धिरिति शङ्कते—तन्निवृत्तेरिति। अनवगमनिवृत्तेर्दृश्यमानतया स्वरूपापलापायोगात्प्रकारान्तरासम्भवाच्च पञ्चमप्रकारत्वमेष्टव्यमिति मत्वाऽऽह—न दृष्टेति। दृष्टमपि युक्तिविरोधे ३५

१. पञ्चमप्रकारत्वमिति—अविद्यानिवृत्तिः न सती ब्रह्मान्यस्य सत्वाभावात्। नासती, जन्यत्वात् असतः शशशृंगादे. जन्यत्वादर्शनात्। नापि सदसती परस्परविरोधात्। नाप्युभयविलक्षणा। तस्य मिथ्यात्वेनाज्ञानजन्यत्वात्। अज्ञाननिवृत्तेश्चानिर्वचनीयत्वाभावात्। अतः पञ्चमप्रकारा अविद्यानिवृत्तिरिति इष्टसिद्धिकाराः आहुः।

मनिवृत्तिः। दृश्यमानमप्यनुपपन्नमिति ब्रुवतो दृष्टविरोधः स्यात्। न च दृष्टविरोधः केनचिदप्यभ्युपगम्यते। न च दृष्टेऽनुपपन्नं नाम दृष्टत्वादेव। दर्शनानुपपत्तिरिति चेत्तत्राप्येषैव युक्तिः।

ब्रह्मणः जीवान्यत्वपूर्वपक्षः तेन ब्रह्मभावी पुरुषोऽस्तु

"पुण्यो वै पुण्येन कर्मणा भवति" "तं विद्याकर्मणी समन्वारभेते" "मन्ता बोद्धा कर्ता विज्ञानात्मा
५ पुरुषः" इत्येवमादिश्रुतिस्मृतिन्यायेभ्यः परस्माद्विलक्षणोऽन्यः संसार्यवगम्यते। तद्विलक्षणश्च परः "स एष नेति नेति" "अशनायाद्यत्येति" "य आत्माऽपहतपाप्मा विजरो विमृत्युः" "एतस्य वा अक्षरस्य प्रशासने" इत्यादिश्रुतिभ्यः। कणादाक्षपादादितर्कशास्त्रेषु च संसारिविलक्षण ईश्वर उपपत्तितः साध्यते। संसारदुःखापनयार्थित्वप्रवृत्तिदर्शनात्स्फुटमन्यत्वमीश्वरात्संसारिणोऽवगम्यते। "अवाक्यनादरः" "न मे पार्थास्ति" इतिश्रुतिस्मृतिभ्यः। "सोऽन्वेष्टव्यः स विजिज्ञासितव्यः" "तं विदित्वा न लिप्यते" "ब्रह्मविदाप्नोति परम्" "एकधैवानुद्रष्टव्यमेतत्"
१० "यो वा एतदक्षरं गार्ग्यविदित्वा" "तमेव धीरो विज्ञाय" "प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते" इत्यादिकर्मकर्तृनिर्देशाच्च।

जीवेशभेदे उपपत्तयः

मुमुक्षोश्च गतिमार्गविशेषदेशोपदेशात्। असति भेदे कस्य कुतो गतिः स्यात्तदभावे च दक्षिणोत्तरमार्गविशेषानुपपत्तिर्गन्तव्यदेशानुपपत्तिश्चेति। भिन्नस्य तु परस्मादात्मनः सर्वमेतदुपपन्नम्। कर्मज्ञानसाधनोपदेशाच्च।
१५ भिन्नश्चेद्ब्रह्मणः संसारी स्याद्युक्तस्तं प्रत्यभ्युदयनिःश्रेयससाधनयोः कर्मज्ञानयोरुपदेशो नेश्वरस्याऽऽप्तकामत्वात्।

सिद्धान्तः

तस्माद्युक्तं ब्रह्मेति ब्रह्मभावी पुरुष उच्यत इति चेन्न। ब्रह्मोपदेशानर्थक्यप्रसङ्गात्। संसारी चेद्ब्रह्मभाव्यब्रह्म सन्विदित्वाऽऽत्मानमेवाहं ब्रह्मास्मीति सर्वमभवत्तस्य संसार्यात्मविज्ञानादेव सर्वात्मभावस्य फलस्य सिद्धत्वात्परब्रह्मोपदेशस्य ध्रुवमानर्थक्यं प्राप्तम्।

२० तद्विज्ञानस्य क्वचित्पुरुषार्थसाधनेऽविनियोगात्संसारिण एवाहं ब्रह्मास्मीति ब्रह्मत्वसम्पादनार्थं उपदेश त्याज्यमित्याशङ्क्याऽऽह—दृश्यमानमिति। दृष्टविरुद्धमपि कुतो नेष्यते तत्राऽऽह—न चेति। अनुपपन्नत्वमङ्गीकृत्योक्तं, तदेव नास्तीत्याह—न चेति। युक्तिविरोधे दृष्टिराभासीभवतीति शङ्कते—दर्शनेति। दृष्टिविरोधे युक्तेरेवाऽऽभासत्वं स्यादिति परिहरति—तत्रापीति। अनुपपन्नत्व हि सर्वस्य दृष्टिबलादिष्टं दृष्टस्य त्वनुपपन्नत्वे न किञ्चिन्निमित्तमस्तीत्यर्थः।

२५ ब्रह्मभाविपुरुषकल्पना निराकृत्य स्वपक्षे शास्त्रस्यार्थवत्त्वमुक्तं सम्प्रति प्रकारान्तरेण पूर्वपक्षयति—पुण्य इति। आदिशब्देन 'योऽयं विज्ञानमयः प्राणेषु' इत्याद्या श्रुतिर्गृह्यते। 'कुरु कर्मैव तस्मात्त्वम्' इत्याद्या स्मृतिः। न्यायो मिथो विरुद्धयोरेकत्वायोगः[1]। विलक्षणत्वमन्यत्वे हेतुः। जीवस्य परस्मादन्यत्वेऽपि न तस्य ततोऽन्यत्वमित्याशङ्क्याऽऽह—तद्विलक्षणश्चेति। परस्य तद्विलक्षणत्वं श्रुतितो दर्शयित्वा तत्रैवोपपत्तिमाह—कणादेति। क्षित्यादिकमुपलब्धिमत्कर्तृकं कार्यत्वाद्घटवदित्याद्योपपत्तिः। तयोर्मिथो भेदे हेत्वन्तरमाह—संसारेति। जीवस्य स्वगत-
३० दुःखध्वंसे दुःखं मे मा भूदित्यर्थित्वेन प्रवृत्तिर्दृष्टा नेशस्य साऽस्ति दुःखाभावादतो भेदस्तयोरित्यर्थः। इतश्चेश्वरस्य न प्रवृत्तिर्हेतुफलयोरभावादित्याह—अवाकीति। मिथो भेदे श्रौतं लिङ्गान्तरमाह—सोऽन्वेष्टव्य इति।

तत्रैव लिङ्गान्तरमाह—मुमुक्षोश्चेति। गतिर्देवयानाख्या तस्या मार्गविशेषोऽर्चिरादिर्देशो गन्तव्यं ब्रह्म तेषामुपदेशा "स्तेऽर्चिषमभिसम्भवन्ती" त्यादयस्तथाऽपि कथं भेदसिद्धिस्तत्राऽऽह—असतीति। मा भूद्गतिरित्याशङ्क्याऽऽह—तदभावे चेति। कथं तर्हि गत्यादिकमुपपद्यते तत्राऽऽह—भिन्नस्येति। जीवेश्वरयोर्मिथो भेदे हेत्वन्तरमाह—कर्मेति।
३५ भेदे सत्युपपन्ना भवन्तीति शेषः। तदेव स्फुटयति—भिन्नश्चेदिति। तद्भेदे प्रामाणिकेऽपि कथं ब्रह्मभाविपुरुषकल्पनेत्याशङ्क्योपसंहरति—तस्मादिति। ब्रह्मभाविनो जीवस्य ब्रह्मशब्दवाच्यत्वे ब्रह्मोपदेशस्याऽऽनर्थक्यप्रसङ्गान्नैवमिति दूषयति—नेत्यादिना। प्रसङ्गमेव प्रकटयति—संसारी चेदिति।

विधिशेषत्वेन ब्रह्मोपदेशोऽर्थवानिति चेत्तत्र किं कर्मविधिशेषत्वेनोपास्तिविधिशेषत्वेन वा तदर्थवत्त्वमिति विकल्प्याऽऽद्यं दूषयति—तद्विज्ञानस्येति। अविनियोगाद्विनियोजकश्रुत्याद्यभावादिति शेषः। कल्पान्तरमादत्ते—

४० १. एकत्वायोगः यः यद्विरुद्धधर्मवान् सः तद्भिन्न इति व्याप्त्युपष्टब्धानुमानात्।

इति चेत्। अनिर्ज्ञाते हि ब्रह्मस्वरूपे किं सम्पादयेदहं ब्रह्मास्मीति। निर्ज्ञातलक्षणे हि ब्रह्मणि शक्या सम्पत्कर्तुम्।

## जीवेशभेदनिराकरणम्

न, "अयमात्मा ब्रह्म" "यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा" "तत्सत्यं स आत्मा" "ब्रह्मविदाप्नोति परम्" इति प्रकृत्य "तस्माद्वा एतस्मादात्मनः" इति सहस्रशो ब्रह्मात्मशब्दयोः सामानाधिकरण्यादेकार्थत्वमेवेत्यवगम्यते। अन्यस्य ह्यन्यत्वे सम्पत्क्रियते नैकत्वे। "इदं सर्वं यदयमात्मा" इति च प्रकृतस्यैव द्रष्टव्यस्याऽऽत्मन एकत्वं दर्शयति। तस्मान्नाऽऽत्मनो ब्रह्मत्वसम्पदुपपत्तिः। ५

न चाप्यन्यत्प्रयोजनं ब्रह्मोपदेशस्य गम्यते "ब्रह्म वेद ब्रह्मैव भवति" "अभयं वै जनक प्राप्तोऽसि" "अभयं हि वै ब्रह्म भवति" इति च तदापत्तिश्रवणात्। सम्पत्तिश्चेत्तदापत्तिर्न स्यात्। नह्यन्यस्यान्यभाव उपपद्यते। वचनात्सम्पत्तेरपि तद्भावापत्तिः स्यादिति चेन्न। सम्पत्तेः प्रत्ययमात्रत्वात्। विज्ञानस्य च मिथ्याज्ञाननिवर्तकत्वव्यतिरेकेणाकारकत्वमित्यवोचाम। न च वचनं वस्तुनः सामर्थ्यजनकम्। ज्ञापकं हि शास्त्रं न कारकमिति स्थितिः। 'स एष इह प्रविष्ट' इत्यादिवाक्येषु च परस्यैव प्रवेश इति स्थितम्। तस्माद्ब्रह्मेति न ब्रह्मभाविपुरुषकल्पना साध्वी। १०

## जीवब्रह्मभेदे श्रुत्यनुपपत्तिः

इष्टार्थबाधनाच्च। सैन्धवघनवदनन्तरमबाह्यमेकरस ब्रह्मेति विज्ञानं सर्वस्यामुपनिषदि प्रतिपिपादयिषितोऽर्थः काण्डद्वयेऽप्यन्तेऽवधारणादवगम्यत "इत्यनुशासनमि""तावदरे खल्वमृतत्वमि"ति। तथा सर्वशाखोपनिषत्सु च ब्रह्मैकत्वविज्ञानं निश्चितोऽर्थः। तत्र यदि संसारी ब्रह्मणोऽन्य आत्मानमेवावेदिति कल्प्येत, इष्टस्यार्थस्य बाधनं स्यात्। तथा च शास्त्रमुपक्रमोपसंहारयोर्विरोधादसमञ्जसं कल्पितं स्यात्। व्यपदेशानुपपत्तेश्च। यदि चाऽऽत्मानमेवावेदिति संसारी कल्प्येत, ब्रह्मविद्येति व्यपदेशो न स्यात्। आत्मानमेवावेदिति संसारिण एव वेद्यत्वोपपत्तेः। १५

संसारिण इति। उपदेशस्य ज्ञानार्थत्वात्तदनपेक्षत्वाच्च सम्पत्तेस्तस्य कथं तादर्थ्यमित्याशङ्क्याऽऽह—अनिर्ज्ञाते हीति। व्यतिरेकमुक्त्वाऽन्वयमाचष्टे—निर्ज्ञातेति। पदयो. सामानाधिकरण्येन जीवब्रह्मणोरभेदावगमान्न सम्पत्पक्षः सम्भवतीति समाधत्ते—नेत्यादिना। कथमेकत्वे गम्यमानेऽपि सम्पदोऽनुपपत्तिरित्याशङ्क्याऽऽह—अन्यस्य हीति। एकत्वे हेत्वन्तरमाह—इदमिति। एकत्वे फलितमाह—तस्मादिति। २०

किञ्च सम्पत्तिपक्षे तदापत्ति फलमन्यद्वेति विकल्प्य द्वितीयं प्रत्याह—न चेति। आद्यं दूषयति—सम्पत्तिश्चेदिति। 'तं यथा यथे'त्यादिवाक्यमाश्रित्य शङ्कते—वचनादिति। सम्पत्तेरमानत्वान्न तद्बलादन्यस्यान्यत्वमित्याह—नेति। तस्या मानत्वेऽप्येवंमानस्याकारकत्वात्। न च सूत्राद्युपासनादप्यन्यस्यान्यत्वं स्थितस्य नष्टस्य वाऽनुपपत्तेः। श्रुतिश्च न पूर्वसिद्धसूत्रादिभावाभिधायिनी तत्सादृश्याप्त्या तद्भावोपचारादतो ब्रह्मभावः स्वतः सिद्धो न साम्पादिक इत्याह—विज्ञानस्येति। अथान्यस्यान्यभावे यथोक्तं वचनमेव शक्त्याधायकमित्याशङ्क्याह—न चेति। ब्रह्मोपदेशानर्थक्यप्रसङ्गाच्च ब्रह्मभाविपुरुषकल्पनेत्युक्त्वा तत्रैव हेत्वन्तरमाह—स एष इति। २५

ब्रह्मोपदेशस्य सम्पच्छेषत्वे दोषान्तरमाह—इष्टार्थेति। तदेव विवृण्वन्निष्टमर्थमाचष्टे—सैन्धवेति। यथोक्तं वस्तु तात्पर्यगम्यमस्यामुपनिषदीत्यत्र हेतुमाह—काण्डद्वयेऽपीति। मधुकाण्डावसानगतमवधारणं दर्शयति—इत्यनुशासनमिति। मुनिकाण्डान्ते व्यवस्थितमुदाहरति—एतावदिति। न केवलमुपदेशस्य सम्पच्छेषत्वे बृहदारण्यकविरोधः किन्तु सर्वोपनिषद्विरोधोऽस्तीत्याह—तथेति। इष्टमर्थमित्थमुक्त्वा तद्बाधनं निगमयति—तत्रेति। ननु बृहदारण्यके ब्रह्मकण्डिकाया जीवपरत्वाभेदोऽभिप्रेत उपसंहारे त्वभेद इति व्यवस्थायां तद्विरोधः शक्यः समाधातुमित्यत आह—तथा चेति। ब्रह्मभाविपुरुषकल्पनायामुपदेशानर्थक्यमिष्टार्थबाधश्चेत्युक्तमिदानीं ब्रह्मेत्यादिवाक्ये ब्रह्मशब्देन परस्याग्रहणे तद्विद्याया ब्रह्मविद्येति संज्ञानुपपत्तिं दोषान्तरमाह—व्यपदेशानुपपत्तेश्चेति। ३० ३५

१. काण्डद्वयम्—मधुकाण्डं मुनिकाण्डञ्च।

२. एवंमानस्य—एवं रूपप्रमाणस्य। स्थितस्य जीवरूपेण स्थितस्य। नष्टस्य जीवस्य नाशेन तद्वियुक्तस्य ब्रह्मणः सायुज्य सूत्रात्मनः सादृश्यमेव तत्समानभोगवत्त्वमित्यर्थः।

### आत्मशब्देन जीवादन्यग्रहणनिरासः

आत्मेति वेदितुरन्यदुच्यत इति चेन्न। अहं ब्रह्मास्मीति विशेषणात्। अन्यश्चेद्वेद्यः स्यादयमसाविति वा विशेष्येत नत्वहमस्मीति। अहमस्मीति विशेषणादात्मानमेवावेदिति चावधारणान्निश्चितमात्मैव ब्रह्मेत्यवगम्यते। तथा च सत्युपपन्नो ब्रह्मविद्याव्यपदेशो नान्यथा। संसारिविद्या ह्यन्यथा स्यात्। न च ब्रह्मत्वाब्रह्मत्वे ह्येकस्योपपन्ने परमार्थतस्तमःप्रकाशाविव भानोर्विरुद्धत्वात्।

न चोभयनिमित्तत्वे ब्रह्मविद्येति निश्चितो व्यपदेशो युक्तस्तदा ब्रह्मविद्या संसारिविद्या च स्यात्। न च वस्तुनोऽर्धजरतीयत्वं[1] कल्पयितुं युक्तं तत्त्वज्ञानविवक्षायाम्। श्रोतुः संशयो हि तथा स्यात्। निश्चितञ्च ज्ञानं पुरुषार्थसाधनमिष्यते "यस्य स्यादद्धा[2] न विचिकित्साऽस्ति" "संशयात्मा विनश्यति" इति श्रुतिस्मृतिभ्याम्। अतो न संशयितो वाक्यार्थो वाच्यः परहितार्थिना।

### ब्रह्मणि साधकत्वकल्पनोपपत्तिः

ब्रह्मणि साधकत्वकल्पनाऽस्मदादिष्विवापेशला 'तदात्मानमेवावेत्तस्मात्तत्सर्वमभवदि'ति चेन्न। शास्त्रोपालम्भात्। न ह्यस्मत्कल्पनेयं शास्त्रकृता तु तस्माच्छास्त्रस्यायमुपालम्भः। न च ब्रह्मण इष्टं चिकीर्षुणा शास्त्रार्थविपरीतकल्पनया स्वार्थपरित्यागः कार्यः। न चैतावत्येवाक्षमा युक्ता भवतः। सर्वं हि नानात्वं ब्रह्मणि कल्पितमेव "एकधैवानुद्रष्टव्यं नेह नानाऽस्ति किञ्चन" "यत्र हि द्वैतमिव भवति" "एकमेवाद्वितीयम्" इत्यादिवाक्यशतेभ्यः। सर्वो हि लोकव्यवहारो ब्रह्मण्येव कल्पितो न परमार्थः सन्नित्यत्यल्पमिदमुच्यत इयमेव कल्पनाऽपेशलेति।

अत्रोक्तब्रह्मशब्दार्थाद्विदितुर्जीवादन्यस्तदात्मानमित्यत्राऽऽत्मशब्देन परो गृह्यते तद्विद्या च ब्रह्मविद्येति संज्ञासिद्धिरिति शङ्कते—आत्मेतीति। वाक्यशेषविरोधान्नैवमित्याह—नाहमिति। तदेव प्रपञ्चयति—अन्यश्चेति। यथोक्तावगमे फलितमाह—तथा च सतीति। अत्यन्तभेदे व्यपदेशानुपपत्तिं विशदयति—संसारीति। जीवब्रह्मणोर्भेदाभेदोपगमादभेदेन ब्रह्मविद्येति व्यपदेशः सेत्स्यतीत्याशङ्क्याऽऽह—न चेति।

स्यातां वा ब्रह्मात्मनोर्भेदाभेदौ तथाऽपि भिन्नाभिन्नविद्याया ब्रह्मविद्येति नियतो व्यपदेशो न स्यादित्याह—न चेति। निमित्त विषयः। भिन्नाभिन्नविषया विद्या ब्रह्मविषयाऽपि भवत्येवेति व्यपदेशसिद्धिमाशङ्क्याऽऽह—तदेति। उभयात्मकत्वाद्वस्तुनस्तद्विद्याऽपि तथेति विकल्पोपपत्तिमाशङ्क्याऽऽह—न चेति। अस्तु तर्हि वस्तु ब्रह्म वाऽब्रह्म वा वैकल्पिकमित्याशङ्क्याऽऽह—श्रोतुरिति। संशयितमपि ज्ञानं वाक्यादुत्पद्यते चेत्तावतैव पुरुषार्थः श्रोतुः सिध्यतीत्याशङ्क्याऽऽह—निश्चितञ्चेति। श्रोतुर्निश्चितज्ञानस्य फलवत्त्वेऽपि वक्तुः संशयितमर्थं वदतो न काचन हानिरित्याशङ्क्याऽऽह—अत इति। निश्चितस्यैव ज्ञानस्य पुमर्थसाधनत्वं न संशयितस्येत्यतःशब्दार्थः।

जीवपरयोरत्यन्तभेदस्य भेदाभेदयोश्चायोगात्परमेव ब्रह्म ब्रह्मशब्दवाच्यं न जीवस्तद्भावीत्युक्तं सम्प्रत्यत्यन्ताभेदपक्षे दोषमाशङ्कते—ब्रह्मणीति। तदात्मानमेवावेदिति ज्ञातृत्वं ब्रह्मण्युच्यते तदयुक्तं तस्य ज्ञानमूर्तित्वादत एव न तत्कर्मत्वमपि। न च स्वकर्तृकर्मकज्ञानान्मुक्तिः परस्य क्रियाकारकफलविलक्षणत्वादतो न परं ब्रह्म ब्रह्मशब्दितमित्यर्थः। शास्त्रं ब्रह्मणि साधकत्वादि दर्शयति तच्चापौरुषेयमदोषान्नोपालम्भार्हं तथा च तस्मिन्नाविद्यं साधकत्वाद्यविरुद्धमिति समाधत्ते—न शास्त्रेति। स न्यायुक्तस्तस्यापौरुषेयत्वेनासम्भावितदोषत्वादिति शेषः। ननु ब्रह्मणो नित्यमुक्तत्वपरिरक्षणार्थं शास्त्रमप्युपालभ्यते। नेत्याह—न चेति। शास्त्राद्धि ब्रह्मणो नित्यमुक्तत्वं गम्यते साधकत्वादि च तस्य तेनैवोच्यते न चार्धजरतीयमुचितं तथा च वास्तवं नित्यमुक्तत्वं कल्पितमितरदित्यास्थेयम्। यदि तस्य नित्यमुक्तत्वार्थं सर्वथैव साधकत्वादि नेष्यते तदा स्वार्थपरित्यागः स्यात्साधकत्वादिना विनाऽभ्युदयनिःश्रेयसयोरसम्भवात्। न च ब्रह्मणोऽन्यश्चेतनोऽचेतनो वाऽस्ति 'नान्योऽतोऽस्ति द्रष्टा' 'ब्रह्मैवेदं सर्वम्' इत्यादिश्रुतेस्तस्माद्यथोक्ता व्यवस्थाऽऽस्थेयेत्यर्थः। किञ्च सर्वस्यापि संसारस्य ब्रह्मण्यविद्ययाऽध्यासात्तदन्तर्भूतं साधकत्वाद्यपि तत्राध्यस्तमित्यभ्युपगमे काऽनुपपत्तिरित्याह—न चेति। तस्य तस्मिन्कल्पितत्वं कुतोऽवगतमित्याशङ्क्याऽऽह—एकधेति। उक्तश्रुतितात्पर्यं सङ्कलयति—सर्वो हीति। सर्वस्य द्वैतव्यवहारस्य ब्रह्मणि कल्पितत्वे प्रकृतचोद्यस्याऽऽभासत्वं फलतीत्याह—अत्यल्पमिति।

---

१. अर्धजरतीयत्वम्—एकस्या एव स्त्रियः अर्धं जरती अर्धं नेति न वक्तुं शक्यम्। तथा ब्रह्मविद्या संसारिविद्या चेति न युक्तम्।

२. अद्धा साक्षात्देवताया दर्शनम्।

### उपनिषद्व्याख्यानप्रारम्भः

**तस्माद्यत्प्रविष्टं स्रष्टृ ब्रह्म तद्ब्रह्म। वैशब्दोऽवधारणार्थः। इदं शरीरस्थं यद्गृह्यतेऽग्रे वाक्प्रतिबोधादपि ब्रह्मैवाऽऽसीत्सर्वं चेदम्। किन्त्वप्रतिबोधादब्रह्मास्म्यसर्वं चेत्यात्मन्यध्यारोपात्कर्ताऽहं क्रियावान्फलानाञ्च भोक्ता सुखी दुःखी संसारीति चाध्यारोपयति। परमार्थतस्तु ब्रह्मैव तद्विलक्षणं सर्वञ्च। तत्कथञ्चिदाचार्येण दयालुना प्रतिबोधितं नासि संसारीत्यात्मानमेवावेत्स्वाभाविकम्। अविद्याध्यारोपितविशेषवर्जितमित्येवशब्दस्यार्थः।** ५

**ब्रूहि कोऽसावात्मा स्वाभाविको यमात्मानं विदितवद्ब्रह्म। ननु न स्मरस्यात्मानं दर्शितो ह्यसौ य इह प्रविश्य प्राणित्यपानिति व्यानित्युदानिति समानितीति। नन्वसौ गौरसावश्व इत्येवमसौ व्यपदिश्यते भवता नाऽऽत्मानं प्रत्यक्षं दर्शयसि। एवं तर्हि द्रष्टा श्रोता मन्ता विज्ञाता स आत्मेति। नन्वत्रापि दर्शनादिक्रियाकर्तुः स्वरूपं न प्रत्यक्षं दर्शयसि। नहि गमिरेव गन्तुः स्वरूपं छिदिर्वा छेत्तुः। एवं तर्हि दृष्टेर्द्रष्टा श्रुतेः श्रोता मतेर्मन्ता विज्ञातेर्विज्ञाता स आत्मेति।** १०

### दृष्टेर्द्रष्टेत्यस्याः श्रुतेरभिप्रायोक्तिः

**नन्वत्र को विशेषो द्रष्टरि यदि दृष्टेर्द्रष्टा यदि वा घटस्य द्रष्टा सर्वथाऽपि द्रष्टैव। द्रष्टव्य एव तु भवान्विशेषमाह दृष्टेर्द्रष्टेति। द्रष्टा तु यदि दृष्टेर्यदि वा घटस्य द्रष्टा द्रष्टैव। न, विशेषोपपत्तेः। अस्त्यत्र विशेषो यो दृष्टेर्द्रष्टा स दृष्टिश्चेद्भवति नित्यमेव पश्यति दृष्टिं न कदाचिदपि दृष्टिर्न दृश्यते द्रष्ट्रा। तत्र द्रष्टुर्दृष्ट्या नित्यया भवितव्यम्। अनित्या चेद्द्रष्टुर्दृष्टिस्तत्र दृश्या या दृष्टिः सा कदाचिन्न दृश्येतापि यथाऽनित्यया दृष्ट्या घटादि वस्तु। न च तद्वद्दृष्टेर्द्रष्टा कदाचिदपि न पश्यति दृष्टिम्।** १५

परपक्षं निराकृत्य स्वपक्षं दर्शयति—**तस्मादिति**। तद्व्यतिरेकेण जगन्नास्तीति सूचयति—**वैशब्द इति**। तत्पदार्थमुक्त्वा त्वम्पदार्थं कथयति—**इदमिति**। तयोर्वस्तुतो भेदं शङ्कित्वा पदान्तर व्याचष्टे—**प्रागिति**। तस्यापरिच्छिन्नत्वमाह—**सर्वञ्चेति**। कथं तर्हि विपरीतधीरित्याशङ्क्याऽऽह—**किन्त्विति**। यथाप्रतिभासं कर्तृत्वादेर्वास्तवत्वमाशङ्क्य शास्त्रविरोधान्मैवमित्याह—**परमार्थतस्त्विति**। तद्विलक्षणमध्यस्तममस्तसंसाररहितमिति यावत्। किमु तद्ब्रह्मेति चोद्यं परिहृत्य किं तदवेदिति चोद्यान्तरं प्रत्याह—**तत्कथञ्चिदिति**। पूर्ववाक्योक्तमविद्याविशिष्टमधिकारित्वेन व्यवस्थितं ब्रह्म नासि संसारीत्याचार्येण दयावता कथञ्चिद्बोधितमात्मानमेवावेदिति सम्बन्धः। आत्मैव प्रमेयस्तज्ज्ञानमेव प्रमाणमित्येवमर्थत्वमेवकारस्य विवक्षन्नाह—**अविद्येति**। २०

प्रकृतमात्मशब्दार्थं विविच्य वक्तुं पृच्छति—**ब्रूहीति**। स एष इह प्रविष्ट इत्यत्राऽऽत्मनो दर्शितत्वात्प्राणनादिलिङ्गस्य तस्य त्वयैवानुसन्धातुं शक्यत्वान्नास्ति वक्तव्यमित्याह—**नन्विति**। आत्मानं प्रत्यक्षयितुं पृच्छतस्तत्परोक्षवचनमनुत्तरमिति शङ्कते—**नन्वसाविति**। आत्मानञ्चेत्प्रत्यक्षयितुमिच्छसि तर्हि प्रत्यक्षमेव तं दर्शयामीत्याह—**एवं तर्हीति**। नेदं प्रतिज्ञानुरूपं प्रतिवचनमिति चोदयति—**नन्वत्रेति**। प्रत्यक्षत्वाद्दर्शनादिक्रियायास्तत्कर्तुः स्वरूपमपि तथेत्याशङ्क्याऽऽह—**नहीति**। यदि दर्शनादिक्रियाकर्तृस्वरूपोक्तिमात्रेण जिज्ञासा नोपशाम्यति तर्हि दृष्ट्यादिसाक्षित्वेनाऽऽत्मोक्त्या तुष्यतु भवानित्याह—**एवं तर्हि दृष्टेरिति**। २५

पूर्वस्मात्प्रतिवचनादस्मिन्प्रतिवचने द्रष्टृविषयो विशेषो नास्तीति शङ्कते—**नन्विति**। विशेषाभावं विशदयति—**यदीत्यादिना**। घटस्य द्रष्टा दृष्टेर्द्रष्टेति विशेषे प्रतीयमाने तदभावोक्तिर्व्याहतेत्याशङ्क्याऽऽह—**द्रष्टव्य एवेति**। तथा द्रष्टर्यपि विशेषो भविष्यतीत्याशङ्क्याऽऽह—**द्रष्टा त्विति**। वृत्तिमदन्तःकरणावच्छिन्नः सविकारो घटद्रष्टा कूटस्थचिन्मात्रस्वभावः सन्निधिसत्तामात्रेण बुद्धितद्वृत्तीनां द्रष्टा दृष्टेर्द्रष्टेति विशेषमङ्गीकृत्य परिहरति—**नेत्यादिना**। एतदेव स्फुटयति—**अस्तीति**। सप्तमी द्रष्टारमधिकरोति। दृष्टेर्द्रष्टुस्तावदन्वयव्यतिरेकाभ्यां विशेषं विशदयति—**यो दृष्टेरिति**। भवतु दृष्टिसद्भावे द्रष्टुः सदा तद्द्रष्टृत्वं तथाऽपि कथं कूटस्थदृष्टित्वमित्याशङ्क्याऽऽह—**तत्रेति**। नित्यत्वमुपपादयति—**अनित्या चेदिति**। उक्तपक्षपरामर्शार्था सप्तमी। कादाचित्के द्रष्टृदृश्यत्वे दृष्टान्तमाह—**यथेति**। घटादिवद्दृष्टिरपि कदाचिदेव द्रष्ट्रा दृश्यते न सर्वदेत्यनिष्टापत्त्यभावमाशङ्क्याऽऽह—**न चेति**। विकारिणश्चित्तस्याद्रष्टृत्वं क्रमद्रष्टृत्वमन्यथाद्रष्टृत्वं च दृष्टं तत्साक्षिणो व्यावर्तमानं तस्य निर्विकारत्वं गमयतीति भावः। ३०–३५

किं द्वे दृष्टी द्रष्टुर्नित्याऽदृश्याऽन्याऽनित्या दृश्येति। बाढम्। प्रसिद्धा तावदनित्या दृष्टिरन्धानन्धत्वदर्शनात्। नित्यैव चेत्सर्वोऽनन्ध एव स्यात्। द्रष्टुस्तु नित्या दृष्टिः “नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते” इति श्रुतेरनुमानाच्च। अन्धस्यापि घटाद्याभासविषया स्वप्ने दृष्टिरुपलभ्यते। सा तर्हीतरदृष्टिनाशे न नश्यति सा द्रष्टुर्दृष्टिस्तयाऽवि-परिलुप्तया नित्यया दृष्ट्या स्वरूपभूतया स्वयञ्ज्योतिः समाख्ययेतरामनित्यां दृष्टिं स्वप्नबुद्धान्तयोर्वासनाप्रत्ययरूपां

५ नित्यमेव पश्यन्दृष्टेर्द्रष्टा भवति। एवञ्च सति दृष्टिरेव स्वरूपमस्याग्न्यौष्ण्यवन्न काणादानामिव दृष्टिव्यतिरिक्तोऽन्य-श्चेतनो द्रष्टा।

तदात्मानमेवावेत्—इत्यस्याभिप्रायः अज्ञाननिवृत्तिरेवेति

तद्ब्रह्माऽऽत्मानमेव नित्यदृग्रूपमध्यारोपितानित्यदृष्ट्यादिवर्जितमेवावेद्विदितवत्। ननु विप्रतिषिद्धम् “न विज्ञातेर्विज्ञातारं विजानीयाः” इति श्रुतेर्विज्ञातुर्विज्ञानम्। न, एवं विज्ञानान्न विप्रतिषेधः। एवं दृष्टेर्द्रष्टेति

१० विज्ञायत एव। अन्यज्ञानानपेक्षत्वाच्च। न च द्रष्टुर्नित्यैव दृष्टिरित्येवं विज्ञाते द्रष्टृविषयां दृष्टिमन्यामाकाङ्क्षते। निवर्तते हि द्रष्टुर्विषयदृष्ट्याकाङ्क्षा तदसम्भवादेव। नह्यविद्यमाने विषय आकाङ्क्षा कस्यचिदुपजायते। न च दृश्या दृष्टिर्द्रष्टारं विषयीकर्तुमुत्सहते। यतस्तामाकाङ्क्षेत। न च स्वरूपविषयाकाङ्क्षा स्वस्यैव। तस्मादज्ञाना-ध्यारोपणनिवृत्तिरेवाऽऽत्मानमेवावेदित्युक्तं नाऽऽत्मनो विषयीकरणम्।

“अहं ब्रह्मास्मी”तिमहावाक्यविवरणम्

१५ तत्कथमवेदित्याह—अहं दृष्टेर्द्रष्टाऽऽत्मा ब्रह्मास्मि भवामीति। ब्रह्मेति ‘यत्साक्षादपरोक्षात्सर्वान्तर आत्माऽश-नायाद्यतीतो नेति नेत्यस्थूलमनण्वित्ये’वमादिलक्षणं तदेवाहमस्मि नान्यः संसारी यथा भवानाहेति। तस्मादेवं विज्ञानात्तद्ब्रह्म सर्वमभवत्। अब्रह्माध्यारोपणापगमात्तत्कार्यस्यासर्वत्वस्य निवृत्त्या सर्वमभवत्। तस्माद्युक्तमेव

दृष्टिद्वयं प्रमाणाभावादश्लिष्टमिति शङ्कते—किमिति। तदुभयमङ्गीकरोति—बाढमिति। तत्रानित्यां दृष्टिमनुभवेन साधयति—प्रसिद्धेति। उक्तमर्थं युक्त्या व्यक्तीकरोति—नित्यैवेति। श्रुतिं नित्यां दृष्टिं श्रुत्या

२० समर्थयते—द्रष्टुरिति। तत्रैवोपपत्तिमाह—अनुमानाच्चेति। तदेव विवृणोति—अन्धस्यापीति। अन्धस्ये चक्षुरादि-हीनस्यापि पुंसः स्वप्ने वासनामयघटादिविषया दृष्टिरुपलब्धा या च सा तस्मिन्काले चक्षुरादिजनितदृष्ट्यभावेऽपि स्वयमविनश्यन्त्यनुभूयते सा द्रष्टुः स्वभावभूता दृष्टिर्नित्येष्टव्या। विमतं नित्यमव्यभिचारित्वात्सदेशवदिति प्रयोगो-पपत्तेरित्यर्थः। नन्वात्मा दृष्टिस्तदभावश्चेत्कथं दृष्टेर्द्रष्टेत्युक्तमत आह—तयेति। नित्यत्वे हेतुः—अविपरिलुप्तयेति। नित्यद्वयं परिहर्तुं स्वरूपभूतयेत्युक्तम्। तस्या दृष्ट्यन्तरापेक्षां वारयति—स्वयमिति। उक्तामविपरिलुप्तत्वं व्यनक्ति—

२५ इतरामिति। आत्मा दृष्टेर्द्रष्टेति स्थिते फलितमाह—एवञ्चेति। अन्यश्चेतनोऽचेतनो नेति शेषः।

नित्यदृष्टिस्वभावमात्मपदार्थं परिशोध्य श्रुत्यक्षराणि योजयति—तद्ब्रह्मेति। वाक्यशेषविरोधं चोदयति—नन्विति। किं कर्मत्वेनाऽऽत्मनो ज्ञानं विरुध्यते किं वा साक्षित्वेनेति नाद्यं नाऽऽद्योऽनभ्युपगमादित्याह—नेति। न द्वितीय इत्याह—एवमिति। तदेव स्पष्टयति—एवं दृष्टेरिति। तर्हि तद्विषयं ज्ञानान्तरमपेक्षितव्यमिति कुतो विरोधो न प्रसरतीत्याशङ्क्याऽऽह—अन्यज्ञानेति। न विप्रतिषेध इति पूर्वेण सम्बन्धः सङ्गृहीतमर्थं विवृणोति—नचेति।

३० नित्यैव स्वरूपभूतेति शेषः। विज्ञातत्वं वाक्यीयबुद्धिवृत्तिव्याप्यत्वम्। अन्यां दृष्टिं स्फुरणलक्षणाम्। आत्मविषय-स्फुरणाकाङ्क्षाभावं प्रतिपादयति—निवर्तते हीति। आत्मनि स्फुरणरूपे स्फुरणव्याप्यस्यासम्भवेऽपि कुतस्तदा-काङ्क्षोपशान्तिरित्याशङ्क्याऽऽह—नहीति। किञ्च द्रष्टरि दृश्याऽदृश्या वा दृष्टिरपेक्ष्यते नाऽऽद्य इत्याह—नचेति। आदित्यप्रकाश्यस्य रूपादेस्तत्प्रकाशकत्वाभावादिति भावः। न द्वितीय इत्याह—नचेति। आत्मनो वृत्तिव्याप्यत्वेऽपि स्फुरणव्याप्यत्वाङ्गीकरणान्न वाक्यशेषविरोधोऽस्तीत्युपसंहरति—तस्मादिति।

३५ वाक्यान्तरमाकाङ्क्षापूर्वकमादत्ते—तत्कथमिति। तदक्षराणि व्याचष्टे—दृष्टेरिति। इतिपदमवेदित्यनेन सम्बध्यते। ब्रह्मशब्दं व्याचष्टे—ब्रह्मेतीति। ब्रह्माहम्पदार्थयोर्मिथो विशेषणविशेष्यभावमभिप्रेत्य वाक्यार्थमाह—तदेवेति। आचार्योपदिष्टेऽर्थे स्वस्य निश्चयं दर्शयति—यथेति। इतिशब्दो वाक्यार्थज्ञानसमाप्त्यर्थः। इदानीं फलवाक्यं व्याचष्टे—तस्मादिति। सर्वभावमेव व्याकरोति—अब्रह्मेति। ब्रह्मैवाविद्यया संसरति विद्यया च मुच्यत इति पक्षस्य निर्दोषत्वमुपसंहरति—तस्माद्युक्तमिति। वृत्तं कीर्तयति—यत्पृष्टमिति।

---

४० १. वासनाप्रत्ययरूपां वासनारूपां प्रत्ययरूपां च।

२. काणादानामिव—देही आत्मा जडः तस्य मनस्संयोगात् ज्ञानमात्मनि जायते इति ब्रुवन्ति ते।

मनुष्या मन्यन्ते यद्ब्रह्मविद्यया सर्वं भविष्याम इति। यत्पृष्टं किमु तद्ब्रह्मावेद्यस्मात्तत्सर्वमभवदिति तन्निर्णीतं ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेदहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवदिति।

तत्तत्र यो यो देवानां मध्ये प्रत्यबुध्यत प्रतिबुद्धवानात्मानं यथोक्तेन विधिना स एव प्रतिबुद्ध आत्मा तद्ब्रह्माभवत्तथर्षीणां तथा मनुष्याणां च मध्ये। देवानामित्यादि लोकदृष्ट्यपेक्षया न ब्रह्मत्वबुद्ध्योच्यते। पुरः 'पुरुष आविशदि'ति सर्वत्र ब्रह्मैवानुप्रविष्टमित्यवोचाम। अतः शरीराद्युपाधिजनितलोकदृष्ट्यपेक्षया देवानामि- ५ त्याद्युच्यते। परमार्थतस्तु तत्र तत्र ब्रह्मैवाग्र आसीत्प्राक्प्रतिबोधाद्देवादिशरीरेष्वन्यथैव विभाव्यमानम्। तदा-त्मानमेवावेत्तथैव च सर्वमभवत्।

यथाऽग्निहोत्रादि मनुष्यत्वादिजातिमन्तमर्थित्वादिविशेषणवन्तं चाधिकारिणमपेक्षते न तथा ज्ञानमिति वक्तुं तद्यो यो देवानामित्यादिवाक्यं तदक्षराणि व्याचष्टे—तत्तत्रेति। यथोक्तेन विधिनाऽन्वया[2]दिकृतपदार्थपरि-शोधनादिनेत्यर्थः। ज्ञानादेव मुक्तिर्न साधनान्तरादित्येवकारार्थः। विवक्षितमधिकार्यनियमं प्रकटयति—तथेत्यादिना। १० यो यः प्रत्यबुध्यत स एव तदभवदिति पूर्वेण सम्बन्धः। ब्रह्मैवाविद्यया संसरति मुच्यते च विद्ययेत्युक्त्वाद्देवादीनां विद्याविद्याभ्यां बन्धमोक्षोक्तिस्तद्विरुद्धेत्याशङ्क्याऽऽह—देवानामित्यादीति। तत्त्वदृष्ट्यैव भेदवचने का हानिरित्या-शङ्क्याऽऽह—पुर इति। आविद्यक भेदमनूद्य तत्तदात्मना स्थितब्रह्मचैतन्यस्यैव विद्याविद्याभ्यां बन्धमोक्षोक्तेर्न पूर्वापर-विरोधोऽस्तीति फलितमाह—अत इति। अविद्यादृष्टिमनूद्य तत्त्वदृष्टिमन्वाचष्टे—परमार्थतस्त्विति। प्रबोधात्प्रागपि तत्र तत्र देवादिशरीरेषु परमार्थतो ब्रह्मैवाऽऽसीच्चेदौपदेशिकं ज्ञानमनर्थकमित्याशङ्क्याऽऽह—अन्यथैवेति। १५ ना[3]नाजीववादस्य तु नावकाशः प्रक्रमविरोधादित्याशयेनाऽऽह—तदिति। तथैवेत्युत्पन्नज्ञानानुसारित्वपरामर्शः।

---

१. विशिष्टाद्वैतिनः 'सर्वं भविष्यन्तो मनुष्या मन्यन्ते' इत्यस्य सर्वशब्दवाच्यं ब्रह्म सर्वं तद्भविष्यन्तः तदाविर्भावकामाः इति। ब्रह्म परमात्मा 'आत्मानमेवावेत्' इत्यस्य आत्मान्यं न ज्ञातवत् इत्यर्थः। तस्मात् तत् सर्वमभवत् इत्यस्योपायत्वनिषेधे तात्पर्यमित्यपव्याख्यानम्। स एव तदभवत् तदाविर्भाववानभवदित्यर्थः। अहमनुरभवं मदात्मैव मनोरात्मा इत्यादि तेषां उपनिषद्व्याख्यानशैली। 'योऽन्यामि'त्यादेरयमर्थः—यः पुमान् २० धारकत्वनियन्तृत्वादिना स्वस्मादात्मत्वेनान्या देवतां परमात्मरूपां असौ देवतारूपो धारकत्वनियन्तृत्वादिना आत्मभूतादन्यः अहं च धार्यत्वनियाम्यत्वादिप्रयुक्तच्छरीरत्वादन्यो भिन्न इत्युपास्ते इति च तेषां व्याख्या अद्वैतविद्वेषमूला। अपि च 'य एवं वेद अहं ब्रह्मास्मीति स इदं सर्वं भवति' इति तदुत्तरवाक्यस्य तत्समानुपूर्वीकस्य पूर्वोक्तार्थो नोक्तः अपि तु—अहं ब्रह्मशरीरः ब्रह्मैव मम आत्मा नियामक इति अर्थान्तरमुक्तं एकस्मिन् प्रकरणे इति स्पष्टो विरोधः एवं सर्वत्र स्वाभिप्रेतमर्थं प्रवेशयन्तोऽपीमेशङ्कराचार्याः न शब्दादिप्रमाणतदितिकर्तव्यता- २५ रूपसमीचीनन्यायमार्गा इति वदन्ति। मध्वाचार्यास्तु—अहम् अहेयं ब्रह्म अस्मि अस्तीत्यर्थः, न तु जीवेश्वराभेदः अत्र प्रतिपाद्यः। अतत्त्वमसीति जीवेश्वरभेदस्य नवकृत्वः उपदेशात्। योऽहं सोऽसौ इत्यादौ अहमित्यन्तर्यामिणि प्रयोगः लक्षणया अहंमनुरभवमिति चान्तर्यामिपरम्। अहेयं ब्रह्मेति वेद इत्यपि न साधु अवैदिकानां स्वभिन्नस्य ब्रह्मणः अनुपास्यत्वेन हेयत्वात्। 'अथ योऽन्यां देवतां' इत्यस्यास्मिन्मते अयमर्थः यः धारकत्वादिना मच्छरीरकः परमात्मा मदन्यः अहं च धार्यत्वेन तच्छरीरभूतः तदन्यः इति नियम्यनियामकयोर्भेदस्य लोकसिद्धत्वात् ३० तैरभ्युपगमाच्च एतादृशभेदज्ञानवन्तमधिकृत्य "न स वेद" इति श्रुतिः कथमुपपद्येत। अपि च एतादृशज्ञानवान् देवानां पशुः इति कथमुच्येत। तन्मते ब्रह्मविदोऽपि तादृशज्ञानावश्यंभावात् तज्ज्ञाने सति कथं पशुभावनिवृत्तिः इति चिन्तनीयम्। य एवं वेदाहं ब्रह्मास्मीति स इदं सर्वं भवतीत्यस्य मध्वाभिप्रेतोऽर्थः-ब्रह्मापि आत्मानं सर्वदा अस्मीति गुणपूर्णं इति च वेद अतः तस्य समग्रत्वं सर्वत्वरूपं वामदेवोऽपि एतादृशज्ञानादेव सर्वोऽभवत्। अहं मनुः इत्यत्र अहं पदं विष्णुपरत्वादुपपन्नम्। य एवाहं ब्रह्मास्मीत्यस्यापि स एवार्थ इत्याहुः। अत्र तत्तदर्थानां स्वरूप- ३५ प्रदर्शनमेव तदयुक्तत्वं स्पष्टयति। अहेयः अन्योऽस्ति हरेः अन्यः इति ज्ञानवान् विष्णुं जीवरूपेण जानन् अज्ञः।

२. अन्वयादिकृतपरिशोधनं ज्ञानेच्छादि आत्मनः शरीरसान्निध्ये सति भवति मृतशरीरे तु न भवति अतः शरीरं नात्मा नापीन्द्रियाणि मनो वा प्राणो वेति यथाशास्त्रमन्वयव्यतिरेकाभ्यां शोधनं कृत्वेत्यर्थः। पदार्थः तत्त्वं-पदार्थौ जीवेश्वरौ।

३. नानाजीववादः वाचस्पतिसम्मतः एकजीववाद एव तु सिद्धान्त इत्यर्थः भेदप्रतीतिस्तूपाधिभेदादित्यवगन्तव्यम्। ४०

अस्या ब्रह्मविद्यायाः सर्वभावापत्तिः फलमित्येतस्यार्थस्य द्रढिम्ने मन्त्रानुदाहरति श्रुतिः। कथम्। तद्ब्रह्मैतदात्मानमेवाहमस्मीति पश्यन्नेतस्मादेव ब्रह्मणो दर्शनादृषिर्वामदेवाख्यः प्रतिपेदे ह प्रतिपन्नवान्किल। स एतस्मिन्ब्रह्मात्मदर्शनेऽवस्थित एतान्मन्त्रान्ददर्श—अहं मनुरभवं सूर्यश्चेत्यादीन्। तदेतद्ब्रह्म पश्यन्निति ब्रह्मविद्या परामृश्यते। अहं[3] मनुरभवं सूर्यश्चेत्यादिना सर्वभावापत्तिं ब्रह्मविद्याफलं परामृशति। पश्यन्सर्वात्मभाव फलं
५ प्रतिपेद इत्यस्मात्प्रयोगाद्ब्रह्मविद्याऽसहायसाधनसाध्यं मोक्षं दर्शयति। भुञ्जानस्तृप्यतीति यद्वत्।

ब्रह्मविद्यायां सर्वाधिकारप्रदर्शनम्

सेयं ब्रह्मविद्यया सर्वभावापत्तिरासीन्महतां देवादीनां वीर्यातिशयान्नेदानीमैदंयुगीनानां विशेषतो मनुष्याणामल्पवीर्यत्वादिति स्यात्कस्यचिद्बुद्धिस्तद्व्युत्थापनायाऽऽह—तदिदं प्रकृतं ब्रह्म यत्सर्वभूतानुप्रविष्टं दृष्टिक्रियादिलिङ्गमेतर्ह्येतस्मिन्नपि वर्तमानकाले यः कश्चिद्व्यावृत्तबाह्यौत्सुक्य आत्मानमेवैवं वेदाहं ब्रह्मास्मीति
१० मपोह्योपाधिजनितभ्रान्तिविज्ञानाध्यारोपितान्विशेषान्संसारधर्मानागन्धितमनन्तरमबाह्यं ब्रह्मैवाहमस्मि केवलमिति। सोऽविद्याकृतासर्वत्वनिवृत्तेर्ब्रह्मविज्ञानादिदं सर्वं भवति नहि महावीर्येषु वामदेवादिषु हीनवीर्येषु वा वार्तमानिकेषु मनुष्येषु ब्रह्मणो विशेषस्तद्विज्ञानस्य वाऽस्ति।

वार्तमानिकेषु पुरुषेषु तु ब्रह्मविद्याफलेऽनैकान्तिकता शङ्क्यत इत्यत आह—तस्य ह ब्रह्मविज्ञातुर्यथोक्तेन

देवानां विघ्नकरणेऽसामर्थ्यम्

१५ विधिना देवा महावीर्याश्च नाप्यभूत्या अभवनाय ब्रह्मसर्वभावस्य नेशते न पर्याप्ताः किमुतान्ये। ब्रह्मविद्याफलप्राप्तौ विघ्नकरणे देवादय ईशत इति का शङ्केति। उच्यते—देवादीन्प्रति ऋणवत्त्वान्मर्त्यानाम्। "ब्रह्मचर्येण ऋषिभ्यो

तद्धैतदित्यादिवाक्यमवतार्य व्याकरोति—अस्या इति। मन्त्रोदाहरणश्रुतिमेव प्रश्नद्वारा व्याचष्टे—कथमित्यादिना। ज्ञानान्मुक्तिरित्यस्यार्थवादोऽयमिति द्योतयितुं किलेत्युक्तम्। आदिपदं समस्तवामदेवसूक्तग्रहणार्थम्। तत्रावान्तरविभागमाह—तदेतदिति। शतृप्रत्ययप्रयोगप्राप्तमर्थं कथयति—पश्यन्निति। "लक्षणहेत्वोः क्रियायाः"
२० (पा० सू० ३।२।१२६) इति हेतौ शतृप्रत्ययविधानान्नैरन्तर्ये च सति हेतुत्वसम्भवात्प्रकृते च प्रत्ययबलाद्ब्रह्मविद्यामोक्षयोर्नैरन्तर्यप्रतीतेस्तया साधनान्तरानपेक्षया लभ्यं मोक्षं दर्शयति श्रुतिरित्यर्थः। अत्रोदाहरणमाह—भुञ्जान इति। भुजिक्रियामात्रसाध्या हि तृप्तिरत्र प्रतीयते तथा पश्यन्नित्यादावपि ब्रह्मविद्यामात्रसाध्या मुक्तिर्भातीत्यर्थः।

तद्धैतदित्यादि व्याख्याय तदिदमित्याद्यवतारयितुं शङ्कते—सेयमिति। ऐदंयुगीनानां कलिकालवर्तिनामिति यावत्। उत्तरवाक्यमुत्तरत्वेनावतार्य व्याकरोति—तद्व्युत्थापनायेति। तस्य तादर्थ्यं वारयति—यत्सर्वभूतेति।
२५ प्रविष्टे प्रमाणमुक्तं स्मारयति—दृष्टीति। व्यावृत्तं बाह्येषु विषयेष्वौत्सुक्यं साभिलाषं मनो यस्य स तथोक्तः। एवशब्दार्थमेवाऽऽह—अहमिति। तदेव ज्ञानं विवृणोति—अपोह्येति। यद्वा मनुष्योऽहमित्यादिज्ञाने परिपन्थिनि कथं ब्रह्माहमिति ज्ञानमित्याशङ्क्याऽऽह—अपोह्येति। अहमित्यात्मज्ञानं सदा सिद्धमिति न तदर्थं प्रयतितव्यमित्याशङ्क्याऽऽह—संसारेति। केवलमित्यद्वितीयत्वमुच्यते। ज्ञानमुक्त्वा तत्फलमाह—सोऽविद्येति। यत्तु देवादीनां महावीर्यत्वाद्ब्रह्मविद्यया मुक्तिः सिध्यति नास्मदादीनामल्पवीर्यत्वादिति तत्राऽऽह—नहीति।
३० श्रेयांसि बहुविघ्नानीति प्रसिद्धिमाश्रित्य शङ्कते—वार्तमानिकेष्विति। शङ्कोत्तरत्वेनोत्तरवाक्यमादाय व्याकरोति—अत आहेत्यादिना। यथोक्तेनान्वयादिना प्रकारेण ब्रह्मविज्ञातुरिति सम्बन्धः। अपिशब्दार्थं कथयति—किमुतेति। अल्पवीर्यास्तत्र विघ्नकरणे पर्याप्ता नेति किमुत वाच्यमिति योजना। अप्राप्तप्रतिषेधायोगमभिप्रेत्य चोदयति—ब्रह्मविद्येति। शङ्कानिमित्तं दर्शयन्नुत्तरमाह—उच्यत इति। अधमर्णानिवोत्तमर्णा देवादयो मर्त्यान्प्रति विघ्नं कुर्वन्तीति शेषः। कथं देवादीन्प्रति मर्त्यानामृणित्वं तत्राऽऽह—ब्रह्मचर्येणेति। यथा

---

३५ १ ब्रह्मविद्या—अहं ब्रह्मास्मीति साक्षात्कारः।
२. तद्ब्रह्मैतत्—एतत् जीवरूपं चैतन्यं तत् प्रकृतं ब्रह्मेति पश्यत्—इत्युक्तेः।
३. 'अहमनुरभवं सूर्यश्चे'त्युक्त्या भिन्नभिन्नकालावच्छेदेन सर्वभाव इति शंका निरस्ता यतः सूर्यपुत्रः मनुः 'मनुर्वैवस्वत' इत्युक्तेः 'इमं विवस्वते योगं प्रोक्तवान्' इति च तेन मनुसूर्ययोरेककालत्वसूचनात् एककाले सर्वात्मभावः प्राप्त इत्यर्थो व्यज्यते। सूर्यः मनुपुत्रः तत्समकालिकः। तेन एककाले पितापुत्रोभयरूपत्वं सर्वरूपत्वे दृष्टान्तो
४० भवति। अन्यथाभिन्नकल्पयोः एकस्मिन् मनुः अन्यस्मिन् सूर्य इत्यभिप्रायसम्भवे सर्वात्मत्वप्रकाशनं क्लिष्टम्।

यज्ञेन देवेभ्यः प्रजया पितृभ्यः" इति हि जायमानमेवर्णवन्तं पुरुषं दर्शयति श्रुतिः। पशुनिदर्शनाच्चाथो अयं वा इत्यादिलोकश्रुतेश्चाऽऽत्मनो वृत्तिपरिरिपालयिषयाऽधमर्णानिव देवाः परतन्त्रान्मनुष्यान्प्रत्यमृतत्वप्राप्तिं प्रति विघ्नं कुर्युरिति न्याय्यैवैषा शङ्का।

स्वपशूनस्वशरीराणीव च रक्षन्ति देवाः। महत्तरां हि वृत्तिं कर्माधीनां दर्शयिष्यति देवादीनां बहुपशुसमतयैकैकस्य पुरुषस्य। "तस्मादेषां तन्न प्रियं यदेतन्मनुष्या विद्युः" इति हि वक्ष्यति। "यथा ह वै स्वाय लोकायारिष्टिमिच्छेदेवं हैवंविदे सर्वाणि भूतान्यरिष्टिमिच्छन्ति" इति च ब्रह्मवित्त्वे पारार्थ्यनिवृत्तेनं स्वलोकत्वं पशुत्वं वेत्यभिप्रायोऽप्रियारिष्टिवचनाभ्यामवगम्यते। तस्माद्‌ब्रह्मविदो ब्रह्मविद्याफलप्राप्तिं कुर्युरेव विघ्नं देवाः। प्रभाववन्तश्च हि ते। ५

**कर्मफलप्राप्तौ देवा न विघ्नं कुर्युः**

नन्वेवं सत्यन्यास्वपि कर्मफलप्राप्तिषु देवानां विघ्नकरणं पेयपानसमम्। हन्त तर्ह्यविस्रम्भोऽभ्युदयनिःश्रेयससाधनानुष्ठानेषु। तथेश्वरस्याचिन्त्यशक्तित्वाद्विघ्नकरणे प्रभुत्वम्। तथा कालकर्ममन्त्रौषधितपसाम्, एषां हि फलसंपत्तिविपत्तिहेतुत्वं शास्त्रे लोके च प्रसिद्धम्। अतोऽप्यनाश्वासः शास्त्रार्थानुष्ठाने। १०

न, सर्वपदार्थानां नियतनिमित्तोपादानाज्जगद्वैचित्र्यदर्शनाच्च। स्वभावपक्षे च तदुभयानुपपत्तेः। सुखदुःखादिफलनिमित्तं कर्मेत्येतस्मिन्पक्षे स्थिते वेदस्मृतिन्यायलोकपरिगृहीते देवेश्वरकालास्तावन्न कर्मफलविपर्यासकर्तारः। कर्मणां काङ्क्षितकारकत्वात्। कर्म हि शुभाशुभं पुरुषाणां देवकालेश्वरादिकारकमनपेक्ष्य नाऽऽत्मानं १५

पशुरेवं स देवानामिति मनुष्याणां पशुसादृश्यश्रवणाच्च तेषां पारतन्त्र्याद्देवादयस्तान्प्रति विघ्नं कुर्वन्तीत्याह—पश्विति। 'अथो अयं वा आत्मा सर्वेषां भूतानां लोकः' इति च तेषां सर्वप्राणिभोग्यत्वश्रुतेश्च सर्वे तद्विघ्नकरा भवन्तीत्याह—अथो इति। लोकश्रुत्यभिप्रेतमर्थं प्रकटयति—आत्मन इति। यथाऽधमर्णान्प्रत्युत्तमर्णा विघ्नमाचरन्ति तथा देवादयः स्वस्थितिपरिरक्षणार्थं परतन्त्रान्कर्मिणः प्रत्यमृतत्वप्राप्तिमुद्दिश्य विघ्नं कुर्वन्तीति तेषां तान्प्रति विघ्नकर्तृत्वशङ्का सावकाशैवेत्यर्थः। २०

पशुनिदर्शनेन विवक्षितमर्थं विवृणोति—स्वपशूनिति। पशुस्थानीयानां मनुष्याणां देवादिभी रक्ष्यत्वे हेतुमाह—महत्तरामिति। इतश्च देवादीनां मनुष्यान्प्रति विघ्नकर्तृत्वममृतत्वप्राप्तौ सम्भावितमित्याह—तस्मादिति। ततश्च तेषां तान्प्रति विघ्नकर्तृत्वं भातीत्याह—यथेति। स्वलोको देहः। एवंवित्त्वं सर्वभूतभोज्योऽहमिति कल्पनावत्त्वम्। क्रियापदानुषङ्गार्थश्चकारः। ब्रह्मवित्त्वेऽपि मनुष्याणां देवादिपारतन्त्र्याविघातात्किमिति ते विघ्नमाचरन्तीत्याशङ्क्याऽऽह—ब्रह्मवित्त्व इति। देवादीनां मनुष्यान्प्रति विघ्नकर्तृत्वे शङ्कामुपपादितामुपसंहरति—तस्मादिति। न केवलमुक्तहेतुबलादेव किन्तु सामर्थ्याच्चेत्याह—प्रभाववन्तश्चेति। २५

सामर्थ्याच्चेद्विद्याफलप्राप्तौ तेषां विघ्नकरणं तर्हि कर्मफलप्राप्तावपि स्यादित्यतिप्रसङ्गं शङ्कते—नन्विति। भवतु तेषां सर्वत्र विघ्नाचरणमित्यत आह—हन्तेति। अविस्रम्भो विश्वासाभावः। सामर्थ्याद्विघ्नकर्तृत्वेऽतिप्रसक्त्यन्तरमाह—तथेति। अतिप्रसङ्गान्तरमाह—तथा कालेति। विघ्नकरणे प्रभुत्वमिति पूर्वेण सम्बन्धः। ईश्वरादीनां यथोक्तकार्यकरत्वे प्रमाणमाह—एषां हीति। "एष ह्येव साधु कर्म कारयति"। "कर्म हैव तदूचतुरि"त्यादिवाक्यं शास्त्रशब्दार्थः। देवादीनां विघ्नकर्तृत्ववदीश्वरादीनामपि तत्सम्भवाद्वेदार्थानुष्ठाने विश्वासाभावात्तदप्रामाण्यं प्राप्तमिति फलितमाह—अतोऽपीति। ३०

किमिदमवैदिकस्य चोद्यं किंवा वैदिकस्येति विकल्प्याऽऽद्यं दूषयति—नेत्यादिना। दध्याद्युत्पिपादयिषया दुग्धाद्यादानदर्शनात्प्राणिनां सुखदुःखादितारतम्यदृष्टे स्वभाववादे च नियतनिमित्तादानवैचित्र्यदर्शनयोरनुपपत्तेस्तदयोगात्कर्मफलं जगदेष्टव्यमित्यर्थः। द्वितीयं प्रत्याह—सुखेति। 'कर्म हैव' इत्याद्या श्रुतिः। 'कर्मणा बध्यते जन्तुः' इत्याद्या स्मृतिः। जगद्वैचित्र्यानुपपत्तिश्च न्यायः। कथमेतावता देवादीनां कर्मफले विघ्नकर्तृत्वाभावस्तत्राऽऽह—कर्मणामिति। कथं हेतुसिद्धिरित्याशङ्क्य कर्मणः स्वोत्पत्तौ देवाद्यपेक्षां व्यतिरेकमुखेन दर्शयति—कर्म हीति। स्वफलेऽपि तस्य तत्सापेक्षत्वमस्तीत्याह—लब्धेति। निष्पन्नमपि कर्म पूर्वोक्तं कारकमनपेक्ष्य स्वफलदाने शक्तं न ३५

१. वृत्तिपरिरिपालयिषा जीवनस्य पालनेच्छा। कर्माधीनजीवनो हि देव. इतः प्रदानं देवा उपजीवन्ति इति श्रुतेः।

प्रतिलभते। लब्धात्मकमपि फलदानेऽसमर्थम्। क्रियाया हि कारकाद्यनेकनिमित्तोपादानस्वाभाव्यात्। तस्मात् क्रियानुगुणा हि देवेश्वरादय इति कर्मसु तावन्न फलप्राप्तिं प्रत्यविस्रम्भः।

कर्मणामप्येषां[1] वशानुगत्वं क्वचित्स्वसामर्थ्यस्याप्रणोद्यत्वात्। कर्मकालदैवद्रव्यादिस्वभावानां[2] गुणप्रधानभावस्त्वनियतो दुर्विज्ञेयश्चेति तत्कृतो मोहो लोकस्य। कर्मैव कारकं नान्यत्फलप्राप्ताविति केचित्। दैवमेवेत्यपरे। काल इत्येके। द्रव्यादिस्वभाव इति केचित्। सर्व एते संहता एवेत्यपरे। तत्र कर्मणः प्राधान्यमङ्गीकृत्य वेदस्मृतिवादाः "पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन" इत्यादयः। यद्यप्येषां स्वविषये कस्यचित्प्राधान्योद्भव इतरेषां तत्कालीनप्राधान्यशक्तिस्तम्भस्तथाऽपि न कर्मणः फलप्राप्तिं प्रत्यनैकान्तिकत्वम्। शास्त्रन्यायनिर्धारितत्वात् कर्मप्राधान्यस्य।

## विद्याफले न देवानां विघ्नकारिता

न, अविद्यापगममात्रत्वाद्ब्रह्मप्राप्तिफलस्य। यदुक्तं ब्रह्मप्राप्तिफलं प्रति देवा विघ्नं कुर्युरिति तत्र न देवानां विघ्नकरणे सामर्थ्यम्। कस्मात्? विद्याकालानन्तरितत्वाद्ब्रह्मप्राप्तिफलस्य। कथम्। यथा लोके द्रष्टुश्चक्षुष आलोकेन संयोगो यत्कालस्तत्काल एव रूपाभिव्यक्तिः। एवमात्मविषयं[3] विज्ञानं यत्कालं तत्काल एव तद्विषयाज्ञानतिरो-

भवतीत्यर्थः। कर्मणः स्वोत्पत्तौ स्वफले च कारकसापेक्षत्वे हेतुमाह—क्रियाया हीति। कारकादीनामनेकेषां निमित्तानामुपादानेन स्वभावो निष्पद्यते यस्याः सा तथोक्ता तस्या भावः कारकाद्यनेकनिमित्तोपादानस्वाभाव्यं तस्मादुभयत्र परतन्त्रं कर्मेत्यर्थः। देवादीनां कर्मापेक्षितकारकत्वे फलितमाह—तस्मादिति।

इतोऽपि कर्मफले नाविस्रम्भोऽस्तीत्याह—कर्मणामिति। एषां देवादीनां क्वचिद्विघ्नलक्षणे कार्ये कर्मणां वशवर्तित्वमेष्टव्यं प्राणिकर्मापेक्षामन्तरेण विघ्नकरणेऽतिप्रसङ्गादतोऽन्यत्रापि सर्वत्र तेषां तदपेक्षा वाच्येत्यर्थः। तत्र तेषां कर्मवशवर्तित्वे हेत्वन्तरमाह—स्वसामर्थ्यस्येति। विघ्नलक्षणं हि कार्यं दुःखमुत्पादयति। न च दुःखमृते पापादुपपद्यते। दुःखविषये पापसामर्थ्यस्य शास्त्राधिगतस्याप्रत्याख्येयत्वात्तस्मात्प्राणिनामदृष्टवशादेव देवादयो विघ्नकारणमित्यर्थः। देवादीनां कर्मपारतन्त्र्ये कर्म तत्परतन्त्रं न स्यात्प्रधानगुणभाववैपरीत्यायोगादित्याशङ्क्याऽऽह—कर्मेति। इतश्च नामीषां नियतो गुणप्रधानभावोऽस्तीत्याह—दुर्विज्ञेयश्चेति। इतिशब्दो हेत्वर्थः। यतो गुणप्रधानकृतो मतिविभ्रमो लोकस्योपलभ्यते तस्मादसौ दुर्विज्ञेयो न नियतोऽस्तीति योजना। मतिविभ्रमे वादिविप्रतिपत्तिं हेतुमाह—कर्मैवेत्यादिना। कथं तर्हि निश्चयस्तत्राऽऽह—तत्रेति। वेदवादानुदाहरति—पुण्यो वा इति। आदिपदेन 'धर्मरज्ज्वा व्रजेदूर्ध्वम्' इत्यादयः स्मृतिवादा गृह्यन्ते। सूर्योदयदाहसेचनादौ कालज्वलनसलिलादेः प्राधान्यप्रसिद्धेर्न कर्मैव प्रधानमित्याशङ्क्याह—यद्यपीति। अनैकान्तिकत्वमप्रधानत्वम्। तत्र हेतुमाह—शास्त्रेति। श्रुतिस्मृतिलक्षणं शास्त्रमुदाहृतम्। जगद्वैचित्र्यानुपपत्तिर्न्यायः।

कर्मफले देवादीनां विघ्नकर्तृत्वं प्रसङ्गागतं निराकृत्य विद्याफले तेषां तदाशङ्कितं निराकरोति—नाविद्येति। तत्र नञर्थमुक्तानुवादपूर्वकं विशदयति—यदुक्तमिति। तत्र प्रश्नपूर्वकं पूर्वोक्तं हेतुं स्फुटयति—कस्मादिति। आत्मनो ब्रह्मत्वप्राप्तिरूपाया मुक्तेरज्ञानध्वस्तिमात्रत्वात्तस्याश्च ज्ञानेन तुल्यकालत्वात्तस्मिन्सति तस्य फलस्याऽवश्यकत्वाद्देवा-

---

१. कर्मणामिति—एषां देवानां कर्मणा वशानुगतत्वं, कर्मवशवर्तित्वमित्यर्थः। येषां विघ्नं कर्तव्यं तत्कर्मप्रेरणेनैव ते विघ्नं कुर्युरित्यर्थः। क्वचित् कर्मणः स्वसामर्थ्यस्याङ्गीकार्यत्वात् यथा मेघाडम्बरादौ प्राणिकर्मैव हेतुः।

२. देवाः वैदिककर्मणि उद्देश्यत्वेनापेक्ष्यन्ते "कालः वसन्तः पूर्वाह्णे" इत्यादिः ईश्वरः सर्वत्र साधारणकारणत्वेनापेक्षितः लब्धात्मकमपि कर्म कालादिसापेक्षम्। एवं केचित् बाल्ये दुःखिनोऽपि यौवनादौ सुखिनः. एवं वैपरीत्येन।

३. आत्मविषयं ज्ञानं यत्कालं तत्काल एव तद्विषयाज्ञानतिरोभावः स्यात्। अनेन ज्ञानजन्या अज्ञाननिवृत्तिः तदुत्तरक्षणे भवतीति पक्षः प्रत्युक्तः। अत एव अद्वैतसिद्धौ तृतीयमिथ्यात्वं ज्ञाननिवर्त्यत्वमित्थं पर्यष्कारि ज्ञानप्रयुक्तावस्थितिसामान्यप्रतियोगित्वमिति। अत्रानुकूलतर्कतया व्याप्तिः ब्रह्मानन्दे. अद्वैतसिद्धौ उपक्षिप्यते या या अप्रामाण्यज्ञानादिशून्यसाक्षात्कारप्रमा सा सा समानविषयकाज्ञानक्षणावृत्तिः इति प्रकृतभाष्यमेवास्य मूलम्। अविद्याकार्यतिरोभावश्चोत्तरक्षणे तत्र च व्याप्तिः—या या पटुतमसंस्कारसहितोक्तप्रमा सा सा स्वसमानविषयाज्ञानतत्कार्यं पूर्वक्षणावृत्तिः इत्यस्यधायि।

भावः स्यात्। अतो ब्रह्मविद्यायां सत्यामविद्याकार्यानुपपत्तेः प्रदीप इव तमःकार्यस्य तत्केन कस्य विघ्नं कुर्युर्देवाः। यत्राऽऽत्मत्वमेव देवानां ब्रह्मविदः।

तदेतदाह—आत्मा स्वरूपं ध्येयं यत्तत्सर्वशास्त्रैर्विज्ञेयं ब्रह्म हि यस्मादेषां देवानां स ब्रह्मविद्भवति ब्रह्मविद्यासमकालमेवाविद्यामात्रव्यवधानापगमाच्छुक्तिकाया इव रजताभासायाः शुक्तिकात्वमित्यवोचाम। अतो नात्मनः प्रतिकूलत्वे देवानां प्रयत्नः सम्भवति। यस्य ह्यनात्मभूतं फलं देशकालनिमित्तान्तरितं तत्रानात्मविषये ५ सफलः प्रयत्नो विघ्नाचरणाय देवादीनाम्। न त्विह विद्यासमकाल आत्मभूते देशकालनिमित्तानन्तरितेऽवसरानुपपत्तेः।

### अन्त्यस्यैव साक्षात्कारस्य निवर्तकत्वनिरासः

एवं तर्हि विद्याप्रत्ययसन्तत्यभावाद्विपरीतप्रत्ययतत्कार्ययोश्च दर्शनादन्त्य एवाऽऽत्मप्रत्ययोऽविद्यानिवर्तको न तु पूर्व इति। न, प्रथमेनानैकान्तिकत्वात्। यदि हि प्रथम आत्मविषयः प्रत्ययोऽविद्यां न निवर्तयति तथाऽन्त्योऽपि १० तुल्यविषयत्वात्। एवं तर्हि सन्ततोऽविद्यानिवर्तको न विच्छिन्न इति। न, जीवनादौ सति सन्तत्यनुपपत्तेः। नहि जीवनादिहेतुके प्रत्यये सति विद्याप्रत्ययसंततिरुपपद्यते विरोधात्। अथ जीवनादिप्रत्ययतिरस्करणेनैवाऽऽमरणान्ताद्विद्यासन्ततिरिति चेन्न। प्रत्ययेयत्तासन्तानानवधारणाच्छास्त्रार्थानवधारणदोषात्। इयतां प्रत्ययानां सन्ततिरविद्याया निवर्तिकेत्यनवधारणाच्छास्त्रार्थो नावध्रियेत। तच्चानिष्टम्।

सन्ततिमात्रत्वेऽवधारित एवेति चेत्, न। आद्यन्तयोरविशेषात्। प्रथमा विद्याप्रत्ययसन्ततिर्मरणकालान्ता १५

दीना विघ्नाचरणे नावकाशोऽस्तीत्यर्थः। उक्तमेवार्थमाकाङ्क्षापूर्वकं दृष्टान्तेन समर्थयते—कथमित्यादिना। ब्रह्मविद्यातत्फलयोः समानकालत्वे फलितमाह—अत इति। देवादीना ब्रह्मविद्याफले विघ्नकर्तृत्वाभावे हेत्वन्तरमाह—यत्रेति। यस्या विद्याया सत्या ब्रह्मविदो देवादीनामात्मत्वमेव तस्यां सत्यां कथं ते तस्य विघ्नमाचरेयुः। स्वविषये तेषां प्रातिकूल्याचरणानुपपत्तेरित्यर्थः।

उक्तेऽर्थे समनन्तरवाक्यमुत्थाप्य व्याचष्टे—तदेतदाहेति। कथं ब्रह्मविद्यासमकालमेव ब्रह्मविद्देवादीनामात्मा २० भवति तत्राऽऽह—अविद्यामात्रेति। यथेदं रजतमिति रजताकारायाः शुक्तिकायाः शुक्तिकात्वमविद्यामात्रव्यवहितं तथा ब्रह्मविदोऽपि सर्वात्मत्वे तन्मात्रव्यवधानात्तस्याश्च विद्योदये नान्तरीकत्वेन निवृत्तेर्युक्तं विद्यातत्फलयोः समानकालत्वम्। उक्तं चैतत्प्रतिवचनदशायामित्यर्थः। उक्तस्य हेतोरपेक्षितं वदन्ब्रह्मविदो देवाद्यात्मत्वे फलितमाह—अत इति। कैवल्ये तेषां विघ्नाकर्तृत्वे कुत्र तत्कर्तृत्वेत्याशङ्क्याऽऽह—यस्य हीति। तेषां निरङ्कुशप्रसरत्वं वारयति—न त्विति। सफलः प्रयत्न इति पूर्वेण सम्बन्धः। तस्य निरवकाशत्वादिति हेतुमाह—अवसरेति। २५

ज्ञानस्यानन्तरफलत्वात्तत्फले देवादीना न विघ्नकर्तृतेत्युक्तमुपेत्य स्वयूथ्यः शङ्कते—एवं तर्हीति। ज्ञानस्यानन्तरफलत्वे न तदज्ञानं निवर्तयेदज्ञानमिव तत्त्वज्ञानमपि ब्रह्मास्मीति ज्ञानसन्तत्यभावात्। न चाऽऽद्यमेव ज्ञानमज्ञानध्वंसि प्रागिवोर्ध्वमपि रागादेस्तत्कार्यस्य च दृष्टत्वात्। अतो देहपातकालीनं ज्ञानमज्ञानं निवर्तयतीति कुतो जीवन्मुक्तिरित्यर्थः। अन्त्यज्ञानस्याज्ञाननिवर्तकत्वं तत्सन्ततेर्वा प्रथमे तस्यान्त्यत्वादात्मविषयत्वाद्वा तद्व्यवसितेति विकल्प्योभयत्र दृष्टान्ताभाव मत्वा द्वितीये दोषान्तरमाह—न प्रथमेनेति। तदेवानुमानेन स्फोरयति—यदि हीति। ३०

कल्पान्तरं शङ्कयति—एवं तर्हीति। अविच्छिन्ना ज्ञानसन्ततिरज्ञानं निवर्तयतीत्येतद्दूषयति—नेत्यादिना। जीवनादिहेतुकः प्रत्ययो बुभुक्षितोऽहं भोक्ष्येऽहमित्यादिलक्षणः। तस्य बुभुक्षाद्युपप्लुतस्य ब्रह्मास्मीत्यविच्छिन्नप्रत्ययसन्ततेश्च विरुद्धतया यौगपद्यायोगे हेतुमाह—विरोधादिति। प्रत्ययसन्ततिमुपपादयन्नाशङ्कते—अथेति। उक्तरीत्या प्रत्ययसन्ततिमुपेत्य दूषयति—नेत्यादिना। तमेव दोषं विशदयति—इयतामिति। शास्त्रार्थो ज्ञानसन्ततिरज्ञानं निवर्तयतीत्येवमात्मकः। ३५

आत्मेत्येवोपासीतेति श्रुतेरात्मज्ञानसन्ततिमात्रसद्भावे ततो विद्याद्वाराऽविद्याध्वस्तिरिति शास्त्रार्थनिश्चयसिद्धिरित्याह—सन्ततीति। आत्मधीसन्ततेः सत्त्वेऽपि न साऽऽत्मविषयत्वाद्विद्याद्वाराऽविद्या निवर्तयति। आद्यद्वित्रिक्षणस्थात्मधीसन्ततौ व्यभिचारादिति परिहरति—नाऽऽद्यन्तयोरिति। पूर्वस्मिन्प्रत्यये नाविद्यानिवर्तकत्वमन्त्ये तु तथेत्युक्ते तस्यान्त्यत्वात्तथात्वं चेद्दृष्टान्ताभाव.। आत्मविषयत्वात्तथात्वे प्रथमप्रत्यये व्यभिचार. स्यादित्युक्तौ दोषौ। आद्या सन्ततिर्नाविद्याध्वंसिनी। अन्त्या तु तथेत्यङ्गीकारेऽपि विशेषाभावादन्त्यत्वात्तस्या निवर्तकत्वे दृष्टान्ताभावः। ४०

वेति विशेषाभावादाद्यन्तयोः प्रत्यययोः पूर्वोक्तौ दोषौ प्रसज्येयाताम् । एवं तर्ह्यनिवर्तक एवेति चेन्न । "तस्मात्तत्सर्वमभवत्" इति श्रुतेः । "भिद्यते हृदयग्रन्थिः" "तत्र को मोहः" इत्यादिश्रुतिभ्यश्च ।

अर्थवाद इति चेन्न । सर्वशाखोपनिषदामर्थवादत्वप्रसङ्गात् । एतावन्मात्रार्थत्वोपक्षीणा हि सर्वशाखोपनिषदः । प्रत्यक्षप्रमितात्मविषयत्वादस्त्येवेति चेन्न । उक्तपरिहारत्वात् । अविद्याशोकमोहभयादिदोषनिवृत्तेः प्रत्य-
५ क्षत्वादिति चोक्तः परिहारः । तस्माद्योऽन्त्यः सन्ततोऽसन्ततश्चेत्यचोद्यमेतत् । अविद्यादिदोषनिवृत्तिफलावसानत्वाद्विद्यायाः । य एवाविद्यादिदोषनिवृत्तिफलकृत्प्रत्यय आद्योऽन्त्यः सन्ततोऽसन्ततो वा स एव विद्येत्यभ्युपगमान्न चोद्यस्यावतारगन्धोऽप्यस्ति ।

जीवन्मुक्तस्य लोकप्रत्ययः प्रारब्ध वशात्

यत्तूक्तं विपरीतप्रत्ययतत्कार्ययोश्च दर्शनादिति । न तच्छेषस्थितिहेतुत्वात् । येन कर्मणा शरीरमारब्धं
१० तद्विपरीतप्रत्ययदोषनिमित्तत्वात्तस्य तथाभूतस्यैव विपरीतप्रत्ययदोषसंयुक्तस्य फलदाने सामर्थ्यमिति यावच्छरीरपातस्तावत्फलोपभोगाङ्गतया विपरीतप्रत्ययं रागादिदोषं च तावन्मात्रमाक्षिपत्येव । मुक्तेषुवत्प्रवृत्तफलत्वात्तद्धेतुकस्य कर्मणः । तेन न तस्य निवर्तिका विद्याऽविरोधात् । किं तर्हि स्वाश्रयादेव स्वात्मविरोध्यविद्याकार्यं यदुत्पित्सु तन्निरुणद्ध्यनागतत्वादतीतं हीतरत् ।

आत्मविषयत्वात्तद्भावे त्वनैकान्तिकत्वमित्येतावेव दोषौ स्यातामित्युक्तं विवृणोति—प्रथमेति । अन्त्यप्रत्ययस्य तत्सन्त-
१५ तेश्चाविद्यानिवर्तकत्वासम्भवे प्रथमस्यापि रागाद्यनुवृत्त्या तदयोगाज्ज्ञानमज्ञानानिवर्तकमेवेति चोदयति—एवं तर्हीति । श्रुतिविरोधेन परिहरति—न तस्मादिति ।

तासामर्थवादत्वेनाविवक्षितत्वं शङ्कते—अर्थवाद इति चेदिति । अतिप्रसङ्गेन दूषयति—न सर्वेति । यथोक्तश्रुतीनामर्थवादत्वेऽपि कथं सर्वशाखोपनिषदां तत्त्वप्रसक्तिरित्याशङ्क्याऽऽह—एतावदिति । एतावन्मात्रार्थत्वमात्मज्ञानात्तदज्ञाननिवृत्तिरित्येतावन्मात्रस्यार्थस्य सद्भावः । अहंधीगम्ये[1] प्रतीचि तासां प्रवृत्तेः संवादविसंवादाभ्यां
२० मानत्वायोगादस्त्येवार्थवादतेति प्रसङ्गस्येष्टत्वं शङ्कते—प्रत्यक्षेति । प्रमातुरहन्धीगम्यता नाऽऽत्मनस्तत्साक्षिणस्तस्य वेदान्ता ब्रह्मत्वं बोधयन्तीति न संवादादिशङ्केत्याह—नोक्तेति । विद्वदनुभवमाश्रित्यापि फलश्रुतेरर्थवादत्वं समाहितमित्याह—अविद्येति । आत्मज्ञानस्य तदज्ञाननिवर्तकत्वे स्थिते परमतस्य निरवकाशत्वं फलतीत्याह—तस्मादिति । चोद्यस्यानवकाशत्वमेव विशदयति—अविद्यादीति ।

ज्ञानसन्ततेरन्त्यज्ञानस्य वाऽज्ञानध्वंसित्वासिद्धेराद्यमेव ज्ञानं तथेत्युक्तं सम्प्रति परोक्तमनुवदति—यत्तूक्तमिति ।
२५ दर्शनान्नाऽऽद्यं ज्ञानमज्ञानध्वंसीति शेषः । प्रारब्धकर्मशेषस्य विद्वद्देहस्थितिहेतुत्वाद्विदुषाऽपि यावदारब्धक्षयं रागाद्याभासाविरोधात्तत्क्षये च देहाभासजगदाभासयोरभावान्नाऽऽद्यज्ञानस्याज्ञाननिवर्तकत्वानुपपत्तिरित्युत्तरमाह—न तच्छेषेति । तदेव प्रपञ्चयति—येनेत्यादिना । यच्छब्दस्याऽऽक्षिपतीत्यनेन सम्बन्धः । आक्षेपकत्वनियमं साधयति—विपरीतेति । मिथ्याज्ञानेन रागादिदोषेण च निमित्तेन प्रवृत्तत्वादिति यावत् । तथाभूतस्येत्यस्य विवरणं विपरीतप्रत्ययेत्यादि । कर्मैव षष्ठ्या विशेष्यते । तावन्मात्रं प्रतिभासमात्रशरीरम् । प्रारब्धकर्मणोऽप्यज्ञानजन्यत्वेन ज्ञाननि-
३० वर्त्यत्वान्न ज्ञानिनस्ततो देहाभासादि सम्भवतीत्याशङ्क्याऽऽह—मुक्तेषुवदिति । यथा प्रवृत्तवेगस्येष्वादेर्वेगक्षयादेवाप्रतिबद्धस्य क्षयस्तथा भोगादेवाऽऽरब्धक्षयो "भोगेन[2] त्वितरे क्षपयित्वा सम्पद्यते" इति न्यायान्न ज्ञानादित्यर्थः । तद्धेतुकस्य विपरीतप्रत्ययादिप्रतिभासकार्यजनकस्येति यावत् ।

---

१. अहंधीगम्यः प्रत्यगात्मा तत्रोपनिषदां प्रवृत्तेः तासां न अज्ञाननिवर्तकत्वाभावात् । संवादे अप्रामाण्यं ज्ञातज्ञापकत्वात् विसंवादे प्रत्यक्षविरोधादप्रमात्वम्, अत अर्थवादः 'तरति शोकमात्मवित्' इत्यादिः (पू) तन्मानं तु
३५ श्रौतात्मा तु नाहं प्रत्ययगोचरः तत्साक्षित्वादित्युक्तमेव ।

२. भोगेन त्वितरे क्षपयित्वा सम्पद्यते—इदं ब्रह्मसूत्रचतुर्थाध्यायप्रथमपादस्यान्तिमं सूत्रम् । तदर्थश्च आरब्धकार्ये पुण्यपापे उपभोगेन क्षपयित्वा ब्रह्म सम्पद्यते—'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये' इति श्रुतेः पुनः कर्मान्तरोद्भवे चाज्ञानाभावेन कारणाभावादिति ।

## विदुषो विपरीतप्रत्ययाभाव एव

किञ्च न च विपरीतप्रत्ययो विद्यावत उत्पद्यते। निर्विषयत्वात्। अनवधृतविषयविशेषस्वरूपं हि सामान्यमात्रमाश्रित्य विपरीतप्रत्यय उत्पद्यमान उत्पद्यते यथा शुक्तिकायां रजतमिति। स च विषयविशेषावधारणवतोऽशेषविपरीतप्रत्ययाशयस्योपमर्दितत्वान्न पूर्ववत्सम्भवति। शुक्तिकादौ सम्यक्प्रत्ययोत्पत्तौ पुनरदर्शनात्।

क्वचित्तु विद्यायाः पूर्वोत्पन्नविपरीतप्रत्ययजनितसंस्कारेभ्यो विपरीतप्रत्ययावभासाः स्मृतयो जायमाना ५ विपरीतप्रत्ययभ्रान्तिमकस्मात्कुर्वन्ति। यथा विज्ञातदिग्विभागस्याप्यकस्माद्दिग्विपर्ययविभ्रमः। सम्यग्ज्ञानवतोऽपि चेत्पूर्ववद्विपरीतप्रत्यय उत्पद्यते सम्यग्ज्ञानेऽप्यविस्रम्भाच्छास्त्रार्थविज्ञानादौ प्रवृत्तिरसमञ्जसा स्यात्सर्वञ्च प्रमाणमप्रमाणं सम्पद्येत। प्रमाणाप्रमाणयोर्विशेषानुपपत्तेः। एतेन सम्यग्ज्ञानानन्तरमेव शरीरपाताभावः कस्मादित्येतत् परिहृतम्।

## सञ्चितकर्मणां ज्ञानकालानाञ्च क्षयः

ज्ञानोत्पत्तेः प्रागूर्ध्वं तत्कालजन्मान्तरसञ्चितानां च कर्मणामप्रवृत्तफलानां विनाशः सिद्धो भवति फलप्राप्तिविघ्ननिषेधश्रुतेरेव। "क्षीयन्ते चास्य कर्माणि" "तस्य तावदेव चिरम्" "सर्वे पाप्मानः प्रदूयन्ते" "तं विदित्वा न लिप्यते कर्मणा पापके न" "एतमु हैवैते न तरतः" "नैनं कृताकृते तपतः" "एतं ह वाव न तपति" "न बिभेति

ननु ज्ञानमनारब्धकर्मवदारब्धमपि कर्म कर्मत्वाविशेषान्निवर्तयिष्यति नेत्याह—तेनेति। अविद्यालेशेन सहाऽऽरब्धस्य कर्मणो विद्या निवर्तिका न भवतीत्यत्र हेतुमाह—अविरोधादिति। नहि ज्ञानादारब्धं कर्म क्षीयते १५ तदविरोधित्वादविद्यालेशाच्च तदवस्थितेरन्यथा जीवन्मुक्तिशास्त्रविरोधादिति भावः। आरब्धस्य कर्मणो ज्ञानानिवर्त्यत्वे ज्ञानं कर्मनिवर्तकमिति कथं प्रसिद्धिरित्याह—किं तर्हीति। प्रसिद्धिविषयमाह—स्वाश्रयादिति। ज्ञानविरोधि यदज्ञानकार्यमनारब्धं कर्म ज्ञानाश्रयप्रमात्राद्याश्रयादज्ञानात्फलात्मना जन्माभिमुख तन्निवर्तकं ज्ञानमिति प्रसिद्धिरविरुद्धेत्यर्थः। विमतं न ज्ञाननिवर्त्यं कर्मत्वादारब्धकर्मवदित्यनुमानादनारब्धमपि कर्म न ज्ञाननिरस्यमित्याशङ्क्याऽऽह—अनागतत्वादिति। अनारब्धं कर्म फलरूपेणाप्रवृत्तत्वात्प्रवृत्तेन ज्ञानेन निवर्त्यम्। आरब्धं तु कर्म फलरूपेण जातत्वा- २० त्तद्भोगादृते न निवृत्तिमर्हति। अनुमानं त्वागमापबाधितमप्रमाणमित्यर्थ.।

ननु अनारब्धकर्मनिवृत्तावपि विदुषश्चेदारब्धकर्म न निवर्तते तथा च यथापूर्वं विपरीतप्रत्ययादिप्रवृत्तेर्विद्वदविद्वद्विशेषो न स्यादत आह—किञ्चेति। हेतुसिद्ध्यर्थं विपरीतप्रत्ययविषयं विशदयति—अनवधृतेति। सम्प्रति विद्वद्विषये विषयाभावाद्विपरीतप्रत्ययस्यानुत्पत्तिमुपन्यस्यति—स चेति। आशयस्यागृहीतविशेषस्य सामान्यमात्रस्यालम्बनस्येति यावत्। आश्रयस्येति पाठेऽप्ययमेवार्थः। विदुषो विपरीतप्रत्ययादिप्रतिभासेऽपि न यथापूर्वं तत्सत्त्वं यस्य २५ तु यथापूर्वं संसारित्वमित्यादिन्यायविरोधादिति मत्वोक्तम्—न पूर्ववदिति। तत्रानुभवं प्रमाणयति—शुक्तिकादाविति।

यथाऽज्ञानवतो विपरीतप्रत्ययभावोऽनुभूयते तथा तद्वतोऽपि क्वचिद्विपरीतप्रत्ययो दृश्यते। तथा च कथं तवानुभवविरोधो न प्रसरेदित्याशङ्क्य परोक्षज्ञानवति विपरीतप्रत्ययसत्त्वेऽपि नापरोक्षज्ञानवति तद्दार्ढ्यमित्यभिप्रेत्याऽऽह—क्वचित्त्विति। परोक्षज्ञानाधार. सप्तम्यर्थः। पञ्चमी त्वपरोक्षज्ञानार्था। अकस्मादित्यज्ञानातिरिक्तक्लृप्तसामग्र्यभावोक्तिः। विदुषो मिथ्याज्ञानाभावमुक्त्वा विपक्षे दोषमाह—सम्यगिति। तत्पूर्वकमनुष्ठानमादिशब्दार्थः। ३० सम्यग्ज्ञानाविस्रम्भे दोषान्तरमाह—सर्वञ्चेति। ज्ञानादज्ञानध्वंसे तदुत्थमिथ्याज्ञानस्य सविषयस्य बाधितत्वान्न विदुषो रागादिरित्युपपाद्य ज्ञानान्मोक्षे तज्जन्ममात्रेण शरीरं स्थितिहेत्वभावात्पतेदिति सद्योमुक्तिपक्षं प्रत्याह—एतेनेति। प्रवृत्तफलस्य कर्मणो भोगादृते क्षयो नास्तीत्युक्तेन न्यायेनेति यावत्।

आरब्धकर्मणा देहस्थितिमुक्त्वेतरेषां ज्ञाननिवर्त्यत्वमुपसंहरति—ज्ञानोत्पत्तेरिति। तस्य ह न देवाश्च नेति विदुषो विघ्नफलप्राप्तौ विघ्ननिषेधश्रुत्यनुपपत्त्या यथोक्तोऽर्थो भातीत्यर्थः। न केवलं श्रुतार्थापत्त्या यथोक्तार्थसिद्धिः ३५ किन्तु श्रुतिस्मृतिभ्यामपीत्याह—क्षीयन्ते चेत्यादिना। जीवन्मुक्ति साधयता ज्ञानफले प्रतिबन्धाभाव उक्त इदानी

१. अत्र सामान्यन्यायं समन्वयभाष्योक्तं स्मारयति—नावगतब्रह्मभावस्य यथापूर्वं संसारित्वम्। यस्य तु यथापूर्वं संसारित्वं नासौ अवगतब्रह्मात्मभावः (१-४-४ ब्र० सू०)। ब्रह्मसिद्धिकारैस्तु मुक्तेषोः लक्ष्यमप्राप्यापि भित्त्यादिप्रतिबन्धकात् पतनं न लक्ष्यभेदन च तथा प्रारब्धकर्मणः प्रतिबन्धात् मध्यकाले शरीरपतनेऽपि न दोष. तावत्पर्यन्तमेव प्रारब्धं कर्मेति समाधिसंभवात्।

कुतश्चन" इत्यादिश्रुतिभ्यश्च । "ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते" इत्यादिस्मृतिभ्यश्च । यत्तु ऋणैः प्रतिबध्यत इति । तन्न । अविद्यावद्विषयत्वात् । अविद्यावान्हि ऋणी । तस्य कर्तृत्वाद्युपपत्तेः । "यत्र वा अन्यदिव स्यात्तत्रान्योऽन्यत्पश्येदि"ति हि वक्ष्यति । अनन्यत्सद्वस्त्वात्माख्यं यत्राविद्यायां सत्यामन्यदिव स्यात्तिमिरकृतद्वितीयचन्द्रवत्तत्राविद्याकृतानेककारकापेक्षं दर्शनादिकर्म तत्कृतं फलञ्च दर्शयति—तत्रान्यो-
५ ऽन्यत्पश्येदित्यादिना । यत्र पुनर्विद्यायां सत्यामविद्याकृतानेकत्वभ्रमप्रहाणं "तत्केन कं पश्येदि"ति कर्मासम्भवं दर्शयति । तस्मादविद्यावद्विषय एव ऋणित्वं कर्मसम्भवान्नेतरत्र ।

अविद्यावतां पशुभावः

एतच्चोत्तरत्र व्याचिख्यासिष्यमाणैरेव वाक्यैर्विस्तरेण प्रदर्शयिष्यामः तद्यथेहैव तावत्—अथ यः कश्चिद-ब्रह्मविदन्यामात्मनो व्यतिरिक्तां यां काञ्चिद्देवतामुपास्ते स्तुतिनमस्कारयागबल्युपहारप्रणिधानध्यानादिनोपास्ते
१० तस्या गुणभावमुपगम्याऽऽस्ते । अन्योऽसावनात्मा मत्तः पृथगन्योऽहमस्म्यधिकृतो मयाऽस्मा ऋणिवत्प्रतिकर्तव्यमि-त्येवम्प्रत्ययः सन्नुपास्ते न स इत्थम्प्रत्ययो वेद विजानाति तत्त्वं न स केवलमेवम्भूतोऽविद्वानविद्यादोषवानेव किं तर्हि यथा पशुर्गवादिर्वाहनदोहनाद्युपकारैरुपभुज्यत एवं स इज्याद्यनेकोपकारैरुपभोक्तव्यत्वादेकैकेन देवादीनाम् । अतः पशुरिव सर्वार्थेषु कर्मस्वधिकृत इत्यर्थः ।

एतस्य ह्यविदुषो वर्णाश्रमादिप्रविभागवतोऽधिकृतस्य कर्मणो विद्यासहितस्य केवलस्य च शास्त्रोक्तस्य
१५ कार्यं मनुष्यत्वादिको ब्रह्मान्त उत्कर्षः । शास्त्रोक्तविपरीतस्य च स्वाभाविकस्य कार्यं मनुष्यत्वादिक एव स्थाव-रान्तोऽपकर्षः । यथा चैतत्तथा"ऽथ त्रयो वाव लोका" इत्यादिना वक्ष्यामः कृत्स्नेनैवाध्यायशेषेण । विद्यायाश्च कार्यं सर्वात्मभावापत्तिरित्येतत्संक्षेपतो दर्शितम् । सर्वा हीयमुपनिषद्विद्याऽविद्याविभागप्रदर्शनेनैवोपक्षीणा । यथा चैषोऽर्थः कृत्स्नस्य शास्त्रस्य तथा प्रदर्शयिष्यामः ।

यस्मादेवं तस्मादविद्यावन्तं पुरुषं प्रति देवा ईशत एव विघ्नं कर्तुमनुग्रहञ्चेत्येतद्दर्शयति—यथा ह वै लोके
२० बहवो गोअश्वादयः पशवो मनुष्यं स्वामिनमात्मनोऽधिष्ठातारं भुञ्ज्युः पालयेयुरेवं बहुपशुस्थानीय एकैकोऽविद्वान्पुरुषो देवान्देवानिति पित्राद्युपलक्षणार्थं भुनक्ति पालयतीति । इम इन्द्रादयोऽन्ये मत्तो ममेशितारो भृत्य इवाहमेषां

पूर्वोक्तं शङ्काबीजमनुवदति—यत्त्विति । ऋणित्व हि विदुषोऽविदुषो वेति विकल्प्याऽऽद्यं दूषयन्द्वितीयमङ्गीकरोति—तन्नेत्यादिना । ऋणित्वस्येति शेष । तदेव स्फुटयति—अविद्यावानिति । अविदुषोऽस्ति कर्तृत्वादीत्यत्र मानमाह—यत्रेति । वक्ष्यमाणवाक्यार्थं प्रकृतोपयोगित्वेन कथयति—अनन्यदिति । ऋणित्व विदुषो नेत्युक्तं व्यक्तीकर्तुं तस्य नास्ति
२५ कर्तृत्वादीत्यत्रापि प्रमाणमाह—यत्र पुनरिति । विद्याया सत्यामविद्यायास्तत्कृतानेकत्वभ्रमस्य च प्रहाण यत्र सम्पद्यते तत्र तस्मादेव कारणात्तत्केनेत्यादिना कर्मादिरसम्भवं दर्शयतीति योजना । प्रमाणसिद्धमर्थं निगमयति—तस्मादिति ।

अविद्याविषयमृणित्वमित्येतत्प्रपञ्चयन्नविद्यासूत्रमवतारयति—एतच्चेति । तदृणित्वमविद्याविषय यथा स्फुट भवति तथाऽथ योऽन्यामित्यादावनन्तरग्रन्थ एव कथ्यते प्रथममित्यर्थ । तदक्षराणि व्याकरोति—अथेत्यादिना । विद्यासूत्रानन्तर्यमविद्यासूत्रस्याथशब्दार्थं । यागो गन्धपुष्पादिना पूजा । बल्युपहारो नैवेद्यसमर्पणम् । प्रणिधान-
३० मैकाग्र्यम् । ध्यानं तत्रैवानन्तरितप्रत्ययप्रवाहकरणम् । आदिपद प्रदक्षिणादिग्रहणार्थम् । भेददर्शनमत्रोपासनं न शास्त्रीयमित्यभिप्रेत्यैतदेव विवृणोति—अन्योऽसाविति । तस्य मूलमाह—न स इति । वाक्यान्तरमवतार्य व्याचष्टे—न स केवलमिति । सोऽविद्वानेवमुक्तदृष्टान्तवशात्पशुरिव देवाना भवति तेषा मध्ये तस्यैकैकेन बहुभिरुपकारैर्भोग्यत्वादिति योजना । पशुसाम्ये सिद्धमर्थं कथयति—अत इति ।

अथानेनाविद्यासूत्रेण किं कृत भवतीत्यपेक्षायामविद्यायाः संसारहेतुत्व सूचितमिति वक्तुमविद्याकार्यं
३५ कर्मफलं संक्षिपति—एतस्येत्यादिना । कर्मसहायभूता विद्या देवताध्यानात्मिका । शास्त्रीयवत्स्वाभाविककर्मणोऽपि द्वैविध्य सूचयितुं चशब्दः । तत्र तु सहकारिणी विद्या नग्नस्त्रीदर्शनादिरूपेति भेदः । कथ यथोक्तं कर्मफलमविद्यावतः स्यादित्याशङ्क्याऽऽह—यथा चेति । सूत्रद्वैविध्यसिद्ध्यर्थं विद्यासूत्रार्थमनुक्रामति—विद्यायाश्चेति । सूत्रान्तराशङ्कां वारयति—सर्वा हीति । कथमेतदवगम्यते तत्राऽऽह—यथेति ।

मनुष्याणामविद्यावतां देवपशुत्वे स्थिते फलितमाह—यस्मादिति । तत्र प्रमाणत्वेनोत्तरं वाक्यमुत्थापयति—
४० एतदिति । किमिदमविद्यावतो देवादिपालनमित्याशङ्क्य वाक्यतात्पर्यमाह—इम इन्द्रादय इति । अभिसन्धिर-

**ब्रह्म वा इदमग्र आसीदेकमेव तदेकँ सन्न व्यभवत् । तच्छ्रेयोरूपमत्यसृजत क्षत्रं यान्येतानि देवत्रा क्षत्राणीन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान इति । तस्मात्क्षत्रात्परं नास्ति तस्माद्ब्राह्मणः क्षत्रियमधस्तादुपास्ते राजसूये क्षत्र एव तद्यशो दधाति सैषा क्षत्रस्य योनिर्यद्ब्रह्म । तस्माद्यद्यपि राजा परमतां गच्छति ब्रह्मैवान्तत उपनिश्रयति स्वां योनिं य उ एनँ हिनस्ति स्वाँ स योनिमृच्छति स पापीयान्भवति यथा श्रेयाँसँ हिँसित्वा ॥११॥**

### देवानामानुकूल्यसिद्धये देवपूजा कर्तव्या

स्तुतिनमस्कारेज्यादिनाऽऽराधनं कृत्वाऽभ्युदयं निःश्रेयसञ्च तत्प्रत्तं फलं प्राप्स्यामीत्येवमभिसन्धिः। तत्र लोके बहुपशुमतो यथैकस्मिन्नेव पशावादीयमाने व्याघ्रादिनाऽपह्रियमाणे महदप्रियं भवति तथा बहुपशुस्थानीय एकस्मिन्पुरुषे पशुभावाद्व्युत्तिष्ठत्यप्रियं भवतीति किञ्चित्र देवानां बहुपश्वपहरण इव कुटुम्बिनः। तस्मादेषां देवानां तन्न प्रियं किं तद्यदेतद्ब्रह्मात्मतत्त्वं कथञ्चन मनुष्या विद्युर्विजानीयुः। तथा च स्मरणमनुगीतासु भगवतो व्यासस्य–

"क्रियावद्भिर्हि कौन्तेय देवलोकः समावृतः। न चैतदिष्टं देवानां मर्त्यैरुपरि वर्तनम्" ॥ इति।

अतो देवाः पशूनिव व्याघ्रादिभ्यो ब्रह्मविज्ञानाद्विघ्नमाचिकीर्षन्ति। अस्मदुपभोग्यत्वान्मा व्युत्तिष्ठेयुरिति। यं तु मुमोचयिषन्ति तं श्रद्धादिभिर्योक्ष्यन्ति विपरीतमश्रद्धादिभिः। तस्मान्मुमुक्षुर्देवाराधनपरः श्रद्धाभक्तिपरः प्रणेयोऽप्रमादी स्याद्विद्याप्राप्तिं प्रति विद्यां प्रतीति वा काक्वैतत्प्रदर्शितं भवति देवाप्रियवाक्येन ॥१०॥

सूत्रितः शास्त्रार्थ "आत्मेत्येवोपासीते"ति। तस्य च व्याचिख्यासितस्य सार्थवादेन "तदाहुर्यद्ब्रह्मविद्यये"त्यादिना सम्बन्धप्रयोजने अभिहिते। अविद्यायाश्च संसाराधिकारकारणत्वमुक्तमथ योऽन्यां देवतामुपास्त इत्यादिना।

विद्यवतः पुरुषस्येति शेषः। एकस्मिन्नेवेत्यादिवाक्यमादाय व्याचष्टे—तत्रेति। मनुष्याणां पशुभावाद्व्युत्थानमप्रिय देवानामिति स्थिते तदुपायमपि तत्त्वज्ञान तेषा देवा विद्विषन्तीत्याह—तस्मादिति। तत्त्वविद्याया दौर्लभ्यं कथञ्चनेत्युक्तम्। मनुष्याणामुत्कर्षं देवा न मृष्यन्तीत्यत्र प्रमाणमाह—तथा चेति। तेषा ब्रह्मविद्यया कैवल्यप्राप्तिः सुतरामनिष्टेति भाव.।

देवादीनां मनुष्येषु ब्रह्मज्ञानस्याप्रियत्वेऽपि किं स्यादित्याशङ्क्याऽऽह—अत इति। तेषा विघ्नमारचयताम-भिप्रायमाह—अस्मदिति। तर्हि देवादिभिरुपहताना मनुष्याणा मुमुक्षैव न सम्पद्येतेत्याशङ्क्याऽऽह—यं त्विति। उक्तं हि—

"न देवा दण्डमादाय रक्षन्ति पशुपालवत्। यं हि रक्षितुमिच्छन्ति बुद्ध्या सयोजयन्ति तम् ॥" इति।

तर्हि किमिति सर्वानेव देवा नानुगृह्णन्तीत्याशङ्क्याऽऽह—विपरीतमिति। देवतापराङ्मुखममुमोचयिषित-मिति यावत्। सम्प्रति देवाप्रियवाक्येन ध्वनितमर्थमाह—तस्मादिति। अविद्वत्सु मनुष्येषु देवादीना स्वातन्त्र्यं तच्छब्दार्थ.। श्रद्धादिप्रधानस्तदाराधनपरः सन्देवादीना प्रिय स्यात्तद्विपक्षस्य मुमुक्षावैफल्यादित्यर्थः। तत्प्रीति-विषयश्च तत्प्रसादासादितवैराग्यः सर्वाणि कर्माणि संन्यस्य विद्याप्रापकश्रवणादिकं प्रत्येकाग्रमनाः स्यादित्याह—अप्रमादीति। श्रवणादिकमनुतिष्ठन्नपि वर्णाश्रमाचारपरो भवेदन्यथा विद्यालक्षणे फले प्रतिबन्धसम्भवादित्याशये-नाऽऽह—विद्यां प्रतीति। भयादिनिमित्ता ध्वनेर्विकृति' काकुरुच्यते। यथाऽऽह—'काकु. स्त्रिया विकारो य' शोक-भीत्यादिभिर्ध्वने·' इति। तया काक्वा काण्वश्रुते' स्वरकम्पेन भयमुपलक्ष्य देवादिभजने कल्प्यते तात्पर्यमित्याह—काक्वेति ॥१०॥

ब्रह्मकण्डिकामित्थ व्याख्याय ब्रह्म वा इदमित्यादिवाक्यस्यातीतेन सम्बन्ध वक्तु वृत्तं कीर्तयति—सूत्रित इति। शास्त्रार्थशब्दो ब्रह्मविद्याविषयः। तदाहुरित्यादिनोक्तमनुवदति—तस्य चेति। अर्थवादस्तद्यो यो देवाना-मित्यादि.। सम्बन्धो ज्ञानस्य सर्वापत्तिफलेन साध्यसाधनत्वमधिकारिणाऽऽश्रयाश्रयित्वमैक्येन विषयविषयित्वमिति विभाग'। अविद्यासूत्रे वृत्तं कथयति—अविद्यायाश्चेति। ससारस्याधिकारः प्रवृत्तिरुत्पत्तिरिति यावत्। यथा

तत्राविद्वानृणी पशुवद्देवादिकर्मकर्तव्यतया परतन्त्र इत्युक्तं किं पुनर्देवादिकर्मकर्तव्यत्वे निमित्तं ? वर्णा आश्रमाश्च तत्र के वर्णा इत्यत इदमारभ्यते। यन्निमित्तसम्बद्धेषु कर्मस्वयं परतन्त्र एवाधिकृतः संसारीत्येतस्यैवार्थस्य प्रदर्शनायाग्निसर्गानन्तरमिन्द्रादिसर्गो नोक्तः। अग्नेस्तु सर्गः प्रजापतेः सृष्टिपरिपूरणाय प्रदर्शितः। अयं चेन्द्रादिसर्गस्तत्रैव द्रष्टव्यस्तच्छेषत्वात्। इह तु स एवाभिधीयतेऽविदुषः कर्माधिकारहेतुप्रदर्शनाय।

५ ब्रह्म वा इदमग्र आसीद्यदग्निं सृष्ट्वाऽग्निरूपापन्नं ब्रह्म ब्राह्मणजात्यभिमानाद्ब्रह्मेत्यभिधीयते। वा इदं क्षत्त्रादिजातं ब्रह्मैवाभिन्नमासीदेकमेव। नाऽऽसीत्क्षत्त्रादिभेदः। तद्ब्रह्मैकं क्षत्त्रादिपरिपालयित्रादिशून्यं सन्न व्यभवन्न विभूतवत्कर्मणे नालमासीदित्यर्थः। ततस्तद्ब्रह्म ब्राह्मणोऽस्मि ममेत्थं कर्तव्यमिति ब्राह्मणजातिनिमित्तं कर्म चिकीर्षुरात्मनः कर्मकर्तृत्वविभूत्यै श्रेयोरूपं प्रशस्तरूपमत्यसृजतातिशयेनासृजत सृष्टवत्। किं पुनस्तद्यत्सृष्टं क्षत्त्रं क्षत्त्रियजातिः, तद्व्यक्तिभेदेन प्रदर्शयति—यान्येतानि प्रसिद्धानि लोके देवत्रा देवेषु क्षत्त्राणीति। जात्याख्यायां पक्षे
१० बहुवचनस्मरणाद्व्यक्तिबहुत्वाद्वा भेदोपचारेण बहुवचनम्।

कानि पुनस्तानीत्याह तत्राभिषिक्ता एव विशेषतो निर्दिश्यन्ते। इन्द्रो देवानां राजा। वरुणो यादसाम्। सोमो ब्राह्मणानाम्। रुद्रः पशुनाम्। पर्जन्यो विद्युदादीनाम्। यमः पितॄणाम्। मृत्यू रोगादीनाम्। ईशानो भासामित्येवमादीनि देवेषु क्षत्त्राणि। तदन्विन्द्रादिक्षत्त्रदेवताधिष्ठितानि मनुष्यक्षत्त्राणि सोमसूर्यवंश्यानि पुरूरवःप्रभृतीनि सृष्टान्येव द्रष्टव्यानि। तदर्थ एव हि देवक्षत्त्रसर्गः प्रस्तुतः।

१५ पशुरित्यादिनोक्तमनुभाषते—तत्रेति। अविद्याधिकारः सप्तम्यर्थः। तत्राविद्याकार्यं प्रपञ्चयितुमध्यायशेषप्रवृत्तिरिति मन्वानोऽविद्याविवर्तचातुर्वर्ण्यसृष्टिप्रकटनार्थं तदेतद्ब्रह्मेत्यस्मात्प्राक्तनं वाक्यमित्याकाङ्क्षापूर्वकमाह—किं पुनरिति। ब्रह्म वा इदमित्यादिवाक्यमिदमा परामृश्यते। वर्णानेव विशिनष्टि—यन्निमित्तेति। यैर्निमित्तैर्ब्राह्मण्यादिभिः सम्बद्धेषु कर्मस्वयमविद्वानधिकृत पशुरिव संसरतीति पशुनिदर्शनश्रुतौ प्रसिद्धं तानि निमित्तानि दर्शयितुमुत्तरं वाक्यं प्रवृत्तमित्यर्थः। अथेत्यभ्यमन्थदित्यत्रानुग्राहकदेवतासर्गं प्रक्रम्याग्नेरेव सृष्टिरुक्ता नेन्द्रादीनामत्र त्वविद्या प्रस्तुत्य तेषां सोच्यते
२० तत्र कः श्रुतेरभिप्रायस्तत्राऽऽह—एतस्येति। पूर्वमग्निसर्गानन्तरमिन्द्रादिसर्गो वाच्योऽपि नोक्तः फलाभावात्। इह त्वविदुषस्तत्कार्यवर्णाद्यभिमानिनः कर्माधिकृतिरित्येतस्यार्थस्य प्रदर्शनार्थं तदाविद्यत्वविवक्षया स व्युत्पाद्यत इत्यर्थः। अग्निसर्गोऽपि तर्हि तद्वदत्रैव वाच्यो विशेषाभावादित्याशङ्क्याऽऽह—अग्नेस्त्विति। प्रजापतेः सृष्टिपूर्तये चेदग्निसृष्टिस्तत्रोक्ता हन्तेन्द्रादिसर्गोऽपि तत्रैव वाच्योऽन्यथा तदपूर्तेरित्याशङ्क्याऽऽह—अयञ्चेति। तर्हि तत्रोक्तस्य कस्मादत्रोक्तिः पुनरुक्तेरित्याशङ्क्यैतस्यैवार्थस्येत्यत्रोक्तं स्मारयति—इह त्विति।

२५ सङ्गतिमुक्त्वा वाक्यमादाय व्याचष्टे—ब्रह्मेति। अग्रे क्षत्त्रादिसर्गात्पूर्वमिति यावत्। वैशब्दस्यावधारणार्थत्व वदन्वाक्यार्थोक्तिपूर्वकमेकमित्यस्यार्थमाह—इदमिति। द्वितीयमेवकारं व्याचष्टे—नाऽऽसीदिति। कथं तर्हि तस्य कर्मानुष्ठानसामर्थ्यसिद्धिरित्याशङ्क्य समनन्तरवाक्यं व्याचष्टे—तत इति। तदेवसृष्टमाकाङ्क्षाद्वारा स्पष्टयति—किं पुनरिति। एका चेत्क्षत्रजातिः सृष्टा कथं तर्हि यान्येतानीति बहूक्तिरित्याशङ्क्याऽऽह—तद्व्यक्तिभेदेनेति। क्षत्त्रजातेरेकत्वात्कथं क्षत्राणीति बहुवचनमित्याशङ्क्य 'जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्याम्' ( पा० सू०
३० १।२।५८ ) इति स्मृतिमाश्रित्याऽऽह—जातीति। बहूक्तेर्गत्यन्तरमाह—व्यक्तीति। तासां बहुत्वाज्जातेश्च तदभेदात्तत्रापि भेदमुपचर्य बहूक्तिरित्यर्थः। क्षत्त्राणीति बहुवचनमिति सम्बन्धः।

तेषां विशेषतो ग्रहणं क्षत्त्रस्योत्तमत्वं स्थापयितुमिति मन्वानः सन्नाह—कानि पुनरित्यादिना। ननु किमिति देवेषु क्षत्त्रसृष्टिरुच्यते ब्राह्मणस्य कर्मानुष्ठानसामर्थ्यसिद्ध्यर्थं मनुष्येष्वेव तत्सृष्टिरुपदेष्टव्येत्याशङ्क्याह—तदन्विति। तथाऽपि विवक्षिता सृष्टिर्मुखतो वक्तव्येत्याशङ्क्योपोद्घातोऽयमित्याह—तदर्थ इति।

---

३५ १. जात्याख्याया—क्षत्रादिपदानां जातिवाचित्वात् एकवचनस्यैव सर्वत्र प्राप्तौ अनेन सूत्रेण बहुवचनं विकल्पेन विदधाति-जातिवाचित्वे एकस्मिन् जातिरूपेऽर्थे सत्यपि बहुवचनं प्रयोक्तव्यमित्यर्थः। स्वाश्रयजातिमत्त्वसम्बन्धेन व्यक्तिषु एकत्वान्वयः संभवतीति भावः। भेदोपचारेण जातिव्यक्त्योस्तादात्म्यात् व्यक्तिगतबहुत्वस्य जातावुपचारेण बहुवचनं साधु इत्यर्थः।

**स नैव व्यभवत्स विशमसृजत यान्येतानि देवजातानि गणश आख्यायन्ते वसवो रुद्रा आदित्या विश्वेदेवा मरुत इति ॥१२॥**

यस्माद्ब्रह्मणाऽतिशयेन सृष्टं क्षत्रं तस्मात्क्षत्रात्परं नास्ति [ब्राह्मणजातेरपि नियन्तृ। तस्माद्ब्राह्मणः कारणभूतोऽपि क्षत्रियस्य क्षत्रियमधस्ताद्व्यवस्थितः सन्नुपरि स्थितमुपास्ते। क्व ? राजसूये। क्षत्र एव तदात्मीयं यशःख्यातिरूपं ब्रह्मेति दधाति स्थापयति। राजसूयाभिषिक्तेनाऽऽसन्द्यां स्थितेन राज्ञाऽऽमन्त्रितो ब्रह्मन्निति ऋत्विक् पुनस्तं प्रत्याह त्वं राजन्ब्रह्मासीति। तदेतदभिधीयते क्षत्र एव तद्यशो दधातीति। सैषा प्रकृता क्षत्रस्य योनिरेव यद्ब्रह्म। तस्माद्यद्यपि राजा परमतां राजसूयाभिषेकगुणं गच्छत्याप्नोति ब्रह्मैव ब्राह्मणजातिमेवान्ततोऽन्ते कर्मपरिसमाप्तावुपनिश्रयत्याश्रयति स्वां योनिं पुरोहितं पुरो निधत्त इत्यर्थः। यस्तु पुनर्बलाभिमानात्स्वां योनिं ब्राह्मणजातिं ब्राह्मणं य उ एनं हिनस्ति हिंसति न्यग्भावेन पश्यति स्वामात्मीयामेव स योनिमृच्छति स्वं प्रसवं विच्छिनत्ति विनाशयति। स एतत्कृत्वा पापीयान्पापतरो भवति। पूर्वमपि क्षत्रियः पाप एव क्रूरत्वा- दात्मप्रसवहिंसया सुतराम्। यथा लोके श्रेयांसं प्रशस्ततरं हिंसित्वा परिभूय पापतरो भवति तद्वत् ॥११॥

क्षत्रे सृष्टेऽपि स नैव व्यभवत्कर्मणे ब्रह्म तथा न व्यभवद्वित्तोपार्जयितुरभावात्। स विशमसृजत कर्म- साधनवित्तोपार्जनाय। कः पुनरसौ विट्। यान्येतानि देवजातानि स्वार्थे निष्ठा, य एते देवजातिभेदा इत्यर्थः। गणशो गणं गणमाख्यायन्ते कथ्यन्ते। गणप्राया हि विशः। प्रायेण संहता हि वित्तोपार्जने समर्था नैकैकशः। वसवोऽष्टसंख्या[1] गणस्तथैकादश रुद्रा[2] द्वादशाऽऽदित्या[3] विश्वेदेवास्त्रयोदश[4] विश्वाया अपत्यानि सर्वे वा देवा मरुतः[5] सप्त सप्त गणाः ॥१२॥

तस्मादित्यादि व्याचष्टे—यस्मादिति। क्षत्रस्य नियन्तृत्ववदुत्कर्षे हेत्वन्तरमाह—तस्मादिति। ब्रह्मेति प्रसिद्ध ब्राह्मण्याख्यमिति यावत्। उक्तमेव प्रपञ्चयति—राजसूयेति। आसन्द्यां मञ्चिकायाम्। क्षत्रे स्वकीयं यशः समर्पयतो ब्राह्मणस्य निकर्षमाशङ्क्याऽऽह—सैषेति। तयोर्ब्राह्मणत्वस्य तुल्यत्वात्कुतोऽवान्तरभेदः क्षत्रमपि क्रतुकाले ब्राह्मण्यं प्राप्नोतीत्याशङ्क्याऽऽह—तस्मादिति। क्षत्रस्य ब्रह्माभिभवे दोषश्रवणाच्च तस्य तदपे- क्षया तद्गुणत्वमित्याह—यस्त्विति। प्रमादादपीति वक्तुमुशब्द.। य उ एनं हिनस्तीति प्रतीकग्रहण यस्तु पुनरित्यादि व्याख्यानमिति भेद.। ईयसुनस्तरबर्थस्य प्रयोगे हेतुमाह—पूर्वमपीति। ब्राह्मणाभिभवे पापीयस्त्वमित्येतदुदाहरणेन बुद्धावारोपयति—यथेति ॥११॥

कर्तुर्ब्राह्मणस्य नियन्तुश्च क्षत्रियस्य सृष्टत्वात्किमुत्तरेणेत्याशङ्क्याऽऽह—क्षत्र इति। तद्व्याचष्टे—कर्मण इति। ब्रह्म ब्राह्मणोऽस्मीत्यभिमानी पुरुषः। तथा क्षत्रसर्गात्पूर्वमिवेति यावत्। कथं तर्हि लौकिकसामर्थ्य- सम्पादनद्वारा कर्मानुष्ठानमत आह—स विशमिति। देवजातानीत्यत्र तकारो निष्ठा। गण गणं कृत्वा किमि- त्याख्यानं विशामित्याशङ्क्याऽऽह—गणेति। विशा समुदायप्रधानत्वमद्यापि प्रत्यक्षमित्याह—प्रायेणेति ॥१२॥

---

१. अष्टौ वसवः—धरो ध्रुवश्च सोमश्चाहश्चैवानिलोऽनलः।
प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्तिताः॥

२. रुद्रा एकादश—हरश्च बहुरूपश्च त्र्यम्बकश्च सुरेश्वरः।
सावित्रश्च जयन्तश्च पिनाकश्चापराजितः॥

३. आदित्यास्तु—धाता मित्रोऽर्यमा शक्रो वरुणस्त्वंश एव च।
भगो विवस्वान् पूषा च सविता दशमस्तथा॥
एकादशस्तथा त्वष्टा द्वादशो विष्णुरुच्यते।

४. विश्वेदेवास्तु—इष्टिश्राद्धे क्रतुर्दक्षः सत्यो नान्दीमुखे वसुः।
नैमित्तिके कालकामौ काम्ये च धुरिलोचनौ॥
पुरूरवो माद्रवसौ पार्वणे समुदाहृतौ।

५. मरुत. सप्त सप्तगणा. अनिर्दिष्टविशेषनामान.।

स नैव व्यभवत्स शौद्रं वर्णमसृजत पूषणमियं वै पूषेयं हीदं सर्वं पुष्यति यदिदं किंच ॥१३॥

स नैव व्यभवत्तच्छ्रेयोरूपमत्यसृजत धर्मं तदेतत्क्षत्रस्य क्षत्रं यद्धर्म-
स्तस्माद्धर्मात्परं नास्त्यथो अबलीयान्बलीयांसमाशंसते धर्मेण
यथा राज्ञैवं यो वै स धर्मः सत्यं वै तत्तस्मात्सत्यं वदन्तमाहुर्धर्मं
५ वदतीति धर्मं वा वदन्तं सत्यं वदतीत्येतद्ध्येवैतदुभयं भवति ॥१४॥

स परिचारकाभावात्पुनरपि नैव व्यभवत्स शौद्रं वर्णमसृजत शूद्र एव शौद्रः स्वार्थेऽणि वृद्धिः। कः पुन-
रसौ शूद्रो वर्णो यः सृष्टः पूषणं पुष्यतीति पूषा। कः पुनरसौ पूषेति विशेषतस्तन्निर्दिशति-इयं पृथिवी पूषा।
स्वयमेव निर्वचनमाह—इयं हीदं सर्वं पुष्यति यदिदं किञ्च ॥१३॥

स चतुरः सृष्ट्वाऽपि वर्णान्नैव व्यभवदुग्रत्वात्क्षत्रस्यानियताशङ्कया तच्छ्रेयोरूपमत्यसृजत किं तद्धर्मं
१० तदेतच्छ्रेयोरूपं सृष्टं क्षत्रस्य क्षत्रं क्षत्रस्यापि नियन्तृ। उग्रादप्युग्रम्। यद्धर्मो यो धर्मस्तस्मात्क्षत्रस्यापि
नियन्तृ। उग्रादप्युग्रम्। यद्धर्मो यो धर्मस्तस्मात्क्षत्रस्यापि नियन्तृत्वाद्धर्मात्परं नास्ति। तेन हि नियम्यन्ते
सर्वे। तत्कथमिति। उच्यते-अथो अप्यबलीयान्दुर्बलतरो बलीयांसमात्मनो बलवत्तरमप्याशंसते कामयते जेतुं
धर्मेण बलेन। यथा लोके राज्ञा सर्वबलवत्तमेनापि कुटुम्बिक एवं तस्मात्सिद्धं धर्मस्य सर्वबलवत्तरत्वात्सर्वनि-
यन्तृत्वम्। यो वै स धर्मो व्यवहारलक्षणो लौकिकैर्व्यवह्रियमाणः सत्यं वै तत्सत्यमिति यथाशास्त्रार्थतः स
१५ एवानुष्ठीयमानो धर्मनामा भवति। शास्त्रार्थत्वेन ज्ञायमानस्तु सत्यं भवति। यस्मादेवं तस्मात्सत्यं यथाशास्त्रं
वदन्तं व्यवहारकाल आहुः समीपस्था उभयविवेकज्ञा धर्मं वदतीति प्रसिद्धं लौकिकं न्यायं वदतीति तथा
विपर्ययेण धर्मं वा लौकिकं व्यवहारं वदन्तमाहुः सत्यं वदति शास्त्रादनपेतं वदतीति। एतद्ध्युक्तमुभयं ज्ञाय-
मानमनुष्ठीयमानं चैतद्धर्म एव भवति। तस्मात्स धर्मो ज्ञानानुष्ठानलक्षणः शास्त्रज्ञानितरांश्च सर्वानेव नियमयति।

कर्तृपालयितृधनार्जयितॄणां सृष्टत्वात्कृतं वर्णान्तरसृष्ट्येत्याशङ्क्याऽऽह—स परिचारकेति। शौद्रं वर्णम-
२० सृजतेत्यत्रौकारो वृद्धिः। पुष्यतीति पुषेत्युक्तत्वात्प्रश्नस्यानवकाशत्वमाशङ्क्याऽऽह—विशेषत इति। पूषशब्दस्यार्थान्तरे
प्रसिद्धत्वात्कथं पृथिव्यां वृत्तिरित्याशङ्क्याऽऽह—स्वयमेवेति ॥१३॥

ननु चातुर्वर्ण्ये सृष्टे तावतैव कर्मानुष्ठानसिद्धेरलं धर्मसृष्ट्येत्यत आह—स चतुर इति। अनियताशङ्कया
नियामकाभावे तस्यानियतत्वसम्भावनयेति यावत्। तच्छब्द. स्रष्टृब्रह्मविषय.। कुतो धर्मस्य सर्वनियन्तृत्व क्षत्रस्यैव
तत्प्रसिद्धेरित्याह—तत्कथमिति। अनुभवमनुसृत्य परिहरति—उच्यत इत्यादिना। तदेवोदाहरति—यथेति।
२५ राज्ञा स्पर्धमान इति शेषः। धर्मस्योत्कृष्टत्वेन नियन्तृत्वे सत्यादभिन्नत्वं हेत्वन्तरमाह—यो वा इति। कथ धर्मस्य
सत्यत्वं स हि पुरुषधर्मो वचनधर्मः सत्यत्वमित्यवान्तरभेदादित्याशङ्क्याऽऽह—स एवेति। यथोक्ते विवेके लोक-
प्रसिद्धिं प्रमाणयति—यस्मादिति। उभयशब्दो धर्मसत्यविषययोः धर्मं वदतीत्येतदेव विभजते—प्रसिद्धमिति। यथा
शास्त्रानुसारेण वदन्तं धर्मं वदतीति वदन्ति तथा पूर्वोक्तवदनवैपरीत्येन धर्मं वदन्त सत्यं वदतीत्याहुरिति योजना।
धर्ममेव व्याचष्टे—लौकिकमिति। सत्यं वदतीत्येतदेव स्फुटयति—शास्त्रादिति। कार्यकारणभावेनानयोरेकत्व-
३० मुपसहरति—एतदिति। शास्त्रार्थसंशये शिष्टव्यवहारान्निश्चयो यथा यवव[1]राहादिशब्देषु, धर्मसशये तु शास्त्रार्थवशा-
न्निर्णयो यथा चैत्यवन्दनादिव्युदासेनाग्निहोत्रादौ। अतो हेतुहेतुमद्भावादुभयोरैक्यमिति भावः। धर्मस्य सत्यादभेदे
फलितमाह—तस्मादिति। तस्य सर्वनियन्तृत्वेऽपि प्रकृते किमायातं तदाह—तस्मात्स इति। तर्हि यथोक्तधर्मवशादेव

१. यववराहादिशब्देष्विति—पू० मी० १-३-४, यवमयश्चरु वाराही उपानहौ वैतसे कटे प्राजापत्यान् सञ्चिनोति।
तत्र केचित् दीर्घशूकेषु यवशब्दं प्रयुञ्जते। केचित् प्रियङ्गुषु। वराहशब्द शूकरे केचित्, कृष्णशकुनौ एके।
३५ वेतसशब्दस्य वञ्जुले केचित्, अन्ये जम्ब्वां तत्र प्रयोगभेदात्—विकल्प इति प्राप्ते—यः शास्त्रस्थाना सम्मतः
स शास्त्रार्थः, शास्त्रस्थाः शिष्टाः। यतस्तेषामविच्छिन्ना स्मृतिः। तस्मात् दीर्घशूकेषु दर्शनात् यवाः दीर्घशूकाः
वराह. सूकरः वराहं गावोऽनुधावन्ति इति अप्सुजो वेतस इति प्रयोगात् वञ्जुल एव वेतसः इति सिद्धान्तः।

तदेतद्ब्रह्म क्षत्रं विट्शूद्रस्तदग्निनैव देवेषु ब्रह्माभवद्ब्राह्मणो मनुष्येषु क्षत्रियेण क्षत्रियो वैश्येन वैश्यः शूद्रेण शूद्रस्तस्मादग्नावेव देवेषु लोकमिच्छन्ते ब्राह्मणे मनुष्येष्वेताभ्यां हि रूपाभ्यां ब्रह्माभवत्। अथ यो ह वा अस्माल्लोकात्स्वं लोकमदृष्ट्वा प्रैति स एनमविदितो न भुनक्ति यथा वेदो वाननूक्तोऽन्यद्वा कर्माकृतं यदिह वा अप्यनेवंविन्महत्पुण्यं कर्म करोति तद्धास्यान्ततः क्षीयत एवात्मानमेव लोकमुपासीत स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयते। अस्माद्ध्येवात्मनो यद्यत्कामयते तत्तत्सृजते ॥१५॥ ५

तस्मात्स क्षत्त्रस्यापि क्षत्त्रमतस्तदभिमानोऽविद्वांस्तद्विशेषानुष्ठानाय ब्रह्मक्षत्त्रविट्शूद्रविशेषमभिमन्यते। तानि च विसर्गत एव कर्माधिकारनिमित्तानि ॥१४॥

तदेतच्चातुर्वर्ण्यं सृष्टं ब्रह्म क्षत्त्रं विट् शूद्र इत्युत्तरार्थ उपसंहारः। यत्तत्स्रष्टृ ब्रह्म तदग्निनैव नान्येन १० रूपेण देवेषु ब्रह्म ब्राह्मणजातिरभवद्ब्राह्मणो ब्राह्मणस्वरूपेण मनुष्येषु ब्रह्माभवदितरेषु वर्णेषु विकारान्तरं प्राप्य क्षत्त्रियेण क्षत्त्रियोऽभवदिन्द्रादिदेवताधिष्ठितो वैश्येन वैश्यः शूद्रेण शूद्रः। यस्मात्क्षत्त्रादिषु विकारापन्नमग्नौ ब्राह्मण एव चाविकृतं स्रष्टृ ब्रह्म तस्मादग्नावेव देवेषु देवानां मध्ये लोकं कर्मफलमिच्छन्त्यग्निसम्बद्धं कर्म कृत्वेत्यर्थः। तदर्थमेव हि तद्ब्रह्म कर्माधिकरणत्वेनाग्निरूपेण व्यवस्थितम्। तस्मात्तस्मिन्नग्नौ कर्म कृत्वा तत्फलं प्रार्थयन्त इत्येतदुपपन्नम्। ब्राह्मणे मनुष्येषु मनुष्याणां पुनर्मध्ये कर्मफलेच्छायां नाग्न्यादिनिमित्तक्रियापेक्षा किं १५ तर्हि जातिमात्रस्वरूपप्रतिलम्भेनैव पुरुषार्थसिद्धिः। यत्र तु देवाधीना पुरुषार्थसिद्धिस्तत्रैवाग्न्यादिसम्बद्धक्रियापेक्षा। स्मृतेश्च—

"जप्येनैव तु संसिद्ध्येद्ब्राह्मणो नात्र संशयः। कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥"

इति। पारिव्राज्यदर्शनाच्च। तस्माद्ब्राह्मणत्व एव मनुष्येषु लोकं कर्मफलमिच्छन्ति। यस्मादेताभ्यां हि

कर्मानुष्ठानसिद्धेर्वर्णाश्रमाभिमानस्याकिञ्चित्करत्वमित्याशङ्क्याऽऽह—अत इति। धार्मिकत्वाद्यभिमानो ब्राह्मण्याद्यभिमानं २० पुरोधायानुष्ठापकश्चेत्तदभिमानोऽपि तथैवाभिमानान्तरं पुरस्कृत्यानुष्ठापयेदित्याशङ्क्याऽऽह—तानि चेति। न खल्वविदुषो धार्मिकस्य ब्राह्मण्यादिषु निमित्तेषु सत्सु कर्मप्रवृत्तौ निमित्तान्तरमपेक्ष्यते प्रमाणाभावादित्यर्थः ॥१४॥

पुनरुक्तिवैयर्थ्यमाशङ्क्योक्तम्—उत्तरार्थ इति। पूर्वत्र देवेषु दर्शितस्य वर्णविभागस्य मनुष्येषूत्तरग्रन्थेन योजनार्थ इति यावत्। सृष्टवर्णचतुष्टयनिविष्टमवान्तरविभागमभिधातुमारभते—यत्तदिति। नान्येन देवान्तररूपेण क्षत्त्रादिविकारमन्तरेणेति यावत्। विकारान्तरमग्निब्राह्मणलक्षणम्। क्षत्त्रियेणेत्यत्र विवक्षितमर्थमाह—इन्द्रादि- २५ देवताधिष्ठित इति। वैश्येनेति वस्वाद्यधिष्ठितत्वमुच्यते। शूद्रेणेति पूषाधिष्ठितत्वम्। अग्न्यादिभावमापन्नस्य क्षत्त्रादिभावो न तु क्षत्त्रादिभावमापन्नस्याग्न्यादिभाव इत्येतावन्मात्रेण ब्रह्मणोऽविकृतत्वाविकृतत्वमग्निब्राह्मणस्तुत्यर्थमुक्तमित्यभिप्रेत्य तस्मादित्यादि व्याचष्टे—यस्मादिति। यथोक्तप्रार्थनाया न्याय्यत्वं साधयति—तदर्थमेवेति। कर्मफलदानार्थमिति यावत्।

मनुष्याणां मध्ये कमपि मनुष्यमवलम्ब्य कर्मफलभोगापेक्षायामधिकरणसम्प्रदानभावेनावस्थिताग्नीन्द्रादिनि- ३० मित्तक्रियापेक्षा नास्ति किन्तु ब्राह्मणजातिप्राप्तिमात्रेण तत्सम्बद्धं जप्यादिकर्मावश्यम्भावीति। तन्मात्रेण पुरुषार्थः सिध्यतीति प्रतीकग्रहणपूर्वकमाह—मनुष्याणामिति। कुत्र तर्हि यथोक्तक्रियापेक्षेति तत्राऽऽह—यत्र त्विति। देवानां मध्येऽग्निसम्बद्धमेव कर्म कृत्वा पुरुषार्थलाभो मनुष्याणां मध्ये तु ब्राह्मण्यप्रयुक्तजप्यादिमात्रेण तत्प्राप्तिरित्यत्र प्रमाणमाह—स्मृतेश्चेति। जप्यग्रहणं जातिमात्रप्रयुक्तकर्मोपलक्षणार्थम्। अन्यदग्निसम्बद्धं कर्म। कोऽयं ब्राह्मणो नाम तत्राऽऽह—मैत्र इति। सर्वेषु भूतेष्वभयप्रदो विशिष्टजातिमानिति यावत्। ननु यथोक्तस्मृतेर्ब्राह्मण्यप्रतिलम्भमात्रादभ्यु- ३५ दयलाभेऽपि कुतस्ततो निःश्रेयससिद्धिस्तत्राऽऽह—पारिव्राज्येति। 'ब्राह्मणा व्युत्थायाथ भिक्षाचर्यं चरन्ती'ति ब्राह्मणस्य

ब्राह्मणाग्निरूपाभ्यां कर्मकर्त्रधिकरणरूपाभ्यां यत्स्रष्टृ ब्रह्म साक्षादभवत् ।

### अग्नौ हुत्वा ब्राह्मणे दत्वा ब्रह्मप्राप्तिरिति मतनिरासः

**अत्र तु परमात्मलोकमग्नौ ब्राह्मणे चेच्छन्तीति केचित् । तदसत् । अविद्याधिकारे कर्माधिकारार्थं वर्णविभागस्य प्रस्तुतत्वात्परेण च विशेषणात् । यदि ह्यत्र लोकशब्देन पर एवाऽऽत्मोच्येत परेण विशेषणमनर्थकं ५ स्यात्स्वं लोकमदृष्ट्वेति । स्वलोकव्यतिरिक्तश्चेदग्न्यधीनतया प्रार्थ्यमानः प्रकृतो लोकस्ततः स्वमिति युक्तं विशेषणं प्रकृतापरलोकनिवृत्त्यर्थत्वात् । स्वत्वेन चाव्यभिचारात्परमात्मलोकस्य । अविद्याकृतानाञ्च स्वत्वव्यभिचारात् । ब्रवीति च कर्मकृतानां व्यभिचारं क्षीयत एवेति ।**

### आत्मलोको न कर्मप्राप्यः

**ब्रह्मणा सृष्टा वर्णाः कर्मार्थम् । तच्च कर्म धर्माख्यं सर्वानेव कर्तव्यतया नियन्तृ पुरुषार्थसाधनं च । १० तस्मात्तेनैव चेत्कर्मणा स्वो लोकः परमात्माख्योऽविदितोऽपि प्राप्यते किं तस्यैव पदनीयत्वेन क्रियत इत्यत आह-अथेति पूर्वपक्षनिवृत्त्यर्थः । यः कश्चिद्ध वा अस्मात्सांसारिकात्पिण्डग्रहणलक्षणादविद्याकामकर्महेतुकादग्न्यधीनकर्माभिमानितया वा ब्राह्मणजातिमात्रकर्माभिमानितया वाऽऽगन्तुकादस्वरूपभूताल्लोकात्स्वं लोकमात्माख्यमात्मत्वेनाव्यभिचारित्वाददृष्ट्वाऽहं ब्रह्मास्मीति प्रैति म्रियते । स यद्यपि स्वो लोकोऽविदितोऽविद्यया व्यवहितोऽस्व इवाज्ञात एनं संख्यापूरण इव लौकिक आत्मानं न भुनक्ति न पालयति शोकमोहभयादिदोषापनयेन । यथा च लोके १५ वेदोऽननुक्तोऽनधीतः कर्माद्यवबोधकत्वेन न भुनक्त्यन्यद्वा लौकिकं कृष्यादि कर्माकृतं स्वात्मनाऽनभिव्यञ्जितमात्मीयफलप्रदानेन न भुनक्त्येवमात्मा स्वो लोकः स्वेनैव नित्यात्मस्वरूपेणानभिव्यञ्जितोऽविद्यादिप्रहाणेन न भुनक्त्येव ।**

पारिव्राज्यं श्रूयते । तच्च 'संन्यासाद्ब्रह्मण. स्थान'मिति ब्रह्मलोकसाधनं मन्यते । अतश्च ब्राह्मणजातिनिमित्तं लोकमिच्छन्तीति युक्तमित्यर्थः । ब्राह्मणे मनुष्येष्वित्यस्यार्थमुपसहरति—**तस्मादिति** । हेतुवाक्यमादाय व्याचष्टे—**यस्मादिति** । हिशब्दार्थो यस्मादित्युक्तः यत्स्रष्टृ ब्रह्म तदेताभ्यां यस्मात्साक्षादभवत्तस्मादग्नावेवेत्यादि युक्तमितियोजना ।

२० अग्नौ हुत्वा ब्राह्मणे च दत्त्वा परमात्मलक्षणं लोकमाप्तुमिच्छन्तीति भर्तृप्रपञ्चव्याख्यानमनुवदति—**अत्रेति** । सप्तमी तस्मादित्यादिवाक्यविषया । प्रक्रमालोचनायां कर्मफलमिह लोकशब्दार्थो न परमात्मा प्रक्रमभङ्गप्रसङ्गादिति दूषयति—**तदसदिति** । कर्माधिकारार्थं कर्मसु प्रवृत्तिसिद्ध्यर्थमिति यावत् । वाक्यशेषगतविशेषणवशादपि कर्मफलस्यैवात्र लोकशब्दवाच्यत्वमित्याह—**परेण चेति** । तदेव प्रपञ्चयति—**यदि हीति** । परपक्षे स्वमिति विशेषणं व्यावर्त्याभावान्न घटते चेत्त्वत्पक्षेऽपि कथं तदुपपत्तिरित्याशङ्क्याऽऽह—**स्वलोकेति** । परशब्दोऽनात्मविषयः । ननु प्रकृते वाक्ये लोकशब्देन २५ परमात्मा नोच्यते चेदुत्तरवाक्येऽपि तेन नासावुच्येत विशेषाभावादित्याशङ्क्य विशेषणसामर्थ्यान्नैवमित्याह—**स्वत्वेन चेति** । कर्मफलविषयत्वेनापि विशेषणस्य नेतु शक्यत्वान्न विशेषसिद्धिरित्याशङ्क्याऽऽह—**अविद्येति** । तेषां स्वरूपव्यभिचारे वाक्यशेषं प्रमाणयति—**ब्रवीति चेति** ।

उत्तरवाक्यव्यावर्त्यं पूर्वपक्षमाह—**ब्रह्मणेति** । तत्पुनरचेतनमकिञ्चित्करमित्याशङ्क्याऽऽह—**तच्चेति** । सर्वैरेव वर्णैः स्वस्य कर्तव्यतया तान्प्रति नियन्तृ भूत्वेति योजना । तस्य पुमर्थोपायत्वप्रसिद्धिमादाय फलितमाह—**तस्मादिति** । ३० अविदितोऽपीति च्छेदः । देवतागुणवत्कर्म मुक्तिहेतुरिति पक्षं प्रतिक्षेप्तुमुत्तरं वाक्यमुत्थापयति—**अत आहेति** । ज्ञानादेव मुक्तिर्न कर्मणेत्यागमप्रसिद्धमिति निपातयोरर्थः । तत्र निमित्तमुपादानञ्चेति द्वयं सङ्क्षिपति—**अविद्येति** । निमित्तं निवृणोति—**अग्न्यधीनेति** । आत्माख्यस्य लोकस्य सत्त्वे हेतुमाह—**आत्मत्वेनेति** । अहं ब्रह्मास्मीत्यदृष्ट्वेति सम्बन्धः । यः परमात्मानमविदित्वैव म्रियते तमेनं परमात्मा न पालयतीति योजना । परमात्मनः स्वरूपत्वादविदितस्यापि पालयितृत्वं स्यादित्याशङ्क्याऽऽह—**स यद्यपीति** । लोकशब्दादुपरिष्टात्तथाऽपीति द्रष्टव्यम् । अविदित इत्यस्य व्याख्या- ३५ नमविद्ययेत्यादि । परमात्माख्यो लोको नाज्ञातो भुनक्तीत्यत्र कर्मफलभूतं लोकं वैधर्म्यदृष्टान्ततया दर्शयति—**अस्व इवेति** । अज्ञातस्य पालयितृत्वे साधर्म्यदृष्टान्तमाह—**सङ्ख्येति** । यथा लौकिको दशमो दशमोऽस्मीत्यज्ञातो न

---

१. सङ्ख्यापूरण इति—यद्यपि स्वात्मानं विहाय गणनात् नवैव प्राप्ताः स्व दशमं सङ्ख्यापूरक एव तथापि स्वस्य सङ्ख्यापूरकत्वेन ज्ञानाभावे स्वात्मा न पालयति दशमो नष्ट इति भ्रमं न निवर्तयति ।

ननु किं स्वलोकदर्शननिमित्तपरिपालनेन कर्मणः फलप्राप्तिध्रौव्यादिष्टफलनिमित्तस्य च कर्मणो बाहुल्या-
त्तन्निमित्तं पालनमक्षयं भविष्यति। तन्न। कृतस्य क्षयवत्त्वादित्येतदाह–यदिह वै संसारेऽद्भुतवत्कश्चिन्महा-
त्माऽप्यनेवंवित्स्वं लोकं यथोक्तेन विधिनाऽविद्वान्महद्ब्रह्मश्वमेधादि पुण्यं कर्मेष्टफलमेव नैरन्तर्येण करोत्यनेनै-
वाऽऽनन्त्यं मम भविष्यतीति। तत्कर्म हास्याविद्यावतोऽविद्याजनितकामहेतुत्वात्स्वप्नदर्शनविभ्रमोद्भूतविभूति-
वदन्ततोऽन्ते फलोपभोगस्य क्षीयत एव। तत्कारणयोरविद्याकामयोश्चलत्वात्कृतक्षयध्रौव्योपपत्तिस्तस्मान्न पुण्यकर्म- ५
फलपालनानन्त्याशाऽस्त्येव।

अत आत्मानमेव स्वं लोकमात्मानमिति स्वं लोकमित्यस्मिन्नर्थे स्वं लोकमिति प्रकृतत्वादिह च स्वशब्द-
स्याप्रयोगादुपासीत। स य आत्मानमेव लोकमुपास्ते तस्य किमित्युच्यते–न हास्य कर्म क्षीयते। कर्माभावा-
देवेति नित्यानुवादः। यथाऽविदुषः कर्मक्षयलक्षणं संसारदुःखं सन्ततमेव न तथा तदस्य विद्यत इत्यर्थः। "मिथिलायां
प्रदीप्तायां न मे दह्यति किञ्चने"ति यद्वत्। १०

## स्वात्मोपासकस्य विद्यावशात् कर्म न क्षीयत इति व्याख्या

स्वात्मलोकोपासकस्य विदुषो विद्यासंयोगात्कर्मैव न क्षीयत इत्यपरे वर्णयन्ति। लोकशब्दार्थञ्च कर्म-
समवायिनं द्विधा परिकल्पयन्ति किल, एको व्याकृतावस्थः कर्माश्रयो लोको हिरण्यगर्भाख्यस्तं कर्मसमवायिनं
लोकं व्याकृतं परिच्छिन्नं य उपास्ते तस्य किल परिच्छिन्नकर्मात्मदर्शिनः कर्म क्षीयते। तमेव कर्मसमवायिनं
लोकमव्याकृतावस्थं कारणरूपमापाद्य यस्तूपास्ते तस्यापरिच्छिन्नकर्मात्मदर्शित्वात्तस्य कर्म न क्षीयत इति। १५

शोकादिनिवर्तनेनाऽऽत्मानं भुनक्ति तथा परमात्माऽपीत्यर्थः। तत्रैव श्रुत्युक्तं दृष्टान्तद्वयं व्याचष्टे—यथा चेत्यादिना।
अविद्यादीत्यादिशब्देन तदुत्थं सर्वं सगृह्यते।

यदिहेत्यादिवाक्यापोह्य चोद्यमुत्थापयति—नन्विति। नन्वनिष्टफलनिमित्तस्यापि कर्मणः फलप्राप्तिध्रौव्यात्कथं
कर्मणा मोक्षः सेत्स्यति तत्राऽऽह—इष्टेति। बाहुल्यमश्वमेधादिकर्मणो महत्तरत्वं तद्धि दुरितमभिभूय मोक्षमेव सम्पाद-
यिष्यतीत्यर्थः। यत्कृतकं तदनित्यमिति न्यायमाश्रित्य परिहरति—तन्नेत्यादिना। सप्तम्यर्थः संसारः इहेतिनिपातार्थं २०
सूचयति—अद्भुतवदिति। अनेववित्त्वं व्याकरोति—स्वं लोकमिति। यथोक्तो विधिरन्वयव्यतिरेकादिः पुण्यकर्मच्छिद्रेषु
दुरितप्रसक्तिं निवारयति—नैरन्तर्येणेति। तथा पुण्यं संचिन्वतोऽभिप्रायमाह—अनेनेति। प्रकान्तयच्छब्दापेक्षितं कथ-
यति—तत्कर्मेति। प्रागुक्तन्यायद्योती हेति निपातः। कारणरूपेण कार्यस्य ध्रुवत्वमाशङ्क्याऽऽह—तत्कारणयोरिति।

मुक्तेरनित्यत्वदोपसमाधिस्तर्हि केन प्रकारेण स्यादित्याशङ्क्याऽऽह—अत इति। आत्मशब्दार्थमाह—स्वं
लोकमिति। तदेव स्फुटयति—आत्मानमितीति। आत्मशब्दस्य प्रकृतस्वलोकविषयत्वे हेत्वन्तरमाह—इह चेति। २५
प्रयोगे तु पुनरुक्तिभयादर्थान्तरविषयत्वमपि स्यादित्यर्थः। विद्याफलमाकाङ्क्षाद्वारा निक्षिपति—स य इति।
कर्मफलस्य क्षयित्वमुक्त्वा कर्मणोऽक्षयत्वं वदतो व्याहतिमाशङ्क्याऽऽह—कर्मेति। वाक्यस्य विवक्षितमर्थं वैधर्म्य-
दृष्टान्तेन व्याचष्टे—यथेति। अविदुष इति च्छेदः। कर्मक्षयेऽपि वा विदुषो दुःखाभावे दृष्टान्तमाह—मिथिलायामिति।

आत्मानमित्यादि केवलज्ञानान्मुक्तिरित्येवपरतया व्याख्यात सम्प्रति तत्र भर्तृप्रपञ्चव्याख्यामुत्थापयति—
स्वात्मेति। आत्मलोकोपासकस्य कर्माभावे कथं तदक्षयवाचोयुक्तिरित्याशङ्क्य कर्माभावस्यासिद्धिमभिसन्धाय ३०
कर्मसाध्यं लोकं व्याकृताव्याकृतरूपेण भिनत्ति—लोकशब्दार्थञ्चेति। यौत्प्रेक्षिकी कल्पना न तु श्रौतीति वक्तु
किलेत्युक्तम्। तत्राऽऽद्य लोकशब्दार्थमनूद्य तदुपासकस्य दोषमाह—एक इति। परिच्छिन्नः कर्मात्मा तत्साध्यो
व्याकृतावस्थो लोकस्तस्मिन्नहङ्ग्रहोपासकस्येति यावत्। किलशब्दस्तु पूर्ववत्। द्वितीयं लोकशब्दार्थमनूद्य तदुपासकस्य
लाभ दर्शयति—तमेवेति। यथा कुण्डलादेरन्तर्बहिरन्वेषणे सुवर्णातिरिक्तरूपानुपलम्भात्तद्रूपेणास्य नित्यत्वं तथा
कर्मसाध्य हिरण्यगर्भादिलोकं कार्यत्वादव्याकृतं कारणमेवेत्यङ्गीकृत्य यस्तस्मिन्नहंबुद्ध्योपास्ये तस्यापरिच्छिन्नकर्म- ३५
साध्यलोकात्मोपासकत्वाद्ब्रह्मवित्त्वं कर्मित्वं च घटते तस्य खल्वात्मैव कर्म तेन तस्य तन्न क्षीयते। यः पुनर्द्वैतावस्था-
मुपास्ते तस्याऽऽत्मैव कर्म भवतीति हि भर्तृप्रपञ्चैरुक्तमित्यर्थः।

---

१. मिथिलाया प्रदीप्ताया न मे किंचन दह्यते—अत्र मदीया मिथिला, सा न दह्यत इति नार्थः मम किञ्चिदपि
नास्ति तस्मात् न दह्यत इत्यर्थः।

## सिद्धान्तः

भवतीयं शोभना कल्पना न तु श्रौती। स्वलोकशब्देन प्रकृतस्य परमात्मनोऽभिहितत्वात्। स्वं लोकमिति प्रस्तुत्य स्वशब्दप्रक्षेपेण पुनस्तस्यैव प्रतिनिर्देशादात्मानमेव लोकमुपासीतेति। तत्र कर्मसमवायिलोककल्पनाया अनवसर एव।

५ परेण च केवलविद्याविषयेण विशेषणात्"किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोक" इति। पुत्रकर्मापरविद्याकृतेभ्यो हि लोकेभ्यो विशिनष्टययमात्मा नो लोक इति। "न हास्य केनचन कर्मणा लोको मीयते" "एषोऽस्य परमो लोकः" इति च। तैः सविशेषणैरस्यैकवाक्यता युक्ता। इहापि स्वं लोकमिति विशेषणदर्शनात्।

### अल्पफलश्रवणतात्पर्यम्

अस्मात्कामयत इत्ययुक्तमिति चेदिह स्वो लोकः परमात्मा तदुपासनात्स एव भवतीति स्थिते यद्यत्का-
१० मयते तत्तदस्मादात्मनः सृजत इति तदात्मप्राप्तिव्यतिरेकेण फलवचनमयुक्तमिति चेन्न। स्वलोकोपासनस्तुतिपरत्वात्। स्वस्मादेव लोकात्सर्वमिष्टं सम्पद्यत इत्यर्थो नान्यदतः प्रार्थनीयमाप्तकामत्वात्। "आत्मतः प्राण आत्मत आशा" इत्यादिश्रुत्यन्तरे यथा। सर्वात्मभावप्रदर्शनार्थो वा पूर्ववत्।

यदि हि पर एवाऽऽत्मा सम्पद्यते तदा युक्तोऽस्माद्धयेवाऽऽत्मन इत्यात्मशब्दप्रयोगः स्वस्मादेव प्रकृतादात्मनो लोकादित्येवमर्थः। अन्यथाऽव्याकृतावस्थात्कर्मणो लोकादिति सविशेषणमवक्ष्यत्प्रकृतपरमात्मलोकव्या-
१५ वृत्तये व्याकृतावस्थाव्यावृत्तये च। न ह्यस्मिन्प्रकृते विशेषितेऽश्रुतान्तरालावस्था प्रतिपत्तुं शक्यते ॥१५॥

आत्मानमित्यादिसमुच्चयपरमिति प्राप्तं पक्षं प्रत्याह—भवतीति। श्रौतत्वाभावे हेतुमाह—स्वलोकेति। स्वं लोकमदृष्ट्वेत्यत्र स्वलोकशब्देन परस्य प्रकृतस्याऽऽत्मानमेवेत्यत्र प्रकृतहानाप्रकृतप्रक्रियापरिहारार्थमुक्तत्वान्नात्र लोकद्वैविध्यकल्पना युक्तेत्यर्थः। लोकशब्देनात्र परमात्मपरिग्रहे हेत्वन्तरमाह—स्वं लोकमितीति। यथा लोकस्य स्वशब्दार्थो विशेषणं तथाऽऽत्मानमित्यत्र स्वशब्दपर्यायात्मशब्दार्थस्तस्य विशेषणं दृश्यते न च कर्मफलस्य मुख्यमात्म-
२० त्वमतो लोकशब्दोऽत्र परमात्मैवेत्यर्थः। प्रकरणाद्विशेषणाच्च सिद्धमर्थं दर्शयति—तत्रेति।

परस्यैव लोकशब्दार्थत्वे हेत्वन्तरमाह—परेणेति। उक्तमेव प्रपञ्चयति—पुत्रेति। अथ परेषु वाक्येषु परमात्मा लोकशब्दार्थः प्रकृते तु कर्मफलमिति व्यवस्थेति चेन्नैवमेकवाक्यत्वसम्भवे तद्भेदस्यान्याय्यत्वादित्याह—तैरिति। एकवाक्यत्वसम्भावनामेव दर्शयति—इहापीति। यथोत्तरत्राऽऽत्मादिशब्देन लोको विशेषितस्तथाऽऽत्मानमित्यत्राप्यात्मशब्देन विशेष्यते। पूर्ववाक्ये च स्वं लोकमदृष्ट्वेति स्वशब्देनाऽऽत्मवाचिना तस्य विशेषणं दृश्यते।
२५ तथा च पूर्वापरालोचनायामेकवाक्यत्वसिद्धिरित्यर्थः।

प्रकरणेन परस्य लोकशब्दार्थत्वमयुक्तं लिङ्गविरोधादिति चोदयति—अस्मादिति। तदेव विवृणोति—इहेत्यादिना। अर्थवादस्थं[1] लिङ्गं न प्रकरणाद्बलवदिति मत्वा समाधत्ते—नेत्यादिना। स्तुतिमेव स्पष्टयति—स्वस्मादेवेति। लोकाज्ज्ञातादिति शेषः। यथा छान्दोग्ये स्तुत्यर्थमात्मनः स्रष्टृत्वमुच्यते तथाऽत्राप्यात्मलोकं स्तोतुमेतत्फलवचनमित्याह—आत्मत इति। भवतु वा मा भूदस्माद्धयेवेत्यादिरर्थवादस्तथाऽपि तस्य सर्वात्मत्वप्रदर्शनार्थत्वाद्युक्तमत्र
३० लोकशब्देन परमात्मग्रहणमित्याह—सर्वात्मेति। तस्मात्तत्सर्वमभवदिति वाक्यं दृष्टान्तयति—पूर्ववदिति।

किञ्चाऽऽत्मशब्दस्य त्रिधापरिच्छेदशून्यार्थवाचिताया यच्चाऽऽप्नोतीत्यादिन्यायेन सिद्धत्वात्तत्समानाधिकरणलोकशब्दस्यापि तदर्थत्वात्परस्यैवात्र लोकत्वमित्याह—यदि हीति। किञ्च यदि लोकशब्देन परं हित्वाऽर्थान्तरमुच्यते तदा सविशेषणं वाक्यं स्यादन्यथा स्वं लोकमिति प्रकृतपरमात्मलोकस्य त्वत्पक्षेऽनन्तरोक्तब्रह्मलोकस्य च व्यावृत्त्ययोगात्। न चात्र सविशेषणं वाक्यं दृष्टमतः स्वं लोकमिति प्रकृतः परमात्मैवात्रापि लोक इत्याह—अन्यथेति।
३५ विशेषणं विनैवास्मादित्यत्र परापराभ्यामर्थान्तरं किं न स्यादित्याशङ्क्याऽऽह—न हीति। स्वं लोकमिति प्रकृते परमात्मन्यात्मानमेवेति विशेषिते चाव्याकृताख्या परापराभ्यामन्तरालावस्था न प्रतिपत्तुं शक्यते तस्याः श्रुतत्वाभावादित्यर्थः ॥१५॥

---

१. अर्थवादस्थं लिङ्गं अर्थवादस्यैव स्तुतिपरत्वेन अन्यपरत्वात् न स्वार्थपरम्। अत एव ब्रह्मसूत्रभाष्ये शाबरभाष्ये च ननु लिङ्गमेतत् प्रासिरुच्यतामिति तत्र तत्र निर्दिष्टं पश्यामः।

**अथो अयं वा आत्मा सर्वेषां भूतानां लोकः स यज्जुहोति यद्यजते तेन देवानां लोकोऽथ यदनुब्रूते तेन ऋषीणामथ यत्पितृभ्यो निपृणाति यत्प्रजामिच्छते तेन पितृणामथ यन्मनुष्यान्वासयते यदेभ्योऽशनं ददाति तेन मनुष्याणामथ यत्पशुभ्यस्तृणोदकं विन्दति तेन पशूनां यदस्य गृहेषु श्वापदा वयाँ्स्या- पिपीलिकाभ्य उपजीवन्ति तेन तेषां लोको यथा ह वै स्वाय लोकायारि- ष्टिमिच्छेदेवँ्हैवंविदे सर्वाणि भूतान्यरिष्टिमिच्छन्ति तद्वा एतद्विदितं मीमाँ्सितम् ॥१६॥** ५

अथो अयं वा आत्मा। अत्राविद्वान्वर्णाश्रमाद्यभिमानो धर्मेण नियम्यमानो देवादिकर्मकर्तव्यतया पशुवत्परतन्त्र इत्युक्तम्। कानि पुनस्तानि कर्माणि यत्कर्तव्यतया पशुवत्परतन्त्रो भवति। के वा ते देवादयो येषां कर्मभिः पशुवदुपकरोतीति तदुभयं प्रपञ्चयति-अथो इत्ययं वाक्योपन्यासार्थः। अयं यः प्रकृतो गृही कर्माधिकृतोऽविद्वाञ्छरीरेन्द्रियसङ्घातादिविशिष्टः पिण्ड आत्मेत्युच्यते। सर्वेषां देवादीनां पिपीलिकान्तानां भूतानां १० लोको भोग्य आत्मेत्यर्थः। सर्वेषां वर्णाश्रमादिविहितैः कर्मभिरुपकारित्वात्।

कैः पुनः कर्मविशेषैरुपकुर्वन्केषां भूतविशेषाणां लोक इत्युच्यते-स गृही यज्जुहोति यद्यजते। यागो देवतामुद्दिश्य स्वत्वपरित्यागः। स एवाऽऽसेचनावधिको होमस्तेन होमयागलक्षणेन कर्मणाऽवश्यकर्तव्यत्वेन देवानां पशुवत्परतन्त्रत्वेन प्रतिबद्ध इति लोकोऽथ यदनुब्रूते स्वाध्यायमधीतेऽहरहस्तेन ऋषीणां लोकोऽथ यत्पितृभ्यो निपृणाति प्रयच्छति पिण्डोदकादि। यच्च प्रजामिच्छते प्रजार्थमुद्यमङ्करोतीच्छा चोत्पत्त्युपलक्षणार्था प्रजां चोत्पादयतीत्यर्थः। १५ तेन कर्मणाऽवश्यकर्तव्यत्वेन पितॄणां लोकः पितॄणां भोग्यत्वेन परतन्त्रो लोकः। अथ यन्मनुष्यान्वासयते भूम्युद- कादिदानेन गृहे यच्च तेभ्यो वसद्भ्योऽवसद्भ्यो वाऽर्थिभ्योऽशनं ददाति तेन मनुष्याणाम्। अथ यत्पशुभ्यस्तृणोदकं विन्दति लम्भयति तेन पशूनाम्। यदस्य गृहेषु श्वापदा वयांसि च पिपीलिकाभिः सह कणबलिभाण्डक्षालनाद्युप- जीवन्ति तेन तेषां लोकः।

यस्मादयमेतानि कर्माणि कुर्वन्नुपकरोति देवादिभ्यस्तस्माद्यथा ह वै लोके स्वाय लोकाय स्वस्मै देहा- २० यारिष्टिमविनाशं स्वत्वभावाप्रच्युतिमिच्छेत्स्वत्वभावप्रच्युतिभयात्पोषणरक्षणादिभिः सर्वतः परिपालयेदेवं हैवं विदे सर्वभूतभोग्योऽहमनेन प्रकारेण मयाऽवश्यमृणिवत्प्रतिकर्तव्यमित्येवमात्मानं परिकल्पितवते सर्वाणि भूतानि देवादीनि यथोक्तान्यरिष्टिमविनाशमिच्छन्ति स्वत्वाप्रच्युत्यै सर्वतः संरक्षन्ति कुटुम्बिन इव पशूं"स्तस्मादेषां तन्न प्रियमि"त्युक्तम्। तद्वा एतत्तदेतद्यथोक्तानां कर्मणामृणवदवश्यकर्तव्यत्वं पञ्चमहायज्ञप्रकरणे विदितं कर्तव्यतया

कण्डिकान्तरमवतार्य वृत्तमनूद्याऽऽकाङ्क्षापूर्वकं तात्पर्यमाह—अथो इत्यादिना। अत्रेत्यविद्यावस्था पूर्वग्रन्थो २५ वा गृह्यते। अपिपर्यायस्याथोशब्दस्यासङ्गतिमाशङ्क्य व्याकरोति—अथो इतीति। परस्यापि प्रकृतत्वात्ततो विशिनष्टि—गृहीति। गृहित्वे हेतुरविद्वानित्यादि। इतरपर्युदासार्थं कर्माधिकृत इत्युक्तम्। कथमुक्तस्याऽऽत्मनः सर्वभोग्यतेत्याशङ्क्याऽऽह—सर्वेषामिति। तदेव प्रश्नद्वारा प्रकटयति—कैः पुनरिति। यजतिजुहोत्योस्त्यागार्थत्वेना- विशेषात्पुनरुक्तिमाशङ्क्य यजतिचोदनाद्रव्यदेवताक्रियासमुदाये कृतार्थत्वादिति न्यायेनाऽऽह—याग इति। आसेचन प्रक्षेपः। उक्तञ्च—जुहोतिरासेचनावधिकः स्यादिति जै०सू० ४-२-२८। ३०

यथोक्तहोमादिभिर्देवादीन्प्रत्युपकुर्वतो गृहिणो विद्यया प्रतिबन्धसम्भवात्तदुपकारित्वव्यावृत्तिरित्याशङ्क्याऽऽह— यस्मादिति। पूर्वेषामथशब्दानामभिप्रेतमर्थमनूद्य समनन्तरवाक्यमवतार्य तदर्थमाह—तस्मादिति। देवादीना कर्मा- धिकारिणि कर्तृत्वादिपरिपालनमेव परिरक्षणमिति विवक्षित्वा पूर्वोक्त स्मारयति—तस्मादिति। यथोक्तं कर्म कुर्वन्न्यद्यपि देवादीन्प्रत्युपकरोति तथाऽपि न तत्कर्तृत्वमावश्यक मानाभावादित्याशङ्क्याऽऽह—तद्वा इति। भूतयज्ञो मनुष्ययज्ञः पितृयज्ञो देवयज्ञो ब्रह्मयज्ञश्चेत्येव पञ्च महायज्ञाः। ननु श्रुतमपि विचारं विना नानुष्ठेय न हि रुद्ररोदनादि ३५

१. पञ्चमहायज्ञप्रकरणमिति शतपथे ( ११-६ )।

२. यजतिचोदना-यजेत इत्यत्र यज्यर्थः द्रव्यदेवताक्रियाण्यभिधत्ते लोके समुदायप्रख्यापनरूपकार्यस्य यजति- शब्देन कृतत्वादित्यर्थ.। आसेचानाधिको जुहोतिः दृष्टात्वर्थ इत्यर्थः। जै०सू० ४-२-२७

**आत्मैवेदमग्र आसीदेक एव सोऽकामयत जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यादथ कर्म कुर्वीयेतावान्वै कामो नेच्छँश्च नातो भूयो विन्दे-त्तस्मादप्येतर्ह्येकाकी कामयते जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यादथ**

मीमांसितं विचारितं चावदानप्रकरणे ॥१६॥

५ आत्मैवेदमग्र आसीत्। ब्रह्म विद्वांश्चेत्तस्मात्पशुभावात्कर्तव्यताबन्धनरूपात्प्रतिमुच्यते। केनायं कारितः कर्मबन्धनाधिकारेऽवश इव प्रवर्तते न पुनस्तद्विमोक्षणोपाये विद्याधिकार इति। ननूक्तं देवा रक्षन्तीति। बाढम्। कर्माधिकारस्वगोचरारूढानेव तेऽपि रक्षन्ति। अन्यथाऽकृताभ्यागमकृतनाशप्रसङ्गात्। न तु सामान्यं पुरुषमात्रं विशिष्टाधिकारानारूढम्। तस्माद्भवितव्यं तेन येन प्रेरितोऽवश एव बहिर्मुखो भवति स्वस्माल्लोकात्। नन्व-विद्या साऽविद्यावान्हि बहिर्मुखीभूतः प्रवर्तते साऽपि नैव प्रवर्तिका। वस्तुस्वरूपावरणात्मिका हि सा। प्रवर्तक-
१० बीजत्वं तु प्रतिपद्यतेऽन्धत्वमिव गर्ताद्विपतनप्रवृत्तिहेतुः। एवं तर्हुच्यतां किं यत्प्रवृत्तिहेतुरिति। तदिहाभि-धीयते एषणा कामः सः, स्वाभाविक्यामविद्यायां वर्तमाना बालाः "पराचः कामाननुयन्ति" इति काठकश्रुतौ। स्मृतौ च—"काम एष क्रोध एषः" इत्यादि। मानवे च सर्वा प्रवृत्तिः कामहेतुक्येवेति। स एषोऽर्थः सविस्तरः प्रदर्श्यत इहाऽऽध्यायपरिसमाप्तेः।

आत्मैवेदमग्र आसीत्। आत्मैव स्वाभाविकोऽविद्वान्कार्यकरणसङ्घातलक्षणो वर्ण्यग्रे प्राग्दारसम्बन्धादा-
१५ त्मेत्यभिधीयते। तस्मादात्मनः पृथग्भूतं काम्यमानं जायादिभेदरूपं नाऽऽसीत्स एवैक आसीज्जायाद्येषणाबीजभूता-विद्यावानेक एवाऽऽसीत्। स्वाभाविक्या स्वात्मनि कर्त्रादिकारकक्रियाफलात्मकताध्यारोपलक्षणयाऽविद्यावासनया वासितः सोऽकामयत कामितवान्।

श्रुतमित्येवानुष्ठीयते तत्राऽऽह—मीमांसितमिति। 'तदेतदवदयते यद्यजते स यदग्नौ जुहोती'त्याद्यवदानप्रकरणम्। 'ऋणं ह वाव जायते जायमानो योऽस्ती'त्यादिनाऽर्थवादेनेति शेषः ॥१६॥

२० वाक्यान्तरमादाय व्याख्यातुं पातनिकाङ्करोति—आत्मैवेत्यादिना। कर्मैव बन्धनं तत्राधिकारोऽनुष्ठानं तस्मिन्निति यावत्। विद्याधिकारस्तदुपाये श्रवणादौ प्रवृत्तिस्तत्रेत्यर्थः। यथोक्ताधिकारिणो देवादिभी रक्षणं प्रकृति-मार्गे नियमेन प्रवर्तकमिति शङ्कते—नन्विति। उक्तमङ्गीकरोति—बाढमिति। तर्हि प्रवर्तकान्तरं न वक्तव्य तत्राऽऽह—कर्माधिकारेति। कर्मस्वधिकारेण स्वगोचरत्वं प्राप्तानेव देवादयोऽपि रक्षन्ति न सर्वाश्रमसाधारणं ब्रह्म-चारिणमतोऽस्य कर्ममार्गे प्रवृत्तौ देवादिरक्षणस्याहेतुत्वाद्ब्रह्मचारिणो निवृत्तिं त्यक्त्वा प्रवृत्तिपक्षपाते कारणं वाच्य-
२५ मित्यर्थः। मनुष्यमात्रं कर्मण्येव बलात्प्रवर्तयन्ति तेषामचिन्त्यशक्तित्वादित्याशङ्क्याऽऽह—अन्यथेति। स्वगोचरा-रूढानेवेत्येवकारस्य व्यावर्त्यं कीर्तयति—न त्विति। विशिष्टाधिकारो गृहस्थानुष्ठेयकर्मसु गृहस्थत्वेन स्वामित्वं तेन देवगोचरतामप्राप्तमित्यर्थः। देवादिरक्षणस्याकारणत्वे फलितमाह—तस्माविति। प्रत्यगविद्या यथोक्ताधिकारिणो नियमेन प्रवृत्त्यनुरागे हेतुरिति शङ्कते—नन्विति। तदेव स्फुटयति—अविद्यावानिति। तस्याः स्वरूपेण प्रवर्तकत्व दूषयति—साऽपीति। अविद्यायास्तर्हि प्रवृत्त्यन्वयव्यतिरेकौ कथमित्याशङ्क्य कारणकारणत्वेनेत्याह—प्रवर्तकेति।
३० सत्यन्यस्मिन्कारणेऽकारणमेवाविद्या प्रवृत्तेरिति चेत्तत्राऽऽह—एवं तर्हीति। उत्तरवाक्यमुत्तरत्वेनावतार्य तस्मिन्विवक्षितं प्रवर्तकं सङ्क्षिपति—तदिहाभिधीयत इति। तत्रार्थतः श्रुत्यन्तरं संवादयति—स्वाभाविक्यामिति। तत्रैव भगवतः सम्मति-माह—स्मृतौ चेति। 'अथ केन प्रयुक्तोऽयम्' इत्यादिप्रश्नस्योत्तरम्—'काम एष क्रोध एष रजोगुणसमुद्भव.' इत्यादि।

'अकामतः क्रिया काचिद्दृश्यते नेह कस्यचित्। यद्यद्धि कुरुते जन्तुस्तत्तत्कामस्य चेष्टितम्' ॥

इति वाक्यमाश्रित्याऽऽह—मानवे चेति। दर्शितमिति शेषः। उक्तेऽर्थे तृतीयाध्यायशेषमपि प्रमाणयति—स एषोऽर्थ
३५ इति। एवं तात्पर्यमुक्त्वा प्रतीकमादाय पदानि व्याकरोति—आत्मैवेत्यादिना। वर्णी द्विजत्वद्योतको ब्रह्मचारीति यावत्। कथं तर्हि हेत्वभावे तस्य कामित्वमपि स्यादित्याशङ्क्याऽऽह—जायादीति। सगर्व व्याकुर्वन्नुत्तरवाक्यमादा-दायावशिष्टं व्याचष्टे—स्वाभाविक्येति।

---

१. स्वाभाविकः अनादिसंसारवासनावान्।

कर्म कुर्वीयेति स यावदप्येतेषामेकैकं न प्राप्नोत्यकृत्स्न एव तावन्मन्यते तस्यो कृत्स्नता मन एवास्यात्मा वाग्जाया प्राणः प्रजा चक्षुर्मानुषं वित्तं चक्षुषा हि तद्विन्दते श्रोत्रं दैवँ श्रोत्रेण हि तच्छृणोत्यात्मैवास्य कर्मात्मना हि कर्म करोति स एष पाङ्क्तो यज्ञः पाङ्क्तः पशुः पाङ्क्तः पुरुषः पाङ्क्तमिदँ सर्वं यदिदं किंच तदिदँ सर्वमाप्नोति य एवं वेद ॥१७॥　५

इति प्रथमाध्याये चतुर्थं ब्राह्मणम्

कथं ? जाया कर्माधिकारहेतुभूता मे मम कर्तुः स्यात्तया विनाऽहमनधिकृत एव कर्मण्यतः कर्माधिकारसम्पत्तये भवेज्जाया। अथाहं प्रजायेय प्रजारूपेणाहमेवोत्पद्येय। अथ वित्तं मे स्यात्कर्मसाधनं गवादिलक्षणमथाहमभ्युदयनिःश्रेयससाधनं कर्म कुर्वीय येनाहमनृणी भूत्वा देवादीनां लोकान्प्राप्नुयां तत्कर्म कुर्वीय। काम्यानि च पुत्रवित्तस्वर्गादिसाधनान्येतावान्वै काम एतावद्विषयपरिच्छिन्न इत्यर्थः। एतावानेव हि कामयितव्यो विषयो १० यदुत जायापुत्रवित्तकर्माणि साधनलक्षणैषणा। लोकाश्च त्रयो मनुष्यलोकः पितृलोको देवलोक इति फलभूताः साधनैषणायाश्चास्याः। तदर्था हि जायापुत्रवित्तकर्मलक्षणा साधनैषणा। तस्मात्सैकैवैषणा या लोकैषणा सैकैव सत्येषणा साधनापेक्षेति द्विधाऽतोऽवधारयिष्यत्युभे ह्येते एषणे एवेति।

फलार्थत्वात्सर्वारम्भस्य लोकैषणाऽर्थप्राप्तोक्तैवेत्येतावान्वै एतावानेव काम इत्यवध्रियते। भोजनेऽभिहिते तृप्तिर्न हि पृथगभिधेया। तदर्थत्वाद्भोजनस्य ते एते एषणे साध्यसाधनलक्षणे कामो येन प्रयुक्तोऽविद्वानवश एव १५ कोशकारवदात्मानं वेष्टयति कर्ममार्ग एवाऽऽत्मानं प्रणिदधद्बहिर्मुखीभूतो न स्वं लोकं प्रतिजानाति। तथा च तैत्तिरीयके–"अग्निमुग्धो हैव धूमतान्तः स्वं लोकं न प्रतिप्रजानाति" इति।

कथं पुनरेतावत्त्वमवधार्यते कामानामनन्तत्वात्। अनन्ता हि कामा इत्येतदाशङ्क्य हेतुमाह–यस्मान्नेच्छंश्च नेच्छन्नप्यतोऽस्मात्फलसाधनलक्षणाद्भूयोऽधिकतरं न विन्देन्न लभेत। न हि लोके फलसाधनव्यतिरिक्तं दृष्टमदृष्टं

कामनाप्रकारं प्रश्नपूर्वकं प्रकटयति—कथमिति। कर्माधिकारहेतुत्वं तस्याः साधयति—तयेति। प्रजां प्रति २० जायाया हेतुत्वद्योतकोऽथशब्दः। प्रजाया मानुषवित्तान्तर्भावमभ्युपेत्य द्वितीयोऽथशब्दः। तृतीयस्तु वित्तस्य कर्मानुष्ठानहेतुत्वविवक्षयेति विभागः। कर्मानुष्ठानफलमाह—येनेति। तत्किं नित्यनैमित्तिककर्मणामेवानुष्ठानं नेत्याह—काम्यानि चेति। क्रियापदमनुकृष्य चशब्द. कामशब्दस्य यथाश्रुतमर्थं गृहीत्वैतावानित्यादिवाक्यस्याभिप्रायमाह—साधनलक्षणेति। अस्या. साधनैषणायाः फलभूता इति सम्बन्ध.। द्वयोरेषणात्वमुक्त्वा लोकैषणा परिशिनष्टि—तदर्था हीति। कथ तर्हि साधनैषणोक्तिरित्याशङ्क्याऽऽह—सैकेति। एतेत वाक्यशेष ऽप्यनुगुणी भवतीत्याह—अत इति।　२५

साधनवत्फलमपि काममात्रं चेत्कथं तर्हि श्रुत्या साधनमात्रमभिधायैतावानवध्रियते तत्राह—फलार्थत्वादिति। उक्ते साधने साध्यमार्थिकमित्यत्र दृष्टान्तमाह—भोजन इति। साधनोक्तौ साध्यस्यार्थादुक्तेरेतावानिति द्वयोरनुवादेऽपि कथमेषणार्थे कामशब्दस्तत्र प्रयुज्यते, न हि तौ पर्यायौ, न च तदवाच्यत्वे तयोरनर्थकतेत्याशङ्क्य पर्यायत्वमेषणाकामशब्दयोरुपेत्याह—ते एते इति। वेष्टनमेव स्पष्टयति—कर्ममार्ग इति। अग्निमुग्धोऽग्निरेव होमादिद्वारेण मम श्रेयःसाधनं नाऽऽत्मज्ञानमित्यभिमानवान्धूमतान्तो धूमेन ग्लानिमापन्नो धूमता वा ममान्ते देहावसाने ३० भवतीति मन्यमान 'ते धूममभिसम्भवन्ती'ति श्रुतेः। स्वं लोकमात्मानम्।

वाक्यान्तरमुत्थाप्य व्याचष्टे—कथमित्यादिना। तस्मादेतावत्त्वमवधार्यते तेषामिति शेषः। उक्तमेवार्थं लोकदृष्टिमवष्टभ्य स्पष्टयति—न हीति। लब्धव्यान्तराभावेऽपि कामयितव्यान्तर स्यादित्याशङ्क्याऽऽह—लब्धव्येति।

१. कोशकारः क्षौमवस्त्रायोपादेयाः तन्तवः कोशकारशब्दितक्रिमिणा स्वीयलालाजलेन नीडरूपेण निर्मीयन्ते। तत्पूर्त्यनन्तरं क्रिमिः तस्मात् नीडात् रन्ध्रं कुर्वन् बहिर्गमिष्यति। ततः पूर्वमेव अच्छिन्नतन्तुलोभात् मानवाः ३५ उष्णोदके नीडं प्रक्षिप्य क्रिमिं नाशयित्वा तन्तून् गृह्णन्ति एवं कोशकारः स्वयं कोशं निर्माय म्रियत इत्यर्थः।

वा लब्धव्यमस्ति। लब्धव्यविषयो हि कामस्तस्य चैतद्व्यतिरेकेणाभावाद्युक्तं वक्तुमेतावान्वै काम इति। एतदुक्तं
भवति–दृष्टार्थमदृष्टार्थं वा साध्यसाधनलक्षणमविद्यावत्पुरुषाधिकारविषयमेषणाद्वयं कामोऽतोऽस्माद्विदुषा व्युत्थात-
व्यमिति। यस्मादेवमविद्वानात्मा कामी पूर्वं कामयामास तथा पूर्वतरोऽप्येषा लोकस्थितिः। प्रजापतेश्चैवमेष सर्गं
आसीत्सोऽबिभेदविद्यया ततः कामप्रयुक्त एकाक्यरममाणोऽरत्युपघाताय स्त्रियमैच्छत्तां समभवत्ततः सर्गोऽयमा-
५ सीदिति ह्युक्तम्। तस्मात्तत्सृष्टावेतर्ह्येतस्मिन्नपि काल एकाकी सन्प्राग्दारक्रियातः कामयते "जाया मे स्यादथ
प्रजायेयाथ वित्तं मे स्यादथ कर्म कुर्वीये"त्युक्तार्थं वाक्यम्। स एवं कामयमानः सम्पादयंश्च जायादीन्यावत्स-
मस्तान्स एतेषां यथोक्तानां जायादीनामेकैकमपि न प्राप्नोत्यकृत्स्नोऽसम्पूर्णोऽहमित्येव तावदात्मानं मन्यते।
पारिशेष्यात्समस्तानेवैतान्सम्पादयति यदा तदा तस्य कृत्स्नता।

यदा तु न शक्नोति कृत्स्नतां सम्पादयितुं तदाऽस्य कृत्स्नत्वसम्पादनायाऽऽह–तस्यो तस्याकृत्स्नत्वाभि-
१० मानिनः कृत्स्नतेयमेवं भवति। कथम्। अयं कार्यकरणसङ्घातः प्रविभज्यते। तत्र मनोनुवृत्ति हीतरत्सर्वं कार्यकरण-
जातमिति मनःप्रधानत्वादात्मेवाऽऽत्मा। यथा जायादीनां कुटुम्बपतिरात्मैव तदनुकारित्वाज्जायादिचतुष्टयस्य।
एवमिहापि मन आत्मा परिक[ल्प्य]ते कृत्स्नतायै। तथा वाग्जाया मनोनुवृत्तित्वसामान्याद्वाचः। वागिति शब्दश्रो-
दनादिलक्षणो मनसा श्रोत्रद्वारेण गृह्यतेऽवधार्यते प्रयुज्यते चेति मनसो जायेव वाक्। ताभ्यां च वाङ्मनसाभ्यां
जायापतिस्थानीयाभ्यां प्रसूयते प्राणः कर्मार्थमिति प्राणः प्रजेव। तत्र प्राणचेष्टादिलक्षणं कर्म चक्षुर्दृष्टवित्तसाध्यं
१५ भवतीति चक्षुर्मानुषं वित्तम्। तद्द्विविधं वित्तं मानुषमितरच्चातो विशिनष्टीतरवित्तनिवृत्त्यर्थं मानुषमिति। गवादि
हि मनुष्यसम्बन्धिवित्तं चक्षुर्ग्राह्यं कर्मसाधनं तस्मात्तत्स्थानीयम्। तेन सम्बन्धाच्चक्षुर्मानुषं वित्तम्। चक्षुषा हि
यस्मात्तन्मानुषवित्तं विन्दते गवाद्युपलभत इत्यर्थः।

किं पुनरितरद्वित्तं श्रोत्रं दैवं देवविषयत्वाद्विज्ञानस्य विज्ञानं दैवं वित्तं तदिह श्रोत्रमेव सम्पत्तिविषयम्।
कस्मात्। श्रोत्रेण हि यस्मात्तद्दैवं वित्तं विज्ञानं शृणोति। अतः श्रोत्राधीनत्वाद्विज्ञानस्य श्रोत्रमेव तदिति। किं
२० पुनरेतैरात्मादिवित्तान्तैरिह निर्वर्त्यं कर्मेत्युच्यते—आत्मैवाऽऽत्मेति शरीरमुच्यते कथं पुनरात्मा कर्मस्थानीयः अस्य

एतद्व्यतिरेकेण साध्यसाधनातिरेकेणेति यावत्। तयोर्द्वयोरपि कामत्वविधायिश्रुतेरभिप्रायमाह—एतदुक्तमिति।
कामस्यानर्थत्वात्साध्यसाधनयोश्च तावन्मात्रत्वात्सर्गादौ पुमर्थताविश्वासं त्यक्त्वा स्वप्नलाभतुल्याभ्यस्तिसृभ्योऽप्ये-
षणाभ्यो व्युत्थानं संन्यासात्मकं कृत्वा काङ्क्षितमोक्षहेतुं ज्ञानमुद्दिश्य श्रवणाद्यावर्तयेदित्यर्थः। तस्मादपीत्यादि
व्याचष्टे—यस्मादिति। प्राकृतस्थितिरेषा न बुद्धिपूर्वकारिणामिदं वृत्तमित्याशङ्क्याऽऽह—प्रजापतेश्चेति। तत्र हेतुत्वेन
२५ पूर्वोक्तं स्मारयति—सोऽबिभेदित्यादिना। तत्रैव कार्यलिङ्गकमनुमानं सूचयति—तस्मादिति। स यावदित्यादिवाक्य-
मादाय व्याचष्टे—स एवमिति। पूर्वः सशब्दो वाक्यप्रदर्शनार्थः। द्वितीयस्तु व्याख्यानमध्यपातीत्यविरोधः। अर्थ-
सिद्धमर्थमाह—पारिशेष्यादिति।

तस्यो कृत्स्नतेत्येतदवतार्य व्याकरोति—यदेत्यादिना। अकृत्स्नत्वाभिमानिनो विरुद्धं कृत्स्नत्वमित्याह—
कथमिति। विरोधमन्तरेण कात्स्न्यार्थं विभागं दर्शयति—अयमिति। विभागे प्रस्तुते मनसो यजमानत्वकल्पनाया
३० निमित्तमाह—तत्रेति। उक्तमेव व्यनक्ति—यथेति। तथा मनसो यजमानत्वकल्पनावदित्यर्थं। वाचि जायात्व-
कल्पनायां निमित्तमाह—मन इति। वाचो मनोऽनुवृत्तित्व स्वरूपकथनपुरःसरं स्फोरयति—वागितीति। प्राणस्य
प्रजात्वकल्पना साधयति—ताभ्याश्चेति। कथ पुनश्चक्षुर्मानुष वित्तमित्युच्यते पशुहिरण्यादि तथेत्याशङ्क्याऽऽह—
तत्रेति। आत्मादित्रये सिद्धे सतीति यावत्। आदिपदेन कायचेष्टा गृह्यते। मानुषमिति विशेषणस्यार्थवत्त्वं समर्थयते—
तद्द्विविधमिति। सम्प्रति चक्षुषो मानुषवित्तत्वं प्रपञ्चयति—गवादीति। तत्पदपरामृष्टमेवार्थं व्याचष्टे—तेन सम्बन्धा-
३५ दिति। तत्स्थानीयं मानुषवित्तस्थानीयं तेन मानुषेण वित्तेनेत्येतत्। सम्बन्धमेव साधयति—चक्षुषा हीति।
तस्माच्चक्षुर्मानुषं वित्तमिति शेषः।

आकाङ्क्षापूर्वकमुत्तरवाक्यमुपादत्ते—किं पुनरिति। तद्व्याचष्टे—दैवेति। तत्र हेतुमाह—यस्मादित्यादिना।
यजमानादिनिर्वर्त्यं कर्म प्रश्नपूर्वकं विशदयति—किं पुनरित्यादिना। इहेति सम्पत्तिपक्षोक्तिः। शरीरस्य कर्मत्व-
प्रसिद्धमिति शङ्कित्वा परिहरति—कथं पुनरिति। अस्येति यजमानोक्तिः। हिशब्दार्थो यत इत्यनूद्यते। तस्यो

### अथ प्रथमाध्यायस्य पञ्चमं ब्राह्मणम्

**यत्सप्तान्नानि मेधया तपसाऽजनयत्पिता । एकमस्य साधारणं द्वे देवानभाजयत् त्रीण्यात्मनेऽकुरुत पशुभ्य एकं प्रायच्छत् । तस्मिन्सर्वं प्रतिष्ठितं यच्च प्राणिति यच्च न । कस्मात्तानि न क्षीयन्तेऽद्यमानानि सर्वदा । यो वैतामक्षितिं वेद सोऽन्नमत्ति प्रतीकेन । स देवानपिगच्छति स ऊर्जमुपजीवतीति श्लोकाः ॥१॥** ५

कर्महेतुत्वात् । कथं कर्महेतुत्वम् । आत्मना हि शरीरेण यतः कर्म करोति । तस्याकृत्स्नत्वाभिमानिन एवं कृत्स्नता सम्पन्ना यथा बाह्यजायादिलक्षणैवम् । तस्मात्स एष पाङ्क्तः पञ्चभिर्निर्वृत्तः पाङ्क्तो यज्ञो दर्शनमात्रनिर्वृत्तोऽकर्मिणोऽपि । कथं पुनरस्य पञ्चत्वसम्पत्तिमात्रेण यज्ञत्वम् । उच्यते—यस्माद्बाह्योऽपि यज्ञः पशुपुरुषसाध्यः । स च पशुः पुरुषश्च पाङ्क्त एव । यथोक्तमनआदिपञ्चत्वयोगात् । तदाह—पाङ्क्तः पशुर्गवादिः पाङ्क्तः पुरुषः पशुत्वेऽप्यधिकृतत्वेनास्य विशेषः पुरुषस्येति पृथक्पुरुषग्रहणम् । किं बहुना पाङ्क्तमिदं सर्वं कर्मसाधनं फलं च १० यदिदं किञ्च यत्किञ्चिदिदं सर्वमेवं पाङ्क्तं यज्ञमात्मानं यः सम्पादयति स तदिदं सर्वं जगदात्मत्वेनाऽऽप्नोति य एवं वेद ॥१७॥

इति बृहदारण्यकभाष्ये प्रथमाध्याये चतुर्थं ब्राह्मणम् ॥४॥

यत्सप्तान्नानि मेधया । अविद्या प्रस्तुता । तत्राविद्वानन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति सवर्णाश्रमाभिमानः कर्मकर्तव्यतया नियतो जुहोत्यादिकर्मभिः कामप्रयुक्तो देवादीनामुपकुर्वन्सर्वेषां भूतानां लोक इत्युक्तम् । १५ यथा च स्वकर्मभिरेकैकेन सर्वैर्भूतैरसौ लोको भोज्यत्वेन सृष्टः । एवमसावपि जुहोत्यादिपाङ्क्तकर्मभिः सर्वाणि भूतानि सर्वञ्च जगदात्मभोज्यत्वेनासृजत । एवमेकैकः स्वकर्मविद्याऽऽनुरूप्येण सर्वस्य जगतो भोक्ता भोज्यञ्च सर्वस्य सर्वः कर्ता कार्यं चेत्यर्थः । एतदेव च विद्याप्रकरणे मधुविद्यायां वक्ष्यामः । सर्वं सर्वस्य कार्यं मध्वित्यात्मैकत्वविज्ञानार्थम् । यदसौ जुहोत्यादिना पाङ्क्तेन काम्येन कर्मणाऽऽत्मभोज्यत्वेन जगदसृजत विज्ञानेन च तज्जगत्सर्वं सप्तधा प्रविभज्यमानं कार्यकारणत्वेन सप्तान्नान्युच्यन्ते भोज्यत्वात्तेनासौ पिता तेषामन्नानाम् । एतेषामन्नानां २० सविनियोगानां सूत्रभूताः सङ्क्षेपतः प्रकाशकत्वादिमे मन्त्राः ॥१॥

कृत्स्नतेत्युक्तमुपसंहरति—तस्येति । उक्तरीत्या कृत्स्नत्वे सिद्धे फलितमाह—तस्मादिति । अस्येति दर्शनोक्तिः । पशोः पुरुषस्य च पाङ्क्तत्वं तच्छब्दार्थः । पुरुषस्य पशुत्वाविशेषात्पृथग्ग्रहणमयुक्तमित्याशङ्क्याऽऽह—पशुत्वेऽपीति । न केवलं पशुपुरुषयोरेव पाङ्क्तत्वं किन्तु सर्वस्येत्याह—किं बहुनेति । तस्मादाध्यात्मिकस्य दर्शनस्य यज्ञत्वं पञ्चत्वयोगादविरुद्धमिति शेषः । सम्पत्तिफलं व्याकरोति—एवमिति । व्याख्यातार्थवाक्यमनुवदन्ब्राह्मणमुपसंहरति—य एवं २५ वेदेति । साध्यं साधनं च पाङ्क्तं सूत्रात्मना ज्ञात्वा तच्चाऽऽत्मत्वेनानुसन्दधानस्य तदाप्तिरेव फलं तत्क्रतुन्यायादित्यर्थः ॥१७॥

इति बृहदारण्यकभाष्यटीकायां प्रथमाध्याये चतुर्थं ब्राह्मणम् ॥४॥

ब्राह्मणान्तरमवतार्य सङ्गतिं वक्तुं वृत्तं कीर्तयति—यत्सप्तान्नानीत्यादिना । तत्रेत्यतिक्रान्तब्राह्मणोक्तिः । उपास्तिशब्दितं भेददर्शनमविद्याकार्यमनेनानूद्य न स वेदेति तद्धेतुरविद्या पूर्वत्र प्रस्तुतेति योजना । अथो अयमित्य- ३० त्रोक्तमनुवदति—सवर्णाश्रमाभिमान इति । आत्मैवेदमग्र आसीदित्यादावुक्तं स्मारयति—कामप्रयुक्त इति । वृत्तमनूद्योत्तरग्रन्थमवतारयितुमपेक्षितं पूरयति—यथा चेति । गृहिणो जगतश्च परस्परं स्वकर्मोपार्जितत्वमेष्टव्यमन्यथाऽन्योन्यमुपकारकत्वायोगादित्यर्थः । ननु सूत्रस्यैव जगत्कर्तृत्वं ज्ञानक्रियातिशयवत्त्वान्नेतरेषां तदभावादत आह—एवमिति । पूर्वकल्पीयविहितप्रतिषिद्धज्ञानकर्मानुष्ठाता सर्वो जन्तुरुत्तरसर्गस्य पितृत्वेनात्र विवक्षितो न तु प्रजापतिरेवेत्युक्तमर्थं सङ्क्षिप्याऽऽह—सर्वस्येति । सर्वस्य मिथो हेतुहेतुमत्त्वे प्रमाणमाह—एतदेवेति । सर्वस्यान्योन्यकार्यकारणत्वोक्त्या ३५ कल्पितत्ववचनं कुत्रोपयुज्यते तत्राऽऽह—आत्मैकत्वेति । एवं भूमिकां कृत्वोत्तरब्राह्मणतात्पर्यमाह—यदसाविति । उच्यन्ते ध्यानार्थमिति शेषः । अन्नत्वे हेतुः—भोज्यत्वादिति । तेन ज्ञानकर्मभ्यां जनकत्वेनेति यावत् । ब्राह्मणमवतार्य मन्त्रमवतारयति—एतेषामिति ॥१॥

**यत्सप्तान्नानि मेधया तपसाऽजनयत्पितेति मेधया हि तपसाऽजनयत्पिता। एक-मस्य साधारणमितीदमेवास्य तत्साधारणमन्नं यदिदमद्यते। स य एतदुपास्ते न स पाप्मनो व्यावर्तते मिश्रँ ह्येतत्। द्वे देवानभाजयदिति हुतं च प्रहुतं च**

यत्सप्तान्नानि यदजनयदिति क्रियाविशेषणं मेधया प्रज्ञया विज्ञानेन तपसा च कर्मणा ज्ञानकर्मणी एव हि
५ मेधातपःशब्दवाच्ये तयोः प्रकृतत्वान्नेतरे मेधातपसी अप्रकरणात्। पाङ्क्तं हि कर्म जायादिसाधनं य एवं वेदेति चानन्तरमेव ज्ञानं प्रकृतम्। तस्मान्न प्रसिद्धयोर्मेधातपसोराशङ्का कार्या। अतो यानि सप्तान्नानि ज्ञानकर्मभ्यां जनितवान्पिता तानि प्रकाशयिष्याम इति वाक्यशेषः। तत्र मन्त्राणामर्थस्तिरोहितत्वात्प्रायेण दुर्विज्ञेयो भवतीति तदर्थव्याख्यानाय ब्राह्मणं प्रवर्तते। तत्र यत्सप्तान्नानि मेधया तपसाऽजनयत्पितेत्यस्य कोऽर्थ उच्यत इति हि शब्देनैव व्याचष्टे प्रसिद्धार्थावद्योतकेन। प्रसिद्धो ह्यस्य मन्त्रस्यार्थ इत्यर्थः। यदजनयदिति चानुवादस्वरूपेण मन्त्रेण
१० प्रसिद्धार्थतैव प्रकाशिता। अतो ब्राह्मणमविशङ्कयैवाऽऽह—मेधया हि तपसाऽजनयत्पितेति।

ननु कथं प्रसिद्धताऽस्यार्थस्येति। उच्यते—जायादिकर्मान्तानां लोकफलसाधनानां पितृत्वं तावत्प्रत्यक्षमेव। अभिहितश्च जाया मे स्यादित्यादिना। तत्र च दैवं वित्तं विद्या कर्म पुत्रश्च फलभूतानां लोकानां साधनं स्रष्टृत्वं प्रतीत्यभिहितम्। वक्ष्यमाणं च प्रसिद्धमेव। तस्माद्युक्तं वक्तुं मेधयेत्यादि। एषणा हि फलविषया प्रसिद्धैव च लोके। एषणा च जायादीत्युक्तमेतावान्वै काम इत्यनेन। ब्रह्मविद्याविषये च सर्वैकत्वात्कामानुपपत्तेः। एतेना-
१५ शास्त्रीयप्रज्ञातपोभ्यां स्वाभाविकाभ्यां जगत्स्रष्टृत्वमुक्तमेव भवति। स्थावरान्तस्य चानिष्टफलस्य कर्मविज्ञाननिमित्तत्वात्।

तत्राऽऽद्यमन्त्रभागमादाय व्याचष्टे—यत्सप्तान्नानीति। अजनयदिति क्रियाया विशेषण यदिति पदम्। तथा च तद्युक्त पितृत्वादिति शेषः। ग्रन्थार्थधारणशक्तिर्मेधा। कृच्छ्रचान्द्रायणादि तपः। ते कस्मादत्र न गृह्यते तत्राऽऽह—ज्ञानकर्मणी इति। तयोः प्रकृतत्वं प्रकटयति—पाङ्क्तं हीति। इतरयोरप्रकृतत्व हेतूकृतमनूद्य फलितमाह—तस्मादिति। ज्ञानकर्मणोः प्रकृतत्वमुक्त हेतुमादाय वाक्यं पूरयति—अत इति। यत्सप्तान्नानीत्यादिमन्त्रभागं व्याख्याय
२० ब्राह्मणवाक्यसमुदायतात्पर्यमाह—तत्रेति। मन्त्रब्राह्मणात्मको ग्रन्थः सप्तम्यर्थः। मेधया हीत्यादिब्राह्मणमाकाङ्क्षा-पूर्वकमुत्थापयति—तत्र यदिति। प्रकृतमन्त्रसमुदायः सप्तम्या परामृश्यते। व्याख्यानमेव सङ्गृह्णाति—प्रसिद्धो हीति। न केवलं हिशब्दान्मन्त्रस्य प्रसिद्धार्थत्वं किन्तु मन्त्रस्वरूपालोचनायामपि तत्सिध्यतीत्याह—यदिति। मन्त्रार्थस्य प्रसिद्धत्वे मन्त्रस्यानुगुणत्वं हेतूकृत्य फलितमाह—अत इति।

तत्प्रसिद्धिमुपपादयितुं पृच्छति—नन्विति। साध्यसाधनात्मके जगति यत्पितृत्वमविद्यावतो भावि तत्प्रत्य-
२५ क्षत्वात्प्रसिद्धम् अनुभूयते हि जायादि सम्पादयन्नविद्वानित्याह—उच्यत इति। श्रुत्या च प्रागुक्तत्वात्प्रसिद्धमेतदित्याह—अभिहितश्चेति। यच्च मेधातपोभ्या स्रष्टृत्वं मन्त्रब्राह्मणयोरुक्त तदपि प्रसिद्धमेव विद्याकर्मपुत्राणामभावे लोकत्रयोत्पत्त्यनुपपत्तेरित्याह—तत्र चेति। पूर्वोत्तरग्रन्थः सप्तम्यर्थः। पुत्रेणैवायं लोको जय्य इत्यादौ वक्ष्यमाणत्वाच्चास्यार्थस्य प्रसिद्धतेत्याह—वक्ष्यमाणश्चेति। मन्त्रार्थस्येत्थं प्रसिद्धत्वे मन्त्रस्य प्रसिद्धार्थविषयं ब्राह्मणमुपपन्नमित्युपसंहरति—तस्मादिति।

३० प्रकारान्तरेण मन्त्रार्थस्य प्रसिद्धत्वमाह—एषणा हीति। फलविषयत्वं तस्याः स्वानुभवसिद्धमिति वक्तुं हिशब्दः। तस्या लोकप्रसिद्धत्वेऽपि कथ मन्त्रार्थस्य प्रसिद्धत्वमत आह—एषणा चेति। जायाद्यात्मकस्य कामस्य संसारारम्भकत्ववन्मोक्षेऽपि कामः संसारमारभेत कामत्वाविशेषादित्यतिप्रसङ्गमाशङ्क्याऽऽह—ब्रह्मविद्येति। तस्या विषयो मोक्षः। तस्मिन्नद्वितीयत्वाद्रागादिपरिपन्थिनि कामापरपर्यायो रागो नावकल्पते। नहि मिथ्याज्ञाननिदानो रागः सम्यग्ज्ञानाधिगम्ये मोक्षे सम्भवति। श्रद्धा नु तत्र भवति तत्त्वबोधाधीनतया संसारविरोधिनी तत्र संसारा-
३५ नुपकर्त्रिमुक्तावित्यर्थः। शास्त्रीयस्य जायादेः संसारहेतुत्वे कर्मादेरशास्त्रीयस्य कथ तद्धेतुत्वमित्याशङ्क्याऽऽह—एतेनेति। अविद्योत्थस्य कामस्य संसारहेतुत्वोपदर्शनेनेति यावत्। स्वाभाविकाभ्यामविद्याधीनकामप्रयुक्ताभ्यामित्यर्थः।

**तस्माद्देवेभ्यो जुह्वति च प्र च जुह्वत्यथो आहुर्दर्शपूर्णमासाविति तस्मान्नेष्टियाजुकः स्यात् । पशुभ्य एकं प्रायच्छदिति तत्पयः । पयो ह्येवाग्रे मनुष्याश्च पशवश्चोपजीवन्ति तस्मात्कुमारं जातं घृतं वैवाग्रे प्रतिलेहयन्ति स्तनं वाऽनुधापयन्त्यथ वत्सं जातमाहुरतृणाद इति । तस्मिन्सर्वं प्रतिष्ठितं यच्च प्राणिति**

विवक्षितस्तु शास्त्रीय एव साध्यसाधनभावो ब्रह्मविद्याविधित्सया तद्वैराग्यस्य विवक्षितत्वात् । सर्वो ५ ह्ययं व्यक्ताव्यक्तलक्षणः संसारोऽशुद्धोऽनित्यः साध्यसाधनरूपो दुःखोऽविद्याविषय इत्येतस्माद्विरक्तस्य ब्रह्मविद्याऽऽरब्धव्येति । तत्रान्नानां विभागेन विनियोग उच्यते—एकमस्य साधारणमिति मन्त्रपदं तस्य व्याख्यानमिदमेवास्य तत्साधारणमन्नमित्युक्तमस्य भोक्तृसमुदायस्य, किं तद्यदिदमद्यते भुज्यते सर्वैः प्राणिभिरहन्यहनि तत्साधारणं सर्वभोक्त्रर्थमकल्पयत्पिता सृष्ट्वाऽन्नम् ।

स य एतत्साधारणं सर्वप्राणभृत्स्थितिकरं भुज्यमानमन्नमुपास्ते तत्परो भवतीत्यर्थः । उपासनं हि नाम १० तात्पर्यं दृष्टं लोके गुरुमुपास्ते राजानमुपास्त इत्यादौ । तस्माच्छरीरस्थित्यर्थान्नोपभोगप्रधानो नादृष्टार्थकर्मप्रधान इत्यर्थः । स एवंभूतो न पाप्मनोऽधर्माद्व्यावर्तते न विमुच्यत इत्येतत् । तथा च मन्त्रवर्णः—"मोघमन्नं विन्दते" इत्यादिः । स्मृतिरपि—"नाऽऽत्मार्थं पाचयेदन्नम्" "अप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः" "अन्नादे भ्रूणहा मार्ष्टि" इत्यादिः । कस्मात्पुनः पाप्मनो न व्यावर्तते । मिश्रं ह्येतत्सर्वेषां हि स्वं तदप्रविभक्तं यत्प्राणिभिर्भुज्यते । सर्वभोज्यत्वादेव यो मुखे प्रक्षिप्यमाणोऽपि ग्रासः परस्य पीडाकरो दृश्यते ममेदं स्यादिति हि सर्वेषां तत्राऽऽशा १५ प्रतिबद्धा । तस्मान्न परमपीडयित्वा ग्रसितुमपि शक्यते । "दुष्कृतं हि मनुष्याणा" इत्यादिस्मरणाच्च ।

इतश्च तयोर्जगत्सृष्टिप्रयोजकत्वमेष्टव्यमित्याह—स्थावरान्तस्येति । यत्सप्तान्नानीत्यादिमन्त्रपदस्य मेधया हीत्यादिब्राह्मणस्य चाक्षरोत्थमर्थमुक्त्वा तात्पर्यार्थमाह—विवक्षितस्त्विति । शास्त्रपरवशस्य शास्त्रवशादेव साध्यसाधनभावादशास्त्रीयाद्वैमुख्यसम्भवान्न तस्यात्र विवक्षितत्वमित्यर्थः । शास्त्रीयस्य साध्यसाधनभावस्य विवक्षितत्वे हेतुमाह—ब्रह्मेति । तदेव प्रपञ्चयति—सर्वो हीति । दुःखयतीति दुःखस्तद्धेतुरिति यावत् । प्रकृतमन्त्रब्राह्मणव्याख्या- २० समाप्ताविति शब्दो विवक्षितार्थप्रदर्शनसमाप्तौ वा । मन्त्रब्राह्मणयोः श्रुत्यर्थाभ्यामर्थमुक्त्वा समनन्तरग्रन्थमवतारयति—तत्रेति । सप्तविधेऽन्ने सृष्टे सतीति यावत् । व्याख्यानमेव विवृणोति—अस्येत्यादिना ।

साधारणमन्नमसाधारणीकुर्वतो दोषं दर्शयति—स य इति । तत्परो भवतीत्युक्तं विवृणोति—उपासनं हीति । ब्राह्मणोक्तेऽर्थे मन्त्रं प्रमाणयति—तथा चेति । मोघं विफलं देवाद्यनुपभोग्यमन्नं यदि ज्ञानदुर्बलो लभते तदा स वध एव तस्येति साधारणान्नस्यासाधारणीकरणं निन्दितमित्यर्थः तत्रैव स्मृतीरुदाहरति—स्मृतिरपीति । 'न वृथा २५ घातयेत्पशुम् । न चैकः स्वयमश्नीयाद्विधिवर्जं न निर्वपेत्' इति पादत्रयं द्रष्टव्यम् । 'इष्टान्भोगान्हि वो देवा दास्यन्ते यज्ञभाविताः । तैर्दत्तान्' इति शेषः । 'अनेना अभिशंसति । स्तेनः प्रमुक्तो राजनि यावन्नानृतसंगरः' इत्युत्तरं पादत्रयम् । तत्राऽऽद्यपादस्यार्थो भ्रूणहा श्रेष्ठब्राह्मणघातकः । यथाऽऽहुः—'वरिष्ठब्रह्महा चैव भ्रूणहेत्यभिधीयते' इति । स्वस्यान्नभक्षके स्वपापं मार्ष्टि शोधयतीत्यन्नदातुः पापक्षयोक्तेरितरस्यासाधारणीकृत्य भुञ्जानस्य पापितेति ।

"अदत्त्वा तु य एतेभ्यः पूर्वं भुङ्क्तेऽविचक्षणः । स भुञ्जानो न जानाति श्वगृध्रैर्जग्धिमात्मनः ॥" ३० इत्यादिवाक्यमादिशब्दार्थः ।

आकाङ्क्षापूर्वकं हेतुमवतार्य व्याकरोति—कस्मादित्यादिना । सर्वभोज्यत्वं साधयति—यो मुख इति । परस्य श्वमार्जारादेरिति यावत् । पीडाकरत्वे हेतुमाह—ममेदमिति । प्रागुक्तदृष्टिफलमाचष्टे—तस्मादिति । साधारणमन्नमसाधारणीकुर्वाणस्य पापानिवृत्तिरित्यत्र हेत्वन्तरमाह—दुष्कृतं हीति । यदा हि मनुष्याणा दुष्कृतमन्नमाश्रित्य

---

१. विधिवर्जं न निर्वपेत्—निर्वापः यागलक्षकः स च यथाविधि कार्यः न तु विधिहीनमित्यर्थः स्तेनः दण्डं विना ३५ प्रमुक्तश्चेत् तदीयं पाप राजानं संक्रामति अत. स दण्ड्यः याचन्ननृतसंगरः इति आपस्तम्बधर्मसूत्रे १-१९ खण्डे दृश्यते । तदर्थश्चोज्ज्वलायां—अनृतप्रतिज्ञः यः प्रतिश्रुत्य न ददाति तस्मिन् याचन् तं याचन् मानव. स्वीयं एनः सङ्क्रामयति इत्यर्थः ।

**यच्च नेति पर्यास होदँ सर्वं प्रतिष्ठितं यच्च प्राणिति यच्च न । तद्यदिदमाहुः संवत्सरं पयसा जुह्वदप पुनर्मृत्युं जयतीति न तथा विद्याद्यदहरेव जुहोति तदहः पुनर्मृत्युमपजयत्येवं विद्वान्सर्वँ हि देवेभ्योऽन्नाद्यं प्रयच्छति । कस्मा-**

गृहिणा वैश्वदेवाख्यमन्नं यदहन्यहनि निरुप्यत इति केचित् । तन्न । सर्वभोक्तृसाधारणत्वं वैश्वदेवाख्यस्यान्नस्य
५ न सर्वप्राणभृद्भुज्यमानान्नवत्प्रत्यक्षम् । नापि यदिदमद्यत इति तद्विषयं वचनमनुकूलम् । सर्वप्राणभृद्भुज्यमाना-न्नान्तःपातित्वाच्च वैश्वदेवान्नस्य युक्तं श्वचाण्डालाद्याद्यस्यान्नस्य ग्रहणं वैश्वदेवव्यतिरेकेणापि श्वचाण्डालाद्याद्या-न्नदर्शनात्तत्र युक्तं यदिदमद्यत इति वचनम् । यदि हि तन्न गृह्येत साधारणशब्देन पित्राऽसृष्टत्वाविनियुक्तत्वे तस्य प्रसज्येयाताम् । इष्यते हि तत्सृष्टत्वं तद्विनियुक्तत्वं च सर्वस्यान्नजातस्य । न च वैश्वदेवाख्यं शास्त्रोक्तं कर्म कुर्वतः पाप्मनोऽविनिवृत्तिर्युक्ता । न च तस्य प्रतिषेधोऽस्ति । न च मत्स्यबन्धनादिकर्मवत्स्वभावजुगुप्सित-
१० मेतच्छिष्टनिवर्त्यत्वादकरणे च प्रत्यवायश्रवणादितरत्र च प्रत्यवायोपपत्तेः । "अहमन्नमन्नमदन्तमद्मि" इति मन्त्रवर्णात् ।

द्वे देवानभाजयदिति मन्त्रपदं; ये द्वे अन्ने सृष्ट्वा देवानभाजयत् । के ते द्वे इत्युच्येते—हुतं च प्रहुतं च । हुतमित्यग्नौ हवनम् । प्रहुतं हुत्वा बलिहरणम् । यस्माद्द्वे एते अन्ने हुतप्रहुते देवानभाजयत्पिता । तस्मादेतर्ह्यपि गृहिणः काले देवेभ्यो जुह्वति देवेभ्य इदमन्नमस्माभिर्दीयमानमिति मन्वाना जुह्वति प्रजुह्वति हुत्वा बलिहरणं च
१५ कुर्वत इत्यर्थः । अथो अप्यन्य आहुर्द्वे अन्ने पित्रा देवेभ्यः प्रत्ते न हुतप्रहुते किं तर्हि दर्शपूर्णमासाविति । द्वित्व-श्रवणाविशेषादत्यन्तप्रसिद्धत्वाच्च हुतप्रहुते इति प्रथमः पक्षः ।

यद्यपि द्वित्वं हुतप्रहुतयोः सम्भवति तथाऽपि श्रौतयोरेव तु दर्शपूर्णमासयोर्देवान्नत्वं प्रसिद्धतरं मन्त्र-प्रकाशितत्वात् । गुणप्रधानप्राप्तौ च प्रधाने प्रथमतराऽवगतिः । दर्शपूर्णमासयोश्च प्राधान्यं हुतप्रहुतापेक्षया । तस्मा-

तिष्ठति तदा तदसाधारणीकुर्वतो महत्तरं पापं भवतीत्यर्थः । एकमस्येत्यादिमन्त्रब्राह्मणयोः स्वपक्षार्थमुक्त्वा भर्तृप्रपञ्च-
२० पक्षमाह—गृहिणेति । यदन्नं गृहिणा प्रत्यहमग्नौ वैश्वदेवाख्यं निर्वर्त्यते तत्साधारणमिति भर्तृप्रपञ्चैरुक्तमित्यर्थः । साधारणपदानुपपत्तेर्न युक्तमिदं व्याख्यानमिति दूषयति—तन्नेति । वैश्वदेवस्य साधारणत्वमप्रामाणिकमित्युक्तमिदानीं तस्याप्रत्यक्षत्वादिदन्ता परामर्शश्च न युक्तिमानित्याह—नापीति । इतश्च साधारणशब्देन सर्वप्राण्यन्नं ग्राह्यमित्याह—सर्वेति । वैश्वदेवग्रहेऽपीतरग्रहः स्यादिति चेन्नेत्याह—वैश्वदेवेति । यत्तु परपक्षे यदिदमद्यत इति वचो नानुकूलमिति तन्नास्मत्पक्षेऽस्तीत्याह—तत्रेति । प्रत्यक्षं साधारणान्नं सप्तम्यर्थः ।
२५ विपक्षे दोषमाह—यदि हीति । प्रसङ्गस्येष्टत्वं निराचष्टे—इष्यते हीति । परपक्षे वाक्यशेषविरोध दोषान्तर-माह—न चेति । श्येनादितुल्यत्वं तस्य व्यावर्तयति—न च तस्येति । अनिषिद्धस्यापि तस्य स्वभावजुगुप्सितत्वात्त-दनुष्ठायिनः पापानिवृत्तिरित्याशङ्क्याऽऽह—न चेति ।

'अवश्यं याति तिर्यक्त्वं जग्ध्वा चैवाहुतं हविः ।'

इत्यकरणे वैश्वदेवस्य प्रत्यवायश्रवणाच्च तदनुष्ठायिनो न पाप्मलेशोऽस्तीत्याह—अकरणे चेति । सर्वसाधारणान्नग्रहे
३० तु तत्परस्य निन्दावचनमुपपद्यते तेन तदेव ग्राह्यमित्याह—इतरत्रेति । तत्रैव श्रुत्यन्तरं संवादयति—अहमिति । अर्थिभ्योऽविभज्यान्नमदत्त्वा स्वयमेव भुञ्जानं नरमहमन्नमेव भक्षयामि तमनर्थभाजं करोमीत्यर्थः । मन्त्रान्तरमादायाऽऽ-काङ्क्षाद्वारा ब्राह्मणमुत्थाप्य व्याचष्टे—द्वे देवानित्यादिना । हुतप्रहुतयोर्देवान्नत्वे सम्प्रतितनमनुष्ठानमनुकूलयति—यस्मादिति । पक्षान्तरमुपन्यस्य व्याकरोति—अथो इति । यदि दर्शपूर्णमासौ देवान्ने कथं तर्हि हुतप्रहुते इति पक्षस्य प्राप्तिस्तत्राऽऽह—द्वित्वेति ।
३५ तर्हि द्वे देवानिति श्रुतद्वित्वस्य हुतप्रहुतयोरपि सम्भवान्न प्रथमपक्षस्य पूर्वपक्षत्वमत आह—यद्यपीति । प्रसिद्धतरत्वे हेतुमाह—मन्त्रेति । 'अग्नये जुष्टं निर्वपामि' 'अग्निरिदं हविरजुषत' इत्यादिमन्त्रेषु दर्शपूर्णमासयोर्देवान्नत्वस्य प्रतिपन्नत्वादिति यावत् । इतश्च दर्शपूर्णमासयोरेव देवान्नत्वमिति वक्तुं सामान्यन्यायमाह—गुणेति । गुणप्रधानयोरेकत्र साधारणशब्दात्प्राप्तौ सत्यां प्रथमतरा प्रधाने भवत्यवगतिर्गौणमुख्ययोर्[1]मुख्ये कार्यसम्प्रत्यय इति न्यायादित्यर्थः ।

---

१. गौणमुख्ययोः = एकस्मात्पदात् गौणार्थमुख्यार्थयोः प्रतिपत्तौ मुख्यार्थे प्रथमं बुद्धिः जायत इत्यर्थः ।

त्तानि न क्षीयन्तेऽद्यमानानि सर्वदेति पुरुषो वा अक्षितिः स हीदमन्नं पुनः पुनर्जनयते । यो वैतामक्षितिं वेदेति पुरुषो वा अक्षितिः स हीदमन्नं धिया धिया जनयते कर्मभिर्यद्धैतन्न कुर्यात्क्षीयेत ह सोऽन्नमत्ति प्रतीकेनेति मुखं प्रतीकं मुखेनेत्येतत् । स देवानपिगच्छति स ऊर्जमुपजीवतीति प्रश ँसा ॥२॥

त्तयोरेव ग्रहणं युक्तं द्वे देवानभाजयदिति । यस्माद्देवार्थमेते पित्रा प्रक्लृप्ते दर्शपूर्णमासाख्ये अन्ने तस्मात्तयोर्देवार्थत्वाविघाताय नेष्टियाजुक इष्टियजनशीलः । इष्टिशब्देन किल काम्या इष्टयः शातपथीयं प्रसिद्धिस्ताच्छील्यप्रत्ययप्रयोगात्काम्येष्टियजनप्रधानो न स्यादित्यर्थः । पशुभ्य एकं प्रायच्छदिति यत्पशुभ्य एकं प्रायच्छत्पिता किं पुनस्तदन्नं तत्पयः । कथं पुनरवगम्यते पशवोऽस्यान्नस्य स्वामिन इत्यत आह—पयो ह्यग्रे प्रथमं यस्मान्मनुष्याश्च पशवश्च पय एवोपजीवन्तीति । उचितं हि तेषां तदन्नमन्यथा कथं तदेवाग्रे नियमेनोपजीवेयुः । ५

कथमग्रे तदेवोपजीवन्तीति । उच्यते—मनुष्याश्च पशवश्च यस्मात्तेनैवान्नेन वर्तन्तेऽद्यत्वेऽपि यथा पित्राऽऽदौ विनियोगः कृतस्तस्मात्कुमारं बालं जातं घृतं वा त्रैवर्णिका जातकर्मणि जातरूपसंयुक्तं प्रतिलेहयन्ति प्राशयन्ति स्तनं वाऽनुधापयन्ति पश्चात्पाययन्ति । यथासम्भवमन्येषां स्तनमेवाग्रे धापयन्ति मनुष्येभ्योऽन्येषां पशूनाम् । अथ वत्सं जातमाहुः कियत्प्रमाणो वत्स इत्येव पृष्टाः सन्तोऽतृणाद इति । नाद्यापि तृणमत्त्यतीव बालः पयसैवाद्यापि वर्तत इत्यर्थः । १०

अस्त्वेवं प्रस्तुते किं जात तदाह—दर्शपूर्णमासयोश्चेति । तयोर्निरपेक्षश्रुतिदृष्टतया[3] सापेक्षस्मृतिसिद्धहुताद्यपेक्षया प्राधान्यं सिद्धं तथा च प्रधानयोस्तयोरितरयोश्च गुणयोरेकत्र प्राप्तौ प्रधानयोरेव द्वे देवानिति मन्त्रेण ग्रहो युक्तिमानित्यर्थः । दर्शपूर्णमासयोर्देवान्नत्वे समनन्तरनिषेधवाक्यमनुकूलयति—यस्मादिति । इष्टियजनशीलो न स्यादिति सम्बन्धः । ननु तद्यजनशीलत्वाभावे कुतो दर्शपूर्णमासयोर्देवार्थत्व नहि तावन्निष्पन्नौ तदर्थावित्याशङ्क्याऽऽह—इष्टिशब्देनेति । किं पुनरस्मिन्वाक्ये काम्येष्टिविषयत्वमिष्टिशब्दस्येत्यत्र नियामकं तत्र किलशब्दसूचिता पाठकप्रसिद्धिमाह—शातपथीति । काम्येष्टीनामनुष्ठाननिषेधे स्वर्गकामवाक्यविरोधः स्यादित्याशङ्क्याऽऽह—ताच्छील्येति । तत्र विहितस्योकञ्प्रत्ययस्यात्र प्रयोगात्काम्येष्टियजनप्रधानत्वमिह निषिध्यते तच्च देवप्रधानयोर्दर्शपूर्णमासयोरवश्यानुष्ठेयत्वसिद्ध्यर्थं न तु ताः स्वतो निषिध्यन्ते तन्न स्वर्गकामवाक्यविरोधोऽस्तीत्यर्थः । पश्वन्नविषय मन्त्रपदमादाय प्रश्नपूर्वकं तदर्थं कथयति—पशुभ्य इति । पशूना पयोऽन्नमित्येतदुपपादयितुं पृच्छति—कथं पुनरिति । पयो हीति प्रतीकमुपादाय व्याकरोति—अग्र इति । 'पशवो द्विपादश्चतुष्पादश्च' इति श्रुतिमाश्रित्य मनुष्याश्चेत्युक्तम् । उचितं हीत्यत्र हिशब्दस्तस्मादर्थे यस्मादित्युपक्रमात् । औचित्यं व्यतिरेकद्वारा साधयति—अन्यथेति । १५ २० २५

नियमेन प्रथमं पशूना तदुपजीवनमसम्प्रतिपन्नमिति शङ्कते—कथमिति । मनुष्यविषये वा प्रश्नस्तदितरपशुविषये वेति पृच्छति—उच्यत इति । तत्राऽऽद्यमनुभवावष्टम्भेन प्रत्याचष्टे—मनुष्याश्चेति । चकारो मनुष्यमात्रसङ्ग्रहार्थः । तेनैव पयसैवेति यावत् । घृतं वेति वाशब्दो वक्ष्यमाणविकल्पद्योतकः । जातरूपं हेम त्रैवर्णिकेभ्योऽन्येषां जातकर्माभावाद्योग्यतामनतिक्रम्य स्तनमेव जातं कुमारं प्रथमं पाययन्तीत्याह—यथासम्भवमिति । यद्वा तेषां जातकर्मानधिकृतानां जातं कुमारं घृतं वा स्तनं वा प्रथमं पाययन्तीति यावत् । पशुविषयं प्रश्न पशवश्चेतिसूचितसमाधानं प्रत्याह—स्तनमेवेति । पशूना जातं वत्समिति सम्बन्धः । पशूना पयोऽन्नमित्यत्र लोकप्रसिद्धिं प्रमाणयति—अथेति । द्विपात्पश्वधिकारविच्छेदार्थोऽथशब्द. । प्रतिवचनं व्याचष्टे—नाद्यापीति । ३०

---

१. नेष्टियाजुक' अत्रोकञ् प्रत्ययः । लषपतपदेत्यादिसूत्रेण ( अ० ३-२-१५४ ) ताच्छील्याद्यर्थेषु विहितः अतः इष्टियाजुकाः इत्यनेन काम्येष्टिकरणशीलत्वनिषेधः ।

२. जातरूपसयुक्त घृतमिति—तथा चापस्तम्ब. "मधु घृतमिति ससृज्य तस्मिन् दर्भेण हिरण्यं निष्टर्क्यं बद्ध्वा अवदाय—"त्वयि मेधाम्" ( गृ० सू० १४ ) इत्यादि मन्त्रैः. इत्युक्त हिरण्यं सुवर्ण निष्टर्क्य सरन्ध्रं बन्धनम् । ३५

३. निरपेक्षश्रुतिः—प्रामाण्यं प्रति निरपेक्षाश्रुतिः स्वतः प्रामाण्यात् । स्मृतिः प्रामाण्यं प्रति सापेक्षा मूलभूतश्रुत्यपेक्षणादित्यर्थः ।

यच्चाग्रे जातकर्मादौ घृतमुपजीवन्ति यच्चेतरे पय एव तत्सर्वथाऽपि पय एवोपजीवन्ति। घृतस्यापि पयोविकारत्वात्पयस्त्वमेव। कस्मात्पुनः सप्तमं सत्पश्वन्नं चतुर्थत्वेन व्याख्यायते ? कर्मसाधनत्वात्। कर्म हि पयःसाधनाश्रयमग्निहोत्रादि। तच्च कर्म साधनं वित्तसाध्यं वक्ष्यमाणस्यान्नत्रयस्य साध्यस्य। यथा दर्शपूर्णमासौ पूर्वोक्तावन्ने। अतः कर्मपक्षत्वात्कर्मणा सह पिण्डीकृत्योपदेशः।

५ साधनत्वाविशेषादर्थसम्बन्धादानन्तर्यमकारणमिति च। व्याख्याने प्रतिपत्तिसौकर्याच्च। सुखं हि नैरन्तर्येण व्याख्यातुं शक्यन्तेऽन्नानि व्याख्यातानि च सुखं प्रतीयन्ते। तस्मिन्सर्वं प्रतिष्ठितं यच्च प्राणिति यच्च नेत्यस्य कोऽर्थ इत्युच्यते—तस्मिन्पश्वन्ने पयसि सर्वमध्यात्माधिभूताधिदैवलक्षणं कृत्स्नं जगत्प्रतिष्ठितं यच्च प्राणिति प्राणचेष्टावद्यच्च न स्थावरं शैलादि। तत्र हिशब्देनैव प्रसिद्धावद्योतकेन व्याख्यातम्।

कथं पयोद्रव्यस्य सर्वप्रतिष्ठात्वम्। कारणत्वोपपत्तेः। कारणत्वं चाग्निहोत्रादिकर्मसमवायित्वमग्निहोत्राद्या-
१० हुतिविपरिणामात्मकं च जगत्कृत्स्नमिति श्रुतिस्मृतिवादाः शतशो व्यवस्थिताः। अतो युक्तमेव हिशब्देन व्याख्यानम्।

यत्तद्ब्राह्मणान्तरेष्विदमाहुः—संवत्सरं पयसा जुह्वप पुनर्मृत्युं जयतीति। संवत्सरेण किल त्रीणि षष्टि-शतान्याहुतीनां सप्त च शतानि विंशतिश्चेति याजुष्मतीरिष्टका अभिसम्पद्यमानाः संवत्सरस्य चाहोरात्राणि।

ननु येषामग्रे घृतोपजीवित्वमुपलभ्यते पयस्ते नोपजीवन्ति घृतपयसोर्भेदादत पश्वन्नत्वं पयसो भागासिद्धमत आह—यच्चेति। ननु घृतमुपजीवन्तोऽपि पय एवोपजीवन्तीत्ययुक्तं तद्भेदस्योक्तत्वात्तत्राऽऽह—घृतस्यापीति। मन्त्र-
१५ पाठक्रममतिक्रम्य पश्वन्ने व्याख्याते प्रत्यवतिष्ठते—कस्मादिति। द्वे देवानभाजयदिति व्याख्याते साधने साधनत्वा-विशेषात्पयोऽपि बुद्धिस्थमित्यर्थक्रममाश्रित्य परिहरति—कर्मेति। तदेव स्पष्टयति—कर्म हीति। यद्यपि पयोरूपं साधनमाश्रित्य कर्म प्रवृत्तं तथाऽपि दर्शपूर्णमासानन्तर्यं कथं पयस. सिध्यति तत्राऽऽह—तच्चेति। वित्तेन पयसा साध्यं कर्मान्नत्रयस्य साधनमित्यत्र दृष्टान्तमाह—यथेति। पूर्वोक्तौ दर्शपूर्णमासौ द्वे देवान्ने वक्ष्यमाणस्यान्नत्रयस्य यथा साधनं तथा पयसोऽप्यग्निहोत्रादिद्वारा तत्साधनत्वात्कर्मकोटिनिविष्टत्वात्तद्व्याख्यानानन्तर्यं पयोव्याख्यानस्य युक्तमित्यर्थः।

२० पाठक्रमस्तर्हि कथमित्याशङ्क्यार्थक्रमेण तद्बाधमभिप्रेत्याऽऽह—साधनत्वेति। आनन्तर्यं पाठक्रमः। अका-रणत्वमविवक्षितत्वम्। पाठक्रमादर्थक्रमस्य बलीयस्त्वात्तेनेतरस्य बाध्यत्वमित्येतत्प्रथमे तन्त्रे स्थितमित्यभिप्रेत्याऽऽह—इति चेति। पश्वन्नस्य चतुर्थत्वेन व्याख्याने हेत्वन्तरमाह—व्याख्यान इति। व्याख्यानसौकर्यं साधयति—सुखं हीति। प्रतिपत्तिसौकर्यं प्रकटयति—व्याख्यातानीति। चत्वारि साधनानि त्रीणि साध्यानीति विभज्योक्तौ वक्तृश्रोत्रोः सौकर्येण धीर्भवति ततश्च पाठक्रमातिक्रमः श्रेयानित्यर्थः। पश्वन्नस्य सर्वाधिष्ठानविषये मन्त्रमवतार्य प्रश्नपूर्वकं तदीयं ब्राह्मणं
२५ व्याचष्टे—तस्मिन्नित्यादिना। मन्त्राद्भेदो ब्राह्मणे न प्रतिभातीत्याशङ्क्याऽऽह—तत्रेति। पयसि हीति ब्राह्मणे हिशब्दस्य प्रसिद्धावद्योतकत्वमस्ति। तेन च हेतुना हिशब्देन तस्मिन्नित्यादिकं मन्त्रपदं व्याख्यातमिति योजना।

मन्त्रार्थस्य लोकप्रसिद्ध्यभावान्न प्रसिद्धावद्योतिना हिशब्देन व्याख्यानं युक्तमिति शङ्कते—कथमिति। कार्यं कारणे प्रतिष्ठितमिति न्यायेन वैदिकीं प्रसिद्धिमादाय समाधत्ते—कारणत्वेति। पयसो द्रवद्रव्यमात्रस्य कुत. सर्वजगत्कारणत्वमित्याशङ्क्याऽऽह—कारणत्वञ्चेति। तत्समवायित्वेऽपि कुतो जगत. कारणतेत्याशङ्क्याऽऽह—अग्नि-
३० होत्रादीति। 'ते वा एते आहुती हुते उत्क्रामतस्ते अन्तरिक्षमाविशतः' इत्यादयः श्रुतिवादा द्युपर्जन्यव्रीह्यादिक्रमेणाग्निहोत्राहुत्योर्गर्भाकारप्राप्तिं दर्शयन्ति।

"अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं तत. प्रजा.॥"

इत्यादयः स्मृतिवादाः। पयसि हीत्यादि ब्राह्मणमुपसंहरति—अत इति। पयसः सर्वजगदाधारत्वस्य श्रुतिस्मृति-प्रसिद्धत्वादिति यावत्।

३५ सर्वं पयसि प्रतिष्ठितमिति विधित्सितदर्शनस्तुतये शाखान्तरीयमतं निन्दितुमुद्भावयति—यत्तदिति। न केवलेन कर्मणा मृत्युजयः किन्तु दर्शनसहितेनेति दर्शयितुमग्निहोत्राहुतिषु सङ्ख्या कथयति—संवत्सरेणेति। उक्ता-हुतिसङ्ख्याया संवत्सरावच्छिन्नायामग्निहोत्रविदा सम्प्रतिपत्त्यर्थं किलेत्युक्तम्। ननु प्रत्यहं साय प्रातश्चेत्याहुती द्वे

१. अर्थसबन्धादिति पाठक्रमापेक्षया अर्थक्रमप्राबल्यप्रदर्शनम्। आनन्तर्यमकारणमिति। यस्य येनार्थसबन्धो दूरस्थेनापि तेन सः। अर्थतो ह्यसमर्थानामानन्तर्यमकारणमिति।

संवत्सरमग्निं प्रजापतिमाप्नुवन्ति। एवं कृत्वा संवत्सरं जुह्वदपजयति पुनर्मृत्युमितः प्रेत्य देवेषु सम्भूतः पुनर्न म्रियत इत्यर्थः।

इत्येवं ब्राह्मणवादा आहुर्न तथा विद्यान्न तथा द्रष्टव्यम्। यदहरेव जुहोति तदहः पुनर्मृत्युमपजयति न संवत्सराभ्यासमपेक्षत एवं विद्वान्सन्। यदुक्तं पयसि हीदं सर्वं प्रतिष्ठितं पयआहुतिविपरिणामकत्वात्सर्वस्येति। तदेकेनैवाह्ना जगदात्मत्वं प्रतिपद्यते। तदुच्यतेऽपजयति पुनर्मृत्युं पुनर्मरणं सकृन्मृत्वा विद्वाञ्छरीरेण वियुज्य ५
सर्वात्मा भवति न पुनर्मरणाय परिच्छिन्नं शरीरं गृह्णातीत्यर्थः। कः पुनर्हेतुः सर्वात्माप्त्या मृत्युमपजयतीति। उच्यते—सर्वं समस्तं हि यस्माद्देवेभ्यः सर्वेभ्योऽन्नाद्यमन्नमेव तदाद्यञ्च सायम्प्रातराहुतिप्रक्षेपेण प्रयच्छति। तद्युक्तं सर्वमाहुतिमयमात्मानं कृत्वा सर्वदेवान्नरूपेण सर्वैर्देवैरेकात्मभावं गत्वा सर्वदेवमयो भूत्वा पुनर्न म्रियत इति। अथैतदप्युक्तं ब्राह्मणेन—ब्रह्म वै स्वयम्भु तपोऽतप्यत तदैक्षत न वै तपस्यानन्त्यमस्ति हन्ताहं भूतेष्वात्मानं जुहवानि भूतानि चाऽऽत्मनीति तत्सर्वेषु भूतेष्वात्मानं हुत्वा भूतानि चाऽऽत्मनि सर्वेषां भूतानां श्रैष्ठ्यं स्वाराज्य- १०
माधिपत्यं पर्यैदिति।

कस्मात्तानि न क्षीयन्तेऽद्यमानानि सर्वदेति। यदा पित्राऽन्नानि सृष्ट्वा सप्त पृथक्पृथग्भोक्तृभ्यः प्रत्तानि तदाप्रभृत्येव तैर्भोक्तृभिरद्यमानानि। तन्निमित्तत्वात्तेषां स्थितेः। सर्वदा नैरन्तर्येण कृतक्षयोपपत्तेश्च युक्तस्तेषां क्षयः। न च तानि क्षीयमाणानि जगतोऽविभ्रष्टरूपेणैवावस्थानदर्शनात्। भवितव्यं चाक्षयकारणेन। तस्मात्कस्मा-

विद्येते तत्कथमाहुतीनां षष्ट्यधिकानि त्रीणि शतानि संवत्सरेण भवन्ति तत्राऽऽह—**सप्त चेति**। प्रत्येकमहोरात्रा- १५
वच्छिन्नाहुतिप्रयोगाणामेकस्मिन्संवत्सरे पूर्वोक्ता सङ्ख्या तत्रैव प्रयोगार्धानां विंशत्यधिका सप्तशतरूपा सङ्ख्येति सिद्धमित्यर्थः। आहुतीना सङ्ख्यामुक्त्वा तासु याजुष्मतीनामिष्टकानां दृष्टिमाह—**याजुष्मतीरिति**। तासामपि षष्ट्यधिकानि त्रीणि शतानि सङ्ख्यया भवन्ति। तथा च प्रत्यहमाहुतीरभिनिष्पद्यमानाः सङ्ख्यासामान्येन याजुष्मती-रिष्टकाश्चिन्तयेदित्यर्थः। आहुतिमयीनामिष्टकाना संवत्सरावयवाहोरात्रेषु सङ्ख्यासामान्येनैव दृष्टिमन्वाचष्टे—**संवत्सरस्येति**। तान्यपि षष्ट्यधिकानि त्रीणि शतानि प्रसिद्धानि। तथा च तेषु यथोक्तेष्विष्टकादृष्टिः श्लिष्टेत्यर्थः। २०
चित्येऽग्नौ सवत्सरात्मप्रजापतिदृष्टिमाह—**संवत्सरमिति**। यः संवत्सरः प्रजापतिस्तं चित्यमग्निं विद्वासः सम्पादयन्ति। अहोरात्रेष्टकाद्वारा तयोः सङ्ख्यासामान्यादित्यर्थः। दृष्टिमनूद्य फलं दर्शयति—**एवमिति**। उक्तसङ्ख्यासामान्येनाग्नि-होत्राहुतीरग्न्यवयवभूतयाजुष्मतीसंज्ञकेष्टकाः सम्पाद्य तद्रूपेणाऽऽहुतीर्ध्यायन्नाहुतीमयीश्चेष्टकाः संवत्सरावयवाहोरात्राणि तेनैव सम्पाद्य पुरुषनाडीस्थसङ्ख्यासामान्येन तन्नाडीस्तान्येवाहोरात्राण्यापाद्य तद्रूपेणाऽऽहुतीरिष्टका नाडीश्चानुसन्द-धानो नाड्यहोरात्रयाजुष्मतीद्वारा पुरुषसंवत्सरचित्याना समत्वमापाद्याहमग्निः संवत्सरात्मा प्रजापतिरेवेति ध्यायन्न- २५
ग्निहोत्र पयसा सवत्सरं जुह्वद्विद्यया सहितहोमवशात्प्रजापतिं संवत्सरात्मक प्राप्य मृत्युमपजयतीत्यर्थः।

एकीयमतमुपसंहृत्य तन्निन्दापूर्वकं मतान्तरमाह—**इत्येवमित्यादिना**। एव विद्वानित्युक्तं व्यक्तीकरोति—**यदुक्तमिति**। तत्तथैव विद्वानेकाहोरात्रावच्छिन्नाहुतिमात्रेण जगद्रूपं प्रजापतिं प्राप्य मृत्युमपजयतीत्याह—**तदेकेनेति**। उक्तेऽर्थे श्रुतिमवतार्य व्याचष्टे—**तदुच्यत इति**। सर्व हीत्यादिहेतुवाक्यमाकाङ्क्षापूर्वकमुत्थाप्य व्याकरोति—**कः पुनरित्यादिना**। यथोक्तदर्शनवशादेकयैवाऽऽहुत्या मृत्युमपजयतीत्यत्र ब्राह्मणान्तरं संवादयति—**अथेति**। यथा सवत्सर- ३०
मित्याद्युक्तं तथा 'यदहरेवे'त्याद्यपि ब्राह्मणान्तरे सूचितमित्यर्थः। ब्रह्म हिरण्यगर्भभावी जीवः स्वयम्भु परस्यैव तदात्मनाऽवस्थानात्तपोऽतप्यत कर्मान्वतिष्ठत्। यत्कृतकं तदनित्यमिति न्यायेन कर्मनिन्दाप्रकारमाह—**तदैक्षतेति**। कर्मसहायभूतामुपासनामुपदिशति—**हन्तेति**। उपासनामनूद्य समुच्चयफलं कथयति—**तत्सर्वेष्विति**। श्रेष्ठत्वेऽपि राजकुमारवदस्वातन्त्र्यमाशङ्क्याऽऽह—**स्वाराज्यमिति**। अधिष्ठाय पालयितृत्वमाधिपत्यम्।

पञ्चमे व्याख्याते प्रश्नरूपं मन्त्रपदमादत्ते—**कस्मादिति**। ननु चत्वार्यन्नानि व्याख्यातानि त्रीणि व्याचिख्या- ३५
सितानि तेष्वव्याख्यातेषु कस्मादित्यादिप्रश्न' कस्मादित्याशङ्क्य साधनेषूक्तेषु साध्यानामपि तेषामर्थादुक्तत्वमस्तीत्य-भिप्रेत्य प्रश्नप्रवृत्तिं मन्वानो व्याचष्टे—**यदेति**। सर्वदेत्यस्य व्याख्या नैरन्तर्येणेति। अन्नानां सदा भोक्तृभिरद्यमानत्वे हेतुमाह—**तन्निमित्तत्वादिति**। भोक्तॄणां स्थितेरन्ननिमित्तत्वात्तैः सदाऽद्यमानानि तानि यवपूर्णकुसूलवद्भवन्ति क्षीणा-नीत्यर्थः। किञ्च ज्ञानकर्मफलत्वादन्नाना यत्कृतकं तदनित्यमिति न्यायेन क्षय' सम्भवतीत्याह—**कृतेति**। अस्तु तर्हि तेषा क्षयो नेत्याह—**न चेति**। भवतु तर्हि स्वभावादेव सप्तान्नात्मकस्य जगतोऽक्षीणत्व नेत्याह—**भवितव्यञ्चेति**। ४०

त्पुनस्तानि न क्षीयन्त इति प्रश्नः। तस्येदं प्रतिवचनम्—पुरुषो वा अक्षितिर्यथाऽसौ पूर्वमन्नानां स्रष्टाऽऽसीत्पिता मेधया जायादिसम्बन्धेन च पाङ्क्तकर्मणा भोक्ता च तथा येभ्यो दत्तान्यन्नानि तेऽपि तेषामन्नानां भोक्तारोऽपि सन्तः पितर एव मेधया तपसा च यतो जनयन्ति तान्यन्नानि। तदेतदभिधीयते पुरुषो वै योऽन्नानां भोक्ता सोऽक्षितिरक्षयहेतुः। कथमस्याक्षितित्वमित्युच्यते—स हि यस्मादिदं भुज्यमानं सप्तविधं कार्यकरणलक्षणं क्रियाफलात्मकं पुनः
५ पुनर्भूयो भूयो जनयत उत्पादयति धिया धिया तत्तत्कालभाविन्या तया तया प्रज्ञया कर्मभिश्च वाङ्मनःकायचेष्टितैर्यदि ह यद्येतत्सप्तविधमन्नमुक्तं क्षणमात्रमपि न कुर्यात्प्रज्ञया कर्मभिश्च ततो विच्छिद्येत भुज्यमानत्वात्सातत्येन क्षीयेत ह तस्माद्यथैवायं पुरुषो भोक्ताऽन्नानां नैरन्तर्येण यथाप्रज्ञं यथाकर्म च करोत्यपि। तस्मात्पुरुषोऽक्षितिः सातत्येन कर्तृत्वात्। तस्माद्भुज्यमानान्यप्यन्नानि न क्षीयन्त इत्यर्थः।

अतः प्रज्ञाक्रियालक्षणप्रबन्धारूढः सर्वो लोकः साध्यसाधनलक्षणः क्रियाफलात्मकः संहतानेकप्राणिकर्म-
१० वासनासन्तानावष्टब्धत्वात्क्षणिकोऽशुद्धोऽसारो नदीस्रोतःप्रदीपसन्तानकल्पः कदलीस्तम्भवदसारः फेनमायामरीच्यम्भःस्वप्नादिसमस्तदात्मगतदृष्टीनामविकीर्यमाणो नित्यः सारवानिव लक्ष्यते। तदेतद्वैराग्यार्थमुच्यते—धिया धिया जनयते कर्मभिर्यद्धैतन्न कुर्यात्क्षीयेत हेति। विरक्तानां ह्यस्माद्ब्रह्मविद्याऽऽरब्धव्या चतुर्थप्रमुखेनेति।

यो वैतामक्षितिं वेदेति वक्ष्यमाणान्यपि त्रीण्यन्नान्यस्मिन्नवसरे व्याख्यातान्येवेति कृत्वा तेषां याथात्म्यविज्ञानफलमुपसंह्रियते—यो वैतामक्षितिमक्षयहेतुं यथोक्तं वेद पुरुषो वा अक्षितिः स हीदमन्नं धिया धिया जनयते
१५ कर्मभिर्यद्धैतन्न कुर्यात्क्षीयेत हेति। सोऽन्नमत्ति प्रतीकेनेत्यस्यार्थं उच्यते—मुखं मुख्यत्वं प्राधान्यमित्येतत्। प्राधान्येनैवान्नानां पितुः पुरुषस्याक्षितित्वं यो वेद सोऽन्नमत्ति, नान्नं प्रति गुणभूतः सन्यथाऽज्ञो न तथा विद्वानन्नानामात्मभूतो भोक्तैव भवति न भोज्यतामापद्यते। स देवानपिगच्छति स ऊर्जमुपजीवति देवानपिगच्छति देवात्मभावं प्रतिपद्यत ऊर्जममृतञ्चोपजीवतीति यदुक्तं सा प्रशंसा नापूर्वार्थोऽन्योऽस्ति ॥२॥

स्वभाववादस्यातिप्रसङ्गित्वादित्यर्थः। प्रश्नं निगमयति—तस्मादिति। प्रतिवचनमादाय व्याचष्टे—तस्येत्यादिना।
२० तेषां पितृत्वे हेतुमाह—मेधयेति। भोगकालेऽपि विहितप्रतिषिद्धज्ञानकर्मसम्भवात्प्रवाहरूपेणान्नाक्षयः सम्भवतीत्यर्थः। तत्र प्रतिज्ञाभागमुपादायाक्षराणि व्याचष्टे—तदेतदिति। हेतुभागमुत्थाप्य विभजते—कथमित्यादिना। तस्मात्तदक्षयः सम्भवति प्रवाहात्मनेति शेषः। उक्तहेतुं व्यतिरेकद्वारोपपादयितुं यद्धैतदित्यादिवाक्यं तद्व्याचष्टे—यदिति। अन्वयव्यतिरेकसिद्धं हेतुं निगमयति—तस्मादिति। तथा यथाप्रज्ञमिति पठितव्यम्। साध्यं निगमयति—तस्मादिति। अक्षयहेतौ सिद्धे फलितमाह—तस्माद्भुज्यमानानीति।

२५ धिया धियेत्यादिश्रुतेः स हीदमित्यत्रोक्तं परिहारं प्रपञ्चयन्त्याः सप्तविधान्नस्य कार्यत्वात्प्रतिक्षणध्वंसित्वेऽपि पुनः पुनः क्रियमाणत्वात्प्रवाहात्मना तदचलं मन्दाः पश्यन्तीत्यस्मिन्नर्थे तात्पर्यमाह—अत इति। प्रज्ञाक्रियाभ्यां हेतुभ्यां लक्ष्यते व्यावर्त्यते निष्पाद्यते यः प्रबन्धः समुदायस्तदारूढस्तदात्मकः सर्वो लोकश्चेतनाचेतनात्मको द्वैतप्रपञ्चः साध्यत्वेन साधनत्वेन च वर्तमानो ज्ञानकर्मफलभूतः क्षणिकोऽपि नित्य इव लक्ष्यते। तत्र हेतुः—संहतेति। संहतानां मिथः सहायत्वेन स्थितानामनेकेषां प्राणिनामनन्तानि कर्माणि वासनाश्च तत्सन्तानेनावष्टब्धत्वाद्दृढीकृतत्वादिति
३० यावत्। प्रातीतिकमेव संसारस्य स्थैर्यं न तात्त्विकमिति वक्तुं विशिनष्टि—नदीति। असारोऽपि सारवद्भातीत्यत्र दृष्टान्तमाह—कदलीति। अशुद्धोऽपि शुद्धवद्भातीत्यत्रोदाहरणमाह—मायेत्यादिना। अनेकोदाहरणं संसारस्यानेकरूपत्वद्योतनार्थम्। केषां पुनरेष संसारोऽन्यथा भातीत्यपेक्षायां "संसाराय पराग्दृशामि"ति न्यायेनाऽऽह—तदात्मेति। किमिति प्रतिक्षणप्रध्वंसि जगदिति श्रुत्योच्यते तत्राऽऽह—तदेतदिति। वैराग्यमपि कुत्रोपयुज्यते तत्राऽऽह—विरक्तानां ह्येति। इति वैराग्यमर्थवदिति शेषः।

३५ पुरुषोऽन्नानामक्षयहेतुरित्युपपाद्य तज्ज्ञानमनूद्य तत्फलमाह—यो वैतामित्यादिना। यथोक्तमनुवदति—पुरुष इति। फलविषयं मन्त्रपदमुपादाय तदीयं ब्राह्मणमवतार्य व्याकरोति—सोऽन्नमित्यादिना। यथोक्तोपासनवतो यथोक्तफलम्। प्राधान्येनैव सोऽन्नमत्तीति सम्बन्धः। विदुषोऽन्नं प्रति गुणत्वाभावे हेतुमाह—अन्नानामिति। उक्तमर्थं संगृह्णाति—भोक्तैवेति। प्रशस्तिसिद्धये प्रपञ्चयति—स देवानित्यादिना ॥ २ ॥

त्रीण्यात्मनेऽकुरुतेति मनो वाचं प्राणं तान्यात्मनेऽकुरुतान्यत्रमना अभूवं नादर्शमन्यत्रमना अभूवं नाश्रौषमिति मनसा ह्येव पश्यति मनसा शृणोति। कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव तस्मादपि पृष्ठत उपस्पृष्टो मनसा विजानाति यः कश्च शब्दो वागेव सा। एषा ह्यन्तमायत्तैषा हि न प्राणोऽपानो व्यान उदानः समानोऽन इत्येतत्सर्वं प्राण एवैतन्मयो वा अयमात्मा वाङ्मयो मनोमयः प्राणमयः ॥३॥ ५

पाङ्क्तस्य कर्मणः फलभूतानि यानि त्रीण्यन्नान्युपक्षिप्तानि तानि कार्यत्वाद्विस्तीर्णविषयत्वाच्च पूर्वेभ्योऽन्नेभ्यः पृथगुत्कृष्टानि तेषां व्याख्यानार्थं उत्तरो ग्रन्थ आ ब्राह्मणपरिसमाप्तेः। त्रीण्यात्मनेऽकुरुतेति। कोऽस्यार्थ इत्युच्यते। मनोवाक्प्राणा एतानि त्रीण्यन्नानि तानि मनो वाचं प्राणं चाऽऽत्मन आत्मार्थमकुरुत कृतवान्सृष्ट्वाऽऽदौ पिता। तेषां मनसोऽस्तित्वं स्वरूपं च प्रति संशय इत्यत आह—अस्ति तावन्मनः श्रोत्रादिबाह्यकरणव्यतिरिक्तम्। यत एवं प्रसिद्धं बाह्यकरणविषयात्मसम्बन्धे सत्यप्यभिमुखीभूतं विषयं न गृह्णाति किं दृष्टवानसीदं रूपमित्युक्तो वदत्यन्यत्र मे गतं मन आसीत्सोऽहमन्यत्रमना आसं नादर्शम्। तथेदं श्रुतवानसि मदीयं वच इत्युक्तोऽन्यत्रमना अभूवं नाश्रौषं न श्रुतवानस्मीति। तस्माद्यस्यासन्निधौ रूपादिग्रहणसमर्थस्यापि सतश्चक्षुरादेः स्वस्वविषयसम्बन्धे रूपशब्दादिज्ञानं न भवति। यस्य च भावे भवति तदन्यदस्ति मनो नामान्तःकरणं सर्वकरणविषययोगीत्यवगम्यते। तस्मात्सर्वो हि लोको मनसा ह्येव पश्यति मनसा शृणोति तद्व्यग्रत्वे दर्शनाद्यभावात्। १० १५

अस्तित्वे सिद्धे मनसः स्वरूपार्थमिदमुच्यते—कामः स्त्रीव्यतिकराभिलाषादिः। सङ्कल्पः प्रत्युपस्थितविषयविकल्पनं शुक्लनीलादिभेदेन। विचिकित्सा संशयज्ञानम्। श्रद्धाऽदृष्टार्थेषु कर्मस्वास्तिक्यबुद्धिर्देवतादिषु च। अश्रद्धा तद्विपरीता बुद्धिः। धृतिर्धारणं देहाद्यवसाद उत्तम्भनम्। अधृतिस्तद्विपर्ययः। ह्रीर्लज्जा। धीः प्रज्ञा। भीर्भयमित्येतदेवमादिकं सर्वं मन एव। मनसोऽन्तःकरणस्य रूपाण्येतानि। मनोऽस्तित्वं प्रत्यन्यच्च कारणमुच्यते।

साधनात्मकमन्नचतुष्टयमन्नाक्षयकारणाम्, अक्षितित्वगुणप्रक्षेपेण पुरुषोपासनमस्य फलं चोक्तमिदानीमाब्राह्मणसमाप्तेरुत्तरग्रन्थस्य तात्पर्यमाह—पाङ्क्तस्येत्यादिना। ब्राह्मणशेषस्य तात्पर्यमुक्त्वा मन्त्रभेदमनूद्याऽऽकाङ्क्षाद्वारा ब्राह्मणमुत्थाप्य व्याचष्टे—त्रीणीत्यादिना। ज्ञानकर्मभ्यां सप्तान्नानि सृष्ट्वा चत्वारि भोक्तृभ्यो विभज्य त्रीण्यात्मार्थं कल्पादौ पिता कल्पितवानित्यर्थः। २०

अन्यत्रेत्यादि वाक्यमुपादत्ते—तेषामिति। षष्ठी निर्धारणार्था। तत्र मनसोऽस्तित्वमादौ साधयति—अस्ति तावदिति। आत्मेन्द्रियार्थसान्निध्ये सत्यपि कदाचिदेवार्थधीर्जायमाना हेत्वन्तरमाक्षिपति। न चादृष्टादि सदिति युक्तं तस्य दृष्टसम्पादत्वात्तस्मादर्थादिसान्निध्ये ज्ञानकादाचित्कत्वानुपपत्तिर्मनःसाधिकेत्यर्थः। लोकप्रसिद्धिरपि तत्र प्रमाणमित्याह—यत इति। अतोऽस्ति बाह्यकरणाद्यतिरिक्तं विषयग्राहि करणमिति शेषः। तामेव प्रसिद्धिमुदाहरणनिष्ठतयोदाहरति—किं दृष्टवानित्यादिना। तत्रैवान्वयव्यतिरेकावुपन्यस्यति—तस्मादिति। यथोक्तार्थापत्तिलोकप्रसिद्धिवशादिति यावत्। विमतमात्माद्यतिरिक्तापेक्षं तस्मिन्सत्यपि कादाचित्कत्वाद्घटवदित्यनुमान (च) तच्छब्दार्थः। तस्मादनुमानादन्यदस्ति मनो नामेति सम्बन्धः रूपादिग्रहणसमर्थस्यापि सत इति प्रमातोच्यते। अन्तःकरणस्य चक्षुरादिभ्यो वैलक्षण्यमाह—सर्वेति। समनन्तरवाक्यं फलितार्थविषयत्वेनाऽऽदत्ते—तस्मादिति। तच्छब्देनोक्तं हेतुं स्पष्टयति—तद्व्यग्रत्व इति। २५ ३०

कामादिवाक्यमवतार्य व्याकुर्वन्मनसः स्वरूपं प्रति संशयं निरस्यति—अस्तित्व इति। अश्रद्धादिवदकामादिरपि विवक्षितोऽत्रेति मत्वा मनोबुद्ध्योरेकत्वमुपेत्योपसंहरति—इत्येतदिति। द्वैतप्रवृत्त्युन्मुख मनो भोक्तृकर्मवशा-

१. कामादीनां मनस्त्वोक्तिः उपादानोपादेयभावात् मृद्घट इतिवत्। वैष्णवैस्तु मन एव मन करणकमेवेति व्याख्यातम्। तन्न। कार्यनिमित्तकारणयोः दण्डघटयोः दण्डो घट इति व्यपदेशाभावात्। कामादीनामात्मगुणत्वसिद्ध्यर्थं हि ते तथाऽर्पयन्ति। तत्तु 'ध्यायतीव लेलायतीवे'ति चतुर्थोक्तरीत्या ध्यानादेः आत्मधर्मत्वनिराकर- ३५

तस्मान्मनो नामास्त्यन्तःकरणम् । यस्माच्चक्षुषो ह्यगोचरे पृष्ठतोऽप्युपस्पृष्टः केनचिद्धस्तस्यायं स्पर्शो जानोरय-मिति विवेकेन प्रतिपद्यते । यदि विवेककृन्मनो नाम नास्ति तर्हि त्वङ्मात्रेण कुतो विवेकप्रतिपत्तिः स्यात् । यत्तद्विवेकप्रतिपत्तिकारणं तन्मनः । अस्ति तावन्मनः स्वरूपं च तस्याधिगतम् । त्रीण्यन्नानीह फलभूतानि कर्मणां मनोवाक्प्राणाख्यान्यध्यात्ममधिभूतमधिदैवञ्च व्याचिख्यासितानि । तत्राऽऽध्यात्मिकानां वाङ्मनःप्राणानां मनो
५ व्याख्यातम् । अथेदानीं वाग्वक्तव्येत्यारम्भः—यः कश्च लोके शब्दो ध्वनिस्ताल्वादिव्यङ्ग्यः प्राणिभिर्वर्णादिलक्षण इतरो वा वादित्रमेघादिनिमित्तः सर्वो ध्वनिर्वागेव सा ।

इदं तावद्वाचः स्वरूपमुक्तम् । अथ तस्याः कार्यमुच्यते—एषा वाग्हि यस्मादन्तमभिधेयावसानमभिधेय-निर्णयमायत्ताऽनुगता । एषा पुनः स्वयं नाभिधेयवत्प्रकाश्याऽभिधेयप्रकाशिकैव । प्रकाशात्मकत्वात्प्रदीपादिवत् । न हि प्रदीपादिप्रकाशः प्रकाशान्तरेण प्रकाश्यते तद्वद्वाक्प्रकाशिकैव स्वयं न प्रकाश्येत्यनवस्थां श्रुतिः परिहरत्येषा
१० हि न प्रकाश्या प्रकाशकत्वमेव वाचः कार्यमित्यर्थः ।

अथ प्राण उच्यते—प्राणो मुखनासिकासञ्चारी हृदयवृत्तिः प्रणयनात्प्राणः । अपनयनान्मूत्रपुरीषादेर-पानोऽधोवृत्तिरानाभिस्थानः । व्यानो व्यायमनकर्मा व्यानः प्राणापानयोः सन्धिर्वीर्यवत्कर्महेतुश्च । उदान उत्क-र्षोर्ध्वगमनादिहेतुरापादतलमस्तकस्थान ऊर्ध्ववृत्तिः । समानः समं नयनाद्भुक्तस्य पीतस्य च कोष्ठस्थानोऽन्नपक्ता । अन इत्येषां वृत्तिविशेषाणां सामान्यभूता सामान्यदेहचेष्टाभिसम्बन्धिनी वृत्तिः । एवं यथोक्तं प्राणादिवृत्तिजात-
१५ मानार्थाकारेण विवर्तत इत्यभिप्रेत्यानन्तरवाक्यमवतारयति—मनोऽस्तित्वमिति । तदेवान्यत्कारणं स्फोरयति—यस्मादिति । तस्मादस्ति विवेककारणमन्तःकरणमिति सम्बन्धः । चक्षुरसम्प्रयोगात्तेन स्पर्शविशेषादर्शनेऽपि सम्प्रयुक्तया त्वचा विनाऽपि मनो विशेषदर्शनं स्यादित्याशङ्क्याऽऽह—यदीति । त्वङ्मात्रस्य स्पर्शमात्रग्राहित्वेन विवेचकत्वायोगा-दित्यर्थः । विवेचके कारणान्तरे सत्यपि कुतो मनःसिद्धिस्तत्राऽऽह—यत्तदिति । वृत्तं कीर्तयति—अस्ति तावदिति । उत्तरग्रन्थमवतारयितुं भूमिकां करोति—त्रीणीति । एवं भूमिकामारचय्याऽऽध्यात्मिकवाग्व्याख्यानार्थं यः कश्चेत्यादि
२० वाक्यमादाय व्याकरोति—अथेत्यादिना । शब्दपर्यायो ध्वनिर्द्विविधो वर्णात्मकोऽवर्णात्मकश्च । तत्राऽऽद्यो व्यवहर्तृ-भिस्ताल्वादिस्थानव्यङ्ग्यो द्वितीयो मेघादिकृतः । स सर्वोऽपि प्रकृता वागेवेत्यर्थः ।

प्रकाशकमात्रं वागित्युक्त्वा तत्र प्रमाणमाह—इदं तावदिति । तस्मादभिधेयनिर्णायकत्वान्नासावपलापार्हेति शेषः । वाचोऽपि प्रकाश्यत्वात्कथं प्रकाशकमात्रंवागित्युक्तमित्याशङ्क्याऽऽह—एषेति । दृष्टान्तं समर्थयते—न हीति । प्रकाशान्तरेण सजातीयेनेति शेषः । प्रकाशिकाऽपि वाक्प्रकाश्या चेत्तत्रापि प्रकाशकान्तरमेष्टव्यमित्यनवस्था स्यात्तन्नि-
२५ रासार्थमेषा हि नेति श्रुतिः प्रकाशकमात्रं वागित्याह । स्वपरनिर्वाहकस्तु शब्दः । तस्मात्प्रकाशकत्वं कार्यं यत्र दृश्यते तत्र वाचः स्वरूपमनुगतमेवेत्याह—तद्वदित्यादिना ।

आध्यात्मिकप्राणविषयं वाक्यमवतार्य व्याकरोति—अथेति । मुखादौ सञ्चारी सञ्चरणार्हा हृदयसम्बन्धिनी या वायुवृत्तिः, तत्र प्राणशब्दप्रवृत्तौ निमित्तमाह—प्रणयनादिति । पुरतो निःसरणादिति यावत् । हृदयादधोदेशे वृत्ति-रस्येत्यधोवृत्तिरानाभिस्थानो हृदयादारभ्य नाभिपर्यन्तं वर्तमान इति यावत् । व्यायमनं प्राणापानयोर्नियमनं कर्मास्येति
३० तथोक्तः । वीर्यवत्कर्माग्निमन्थनोत्पादनादि । उत्कर्षो देहे पुष्टिः । आदिपदेनोत्क्रान्तिरुक्ता । प्राणशब्देनानशब्दस्य पुनरुक्तिमाशङ्क्याऽऽह—अन इत्येषामिति । तथाऽपि तृतीयस्य प्राणशब्दस्य ताभ्यां पुनरुक्तिरित्याशङ्क्याऽऽह—प्राण

---

पादयुक्तम् । अत एव "यः कश्च शब्दो वागेव" प्राणापानादयः प्राण एवेति उत्तरत्र वक्ष्यमाणमनुकूलम् । न हि अपानादीनां प्राणः निमित्तम् । मनसः इन्द्रियव्यतिरिक्तस्य आत्मनः उपकरणीभूतस्यावश्याभ्युपगन्तव्यत्वं "नित्योपलब्ध्यनुपलब्धिप्रसंगोऽन्यतरनियमो वाऽन्यथा" इति ब्रह्मसूत्रेण विचार्य निर्णीतम् । तथाहि—तच्चात्मनः
३५ उपाधिभूतमन्तःकरणं मनो-बुद्धिः-विज्ञानं चित्तमिति चानेकधा तत्र तत्राभिलप्यते । अनभ्युपगम्यमाने तस्मिन् आत्मेन्द्रियविषयाणामुपलब्धिसाधनानां सन्निधाने सति नित्योपलब्धिः स्यात् । न चेन्द्रियस्य आत्मनो वा शक्ति-प्रतिबन्धः कस्मात् स्यात् इत्यवश्यं मनोऽङ्गीकर्तव्यम् । यत्सन्निधानासन्निधानाभ्यां ज्ञानाज्ञाने उपपद्येते ।

१. सजातीयेनेति—वागपि साक्षिणा प्रकाश्यैव अतः न प्रकाश्येति कथमित्यत आह—सजातीयेति । साक्षी चेतनः तत्प्रकाश्यत्वेऽपि न जडप्रकाशान्तरप्रकाश्येत्यर्थः ।

**त्रयो लोका एत एव वागेवायं लोको मनोऽन्तरिक्षलोकः प्राणोऽसौ लोकः ॥४॥**

मेतत्सर्वं प्राण एव। प्राण इति वृत्तिमानाध्यात्मिकोऽन उक्तः। कर्म चास्य वृत्तिभेदप्रदर्शनेनैव व्याख्यातम्। व्याख्यातान्याध्यात्मिकानि मनोवाक्प्राणाख्यान्यन्नान्येतन्मय एतद्विकारः प्राजापत्यैरेतैर्वाङ्मनः प्राणैरारब्धः। कोऽसावयं कार्यकरणसङ्घात आत्मा पिण्ड आत्मस्वरूपत्वेनाभिमतोऽविवेकिभिः। अविशेषणैतन्मय इत्युक्तस्य विशेषेण वाङ्मयो मनोमयः प्राणमय इति स्फुटीकरणम् ॥३॥ ५

तेषामेव प्राजापत्यानामन्नानामाधिभौतिको विस्तारोऽभिधीयते—त्रयो लोका भूर्भुवः स्वरित्याख्या एत एव वाङ्मनः प्राणास्तत्र विशेषो वागेवायं लोको मनोऽन्तरिक्षलोकः प्राणोऽसौ लोकः ॥४॥

इतीति। साधारणासाधारणवृत्तिमान्प्राण इत्यपौनरुक्त्यमित्यर्थः। मनसो दर्शनादिवद्वाचोऽभिधेयप्रकाशनवच्च प्राणस्यापि कार्यं वक्तव्यमित्याशङ्क्याऽऽह—कर्म चेति। एतन्मय इत्यत्र मयटो विकारार्थत्वं वृत्तसङ्कीर्तनपूर्वकं कथयति—व्याख्यातानीति। आध्यात्मिकानां वागादीनामनारम्भकत्वं वारयति—प्राजापत्यैरिति। आरब्धस्वरूपं प्रश्नपूर्वकमनन्तरवाक्येन निर्धारयति—कोऽसाविति। कार्यकरणसङ्घाते कथमात्मशब्दप्रवृत्तिरित्याशङ्क्याऽऽह—आत्मस्वरूपत्वेनेति। वाङ्मय इत्यादिवाक्यस्य पूर्वेण पौनरुक्त्यमाशङ्क्याऽऽह—अविशेषेणेति ॥३॥ १०

वागादीनामाध्यात्मिकविभूतिप्रदर्शनानन्तरमाधिभौतिकविभूतिप्रदर्शनार्थमुत्तरग्रन्थमवतारयति—तेषामेवेति। तत्रेत्युक्तं सामान्यं परामृशति ॥४॥

---

१. प्राणस्य वृत्तिभेदा एव अपानादय इत्यपि "पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ब्र० सू० २-४-१२ इति—सूत्रेणोपदिश्यते। मनसः पञ्चेन्द्रियद्वारका. पञ्चवृत्तयः भूतभविष्यत्पदार्थवृत्तयः मनसः असाधारणाः। सुखादिपरिणामास्तु साक्षिभास्याः इति तज्ज्ञानम्। प्राणस्य परिच्छिन्नत्वमपि "अणुश्चे"ति—ब्र० सू० २।४।१३। सूत्रेण निर्णीतम्। तस्य "सर्वेऽनन्ता." इति श्रुत्यभिहितं व्यापकत्वमाधिदैविकेन रूपेण। प्राणविषयविचारपराणि अपराण्यप्यधिकरणानि (ब्र० सू० २-४-१) मन्तव्यान्यत्र। तथाहि-तथा प्राणाः सृष्टिश्रुतिषु 'तत्तेजोऽसृजत' 'तस्मादाकाशस्संभूत' इत्यादिषु उत्पत्तिः श्रूयते। क्वचित्—'एतस्माज्जायते प्राण' इत्यादिषु प्राणस्योत्पत्तिः श्रूयते क्वचित्तु 'असद्वा इदमग्र आसीत्' 'ऋषयो वाव तेऽग्रेऽसदासीत्' के ते ऋषय इति'प्राणा वाव ऋषय'इत्यादौ प्राणानां प्रागुपत्तेः सत्त्वमेवोच्यते। तत्र विप्रतिषेधात् प्राणानामुत्पत्तिर्वा उत्पत्तिश्रुतेर्गौणत्वं वेत्ति संशये सिद्धान्तः—प्राणाः वियदादिवदुत्पद्यन्ते—'एतस्माज्जायते प्राण' इत्यादिश्रवणात् खादिवत् 'यावद्विकारं तु विभागो लोकवत्' इति न्यायाच्च। ते च गौणप्राणाः इन्द्रियपदवाच्याः। मुख्यप्राणोऽप्युत्पद्यते-एतस्माज्जायते प्राण इति उत्पत्तिश्रुतेः 'आनीदवातं स्वधया तदेकं' इति श्रुतेः प्रागुत्पत्ते. प्राणास्तित्वावगमात् प्राणनित्यत्वमिति न वाच्यम्। यतः अवातमिति वाय्वभावश्रवणादेव प्राणाभावावगमः तदुत्पत्तिं गमयति। अय च प्राणः न वायुसामान्यं नापि पञ्चेन्द्रियाणां समष्टिव्यापारः इति प्राह सूत्रं—न वायुक्रिये पृथगुपदेशात् इति ब्र० सू० २।४।९। प्राण एव ब्रह्मणश्चतुर्थ. पादः स वायुना ज्योतिषा भाति च तपति च' छा० ३।१८।४ इति पृथगुपदेशात्। नापि समष्टिव्यापारः इन्द्रियाणां पृथक् पृथग्व्यापारात्। समस्तानामेका वृत्तिः सजातीया न संभवति। प्रत्येकं श्रवणादिवृत्तीनां विजातीयत्वात्। प्राणस्यास्मिन् शरीरे जीववत् न स्वातन्त्र्यमित्याह-चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ब्रा० सू० २।४।१० प्राणः जीवस्य चक्षुरादिवत् उपकरणभूतः यथा राज्ञः मन्त्री कुतः तैः इन्द्रियैः सहैव प्राणस्य प्राणसंवादादिषु शिष्यमाणत्वात् संघातत्वेन परार्थत्वाच्चेत्यर्थः। ननु यदि प्राणस्य चक्षुरादिवदुपकरणत्वं तदा तस्य विषयान्तरं वक्तव्यं रूपादिवत् इत्यत आह—'अकरणत्वाच्च न दोषः तथाहि दर्शयति' ब्र० सू० २-४-११ तान् वरिष्ठः प्राण उवाच 'मा मोहमापद्यथ। अहमेवैतत्पञ्चधाऽऽत्मानं प्रविभज्यैतद्बाणमवष्टभ्य विधारयामीति' इति शरीरधारकत्वमेवैकमसाधारणं कर्मेत्याह। १५ २० २५ ३० ३५

त्रयो वेदा एत एव वागेवर्ग्वेदो मनो यजुर्वेदः प्राणः सामवेदः ॥५॥
देवाः पितरो मनुष्या एत एव वागेव देवा मनः पितरः प्राणो मनुष्याः ॥६॥
पिता माता प्रजैत एव मन एव पिता वाङ्माता प्राणः प्रजा ॥७॥
विज्ञातं विजिज्ञास्यमविज्ञातमेत एव यत्किंच विज्ञातं
५ वाचस्तद्रूपं वाग्घि विज्ञाता वागेनं तद्भूत्वावति ॥८॥
यत्किंच विजिज्ञास्यं मनसस्तद्रूपं मनो हि विजिज्ञास्यं मन एनं तद्भूत्वावति ॥ ९ ॥
यत्किंचाविज्ञातं प्राणस्य तद्रूपं प्राणो ह्यविज्ञातः प्राण एनं तद्भूत्वावति ॥१०॥

तथा त्रयो वेदा इत्यादीनि वाक्यानि ऋज्वर्थानि ॥५॥६॥७॥

विज्ञातं विजिज्ञास्यमविज्ञातमेत एव । तत्र विशेषो यत्किञ्च विज्ञातं विस्पष्टं ज्ञातं वाचस्तद्रूपम् । तत्र
१० स्वयमेव हेतुमाह—वाग्घि विज्ञाता प्रकाशात्मकत्वात्कथमविज्ञाता भवेद्याऽन्यानपि विज्ञापयति "वाचैव[1] सम्राड्बन्धुः प्रज्ञायत" इति हि वक्ष्यति । वाग्विशेषविद इद फलमुच्यते—वागेवैनं यथोक्तवाग्विभूतिविदं तद्विज्ञातं भूत्वाऽवति पालयति विज्ञातरूपेणैवास्यान्नं भोज्यतां प्रतिपद्यत इत्यर्थः ॥८॥

तथा यत्किञ्च विजिज्ञास्यं विस्पष्टं ज्ञातुमिष्टं विजिज्ञास्यं तत्सर्वं मनसो रूपं मनो हि यस्मात्सन्दिह्यमानाकारत्वाद्विजिज्ञास्यम् । पूर्ववन्मनोविभूतिविदः फलं मन एनं तद्विजिज्ञास्यं भूत्वाऽवति विजिज्ञास्यस्वरूपेणै-
१५ वान्नत्वमापद्यते ॥९॥

तथा यत्किञ्चाविज्ञातं विज्ञानागोचरं न च सन्दिह्यमानं प्राणस्य तद्रूपं प्राणो ह्यविज्ञातोऽविज्ञातरूपो हि यस्मात्प्राणोऽनिरुक्तश्रुतेः[2] । विज्ञातविजिज्ञास्याविज्ञातभेदेन वाङ्मनः प्राणविभागे स्थिते त्रयो लोका इत्याद्यो वाचनिका एव । सर्वत्र विज्ञातादिरूपदर्शनाद्वचनादेव नियमः स्मर्तव्यः । प्राण एनं तद्भूत्वाऽवत्यविज्ञातरूपेणैवास्य प्राणोऽन्नं भवतीत्यर्थः । शिष्यपुत्रादिभिः सन्दिह्यमानाविज्ञातोपकारका अप्याचार्यपित्रादयो दृश्यन्ते । तथा मनः-
२० प्राणयोरपि सन्दिह्यमानाविज्ञातयोरन्नत्वोपपत्तिः ॥१०॥

त्रिलोकीवाक्यवदुत्तरं वाक्य विज्ञातादिवाक्यात्प्राक्तनं नेतव्यमित्याह—तथेति ॥५-६-७॥

विज्ञातादिवाक्यमादाय तद्गतं विशेषं दर्शयति—विज्ञातमिति । विज्ञातं सर्वं वाचो रूपमिति प्रतिज्ञातोऽर्थः समन्यर्थः । प्रकाशकत्वेऽपि कथ वाचो विज्ञातत्वमित्याशङ्क्याऽऽह—कथमिति । प्रकाशात्मकत्वमेव कुतो वाचः सिद्धमित्याशङ्क्याऽऽह—वाचेति । वाग्विशेषस्तद्विभूतिः ॥८॥

२५ सन्दिह्यमानाकारत्वात्[3]सङ्कल्पविकल्पात्मकत्वादिति यावत् । तस्मात्सर्वं विजिज्ञास्य मनोरूपमिति सम्बन्धः । पूर्ववद्वाग्विभूतिविदो यथा फलमुक्तं तद्वदिति यावत् ॥९॥

अनिरुक्तश्रुतेरविज्ञातरूपो यस्मात्प्राणस्तस्मादविज्ञात सर्वं प्राणस्य रूपमिति योजना । विज्ञातादिरूपातिरेकेण लोकवेदाद्यभावाद्विज्ञातादिरूपत्वाभिधानेनैव वागादीना लोकाद्यात्मत्वे सिद्धे किमर्थं त्रयो लोका इत्यादिवाक्यमित्याशङ्क्य तथैव ध्यानार्थमित्याह—विज्ञातेति । भूरादिष्वेकैकत्र विज्ञातादित्रयदृष्टेर्वागादेश्च व्यवस्थितत्वात्कुतो
३० विज्ञातादेर्वागाद्यात्मकत्व नियन्तु शक्यमित्याशङ्क्याऽऽह—सर्वत्रेति । प्राणविभूतिविद सम्प्रति फल कथयति—प्राण इति । लोके विज्ञातस्यैव भोज्यत्वोपलम्भादविज्ञातादिरूपेण प्राणादेर्न भोज्यत्वोपपत्तिरित्याशङ्क्याह—शिष्येति ।

---

१. वाचैव बन्धुः—यत्र सूर्यचन्द्राग्नयः न सन्ति गाढान्धकारे तत्र वाचैव परस्पर व्यवहारो दृश्यते । अतः वाक् पुरुषस्यात्मन. ज्योति व्यवहारसाधनमित्यर्थः ( ४-३ ) ।

२. प्राणोऽनिरुक्तः अत स्वरूपज्ञानाभावादविज्ञात. । अनिरुक्त एवंरूप इति वक्तुमशक्य ।

३५ ३. सन्दिह्यमानाकारत्वात्—मनस्सद्भावे प्रात्यक्षिकनिश्चयाभावादेव तार्किका. सुखाद्युपलब्धिकरणत्वेन मनोऽनुमिमते । वेदान्तेऽपि 'नित्योपलब्ध्यनुपलब्धिप्रसंगोऽन्यतरनियमो वाऽन्यथे'ति सूत्रेण मन सद्भाव साधयन्ति मनस्स्वरूप सन्देहाकारत्वमिति टीका ।

**तस्यै वाचः पृथिवी शरीरं ज्योतीरूपमयमग्निस्तद्या-**
**वत्येव वाक्तावती पृथिवी तावानयमग्निः ॥११॥**
**अथैतस्य मनसो द्यौः शरीरं ज्योतीरूपमसावादित्यस्तद्यावदेव मनस्तावती**
**द्यौस्तावानसावादित्यस्तौ मिथुनँ समैतां ततः प्राणोऽजायत स इन्द्रः स**
**एषोऽसपत्नो द्वितीयो वै सपत्नो नास्य सपत्नो भवति य एवं वेद ॥१२॥**

व्याख्यातो वाङ्मनःप्राणानामाधिभौतिको विस्तारः, अथायमाधिदैविकार्थं आरम्भः—तस्यै तस्या वाचः प्रजापतेरन्नत्वेन प्रस्तुतायाः पृथिवी शरीरं बाह्य आधारो ज्योतीरूपं प्रकाशात्मकं करणं पृथिव्या आधेयभूतमयं पार्थिवोऽग्निः। द्विरूपा हि प्रजापतेर्वाक्कार्यमाधारोऽप्रकाशः करणं चाऽऽधेयं प्रकाशस्तदुभयं पृथिव्यग्नी वागेव प्रजापतेः। तत्तत्र यावत्येव यावत्परिमाणैवाध्यात्माधिभूतभेदभिन्ना सती वाग्भवति तत्र सर्वत्राऽऽधारत्वेन पृथिवी व्यवस्थिता तावत्येव भवति कार्यभूता तावानयमग्निराधेयः करणरूपो ज्योतीरूपेण पृथिवीमनुप्रविष्ट-स्तावानेव भवति समानमुत्तरम् ॥११॥

अथैतस्य प्राजापत्यान्नोक्तस्यैव मनसो द्यौर्द्युलोकः शरीरं कार्यमाधारो ज्योतीरूपं करणमाधेयोऽसा-वादित्यः। तत्तत्र यावत्परिमाणमेवाध्यात्ममधिभूतं वा मनस्तावती तावद्विस्तारा तावत्परिमाणा मनसो ज्योती-रूपस्य करणस्याऽऽधारत्वेन व्यवस्थिता द्यौस्तावानसावादित्यो ज्योतीरूप करणमाधेयं तावग्न्यादित्यौ वाङ्मनसे आधिदैविके मातापितरौ मिथुनं मैथुन्यमितरेतरसंसर्गं समैतां समगच्छेताम्। मनसाऽऽदित्येन प्रसूतं पित्रा वाचाऽग्निना मात्रा प्रकाशित कर्म करिष्यामीत्यन्तरा रोदस्योः। ततस्तयोरेव सङ्गमनात्प्राणो वायुरजायत परिस्पन्दाय कर्मणे। यो जातः स इन्द्रः परमेश्वरो न केवलमिन्द्र एवासपत्नोऽविद्यमानः सपत्नो यस्य कः। पुनः सपत्नो नाम द्वितीयो वै प्रतिपक्षत्वेनोपगतः स द्वितीयः सपत्न इत्युच्यते। तेन द्वितीयत्वेऽपि सति वाङ्मनसे न सपत्नत्वं भजेते प्राणं प्रति गुणभावोपगते एव हि ते अध्यात्ममिव। तत्र प्रासङ्गिकासपत्नविज्ञानफलमिदं नास्य विदुषः सपत्नः प्रतिपक्षो भवति य एवं यथोक्तं प्राणमसपत्नं वेद ॥१२॥

शिष्यैरविवेकिभि. सन्दिह्यमानोपकारा अपि गुरवस्तेषा भोज्यतामापद्यमाना दृश्यन्ते पुत्रादिभिश्चातिबालैरवि-ज्ञातोपकारा. पित्रादयस्तेषा भोज्यत्वमापद्यन्ते तथा प्रकृतेऽपि सम्भवतीत्यर्थं ॥१०॥

वृत्तमनूद्य तस्यै वाचः पृथिवीत्याद्यवतारयति—व्याख्यात इति। आधिदैविकार्थस्तद्विभूतिप्रदर्शनार्थं इति यावत्। समनन्तरसन्दर्भस्य तात्पर्यमुक्त्वा वाक्याक्षराणि योजयति—तस्या इति। कथमाधाराधेयभावो वाचो निर्दिश्यते तत्राऽऽह—द्विरूपा हीति। उक्तमर्थं सङ्क्षिप्य निगमयति—तदुभयमिति। अध्यात्ममधिभूतं च या वाक्परिच्छिन्ना तस्यास्तुल्यपरिमाणत्वमाधिदैविकवागंशत्वादशांशिनोश्च तादात्म्यात्तया सह दर्शयति—तत्तत्रेति। तावानयमग्निरिति प्रतीकमादय व्याकरोति—आधेय इति। समानमुत्तरमित्यस्यायमर्थं. अध्यात्ममधिभूतं च मन प्राण-योराधिदैविकमन.प्राणांशत्वात्तादात्म्याभिप्रायेण तुल्यपरिमाणत्वमुच्यते तथा च वाचा समानं प्राणादावुत्तरवाक्ये कथ्यमानं समानपरिमाणत्वमिति ॥११॥

आधिदैविकवाग्विभूतिव्याख्यानानन्तर्यमथशब्दार्थं। मनसो द्वैरूप्यमुक्त्वा व्याप्तिमभिधत्ते—तत्तत्रेति। मन एवास्याऽऽत्मा वाग्जाया प्राणः प्रजेत्यध्यात्मं मन एव पिता वाङ्माता प्राणः प्रजेत्यधिभूतं च वाङ्मनसयोः प्राणस्य प्रजात्वमुक्तं तथाऽधिदैवेऽपि तस्य तत्प्रजात्वं वाच्यमित्यभिप्रेत्याऽऽह—ताविति। कथमादित्यस्य मनस प्राणं प्रति पितृत्वं वाचो वाऽग्नेर्मातृत्व तत्राऽऽह—मनसेति। सावित्र पाकमाग्नेज च प्रकाशमृते कार्यसिद्ध्यदर्शनात्तयो. सिद्धं जनकत्वमित्यर्थं.। कर्मशब्देन कार्यमुच्यते तत्करिष्यामीति प्रत्येकमभिसन्धिपूर्वकमादित्याग्न्योर्द्यावापृथिव्योरन्तराले सङ्गतिरासीदित्याह—कर्मेति। सङ्गतिकार्यमभिप्रायानुसारि दर्शयति—तत इति। वायोरिन्द्रत्वासपत्नत्वगुणविशिष्ट-स्योपासनमभिप्रेत्याऽऽह—यो जात इति। द्वितीयस्य सपत्नत्वे वागादेरपि तथात्व स्यादित्याशङ्क्याऽऽह—प्रति-पक्षत्वेनेति। यथोक्तसपत्नव्याख्यानफलमाह—तेनेति। असपत्नगुणकप्राणोपासने फलवाक्यं प्रमाणयति—तत्रेति। प्राणस्यासपत्नत्वे सिद्धे सतीति यावत्। प्रासङ्गिकत्वं प्रजोत्पत्तिप्रसङ्गादागतत्वम् ॥१२॥

अथैतस्य प्राणस्याप: शरीरं ज्योतीरूपमसौ चन्द्रस्तद्यावानेव प्राणस्तावत्य
आपस्तावानसौ चन्द्रस्त एते सर्व एव समाः सर्वेऽनन्ताः स यो हैतानन्तवत
उपास्तेऽन्तवन्तँ स लोकं जयत्यथ यो हैताननन्तानुपास्तेऽनन्तँ स लोकं जयति ॥१३॥
स एष संवत्सरः प्रजापतिः षोडशकलस्तस्य रात्रय एव पञ्चदश कला ध्रुवैवास्य
५ षोडशी कलास रात्रिभिरेवा च पूर्यतेऽप च क्षीयते सोऽमावास्याँ रात्रिमेतया
षोडश्या कलया सर्वमिदं प्राणभृदनुप्रविश्य ततः प्रातर्जायते तस्मादेताँ रात्रिं
प्राणभृतः प्राणं न विच्छिन्द्यादपि कृकलासस्यैतस्या एव देवताया अपचित्यै ॥१४॥

अथैतस्य प्रकृतस्य प्राजापत्यान्नस्य प्राणस्य न प्रजोक्तस्यानन्तरनिर्दिष्टस्य; आपः शरीरं कार्यं करणाधारः
पूर्ववज्ज्योतीरूपमसौ चन्द्रस्तत्र यावानेव प्राणो यावत्परिमाणोऽध्यात्मादिभेदेषु तावद्व्याप्तिमत्य आपस्तावत्परि-
१० माणस्तावानसौ चन्द्रोऽवाधेयस्तास्वप्स्वनुप्रविष्टः करणभूतोऽध्यात्ममधिभूतञ्च तावद्व्याप्तिमानेव। तान्येतानि पित्रा
पाङ्क्तेन कर्मणा सृष्टानि त्रीण्यन्नानि वाङ्मनःप्राणाख्यानि। अध्यात्ममधिभूतं च जगत्समस्तमेतैर्व्याप्तं नैतेभ्योऽन्य-
दतिरिक्तं किञ्चिदस्ति कार्यात्मकं करणात्मकं वा। समस्तानि त्वेतानि प्रजापतिस्त एते वाङ्मनःप्राणा सर्व एव
समास्तुल्या व्याप्तिमन्तो यावत्प्राणिगोचरं साध्यात्माधिभूतं व्याप्य व्यवस्थिताः। अत एवानन्ता यावत्संसार-
भाविनो हि ते। कार्यकरणप्रत्याख्याने न संसारोऽवगम्यते। कार्यकरणात्मका हि त इत्युक्तम्। स यः
१५ कश्चिद्धैतान्प्रजापतेरात्मभूतानन्तवतः परिच्छिन्नानध्यात्मरूपेण वाऽधिभूतरूपेण वोपास्ते स च तदुपासनानुरूपमेव
फलमन्तवन्तं लोकं जयति परिच्छिन्न एव जायते नैतेषामात्मभूतो भवतीत्यर्थः। अथ पुनर्यो हैताननन्तान्सर्वात्मका-
न्सर्वप्राण्यात्मभूतानपरिच्छिन्नानुपास्ते सोऽनन्तमेव लोकं जयति ॥१३॥

पिता पाङ्क्तेन कर्मणा सप्तान्नानि सृष्ट्वा त्रीण्यन्नान्यात्मार्थमकरोदित्युक्तं तान्येतानि पाङ्क्तकर्मफल-
भूतानि व्याख्यातानि। तत्र कथं पुनः पाङ्क्तस्य कर्मणः फलमेतानीति। उच्यते। यस्मात्तेष्वपि त्रिष्वन्नेषु
२० पाङ्क्तताऽवगम्यते। वित्तकर्मणोरपि तत्र सम्भवात्। तत्र पृथिव्यग्नी माता। दिवादित्यौ पिता। योऽयमनयोरन्तरा

आधिदैविकयोर्वाङ्मनसयोर्विभूतिनिर्देशानन्तर्यमथेत्युक्तम्। नन्वेतस्येत्येतच्छब्देन प्रजात्वेनोक्तस्य प्राणस्य
किमिति न ग्रहणं तत्राऽऽह—न प्रजेति। अन्नत्रयस्य समप्रधानत्वेन प्रकृतत्वादेतच्छब्देन प्रधानपरामर्शोपपत्तौ नाप्रधानं
परामृश्यत इत्यर्थः। पूर्ववद्वाचो मनसश्च पृथिवी द्यौश्च शरीरं यथा तथेत्यर्थः। द्वैरूप्ये प्राणस्योक्ते व्याप्तिमवशिष्टां
व्याचष्टे—तत्रेति। तावानित्यादि प्रतीकमादाय व्याचष्टे—चन्द्र इति। वाङ्मनःप्राणानामाधिदैविकरूपेणोपासनं
२५ विधातुं वृत्तं कीर्तयति—तानीति। एतेभ्योऽतिरिक्तमधिष्ठानमस्तीत्याशङ्क्य विशिनष्टि—कार्यात्मकमिति। प्रजापति-
रेतेभ्योऽतिरिक्तोऽस्तीत्याशङ्क्याऽऽह—समस्तानीति। सोपस्कर वृत्तमनूद्य वाक्यमादाय व्याचष्टे—त एत इति। तुल्यां
व्याप्तिमेव व्यनक्ति—यावदिति। तावदशेषं जगद्व्याप्येति योजना। तुल्यव्याप्तिमत्त्वमुपजीव्याऽऽह—अत एवेति।
तेषां यावत्संसारभावित्वमभिव्यनक्ति—न हीति। कार्यकरणयोर्यावत्संसारभावित्वेऽपि प्राणानां किमायातमत आह—
कार्येति। तेषु परिच्छिन्नत्वेन ध्याने दोषमाह—स य इति। एवं पातनिकां कृत्वा विवक्षितमुपासनमुपदिशति—
३० अथेति ॥१३॥

अन्नत्रये फलवद्ध्यानविषये व्याख्याते वक्तव्याभावात्किमुत्तरग्रन्थेनेत्याशङ्क्य वृत्तं कीर्तयति—पितेति। तेषां
तत्फलत्वे प्रमाणाभावमादाय शङ्कते—तत्रेति। प्रकृतं व्याख्यानं सप्तम्यर्थः। कार्यलिङ्गकमनुमानं प्रमाणयन्नुत्तरमाह—
उच्यत इति। अनुमानमेव स्फुटयितुमन्नेषु पाङ्क्तत्वावगतिं दर्शयति—यस्मादिति। तस्मात्तत्कारणमपि तादृगमिति
शेषः। कथं पुनस्तत्र पाङ्क्तत्वधीरित्याशङ्क्याऽऽह—वित्तेति। आत्मा जाया प्रजेति त्रयं संगृहीतुमपिशब्द। उक्तं

३५ १. यत्सप्तान्नानि सृष्टानि तेषु वाङ्मनःप्राणाः पित्रा सृष्टाः 'यत्सप्तान्नानि मेधया तपसा' इत्यत्र पाङ्क्तेन कर्मणा-
सृष्ट्वोक्तेरित्यर्थः।

प्राणः स प्रजेति व्याख्यातम्। तत्र वित्तकर्मणी सम्भावयितव्ये इत्यारम्भः—

स एष संवत्सरो योऽयं त्र्यन्नात्मा प्रजापतिः प्रकृतः स एष संवत्सरात्मना विशेषतो निर्दिश्यते। षोडशकलः षोडश कला अवयवा अस्य सोऽयं षोडशकलः संवत्सरः संवत्सरात्मा कालरूपः। तस्य च कालात्मनः प्रजापते रात्रय एवाहोरात्राणि तिथय इत्यर्थः। पञ्चदश कलाः। ध्रुवैव नित्यैव व्यवस्थिताऽस्य प्रजापतेः षोडशी षोडशानां पूरणी कला स रात्रिभिरेव तिथिभिः कलोक्ताभिरापूर्यते चापक्षीयते च। प्रतिपदाद्याभिर्हि चन्द्रमाः ५ प्रजापतिः शुक्लपक्ष आपूर्यते कलाभिरुपचीयमानाभिर्वर्धते यावत्सम्पूर्णमण्डलः पौर्णमास्याम्। ताभिरेवापचीयमानाभिः कलाभिरपक्षीयते कृष्णपक्षे यावद्ध्रुवैका कला व्यवस्थिताऽमावास्यायाम्।

स प्रजापतिः कालात्माऽमावास्याममावास्यायां रात्रिं रात्रौ या व्यवस्थिता ध्रुवा कलोक्तैतया षोडश्या कलया सर्वमिदं प्राणभृत्प्राणिजातमनुप्रविश्य यदपः पिबति यच्चौषधीरश्नाति तत्सर्वमेवौषध्यात्मना सर्वं व्याप्यामावास्यां रात्रिमवस्थाय ततोऽपरेद्युः प्रातर्जायते द्वितीयया कलया संयुक्तः। एवं पाङ्क्तात्मकोऽसौ प्रजापतिः। १० दिवादित्यौ मनः पिता। पृथिव्यग्नी वाग्जाया माता। तयोश्च प्राणः प्रजा। चान्द्रमस्यस्तिथयः कला वित्तमुपचयापचयधर्मित्वाद्वित्तवत्तासां च कलानां कालावयवानां जगत्परिणामहेतुत्वं कर्म। एवमेष कृत्स्नः प्रजापतिर्जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यादथ कर्म कुर्वीयेत्येषणानुरूप एव पाङ्क्तस्य कर्मणः फलभूतः संवृत्तः। कारणानुविधायि हि कार्यमिति लोकेऽपि स्थितिः।

यस्मादेष चन्द्र एतां रात्रिं सर्वप्राणिजातमनुप्रविष्टो ध्रुवया कलया वर्तते तस्माद्धेतोरेताममावास्यां रात्रिं १५ प्राणभृतः प्राणिनः प्राणं न विच्छिन्द्यात्प्राणिनं न प्रमापयेदित्येतत् अपि कृकलासस्य। कृकलासो हि पापात्मा स्वभावेनैव हिंस्यते प्राणिभिर्दृष्टोऽप्यमङ्गल इति कृत्वा। ननु प्रतिषिद्धैव प्राणिहिंसा न हिंस्यात्सर्वा भूतान्यन्यत्र तीर्थेभ्य इति। बाढं[1] प्रतिषिद्धा तथाऽपि नामावास्याया अन्यत्र प्रतिप्रसवार्थं वचनं हिंसायाः कृकलासविषये वा। किं तर्ह्येतस्याः सोमदेवताया अपचित्यै पूजार्थम् ॥१४॥

हेतुं व्यक्तीकुर्वन्नुक्तं स्मारयति—तत्रेति। अत्रत्रयं सप्तम्यर्थः। तथाऽपि कथं पाङ्क्तत्वमित्याशङ्क्यानन्तरग्रन्थमवतारयति—तत्र वित्तेति। सप्तमी पूर्ववत्। अवतारितं ग्रन्थं व्याचष्टे—योऽयमित्यादिना। कथं प्रजापतेस्तिथिभिरापूर्यमाणत्वमपक्षीयमाणत्वं च तत्राऽऽह—प्रतिपदाद्याभिरिति। वृद्धेर्मर्यादां दर्शयति—यावदिति। अपक्षयस्य मर्यादामाह—यावद्ध्रुवेति। २०

अवशिष्टाममावास्याया निविष्टा कला प्रपञ्चयन्द्वितीयकलोत्पत्तिं शुक्लप्रतिपदि दर्शयति—स प्रजापतिरिति। प्राणिजातमेव विशिनष्टि—यदप इति। स्थावरं जङ्गमं चेत्यर्थः। ओषध्यात्मनेत्युपलक्षणं जलात्मनेत्यपि द्रष्टव्यम्। २५ फलभूते प्रजापतौ पाङ्क्तत्वं वक्तुमुपक्रान्तं तदद्यापि नोक्तमित्याशङ्क्याऽऽह—एवमिति। तदेव पाङ्क्तत्वं व्यनक्ति—दिवेति। कलाना वित्तवद्वित्तत्वे हेतुमाह—उपचयेति। पाङ्क्तत्वनिर्देशेन लब्धमर्थमाह—एवमेष इति। सम्प्रति कृत्स्नस्य प्रजापतेरुपक्रमानुसारित्वं दर्शयति—जायेति। भवतु प्रजापतेरुक्तरीत्या पाङ्क्तत्वं तथाऽपि कथं पाङ्क्तकर्मफलत्वं तत्राऽऽह—कारणेति।

पाङ्क्तकर्मफलत्वं प्रजापतेरुक्त्वा प्रासङ्गिकमर्थमाह—यस्मादिति। अपि कृकलासस्येति कुतो विशेषोक्तिरित्याशङ्क्याऽऽह—कृकलासो हीति। कुतस्तस्य पापात्मत्वं तत्राऽऽह—दृष्टोऽपीति। विशेषनिषेधस्य शेषानुज्ञापरत्वाद्विरोधः सामान्यशास्त्रेण स्यादिति शङ्कते—नन्विति। तीर्थशब्दः शास्त्रविहितप्रदेशविषयः। साधारण्येन सर्वत्र निषिद्धाऽपि हिंसा विशेषतोऽमावास्याया निषिध्यमाना सोमदेवतापूजार्था। ततः शेषानुज्ञाभावान्न सामान्योक्तिविरोधोऽस्तीति परिहरति—बाढमिति ॥१४॥ ३०

१ बाढं प्रतिषिद्धेति-हिंसासामान्यस्य 'न हिंस्यात् सर्वा भूतान्यन्यत्र तीर्थेभ्य' इति प्रतिषिद्धत्वेन कृकलासहिंसाया अपि ग्रहणात् 'कृकलासस्य प्राणं न विच्छिन्द्यात्' इति प्रतिषेधः किमर्थः इति। न च सामान्यवचनस्य विशेषे उपसंहारात् कृकलासस्य अमावास्येतरकाले हिंसाभ्यनुज्ञा इति वाच्यम्। तन्निवारणायैव 'एतस्या देवताया अपचित्यै' इत्युक्तं तथा च नात्र प्रतिप्रसवः। प्रतिप्रसवो नाम प्रसक्तप्राप्तिकस्य कारणान्तरेण निवृत्तिप्रसक्तौ पुनर्विधानम्। प्रकृते रागतः कृकलासहिंसायाः प्रसक्तिः। तस्य 'न हिंस्यादि'ति निषेधे प्राप्ते पुनः अमावास्याया कृकलासहिंसा न ३५

यो वै स संवत्सरः प्रजापतिः षोडशकलोऽयमेव स योऽयमेवंवित्पु-
रुषस्तस्य वित्तमेव पञ्चदश कला आत्मैवास्य षोडशी कला स
वित्तेनैवाऽऽच पूर्यतेऽप च क्षयते तदेतन्नभ्यं यदयमात्मा प्रधिर्वित्तं
तस्माद्यद्यपि सर्वज्यानिं जीयत आत्मना चेज्जीवति प्रधिनाऽगादित्येवाहुः ॥१५॥
५ अथ त्रयो वाव लोका मनुष्यलोकः पितृलोको देवलोक इति सोऽयं
मनुष्यलोकः पुत्रेणैव जय्यो नान्येन कर्मणा कर्मणा पितृलोको विद्यया
देवलोको देवलोको वै लोकानां श्रेष्ठस्तस्माद्विद्यां प्रशंसन्ति ॥१६॥

यो वै परोक्षाभिहितः संवत्सरः प्रजापतिः षोडशकलः स नैवात्यन्तं परोक्षो मन्तव्यो यस्मादयमेव स प्रत्यक्ष उपलभ्यते । कोऽसावयं यो यथोक्तं त्र्यन्नात्मकं प्रजापतिमात्मभूतं वेत्ति स एवंवित्पुरुषः केन सामान्येन
१० प्रजापतिरिति तदुच्यते—तस्यैवंविदः पुरुषस्य गवादिवित्तमेव पञ्चदश कला उपचयापचयधर्मित्वात्तद्वित्तसाध्यञ्च कर्म । तस्य कृत्स्नताया आत्मैव पिण्ड एवास्य विदुषः षोडशी कला ध्रुवस्थानीया स चन्द्रवद्वित्तेनैवाऽऽपूर्यते चापक्षीयते च । तदेतल्लोके प्रसिद्धम् । तदेतन्नभ्यं नाभ्यै हितं नभ्यं नाभिं वाऽर्हतीति । किं तद्यदयं योऽयमात्मा पिण्ड प्रधिर्वित्तं परिवारस्थानीयं बाह्यं चक्रस्येवारनेम्यादि । तस्माद्यद्यपि सर्वज्यानिं सर्वस्वापहरणं जीयते हीयते ग्लानिं प्राप्नोत्यात्मना चक्रनाभिस्थानीयेन चेद्यदि जीवति प्रधिना बाह्येन परिवारेणायमगात्क्षीणोऽयं यथा
१५ चक्रमरनेमिविमुक्तमेवमाहुर्जीवंश्चेदरनेमिस्थानीयेन वित्तेन पुनरुपचीयत इत्यभिप्रायः ॥१५॥

एवं पाङ्क्तेन दैववित्तविद्यासंयुक्तेन कर्मणा त्र्यन्नात्मकः प्रजापतिर्भवतीति व्याख्यातमनन्तरञ्च जायादि-वित्तं परिवारस्थानीयमित्युक्तम् । तत्र पुत्रकर्मापरविद्यानां लोकप्राप्तिसाधनत्वमात्रं सामान्येनावगतं न पुत्रादीनां लोकप्राप्तिफलं प्रति विशेषसम्बन्धनियमः । सोऽयं पुत्रादीनां साधनानां साध्यविशेषसम्बन्धो वक्तव्य इत्युत्तरकण्डिका प्रणीयते—अथेति वाक्योपन्यासार्थः । त्रयो वावेत्यवधारणार्थः । त्रय एव शास्त्रोक्तसाधनार्हा लोका न न्यूना नाधिका

२० यत्पूर्वमाधिदैविकत्र्यन्नात्मकप्रजापत्युपासनमुक्तं तदहमस्मि प्रजापतिरित्यहङ्ग्रहेण कर्तव्यमित्याह—यो वा इति । प्रत्यक्षमुपलभ्यमानं प्रजापतिं प्रश्नद्वारा प्रकटयति—कोऽसाविति । तस्य प्रजापतित्वमप्रसिद्धमित्याशङ्क्य परिहरति—केनेत्यादिना । कलानां जगद्विपरिणामहेतुत्व कर्मेत्युक्तं वित्तेऽपि कर्महेतुत्वमस्ति तेन तत्र कलाशब्दप्रवृत्ति-रुचितेत्याह—वित्तेति । यथा चन्द्रमाः कलाभिः शुक्लकृष्णपक्षयोरापूर्यतेऽपक्षीयते च तथा स विद्वान्वित्तेनैवोपचीय-मानेनाऽऽपूर्यतेऽपचीयमानेन चापक्षीयते । एतच्च लोकप्रसिद्धत्वान्न प्रतिपादनसापेक्षमित्याह—स चन्द्रवदिति । आत्मैव
२५ ध्रुवा कलेत्युक्तं तदेव रथचक्रदृष्टान्तेन स्पष्टयति—तदेतदिति । नाभिः चक्रपिण्डिका तत्स्थानीयं वा नभ्य तदेव प्रश्नद्वारा स्फोरयति—किं तदिति । शरीरस्य चक्रपिण्डिकास्थानीयत्वमयुक्त परिवारादर्शनादित्याशङ्क्याऽऽह—प्रधिरिति । शरीरस्य रथचक्रपिण्डिकास्थानीयत्वे फलितमाह—तस्मादिति । पदार्थमुक्त्वा वाक्यार्थमाह—जीवश्चेदिति ॥१५॥

अन्नत्रयात्मनि प्रजापतावहङ्ग्रहोपासनस्य सफलस्योक्तत्वाद्वक्तव्याभावादुत्तरग्रन्थवैयर्थ्यमित्याशङ्क्य तद्विषय वक्तुं वृत्तमनुवदति—एवमिति । साधनोक्त्यैव फलमुक्तं तयोर्मिथोबद्धत्वात्प्राजापत्यं च फलं प्रागेव दर्शित तत्किमुत्तर-
३० ग्रन्थेनेत्याशङ्क्य सामान्येन तत्प्रतीतावपीदमस्येति विशेषो नोक्तस्तदुक्त्यर्थमुत्तरा श्रुतिरित्याह—तत्रेति । पूर्वग्रन्थ-सप्तम्यर्थः । नियमो नावगत इति सम्बन्धः । उपन्यासः प्रारम्भः । वावशब्दस्यावधारणरूपमर्थं विवृणोति—त्रय

कार्येत्युक्तेः इतरकालेषु कार्या इत्यर्थो भाति । तद्व्यावर्तयितु अपचित्यै इत्युक्तम् । अत्रायं विशेषः—'न हिंस्या-दि'ति सामान्यतो हिंसानिषेधः । 'न ब्राह्मण हन्यादि'ति विशेषनिषेधः । अत्र उपसंहारो नास्ति सामान्यविवे स्पष्टार्थत्वात् । सामान्यविधिरस्पष्टः संह्रियेत विशेषत इति भट्टोक्तेरिति परिमलकार. । मधुसूदनसरस्वत्यस्तु
३५ सिद्धौ निषेधयो' सामान्यविशेषभावेनोपसंहारो नास्तीत्युक्तवन्तः—अ० सि० निर्णयसागरे—७३६ ।
१. प्रधिः बाह्यमावरणं चक्रपिण्डिकाया अराः नेमिश्च । वित्तहीनस्य आत्मनः न स्वरूपहानिः बाह्य वित्तं विना ।

**अथातः सम्प्रत्तिर्यदा प्रैष्यन्मन्यतेऽथ पुत्रमाह त्वं ब्रह्म त्वं यज्ञस्त्वं लोक इति स पुत्रः प्रत्याहाहं ब्रह्माहं यज्ञोऽहं लोक इति यद्वै किंचानूक्तं तस्य सर्वस्य ब्रह्मेत्येकता। ये वै के च यज्ञास्तेषाँ सर्वेषां यज्ञ इत्येकता ये वै के च लोकास्तेषाँ सर्वेषां लोक इत्येकतैतावद्वा इदँ सर्वमेतन्मा सर्वँ सन्नयमितो-**

वा। के त इत्युच्यते—मनुष्यलोकः पितृलोको देवलोक इति। तेषां सोऽयं मनुष्यलोकः पुत्रेणैव साधनेन जय्यो ५ जेतव्यः साध्यो यथा च पुत्रेण जेतव्यस्तथोत्तरत्र वक्ष्यामो नान्येन कर्मणा विद्यया वेति वाक्यशेषः। कर्मणाऽग्निहोत्रादिलक्षणेन केवलेन पितृलोको जेतव्यो न पुत्रेण नापि विद्यया। विद्यया देवलोको न पुत्रेण नापि कर्मणा देवलोको वै लोकानां त्रयाणां श्रेष्ठः प्रशस्यतमः। तस्मात्साधनत्वाद्विद्यां प्रशंसन्ति ॥१६॥

एवं साध्यलोकत्रयफलभेदेन विनियुक्तानि पुत्रकर्मविद्याख्यानि त्रीणि साधनानि। जाया तु पुत्रकर्मार्थत्वान्न पृथक्साधनमितिपृथङ्नाभिहिता। वित्तञ्च कर्मसाधनत्वान्न पृथक्साधनम्। विद्याकर्मणोर्लोकजयहेतुत्वं स्वा- १० त्मप्रतिलाभेनैव भवतीति प्रसिद्धम्। पुत्रस्य त्वक्रियात्मकत्वात्केन प्रकारेण लोकजयहेतुत्वमिति न ज्ञायतेऽतस्तद्वक्तव्यमित्यथानन्तरमारभ्यते। सम्प्रत्तिः[3] सम्प्रदानम्। सम्प्रत्तिरिति वक्ष्यमाणस्य कर्मणो नामधेयम्। पुत्रे हि स्वात्मव्यापारसम्प्रदानं[4] करोत्यनेन प्रकारेण पिता तेन सम्प्रत्तिसंज्ञकमिदं कर्म। तत्कस्मिन्काले कर्तव्यमित्याह—स पिता यदा यस्मिन्काले प्रैष्यन्मरिष्यन्मरिष्यामीत्यरिष्टादिदर्शनेन मन्यतेऽथ तदा पुत्रमाहूयाऽऽह—त्वं ब्रह्म

एवेति। तदेव लोकत्रयं प्रश्नद्वारा स्फोरयति—के त इत्यादिना। जयो नाम पुत्रेण मनुष्यलोकस्यातिक्रम इति १५ केचित्तान्प्रत्याह—साध्य इति। पुत्रेणास्य साध्यत्वमसिद्धमित्याशङ्क्याऽऽह—यथा चेति। द्विविधो हि मनुष्यलोकजयः कर्तव्यशेषानुष्ठानं भोगश्च। तत्राऽऽद्यमाश्रित्यान्ययोगव्यवच्छेदमेवकारार्थं दर्शयति—नान्येनेति। द्वितीये त्वयोगव्यवच्छेदस्तदर्थो ज्योतिषेमं लोकं जयतीति साधनान्तरेणापि मनुष्यलोकजयश्रुतेरिति भावः। पूर्ववाक्यस्थमेवकारमुत्तरवाक्ययोरनुषक्तमुपेत्य वाक्यद्वयं व्याचष्टे—कर्मणेत्यादिना। साधनद्वयापेक्षया फलद्वारकमुत्कर्षं विद्यायां दर्शयति—देवलोक इति। २०

वृत्तमनुवदति—एवमिति। पुत्रादिवज्जायावित्तयोरपि प्रकृतत्वात्फलविशेषे विनियोगो वक्तव्य इत्याशङ्क्याऽऽह—जाया त्विति। न पृथक्पुत्रकर्मभ्यामिति शेषः। न पृथक्साधनं कर्मणः सकाशादिति द्रष्टव्यम्। भवत्वेवं साधनत्रयनियमस्तथाऽपि विद्याकर्मणी हित्वा समनन्तरग्रन्थे किमिति पुत्रनिरूपणमित्याशङ्क्याऽऽह—विद्याकर्मणोरिति। यथोक्ते चोद्ये पुत्रस्य लोकहेतुत्वज्ञानार्थं सम्प्रत्तिवाक्यमित्याह—अत इति। अथात इति पदद्वयं व्याख्याय सम्प्रत्तिपदं व्याचष्टे—सम्प्रत्तिरिति। किमिद सम्प्रदानं नाम तदाह—सम्प्रत्तिरिति। तदेव कर्म विशदयति— २५ पुत्रे हीति। अनेन प्रकारेणेति वक्ष्यमाणप्रकारोक्तिः। अरिष्टादीत्यादिपदेन दुःस्वप्नादिसङ्ग्रहः। प्रत्याह वाक्यत्रयमिति

१. प्रैष्यन् मन्यते—इत्यस्य प्रव्रजिष्यन् इत्यर्थः पक्षान्तरत्वेन वार्त्तिकारैरुक्तः भाष्यं तु म्रियमाणविषयमेवेति यथाश्रुतार्थपरतया योजयति।

२. 'विद्यया देवलोको न पुत्रेण न कर्मणा' इति भाष्यकारैरुक्तम्—देवलोकस्य ब्रह्मलोकाख्यस्य संन्यासादपि प्राप्तेः न कर्मणेति न युज्यत इति वार्तिकम्। अन्ये तु 'विद्यया तदारोहन्ति यत्र कामाः परागताः। न तत्र दक्षिणा यन्ति नाविद्वांसस्तपस्विनः' इति शतपथोक्तेः—अविदुषा संन्यासिना ब्रह्मलोको नास्तीति ज्ञायते। वार्त्तिक- ३० कारास्तु प्रौढिम्ना तेषां ब्रह्मलोकमाहुः। अत एव 'न च संन्यासनादेव सिद्धिं समधिगच्छती'ति गीता इत्याहुः। आद्य कर्त्तव्यशेषानुष्ठानमाश्रित्य 'पुत्रेणैव नान्येन' इत्युक्त, अयोगः द्वितीयोऽर्थः एवशब्दस्य—तच्च मनुष्यलोके पुत्रान्येन केनचित्कर्मणा मनुष्यलोकः प्राप्यत इत्युक्त तच्च 'ज्योतिषेमं लोकं' इत्युक्ते ज्योतिषा कर्मविशेषेणेत्यर्थः।

३ सम्प्रत्ति. स्वात्मव्यापारसंप्रदान पुत्रे, तच्च मुमूर्षोरिव सन्यासग्रहणायोद्यतस्यापीत्युक्तं वार्त्तिके।

४. स्वात्मन. स्वस्य पितुः यो व्यापार. यज्ञादिः तत् पुत्रेण कर्त्तव्यत्वात्ता पित्रा क्रियते। संन्यासात्पूर्वमिदं कर्मेति ३५ वार्त्तिकम्।

ऽभुनजदिति तस्मात्पुत्रमनुशिष्टं लोक्यमाहुस्तस्मादेनमनुशासति[1] स यदैवं-
विदस्माल्लोकात्प्रैत्यथैभिरेव प्राणैः सह पुत्रमाविशति । स यद्यनेन किंचिद-
क्ष्णयाऽकृतं भवति तस्मादेनं सर्वस्मात्पुत्रो मुञ्चति तस्मात्पुत्रो नाम स
पुत्रेणैवास्मिँल्लोके प्रतितिष्ठत्यथैनमेते दैवाः प्राणा अमृता आविशन्ति ॥१७॥

५ त्वं यज्ञस्त्वं लोक इति । स एवमुक्तः पुत्रः प्रत्याह स तु पूर्वमेवानुशिष्टो जानाति मयैतत्कर्तव्यमिति तेनाऽऽहाहं ब्रह्माहं यज्ञोऽहं लोक इति । एतद्वाक्यत्रयम् ।

एतस्यार्थस्तिरोहित इति मन्वाना श्रुतिर्व्याख्यानाय प्रवर्तते—यद्वै किञ्च यत्किञ्चावशिष्टमनूक्तमधीत-मनधीतं च तस्य सर्वस्यैव ब्रह्मेत्येतस्मिन्पद एकतैकत्वं योऽध्ययनव्यापारो मम कर्तव्य आसीदेतावन्तं कालं वेदविषयः स इत ऊर्ध्वं त्वं ब्रह्म त्वत्कर्तृकोऽस्त्वित्यर्थः । तथा ये वै के च यज्ञा अनुष्ठेयाः सन्तो मयाऽनुष्ठिताश्चा-
१० ननुष्ठिताश्च तेषां सर्वेषां यज्ञ इत्येतस्मिन्पद एकतैकत्वं मत्कर्तृका यज्ञा य आसंस्त इत ऊर्ध्वं त्वं यज्ञस्त्वत्कर्तृका भवन्त्वित्यर्थः । ये वै के च लोका मया जेतव्याः सन्तो जिता अजिताश्च तेषां सर्वेषां लोक इत्येतस्मिन्पद एकता । इत ऊर्ध्वं त्वं लोकस्त्वया जेतव्यास्ते । इत ऊर्ध्वं मयाऽध्ययनयज्ञलोकजयकर्तव्यक्रतुस्त्वयि समर्पितोऽहं तु मुक्तोऽस्मि कर्तव्यताबन्धनविषयात्क्रतोः । स च सर्वं तथैव प्रतिपन्नवान्पुत्रोऽनुशिष्टत्वात् ।

तत्रेमं पितुरभिप्रायं मन्वानाऽऽचष्टे श्रुतिरेतावदेतत्परिमाणं वा इदं सर्वं यद्गृहिणा कर्तव्यं यदुत वेदा
१५ अध्येतव्या यज्ञा यष्टव्या लोकाश्च जेतव्या एतन्मा सर्वं सन्नयं सर्वं होमं भारं मदधीनं मत्तोऽपच्छिद्याऽऽत्मनि निधायेतोऽस्माल्लोकान्मा मामभुनजत्पालयिष्यतीति लृडर्थे लङ् छन्दसि कालनियमाभावात् । यस्मादेवं सम्पन्नः पुत्रः पितरमस्माल्लोकात्कर्तव्यताबन्धनतो मोचयिष्यति तस्मात्पुत्रमनुशिष्टं लोक्यं लोकहितं पितुराहुर्ब्राह्मणाः । अत एव ह्येनं पुत्रमनुशासति लोक्योऽयं नः स्यादिति पितरः ।

स पिता यदा यस्मिन्काल एवंवित्पुत्रसमर्पितकर्तव्यताक्रतुरस्माल्लोकात्प्रैति म्रियतेऽथ तदैभिरेव
२० प्रकृतैर्वाङ्मनःप्राणैः पुत्रमाविशति पुत्रं व्याप्नोति । अध्यात्मपरिच्छेदहेत्वपगमात्पितुर्वाङ्मनःप्राणाः स्वेनाऽऽधि-दैविकेन रूपेण पृथिव्यग्न्याद्यात्मना भिन्नघटप्रदीपप्रकाशवत्सर्वमाविशन्ति । तैः प्राणैः सह पिताऽप्याविशति वाङ्मनःप्राणात्मभावितत्वात्पितुः । अहमस्म्यनन्ता वाङ्मनःप्राणा अध्यात्मादिभेदविस्तारा इत्येवं भावितो हि पिता । तस्मात्तत्प्राणानुवृत्तित्वं पितुर्भवतीति युक्तमुक्तमेभिरेव प्राणैः सह पुत्रमाविशतीति । सर्वेषां ह्यसावात्मा

सम्बन्धः । पुत्रस्याहं ब्रह्मेत्यादिप्रतिवचने हेतुमाह—स त्विति । मया कार्यं यदध्ययनादि तदेवावशिष्टं त्वया कार्यमिति
२५ पुत्रस्य प्रागनुशिष्टत्वऽभावे प्रतिवचनानुपपत्तिरित्यर्थः ।

यद्वै किञ्चेत्यादिवाक्यानां पुत्रानुमन्त्रणवाक्यैरर्थभेदाभावात्पुनरुक्तिरित्याशङ्क्याऽऽह—एतस्येति । यद्वै किञ्चेत्यादि-वाक्ये वाक्यार्थमाह—योऽध्ययनेति । त्वं ब्रह्मेतिवाक्यवत्त्वं यज्ञ इति वाक्यमपि शक्यं व्याख्यातुमित्याह—तथेति । ब्राह्मणार्थं सङ्गृह्णाति—मत्कर्तृका इति । त्वं लोक इत्यस्य व्याख्यानं ये वै के चेत्यादि । तत्र पदार्थानुक्त्वा वाक्यार्थ-माह—इत इति । किमिति त्वत्कर्तृकमध्ययनादि मयि समर्प्यते त्वयैव किं नानुष्ठीयते तत्राऽऽह—इत ऊर्ध्वमिति ।
३० कर्तव्यतैव बन्धनं तद्विषयः क्रतुः सङ्कल्पस्तस्मादिति यावत् । स पुत्र इत्यादेस्तात्पर्यमाह—स चेति । तत्रेति यथोक्ता-नुशासनोक्तिः । एतन्मा सर्वमित्यादि प्रतीकमादाय व्याचष्टे—सर्वं हीति । अनद्यतने भूतेऽर्थे विहितस्य लङो भविष्य-दर्थत्व कथमित्याशङ्क्याऽऽह—छन्दसीति । पुत्रानुशासनस्य फलवत्त्वमाह—यस्मादित्यादिना ।

कृतसम्प्रत्तिकः सन्पिता किं करोतीत्यपेक्षायामाह—स पितेति । कोऽयं प्रवेशो न हि विशिष्टस्य केवलस्य वा बिले सर्पवत्प्रवेशः सम्भवत्यत आह—अध्यात्मेति । हेतुर्मिथ्याज्ञानादि । वागादिष्वाविष्टेष्वपि कुतोऽर्थान्तरस्य
३५ पितुरावेशधीरित्याशङ्क्याऽऽह—वागिति । तद्भावितत्वमेव स्फोरयति—अहमिति । भावनाफलमाह—तस्मादिति । पुत्रविशेषणात्परिच्छिन्नत्वं पितुस्तदवस्थमित्याशङ्क्याऽऽह—सर्वेषां हीति । मृतस्य पितुरितो लोकाद्व्यावृत्तस्य कथं

१. सः पुत्रः अस्य पितुः आत्मा पुण्येभ्यः कर्मेभ्यः पुण्यकर्मकरणाय प्रतिनिधीयते ।

**पृथिव्यै चैनमग्नेश्च दैवी वागाविशति सा वै दैवी[1] वाग्यया यद्यदेव वदति तत्तद्भवति ॥१८॥**

भवति पुत्रस्य च। एतदुक्तं भवति—यस्य पितुरेवमनुशिष्टः पुत्रो भवति सोऽस्मिन्नेव लोके वर्तते पुत्ररूपेण नैव मृतो मन्तव्य इत्यर्थः। तथा च श्रुत्यन्तरे—"सोऽस्यायमितर आत्मा पुण्येभ्यः कर्मभ्यः प्रतिधीयते" इति।

अथेदानीं पुत्रनिर्वचनमाह—स पुत्रो यदि कदाचिदनेन पित्राऽक्ष्णया कोणच्छिद्रतोऽन्तराऽकृतं भवति कर्तव्यम्। तस्मात्कर्तव्यतारूपात्पित्राऽकृतात्सर्वस्माल्लोकप्राप्तिप्रतिबन्धरूपात्पुत्रो मुञ्चति मोचयति तत्सर्वं स्व- ५
यमनुतिष्ठन्पूरयित्वा। तस्मात्पूरणेन त्रायते स पितरं यस्मात्तस्मात्पुत्रो नाम। इदं तत्पुत्रस्य पुत्रत्वं यत्पितुश्छिद्रं पूरयित्वा त्रायते। स पितैवंविधेन पुत्रेण मृतोऽपि सन्नमृतोऽस्मिन्नेव लोके प्रतितिष्ठत्येवमसौ पिता पुत्रेणेमं मनुष्यलोकं जयति। न तथा विद्याकर्मभ्यां देवलोकपितृलोकौ स्वरूपलाभसत्तामात्रेण। न हि विद्याकर्मणी स्वरूपलाभव्यतिरेकेण पुत्रवद्व्यापारान्तरापेक्षया लोकजयहेतुत्वं प्रतिपद्येते। अथ कृतसम्प्रत्तिकं पितरमेनमेते वागादयः प्राणा दैवा हैरण्यगर्भा अमृता अमरणधर्माण आविशन्ति ॥१७॥ १०

कथमिति वक्ष्यति—पृथिव्यै चैनमित्यादि। एवं पुत्रकर्मापरविद्यानां मनुष्यलोकपितृलोकदेवलोक-साध्यार्थता प्रदर्शिता श्रुत्या स्वयमेव। अत्रकेचिद्वावदूकाः श्रुत्युक्तविशेषार्थानभिज्ञाः सन्तः पुत्रादिसाधनानां मोक्षार्थतां वदन्ति। तेषां मुखापिधानं श्रुत्येदं कृतं जाया मे स्यादित्यादि पाङ्क्तं काम्यं कर्मेत्युपक्रमेण पुत्रादीनां च साध्यविशेषविनियोगोपसंहारेण च। तस्मादृणश्रुतिरविद्वद्विषया न परमात्मविद्विषयेति सिद्धम्। वक्ष्यति च—किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोक इति। केचित्तु पितृलोकदेवलोकजयोऽपि पितृलोकदेवलोकाभ्यां १५
व्यावृत्तिरेव। तस्मात्पुत्रकर्मापरविद्याभिः समुच्चित्यानुष्ठिताभिस्त्रिभ्य एतेभ्यो लोकेभ्यो व्यावृत्तः परमात्मविज्ञानेन मोक्षमधिगच्छतीति परम्परया मोक्षार्थान्येव पुत्रादिसाधनानीच्छन्ति। तेषामपि मुखापिधानायेयमेव श्रुतिरुत्तरा कृतसम्प्रत्तिकस्य पुत्रिणः कर्मिणस्त्र्यन्नात्मविद्याविदः फलप्रदर्शनाय प्रवृत्ता।

यथोक्तरूपत्वमित्याशङ्क्याऽऽह—एतदुक्तमिति। पुत्ररूपेणात्र स्थितिमेव विभजते—नैवेति। मृतोऽपि पिताऽनुशिष्ट-पुत्रात्मनाऽत्र वर्तते नास्मादत्यन्तं व्यावृत्तः फलरूपेण च परत्रेति भावः। उक्तेऽर्थे ऐतरेयश्रुतिं संवादयति—तथा चेति। २०
षष्ठीप्रथमाभ्यां पितापुत्रावुच्येते।

स यदीत्यादिवाक्यमवतार्य व्याकरोति—अथेत्यादिना। अकृतमकृतादिति च च्छेदः। तस्मादिति प्रतीक-मादाय व्याकरोति—पूरणेनेति। तदेव प्रपञ्चयति—इदं तदिति। पुत्रवैशिष्ट्यं निगमयति—स पितेति। पुत्रेणैतल्लोक-जयमुपसंहरति—एवमिति। यथोक्तात्पुत्राद्विद्याकर्मणोर्विशेषमाह—न तथेति। कथं तर्हि ताभ्यां पिता तौ जयति तत्राऽऽह—स्वरूपेति। तदेव स्फुटयति—न हीति। अनुशिष्टपुत्रेणैतल्लोकजयिनं पितरमधिकृत्याथैनमित्यादि वाक्यं २५
तद्व्याकरोति—अथेति। पुत्रप्रकरणविच्छेदार्थोऽथशब्दः ॥१७॥

आवेशप्रकारबुभुत्सायामुत्तरवाक्यप्रवृत्तिं प्रतिजानीते—कथमित्यादिना। पृथिव्यै चेत्यादिवाक्यस्य व्यावर्त्यं पक्षं वृत्तानुवादपूर्वकमुत्थापयति—एवमिति। अत्रेति वैदिकं पक्षं निर्धारयितुं सप्तमी। बहुवदनशीलत्वे हेतुः—श्रुत्युक्तेति। मोक्षार्थतामृणापाकरणश्रुतिस्मृतिभ्यां वदन्तीति शेषः। मीमांसकपक्षं प्रकृतश्रुतिविरोधेन दूषयति—तेषामिति। कथमित्याशङ्क्य श्रुतेरादिमध्यावसानालोचनया पुत्रादेः संसारफलत्वावगमान्न मुक्तिफलतेत्याह—जायेत्या- ३०
दिना। पुत्रादीनाञ्चेति चकारादेतावान्वै काम इति मध्यसङ्ग्रहः। यदुक्तमृणापाकरणश्रुतिस्मृतिभ्यां पुत्रादेर्मुक्ति-फलतेति तत्राऽऽह—तस्मादिति। पुत्रादेः श्रुतं संसारफलत्वं परामृष्टुं तच्छब्दः। श्रुतिशब्दः स्मृतेरुपलक्षणार्थः। श्रुतिस्मृत्योरविरक्तविषयत्वे वाक्यशेषमनुकूलयति—वक्ष्यति चेति। मीमांसकपक्षं निराकृत्य भर्तृप्रपञ्चपक्षमुत्थाप-यति—केचित्त्विति। मनुष्यलोकजयस्ततो व्यावृत्तिर्यथेत्यपेरर्थः। पुत्रादिसाधनाधीनतया लोकत्रयव्यावृत्तावपि कथं मोक्षः सम्पद्यते न हि पुत्रादीन्येव मुक्तिसाधनानि विरक्तत्वविरोधादित्याशङ्क्याऽऽह—तस्मादिति। पृथिव्यै चेत्याद्यो- ३५
त्तरा श्रुतिरेव मीमांसकमतवद्भर्तृप्रपञ्चमतमपि निराकरोतीति दूषयति—तेषामिति। कथं सा तन्मतं निराकरोतीत्या-शङ्क्य श्रुतिं विशिनष्टि—कृतेति।

---

१. दैवी वाक्—अलौकिकशक्तिसंपन्ना निग्रहानुग्रहसमर्थेत्यर्थः।

दिवश्चैनमादित्याच्च दैवं मन आविशति तद्वै दैवं मनो येनानन्द्येव भवत्यथो न शोचति ॥१९॥
अद्भ्यश्चैनं चन्द्रमसश्च दैवः प्राण आविशति स वै दैवः प्राणो यः संचरँश्चासं-
चरँश्च न व्यथतेऽथो न रिष्यति स एवंवित्सर्वेषां भूतानामात्मा भवति यथैषा
देवतैवँ सर्वाणि भूतान्यवन्त्येवँ हैवंविदँ सर्वाणि भूतान्यवन्ति । यदु किंचेमाः
५ प्रजाः शोचन्त्यमैवासां तद्भवति पुण्यमेवामुं गच्छति न ह वै देवान्पापं गच्छति ॥२०॥

न चेदमेव फलं मोक्षफलमिति शक्यं वक्तुं । अन्नसम्बन्धान्मेधातपःकार्यत्वाच्चान्नानां पुनः पुनर्जनयत इति दर्शनात् । यद्धैतन्न कुर्यात्क्षीयेत हेति च क्षयश्रवणाच्छरीरं ज्योतिरूपमिति च कार्यकरणवत्त्वोपपत्तेस्त्रयं वा इदमिति च नामरूपकर्मात्मकत्वेनोपसंहारात् । न चेदमेव साधनत्रयं संहृतं सत्कस्यचिन्मोक्षार्थं कस्यचित्त्वन्नात्मफलमित्यस्मादेव वाक्यादवगन्तुं शक्यं पुत्रादिसाधनाना त्र्यन्नात्मफलदर्शनेनैवोपक्षीणत्वाद्वाक्यस्य ।

१० पृथिव्यै पृथिव्याश्चैनमग्नेश्च दैव्यधिदैवात्मिका वागेन कृतसम्प्रत्तिकमाविशति । सर्वेषां हि वाच उपादानभूता दैवी वाक्पृथिव्यग्निलक्षणा । सा ह्याध्यात्मिकासङ्गादिदोषैर्निरुद्धा विदुषस्तद्दोषापगम आवरणभङ्ग इवोदकं प्रदीपप्रकाशवच्च व्याप्नोति । तदेतदुच्यते पृथिव्या अग्नेश्चैनं दैवो वागाविशतीति । सा च दैवी वागनृतादिदोषरहिता शुद्धा यया वाचा दैव्या यद्यदेवाऽऽत्मने परस्मै वा वदति तत्तद्भवत्यमोघाऽप्रतिबद्धाऽस्य वाग्भवतीत्यर्थः ॥१८॥

तथा दिवश्चैनमादित्याच्च दैवं मन आविशति । तच्च दैवं मनः स्वभावनिर्मलत्वात् । येन मनसाऽसावा-
१५ नन्द्येव भवति सुख्येव भवत्यथो अपि न शोचति शोकादिनिमित्तासंयोगात् ॥१९॥

तथाऽद्भ्यश्चैनं चन्द्रमसश्च दैवः प्राण आविशति । स वै दैवः प्राणः किंलक्षण इत्युच्यते—यः सञ्चरन्प्राणिभेदेष्वसञ्चरन्समष्टिव्यष्टिरूपेणाथवा सञ्चरञ्जङ्गमेष्वसञ्चरन्स्थावरेषु न व्यथते न दुःखनिमित्तेन भयेन युज्यते । अथो अपि न रिष्यति न विनश्यति न हिंसामापद्यते । स यो यथोक्तमेवं वेत्ति त्र्यन्नात्मदर्शनं स सर्वेषां भूतानां-[3]

२० त्र्यन्नात्मोपासितुस्तदाप्तिवचनविरुद्धं परमतमित्ययुक्तं तदाप्तेरेव मुक्तित्वादित्याशङ्क्याऽऽह—न चेति । तथाऽपि कथं यथोक्तं फलं मोक्षो न भवति तत्राऽऽह—मेधेति । त्र्यन्नात्मनो ज्ञानकर्मजन्यत्वे हेतुमाह—पुनः पुनरिति । सूत्राप्तेरमुक्तित्वे हेत्वन्तरमाह—यद्धेति । कार्यकरणवत्त्वश्रुतेरपि सूत्रभावो न मुक्तिरित्याह—शरीरमिति । अविद्यातदुत्थद्वैतस्य त्र्यात्मकत्वेनोपसंहारात्तदात्मसूत्रभावो बन्धान्तर्भूतो न मुक्तिरिति युक्त्यन्तरमाह—त्रयमिति । नन्वविरक्तस्याज्ञस्य सूत्राप्तिफलमपि कर्मादिविरक्तस्य विदुषो मुक्तिफलमिति व्यवस्थितिर्नेत्याह—न चेदमिति । न हि
२५ पृथिव्यै चेत्यादिवाक्यस्यैकस्य सकृच्छ्रुतस्यानेकार्थत्वम् । भिद्यते हि तथा वाक्यमिति न्यायादित्यर्थ[1] । पृथिव्यै चेत्यादिवाक्यावष्टम्भेन पक्षद्वय प्रतिक्षिप्य तदक्षराणि व्याचष्टे—पृथिव्या इति । एनमित्युक्तमनूद्य व्याकरोति—एनमिति । कथं पुनः सूत्रात्मभूता वागुपासकमाविशति तत्राह—सर्वेषां हीति । तर्हि तयोरभेदादविदुषोऽपि व्याप्तैव वागिति विदुषि विशेषो नास्तीत्याशङ्क्याऽऽह—सा हीति । दैव्या वाचि दोषविगममुत्तरवाक्येन साधयति—सा चेति । विद्वद्वाच. स्वरूपं सङ्क्षिपति—अमोघेति ॥१८॥

३० वाचि दर्शितन्यायं मनस्यतिदिशति—तथेति । यन्मन स्वभावनिर्मलत्वेन दैवमित्युक्तं तदेव विशिनष्टि—येनेति । असाविति विद्वदुक्तिः । येन मनसा विद्वान्न शोचत्यपि तद्धेत्वभावात्तद्दैवमिति पूर्वेण सम्बन्ध. ॥१९॥

मनस्युक्त न्यायं प्राणेऽतिदिशति—तथेति । तमेव दैवं प्राणं प्रश्नपूर्वकं प्रकटयति—स वा इति । स एवंविदित्यादि व्याचष्टे—स य इति । विदिरत्र लाभार्थः । न केवल यथोक्तमेव विद्याफल किन्तु फलान्तरमप्य-

---

१. शक्यमिति—उभयार्थत्वे वाक्यभेदादित्यर्थ. ।
३५ २. कृतसंप्रत्तिकं—त्र्यन्नात्मकहिरण्यगर्भस्यात्मत्वेनोपासनं यस्मात् कृत तस्मादित्यर्थः ।
३. सर्वेषां भूतानामात्मा भवति । अत्र सर्वेषा वाङ्मन प्राणाः अस्यैवाभिन्ना भवन्ति तेन त सर्वे पूजयन्तीत्यर्थ ।
सर्वभूतात्मत्वं लिङ्गशरीरैक्यं न तु आत्माऽभेदः तस्य लिङ्गसद्भावात् ब्रह्मसाक्षात्काराभावाच्च ।

**अथातो व्रतमीमा॑ꣳसा[1] प्रजापतिर्ह कर्माणि[2] ससृजे तानि सृष्टान्यन्योन्येनास्पर्धन्त वदिष्याम्येवाहमिति वाग्दध्रे द्रक्ष्याम्यहमिति चक्षुः श्रोष्याम्यहमिति श्रोत्रमेवमन्यानि कर्माणि यथाकर्म तानि मृत्युः श्रमो भूत्वोपयेमे तान्याप्नोत्तान्याप्त्वा मृत्यु-**

मात्मा भवति सर्वेषां भूतानां प्राणो भवति सर्वेषां भूतानां मनो भवति सर्वेषां भूतानां वाग्भवतीत्येवं सर्वभूतात्मतया सर्वज्ञो भवतीत्यर्थः। सर्वकृच्च। यथैषा पूर्वसिद्धा हिरण्यगर्भदेवतैवमेव नास्य सर्वज्ञत्वे सर्वकृत्त्वे वा क्वचित् प्रतिघातः। स इति दार्ष्टान्तिकनिर्देशः। किञ्च यथैतां हिरण्यगर्भदेवतामिज्यादिभिः सर्वाणि भूतान्यवन्ति पालयन्ति पूजयन्त्येवं हैवंविदं सर्वाणि भूतान्यवन्तीज्यादिलक्षणां पूजां सततं प्रयुञ्जत इत्यर्थः।

अथेदमाशङ्क्यते—सर्वप्राणिनामात्मा भवतीत्युक्तं तस्य च सर्वप्राणिकार्यकरणात्मत्वे सर्वप्राणिसुखदुःखैः सम्बध्येतेति। तन्न। अपरिच्छिन्नबुद्धित्वात्। परिच्छिन्नात्मबुद्धीनां ह्याक्रोशादौ दुःखसम्बन्धो दृष्टोऽनेनाहमाक्रुष्ट इति। अस्य तु सर्वात्मनो य आक्रुश्यते यश्चाऽऽक्रोशति तयोरात्मत्वबुद्धिविशेषाभावान्न तन्निमित्तं दुःखमुपपद्यते। मरणदुःखवच्च निमित्ताभावात्। यथा हि कस्मिंश्चिन्मृते कस्यचिद्दुःखमुत्पद्यते ममासौ पुत्रो भ्राता चेति पुत्रादिनिमित्तम्। तन्निमित्ताभावे तन्मरणदर्शिनोऽपि नैव दुःखमुपजायते। तथेश्वरस्याप्यपरिच्छिन्नात्मनो ममतवतादिदुःखनिमित्तमिथ्याज्ञानादिदोषाभावान्नैव दुःखमुपजायते। तदेतदुच्यते—यदु किञ्च यत्किञ्चेमाः प्रजाः शोचन्त्यमैव सहैव प्रजाभिस्तच्छोकादिनिमित्तं दुःखं संयुक्तं भवत्यासां प्रजानां परिच्छिन्नबुद्धिजनितत्वात्। सर्वात्मनस्तु केन सह किं संयुक्तं भवेद्वियुक्तं वा। अमुं तु प्राजापत्ये पदे वर्तमानं पुण्यमेव; शुभमेव फलमभिप्रेतं पुण्यमिति। निरतिशयं हि तेन पुण्यं कृतं तेन तत्फलमेव गच्छति न ह वै देवान्पापं गच्छति पापफलस्यावसराभावात्पापफलं दुःखं न गच्छतीत्यर्थः॥२०॥

त एते सर्व एव समाः सर्वेऽनन्ता इत्यविशेषेण वाङ्मनःप्राणानामुपासनमुक्तं नान्यतमगतो विशेषः उक्तः। किमेवमेव प्रतिपत्तव्यं किं वा विचार्यमाणे कश्चिद्विशेषो व्रतमुपासनं प्रति प्रतिपत्तुं शक्यत इत्युच्यते—अथातो-

स्तीत्याह—किञ्चेति। सर्वभूतात्मत्वे तद्दोषयोगात्प्राजापत्यं पदमनादेयमित्युत्तरवाक्यव्यावर्त्यामाशङ्कामाह—अथेति। सर्वप्राणिसुखदुःखैरित्यस्मादूर्ध्वं सशब्दोऽध्याहर्तव्यः। सर्वात्मके विदुष्येकैकभूतनिष्ठदुःखयोगो नास्तीत्युत्तरमाह—तन्नेति। तदेव प्रपञ्चयति—परिच्छिन्नेति। अपरिच्छिन्नधीत्वेऽपि सूत्रात्मके विदुषि सर्वभूतान्तर्भावात्तद्दुःखादियोगः स्यादेवेत्याशङ्क्य जठरकुहरविपरिवर्तिक्रिमिदोषैरस्माकमसंसर्गवत्प्रकृतेऽपि सम्भवान्नैवमित्यभिप्रेत्याऽऽह—मरणेति। नोपपद्यते विदुषो दुःखमिति पूर्वेण सम्बन्धः। दृष्टान्तं विवृणोति—यथेति। मैत्रस्य स्वहस्ताद्यभिमानवतस्तद्दुःखादियोगवद्विदुषः सूत्रात्मनः स्वांशभूतसर्वभूताभिमानिनस्तद्दुःखादिसंसर्गः स्यादित्याशङ्क्य दार्ष्टान्तिकमाह—तथेति। ममतवतादीत्यादिपदेनाहन्ताग्रहणं तदेव दुःखनिमित्तं मिथ्याज्ञानम्। आदिशब्देन रागादिरुक्तः। उक्तेऽर्थे श्रुतिमवतार्य व्याचष्टे—तदेतदिति। शुभमेव गच्छतीति सम्बन्धः। फलरूपेण वर्तमानस्य कथं कर्मसम्बन्धः स्यादित्याशङ्क्याऽऽह—फलमिति। उक्तमेव व्यनक्ति—निरतिशयं हीति ॥२०॥

अथेत्यादिवाक्यस्य वक्तव्यशेषाभावादानर्थक्यमाशङ्क्य व्यवहितोपासनानुवादेन तदङ्गव्रतविधानार्थमुत्तरं वाक्यमित्यानर्थक्यं परिहरति—त एत इत्यादिना। व्रतमित्यवश्यानुष्ठेयं कर्मोच्यते। जिज्ञासायाः सत्त्वमतः शब्दार्थः।

---

१. व्रतमीमांसेति—अत्र विषये ब्रह्मसूत्रतृतीयतृतीये 'प्रदानवदेव तदुक्तं' इत्यधिकरणे विचारितम्—बृहदारण्यके उक्तं 'वदिष्याम्येवाहमिति वाग् दध्रे' इत्यारभ्य वागादिनिन्दापूर्वकं प्राणः श्रेष्ठोऽवधारितः। तथा अधिदैवं 'ज्वलिष्याम्येवाहमित्यग्निर्दध्रे'—इत्यारभ्य वायुः श्रेष्ठ अवधारितः। तत्र वायुप्राणयोरेकत्वात् एकमुपासनमिति प्राप्ते यद्यपि तयोः तत्त्वमेकं तथापि अवस्थाभेदात् पृथगेवोपगन्तव्यौ वायुप्राणौ पृथगुपदेशात् प्रदानवत् यथा 'इन्द्राय राज्ञे पुरोडाशमेकादशकपालं इन्द्रायाधिराजाय इन्द्राय स्वराज्ञे' इति 'त्रिपुरोडाशिन्यामिष्टौ सर्वेषामवद्यत्यवषट्कारं' इति वाक्येन सहावदानप्राप्तौ प्रक्षेपोऽपि सहैव कर्तव्य इति प्राप्ते 'नाना वा देवतापृथक्त्वात्' इति संकर्षकाण्डसूत्रेण देवतापृथक्त्वात् पृथगेव याग इति सिद्धान्तितं तन्न्यायेनेत्यर्थः (संका० २.२.३६)।

२. कर्माणि ससृजे कर्मसाधनानीन्द्रियाणीत्यर्थः।

रवारुन्ध तस्माच्छ्राम्यत्येव वाक्श्राम्यति चक्षुः श्राम्यति श्रोत्रमथेममेव नाप्नोद्योऽयं मध्यमः प्राणस्तानि ज्ञातुं दध्रिरे। अयं वै नः श्रेष्ठो यः संचरँश्चासंचरँश्च नव्यथतेऽथो न रिष्यति हन्तास्यैव सर्वे रूपमसामेति त एतस्यैव सर्वे रूपमभवँस्तस्मादेत एतेनाख्यायन्ते प्राणा इति तेन ह वाव तत्कुलमाचक्षते यस्मिन्कुले भवति
५ य एवं वेद य उ हैवंविदा स्पर्धतेऽनुशुष्यत्यनुशुष्य हैवान्ततो म्रियत इत्यध्यात्मम् ॥२१॥

ऽनन्तरं व्रतमीमांसोपासनकर्मविचारणेत्यर्थः। एषां प्राणानां कस्य कर्म व्रतत्वेन धारयितव्यमिति मीमांसा प्रवर्तते। तत्र प्रजापतिर्ह हशब्दः किलार्थे प्रजापतिः किल प्रजाः सृष्ट्वा कर्माणि करणानि वागादीनि। कर्मार्थानि हि तानीति कर्माणीत्युच्यन्ते। ससृजे सृष्टवान्वागादीनि करणानीत्यर्थः। तानि पुनः सृष्टान्यन्योन्येनेतरेतरमस्पर्धन्त स्पर्धा सङ्घर्षं चक्रुः। कथम्। वदिष्याम्येव स्वव्यापाराद्वदनादनुपरतैवाहं स्यामिति वाग्व्रतं दध्रे धृतवती। यद्यन्योऽपि
१० मत्समोऽस्ति स्वव्यापारादनुपरन्तुं शक्तः सोऽपि दर्शयत्वात्मनो वीर्यमिति। यथा द्रक्ष्याम्यहमिति चक्षुः श्रोष्याम्यहमिति श्रोत्रमेवमन्यानि कर्माणि करणानि यथाकर्म यद्यदस्य कर्म यथाकर्म तानि करणानि मृत्युर्मारकः श्रमः श्रमरूपी भूत्वोपयेमे सञ्जग्राह।

कथम्। तानि करणानि स्वव्यापारे प्रवृत्तान्याप्नोच्छ्रमरूपेणाऽऽत्मानं दर्शितवानाप्त्वा च तान्यवारुन्धावरोधं कृतवान्मृत्युः स्वकर्मभ्यः प्रच्यावितवानित्यर्थः। तस्माद्द्यत्वेऽपि वदने स्वकर्मणि प्रवृत्ता वाक्श्राम्यत्येव
१५ श्रमरूपिणा मृत्युना संयुक्ता स्वकर्मतःप्रच्यवते। तथा श्राम्यति चक्षुः। श्राम्यति श्रोत्रम्। अथेममेव मुख्यं प्राणं नाऽऽप्नोत्न प्राप्तवान्मृत्युः श्रमरूपी योऽयं मध्यमः प्राणस्तम्। तेनाद्यत्वेऽप्यश्रान्त एव स्वकर्मणि प्रवर्तते तानीतराणि करणानि तं ज्ञातुं दध्रिरे धृतवन्ति मनः। अयं वै नोऽस्माकं मध्ये श्रेष्ठः प्रशस्यतमोऽभ्यधिको यस्माद्यः सञ्चरंश्चासञ्चरंश्च न व्यथतेऽथो न रिष्यति हन्तेदानीमस्यैव प्राणस्य सर्वे वयं रूपमसाम प्राणमात्मत्वेन प्रतिपद्येमहि। एवं विनिश्चित्य त एतस्यैव सर्वे रूपमभवन्प्राणरूपमेवात्मत्वेन प्रतिपन्नाः प्राणव्रतमेव दध्रिरेऽस्मद्व्रतानि न
२० मृत्योर्वारणाय पर्याप्तानीति।

यस्मात्प्राणेन रूपेण रूपवन्तीतराणि करणानि चलनात्मना स्वेन च प्रकाशात्मना। न हि प्राणादन्यत्र चलनात्मकत्वोपपत्तिः। चलनव्यापारपूर्वकाण्येव हि सर्वदा स्वव्यापारेषु लक्ष्यन्ते। तस्मादेते वागादय एतेन प्राणाभिधानेनाऽऽख्यायन्तेऽभिधीयन्ते प्राणा इत्येवम्। य एवं प्राणात्मतां सर्वकरणानां वेत्ति प्राणशब्दाभिधेयत्वञ्च तेन ह वाव तेनैव विदुषा तत्कुलमाचक्षते लौकिकाः। यस्मिन्कुले स विद्वाञ्जातो भवति तत्कुलं विद्वन्नाम्नैव

२५ उपासनोक्त्यानन्तर्यमथशब्दार्थं कथयति—अनन्तरमिति। विचारणामेव स्फोरयति—एषामिति। प्रवृत्ताया मीमांसायां प्राणव्रतमभग्नत्वेन धारणीयमिति निर्धारणार्थमाख्यायिका प्रणयति—तत्रेत्यादिना। कथं वागादिषु करणेषु कर्मशब्दप्रवृत्तिरित्याशङ्क्याऽऽह—कर्मार्थानीति। तदीयसृष्टेरुपयोगमुपदर्शयितु भूमिकांकरोति—तानीति। स्पर्धाप्रकारं प्रश्नपूर्वकं प्रकटयति—कथमित्यादिना। यथाकर्म स्वीयं स्वीय व्यापारमनुसृत्य व्रतं दध्रिरे वागादीनि करणानीत्यर्थः।

३० प्रजापतेर्वागादिषु श्रमद्वारा-स्वकर्मप्रच्युतिरासीदित्यत्र कार्यलिङ्गकमनुमानं प्रमाणयति—तस्मादिति। वागादीना भग्नव्रतत्वनिर्धारणानन्तर्यमथशब्दार्थः। प्राजापत्ये प्राणे मृत्युग्रस्तत्वाभावे कार्यलिङ्गकमनुमान सूचयति—तेनेति। प्रवर्तते प्राण इति सम्बन्ध'। तथाऽपि कथं प्राणस्यैव व्रत धार्यमित्यपेक्षायामाह—तानीति। ज्ञानार्थमनुसन्धानप्रकारमेव दर्शयति—अयमिति। तस्य श्रेष्ठत्वे फलितमाह—हन्तेति। इतिशब्द व्याकरोति—एवं विनिश्चित्येति। अस्माकं वागादीना व्रतानि मृत्योर्वारणाय न पर्याप्तानीति विनिश्चित्य दध्रिरे प्राणव्रतमेवेति सम्बन्ध'।

३५ प्राणरूपत्वमुक्त्वा करणानां तन्नामत्वमाह—यस्मादिति। यस्मादित्यस्य तस्मादिति व्यवहितेन सम्बन्ध। प्राणरूप चलनात्मत्वमिति कुतो निश्चीयते तत्राऽऽह—न हीति। तर्हि करणेषु प्रकाशात्मकत्वमेव न चलनात्मत्वमित्याशङ्क्याऽऽह—चलनेति। सम्प्रति विद्याफलमाह—य एवमिति। तदेव स्पष्टयति—यस्मिन्निति। तपती सूर्यसुता

अथाधिदैवतं ज्वलिष्याम्येवाहमित्यग्निर्दध्रे तप्स्याम्यहमित्यादित्यो भास्याम्यहमिति चन्द्रमा एवमन्या देवता यथादैवतꣳ स यथैषां प्राणानां मध्यमः प्राण एवमेतासां देवतानां वायुर्म्लोचन्ति ह्यन्या देवता न वायुः सैषाऽनस्तमिता देवता यद्वायुः ॥२२॥

अथैष श्लोको भवति यतश्चोदेति सूर्योऽस्तं यत्र च गच्छतीति प्राणाद्वा एष उदेति प्राणेऽस्तमेति तं देवाश्चक्रिरे धर्मꣳ स एवाद्य स उ श्व इति यद्वा एतेऽमुर्ह्यध्रियन्त तदेवाप्यद्य कुर्वन्ति । तस्मादेकमेव व्रतं चरेत्प्राण्याच्चैवापान्याच्च नेन्मा पाप्मा मृत्युराप्नुवदिति यद्यु चरेत्समापिपयिषेत्तेनो एतस्यै देवतायै सायुज्यꣳ सलोकतां जयति ॥२३॥

इति प्रथमाध्याये पञ्चमं ब्राह्मणम्

ऽथितं भवत्यमुष्येदं कुलमिति । यथा तापत्य इति । य एवं यथोक्तं वेद वागादीनां प्राणरूपतां प्राणाख्यत्वं च तस्यैतत्फलं । किञ्च यः कश्चिदु हैवंविदा प्राणात्मदर्शिना स्पर्धते तत्प्रतिपक्षी सन्सोऽस्मिन्नेव शरीरेऽनुशुष्यति शोषमुपगच्छति । अनुशुष्य हैव शोषं गत्वैवान्ततोऽन्ते म्रियते न सहसाऽनुपद्रुतो म्रियत इत्येवमुक्तमध्यात्मं प्राणात्मदर्शनमित्युक्तोपसंहारोऽधिदैवतप्रदर्शनार्थः ॥ २१ ॥

अथानन्तरमधिदैवतं देवताविषयं दर्शनमुच्यते । कस्य देवताविशेषस्य व्रतधारणं श्रेय इति मीमांस्यते । अध्यात्मवत्सर्वं ज्वलिष्याम्येवाहमित्यग्निर्दध्रे । तप्स्याम्यहमित्यादित्यः । भास्याम्यहमिति चन्द्रमाः । एवमन्या देवता यथादैवतम् । सोऽध्यात्मं वागादीनामेषां प्राणानां मध्ये मध्यमः प्राणो मृत्युनाऽनाप्तः । स्वकर्मणो न प्रच्यावितः स्वेन प्राणव्रतेनाभग्नव्रतो यथैवमेतासामग्न्यादीनां देवतानां वायुरपि । म्लोचन्त्यस्तं यन्ति स्वकर्मभ्य उपरमन्ते यथाऽध्यात्मं वागादयोऽन्या देवता अग्न्याद्या न वायुरस्तं याति यथा मध्यमः प्राणोऽतः सैषाऽनस्तमिता देवता यद्वायुर्योऽयं वायुः । एवमध्यात्ममधिदैवञ्च मीमांसित्वा निर्धारितं प्राणवाय्वात्मनोर्व्रतमभग्नमिति ॥२२॥

अथैतस्यैवार्थस्य प्रकाशक एष श्लोको मन्त्रो भवति । यतश्च यस्माद्वायोरुदेत्युद्गच्छति सूर्योऽध्यात्मञ्च चक्षुरात्मना प्राणादस्तञ्च यत्र वायौ प्राणे च गच्छत्यपरसन्ध्यासमये स्वापसमये च पुरुषस्य तं देवास्तं धर्मं देवाश्चक्रिरे धृतवन्तो वागादयोऽग्न्यादयश्च प्राणव्रतं वायुव्रतञ्च पुरा विचार्य च स एवाद्येदानीं श्वोऽपि भविष्यत्यपि कालेऽनुवर्तते ऽनुवर्तिष्यते च दैवैरित्यभिप्रायः । तत्रेमं मन्त्रं सङ्क्षेपतो व्याचष्टे ब्राह्मणम् । प्राणाद्वा एष सूर्य उदेति प्राणेऽस्तमेति । तं देवाश्चक्रिरे धर्मं स एवाद्य स उ श्व इत्यस्य कोऽर्थं इत्युच्यते । यद्वा एते व्रतममुर्ह्यमुष्मिन्काले

तस्या वशस्तापत्य. । कस्येद फलमित्युक्ते पूर्वोक्तमेव स्फुटयति—य एवमित्यादिना । न केवलं विद्याया यथोक्तमेव फलं किन्तु फलान्तरमप्यस्तीत्याह—किञ्चेति । प्राणविदा सह स्पर्धा न कर्तव्येति भावः । इत्यध्यात्ममित्यस्याऽऽनर्थक्यमाशङ्क्याऽऽह—इत्येवमिति ॥२१॥

अध्यात्मदर्शनमुक्त्वाऽधिदैवतदर्शनं वक्तुमनन्तरवाक्यमवतारयति—अथेति । तर्हि ज्वलिष्यामित्यादि किमर्थमित्याशङ्क्याऽऽह—कस्येति । वदिष्यामीत्यादावुक्त व्याख्यानमिहापि द्रष्टव्यमित्याह—अध्यात्मवदिति । यथादैवतं स्व स्वं देवताव्यापारमनतिक्रम्यान्या देवता विद्युदाद्या दध्रिरे व्रतमित्यर्थं । स यथेत्यादि व्याचष्टे—सोऽध्यात्ममिति । वायुरपि मृत्युनाऽनाप्तः स्वकर्मणो न प्रच्यावितः स्वेन वायुव्रतेनाभग्नव्रत इति शेषः । तदेव साधयति—म्लोचन्तीति । ब्राह्मणोक्तमर्थमुपसंहरति—एवमिति ॥२२॥

ब्राह्मणार्थदार्ढ्यार्थं मन्त्रमवतार्य व्याकरोति—अथेत्यादिना । सूर्योऽधिदैवमुदयकाले वायोरुद्गच्छति । तत्र चापरसन्ध्यासमयेऽस्तं गच्छति । स एव चाध्यात्मं प्रबोधसमये चक्षुरात्मना प्राणादुदेति पुरुषस्य स्वापसमये च तस्मिन्नेवास्तं गच्छतीति यतश्चेत्यादौ विभागः । श्लोकस्योत्तरार्धं प्राणादित्यादिब्राह्मणव्यवहितं श्लोके पूर्णताज्ञापनार्थं प्रथमं व्याचष्टे—तं देवा इति । धारणस्य प्रकृतत्वात्सामान्येन च विशेषं लक्षयित्वाऽऽह—धृतवन्त इति । स एवेति धर्मपरामर्शः । तत्रेति सप्तमी सम्पूर्णमन्त्रमधिकरोति । इमं मन्त्रमिति पूर्वार्धोक्तिः । उत्तरार्धस्य ब्राह्मणमाकाङ्क्षापूर्वं-

अथ पञ्चमाध्यायस्य षष्ठं ब्राह्मणम्

**त्रयं वा इदं नाम रूपं कर्म तेषां नाम्नां वागित्येतदेषामु क्थमतो हि सर्वाणि नामान्युत्ति। एतदेषाँ सामैतद्धि सर्वैर्नामभिः सममेतदेषां ब्रह्मैतद्धि सर्वाणि नामानि बिभर्ति ॥१॥**

५ वागादयोऽग्न्यादयश्च प्राणव्रतं वायुव्रतं चाश्रियन्त तदेवाद्यापि कुर्वन्त्यनुवर्तन्तेऽनुवर्तिष्यन्ते च व्रतं तैरभग्नमेव। यत्तु वागादिव्रतमग्न्यादिव्रतं च तद्भग्नमेव। तेषामस्तमनकाले स्वापकाले च वायौ प्राणे च निम्लुक्तिदर्शनात्। अथैतदन्यत्रोक्तम्—"यदा वै पुरुषः स्वपिति प्राणं तर्हि वागप्येति प्राणं चक्षुः प्राणं श्रोत्रं प्राणं मनः यदा प्रबुध्यते प्राणादेवाधि पुनर्जायन्त इत्यध्यात्ममथाधिदैवतं यदा वा अग्निरनुगच्छति वायुं तर्ह्यनूद्वाति तस्मादेनमुदवासी-दित्याहुर्वायुं ह्यनूद्वाति यदादित्योऽस्तमेति वायुं तर्हि प्रविशति वायुं चन्द्रमा वायौ दिशः प्रतिष्ठिता वायोरेवाधि
१० पुनर्जायन्ते" इति।

यस्मादेतदेव व्रतं वागादिष्वग्न्यादिषु चानुगतं, यदेतद्वायोश्च प्राणस्य च परिस्पन्दात्मकत्वं सर्वैर्देवैरनुवर्त्य-मानं व्रतं, तस्मादन्योऽप्येकमेव व्रतं चरेत्। किं तत्प्राण्यात्प्राणनव्यापारं कुर्यादपान्यादपानव्यापारं च। न हि प्राणापानव्यापारस्य प्राणनापानलक्षणस्योपरमोऽस्ति। तस्मात्तदेवैकं व्रतं चरेद्धित्वेन्द्रियान्तरव्यापारं नेन्मा मां पाप्मा मृत्युः श्रमरूप्याप्नुवदाप्नुयात्। नेच्छब्दः परिभये। यद्यहमस्माद्व्रतात्प्रच्युतः स्यां ग्रस्त एवाहं
१५ मृत्युनेत्येवं त्रस्तो धारयेत्प्राणव्रतमित्यभिप्रायः। यदि कदाचिदु चरेत्प्रारभेत प्राणव्रतं समापिपयिषेत्समापयितु-मिच्छेद्यदि ह्यस्माद्व्रतादुपरमेत्प्राणः परिभूतः स्याद्देवाश्च। तस्मात्समापयेदेव। तेन उ तेनानेन व्रतेन प्राणात्म-प्रतिपत्त्या सर्वभूतेषु वागादयोऽग्न्यादयश्च मदात्मका एवाहं प्राण आत्मा सर्वपरिस्पन्दकृदेवं तेनानेन व्रतधारणे-नैतस्या एव प्राणदेवतायाः सायुज्यं सयुग्भावमेकात्मत्वं सलोकतां समानलोकतां वैकस्थानत्वं विज्ञानमान्द्यापेक्ष-मेतज्जयति प्राप्नोतीति ॥२३॥

२० इति बृहदारण्यकभाष्ये प्रथमाध्याये पञ्चमं ब्राह्मणम् ॥५॥

यदेतदविद्याविषयत्वेन प्रस्तुतं साध्यसाधनलक्षणं व्याकृतं जगत्प्राणात्मप्राप्त्यन्तोत्कर्षवदपि फलम्। या चैतस्य व्याकरणात्प्रागवस्थाऽव्याकृतशब्दवाच्या वृक्षबीजवत्सर्वमेतत्त्रयम्। किं तत्त्रयमित्युच्यते। नाम रूपं कर्म ...

कमुत्थाप्य व्याचष्टे—तमित्यादिना। तैरभग्नं देवैरभग्नत्वेन मीमांसितं तेऽनुगच्छन्तीत्यर्थः। विशेषणस्यार्थवत्त्वं साध-यति—यत्त्विति। उक्तं हेतुमग्निरहस्यमाश्रित्य विशदयति—अथेति। यथाऽत्रेत्युपमार्थोऽथशब्दः। अनुगच्छति
२५ शाम्यतीत्येतत्। वायुमनु तदधीन एव तस्मिन्काल उद्वात्यस्तमेति। उदवासीदस्तं गत इत्यर्थः। इतिशब्दोऽग्निर-स्य-वाक्यसमाप्त्यर्थः।

अध्यात्मं प्राणव्रतमधिदैवञ्च वायुव्रतमित्येकमेव व्रतं धार्यमिति मन्त्रब्राह्मणाभ्यां प्रतिपाद्य तस्मादिति व्याचष्टे—यस्मादिति। न हि वागादयोऽग्न्यादयो वा परिस्पन्दविरहिणः स्थातुमर्हन्ति तेन प्राणादिव्रतं तैरनुवर्त्यत एवेत्यर्थः। एकमेवेति नियमे प्राणव्यापारस्याभग्नत्वं हेतुमाह—नहीति। तदनुपरमे फलितमाह—तस्मादिति। ननु
३० प्राणनाद्यभावे जीवनासम्भवात्तस्याऽर्थिकत्वात्तदनुष्ठानमविधेयमित्याशङ्क्यैवकारलभ्यं नियमं दर्शयति—हित्वेति। नेदित्यादिवाक्यस्याक्षरार्थमुक्त्वा तात्पर्यार्थमाह—यद्यहमिति। प्राणव्रतस्य सकृदनुष्ठानमाशङ्क्य सर्वेन्द्रियव्यापार-निवृत्तिरूपं संन्यासमामरणमनुवर्तयेदित्याह—यदीति। विपक्षे दोषमाह—यदि हीति। प्राणादिपरिभवपरिहारार्थं नियमं निगमयति—तस्मादिति। विद्याफलं वक्तुं भूमिकां करोति—तेनेति। व्रतमेव विशिनष्टि—प्राणेति। प्रति-पत्तिमेव प्रकटयति—सर्वभूतेष्विति। सम्प्रति विद्याफलं कथयति—एवमिति। कथमेकस्मिन्नेव विज्ञाने फलविकल्पः
३५ स्यादित्याशङ्क्य विज्ञानप्रकर्षापेक्षं सायुज्यं तन्निकर्षापेक्षं च सालोक्यमित्याह—विज्ञानेति ॥२३॥

इति बृहदारण्यकभाष्यटीकायां प्रथमाध्याये पञ्चमं ब्राह्मणम् ॥५॥

प्रपञ्चितस्याविद्याकार्यस्य सङ्क्षेपेणोपसंहारार्थं ब्राह्मणान्तरमवतारयति—तदेतदिति। फलमपि ज्ञानकर्मणो-रुक्तविशेषणवद्यदेतत्प्रस्तुतमिति सम्बन्धः। अव्याकृतप्रक्रियायामुक्तं स्मारयति—या चेति। व्याकृताव्याकृतस्य जगतः

कर्म चेत्यनात्मैव नाऽऽत्मा यत्साक्षादपरोक्षाद्ब्रह्म। तस्मादस्माद्विरज्येतेत्येवमर्थस्त्रयं वा इत्याद्यारम्भः। न ह्यस्मादनात्मनोऽव्यावृत्तचित्तस्याऽऽत्मानमेव लोकमहं ब्रह्मास्मीत्युपासितुं बुद्धिः प्रवर्तते। बाह्यप्रत्यगात्मप्रवृत्त्योर्विरोधात्। यथा च काठके—

> "पराञ्चि खानि व्यतृणत्स्वयम्भूस्तस्मात्पराङ्पश्यति नान्तरात्मन्।
> कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्" इत्यादि। ५

कथं पुनरस्य व्याकृताव्याकृतस्य क्रियाकारकफलात्मनः संसारस्य नामरूपकर्मात्मकतैव न पुनरात्मत्वमित्येतत्सम्भावयितुं शक्यत इति। अत्रोच्यते—तेषां नाम्नां यथोपन्यस्तानां वागिति शब्दसामान्यमुच्यते। यः कश्च शब्दो वागेव सेत्युक्तत्वाद्वागित्येतस्य शब्दस्य योऽर्थः शब्दसामान्यमात्रमेतदेषां नामविशेषाणामुक्थं कारणमुपादानं सैन्धवलवणकणानामिव सैन्धवाचलस्तदाहातो ह्यस्मान्नामसामान्यात्सर्वाणि नामानि यज्ञदत्तो देवदत्त इत्येवमादिप्रविभागान्युत्तिष्ठन्त्युत्पद्यन्ते प्रविभज्यन्ते लवणाचलादिव लवणकणाः। कार्यञ्च कारणेनाव्यतिरिक्तम्। १० तथा विशेषाणाञ्च सामान्येऽन्तर्भावात्।

कथं सामान्यविशेषभाव इति। एतच्छब्दसामान्यमेषां नामविशेषाणां साम समत्वात्साम सामान्यमित्यर्थः। एतद्धि यस्मात्सर्वैर्नामभिरात्मविशेषैः समम्। किञ्चाऽऽत्मलाभाविशेषाच्च नामविशेषाणाम्। यस्य सङ्गृहीतं रूपमाह—सर्वमिति। वाङ्मनःप्राणाख्यं त्रयमिति शङ्कां प्रत्याह—किं तदित्यादिना। किमर्थः पुनरयमुपसंहार इत्याशङ्क्याऽऽह—अनात्मैवेति। आत्मशब्दार्थमाह—यत्साक्षादिति। अनात्मत्वेन जगतो हेयत्वं तच्छब्देन १५ परामृश्यते। वैराग्यमपि किमर्थमित्याशङ्क्याऽऽह—न हीति। अविरक्तोऽपि कुतूहलितया तत्राधिकारी स्यादित्याशङ्क्याऽऽह—बाह्येति। अनात्मप्रवणमप्यात्मानं प्रत्याययिष्यत्यात्मनः सर्वात्मत्वात्कुतो विरोध इत्याशङ्क्याह—तथेति। कथं तर्हि प्रत्यगात्मधीस्तत्राऽऽह—कश्चिदिति।

उपसंहारस्येत्थं सफलत्वेऽपि सर्वस्य जगतो नामादिमात्रत्वं प्रमाणाभावदयुक्तमिति शङ्कते—कथमिति। अनुमानैः सम्भावनां दर्शयति—अत्रेति। तत्र तत्कार्यत्वहेतुकमनुमानमाह—तेषामिति। वागित्येतदुक्थमिति २० सम्बन्धः। इन्द्रियव्यावृत्त्यर्थं वाक्पदार्थमाह—शब्देति। सङ्गृहीतमर्थं विवृणोति—यः कश्चेत्यादिना। उक्थत्वमुपपादयितुमुत्तरं वाक्यमित्याह—तदाहेति। कार्यकारणभावेऽपि किमायातमत आह—कार्यञ्चेति। सर्वे नामविशेषास्तन्मात्रत्वात्तत्त्वतो न भिद्यन्ते तत्कार्यत्वाद्यद्यत्कार्यं तत्ततो न भिद्यते यथा मृदो घट इत्यर्थः। सर्वे नामविशेषास्तत्सामान्ये कल्पिताः प्रत्येकं तदनुविद्धत्वाद्रज्ज्वदंशानुविद्धसर्पादिवदित्यनुमानान्तरमाह—तथेति। कार्याणां कारणेऽन्तर्भाववदिति यावत्। २५

उक्तमेव प्रश्नपूर्वकं प्रपञ्चयति—कथमित्यादिना। सामत्वं साधयति—एतद्धीति। इतश्च नामविशेषा नाममात्रेऽन्तर्भवन्तीत्याह—किञ्चेति। नामविशेषाणां नाममात्रादात्मलाभात्तस्मादविशेषात्तत्रैवान्तर्भाव इत्यक्षरार्थः। सर्वे नामविशेषास्तत्सामान्यान्न पृथग्वस्तुतः सन्ति तेनाऽऽत्मवत्त्वाद्ये येनाऽऽत्मवन्तस्ते ततोऽन्ये वस्तुतो न सन्ति यथा मृदाऽऽत्मवन्तो घटादयो वस्तुतस्ततोऽन्ये न सन्तीत्युक्तेऽनुमाने व्याप्तिं साधयति—यस्य चेति। हेतुसमर्थनार्थमुत्तरं

१. यस्य च यस्मादिति उपादानोपादेययोरैक्य उपादानमेव सत्यम् उपादेयं तु घटादि मिथ्येत्युक्तं 'वाचारम्भण' ३० श्रुतेरित्यर्थः। सर्वं नामरूपकर्म सामान्यापेक्षया पृथक् न भवति मिथ्येत्यर्थः। नामरूपकर्माणि ब्रह्मव्यतिरेकेण न सन्ति त्रिषु पर्यायेषु 'ब्रह्मैतद्धि' इति ब्रह्माभेदबोधनात् तथा च वैराग्यार्थं प्रपञ्चमिथ्यात्वोक्तिरित्यर्थः। अत्र विस्तरेण भेदखण्डनं वार्तिके दृष्टव्यम् ( १-६ )।

२. सर्वे नामविशेषास्तत्सामान्ये कल्पिताः तत्त्वतः न भिद्यन्ते। पारमार्थिकभेदाप्रतियोगिनः अपि तु तत्र कल्पिता इत्यर्थः। तत्कार्यत्वात् मृत्कार्यघटादिकं यथा मिथ्या मृत्तिकेत्येव सत्य विकारो नामधेयं इति शास्त्रात्। द्वितीय- ३५ हेतुस्तु 'प्रत्येकं तदनुविद्धप्रतीतिविषयत्वात्' इति। तच्च स्वतादात्म्यविषयतानिरूपितनिरवच्छिन्नप्रकारत्वात् यथा रज्जौ इदमंशे तादृग्प्रकारताश्रयसर्पदण्डधारादिः इत्यर्थः। अत्र भाष्ये आत्मलाभः = उत्पत्तिः।

३. अविभक्तो दृष्टः तादात्म्येनानुभूयत इत्यर्थः मृद् घट इति मृत्तादात्म्येन दृष्टो घटः। तच्च तादात्म्यं नात्यन्ताभेदः। घटो घट इति प्रतीत्यापत्तेः। नापि अत्यन्तभेदः घटः पट इत्यापत्तेः। अपि तु भेदाभेदः तत्राभेदः व्यावहारिकः भेदस्तु प्रातीतिक इत्यन्यत्र निरूपणात् कल्पितत्वसिद्धिः। ४०

अथ रूपाणां चक्षुरित्येतदेषामुक्थमतो हि सर्वाणि रूपाण्युत्तिष्ठन्त्येतदेषाँ
सामैतद्धि सर्वैः रूपैः सममेतदेषां ब्रह्मैतद्धि सर्वाणि रूपाणि बिभर्ति ॥२॥
अथ कर्मणामात्मेत्येतदेषामुक्थमतो हि सर्वाणि कर्माण्युत्तिष्ठन्त्येतदेषाँ
सामैतद्धि सर्वैः कर्मभिः सममेतदेषां ब्रह्मैतद्धि सर्वाणि कर्माणि बिभर्ति
५ तदेतत्त्रयँ सदेकमयमात्माऽऽत्मो एकः सन्नेतत्त्रयं तदेतदमृतँ सत्येन
च्छन्नं प्राणो वा अमृतं नामरूपे सत्यं ताभ्यामयं प्राणश्छन्नः ॥३॥

च यस्मादात्मलाभो भवति स तेनाप्रविभक्तो दृष्टो यथा घटादीनां मृदा। कथं नामविशेषाणामात्मलाभो वाच इत्युच्यते यत एतदेषां वाक्शब्दवाच्यं वस्तु ब्रह्माऽऽत्मा। ततो ह्यात्मलाभो नाम्नां शब्दव्यतिरिक्तस्वरूपानुपपत्तेः। तत्प्रतिपादयत्येतच्छब्दसामान्यं हि यस्माच्छब्दविशेषान्सर्वाणि नामानि बिभर्ति धारयति स्वरूपप्रदानेन।
१० एवं कार्यकारणत्वोपपत्तेः सामान्यविशेषोपपत्तेरात्मप्रदानोपपत्तेश्च नामविशेषाणां शब्दमात्रता सिद्धा। एवमुत्तरयोरपि सर्वं योज्यं यथोक्तम् ॥ १ ॥

अथेदानीं रूपाणां सितासितप्रभृतीनां चक्षुरिति चक्षुर्विषयसामान्यं चक्षुः शब्दाभिधेयं रूपसामान्यं प्रकाश्यमात्रमभिधीयते। अतो हि सर्वाणि रूपाण्युत्तिष्ठन्त्येतदेषां सामैतद्धि सर्वै रूपैः सममेतदेषा ब्रह्मैतद्धि सर्वाणि रूपाणि बिभर्ति ॥ २ ॥

१५ अथेदानीं सर्वकर्मविशेषाणां मननदर्शनात्मकानां चलनात्मकानाञ्च क्रियासामान्यमात्रेऽन्तर्भाव उच्यते। कथं, सर्वेषां कर्मविशेषाणामात्मा शरीरं सामान्यमात्माऽऽत्मनः कर्माऽऽत्मेत्युच्यते। आत्मना हि शरीरेण कर्म करोतीत्युक्तम्। शरीरे च सर्वं कर्माभिव्यज्यते। अतस्तात्स्थ्यात्तच्छब्दं कर्मसामान्यमात्रं सर्वेषामुक्थमित्यादि पूर्ववत्। तदेतद्यथोक्तं नाम रूपं कर्म त्रयमितरेतराश्रयमितरेतराभिव्यक्तिकारणमितरेतरप्रलयं संहतं त्रिदण्डविष्टम्भवत्सदेकम्। केनाऽऽत्मनैकत्वमित्युच्यते। अयमात्माऽयं पिण्डः कार्यकरणात्मसङ्घातस्तथाऽन्नत्रये व्याख्यात एतन्मयो
२० वा अयमात्मेत्यादिना। एतावद्धीदं सर्वं व्याकृतमव्याकृतञ्च यदुत नाम रूपं कर्मेत्यात्मा उ एकोऽयं कार्यकरण-

वाक्यमुत्थापयति—कथमित्यादिना। अतः शब्दमात्रात्तद्विशेषाणामात्मलाभो भवतीति शेषः। तत्रैव युक्तिमाह—ततो हीति। तत्रैव वाक्यमवतार्य व्याचष्टे—तदित्यादिना। तस्मात्तन्मात्रात्तद्विशेषणामात्मलाभ इति वाक्यशेषः। प्रथमकण्डिकया सिद्धमर्थमुपसंहरति—एवमिति। उपपत्तित्रयमुत्तरवाक्यद्वयेऽपि तुल्यमित्यादिशति—एवमुत्तरयोरिति ॥१॥

तत्र व्याख्यानसापेक्षाणि पदानि व्याकरोति—अथेत्यादिना। नामव्याख्यानानन्तर्यमथशब्दार्थः। चक्षु-
२५ रुक्थमिति सम्बन्धः। चक्षुरिति चक्षुःशब्दाभिधेयं चक्षुर्विषयसामान्यमभिधीयते तच्च रूपसामान्य तदपि प्रकाश्यमात्रमिति योजना ॥२॥

रूपप्रकरणानन्तर्यमथेत्युच्यते। क्रियाविशेषाणा क्रियामात्रेऽन्तर्भाव प्रश्नद्वारा स्फोरयति—कथमित्यादिना। आत्मशब्देनात्र शरीरनिर्वर्त्यकर्मग्रहणे पुरुषविधब्राह्मणशेषमनुकूलयति—आत्मना हीति। तत्रैवोपपत्तिमाह—शरीरे चेति। तथाऽपि कथमात्मशब्दः शरीरनिर्वर्त्यं कर्म ब्रूयादित्याशङ्क्य लक्षणयेत्याह—अत इति। सङ्क्षेपस्यापि
३० सङ्क्षेपान्तरमाह—तदेतदिति। तदेतत्त्रयं त्रिदण्डविष्टम्भवत्संहतं सदेकमिति सम्बन्धः। कथ संहतत्वमत आह—इतरेतराश्रयमिति। रूप विषयमाश्रित्य नामकर्मणी सिध्यत स्वातन्त्र्येण निर्विषययोस्तयोः सिद्ध्यदर्शनान्नामकर्मणी चाऽऽश्रित्य रूपं सिध्यति। न हि ते हित्वा किञ्चिदुत्पद्यत इत्यर्थः। वाचकेन वाच्यस्य ते तरस्य ताभ्याञ्च क्रियायास्तथा तयोरपेक्षादर्शनादन्योन्यमभिव्यञ्जकत्वमाह—इतरेतरेति। सति नाम्नि रूपसंहारदर्शनाद्रूपे च सति नामसंहारदृष्टेः सतोश्च तयोः कर्मणस्तस्मिंश्च सति तयोरुपसंहारोपलम्भादितरेतरप्रलयमित्याह—इतरेतरप्रलयमिति। कथ कार्यकरणसङ्घातात्मना त्रयाणामेकत्व तत्राऽऽह—
३५ त्रयाणामेकत्वं विरुद्धमिति शङ्कित्वा परिहरति—केनेत्यादिना। कथ कार्यकरणसङ्घातमात्रत्वेऽपि ततो व्यतिरिक्त सङ्घातादन्यत्स्यादित्याशङ्क्याऽऽह—एतावदिति। नामरूपकर्मणा कार्यकरणसङ्घातमात्रत्वेऽपि ततो व्यतिरिक्त सङ्घातादन्यत्स्यादित्याशङ्क्याऽऽह—एतावदिति।

---

१. अथ कर्मणामात्मेति शरीरमुच्यते कर्माणि शरीरव्यतिरेकेण न सन्ति मिथ्येत्यर्थः।

# अथ द्वितीयोऽध्यायः

## द्वितीयाध्यायस्य प्रथमं ब्राह्मणम्

ओं । दृप्तबालाकिर्हानूचानो गार्ग्य आस स होवाचाजातशत्रुं
काश्यं ब्रह्म ते ब्रवाणीति । स होवाचाजातशत्रुः सहस्रमेतस्यां
वाचि दद्मो जनको जनक इति वै जना धावन्तीति ॥१॥ १

सङ्घातः सन्नध्यात्माधिभूताधिदैवभावेन व्यवस्थितमेतदेव त्रयं नाम रूपं कर्मेति ।

तदेतद्वक्ष्यमाणम् । अमृतं सत्येन च्छन्नमित्येतस्य वाक्यस्यार्थमाह—प्राणो वा अमृतं करणात्मकोऽन्तरुप-ष्टम्भक आत्मभूतोऽमृतोऽविनाशी । नामरूपे सत्यं कार्यात्मके शरीरावस्थे क्रियात्मकस्तु प्राणस्तयोरुपष्टम्भको बाह्याभ्यां शरीरात्मकाभ्यामुपजनापायधर्मिभ्यां मर्त्याभ्यां छन्नोऽप्रकाशीकृतः । एतदेव संसारसतत्त्वमविद्याविषयं प्रदर्शितम् । अत ऊर्ध्वं विद्याविषय आत्माऽधिगन्तव्य इति चतुर्थ आरभ्यते ॥३॥ १०

इति वृहदारण्यकभाष्ये प्रथमाध्याये षष्ठं ब्राह्मणम् ॥ ६ ॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्यस्य श्रीशङ्करभगवतः
कृतौ वृहदारण्यकभाष्ये प्रथमोऽध्यायः ॥ १ ॥

आत्मेत्येवोपासीत तदन्वेषणे च सर्वमन्विष्टं स्यात्तदेव चाऽऽत्मतत्त्वं सर्वस्मात्प्रेयस्त्वादन्वेष्टव्यम् । आत्मा-नमेवावेदहं ब्रह्मास्मीत्यात्मतत्त्वमेकं विद्याविषयः । यस्तु भेददृष्टिविषयः सोऽन्योऽसावन्योऽहमस्मीति न स वेदेत्य- १५ विद्याविषयः । "एकधैवानुद्रष्टव्यम्" "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" इत्येवमादिभिः प्रविभक्तौ

नामादित्रयस्य सङ्घातमात्रत्वे कथं व्यवहारासाङ्कर्यमित्याशङ्क्याऽऽह—आत्मेति । सङ्घातोऽयमात्मशब्दितः स्वयमेकोऽपि सन्नध्यात्मादिभेदेन स्थित त्रयमेव भवतीति व्यवहारासाङ्कर्यमित्यर्थः ।

एकस्मिन्नपि सङ्घाते कारणरूपेणावान्तरविभागमाह—तदेतदिति । आत्मभूतस्तस्योपाधित्वेन स्थित इति यावत् । अविनाशी स्थूलदेहे गच्छत्यपि यावन्मोक्षं न गच्छतीत्यर्थः । सच्च त्यच्च सत्यं भूतपञ्चकं तदात्मके नामरूपे २० इत्याह—नामेति । कारणयाथात्म्यं कथयति—क्रियात्मकस्त्विति । पञ्चीकृतपञ्चमहाभूतात्मकं तत्कार्यं सर्वं सच्च त्यच्चेति व्युत्पत्तेः सत्यं वैराजं शरीरं कार्यमपञ्चीकृतपञ्चमहाभूततत्कार्यात्मककरणरूपसप्तदशकलिङ्गस्य सूत्राख्य-स्याऽऽयतनं तस्यैवाऽऽच्छादकं तत्खल्वनात्माऽपि स्थूलदेहच्छन्नत्वाद्दुर्विज्ञानं तेनापि च्छन्नं प्रत्यग्वस्तु सुतरामिति तज्ज्ञानेऽत्यहितैर्भाव्यमिति भावः । इदानीमविद्याकार्यप्रपञ्चमुपसंहरति—एतदिति । अविद्याविषयविवरणस्य वक्ष्य-माणोपयोगमुपसंहरति—अत इति । प्रपञ्चिते सत्यविद्याविषये ततो विरक्तस्याऽऽत्मानं विविदिषोस्तज्ज्ञापनार्थं चतुर्थ- २५ प्रमुखः सन्दर्भो भविष्यति । तस्मादविद्याविषयविवरणमुपयोगीति भावः ॥३॥

इति वृहदारण्यकभाष्यटीकायां षष्ठं ब्राह्मणम् ॥६॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्येण भगवदानन्दज्ञानेन
कृतायां वृहदारण्यकोपनिषद्भाष्यटीकायां प्रथमोऽध्यायः ॥१॥

तृतीयेऽध्याये सूत्रितविद्याविद्ययोरविद्या प्रपञ्चिता, सम्प्रति विद्यां प्रपञ्चयितुं चतुर्थमध्यायमारभमाणो वृत्तं ३० कीर्तयति—आत्मेति । किमित्यर्थान्तरेषु सत्स्वात्मतत्त्वमेवानुसन्धातव्यं तत्राऽऽह—तदन्वेषणे चेति । तस्यैवान्वेष्ट-व्यत्वे परप्रेमास्पदत्वेन परमानन्दत्वं हेत्वन्तरमाह—तदेवेति । आत्मतत्त्वज्ञानस्य सर्वाप्तिफलत्वाच्च तदेवान्वेष्टव्य-मित्याह—आत्मानमिति । उक्तया परिपाट्या सिद्धमर्थं सङ्गृह्णाति—आत्मतत्त्वमिति । उक्तमर्थान्तरमनुवदति—यस्त्विति । सोऽविद्याविषय इति सम्बन्धः । कथं भेददृष्टिविषयस्याविद्याविषयत्वं तत्राऽऽह—अन्योऽसाविति । यो भेददृष्टिपर स न वेदेत्यविद्या तद्दृष्टिमूलं सूत्रिता तेन तद्विषयो भेददृष्टिविषय इत्यर्थः । कथं यथोक्तौ विद्याविद्याविष- ३५ यावसङ्कीर्णाववसातुं शक्येते तत्राऽऽह—एकधेति । सप्तान्नब्राह्मणे वृत्तमर्थं कथयति—तत्र चेति । विद्याविद्याविषययोरिति यावत् । आदिपदं साध्यसाधनावान्तरभेदसङ्ग्रहार्थम् । यथोक्तो भेद एव विक्षेपः । तस्मिन्विनियोगो व्यवस्थापनं

विद्याविषयौ सर्वोपनिषत्सु । तत्र चाविद्याविषयः सर्व एव साध्यसाधनादिभेदविशेषविनियोगेन व्याख्यात आ तृतीयाध्यायपरिसमाप्तेः । स च व्याख्यातोऽविद्याविषयः सर्व एव द्विप्रकारः । अन्तःप्राण उपष्टम्भको गृहस्येव स्तम्भादिलक्षणः प्रकाशकोऽमृतः । बाह्यश्च कार्यलक्षणोऽप्रकाशक उपजनापायधर्मकस्तृणकुशमृत्तिकासमो गृहस्येव सत्यशब्दवाच्यो मर्त्यः । तेनामृतशब्दवाच्यः प्राणश्छन्न इति चोपसंहृतम् ।

५ स एव च प्राणो बाह्याधारभेदेष्वनेकधा विस्तृतः । प्राण एको देव इत्युच्यते । तस्यैव बाह्यः पिण्ड एकः साधारणो विराड्वैश्वानर आत्मा पुरुषविधः प्रजापतिः को हिरण्यगर्भ इत्यादिभिः पिण्डप्रधानैः शब्दैराख्यायते सूर्यादिप्रविभक्तकरणः । एकं चानेकं च ब्रह्मैतावदेव नातः परमस्ति प्रत्येकं च शरीरभेदेषु परिसमाप्तं चेतनावत्कर्तृ भोक्तृ चेत्यविद्याविषयमेवाऽऽत्मत्वेनोपगतो गार्ग्यो ब्राह्मणो वक्तोपस्थाप्यते । तद्विपरीतात्मदृगजातशत्रुः श्रोता ।

एवं हि यतः । पूर्वपक्षसिद्धान्ताख्यायिकारूपेण समर्प्यमाणोऽर्थः श्रोतुश्चित्तस्य वशमेति । विपर्यये हि १० तर्कशास्त्रवत्केवलार्थानुगमवाक्यैः समर्प्यमाणो दुर्विज्ञेयः स्यादत्यन्तसूक्ष्मत्वाद्वस्तुनः । तथा च काठके—"श्रवणायापि बहुभिर्यो न लभ्यः" इत्यादिवाक्यैः सुसंस्कृतदेवबुद्धिगम्यत्वं सामान्यमात्रबुद्ध्यगम्यत्वं च सप्रपञ्चं दर्शितम् ।

तेनेत्यर्थ. । उपसंहारब्राह्मणान्ते वृत्तमनुभाषते—स चेति । अथवोक्तौ विद्याविद्याविषयौ कथमसङ्कीर्णौ मन्तव्याविल्याशङ्क्याऽऽह—एकधेति । तत्रोत्तरग्रन्थस्य विषयपरिशेषार्थं पुरुषविधब्राह्मणशेषमारभ्योक्तं दर्शयति—तत्र चेति । तर्हि समाप्तत्वादविद्याविषयस्य कथमविदुषो गार्ग्यस्य प्रवृत्तिरित्याशङ्क्य तदर्थमवान्तरविभागमनुवदति—स चेति । १५ तावेव प्रकारौ दर्शयन्नादौ सूक्ष्म शरीरमुपन्यस्यति—अन्तरिति । तस्य बाह्यकरणद्वारा स्थूलेषु विषयेपु प्रकाशकत्वममृतत्वं च व्युत्पादितम् । द्वितीयं प्रकारमाचक्षाणः स्थूल शरीरं दर्शयति—बाह्यश्चेति । तस्य कयाऽपि विधया सूक्ष्मदेहं प्रत्यप्रकाशकत्वादप्रकाशकत्वम् आगमापायित्वेनावहेयत्वं सूचयति—उपजनेति । यथा गृहस्य तृणादि बहिरङ्गं तथा सूक्ष्मस्य देहस्य स्थूलो देहस्तथाऽपि तृणादि विना गृहस्य व्यवहारायोग्यत्ववत्तस्यापि स्थूलदेहं विना न तद्योग्यत्वमिति मत्वाऽऽह—तृणेति । तस्य पूर्वप्रकरणान्ते नामरूपे सत्यमित्यत्र प्रस्तुतत्वमस्तीत्याह—सत्येति । २० सर्वथा बाधवैधुर्यं सत्यत्वमिति शङ्का निरसितुं विशिनष्टि—मर्त्य इति । तस्य कार्यं दर्शयति—तेनेति ।

वृत्तमनूद्याजातशत्रुब्राह्मणमवतारयति—स एवेति । आदित्यचन्द्रादयो बाह्याधारभेदा । अनेकधात्वमतिष्ठा मूर्धेत्यादिवक्ष्यमाणगुणवशाद्द्रष्टव्यम् । कथं तर्हि तस्यैकत्वं तत्राऽऽह—प्राण इति । प्राणस्य नानात्वमेकत्वं चोक्तं तत्रैकत्वं विवृणोति—तस्यैवेति । प्राणस्यैव स्वभावभूतोऽनात्मलक्षण पिण्डः समष्टिरूपो हिरण्यगर्भादिशब्दैरुपाधिविपयैस्तत्र तत्र श्रुतिस्मृत्योरुच्यते । स च "अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ" इत्यादिश्रुतेः सूर्यादिभिः प्रविभक्तैः करणैरुपेतो २५ भवतीत्यर्थः । यद्ब्रह्म समस्तं व्यस्तं च तदिदं हिरण्यगर्भमात्रमेव न तस्मादधिकमस्तीति हिरण्यगर्भं स्तौति—एकञ्चेति । एकत्वं विशदीकृत्य प्राणस्य नानात्वं विशदयति—प्रत्येकञ्चेति । गोत्वादिसामान्यतुल्यत्वं व्यावर्तयति—चेतनावदिति । केवलभोक्तृत्वपक्ष वारयति—कर्त्रिति । वक्ता पूर्वपक्षवादीति यावत् । तस्मादमुख्याद्ब्रह्मणो विपरीत मुख्यं ब्रह्म तस्मिन्नात्मदृष्टी राजा श्रोता सिद्धान्तवादीत्यर्थ ।

किमिति वक्तृश्रोतृरूपाख्यायिका प्रणीयते तत्राऽऽह—एवं हीति । एवशब्दार्थमेव स्फुटयति—पूर्वपक्षेति । ३० अतो भवितव्यमाख्यायिकयेति शेषः । आख्यायिकानङ्गीकारे दोषमाह—विपर्यये हीति । यथा तर्कशास्त्रेण समर्प्यमाणोऽर्थो जातु न शक्यत औत्प्रेक्षिकतर्काणा निरङ्कुशत्वात्तथा केवलमर्थोऽनुगम्यते प्रश्नप्रतिवचनभावरहितैर्यैर्वाक्यैस्तैः समर्प्यमाणोऽपि दुर्विज्ञेयोऽर्थं स्याद्यद्याख्यायिका नानुश्रीयते तेन सा सुखप्रतिपत्त्यर्थमनुसर्तव्येत्यर्थ । कुतो दुर्विज्ञेयत्व तत्राऽऽह—अत्यन्तेति । यथोक्तस्य वस्तुनो दुर्विज्ञेयत्वे श्रुतिस्मृतिसंवाद दर्शयति—तथा चेति । सुसंस्कृता परिशुद्धा

१. आ तृतीयसमाप्तेः—प्रथमद्वितीयाध्ययोः प्रवर्ग्याख्यं कर्म सविस्तरमभिधीयते तच्च ज्योतिष्टोमाङ्ग, तृतीये च ३५ प्रथमब्राह्मणे अश्वमेधोपयोगिनः अश्वस्य शिरआदिषु उषःकालादिदृष्टिविधानमश्वमेधेऽनधिकृताना तत्फलप्राप्त्यर्थम् । द्वितीयब्राह्मणे अश्वमेधाङ्गस्य चित्याग्ने विराड्रूपेणोपासन तत्सायुज्यफलकं विधीयते । तृतीये प्राणोपासनं विधीयते, चतुर्थब्राह्मणे ब्रह्मविद्या । पञ्चमे च ससाधनसृष्टि. अनन्तरमध्यात्माधिदैवभेदेन प्रयोगद्वयेन वायुप्राणयोरुपासनम् मन्त्रलिङ्गैर्वेत्यादिकं सर्वं साध्यसाधनादिभेदविनियोग एव । अन्ते 'यः प्राण [illegible] [illegible] स एव हिरण्यगर्भ तस्यानानात्वप्रदर्शनपूर्वकं मुख्यात्मानं प्रदर्शयितु प्रथमं ब्राह्मणम् ।

४० २ [illegible]र्थानुगमवाक्यैः अर्थबोधकवाक्यैः तत्त्वदर्शिनः तत्त्वनाख्यान्कारयन्त. ।

स होवाच गार्ग्यो य एवासावादित्ये[1] पुरुष एतमेवाहं

"आचार्यवान्पुरुषो वेद" "आचार्याद्धैव विद्या" इति च च्छान्दोग्ये। "उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः" इति च गीतासु। इहापि च शाकल्ययाज्ञवल्क्यसंवादेनातिगह्वरत्वं महता संरम्भेण ब्रह्मणो वक्ष्यति। तस्माच्छिलष्ट एवाऽऽख्यायिकारूपेण पूर्वपक्षसिद्धान्तरूपमापाद्य वस्तुसमर्पणार्थ आरम्भः।

आचारविध्युपदेशार्थश्च। एवमाचारवतोर्वक्तृश्रोत्रोराख्यायिकानुगतोऽर्थोऽवगम्यते। केवलतर्कबुद्धि- ५ निषेधार्था चाऽऽख्यायिका। "नैषा तर्केण मतिरापनेया"। "न तर्कशास्त्रदग्धाये"ति श्रुतिस्मृतिभ्याम्। श्रद्धा च ब्रह्मविज्ञाने परमं साधनमित्याख्यायिकार्थः। तथा हि गार्ग्याजातशत्र्वोरतीव श्रद्धालुता दृश्यत आख्यायिकायाम्। "श्रद्धावाल्लभते ज्ञानम्" इति च स्मृतिः।

तत्र पूर्वपक्षवाद्यविद्याविषयब्रह्मविद्दृप्तबालाकिर्दृप्तो गर्वितोऽसम्यग्ब्रह्मवित्त्वादेव बलाकाया अपत्यं बालाकिर्दृप्तश्चासौ बालाकिश्चेति दृप्तबालाकिर्हशब्द ऐतिह्यार्थ आख्यायिकायामनूचानो[2]ऽनुवचनसमर्थो वक्ता वाग्मी गार्ग्यो १० गोत्रत आस बभूव क्वचित्कालविशेषे। स होवाचाजातशत्रुमजातशत्रुनामानं काश्यं काशिराजमभिगम्य ब्रह्म ते ब्रवाणीति ब्रह्म ते तुभ्यं ब्रवाणि कथयानि। स एवमुक्तोऽजातशत्रुरुवाच—सहस्रं गवां दद्म एतस्यां वाचि यां मां प्रत्यवोचो "ब्रह्म ते ब्रवाणी"ति। तावन्मात्रमेव गोसहस्रप्रदाने निमित्तमित्यभिप्रायः। साक्षाद्ब्रह्मकथनमेव निमित्तं कस्मान्नापेक्ष्यते सहस्रदाने ब्रह्म ते ब्रवाणीति। इयमेव तु वाङ्निमित्तमपेक्ष्यत इत्युच्यते। यतः श्रुतिरेव राज्ञोऽभिप्रायमाह—जनको दाता जनकः श्रोतेति चैतस्मिन्वाक्यद्वये पदद्वयमभ्यस्यन्ते जनको जनक इति। वैशब्दः प्रसिद्धा- १५ वद्योतनार्थः। जनको दित्सुर्जनकः शुश्रूषुरिति ब्रह्म शुश्रूषवो विवक्षवः प्रतिजिघृक्षवश्च जना धावन्त्यभिगच्छन्ति। तस्मात्तत्सर्वं मय्यपि सम्भावितवानसीति ॥१॥

देवबुद्धिः सात्त्विकी बुद्धिः। सामान्यमात्रबुद्धिस्तामसी राजसी च बुद्धिः। अतिगह्वरत्वमत्यन्तगम्भीरत्वम्। संरम्भस्तात्पर्यम्। ब्रह्मणो दुर्विज्ञेयत्वे फलितमाह—तस्मादिति।

आख्यायिकायाः सुखप्रतिपत्त्यर्थत्वमुक्त्वाऽर्थान्तरमाह—आचारेति। उत्तमादधमेन प्रणिपातोपसदनादिद्वारा २० विद्या ग्राह्या। अधमात्तूत्तमेन तद्व्यतिरेकेण श्रद्धादिमात्रेण सा लभ्येत्याचारप्रकारज्ञापनार्थश्चायमारम्भ इत्यर्थः। आख्यायिकाया यथोक्तेऽर्थेऽन्वितत्वं कथयति—एवमिति। वक्तृश्रोत्रोर्मध्ये यथोक्ताचारवता श्रोत्रा विद्या लब्धव्या। वक्त्रा च तादृशेन सोपदेष्टव्येत्येषोऽर्थोऽस्यामाख्यायिकायामनुगतो गम्यते। तस्मादाचारविशेषं दर्शयितुमेषाऽऽख्यायिका युक्तेत्यर्थः। आगमानुसारिगुरुसम्प्रदायादेव तत्त्वधीर्लभ्यते। यस्तु केवलस्तर्कस्तद्वशान्नैषा बुद्धिः सिध्यति। तथा च केवलतर्कप्रयुक्ता तत्त्वबुद्धिरितिसम्भावनानिषेधार्थाऽऽख्यायिकेति पक्षान्तरमाह—केवलेति। केवलेन तर्केण २५ तत्त्वबुद्धिर्न सिध्यतीत्यत्र श्रुतिस्मृती दर्शयति—नैषेति। मतिं दद्यादिति शेषः। प्रकारान्तरेणाऽऽख्यायिकामवतार्य तत्राऽऽख्यायिकानुगुण्यं दर्शयति—तथा हीति। श्रद्धा ब्रह्मज्ञाने परमं साधनमित्यत्र भगवतोऽपि सम्मतिमाह—श्रद्धावानिति।

आख्यायिकार्थे बहुधा स्थिते तदक्षराणि व्याचष्टे—तत्रेत्यादिना। पूर्वपक्षवादित्वे हेतुमाह—अविद्याविषयेति। गर्वितत्वे हेतुमाह—असम्यगिति। इयमेव नु वाङ्निमित्तमित्यत्रापि कस्मादित्यनुपज्यते। अतो ब्रह्म ते ब्रवाणीति ३० वागेव सहस्रदाने निमित्तमिति शेषः। श्रुतिं व्याचष्टे—जनक इति। प्रसिद्धं जनकस्य दातृत्वादि तदवद्योतको वैनिपात इति यावत्। वाक्यार्थमाह—जनको दित्सुरित्यादिना। सम्भावितवानसीति प्रागुक्तं वाङ्मात्रं सहस्रदाने निमित्तमिति शेषः। तस्मान्मुग्धप्रसिद्धयतिक्रमणा[3]दिति यावत्। तत्सर्वं दातृत्वादिकमित्यर्थः। इतिशब्दोऽभिप्रायसमाप्त्यर्थः ॥१॥

१ आदित्ये पुरुषः चन्द्रे पुरुषः इत्यादौ पुरुषः आदित्यादिगोलकाभिमानी जीवः स च सर्वोऽपि हिरण्यगर्भांश एव "कतम एको देव" इति "प्राण" इति "महिमान एवैषामेते" इति वक्ष्यमाणत्वाच्च। स च कर्तृत्वादिमान् न तु ३५ शुद्धं ब्रह्म यद्वक्तव्यत्वेन प्रक्रान्तम्।

२. अनूचानः गुरोः सकाशात् षडङ्गोपेतवेदाध्यायी।

३. मुग्धप्रसिद्धिः 'ब्रह्म ते ब्रवाणी'त्युक्त्या गार्ग्यः मुग्धः अज्ञः इति प्रसिद्धिमतिक्रान्तवान् मूढस्य ब्रह्मवदने प्रवृत्तेरप्यसम्भवात्।

ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा
अतिष्ठाः सर्वेषां भूतानां मूर्धा राजेति वा अहमेतमुपास इति
स य एतमेवमुपास्तेऽतिष्ठाः सर्वेषां भूतानां मूर्धा राजा भवति ॥२॥

स होवाच गार्ग्यो य एवासौ चन्द्रे पुरुष एतमेवाहं ब्रह्मोपास इति । स होवाचा-
५ जातशत्रुर्मा मैतस्मिन्संवदिष्ठा बृहन्पाण्डरवासाः सोमो राजेति वा अहमेत-
मुपास इति स य एतमेवमुपास्तेऽहरहर्ह सुतः प्रसुतो भवति नास्यान्नं क्षीयते ॥३॥

एवं राजानं शुश्रूषुमभिमुखीभूतं स होवाच गार्ग्यः । य एवासावादित्ये चक्षुषि चैकोऽभिमानी चक्षुर्द्वारेणेह
हृदि प्रविष्टोऽहं भोक्ता कर्ता चेत्यवस्थितः । एतमेवाहं ब्रह्म पश्याम्यस्मिन्कार्यकरणसङ्घात उपासे । तस्मात्तमह
पुरुषं ब्रह्म तुभ्यं ब्रवीम्युपास्स्वेति । स एवमुक्तः प्रत्युवाचाजातशत्रुर्मा मा; मा मेति हस्तेन विनिवारयन् । एतस्मिन्
१० ब्रह्मणि विज्ञेये मा संवदिष्ठाः । मा मेत्याबाधनार्थं द्विर्वचनम् । एवं समाने विज्ञानविषय आवयोरस्मानविज्ञानवत
इव दर्शयता बाधिताः स्याम । अतो मा संवदिष्ठा मा संवादं कार्षीरस्मिन्ब्रह्मणि । अन्यच्चेज्जानासि तद्ब्रह्म वक्तुम-
र्हसि न तु यन्मया ज्ञायत एव । अथ चेन्मन्यसे जानीषे त्वं ब्रह्ममात्रं न तु तद्विशेषणोपासनफलानीति । तन्न
मन्तव्यं यतः सर्वमेतदहं जाने यद्ब्रवीषि । कथम्, अतिष्ठा अतीत्य भूतानि तिष्ठतीत्यतिष्ठाः । सर्वेषां च भूतानां
मूर्धा शिरो राजेति वै राजा दीप्तिगुणोपेतत्वादेतैर्विशेषणैर्विशिष्टमेतद्ब्रह्मास्मिन्कार्यकरणसङ्घाते कर्तृ भोक्तृ
१५ चेत्यहमेतमुपास इति फलमप्येवं विशिष्टोपासकस्य । स य एतमेवमुपास्तेऽतिष्ठाः सर्वेषां भूतानां मूर्धा राजा भवति ।
यथागुणोपासनमेव हि फलम् । "तं यथा यथोपासते तदेव भवति" इति श्रुतेः ॥२॥

संवादेनाऽऽदित्यब्रह्मणि प्रत्याख्यातेऽजातशत्रुणा चन्द्रमसि ब्रह्मान्तरं प्रतिपेदे गार्ग्यः । य एवासौ चन्द्रे
मनसि चैकः पुरुषो भोक्ता कर्ता चेति पूर्ववद्विशेषणम् । बृहन्महान्पाण्डरं शुक्लं वासो यस्य सोऽयं पाण्डरवासा
अप्शरीरत्वात्प्राणस्य । यश्चान्नभूतोऽभिषूयते लतात्मको यज्ञे तमेकीकृत्यैतमेवाहं ब्रह्मोपासे यथोक्तगुणं य उपास्ते

२० हृदि प्रविष्टो भोक्ताऽहमित्यादि प्रत्यक्ष प्रमाणयति—अहमिति । दृष्टिफलं नैरन्तर्याभ्यास दर्शयति—उपास
इति । तावता मम किमायात तदाह—तस्मादिति । मा मेति प्रतीकमादायाभ्यासस्यार्थमाह—मा मेतीति । विनि-
वारयन्प्रत्युवाचेति सम्बन्धः । एकस्य माङो निवारकत्वमपरस्य सवादेन सङ्गतिरिति विभागे सम्भवति कुतो
द्विर्वचनमित्याशङ्क्याऽऽह—मा मेत्याबाधनार्थमिति । तदेव स्फुटयति—एवमिति । त्वदुक्तेन प्रकारेण यो विज्ञान-
विषयोऽर्थस्तस्मिन्नावयोर्विज्ञानसाम्यादेव समानेऽपि विज्ञानवत्त्वे सत्यस्मानविज्ञानवत इव स्वीकृत्य तमेवार्थमस्मान्प्रत्यु-
२५ पदेशेन ज्ञापयता भवता वयं बाधिता स्याम इति योजना । तथाऽपि गार्ग्यस्य कथमीषद्बाधनं तत्राऽऽह—अत इति ।
अतिष्ठाः सर्वेषामित्यादिवाक्यं शङ्काद्वाराऽवतार्य व्याकरोति—अथेत्यादिना । एत पुरुषमिति शेष' । इतिशब्दो गुणो-
पास्तिसमाप्त्यर्थः । पूर्वोक्तरीत्या त्रिभिर्गुणैर्विशिष्ट ब्रह्म तदुपासकस्य फलमपि जानामीत्युक्त्वा फलवाक्यमुपादत्ते—
स य इति । किमिति यथोक्त फलमुच्यते तत्राऽऽह—यथेति ॥२॥

मनसि चेति चकाराद्बुद्धौ चेत्यर्थ' । य एकः पुरुषस्तमेवाहं ब्रह्मोपासे त्व चेत्यमुपास्स्वेत्युक्ते, मा मेत्यादिना
३० प्रत्युवाचेत्याह—इति पूर्ववदिति । भानुमण्डलतो द्विगुण चन्द्रमण्डलमिति प्रसिद्धिमाश्रित्याऽऽह—महानिति । कथ
पाण्डर वासश्चन्द्राभिमानिन प्राणस्य सम्भवतीत्याशङ्क्याऽऽह—अप्शरीरत्वादिति । पुरुषो हि शरीरेण वाससेव
वेष्टितो भवति पाण्डरत्व चापा प्रसिद्धमापो वासः प्राणस्येति च श्रुतिरतो युक्तं प्राणस्य पाण्डरवासस्त्वमित्यर्थ । न
केवल सोमशब्देन चन्द्रमा गृह्यते किन्तु लताऽपि समाननामधर्मत्वादित्याह—यश्चेति । तं चन्द्रमस लतात्मक
बुद्धिनिष्ठ पुरुषमेकीकृत्याहङ्ग्रहेणोपास्तिरित्यर्थः । सम्प्रत्युपास्तिफलमाह—यथोक्तेति । यज्ञशब्देन प्रकृतिरुक्ता ।

३५ १. त्रिभिर्गुणै अतिष्ठात्वं सर्वेषा भूताना शिरस्त्वरूप प्राधान्य राजा इति प्रकाशगुणवत्त्व च तं ।
२. आपो वास' प्राणस्य प्राणश्रैष्ठ्यनिर्णयकाले किं मे वास इति प्रश्ने सति अशनात् पूर्वं पूर्वापोशन परत उत्तरा-
पोशन च यत्क्रियते तत्सावनभूता आप इत्युत्तरं दत्तमितरै गौणप्राणै. । अत एव 'अमृतापिधानमसि' इति
मन्त्रे अपिधानमाच्छादनत्वसूचक "अनग्नं कुर्वन्तो मन्यन्ते" इति चान्ते स्पष्टम् ।

स होवाच गार्ग्यो य एवासौ विद्युति पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठास्तेजस्वीति वा अहमेतमुपास इति स य एतमेवमुपास्ते तेजस्वी ह भवति तेजस्विनी हास्य प्रजा भवति ॥४॥

स होवाच गार्ग्यो य एवायमाकाशे पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठाः पूर्णमप्रवर्तीति वा अहमेतमुपास इति स य एतमेवमुपास्ते पूर्यते प्रजया पशुभिर्नास्यास्माल्लोकात्प्रजोद्वर्तते ॥५॥

स होवाच गार्ग्यो य एवायं वायौ पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा इन्द्रो वैकुण्ठोऽपराजिता सेनेति वा अहमेतमुपास इति स एतमेवमुपास्ते जिष्णुर्हापराजिष्णुर्भवत्यन्यतस्त्यजायी ॥६॥

स होवाच गार्ग्यो य एवायमग्नौ पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा विषासहिरिति वा अहमेतमुपास इति स य एतमेवमुपास्ते विषासहिर्ह भवति विषासहिर्हास्य प्रजा भवति ॥७॥

तस्याहरहः सुत सोमोऽभिषुतो भवति यज्ञे प्रसुतश्च विकारेष्वन्नं चास्य न क्षीयतेऽन्नात्मकोपासकस्य ॥३॥

तथा विद्युति त्वचि हृदये चैका देवता तेजस्वीति विशेषणं तस्यास्तत्फलं तेजस्वी ह भवति। तेजस्विनी हास्य प्रजा भवति। विद्युतां बहुत्वस्याङ्गीकरणादात्मनि प्रजायां च फलबाहुल्यम् ॥४॥

तथाऽऽकाशे हृद्याकाशे चैका पूर्णमप्रवर्ति चेति विशेषणद्वयं पूर्णत्वविशेषणफलमिदं पूर्यते प्रजया पशुभिरप्रवर्तिविशेषणफलं नास्यास्माल्लोकात्प्रजोद्वर्तत इति प्रजा सन्तानाविच्छित्तिः ॥५॥

तथा वायौ प्राणे हृदि चैका विशेषणमिन्द्रः परमेश्वरो वैकुण्ठोऽप्रसह्यो न परैर्जितपूर्वाऽपराजिता सेना मरुतां गणत्वप्रसिद्धेरुपासनफलमपि। जिष्णुर्ह जयनशीलोऽपराजिष्णुर्न च परैर्जितस्वभावो भवति। अन्यतस्त्यजाय्यन्यतस्त्यां सपत्नानां जयनशीलो भवति ॥६॥

अग्नौ वाचि हृदि चैका विशेषणं विषासहिर्मर्षयिता परेषाम्। अग्निबाहुल्यात्फलबाहुल्यं पूर्ववत् ॥७॥

विकारशब्देन विकृतयो गृह्यन्ते। यथोक्तोपासकस्य प्रकृतिविकृत्यनुष्ठानसामर्थ्यं लीलया लभ्यमित्यर्थः अन्नाक्षयस्योपासनानुसारित्वादुपपन्नत्वमभिप्रेत्योपासकं विशिनष्टि—अन्नात्मकेति ॥३॥

संवाददोषेण चन्द्रे ब्रह्मण्यपि प्रत्याख्याते ब्रह्मान्तरमाह–तथेति। कथमेकमुपासनमनेकफलमित्याशङ्क्याऽऽह–विद्युतामिति ॥४॥

अप्रवर्तित्वमप्रवर्तकत्वमक्रियावत्त्वं वा ॥५॥

कथमेकस्मिन्वायावपराजिता सेनेति गुण सम्भवति तत्राऽऽह—मरुतामिति। विशेषणत्रयस्य फलत्रयं क्रमेण व्युत्पादयति—जिष्णुरित्यादिना। अन्यतस्त्यानामन्यतो मातृतो जातानाम् ॥६॥

यद्वर्विविष्यते क्षिप्यते तत्सर्वं भस्मीकरणेन सहते तेनाग्निर्विषासहिः। यथा पूर्वं विद्युतां बाहुल्यादात्मनि प्रजाया च फलबाहुल्यमुक्तं तथाऽत्राप्यग्नीना बहुलत्वादुपासकस्याऽऽत्मनि प्रजायां च दीप्ताग्नित्वं सिध्यतीत्याह— अग्नीति ॥७॥

---

१. प्रकृतियज्ञो ज्योतिष्टोम, अग्निष्टोमसंस्थाकः। विकृतयः उक्थ्य-षोडशी-अतिरात्राप्तोर्यामादयः।

२. लीलयेति—यागे द्वादशशतं गावो दक्षिणा सहस्रं ब्राह्मणा भोजनीयाः इत्यादौ विना श्रमं धनिकस्य प्रवृत्तेः।

स होवाच गार्ग्यो य एवायमप्सु पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठाः प्रतिरूप इति वा अहमेतमुपास इति स य एतमेवमुपास्ते प्रतिरूपँ हैवैनमुपगच्छति नाप्रतिरूपमथो प्रतिरूपोऽस्माज्जायते ॥ ८ ॥

स होवाच गार्ग्यो य एवायमादर्शे पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा रोचिष्णुरिति वा अहमेतमुपास इति स य एतमेवमुपास्ते रोचिष्णुर्ह भवति रोचिष्णुर्हास्य प्रजा भवत्यथो यैः संनिगच्छति सर्वाँस्तानतिरोचते ॥ ९ ॥

स होवाच गार्ग्यो य एवायं यन्तं पश्चाच्छब्दोऽनूदेत्येतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा असुरिति वा अहमेतमुपास इति स य एतमेवमुपास्ते सर्वँ हैवास्मिँल्लोक आयुरेति नैनं पुरा कालात्प्राणो जहाति ॥१०॥

स होवाच गार्ग्यो य एवायं दिक्षु पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा द्वितीयोऽनपग इति वा अहमेतमुपास इति स य एतमेवमुपास्ते द्वितीयवान्ह भवति नास्माद्गणश्छिद्यते ॥११॥

स होवाच गार्ग्यो य एवायं छायामयः पुरुषः एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा मृत्युरिति वा अहमेतमुपास इति स य एतमेवमुपास्ते सर्वँ हैवास्मिँल्लोक आयुरेति नैनं पुरा कालान्मृत्युरागच्छति ॥१२॥

अप्सु रेतसि हृदि चैका विशेषणं प्रतिरूपोऽनुरूपः श्रुतिस्मृत्यप्रतिकूल इत्यर्थः। फलं प्रतिरूपं श्रुतिस्मृतिशासनानुरूपमेवैनमुपगच्छति प्राप्नोति न विपरीतमन्यच्चास्मात्तथाविध एवोपजायते ॥८॥

आदर्शे प्रसादस्वभावे चान्यत्र खड्गादौ हार्दे च सत्त्वशुद्धिस्वाभाव्ये चैका विशेषणं रोचिष्णुर्दीप्तिस्वभावः फलं च तदेव रोचनाधारबाहुल्यात्फलबाहुल्यम् ॥९॥

यन्तं गच्छन्तं य एवायं शब्दः पश्चात्पृष्ठतोऽनूदेत्यध्यात्मं च जीवनहेतुः प्राणस्तमेकीकृत्याऽऽहासुः प्राणो जीवनहेतुरिति गुणस्तस्य फलं सर्वमायुरस्मिँल्लोक एतीति। यथोपात्तं कर्मणाऽऽयुः कर्मफलपरिच्छिन्नकालात्पुरा पूर्वं रोगादिभिः पीड्यमानमप्येनं प्राणो न जहाति ॥१०॥

दिक्षु कर्णयोर्हृदि चैकाऽश्विनौ देवाववियुक्तस्वभावौ गुणस्तस्य द्वितीयवत्त्वमनपगत्वमवियुक्तता चान्योन्यं दिशामश्विनोश्चैवंधर्मित्वात्तदेव च फलमुपासकस्य गणाविच्छेदो द्वितीयवत्त्वं च ॥११॥

छायायां बाह्ये तमस्यध्यात्मे चाऽऽवरणात्मकेऽज्ञाने हृदि चैका देवता विशेषणं मृत्युः फलं सर्वं पूर्ववन्मृत्योरनागमनेन रोगादिपीडाभावो विशेषः ॥१२॥

प्रतिरूपत्वं प्रतिकूलत्वमित्येतद्व्यावर्तयति—अनुरूप इति। अन्यच्च फलमिति सम्बन्धः। अस्मादुपासितुरित्यर्थः। तथाविधः श्रुतिस्मृत्यनुकूल इति यावत् ॥८॥

हार्दे चेत्येतदेव स्पष्टयति—सत्त्वेति। सर्वत्रैकेति विशेषणस्य देवतेति विशेष्यतया सम्बध्यते। तदेव रोचिष्णुत्वमित्यर्थः ॥९॥

आहैतमेवाहमित्यादीति शेषः। तस्य गुणवदुपासनस्येत्यर्थः सर्वमायुरित्येतद्व्याचष्टे—यथोपात्तमिति ॥१०॥

का पुनरसावेका देवता तत्राऽऽह—आश्विनाविति। तस्य देवस्येति यावत्। यथोक्त गुणद्वयमुपपादयति—दिशामिति। द्वितीयवत्त्वं साधुभृत्यादिपरिवृतत्वम् ॥११॥

शब्दब्रह्मोपासकस्येव तमोब्रह्मोपासकस्यापि फलमित्याह—फलमिति। फलभेदाभावे कथमुपासनभेदः

१. मृत्योरनागमने पीडा रोगादिना न जायते मृत्योरागमने तु जायत एवेत्यर्थः।

**स होवाच गार्ग्यो य एवायमात्मनि पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा आत्मन्वीति वा अहमेतमुपास इति स य एतमेवमुपास्त आत्मन्वी ह भवत्यात्मन्विनी हास्य प्रजा भवति स ह तूष्णीमास गार्ग्यः ॥१३॥**

**स होवाचाजातशत्रुरेतावन्नू ३ इत्येतावद्धीति नैतावता विदितं भवतीति स होवाच गार्ग्य उप त्वाऽयानीति ॥१४॥** ५

आत्मनि प्रजापतौ बुद्धौ हृदि चैकाऽऽत्मन्व्यात्मवानिति विशेषणं फलमात्मन्वी ह भवत्यात्मवान्भवति। आत्मन्विनी हास्य प्रजा भवति बुद्धिबहुलत्वात्प्रजायां सम्पादनमिति विशेषः। स्वयं परिज्ञातत्वेनैवं क्रमेण प्रत्याख्यातेषु स गार्ग्यः क्षीणब्रह्मविज्ञानोऽप्रतिभासमानोत्तरस्तूष्णीमवाक्शिरा आस ॥१३॥

तं तथाभूतमालक्ष्य गार्ग्यं स होवाचाजातशत्रुरेतावन्नू३ इति। किमेतावद्ब्रह्म निर्ज्ञातमाहोस्विदधिकमप्यस्तीतीतर आहैतावद्धीति। नैतावता विदितेन ब्रह्म विदितं भवतीत्याहाजातशत्रुः किमर्थं गर्वितोऽसि ब्रह्म ते १० ब्रवाणीति। किमेतावद्विदितं विदितमेव न भवतीत्युच्यते। न फलवद्विज्ञानश्रवणात्। न चार्थवादत्वमेव वाक्यानामवगन्तुं शक्यम्। अपूर्वविधानपराणि हि वाक्यानि प्रत्युपासनोपदेशं लक्ष्यन्तेऽतिष्ठाः सर्वेषां भूतानामित्यादीनि। तदनुरूपाणि च फलानि सर्वत्र श्रूयन्ते विभक्तानि। अर्थवादत्व एतदसमञ्जसम्। कथं तर्हि नैतावता विदितं भवतीति। नैष दोषोऽधिकृतापेक्षत्वात्। ब्रह्मोपदेशार्थं हि शुश्रूषवेऽजातशत्रवेऽमुख्यब्रह्मविद्गार्ग्यः प्रवृत्तः स युक्त एव मुख्यब्रह्मविदाऽजातशत्रुणाऽमुख्यब्रह्मविद्गार्ग्यो वक्तुं यन्मुख्यं ब्रह्म वक्तुं प्रवृत्तस्त्वं तन्न जानीष इति। यद्यमुख्य- १५ ब्रह्मविज्ञानमपि प्रत्याख्यायेत तदैतावतेति न ब्रूयान्न किञ्चिज्ज्ञातं त्वयेत्येवं ब्रूयात्तस्माद्ब्रुवन्त्येतावन्त्यविद्याविषये ब्रह्माणि। एतावद्विज्ञानद्वारत्वाच्च परब्रह्मविज्ञानस्य युक्तमेव वक्तुं नैतावता विदितं भवतीति। अविद्याविषये विज्ञेयत्वं नामरूपकर्मात्मकत्वं चैषां तृतीयेऽध्याये प्रदर्शितम्। तस्मान्नैतावता विदितं भवतीति ब्रुवताऽधिकं ब्रह्म ज्ञातव्यमस्तीति दर्शितं भवति। तच्चानुपसन्नाय न वक्तव्यमित्याचारविधिज्ञो गार्ग्यः स्वयमेवाऽऽहोप त्वाऽयानीत्युपगच्छानीति त्वां यथाऽन्यः शिष्यो गुरुम् ॥१४॥ २०

स्यादित्याशङ्क्याऽऽह—मृत्योरिति ॥१२॥

व्यस्तानि ब्रह्माण्युक्त्वा समस्त ब्रह्मोपदिशति—प्रजापताविति। आत्मवत्त्वं वश्यात्मकत्वम्। फलस्याऽऽत्मगामित्वान्न प्रजाया तदभिधानमुचितमित्याशङ्क्याऽऽह—बुद्धिति ॥१३॥

विचारार्था प्लुतिरिति कथयति—किमेतावदिति। वाक्यार्थं चोद्यसमाधिभ्या स्फुटयति—किमित्यादिना। आदित्यादेरविदितत्वनिषेध प्रतिज्ञाय हेतुमाह—न फलवदिति। नैतानि वाक्यानि फलवद्विज्ञानपराण्यर्थवादत्वादित्या- २५ शङ्क्याऽऽह—न चेति। फलवत्त्वाच्चापूर्वविधिपराण्येतानि वाक्यानीत्याह—तदनुरूपाणीति। अर्थवादत्वेऽपि तेषामपूर्वार्थत्वं किं न स्यादित्याशङ्क्याऽऽह—अर्थवादत्व इति। वाक्याना फलवद्विज्ञानपरत्वमुपेत्य निषेधवाक्यस्य गतिं पृच्छति–कथं तर्हीति। तस्याऽऽनर्थक्य परिहरति—नैष दोष इति। अधिकृतापेक्षत्वाद्वेदनप्रतिषेधस्येत्युक्तं स्फुटयति—ब्रह्मेति। नैतावतेत्यविशेषेणामुख्यब्रह्मज्ञानमपि निषिद्धमिति चेन्नेत्याह—यदीति। किञ्च निष्कामेन चेदेतान्युपासनान्यनुष्ठीयन्ते तदैतेषा ब्रह्मज्ञानार्थत्वादमुख्यब्रह्मज्ञाननिषेधमन्तरेण न निषेधोपपत्तिरित्याह—एतावद्विज्ञानेति। आदि- ३० त्यादिकमेव मुख्यं ब्रह्मेति निषेधानर्थक्यं तदवस्थमित्याशङ्क्याऽऽह—अविद्येति। आदित्यादेर्मुख्यब्रह्मत्वासम्भवान्निषेधस्योपपन्नत्वात्तत्सामर्थ्यसिद्धमर्थमुपन्यस्यति—तस्मादिति। उपगमनवाक्यमुत्थाप्य व्याचष्टे—तच्चेति ॥१४॥

---

१. बुद्धिबहुलत्वात्—यद्यपि उपासकस्य फलं वक्तव्यं शास्त्रफलं प्रयोक्तरीतिन्यायात् तथापि प्रजापतौ बुद्धौ च हृदि चोपास्यत्वात् बुद्धिप्राधान्य गम्यते तच्च फल प्रजाया सगच्छते। उपासकस्य तु वश्यबुद्धित्वं वर्तत एव उपासकत्वादेव। अतः पुत्रेषु फलमुक्तम्। ३५

**स होवाचाजातशत्रुः प्रतिलोमं चैतद्यद्ब्राह्मणः क्षत्रियमुपेयाद्ब्रह्म मे वक्ष्यतीति व्येव त्वा ज्ञपयिष्यामीति तं पाणावादायोत्तस्थौ तौ ह पुरुषं सुप्तमाजग्मतुस्तमेतैर्नामभिरामन्त्रयांचक्रे बृहन्पाण्डरवासः सोम राजन्निति स नोत्तस्थौ तं पाणिनाऽऽपेषं बोधयांचकार स होत्तस्थौ ॥१५॥**

स होवाचाजातशत्रुः प्रतिलोमं विपरीतं चैतत्किं तद्यद्ब्राह्मण उत्तमवर्ण आचार्यत्वेऽधिकृतः सन्क्षत्रियमनाचार्यस्वभावमुपेयादुपगच्छेच्छिष्यवृत्त्या ब्रह्म मे वक्ष्यतीत्येतदाचारविधिशास्त्रेषु निषिद्धम्[1]। तस्मात्तिष्ठ त्वमाचार्य एव सन् विज्ञपयिष्याम्येव त्वामहम्। यस्मिन्विदिते ब्रह्म विदितं भवति यत्तन्मुख्यं ब्रह्म वेद्यम्। तं गार्ग्यं सलज्जमालक्ष्य विश्रम्भजननाय पाणौ हस्त आदाय गृहीत्वोत्तस्थौ उत्थितवान्। तौ ह गार्ग्याजातशत्रू पुरुषं सुप्तं राजगृहप्रदेशे क्वचिदाजग्मतुरागतौ। तं च पुरुषं सुप्तं प्राप्य एतैर्नामभिर्बृहन्पाण्डरवासः सोम राजन्नित्येतैरामन्त्रयाञ्चक्रे। एवमामन्त्र्यमाणोऽपि स सुप्तो नोत्तस्थौ। तमप्रतिबुध्यमानं पाणिनाऽऽपेषमापिष्याऽऽपिष्य[2] बोधयाञ्चकार प्रतिबोधितवान्। तेन स होत्तस्थौ। तस्माद्यो गार्ग्येणाभिप्रेतो[3] नासावस्मिञ्छरीरे कर्त्ता भोक्ता ब्रह्मेति। कथं पुनरिदमवगम्यते सुप्तपुरुषगमनतत्सम्बोधनानुत्थानैर्गार्ग्याभिमतस्य ब्रह्मणोऽब्रह्मत्वं ज्ञापितमिति। जगरितकाले यो गार्ग्याभिप्रेतः पुरुषः कर्ता भोक्ता ब्रह्म सन्निहितः करणेषु यथा तथाऽऽजातशत्र्वभिप्रेतोऽपि तत्स्वामी भृत्येष्विव राजा सन्निहित एव। किन्तु भृत्यस्वामिनोर्गार्ग्याजातशत्र्वभिप्रेतयोर्यद्विवेकावधारणकारणं[4] तत्सङ्कीर्णत्वादनव-

"अब्राह्मणादध्ययनमापत्काले विधीयते। अनुव्रज्या च शुश्रूषा यावदध्ययनं गुरोः॥
नाब्राह्मणे गुरौ शिष्यो वासमात्यन्तिकं वसेत्॥"

इत्यादीन्याचारविधिशास्त्राणि। आदित्यादिब्रह्मभ्यो विशेषमाह—यस्मिन्निति। प्राणस्य व्याप्रियमाणस्यैव सम्बोधनार्थं प्रयुक्तानामाश्रवणादापेषणाच्चोत्थानात्तस्याभोक्तृत्व सिध्यतीति फलितमाह—तस्मादिति। तौ ह सुप्तमित्यादि-सुप्तपुरुषगत्युक्तिमाक्षिपति—कथमिति। गार्ग्यकाश्याभिमतयोरुभयोरपि जागरिते करणेषु सन्निधानाविशेषात्तत्रैव किमिति विवेको न दर्शित इत्यर्थः। जागरिते करणेषु द्वयोः सन्निधानेऽपि साङ्कर्याद्[5] दुष्करं विवेचनमिति परिहरति—जागरितेति। ब्रह्मशब्दादूर्ध्वं सशब्दमध्याहृत्य योजना। तर्हि स्वामिभृत्यन्यायेन[6] तयोर्विवेकोऽपि सुकरः स्यादित्या-

1. निषिद्धमिति—तदुक्तमानन्दगिरौ—उत्तमादधमेन प्रणिपातोपसदनादिना विद्या ग्राह्या। अधमात्तूत्तमेन श्रद्धादिमात्रेण सा लभ्या इत्याचारः।
2. आपेषमिति—आभीक्ष्ण्ये णमुल् तदर्थमाह आपिष्यापिष्येति।
3. यो गार्ग्याभिप्रेतः प्राणः ब्रह्मेति स जाग्रदपि न प्रतिवचनं ददौ सुषुप्तिकाले प्राणसंचारसद्भावात् तदभिमानिहिरण्यगर्भस्यापि जागरूकत्वात्। जाग्रदवस्थाया तु जीवः प्राणाभिमानी उभावपि जागृतः तदा जीवस्य प्राणाधिपतेश्च जागरूकत्वात् प्राणस्याभोक्तृत्वं प्रदर्शयितुं न शक्यत इति सुषुप्तानुधावनम्। सुषुप्तौ तु प्राणस्य श्वासादिना जागरूकत्वात् तेन श्रोतव्यमेव शब्दादिकम्। अजातशत्रूच्यमानात्मनस्तु—सुषुप्तावपि जागरणेऽपि उपाधिभूतमनोलयात् बहिर्विषयश्रवणद्वाराभावात् न श्रवणम्। शुद्धः आत्मा दृष्टैव स च तदापि पश्यत्येव। प्राणस्तु जडत्वात् दृश्य एव न दृष्टा। अत. न तेन शब्दश्रवणम्। प्राणाभिमानी तु व्यष्टिदेहप्राणरूपेण पालयन्नपि न भोक्तेति विशेषः।
4. विवेकावधारणं भेदज्ञानं तस्य कारणमुभयोः स्वरूपवैलक्षण्य तदाह—यदिति। भोक्तुः ब्रह्मरूपस्य जीवस्य द्रष्टृत्वं स्वरूप न दृश्यत्वं, अभोक्ता प्राणः आत्मा तस्य दृश्यत्वं स्वरूपं न द्रष्टृत्वमिति विशेषः। तदत्र संकीर्णजागरिते प्राणः आत्मा उभावपि सव्यापारौ अतः कः भोक्तेति द्रष्टेति वा न ज्ञायते। सुषुप्तौ तु आत्मा न सव्यापारः उपाधिलयात् प्राणस्तु सव्यापारः स च प्राप्तं शब्दात्मकं विषय भोक्तुचेतनश्चेत् शृणुयात् न शृणोति अतो न भोक्तेत्यर्थः अतो न ब्रह्म।
5. को वा द्रष्टैव को वा दृश्य एवेत्यज्ञानात् साकर्यम्।
6. स्वामिभृत्यन्यायः आत्मा स्वामी प्राणो भृत्यः तेनोभयोः सद्भावकाले भेदो ज्ञातव्य एव। तथापि जागरितकाले संकीर्णत्वात् न ज्ञायत इत्यर्थः।

धारितविशेषम् । यद्द्रष्टृत्वमेव भोक्तृत्वं दृश्यत्वं यच्चाभोक्तुर्दृश्यत्वमेव न तु द्रष्टृत्वं तच्चोभयमिह सङ्कीर्णत्वाद्विविच्य दर्शयितुमशक्यमिति सुप्तपुरुषगमनम् ।

ननु सुप्तेऽपि पुरुषे विशिष्टैर्नामभिरामन्त्रितो भोक्तैव प्रतिपत्स्यते नाभोक्तेति नैव निर्णयः स्यादिति । न । निर्धारितविशेषत्वाद्गार्ग्याभिप्रेतस्य । यो हि सत्येन च्छन्नः प्राण आत्माऽमृतो वागादिष्वनस्तमितो निम्लोचत्सु यस्याऽऽपः शरीरं पाण्डरवासा यश्चासपत्नत्वाद्बृहन्यश्च सोमो राजा षोडशकलः स स्वव्यापारारूढो यथानिर्ज्ञात ५ एवानस्तमितस्वभाव आस्ते । न चान्यस्य कस्यचिद्व्यापारस्तस्मिन्काले गार्ग्येणाभिप्रेयते तद्विरोधिनः । तस्मात्स्वनामभिरामन्त्रितेन प्रतिबोद्धव्यं न च प्रत्यबुध्यत तस्मात्पारिशेष्याद्गार्ग्याभिप्रेतस्याभोक्तृत्वं ब्रह्मणः । भोक्तृस्वभावश्चेद्भोक्तैव स्वं विषयं प्राप्तम् । न हि दग्धृस्वभावः प्रकाशयितृस्वभावः सन्वह्निस्तृणोलपादि दाह्यं स्वविषयं प्राप्तं न दहति प्रकाश्यं वा न प्रकाशयति । न चेद्दहति प्रकाशयति वा प्राप्तं स्वं विषयं नासौ वह्निर्दग्धा प्रकाशयिता वेति निश्चीयते । तथाऽसौ प्राप्तशब्दादिविषयोपलब्धृस्वभावश्चेद्गार्ग्याभिप्रेतः प्राणो बृहन्पाण्डरवास इत्येवमादि- १० शब्दं स्वं विषयमुपलभेत । यथा प्राप्तं तृणोलपादि वह्निर्दहेत्प्रकाशयेच्चाव्यभिचारेण तद्वत् । तस्मात्प्राप्तानां शब्दादीनामप्रतिबोधादभोक्तृस्वभाव इति निश्चीयते । न हि यस्य यः स्वभावो निश्चितः स तं व्यभिचरति कदाचिदपि । अतः सिद्धं प्राणस्याभोक्तृत्वम् ।

सम्बोधनार्थनामविशेषेण सम्बन्धाग्रहणादप्रतिबोध इति चेत् । स्यादेतत् । यथा बहुष्वासीनेषु स्वनामविशेषेण सम्बन्धाग्रहणान्मामयं सम्बोधयतीति शृण्वन्नपि सम्बोध्यमानो विशेषतो न प्रतिपद्यते, तथेमानि बृहन्नित्येव- १५ मादीनि मम नामानीत्यगृहीतसम्बन्धत्वात्प्राणो न गृह्णाति सम्बोधनार्थं शब्दं न त्वविज्ञातृत्वादेवेति चेत् । न । देवताभ्युपगमेऽग्रहणानुपपत्तेः । यस्य हि चन्द्राद्यभिमानिनी देवताऽध्यात्मं प्राणो भोक्ताऽभ्युपगम्यते तस्य तया संव्यवहाराय विशेषनाम्ना सम्बन्धोऽवश्यं ग्रहीतव्योऽन्यथाऽऽह्वानादिविषये संव्यवहारोऽनुपपन्नः स्यात् ।

व्यतिरिक्तपक्षेऽप्यप्रतिपत्तेरयुक्तमिति चेत् । यस्य च प्राणव्यतिरिक्तो भोक्ता तस्यापि बृहन्नित्यादिनामभिः सम्बोधने बृहत्त्वादिनाम्नां तदा तद्विषयत्वात्प्रतिपत्तिर्युक्ता । न च कदाचिदपि बृहत्त्वादिशब्दैः सम्बोधितः प्रति- २०

शङ्कयाऽऽह—किन्त्विति । किं तद्विवेकावधारणकारणं तदाह—यद्द्रष्टृत्वमिति । कथं तदनवधारितविशेषमिति तदाह—तच्चेति । इहेति जागरितोक्तिः ।

यद्यपि जागरित हित्वा सुप्ते पुरुषे विवेकार्थं तयोरुपगतिस्तत्र च भोक्तैव सम्बोधितः स्वनामभिस्तच्छब्दं श्रोष्यति नाचेतनस्तथाऽपि नेष्टविवेकसिद्धिर्गार्ग्यंकाश्याभीष्टात्मनोरुत्थितिसंशयादिति शङ्कते—नन्विति । संशयं निराकरोति—नेत्यादिना । विशेषावधारणमेव विशदयति—यो हीत्यादिना । स्वव्यापारस्तुमुलशब्दादि । यथा- २५ निर्ज्ञातो यथोक्तैर्विशेषणैरुपलब्धं रूपमनतिक्रम्य वर्तमानः । प्राणस्योक्तविशेषणवतः । स्वापेऽवस्थानेऽपि तस्य तदा भोगाभावस्तत्र भोक्त्रन्तराभ्युपगमादित्याशङ्कयाऽऽह—न चेति । तस्यैव भोक्तृत्वे फलितमाह—तस्मादिति । अस्तु तस्य प्राप्तशब्दश्रवणं तत्राऽऽह—न चेति । परिशेषसिद्धमर्थमाह—तस्मादिति । प्राणस्याभोक्तृत्वं व्यतिरेकद्वारा साधयति—भोक्तृस्वभावश्चेदिति । न च भुङ्क्ते तस्मादभोक्तेति शेष. । उक्तमर्थं दृष्टान्तेन स्पष्टयति—न हीत्यादिना । उलपं वालतृणम् । विपक्षे दोपमाह—न चेदिति । उक्तमर्थं सङ्क्षिप्याऽऽह—यथेत्यादिना । प्राणस्याभोक्तृत्व- ३० मुपसंहरति—तस्मादिति । यद्यपि प्राणः स्वापे शब्दादीन्न प्रतिबुध्यते तथाऽपि भोक्तृस्वभावो भविष्यति नेत्याह—न हीति । सम्बोधनशब्दाश्रवणमत'शब्दार्थः ।

तस्य स्वनामाग्रहणं सम्बन्धाग्रहणकृतं नानात्मत्वकृतमिति शङ्कते—सम्बोधनार्थेति । शङ्कामेव विशदयति—स्यादेतदित्यादिना । देवतायाः सम्बन्धाग्रहणमयुक्तं सर्वज्ञत्वादित्युत्तरमाह—न देवतेति । तदेव प्रपञ्चयति—यस्य हीत्यादिना । तयेति ग्रहणकर्तृनिर्देश. । अवश्यमिति सूचितामनुपपत्तिमाह—अन्यथेति । आदिपदेन यागस्तुतिनम- ३५ स्कारादि गृह्यते संव्यवहारोऽभिज्ञाभोगप्रसादादिः ।

सम्बोधननामाग्रहस्तत्कृतानात्मत्वदोपश्च त्वदिष्टात्मनोऽपि तुल्य इति शङ्कते—व्यतिरिक्तेति । संगृहीतं चोद्यं विवृणोति—यस्य चेति । तदा सुपुप्तिदशाया प्रतिपत्तिर्युक्तेति सम्बन्धः । तद्विपयत्वादित्यतिरिक्तात्मविपयत्वादिति यावत् । अस्त्येवातिरिक्तस्याऽऽत्मनः सम्बोधनशब्दश्रवणादीति चेन्नेत्याह—न च कदाचिदिति । त्वदिष्टात्मनः सम्बोधनशब्दाप्रतिपत्तावपि भोक्तृत्वाङ्गीकारस्तच्छब्दार्थः । अभोक्तृत्वे प्राणस्येति शेपः । यथा हस्तः पादोऽङ्गुलि- ४०

पद्यमानो दृश्यते। तस्मादकारणमभोक्तृत्वे सम्बोधनाप्रतिपत्तिरिति चेत्। न। तद्वतस्तावन्मात्राभिमानानुपपत्तेः। यस्य प्राणव्यतिरिक्तो भोक्ता स प्राणादिकरणवान्प्राणो तस्य न प्राणदेवतामात्रेऽभिमानो यथा हस्ते। तस्मात्प्राणनामसम्बोधने कृत्स्नाभिमानिनो युक्तैवाप्रतिपत्तिः। न तु प्राणस्यासाधारणनामसंयोगे।

देवतात्मत्वानभिमानाच्चाऽऽत्मनः[1]। स्वनामप्रयोगेऽप्यप्रतिपत्तिदर्शनादयुक्तमिति चेत्। सुषुप्तस्य यल्लौकिकं ५ देवदत्तादि नाम तेनापि सम्बोध्यमानः कदाचिन्न प्रतिपद्यते सुषुप्तस्तथा भोक्ताऽपि सन्प्राणो न प्रतिपद्यत इति चेत्। न। आत्मप्राणयोः सुप्तासुप्तत्वविशेषोपपत्तेः। सुषुप्तत्वात्प्राणग्रस्ते[2]तयोपरतकरण आत्मा स्वनाम प्रयुज्यमानमपि न प्रतिपद्यते। न तु तदसुप्तस्य प्राणस्य भोक्तृत्व उपरतकरणत्वं सम्बोधनाग्रहणं वा युक्तम्।

अप्रसिद्धनामभिः सम्बोधनमयुक्तमिति चेत्। सन्ति हि प्राणविषयाणि प्रसिद्धानि प्राणादिनामानि। तान्यपोह्याप्रसिद्धैर्बृहत्त्वादिनामभिः सम्बोधनमयुक्तं लौकिक[3]न्यायापोहात्। तस्माद्भोक्तुरेव सतः प्राणस्याप्रति- १० पत्तिरिति चेन्न। देवताप्रत्याख्यानार्थत्वात्। केवलसम्बोधनमात्राप्रतिपत्त्यैवासुप्तस्याऽऽध्यात्मिकस्य प्राणस्याभोक्तृत्वे सिद्धे यच्चन्द्रदेवताविषयैर्नामभिः सम्बोधनं तच्चन्द्रदेवता प्राणोऽस्मिञ्छरीरे भोक्तेति गार्ग्यस्य विशेषप्रतिपत्तिनिराकरणार्थम्। न हि तल्लौकिकनाम्ना सम्बोधने शक्यं कर्तुम्।

प्राणप्रत्याख्यानेनैव प्राणग्रस्तत्वात्करणान्तराणां प्रवृत्त्यनुपपत्तेर्भोक्तृत्वाशङ्कानुपपत्तिः। देवतान्तराभा-

रित्यादिनामोक्तौ मैत्रो नोत्तिष्ठति सर्वदेहाभिमानित्वेन तन्मात्रानभिमानित्वादेव काश्येष्टात्मनः सर्वकार्यकरणाभि- १५ मानित्वादङ्गुलिस्थानीयप्राणमात्रे तदभावात्तन्नामाग्रहणं न त्वचेतनत्वादिति परिहरति—न तद्वत इति। तदेव स्फुटयति—यस्येति। प्राणमात्रे प्राणादिकरणवतोऽभिमानाभावे फलितमाह—तस्मादिति। चन्द्रस्यापि प्राणैकदेशत्वात्तन्नामभिः सम्बोधने कृत्स्नाभिमानी स नोत्तिष्ठति। अत्राप्यङ्गुल्यादिदृष्टान्तोपपत्तेरित्याशङ्क्याऽऽह—न त्विति। गोत्व[4]वत्तस्य सर्ववस्तुषु समाप्तेरहमिति सर्वत्राभिमानसंभवाच्चन्द्रनामोक्तावपि नाप्रतिपत्तिर्युक्तेत्यर्थ.।

प्राणवच्चिदात्मनोऽपि पूर्णतया सर्वात्माभिमानसिद्धेर्बोधाबोधौ तुल्यावित्याशङ्क्याऽऽह—देवतेति। विशिष्ट- २० स्याऽऽत्मनो देवतायामात्मत्वाभिमानाभावादितरस्य च कूटस्थज्ञप्तिमात्रत्वेन तदयोगान्न तुल्यतेत्यर्थः। प्रकारान्तरेण प्राणस्याभोक्तृत्व वारयन्नाशङ्कते—स्वनामेति। अयुक्त प्राणेतरस्य भोक्तृत्वमिति शेष'। तदेव विवृणोति—सुषुप्तस्येति। विशेषं दर्शयन्नुत्तरमाह—नाऽऽत्मेति। काश्याभीष्टात्मनः सुप्तत्वविशेषप्रयुक्त फलमाह—सुषुप्तत्वादिति। प्राणस्यापि सहृतकरणत्वात्स्वनामाग्रहणमित्याशङ्क्य तस्यासुप्तत्वकृत कार्यं कथयति—न त्विति। न हि करणस्वामिनि व्याप्रियमाणे करणोपरम सम्भवति तस्य चानुपरतकरणस्य स्वनामाग्रहणमयुक्तमित्यर्थ.।

२५ प्राणनामत्वेनाप्रसिद्धनामभिः सम्बोधनात्तदनुत्थानं नानात्मत्वादिति शङ्कते—अप्रसिद्धेति। तदेव स्पष्टयति—सन्ति हीति। प्रसिद्धमनूद्याप्रसिद्ध विधेयमिति लौकिको न्यायः। अप्रसिद्धसंज्ञाभि' सम्बोधनस्यायुक्तत्वे फलितमाह—तस्मादिति। चन्द्रदेवताऽस्मिन्देहे कर्त्री भोक्त्री चाऽऽत्मेति गार्ग्याभिप्रायनिषेधे देवतानामग्रहस्य तात्पर्यात्तद्ग्रहोऽर्थवानिति परिहरति—न देवतेति। तदेव प्रपञ्चयति—केवलेति। प्राणादिनामभिः सम्बोधनेऽपि तन्निराकरणं कर्तुं शक्यमित्याशङ्क्याऽऽह—न हीति। लौकिकनाम्नो देवताविषयत्वाभावादित्यर्थः।

३० प्राणस्याभोक्तृत्वेऽपीन्द्रियाणा भोक्तृत्वमिति केचित्तान्प्रत्याह—प्राणेति। प्राणकरणचन्द्रदेवतानामभोक्तृत्वेऽपि देवतान्तरमत्र भोक्तृ स्यादित्याशङ्क्याऽऽह—देवतान्तराभावाच्चेति। भोक्तृत्वाशङ्कानुपपत्तिरिति पूर्वेण सम्बन्धः।

---

१. आत्मन इति—देहादिविशिष्टात्मन इत्यर्थ. तस्य चन्द्राद्यभिमानाभावात् ब्रह्मणि लीनकरणत्वाच्च न ग्रहणम्।

२. प्राणग्रस्तया ब्रह्मणि लीनतया प्राणोऽत्र ब्रह्म। तदुक्त प्राणबन्धन सोम्य मन इति।

३. लौकिकन्याय लोकप्रसिद्धनाम्ना संबोधने मानव शृणोति न त्वप्रसिद्धनाम्ना सबोधने यथा गंगाधर प्रति जह्नुतनयावाहकेति सबोधने।

३५ ४. गोत्ववदिति—गोत्वं सर्वगोवृत्ति तथापि प्रतिव्यक्तिपर्याप्तं तद्वत् प्राण सर्वव्याप्यपि प्रतिव्यक्ति पर्याप्त इत्यर्थं। तथा च चन्द्रेऽपि पर्याप्तत्वात् चन्द्रनामग्रहणे प्रतिबोद्धव्यमित्यर्थः।

वाच्च । नन्वतिष्ठा इत्याद्यात्मन्वीत्यन्तेन ग्रन्थेन गुणवद्देवताभेदस्य[1] दर्शितत्वादिति चेन्न । तस्य प्राण एवैकत्वाभ्युप-
गमात्सर्वश्रुतिष्वरनाभिनिदर्शनेन[2] । सत्येन च्छन्नः प्राणो वा अमृतमिति च प्राणबाह्यस्यान्यास्यानभ्युपगमाद्वोक्तुः ।
"एष उ ह्येव सर्वे देवाः" "कतम एको देव" इति प्राण इति च । सर्वदेवानां प्राण एवैकत्वोपपादनाच्च । तथा
करणभेदेष्वनाशङ्का । देहभेदेष्विव[3] स्मृतिज्ञानेच्छादिप्रतिसन्धानानुपपत्तेः । न ह्यन्यदृष्टमन्यः स्मरति जानातीच्छति
प्रतिसंदधाति वा । तस्मान्न करणभेदविषये भोक्तृत्वाशङ्का विज्ञानमात्रविषया वा कदाचिदप्युपपद्यते । ५

ननु सङ्घात एवास्तु भोक्ता किं व्यतिरिक्तकल्पनयेति । न । आपेषणे विशेषदर्शनात् । यदि हि प्राणशरीर-
सङ्घातमात्रो भोक्ता स्यात्सङ्घातमात्राविशेषात्सदाऽऽपिष्टस्यानापिष्टस्य च प्रतिबोधे विशेषो न स्यात् । सङ्घात-
व्यतिरिक्ते तु पुनर्भोक्तरि सङ्घातसम्बन्धविशेषानेकत्वात्पेषणापेषणकृतवेदनायाः सुखदुःखमोहमध्यमाधमोत्तम-
कर्मफलभेदोपपत्तेश्च विशेषो युक्तो न सङ्घातमात्रे सम्बन्धकर्मफलभेदानुपपत्तेर्विशेषो युक्तः ।

तथा शब्दादिपटुमान्द्यादिकृतश्च । अस्ति चायं विशेषो यस्मात्पर्शमात्रेणाप्रतिबुध्यमानं पुरुषं सुप्तं १०
पाणिनाऽऽपेषमापिष्याऽऽपिष्य बोधयाञ्चकाराजातशत्रुः । तस्म च आपेषणेन प्रतिबुबुधे ज्वलन्निव स्फुरन्निव

तत्रोपक्रमविरोधं शङ्कते—न्विति । दर्शितत्वाद्देवतान्तराभावो नास्तीति शेष. । स्वतन्त्रो देवताभेदो नास्तीति
समाधत्ते—न तस्येति । प्राणे देवताभेदस्यैक्ये युक्तिमाह—अरनाभीति । न देवतान्तरस्य भोक्तृत्वं गार्ग्यस्य स्वपक्ष-
विरोधादिति शेषः । सर्वश्रुतिष्वित्युक्तं ताः सक्षेपतो दर्शयति—एष इति । कति देवा याज्ञवल्क्येत्यादिना संक्षेप-
विस्तराभ्या सर्वेषा देवाना प्राणात्मन्येवैकत्वमुपपाद्यते । अतो न देवताभेदोऽस्तीत्याह—सर्वदेवानामिति । प्राणात् १५
पृथग्भूतस्य देवस्याऽऽत्मातिरेके सत्यसत्त्वापत्तेश्च प्राणान्तर्भावः सर्वदेवताभेदस्येति वक्तु चशब्दः ।

करणानामभोक्तृत्वे हेत्वन्तरमाह—तथेति । देवताभेदेष्विवेति यावत् । अनाशङ्का भोक्तृत्वस्येति शेषः ।
तत्रोदाहरणान्तरमाह—देहभेदेष्विवेति । न हि हस्तादिषु प्रत्येकं भोक्तृत्वं शङ्क्यते । तथा श्रोत्रनेत्रादिष्वपि न -
भोक्तृत्वाशङ्का युक्ता । तेषु स्मृतिरूपज्ञानस्येच्छाया योऽहं रूपमद्राक्षं स शब्दं शृणोमीत्यादिप्रतिसन्धानस्य चायोगादि-
त्यर्थः । अनुपपत्तिमेव स्फुटयति—न हीति । क्षणिकविज्ञानस्य निराश्रयस्य भोक्तृत्वाशङ्काऽपि प्रतिसन्धानासम्भवादेव २०
प्रत्युक्तेत्याह—विज्ञानेति ।

प्राणादीनामनात्मत्वमुक्त्वा स्थूलदेहस्य तद्वक्तुं पूर्वपक्षयति—नन्विति । सङ्घातो भूतचतुष्टयसमाहारः
स्थूलो देह इति यावत् । गौरोऽहं पश्यामीत्यादिप्रत्यक्षेण तस्याऽऽत्मत्वदृष्टेरिति भावः । प्रमाणाभावादतिरिक्तकल्पना न
युक्तेत्याह—किं व्यतिरिक्तेति । संघातस्याऽऽत्मत्वं दूषयति—नाऽऽपेषण इति । विशेषदर्शनं व्यतिरेकद्वारा विशदयति—
यदि हीति । प्राणेन सहितं स्थूलं शरीरमेव सङ्घातस्तन्मात्रो यदि भोक्ता स्यादिति योजना । त्वत्पक्षेऽपि कथं पेषणा- २५
पेषणयोरुत्थाने विशेषः स्यादित्याशङ्क्याऽऽह—सङ्घातेति । तस्य सङ्घातेन सम्बन्धविशेषाः स्वकर्मारभ्यत्वात्मीयत्वस्व-
प्राणपरिपाल्यत्वादयस्तेषामनेकत्वात्पेषणापेषणयोरिन्द्रियोद्भवाभिभवकृतवेदनायाः स्फुटत्वास्फुटत्वात्मको विशेषो युक्तः
सुखदुःखमोहानामुत्तममध्यमाधमकर्मफलाना कर्मोद्भवाभिभवकृतविशेषसम्भवाच्च यथोक्तो विशेषः सम्भवतीत्यर्थः ।
परपक्षेऽपि तथैव विशेषः स्यादित्याशङ्क्याऽऽह—नत्विति । न हि तत्र स्वकर्मारभ्यत्वादयः सम्बन्धविशेषाः कर्मफल-
भेदो वा युज्यते । सङ्घातवादिनाऽतीन्द्रियकर्मानङ्गीकारात् । अतः सङ्घातमात्रे भोक्तरि प्रतिबोधे विशेषासिद्धिरित्यर्थः । ३०

शब्दस्पर्शादीना पटुत्वमतिपटुत्व मान्द्यमतिमान्द्यमित्येवमादिना कृतो विशेषो बोधे दृश्यते सोऽपि सङ्घातवादे
न सिध्यतीत्याह—तथेति । अयुक्त इति यावत् । चकारो विशेषानुकर्षणार्थं । मा तर्हि प्रतिबोधे विशेषो भूदित्या-
शङ्क्याऽऽह—अस्ति चेति । विशेषदर्शनफलमाह—तस्मादिति । आदिशब्देन गुणादि गृह्यते अन्यः सङ्घातादिति शेषः ।

---

१ गुणवद्देवताभेद अतिष्ठात्वगुणविशिष्टदेवताविशेषः ।
२ अरनाभिनिदर्शनं यथा अरा नाभौ समर्पिता एवं प्राणे सर्वं समर्पितम् इति कौषीतक्याम् । ३५
३. देहभेदेष्विव—यथा देहभेदे अननुसन्धानं एकदेहानुभूतस्य देहान्तरेण तथा एकेन्द्रियेण चक्षुषाऽनुभूतस्य
करणान्तरेणानुसन्धान न स्यात् ।

कुतश्चिदागत इव पिण्डं च पूर्वविपरीतं बोधचेष्टाकारविशेषादिमत्त्वेनाऽऽपादयन्सोऽन्योऽस्ति गार्ग्याभिमतब्रह्मभ्यो व्यतिरिक्त इति सिद्धम् ।

संहतत्वाच्च पारार्थ्योपपत्तिः प्राणस्य । गृहस्य स्तम्भादिवच्छरीरस्यान्तरुपष्टम्भकः प्राणः शरीरादिभिः संहत इत्यवोचाम । अरनेमिवच्च नाभिस्थानीय "एतस्मिन्सर्वमि"ति च । तस्माद्गृहादिवत्स्वावयवसमुदायजातीय-
५ व्यतिरिक्तार्थं संहन्यत इत्येवमवगच्छाम । स्तम्भकुड्यतृणकाष्ठादिगृहावयवानां स्वात्मजन्मोपचयापचयविनाश-नामाकृतिकार्यधर्मनिरपेक्षलब्धसत्तादितद्विषयद्रष्टृश्रोतृमन्तृविज्ञात्रर्थत्वं दृष्ट्वा मन्यामहे तत्सङ्घातस्य च तथा प्र णाद्यवयवानां तत्सङ्घातस्य च स्वात्मजन्मोपचयापचयविनाशनामाकृतिकार्यधर्मनिरपेक्षलब्धसत्तादितद्विषय-द्रष्टृश्रोतृमन्तृविज्ञात्रर्थत्वं भवितुमर्हतीति ।

देवताचेतनावत्त्वे समत्वाद्गुणभावानुपगम इति चेत् । प्राणस्य विशिष्टैर्नामभिरामन्त्रणदर्शनाच्चेतना-
१० वत्त्वमभ्युपगतम् । चेतनावत्त्वे च पारार्थ्योपगमः समत्वादनुपपन्न इति चेन्न । निरुपाधिकस्य[1] केवलस्य विजिज्ञाप-यिषितत्वात् । क्रियाकारकफलात्मकता[2] ह्यात्मनो नामरूपोपाधिजनिताऽविद्याध्यारोपिता । तन्निमित्तो लोकस्य क्रियाकारकफलाभिमानलक्षणः संसारः स निरुपाधिकात्मस्वरूपविद्यया निवर्तयितव्य इति तत्स्वरूपविजिज्ञा-पयिषयोपनिषदारम्भः । ब्रह्म ते ब्रवाणि नैतावता विदितं भवतीति चोपक्रम्यैतावदरे[3] खल्वमृतत्वमिति चोप-संहारात् । न चातोऽन्यदन्तराले विवक्षितमुक्तं वाऽस्ति । तस्मादनवसरः समत्वाद्गुणभावानुपगम इति चोद्यस्य ।
१५ विशेषवतो हि सोपाधिकस्य संव्यवहारार्थो गुणगुणिभावो न विपरीतस्य । निरुपाख्यो[4] हि विजिज्ञा-पयिषितः सर्वस्यामुपनिषदि । स एष नेति नेतीत्युपसंहारात् तस्मादादित्यादिब्रह्मभ्य एतेभ्योऽविज्ञानमयेभ्यो

देहादेरनात्मत्वमुक्त्वा प्राणस्यानात्मत्वे हेत्वन्तरमाह—संहतत्वाच्चेति । हेतुं साधयति—गृहस्येति । यथा नेमिरराश्च मिथः संहन्यन्ते तथैव प्राणस्य संहतिरित्याह—अरनेमिवच्चेति । किञ्च प्राणे नाभिस्थानीये सर्वं समर्पित-मिति श्रूयते तद्युक्तं तस्य संहतत्वमित्याह—नाभीति । संहतत्वफलमाह—तस्मादिति । प्राणस्य गृहादिवत्पारार्थ्येऽपि
२० संहतशेषित्वमेपितव्यं गृहादेस्तथा दर्शनादित्याशङ्क्याऽऽह—स्तम्भेति । स्वात्मना स्तम्भादीना जन्म चोपचयश्चापचयश्च विनाशश्च नाम चाऽऽकृतिश्च कार्यं चेत्येते धर्मास्तन्निरपेक्षतया लब्धा सत्ता स्फुरणं च येन स च तेषु स्तम्भादिषु विषयेषु द्रष्टा च श्रोता च मन्ता च विज्ञाता च तदर्थत्वं तेषां तत्सङ्घातस्य च दृष्ट्वा प्राणादीनामपि तथात्व भवि-तुमर्हतीति मन्यामह इति सम्बन्धः । प्राणादिः स्वातिरिक्तद्रष्टृशेषः संहतत्वाद्गृहादिवदित्यनुमानात्सत्तायां तत्प्रतीतौ च प्राणादिविक्रियानपेक्षतया सिद्धो द्रष्टा निर्विकारो युक्तस्तस्य विकारवत्त्वे हेत्वभावादिति भावः ।
२५ प्राणदेवतापारार्थ्यानुमानं व्याप्त्यन्तरविरुद्धमिति शङ्कते—देवतेति । प्राणदेवतायाश्चेतनत्वमेव कथमभ्युपगतं तत्राऽऽह—प्राणस्येति । तथाऽपि प्रकृतेऽनुमाने कथं व्याप्त्यन्तरविरोधस्तत्राऽऽह—चेतनावत्त्वे चेति । यो येन समः स तच्छेषो न भवति । यथा दीपो दीपान्तरेण तुल्यो न तच्छेष इति व्याप्तिविरोधः स्यादित्यर्थः नायं विरोध. समाधातव्यः शेषशेषिभावस्यात्राप्रतिपाद्यत्वादिति परिहरति—न निरुपाधिकस्येति । तदेव स्फुटयति—क्रियेत्यादिना । उपनिषदा-रम्भो निरुपाधिकं स्वरूपं ज्ञापयितुमित्यत्र गमकमाह—ब्रह्मेति । द्वे वाव ब्राह्मणो रूपे मूर्तं चैवामूर्तं चेत्यादिदर्शनाद-
३० स्यामुपनिषदि सोपाधिकमपि ब्रह्म विवक्षितमित्याशङ्क्याऽऽह—न चेति । द्वित्ववादस्य कल्पितविषयवत्त्वान्नेति नेतीति निर्विशेषवस्तुसमर्पणादतोऽन्यदार्तमिति चोक्तेरत्र निरुपाधिकमेव ब्रह्म प्रतिपाद्यमिति भावः । शेषशेषिभावस्याप्रति-पाद्यत्वे फलितमाह—तस्मादिति । किमर्थं तर्हि शेषशेषिभावस्तत्र तत्रोक्तस्तत्राऽऽह—विशेषवतो हीति । सोपाधिकस्य शेषशेषिभावो विवक्षितस्तत्र च स्वामिभृत्यन्यायेन विशेषसम्भवादसिद्ध समत्वमित्यर्थ. । न विपरीतस्य निरुपाधिकस्य शेषशेषित्वमस्तीत्यत्र हेतुमाह—निरुपाख्यो हीति । शेषशेषित्वाद्यशेषविशेषशून्य इत्यर्थं पाणिपेषवाक्यविचारार्थं

३५ १. निरुपाधिकस्येति—सोपाधिकेऽपि यद्यपि विशेषोपाधिभ्या गुणप्रधानभावः यथा अल्पधन· अधिकधने गुणभूत तथाप्यत्र तात्पर्यं निरुपाधिके इत्यर्थः ।

२. क्रिया यागादिकर्तृत्वं कारकं तत्साधनद्रव्यादि फल स्वर्गादि तदात्मत्वं तत्राहममाभिमानित्वम् ।

३ एतावदरे खल्वमृतत्वम्—इदं षष्ठाध्यायगतमैत्रेयीब्राह्मणसमाप्तौ याज्ञवल्क्यवचनम् । तदर्थश्च एतावन्मात्रं यदेतत् नेतिनेत्यात्माद्वैतदर्शनमन्यनहकारिकारणनिरपेक्ष अमृतत्वसाधनमित्यर्थः—गार्ग्ये ।

४० ४. निरुपाख्यः शब्दावाच्य· ।

**स होवाचाजातशत्रुर्यत्रैष एतत्सुप्तोऽभूद्य एष विज्ञानमयः पुरुषः क्वैष तदाभूत्कुत एतदागादिति तदु ह न मेने गार्ग्यः ॥१६॥**

विलक्षणोऽन्योऽस्ति विज्ञानमय इत्येतत्सिद्धम् ॥ १५ ॥

स एवमजातशत्रुर्व्यतिरिक्तात्मास्तित्वं प्रतिपाद्य गार्ग्यमुवाच। यत्र यस्मिन्काल एष विज्ञानमयः पुरुष एतत्स्वपनं सुप्तोऽभूत्प्राक्पाणिपेषप्रतिबोधात्। विज्ञायतेऽनेनेत्यन्तःकरणं बुद्धिरुच्यते तन्मयस्तत्प्रायो विज्ञानमयः। ५ किं पुनस्तत्प्रायत्वम्। तस्मिन्नुपलभ्यत्वं तेन चोपलम्भ्यत्वमुपलब्धृत्वं च। कथं पुनर्मयटोऽनेकार्थत्वे प्रायार्थतैवावगम्यते। स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमय इत्येवमादौ प्रायार्थ एव प्रयोगदर्शनात्परविज्ञानविकारत्वस्याप्रसिद्धत्वाच्च एष विज्ञानमय इति च प्रसिद्धवदनुवादादवयवोपमार्थयोश्चात्रासम्भवात्पारिशेष्यात्प्रायार्थतैव। तस्मात्सङ्कल्पविकल्पाद्यात्मकमन्तःकरणं तन्मय इत्येतत्। पुरुषः पुरि शयनात्।

क्वैष तदाऽभूदिति प्रश्नः स्वभावविजिज्ञापयिषया। प्राक्प्रतिबोधात्क्रियाकारकफलविपरीतस्वभाव आत्मेति १० कार्याभावेन दिदर्शयिषितम्। न हि प्राक्प्रतिबोधात्कर्मविकार्यं सुखादि किञ्चन गृह्यते। तस्मादकर्मप्रयुक्तत्वात्तथास्वाभाव्यमेवाऽऽत्मनोऽवगम्यते यस्मिन्स्वाभाव्येऽभूत्। यतश्च स्वाभाव्यात्प्रच्युतः संसारी स्वभावविलक्षण इत्येतद्विवक्षया पृच्छति गार्ग्यं प्रतिभानरहितं बुद्धिव्युत्पादनाय। क्वैष तदाऽभूत्कुत एतदागादित्येतदुभयं गार्ग्येणैव प्रष्टव्यमासीत्तथाऽपि गार्ग्येण न पृष्टमिति नोदास्तेऽजातशत्रुर्बोधयितव्य एवेति प्रवर्तते। ज्ञापयिष्याम्येवेति प्रतिसंक्षिप्योपसंहरति—आदित्यादीति ॥१५॥ १५

वृत्तमनूद्यान्तरग्रन्थमवतार्य व्याचष्टे—**स एवमित्यादिना**। एतत्स्वपनं यथा भवति तथेति यावत्। यत्रेत्युक्तं कालं विशिनष्टि—**प्रागिति**। तदा क्वाभूदिति सम्बन्धः। विज्ञानमय इत्यत्र विज्ञानं परं ब्रह्म तद्विकारो जीवस्तेन विकारार्थे मयडिति केचित्तान्निराकरोति—**विज्ञानमिति**। अन्तःकरणप्रायत्वमात्मनो न प्रकल्प्यते तस्यासङ्गस्य तेनासम्बन्धादित्याक्षिपति—**किं पुनरिति**। असङ्गस्याप्याविद्यं बुद्ध्यादिसम्बन्धमुपेत्य परिहरति—**तस्मिन्निति**। तत्साक्षित्वाच्च तत्प्रायत्वमित्याह—**उपलब्धृत्वं चेति**। नियामकाभावं शङ्कित्वा परिहरति—**कथमित्यादिना**। २० एकस्मिन्नेव वाक्ये पृथिवीमय इत्यादौ प्रायार्थत्वोपलम्भाद्विज्ञानमय इत्यत्रपि तदर्थत्वमेव मयटो निश्चितमित्युक्तमिदानी जीवस्य परमात्मरूपविज्ञानविकारत्वस्य श्रुतिस्मृत्योरप्रसिद्धत्वाच्च प्रायार्थत्वमेवेत्याह—**परेति**। अप्रसिद्धमपि विज्ञानविकारत्वं श्रुतिवशादिष्यतामित्याशङ्क्याऽऽह—**य एष इति**। य एष विज्ञानमय इत्यत्र विज्ञानमयस्यैष इति प्रसिद्धवदनुवादादप्रसिद्धविज्ञानविकारत्वं सर्वनामश्रुतिविरुद्धमित्यर्थः। जीवो ब्रह्मावयवस्तत्सदृशो वा तदर्थो मयडित्याशङ्क्याऽऽह—**अवयवेति**। ब्रह्मणो निरवयवत्वश्रुतेस्तस्यैव जीवरूपेण प्रवेशश्रवणाच्च प्रकृते वाक्ये मयटोऽवयवाद्यर्थयोगान्निर्विषयत्वासम्भवाच्च पारिशेष्यात्पूर्वोक्ता प्रायार्थतैव तस्य प्रत्येतव्येत्यर्थः। विज्ञानमयपदार्थमुपसंहरति—**तस्मादिति**। २५

यत्रेत्यादि व्याख्याय वाक्यशेषमवतार्य तात्पर्यमाह—**क्वैष इति**। स्वरूपज्ञापनार्थं प्रश्नप्रवृत्तिरित्येतत्प्रकटयति—**प्रागिति**। कार्याभावेनेत्युक्तं व्यनक्ति—**न हीति**। तस्मादित्यस्यार्थमाह—**अकर्मप्रयुक्तत्वादिति**। किं तथास्वाभाव्यमिति तदाह—**यस्मिन्निति**। द्वितीयप्रश्नार्थं सक्षिपति—**यतश्चेति**। उक्तेऽर्थे प्रश्नद्वयमुत्थापयति—**एतदिति**। तथास्वाभाव्यमेवेति सम्बन्धः। एतदित्यधिकरणमपादानं च गृह्यते। किमिति तं प्रत्युभयं पृच्छ्यते स्वकीया प्रतिज्ञा निर्वोढुमित्यभिप्रेत्याऽऽह—**बुद्धीति**। ननु शिष्यत्वाद्गार्ग्येणैव प्रष्टव्यं स चेदज्ञत्वान्न पृच्छति तर्हि राज्ञस्तस्मिन्नौदासीन्यमेव युक्त तत्राऽऽह—**इत्येतदुभयमिति**। तदु हेत्यादि व्याकरोति—**एवमिति**। एतदागमनं यथा भवति तथेति यावत्। ३०

---

१. 'स वा अयमात्मा विज्ञानमयो मनोमय' इत्यारभ्य 'पृथिवीमय' इत्याद्युक्तेः मयटः प्रायार्थत्वोक्तिः पृथिवीमयत्वे अवयवार्थत्वस्य विकारार्थत्वस्य चासंभवात्। ३५

२. तस्मिन् अन्तःकरण एवोपलभ्यः आत्मा 'यो वेद निहितं गुहायां' 'हृदि ह्येष आत्मा' इत्यादिश्रुतेः। तेन चोपलभ्यत्वं 'मनसैवानुद्रष्टव्यमि ति श्रुतेः। 'दृश्यते त्वग्रयया बुद्ध्या' इति च उपलब्धृत्वं उपलब्धिः मनोवृत्तिः तदाश्रयः तेनाभेदाध्यासात् आत्माप्युपलब्धोच्यते।

३ अप्रसिद्धत्वात्—निर्विकारत्वश्रुतेः, अवयवत्वं तु निष्कलश्रुतिविरुद्धम्। सादृश्यं तु अद्वितीयत्वादसिद्धम्।

स होवाचाजातशत्रुर्यत्रैष एतत्सुप्तोऽभूद्य एष विज्ञानमयः पुरुषस्तदेषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते तानि यदा गृह्णात्यथ हैतत्पुरुषः स्वपिति नाम तद्गृहीत एव प्राणो भवति गृहीता वाग्गृहीतं चक्षुर्गृहीतं श्रोत्रं गृहीतं मनः ॥१७॥

स यत्रैतत्स्वप्न्यया चरति ते हास्य लोकास्तदुतेव महाराजो भवत्युतेव महाब्राह्मण
५ उतेवोच्चावचं निगच्छति स यथा महाराजो जानपदान्गृहीत्वा स्वे जनपदे यथा-

ज्ञातत्वात्। एवमसौ व्युत्पाद्यमानोऽपि गार्ग्यो यत्रैष आत्माऽभूत्प्राक्प्रतिबोधाद्यतश्चैतदागमनमागात्तदुभयं न व्युत्पेदे वक्तुं वा प्रष्टुं वा गार्ग्यो ह न मेने न ज्ञातवान् ॥ १६ ॥

स होवाचाजातशत्रुर्विवक्षितार्थसमर्पणाय। यत्रैष एतत्सुप्तोऽभूद्य एष विज्ञानमयः पुरुषः क्वैष तदाऽभूत्कुत एतदागादिति यदपृच्छाम तच्छृणूच्यमानं यत्रैष एतत्सुप्तोऽभूत्तत्तदा तस्मिन्काल एषां वागादीनां प्राणानां विज्ञाने-
१० नान्तःकरणगताभिव्यक्तिविशेषविज्ञानेनोपाधिस्वभावजनितेनाऽऽदाय विज्ञानं वागादीनां स्वस्वविषयगतसामर्थ्यं गृहीत्वा य एषोऽन्तर्मध्ये हृदये हृदयस्याऽऽकाशो यः आकाशशब्देन पर एव स्व आत्मोच्यते तस्मिन्स्व आत्मन्याकाशे शेते स्वाभाविकेऽसांसारिके न केवल आकाश एव श्रुत्यन्तरसामर्थ्यात् "सता सोम्य तदा सम्पन्नो भवती"ति। लिङ्गोपाधिसम्बन्धकृतं विशेषात्मस्वरूपमुत्सृज्याविशेषे स्वाभाविक आत्मन्येव केवले वर्तत इत्यभिप्रायः।

यदा शरीरेन्द्रियाध्यक्षतामुत्सृजति तदाऽसौ स्वात्मनि वर्तत इति कथमवगम्यते। नामप्रसिद्ध्या। काऽसौ
१५ नामप्रसिद्धिरित्याह—तानि वागादिविज्ञानानि यदा यस्मिन्काले गृह्णात्यादत्तेऽथ तदा हैतत्पुरुषः स्वपिति नाम। एतन्नामास्य पुरुषस्य तदा प्रसिद्धं भवति गौणमेवास्य नाम भवति स्वमेवाऽऽत्मानमपीत्यपिगच्छतीति स्वपितीत्युच्यते सत्यं स्वपितीतिनामप्रसिद्ध्याऽऽत्मनः संसारधर्मविलक्षणं रूपमवगम्यते। न त्वत्र युक्तिरस्तीत्याशङ्क्याऽऽह—तत्तत्र स्वापकाले गृहीत एव प्राणो भवति। प्राण इति घ्राणेन्द्रियं वागादिप्रकरणात्। वागादिसम्बन्धे हि सति तदुपाधित्वादस्य संसारधर्मित्वं लक्ष्यते। वागादयश्चोपसंहृता एव तदा तेन। कथम्। गृहीता वाग्गृहीतं चक्षुर्गृहीतं
२० श्रोत्रं गृहीतं मनः। तस्मादुपसंहृतेषु वागादिषु क्रियाकारकफलात्मताभावात्स्वात्मस्थ एवाऽऽत्मा भवतीत्यवगम्यते ॥१७॥

ननु दर्शनलक्षणायां स्वप्नावस्थायां कार्यकरणवियोगेऽपि संसारधर्मित्वमस्य दृश्यते। यथा च जागरिते

तत्र क्रियापदयोर्यथाक्रमं वक्तुं प्रष्टुं वेत्याभ्यां सम्बन्धः ॥१६॥

कूटस्थचिदेकरसोऽयमात्मा। तत्र क्रियाकारकफलव्यवहारो वस्तुतो नास्तीति विवक्षितोऽर्थस्तस्य प्रकटी-
२५ करणार्थं प्रस्तुतं प्रश्नद्वयमनुवदति—यत्रेति। उपाधिरन्तःकरणं तस्य स्वभावस्तदुपादानमज्ञानं तेन जनितमन्तःकरणगतमभिव्यक्तं विशेषविज्ञानं चैतन्याभासलक्षणं तेन करणेनेत्यर्थः। वागादीनां स्वस्वविषयगतं प्रतिनियतं प्रकाशनसामर्थ्यं विज्ञानमित्यर्थः। य एषोऽन्तरिति प्रतीकमादाय व्याचष्टे—मध्य इति। आकाशशब्दस्य भूताकाशविषयत्वमाशङ्क्याऽऽकाशोऽर्थान्तरत्वादिव्यपदेशादिति न्यायेनाऽऽह—आकाशशब्देनेति। सद्रूपे ब्रह्मण्येव सुषुप्तस्य शयनं भूताकाशे तु न भवतीत्यत्र च्छान्दोग्यश्रुतिसम्मतिमाह—श्रुत्यन्तरेति। कीदृगत्र शयनं विवक्षितमित्याशङ्क्याऽऽह—
३० लिङ्गेति। स्वापाधिकारे स्वाभाविकत्वमविद्यामात्रसम्मिश्रितत्वं 'सति सम्पद्य न विदुः' इत्यादिश्रुतेरिति द्रष्टव्यम्।

तानि यदेत्यादिवाक्यमाकाङ्क्षापूर्वकमादत्ते—यदेत्यादिना। विज्ञानानि तत्साधनानीत्येतत्। पुरुष इति प्रथमा षष्ठ्यर्थेऽतो वक्ष्यति—अस्य पुरुषस्येति। अश्वकर्णादिनाम्नो विशेषमाह—गौणमेवेति। गौणत्वं व्युत्पादयति—स्वमेवेति। नाम्नोऽर्थव्यभिचारस्यापि दृष्टत्वान्न तद्वशात्स्वापे स्वरूपावस्थानमिति शङ्कामनूद्य तद्गृहीत एवेत्यादि वाक्यमुत्थाप्य व्याचष्टे—सत्यमित्यादिना। का पुनरात्मनः स्वापावस्थायामसंसारित्वरूपेऽवस्थानमित्यत्र युक्तिरिहोक्ता
३५ भवति तत्राऽऽह—वागादीति। तदा सुषुप्त्यवस्थाया तेनाऽऽत्मना चैतन्याभासेन हेतुनेत्यर्थः। स्वापे करणोपसंहारं विवृणोति—कथमित्यादिना। तदुपसंहारफलं कथयति—तस्मादिति ॥१७॥

अन्वयव्यतिरेकाभ्यां वागाद्युपाधिकमात्मनः संसारित्वमुक्तं तत्र व्यतिरेकासिद्धिमाशङ्कते—नन्विति। व्यति-

**कामं परिवर्तेतैवमेवैष एतत्प्राणान्गृहीत्वा स्वे शरीरे यथाकामं परिवर्तते ॥१८॥**

सुखी दुःखी बन्धुवियुक्तः शोचति मुह्यते च। तस्माच्छोकमोहधर्मवानेवायं नास्य शोकमोहादयः सुखदुःखादयश्च कार्यकरणसंयोगजनितभ्रान्त्याऽध्यारोपिता इति। न मृषात्वात्। स प्रकृत आत्मा यत्र यस्मिन्काले दर्शनलक्षणया स्वप्न्यया स्वप्नवृत्त्या चरति वर्तते तदा ते हास्य लोकाः कर्मफलानि। के ते। तत्तत्रोतापि महाराज इव भवति। सोऽयं महाराजत्वमिवास्य लोको न महाराजत्वमेव जागरित इव। तथा महाब्राह्मण इवोताप्युच्चावचमुच्चं च ५ देवत्वाद्यवचं च तिर्यक्त्वाद्युच्चमिवावचमिव च निगच्छति।

मृषैव महाराजत्वादयोऽस्य लोका इवशब्दप्रयोगाद्व्यभिचारदर्शनाच्च। तस्मान्न बन्धुवियोगादिजनित-शोकमोहादिभिः स्वप्ने सम्बध्यत एव। ननु च यथा जागरिते जाग्रत्कालाव्यभिचारिणो लोका एवं स्वप्नेऽपि तेऽस्य महाराजत्वादयो लोकाः स्वप्नकालभाविनः स्वप्नकालाव्यभिचारिण आत्मभूता एव न त्वविद्याध्यारोपिता इति। ननु च जाग्रत्कार्यकरणात्मत्वं देवतात्मत्वं चाविद्याध्यारोपितं न परमार्थत इति व्यतिरिक्तविज्ञानमयात्म- १० प्रदर्शनेन प्रदर्शितम्। तत्कथं दृष्टान्तत्वेन स्वप्नलोकस्य मृत इवोज्जीविष्यन्प्रादुर्भविष्यति। सत्यं, विज्ञानमये व्यतिरिक्ते कार्यकरणदेवतात्मत्वप्रदर्शनमविद्याध्यारोपितं शुक्तिकायामिव रजतत्वदर्शनमित्येतत्सिध्यति व्यति-रिक्तात्मास्तित्वप्रदर्शनन्यायेनैव न तु तद्विशुद्धिपरतयैव न्याय उक्त इत्यसन्नपि दृष्टान्तो जाग्रत्कार्यकरणदेवतात्मत्व-दर्शनलक्षणः पुनरुद्भाव्यते। सर्वो हि न्यायः किञ्चिद्विशेषमपेक्षमाणोऽपुनरुक्तो भवति।

न[3] तावत्स्वप्नेऽनुभूतमहाराजत्वादयो लोका आत्मभूताः। आत्मनोऽन्यस्य जाग्रत्प्रतिबिम्बभूतस्य लोकस्य १५ दर्शनात्। महाराज एव तावद्व्यस्तसुप्तासु प्रकृतिषु पर्यङ्के शयानः स्वप्नान्पश्यन्नुपसंहृतकरणः पुनरुपगतप्रकृति महाराजमिवाऽऽत्मानं जागरित इव पश्यति यात्रागतं भुञ्जानमिव च भोगान्। न च तस्य महाराजस्य पर्यङ्के

रेकासिद्धौ फलितमाह—**तस्मादिति**। स्वप्नस्य रज्जुसर्पवन्मिथ्यात्वेन वस्तुधर्मत्वाभावान्नाऽऽत्मनः संसारित्वमित्युत्तर-माह—**न मृषात्वादिति**। तदुपपादयन्नादौ स यत्रेत्यादीन्यक्षराणि योजयति—**स प्रकृत इत्यादिना**।

अथात्र स्वप्नस्वभावो निर्दिश्यते न तस्य मिथ्यात्वं कथ्यते तत्राऽऽह—**मृषैवेति**। स्वप्ने दृष्टानां महाराजत्वा- २० दीना जाग्रत्यनुवृत्तिराहित्यं व्यभिचारदर्शनम्। स्वप्नस्य मिथ्यात्वे सिद्धमर्थमाह—**तस्मादिति**। विमता लोका न मिथ्या तत्कालाव्यभिचारित्वाज्जाग्रल्लोकवदिति शङ्कते—**ननु च यथेति**। साध्यवैकल्यं वक्तु सिद्धान्ती पाणिपेष-वाक्योक्तं स्मारयति—**ननु चेति**। जाग्रल्लोकस्य मिथ्यात्वे फलितमाह—**तत्कथमिति**। प्रादुर्भावे जाग्रल्लोकस्य कर्तृत्वं प्राकरणिकमेष्टव्यम्। तत्र पूर्ववादी दृष्टान्तं साधयति—**सत्यमित्यादिना**। अन्वयव्यतिरेकाख्यो न्यायः। देहद्वयस्याऽऽत्मनश्च विवेकमात्रं प्रागुक्तं न तु प्राधान्येनाऽऽत्मनः शुद्धिरुक्तेति विभागमङ्गीकृत्य वस्तुतोऽसन्तमपि २५ दृष्टान्त सन्तं कृत्वा तेन स्वप्नसत्यत्वमाशङ्क्य तन्निरासेनात्यन्तिकी शुद्धिरात्मनः स्वप्नवाक्येनोच्यते तथा च जाग्र-तोऽपि तथा मिथ्यात्वादात्मैकरसः शुद्धः स्यादित्याशयवानाह—**इत्यसन्नपीति**। पाणिपेषवाक्ये जाग्रन्मिथ्यात्वोक्त्याऽर्था-दुक्ता शुद्धिरत्रापि सैवोच्यते चेत्पुनरुक्तिरित्याशङ्क्याह—**सर्वो हीति**। यत्किञ्चित्सामान्यात्पौनरुक्त्य सर्वत्र तुल्यम्। अवान्तरभेदादपौनरुक्त्यं प्रकृतेऽपि समं पूर्वत्र शुद्धिद्वारस्याऽऽर्थिकत्वादिह वाचनिकत्वादिति भावः।

जाग्रद्दृष्टान्तेन स्वप्नसत्यत्वचोद्यसम्भवाद्वाच्यस्तस्य समाधिरिति पूर्ववादिमुखेनोक्त्वा समाधिमधुना ३० कथयति—**न तावदिति**। विमता न द्रष्टुरात्मानो धर्मा वा तद्दृश्यत्वाद्घटादिवदित्यर्थः। किञ्च स्वप्नदृष्टाना जाग्रद्-दृष्टादर्थान्तरत्वेन दृष्टेर्मिथ्यात्वमित्याह—**महाराज इति**। तेषा जाग्रद्दृष्टादर्थान्तरत्वमसिद्धमित्याशङ्क्याऽऽह—**न चेति**।

---

१. कार्यकरणसम्बन्धाभावे आत्मनः स्वरूपावस्थत्वं तत्सत्त्वे संसारधर्मित्वं यथा सुषुप्ते इत्युक्तं तत्र व्यतिरेकोऽसिद्धः स्वप्ने कार्यकरणाभावेऽपि संसारोपलब्धेः इत्याहेत्यर्थ. स्वप्ने संसारसम्बन्धो नास्ति मिथ्यात्वात् इत्युत्तरम्।

२. सर्वो हि न्यायः अन्वयव्यतिरेकन्यायः पुनरुक्तिदोषवानपि विशेषनिर्णयप्रयोजनकत्वात् अपुनरुक्तः। ३५

३. स्वकालाव्यभिचारात्—स्वाप्निकपदार्था न मिथ्येत्यनुमाने स्वात्मानन्यत्वमुपाधिः जाग्रत्पदार्थाना तथात्वात् स्वाप्निकानां स्वात्मान्यत्वादित्याह—न तावदिति।

४. अवान्तरभेदात् पूर्वत्रात्मनः देहद्वयविविक्तत्वमात्र सुषुप्तदृष्टान्तेन। अत्र तु स्वप्नदृष्टान्तेन आत्मनः शुद्धत्वं प्रतिपाद्यत इति स्वप्नावस्थादृष्टान्ते विशेषः।

अथ यदा सुषुप्तो भवति यदा न कस्यचन वेद हिता नाम नाड्यो द्वासप्ततिः सहस्राणि हृदयात्पुरीततमभिप्रतिष्ठन्ते ताभिः प्रत्यवसृप्य पुरीतति शेते स यथा कुमारो वा महाराजो वा महाब्राह्मणो वाऽतिघ्नीमानन्दस्य गत्वा शयीतैवमेवैष एतच्छेते ॥१९॥

५ शयानाद्द्वितीयोऽन्यः प्रकृत्युपेतो विषये पर्यटन्नहनि लोके प्रसिद्धोऽस्ति, यमसौ सुप्तः पश्यति। न चोपसंहृतकरणस्य रूपादिमतो दर्शनमुपपद्यते। न च देहे देहान्तरस्य तत्तुल्यस्य सम्भवोऽस्ति। देहस्यस्यैव हि स्वप्नदर्शनम्।

ननु पर्यङ्के शयानः पथि प्रवृत्तमात्मानं पश्यति। न, बहिः स्वप्नान्पश्यतीत्येतदाह–स महाराजो जानपदाञ्जनपदे भवान्राजोपकरणभूतान्भृत्यानन्यांश्च गृहीत्वोपादाय स्वे आत्मीय एव जयादिनोपार्जिते जनपदे यथाकामं यो यः कामोऽस्य यथाकाममिच्छातो यथा परिवर्ततेत्यर्थः। एवमेवैष विज्ञानमय एतदिति क्रियाविशेषणं प्राणान्गृहीत्वा १० जागरितस्थानेभ्य उपसंहृत्य स्वे शरीरे स्व एव देहे न बहिर्यथाकामं परिवर्तते। कामकर्मभ्यामुद्भासिताः पूर्वानुभूतवस्तुसदृशीर्वासना अनुभवतीत्यर्थः। तस्मात्स्वप्ने मृषाऽध्यारोपिता एवाऽऽत्मभूतत्वेन लोका अविद्यमाना एव सन्तस्तथा जागरितेऽपीति प्रत्येतव्यम्। तस्माद्विशुद्धोऽक्रियाकारकफलात्मको विज्ञानमय इत्येतत्सिद्धम्। यस्माद् दृश्यन्ते द्रष्टुर्विषयभूताः क्रियाकारकफलात्मकाः कार्यकरणलक्षणा लोकास्तथा स्वप्नेऽपि। तस्मादन्योऽसौ दृश्येभ्यः स्वप्नजागरितलोकेभ्यो द्रष्टा विज्ञानमयो विशुद्धः ॥१८॥

१५ दर्शनवृत्तौ स्वप्ने वासनाराशेर्दृश्यत्वादतद्धर्मेति विशुद्धताऽवगताऽऽत्मनस्तत्र यथाकामं परिवर्तत इति कामवशात्परिवर्तनमुक्तम्। द्रष्टुर्दृश्यसम्बन्धश्चास्य स्वाभाविक इत्यशुद्धता शङ्क्यतेऽतस्तद्विशुद्ध्यर्थमाह—

अथ यदा सुषुप्तो भवति तदा स्वप्नयथा चरति तदाऽयमयं विशुद्ध एव। अथ पुनर्यदा हित्वा दर्शनवृत्तिं स्वप्नं यदा यस्मिन्काले सुषुप्तः सुष्ठु सुप्तः सम्प्रसादं स्वाभाव्यं गतो भवति सलिलमिवान्यसम्बन्धकालुष्यं हित्वा स्वाभाव्येन प्रसीदति। कदा सुषुप्तो भवति। यदा यस्मिन्काले न कस्यचन किञ्चनेत्यर्थो वेद विजानाति। कस्यचन २० वा शब्दादेः सम्बन्धि वस्त्वन्तरं किञ्चन न वेदेत्यध्याहार्यम्। पूर्वं तु न्याय्यं सुप्ते तु विशेषविज्ञानाभावस्य विवक्षितत्वात्। एवं तावद्विशेषविज्ञानाभावे सुषुप्तो भवतीत्युक्तम्। केन पुनः क्रमेण सुषुप्तो भवतीत्युच्यते— हिता नाम हिता इत्येवंनाम्न्यो नाड्यः शिरा देहस्यान्नरसविपरिणामभूतास्ताश्च द्वासप्ततिः सहस्राणि द्वे सहस्रे

प्रमाणसामग्र्यभावाच्च स्वप्नस्य मिथ्यात्वमित्याह—न चेति। योग्यदेशाभावाच्च तन्मिथ्यात्वमित्याह—न चेति। देहाद्बहिरेव स्वप्नदृष्टयङ्गीकाराद्योग्यदेशसिद्धिरित्याशङ्क्याऽऽह—देहस्थस्येति।

२५ एतदेव साधयितुं शङ्कयति—नन्विति। तत्र स यथेत्यादिवाक्यमुत्तरत्वेनावतार्य व्याचष्टे—न बहिरित्यादिना। यथाकामं तं तं काममनतिक्रम्येत्यर्थः। एतदिति क्रियाया ग्रहणस्य विशेषणमेतद्ग्रहणं यथा भवति तथेत्यर्थः। परिवर्तनमेव विवृणोति—कामेति। योग्यदेशाभावे सिद्धे सिद्धमर्थं दर्शयति—तस्मादिति। स्वप्नस्य मिथ्यात्वे तद्दृष्टान्तत्वेन जडत्वादिहेतुना जागरितस्यापि तथात्वं शक्यं निश्चेतुमित्याह—तथेति। द्वयोर्मिथ्यात्वे प्रतीचो विशुद्धिसिद्धेत्युपसंहरति—तस्मादिति। अक्रियाकारकफलात्मक इति विशेषणं समर्थयते—यस्मादिति। जागरितं दृष्टान्ती-३० कृत्य दार्ष्टान्तिकमाह—तथेति। द्रष्टृदृश्यभावे सिद्धे फलितमाह—तस्मादिति। अन्यत्वफलं कथयति—विशुद्ध इति ॥१८॥

वृत्तानुवादपूर्वकमुत्तरश्रुतिनिरस्यामाशङ्कामाह—दर्शनवृत्ताविस्यादिना। तत्रेति स्वप्नोक्तिः। कामादिसम्बन्धश्चकारार्थः। निवर्त्यशङ्कासद्भावान्निवर्तकानन्तरश्रुतिप्रवृत्तिं प्रतिजानीते—अत इति। स्वप्नेऽपि शुद्धिश्चेत्का किं सुषुप्तिग्रहणेनेत्याशङ्क्याऽऽह—यदेति। गतो भवति तदा सुतरामस्य शुद्धिः सिध्यतीति शेषः। तमेव सुप्तिकालं प्रश्नपूर्वकं प्रकटयति—कदेति। विकल्पं व्यावर्तयति—पूर्वं त्विति। वृत्तमनूद्य प्रश्नपूर्वकं सुषुप्तिगतिप्रकारं दर्शयति—३५ एवं तावदिति। हितफलप्राप्तिनिमित्तत्वान्नाड्यो हिता उच्यन्ते। तासां देहसम्बद्धानामन्वयव्यतिरेकाभ्यामन्नरसविकारा-

१. कस्यचन इत्यस्य किञ्चनेत्यर्थः इत्युक्त्वा कस्यचन सम्बन्धि इत्यर्थान्तरमुक्तम्। संप्रति पूर्वव्याख्यानमेव युक्तमित्याह।

२. यस्मात् दृश्यन्ते तस्मात् अनात्मभूताः स्वप्नेऽपीत्यर्थः—पूर्वं त्विति।

**स यथोर्णनाभिस्तन्तुनोच्चरेद्यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवा-**
**स्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि व्युच्च-**
**रन्ति तस्योपनिषत्सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम् ॥२०॥**

अधिके सप्ततिश्च सहस्राणि ता द्वासप्ततिः सहस्राणि हृदयाद्धृदयं नाम मांसपिण्डस्तस्मान्मांसपिण्डात्पुण्डरीका-
कारात्पुरीततं हृदयपरिवेष्टनमाचक्षते तदुपलक्षितं शरीरमिह पुरीतच्छब्देनाभिप्रेतं पुरीततमभिप्रतिष्ठन्त इति ५
शरीरं कृत्स्नं व्याप्नुवत्योऽश्वत्थपर्णराजय इव बहिर्मुख्यः प्रवृत्ता इत्यर्थः।

तत्र बुद्धेरन्तःकरणस्य हृदयं स्थानं तत्रस्थबुद्धितन्त्राणि चेतराणि बाह्यानि करणानि। तेन बुद्धिः
कर्मवशाच्छ्रोत्रादीनि ताभिर्नाडीभिर्मत्स्यजालवत्कर्णशष्कुल्यादिस्थानेभ्यः प्रसारयति प्रसार्य चाधितिष्ठति जागरित-
काले। तां विज्ञानमयोऽभिव्यक्तस्वात्मचैतन्यावभासतया व्याप्नोति। सङ्कोचनकाले च तस्या अनुसङ्कुचति।
सोऽस्य विज्ञानमयस्य स्वापः। जाग्रद्विकासानुभवो भोगः। बुद्ध्युपाधिस्वभावानुविधायी हि स चन्द्रादिप्रतिबिम्ब १०
इव जलाद्यनुविधायी। तस्मात्तस्या बुद्धेर्जाग्रद्विषयायास्ताभिर्नाडीभिः प्रत्यवसर्पणमनु प्रत्यवसृप्य पुरीतति शरीरे
शेते तिष्ठति तप्तमिव लोहपिण्डमविशेषेण संव्याप्याग्निवच्छरीरं संव्याप्य वर्तत इत्यर्थः। स्वाभाविक एव स्वात्मनि
वर्तमानोऽपि कर्मानुगतबुद्ध्यनुवृत्तित्वात्पुरीतति शेत इत्युच्यते। न हि सुषुप्तिकाले शरीरसम्बन्धोऽस्ति। तीर्णो
हि तदा सर्वाञ्छोकान्हृदयस्येति हि वक्ष्यति।

सर्वसंसारदुःखवियुक्तेयमवस्थेत्यत्र दृष्टान्तः—स यथा कुमारो वाऽत्यन्तबालो वा महाराजो वाऽत्यन्तवश्य- १५
प्रकृतिर्यथोक्तकृन्महाब्राह्मणो वाऽत्यन्तपरिपक्वविद्याविनयसम्पन्नोऽतिघ्नीमतिशयेन दुःखं हन्तीत्यतिघ्न्यानन्दस्या-
वस्था सुखावस्था तां प्राप्य गत्वा शयीतावतिष्ठेत। एषाञ्च कुमारादीनां स्वभावावस्थानां सुखं निरतिशयं प्रसिद्धं
लोके। विक्रियमाणानां हि तेषां दुःखं न स्वभावतस्तेन तेषां स्वाभाविक्यवस्था दृष्टान्तत्वेनोपादीयते प्रसिद्धत्वात्।
न तेषां स्वाप एवाभिप्रेतः। स्वापस्य दार्ष्टान्तिकत्वेन विवक्षितत्वाद्विशेषाभावाच्च। विशेषे हि सति दृष्टान्त-
दार्ष्टान्तिकभेदः स्यात्। तस्मान्न तेषां स्वापो दृष्टान्तः। एवमेव यथाऽयं दृष्टान्त एष विज्ञानमय एतच्छयनं शेत इत्ये- २०
तच्छब्दः क्रियाविशेषणार्थः। एवमयं स्वाभाविके स्व आत्मनि सर्वसंसारधर्मातीतो वर्तते स्वापकाल इति ॥१९॥

क्वैष तदाऽभूदित्यस्य प्रश्नस्य प्रतिवचनमुक्तम्। अनेन च प्रश्ननिर्णयेन विज्ञानमयस्य स्वभावतो विशुद्धिर-
संसारित्वं चोक्तम्। कुत एतदागादित्यस्य प्रश्नस्यापाकरणार्थं आरम्भः। ननु यस्मिन्ग्रामे नगरे वा यो भवति

त्वमाह—अत्रेति। तासामेव मध्यमसङ्ख्या कथयति—ताश्चेति। तासां च हृदयसम्बन्धिनीनां ततो निर्गत्य देह-
व्याप्त्या बहिर्मुखत्वमाह—हृदयादिति। २५

ताभिरित्यादि व्याकर्तुं भूमिकाङ्करोति—तत्रेति। शरीरं सप्तम्यर्थः। शरीरे करणानां बुद्धितन्त्रत्वे किं
स्यात्तदाह—तेनेति। तथाऽपि जीवस्य किमायातमित्याशङ्क्याऽऽह—तां विज्ञानमय इति। भोगशब्दो जागरविषयः।
बुद्धिविकासमनुभवन्नात्मा जागर्तीत्युच्यते, तत्सङ्कोचं चानुभवन्स्वपितीत्यत्र हेतुमाह—बुद्धीति। बुद्ध्यनुविधायित्वं
परामृश्य ताभिरित्यादि व्याचष्टे—तस्मादिति। प्रत्यवसर्पणं व्यावर्तनम्। पदार्थमुक्त्वा वाक्यार्थमाह—तप्तमिवेति।
कर्मत्वे देहस्य कर्तृत्वे चाऽऽत्मनो दृष्टान्तद्वयम्। हृदयाकाशे ब्रह्मणि शेते विज्ञानात्मेत्युक्त्वा पुरीतति शयनमाचक्षाणस्य ३०
पूर्वापरविरोधः स्यादित्याशङ्क्याऽऽह—स्वाभाविक इति। औपचारिकमिदं वचनमित्यत्र हेतुमाह—न हीति।

इयमवस्थेति प्रकृता सुषुप्तिरुच्यते। उक्तेषु दृष्टान्तेषु विवक्षितमंशं दर्शयति—एषाञ्चेति। दुःखमपि तेषां
प्रसिद्धमित्याशङ्क्याऽऽह—विक्रियमाणानां हीति। कुमारादिस्वापस्यैव दृष्टान्तत्वं किं न स्यादित्याशङ्क्याऽऽह—न तेषा-
मिति। तत्स्वापस्य दृष्टान्तत्वमस्मत्स्वापस्य दार्ष्टान्तिकत्वमिति विभागमाशङ्क्याऽऽह—विशेषाभावादिति। क्वैष
तदाऽभूदिति प्रश्नस्योत्तरमुपपादितमुपसंहरति—एवमिति ॥१९॥ ३५

स यथेत्यादेः सङ्गतिं वक्तुं वृत्तं सङ्कीर्तयति—क्वैष इति। किं पुनराद्यप्रश्ननिर्णयेन फलति त्वंपदार्थशुद्धिरि-
त्याह—अनेनेति। शुद्धिद्वारा ब्रह्मत्वं च तस्योक्तमित्याह—असंसारित्वञ्चेति। उत्तरग्रन्थस्य तात्पर्यमाह—कुत इति।

---

१. पुरीतति इत्यस्य व्याख्या शरीरे इति। पुरीततः उपलक्षणत्वात्।

सोऽन्यत्र गच्छंस्तत एव ग्रामान्नगराद्वाऽऽगच्छति नान्यतः। तथा सति क्वैष तदाऽभूदित्येतावानेवास्तु प्रश्नोऽत्रा भूत्तत एवाऽऽगमनं प्रसिद्धं स्यान्नान्यत इति कुत एतदागादिति प्रश्नो निरर्थक एव। किं श्रुतिरपाकर्तुं शक्यते। न। किं तर्हि द्वितीयस्य प्रश्नस्यार्थान्तरं श्रोतुमिच्छाम्यत आनर्थक्यं चोदयामि।

एवं तर्हि कुत इत्यपादानार्थता न गृह्यते। अपादानार्थत्वे हि पुनरुक्तता नान्यार्थत्वे। अस्तु तर्हि निमि-
५ त्तप्रश्नः कुत एतदागात्किन्निमित्तमिहाऽऽगमनमिति। न निमित्तार्थताऽपि प्रतिवचनवैरूप्यात्। आत्मनश्च सर्वस्य जगतोऽग्निविस्फुलिङ्गादिवद्व्युत्पत्तिः प्रतिवचने श्रूयते। न हि विस्फुलिङ्गानां विद्रवणेऽग्निर्निमित्तमपादानमेव तु सः। तथा परमात्मा विज्ञानमयस्याऽऽत्मनोऽपादानत्वेन श्रूयतेऽस्मादात्मनः इत्येतस्मिन्वाक्ये। तस्मात्प्रतिवचन-वैलोम्यात्कुत इति प्रश्नस्य निमित्तार्थता न शक्यते वर्णयितुम्। नन्वपादानपक्षेऽपि पुनरुक्तताद्रोषः स्थित एव। नैष दोषः। प्रश्नाभ्यामात्मनि क्रियाकारकफलात्मतापोहस्य विवक्षितत्वात्। इह विद्याविद्याविषयावुपन्यस्तौ।
१० आत्मेत्येवोपासीताऽऽत्मानमेवावेदात्मानमेव लोकमुपासीतेति विद्याविषयः। तथाऽविद्याविषयश्च पाङ्क्तं कर्म तत्फलं चान्नत्रयं नामरूपकर्मात्मकमिति। तत्राविद्याविषये वक्तव्यं सर्वमुक्तम्। विद्याविषयस्त्वात्मा केवल उपन्यस्तो न निर्णीतः। तन्निर्णयाय च ब्रह्म ते ब्रवाणीति प्रक्रान्तं ज्ञपयिष्यामीति च। अतस्तद्ब्रह्म विद्याविषयभूतं ज्ञापयितव्यं याथात्म्यतः। तस्य च याथात्म्यं क्रियाकारकफलभेदशून्यमत्यन्तविशुद्धमद्वैतमित्येतद्विवक्षितम्। अतस्तदनुरूपौ प्रश्नावुत्थाप्येते श्रुत्या क्वैष तदाऽभूत्कुत एतदागादिति।

१५ तत्र यत्र भवति तदधिकरणं यद्भवति तदधिकर्तव्यं तयोश्चाधिकरणाधिकर्तव्ययोर्भेदो दृष्टो लोके। तथा यत आगच्छति तदपादानं य आगच्छति स कर्ता तस्मादन्यो दृष्टः। तथाऽऽत्मा क्वाप्यभूदन्यस्मिन्नन्यः। कुतश्चिदागादन्यस्मादन्यः केनचिद्भिन्नेन साधनान्तरेणेत्येवं लोकवत्प्राप्ता बुद्धिः सा प्रतिवचनेन निवर्तयितव्येति। नायमात्माऽन्योऽन्यत्राभूदन्यो वाऽन्यस्मादागतः साधनान्तरं वाऽऽत्मन्यस्ति। किं तर्हि स्वात्मन्येवाभूत् "स्वमात्मानमपीतो भवति, सता सोम्य तदा सम्पन्नो भवति, प्राज्ञेनाऽऽत्मना सम्परिष्वक्तः, पर आत्मनि सम्प्रतिष्ठते" इत्यादि-
२० श्रुतिभ्यः। अत एव नान्योऽन्यस्मादागच्छति। तच्छ्रुत्यैव प्रदर्श्यतेऽस्मादात्मन इति। आत्मव्यतिरेकेण वस्त्वन्तराभावात्।

पूर्वेणोत्तरस्य गतार्थत्वं शङ्कते—नन्विति। स्थितवचनेनैव निर्धारितत्वादागतवचनेनिर्धारविषया प्रश्ने प्रतिवचने सावकाशमित्याशङ्क्याऽऽह—तथा सतीति। अपौरुषेयी श्रुतिरशेषदोषशून्यत्वादनतिशङ्कनीयेति सिद्धान्ती गूढाभिसन्धिराह—किं श्रुतिरिति। न श्रुतिराक्षिप्यते निर्दोषत्वादिति पूर्ववाद्याह—नेति। श्रुतेरनाक्षेप्यत्वे कथं चोद्यं
२५ निरवकाशमित्याह—किं तर्हीति। तस्य सावकाशत्वं पूर्ववादी साधयति—द्वितीयस्येति।

पूर्ववादिन्यपादानादर्थान्तरे पञ्चम्याः गुरुत्वणाणे तत्रैकदेशी ब्रवीति—एवं तर्हीति। कथमन्यार्थत्वं तदाह—अस्त्विति। तर्हि तस्यानपादानार्थत्वेन पुनरुक्तत्वावस्थानमित्यर्थः। एकदेशिनं पूर्ववादी दूषयति—नेति। अपादानार्थतावदित्यपेरर्थः। तदेव स्फुटयति—आत्मनश्चेति। जगतः सर्वस्य चेतनस्याचेतनस्य चेति वक्तुं चकारः। तर्हि भवत्वपादानार्था पञ्चमीत्याशङ्क्य पूर्ववादी पूर्वोक्तं स्मारयति—नन्विति। सर्वविद्यानस्तुतिर्निर्णीतार्थं तथा च
३० प्रश्नद्वयव्याजेन प्रतिपिपादयिषितमिति न पुनरुक्तिरिति सिद्धान्ती स्वाभिसन्धिमुद्घाटयति—नैष दोष इति। यदोक्तं वस्तु प्रश्नाभ्यां विवक्षितमिति कुतो ज्ञातमित्याशङ्क्य तदुक्तं नार्तीयमर्थमनुवदति—इह होति। विद्याविषयनिर्णेतव्यकर्तव्यत्वमत्र न प्रतिभातीत्याशङ्क्याऽऽह—तन्निर्णयाय चेति। अन्यथा प्रकृतभङ्गः स्यादिति भावः। किं तद्याथात्म्यं तदाह—तस्य चेति।

कथं यथोक्तयाथात्म्यव्याख्यानोपयोगित्वं प्रश्नयोरित्याशङ्क्य तयोः श्रौतमर्थमाह—तत्रेति। प्रश्नाववत-
३५ मुक्त्वा प्रतिवचनप्रवृत्तिमाह—सेति। निवर्तयितव्येति तत्प्रवृत्तिरिति शेषः। सम्प्रति प्रतिवचनस्याभिप्रायमाह—नायमिति। स्वात्मन्येवाभूदित्यत्र प्रमाणमाह—स्वमात्मानमिति। सुषुप्ते स्वात्मन्येव स्थितिरित्यत्र श्रुत्यर्थः। प्रबोधेऽप्यात्मन एवाऽऽगमनमपादानत्वमित्यत्र मानत्वेनानन्तरश्रुतिमुदाहरति—तच्छ्रुत्यैवेति। किमित्यात्मैवापादानत्वमित्यत्रोपपत्तिमाह—आत्मेति।

नन्वस्ति प्राणाद्यात्मव्यतिरिक्तं वस्त्वन्तरं, न । प्राणादेस्तत एव निष्पत्तेः । तत्कथमिति । उच्यते—तत्र दृष्टान्तः—स यथा लोक ऊर्णनाभिः । ऊर्णनाभिर्लूताकीट एक एव प्रसिद्धः सन्स्वात्माप्रविभक्तेन तन्तुनोच्चरेदुद्गच्छेत् । न चास्ति तस्योद्गमने स्वतोऽतिरिक्तं कारकान्तरम् । यथा चैकरूपादेकस्मादग्नेः क्षुद्रा अल्पा विस्फुलिङ्गास्त्रुटयोऽग्न्यवयवा व्युच्चरन्ति विविधं नाना वोच्चरन्ति यथेमौ दृष्टान्तौ कारकभेदाभावेऽपि प्रवृत्तिं दर्शयतः प्राक्प्रवृत्तेश्च स्वभावत एकत्वमेवमेवास्मादात्मनो विज्ञानमयस्य प्राक्प्रतिबोधाद्यत्स्वरूपं तस्मादित्यर्थः । सर्वे प्राणा वागादयः सर्वे लोका भूरादयः सर्वाणि कर्मफलानि सर्वे देवाः प्राणलोकाधिष्ठातारोऽग्न्यादयः सर्वाणि भूतानि ब्रह्मादिस्तम्बपर्यन्तानि प्राणिजातानि सर्व एत आत्मान इत्येस्मिन्पाठ उपाधिसम्पर्कजनितप्रबुध्यमानविशेषात्मान इत्यर्थो व्युच्चरन्ति । यस्मादात्मनः स्थावरजङ्गमं जगदिदमग्निविस्फुलिङ्गवद्व्युच्चरत्यनिशं यस्मिन्नेव च प्रलीयते जलबुद्बुदवद्यदात्मकञ्च वर्तते स्थितिकाले तस्यास्याऽऽत्मनो ब्रह्मण उपनिषदुप समीपं निगमयतीत्यभिधायकः शब्द उपनिषदित्युच्यते । शास्त्रप्रामाण्यादेतच्छब्दगतो विशेषोऽवसीयत उपनिगमयितृत्वं नाम । कोऽसावुपनिषदित्याह—सत्यस्य सत्यमिति । सा हि सर्वत्र चोपनिषदलौकिकार्थत्वाद्दुर्विज्ञेयार्थेति तदर्थमाचष्टे—प्राणा वै सत्यं तेषामेष सत्यमिति । एतस्यैव वाक्यस्य व्याख्यानायोत्तरं ब्राह्मणद्वयं भविष्यति ।

भवतु तावदुपनिषद्व्याख्यानायोत्तरं ब्राह्मणद्वयम् । तस्योपनिषदित्युक्तं तत्र न जानीमः किं प्रकृतस्याऽऽत्मनो विज्ञानमयस्य पाणिपेषणोत्थितस्य संसारिणः शब्दादिभुजः इयमुपनिषदाहोस्विदसंसारिणः कस्यचित् । किञ्चातः । यदि संसारिणस्तदा संसार्येव विज्ञेयः । तद्विज्ञानादेव सर्वप्राप्तिः स एव ब्रह्मशब्दवाच्यस्तद्विद्यैव ब्रह्मविद्येति । अथासंसारिणस्तदा तद्विषया विद्या ब्रह्मविद्या । तस्माच्च ब्रह्मविज्ञानात्सर्वभावापत्तिः । सर्वमेतच्छास्त्रप्रामाण्याद्भविष्यति ।

किन्त्वस्मिन्पक्ष "आत्मेत्येवोपासीत" "आत्मानमेवावेदहं ब्रह्मास्मी"ति परब्रह्मैकत्वप्रतिपादिकाः श्रुतयः कुप्येरन् । संसारिणश्चान्यस्याभाव उपदेशानर्थक्यात् । यत एवं पण्डितानामप्येतन्महामोहस्थानमनुक्तप्रतिवचनप्रश्नविषयम् । अतो यथाशक्ति ब्रह्मविद्याप्रतिपादकवाक्येषु ब्रह्म विजिज्ञासूनां बुद्धिव्युत्पादनाय विचारयिष्यामः ।

वस्त्वन्तराभावस्यासिद्धिं शङ्कित्वा दूषयति—नन्वित्यादिना । क्रियावतो मृदादेर्घटाद्युत्पत्तिदर्शनाद्ब्रह्मणोऽक्रियत्वात्ततो न प्राणाद्युत्पत्तिरिति शङ्कते—तत्कथमिति । सृष्टेर्मायामयत्वमाश्रित्य श्रुत्या परिहरति—उच्यत इति । स्वात्माप्रविभक्तेनेत्युक्तमन्वयं व्यतिरेकद्वारा स्फोरयति—न चेति । असहायस्य कारणत्वे दृष्टान्तमुक्त्वा कूटस्थस्य तद्भावे दृष्टान्तमाह—यथाचेति । माध्यन्दिनश्रुतिमाश्रित्याऽऽह—सर्व एत इति । तस्येत्याद्यवतार्यव्याचष्टे—यस्मादित्यादिना । ननु प्रत्यभूतस्य ब्रह्मणो वाचकेषु शब्दान्तरेष्वपि सत्सु किमित्येतच्छब्दविषयमादरणं क्रियते तत्राऽऽह—शास्त्रेति । ब्राह्मणवाक्यार्थोऽपि कथं निश्चीयतामित्याशङ्क्याऽऽह—एतस्येति ।

उक्तमङ्गीकृत्य विशेषदृष्ट्या संशयानो विचारं प्रस्तौति—भवत्विति । सन्दिग्धं सप्रयोजनं च विचार्यमिति न्यायेन सन्देहमुक्त्वा विचारप्रयोजकं प्रयोजनं पृच्छति—किञ्चात इति । कस्मिन्पक्षे किं फलतीति पृष्टे प्रथमपक्षमनूद्य तस्मिन्फलमाह—यदीति । यद्विज्ञानान्मुक्तिस्तस्यैव ज्ञेयता न जीवस्येत्याशङ्क्याऽऽह—तद्विज्ञानादिति । ब्रह्मज्ञानादेव सा न संसारिज्ञानादित्याशङ्क्याऽऽह—स एवेति । तद्विद्या ब्रह्मविद्या तदेव ब्रह्म न संसारीत्याशङ्क्याऽऽह—तद्विद्यैवेति । आद्यकल्पीयफलसमाप्ताविति शब्दः । पक्षान्तरमनूद्य तस्मिन्फलमाह—अथेत्यादिना । किमत्र नियामकमित्याशङ्क्य ब्रह्म वा इदमित्यादि शास्त्रमित्याह—सर्वमेतदिति ।

ब्रह्मोपनिषत्पक्षे शास्त्रप्रामाण्यात्सर्वं समञ्जसं चेत्तथैवास्तु किं विचारेणेत्याशङ्क्य जीवब्रह्मणोर्भेदोऽभेदो वेति विकल्प्याऽऽद्ये दोषमाह—किन्त्विति । अभेदपक्षं दूषयति—संसारिणश्चेति । उपदेशानर्थक्यादभेदपक्षानुपपत्तिरिति शेषः । विशेषानुपलम्भस्य संशयहेतुत्वमनुवदति—यत इति । पक्षद्वये फलप्रतीतिं परामृशति—एवमिति । अन्वयव्यतिरेककौशलं पाण्डित्यम् । एतदित्यैकात्म्योक्तिः । महत्त्वं मोहस्य विचारोत्थनिर्णयं विनाऽनुच्छिन्नत्वम् । तस्य स्थानमालम्बनं केनापि नोक्तं प्रतिवचनं यस्य किं तदैकात्म्यमिति प्रश्नस्य तस्य विषयभूतमिति यावत् । न हि येन केनचिदैकात्म्यं प्रष्टुं प्रतिवक्तुं वा शक्यते । 'श्रवणायापि बहुभिर्यो न लभ्यः' इत्यादिश्रुतेरित्यर्थः । विचारप्रयोजक-

---

१. इत्यस्मिन् पाठे माध्यन्दिनपाठे इत्यर्थः । बुद्ध्युपहिता आत्मान उत्तिष्ठन्तीत्यर्थः शुद्धस्यानादित्वात्, काण्वपाठे तु प्राणोत्पत्तिश्रुत्या तदुपहितजीवोत्पत्तिः सूचिता ।

न तावदसंसारी परः पाणिपेषणप्रतिबोधिताच्छब्दादिभुजोऽवस्थान्तरविशिष्टादुत्पत्तिश्रुतेः। न प्रशासिताऽशनायादिवर्जितः परो विद्यते। कस्मात्। यस्माद्ब्रह्म ज्ञपयिष्यामीति प्रतिज्ञाय सुप्तं पुरुषं पाणिपेषं बोधयित्वा तं शब्दादिभोक्तृत्वविशिष्टं दर्शयित्वा तस्यैव स्वप्नद्वारेण सुषुप्त्याख्यमवस्थान्तरमुन्नीय तस्मादेवाऽऽत्मनः सुषुप्त्यवस्थाविशिष्टादग्निविस्फुलिङ्गोर्णनाभिदृष्टान्ताभ्यामुत्पत्तिं दर्शयति श्रुतिरेवमेवास्मादित्यादिना। न चान्यो जग-
५ दुत्पत्तिकारणमन्तराले श्रुतोऽस्ति। विज्ञानमयस्यैव हि प्रकरणम्।

समानप्रकरणे च श्रुत्यन्तरे कौषीतकिनामादित्यादिपुरुषान्प्रस्तुत्य "स होवाच यो वै बालाक एतेषां पुरुषाणां कर्ता यस्य वैतत्कर्म स वै वेदितव्य" इति प्रबुद्धस्यैव विज्ञानमयस्य वेदितव्यतां दर्शयति नार्थान्तरस्य। तथा च "ऽऽत्मनस्तु कामाय सर्वं प्रियं भवती"त्युक्त्वा य एवाऽऽत्मा प्रियः प्रसिद्धस्तस्यैव द्रष्टव्यश्रोतव्यमन्तव्यनिदिध्यासितव्यतां दर्शयति। तथा च विद्योपन्यासकाले "आत्मेत्येवोपासीत" "तदेतत्प्रेयः पुत्रात्प्रेयो वित्ता""तदात्मान-
१० मेवावेदहं ब्रह्मास्मीत्ये"वमादिवाक्यानामानुलोम्यं स्यात्पराभावे। वक्ष्यति च—"आत्मानंचेद्विजानीयादयमस्मीति पूरुषः" इति।

सर्ववेदान्तेषु च प्रत्यगात्मवेद्यतैव प्रदर्श्यतेऽहमिति न बहिर्वेद्यता शब्दादिवत्प्रदर्श्यतेऽसौ ब्रह्मेति। तथा कौषीतकिनामेव "न वाचं विजिज्ञासीत वक्तारं विद्यात्" इत्यादिना वागादिकरणैर्व्यापृतस्य कर्तुरेव वेदितव्यतां दर्शयति। अवस्थान्तरविशिष्टोऽसंसारीति चेत्। अथापि स्याद्यो जागरिते शब्दादिभुग्विज्ञानमयः स एव सुषुप्ता-
१५ ख्यमवस्थान्तरं गतोऽसंसारी परः प्रशासिताऽन्यः स्यादिति चेन्न, अदृष्टत्वात्। न ह्येवन्धर्मकः पदार्थो दृष्टोऽन्यत्र[1] वैनाशिकसिद्धान्तात्। न हि लोके गौस्तिष्ठन्गच्छन्वा गौर्भवति शयानस्त्वश्वादिजात्यन्तरमिति। न्यायाच्च[2]। यद्धर्मको

मुक्त्वा तत्कार्यं विचारमुपसंहरति—अत इति।

संशयादिना विचारकार्यतामवतार्य पूर्वपक्षयति—न तावदिति। जगत्कर्ता हीश्वरो विवक्ष्यते प्रकृते च सुषुप्तिविशिष्टाज्जीवाज्जगज्जन्मोच्यते तस्मादीश्वरो जीवादतिरिक्तो नास्तीत्यर्थः। तदेव प्रपञ्चयति—नेत्यादिना।
२० प्रकृतेऽपि जीवे जगत्कारणत्वमीश्वरस्यैवात्र श्रुतमित्याशङ्क्याऽऽह—न चेति। तत्र प्रकरणविरोधं हेतुमाह—विज्ञानेति। श्रुत्यन्तरवशादपि जीव एवात्र जगत्कर्तेत्याह—समानप्रकरणे चेति। श्रुत्यन्तरस्य च जीवविषयत्वं जगद्वाचित्वाधिकरणपूर्वपक्षन्यायेन[3] द्रष्टव्यम्। वाक्यशेषवशादपि जीवस्यैव वेदितव्यत्वं वाक्यान्वयाधिकरणपूर्वपक्षन्यायेन[4] दर्शयति—तथा चेति। जीवातिरिक्तस्य परस्य वेदितव्यस्याभावे पूर्वोत्तरवाक्यानामानुकूल्यं हेत्वन्तरमाह—तथा चेत्यादिना।
२५ इतश्च जीवस्यैव वेद्यतेत्याह—सर्वेति। तत्रैव हेत्वन्तरमाह—तथेति। स वै वेदितव्य इत्यत्र न स्पष्टं जीवस्य वेदितव्यत्वमिह तु स्पष्टमिति भेदः। स्वापावस्थाज्जीवाज्जगज्जन्मश्रुतेस्तस्यैव वेद्यत्वदृष्टेश्च जगद्धेतुरीश्वरो वेदान्तवेद्यो नास्तीत्युक्ते सेश्वरवादी चोदयति—अवस्थान्तरेति। चोद्यमेव विवृणोति—अथापीति। उक्तोपपत्तिसत्त्वेऽपीति यावत्। नावस्थाभेदाद्वस्तुभेदस्तथाऽननुभवादपराद्धान्ताच्चेति परिहरति—नादृष्टत्वादिति। अवस्थाभेदाद्वस्तुभेदाभावं दृष्टान्तेन

१ अन्यत्र वैनाशिकसिद्धान्तात्। बौद्धा वैनाशिकाः प्रतिक्षणं प्रपञ्चस्य आत्मनश्च विनाशाङ्गीकारात् तन्मते हि
३० जाग्रत्पुरुषोऽन्यः सुषुप्तोऽन्यः स्यात् क्षणभेदेन पुरुषभेदात्।
२. न्यायाच्च—यो यद्धर्मक इत्यादिव्याप्त्युपष्टब्धमनुमानं न्यायः। अनुमानं तु सुषुप्तपुरुषः जागरविशिष्टादभिन्नः अवस्थान्तरविशिष्टत्वात् सोऽहं सुषुप्तः यः पूर्वं जागरितः इति तादात्म्यानुभवात्।
३. जगद्वाचित्वाधिकरणपूर्वपक्षन्यायः जगद्वाचित्वाधिकरणे चिन्तितं यो वै बालाके एतेषां पुरुषाणां कर्ता यस्य वा एतत्कर्म स वै वेदितव्यः पुरुषः।' इति श्रूयते कौषीतक्युपनिषदि। तत्र वेदितव्यः पुरुषः प्राणः कुतः एतत्कर्म
३५ इत्युक्तस्य कर्मणः शरीरगतस्य सर्वस्य प्राण एव कर्ता। वाक्यशेषे च 'अथास्मिन् प्राण एवैकधा भवति' इति प्राणसंकीर्तनाच्च आदित्यादिगतपुरुषाणां बालाक्युक्तानां प्राणावस्थाविशेषत्वात् इति पूर्वपक्षः तन्न्यायेनेत्यर्थः।
४. वाक्यान्वयाधिकरणपूर्वपक्षस्त्वित्थम्—बृहदारण्यके श्रूयते—'न वा अरे सर्वस्य कामाय सर्वं प्रियं भवति आत्मनस्तु कामाय सर्वं प्रियं भवति' इति। तत्र आत्मा जीवः स्यात् सर्वं जगत् जीवस्य न्यात्मार्थतया प्रियं भवति, तथा वाक्यशेषे 'एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति' इति 'विज्ञातारमरे केन विजानीयात्'
४० इति उपसंहाराच्च जीव एव द्रष्टव्यत्वेन विवक्षित इति पूर्वपक्षः तन्न्यायेन।

यः पदार्थः प्रमाणेनावगतो भवति स देशकालावस्थान्तरेष्वपि तद्धर्मक एव भवति। स चेत्तद्धर्मकत्वं व्यभिचरति सर्वः प्रमाणव्यवहारो लुप्येत। तथा च न्यायविदः साङ्ख्यमीमांसकादयोऽसंसारिणोऽभावं युक्तिशतैः प्रतिपादयन्ति।

संसारिणोऽपि जगदुत्पत्तिस्थितिलयक्रियाकर्तृत्वविज्ञानस्याभावादयुक्तमिति चेद्यन्महता प्रपञ्चेन स्थापितं भवता शब्दादिभुक्संसार्येवावस्थान्तरविशिष्टो जगतः कर्तेति। तदसत्। यतो जगदुत्पत्तिस्थितिलयक्रियाकर्तृत्वविज्ञानशक्तिसाधनाभावः सर्वलोकप्रत्यक्षः संसारिणः स कथमस्मदादिः संसारो मनसाऽपि चिन्तयितुमशक्यं ५ पृथिव्यादिविन्यासविशिष्टं जगन्निर्मिनुयादतोऽयुक्तमिति चेत्। न। शास्त्रात्। शास्त्रं संसारिण "एवमेवास्मादात्मन" इति जगदुत्पत्त्यादि दर्शयति। तस्मात्सर्वं श्रद्धेयमिति स्यादयमेकः पक्षः।

"यः सर्वज्ञः सर्ववित्" "योऽशनायापिपासे अत्येति" "असङ्गो न हि सज्जते" "एतस्य वा अक्षरस्य प्रशासने" "यः सर्वेषु भूतेषु तिष्ठन्नन्तर्याम्यमृतः" "स यस्तान्पुरुषान्निरुह्यात्यक्रामत्" "स वा एष महानज आत्मा" "एष सेतुर्विधरणः" "सर्वस्य वशी सर्वस्येशानः" "य आत्माऽपहतपाप्मा विजरो विमृत्युः" "तत्तेजोऽसृजत" "आत्मा १० वा इदमेक एवाग्र आसीत्" "न लिप्यते लोकदुःखेन बाह्यः" इत्यादिश्रुतिशतेभ्यः। स्मृतेश्च "अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते" इति परोऽस्त्यसंसारी। श्रुतिस्मृतिन्यायेभ्यश्च। स च कारणं जगतः। नन्"वेवमेवास्मादात्मन" इति संसारिण एवोत्पत्तिं दर्शयतीत्युक्तम्। न। "य एषोऽन्तर्हृदय आकाश" इति परस्य प्रकृतत्वादस्मादात्मन इति युक्तः परस्यैव परामर्शः। "क्वैष तदाऽभूदि"त्यस्य प्रश्नस्य प्रतिवचनत्वेनाऽऽकाशशब्दवाच्यः पर आत्मोक्तो "य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेत" इति। "सता सोम्य तदा सम्पन्नो भवत्य" "हरहर्गच्छन्त्य एतं ब्रह्मलोकं न विदन्ति" १५ "प्राज्ञेनाऽऽत्मना सम्परिष्वक्तः" "पर आत्मनि संप्रतिष्ठते" इत्यादिश्रुतिभ्य आकाशशब्दः पर आत्मेति निश्चीयते। "दहरोऽस्मिन्नन्तराकाश" इति प्रस्तुत्य तस्मिन्नेवाऽऽत्मशब्दप्रयोगाच्च। प्रकृत एव परं आत्मा। तस्माद्युक्तमेव अस्मादात्मन इति परमात्मन एव सृष्टिरिति। संसारिणः सृष्टिस्थितिसंहारज्ञानसामर्थ्याभावं चावोचाम।

अत्र च "आत्मेत्येवोपासीत""आत्मानमेवावेदहं ब्रह्मास्मी"ति ब्रह्मविद्या प्रस्तुता। ब्रह्मविषयञ्च ब्रह्मविज्ञान-

स्पष्टयति—नहीति। तत्रैव हेत्वन्तरमाह—न्यायाच्चेति। जागरादिविशिष्टस्यैव स्वापवैशिष्ट्यात्तस्य संसारित्वान्नेश्व-२० रोऽन्योऽस्तीत्युक्त्वा तदभावे वादिसंमतिमाह—तथा चेति। आदिशब्दो लोकायतादिसमस्तनिरीश्वरवादिसङ्ग्रहार्थः—युक्तिशतैरिति। तस्य देहित्वेऽस्मदादितुल्यत्वात्तदभावे मुक्तवज्जगत्कर्तृत्वायोगाज्जीवानामेवादृष्टद्वारा तत्कर्तृत्वसम्भवात्तस्याकिञ्चित्करत्वमित्यादिभिरित्यर्थः। जीवो जगज्जन्मादिहेतुर्न भवति तत्रासमर्थत्वात्पाषाणवत्तच्च संसारित्वादिति शङ्कते—संसारिणोऽपीति। ईश्वरस्येवेत्यपेरर्थः। अयुक्तं प्राणादिकर्तृत्वमिति शेषः। सङ्ग्रहवाक्यं विवृणोति—यन्महतेत्यादिना। कालात्ययापदेशेन दूषयति—न शास्त्रादिति। निरीश्वरवादमुपसंहरति—तस्मादिति। २५

सेश्वरवादमुत्थापयति—यः सर्वज्ञ इत्यादिना। तान्पृथिव्याद्यभिमानिनः पुरुषान्निरुह्योत्पाद्य योऽतिक्रान्तवान्स एष सर्वविशेषशून्य इति यावत्। उदाहृताः श्रुतयः स्मृतयश्च। न्यायस्तु विचित्रं कार्यं विशिष्टज्ञानवत्पूर्वकं प्रासादादौ तथोपलम्भादित्यादिः। प्रकरणमनुसृत्य जीवस्य प्राणादिकारणत्वमुक्तं स्मारयति—नन्विति। नेदं जीवस्य प्रकरणमिति परिहरति—नेत्यादिना। प्रतिवचनस्याकाशशब्दस्य परविषयत्वमसिद्धमित्याशङ्क्याऽऽह—क्वैष इति। इतश्चाऽऽकाशशब्दस्य परमात्मविषयतेत्याह—दहरोऽस्मिन्निति। य आत्माऽपहतपाप्मेत्यात्मशब्दप्रयोगः। प्रतिवचने परस्याऽऽकाश- ३० शब्दवाच्यत्वे फलितमाह—प्रकृत एवेति। तस्य प्रकृतत्वे लब्धमर्थमाह—तस्मादिति। इतश्च परस्मादेवप्राणादिसृष्टिरित्याह—संसारिण इति। यन्महता प्रपञ्चेनेत्यादाविति शेषः।

अस्तीश्वरो जगत्कारणं ब्रह्म तदेव जीवस्य स्वरूपं तस्येयमुपनिषदिति सिद्धान्तमाशङ्क्य दूषयति—अत्र

१. साङ्ख्याः कापिलाः जीवस्यैव संसारो मोक्षः उभयं प्रधानाधीनं तदेव पुरुषस्य भोगमोक्षौ करोति इति वदन्ति। मीमांसकास्तु "न कदाचिदनीदृशं जगत्" इति वदन्तः सृष्टिप्रलयौ न स्तः तदर्थमीश्वरोऽनपेक्षितः उपनिषदि ३५ तत्पदार्थविवरणं कर्माङ्गभूतदेवताप्रशंसारूपार्थवादः। त्वंपदार्थस्तु कर्मकर्तुः जीवस्य प्रशंसेति वदन्तः ईश्वरं नाभ्युपगच्छन्ति—इदं तु न परमार्थतः अपि तु कर्मणि जनानां प्रवृत्तिसिद्धये कर्मण एव फलदानशक्तिरस्ति। तदर्थमीश्वरः न कल्प्यतामित्याहुः। अत एव नयविवेके ईश्वरे अनुमानं दूषितं नेश्वरोऽपीति।

२. कालात्ययापदिष्टः श्रुत्या बाधित इत्यर्थः इयमेव श्रुतिः "एतस्मादात्मनः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि व्युच्चरन्ति" इति।

मिति। "ब्रह्म ते ब्रवाणी"ति "ब्रह्म ज्ञपयिष्यामी"ति प्रारब्धम्। तत्रेदानीमसंसारि ब्रह्म जगतः कारणमशनायाद्यतीतं नित्यशुद्धबुद्धमुक्तस्वभावं तद्विपरीतश्च संसारी तस्मादहं ब्रह्मास्मीति न गृह्णीयात्। परं हि देवमीशानं निकृष्टः संसार्यात्मत्वेन स्मरन्कथं न दोषभाक्स्यात्। तस्मान्नाहं ब्रह्मास्मीति युक्तम्।

तस्मात्पुष्पोदकाञ्जलिस्तुतिनमस्कारबल्युपहारस्वाध्यायध्यानयोगादिभिराराधयिषेत। आराधनेन ५ विदित्वा सर्वेशितृ ब्रह्म भवति। न पुनरसंसारि ब्रह्म संसार्यात्मत्वेन चिन्तयेदग्निमिव शीतत्वेनाऽऽकाशमिव मूर्तिमत्त्वेन। ब्रह्मात्मत्वप्रतिपादकमपि शास्त्रमर्थवादो भविष्यति। सर्वतर्कशास्त्रलोकन्यायैश्चैवमविरोधः स्यात्। न, मन्त्रब्राह्मणवादेभ्यस्तस्यैव प्रवेश श्रवणात्। "पुरश्चक्रे" इति प्रकृत्य "पुरः पुरुष आविशदि"ति "रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय" "सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन्यदास्ते" इति सर्वशाखासु सहस्रशो मन्त्रवादाः सृष्टिकर्तुरेवासंसारिणः शरीरप्रवेशं दर्शयन्ति। तथा ब्राह्मणवादाः। "तत्सृष्ट्वा तदेवानु- १० प्राविशत्" "स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत" "सेयं देवतैमास्तिस्रो देवता अनेन जीवेनाऽऽत्मना- ऽनुप्रविश्य" "एष सर्वेषु भूतेषु गूढात्मा न प्रकाशते" इत्याद्याः। सर्वश्रुतिषु च ब्रह्मण्यात्मशब्दप्रयोगादात्मशब्दस्य च प्रत्यगात्माभिधायकत्वात् "एष सर्वभूतान्तरात्मा" इति च श्रुतेः परमात्मव्यतिरेकेण संसारिणोऽभावात् "एक- मेवाद्वितीयम्" "ब्रह्मैवेदम्" "आत्मैवेदम्" इत्यादिश्रुतिभ्यो युक्तमेवाहं ब्रह्मास्मीत्यवधारयितुम्।

यद्येवं स्थितः शास्त्रार्थस्तदा परमात्मनः संसारित्वम्। तथा च सति शास्त्रानर्थक्यमसंसारित्वे चोपदेशा- १५ नर्थक्यं स्पष्टो दोषः प्राप्तः। यदि तावत्परमात्मा सर्वभूतान्तरात्मा सर्वशरीरसम्पर्कजनितदुःखान्यनुभवतीति स्पष्टं परस्य संसारित्वं प्राप्तम्। तथा च परस्यासंसारित्वप्रतिपादिकाः श्रुतयः कुप्येरन्स्मृतयश्च सर्वे च न्यायाः। अथ कथञ्चित्प्राणिशरीरसम्बन्धजैर्दुःखैर्न सम्बध्यत इति शक्यं प्रतिपादयितुं परमात्मनः साध्यपरिहार्याभावादु- पदेशानर्थक्यदोषो न शक्यते निवारयितुम्। अत्र केचित्परिहारमाचक्षते। परमात्मा न साक्षाद्भूतेष्वनुप्रविष्टः

चेति। तृतीयोऽध्यायः सप्तम्यर्थः। का पुनः सा ब्रह्मविद्येति तत्राऽऽह—ब्रह्मविषयश्चेति। इति ब्रह्मविदा प्रसिद्धमिति २० शेषः। चतुर्थे ब्रह्मविद्या प्रस्तुतेत्याह—ब्रह्मेति। सत्यमस्ति प्रस्तुता ब्रह्मविद्या सा जीवविद्याऽपि भवति जीवब्रह्मणोर- भेदादित्याशङ्क्याऽऽह—तत्रेति। ब्रह्मविद्यायां प्रस्तुतायामिति यावत्। इदानी न गृह्णीयादिति सम्बन्ध। मिथो विरुद्धत्वप्रतीत्यवस्थायामित्येतत्। अन्योन्यविरुद्धत्व तच्छब्दार्थः। विपक्षे दोषमाह—परमिति।

कथं तर्हीश्वरे मतिं कुर्यादित्याशङ्क्य स्वामित्वेनेत्याह—तस्मादिति। आदिपदं प्रदक्षिणादिसङ्ग्रहार्थम्। ऐकात्म्यशास्त्रादात्ममतिरेव ब्रह्मणि कर्तव्येत्याशङ्क्याऽऽह—न पुनरिति। का तर्हि शास्त्रगतिस्ताऽऽह—ब्रह्मेति। २५ मुख्यार्थत्वसम्भवे किमित्यर्थवादतेत्याशङ्क्याऽऽह—सर्वेति। संसारित्वासंसारित्वादिना मिथो विरुद्धयोर्जीवेश्वरो शीतोष्ण- वदैक्यानुपपत्तिर्न्याय। विज्ञानात्मविषयत्व तटस्थेश्वरविषयत्वं चोपनिषदो निवारयन्परिहरति—नेत्यादिना। परस्यैव प्रवेशवादिमन्त्रब्राह्मणवादानुदाहरति—पुर इत्यादिना। यत्त्वहं ब्रह्मेति न गृह्णीयादिति तत्राऽऽह—सर्वश्रुतिषु चेति।

शास्त्रीयमप्येकत्वमनिष्टप्रसङ्गान्न स्वीकर्तव्यमिति शङ्कते—यद्येति। परस्य संसारित्वे तदससारित्वशास्त्रा- नर्थक्यं फलितमाह—तथा चेति। संसारिणोऽनन्यस्यापि परस्यासंसारित्वेसंसारित्वाभिमतोऽप्यसंसारीत्युपदेशानर्थक्य ३० तं विनैव, मुक्तिसिद्धिरिति दोषान्तरमाह—असंसारित्वे चेति। तत्राऽऽद्यं दोष विवृणोति—यदि तावदिति। 'न लिप्यते लोकदु खेन बाह्य' इत्याद्याः श्रुतय। यस्य नाहङ्कृतो भावो बुद्धिर्यस्य न लिप्यते' इत्याद्या स्मृतयः। कूटस्थासङ्गत्वादयो न्यायाः। द्वितीयं दोषप्रसङ्गमापाद्य प्रकटयति—अथेत्यादिना। दोषद्वये स्वयूथ्यसमाधिमुत्थाप-

१. यथा अहमेव राजेतिवदन् भृत्यः दोषभाक्।

२. जीवः ईश्वराद्भिन्नः तद्विरुद्धधर्मवत्वात् यदेव तदेव यथा दहनात् भिन्नस्तुहिनः इति न्यायः।

३५ ३. शास्त्रानर्थक्यम्—असंसारित्वशास्त्रस्यार्थाभावः।

४. उपदेशानर्थक्यम्—उपदेश विनापि मुक्तिसिद्धेः कथञ्चित् शरीरस्य आत्मभिन्नत्वज्ञानेन शरीरदुःखप्रयुक्तदु.खा- भावात् आत्मनि दु खं नास्तीति निर्णयेन प्रतिपादयितुं शक्यमित्यर्थः।

५. न संबध्यत इति शक्यं प्रतिपादयितुं यतो हि दु ख मिथ्या। अत ईश्वरः न मन्यते मिथ्यात्वात् जीवस्तु अविद्यावशादात्मनि दु.खं मन्यते।

स्वेन रूपेण। किं तर्हि विकारभावमापन्नो विज्ञानात्मत्वं प्रतिपेदे। स च विज्ञानात्मा परस्मादन्योऽनन्यश्च। येनान्यस्तेन संसारित्वसम्बन्धी येनानन्यस्तेनाहं ब्रह्मेत्यवधारणार्हः। एवं सर्वमविरुद्धं भविष्यतीति।

तत्र विज्ञानात्मनो विकारपक्ष एता गतयः। पृथिवीद्रव्यवदनेकद्रव्यसमाहारस्य सावयवस्य परमात्मन एकदेशविपरिणामो विज्ञानात्मा घटादिवत्। पूर्वसंस्थानावस्थस्य वा परस्यैकदेशो विक्रियते केशोषरादिवत्। सर्व एव वा परः परिणमेत्क्षीरादिवत्। तत्र समानजातीयानेकद्रव्यसमूहस्य कश्चिद्द्रव्यविशेषो विज्ञानात्मत्वं प्रतिपद्यते यदा, तदा समानजातीयत्वादेकत्वमुपचरितमेव न तु परमार्थतः। तथा च सति सिद्धान्तविरोधः।

अथ नित्यायुतसिद्धावयवानुगतोऽवयवी पर आत्मा तस्य तदवस्थस्यैकदेशो विज्ञानात्मा संसारी तदाऽपि सर्वावयवानुगतत्वादवयविन एवावयवगतो दोषो गुणो वेति विज्ञानात्मन संसारित्वदोषेण पर एवाऽऽत्मा सम्बध्यत इतीयमप्यनिष्टा कल्पना। क्षीरवत्सर्वपरिणामपक्षे सर्वश्रुतिस्मृतिकोपः। स चानिष्टः।

"निष्कलं निष्क्रियं शान्तम्" "दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यन्तरो ह्यजः" "आकाशवत्सर्वगतश्च नित्यः" "स वा एष महानज आत्माऽजरोऽमरोऽमृतः" "न जायते म्रियते वा कदाचित्" "अव्यक्तोऽयम्" इत्यादिश्रुतिस्मृतिन्यायविरुद्धा एते सर्वे पक्षाः। अचलस्य परमात्मन एकदेशपक्षे विज्ञानात्मनः कर्मफलवद्देशसंसरणानुपपत्तिः। परस्य वा संसारित्वमित्युक्तम्। परस्यैकदेशोऽग्निविस्फुलिङ्गवत्स्फुटितो विज्ञानात्मा संसरतीति चेत्तथाऽपि परस्यावयवस्फुटनेन क्षतप्राप्तिस्तत्संसरणे च परमात्मप्रदेशान्तरावयवव्यूढे छिद्रताप्राप्तिरव्रणत्ववाक्यवि-

यति—अत्रेति। कथं तर्हि तस्य कार्ये प्रविष्टस्य जीवत्वं तत्राऽऽह—किं तर्हीति। जीवस्य ब्रह्मविकारत्वेऽपि ततो भेदान्नाहं ब्रह्मेति धीः अभेदे ब्रह्मणोऽपि संसारितेत्याशङ्क्याऽऽह—स चेति। तथाऽपि कथं शङ्कितदोषाभावस्तत्राऽऽह—येनेति। एवमिति भिन्नाभिन्नत्वपरामर्शः। सर्वमित्युपदेशादिनिर्देशः।

एकदेशिमतं निराकर्तुं विकल्पयति—तत्रेति। एता गतय इत्येते पक्षा वक्ष्यमाणा सम्भवन्ति न गत्यन्तरमित्यर्थः। यथा पृथिवीशब्दितं द्रव्यमनेकावयवसमुदायस्तथा भूतभौतिकात्मकानेकद्रव्यसमुदायः सावयवः परमात्मा तस्यैकदेशश्चैतन्यलक्षणस्तद्विकारो जीवः पृथिव्येकदेशमृद्विकारघटशरावादिवदित्येकः कल्पः। यथा भूमेरूषरादिदेशो नखकेशादिर्वा पुरुषस्य विकारस्तथाऽवयविनः परस्यैकदेशविकारो जीव इति द्वितीयः कल्पः। यथा क्षीरं स्वर्णं वा सर्वात्मना दधिरुचकादिरूपेण परिणमते तथा कृत्स्न एव परो जीवभावेन परिणमेदिति कल्पान्तरम्। तत्राऽऽद्यमनूद्य दूषयति—तत्रेत्यादिना। नानाद्रव्याणां समाहारो वा तानि वाऽन्योन्यापेक्षाणि परश्चेन्न तस्यैक्यं स्यान्नहि बहूनां मुख्यमैक्यं समाहारस्य च समुदायापरपर्यायस्य समुदायिभ्यो भेदाभेदाभ्यां दुर्भणत्वेन कल्पितत्वादित्यर्थः। तर्हि ब्रह्मणो मुख्यमैक्यं मा भूत्तत्राऽऽह—तथा चेति। न हि तन्नानात्वं कस्यापि सम्मतमिति भावः।

द्वितीयमनूद्य निराकरोति—अथेत्यादिना। सर्वदैव पृथगवस्थितेष्ववयवेषु जीवेष्वनुस्यूतश्चेतनोऽवयवी परश्चेत्तर्हि यथा प्रत्यवयवं मलसंसर्गे देहस्य मलिनत्वं तथा परस्य जीवगतैर्दुःखैर्महद्दुःखं स्यादिति प्रथमकल्पनावद्द्वितीयाऽपि कल्पना न युक्तेत्यर्थः। तृतीयं प्रत्याह—क्षीरवदिति। 'न जायते म्रियते वा विपश्चित्' इत्याद्याः श्रुतयः। 'न जायते म्रियते वा कदाचित्' इत्याद्याः स्मृतयः। श्रुत्यादिकोपस्येष्टत्वमाशङ्क्य वैदिकं प्रत्याह—स चेति।

श्रुतिस्मृती विवेचयन्पक्षत्रयसाधारणं दूषणमाह—निष्कलमित्यादिना। कूटस्थस्य निरवयवस्य कार्त्स्न्यैकदेशाभ्यां परिणामासम्भवो न्यायः। जीवस्य परमात्मैकदेशत्वे दोषान्तरमाह—अचलस्येति। एकदेशस्यैकदेशिव्यतिरेकेणाभावाज्जीवस्य स्वर्गादिषु गत्यनुपपत्तिरित्युक्तमन्यथा परस्यापि गतिः स्यान्नहि पटावयवेषु चलत्सु पटो न चलतीत्याह—परस्य वेति। उक्तं यदि तावत्परमात्मेत्यादाविति शेषः। जीवस्य संसारित्वेऽपि परस्य तन्नास्तीति शङ्कते—परस्येति। परस्य निरवयवत्वश्रुतेरवयवस्फुटनानुपपत्तिं मन्वानो दूषयति—तथाऽपीति। यत्र परस्यावयवः स्फुटयति तत्र तस्य क्षतं प्राप्नोति तदीयावयवसंसरणे च परमात्मनः प्रदेशान्तरेऽवयवानां व्यूहे सत्युपचयः स्यात्तथा च परस्यावयवा यतो निर्गच्छन्ति तत्र च्छिद्रताप्राप्तिर्यत्र च ते गच्छन्ति तत्रोपचयः स्यादित्यकायमव्रणमस्थूलमनण्वह्रस्वमित्यादिवाक्यविरोधो भवेदित्यर्थः। परस्यैकदेशो विज्ञानात्मेति पक्षे दुःखित्वमपि तस्य दुर्वारमापतेदिति दोषान्तरमाह—आत्मावयवेति।

१. अवयवेति व्यूढमुपचितम्।

रोधश्च। आत्मावयवभूतस्य विज्ञानात्मनः संसरणे[1] परमात्मशून्यप्रदेशाभावादवयवान्तरनोदनव्यूहनाभ्यां हृदयशूलेनेव परमात्मनो दुःखित्वप्राप्तिः।

अग्निविस्फुलिङ्गादिदृष्टान्तश्रुतेर्न दोष इति चेन्न, श्रुतेर्ज्ञापकत्वात्। न शास्त्रं पदार्थानन्यथा कर्तुं प्रवृत्तम्। किं तर्हि यथाभूतानामज्ञातानां ज्ञापने। किञ्चातः? शृण्वतो यद्भवति—यथाभूता मूर्तामूर्तादिपदार्थधर्मा लोके
५ प्रसिद्धास्तद्दृष्टान्तोपादानेन तदविरोध्येव वस्त्वन्तरं ज्ञापयितुं प्रवृत्तं शास्त्रं न लौकिकवस्तुविरोधज्ञापनाय[2] लौकिकमेव दृष्टान्तमुपादत्ते। उपादीयमानोऽपि दृष्टान्तोऽनर्थकः स्याद्दार्ष्टान्तिकासङ्गतेः। न ह्यग्निः शीत आदित्यो न तपतीति वा दृष्टान्तशतेनापि प्रतिपादयितुं शक्यम्। प्रमाणान्तरेणान्यथाधिगतत्वाद्वस्तुनः।

न[3] च प्रमाणं प्रमाणान्तरेण विरुध्यते। प्रमाणान्तराविषयमेव हि प्रमाणान्तरं ज्ञापयति। न च लौकिकपदपदार्थाश्रयणव्यतिरेकेणाऽऽगमेन शक्यमज्ञातं वस्त्वन्तरमवगमयितुम्। तस्मात्प्रसिद्धन्यायमनुसरता न शक्या
१० परमात्मनः सावयवत्वांशांशित्वकल्पना परमार्थतः प्रतिपादयितुम्।

क्षुद्रा विस्फुलिङ्गा ममैवांश इति च श्रूयते स्मर्यते चेति चेन्न, एकत्वप्रत्ययार्थपरत्वात्। अग्नेर्हि विस्फुलिङ्गोऽग्निरेवेत्येकत्वप्रत्ययार्हो दृष्टो लोके। तथा चांशोंऽशिनैकत्वप्रत्ययार्हः। तत्रैवं सति विज्ञानात्मनः परमात्म-

मृल्लोह[4]विस्फुलिङ्गदृष्टान्तश्रुतिवशात्परस्यावयवा जीवाः सिध्यन्तीत्यतो जीवानां परैकदेशत्वे नोक्तो दोषोऽवतरति युक्त्यपेक्षया, श्रुतेर्बलवत्त्वादिति शङ्कते—अग्निविस्फुलिङ्गादीति। शास्त्रार्थो युक्तिविरुद्धो न सिध्यतीति
१५ दूषयति—न श्रुतेरिति। नञर्थं विवृणोति—न शास्त्रमिति। हेतुभागमाकाङ्क्षापूर्वकं विभजते—किं तर्हीति। स्मृत्यादिव्यावृत्त्यर्थमज्ञातानामित्युक्तम्। अस्तु शास्त्रमज्ञातार्थज्ञापकं तथाऽपि परस्य नास्ति सावयवत्वमित्यत्र किमायातमिति पृच्छति—किञ्चात इति। शास्त्रस्य यथोक्तस्वभावत्वे यत्परस्य निरवयवत्वं फलति तदुच्यमानं समाहितेन श्रोतव्यमित्याह—शृण्विति। तत्र प्रथमं लोकाविरोधेन शास्त्रप्रवृत्तिं दर्शयति—यथेति। आदिपदेन भावाभावादि गृह्यते। पदार्थेष्वेव भोक्तृपारतन्त्र्याद्धर्मशब्दः तेषां लोकप्रसिद्धपदार्थानां दृष्टान्तानामुपन्यासेनेति यावत्। तदविरोधि
२० लोकप्रसिद्धपदार्थाविरोधीत्यर्थः। वस्त्वन्तरं निरवयवादि दार्ष्टान्तिकम्। तदविरोध्येवेत्येवकारस्य व्यावर्त्यमाह—न लौकिकेति। विपक्षे दोषमाह—उपादीयमानोऽपीति। सामान्येनोक्तमर्थं दृष्टान्तविशेषनिविष्टतया स्पष्टयति—न हीति। अग्नेरुष्णत्वमादित्यस्य तापकत्वमन्यथेत्युच्यते।

ननु लौकिकं प्रमाणं लौकिकपदार्थाविरुद्धमेव स्वार्थं समर्पयति वैदिकं पुनरपौरुषेयं तद्विरुद्धमपि स्वार्थं प्रमापयेदलौकिकविषयत्वादत आह—न चेति। ननु श्रुतेरज्ञातज्ञापकत्वे लोकानपेक्षत्वात्तद्विरोधेऽपि का हानिस्तत्राऽऽह—
२५ न चेति। लोकावगतसामर्थ्यः[5] शब्दो वेदेऽपि बोधक इति न्यायात्तदनपेक्षा श्रुतिर्नाज्ञातं ज्ञापयितुमलमित्यर्थः। शास्त्रस्य लोकानुसारित्वे सिद्धे फलितमाह—तस्मादिति। प्रसिद्धो न्यायो लौकिको दृष्टान्तः। न हि नित्यस्याऽऽकाशादेः सावयवत्वं परश्च नित्योऽभ्युपगतस्तन्न तस्य सावयवत्वेनांशांशित्वकल्पना वस्तुतः संभवति लोकविरोधादित्यर्थः।

जीवस्य परांशत्वानङ्गीकारे श्रुतिस्मृत्योर्गतिर्वक्तव्येति शङ्कते—क्षुद्रा इति। तयोर्गतिमाह—नेत्यादिना। विस्फुलिङ्गे दर्शितं न्यायं सर्वत्रांशमात्रेऽतिदिशति—तथा चेति। दृष्टान्ते यथोक्तनीत्या स्थिते दार्ष्टान्तिकमाह—तत्रेति।

---

३० 1. संसरणेति—यदि जीवः भूलोकं त्यक्त्वा स्वर्गं गच्छति तदा जीवपूरितदेशस्य छिद्रता तेन चावयवान्तरेण नोदनं शब्दाजनकसंयोगः तेन चावयवेन देशान्तरे व्यूह उपचय.। ततश्च ईशस्य दुःखप्राप्तिः। हृदयशूलवत्। जीवानां परमात्ममध्यदेशव्यापित्वात् तत्र च छिद्रेतत्पूरणाद्युपद्रवे हृदयशूलवत् वेदनेत्यर्थ.।

2. विरोधज्ञापनाय। लोके अग्निस्सावयवः आत्मा निरवयवः विरुद्धदृष्टान्तप्रदर्शनं न विरोधज्ञापनाय अपि तु विवक्षितधर्मेण दृष्टान्तत्वमेकदेशावछिन्नोऽग्निरेव स्फुलिंगः एवमुपाध्यवच्छिन्नं ब्रह्मैव जीवः। तदुक्तं एकत्व-
३५ प्रत्ययार्थं इति।

3. न च प्रमाणमिति—अत्र वार्तिकोपपादनं ज्ञेयम् (बृ. वा. २-१-४९५-५०४)।

4. मृल्लोहेति—यथा मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यात् यथा लोहमणिना सर्वं लोहमयं विज्ञातं यथाग्नेर्विस्फुलिंगा इति विस्फुलिंग दृष्टान्तः एभिर्दृष्टान्तैः ब्रह्मापि सावयव इति चेन्न। न सर्वसाम्येन दृष्टान्तः।

5. लोकावगतसामर्थ्य इति—'य एव लौकिकाः शब्दाः त एव वैदिकाः त एव च तेषामर्थाः' इति लोकवेदाधिकरण-
४० सिद्धान्तोऽयम्। (पू० मी० १-३-८)

विकारांशत्व[1]वाचकाः शब्दाः परमात्मैकत्वप्रत्ययाधित्सवः। उपक्रमोपसंहाराभ्यां च। सर्वासु ह्युपनिषत्सु पूर्वमेकत्वं प्रतिज्ञाय दृष्टान्तैर्हेतुभिश्च परमात्मनो विकारांशादित्वं जगतः प्रतिपाद्य पुनरेकत्वमुपसंहरति। तद्यथेहैव तावदिदं सर्वं यदयमात्मेति प्रतिज्ञायोत्पत्तिस्थितिलयहेतुदृष्टान्तैर्विकारविकारित्वाद्येकत्वप्रत्ययहेतून्प्रतिपाद्या"नन्तरमबाह्यमयमात्मा ब्रह्म"त्युपसंहरिष्यति। तस्मादुपक्रमोपसंहाराभ्यामयमर्थो निश्चीयते परमात्मैकत्वप्रत्ययद्रढिम्न उत्पत्तिस्थितिलयप्रतिपादकानि वाक्यनीति। अन्यथा वाक्यभेदप्रसङ्गाच्च।

सर्वोपनिषत्सु हि विज्ञानात्मनः परमात्मनैकत्वप्रत्ययो विधीयत इत्यविप्रतिपत्तिः सर्वेषामुपनिषद्वादिनाम्[2]। तद्विध्येकवाक्ययोगे च सम्भवत्युत्पत्त्यादिवाक्याना वाक्यान्तरत्वकल्पनायां न प्रमाणमस्ति। फलान्तरं च कल्पयितव्यं स्यात्। तस्मादुत्पत्त्यादिश्रुतय आत्मैकत्व[3]प्रतिपादनपराः।

अत्र च सम्प्रदायविद आख्यायिकां सम्प्रचक्षते—कश्चित्किल राजपुत्रो जातमात्र एव मातापितृभ्यामपविद्धो[4] व्याधगृहे संवर्धितः सोऽमुष्य वंश्यतामजानन्व्याधजातिप्रत्ययो[5] व्याधजाति[6]कर्माण्येवानुवर्तते न राजाऽस्मीति राजजाति[7]कर्माण्यनुवर्तते। यदा पुनः कश्चित्परमकारुणिको राजपुत्रस्य राजश्रीप्राप्तियोग्यतां[8] जानन्नमुष्य पुत्र-

परमात्मना सह जीवस्यैकत्वविषयं प्रत्ययमाधातुमिच्छन्तीति तथोक्ताः। तेषामेकत्वप्रत्ययावतारहेतुत्वे हेत्वन्तरं सङ्गृह्णाति—उपक्रमेति। तदेव स्फुटयति—सर्वासु हीति। उक्तमर्थमुदाहरणनिष्ठतया विभजते—तद्यथेति। इहेति प्रकृतोपनिषदुक्तिः। आदिशब्देनाशाशित्वादि गृह्यते। विवृतं सङ्ग्रहवाक्यमुपसंहरति—तस्मादिति। तेषां स्वार्थनिष्ठत्वे दोषं वदन्नेकत्वप्रत्ययार्थत्वे हेत्वन्तरमाह—अन्यथेति।

'सम्भवत्येकवाक्यत्वे वाक्यभेदश्च नेष्यते' इति न्यायेनोक्तं प्रपञ्चयति—सर्वोपनिषत्स्विति। किञ्च तेषां स्वार्थनिष्ठत्वे श्रुतफलाभावात्फलान्तरं कल्पनीयम्। न चैकत्वप्रत्ययविषयतया तत्फले निराकाङ्क्षेषु तेषु तत्कल्पना युक्ता। दृष्टे सत्यदृष्टकल्पनानवकाशादित्याह—फलान्तरञ्चेति। उत्पत्त्यादिश्रुतीनां स्वार्थनिष्ठत्वासम्भवे फलितमुपसंहरति—तस्मादिति।

तत्त्वमस्यादिवाक्यमैक्यपरं तच्छेषः सृष्ट्यादिवाक्यमित्युक्तेऽर्थे द्रविडाचार्यसम्मतिमाह—अत्र चेति। तत्र दृष्टान्तरूपामाख्यायिकां प्रमाणयति—कश्चिदिति। जातमात्रे प्रागवस्थायामेव राजाऽस्मीत्यभिमानाभिव्यक्तेरित्यर्थः। ताभ्यां तत्परित्यागे निमित्तविशेषस्यानिश्चितत्वद्योतनार्थं किलेत्युक्तम्। व्याधिजाति प्रत्ययः तत्प्रयुक्तो व्याधोऽस्मीत्यभिमानो यस्य स तथा व्याधजातिकर्माणि तत्प्रयुक्तानि मांसविक्रयणादीनि। राजाऽस्मीत्यभिमानपूर्वकं तज्जातिप्रयुक्तानि परिपालनादीनि कर्माणि। अज्ञानं तत्कार्यं चोक्त्वा ज्ञान तत्फलं च दर्शयति—यदेत्यादिना। बोधन-

---

१. विकारांशत्वादिकं—विकारत्वं प्रपञ्चस्य अंशत्वं जीवानाम्। आदिना प्रतिबिम्बत्व 'एकधा बहुधा चैव दृश्यते जलचन्द्रवत्' इत्यादौ।

२. सर्वेषामुपनिषद्वादिना जीवे ब्रह्मैक्यं विधीयते अज्ञातं ज्ञाप्यते इत्यविप्रतिपत्तिः। आचार्यानन्तरं ये समागता श्रीरामानुजमध्वनिम्बार्कादयः ते तु विप्रतिपद्यन्त एव अहं ब्रह्मास्मि-अहेयं ब्रह्मास्ति, तत्त्वमसि-अतत्त्वमसि इत्यादिरूपेण श्रीमध्वाः। श्रीरामानुजास्तु-तत्त्वमसि तच्छरीरकं तत् इति व्याकुर्वन्ति। अहं ब्रह्मास्मि मदन्यत् ब्रह्म नास्ति इति च व्याख्यानात्-आचार्यैस्तु मुख्यार्थमादायाविप्रतिपन्नत्वमुक्तम्। उपनिषद्वादिनामित्यस्य उपनिषदां सर्वप्रमाणापेक्षया प्रबलप्रमाणत्ववादिनामित्यर्थः। तेन द्वैतादिवादिनां उपनिषदपेक्षया प्रबलप्रमाणत्व पाञ्चरात्रस्य प्रत्यक्षादेश्चाभ्युपगच्छतां व्यावृत्तिः।

३. आत्मैकत्वपरा इति उत्पत्तिवाक्यैः प्रपञ्चमात्रस्य ब्रह्मण उत्पन्नत्वात् उपादानापेक्षया उपादेयस्य भेदाभावात् ब्रह्मणः अद्वितीयत्वमुत्पत्तिवाक्यैः समर्थ्यते। तदभावे तेषामन्यत एवोत्पत्तिक्रमेण ब्रह्मण अद्वितीयत्वं न सिद्ध्येत्।

४. अपविद्धः—चोरैरादायारण्ये प्रक्षिप्तः।

५. प्रत्ययः विश्वासः।

६. व्याधजात्युचितकर्माणि मांसविक्रयणादीनि।

७. राजजातिकर्माणि अर्थशास्त्रपरिशीलन धनुर्विद्याग्रहणमित्यादीनि।

८. राजश्रीप्राप्तियोग्यता ज्यौतिषिकमुखात्।

तान्बोधयति न त्वं व्याधोऽमुष्य राज्ञः पुत्रः कथञ्चिद्व्याधगृहमनुप्रविष्ट इति। स एवं बोधितस्त्यक्त्वा व्याधजातिप्रत्ययकर्माणि पितृपैतामहीमात्मनः पदवीमनुवर्तते राजाऽहमस्मीति। तथा किलायं परस्मादग्निविस्फुलिङ्गादिवत्तज्जातिरेव विभक्त इह देहेन्द्रियादिगहने प्रविष्टोऽसंसारी सन्देहेन्द्रियादिसंसार[1]धर्ममनुवर्तते देहेन्द्रियसङ्घातोऽस्मि कृशः स्थूलः सुखी दुःखीति परमात्मतामजानन्नात्मनः। न त्वमेतदात्मकः परमेव ब्रह्मास्यसंसारीति प्रतिबोधित आचार्येण हित्वैषणात्रयानुवृत्ति[2] ब्रह्मैवास्मीति प्रतिपद्यते।

अत्र[3] राजपुत्रस्य राजप्रत्ययवद्ब्रह्मप्रत्ययो दृढीभवति विस्फुलिङ्गवदेव त्वं परस्माद्ब्रह्मणो भ्रष्ट इत्युक्ते। विस्फुलिङ्गस्य प्रागग्नेरंशादग्न्येकत्वदर्शनात्। तस्मादेकत्वप्रत्ययदार्ढ्याय सुवर्णमणिलोहाग्निविस्फुलिङ्गदृष्टान्ता नोत्पत्त्यादिभेदप्रतिपादनपराः। सैन्धवघनवत्प्रज्ञप्त्येकरस[4]नैरन्तर्यावधारणा"देकधैवानुद्रष्टव्यमि"ति च। यदि च ब्रह्मणश्चित्रपटवद्वृक्षसमुद्रादिवच्चोत्पत्त्याद्यनेकधर्मविचित्रता विजिग्राहयिषितैकरसं सैन्धवघनवदन"न्तरमबाह्य"मिति नोपसमहरिष्यदेकधैवानुद्रष्टव्यमिति च न प्रायोक्ष्यत। "य इह नानेव पश्यती"ति निन्दावचनं च।

तस्मादेकरूपैकत्वप्रत्ययदार्ढ्यायैव सर्ववेदान्तेषूत्पत्तिस्थितिलयादिकल्पना न तत्प्रत्यय[5]करणाय। न च निरवयवस्य परमात्मनोऽसंसारिणः संसार्येकदेशकल्पना[6] न्याय्या स्वतोऽदेशत्वात्परमात्मनः। अदेशस्य परस्यैकदेशसंसारित्वकल्पनायां पर एव संसारीति कल्पितं भवेत्। अथ परोपाधिकृत एकदेशः परस्य घटकरकाद्याकाशवत्। न तदा तत्र विवेकिनां परमात्मैकदेशः पृथक्संव्यवहारभागिति बुद्धिरुत्पद्यते। अविवेकिनां विवेकिनां चोपचरिता बुद्धिर्दृष्टेति चेत्। न, अविवेकिनां मिथ्याबुद्धित्वात्। विवेकिनां च संव्यवहारमात्रालम्बनार्थत्वात्।

प्रकारमभिनयति—न त्वमिति। कथ तर्हि शवरवेश्मप्रवेशस्तत्राऽऽह—कथंचिदिति। राजाऽहमस्मीत्यभिमानपूर्वकमात्मनः पितृपैतामही पदवीमनुवर्तत इति सम्बन्धः। दार्ष्टान्तिकरूपामाख्यायिकामाचष्टे—तथेति। जीवस्य परस्माद्विभागे निमित्तमज्ञानं तत्कार्यञ्च प्रसिद्धमिति द्योतयितु किलेत्युक्तम्। तज्जातिस्तत्स्वभावो वस्तुतः परमात्मैवेति यावत्। इहेत्यपरोक्षानुभवगम्यतोक्तिः। गहनं गम्भीरं वनम्। ससारधर्मानुवर्तने हेतुमाह—परमात्मतामिति। उक्ताविद्यातत्कार्यविरोधिनी ब्रह्मात्मविद्या लम्भयति—न त्वमिति।

राजपुत्रस्य राजाऽस्मीति प्रत्ययवद्वाक्यादेवाधिकारिणि ब्रह्मास्मीति प्रत्ययश्चेत्कुतं विस्फुलिङ्गादिदृष्टान्तश्रुत्येत्याशङ्क्याऽऽह—अत्रेति। तथाऽपि कथं ब्रह्मप्रत्ययदार्ढ्यं तत्राऽऽह—विस्फुलिङ्गस्येति। दृष्टान्तेष्वेकत्वदर्शनं तस्मादिति परामृष्टम्। उत्पत्त्यादिभेदे नास्ति शास्त्रतात्पर्यमित्यत्र हेत्वन्तरमाह—सैन्धवेति। चकारोऽवधारणादिति पदमनुकर्षति। सगृहीतमर्थं विवृणोति—यदि चेत्यादिना। निन्दावचनं च न प्रायोक्ष्यतेति सम्बन्धः।

एकत्वस्यावधारणफलमाह—तस्मादिति। एकत्वस्य भेदसहत्वं वारयितुमेकरूपविशेषणम्। आदिशब्देन प्रवेशनियमने गृह्येते। न तत्प्रत्ययकरणायेत्यत्र तच्छब्देनोत्पत्त्यादिभेदो विवक्षितः। किञ्च परस्यैकदेशो विज्ञानात्मेत्यत्र तदेकदेशः स्वाभाविको वा स्यादौपाधिको वेति विकल्प्याऽऽद्य दूषयति—न चेति। विपक्षे दोषमाह—अदेशस्येति। द्वितीयमुत्थापयति—अथेति। एकदेशस्यौपाधिकत्वपक्षे परस्मिन्विवेकवता तदखण्डत्वबुद्धिभाजां तदेकदेशो वस्तुतः पृथग्भूत्वा व्यवहारालम्बनमिति नैव बुद्धिर्जायते औपाधिकस्य स्फटिकलौहित्यवन्मिथ्यात्वादित्युत्तरमाह—न तदेति। ननु जीवे कर्ताऽहं भोक्ताऽहमिति परिच्छिन्नधीः सर्वेषामुपलभ्यते। सा च तस्य वस्तुतोऽपरिच्छिन्नब्रह्ममात्रत्वान्मञ्चक्रोशनधीवदुपचरिता। तस्मादुभयेषामुक्तात्मबुद्धिदर्शनात्परमात्मैकदेशत्वं जीवस्य दुर्वारमिति चोदयति—अविवेकिनामिति। तत्राविवेकिना यथोक्ता बुद्धिरुपचरिता न भवत्यतस्मिंस्तद्बुद्धित्वेनाविद्यात्वादिति परिहरति—नेत्यादिना। तथाऽपि विवेकिनामीदृशीधीरुपचरितेति चेत्तत्राऽऽह—विवेकिनाञ्चेति। तेषां सव्यवहारोऽभिज्ञाभिवदनात्मकस्तावन्मात्रस्याऽऽलम्बनमाभासभूतोऽर्थस्तद्विषयत्वात्तद्बुद्धेरपि मिथ्याबुद्धित्वादुपचरितत्वासिद्धिरित्यर्थः।

---

१. देहेन्द्रियादिसंसारः तदभिमानस्य जननादिकारणत्वात्।

२. एषणात्रयानुवृत्तिः पुत्रवित्तलोकैषणानां विषयप्राप्तितदनुकूलप्रयत्नादिः।

३. अग्निविस्फुलिंगदृष्टान्तस्य ब्रह्माद्वितीयत्वगमकत्वमुपपादयति—अत्रेति।

४. प्रज्ञप्त्येकघन इति—'विज्ञान घन एव' इति मैत्रेयीब्राह्मणानुवादः 'अनन्तरमबाह्य' बाह्याभ्यन्तरभेद रहितमित्यर्थः।

५. तत्प्रत्ययः—जगत्कारणत्वादिप्रत्ययः।

६. संसार्येकदेशकल्पना—संसारी एकदेश इति कल्पना।

यथा कृष्णो रक्तश्चाऽऽकाश इति विवेकिनामपि कदाचित्कृष्णता रक्तता वाऽऽकाशस्य संव्यवहारमात्रालम्बनार्थत्वं प्रतिपद्यत इति न परमार्थतः कृष्णो रक्तो वाऽऽकाशो भवितुमर्हति। अतो न पण्डितैर्ब्रह्मस्वरूपप्रतिपत्तिविषये ब्रह्मणोंऽशांश्येकदेशैकदेशिविकारविकारित्वकल्पना कार्या। सर्वकल्पनापनयनार्थसारपरत्वात्सर्वोपनिषदाम्। अतो हित्वा सर्वकल्पनामाकाशस्येव निर्विशेषता प्रतिपत्तव्या। "आकाशवत्सर्वगतश्च नित्यः" "न लिप्यते लोकदुःखेन बाह्यः" इत्यादिश्रुतिशतेभ्यः।

नाऽऽत्मानं ब्रह्मविलक्षणं कल्पयेदुष्णात्मक इवाग्नौ शीतैकदेशं प्रकाशात्मके वा सवितरि तमएकदेशं सर्वकल्पनापनयनार्थसारपरत्वात्सर्वोपनिषदाम्। तस्मान्नामरूपोपाधिनिमित्ता एवाऽऽत्मन्यसंसारधर्मिणि सर्वे व्यवहाराः "रूपं रूपं प्रतिरूपो बभूव" "सर्वाणि रूपाणि विचित्य[1] धीरो नामानि कृत्वाऽभिवदन्यदास्ते" इत्येवमादिमन्त्रवर्णेभ्यः। न स्वत आत्मनः संसारित्वमलक्तकाद्युपाधिसंयोगजनितरक्तस्फटिकादिबुद्धिवद्भ्रान्तमेव न परमार्थतः। "ध्यायतीव लेलायतीव" "न कर्मणा वर्धते नो कनीयान्" "न कर्मणा लिप्यते पापकेन" "समं[2] सर्वेषु भूतेषु तिष्ठन्तम्" "शुनि चैव श्वपाके च" इत्यादिश्रुतिस्मृतिन्यायेभ्यः परमात्मनोऽसंसारितैव। अत एकदेशो विकारः शक्तिर्वा विज्ञानात्माऽन्यो वेति विकल्पयितुं निरवयवत्वाभ्युपगमे विशेषतो न शक्यते। अंशादिश्रुतिस्मृतिवादाश्चैकत्वार्था न तु भेदप्रतिपादका विवक्षितार्थैकवाक्ययोगादित्यवोचाम।

सर्वोपनिषदां परमात्मैकत्वज्ञापनपरत्वेऽथ किमर्थं तत्प्रतिकूलोऽर्थो विज्ञानात्मभेदः परिकल्प्यत इति। कर्मकाण्डप्रामाण्यविरोधपरिहारायेत्येके। कर्मप्रतिपादकानि हि वाक्यान्यनेके[3]क्रियाकारकफलभोक्तृकर्त्राश्रयाणि। विज्ञानात्मभेदाभावे ह्यसंसारिण एव परमात्मन एकत्वे कथमिष्टफलासु क्रियासु प्रवर्तेयुरनिष्टफलाभ्यो वा क्रियाभ्यो निवर्तेयुः।

विवेकिनामविवेकिनाञ्चाऽऽत्मनि परिच्छिन्नधीरुपलब्धेत्येतावता न तस्य वस्तुतो ब्रह्मांशत्वादि सिध्यतीत्येतद्दृष्टान्तेन साधयति—**यथेति**। अविवेकिनामिवेत्यपेरर्थः। ब्रह्मणि वस्तुतोऽशादिकल्पना न कर्तव्येति दार्ष्टान्तिकमुपसहरति—**अत इति**। अंशांशिनोर्विशदीकरणमेकदेशैकदेशीति। अतःशब्दोपात्तमेव हेतु स्फुटयति—**सर्वकल्पनेति**। सर्वासा कल्पनानामपनयनमेवार्थ. सारत्वेनाभीष्टस्तत्परत्वादुपनिषदा तदेकसमधिगम्ये ब्रह्मणि न कदाचिदपि कल्पनाऽस्तीत्यर्थः। उपनिषदा निर्विकल्पकवस्तुपरत्वे फलितमाह—**अतो हित्वेति**।

ब्रह्मणो निर्विशेषत्वेऽप्यात्मनस्तदेकदेशस्य सविशेपत्व कि न स्यादित्याशङ्क्याऽऽह—**नाऽऽत्मानमिति**। आत्मा निर्विशेषश्चेत्कथं तस्मिन्व्यवहारत्रय[4]मित्याशङ्क्याऽऽह—**तस्मादिति**। आत्मनि सर्वो व्यवहारो नामरूपोपाधिप्रयुक्त इत्यत्र प्रमाणमाह—**रूपं रूपमिति**। असंसारधर्मिणीत्युक्त विशेषण विशदयति—**न स्वत इति**। भ्रान्त्या संसारित्वमात्मनीत्यत्र मानमाह—**ध्यायतीति**। कूटस्थत्वासङ्गत्वादिन्याय। परमात्मनः साशत्वपक्षो निराकृतः। ननु तस्य निरंशत्वेऽपि कुतो जीवस्य तन्मात्रत्व तदेकदेशत्वादिसम्भवादत आह—**एकदेश इति**। कथं तर्हि 'पादोऽस्य विश्वा भूतानि' 'ममैवांशो जीवलोके' 'अंशो नानाव्यपदेशात्' 'सर्व एत आत्मानो व्युच्चरन्ति' इति श्रुतिस्मृतिवादास्तत्राऽऽह—**अंशादीति**।

न्यायागमाभ्यां जीवेश्वरयोरंशांशित्वादिकल्पनां निराकृत्य वेदान्तानामैक्यपरत्वे स्थिते सति द्वैतासिद्धिः फलतीत्याह—**सर्वोपनिषदामिति**। एकत्वज्ञानस्य सनिदानद्वैतध्वंसित्वमथशब्दार्थः। प्रकृत ज्ञानं तत्पदेन परामृश्यते। इत्यद्वैतमेव तत्त्वमिति शेष.। किमर्थमिति प्रश्न मन्वानो द्वैतिना मतमुत्थापयति—**कर्मकाण्डेति**। वेदान्तानामैक्यपरत्वेऽपि कथ तत्प्रामाण्यविरोधप्रसङ्गस्तत्राऽऽह—**कर्मेति**। तथाऽपि कथ विरोधावकाश स्यादित्याशङ्क्याऽऽह—**विज्ञानात्मेति**।

---

१. विचित्य सृष्ट्वा. सृष्ट्वा तत्र प्रविश्येति शेष.।

२ समं सर्वेषु—समत्व तत्तद्भूतगतधर्मै. अविकृतम्।

३. अनेकेति—अनेका. क्रिया प्रधानयागतदङ्गभूताचमनादय अङ्गयागादयश्च। कारकाणि—द्रव्यं देवता च। फलं स्वर्गादि। भोक्ता कर्ता च श्राद्धवैश्वानरेष्ट्यादौ भिन्नौ। इतरकर्मसु शास्त्रफल प्रयोक्तरीति न्यायात् कर्तैव भोक्ता तदाश्रयाणि तद्बोधकानि।

४. व्यवहारत्रयं नामरूपोपाधिभिः कल्पितम्।

कस्य वा बद्धस्य मोक्षायोपनिषदारभ्येत । अपि च परमात्मैकत्ववादिपक्षे कथं परमात्मैकत्वोपदेशः कथं वा तदुपदेशग्रहणफलम् । बद्धस्य हि बन्धनाशायोपदेशस्तदभाव उपनिषच्छास्त्रं निर्विषयमेव ।

एवं तर्ह्युपनिषद्वादिपक्षस्य कर्मकाण्डवादिपक्षेण चोद्यपरिहारयोः समानः पन्थाः । येन भेदाभावे कर्मकाण्डं निरालम्बनमात्मानं न लभते प्रामाण्यम्प्रति तथोपनिषदपि । एवं तर्हि यस्य प्रामाण्ये स्वार्थविघातो नास्ति तस्यैव ५ कर्मकाण्डस्यास्तु प्रामाण्यम् । उपनिषदां तु प्रामाण्यकल्पनायां स्वार्थविघातो भवेदिति मा भूत्प्रामाण्यम् । न हि कर्मकाण्डं प्रमाणं सदप्रमाणं भवितुमर्हति । न हि प्रदीपः प्रकाश्यं प्रकाशयति न प्रकाशयति चेति ।

प्रत्यक्षादिप्रमाणविप्रतिषेधाच्च । न केवलमुपनिषदो ब्रह्मैकत्वं प्रतिपादयन्त्यः स्वार्थविघातं कर्मकाण्डप्रामाण्यविघातं च कुर्वन्ति प्रत्यक्षादिनिश्चितभेदप्रतिपत्त्यर्थप्रमाणैश्च विरुध्यन्ते । तस्मादप्रामाण्यमेवोपनिषदाम् । अन्यार्थता वाऽस्तु न त्वेव ब्रह्मैकत्वप्रतिपत्त्यर्थता । न, उक्तोत्तरत्वात् । प्रमाणस्य हि प्रमाणत्वमप्रमाणत्वं वा १० प्रमोत्पादनानुत्पादननिमित्तम् । अन्यथा चेत्स्तम्भादीनामप्रामाण्यप्रसङ्गाच्छब्दादौ प्रमेये । किञ्चातः । यदि तावदुपनिषदो ब्रह्मैकत्वप्रतिपत्तिप्रमां कुर्वन्ति कथमप्रमाणं भवेयुः । न कुर्वन्त्येवेति चेद्यथाऽग्निः शीतमिति स भवानेवं

केवलाद्वैतपक्षे कर्मकाण्डविरोधमुक्त्वा तत्रैव ज्ञानकाण्डविरोधमाह—कस्य वेति । परस्य नित्यमुक्तत्वादन्यस्य स्वतः परतो वा बद्धस्याभावाच्छिष्याभावस्तया चाधिकार्यभावादुपनिषदारम्भासिद्धिरित्यर्थः । कर्मकाण्डस्य काण्डान्तरस्य च प्रामाण्यानुपपत्तिर्विज्ञानात्माभेदं कल्पयतीत्यर्थापत्तिद्वयमुक्तं तत्र द्वितीयामर्थापत्तिं प्रपञ्चयति— १५ अपि चेति । का पुनरुपदेशस्यानुपपत्तिस्तत्राऽऽह—बद्धस्येति । तदभाव इत्यत्र तच्छब्दो बद्धमधिकरोति । निर्विषयं निरधिकारम् । किञ्च यदर्थापत्तिद्वयमुक्त्या विधयोत्तिष्ठति तर्हि भेदस्य दुर्निरूपत्वात्कथं कर्मकाण्डं प्रमाणमिति यद्ब्रह्मवादिना कर्मवादी चोद्यते तद्ब्रह्मवादस्य कर्मवादेन तुल्यम् । ब्रह्मवादेऽपि शिष्यशासित्रादिभेदाभावे कथमुपनिषत्प्रामाण्यमित्याक्षेप्तुं सुकरत्वाद्यश्चोपनिषदां प्रतीयमानं शिष्यशासित्रादिभेदमाश्रित्य प्रामाण्यमिति परिहारः स कर्मकाण्डस्यापि समानः ।

२० तत्रापि प्रातीतिकभेदमादाय प्रामाण्यस्य सुप्रतिपन्नत्वात् न च भेदप्रतीतिर्भ्रान्तिर्बाधाभावादित्यभिप्रेत्याऽऽह—एवं तर्हीति । चोद्यसाम्यं विवृणोति—येनेति । इति चोद्यसाम्यात्परिहारस्यापि साम्यमिति शेषः । ननु कर्मकाण्डं भेदपरं ब्रह्मकाण्डमभेदपरं प्रतिभाति न च वस्तुनि विकल्पः सम्भवत्यतोऽन्यतरस्याप्रामाण्यमत आह—एवं तर्हीति । तुल्यमुपनिषदामपि स्वार्थविघातकत्वमित्याशङ्क्याऽऽह—उपनिषदामिति । स्वार्थः शब्दशक्तिवशात्प्रतीयमानः सृष्ट्यादिभेदः । यत्तूच्यते कर्मकाण्डस्य व्यावहारिकं प्रामाण्यं न तात्त्विकं, तात्त्विकं तु काण्डान्तरस्येति तत्राऽऽह— २५ न हीति । यद्धि प्रामाण्यस्य व्यावहारिकत्वं तदेव तस्य तात्त्विकत्वं न हि प्रमाणं तत्त्वं च नाऽऽवेदयति व्याघातादित्यभिप्रेत्य दृष्टान्तमाह—न हीति । स्वार्थविघातात्कर्मकाण्डविरोधाच्चोपनिषदामप्रामाण्यमित्युक्तमुपसंहर्तुमितिशब्दः ।

उपनिषदप्रामाण्ये हेत्वन्तरमाह—प्रत्यक्षादीति । प्रत्यक्षादीनि निश्चितानि भेदप्रतिपत्त्यर्थानि प्रमाणानि तैरिति विग्रहः । अध्ययनविध्युपादापितानां कुतस्तासामप्रामाण्यमित्याशङ्क्याऽऽह—अन्यार्थता वेति । सिद्धान्तयति—नेत्यादिना । तदेव स्फुटयितुं सामान्यन्यायमाह—प्रमाणस्येति । स्वार्थे प्रमोत्पादकत्वाभावेऽपि प्रामाण्यमिच्छन्तं ३० प्रत्याह—अन्यथेति । यथोक्तप्रयोजकप्रयुक्तं प्रामाण्यमप्रामाण्यं वेत्येतस्मिन्पक्षे किं फलतीति पृच्छति—किञ्चेति । तत्र किमुपनिषदः स्वार्थं बोधयन्ति न वेति विकल्प्याऽऽद्यमनूद्य दूषयति—यदि तावदिति । द्वितीयमुत्थाप्य निराकरोति—नेत्यादिना । अग्निर्यथा शीतं न करोति तथोपनिषदोऽपि ब्रह्मैकत्वे प्रमां न कुर्वन्तीति वदन्तं प्रति प्रतिबन्दिग्रहो न युक्तोऽनुभवविरोधादित्याशङ्क्याऽऽह—यदीति । तर्हि स्वार्थे प्रमितिजनकत्वाद्वाक्यस्य प्रामाण्यं स्यादित्याशङ्क्याऽऽह—

१. अध्ययनविधीति—स्वाध्यायोऽध्येतव्यः इति विधिः श्रूयते । तत्र तव्यप्रत्ययस्य 'प्रैषातिसर्गेत्यादि'—पा० अ० ३-३-१६३ सूत्रानन्तरपठितेन 'तव्यत्तव्यानीयरः पा० अ०—३-१-९६ इति सूत्रेण प्रैषोऽर्थः । स च वेदे अप्राप्त- ३५ प्रवर्तनं तच्च शब्दभावना, तस्याः अर्थभावना साध्या, तस्याः फलापेक्षाया स्वाध्याय स्वकुलक्रमागतो वेदभाग फलत्वेनान्वेति । वेदस्य दृष्टफलमर्थज्ञानमेव दृष्टे संभवति अदृष्टायोगात् । अर्थज्ञानं तु अनुष्ठानद्वारा स्वर्गादिफलकम् । अतः वेदस्य सर्वस्यापि फलवत्त्वस्यावश्यकत्वात् निष्फलत्वेन अक्षरमात्रमपि न त्यक्तव्य फल वक्तव्यमित्यर्थं । फलाभावे अप्रामाण्यं भविष्यति अनधिगताबाधितप्रयोजनवदर्थज्ञानजनकत्वमेव प्रामाण्य- ४० मित्युक्तेः ।

वदन्वक्तव्य उपनिषत्प्रामाण्यप्रतिषेधार्थं भवतो वाक्यमुपनिषत्प्र माण्यप्रतिषेधं किं न करोत्येवाग्निर्वा रूपप्रकाशम्। अथ करोति यदि करोति भवतु तदा प्रतिषेधार्थं प्रमाणं भवद्वाक्यमग्निश्च रूपप्रकाशको भवेत्। प्रतिषेधवाक्य-प्रामाण्ये भवत्येवोपनिषदां प्रामाण्यम्। अत्र भवन्तो ब्रुवन्तु कः परिहार इति।

नन्वत्र प्रत्यक्षा मद्वाक्य उपनिषत्प्रामाण्यप्रतिषेधार्थप्रतिपत्तिरग्नौ च रूपप्रकाशनप्रतिपत्तिः प्रमा। कस्तर्हि भवतः प्रद्वेषा ब्रह्मैकत्वप्रत्यये प्रमां प्रत्यक्षं कुर्वतीषूपनिषत्सूपलभ्यमानासु, प्रतिषेधानुपपत्तेः। शोकमोहादि- ५ निवृत्तिश्च प्रत्यक्ष फलं ब्रह्मैकत्वप्रतिपत्तिपारम्पर्यजनितमित्यवोचाम। तस्मादुक्तोत्तरत्वादुपनिषदं प्रत्यप्रामाण्यशङ्का तावन्नास्ति।

यच्चोक्तं स्वार्थविघातकरत्वादप्रामाण्यमिति; तदपि न, तदर्थप्रतिपत्तेर्बाधकाभावात्। न ह्युपनिषद्भ्यो ब्रह्मैकमेवाद्वितीयं नैव चेति प्रतिपत्तिरस्ति। यथाऽग्निरुष्णः शीतश्चेत्यस्माद्वाक्याद्विरुद्धार्थद्वयप्रतिपत्तिः। अभ्युपगम्य चैतदवोचाम। न तु वाक्यप्रामाण्यसमय एष न्यायो यदुतैकस्य वाक्यस्यानेकार्थत्वम्। सति चानेकार्थत्वे स्वार्थश्च १० स्यात्तद्विघातकृच्च विरुद्धोऽन्योऽर्थः। न त्वेतद्वाक्यप्रमाणकानां विरुद्धमविरुद्धं चैकं वाक्यमनेकमर्थं प्रतिपादयतीत्येष समयः। अर्थैकत्वाद्ध्येकवाक्यता।

न च कानिचिदुपनिषद्वाक्यानि ब्रह्मैकत्वप्रतिषेधं कुर्वन्ति। यत्तु लौकिकं वाक्यमग्निरुष्णः शीतश्चेति न तत्रैकवाक्यता तदेकदेशस्य प्रमाणान्तरविषयानुवादित्वात्। अग्निः शीत इत्येतदेकं वाक्यमग्निरुष्ण इति तु प्रमा-

प्रतिषेधेति। उपनिषदप्रामाण्ये भवद्वाक्याप्रामाण्यं तत्प्रामाण्ये तूपनिषत्प्रामाण्यं दुर्वारमिति साम्ये प्राप्ते व्यवस्थापकः १५ समाधिर्वक्तव्य इत्याह—अत्रेति।

उक्तमेवार्थं चोद्यसमाधिभ्यां विशदयति—**नन्वित्यादिना**। प्रतिषेधमङ्गीकृत्योक्ता। यथोक्तोपनिषदुपलम्भे सति तस्य निरवकाशत्वात्प्रद्वेषानुपपत्तिरित्याह—**प्रतिषेधेति**। उपनिषदुत्थाया धियो वैफल्यात्तासाममानतेत्याशङ्क्याऽऽह—**शोकेति**। एकत्वप्रतिपत्तिस्तावदापातेन जायते। सा च विचारं प्रयुज्य मननादिद्वारा दृढीभवति। सा पुनरशेषं शोकादिकमपनयतीति पारम्पर्यजनितं फलमिति द्रष्टव्यम्। स्वार्थे प्रमाजनकत्वादुपनिषदां प्रामाण्यमित्युक्तमुपसंहरति— २० **तस्मादिति**।

प्रामाण्यहेतुसद्भावादुपनिषदां प्रामाण्यं प्रतिपाद्य तदप्रामाण्यं परोक्तमनुवदति—**यच्चोक्तमिति**। कथं हि तासा स्वार्थविघातकत्व किं ताभ्यो ब्रह्मैकमेवाद्वितीयं नैव चेति प्रतिपत्तिरुत्पद्यते किंवा काश्चिद्ब्रह्मैकत्वप्रतिपत्तिम-न्याश्चोपनिषदस्तत्प्रतिषेधं कुर्वन्तीति विकल्प्याऽऽद्यं दूषयति—**तदपि नेति**। तदेव प्रपञ्चयति—**न हीति**। एकस्य वाक्यस्यानेकार्थत्वमङ्गीकृत्य वैधर्म्योदाहरणमुक्तमित्याह—**अभ्युपगम्येति**। तस्याङ्गीकारवादत्वे हेतुमाह—**न त्विति**। २५ उक्तमर्थं व्यतिरेकद्वारा विवृणोति—**सति चेति**। भवत्वेकस्य वाक्यस्यानेकार्थत्व नेत्याह—**न त्विति**। कस्तर्हि तेषा समयस्तत्राऽऽह—**अर्थैकत्वादिति**। तदुक्तं प्रथमे तन्त्रे—अर्थैकत्वादेक वाक्य साकाङ्क्षं चेद्विभागे स्यादिति।

द्वितीय दूषयति—**न चेति**। एकस्य वाक्यस्यानेकार्थत्व लोके दृष्टमित्याशङ्क्याऽऽह—**यत्त्विति**। तदेकदेशस्येत्या-दिवाक्यं विवृणोति—**अग्निरिति**। अनुवादकबोधकभागयोरेकवाक्यत्वाभाव फलितमाह—**अत इति**। हेत्वर्थमुक्तमेव

१. स्वार्थविघातेति—किं स्वार्थ. स्वकारणीभूतसाधनचतुष्टयव्याघातकत्वमुत स्वप्रतिपाद्यव्याघातकत्व? नाद्यः ३० अद्वितीयादिवाक्यजन्यपरोक्षज्ञानस्य वैराग्याद्यनुकूलत्वात्। न द्वितीयः अद्वैतप्रमितिर्हि द्वैतं निवर्तयन्त्येवोत्पद्यते द्वैतं तु पूर्वसिद्धमुपक्रमन्यायेन बाध्यमेव।

२ बाधकाभावात्—न हि सृष्ट्यंशबाधकत्वं तस्यैवोपक्रमस्थत्वेन बाध्यत्वात्। नापि कर्मकाण्डबाधकत्वं तस्य लोकप्रसिद्धपदार्थैरेवोपपन्नत्वात्—इति वक्ष्यति भाष्ये। नहीति—उपनिषत्सु ब्रह्मसद्वितीयमिति सृष्टिवाक्यादव-गम्यते। अद्वितीयमिति 'एकमेवाद्वितीयमि'ति वाक्यात्। तयोरेकवाक्यतोपायोपेयभावेन। ३५

३. अर्थैकत्वादिति—अर्थैकत्वादेकं वाक्यं साकाक्ष चेद्विभागे स्यात् ( जै० सू० २-१-४६ ) एकवाक्यत्वलक्षणार्थं सूत्रं तदर्थश्च भिन्नप्रतीतिविषयानेकमुख्यविशेष्यशून्यत्वे सति विभागे साकाङ्क्षत्वम्। भिन्नमुख्यविशेष्यकत्वे तद्भ्ज्ये-तेत्यर्थः। न च अद्वितीयमिति वाक्ये अग्रकालोपादानात् तेन विधेयस्याद्वितीयत्वस्य विरोध इति वाच्यं तात्पर्य-विपर्यविधेयस्थले उद्देश्यविशेषणस्याविवक्षितत्वात् तेन बाधनाच्च 'अंगुष्ठमात्रः ईशान' इतिवत्। समयः ०ङ्गीकारः।

णान्तरानुभवस्मारकं न तु स्वयमर्थावबोधकम् । अतो नाग्निः शीत इत्येनेनैकवाक्यता प्रमाणान्तरानुभवस्मारणेनैवोपक्षीणत्वात् । यत्तु विरुद्धार्थप्रतिपादकमिदं वाक्यमिति मन्यते तच्छीतोष्णपदाभ्यामग्निपदसामानाधिकरण्यप्रयोगनिमित्तभ्रान्तिर्न त्वेवैकस्य वाक्यस्यानेकार्थत्वं लौकिकस्य वैदिकस्य वा ।

यच्चोक्तं कर्मकाण्डप्रामाण्यविघातकृदुपनिषद्वाक्यमिति; तन्न, अन्यार्थत्वात्[1] । ब्रह्मैकत्वप्रतिपादनपरा
५ ह्युपनिषदो नेष्टार्थप्राप्तौ साधनोपदेशं तस्मिन्वा पुरुषनियोगं वारयन्त्यनेकार्थत्वानुपपत्तेरेव । न च कर्मकाण्डवाक्यानां स्वार्थे प्रमा नोत्पद्यते । असाधारणे चेत्स्वार्थे प्रमामुत्पादयति वाक्यं कुतोऽन्येन विरोधः स्यात् । ब्रह्मैकत्वे निर्विषयत्वात्प्रमा नोत्पद्यत एवेति चेत् ? न, प्रत्यक्षत्वात्प्रमायाः "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" "ब्राह्मणो न हन्तव्यः" इत्येवमादिवाक्येभ्यः । प्रत्यक्षा प्रमा जायमाना सा नैव भविष्यति यद्युपनिषदो ब्रह्मैकत्वं बोधयिष्यन्तीत्यनुमानम् । न चानुमानं प्रत्यक्षविरोधे प्रामाण्यं लभते । तस्मादसदेवैतद्गीयते प्रमैव नोत्पद्यत इति ।

१० अपि च यथाप्राप्तस्यैवाविद्याप्रत्युपस्थापितस्य[2] क्रियाकारकफलस्याऽऽश्रयणेनेष्टानिष्टप्राप्तिपरिहारोपायसामान्ये प्रवृत्तस्य तद्विशेषमजानतस्तदाचक्षाणा श्रुतिः क्रियाकारकफलभेदस्य लोकप्रसिद्धस्य सत्यतामसत्यतां वा नाऽऽचष्टे न च वारयति, इष्टानिष्टफलप्राप्तिपरिहारोपायविधिपरत्वात् । यथा काम्येषु प्रवृत्ता श्रुतिः कामानां मिथ्याज्ञानप्रभवत्वे सत्यपि यथाप्राप्तानेव कामानुपादाय तत्साधनान्येव विधत्ते न तु कामानां मिथ्याज्ञानप्रभवत्वादनर्थरूपत्वं चेति न विदधाति, तथा नित्याग्निहोत्रादिशास्त्रमपि मिथ्याज्ञानप्रभवं क्रियाकारकभेदं यथाप्राप्तमेवाऽऽदायेष्टविशेषप्राप्ति-
१५ मनिष्टविशेषपरिहारं वा किमपि प्रयोजनं पश्यदग्निहोत्रादीनि कर्माणि विधत्ते नाविद्यागोचरासद्वस्तुविषयमिति न प्रवर्तते । यथा काम्येषु । न च पुरुषा न प्रवर्तेरन्नविद्यावन्तो दृष्टत्वाद्यथा कामिनः ।

स्फुटयति—प्रमाणान्तरेति । शीतः शैशिरोऽग्निरित्येद्बोधकमेव चेद्वाक्यं कथं तर्हि तत्र बोधकस्य विरुद्धार्थधीरित्याशङ्क्याऽऽह—यत्त्विति ।

स्वार्थविघातकत्वादप्रामाण्यमुपनिषादामित्येतन्निराकृत्य चोद्यान्तरमनूद्य निराकरोति—यच्चेत्यादिना ।
२० तस्मिन्नितीष्टार्थप्रापकसाधनोक्ति । ननूपनिषद्वाक्यं ब्रह्मात्मैकत्व साक्षात्प्रतिपादयदर्थात्कर्मकाण्डप्रामाण्यविघातकमिति चेत्तत्र तदप्रामाण्यमनुत्पत्तिलक्षण विपर्यासलक्षण वेति विकल्प्याऽऽद्यमनूद्य दूषयति—न चेति । विदितपदतदर्थसगतेर्वाक्यार्थन्यायविदस्तदर्थेषु प्रमोत्पत्तिदर्शनादित्यर्थ । स्वार्थे प्रमामुत्पादयदपि वाक्यं मानान्तरविरोधादप्रमाणमित्याशङ्क्याऽऽह—असाधारणे चेदिति । स्वगोचरशूरत्वात्प्रमाणानामित्यर्थ । विमतं न प्रमोत्पादकं प्रमाणापहृतविषयत्वादनुष्णाग्निवाक्यवदिति शङ्कते—ब्रह्मेति । प्रत्यक्षविरोधादनुमानमनवकाशमिति परिहरति—नेत्यादिना ।
२५ इतश्च कर्मकाण्डस्य नाप्रामाण्यमिति वदन् द्वितीयं प्रत्याह—अपि चेति । यथाप्राप्तस्येत्यस्यैव व्याख्यानमविद्याप्रत्युपस्थापितस्येति । साध्यसाधनसम्बन्धबोधकस्य कर्मकाण्डस्य न विपर्यासो मिथ्यार्थत्वेऽपि तस्यार्थक्रियाकारित्वसामर्थ्यानपहारात्प्रामाण्योपपत्तेरिति भाव[3] । ननु कर्मकाण्डस्य मिथ्यार्थत्वे मिथ्याज्ञानप्रभवत्वादनर्थनिष्ठत्वेनाप्रवर्तकत्वादप्रामाण्यमत आह—यथेति । विमतमप्रमाण मिथ्यार्थं वाद्विप्रलम्भकवाक्यवदित्याशङ्क्य व्यभिचारमाह[4]—यथाकाम्येष्विति । अग्निहोत्रादिषु काम्येषु कर्मसु मिथ्याज्ञानजनित मिथ्याभूतं काममुपादाय शास्त्रप्रवृत्तिवन्नित्येष्वपि
३० तेपु साधनमसदेवाऽऽदाय शास्त्रं प्रवर्तता तथापि बुद्धिमन्तो न प्रवर्तिष्यन्ते वेदान्तेभ्यस्तन्मिथ्यात्वावगमादित्याशङ्क्याऽऽह—न चेति ।

---

१. अन्यार्थत्वात् मोक्षसाधनोपदेशपरा वेदान्ताः ब्रह्मण' अद्वितीयत्व प्रबोध्य मोक्षं प्रापयन्ति न कर्मकाण्डप्रामाण्यं वारयन्ति । कर्मणा तत्तत्फलकामिन प्रति विधानात् यथा देहात्मवादिनं प्रति आयुर्वेदे चिकित्साविधानम् ।

२. यथाप्राप्तस्य अविद्वद्दृष्ट्या प्राप्तस्य । यथेति—तदुक्त भामत्यामपि—' न च परस्परपराहतिः, विद्याऽविद्याव-
३५ त्पुरुषभेदेन व्यवस्थोपपत्ते यथा 'न हिंस्यात्सर्वा भूतानी'ति निषेधे सत्यपि 'श्येनेनाभिचरन् यजेते'ति वाक्य प्रवर्तमानं न हिंस्यादित्यनेन न विरुध्यते । तत्कस्य हेतो. ? पुरुषभेदात् अवर्जितक्रोधारातय. निषेधेऽधिक्रियन्ते क्रोधारातिवशीकृतास्तु श्येनादिषु इति ।

३. मिथ्यार्थत्वादिति—तथा च व्यवहारकालाबाध्यानधिगतप्रयोजनवदर्थविषयकबोधजनकत्वरूपं प्रामाण्यं सिद्धमित्यर्थ. ।

४० ४. व्यभिचारमिति—काम्यकर्मवाक्याना प्रामाण्य तेषा कर्मणां मिथ्याज्ञानप्रभवकामहेतुकत्वात् मिथ्यार्थत्व चेति भावः ।

विद्यावतामेव कर्माधिकार इति चेन्न, ब्रह्मैकत्वविद्यायां कर्माधिकारविरोधस्योक्तत्वात्। एतेन ब्रह्मैकत्वे निर्विषयत्वादुपदेशेन तद्ग्रहणफलाभावदोषपरिहार उक्तो वेदितव्यः।

पुरुषेच्छारागादिवैचित्र्याच्च। अनेका हि पुरुषाणामिच्छा रागादयश्च दोषा विचित्रास्ततश्च बाह्यविषयरागाद्यपहृतचेतसो न शास्त्रं निवर्तयितुं शक्तम्। नापि स्वभावतो बाह्यविषयविरक्तचेतसो विषयेषु प्रवर्तयितुं शक्तम्। किन्तु शास्त्रादेतावदेव भवतीदमिष्टसाधनमिदमनिष्टसाधनमिति साध्यसाधनसम्बन्धविशेषाभिव्यक्तिः। ५ प्रदीपादिवत्तमसि रूपादिज्ञानम्। न तु शास्त्रं भृत्यानिव बलान्निवर्तयति नियोजयति वा। दृश्यन्ते हि पुरुषा रागादिगौरवाच्छास्त्रमप्यतिक्रामन्तः।

तस्मात्पुरुषमतिवैचित्र्यमपेक्ष्य साध्यसाधनसम्बन्धविशेषाननेकधोपदिशति। तत्र पुरुषाः स्वयमेव यथारुचि साधनविशेषेषु प्रवर्तन्ते, शास्त्रं तु सवितृप्रदीपादिवदुदास्त एव। तथा कस्यचित्परोऽपि पुरुषार्थोऽपुरुषार्थवदवभासते। यस्य यथाऽवभासः स तथारूपं पुरुषार्थं पश्यति तदनुरूपाणि साधनान्युपादित्सते। तथा चार्थवा- १० दोऽपि—"त्रयाः प्राजापत्याः प्रजापतौ पितरि ब्रह्मचर्यमूषुरि"त्यादिः। तस्मान्न ब्रह्मैकत्वं ज्ञापयिष्यन्तो वेदान्ता विधिशास्त्रस्य बाधकाः।

अविद्यावता कर्मसु प्रवृत्तिमाक्षिपति—**विद्यावतामेवेति**। द्रव्यदेवतादिज्ञानं वा ब्रह्मैकत्वज्ञानं वा कर्मसु प्रवर्तकमिति विकल्प्याऽऽद्यमङ्गीकृत्य द्वितीयं दूषयति—**नेत्यादिना**। कर्मकाण्डप्रामाण्यानुपपत्तिरित्याद्यामर्थापत्तिं निराकृत्य द्वितीयामर्थापत्तिमतिदेशेन निराकरोति—**एतेनेति**। कर्मकाण्डस्याज्ञं प्रति सार्थकत्वोपपादनेनेति यावत्। १५

ननु कर्मकाण्डं साध्यसाधनसम्बन्धं बोधयत्प्रवृत्त्यादिपरमतो रागादिवशात्तदयोगाच्छास्त्रीयप्रवृत्त्यादिविषयस्य द्वैतस्य सत्यत्वमन्यथा तद्विषयत्वानुपपत्तिरित्यर्थापत्त्यन्तरमायातमिति तत्राऽऽह—**पुरुषेच्छेति**। न प्रवृत्तिनिवृत्ती शास्त्रवशादिति शेषः। तदेव स्फुटयति—**अनेका हीति**। शास्त्रस्याकारकत्वात्प्रवर्तकत्वाद्यभावमुक्त्वा तत्रैव युक्त्यन्तरमाह—**दृश्यन्ते हीति**।

तर्हि शास्त्रस्य किं कृत्यमित्याशङ्क्याऽऽह—**तस्मादिति**। तत्र सम्बन्धविशेषोपदेशे सतीति यावत्। यथारुचि २० पुरुषाणाम्प्रवृत्तिश्चेत्परमपुरुषार्थं कैवल्यमुद्दिश्य सम्यग्ज्ञानसिद्धये तदुपायश्रवणादिषु संन्यासपूर्विका प्रवृत्तिर्बुद्धिपूर्वकारिणामुचितेत्याशङ्क्याऽऽह—**तथेति**। रागादिवैचित्र्यानुसारेणेति यावत्। उक्तं हि—

"अपि वृन्दावने शून्ये शृगालत्व स इच्छति। नतु निर्विषयं मोक्षं गन्तुमर्हति गौतम" ॥ इत्यादि।

तर्हि कथं पुरुषार्थविवेकसिद्धिस्तत्राऽऽह—**यस्येति**। पुरुषार्थदर्शनकार्यमाह—**तदनुरूपाणीति**। स्वाभिप्रायानुसारेण पुरुषाणाम्पुरुषार्थप्रतिपत्तिरित्यत्र गमकमाह—**तथाचेति**। यथा दकारत्रये प्रजापतिनोक्तेदेवादयः स्वाभिप्रायेण २५ दमाद्यर्थत्रयं जगृहुस्तथा स्वाभिप्रायवशादेव पुरुषाणा पुरुषार्थप्रतिपत्तिरित्यर्थवादतोऽवगतमित्यर्थः। पूर्वोत्तरकाण्डयोरविरोधमुपसंहरति—**तस्मादिति**। एकस्य वाक्यस्य द्व्यर्थत्वायोगादिति यावत्।

---

१. अनेन कर्माधिकारे कर्मविद्या शरीरव्यतिरिक्तात्मविषयं परोक्षज्ञानं चापेक्षितं न वेदान्तजन्यं निर्विशेषब्रह्मज्ञानमिति सूच्यते। निर्विषयत्वात् निरधिकारिकत्वात्। तद्ग्रहणं कर्मस्वरूपज्ञानं फलं स्वर्गादि।

२. दृश्यन्ते हीति—शास्त्रं महाप्रवाहवत् बलात्कारेण न कञ्चित् प्रवर्तयति निवर्तयति वा अपि तु प्रदीपवत् शास्त्रं ३० स्वसत्तामात्रेण रागादिमन्तं प्रवर्तयति निवर्तयति वेत्युक्तम्। यदि कश्चित् शास्त्रमुल्लङ्घ्य प्रवर्तते नायं शास्त्रस्य दोषः। तदुक्तं न ह्येष स्थाणोरपराधः यदेनमन्धो न पश्यति इति।

३. रागादिवशात् तदयोगात् प्रवृत्त्ययोगात्। उदास्त इति—एतेन अभिचारादिविधायकशास्त्रस्य प्रवृत्तिः सूचिता, अभिचारकर्त्तारं शास्त्रं न प्रेरयति इदं त्वयाऽनुष्ठेयं तेन शत्रुः मरिष्यति इति। अपि तु अभिचारस्य शत्रुनिवर्तकत्व बोधयति स तु रागवशात् द्वेषवशाद्वा प्रवर्तते अतो न दोषः।

४. यथा दकारत्रयेति-अत्रैवोपनिषदि देवा मनुष्याः असुराश्च पितरि प्रजापतौ ब्रह्मचर्यमुषित्वा उपदेशं प्रार्थयामासुः। ३५ स च प्रत्येकमाहूय "द" इत्युपदिश्य व्यज्ञासिष्टा इति पप्रच्छ, देवाः 'दाम्यत' इति मनुष्याः 'दत्त' इति असुराः 'दयध्वम्' इति भवता उपदिश्यत इत्यूचुः। प्रजापतिरप्यङ्गीचकार—तेन स्वाभिप्राय एव पुरुषार्थप्रतिपत्तौ हेतुः स्वाभिप्रायश्च स्वपूर्ववासनाधीनः।

न च विधिशास्त्रमेतावता निर्विषयं स्यात्। नाप्युक्तकारकादिभेदं विधिशास्त्रमुपनिषदां ब्रह्मैकत्वं प्रति प्रामाण्यं निवर्तयति। स्वविषयशूराणि हि प्रमाणानि श्रोत्रादिवत्। तत्र पण्डितंमन्याः केचित्स्वचित्तवशात्सर्वं प्रमाणमितरेतरविरुद्धं[1] मन्यन्ते तथा प्रत्यक्षादिविरोधमपि चोदयन्ति ब्रह्मैकत्वे। शब्दादयः किल श्रोत्रादिविषया भिन्नाः प्रत्यक्षत उपलभ्यन्ते ब्रह्मैकत्वं ब्रुवतांप्रत्यक्षविरोधः[2] स्यात्। तथा श्रोत्रादिभिः शब्दाद्युपलब्धारः कर्तारश्च
५ धर्माधर्मयोः प्रतिशरीरं भिन्ना अनुमीयन्ते संसारिणः। तत्र ब्रह्मैकत्वं ब्रुवतामनुमानविरोधश्च[3]। तथा चाऽऽगमविरोधं वदन्ति। ग्रामकामो यजेत। पशुकामो यजेत। स्वर्गकामो यजेतेत्येवमादिवाक्येभ्यो ग्रामपशुस्वर्गादिकामास्तत्साधनाद्यनुष्ठातारश्च भिन्ना अवगम्यन्ते।

अत्रोच्यते, ते तु कुतर्कदूषितान्तःकरणा ब्राह्मणादिवर्णापसदा अनुकम्पनीया आगमार्थविच्छिन्नसम्प्रदायबुद्धय[4] इति। कथम्? श्रोत्रादिद्वारैः शब्दादिभिः प्रत्यक्षत उपलभ्यमानैर्ब्रह्मण एकत्वं विरुध्यत इति वदन्तो वक्तव्याः
१० किं शब्दादीनां भेदेनाऽऽकाशैकत्वं विरुध्यत इत्यथ न विरुध्यते न तर्हि प्रत्यक्षविरोधः। यच्चोक्तं प्रतिशरीरं शब्दाद्युपलब्धारो धर्माधर्मयोश्च कर्तारो भिन्ना अनुमीयन्ते तथा च ब्रह्मैकत्वेऽनुमानविरोध इति। भिन्नाः कैरनुमीयन्त इति प्रष्टव्याः।

अर्थाद्बाधकत्वमाशङ्क्याऽऽह—न चेति। एतावता वेदान्ताना ब्रह्मैकत्वज्ञापकत्वमात्रेणेत्यर्थः। वेदान्तानामबाधकत्वेऽपि कर्मकाण्डस्य तत्प्रामाण्यनिवर्तकत्वमस्तीत्याशङ्क्याऽऽह—नापीति। स्वपक्षे सर्वविरोधनिरासद्वारा स्वार्थे
१५ वेदान्ताना प्रामाण्यमुक्तं सम्प्रति तार्किकपक्षमुत्थापयति—तत्रेति। ऐक्ये शास्त्रगम्ये स्वीकृते सतीति यावत्। सर्वं प्रमाणमित्यागमवाक्य प्रत्यक्षादि चेत्यर्थः। कथमैक्यावेदकमागमवाक्यं प्रत्यक्षादिना विरुध्यते तत्राऽऽह—तथेति। यथा ब्रह्मैकत्वे प्रवृत्तस्य शास्त्रस्य प्रत्यक्षादिविरोध मन्यन्ते तथा तमस्मान्प्रति चोदयन्त्यपीति योजना। तत्र प्रत्यक्षविरोधं प्रकटयति—शब्दादय इति। सम्प्रत्यनुमानविरोधमाह—तथेति। स्वदेहसमवेतचेष्टातुल्यचेष्टा देहान्तरे दृष्टा सा च प्रयत्नवत्पूर्विका विशिष्टचेष्टात्वात्सम्मतवदित्यनुमानविरुद्धमद्वैतशास्त्रमित्यर्थ। तत्रैव प्रमाणान्तरविरोधमाह—
२० तथा चेति।

मानत्रयविरोधान्न ब्रह्मैक्यमिति प्राप्ते प्रत्याह—ते तु कुतर्केति। इति दूष्यता तेषामिति शेषः। द्वैतग्राहिप्रमाणविरुद्धमद्वैतमिति वदता कथं शोच्यतेति पृच्छति—कथमिति। तत्र ब्रह्मैकत्वे प्रत्यक्षविरोधं परिहरति—श्रोत्रादीति। तथात्वे तदेकत्वाभ्युपगमविरोधः स्यादिति शेषः। यथा सर्वभूतस्थमेकमाकाशमित्यत्र न शब्दादिभेदग्राहिप्रत्यक्षविरोधस्तथैक ब्रह्मेत्यत्रापि न तद्विरोधोऽस्तीत्याह—अथेति। तस्य कल्पितभेदविषयत्वादिति भावः। अनुमानविरोधं
२५ परोक्तमनुवदति—यच्चेति। या चेष्टा सा प्रयत्नवत्पूर्विकेत्येतावता नाऽऽत्मभेद स्वप्रयत्नपूर्वकत्वस्यापि सम्भवादनुपलब्धिविरोधे त्वनुमानस्यैवानुत्थानात्स्वदेहचेष्टाया स्वप्रयत्नपूर्वकत्ववत्परदेहचेष्टायास्तद्यत्नपूर्वकत्वे चाऽऽदावेव स्वपरभेदः सिध्येत्स च नाध्यक्षात्परस्यानध्यक्षत्वान्नानुमानादन्यान्याश्रयादित्याशयवानाह—भिन्ना इति[5]।

१. इतरेतरविरुद्धमिति—तत्समाधान पूर्वोदाहृतभामतीवाक्यमेव।

२. प्रत्यक्षविरोध इति—तत्परिहारप्रभेदाः सिद्धान्तलेशे अनुक्रान्ताः प्रत्यक्षस्य वर्णादिस्वरूपमात्रमुपजीव्यं न तु
३० तत्सत्यत्वमिति भामती, प्रत्यक्ष अधिष्ठानसत्त्व गृह्णाति न तु घटादिकमिति तत्त्वशुद्धिः इत्यादयः।

३. जीवाना भेदोपलंभस्तु अनुमानात् विरुद्धधर्मवत्त्वलिङ्गेन। आगमविरोध इति। यद्यपि एकस्यैव पशुकामत्वं ग्रामकामत्व च संभवेत् तथापि भिन्नेष्वपि संभवादुक्तम्। आयुष्कामत्वं मरणकामत्व च विरुद्धयते प्राजापत्यं घृते चरुं निर्वपेत् आयुष्कामः' इति 'मरणकामः सर्वस्वारेण यजेत' इत्युक्तत्वात्।

४. आगमार्थे विच्छिन्नसम्प्रदाया इत्यर्थः. कापायाम्बरबहुकृतवेष इतिवत् कृतकापायाम्बरबहुवेष इत्यर्थे।

३५ ५. स्वदेहेति—परशरीरचेष्टा पुरुषप्रयत्नपूर्विका चेष्टात्वात् इति प्रयोगः स्वप्रयत्नबाधात् प्रयत्नवदान्नान्तरसिद्धिः। अनुपलब्धिविरोधात् उक्तानुमान बाधित इत्युक्तौ अनुमानमेव न प्रवर्तेत प्रत्यक्षानुपलब्धिविषयस्यैवानुमानात्। परचेष्टामपि स्वप्रयत्नपूर्विकेति वदाम अनुपलब्धिस्तु उपाधिभेदात् संगच्छते। स्वभिन्नसमवेतयत्नपूर्वकत्वसाधने अन्योन्याश्रयः इत्यर्थः।

अथ यदि ब्रूयुः सर्वैरस्माभिरनुमानकुशलैरिति । के यूयमनुमानकुशला इत्येवं पृष्टानां किमुत्तरम् ? शरीरेन्द्रियमनआत्मसु च प्रत्येकमनुमानकौशलप्रत्याख्याने शरीरेन्द्रियमनःसाधना आत्मानो वयमनुमानकुशला अनेककारकसाध्यत्वात्क्रियाणामिति चेत् । एवं तर्ह्यनुमानकौशले भवतामनेकत्वप्रसङ्गः ।

अनेककारकसाध्या हि क्रियेति भवद्भिरेवाभ्युपगतम् । तत्रानुमानं च क्रिया । सा शरीरेन्द्रियमनआत्मसाधनैः कारकैरात्मकर्तृका निर्वर्त्यत इत्येतत्प्रतिज्ञातम् । तत्र वयमनुमानकुशला इत्येवं वदद्भिः शरीरेन्द्रियमनःसाधना आत्मानः प्रत्येकं वयमनेक इत्यभ्युपगतं स्यात् । अहो अनुमानकौशलं दर्शितमपुच्छशृङ्गैस्तार्किकबलीवर्दैः । यो ह्यात्मानमेव न जानाति स कथं मूढस्तद्गतं भेदमभेदं वा जानीयात् । ५

तत्र किमनुमिनोति केन वा लिङ्गेन । न ह्यात्मनः स्वतो भेदप्रतिपादकं किञ्चिल्लिङ्गमस्ति येन लिङ्गेनाऽऽत्मभेदं साधयेत् । यानि लिङ्गान्यात्मभेदसाधनाय नामरूपवन्त्युपन्यस्यन्ति तानि नामरूपगतान्युपाधय एवाऽऽत्मनो घटकरकापवरकभूच्छिद्राणीवाऽऽकाशस्य यदाऽऽकाशस्य भेदलिङ्गं पश्यति तदाऽऽत्मनोऽपि भेदलिङ्गं लभेत सः । न ह्यात्मनः परतो विशेषमभ्युपगच्छद्भिस्तार्किकशतैरपि भेदलिङ्गमात्मनो दर्शयितुं शक्यते । स्वतस्तु दूरादपनीतमेवाविषयत्वादात्मनः । १०

दोषान्तराभिधित्सया शङ्कयति—अथेति । अस्मदर्थं पृच्छति—के यूयमिति । स हि स्थूलदेहो वा करणजातं देहद्वयादन्यो वा । नाऽऽद्य. । तयोरचेतनत्वादनुमातृत्वायोगात् । न तृतीयस्तस्याविकारित्वादिति भावः । किंशब्दस्य प्रश्नार्थतां मत्वा पूर्ववाद्याह—शरीरेति । आत्मा देहादिबहुसाधनविशिष्टोऽनुमाता क्रियाणामनेककारकसाध्यत्वादेवं विशिष्टात्मकर्तृकानुमानात्प्रतिदेहमात्मभेदधीरित्यर्थः । विशिष्टस्याऽऽत्मनोऽनुमानकर्तृत्वे क्रियाणामनेककारकसाध्यत्वादिति हेतुश्चेत्तदा तव देहादेश्चैकैकस्याप्यनेकत्वं स्यादित्युत्तरमाह—एवं तर्हीति । १५

तदेव विवृणोति—अनेकेति । आत्मनो देहादीनां चानुमानकारकाणां प्रत्येकमवान्तरक्रियाऽस्ति वल्गथादिषु तथा दर्शनात्तथा चाऽऽत्मनोऽवान्तरक्रिया किमनेककारकसाध्या किंवा न ? आद्येऽप्यात्मातिरिक्तानेककारकसाध्या किंवा तदनतिरिक्ततत्साध्या वा ? नाऽऽद्योऽनवस्थानात् । द्वितीये त्वात्मनोऽनेकत्वापत्तेर्नैरात्म्यं स्यान्न चावान्तरक्रिया नानेककारकसाध्या प्रधानक्रियायामपि तथात्वप्रसङ्गात् । एतेन देहादिष्वपि कारकत्वं प्रत्युक्तमिति भावः । यस्त्वात्माऽऽत्मप्रतियोगिकभेदवान्वस्तु वाद्घटवदिति, तत्राऽऽत्मा प्रतिपन्नोऽप्रतिपन्नो वेति विकल्प्य द्वितीयं प्रत्याह—यो हीति । २०

प्रतिपन्नत्वपक्षेऽपि भेदेनाभेदेन वा तत्प्रतिपत्तिरुभयथाऽपि नानुमानप्रवृत्तिरित्याह—तत्रेति । इतश्चाऽऽत्मभेदानुमानानुत्थानमित्याह—केनेति । किंशब्दस्याऽऽक्षेपार्थत्वं स्फुटयति—न हीति । जन्मादीनाप्रतिनियमादिलिङ्गवशादात्मभेद' सेत्स्यति चेन्नेत्याह—यानीति । आत्मन. सजातीयभेदे लिङ्गाभावं दृष्टान्तेन साधयति—यदेति । किञ्चौपाधिको वा स्वाभाविको वाऽऽत्मभेदः साध्यते ? नाऽऽद्यः सिद्धसाध्यत्वादित्यभिप्रेत्याह—नहीति । न द्वितीय इत्याह—स्वतस्त्विति । २५

---

१. आकाशस्य कर्णशष्कुल्यवच्छिन्नस्येत्यर्थः तत्र भेदासत्वेऽपि उपाधिभेदादेव धर्मव्यवस्थासिद्धो आत्मनोऽपि तथैव भेदोऽस्तु । अविषयत्वात् परामर्शस्य अनुमितेर्वाऽविषयत्वात् । जन्मादीनामिति । जन्म उत्पत्तिः तच्च शरीरे स्यात् तदुपहिते आत्मनि उपचारात् स्यात् । आदिपदेन सुखादयः आत्मभेदे मानं तार्किका वदन्ति—चैत्रशरीरावच्छिन्नभोगवानात्मा मैत्रशरीरावच्छिन्नभोगवद्भिन्न. तद्गतभोगानधिकरणत्वात् इत्यनुमानं वाच्यम् । तच्चात्मभेदेऽङ्गीकृत एव भवति तद्भोगानधिकरणत्वस्य तद्भेदं विनाऽसिद्धेः इत्यन्योन्याश्रयः । ३०

२. आत्मातिरिक्तेति—आत्मा मनः इन्द्रियाणि च ज्ञानहेतूनि तत्रात्मा मुख्यकारणं शरीरादिकं तु सहकारि, सहकारि च स्वजन्यक्रियाद्वारा आत्मन उपकरोति । तत्र च आत्मक्रियायां सहकार्यपेक्षावत् शरीरात्मककारकक्रियायामपि शरीरस्य सहकार्यपेक्षिनः तत्सहकारी च स्वजन्यक्रियायाम् सहकार्यन्तरमपेक्षते । एवं तत्सहकारिजन्यक्रियाया आत्मातिरिक्तसहकार्यपेक्षायामनवस्थाप्रसक्तिः । आत्मानतिरिक्तानेककारकापेक्षा इत्युक्तौ शरीरस्य एकः सहकार्यात्मा इन्द्रियस्य एक. सहकार्यात्मा एवं कालदेशादीनां कारणानां पृथक् पृथक् आत्मापेक्षाया आत्मनः-ज्ञानोत्पत्तौ अनेकात्मकल्पनाप्रसंगः । प्रथमकल्पोक्तदोषोऽप्यत्र प्रसज्यते । ३५

३. अनवस्थानादिति—आत्मातिरिक्तेत्यस्य चेतनातिरिक्तानेककारकसाध्येत्यर्थः । ततश्च एकैकस्य कारकस्यावान्तरव्यापारे आत्मातिरिक्तानेककारकसाध्यत्वोक्तौ तस्य तस्य कारकस्य शरीरेन्द्रियविषयादेः आत्मातिरिक्तानेककारकसाध्यत्वे तस्य तस्य च व्यापारे अनेककारकापेक्षा एवं तस्य तस्येत्यनवस्था । ४०

यद्यत्पर आत्मधर्मत्वेनाभ्युपगच्छति तस्य तस्य नामरूपात्मकत्वाभ्युपगमान्नामरूपाभ्याञ्चाऽऽत्मनोऽन्यत्वाभ्युपगमात्। "आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म" इति श्रुतेः। "नामरूपे व्याकरवाणी"ति च। उत्पत्तिप्रलयात्मके हि नामरूपे तद्विलक्षणञ्च ब्रह्म। अतो अनुमानस्यैवाविषयत्वात्कुतोऽनुमानविरोधः। एतेनाऽऽगमविरोधः प्रत्युक्तः।

५ यदुक्तं ब्रह्मैकत्वे यस्मा उपदेशो यस्य चोपदेशग्रहणफलं तदभावादेकत्वोपदेशानर्थक्यमिति; तदपि न। अनेककारकसाध्यत्वात्क्रियाणां कश्चोद्यो भवति। एकस्मिन्ब्रह्मणि निरुपाधिके नोपदेशो नोपदेष्टा न चोपदेशग्रहणफलम्। तस्मादुपनिषदां चाऽऽनर्थक्यमित्येतदभ्युपगतमेव। अथानेककारकविषयानर्थक्यं चोद्यते। न, स्वतोऽभ्युपगमविरोधादात्मवादिनाम्।

तस्मात्तार्किकचाटभटराजाप्रवेश्यमभयं दुर्गमिदमल्पबुद्ध्यगम्यं शास्त्रगुरुप्रसादरहितैश्च। "कस्तं मदामदं १० देवं मदन्यो ज्ञातुमर्हति" "देवैरत्रापि विचिकित्सितं पुरा" "नैषा तर्केण मतिरापनेया" वरप्रसादलभ्यत्वश्रुतिस्मृतिवादेभ्यश्च। "तदेजति तन्नैजति तद्दूरे तद्वन्तिके" इत्यादिविरुद्धधर्मसमवायित्वप्रकाशकमन्त्रवर्णेभ्यश्च। गीतासु च "मत्स्थानि सर्वभूतानि" इत्यादि। तस्मात्परब्रह्मव्यतिरेकेण संसारी नाम नान्यद्वस्त्वन्तरमस्ति। तस्मात्सुष्ठूच्यते "ब्रह्म वा इदमग्र आसीत् तदात्मानमेवावेदहं ब्रह्मास्मीति" "नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ" इत्यादि-

आत्मा[३] द्रव्यत्वातिरिक्तापरजातीयोऽश्रावणविशेषगुणवत्त्वाद्घटवदित्यनुमानान्तरमाशङ्क्याऽन्यतरासिद्धिं १५ दर्शयति—यद्यदिति। ताभ्यामात्मनोऽन्यत्वाभ्युपगमे मानमुपन्यस्यति—आकाश इति। तत्रैवोपपत्तिमाह—उत्पत्तीति। अनुमानाविरोधमुपसंहरति—अत इति। आगमविरोधमुक्तन्यायातिदेशेन निराकरोति—एतेनेति। औपाधिकभेदाश्रयत्वेन व्यवहारस्योपपन्नत्वोपदर्शनेनेति यावत्।

प्रत्यक्षानुमानागमैरद्वैतस्याविरोधेऽपि स्याद्विरोधोऽर्थापत्त्येति चेदत आह—यदुक्तमिति। उपदेशो यस्मै क्रियते यस्य चोपदेशग्रहणप्रयुक्तं फलं तयोर्ब्रह्मैकत्वे सत्युपदेशानर्थक्यमित्यनुवादार्थः। किं क्रियाणामनेककारकसाध्यत्वादेवं २० चोद्यते किंवा ब्रह्मणो नित्यमुक्तत्वादिति विकल्प्याऽऽद्यं दूषयति—तदपीति। तासामनेककारकसाध्यत्वस्य प्रत्यु (पर्यु)-दस्तत्वादिति भावः। यदि ब्रह्मणो नित्यमुक्तत्वाभिप्रायेणोपदेशानर्थक्यं चोद्यते तत्र नित्यमुक्ते ब्रह्मणि ज्ञातेऽज्ञाते वा तदानर्थक्यं चोद्यत इति विकल्प्याऽऽद्यमङ्गीकरोति—एकस्मिन्निति। द्वितीयमुत्थापयति—अथेति। उपदेशस्तावदनेकेषां कारकाणां साध्यतया विषयस्तदानर्थक्यमज्ञाते नित्यमुक्ते ब्रह्मणि चोद्यते चेदित्यर्थः। सर्वैरात्मवादिभिरुपदेशस्य ज्ञानार्थमिष्टत्वात्तद्विरोधादज्ञाते ब्रह्मणि तदानर्थक्यचोद्यमनुपपन्नमित्याह—न स्वत इति।

२५ अद्वैते विरोधान्तराभावेऽपि तार्किकसमयविरोधोऽस्तीत्याशङ्क्याऽऽह—तस्मादिति। प्रमाणविरोधाभावस्तच्छब्दार्थः। आर्यमर्यादा भिन्दानाश्चाटा विवक्ष्यन्ते। भटास्तु सेवका मिथ्याभाषिणस्तेषां सर्वेषां राजानस्तार्किकास्तैरप्रवेश्यमनाक्रमणीयमिदं ब्रह्मात्मैकत्वमिति यावत्। शास्त्रादिप्रसादशून्यैरगम्यत्वे प्रमाणमाह—कस्तमिति। देवतादेर्वरप्रसादेन लभ्यमित्यत्र श्रुतिस्मृतिवादा[२] सन्ति तेभ्यश्च शास्त्रादिप्रसादहीनैरलभ्यं तत्त्वमिति निश्चितमित्यर्थः। शास्त्रादिप्रसादवतामेव तत्त्वं सुगममित्यत्र श्रौतं स्मार्तञ्च लिङ्गान्तरं दर्शयति—तदेजतीति। ब्रह्मणोऽ- ३० द्वितीयत्वे सर्वप्रकारविरोधाभावे फलितमाह—तस्मादिति। संसारिणो ब्रह्मणोऽर्थान्तरत्वाभावे श्रुतीनामानुकूल्यं

---

१. अनेककारकसाध्यत्वस्यानवस्थापत्त्या आत्मनानात्वप्रसंगेन च प्रत्युक्तत्वात् इत्यर्थः।

२. वरप्रसादलभ्यत्वं—तथा च दैवोदासिः इन्द्राय युद्धं कृत्वा इन्द्रेण वरं वृणीष्वेत्युक्तः मनुष्याय हिततमं आत्मज्ञानं इन्द्रात् वृतवान्। नचिकेताः यमेन दत्तवरः ज्ञानमेव वरं लेभे। जनकः याज्ञवल्क्यात् कामप्रश्नवरेण लेभे।

३. आत्मेति द्रव्यत्वातिरिक्तद्रव्यत्वन्यूनवृत्तिजातिमान् तादृशजातिः आत्मत्वं तस्य जातित्वादनेकवृत्तित्वनिय- ३५ मादात्मनानात्वसिद्धिः।

४. अश्रावणेति। आकाशे विशेषगुणः शब्दः तत्र आकाशत्वजातिर्नास्ति इति व्यभिचारः अतः अश्रावणेति। तादृशसामान्यगुणः संयोगादिः कालादौ विद्यते कालत्वादिजातिर्नास्ति इत्यतो व्यभिचारवारणाय विशेषगुणेति। अत्रानुमाने स्वरूपासिद्धिर्दोषः आत्मनि विशेषगुणाभावात् वेदान्तिनाम्।

अथ द्वितीयाध्यायस्य द्वितीयं ब्राह्मणम्

**यो ह वै शिशुँ साधानँ सप्रत्याधानँ सस्थूणँ सदामं वेद सप्त ह द्विषतो भ्रातृव्यानवरुणद्धि। अयं वाव शिशुर्योऽयं मध्यमः प्राणस्तस्येदमेवाधानमिदं प्रत्याधानं प्राणः स्थूणान्नं दाम ॥१॥**

श्रुतिशतेभ्यः। तस्मात्परस्यैव ब्रह्मणः सत्यस्य सत्यं नामोपनिषत्परा ॥२०॥

इति बृहदारण्यकोपनिषद्भाष्ये द्वितीयाध्यायस्य प्रथमं ब्राह्मणम् ॥१॥

ब्रह्म ज्ञपयिष्यामीति प्रस्तुतम्। तत्र यतो जगज्जातं यन्मयं यस्मिंश्च लीयते तदेकं ब्रह्मेति ज्ञापितम्। किमात्मकं पुनस्तज्जगज्जायते लीयते च। पञ्चभूतात्मकम्। भूतानि च नामरूपात्मकानि। नामरूपे सत्यमिति ह्युक्तम्। तस्य सत्यस्य पञ्चभूतात्मकस्य सत्यं ब्रह्म। कथं पुनर्भूतानि सत्यमिति मूर्तामूर्तब्राह्मणम्। मूर्तामूर्तभूतात्मकत्वात्कार्यकरणात्मकानि भूतानि प्राणा अपि सत्यम्। तेषां कार्यकरणात्मकानां भूतानां सतत्त्वनिर्दिधारयिषया ब्राह्मणद्वयमारभ्यते सैवोपनिषद्व्याख्या। कार्यकरणसत्यत्वावधारणद्वारेण हि सत्यस्य सत्यं ब्रह्मावधार्यते। अत्रोक्तम्—'प्राणा वै सत्यं तेषामेष सत्यम्' इति। तत्र के प्राणाः कियन्तो वा प्राणविषया उपनिषदः का इति च ब्रह्मोपनिषत्प्रसङ्गेन करणानां प्राणानां स्वरूपमवधारयति, पथिगतकूपारामाद्यवधारणवत्।

यो ह वै शिशुं साधानं सप्रत्याधानं सस्थूणं सदामं वेद तस्येदं फलम्। किं तत्। सप्त सप्तसङ्ख्याकान्ह द्विषतो द्वेषकर्तॄन्भ्रातृव्यान्भ्रातृव्या हि द्विविधा भवन्ति द्विषन्तोऽद्विषन्तश्च। तत्र द्विषन्तो ये भ्रातृव्यास्तान्द्विषतो भ्रातृव्यानवरुणद्धि। सप्त ये शीर्षण्याः प्राणा विषयोपलब्धिद्वाराणि तत्प्रभवविषयरागाः सहजत्वाद्भ्रातृव्याः। ते ह्यस्य स्वात्मस्थां दृष्टिं विषयविषयां कुर्वन्ति तेन ते द्वेष्टारो भ्रातृव्याः प्रत्यगात्मेक्षणप्रतिषेधकत्वात्। काठके

दर्शयति—तस्मादिति। अद्वैते श्रुतिसिद्धे विचारनिष्पन्नमर्थमुपसहरति—तस्मात्परस्येति ॥२०॥

इति बृहदारण्यकोपनिषद्भाष्यटीकायां द्वितीयाध्यायस्य प्रथमं ब्राह्मणम् ॥१॥

वृत्तवर्तिष्यमाणयोः सङ्गतिं वक्तुं वृत्तं कीर्तयति—ब्रह्मेति। ब्रह्म ते ब्रवाणीति प्रक्रम्य व्येव त्वा ज्ञपयिष्यामीति प्रतिज्ञाय जगतो जन्मादयो यतस्तदद्वितीयं ब्रह्मेति व्याख्यातमित्यर्थः। जन्मादिविषयस्य जगतः स्वरूपं पृच्छति—किमात्मकमिति। विप्रतिपत्तिनिरासार्थं तत्स्वरूपमाह—पञ्चेति। कथं तर्हि नामरूपकर्मात्मकं जगदित्युक्तं तत्राऽऽह—भूतानीति। तत्र गमकमाह—नामरूपे इति। भूताना सत्यत्वे कथं ब्रह्मणः सत्यत्ववाचोयुक्तिरित्याशङ्क्याऽऽह—तस्येति। तत्सत्यमित्यवधारणाद्वाध्येषु भूतेषु सत्यत्वासिद्धिरिति शङ्कयित्वा समाधत्ते—कथमित्यादिना। सच्च त्यच्च सत्यमिति व्युत्पत्त्या भूतानि सत्यशब्दवाच्यानि विवक्ष्यन्ते चेत्कथं तर्हि कार्यकरणसङ्घातस्य प्राणानां च सत्यत्वमुक्तं तत्राऽऽह—मूर्तेति। यथोक्तभूतरूपत्वात्कार्यकरणाना तदात्मकानि भूतानि सत्यानीत्यङ्गीकारात्कार्यकरणाना सत्यत्वं प्राणा अपि तदात्मकाः सत्यशब्दवाच्या भवन्तीति प्राणा वै सत्यमित्यविरुद्धमित्यर्थः। एव पातनिकां कृत्वोत्तरब्राह्मणद्वयस्य विषयमाह—तेषामिति। उपनिषद्व्याख्यानाय ब्राह्मणद्वयमित्युक्तिविरुद्धमेतदित्याशङ्क्याऽऽह—सैवेति। कार्यकरणात्मकाना भूताना स्वरूपनिर्धारणैवोपनिषद्व्याख्येत्यत्र हेतुमाह—कार्येति। ब्राह्मणद्वयमेवमवतार्य शिशुब्राह्मणस्यावान्तरसङ्गतिमाह—अत्रेत्यादिना। उपनिषदः काः, कियत्यो वेत्युपसङ्ख्यातव्यमित्याकाङ्क्षायामिति शेषः। ब्रह्म चेदवधारयितुमिष्टं तर्हि तदेवावधार्यतां किमिति मध्ये करणस्वरूपमवधार्यते तत्राऽऽह—पथीति।

ब्राह्मणतात्पर्यमुक्त्वा तदक्षराणि योजयति—यो हेत्यादिना। विशेषणस्यार्थवत्त्वार्थं भ्रातृव्यान्भिनत्ति—भ्रातृव्या हीति। के पुनरत्र भ्रातृव्या विवक्ष्यन्ते तत्राऽऽह—सप्तेति। कथं श्रोत्रादीनां सप्तत्वं द्वारभेदादित्याह[1]—विषयेति। कथं तेषां भ्रातृव्यत्वमित्याशङ्क्य विषयाभिलापद्वारेणेत्याह—तत्प्रभवा इति। तथाऽपि कथं तेषां द्वेष्टृत्वमत आह—ते हीति। अथेन्द्रियाणि विषयविषयां दृष्टिं कुर्वन्त्येवाऽऽत्मविषयामपि ता करिष्यन्ति तत्र यथोक्तभ्रातृव्यत्वं

[1] द्वारभेदात्—अत्र चक्षुर्द्वयं श्रोत्रद्वयं नासिकाद्वयं वाक् इति सप्त गण्यन्ते वस्तुतस्तु गोलकभेदेऽपि एकैकान्येव चक्षुश्रोत्रघ्राणानि इति परमार्थः। अतः द्वारभेदादित्युक्तम्।

चोक्तम्—"पराञ्चि खानि व्यतृणत्स्वयम्भूस्तस्मात्पराङ् पश्यति नान्तरात्मन्" इत्यादि। तत्र यः शिश्वादीन्वेद तेषां याथात्म्यमवधारयति स एतान्भ्रातृव्यानवरुणद्ध्यपावृणोति विनाशयति।

तस्मै फलश्रवणेनाभिमुखीभूतायाऽऽह—अयं वाव शिशुः। कोऽसौ योऽयं मध्यमः प्राणः शरीरमध्ये यः प्राणो लिङ्गात्मा यः पञ्चधा शरीरमाविष्टो बृहन्पाण्डरवासः सोम राजन्नित्युक्तः। यस्मिन्वाङ्मनःप्रभृतीनि करणानि विषक्तानि पड्वीशशङ्कुनिदर्शनात्। स एष शिशुरिव विषयेष्वितरकरणवदपटुत्वात्। शिशुं साधानमित्युक्तम्। किं पुनस्तस्य शिशोर्वत्सस्थानीयस्य करणात्मन आधानम्। तस्येदमेव शरीरमाधानं कार्यात्मकमाधीयतेऽस्मिन्नित्याधानम्। तस्य हि शिशोः प्राणस्येदं शरीरमधिष्ठानम्। अस्मिन्हि करणान्यधिष्ठितानि लब्धात्मकान्युपलब्धिद्वाराणि भवन्ति न तु प्राणमात्रे विषक्तानि। तथा हि दर्शितमजातशत्रुणा। उपसंहृतेषु करणेषु विज्ञानमयो नोपलभ्यते। शरीरदेशव्यूढेषु तु करणेषु विज्ञानमय उपलभमान उपलभ्यते। तच्च दर्शितं पाणिपेषप्रतिबोधनेन।

इदं प्रत्याधानं शिरःप्रदेशविशेषेषु प्रति प्रत्याधीयत इति प्रत्याधानम्। प्राणः स्थूणाऽन्नपानजनिता शक्तिः प्राणो बलमिति पर्यायाः। बलावष्टम्भो हि प्राणोऽस्मिञ्शरीरे। स यत्रायमात्माऽबल्यं न्येत्य सम्मोहमिवैति दर्शनात्। यथा वत्सः स्थूणावष्टम्भ एवं शरीरपक्षपाती वायुः प्राणः स्थूणेति केचित्। अन्नं दाम अन्नं हि भुक्तं त्रेधा परिणमते। यः स्थूलः परिणामः स एतद्द्वयं भूत्वेमामप्येति मूत्रं च पुरीषं च। यो मध्यमो रसः स रसो लोहितादिक्रमेण स्वकार्यं शरीरं साप्तधातुकमुपचिनोति। स्वयोन्यन्नागमने हि शरीरमुपचीयतेऽन्नमयत्वात्। विपर्ययेऽपक्षीयते पतति। यस्त्वणिष्ठो रसोऽमृतमूर्क्प्रभाव इति च कथ्यते स नाभेरूर्ध्वं हृदयदेशमागत्य हृदयाद्विप्रसृतेषु द्वासप्ततिनाडीसहस्रेष्वनुप्रविश्य यत्तत्करणसङ्घातरूपं लिङ्गं शिशुसंज्ञकं तस्य शरीरे स्थितिकारणं भवति। बलमुपजनयत्स्थूणाख्यं तेनान्नमुभयतः पाशवत्तदामवत्प्राणशरीरयोर्निबन्धनं भवति ॥१॥

तेषामिति तत्राऽऽह—प्रत्यगिति। इन्द्रियाणि विषयप्रवणानि तत्रैव दृष्टिहेतवो न प्रत्यगात्मनीत्यत्र प्रमाणमाह—काठके चेति। फलोक्तिमुपसंहरति—तत्रेति। उक्तविशेषणेषु भ्रातृव्येषु शिश्वादिष्विति यावत्।

प्राणे वागादीनां विषक्तत्वे हेतुमाह—पड्वीशेति। यथा जात्यो हयश्चतुरोऽपि पादबन्धनकीलान्पर्यायेणोत्पाट्योत्क्रामति तथा प्राणो वागादीनीति निदर्शनवशात्प्राणे विषक्तानि वागादीनि सिद्धानीत्यर्थः। शरीरस्य प्राणं प्रत्याधानत्वं साधयति—तस्य हीति। शरीरस्याधिष्ठानत्वं स्फुटयति—अस्मिन्हीति। प्राणमात्रे विषक्तानि करणानि नोपलब्धिद्वाराणीत्यत्र प्रमाणमाह—तथा हीति। देहाधिष्ठाने प्राणे विषक्तानि तान्युपलब्धिद्वाराणीत्यत्रानुभवमनुकूलयति—शरीरेति। तत्रैवाजातशत्रुब्राह्मणसंवादं दर्शयति—तच्चेति। शरीराश्रिते प्राणे वागादिषु विषक्तेषूपलब्धुरुपलभ्यमानत्वमिति यावत्।

प्रत्याधानत्वं शिरसो व्युत्पादयति—प्रदेशेति। बलपर्यायस्य प्राणस्य स्थूणात्वं समर्थयते—बलेति। अयं पुरुषो यस्मिन्काले देहनबलभावं नीत्वा सम्मोहमिव प्रतिपद्यते तदोत्क्रामतीति षष्ठे दर्शनादिति यावत्। बलावष्टम्भोऽस्मिन्देहे प्राण इत्यत्र दृष्टान्तमाह—यथेति। भर्तृप्रपञ्चपक्षं दर्शयति—शरीरेति। उक्तं हि प्राण इत्युच्छ्वासनिःश्वासकर्मा वायुः शारीरः शरीरपक्षपाती गृह्यते। एतस्यां स्थूणायां शिशुः प्राणः करणदेवता लिङ्गपक्षपाती गृह्यते। स देवः प्राण एतस्मिन्बाह्ये प्राणे बद्ध इति। तद्व्याख्यातुं भूमिकां करोति—अन्नं हीति। त्वगसृङ्मांसमेदोमज्जास्थिशुक्रेभ्यः सप्तभ्यो धातुभ्यो जातं साप्तधातुकम्। तथाऽपि कथमन्नस्य दामत्वं तदाह—तेनेति ॥१॥

---

१. पराञ्चि—पराग्विषयाणि खानि इन्द्रियाणि हिंसितवान् ब्रह्मा तस्मादेव पराग्विषयाणि। कश्चिद्धीरः विषयान् धैर्येण त्यागे कुशलः। आवृत्तचक्षुः निगृहीतेन्द्रियः।

२. लब्धात्मकानि—अभिव्यक्तानि अनभिव्यक्तानि बाल्ये पुंस्त्वादिवद् ततः पश्चात् अभिव्यज्यन्ते।

३. शरीरप्रदेशव्यूढत्वं इन्द्रियाणां स्वस्वगोलके प्रतिष्ठितत्वं।

४. गार्ग्याजातशत्रुसंवादमधिकृत्य ब्रह्मसूत्रेषु विचारितम् "जगद्वाचित्वात्" ब्र० सू० १-४-१६ इत्यधिकरणे। अयं संवादः कौषीतकिब्राह्मणे बृहदारण्यके च सममेव श्रूयते। परन्तु भाष्ये कौषीतकिवाक्यान्येवोदाहरणत्वेन स्वीकृतानि न तु बृहदारण्यकद्वितीयगतानि। तत्कुत इति चेदुच्यते—कौषीतकोपनिषद्वाक्ये जीवविषयसन्देहोऽप्युपस्थापितः। प्राणो वा जीवो वा ब्रह्म वा इति। तत्र जीवलिङ्गं—यष्टिघातोत्थापनं तथा तद्यथा

तमेताः सप्ताक्षितय उपतिष्ठन्ते तद्या इमा अक्षन्लोहिन्यो राजयस्ता-
भिरेनꣳ रुद्रोऽन्वायत्तोऽथ या अक्षन्नापस्ताभिः पर्जन्यो या कनीनका
तयादित्यो यत्कृष्णं तेनाग्निर्यच्छुक्लं तेनेन्द्रोऽधरयैनं वर्तन्या
पृथिव्यन्वायत्ता द्यौरुत्तरया नास्यान्नं क्षीयते य एवं वेद ॥२॥
तदेष श्लोको भवति । अर्वाग्बिलश्चमस ऊर्ध्वबुध्नस्तस्मिन्यशो निहितं ५
विश्वरूपम् । तस्यासत ऋषयः सप्त तीरे वागष्टमी ब्रह्मणा संवि-

इदानीं तस्यैव शिशोः प्रत्याधान ऊढस्य चक्षुषि काश्चनोपनिषद उच्यते—तमेताः सप्ताक्षितय उपतिष्ठन्ते । तं करणात्मकं प्राणं शरीरेऽन्नबन्धनं चक्षुष्यूढमेता वक्ष्यमाणाः सप्त सप्तसङ्ख्याका अक्षितयोऽक्षितिहेतुत्वादुपतिष्ठन्ते । यद्यपि मन्त्रकरणे तिष्ठतिरुपपूर्व आत्मनेपदी भवति । इहापि सप्त देवताभिधानानि मन्त्रस्थानीयानि करणानि तिष्ठतेरतोऽत्राप्यात्मनेपदं न विरुद्धम् । कास्ता अक्षितय इत्युच्यन्ते । तत्तत्र या इमाः प्रसिद्धा अक्षन्नक्षणि लोहिन्यो १० लोहिता राजयो रेखास्ताभिर्द्वारभूताभिरेनं मध्यमं प्राणं रुद्रोऽन्वायत्तोऽनुगतः । अथ या अक्षन्नक्षण्यापो धूमादि-संयोगेनाभिव्यज्यमानास्ताभिरद्भिर्द्वारभूताभिः पर्जन्यो देवतात्माऽन्वायत्तोऽनुगत उपतिष्ठत इत्यर्थः । स चान्नभूतो-ऽक्षितिः प्राणस्य । "पर्जन्ये वर्षत्यानन्दिनः प्राणा भवन्ति" इति श्रुत्यन्तरात् । या कनीनका दृक्शक्तिस्तया कनीनकया द्वारेणाऽऽदित्यो मध्यमं प्राणमुपतिष्ठते । यत्कृष्णं चक्षुषि तेनैनमग्निरुपतिष्ठते । यच्छुक्लं चक्षुषि तेनेन्द्रो-ऽधरया वर्तन्या पक्ष्मणैनं पृथिव्यन्वायत्ताऽधरत्वसामान्याद् । द्यौरुत्तरयोर्ध्वत्वसामान्यात् । एताः सप्तान्नभूताः १५ प्राणस्य सन्ततमुपतिष्ठन्त इत्येवं यो वेद तस्यैतत्फलं नास्यान्नं क्षीयते य एवं वेद ॥२॥

तत्तत्रैतस्मिन्नर्थ एष श्लोको मन्त्रो भवति—अर्वाग्बिलश्चमस इत्यादिः । तत्र मन्त्रार्थमाचष्टे श्रुतिः—अर्वाग्बिलश्चमस ऊर्ध्वबुध्न इति । कः पुनरसावर्वाग्बिलश्चमस ऊर्ध्वबुध्नः । इदं तच्छिरश्चमसाकारं हि तत् कथम् ।

यो ह वै शिशुमित्यादौ सूत्रितशिश्वादिपदार्थान्व्याख्यायानन्तरसन्दर्भस्य तात्पर्यं दर्शयन्नुत्तरवाक्यमुपादाय व्याकरोति—इदानीमित्यादीना । ननु यत्र मन्त्रेणोपस्थानं क्रियते तत्रैवोपपूर्वस्य तिष्ठतेरात्मनेपदं भवति । उक्तं २० हि—'उपान्मन्त्रकरणे' ( पा० सू० १।३।२५ ) इति । दृश्यते चाऽऽदित्यं गायत्र्योपतिष्ठत इति । न चात्र मन्त्रेण किञ्चित्क्रियते किन्त्वन्नाक्षयहेतुत्वात्प्राणस्य सप्ताक्षितय इत्युपनिषदो विवक्ष्यन्ते तत्राऽऽह—यद्यपीति । मन्त्रेण कस्यचिदनुष्ठानस्य करणे विवक्षिते तिष्ठतिरुपपूर्वो यद्यप्यात्मनेपदी भवति तथाऽप्यत्र सप्त रुद्रादिदेवतानामानि मन्त्रवदवस्थितानि तैश्च करणान्युपासनानुष्ठानान्यत्र क्रियन्ते । अतस्तिष्ठतेरुपपूर्वस्याऽऽत्मनेपदमविरुद्धमिति योजना । लोहितरेखाभी रुद्रस्य प्राणं प्रत्यनुगतेरनन्तरमित्यथशब्दार्थः । पर्जन्यस्यान्नद्वारा प्राणाक्षयहेतुत्वे प्रमाणमाह—पर्जन्य २५ इति । कथं पुनरेतेषां प्राणं प्रत्यक्षितित्वं सर्वेषां सिध्यति तत्राऽऽह—एता इति । सम्प्रत्युपास्तिफलमाह—इत्येवमिति ॥२॥

रुद्रादिशब्दानां देवताविषयत्वान्मन्त्रस्यापि तद्विषयतेत्याशङ्क्य चक्षुषि रुद्रादिगणस्योक्तत्वादिन्द्रियसम्बन्धात्तस्य करणग्रामत्वप्रतीतेस्तद्विषयः श्लोको न प्रसिद्धदेवताविषय इत्यभिप्रेत्याह—तत्तत्रेति । मन्त्रस्य व्याख्यानसापेक्षत्वं

श्रेष्ठी स्वैर्भुङ्क्ते ? इत्याद्यनुक्रम्य प्रज्ञात्मा एभिरात्मभिर्भुङ्क्ते इति भोक्तृत्वं जीवलिङ्गं भवति । बृहदारण्यके तु य एष विज्ञानमयः क्वैष तदाऽभूत् कुतं एतदागात् इति प्रश्नः । समाधानं च 'य एषोऽन्तर्हृदय आकाशस्तस्मिन् ३० शेते' इति ब्रह्मणि आकाशशब्दिते शयनमुक्तं 'स्वाप्ययादि'तिवत् । तस्मात् बृहदारण्यकवाक्यस्य ब्रह्मविषयत्वं सुषुप्तिकालीनजीवाधारत्वलिङ्गेन निर्णेतुं शक्यमतः बृहदारण्यकवाक्यं नोदाहृतं संशयाभावात् । कौषीतकं तु जीवलयवाक्याभावात् सन्दिग्ध विचार्यते स्पष्टं चेदम् 'अन्यार्थं तु जैमिनिरि'ति सूत्रे ब्र० सू० १-१८ 'अपि चैवमेके इति' सूत्रपदैरेव सूच्यते ।

१. मन्त्रकरणे—उपान्मन्त्रकरणे ( पा० सू० ) मन्त्रकरणकक्रियाविवक्षायामुपशब्दपूर्वकात् स्थाधातोः आत्मनेपदम् । ३५ यथा अग्निमुपतिष्ठते—इति । अत्र रुद्रादिपदमेव मन्त्रत्वेन विवक्षितम् ।

२. अर्वाग्बिलश्चमस इति—चमसः सोमरसमनेन गृहीत्वा चमसाध्वर्युनामकैः होतृभिः सोमयागे होमः क्रियते ।

दानेति । अर्वाग्बिलश्चमस ऊर्ध्वबुध्न इतीदं तच्छिर एष ह्यर्वाग्बिलश्च-
मस ऊर्ध्वबुध्नस्तस्मिन्यशो निहितं विश्वरूपमिति प्राणा वै यशो विश्वरूपं
प्राणानेतदाह तस्यासत ऋषयः सप्त तीर इति प्राणा वा ऋषयः
प्राणानेतदाह वागष्टमी ब्रह्मणा संविदानेति वाग्घ्यष्टमी ब्रह्मणा संवित्ते ॥३॥
५ इमावेव गोतमभरद्वाजावयमेव गोतमोऽयं भरद्वाज इमावेव विश्वामित्र-
जमदग्नी अयमेव विश्वामित्रोऽयं जमदग्निरिमावेव वसिष्ठकश्यपाव-
यमेव वसिष्ठोऽयं कश्यपो वागेवात्रिर्वाचा ह्यन्नमद्यतेऽत्तिर्ह वै
नामैतद्यदत्रिरिति सर्वस्यात्ता भवति सर्वमस्यान्नं भवति य एवं वेद ॥४॥

इति बृहदारण्यकोपनिषदि द्वितीयाध्यायस्य द्वितीयं ब्राह्मणम् ॥२॥

१० एष ह्यर्वाग्बिलो मुखस्य बिलरूपत्वाच्छिरसो बुध्नाकारत्वादूर्ध्वबुध्नः । तस्मिन्यशो निहितं विश्वरूपमिति यथा सोमश्चमसे एवं तस्मिञ्छिरसि विश्वरूपं नानारूपं निहित स्थितं भवति । किं पुनस्तद्यशः । प्राणा वै यशो विश्वरूपं प्राणाः श्रोत्रादयो वायवश्च मरुतः सप्तधा तेषु प्रसृता यश इत्येतदाह मन्त्रः, शब्दादिविज्ञानहेतुत्वात् । तस्याऽऽसत ऋषयः सप्त तीर इति प्राणाः परिस्पन्दात्मकास्त एव च ऋषयः प्राणानेतदाह मन्त्रः । वागष्टमी ब्रह्मणा संविदानेति । ब्रह्मणा सवादं कुर्वत्यष्टमी भवति । तद्धेतुमाह—वाग्घ्यष्टमी ब्रह्मणा संवित्त इति ॥३॥

१५ के पुनस्तस्य चमसस्य तीर आसत ऋषय इति । इमावेव गोतमभरद्वाजौ कर्णावयमेव गोतमोऽय भरद्वाजो दक्षिणश्चोत्तरश्च विपर्ययेण वा । तथा चक्षुषी उपदिशन्नुवाचेमावेव विश्वामित्रजमदग्नी दक्षिणं विश्वामित्र उत्तरं जमदग्निर्विपर्ययेण वा । इमावेव वसिष्ठकश्यपौ नासिके उपदिशन्नुवाच । दक्षिणः पुटो भवति वसिष्ठः । उत्तरः कश्यपः पूर्ववत् । वागेवात्रिरदनक्रियायोगात्सप्तमः । वाचा ह्यन्नमद्यते तस्मादत्तिर्ह वै प्रसिद्धं नामैतदत्तृत्वाद-त्तिरिति । अत्तिरेव सन्यदत्रिरित्युच्यते परोक्षेण सर्वस्यैतस्यान्नजातस्य प्राणस्यात्रिनिर्वचविज्ञानादत्ता भवति ।
२० अत्तैव भवति नामुष्मिन्नन्नेन पुनः प्रतिपद्यत इत्येतदुक्तं भवति सर्वमस्यान्नं भवतीति । य एवमेतद्यथोक्तं प्राणया-थात्म्यं वेद स एवं मध्यमः प्राणो भूत्वाऽऽधानप्रत्याधानगतो भोक्तैव भवति न भोज्यं भोज्याद्व्यावर्तत इत्यर्थः ॥४॥

इति बृहदारण्यकोपनिषद्भाष्ये द्वितीयाध्यायस्य द्वितीयं ब्राह्मणम् ॥२॥

तत्रेत्युच्यते । शिरसश्चमसाकारत्वमस्पष्टमित्याशङ्क्य समाधत्ते—कथमित्यादिना । वागष्टमीत्ययुक्तं तस्याः सप्तमत्वे-नोक्तत्वान्न चैकस्या द्वित्वमित्याशङ्क्याऽऽह—ब्रह्मणेति । शब्दराशिर्ब्रह्म तेन सवाद. संसर्गस्तं गच्छन्ती शब्दराशि-
२५ मुच्चारयन्ती वागष्टमी स्यादिति यावत् । तथाऽपि सप्तमत्वं विहाय कथमष्टमत्व तत्राऽऽह—तद्धेतुमिति । वक्तृत्वा-त्तृत्वभेदेन द्विधा वागिष्टा । तत्र वक्तृत्वेनाष्टमी सप्तमी चात्तृत्वेनेत्यविरोधः रसना तूपलब्धिहेतुरिति भावः ॥३॥

विपर्ययेण वेत्येतत्पूर्ववदित्युच्यते । अत्रिः सप्तम इति सम्बन्ध. । अत्रित्वे हेतुरदनक्रियायोगादिति । हेतुं साधयति—वाचा हीति । साध्यमर्थं निगमयति—तस्मादिति । तर्हि कथमत्रिरिति व्यपदिश्यतेऽत आह—अत्तिरे-वेति । प्राणस्य यदन्नजातमेतस्य सर्वस्यात्ता भवत्यत्रिनिर्वचनविज्ञानादिति सम्बन्धः । सर्वमस्येत्यादिवाक्यमर्थोक्ति-
३० पूर्वकं प्रकटयति—अत्तैवेति । न केवलमत्रिनिर्वचनविज्ञानकृतमेतत्फलं किन्तु प्राणयाथात्म्यवेदनप्रयुक्तमित्याह—य एवमिति ॥४॥

इति बृहदारण्यकोपनिषद्भाष्यटीकायां द्वितीयाध्यायस्य द्वितीयं ब्राह्मणम् ॥२॥

---

तच्च दारुनिर्मितं चमसपात्रम् । चमसैर्जुहोति इति च चमसहोमविधिः । स च ऊर्ध्वबिलः अर्वाक् बुध्नश्च । अत्र तु विपरीतं ऊर्ध्वबुध्नः अर्वाग्बिलः सः क इति न ज्ञायते । परं तु अत्रैव 'इदं तच्छिर एष ह्यर्वाग्बिल'
३५ इत्युक्त्या मानवशिर एवोच्यते सादृश्यात् तस्य मुखमेव बिल शिरः बुध्नः इति ।

१. अमुष्मिन् लोके अन्नेन अद्यत्व न प्रतिपद्यते भोक्तैव भवति न भोग्यः इत्यर्थः ।

अथ द्वितीयाध्यायस्य तृतीयं ब्राह्मणम्

**द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं च मर्त्यं चामृतं च स्थितं च यच्च सच्च त्यच्च ॥१॥**

**तदेतन्मूर्तं यदन्यद्वायोश्चान्तरिक्षाच्चैतन्मर्त्यमेतत्स्थितमेतत्सत्तस्यैतस्य मूर्तस्यैतस्य मर्त्यस्यैतस्य स्थितस्यैतस्य सत एष रसो य एष तपति सतो ह्येष रसः ॥२॥**

तत्र प्राणा वै सत्यमित्युक्तम्। याः प्राणानामुपनिषदस्ता ब्रह्मोपनिषत्प्रसङ्गेन व्याख्याता एते ते प्राणा ५ इति च। ते किमात्मकाः कथं वा तेषां सत्यत्वमिति च वक्तव्यमिति पञ्चभूतानां सत्यानां कार्यकरणात्मकानां स्वरूपावधारणार्थमिदं ब्राह्मणमारभ्यते। यदुपाधिविशेषापनयद्वारेण नेति नेतीति ब्रह्मणः सतत्त्वं निर्दिधारयिषितम्। तत्र द्विरूपं[1] ब्रह्म पञ्चभूतजनितकार्यकरणसम्बद्धं मूर्तामूर्ताख्यं मर्त्यामृतस्वभावं तज्जनितवासनारूपं च सर्वज्ञं सर्वशक्ति सोपाख्यं भवति। क्रियाकारकफलात्मकं च सर्वव्यावहारास्पदम्। तदेव ब्रह्म विगतसर्वोपाधिविशेषं सम्यग्दर्शनविषयमजमजरममृतमभयं वाङ्मनसयोरप्यविषयमद्वैतत्वान्नेति नेतीति निर्दिश्यते। तत्र यदपोह- १० द्वारेण नेति नेतीति निर्दिश्यते ब्रह्म ते एते द्वे वाव वावशब्दोऽवधारणार्थः। द्वे एवेत्यर्थः। ब्रह्मणः परमात्मनो रूपे रूप्यते याभ्यामरूपं परं ब्रह्माविद्यारोप्यमाणाभ्याम्। के ते द्वे। मूर्तं चैव मूर्तमेव च। तथाऽमूर्तं चामूर्तमेव चेत्यर्थः। अन्तर्णीतस्वात्मविशेषणे[2] मूर्तामूर्ते द्वे एवेत्यवधार्यते। कानि पुनस्तानि विशेषणानि मूर्तामूर्तयोरित्युच्यन्ते—मर्त्यं च मर्त्यं मरणधर्म्यमृतं च तद्विपरीतं स्थितं च परिच्छिन्नं गतिपूर्वकं यत्स्थास्नु यच्च यातीति यद्व्याप्यपरिच्छिन्नं स्थितविपरीतं सच्च सदित्यन्येभ्यो विशेष्यमाणासाधारणधर्मविशेषवत्। त्यच्च तद्विपरीतं त्यदित्येव सर्वदा परोक्षा- १५ भिधानार्हम् ॥१॥

तत्र चतुष्टयविशेषणविशिष्टं मूर्तं तथाऽमूर्तं च। तत्र कानि मूर्तविशेषणानि कानि चेतराणीति विभज्यन्ते तदेतन्मूर्तं मूर्च्छितावयवमितरेतरानुप्रविष्टावयवं घनं सहतमित्यर्थः। किं तद्यदन्यत्कस्मादन्यद्वायोश्चान्तरिक्षाच्च भूतद्वयात्परिशेषात्पृथिव्यादिभूतत्रयमेतन्मर्त्यं यदेतन्मूर्ताख्यं भूतत्रयमिदं मर्त्यं मरणधर्मि। कस्माद्यस्मात्स्थितमेतत्। परिच्छिन्नं ह्यर्थान्तरेण सम्प्रयुज्यमानं विरुध्यते। यथा घटः स्तम्भकुड्यादिना तथा मूर्तं स्थितं परिच्छिन्नमर्थान्तर- २०

सम्बन्ध वक्तु वृत्तं कीर्तयति—तत्रेति। अजातशत्रुब्राह्मणावसानं सप्तम्यर्थः। उपनिषदो रुद्राद्यभिधानानि। चकारादुक्तमित्यनुषङ्गः। उत्तरब्राह्मणतात्पर्यमाह—ते किमात्मका इति। ब्रह्मणो निर्धारणीयत्वात्किमिति भूतानां सतत्त्वं निर्धार्यते तत्राऽऽह—यदुपाधीति। तेषामुपाधिभूताना स्वरूपावधारणार्थं ब्राह्मणमिति सम्बन्ध.। सत्यस्य सत्यमित्यत्र षष्ठ्यन्तसत्यशब्दितं हेयं प्रथमान्तसत्यशब्दितमादेयं तयोराद्यस्वरूपोक्त्यर्थमथेत्यतः प्राक्तन वाक्यं तदूर्ध्वमाब्राह्मणसमाप्तेरादेयनिरूपणार्थमिति समुदायार्थः। सविशेषमेव ब्रह्म न निर्विशेषमिति केचित्तान्निराकर्तुं विभजते— २५ तत्रेति। ब्राह्मणार्थे पूर्वोक्तरीत्या स्थिते सतीति यावत्। 'द्वे वाव' इत्यादिश्रुतेः सोपाधिकं ब्रह्मरूपं विवृणोति— पञ्चभूतेति। शब्दप्रत्ययविषयत्वं सोपाख्यत्वम्। निरुपाधिकं ब्रह्मरूपं दर्शयति—तदेवेति। एवं भूमिकामारचय्याक्षराणि व्याकरोति—तत्रेत्यादिना। द्वैरूप्ये सतीति यावत्। अमूर्तं चेत्यत्र चकारादेवकारानुषक्तिः। विवक्षितब्रह्मणो रूपद्वयमवधारितं चेन्मर्त्यत्वादीनि वक्ष्यमाणविशेषणान्यवधारणविरोधादयुक्तानीत्याशङ्क्याऽऽह—अन्तर्णीतेति। मूर्तामूर्तयोरन्तर्भावितानि स्वात्मनि यानि विशेषणानि तान्याकाङ्क्षाद्वारा दर्शयति—कानि पुनरित्यादिना। यद्गति- ३० पूर्वकं स्यास्नु तत्परिच्छिन्नं स्थितमिति योजना। विशेष्यमाणत्वं प्रत्यक्षेणोपलभ्यमानत्वम् ॥१॥

तत्रेति निर्धारणार्था सप्तमी। तत्र प्रत्येकं मूर्तामूर्तचतुष्टयविशेषणवत्त्वे सतीति यावत्। कथं स्थितत्वे मर्त्यत्वं तत्राऽऽह—परिच्छिन्नं हीति। तदेव दृष्टान्तेन स्पष्टयति—यथेत्यादिना। अतो मर्त्यत्वान्मूर्तमिति शेषः। मूर्तत्वमर्त्यत्वयोरन्योन्यहेतुहेतुमद्भावं द्योतयितुं वाशब्दः। कथं पुनश्चतुर्षु धर्मेषु विशेषणविशेष्यभावो हेतुहेतुमद्भावश्च

---

१. द्विरूपं ब्रह्म-सोपाधिकमत्र हिरण्यगर्भरूपं विवक्षितम्। यतः पञ्चभूतजनितकार्यकरणसंबद्धत्वं तस्यैवोपपद्यते। ३५
२. अन्तर्भूतस्वात्मविशेषणे स्वात्मन्येवान्तर्भूतानि यानि विशेषणानीत्यर्थः।

अथामूर्तं वायुश्चान्तरिक्षं चैतदमृतमेतद्यदेतत्त्यत्तस्यैतस्या-
मूर्तस्यैतस्यामृतस्यैतस्य यत एतस्य त्यस्यैष रसो य एष
एतस्मिन्मण्डले पुरुषस्त्यस्य ह्येष रस इत्यधिदैवतम् ॥३॥

सम्बन्धि ततोऽर्थान्तरविरोधान्मर्त्यमेतत्सद्विशेष्यमाणासाधारणधर्मवत्। तस्माद्धि परिच्छिन्नं परिच्छिन्नत्वान्मर्त्यमतो
५ मूर्तं मूर्तत्वाद्वा मर्त्यं मर्त्यत्वात्स्थितं स्थितत्वात्सत्। अतोऽन्योन्याव्यभिचाराच्चतुर्णां धर्माणां यथेष्टं विशेषणविशेष्य-
भावो हेतुहेतुमद्भावश्च दर्शयितव्यः। सर्वथाऽपि तु भूतत्रयं चतुष्टयविशेषणविशिष्टं मूर्तं रूपं ब्रह्मणः। तत्र चतुर्णा-
मेकस्मिन्गृहीते विशेषण इतरद्गृहीतमेव विशेषणमित्याह—तस्यैतस्य मूर्तस्यैतस्य मर्त्यस्यैतस्य स्थितस्यैतस्य सतश्च-
तुष्टयविशेषणस्य भूतत्रयस्येत्यर्थः। एष रस. सार इत्यर्थः। त्रयाणां हि भूतानां सारिष्ठः सविता। एतत्साराणि त्रीणि
भूतानि यत एतत्कृतविभज्यमानरूपविशेषणानि भवन्ति। आधिदैविकस्य कार्यस्यैतद्रूपं यत्सविता यदेतन्मण्डलं
१० तपति। सतो भूतत्रयस्य हि यस्मादेष रस इत्येतद्गृह्यते। मूर्तो ह्येष सविता तपति। सारिष्ठश्च। यत्त्वाधिदैविकं
करण मण्डलस्याभ्यन्तरं तद्वक्ष्यामः ॥२॥

अथामूर्तं—अथाधुनाऽमूर्तमुच्यते। वायुश्चान्तरिक्षं च यत्परिशेषितं भूतद्वयमेतदमृतममूर्तत्वादस्थितमतो-
ऽविरुध्यमानं केनचिदमृतममरणधर्म्येतद्यत्स्थितविपरीतं व्याप्यपरिच्छिन्नं यस्मादेतदन्येभ्योऽप्रविभज्यमानविशे-
षमतस्त्यदिति परोक्षाभिधानार्हमेव पूर्ववत्। तस्यैतस्यामूर्तस्यैतस्यामृतस्यैतस्य यत एतस्य त्यस्य चतुष्टयविशे-
१५ षणस्यामूर्तस्यैष रसः। कोऽसौ। य एष एतस्मिन्मण्डले पुरुषः करणात्मको हिरण्यगर्भः प्राण इत्यभिधीयते। यः स
एषोऽमूर्तस्य भूतद्वयस्य रसः पूर्ववत्सारिष्ठः। एतत्पुरुषसारं चामूर्तं भूतद्वयं हैरण्यगर्भलिङ्गारम्भाय हि भूतद्वयाभि-

निष्पत्तिव्यस्तत्राऽऽह—अन्योन्येति। रूपरूपिभावस्यापि व्यवस्थाभावमाशङ्क्याऽऽह—सर्वथाऽपीति। तस्यैतस्यैष रस
इत्येव वक्तव्ये किमिति मूर्तस्येत्यादिना विशेषणचतुष्टयमनूद्यते तत्राऽऽह—तत्रेति। सारत्वं साधयति—त्रयाणां हीति।
तत्र प्रतिज्ञामनूद्य हेतुमाह—एतदिति। एतेन सवितृमण्डलेन कृतानि विभज्यमानान्यसङ्कीर्णानि शुक्लं कृष्ण लोहित-
२० मित्येतानि रूपाणि विशेषणानि येषां पृथिव्यप्तेजसा तानि तथा ततो भूतत्रयकार्यमध्ये सवितृमण्डलस्य प्राधान्य-
मित्यर्थ.। य एष तपतीत्यस्यार्थमाह—आधिदैविकस्येति। हेतुवाक्यमादाय तस्य तात्पर्यमाह—सत इति। मण्डल-
मेवैतच्छब्दार्थः। मण्डलपरिग्रहे हेतुमाह—मूर्तो हीति। मूर्तग्रहणस्योपलक्षणत्वाच्चतुर्णामन्वयो हेत्वर्थ. अतश्च
मण्डलात्मा सविता भूतत्रयकार्यमध्ये भवति प्रधान कार्यकारणयोरैकरूप्यस्यौत्सर्गिकत्वादित्याह—सारिष्ठश्चेति।
मण्डल चेदाधिदैविकं कार्यं कि पुनस्तथाविध करणमिति तदाह—यत्त्विति ॥२॥

२५ आधिदैविकं मूर्तमभिधाय तादृगेवामूर्तं प्रतीकोपादानपूर्वकं स्फुटयति—अथेत्यादिना। अमूर्तमुभयत्र हेतुत्वेन
सम्बध्यते। अपरिच्छिन्नत्वमविरोधे हेतु। अमूर्तत्वादीना मिथो विशेषणविशेष्यभावो हेतुहेतुमद्भावश्च यथेष्टं द्रष्टव्य
इत्याऽऽह—पूर्ववदिति। पुनरुक्तिरपि पूर्ववत्। य एष इत्यादि प्रतीकग्रहणं तस्य व्याख्यानं करणात्मक इत्यादि।
यथा भूतत्रयस्य मण्डल सारिष्ठमुक्तं तद्वदित्याह—पूर्ववदिति। सारिष्ठत्वमनूद्य हेतुमाह—एतदिति। तादर्थ्याद्भूत-

---

१. एतत्कृतेति—शुक्लकृष्णादिरूपाणि आदित्यस्यैव तत्कृत एव भेदः पृथिव्यादीनां यच्छुक्लं तदन्नस्येत्या-
३० दावुक्तम्।
२. अमूर्तरसः अमूर्तसारभूत सूर्यमण्डलाभिमानी हिरण्यगर्भः तस्य सूक्ष्मत्वात् तत्कारणे वाय्वाकाशावपि सूक्ष्मौ;
पृथिव्यप्तेजांसि उपसर्जनानि पाञ्चभौतिकत्वात्। भर्तृप्रपञ्चः रसः करणमित्याह सूर्यमण्डलस्थः पुरुषः अमूर्त-
भूतद्वयस्य स्वकर्मद्वारा इति। कथ तस्य वाय्वाकाशकारणत्वं? तस्य कर्म वाय्वन्तरिक्षकारणं तयोः स्थित्वा
इतरभूतकारणम् इत्यपि तन्मतम्।
३५ ३. कार्यकारणयोरैक्यात् सूर्यमण्डल स्थूल कार्य तत्कारणं यद्यपि पञ्चापि भूतानि तथापि स्थूलत्वात् स्थूलभूतानि
प्रधानकारणं वाय्वाकाशौ उपसर्जने।

व्यक्तिरव्याकृतात्तस्मात्तादर्थ्यात्तत्सारं भूतद्वयम्। त्यस्य ह्येष रसो यस्माद्यो मण्डलस्थः पुरुषो मण्डलवन्न गृह्यते सारश्च भूतद्वयस्य तस्मादस्ति मण्डलस्थस्य पुरुषस्य भूतद्वयस्य च साधर्म्यम्। तस्माद्युक्तं प्रसिद्धवद्धेतूपादानं त्यस्य ह्येष रस इति। रसः कारणं हिरण्यगर्भविज्ञानात्मा चेतन इति केचित्। तत्र च किल हिरण्यगर्भविज्ञानात्मनः कर्म वाय्वन्तरिक्षयोः प्रयोक्तृ तत्कर्म वाय्वन्तरिक्षाधारं सदन्येषां भूतानां प्रयोक्तृ भवति। तेन स्वकर्मणा वाय्वन्तरिक्षयोः प्रयोक्तेति तयो रसः कारणमुच्यत इति। ५

तन्न, मूर्तरसेनातुल्यत्वात्। मूर्तस्य तु भूतत्रयस्य रसो मूर्तमेव मण्डलं दृष्टं भूतत्रयसमानजातीयं न चेतनः तथाऽमूर्तयोरपि भूतयोस्तत्समानजातीयेनैवामूर्तरसेन युक्तं भवितुम्, वाक्यप्रवृत्तेस्तुल्यत्वात्। यथा हि मूर्तामूर्ते चतुष्टयधर्मवती विभज्येते तथा रसरसवतोरपि मूर्तामूर्तयोस्तुल्येनैव न्यायेन युक्तो विभागः। न चार्धवैशसम्। मूर्तरसेऽपि मण्डलोपाधिश्चेतनो विवक्ष्यत इति चेत्। अत्यल्पमिदमुच्यते। सर्वत्रैव तु मूर्तामूर्तयोर्ब्रह्मरूपेण विवक्षितत्वात्। पुरुषशब्दोऽचेतनेऽनुपपन्न इति चेत्। न, पक्षपुच्छादिविशिष्टस्यैव लिङ्गस्य पुरुषशब्ददर्शनात्। "न वा इत्थं सन्तः शक्ष्यामः प्रजाः प्रजनयितुमिमान्सप्त पुरुषानेकं पुरुषं करवामेति त एतान्सप्त पुरुषानेकं पुरुषमकुर्वन्न्"-त्यादावन्नरसमयादिषु च श्रुत्यन्तरे पुरुषशब्दप्रयोगात्। इत्यधिदैवतमित्युक्तोपसंहारोऽध्यात्मविभागोक्त्यर्थः ॥३॥ १०

द्वयस्य भूतत्रयोपसर्जनस्य स्वयंप्रधानस्य हिरण्यगर्भारम्भार्थत्वादिति यावत्। भूतद्वयं भूतत्रयोपसर्जनमिति शेषः। हेतुमवतार्य व्याचष्टे—त्यस्य हीति। पुरुषशब्दादुपरिष्टात्सशब्दो द्रष्टव्यः। अमूर्तत्वादिविशेषणचतुष्टयवैशिष्ट्यसाधर्म्यम्। तत्फलमाह—तस्मादिति। १५

स्वमतमुक्त्वा भर्तृप्रपञ्चमतमाह—रस इति। त्यस्य हीत्यादौ रसशब्देन भूतद्वयकारणमुक्तं न च तच्चेतनादन्यत्। न च जीवः, तथाऽसामर्थ्यात्। नापि परः, कौटस्थ्यात्। तस्माच्चेतनः सूत्रक्षेत्रज्ञस्तथेत्यर्थः। सोऽपि कथं भूतद्वयकारणमत आह—तत्रेति। परकीयपक्षः सप्तम्यर्थः। तत्कर्मणस्तत्रासाधारण्यमसम्प्रतिपन्नमित्यभिप्रेत्य किलेत्युक्तम्। यथाऽऽहुः—यो ह्येतस्मिन्मण्डले विज्ञानात्मैष खल्वविद्याकर्मपूर्वप्रज्ञापरिष्कृतो विज्ञानात्मत्वमापद्यते तदेतत्कर्मरूपं विज्ञानात्मनस्तद्वाय्वन्तरिक्षप्रयोक्तृ भवतीति। ननु हिरण्यगर्भदेहस्य पञ्चभूतात्मकत्वाद्भूतद्वयोत्पत्तावपीतरभूतोत्पत्तिं विना कुतोऽस्य भोग सिध्यत्यत आह—तत्कर्मेति। वाय्वन्तरिक्षाधारं तद्रूपपरिणतमिति यावत्। वाय्वन्तरिक्षयोर्भूतत्रयोपसर्जनयोरिति शेषः। प्रयोक्ता हिरण्यगर्भविज्ञानात्मा। २०

निराकरोति—तन्नेति। कथं मूर्तरसेन सह यथोक्तामूर्तरसस्यातुल्यतेत्याशङ्क्याऽऽह—मूर्तस्येति। अमूर्तश्चासौ रसश्चेत्यमूर्तरसस्तेनेति यावत्। अमूर्तरसस्य चेतनत्वे तु रसयोर्वैजात्यं स्यादिति भावः। अस्तु तयोर्वैजात्यं नेत्याह—यथाहीति। मूर्तं मर्त्यं स्थितं सदिति मूर्तस्य धर्मचतुष्टयममूर्तममृतं व्यापि त्यदित्यमूर्तस्य विभजनमसङ्कीर्णत्वेन प्रदर्शनं यथा रसवतोर्मूर्तामूर्तयोस्तुल्यत्वमुक्तं तथा रसयोरपि तयोस्तुल्येनैव प्रकारेण प्रदर्शनमुचितं नत्वमूर्तरसश्चेतनो मूर्तरसस्त्वचेतन इति युक्तो विभागोऽर्धजरतीयस्याप्रामाणिकत्वादित्याह—तथेति। अर्धवैशसं परिहर्तुं शङ्कते—मूर्तरसेऽपीति। अमूर्तरसवन्मूर्तरसशब्देनापि चेतनस्यैव ब्रह्मणो मण्डलोपाधेः ग्रहणमित्येतद्दूषयति—अत्यल्पमिति। मण्डलस्य चेतनकार्यतया चेतनत्वे सर्वस्य तत्कार्यतया तन्मात्रत्वाद्रसयोश्चेतनतेति विशेषणानर्थक्यमित्यर्थः। मण्डलाधारस्य चेतनत्वं पुरुषशब्दश्रुतिवशादेष्टव्यमिति शङ्कते—पुरुषशब्द इति। अनुपपत्तिं परिहरति—नेत्यादिना। तदेव व्याकरोति—न वा इति। इत्थं विभक्ताः सन्तो नैव शक्ष्यामो व्यवहारं प्रजनयितुमित्यालोच्य त्वक्चक्षुःश्रोत्रजिह्वाघ्राणवाङ्मनोरूपानिमान्सप्त पुरुषानेकं पुरुषं संहतं लिङ्गं करवामेति च निश्चित्यामी प्राणाः सप्त पुरुषानुक्तानेकं पुरुषं लिङ्गात्मानं कृतवन्त इत्यर्थः। आदिशब्देन लौकिकमपि दर्शनं सङ्गृह्यते। श्रुत्यन्तरं तैत्तिरीयकम्। पुरुषशब्दप्रयोगः स वा एष पुरुषोऽन्नरसमय इत्यादिः। परकीयं व्याख्यानं प्रत्याख्याय प्रकृतं श्रुतिव्याख्यानमनुवर्तयति—इत्यधिदैवतमिति ॥३॥ २५ ३० ३५

१. उक्तमतं खण्डयति—तन्नेति। मूर्तरसतुल्यत्वाभावात् अमूर्तरसः पुरुषश्चेतन इत्येकं वैधर्म्यं पूर्वत्र रसः सारः कार्यमित्यर्थ उक्तः अत्र तु कारणं चेतन इत्यपरम् तस्मादित्यर्थः।

अथाध्यात्ममिदमेव मूर्तं यदन्यत्प्राणाच्च यश्चायमन्तरात्मन्नाकाश एतन्मर्त्यमेतत्स्थितमेतत्सत्तस्यैतस्य मूर्तस्यैतस्य मर्त्यस्यैतस्य स्थितस्यैतस्य सत एष रसो यच्चक्षुः सतो ह्येष रसः ॥४॥

अथामूर्तं प्राणश्च यश्चायमन्तरात्मन्नाकाश एतदमृतमेतद्यदेतत्त्यत्तस्यैतस्यामूर्तस्यै-
५ तस्यामृतस्यैतस्य यत एतस्य त्यस्यैष रसो योऽयं दक्षिणेऽक्षन्पुरुषस्त्यस्य ह्येष रसः ॥५॥

तस्य हैतस्य पुरुषस्य रूपम् । यथा माहारजनं वासो यथा पाण्ड्वाविकं यथेन्द्रगोपो यथाग्न्यर्चिर्यथा पुण्डरीकं यथा सकृद्विद्युत्तँ सकृद्विद्युत्तेव ह वा अस्य

अथाधुनाऽध्यात्मं मूर्तामूर्तयोर्विभाग उच्यते। किं तन्मूर्तमिदमेव। किञ्चेदं यदन्यत्प्राणाच्च व ग्योर्यश्चायमन्तरभ्यन्तर आत्मन्नात्मन्याकाशः खं शरीरस्थश्च यः प्राण एतद्द्वयं वर्जयित्वा यदन्यच्छरीरारम्भकं भूतत्रय-
१० मेतन्मर्त्यमित्यादि समानमन्यत्पूर्वेण। एतस्य सतो ह्येषरसो यच्चक्षुरिति। आध्यात्मिकस्य शरीरारम्भकस्य कार्यस्यैष रसः सारस्तेन हि सारेण सारवदिदं शरीरं समस्तं यथाऽधिदैवतमादित्यमण्डलेन। प्राथम्याच्च। "चक्षुषी एव प्रथमे सम्भवतः सम्भवत" इति। तेजो रसो निरवर्ततताग्निरिति लिङ्गात्। तैजसं हि चक्षुः। एतत्सारमाध्यात्मिकं भूतत्रयम्। सतो ह्येष रस इति मूर्तत्रयसारत्वे हेत्वर्थः ॥४॥

अथाधुनाऽमूर्तमुच्यते। यत्परिशेषितं भूतद्वयं प्राणश्च यश्चायमन्तरात्मन्नाकाश एतदमूर्तम्। अन्यत्पूर्ववत्।
१५ एतस्य त्यस्यैष रसः सारो योऽयं दक्षिणेऽक्षन्पुरुषो दक्षिणेऽक्षन्निति विशेषग्रहणं शास्त्रप्रत्यक्षत्वात्। लिङ्गस्य हि दक्षिणेऽक्षिण विशेषतोऽधिष्ठातृत्वं शास्त्रस्य प्रत्यक्ष सर्वश्रुतिषु तथा प्रयोगदर्शनात्। त्यस्य ह्येष रस इति पूर्ववद्विशेषतोऽग्रहणादमूर्तत्वसारत्व एव हेत्वर्थः ॥५॥

ब्रह्मण उपाधिभूतयोर्मूर्तामूर्तयोः कार्यकारणविभागेनाध्यात्माधिदैवतयोर्विभागो व्याख्यातः सत्यशब्दवाच्ययोः। अथेदानीं तस्य हैतस्य पुरुषस्य करणात्मनो लिङ्गस्य रूपं वक्ष्यामो वासनामयं मूर्तामूर्तवासनाविज्ञान-

२० चक्षुषो रसत्व प्रतिज्ञापूर्वक प्रकटयति—आध्यात्मिकस्येत्यादिना। चक्षुष सारत्वे शरीरावयवेषु प्राथम्यं हेत्वन्तरमाह—प्राथम्याच्चेति। तत्र प्रमाणमाह—चक्षुषी एवेति। सम्भवतो जायमानस्य जन्तोश्चक्षुषी एव प्रथमे प्रधाने सम्भवतो जायेते। "शश्वद्ध वै रेतसः सिक्तस्य चक्षुषी एव प्रथमे सम्भवत" इति हि ब्राह्मणमित्यर्थः। चक्षुषः सारत्वे हेत्वन्तरमाह—तेज इति। शरीरमात्रस्याविशेषेण निष्पादक तत्र सर्वत्र सन्निहितमपि तेजो विशेषतश्चक्षुषि स्थितम्। "आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत्" इति श्रुतेः। अतस्तेज शब्दपर्यायरसशब्दस्य चक्षुषि प्रवृत्तिरविरुद्धेति
२५ भाव.। इतश्च तेज.शब्दपर्यायो रसशब्द श्चक्षुषि सम्भवतीत्याह—तैजसं हीति। प्रतिज्ञार्थमुपसहरति—एतत्सारमिति। हेतुमवतार्य तस्यार्थमाह—सतो हीति। चक्षुषो मूर्तत्वान्मूर्तभूतत्रयकार्यत्वं युक्तं साधर्म्याद्देहावयवेषु प्राधान्याच्च तस्याऽऽध्यात्मिकभूतत्रयसारत्वसिद्धिरित्यर्थः ॥४॥

कुतो विशेषोक्तिरित्याशङ्क्याऽऽह—दक्षिण इति। शास्त्रस्य तेन वा दक्षिणेऽक्षणि विशेषस्य प्रत्यक्षत्वादित्यर्थः। द्वितीयव्याख्यानमाश्रित्य हेत्वर्थं स्फुटयति—लिङ्गस्येति। हेतुमनूद्य तदर्थ कथयति—त्यस्येति। यथा पूर्वत्र
३० चक्षुषि मूर्तादिचतुष्टयदृष्ट्या तादृग्भूतत्रयसारतोक्ता तथाऽत्रापि लिङ्गात्मन्यमूर्तत्वादिचतुष्टयस्य विशेषेणाग्रहणादमूर्तत्वादिना साधर्म्यात्तथाविधभूतद्वयसारत्वं तस्य शरीरे प्राधान्याच्च तत्सारत्वसिद्धिरित्यर्थः ॥५॥

तस्य हेत्यादेर्वृत्तानुवादपूर्वकं सम्बन्धमाह—ब्रह्मण इति। विभागो विशेष.। तस्याधिदैवं प्रकृतस्यैतस्याध्यात्मं सन्निहितस्यामूर्तरसभूतान्त.करणस्यैव रागादिवासनेति वक्तु तस्येत्यादि वाक्यमित्यर्थः। कथमिदं रूप लिङ्गस्य प्राप्तमिति तदाह—मूर्तेति। मूर्तामूर्तवासनाभिर्विज्ञानमयसंयोगेन च जनित बुद्धे रूपमिति यावत्। नेदमात्मनो रूपं

३५ १. मूर्तामूर्तवासनासयुक्तमन्त करण तादृशवासनाजनित रूपमुच्यते।

श्रीर्भवति य एवं वेदाथात आदेशो नेति[2] नेति न ह्येतस्मादिति नेत्यन्यत्पर-
मस्त्यथ नामधेय॑ सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम् ॥६॥

इति बृहदारण्यकोपनिषदि द्वितीयाध्याये तृतीयं ब्राह्मणम् ॥३॥

मयसंयोगजनितं चिविश्रं पटभित्तिचित्रवन्मायेन्द्रजालमृगतृष्णिकोपमं सर्वव्यामोहास्पदम्। एतावन्मात्रमेवाऽऽत्मेति विज्ञानवादिनो वैनाशिका[3] यत्र भ्रान्ताः। एतदेव वासनारूपं पटरूपवदात्मनो द्रव्यस्य गुण इति नैयायिका[4] वैशेषि- ५
काश्च सम्प्रतिपन्नाः। इदमात्मार्थं त्रिगुणं स्वतन्त्रं प्रधानाश्रयं पुरुषार्थेन हेतुना प्रवर्तत इति साङ्ख्याः।

तस्यैकरसस्यानेकरूपत्वानुपपत्तेरिति विशिनष्टि—विचित्रमिति। वास्तवत्वशङ्कां वारयति—मायेति। वैचित्र्यमनु-
सृत्यानेकोदाहरणम्। अन्तःकरणस्यैव रागादिवासनाश्चेत्कथं पुरुषस्तन्मयो दृश्यते तत्राऽऽह—सर्वेति। तदेव
व्याकुर्वन्विज्ञानवादिना भ्रान्तिमाह—एतावन्मात्रमिति। बुद्धिमात्रमेवाहंवृत्तिविशिष्टं स्वरसभङ्गुरं रागादिकलुषित-
मात्मा नान्यः स्थायी क्षणिको वेति यत्र ते भ्रान्तास्तस्य रूपं वक्ष्याम इति सम्बन्धः। तार्किकाणामपि बौद्धवद्भ्रान्ति- १०
मुद्भावयति—एतदेवेति। अन्तःकरणमेवाहंधीग्राह्यं रागादिधर्मकमात्मा तस्य वासनामयं रूपं पटस्य शौक्ल्यवद्गुणः
स च संसार इति यत्र तार्किका भ्रान्तास्तस्य रूपं वक्ष्याम इति पूर्ववत्। साङ्ख्यानां भ्रान्तिमाह—इदमिति।
कथमस्य त्रिगुणत्वादिकं सिध्यति तत्राऽऽह—प्रधानाश्रयमिति। केन प्रकारेणान्तःकरणमात्मार्थमिष्यते तत्राऽऽह—
पुरुषार्थेनेति। नान्तःकरणमेवाऽऽत्मा किंत्वन्यः सर्वगतः सर्वविक्रिया[5]शून्यः स्वप्रकाशस्तस्य भोगापवर्गानुगुण्येन
प्रधानात्मकमन्तःकरणं तत्तद्धर्मकं प्रवर्तत इति यत्र कापिला भ्राम्यन्ति तस्य रूपं वक्ष्याम इति सम्बन्धः। १५

---

१. 'अथात आदेश' इत्यत्र रूपनिरूपणानन्तरं तस्मादेव हेतोः अवशिष्टः रूपी निरूप्यत इत्यर्थ. उक्तः। वैष्णवास्तु—अथातः शब्दौ वाक्यान्तरोपन्यासार्थौ इति वदन्तः तदुभयं व्यर्थमित्येवाभिप्रयन्ति। न च वेदपदानां वैयर्थ्यं युक्तम्। न च भवन्मते नेति नेति इति प्रपञ्चनिषेधे अन्यसद्भावस्य सिद्धत्वात् अन्यत्परमस्तीति व्यर्थमिति। तदयुक्तं वीप्सया सर्वनिषेधे शून्यत्वशङ्कावारकतया सार्थक्यात्। अत एव 'प्रकृतैतावत्त्वं हि प्रतिषेधति' इति सूत्रं शून्यवादप्रसंगपरिहाराय प्रवृत्तं सगच्छते। परमते नेति नेति इत्यनेन इयत्तापरिच्छिन्नत्वनिषेध इत्युच्यते। २० तथा सति इयत्तामात्रप्रतिषेधेन धर्मिणः प्रतिषेधाभावात् अन्यत्परमस्ति इत्यस्य वैयर्थ्यम्। अपि अन्यत्परमस्ति। अपि च ब्रह्मणः परमुत्कृष्टं नास्तीति व्याकुर्वतः व्यर्थमेव वचनं सर्वजगत्स्रष्टृत्वोक्त्यैव तदर्थस्य सिद्धत्वात्।

२. उभयसादृश्यनिषेधार्थं नेति नेति इति द्विवारं वचनमिति मध्ववचनमपि इतिशब्दस्य सादृश्यार्थकत्वाप्रसिद्धेः न साधु। नह्येतस्मादिति नेत्यन्यत्परमस्तीति स्वरूपतो गुणतश्चोत्कृष्टत्वं प्रतिपाद्यत इत्यप्यशब्दार्थकथनम्। आत्मा वा अरे द्रष्टव्य इत्यत्रात्मा परमात्मा इत्यर्थः वैष्णवैरुच्यते। तन्न, आत्मशब्दस्य प्रत्यगात्मनि रूढत्वात्। २५ अपि च न वा अरे इत्यत्र वै शब्देन आत्मनः सर्वापेक्षया प्रियतमत्वमुच्यते। न हि परमात्मनः प्रियत्वं लोके प्रसिद्धं नास्तिकाना परमात्मानंगीकारात्। अपि चोत्तरत्र तान्येवानुविनश्यति इत्यात्मनः विनाशः प्रतिपाद्यते। तत्र च न प्रसक्तिः सर्वजगदुत्पत्तिस्थितिविनाशहेतुत्वस्य पूर्वग्रन्थे प्रतिपादनात्। अपि च विनाशशंकायाः समाधानं मात्राऽसंसर्गस्त्वस्य भवति इति माध्यन्दिनपाठादवगम्यते। न हि विषयासंसर्गः परमात्मन युज्यते जीवस्य तु सुषुप्तादौ नाशभ्रमः तन्निवारणं च युज्यते। ३०

३. वैनाशिका बौद्धा योगाचाराः तेषां मते क्षणिकविज्ञानसन्ततिरेवात्मा विज्ञानेषु संस्कारास्सन्तीति मतं अतः संस्कारयुक्तबुद्धिः आत्मेति तन्मतं।

४. नैयायिका इति—ते बुद्धेः पृथक् बुद्ध्याश्रयः आत्माऽभ्युपगम्यते अहंधीविषयः सिद्धान्ते आत्मनः चैतन्यस्य अहंधीविषयत्वानंगीकारात्। तेषां ज्ञानाश्रयस्यैवात्मत्वात्। नैयायिकात्मनः ज्ञानरूपपरिणामाङ्गीकारात् तस्यैवाहंधीगोचरत्वं च। तेन नैयायिकैः आत्मा न ज्ञातः ज्ञानाकारपरिणाम्येवात्मा स चान्तःकरणमेव। तदुक्तात्मनः ३५ ज्ञानपरिणामवत्त्वात्।

५. सर्वविक्रियाशून्यः शुद्ध आत्मा प्रधानविकारत्वात् प्रधानात्मकमन्तःकरणं प्रवर्तते।

औपनिषदंमन्या अपि केचित्प्रक्रियां रचयन्ति—मूर्तामूर्तराशिरेकः, परमात्मराशिस्त्तमः,ताभ्यामन्योऽयं मध्यमः किल, तृतोयः कर्त्रा भोक्त्रा विज्ञानमयेनाजातशत्रुप्रतिबोधितेन सह विद्याकर्मपूर्वप्रज्ञासमुदायः। प्रयोक्ता कर्मराशिः प्रयोज्यः पूर्वोक्तो मूर्तामूर्तभूतराशिः साधनं चेति।

तत्र च तार्किकैः सह सन्धि कुर्वन्ति। लिङ्गाश्रयश्चैव कर्मराशिरित्युक्त्वा पुनस्ततस्त्रस्यन्तः साङ्ख्यत्व-
५ भयात्सर्वः कर्मराशिः पुष्पाश्रय इव गन्धः पुष्पवियोगेऽपि पुटतैलाश्रयो भवति तद्वल्लिङ्गवियोगेऽपि परमात्मैक-
देशमाश्रयति। स परमात्मैकदेशः किलान्यत आगतेन गुणेन कर्मणा सगुणो भवति निर्गुणोऽपि स कर्ता भोक्ता
बध्यते मुच्यते च विज्ञानात्मेति वैशेषिकचित्तमप्यनुसरन्ति। स च कर्मराशिर्मूर्तराशेरागन्तुकः स्वतो निर्गुण एव
परमात्मैकदेशत्वात्। स्वत उत्थिताऽविद्याऽनागन्तुकाऽप्यूषरवदनात्मधर्म इत्यनया कल्पनया साङ्ख्यचित्तमनुवर्तन्ते।

सर्वमेतत्तार्किकैः सह सामञ्जस्यकल्पनया रमणीयं पश्यन्ति नोपनिषत्सिद्धान्तं सर्वन्यायविरोधं च पश्यन्ति।
१० कथम्? उक्ता एव तावत्सावयवत्वे परमात्मनः संसारित्वसव्रणत्वकर्मफलदेशसंसरणानुपपत्त्यादयो दोषाः। नित्य-

यत्र विचित्रा विपश्चिता भ्रान्तिस्तदन्तःकरण तस्य हेत्यत्रोच्यते नाऽऽत्मेति स्वपक्षमुक्त्वा भर्तृप्रपञ्चपक्षमुत्था-
पयति—औपनिषदंमन्या इति। कीदृशी प्रक्रियेत्युक्ते राशित्रयकल्पनां वदन्नादावधमं राशिं दर्शयति—मूर्तेति।
उत्कृष्टराशिमाचष्टे—परमात्मेति। राश्यन्तरमाह—ताभ्यामिति। तान्येतानि त्रीणि वस्तूनि मूर्तामूर्तमाहारजनादि-
रूपमात्मतत्त्वमिति परोक्तिमाश्रित्य राशित्रयकल्पनामुक्त्वा मध्यमाधमराश्योर्विशेषमाह—प्रयोक्तेति। उत्पादकत्वं
१५ प्रयोक्तृत्वम्। कर्मग्रहणं विद्यापूर्वप्रज्ञयोरुपलक्षणम्। साधनं ज्ञानकर्मकारणं[1] कार्यकरणजातं तदपि प्रयोज्यमित्याह—
साधनञ्चेति। इतिशब्दो राशित्रयकल्पनासमाप्त्यर्थः।

परकीयकल्पनान्तरमाह—तत्रेति। राशित्रये कल्पिते सतीति यावत्। सन्धिकरणमेव स्फोरयति—
लिङ्गाश्रयश्चेति। तत इत्युक्तिपरामर्शः। साङ्ख्यत्वभयात्[3]त्रस्यन्तो वैशेषिकचित्तमप्यनुसरन्तीति सम्बन्धः। कथं
तच्चित्तानुसरणं तदुपपादयति—कर्मराशिरिति। कथं निर्गुणमात्मानं कर्मराशिराश्रयतीत्याशङ्क्याऽऽह—स परमात्मैक-
२० देश इति। अन्यत इति कार्यकरणात्मकाद्भूतराशेरिति यावत्। यदा भूतराशिनिष्ठं कर्मादि तद्द्वाराऽऽत्मन्यागच्छति
तदा स कर्तृत्वादिसंसारमनुभवतीत्याह—स कर्तेति। स्वतस्तस्य कर्मादिसम्बन्धत्वेन संसारित्वं स्यादिति चेन्नेत्याह—
स चेति। निर्गुण एव विज्ञानात्मेति शेषः। साङ्ख्यचित्तानुसारार्थमेव परेषां प्रक्रियान्तरमाह—स्वत इति। नैसर्गिक्यप्य-
विद्या परस्मादेवाभिव्यक्ता सती तदेकदेशं विकृत्य तस्मिन्नेवान्तःकरणाख्ये तिष्ठतीति वदन्तोऽनात्मधर्मोऽविद्येत्युक्त्वा
साङ्ख्यचित्तमप्यनुसरन्तीत्यर्थः। अविद्या परस्मादुत्पन्ना चेत्तमेवाऽऽश्रयेन्न तदेकदेशमित्याशङ्क्याऽऽह—ऊषरवदिति।
२५ यथा पृथिव्या जातोऽप्यूषरदेशस्तदेकदेशमाश्रयत्येवमविद्या परस्माज्जाताऽपि तदेकदेशमाश्रयिष्यतीत्यर्थः।

तदेतद्दूषयितुमुपक्रमते—सर्वमेतदिति। तार्किकैः सह सन्धिकरणादिकमेतत्सर्वमधिकृत्य सामञ्जस्येन
पूर्वोक्तानां कल्पनानामापातेन रमणीयत्वमनुभवन्तीति यावत्। यथोक्तकल्पनानां श्रुतिन्यायानुसारित्वाभावात्त्याज्यत्वं
सूचयति—नेत्यादिना। कर्मद्वयं प्रत्येकं क्रियापदेन सम्बध्यते। नञश्चोभयत्रान्वयः। कथं यथोक्तकल्पनानामापातरमणी-
यत्वेन श्रुतिन्यायबाह्यत्वमिति पृच्छति—कथमिति। यदुक्तं परस्यैकदेशो विज्ञानात्मेति तत्र तदेकदेशत्वं वास्तव-
३० मवास्तवं वा प्रथमे स परस्मादभिन्नो भिन्नो वेति विकल्प्याऽऽद्यं दूषयति—उक्ता एवेति। आदिशब्देन श्रुतिस्मृति-

---

१. ज्ञानकर्मकारणं ज्ञानोत्पत्तौ कर्मोत्पत्तौ च कारणं कार्यकारणजातं शरीरेन्द्रियादिकं उत्पाद्यं जीवस्य तस्य पञ्चभूत-
सूक्ष्मरूपत्वात्। तदपि प्रयोज्यं = विद्याकर्मपूर्वप्रज्ञाप्रयोज्यं पञ्चभूतजन्यत्वात्। परमात्मैकदेशो जीवः। स चान्यतः
इन्द्रियादिनाऽऽगतेन ज्ञानादिना सगुणः निर्गुणोऽपि स्वरूपतः गुणराहित्येऽपि आगन्तुगुणेन सगुणः न्यायमतवत्।

२. भर्तृप्रपञ्चमते राशित्रयं—परमात्मराशिः उत्कृष्टः मर्तामूर्तराशिः अधमः मध्यमस्तु कर्ता भोक्ता विज्ञानमयो
३५ जीवः विद्याकर्मपूर्वप्रज्ञाविशिष्टः। कर्मराशिरेव विद्याकर्मपूर्वप्रज्ञाविशिष्टः प्रयोक्ता उत्पादकः। प्रयोज्यस्तु
मूर्तामूर्तभूतराशिः। अत्र भर्तृप्रपञ्चाः तार्किकानुरोधाय कर्मराशिः पुष्पतैलवासनावत् पुष्पवियोगेऽपि तैला-
श्रयो यथा तथा परमात्मैकदेशं जीवमाश्रयति। तथा च वासनावान् जीवः इति वैशेषिकमतं समाश्रयन्ते।

३. सांख्यभयादिति—सांख्यः पुरुषो निर्लेपः अन्तःकरणगतमेव कर्तृत्वमित्याह तन्मतप्रवेशः यदि लिङ्गाश्रयः
कर्मराशिः। वासनाकर्मविज्ञानानि जीवाश्रयाणि जीवस्तु परमात्मैकदेश इत्युक्तिः वैशेषिकपक्षसमाश्रयणाय।
४० साधनं = तृतीयराशिं प्रति साधनमित्यर्थः।

भेदे च विज्ञानात्मनः परेणैकत्वानुपपत्तिः। लिङ्गमेवेति चेत्परमात्मन उपचरितदेशत्वेन कल्पितं घटकरकभूच्छिद्राकाशादिवत्। तथा लिङ्गवियोगेऽपि परमात्मदेशाश्रयणं वासनायाः।

अविद्यायाश्च स्वत उत्थानमूषरवदित्यादिकल्पनाऽनुपपन्नैव। न च वास्यदेशव्यतिरेकेण वासनाया वस्त्वन्तरसञ्चरणं मनसाऽपि कल्पयितुं शक्यम्। न च श्रुतयो गच्छन्ति 'कामः सङ्कल्पो विचिकित्सा' 'हृदये ह्येव रूपाणि' 'ध्यायतीव लेलायतीव' 'कामा येऽस्य हृदि श्रिता' 'स्तीर्णो हि तदा सर्वाञ्शोकान्हृदयस्ये'त्याद्याः। ५

न चाऽऽसा श्रुतीनां श्रुतादर्थान्तरकल्पना न्याय्या। आत्मनः परब्रह्मत्वोपपादनार्थपरत्वादासामेतावन्मात्रार्थपक्षयत्वाच्च सर्वोपनिषदाम्। तस्माच्छ्रुत्यर्थकल्पनाकुशलाः सर्व एवोपनिषदर्थमन्यथा कुर्वन्ति। तथापि वेदार्थश्चेत्स्यात्कामं भवतु न मे द्वेषः।

न च द्वे वाव ब्रह्मणो रूपे इति राशित्रयपक्षे समञ्जसम्। यदा तु मूर्तामूर्ते तज्जनितवासना मूर्तामूर्ते द्वे रूपे ब्रह्म च रूपि तृतीयं न चान्यच्चतुर्थमन्तराले तदैतदनुकूलमवधारणं द्वे एव ब्रह्मणो रूपे इति। अन्यथा १०

विरोधो गृह्यते। कल्पान्तरं प्रत्याह—नित्यभेदे चेति। भेदाभेदयोर्विरुद्धत्वादनुपपत्तिश्चकारार्थः। लिङ्गोपाधिरात्मा परस्यांश इति कल्पान्तरं शङ्कते—लिङ्गमेवेति। उपचरितत्वं कल्पितत्वम्। लिङ्गोपाधिना कल्पित परांशो जीवात्मेत्युक्ते स्वापादौ लिङ्गध्वंसे वासना नाऽऽत्मनि स्याल्लिङ्गाभावे तदधीनजीवाभावात्ततश्च तद्वियोगेऽपि लिङ्गस्था वासना जीवे तिष्ठतीति प्रक्रियाऽनुपपन्नेति दूषयति—तथेति।

यत्तु परस्मादविद्यायाः समुत्थानमिति तन्निराकरोति—अविद्यायाश्चेति। आदिपदेनानात्मधर्मत्वमविद्याया गृह्यते। परस्मादविद्योत्पत्तौ तस्यैव संसारः स्यात्, तयोरैकाधिकरण्यात्। अतश्चाविद्याया सत्या न मुक्तिर्न च तस्यां नष्टाया तत्सिद्धिः कारणे स्थिते कार्यस्यात्यन्तनाशायोगात्। कार्यविद्यानाशे तत्कारणपराभावस्तथा च मोक्षिणोऽभावान्मोक्षासिद्धिः। न चानात्मधर्मोऽविद्या, विद्याया अपि तद्धर्मत्वप्रसङ्गात्तयोरेकाश्रयत्वादिति भावः। यत्तु लिङ्गोपरमे तद्गता वासनाऽऽत्मन्यस्तीति तत्राऽऽह—न चेति। पुटकादौ तु पुष्पाद्यवयवानामेवानुवृत्तिरिति भावः। इतश्च वासनाया जीवाश्रयत्वमसंगतमित्याह—न चेति। १५ २०

ननु जीवे समवायिकारणे मनःसंयोगादसमवायिकारणात्कामाद्युत्पत्तिरित्युदाहृतश्रुतिषु विवक्ष्यते तत्राऽऽह—न चाऽऽसामिति। दृश्यमानससारमौपाधिकमभिधाय जीवस्य ब्रह्मत्वोपपादने तात्पर्यं श्रुतीनामुपक्रमोपसंहारैकरूप्यादिभ्यो गम्यते तन्नार्थान्तरकल्पनेत्यर्थः इतश्च यथोक्तश्रुतीनां नार्थान्तरकल्पनेत्याह—एतावन्मात्रेति। सर्वासामुपनिषदामेकरसेऽर्थे पर्यवसानं फलवत्त्वादिलिङ्गेभ्यो गम्यते तत्कथमुक्तश्रुतीनामर्थान्तरकल्पनेत्यर्थः। ननूपनिषदामैक्यादर्थान्तरमपि प्रतिपाद्य व्याख्यातारो वर्णयन्ति तत्कथमर्थान्तरकल्पनानुपपत्तिरत आह—तस्मादिति। सर्वोपनिषदामैक्यपरत्वप्रतिभासस्तच्छब्दार्थः। ननु परैरुच्यमानोऽपि वेदार्थो भवत्येव किमित्यसौ द्वेषादेव त्यज्यते तत्राऽऽह—तथाऽपीति। न चार्थान्तरस्य वेदार्थत्वं तत्र तात्पर्यलिङ्गाभावादिति भावः। २५

लिङ्गवियोगेऽपि पुंसि वासनाऽस्तीत्येतन्निराकृत्य राशित्रैयकल्पना निराकरोति—न चेति। कथं सिद्धान्तेऽपि वावशब्दादिसामञ्जस्य तत्राऽऽह—यदेति। राशित्रयपक्षे जीवस्य रूपमध्येऽन्तर्भावे निषेध्यकोटिनिवेशः स्याद्रूपिमध्येऽन्त-

---

१. लिङ्गमेवेति चेत्। लिङ्गोपाधिः आत्मा परस्यैकदेशः एवं सति सुषुप्तौ लिङ्गनाशेऽपि एकदेशसत्त्वात् तस्य वासनाश्रयत्वमिति चेत्। तथेति तस्य खण्डनं तथा सति सुषुप्तौ लिंगाभावे लिंगाधीनजीवभावोऽपि नश्यति एवं तर्हि सुषुप्तौ वासनानामाश्रयाभावः। ३०

२ न च वास्येति। लिङ्गनाशेऽविद्या आत्मानमाश्रयतीति न युक्तं, वास्यदेशः लिङ्गं तत्परित्यज्य वासना नान्यत्र गच्छेत्।

३ तत्कारणपराभाव—यदि कार्यनाशे कारणनाशोऽपि स्वीक्रियते तदा ब्रह्माभावानुपपत्तिः ब्रह्मणोऽभावात्। ३५

४. राशित्रयपक्षे मूर्तामूर्तवासनेति रूपत्रयं तत्र वासनाश्रयो जीवः सोऽपि नेति नेतीति निषिध्येत।

ब्रह्मैकदेशस्य विज्ञानात्मनो रूपे इति कल्प्यं परमात्मनो वा विज्ञानात्मद्वारेणेति। तदा च रूपे एवेति द्विवचनमसमञ्जसम्। रूपाणीति वासनाभिः सह बहुवचनं युक्ततरं स्यात्। द्वे च मूर्तामूर्ते वासनाश्च तृतीयमिति।

अथ मूर्तामूर्ते एव परमात्मनो रूपे वासनास्तु विज्ञानात्मन इति चेत्। तदा विज्ञानात्मद्वारेण विक्रियमाणस्य परमात्मन इतीयं वाचोयुक्तिरनर्थिका स्यात्। वासनाया अपि विज्ञानात्मद्वारत्वस्याविशिष्टत्वात्। न च ५ वस्तु वस्त्वन्तरद्वारेण विक्रियत इति मुख्यया वृत्त्या शक्यं कल्पयितुम्। न च विज्ञानात्मा परमात्मनो वस्त्वन्तरम्। तथा कल्पनाया सिद्धान्तहानात्। तस्माद्वेदार्थमूढानां स्वचित्तप्रभवा एवमादिकल्पना अक्षरबाह्याः। न ह्यक्षरबाह्यो वेदार्थो वेदार्थोपकारी वा, निरपेक्षत्वाद्वेदस्य प्रामाण्यं प्रति। तस्माद्राशित्रयकल्पनाऽसमञ्जसा।

योऽयं दक्षिणेऽक्षन्पुरुष इति लिङ्गात्मा प्रस्तुतोऽध्यात्मेऽधिदैवे च य एष एतस्मिन्मण्डले पुरुष इति तस्येति प्रकृतोपादानात्स एवोपादीयते योऽसौ त्यस्यामूर्तस्य रसो न तु विज्ञानमयः। ननु विज्ञानमयस्यैवैतानि रूपाणि कस्मान्न १० भवन्ति विज्ञानमयस्यापि प्रकृतत्वात्तस्येति च प्रकृतोपादानात्। नैवम्, विज्ञानमयस्यारूपित्वेन विजिज्ञापयिषितत्वात्। यदि हि तस्यैव विज्ञानमयस्यैतानि माहारजनादीनि रूपाणि स्युस्तस्यैव नेति नेतीत्यनाख्येयरूपतयाऽऽदेशो न स्यात्।

नन्वन्यस्यैवासावादेशो न तु विज्ञानमयस्येति। न, षष्ठान्त उपसंहारा[1]'द्विज्ञातारमरे केन विजानीयादि'ति विज्ञानमयं प्रस्तुत्य 'स एष नेति नेती'ति 'विज्ञपयिष्यामो'ति च प्रतिज्ञाया अर्थवत्त्वात्। यदि च विज्ञानमयस्यैवासंव्यवहार्यमात्मस्वरूपं ज्ञापयितुमिष्टं स्यात्प्रध्वस्तसर्वोपाधिविशेषं तत इयं प्रतिज्ञाऽर्थवती स्यात्। येनासौ ज्ञापितो १५ जानात्यात्मानमेवाहं ब्रह्मास्मीति शास्त्रनिष्ठां प्राप्नोति न बिभेति कुतश्चन। अथ पुनरन्यो विज्ञानमयोऽन्यो नेति नेतीति व्यपदिश्यते तदाऽन्यदतो ब्रह्मान्योऽहमस्मीति विपर्ययो गृहीतः स्यात्। नाऽऽत्मानमेवावेदहं ब्रह्मास्मीति। तस्मात्तस्य हैतस्येति लिङ्गपुरुषस्यैवैतानि रूपाणि।

भवि श्रुति. शिक्षणीयेत्याह—अन्यथेति। भवत्वेवं श्रुतेः शिक्षेति तत्राऽऽह—तदेति। रूपिमध्ये जीवान्तर्भावकल्पनायामिति यावत्।

२० विषयभेदेनोपक्रमाविरोधं चोदयति—अथेति। इत्थं व्यवस्थायां जीवद्वारा विक्रियमाणस्य परस्य रूपे मूर्तामूर्ते इत्युक्तिरयुक्ता वासनाकर्मादेरपि तद्द्वारा तत्सम्बन्धाविशेषादिति दूषयति—तदेति। विज्ञानात्मद्वारा परस्य विक्रियमाणत्वमङ्गीकृत्योक्तं तदेव नास्तीत्याह—न चेति। तथाभूतस्यान्यथाभूतस्य च विक्रियाया दुरुपपादत्वादित्यर्थः। किञ्च जीवस्य ब्रह्मणो वस्त्वन्तरत्वमात्यन्तिकमनात्यन्तिकं वा नाऽऽद्य इत्याह—न चेति। न द्वितीयो भेदाभेदनिरासादिति द्रष्टव्यम्। परपक्षदूषणमुपसंहरति—तस्मादिति। एवमादिकल्पना राशित्रयं जीवस्य कामाद्याश्रयत्वमित्याद्याः। २५ अक्षरबाह्यत्वे फलितमाह—न हीति। वेदार्थोपकारित्वाभावे हेतुमाह—निरपेक्षत्वादिति। वेदार्थत्वाद्यभावे सिद्धमर्थं कथयति—तस्मादिति।

तस्य हेत्यत्र परकीयप्रक्रियां प्रत्याख्याय स्वमते तच्छब्दार्थमाह—योऽयमिति। प्रकृतत्वाल्लिङ्गात्मग्रहे जीवस्यापि पाणिपेषवाक्ये तद्भावात्तस्यैवात्र तच्छब्देन ग्रह. स्यादिति शङ्कते—नन्विति। प्रकृतत्वेऽपि तस्य निर्विशेषब्रह्मत्वेन ज्ञापयितुमिष्टत्वान्न वासनामयं संसाररूपं तत्त्वतो युक्तमिति परिहरति—नैवमिति। इतश्च जीवस्य न ३० वासनारूपिता किन्तु चित्तस्येत्याह—यदि हीति। निषेध्यकोटिप्रवेशादिति भावः।

नायं जीवस्याऽऽदेशः किन्तु ब्रह्मणस्तटस्थस्येति शङ्कयित्वा दूषयति—नन्वित्यादिना। षष्ठावसाने विज्ञातारमरे केनेत्यात्मानमुपक्रम्य स एष नेति नेत्यात्मशब्दात्तस्यैवाऽऽदेशोपसंहारादिहापि तस्यैवाऽऽदेशो न तटस्थस्येत्यर्थः। इतश्च प्रत्यगर्थस्यैवायमादेश इत्याह—विज्ञपयिष्यामीति। तदेव समर्थयते—यदीति। कथमेतावता प्रतिज्ञार्थवत्त्वं तदाह—येनेति। ज्ञानफलं कथयति—शास्त्रेति। अन्वयमुखेनोक्तमर्थं व्यतिरेकमुखेन साधयति—अथेत्यादिना। विपर्यये ३५ गृहीते ब्रह्मकण्डिकाविरोधं दर्शयति—नाऽऽत्मानमिति। तच्छब्देन जीवपरामर्शसम्भवे फलितमाह—तस्मादिति।

---

१. षष्ठान्ते इति—मैत्रेयी ब्राह्मणान्ते षष्ठे 'विज्ञातारमरे केन विजानीयात् स एष नेति नेत्यात्माऽगृह्यो नहि गृह्यते इति जीवात्मन एव शुद्धत्व प्रतिपाद्यते तत्समानत्वादत्रापि 'अथात आदेश' इति विज्ञानात्मन एव ग्रहणं वक्तव्यम्। अपि च 'ज्ञपयिष्यामो'ति प्रस्तुत्याजातशत्रुः उत्तरत्र 'य एष विज्ञानमयः क्वैष तदाभूत्' इति तमेवोपादाय सुषुप्ते ब्रह्मणि लयं प्रदर्शयति अतः अत्र विज्ञानमय एव प्रकृतः। यद्यपि इदं ब्राह्मणान्तरं तथापि तत्रोपसंहारे ४० उक्तस्यैव 'प्राणा वै सत्यं तेषामेष सत्यमि'त्यस्य विवरणार्थत्वात् मूर्तामूर्तब्राह्मणस्य स एव प्रकृतः अत्रापि।

सत्यस्य च सत्ये परमात्मस्वरूपे वक्तव्ये निरवशेषं सत्यं वक्तव्यम् । सत्यस्य च विशेषरूपाणि वासनास्तासामिमानि रूपाण्युच्यन्ते । एतस्य पुरुषस्य प्रकृतस्य लिङ्गात्मन एतानि रूपाणि । कानि तानीत्युच्यन्ते—यथा लोके महारजनं हरिद्रा तया रक्तं माहारजनं यथा वासो लोके । एवं स्त्र्यादिविषयसंयोगे तादृशं वासनारूपं रञ्जनाकारमुत्पद्यते चित्तस्य । येनासौ पुरुषो रक्त इत्युच्यते वस्त्रादिवत् । यथा च लोके पाण्ड्वाविकम् । अवेरिदमाविकमूर्णादि । यथा च तत्पाण्डुरं भवति तथाऽन्यद्वासनारूपम् । यथा च लोक इन्द्रगोपोऽत्यन्तरक्तो भवत्येवमस्य वासनारूपम् । क्वचिद्विषयविशेषापेक्षया रागस्य तारतम्यं क्वचित्पुरुषचित्तवृत्त्यपेक्षया । यथा च लोकेऽन्यर्चिर्भास्वरं भवति तथा क्वचित्कस्यचिद्वासनारूपं भवति । यथा पुण्डरीकं शुक्लं तद्वदपि च वासनारूपं कस्यचिद्भवति । तथा सकृद्विद्युत्तं यथा लोके सकृद्विद्योतनं सर्वतः प्रकाशकं भवति तथा ज्ञानप्रकाशविवृद्ध्यपेक्षया कस्यचिद्वासनारूपमुपजायते । नैषां वासनारूपाणामादिरन्तो मध्यं सङ्ख्या वा देशः कालो निमित्तं वाऽवधार्यते । असङ्ख्येयत्वाद्वासनाया वासनाहेतूनां चाऽऽनन्त्यात् । तथा च वक्ष्यति—षष्ठ 'इदंमयोऽदोमय' इत्यादि । तस्मान्न स्वरूपसङ्ख्यावधारणार्था दृष्टान्ता यथा माहारजन वास इत्यादयः किं तर्हि प्रकारप्रदर्शनार्थाः । एवम्प्रकाराणि हि वासनारूपाणीति । यत्तु वासनारूपमभिहितमन्ते सकृद्विद्योतनमिवेति तत्किल हिरण्यगर्भस्याव्याकृतात्प्रादुर्भवतस्तडिद्वत्सकृदेव व्यक्तिर्भवतीति तत्तदीयं वासनारूपं हिरण्यगर्भस्य यो वेद तस्य सकृद्विद्युत्तेव । ह वा इत्यवधारणार्थौ । एवमेवास्य श्रीः ख्यातिर्भवतीत्यर्थः । यथा हिरण्यगर्भस्यैवमेतद्यथोक्तं वासनारूपमन्त्यं यो वेद । एवं निरवशेषं सत्यस्य स्वरूपमभिधाय यत्तत्सत्यस्य सत्यमवोचाम तस्यैव स्वरूपावधारणार्थं ब्रह्मण इदमारभ्यते–अथानन्तरं सत्यस्वरूपनिर्देशानन्तरं यत्सत्यस्य सत्यं तदेवावशिष्यते यस्मादतस्तस्मात्सत्यस्य सत्यं स्वरूपं निर्देक्ष्यामः । आदेशो निर्देशो ब्रह्मण[1] । कः पुनरसौ निर्देश इत्युच्यते–नेति नेतीत्येवं निर्देशः ।

ननु कथमाभ्या नेति नेतीति शब्दाभ्यां सत्यस्य सत्य निर्दिदिक्षितमिति । उच्यते–सर्वोपाधिविशेषापोहेन यस्मिन्न कश्चिद्विशेषोऽस्त नाम वा रूपं वा कर्म वा भेदो वा जातिर्वा गुणो वा तद्द्वारेण हि शब्दप्रवृत्तिर्भवति ।

ननु लिङ्गस्य चेदेतानि रूपाणि किमित्युपन्यस्यन्ते परमात्मस्वरूपस्यैव वक्तव्यत्वादत आह—सत्यस्य चेति । इन्द्रगोपोपमानेन कौसुम्भस्य गतत्वान्महारजन हरिद्रेति व्याख्यातम् । तत्र लोकप्रसिद्धि दर्शयति–येनेति । ऊर्णादीत्यादिपद कम्बलादिग्रहार्थम् । मनसि वासनावैचित्र्ये किङ्कारणमिति तदाह—क्वचिदिति । चित्तवृत्तिशब्देन सत्त्वादिगुणपरिणामो विवक्षितः । परिमितदृष्टान्तोक्त्या वासनानामपि परिमितत्व दृष्टान्तदा ्र्न्तिकयो साम्यादित्याशङ्क्याऽऽह–नैषामिति । तत्र वाक्यशेष सवादयति—तथा चेति । वासनानन्त्यात्तदीयपरिमितिप्रदर्शने परिमितदृष्टान्तपरिग्रहस्यातात्पर्ये कुत्र तात्पर्यमित्याशङ्क्याऽऽह—तस्मादिति । प्रकारप्रदर्शनमेवाभिनयति—एवम्प्रकाराणीति । अन्त्यवासनादिविशिष्टसूत्रोपास्ति फलवती तत्प्रकर्षाभिधानपूर्वकमभिदधाति—यत्त्वित्यादिना । व्यक्तिः सर्वस्य वस्तुजातस्येति शेषः । तदीयमित्यस्य व्यक्तीकरणं हिरण्यगर्भस्येति तदेव स्फुटयति—यथेत्यादिना । वृत्तमनूद्यानन्तरग्रन्थमवतारयति—एवमित्यादिना । तस्यैव ब्रह्मण इति सम्बन्धः । कस्मादनन्तरमित्युक्ते तद्दर्शयन्नत.शब्द चापेक्षित पूरयन्व्याकरोति—सत्यस्येति ।

यथोक्तादेशस्याभावपर्यवसायित्वं मन्वानः शङ्कते—नन्विति । निरवधिकनिषेधासिद्धेस्तदवधित्वेन सत्यस्य सत्यं ब्रह्म निर्देष्टुमिष्टमिति परिहरति—उच्यत इति । ब्रह्मणो विधिमुखेन निर्देशे सम्भाव्यमाने किमिति निषेधमुखेन तन्निर्दिश्यते तत्राऽऽह—यस्मिन्निति । तद्विधिमुखेन निर्देष्टुमशक्यमिति शेष. । नामरूपाद्यभावेऽपि ब्रह्मणि शब्दप्रवृत्तिमाशङ्क्याऽऽह—तद्द्वारेणे त । जात्यादीनान्यतमस्य ब्रह्मण्यपि सम्भवात्तद्द्वारा तत्र शब्दप्रवृत्तिः स्यादिति चेन्ने-

१. अथात इत्यत्राथशब्दार्थः सत्यस्वरूपनिरूपणानन्तर-अतः सत्यस्य यत्सत्य तत्स्वरूपनिरूपणस्यावशिष्टत्वात् आदेशः स्वरूपोपदेशः क्रियते । अथात आदेशो नेति नेति इति वाक्य विषयीकृत्य ब्रह्मसूत्रतृतीयाध्याय = द्वितीयपादे विचारः प्रवर्तित तथाहि—'द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तं' इति पञ्च भूतानि द्वैराश्येन प्रविभज्य अमूर्तरसस्य पुरुषस्य माहारजनादिरूपाणि प्रदर्श्य श्रूयते अथात आदेशो नेति नेति न ह्येतस्मादिति नेति अन्यत्परमस्ति इति । अत्र किं प्रतिषेधविषय ब्रह्म, तद्गतरूपाणि वा, उत रूपाण्येव उत ब्रह्म अवशिष्यमाणं च रूपद्वयमिति सन्देहे सर्वप्रतिषेधे शून्यवादप्रसंगात् रूपादिहीनब्रह्मण एव प्रतिषेधो युक्त इति पूर्वपक्षे सिद्धान्तः प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूय ( ब्र० सू० ३-२-२२ ) ।

न चैषां कश्चिद्विशेषो ब्रह्मण्यस्ति। अतो न निर्देष्टु शक्यत इदं तदिति। गौरसौ स्पन्दते शुक्लो विषाणीति यथा लोके निर्दिश्यते तथा। अध्यारोपितनामरूपकर्मद्वारेण ब्रह्म निर्दिश्यते 'विज्ञानमानन्दं ब्रह्म' 'विज्ञानघन एव' 'ब्रह्माऽऽत्मे'त्येवमादिशब्दैः। यदा पुनः स्वरूपमेव निर्दिदिक्षितं भवति निरस्तसर्वोपाधिविशेष तदा न शक्यते केनचिदपि प्रकारेण निर्देष्टुम्। तदाऽयमेवाभ्युपायो यदुत प्राप्तनिर्देशप्रतिषेधद्वारेण नेति नेतीति निर्देश.।

५ इदञ्च नकारद्वयं वीप्साव्याप्त्यर्थम्[1]। यद्यत्प्राप्तं तत्तन्निषिध्यते[2]। तथा च सत्यनिर्दिष्टाशङ्का ब्रह्मणः परिहृता भवति। अन्यथा हि नकारद्वयेन प्रकृतद्वयप्रतिषेधे यदन्यत्प्रकृतात्प्रतिषिद्धद्वयाद्‌ब्रह्म तत्र निर्दिष्टं कीदृशं तु खल्वित्याशङ्का न निवर्तिष्यते। तथा चानर्थकश्च स निर्देशः पुरुषस्य विविदिषाया अनिवर्तकत्वात्। ब्रह्म ज्ञपयिष्यामीति च वाक्यमपरिसमाप्तार्थं स्यात्। यदा तु सर्वदिक्कालादिविविदिषा निवर्तिता स्यात्सर्वोपाधिनिराकरणद्वारेण तदा सैन्धवघनवदेकरसं प्रज्ञानघनमनन्तरमबाह्यं सत्यस्य सत्यमहं ब्रह्मास्मीति सर्वतो निवर्तते विविदिषाऽऽत्म-
१० न्येवावस्थिता प्रज्ञा भवति। तस्माद्वीप्सार्थं नेति नेतीति नकारद्वयम्।

ननु महता यत्नेन परिकरबन्ध कृत्वा किं युक्तमेवं निर्देष्टुं ब्रह्म। बाढम्। कस्मात्। न हि। यस्मादिति नेति नेत्येतस्मात् इतीति व्याप्तव्यप्रकारा नकारद्वयविषया निर्दिश्यन्ते। यथा ग्रामो ग्रामो-रमणीय इत्यन्यत्परं निर्देशनं

त्याह—न चेति। उक्तमर्थं वैधर्म्यदृष्टान्तेन स्पष्टयति—गौरिति। तथा जात्याद्यभावान्न ब्रह्मणि शब्दप्रवृत्तिरिति शेष·। कथं तर्हि क्वचिद्विधिमुखेन ब्रह्मोपदिश्यते तत्राऽऽह—अध्यारोपितेति। विज्ञानानन्दादिवाक्येषु शबले गृहीत-
१५ शक्तिभिः शब्दैर्लक्ष्यते ब्रह्मेत्यर्थः। ननु लक्षणामुपेक्ष्य साक्षादेव ब्रह्म किमिति न विवक्ष्यते तत्राऽऽह—यदा पुनरिति। निर्देष्टुं लक्षणामुपेक्ष्य साक्षादेव वक्तुमिति यावत्। तत्र शब्दप्रवृत्तिनिमित्ताना जात्यादीनामभावस्योक्तत्वादित्यर्थ·। विधिमुखेन निर्देशासम्भवे फलितमाह—तदेति। प्राप्तो निर्देशो यस्य विशेषस्य तत्प्रतिषेधमुखेनेति यावत्।

एव ब्रह्म निर्दिदिक्षितं चेदेकेनैव नञाऽल कृत द्वितीयेनेत्याशङ्क्याऽऽह—इदञ्चेति। वीप्सया व्याप्ति. सर्वविषयसङ्ग्रहस्तदर्थं नकारद्वयमित्युक्तमेव व्यनक्ति—यद्यदिति। विषयत्वेन प्राप्तं सर्वं न ब्रह्मेत्युक्ते सत्यविषय· प्रत्य-
२० गात्मा ब्रह्मेत्येकत्वे शास्त्रपर्यवसानान्नैराकाङ्क्षच श्रोतु सिध्यतीत्याह—तथा चेति। इतिशब्दस्य प्रकृतपरामर्शित्वात्प्रकृतमूर्तामूर्तादिरन्यत्वे ब्रह्मणो नकारपर्यवसानं किमिति नेष्यते तत्राऽऽह—अन्यथेति। आशङ्कानिवृत्त्यभावे दोषमाह—तथा चेति। अनर्थकश्चेति चकारेण समुच्चित दोषान्तरमाह—ब्रह्मेति। उक्तमर्थमन्वयमुखेन समर्थयते—यदा त्विति। सर्वोपाधिनिरासेन तत्र तत्र विषयवेदनेच्छा यदा निवर्तिता तदा यथोक्तं प्रत्यग्ब्रह्माहमिति निश्चित्याऽऽकाङ्क्षा सर्वतो व्यावर्तते। तेन निर्देशस्य सार्थकत्व यदा चोक्तरीत्या ब्रह्माऽऽत्मेत्येव प्रज्ञाऽवस्थिता भवति तदा
२५ प्रतिज्ञावाक्यमपि परिसमाप्तार्थं स्यादिति योजना। वीप्सापक्षमुपसंहरति—तस्मादिति।

आदेशस्य प्रक्रमाननुगुणत्वमाशङ्क्यानन्तरवाक्येन परिहरति—नन्वित्यादिना। न हीति प्रतीकोपादानम्। यस्मादित्यस्य हिशब्दार्थस्य तस्मादित्यनेन संबन्ध·। व्याप्तव्याः सग्राह्या विषयीकर्तव्या ये प्रकारास्ते नकारद्वयस्य विषया· सन्तो निर्दिश्यन्त इति नेति नेत्यतस्मादित्यनेन भागेनेति योजना। इतिशब्दाभ्या व्याप्तव्यसर्वप्रकारसग्रहे—

---

१. वीप्साशब्दस्य व्याप्तिबोधनेच्छेत्यर्थ· तत्र द्विरुक्ति· नित्यवीप्सयोरिति पाणिनिसूत्रात्। वीप्सायां द्विरुक्ते· यो
३० यो धूमवान् इत्यादौ धूमे वह्निव्याप्ति· बोध्यते तथा प्रकृतेऽपि। इतिशब्दः इदमर्थ। इदं न इदं नेति वीप्सया यत्र यत्र इदमिति शब्द. प्रयुज्यते तत्तत् ब्रह्म नेत्यर्थः तेन अहमेव ब्रह्मेत्यर्थं फलति। न ह्येतस्मादिति नेति इति वाक्येन 'एतस्मादन्यन्न भवती'त्यनेन आत्मा ब्रह्मेत्यवध्रियते। न ह्येतस्मात् इति न इति न इति निर्देशादन्यन्निर्देशन ब्रह्मणोऽस्ति इत्यर्थः प्रकृतभाष्ये। पूर्वोक्तार्थ. शारीरकभाष्ये।

२. न तावद्‌ब्रह्म प्रतिषेधो युक्त· 'ब्रह्म ते ब्रवाणि' इति प्रारम्भगतप्रतिज्ञाविरोधत्। सर्वासामुपनिषदा ब्रह्मप्रति-
३५ पादकाना विरोधात्। अत. ब्रह्मणो रूपं प्रतिषेधति परिशिनष्टि ब्रह्मेति युक्तम्। अत्रैव पूर्वं मूर्तामूर्ते तद्वासना चेति रूपद्वयं प्रकृतं तदेव च इतिशब्देन उपादाय प्रतिषेधति परिशिनष्टि च ब्रह्मेति युक्तम्। कार्यप्रपञ्चस्य वाचारम्भणमात्रत्वात् तस्य रूपद्वयस्य प्रतिषेधः ब्रह्मण. शुद्धस्य प्रतिपादनं च युक्तम्। तेन इदमिति गृह्यमाणं सर्वं निषिध्यते। अत एव च उत्तरवाक्यं अन्यत्परं अनिषिद्ध ब्रह्मास्ति इति ब्रवीति इति। अपि च ब्रह्म अव्यक्तमत. तदस्तित्वं स्थूलदशा न प्रत्यक्षं अपि तु सराधने भक्तिध्यानप्रणिधानेषु योगिनः ब्रह्म पश्यन्तीत्युक्तम्।

अथ द्वितीयाध्यायस्य चतुर्थं ब्राह्मणम्

**मैत्रेयीति होवाच याज्ञवल्क्य उद्यास्यन्वा अरेऽहमस्मात्स्था-
नादस्मि हन्त तेऽनया कात्यायन्यान्तं करवाणीति ॥१॥**

नास्ति। तस्मादयमेव निर्देशो ब्रह्मणः। यदुक्तं तस्योपनिषत्सत्यस्य सत्यमित्येवंप्रकारेण सत्यस्य सत्यं तत्परं ब्रह्म।
अतो युक्तमुक्तं नामधेयं ब्राह्मणो नामैव नामधेयम्। किं तत्सत्यस्य सत्यं प्राणा वै सत्यं तेषामेष सत्यमिति ॥ ६ ॥ ५

इति बृहदारण्यकोपनिषद्भाष्ये द्वितीयाध्यायस्य तृतीयं ब्राह्मणम् ॥ ३ ॥

आत्मेत्येवोपासीत। तदेवैतस्मिन्पदनीयमात्मतत्त्वं यस्मात्प्रेयः पुत्रादेरित्युपन्यस्तस्य वाक्यस्य व्याख्यान-
विषये संबन्धप्रयोजने अभिहिते तदात्मानमेवावेदहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवदिति। एवं प्रत्यगात्मा ब्रह्म-
विद्याया विषय इत्येतदुपन्यस्तम्। अविद्यायाश्च विषयोऽन्योऽसावन्योऽहमस्मीति न स वेदेत्यारभ्य चातुर्वर्ण्यप्रवि-
भागादिनिमित्तपाङ्क्तकर्मसाध्यसाधनलक्षणो बीजाङ्कुरवदव्याकृताव्याकृतस्वभावो नामरूपकर्मात्मकः संसारस्त्रयं १०
वा इदं नाम रूपं कर्मेत्युपसंहृतः शास्त्रीय उत्कर्षलक्षणो ब्रह्मलोकान्तोऽधोभावश्च स्थावरान्तोऽशास्त्रीयः पूर्वमेव
प्रदर्शितो द्वयाहेत्यादिना। एतस्मादविद्याविषयाद्विरक्तस्य प्रत्यगात्मविषयब्रह्मविद्यायामधिकारः कथं नाम
स्यादिति तृतीयेऽध्याय उपसंहृतः समस्तोऽविद्याविषयः। चतुर्थे तु ब्रह्मविद्याविषयं प्रत्यगात्मानं ब्रह्म ते ब्रवाणीति
ब्रह्म ज्ञपयिष्यामीति च प्रस्तुत्य तद्ब्रह्मैकमद्वयं सर्वविशेषशून्यं क्रियाकारकफलस्वभावसत्यशब्दवाच्यराशेषभूतधर्म-
प्रतिषेधद्वारेण नेति नेतीति ज्ञापितम्। १५

अस्या ब्रह्मविद्याया अङ्गत्वेन संन्यासो विधित्सितः। जायापुत्रवित्तादिलक्षणं पाङ्क्तं कर्माविद्याविषयं
यस्मान्नाऽऽत्मप्राप्तिसाधनम्। अन्यसाधनं ह्यन्यस्मै फलसाधनाय प्रयुज्यमानं प्रतिकूलं भवति। न हि बुभुक्षापिपासा-
निवृत्त्यर्थं धावनं गमनं वा साधनम्। मनुष्यलोकपितृलोकदेवलोकसाधनत्वेन हि पुत्रादिसाधनानि श्रुतानि

दृष्टान्तमाह—यथेति। ग्रामो ग्रामो रमणीय इत्युक्ते राज्यनिविष्टरमणीयसर्वग्रामसंग्रहवत्प्रकृतेऽपीतिशब्दाभ्यां विषय-
भूतसर्वप्रकारसंग्रहे नकाराभ्यां तन्निषेधसिद्धिरित्यर्थः। यथोक्तान्निषेधरूपान्निर्देशादन्यन्निर्देशनं यस्माद्ब्रह्मणो न २०
परमस्ति तस्मादित्युपसंहारं अथेत्यादिवाक्यं प्रकृतोपसंहारत्वेन व्याचष्टे—यदुक्तमित्यादिना।

इति बृहदारण्यकोपनिषद्भाष्यटीकायां द्वितीयाध्यायस्य तृतीयं ब्राह्मणम् ॥३॥

संबन्धाभिधित्सया वृत्तं कीर्तयति—आत्मेत्येवेति। किमित्यात्मतत्त्वमेव ज्ञातव्यं तत्राऽऽह—तदेवेति। इत्थं
सूत्रितस्य विद्याविषयस्य वाक्यस्य व्याख्यानमेव विषयस्तत्र विद्या साधनं साध्या मुक्तिरिति संबन्धो मुक्तिश्च फल-
मित्येते तदात्मानमित्यादिना दर्शिते इत्याह—इत्युपन्यस्तस्येति। विद्याविषयमुक्तं निगमयति—एवमिति। उक्त- २५
मर्थान्तरं स्मारयति—अविद्यायाश्चेति। अन्योऽसावित्याद्यारभ्याविद्याया विषयश्च संसार उपसंहृतस्त्रयमित्यादिनेति
संबन्धः संसारमेव विशिनष्टि—चातुर्वर्ण्येति। चातुर्वर्ण्यं चातुराश्रम्यमिति प्रविभागादिनिमित्तं यस्य पाङ्क्तस्य कर्मण-
स्तस्य साध्यसाधनमित्येवमात्मक इति यावत्। तस्यानादित्वं दर्शयति—बीजाङ्कुरवदिति। तमेव त्रिधा संक्षिपति—
नामेति। स चोत्कर्षापकर्षाभ्यां द्विधा भिद्यते तत्राऽऽद्यमुदाहरति—शास्त्रीय इति। उत्कृष्टो हि संसारस्त्वब्रह्मात्मभावः
शास्त्रीयज्ञानकर्मलभ्य इत्यर्थः। द्वितीयं कथयति—अधोभावश्चेति। निकृष्टः संसारः स्वाभाविकज्ञानकर्मसाध्य ३०
इत्यर्थः। किमित्यविद्याविषयो व्याख्यातो न हि स पुरुषस्योपयुज्यते तत्राऽऽह—एतस्मादिति। प्रत्यगात्मैव विषयस्त-
स्मिन्या ब्रह्मेति विद्या तस्यामिति यावत्। तार्तीयमनूद्य चातुर्थिकमर्थं कथयति—चतुर्थे त्विति।

एवं वृत्तमनूद्योत्तरब्राह्मणतात्पर्यमाह—अस्या इति। किमिति संन्यासो विधित्स्यते कर्मणैव विद्यालाभा-
दित्याशङ्क्याऽऽह—जायेति। अविद्याया विषय एव विषयो यस्येति विग्रहः। तस्मात्संन्यासो विधित्सित इति पूर्वेण
संबन्धः। ननु प्रकृतं कर्माविद्याविषयमपि किमित्यात्मज्ञानं तादर्थ्येनानुष्ठीयमानं नोपनयति तत्राऽऽह—अन्येति। तदेव ३५
दृष्टान्तेन स्पष्टयति—न हीति। पाङ्क्तस्य कर्मणोऽन्यसाधनत्वमेव कथमविगतमित्याशङ्क्याऽऽह—मनुष्येति। सोऽयं
मनुष्यलोकः पुत्रेणैव जय्यः कर्मणा पितृलोको विद्यया देवलोक इति विशेषितत्वम्। श्रुतत्वमेव विशेषितत्वोक्तिद्वारा
स्फुटीकृतमिति चकारेण द्योत्यते। ननु ब्रह्मविद्या स्वफले विहितं कर्मापेक्षते श्रौतसाधनत्वाद्दर्शादिवत्तथा च समुच्च-

नाऽऽत्मप्राप्तिसाधनत्वेन। विशेषितत्वाच्च। न च ब्रह्मविदो विहितानि काम्यत्वश्रवणा'देतावान्वै काम' इति। ब्रह्मविदश्चाऽऽप्तकामत्वादाप्तकामस्य कामानुपपत्तेः। येषा नोऽयमात्माऽयं लोक इति च श्रुतेः।

केचित्तु ब्रह्मविदोऽप्येषणासंबन्धं वर्णयन्ति तैर्बृहदारण्यकं न श्रुतम्। पुत्राद्येषणानामविद्वद्विषयत्वम्। विद्याविषये च 'येषां नोऽयमात्माऽयं लोक' इत्यतः 'किं प्रजया करिष्याम' इत्येष विभागस्तैर्न श्रुतः श्रुत्या कृतः।
५ सर्वक्रियाकारकफलोपमर्दस्वरूपाया च विद्यायां सत्या सह कार्येणाविद्याया अनुपपत्तिलक्षणश्च विरोधस्तैर्न विज्ञातो व्यासवाक्यं च तैर्न श्रुतम्। कर्मविद्यास्वरूपयोर्विद्याविद्यात्मकयोः प्रतिकूलवर्तनं विरोधः।

"यदिदं वेदवचनं कुरु कर्म त्यजेति च। कां गतिं विद्यया यान्ति कां च गच्छन्ति कर्मणा॥
एतद्वै श्रोतुमिच्छामि तद्भवान्प्रब्रवीतु मे। एतावन्योन्यवैरूप्ये वर्तेते प्रतिकूलतः॥"

इत्येवं पृष्टस्य प्रतिवचनेन—

१० "कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते। तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः॥"

इत्येवमादिविरोधः प्रदर्शितः।

तस्मान्न साधनान्तरसहिता ब्रह्मविद्या पुरुषार्थसाधनं सर्वविरोधात्साधननिरपेक्षैव पुरुषार्थसाधनमिति पारिव्राज्यं सर्वसाधनसंन्यासलक्षणमङ्गत्वेन विधित्स्यते। एतावदेवामृतत्वसाधनमित्यवधारणात्षष्ठसमाप्तौ लिङ्गाच्च कर्मी सन्याज्ञवल्क्यः प्रवव्राजेति। मैत्रेय्यै च कर्मसाधनरहितायै साधनत्वेना मृतत्वस्य ब्रह्मविद्योपदेशाद्वित्तनिन्दा-
१५ वचनाच्च। यदि ह्यमृतत्वसाधनं कर्म स्याद्वित्तसाध्यं पाङ्क्तं कर्मेति तन्निन्दावचनमनिष्टं स्यात्। यदि तु

यान्न कर्मसन्याससिद्धिरत आह—न चेति। कर्मणा काम्यत्वेऽपि ब्रह्मविदस्तानि किं न स्युरित्याशङ्क्याऽऽह—ब्रह्मविदश्चेति। इतश्च तस्य पुत्रादिसाधनानुपपत्तिरित्याह—येषामिति।

समुच्चयपक्षमनुभाष्य श्रुतिविरोधेन दूषयति—केचित्त्विति। श्रुतिविरोधमेव स्फोरयति—पुत्रादीति। अविद्वद्विषयत्वं श्रुत तत्प्रकरणे तेषामुपदेशादिति शेष[1]। किं प्रजया करिष्याम इत्यत आरभ्य येषा नोऽयमात्माऽयं लोक
२० इति च विद्याविषये श्रुतिरिति योजना। एष विभाग श्रुत्या कृतस्तै समुच्चयवादिभिर्नश्रुत इति सबन्धः। न केवल श्रुतिविरोधादेव समुच्चयासिद्धिः किंतु युक्तिविरोधाच्चेत्याह—सर्वेति। द्वितीयश्चकारोऽवधारणार्थो नञा संबध्यते। स्मृतिविरोधाच्च समुच्चयासिद्धिरित्याह—व्यासेति। तत्र प्रथम पूर्वोक्तं युक्तिविरोध स्फुटयति—कर्मेति। प्रतिकूलवर्तन निवर्त्यनिवर्तकभावः। संप्रति स्मृतिविरोध स्फोरयति—यदिदमिति। प्रसिद्ध वेदवचन कुरु कर्मेत्यज्ञं प्रति यदिदमुपलभ्यते विवेकिनं प्रति च त्यजेति तत्र का गतिमित्यादिः शिष्यस्य व्यास प्रति प्रश्नस्तस्य बीजमाह—
२५ एताविति। विद्याकर्माख्यावुपायौ परस्परविरुद्धत्वे वर्तेते साभिमानत्वनिरभिमानत्वादिपुरस्कारेण प्रातिकूल्यात्समुच्चयानुपपत्तेर्यथोक्तस्य प्रश्नस्य सावकाशत्वमित्यर्थं। इत्येव पृष्टस्य भगवतो व्यासस्येति शेषः। विरोधो ज्ञानकर्मणो समुच्चस्येति वक्तव्यम्।

समुच्चयानुपपत्तिमुपसहरति—तस्मादिति। कथं तर्हि ब्रह्मविद्या पुरुषार्थसाधनमिति तत्राऽऽह—सर्वविरोधादिति। सर्वस्य क्रियाकारकफलभेदात्मकस्य द्वैतेन्द्रजालस्य ब्रह्मविद्यया विरोधादिति यावत्। एकाकिनी
३० ब्रह्मविद्या मुक्तिहेतुरिति स्थिते फलितमाह—इति पारिव्राज्यमिति। न केवलं संन्यासस्य श्रवणादिपौष्कल्यदृष्टद्वारेण विद्यापरिपाकाङ्गत्वं श्रुत्यादिवशादवगम्यते किंतु लिङ्गादपीत्याह—एतावदेवेति। तत्रैव लिङ्गान्तरमाह—षष्ठसमाप्ताविति। एतच्चोभयतः सबध्यते। यदि कर्मसहित ज्ञान मुक्तिहेतुस्तदा किमिति कर्मिण सतो याज्ञवल्क्यस्य पारिव्राज्यमुच्यते तस्मात्त्यागस्तदङ्गत्वेन विधित्सित इत्यर्थं।

तत्रैव लिङ्गान्तरमाह—मैत्रेय्यै चेति। न हि मैत्रेयी भर्तरि त्यक्तकर्मणि स्वयं कर्माधिकर्तुमर्हति पतिद्वार-
३५ मन्तरेण भार्यायास्तदनधिकारात्। यथा च तस्यै कर्मशून्यायै मुक्तेः साधनत्वेन विद्योपदेशात्कर्मत्यागस्तदङ्गत्वेन

१. प्रश्नः श्रीशुकस्य प्रतिवचन श्रीव्यासस्य ( शा २४१-२-७ )।
२. कर्मसाधनरहितायै-कर्मसाधनं मन्त्रा अग्निश्च तदुभय भर्त्रा विना तस्याः नास्ति भर्ता च सन्यस्त।
३. वित्तनिन्दा किं वित्तेनामृता स्यामिति प्रश्नस्य नेति प्रतिवचनात्।

**सा होवाच मैत्रेयी । यन्नु म इयं भगोः सर्वा पृथिवी वित्तेन पूर्णा स्यात्कथं तेनामृता स्यामिति नेति होवाच याज्ञवल्क्यो यथैवोपकरणवतां जीवितं तथैव ते जीवित ँस्यादमृतत्वस्य तु नाशास्ति वित्तेनेति ॥२॥**

परितित्याजयिषतं कर्म ततो युक्ता तत्साधननिन्दा । कर्माधिकारनिमित्तवर्णाश्रमादिप्रत्ययोपमर्दाच्च 'ब्रह्म तं परादात्क्षत्रं तं परादादि'त्यादेः[1] । न हि ब्रह्मक्षत्राद्यात्मप्रत्ययोपमर्दे ब्राह्मणेनेदं कर्तव्यं क्षत्त्रियेणेदं कर्तव्यमिति ५ विषयाभावादात्मानं लभते विधिः । यस्यैव पुरुषस्योपमर्दित. प्रत्ययो ब्रह्मक्षत्राद्यात्मविषयस्तस्य तत्प्रत्ययसंन्यासात्तत्कार्याणां कर्मणां कर्मसाधनानां चार्थप्राप्तश्च संन्यासः । तस्मादात्मज्ञानाङ्गत्वेन संन्यासविधित्सयैवाऽऽख्यायिकेयमारभ्यते ।

मैत्रेयीति होवाच याज्ञवल्क्यो मैत्रेयीं स्वभार्यामामन्त्रितवान्याज्ञवल्क्यो नाम ऋषिः । उद्यास्यन्नूर्ध्वं यास्यन्पारिव्राज्याख्यमाश्रमान्तरं वा अर इति संबोधनमहमस्माद्गार्हस्थ्यात्स्थानादाश्रमादूर्ध्वं गन्तुमिच्छन्नस्मि १० भवामि ।-अतो हन्तानुमतिं प्रार्थयामि ते तव । किंचान्यत्ते तवानया द्वितीयया भार्यया कात्यायन्याऽन्तं विच्छेदं करवाणि । पतिद्वारेण युवयोर्मया संबध्यमानयोर्यः संबन्ध आसीत्तस्य संबन्धस्य विच्छेदं करवाणि द्रव्यविभागं कृत्वा वित्तेन संविभज्य युवां गमिष्यामि ॥ १ ॥

सैवमुक्ता होवाच यद्यदि न्विति वितर्के मे ममेयं पृथिवी भगोः भगवन्सर्वा सागरपरिक्षिप्ता वित्तेन धनेन पूर्णा स्यात्कथं न कथंचनेत्याक्षेपार्थः प्रश्नार्थो वा तेन पृथिवी पूर्णवित्तसाध्येन कर्मणाऽग्निहोत्रादिनाऽमृता किं १५ स्यामिति व्यवहितेन संबन्ध. । प्रत्युवाच याज्ञवल्क्यः कथमिति यद्याक्षेपार्थमनुमोदनं नेति होवाच याज्ञवल्क्य इति । प्रश्नश्चेत्प्रतिवचनार्थं नैव स्या अमृता किं तर्हि यथैव लोक उपकरणवतां साधनवतां जीवितं सुखोपायभोगसंपन्नं तथैव तद्वदेव तव जीवितं स्यादमृतत्वस्य तु नाऽऽशा मनसाऽप्यस्ति वित्तेन वित्तसाध्येन कर्मणेति ॥ २ ॥

ध्यनित इत्यर्थः । तत्रैव हेत्वन्तरमाह—वित्तेति । किमहं तेन कुर्यामिति वित्तं निन्द्यते । अतश्च तत्साध्यं कर्म ज्ञानसहायत्वेन मुक्तौ नोपकरोतीत्यर्थः । तदेव विवृणोति—यदि होति । तन्निन्दावचनमित्यत्र तच्छब्देन वित्तमुच्यते । २० स्वत्पक्षे वा कथं निन्दावचनमिति तत्राऽऽह—यदि त्विति । किंच ब्राह्मणोऽहं क्षत्त्रियोऽहमित्याद्यभिमानस्य कर्मानुष्ठाननिमित्तस्य निन्दया सर्वमिदमात्मैवेति प्रत्यये श्रुतेस्तात्पर्यदर्शनाद्विद्याङ्गत्वेन संन्यासो विवक्षित इत्याह—कर्माधिकारेति । ननु जाग्रति विधौ कर्मानुष्ठानमशक्यमपहारयितुमत आह—न हीति । ननु वर्णाश्रमाभिमानवतः संन्यासोऽपीष्यते स कथं तदभावे तत्राऽऽह—यस्यैवेति । अर्थप्राप्तश्चेत्यवधारणार्थश्चकारः । प्रयोजकज्ञानवतो वैवसंन्यासाभ्युपगमादविरोध इति भावः । आत्मज्ञानाङ्गत्वं संन्यासस्य श्रुतिस्मृतिन्यायसिद्धं चेत्किमर्थमियमाख्यायिका प्रणीयते २५ तत्राऽऽह—तस्मादिति । विध्यपेक्षितार्थवादसिद्ध्यर्थमाख्यायिकेति भावः ।

भार्यामामन्त्र्य किं कृतवानिति तदाह—उद्यास्यन्निति । वैशब्दोऽवधारणार्थः । आश्रमान्तरं यास्यन्नेवाहमस्मीति सम्बन्ध. । यथोक्तेच्छानन्तरं भार्यायाः कर्तव्यं दर्शयति—अत इति । सति भार्यादौ संन्यासस्य तदनुज्ञापूर्वकत्वनियमादिति भावः । कर्तव्यान्तरं कथयति—किंचेति । आवयोर्विच्छेदः स्वाभाविकोऽस्ति किं तत्र कर्तव्यमित्याशङ्क्याऽऽह—पतिद्वारेणेति । त्वयि प्रव्रजिते स्वयमेवाऽऽवयोर्विच्छेदो भविष्यतीत्याशङ्क्याऽऽह—द्रव्येति । वित्ते तु न ३० स्त्रीस्वातन्त्र्यमिति भावः ॥१॥

मैत्रेयी मोक्षमेवापेक्षमाणा भर्तारं प्रत्यानुकूल्यमात्मनो दर्शयति—सैवमिति । कर्मसाध्यस्य गृहप्रासादादिवन्नित्यत्वानुपपत्तिराक्षेपनिदानम् । कथंशब्दस्य प्रश्नार्थत्वपक्षे वाक्यं योजयति—तेनेति । कथं तेनेत्यत्र कथंशब्देन किमहं तेनेत्यत्रत्य किंशब्दमुपादाय वाक्यं योजनीयम् । वित्तसाध्यस्य कर्मणोऽमृतत्वसाधनत्वमात्रासिद्धौ तत्प्रकारप्रश्नस्य निरवकाशत्वादित्यर्थः । मुनिरपि भार्याहृदयाभिज्ञः सन्तुष्टः सन्नाक्षेपं प्रश्नं च प्रतिवदतीत्याह—प्रत्युवाचेति । वित्तेन ३५ ममामृतत्वाभावे तदकिंचित्करमवसेयमित्याशङ्क्याऽऽह—किं तर्हीति ॥२॥

---

1. ब्रह्म तं परादात् ब्राह्मण जाति. तं मोक्षाद्भ्रंशयेत् यः आत्मभिन्नत्वेन जातिं पश्येत् । विधेः आत्मलाभः विधित्वरूपप्रेरकत्वलाभः तदनधिकारात् कर्मणि दम्पत्योस्सहाधिकार इति लिङ्गविशेषनिर्देशात्पुंयुक्तमैतिशायनिः इति पष्ठप्रथमे निर्णयात् ।

सा होवाच मैत्रेयी येनाहं नामृता स्यां किमहं तेन कुर्यां यदेव भगवान्वेद तदेव मे ब्रूहीति ॥३॥

स होवाच याज्ञवल्क्यः प्रिया बतारे नः सती प्रियं भाषस
एह्यास्स्व व्याख्यास्यामि ते व्याचक्षाणस्य तु मे निदिध्यासस्वेति ॥४॥

स होवाच न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो
५ भवति न वा अरे जायायै कामाय जाया प्रिया भवत्यात्मनस्तु कामाय जाया प्रिया
भवति। न वा अरे पुत्राणां कामाय पुत्राः प्रिया भवन्त्यात्मनस्तु कामाय पुत्राः
प्रिया भवन्ति। न वा अरे वित्तस्य कामाय वित्तं प्रियं भवत्यात्मनस्तु कामाय वित्तं
प्रियं भवति। न वा अरे ब्रह्मणः कामाय ब्रह्म प्रियं भवत्यात्मनस्तु कामाय ब्रह्म
प्रियं भवति। न वा अरे क्षत्रस्य कामाय क्षत्रं प्रियं भवत्यात्मनस्तु कामाय क्षत्रं प्रियं
१० भवति। न वा अरे लोकानां कामाय लोकाः प्रिया भवन्त्यात्मनस्तु कामाय लोकाः
प्रिया भवन्ति। न वा अरे देवानां कामाय देवाः प्रिया भवन्त्यात्मनस्तु कामाय

सा होवाच मैत्रेयी। एवमुक्ता प्रत्युवाच मैत्रेयी यद्येव येनाहं नामृता स्यां किमहं तेन वित्तेन कुर्यां यदेव भगवान्केवलममृतत्वसाधनं वेद तदेवामृतत्वसाधनं मे मह्यं ब्रूहि ॥ ३ ॥

स होवाच याज्ञवल्क्यः। एवं वित्तसाध्येऽमृतत्वसाधने प्रत्याख्याते याज्ञवल्क्यः स्वाभिप्रायसंपत्तौ तुष्ट
१५ आह। स होवाच प्रियेष्टा बतेत्यनुकम्प्याऽऽह। अरे मैत्रेयि नोऽस्माकं पूर्वमपि प्रिया सती भवन्तीदानीं प्रियमेव चित्तानुकूलं भाषसे। अत एह्यास्स्वोपविश व्याख्यास्यामि यत्ते तवेष्टममृतत्वसाधनमात्मज्ञानं कथयिष्यामि। व्याचक्षाणस्य तु मे मम व्याख्यानं कुर्वतो निदिध्यासस्व वाक्यान्यर्थतो निश्चयेन ध्यातुमिच्छेति ॥ ४ ॥

स होवाच याज्ञवल्क्योऽमृतत्वसाधनं वैराग्यमुपदिदिक्षुर्जायापतिपुत्रादिभ्यो विरागमुत्पादयति तत्संन्यासाय। न वै। वैशब्दः प्रसिद्धस्मरणार्थः प्रसिद्धमेवैतल्लोके। पत्युर्भर्तुः कामाय प्रयोजनाय जायायाः पतिः प्रियो न भवति किं
२० तर्ह्यात्मनस्तु कामाय प्रयोजनायैव भार्यायाः पतिः प्रियो भवति। तथा न वा अरे जायाया इत्यादि समानमन्यत्। न वा अरे पुत्राणाम्। न वा अरे वित्तस्य। न वा अरे ब्रह्मणः। न वा अरे क्षत्त्रस्य। न वा अरे लोकानाम्। न वा अरे देवानाम्। न वा अरे भूतानाम्। न वा अरे सर्वस्य। पूर्वं पूर्वं यथासन्ने प्रीतिसाधने वचनम्। तत्र तत्रेष्टतरत्वाद्वैराग्यस्य सर्वग्रहणमुक्तानुक्तार्थम्। तस्माल्लोकप्रसिद्धमेतदात्मैव प्रियो नान्यत्। तदेतत्प्रेयः पुत्रादित्युप-

वित्तस्यामृतत्वसाधनत्वाभावमधिगम्य तस्मिन्नास्था त्यक्त्वा मुक्तिसाधनमेवाऽऽत्मज्ञानमात्मार्थं दातुं पतिं
२५ नियुञ्जाना ब्रूते—सा हेति ॥३॥

भार्यापेक्षितं मोक्षोपायं विवक्षुस्तामादौ स्तौति—स हेत्यादिना। वित्तेन साध्यं कर्म तस्मिन्नमृतत्वसाधने शङ्किते किमहं तेन कुर्यामिति भार्ययाऽपि प्रत्याख्याते सतीति यावत्। स्वाभिप्रायो न कर्म मुक्तिहेतुरिति तस्य भार्याद्वाराऽपि सम्पत्तौ सत्यामित्यर्थः ॥४॥

अमृतत्वसाधनमात्मज्ञानं विवक्षितं चेदात्मा वा अरे द्रष्टव्य इत्यादि वक्तव्यं किमिति न वा अरे पत्युरित्यादि
३० वाक्यमित्याशङ्क्याऽऽह—जायेति। उवाच जायादीनामात्मार्थत्वेन प्रियत्वमात्मनश्चानौपाधिकप्रियत्वेन परमानन्दत्वमिति शेषः प्रतीकमादाय व्याचष्टे—न वा इति। किं तन्निपातेन स्मार्यते तदाह—प्रसिद्धमिति। यथोक्ते क्रमे नियामकमाह—पूर्वं पूर्वमिति। यद्यदासन्नं प्रीतिसाधनं तत्तदनतिक्रम्य तस्मिन्विषये पूर्वं पूर्वं वचनमिति योजना। तत्र हेतुमाह—तत्रेति। न वा अरे सर्वस्येत्ययुक्तं पत्यादीनामुक्तत्वादशेन पुनरुक्तिप्रसङ्गादित्याशङ्क्याऽऽह—सर्वग्रहणमिति। उक्तवदनुक्तानामपि ग्रहणं कर्तव्यं न च सर्वे विशेषतो ग्रहीतुं शक्यन्ते तेन सामान्यार्थं सर्वपदमित्यर्थः।
३५ सर्वपर्यायेषु सिद्धमर्थमुपसंहरति—तस्मादिति। ननु तृतीये प्रियत्वमात्मन आख्यातं तदेवात्रापि कथ्यते चेत्पुनरुक्तिः

देवाः प्रिया भवन्ति । न वा अरे भूतानां कामाय भूतानि प्रियाणि भवन्त्यात्मनस्तु कामाय भूतानि प्रियाणि भवन्ति । न वा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवति । आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदꣳ सर्वं विदितम् ॥५॥

ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्म वेद क्षत्रं तं परादाद्योऽन्यत्रात्मनः क्षत्रं वेद लोकास्तं परादुर्योऽन्यत्रात्मनो लोकान्वेद देवास्तं परादुर्योऽन्यत्रात्मनो देवान्वेद भूतानि तं परादुर्योऽन्यत्रात्मनो भूतानि वेद सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेदेदं ब्रह्मेदं क्षत्रमिमे लोका इमे देवा इमानि भूतानीदꣳ सर्वं यदयमात्मा ॥६॥ ५

न्यस्तं । तस्यैतद्वृ[1]त्तिस्थानीय प्रपञ्चितम् । तस्मादात्मप्रीतिसाधनत्वाद्गौण्यन्यत्र प्रीतिरात्मन्येव मुख्या । तस्मादात्मा वा अरे द्रष्टव्यो दर्शनार्हो दर्शनविषयमापादयितव्यः श्रोतव्यः पूर्वमाचार्यत आगमतश्च । पश्चान्मन्तव्यस्तर्कतः । १० ततो निदिध्यासितव्यो निश्चयेन ध्यातव्यः । एवं ह्यसौ दृष्टो भवति श्रवणमनननिदिध्यासनसाधनैर्निर्वर्तितैः । यदैकत्वमेतान्युपगतानि तदा सम्यग्दर्शनं ब्रह्मैकत्वविषयं प्रसीदति नान्यथा श्रवणमात्रेण । यद्ब्रह्मक्षत्रादि कर्मनिमित्त वर्णाश्रमादिलक्षणमात्मन्यविद्याध्यारोपितप्रत्ययविषयं क्रियाकारकफलात्मकमविद्याप्रत्ययविषयं रज्ज्वामिव सर्पप्रत्ययस्तदुपमर्दनार्थमाह—आत्मनि खल्वरे मैत्रेयि दृष्टे श्रुते मते विज्ञात इदं सर्वं विदितं भवति ॥ ५ ॥

ननु कथमन्यस्मिन्विदितेऽन्यद्विदितं भवति । नैष दोषः । न ह्यात्मव्यतिरेकेणान्यत्किंचिदस्ति । यद्यस्ति न १५ तद्विदितं स्यान्न त्वन्यदस्त्यात्मैव तु सर्वम् । तस्मात्सर्वमात्मनि विदिते विदितं स्यात् । कथं पुनरात्मैव सर्वमित्येतच्छ्रावयति—ब्रह्म ब्राह्मणजातिस्तं पुरुषं परादात्परादध्यात्पराकुर्यात् । कं, योऽन्यत्राऽऽत्मन आत्मस्वरूपव्यतिरेकेणाऽऽत्मैव न भवतीयं ब्राह्मणजातिरिति तां यो वेद तं परादध्यात्सा ब्राह्मणजातिरनात्मस्वरूपेण मा पश्यतीति ।

स्यात्तत्राऽऽह—वदेतदिति । अथोपन्यासविवरणाभ्या प्रीतिरात्मन्येवेत्ययुक्त पुत्रादावपि तद्दर्शनादत आह—तस्मादिति । आत्मनो निरतिशयप्रीत्यास्पदत्वेन परमानन्दत्वमभिधायोत्तरवाक्यमादाय व्याचष्टे—तस्मादित्यादिना । कथ पुनरिदं २० दर्शनमुत्पद्यते तत्राऽऽह—श्रोतव्य इति । श्रवणादीनामन्यतमेनाऽऽत्मज्ञानलाभात्किमिति सर्वेषामध्ययनमित्याशङ्क्याऽऽह—एवं हीति । विध्यनुसारित्वमेवशब्दार्थः श्रुतत्वाविशेषाद्विकल्पहेत्वभावाच्च सर्वैरेवाऽऽत्मज्ञानं जायते चेत्तेषा समप्रधानत्वमाग्नेया[2]दिवदापतेदित्याशङ्क्याऽऽह—यदेति । श्रवणस्य प्रमाणविचारत्वेन प्रधानत्वादङ्गित्व मनननिदिध्यासनयोस्तु तत्कार्यप्रतिबन्धप्रध्वंसित्वादङ्गत्वमित्यङ्गाङ्गिभावेन यदा श्रवणादीन्यसकृदनुष्ठानेन समुच्चितानि तदा सामग्रीपौष्कल्यात्तत्त्वज्ञान फलशिरस्कं सिध्यति । मननाद्यभावे श्रवणमात्रेण नैव तदुत्पद्यते । मननादिना २५ प्रतिबन्धाप्रध्वंसे वाक्यस्य फलवज्ज्ञानजनकत्वायोगादित्यर्थः । प[3]रामर्शवाक्यस्य तात्पर्यमाह—यदेत्यादिना । कर्मनिमित्तं ब्रह्मक्षत्रादि तदेव वर्णाश्रमावस्थादिरूपमात्मन्यविद्ययाऽध्यारोपितस्य प्रत्ययो मिथ्याज्ञानं तस्य विषयतया स्थितं क्रियाद्यात्मक तदुपमर्दनार्थमाहेति सम्बन्ध । अविद्याध्यारोपितप्रत्ययविषयमित्येतदेव व्याकरोति—अविद्येति । अविद्याजनितप्रत्ययविषयत्वे दृष्टान्तमाह—रज्ज्वामिति ॥५॥

आत्मनि विदिते सर्वं विदितमित्युक्तमाक्षिपति—नन्विति । दृष्टिविरोध निराचष्टे—नैष दोष इति । ३० आत्मनि ज्ञाते ज्ञातमेव सर्वं ततोऽर्थान्तरस्याभावादित्युक्तमेव स्फुटयति—यद्यस्त्यादिना । आकाङ्क्षापूर्वकमुत्तरवाक्यमुदाहृत्य व्याचष्टे—कथमित्यादिना । पुरुष विशेषतो ज्ञातुं प्रश्नमुत्तरस्य प्रतीकं गृहीत्वा व्याकरोति—कमित्यादिना । पराकरणे पुरुषस्यापराधित्वं दर्शयति—अनात्मेति । परमात्मातिरेकेण दृश्यमानामपि ब्राह्मणजाति स्वस्वरूपेण

---

१. वृत्ति. व्याख्यानम् ।

२ आग्नेयादिवत् । दर्शपूर्णमासकर्मणि दर्शे त्रयः इष्टय. पूर्णमासे त्रय· तेषां समप्राधान्यं न तु एकस्य प्राधान्यं ३५ इतरस्याङ्गत्वमिति ।

३. परामर्शवाक्य अनुवादवाक्यम्, 'आत्मनि दृष्टे श्रुते मत' इत्यादि ।

स यथा दुन्दुभेर्हन्यमानस्य न बाह्याञ्शब्दाञ्शक्नुयाद्ग्रहणाय
दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीतः ॥७॥
स यथा शङ्खस्य ध्मायमानस्य न बाह्याञ्शब्दाञ्शक्नुयाद्-
ग्रहणाय शङ्खस्य तु ग्रहणेन शङ्खध्मस्य वा शब्दो गृहीतः ॥८॥
५ स यथा वीणायै वाद्यमानायै न बाह्याञ्शब्दाञ्शक्नुयाद्ग्रहणाय
वीणायै तु ग्रहणेन वीणावादस्य वा शब्दो गृहीतः ॥९॥

परमात्मा हि सर्वेषामात्मा। तथा क्षत्रं क्षत्रियजातिस्तथा लोका देवा भूतानि सर्वमिदं ब्रह्मेति यान्यनुक्रान्तानि तानि सर्वाण्यात्मैव यदयमात्मा योऽयमात्मा द्रष्टव्यः श्रोतव्य इति प्रकृतः। यस्मादात्मनो जायत आत्मन्येव लीयत आत्ममयं च स्थितिकाल आत्मव्यतिरेकेणाग्रहणादात्मैव सर्वम् ॥ ६ ॥

१० कथं पुनरिदानीमिदं सर्वमात्मैवेति ग्रहीतुं शक्यते। चिन्मात्रानुगमात्सर्वत्र चित्स्वरूपतैवेति गम्यते। तत्र दृष्टान्त उच्यते। यत्स्वरूपव्यतिरेकेणाग्रहणं यस्य तस्य तदात्मत्वमेव लोके दृष्टम्। स यथा स इति दृष्टान्तो लोके यथा दुन्दुभेर्भेर्यादेर्हन्यमानस्य ताड्यमानस्य दण्डादिना न बाह्याञ्छब्दाञ्शब्दविशेषान्दुन्दुभिशब्दसामान्यान्निष्कृष्टान्दुन्दुभिशब्दविशेषान्न शक्नुयाद्ग्रहणाय ग्रहीतुम्। दुन्दुभेस्तु ग्रहणेन दुन्दुभिशब्दसामान्यविशेषत्वेन दुन्दुभिशब्दा एत इति शब्दविशेषा गृहीता भवन्ति। दुन्दुभिशब्दसामान्यव्यतिरेकेणाभावात्तेषाम्। दुन्दुभ्याघातस्य
१५ वा दुन्दुभेराहननमाघातो दुन्दुभ्याघातविशिष्टस्य शब्दसामान्यस्य ग्रहणेन तद्गता विशेषा गृहीता भवन्ति। न तु त एव निर्भिद्य ग्रहीतुं शक्यन्ते विशेषरूपेणाभावात्तेषाम्। तथा प्रज्ञानव्यतिरेकेण स्वप्नजागरितयोर्न कश्चिद्वस्तुविशेषो गृह्यते। तस्मात्प्रज्ञानव्यतिरेकेणाभावो युक्तस्तेषाम् ॥ ७ ॥

तथा स यथा शङ्खस्य ध्मायमानस्य शब्देन संयोज्यमानस्याऽऽपूर्यमाणस्य न बाह्याञ्छब्दाञ्शक्नुयादित्येवमादि पूर्ववत् ॥ ८ ॥

२० तथा वीणायै वाद्यमानायै वीणाया वाद्यमानायाः। अनेकदृष्टान्तोपादानमिह सामान्यबहुत्वख्यापनार्थम्। अनेके हि विलक्षणाश्चेतनाचेतनरूपाः सामान्यविशेषाः। तेषां पारम्पर्यगत्या यथैकस्मिन्महासामान्येऽन्तर्भावः प्रज्ञान-

पश्यन्कथमपराधी स्यादित्याशङ्क्याऽऽह—परमात्मेति। इदं ब्रह्मेत्युक्तवाक्यानुवादस्तस्य व्याख्यानं यान्यनुक्रान्तानीत्यादि। आत्मैव सर्वमित्येतत्प्रतिपादयति—यस्मादित्यादिना। स्थितिकाले तिष्ठति तस्मादात्मैव सर्वं तद्व्यतिरेकेणाग्रहणादिति योजना ॥६॥

२५ स्थित्यवस्थाया सर्वस्याऽऽत्ममात्रत्वं ज्ञातुमशक्यं ज्ञापकाभावादित्याक्षिपति—कथं पुनरिति। घटः स्फुरतीत्यादिप्रत्ययमाश्रित्य परिहरति—चिन्मात्रेति। स यथा दुन्दुभेरित्यादि वाक्यमवतारयति—तत्रेति। सर्वत्र चिदतिरेकेणासत्त्वं समन्यर्थः। दृष्टान्ते विवक्षितं संक्षिपति—यत्स्वरूपेति। दुन्दुभिदृष्टान्तमादायाक्षराणि व्याचष्टे—स यथेत्यादिना। शब्दविशेषानेव विशदयति—दुन्दुभीति। कथं तर्हि दुदुभिशब्दविशेषाणां ग्रहणं तदाह—दुन्दुभेस्त्विति। दुन्दुभिशब्दसामान्यस्येति यावत्। उक्तेऽर्थे दुन्दुभ्याघातस्येत्यादिवाक्यमुत्थाप्य व्याचष्टे—दुन्दुभ्याघातस्येति। वाशब्दार्थमाह—
३० तद्गता विशेषा इति। उक्तमर्थं व्यतिरेकमुखेन विशदयति—न त्विति। विवक्षितं दार्ष्टान्तिकमाचष्टे—तथेति। तत्रैव वस्तुविशेषग्रहणसंभावनामभिप्रेत्य स्वप्नजागरितयोरित्युक्तम् ॥७॥

तथा दुन्दुभिदृष्टान्तवदिति यावत्। शङ्खस्य तु ग्रहणेनेत्यादिवाक्यमादिशब्दार्थः। दुन्दुभेस्तु ग्रहणेनेत्यादिवाक्यं दृष्टान्तयति—पूर्ववदिति ॥८॥

तथेति दृष्टान्तद्वयपरामर्शः। एकेनैव दृष्टान्तेन विवक्षितार्थसिद्धौ किमित्यनेकदृष्टान्तोपादानमित्याशङ्क्याऽऽह—
३५ अनेकेति। इहेति जगदुच्यते श्रुतिर्वा। सामान्यबहुत्वमेव स्फुटयति—अनेके हीति। तेषां स्वस्वसामान्येऽन्तर्भावेऽपि

---

१. यथा दुन्दुभेरित्युपमायाः यत् यस्य स्फुरणं विना न स्फुरति तत् तदभिन्नं यथा दुन्दुभिविशेषशब्दः तत्सामान्यशब्दात् भिन्नो न भवति इति व्याप्तौ तात्पर्यम्। स्वतादात्म्यविषयतानिरूपितप्रकारतावत्त्वं तादृशनिरवच्छिन्नप्रकारतावत्त्वं वा तदर्थः।

स यथार्द्रैधाग्नेरभ्याहितात्पृथग्धूमा विनिश्चरन्त्येवं वा अरेऽस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानान्यस्यैवैतानि निश्वसितानि ॥१०॥

घने कथं नाम प्रवर्शयितव्य इति दुन्दुभिशङ्खवीणाशब्दसामान्यविशेषाणां यथा शब्दत्वेऽन्तर्भावः। एवं स्थितिकाले ५ तावत्सामान्यविशेषाव्यतिरेकादब्रह्मैकत्वं शक्यमवगन्तुम् ॥ ९ ॥

एवमुत्पत्तिकाले प्रागुत्पत्तेर्ब्रह्मैवेति शक्यमवगन्तुम्। यथाऽग्नेर्विस्फुलिङ्गधूमाङ्गारार्चिषां प्राग्विभागादग्निरेवेति भवत्यग्न्येकत्वमेवं जगन्नामरूपविकृतं प्रागुत्पत्तेः प्रज्ञानघन एवेति युक्तं ग्रहीतुमित्येतदुच्यते। स यथाऽऽर्द्रैधाग्नेरार्द्रैरेधोभिरिद्धोऽग्निरार्द्रैधाग्निस्तस्मादभ्याहितात्पृथग्धूमाः पृथग्नानाप्रकारं धूमग्रहणं विस्फुलिङ्गादिप्रदर्शनार्थं धूमविस्फुलिङ्गादयो विनिश्चरन्ति विनिर्गच्छन्ति। एव यथाऽयं दृष्टान्तः अरे मैत्रेय्यस्य परमात्मनः १० प्रकृतस्य महतो भूतस्य निःश्वसितमेतन्निःश्वसितमिव निःश्वसितम्। यथाऽप्रयत्नेनैव पुरुषनिःश्वासो भवत्येवं वा अरे। किं तन्निःश्वसितमिव ततो जातमित्युच्यते यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरसश्चतुर्विधं मंत्रजातमितिहासः इत्युर्वशीपुरूरवसोः संवादादिः'उर्वशी ह्यप्सरा' इत्यादिब्राह्मणमेव। पुराणमसद्वा इदमग्र आसीदित्यादि। विद्या देवजनविद्या वेदः सोऽयमित्याद्या। उपनिषदः 'प्रियमित्येमदुपासीते'त्याद्याः श्लोका ब्राह्मणप्रभवा मन्त्रास्तदेते श्लोका इत्यादयः। सूत्राणि वस्तुसंग्रहवाक्यानि वेदे यथा'ऽऽत्मेत्येवोपासीते'त्यादीनि। अनुव्याख्यानानि मन्त्रविवरणानि। १५ व्याख्यानान्यर्थवादाः। अथवा वस्तुसंग्रहवाक्यविवरणान्यनुव्याख्यानानि। यथा चतुर्थाध्याय आत्मेत्येवोपासीतेत्यस्य यथा वा'ऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवमि'त्यस्यायमेवाध्यायशेषः। मन्त्रविवरणानि व्याख्यानानि। एवमष्टविधं ब्राह्मणम्।

एवं मन्त्रब्राह्मणयोरेव ग्रहणम्। नियतरचनावतो विद्यमानस्यैव वेदस्याभिव्यक्तिः पुरुषनिःश्वासवच्च

कुतो ब्रह्मणि पर्यवसानमित्याशङ्क्याऽऽह—तेषामिति। कथमित्यस्मात्पूर्वं तयेत्यध्याहारः। इति मन्यते श्रुतिरिति २० शेषः। विमतं नाऽऽत्मातिरेकि तदतिरेकेणागृह्यमाणत्वाद्यद्यदतिरेकेणागृह्यमाण तत्तदतिरेकि न भवति यथा दुन्दुभ्यादिशब्दास्तत्सामान्यातिरेकेणागृह्यमाणास्तदतिरेकेण न सन्तीत्यनुमानं विवक्षन्नाह—दुन्दुभीति। शब्दत्वेऽन्तर्भावस्तथा प्रज्ञानघने सर्वं जगदन्तर्भवतीति शेषः। दृष्टान्तत्रयमवष्टभ्य निष्टङ्कितमर्थमुपसंहरति—एवमिति ॥९॥

स यथाऽऽर्द्रैधाग्नेरित्यादिवाक्यस्य तात्पर्यमाह—एवमित्यादिना। स्थितिकालवदित्येवंशब्दार्थः तत्र वाक्यमवतार्य व्याचष्टे—इत्येतदिति। महतोऽनवच्छिन्नस्य भूतस्य परमार्थस्येति यावत्। निःश्वसितमिवेत्युक्तं व्यनक्ति—यथेति। २५ अरे मैत्रेयि ततो जातमिति शेषः। तदेवाऽऽकाङ्क्षापूर्वकं विशदयति—किं तदित्यादिना। इतिहास इति ब्राह्मणमेवेति सबन्धः। संवादादिरित्यादिपदेन प्राणसंवादादिग्रहणम्। असद्वा इदमग्र आसीदित्यादीत्यत्राऽऽदिशब्देनासदेवेदमग्र आसीदिति गृह्यते। देवजनविद्या नृत्यगीतादिशास्त्रम्। वेदः सोऽय वेदाद्वहिर्न भवतीत्यर्थः। इत्याद्या विद्येति सम्बन्धः। आदिशब्दः शिल्पशास्त्रसंग्रहार्थः। प्रियमित्येनदुपासीतेत्याद्या इत्यत्राऽऽदिशब्दः सत्यस्य सत्यमित्युपनिषत्संग्रहार्थं। तदेते श्लोका इत्यादय इत्यत्राऽऽदिशब्देन तदप्येष श्लोको भवति। असन्नेव स भवतीत्यादि गृह्यते। ३० इत्यादीनीत्यादिपदमथ योऽन्या देवतामुपास्ते ब्रह्मविदाप्नोति परमित्यादि ग्रहीतुम्। अर्थवादेषु व्याख्यानपदप्रवृत्तौ हेत्वभाव शङ्कित्वा पक्षान्तरमाह—अथवेति। इतिहासादिशब्दव्याख्यानमुपसंहरति—एवमिति। ब्राह्मणमितिहासादिपदवेदनीयमिति शेषः।

ऋगादिशब्दानामितिहासादिशब्दाना च प्रसिद्धार्थत्यागे को हेतुरित्याशङ्क्य निःश्वसितश्रुतिरितिहासादिशब्दाना प्रसिद्धार्थत्यागे हेतुः परिशेषस्त्वन्यत्रेत्यभिप्रेत्याऽऽह—एवं मन्त्रेति। ननु प्रथमे काण्डे वेदस्य नित्यत्वेन ३५

१. इतिहासः पुराणं—इत्यादौ भाष्ये वेदगतार्थवादरूपाणि पुरावृत्तानि ग्राह्याणीत्युक्तम्। भारतादीनामनादिवेदप्रतिपाद्यत्वासंभवात्। वार्तिककृद्भिस्तु भारतादीन्यपि ग्राह्याणीत्युक्तम् ( वा०–२-४ ६०,८७ )।

२. अत्र निःश्वसितत्वं पुरुषस्वातन्त्र्यं भगवतोऽपि वेदेषु नास्तीति ज्ञापयितुं अपौरुषेयत्वं दृढीकर्तुम्। प्रयत्नपूर्वकं निर्मितत्वे पौरुषेयत्वप्रसंगात्। निःश्वसितमिति—अनायासेन निस्सृतमित्यर्थः।

स यथा सर्वासामपाँ समुद्र एकायनमेवँ सर्वेषाँ स्पर्शानां त्वगेकायनमेवँ सर्वेषां गन्धानां नासिके एकायनमेवँ सर्वेषाँ रसानां जिह्वैकायनमेवँ सर्वेषाँ रूपाणां चक्षुरेकायनमेवँ सर्वेषाँ शब्दानाँ-

पुरुषबुद्धिप्रयत्नपूर्वकः। अतः प्रमाणं निरपेक्ष एव स्वार्थे तस्माद्यत्तेनोक्तं तत्तथैव प्रतिपत्तव्यमात्मनः श्रेय इच्छद्भि-
५ र्ज्ञानं वा कर्म वेति। नामप्रकाशवशा[1] हि रूपस्य विक्रियाव्यवस्था। नामरूपयोरेव हि परमात्मोपाधिभूतयोर्व्याक्रियमाणयोः सलिलफेनवत्तत्त्वान्यत्वेनानिर्वक्तव्ययोः सर्वावस्थयोः संसारत्वमित्यतो नाम्न एव निःश्वसितत्वमुक्तम्। तद्वचनेनैवेतरस्य निःश्वसितत्वसिद्धेः। अथवा सर्वस्य द्वैतजातस्याविद्याविषयत्वमुक्तं ब्रह्म तं परादाद्यिदं सर्वं यदयमात्मेति। तेन वेदस्याप्रामाण्यमाशङ्क्यते। तदाशङ्कानिवृत्त्यर्थमिदमुक्तं पुरुषनिःश्वासवदप्रयत्नोत्थितत्वात्प्रमाणं वेदो न यथाऽन्यो ग्रन्थ इति ॥ १० ॥

[ १० किंचान्यन्न केवलं स्थित्युत्पत्तिकालयोरेव प्रज्ञानव्यतिरेकेणाभावाज्जगतो ब्रह्मत्वं प्रलयकाले च जलबुद्बुदफेनादीनामिव सलिलव्यतिरेकेणाभावः। एवं प्रज्ञानव्यतिरेकेण तत्कार्याणां नामरूपकर्मणां तस्मिन्नेव लीयमानानामभावः। तस्मादेकमेव ब्रह्म प्रज्ञानघनमेकरसं प्रतिपत्तव्यमित्यत आह प्रलयप्रदर्शनाय दृष्टान्तः स इति यो दृष्टान्तो यथा येन प्रकारेण सर्वासां नदीवापीतडागादिगतानामपां समुद्रोऽब्धिरेकायनमेकगमनमेकप्रलयोऽविभागप्राप्तिरित्यर्थः। यथाऽयं दृष्टान्त एवं सर्वेषां स्पर्शानां मृदुकर्कशकठिनपिच्छिलादीनां वायोरात्मभूतानां त्वगेकायनं

१५ प्रामाण्यं स्थापित तदनित्यत्वे तद्धानिरित्यत आह—नियतेति। नियतेत्यादौ वेदो विशेष्यते। कल्पान्तेऽन्तर्हितान्वेदानित्यादिवाक्यान्नियतरचनावत्त्वं वेदस्य गम्यते। 'अनादिनिधना' इत्यादेश्च सदातनत्वं तस्य निश्चीयते। न च कृतकत्वादप्रामाण्य प्रत्यक्षादौ व्यभिचारात्। न च पौरुषेयत्वादनपेक्षत्वहेत्वभावादप्रामाण्यम्। बुद्धिपूर्वप्रणीतत्वाभावेन[2] तत्सिद्धे.। न चोन्मत्तवाक्यसादृश्यमबाधितार्थत्वादिति भावः। सिद्धे वेदस्य प्रामाण्ये फलितमाह—तस्मादिति। नामप्रपञ्चसृष्टिरेवात्रोपदिष्टा न रूपप्रपञ्चसृष्टि सा चोपदेष्टव्या सृष्टिपरिपूर्तेरन्यथाऽनुपपत्तेरित्याशङ्क्याऽऽह—नामेति।
२० यद्यपि नामतन्त्रा रूपसृष्टिरिति नामसृष्टिवचनेन रूपसृष्टिरर्थादुक्ता तथाऽपि सर्वससारसृष्टिर्नोक्ता नामरूपयोरेव संसारत्वे प्राक्सृष्टे. ससारो न स्यादित्याशङ्क्याऽऽह—नामरूपयोरिति। सर्वावस्थयोर्व्यक्ताव्यक्तावस्थयोरिति यावत्। नामप्रपञ्चस्यैवात्र सर्गोक्तिमुपपादितामुपसंहरति—इतीति। अतःशब्दार्थं स्फुटयति—तद्वचनेनेति। निःश्वसितश्रुतिं विधान्तरेणावतारयति—अथवेत्यादिना। मिथ्यात्वेऽपि प्रतिबिम्बवत्प्रामाण्यसम्भवादुन्मत्तादिवाक्यानां च मिथ्याज्ञानाधीनप्रयत्नजन्यत्वेनामानत्वाद्वेदस्य तदभावाद्विषयाव्यभिचाराच्च नाप्रामाण्यमित्याह—तदाशङ्केति। अन्यो ग्रन्थो
२५ बुद्धादिप्रणीत. 'स्वर्गकामश्चैत्य वन्देते' त्यादिः ॥१०॥

स यथा सर्वासामपामित्यादिसमनन्तरग्रन्थमुत्थापयति—किंचान्यदिति। तदेव व्याकरोति—न केवलमिति। प्रलयकाले च प्रज्ञानव्यतिरेकेणाभावाज्जगतो ब्रह्मत्वमिति सम्बन्धः। उक्तमर्थं दृष्टान्तेन स्पष्टयति—जलेति। तथाऽपि प्रज्ञानमेवैकमेव स्यान्न ब्रह्मेत्याशङ्क्याऽऽह—तस्मादिति। सत्यज्ञानादिवाक्याद्ब्रह्मणस्तन्मात्रत्वादित्यर्थ.। यथोक्तं ब्रह्म चेत्प्रतिपत्तव्यं किमिति तर्हि स यथेत्यादि वाक्यमित्याशङ्क्य तच्छेषत्वेन प्रलयं दर्शयितुं दृष्टान्तवचनमेतदित्याह—
३० अत आहेति। प्रलीयतेऽस्मिन्निति प्रलय एकश्चासौ प्रलयश्चेत्येकप्रलयः तडागादिगतानामपां कुतः समुद्रे लयो न हि तासा तेन सगतिरित्याशङ्क्याऽऽह—अविभागेति। अत्र हि समुद्रशब्देन जलसामान्यमुच्यते। तद्व्यतिरेकेण च

१. नामप्रकाशवशा—अतः प्रभवात् इति ब्रह्मसूत्रे धाता यथा पूर्वमकल्पयत् इत्यत्र मनसा वाचं मिथुनं समभवत् इति प्रकृतोपनिषदि च नामपूर्वकत्वमर्थसृष्टेरुच्यते।

२. बुद्धिप्रणीतत्वाभावेन प्रमाणान्तरेणार्थं बुद्ध्वा प्रणीतत्वाभावात्। तदुक्तं श्लोकवार्त्तिके 'यत्नतः प्रतिषेध्या नः
३५ पुरुषाणा स्वतन्त्रता' इति।

**श्रोत्रमेकायनमेव्ँ सर्वेषा्ँ संकल्पानां मन एकायनमेव्ँ सर्वासां विद्याना्ँ हृदयमेकायनमेव्ँ सर्वेषां कर्मणा्ँ हस्तावेकायनमेव्ँ सर्वेषामानन्दाना-मुपस्थ एकायनमेव्ँ सर्वेषां विसर्गाणां पायुरेकायनमेव्ँ सर्वेषा-मध्वनां पादावेकायनमेव्ँ सर्वेषां वेदानां वागेकायनम् ॥११॥**

त्वगिति त्वग्विषयं स्पर्शसामान्यमात्रं तस्मिन्प्रविष्टाः स्पर्शविशेषा आप इव समुद्रं तद्व्यतिरेकेणाभावभूता भवन्ति। ५ तस्यैव हि ते संस्थानमात्रा आसन्।

तथा तदपि स्पर्शसामान्यमात्रं त्वक्शब्दवाच्यं मनःसंकल्पे मनोविषयसामान्यमात्रे त्वग्विषय इव स्पर्श-विशेषाः प्रविष्टं तद्व्यतिरेकेणाभावभूतं भवति। एवं मनोविषयोऽपि बुद्धिविषयसामान्यमात्रे प्रविष्टस्तद्व्यतिरेकेणा-भावभूतो भवति। विज्ञानमात्रमेव भूत्वा प्रज्ञानघने, परे ब्रह्मण्याप इव समुद्रे प्रलीयते। एवं परम्पराक्रमेण शब्दादौ सह ग्राहकेण प्रलीने प्रज्ञानघन उपाध्यभावात्सैन्धवघनवत्प्रज्ञानघनमेकरसमनन्तमपारं निरन्तरं ब्रह्म १० व्यवतिष्ठते। तस्मादात्मैवैकमद्वयमिति प्रतिपत्तव्यम्।

तथा सर्वेषां गन्धानां पृथिवीविशेषाणां नासिके घ्राणविषयसामान्यम्। तथा सर्वेषां रसानामब्विशेषाणां जिह्वेन्द्रियविषयसामान्यम्। तथा सर्वेषा रूपाणां तेजोविशेषाणां चक्षुश्चक्षुर्विषयसामान्यम्। तथा शब्दानां श्रोत्र-विषयसामान्यं पूर्ववत्। तथा श्रोत्रादिविषयसामान्यानां मनोविषयसामान्ये संकल्पे। मनोविषयसामान्यस्यापि बुद्धिविषयसामान्ये विज्ञानमात्रे। विज्ञानमात्रं भूत्वा परस्मिन्प्रज्ञानघने प्रलीयते। तथा कर्मेन्द्रियाणां विषया १५ वदनादानगमनविसर्गानन्दविशेषास्तत्तत्क्रियासामान्येष्वेव प्रविष्टा न विभागयोग्या भवन्ति समुद्र इवाब्विशेषाः। तानि च सामान्यानि प्राणमात्रं प्राणश्च प्रज्ञानमात्रमेव। "यो वै प्राणः सा प्रज्ञा या वै प्रज्ञा स प्राणः" इति कौषीतकिनोऽधीयते।

जलविशेषाणामभावो विवक्षितस्तेषा तत्संस्थानमात्रत्वादतश्चाऽऽप्नामस्मिन्नविभागस्य प्राप्तिरिति समुद्रेऽविभागप्राप्ति-रित्यर्थः। पिच्छिलादीनामित्यादिशब्देनानुक्तस्पर्शविशेषाः सर्वे गृह्यन्ते। विषयाणामिन्द्रियकार्यत्वाभावात्कुतः २० स्पर्शाना त्वचि विलयः स्यादित्याशङ्क्याऽऽह—त्वगितीति। स्पर्शविशेषाणा स्पर्शसामान्येऽन्तर्भावं प्रपञ्चयति—**तस्मिन्निति।**

तथाऽपि समस्तस्य जगतो ब्रह्मव्यतिरेकेणाभावाद्ब्रह्मत्वमित्येतत्कथ प्रतिज्ञातमित्याशङ्क्य परम्परया ब्रह्मणि सर्वप्रविलयं दर्शयितुं क्रममनुक्रामति—**तथेति।** मनसि सति विषयविषयिभावस्य दर्शनादसति चादर्शनान्मनः-स्पन्दितमात्र विषयजातमिति तस्य तद्विषयमात्रे प्रविष्टस्य तदतिरेकेणासत्त्वमित्यर्थः। संकल्पविकल्पात्मकमनः २५ स्पन्दितद्वैतस्य संकल्पात्मके मनस्यन्तर्भावात्तस्य च संकल्पस्याध्यवसायपारतन्त्र्यदर्शनादध्यवसायात्मिकायां च बुद्धौ तद्विषयस्य पूर्ववदनुप्रवेशान्मनोविषयसामान्यस्य बुद्धिविषयसामान्ये प्रविष्टस्य तद्व्यतिरेकेणासत्त्वमित्याह—**एवमिति।** सर्वं जगदुक्तेन न्यायेन बुद्धिमात्रं भूत्वा तद्यच्छेच्छान्त आत्मनीति श्रुत्या ब्रह्मणि पर्यवस्यतीत्याह—**विज्ञानमात्रमिति।** ननु जगदिदं विलीयमानं शक्तिशेषमेव विलीयते। तत्त्वज्ञानादृते तस्य निःशेषनाशानाश्रयणात्। तथा च कुतो ३० ब्रह्मैकरसस्य प्रतिपत्तिरत आह—**एवमिति।** शक्तिशेषलयेऽपि तस्या दुर्निरूपत्वाद्वस्त्वेकरसस्य धीरविरुद्धेति भावः। एकायनप्रक्रियातात्पर्यमुपसंहरति—**तस्मादिति।** घ्राणविषयसामान्यमित्यादावेकायनमिति सर्वत्र सम्बन्धः।

कथं पुनरत्र प्रतिपर्यायं ब्रह्मणि पर्यवसानं तत्राऽऽह—**तथेति।** यथा सर्वेषु पर्यायेषु ब्रह्मणि पर्यवसानं तथोच्यत इति यावत्। पूर्ववदिति त्वग्विषयसामान्यवदित्यर्थः। संकल्पे लय इति शेषः। विज्ञानमात्र इत्यत्रापि तथैव। एव सर्वेषां कर्मणामित्यादेरर्थमाह—**तथा कर्मेन्द्रियाणामिति।** क्रियासामान्याना सूत्रात्मसंस्थानभेदत्वमभ्युपेत्याऽऽह— ३५ **तानि चेति।** क्रियाज्ञानशक्त्योश्चिदुपाधिभूतयोश्चिदभेदादभेदमभिप्रेत्य प्राणश्चेत्यादि भाष्यम्। तत्र तयोरन्योन्याभेदे मानमाह—**यो वा इति।**

स यथा सैन्धवखिल्य उदके प्रास्त उदकमेवानुविलीयेत
न हास्योद्ग्रहणायेव स्यात् । यतो यतस्त्वाददीत लवणमेवैवं
वा अर इदं महद्भूतमनन्तमपारं विज्ञानघन एव ।
एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति न प्रेत्य
५ संज्ञास्तीत्यरे ब्रवीमीति होवाच याज्ञवल्क्यः ॥१२॥

ननु सर्वत्र विषयस्यैव प्रलयोऽभिहितो न तु करणस्य तत्र कोऽभिप्राय इति । बाढम् । किंतु विषयसमान-जातीयं करण[1] मन्यते श्रुतिर्न तु जात्यन्तरम् । विषयस्यैव स्वात्मग्राहकत्वेन सस्थानान्तरं करणं नाम यथा रूप-विशेषस्यैव सस्थान प्रदीपः करणं सर्वरूपप्रकाशन एवं सर्वविषयविशेषाणामेव स्वात्मविशेषप्रकाशकत्वेन सस्थाना-न्तराणि करणानि प्रदीपवत् । तस्मान्न करणानां पृथक्प्रलये यत्नः कार्यो विषयसामान्यात्मकत्वाद्विषयप्रलयेनैव
१० प्रलयः सिद्धो भवति करणानामिति ॥ ११ ॥

तत्रेदं सर्वं यदयमात्मेति प्रतिज्ञातं तत्र हेतुरभिहित आत्मसामान्यत्वमात्मजत्वमात्मप्रलयत्वं च । तस्मादुत्पत्तिस्थितिप्रलयकालेषु प्रज्ञानव्यतिरेकेणाभावात्प्रज्ञान ब्रह्मैवाऽऽत्मैवेदं सर्वमिति प्रतिज्ञातं यत्तत्तर्कतः साधितम् । स्वाभाविकोऽयं प्रलय इति पौराणिका वदन्ति । यस्तु बुद्धिपूर्वकः प्रलयो ब्रह्मविदां ब्रह्मविद्यानिमित्तोऽयमात्यन्तिक इत्याचक्षते । अविद्यानिरोधद्वारेण यो भवति तदर्थोऽयं विशेषारम्भः—

१५ तत्र दृष्टान्त उपादीयते स यथेति । सैन्धवखिल्यः सिन्धोर्विकारः सैन्धवः सिन्धुशब्देनोदकमभिधीयते स्यन्दनात्सिन्धुरुदकं तद्विकारस्तत्र भवो वा सैन्धवः सैन्धवश्चासौ खिल्यश्चेति सैन्धवखिल्यः खिल एव खिल्यः स्वार्थे यत्प्रत्यय उदके सिन्धौ स्वयोनौ प्रास्तः प्रक्षिप्त उदकमेव विलीयमानमनुविलीयेत । यत्तद्भौमतैजससंपर्कात्काठिन्य-प्राप्तिः खिल्यस्य स्वयोनिसंपर्कादपगच्छति तदुदकस्य विलयनं तदनु सैन्धवखिल्यो विलीयत इत्युच्यते । तदेतदाहो-दकमेवानुविलीयेतेति । न ह नैवास्य खिल्यस्योद्ग्रहणायोद्धृत्य पूर्ववद्ग्रहणाय ग्रहीतुं नैव समर्थः कश्चित्स्यात्सु-
२० निपुणोऽपि । इवशब्दोऽनर्थकः । ग्रहणाय नैव समर्थः । कस्मात् । यतो यतो यस्माद्यस्माद्देशात्तदुदकमाददीत गृहीत्वा स्वादयेल्लवणास्वादमेव तदुदक न तु खिल्यभावः ।

श्रुतिमुखात्करणलयो न प्रतिभाति स्वयं च व्याख्यायते तत्र को हेतुरिति पृच्छति—नन्विति । श्रुत्याः करणलयस्यानुक्तत्वमङ्गीकरोति—बाढमिति । पृष्टमभिप्रायं प्रकटयति—किंत्विति । करणस्य विषयसाजात्यं विवृणोति—विषयस्यैवेति । किमत्र प्रमाणमित्याशङ्क्यानुमानमिति सूचयति—प्रदीपवदिति । चक्षुस्तैजसं रूपादिषु
२५ मध्ये रूपस्यैव व्यञ्जकद्रव्यत्वात्संप्रतिपन्नवदित्यादीन्यनुमानानि शास्त्रप्रकाशिकायामधिगन्तव्यानि[2] । करणानां विषयसाजात्ये फलितमाह—तस्मादिति । पृथग्विषयप्रलयादिति शेषः । एकायनप्रक्रियासमाप्तावितिशब्दः ॥११॥

स यथा सैन्धवखिल्य इत्यादेः सम्बन्ध वक्तु वृत्तं कीर्तयति—तत्रेत्यादिना । पूर्वः सन्दर्भस्तत्रेत्युच्यते । प्रतिज्ञातेऽर्थे पूर्वोक्तं हेतुमनूद्य साध्यसिद्धि फलं दर्शयति—तस्मादिति । उक्तहेतोर्यथोक्तं ब्रह्मैव सर्वमिदं जगदिति यत्प्रतिज्ञातमिद सर्वं यदयमात्मेति तत्पूर्वोक्तदृष्टान्तप्रबन्धरूपतर्कवशात्साधितमिति[3] योजना । उत्तरवाक्यस्य विषय-
३० परिशेषार्थमुक्तप्रलये पौराणिकसम्मतिमाह—स्वाभाविक इति । कार्याणां प्रकृतावाश्रितत्वं स्वभाविकत्वम् । प्रलयान्तरेऽपि तेषा सम्मतिं सगिरिते—यस्त्विति । द्वितीयप्रलयमधिकृत्यानन्तरग्रन्थमवतारयति—अविद्येति । तत्रेत्यात्यन्तिकप्रलयोक्तिः । उदक विलीयमानमित्ययुक्तं काठिन्यविलयेऽपि तल्लयादर्शनादित्याशङ्क्याऽऽह—यत्तदिति । न हेति प्रतीकमादाय व्याचष्टे—नैवेति । अन्वयप्रदर्शनार्थं नैवेति पुनरुक्तम् ।

---

१. विषयसमानजातीय करणमिति—अत एव न्यायशास्त्रेऽपि घ्राणेन्द्रियं पार्थिवं गन्धग्राहकत्वात् । इत्याद्यनु-
३५ मानानि प्रवर्तयन्ति ।
२. शास्त्रप्रकाशिका बृहदारण्यकोपनिद्भाष्यवार्तिकव्याख्या आनन्दगिरिमहात्मभिः विरचिता ।
३ दृष्टान्तरूपतर्क. दृष्टान्तघटितोदाहरणवाक्यविशिष्टन्यायरूप इत्यर्थ. ।

यथाऽयं दृष्टान्त एवमेव वा अरे मैत्रेयीदं परमात्माख्यं महद्भूतम्। यस्मान्महतो भूताद्विद्यया परिच्छिन्ना सती कार्यकरणोपाधिसंबन्धात् खिल्यभावमापन्नाऽसि मर्त्या जन्ममरणाशनायापिपासादिसंसारधर्मवत्यसि नामरूपकार्यात्मिकाऽमुष्यान्वयाऽहमिति स खिल्यभावस्तव कार्यकरणभूतोपाधिसंपर्कभ्रान्तिजनितो महति भूते स्वयोनौ महासमुद्रस्थानीये परमात्मन्यजरेऽमरेऽभये शुद्धे सैन्धवघनवदेकरसे प्रज्ञानघनेऽनन्तेऽपारे निरन्तरेऽविद्याजनितभ्रान्तिभेदवर्जिते प्रवेशितः। तस्मिन्प्रविष्टे स्वयोनिग्रस्ते खिल्यभावेऽविद्याकृते भेदभावे प्रणाशित इदमेकमद्वैतं महद्भूतं महच्च तद्भूतं च महद्भूतं सर्वमहत्तरत्वादाकाशादिकारणत्वाच्च भूतं त्रिष्वपि कालेषु स्वरूपाव्यभिचारात्सर्वदैव परिनिष्पन्नमिति त्रैकालिको निष्ठाप्रत्ययः।

अथवा भूतशब्दः परमार्थवाची महच्च पारमार्थिकं चेत्यर्थः। लौकिकं तु यद्यपि महद्भवति स्वप्नमायाकृतं हिमवदादिपर्वतोपमं न परमार्थवस्तु अतो विशिनष्टीदं तु महच्च तद्भूतं चेति। अनन्तं नास्यान्तो विद्यत इत्यनन्तम्। कदाचिदापेक्षिकं स्यादित्यतो विशिनष्ट्यपारमिति। विज्ञप्तिर्विज्ञानं विज्ञानं च तद्घनश्चेति विज्ञानघनः। घनशब्दो जात्यन्तरप्रतिषेधार्थः। यथा सुवर्णघनोऽयोघन इति। एवशब्दोऽवधारणार्थः। नान्यज्जात्यन्तरमन्तराले विद्यत इत्यर्थः।

यदीदमेकमद्वैतं परमार्थतः स्वच्छं संसारदुःखासंपृक्तम् किंनिमित्तोऽयं खिल्यभाव आत्मनो जातो मृतः सुखी दुःख्यहं ममेत्येवमादिलक्षणोऽनेकसंसारधर्मोपद्रुत इति। उच्यते। एतेभ्यो भूतेभ्यो यान्येतानि कार्यकरणविषयाकारपरिणतानि नामरूपात्मकानि सलिलफेनबुद्बुदोपमानि स्वच्छस्य परमात्मनः सलिलोपमस्य। येषां विषयपर्यन्तानां प्रज्ञानघने ब्रह्मणि परमार्थविवेकज्ञानेन प्रविलापनमुक्तं नदीसमुद्रवत्। एतेभ्यो हेतुभूतेभ्यो भूतेभ्यः सत्यशब्दवाच्येभ्यः समुत्थाय सैन्धवखिल्यवत्। यथाऽद्भ्यः सूर्यचन्द्रादिप्रतिबिम्बो यथा वा स्फटिकस्यालक्तका-

महद्भूतमेकद्वैतमित्युत्तरत्र संबन्ध.। अस्यार्थस्य सर्वोपनिषत्प्रसिद्धत्वप्रदर्शनार्थो वैशब्द.। इद महद्भूतमित्यत्रेदंशब्दार्थं विशदयति—यस्मादित्यादिना। तदिदं परमात्माख्यं महद्भूतमिति पूर्वेण संबन्धः। खिल्यभावापत्तिकार्यं कथयति—मर्त्येत्यादिना। कोऽसौ खिल्यभावोऽभिप्रेतस्तत्राऽऽह—नामरूपेति। कार्यकरणसंघाते तादात्म्याभिमानद्वारा जात्याद्यभिमानोऽत्र खिल्यभाव इत्यर्थः। इतिशब्देनाभिमानो लक्ष्यते। यथोक्ते खिल्यभावे सति कुतो भूतस्य महत्त्वमित्याशङ्क्याऽऽह—स खिल्यभाव इति। खिल्यभाव' स्वशब्दार्थः। परस्य परिशुद्धत्वार्थमजरादिविशेषणानि। केन रूपेणैकरस्यं तदाह—प्रज्ञानेति। तस्यापरिच्छिन्नत्वमाह—अनन्त इति। तस्य सापेक्षत्वं वारयति—अपार इति। प्रतिभासमाने भेदे कथं यथोक्त तत्त्वमित्याशङ्क्याऽऽह—अविद्येति। भवतु यथोक्ते तत्त्वे खिल्यभावस्य प्रवेशस्तथाऽपि किं स्यादित्यत आह—तस्मिन्निति। महत्त्वं साधयति—सर्वेति। भूतत्वमुपपादयति—त्रिष्वपीति।

महदित्युक्ते पारमार्थिकं चेति विशेषण किमर्थमित्याशङ्क्याऽऽह—लौकिकमिति। जाग्रत्कालीनं परिदृश्यमानं हिमवदादि महद्यद्यपि भवति तथाऽपि स्वप्नमायादिसमत्वान्न तत्परमार्थवस्तु। न हि दृश्यं जडमिन्द्रजालादेर्विशिष्यतेऽतो लौकिकान्महतो ब्रह्म व्यावर्तयितुं विशेषणमित्यर्थः आपेक्षिकं स्यादानन्त्यमिति शेषः। अवधारणरूपमर्थमेव स्फोरयति—नान्यदिति।

एतेभ्यो भूतेभ्यः समुत्थायेत्यादिसमनन्तरवाक्यव्यावर्त्यामाशङ्कामाह—यदीदमिति। वस्तुतः शुद्धत्वे किं सिध्यति तदाह—संसारेति। तर्हि तस्मिन्निमित्ताभावान्न तस्य खिल्यत्वमिति मत्वाऽऽह—किंनिमित्त इति। खिल्यभावमेव विशिनष्टि—जात इति। अनेक. ससाररूपो धर्मोऽशनायापिपासादिस्तेनोपद्रुतो दूषित इति यावत्। खिल्यभावे निमित्तं दर्शयन्नुत्तरमाह—उच्यत इति। एतच्छब्दार्थं व्याकरोति—यानीति। स्वच्छस्य परमात्मनः कार्यकरणविषयाकारपरिणतानीति संबन्धः। तानि व्यवहारसिद्ध्यर्थं विशिनष्टि—नामरूपात्मकानीति। तेषामतिदुर्बलत्वं सूचयति—सलिलेति। स्वच्छत्वे दृष्टान्तमाह—सलिलोपमस्येति। तेषा प्रत्यक्षत्वेऽपि प्रकृतत्वाभावे कथमेतच्छब्देन परामर्शः स्यादित्याशङ्क्याऽऽह—येषामिति। उक्तमेकायनप्रक्रियायामिति शेषः ब्रह्मणि प्रज्ञानघने भूताना प्रलये दृष्टान्तमाह—नदीति। हेतौ पञ्चमीति दर्शयति—हेतुभूतेभ्य इति। पूर्वस्मिन्ब्राह्मणे षष्ठ्यन्तसत्यशब्दवाच्यतया तेषां प्रकृतत्वमाह—सत्येति। यथा सैन्धवः सन्खिल्यः सिन्धोस्तेजः संबन्धमपेक्ष्योद्गच्छति तथा भूतेभ्यः खिल्यभावो भवतीत्याह—सैन्धवेति। समुत्थानमेव विवृणोति—यथेत्यादिना। तान्येवेत्यादि व्याचष्टे—येभ्य इति। खिल्यहेतु-

**सा होवाच मैत्रेय्यत्रैव मा भगवानमूमुहन्न प्रेत्य संज्ञास्तीति स होवाच न वा अरेऽहं मोहं ब्रवीम्यलं वा अर इदं विज्ञानाय ॥१३॥**

दुपाधिभ्यो रक्तादिभाव एवं कार्यकरणभूतभूतोपाधिभ्यो विशेषात्मखिल्यभावेन समुत्थाय सम्यगुत्थाय येभ्यो भूतेभ्य उत्थितस्तानि यदा कार्यकरणविषयाकारपरिणतानि भूतान्यात्मनो विशेषात्मखिल्यहेतुभूतानि शास्त्राचा-
५ र्योपदेशेन ब्रह्मविद्यया नदीसमुद्रवत्प्रविलापितानि विनश्यन्ति। सलिलफेनबुद्बुदादिवत्तेषु विनश्यत्स्वन्वेवैष विशेषा-त्मखिल्यभावो विनश्यति। यथोदकालक्तकादिहेत्वपनये सूर्यचन्द्रस्फटिकादिप्रतिबिम्बो विनश्यति चन्द्रादिस्वरूपमेव परमार्थतो व्यवतिष्ठते तद्वत्प्रज्ञानघनमनन्तमपारं स्वच्छं व्यवतिष्ठते।

न तत्र प्रेत्य विशेषसंज्ञाऽस्ति कार्यकरणसंघातेभ्यो विमुक्तस्येत्येवमरे मैत्रेयि ब्रवीमि नास्ति विशेषसंज्ञे-त्यहमसामुष्य पुत्रो ममेदं क्षेत्रं धनं सुखी दुःखीत्येवमादिलक्षणाऽविद्याकृतत्वात्तस्या अविद्यायाश्च ब्रह्मविद्यया
१० निरन्वयतो नाशितत्वात्कुतो विशेषसंज्ञासंभवो ब्रह्मविदश्चैतन्यस्वभावस्थितस्य। शरीरावस्थितस्यापि विशेषसंज्ञा नोपपद्यते किमुत कार्यकरणविमुक्तस्य सर्वत इति होवाचोक्तवान्किल परमार्थदर्शनं मैत्रेय्यै भार्यायै याज्ञवल्क्यः ॥ १२ ॥

एवं प्रतिबोधिता सा ह किलोवाचोक्तवती मैत्रेयी। अत्रैवैतस्मिन्नेवैकस्मिन्वस्तुनि ब्रह्मणि विरुद्धधर्म-वत्त्वमाचक्षाणेन भगवता मम मोहः कृतस्तदाह। अत्रैव मा भगवान्पूजावानमूमुहन्मोहं कृतवान्। कथं तेन
१५ विरुद्धधर्मवत्त्वमुक्तमित्युच्यते पूर्वं विज्ञानघन एवेति प्रतिज्ञाय पुनर्न प्रेत्य संज्ञाऽस्तीति। कथं विज्ञानघन एव कथं वा न प्रेत्य संज्ञाऽस्तीति। न ह्युष्णः शीतश्चाग्निरेवैको भवति। अतो मूढाऽस्म्यत्र। स होवाच याज्ञवल्क्यो न वा अरे मैत्रेय्यहं [मोहं] ब्रवीमि मोहनं वाक्यं न ब्रवीमीत्यर्थः। ननु कथं विरुद्धधर्मत्वमवोचो विज्ञानघनं संज्ञाभावं च। न मयेदमेकस्मिन्धर्मिण्यभिहितम्। त्वयैवेदं विरुद्धधर्मत्वेनैकं वस्तु परिगृहीतं भ्रान्त्या न तु मयोक्तम्। मया त्विदमुक्तं यस्त्वविद्याप्रत्युपस्थापितः कार्यकरणसंबन्धयात्मनः खिल्यभावस्तस्मिन्विद्यया नाशिते तन्निमित्ता
२० या विशेषसंज्ञा शरीरादिसंबन्धिन्यन्यत्वदर्शनलक्षणा सा कार्यकरणसंघातोपाधौ प्रविलापिते नश्यति हेत्वभावा-दुदकाद्याधारनाशादिव चन्द्रादिप्रतिबिम्बस्तन्निमित्तश्च प्रकाशादिः। न पुनः परमार्थचन्द्रादित्यस्वरूपा-नाशवदसंसारिब्रह्मस्वरूपस्य विज्ञानघनस्य नाशः। तद्विज्ञानघन इत्युक्तं स आत्मा सर्वस्य जगतः परमार्थतो भूतनाशान्न विनाशी। विनाशीत्वविद्याकृतखिल्यभावो वाचाऽऽरम्भणं विकारो नामधेयमिति श्रुत्यन्तरात्। अयं तु

भूतानि तत्र हेतुत्वोपेतानीति यावत्। ब्रह्मविद्योत्पत्तौ हेतुमाह—शास्त्रेति। तत्फलं सदृष्टान्तमाचष्टे—नदीति। यथा
२५ सलिले फेनादयो विनश्यन्ति तथा तेषु भूतेषु विनश्यत्सु तान्यनु पश्चात्खिल्यभावो नश्यतीत्याह—सलिलेति। किं पुनर्भूतानां खिल्यभावस्य च विनाशे सत्यवशिष्यते तत्राऽऽह—यथेति।

तत्रेति कैवल्योक्तिः। उक्तमेव वाक्यार्थं स्फुटयति—नास्तीति। ब्रह्मविदोऽशरीरस्य विशेषसंज्ञाभावं कैमुति-कन्यायेन कथयति—शरीरावस्थितस्येति। सुषुप्तस्येति यावत्। सर्वत कार्यकरणविमुक्तस्येति संबन्धः ॥१२॥

उक्तं परमार्थदर्शनमेव व्यक्तीकर्तुं चोदयति—एवमिति। तेन याज्ञवल्क्येनेति यावत्। इति वदता विरुद्ध-
३० धर्मवत्त्वमुक्तमिति शेषः। एवं वदनेऽपि कुतो विरुद्धधर्मवत्त्वोक्तिस्तत्राऽऽह—कथमिति। एकस्यैव विज्ञानघनत्वे संज्ञा-राहित्ये च कुतो विरोधधीरित्याशङ्क्याऽऽह—न हीति। विरोधबुद्धिफलमाह—अत इति। अत्रेत्युक्तविषयपरामर्शः। न वा इति प्रतीकं गृहीत्वा व्याकरोति—अर इति। मोहनं वाक्यं ब्रवीत्येव भवानिति शङ्कते—नन्विति। समाधत्ते—न मयेति। कथं तर्हि ममैकस्मिन्नेव वस्तुनि विरुद्धधर्मवत्त्वबुद्धिरित्याशङ्क्याऽऽह—त्वयैवेति। त्वया तर्हि किमुक्त-मिति तत्राऽऽह—मया त्विति। खिल्यभावस्य विनाशे प्रत्यगात्मस्वरूपमेव विनश्यतीत्याशङ्क्याऽऽह—न पुनरिति।
३५ ब्रह्मस्वरूपस्यानाशे विज्ञानघनस्य किमायातमित्याशङ्क्याऽऽह—तदिति। विज्ञानघनस्य प्रत्यक्त्वं दर्शयति—आत्मेति। कथं तर्हि तान्येवानुविनश्यतीति तत्राऽऽह—भूतनाशेति। खिल्यभावस्याविद्याकृतत्वे प्रमाणमाह—वाचाऽऽरम्भणमिति। खिल्यभाववत्प्रत्यगात्मनोऽपि विनाशित्वं स्यादिति नेत्याह—अयं त्विति। पारमार्थिकत्वे

**यत्र हि द्वैतमिव भवति तदितर इतरं जिघ्रति तदितर इतरं पश्यति तदितर इतरँ शृणोति तदितर इतरमभिवदति तदितर इतरं मनुते तदितर इतरं विजानाति यत्र वा अस्य सर्वमात्मैवाभूत्तत्केन कं जिघ्रेत्तत्केन कं पश्येत्तत्केन कँ शृणुयात्तत्केन कमभिवदेत्तत्केन कं मन्वीत तत्केन कं विजानीयात्। येनेदँ सर्वं विजानाति तं केन विजानीयाद्विज्ञातारमरे केन विजानीयादिति ॥१४॥**

इति बृहदारण्यकोपनिषदि द्वितीयाध्याये चतुर्थं ब्राह्मणम् ॥४॥

पारमार्थिकोऽविनाशी वा अरेऽयमात्मा। अतोऽलं पर्याप्तं वा अर इदं महद्भूतमनन्तमपारं यथाव्याख्यातं विज्ञानाय विज्ञातुम्। न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वादिति हि वक्ष्यति ॥ १३ ॥

कथं तर्हि प्रेत्य संज्ञा नास्तीत्युच्यते। शृणु। यत्र यस्मिन्नविद्याकल्पिते कार्यकरणसंघातोपाधिजनिते विशेषात्मनि खिल्यभावे हि यस्माद्द्वैतमिव परमार्थतोऽद्वैते ब्रह्मणि द्वैतमिव भिन्नमिव वस्त्वन्तरमात्मन उपलक्ष्यते। ननु द्वैतेनोपमीयमानत्वाद्द्वैतस्य पारमार्थिकत्वमिति। न। 'वाचाऽऽरम्भणं विकारो नामधेयमि'ति श्रुत्यन्तरा'देकमेवाद्वितीयमात्मैवेदं सर्वमि'ति च। तत्तत्र यस्माद्द्वैतमिव तस्मादेवेतरोऽसौ परमात्मनः खिल्यभूत आत्माऽपरमार्थश्चन्द्रादेरिवोदकचन्द्रादिप्रतिबिम्ब इतरो घ्रातेतरेण घ्राणेनेतरं घ्रातव्यं जिघ्रति। इतर इतरमिति कारकप्रदर्शनार्थं जिघ्रतीति क्रियाफलयोरभिधानम्। यथा छिनत्तीति यथोद्यम्योद्यम्य निपातनं छेद्यस्य च द्वैधीभाव उभयं छिनत्तीत्येकेनैव शब्देनाभिधीयते क्रियायाः फलावसानत्वात्क्रियाव्यतिरेकेण च तत्फलस्यानुपलम्भात्। इतरो घ्रातेतरेण घ्राणेनेतरं घ्रातव्यं जिघ्रति तथा सर्वं पूर्ववद्विजानाति। इयमविद्यावदवस्था।

प्रमाणमाह—अविनाशीति। अविनाशित्वफलमाह—अत इति। पर्याप्तं विज्ञातुमिति सबन्धः। इदमित्यादिपदानां गतार्थत्वादव्याख्येयत्वं सूचयति—यथेति। विज्ञानघन एवेत्यत्र वाक्यशेषं प्रमाणयति—नहीति ॥१३॥

आत्मनो विज्ञानघनत्वं प्रामाणिकं चेत्तर्हि निषेधवाक्यमयुक्तमिति शङ्कते—कथमिति। अविद्याकृतविशेषविज्ञानाभावाभिप्रायेण निषेधवाक्योपपत्तिरित्युत्तरमाह—शृण्विति। यस्मिन्नुक्तलक्षणे खिल्यभावे सति यस्माद्यथोक्ते ब्रह्मणि द्वैतमिव द्वैतमुपलक्ष्यते तस्मात्तस्मिन्सतीतर इतरं जिघ्रतीति सबन्धः। द्वैतमिवेत्युक्तमनूद्य व्याचष्टे—भिन्नमिवेति। इवशब्दस्योपमार्थत्वमुपेत्य शङ्कते—नन्विति। द्वैतेन द्वैतस्योपमीयमानत्वाद्दृष्टान्तस्य दार्ष्टान्तिकस्य च तस्य वस्तुत्व स्यादुपमानोपमेययोश्चन्द्रमुखयोर्वस्तुत्वोपलम्भादित्यर्थः। द्वैतप्रपञ्चस्य मिथ्यात्ववादिश्रुतिविरोधान्न तस्य सत्यतेति परिहृति—न वाचाऽऽरम्भणमिति। तत्र तस्मिन्खिल्यभावे सतीति यावत्। स्वप्नादिद्वैतमिव जागरितेऽपि द्वैत यस्मादालक्ष्यते तस्मात्परमात्मन. सकाशादितरोऽसावात्मा खिल्यभूतोऽपरमार्थः सन्नितरं जिघ्रतीति योजना। परस्मादितरस्मिन्नात्मन्यपरमार्थे खिल्यभूते दृष्टान्तमाह—चन्द्रादेरिवेति। इतरशब्दमनूद्य तस्यार्थमाह—इतरो घ्रातेति। अविद्यादशाया सर्वाण्यपि कारकाणि सन्ति कर्तृकर्मनिर्देशस्य सर्वकारकोपलक्षणत्वादित्याह—इतर इति। क्रियाफलयोरेकशब्दत्वे दृष्टान्तं विवृणोति—यथेति। दृष्टान्तेऽपि विप्रतिपत्तिमाशङ्क्यानन्तरोक्तं हेतुमेव स्पष्टयति—क्रियेति। अतश्च जिघ्रतीत्यत्रापि क्रियाफलयोरेकशब्दत्वमविरुद्धमिति शेष'। उक्त वाक्यार्थमनूद्य वाक्यान्तरेष्वतिदिशति—इतर इति। तथेतरो द्रष्टेतरेण चक्षुषेतरं द्रष्टव्यं पश्यतीत्यादि द्रष्टव्यमिति शेष.। उत्तरेष्वपि वाक्येषु पूर्ववाक्यवत्कर्तृकर्मनिर्देशस्य सर्वकारकोपलक्षणत्वं क्रियापदस्य च क्रियातत्फलाभिधायित्वं तुल्यमित्याह—सर्वमिति। यत्र हीत्यादिवाक्यार्थमुपसंहरति—इयमिति।

---

१. द्वैतमिवेति—इव शब्दाद्द्वैतसत्यत्वापत्तिः इति न शङ्कनीयम्। इन्द्रजालः स्वप्नवद्भाति इत्यादिव्यवहारात् द्वैतस्य वाचारंभणश्रुत्या मिथ्यात्वात् वार्तिके (२-४-६२) अथवा सत्योऽपि मिथ्येव भाति इति व्यवहारात् इव शब्दो मिथ्यार्थक इति कल्पतरुकाराः (१-४-२१) इमं सन्दर्भमधिकृत्य प्रथमचतुर्थे 'वाक्यान्वयात्' इत्यधिकरणे विचारितम्। 'न वा अरे पत्युः कामाय पतिः प्रियो भवति आत्मनस्तु कामाय पतिः प्रियो भवति' 'आत्मा वा अरे द्रष्टव्य' इत्यादि। अत्र सशयः विज्ञानात्मनः जीवस्य द्रष्टव्यत्वमुच्यते उत परमात्मन इति प्रियसंसूचितेन भोक्त्रा आत्मना उपक्रमात् जीवः अस्मिन् प्रकरणे उपदिश्यत इति। अन्ते च विज्ञानघनः इति

यत्र तु ब्रह्मविद्ययाऽविद्या नाशमुपगमिता तत्राऽऽत्मव्यतिरेकेणान्यस्याभावः। यत्र वा अस्य ब्रह्मविदः सर्वं नामरूपाद्यात्मन्येव प्रविलापितमात्मैव संवृत्तं यत्रैवमात्मैवाभूत्तत्र केन करणेन कं घ्रातव्यं को जिघ्रेत्तथा पश्येद्विजानीयात्। सर्वत्र हि कारकसाध्या क्रिया। अतः कारकाभावेऽनुपपत्तिः क्रियायाः क्रियाभावे च फलाभावः। तस्मादविद्यायामेव सत्यां क्रियाकारकफलव्यवहारो न ब्रह्मविदः। आत्मत्वादेव सर्वस्य नाऽऽत्मव्यतिरेकेण कारकं ५ क्रियाफलं वाऽस्ति। न चानात्मा सन्सर्वमात्मैव भवति कस्यचित्। तस्मादविद्ययैवानात्मत्वं परिकल्पितं न तु परमार्थत आत्मव्यतिरेकेणास्ति किंचित्। तस्मात्परमार्थात्मैकत्वप्रत्यये क्रियाकारकफलप्रत्ययानुपपत्तिः। अतो विरोधाद्ब्रह्मविदः क्रियाणां तत्साधनानां चात्यन्तमेव निवृत्तिः। केन किमिति क्षेपार्थं वचनं प्रकारान्तरानुपपत्तिदर्शनार्थम्। केनचिदपि प्रकारेण क्रियाकरणादिकारकानुपपत्तेः। केनचित्कंचित्कश्चित्कथंचिन्न जिघ्रेदेवेत्यर्थः।

यत्राप्यविद्यावस्थायामन्योऽन्यं पश्यति तत्रापि येनेदं सर्वं विजानाति तं केन विजानीयाद्येन विजानाति १० तस्य करणस्य विज्ञेये विनियुक्तत्वात्। ज्ञातुश्च ज्ञेय एव हि जिज्ञासा नाऽऽत्मनि। न चाग्नेरिवाऽऽत्माऽऽत्मनो विषयो न चाविषये ज्ञातुर्ज्ञानमुपपद्यते। तस्माद्येनेदं सर्वं विजानाति तं विज्ञातारं केन करणेन को वाऽन्यो विजानीयात्। यदा तु पुनः परमार्थविवेकिनो ब्रह्मविदो विज्ञातैव केवलोऽद्वयो वर्तते तं विज्ञातारमरे केन विजानीयादिति॥ १४॥

इति बृहदारण्यकोपनिषद्भाष्ये द्वितीयाध्यायस्य चतुर्थं ब्राह्मणम्॥ ४॥

यत्र वा अस्येत्यादिवाक्यस्य तात्पर्यमाह—यत्र त्विति। उक्तेऽर्थे वाक्याक्षराणि व्याचष्टे—यत्रेति। तमेवार्थं १५ संक्षिपति—यत्रैवमिति। सर्वं कर्तृकरणादीति शेषः। तत्केनेत्यादि व्याकरोति—तत्रेति। किंशब्दस्याऽऽक्षेपार्थं कथयति—सर्वत्र हीति। ब्रह्मविदोऽपि कारकद्वारा क्रियादि स्वीक्रियतामित्याशङ्क्याऽऽह—आत्मत्वादिति। सर्वस्याऽऽत्मत्वासिद्धिमाशङ्क्य सर्वमात्मैवाभूदिति श्रुत्या समाधत्ते—न चेति। कथं तर्हि सर्वमात्मव्यतिरेकेण भातीत्याशङ्क्याऽऽह—तस्मादिति। भेदभानस्याविद्याकृतत्वे फलितमाह—तस्मात्परमार्थेति। तद्धेतोरज्ञानस्यापनीतत्वादिति शेषः। एकत्वप्रत्ययादज्ञाननिवृत्तिद्वारा क्रियादिप्रत्यये निवृत्तेऽपि क्रियादि स्यान्नेत्याह—अत इति। २० करणप्रमाणयोरभावे कार्यस्य विरुद्धत्वादिति यावत्। ननु किंशब्दे प्रश्नार्थे प्रतीयमाने कथं क्रियातत्साधनयोरत्यन्तनिवृत्तिर्विदुषो विवक्ष्यते तत्राऽऽह—केनेति। किंशब्दस्य प्रागेव क्षेपार्थत्वमुक्तं तच्च क्षेपार्थं वचो विदुषः सर्वप्रकारक्रियाकारकाद्यसंभवप्रदर्शनार्थमित्यत्यन्तमेव क्रियादिनिवृत्तिर्विदुषो युक्तेत्यर्थं। सर्वप्रकारानुपपत्तिमेवाभिनयति—केन-चिदिति।

कैवल्यावस्थामास्थाय सञ्ज्ञाभाववचनमित्युक्त्वा तत्रैव किंपुनर्न्यायं वक्तुमविद्यावस्थायामपि साक्षिणो ज्ञानाविषयत्वमाह—यत्रापीति। येन कूटस्थबोधेन व्याप्तो लोकः सर्वं जानाति तं साक्षिणं केन करणेन को वा ज्ञाता २५ जानीयादित्यत्र हेतुमाह—येनेति। येन चक्षुरादिना लोको जानाति तस्य विषयग्रहणेनैवोपक्षीणत्वान्न साक्षिणि प्रवृत्तिरित्यर्थः। आत्मनोऽसदिग्धभावत्वाच्च प्रमेयत्वासिद्धिरित्याह—ज्ञातुश्चेति। किंचाऽऽत्मा स्वेनैव ज्ञायते ज्ञात्रन्तरेण वा। नाऽऽद्य इत्याह—न चेति। न द्वितीय इत्याह—न चाविषय इति। ज्ञात्रन्तरस्याभावात्तस्याविषयोऽयमात्मा कुतस्तेन ज्ञातुं शक्यते। न हि ज्ञात्रन्तरमस्ति नान्योऽतोऽस्ति द्रष्टेत्यादिश्रुतेरित्यर्थः। आत्मनि प्रमातृप्रमाणयोरभावे ज्ञानाविषयत्वं फलतीत्याह—तस्मादिति। विज्ञातारमित्यादिवाक्यस्यार्थं प्रपञ्चयति—यदा ३० त्विति। तदेवं स्वरूपापेक्षं विज्ञानघनत्वं विशेषविज्ञानापेक्षं तु सञ्ज्ञाभाववचनमित्यविरोध इति॥१४॥

इति बृहदारण्यकभाष्यटीकायां द्वितीयाध्याये चतुर्थं ब्राह्मणम्॥ ४॥

---

विज्ञातारमिति च व्यपदेशात्। सिद्धान्तस्तु परमात्मोपदेश एवायम् वाक्यान्वयात् 'अमृतत्वस्य तु नाशास्ति वित्तेन' इति वित्तं निन्दित्वा अमृतत्वसाधनं ब्रूहि इति पृच्छन्त्यै मैत्रेय्यै उपदिशति। तत्र अमृतत्वसाधनब्रह्मज्ञानोपदेशात् तादृशज्ञानविषयः परं ब्रह्मैव तथा एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा 'इदं सर्वं यदयमात्मा' इति ३५ श्रुतं सर्वात्मत्वं प्रपञ्चस्रष्टृत्वं प्रपञ्चस्थितिहेतुत्वं प्रपञ्चलयाधारत्वं इत्यादिलिंगानि ब्रह्मण्येवोपपद्यन्ते। इत्येवमादिलिङ्गैः परमात्मोपदेश एवायमिति स्थिते जीवेनोपक्रमस्य जीवपरत्वसाधकत्वशंकायां सिद्धान्तसूत्रम् अवस्थितेरिति काशकृत्स्न. ब्रह्मणएव जीवात्मनाऽवस्थितेरित्यर्थः।

## अथ द्वितीयाध्यायस्य पंचमं ब्राह्मणम्

**इयं पृथिवी सर्वेषां भूतानां मध्वस्यै पृथिव्यै सर्वाणि भूतानि मधु यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं शारीरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् ॥१॥**

**यत्केवलं कर्मनिरपेक्षममृतत्वसाधनं तद्वक्तव्यमिति मैत्रेयीब्राह्मणमारब्धम्। तच्चाऽऽत्मज्ञानं सर्वसंन्यासाङ्गविशिष्टम्। आत्मनि च विज्ञाते सर्वमिदं विज्ञातं भवति। आत्मा च प्रियः सर्वस्मात्। तस्मादात्मा द्रष्टव्यः स च श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति च दर्शनप्रकारा उक्ताः। तत्र श्रोतव्य आचार्यागमाभ्याम्। मन्तव्यस्तर्कतः। तत्र च तर्क उक्त आत्मैवेदं सर्वमिति प्रतिज्ञातस्य हेतुवचनमात्मैकसामान्यत्वमात्मैकोद्भवत्वमात्मैकप्रलयत्वं च। तत्रायं हेतुरसिद्ध इत्याशङ्क्यत आत्मैकसामान्योद्भवप्रलयाख्यस्तदाशङ्कानिवृत्त्यर्थमेतद्ब्राह्मणमारभ्यते।**

**यस्मात्परस्परोपकार्योपकारकभूतं जगत्सर्वं पृथिव्यादि। यच्च लोके परस्परोपकार्योपकारकभूतं तदेककारणपूर्वकमेकसामान्यात्मकमेकप्रलयं च दृष्टम्। तस्मादिदमपि पृथिव्यादिलक्षणं जगत्परस्परोपकार्योपकारकत्वात्तथाभूतं भवितुमर्हति। एष ह्यर्थोऽस्मिन्ब्राह्मणे प्रकाश्यते। अथवाऽऽत्मैवेदं सर्वमिति प्रतिज्ञातस्याऽऽत्मोत्पत्तिस्थितिलयत्वं हेतुमुक्त्वा पुनरागमप्रधानेन मधुब्राह्मणेन प्रतिज्ञातस्यार्थस्य निगमनं क्रियते। तथाहि नैयायिकैरुक्तं हेत्वपदेशात्प्रतिज्ञायाः पुनर्वचनं निगमनमिति। अन्यैर्व्याख्यातमादुन्दुभिदृष्टान्ताच्छ्रोतव्यार्थमागमवचनं प्राङ्मधुब्राह्मणा-**

पूर्वोत्तरब्राह्मणयोः संगतिं वक्तुं वृत्तं कीर्तयति—**यत्केवलमिति।** कैवल्यं व्याचष्टे—**कर्मनिरपेक्षमिति।** तच्चाऽऽत्मज्ञानमुक्तिमिति सम्बन्धः। ततो निराकाङ्क्षत्वं सिद्धमिति चकारार्थः। आत्मज्ञानं सन्यासिनामेवेति नियन्तु विशिनष्टि—**सर्वेति।** ननु कुतस्ततो नैराकाङ्क्ष्यं सत्यपि तस्मिन्विज्ञेयान्तरसंभवादत आह—**आत्मनि चेति।** न वा अरे पत्युरित्यादावुक्तं स्मारयति—**आत्मा चेति।** तस्य निरतिशयप्रेमास्पदत्वेन परमानन्दत्वे फलितमाह—**तस्मादिति।** स चेद्दर्शनार्हस्तर्हि तद्दर्शने कानि साधनानीत्याशङ्क्याऽऽह—**स चेति।** दर्शनप्रकारा दर्शनस्योपायप्रभेदाः। श्रवणमननयोः स्वरूपविशेषं दर्शयति—**तत्रेति।** कोऽसौ तर्को येनाऽऽत्मा मन्तव्यो भवति तत्राऽऽह—**तत्र चेति।** दुन्दुभ्यादिग्रन्थः सप्तम्यर्थः। उक्तमेव तर्कं संगृह्णाति—**आत्मैवेति।** प्रधानादिवादमादाय हेत्वसिद्धिशङ्कायां तन्निराकरणार्थमिदं ब्राह्मणमिति संगतिं सगिरते—**तत्रायमिति।**

कथं हेत्वसिद्धिशङ्कोद्ध्रियते तत्राऽऽह—**यस्मादिति।** तस्मात्तथाभूतं भवितुमर्हतीत्युत्तरत्र सम्बन्धः। अन्योन्योपकार्योपकारकभूतं जगदेकचैतन्यानुविद्धमेकप्रकृतिकं चेत्यत्र व्याप्तिमाह—**यच्चेति।** दृष्टं स्वप्नादीति शेषः। दृष्टान्ते सिद्धमर्थं दार्ष्टान्तिके योजयति—**तस्मादिति।** तच्छब्दार्थं स्फुटयति—**परस्परेति।** तथाभूतमित्येककारणपूर्वकादि गृह्यते। विमतमेककारणकं परस्परोपकार्योपकारकभूतत्वात्स्वप्नवदित्ययुक्तं हेत्वसिद्धेः। न हि सर्वं जगत्परस्परोपकार्योपकारकभूतमित्याशङ्क्याऽऽह—**एष हीति।** हेत्वसिद्धिशङ्कां परिहर्तुं ब्राह्मणमिति संगतिमुक्त्वा प्रकारान्तरेण तामाह—**अथवेति।** प्रतिज्ञाहेतू क्रमेणोक्त्वा हेतुसहितस्य प्रतिजार्थस्य पुनर्वचनं निगमनमित्यत्र तार्किकसंमतिमाह—**तथा हीति।** भर्तृप्रपञ्चानां ब्राह्मणारम्भप्रकारमनुवदति—**अन्यैरिति।** द्रष्टव्यादिवाक्यादारभ्याऽऽदुन्दुभिदृष्टान्तादागम-

१. अयमात्मेति निर्देशः विराड्हिरण्यगर्भपरः हिरण्यगर्भमेदानामादित्यादीना पृथक्-पृथक् मधुत्वमुक्तं पूर्वम्। अत्र तु सामस्त्येन मधुत्वमुच्यते अयमात्मेति आरंभे विराडुच्यते सप्तम्यन्तेन आत्मनि तेजोमय इत्यनेन हिरण्यगर्भं उच्यते ( वा )।

२. अथवेति—पूर्वत्र मैत्रेयीब्राह्मणे 'इदं सर्वं यदयमात्मा' इति वाक्येन। तत्र सर्वस्यात्ममात्रत्वे हेतुः उत्त[illegible]च्यते-दुन्दुभिदृष्टान्तेन आत्मसामान्यविशेषरूपत्व प्रपञ्चस्योक्तं तत्र सर्वे विशेषाः सामान्ये कल्पिताः इति व्याप्त्या आत्मनि कल्पित्वमुक्तं तेन आत्मव्यतिरेकेणाभावात् आत्ममात्रत्वनिर्णयः। ततः यथा आर्द्रैधाग्नेरिति आत्मनः सकाशादुत्पत्तिः। स यथा सर्वासामपा इति आत्मनि प्रलयश्लोकः तेन च आत्ममात्रत्वं स्थितम्। मधुब्राह्मणेन तु उक्तहेत्वोरसिद्धिशङ्कापरिहारः क्रियते आत्मैकोद्भव प्रलयश्च पुनर्निर्धार्यते इयं पृथिवीत्यादिना—तदुक्तं—यत् परस्परोपकारात्मकं तत् एककारणकमेकप्रलयं च दृष्टमिति। अथवापक्षे पूर्वोक्तस्यैवार्थस्य पुनः निगमनं क्रियत इति भेदः।

**इमा आपः सर्वेषां भूतानां मध्वासामपाँ सर्वाणि भूतानि मधु यश्चायमास्वप्सु तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मँ रैतसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥२॥**

न्मन्तव्यार्थमुपपत्तिप्रदर्शनेन मधुब्राह्मणेन तु निदिध्यासनविधिरुच्यत इति। सर्वथाऽपि तु यथाऽऽगमेनावधारितं
५ तर्कतस्तथैव मन्तव्यम्। यथा तर्कतो मतस्य तर्कागमाभ्यां निश्चितस्य तथैव निदिध्यासनं क्रियत इति पृथङ्निदिध्यासनविधिरनर्थक एव। तस्मात्पृथक्प्रकरणविभागोऽनर्थक इत्यस्मदभिप्रायः श्रवणमनननिदिध्यासनानामिति। सर्वथाऽपि त्वध्यायद्वयस्यार्थोऽस्मिन्ब्राह्मण उपसंह्रियते।

इयं पृथिवी प्रसिद्धा सर्वेषां भूतानां मधु सर्वेषां ब्रह्मादिस्तम्बपर्यन्तानां भूतानां प्राणिनां मधु कार्यं मध्विव मधु। यथैको मध्वपूपोऽनेकैर्मधुकरैर्निर्वर्तित एवमियं पृथिवी सर्वभूतनिर्वर्तिता। तथा सर्वाणि भूतानि पृथिव्यै
१० पृथिव्या अस्या मधु कार्यम्। किंच यश्चायं पुरुषोऽस्यां पृथिव्यां तेजोमयश्चिन्मात्रप्रकाशमयोऽमृतमयोऽमरणधर्मा पुरुषो यश्चायमध्यात्मं शारीरः शरीरे भवः पूर्ववत्तेजोमयोऽमृतमयः पुरुषः। स च लिङ्गाभिमानी। स च सर्वेषां भूतानामुपकारकरणत्वेन मधु। सर्वाणि च भूतान्यस्य मधु। चशब्दसामर्थ्यात्। एवमेतच्चतुष्टयं तावदेकं सर्वभूतकार्यं सर्वाणि च भूतान्यस्य कार्यम्। अतोऽस्यैककारणपूर्वकता यस्मादेकस्मात्कारणादेतज्जातं तदेवैकं परमार्थतो ब्रह्मेतरत्कार्यं वाचाऽऽरम्भणं विकारो नामधेयमात्रमित्येष मधुपर्यायाणां सर्वेषामर्थः संक्षेपतः। अयमेव स योऽयं
१५ प्रतिज्ञात इदं सर्वं यदयमात्मेति। इदममृतं यन्मैत्रेय्या अमृतत्वसाधनमुक्तमात्मविज्ञानमिदं तदमृतम्। इदं ब्रह्म यद्ब्रह्म ते ब्रवाणि ज्ञपयिष्यामीत्यध्यायादौ प्रकृतं यद्विषया च विद्या ब्रह्मविद्येत्युच्यत इदं सर्वं यस्माद्ब्रह्मणो विज्ञानात्सर्वं भवति॥ १ ॥

तथाऽऽपः। अध्यात्मं रेतस्यपां विशेषतोऽवस्थानम् ॥ २ ॥

वचन श्रोतव्य इत्युक्तश्रवणनिरूपणार्थम्। दुन्दुभिदृष्टान्तादारभ्य मधुब्राह्मणात्प्रागुपपत्तिप्रदर्शनेन मन्तव्य इत्युक्तमनन-
२० निरूपणार्थमागमवचनम्। निदिध्यासन व्याख्यातु पुनरेतद्ब्राह्मणमित्यर्थ। एतद्दूषयति—सर्वथाऽपीति। श्रवणादेर्विधेयत्वेऽविधेयत्वेऽपीति यावत्। अन्वयव्यतिरेकाभ्यां श्रवणे प्रवृत्तस्य तत्पौष्कल्ये सत्यर्थलब्धं मननं न विधिमपेक्षते। यथा तर्कतो मतं तत्त्वं तथा तस्य तर्कागमाभ्यां निश्चितस्योभयसामर्थ्यादेव निदिध्यासनसिद्धौ तदपि विध्यनपेक्षमेवेत्यर्थः। त्रयाणां विध्यनपेक्षत्वे फलितमाह—तस्मादिति। इति परकीयव्याख्यानमयुक्तमिति शेषः। सिद्धान्तेऽपि श्रवणादिविध्यभ्युपगमात्कथं परकीयं प्रस्थानं प्रत्याख्यातमित्याशङ्क्याऽऽह—सर्वथापि त्विति। तद्विध्यभ्युपगमेऽपीति
२५ यावत्।

एवं संगतिं ब्राह्मणस्योक्त्वा तदक्षराणि व्याकरोति—इयमित्यादिना। यदुक्तं मध्विव मध्विति तद्विवृणोति—यथेति। न केवलमुक्तं मधुद्वयमेव किंतु मध्वन्तरं चास्तीत्याह—किंचेति। पुरुषशब्दस्य क्षेत्रविषयत्वं वारयति—स चेति। तस्य पृथिवीवन्मधुत्वमाह—स च सर्वेषामिति। सर्वेषां च भूतानां तं प्रति मधुत्वं दर्शयति—सर्वाणि चेति। नन्वाद्यमेव मधुद्वयं श्रुतमश्रुतं तु मधुद्वयमशक्यं कल्पयितुं कल्पकाभावादत आह—चशब्देति। प्रथमपर्यायार्थमुप-
३० संहरति—एवमिति। पृथिवी सर्वाणि भूतानि पार्थिवः पुरुषः शारीरश्चेति चतुष्टयमेकं मध्विति शेषः। मधुशब्दार्थमाह—सर्वेति। अस्येति पृथिव्यादेरिति यावत्। परस्परमुपकार्योपकारकभावे फलितमाह—अत इति। अस्येति सर्वं जगदुच्यते। उक्तं च यस्मात्परस्परोपकार्योपकारकभूतमित्यादि। भवत्वनेन न्यायेन मधुपर्यायेषु सर्वेषु कारणोपदेशो ब्रह्मोपदेशस्तु कथमित्याशङ्क्याऽऽह—यस्मादिति। स प्रकृत आत्मैवायं चतुर्धोक्तो भेद इति योजना। इदमिति चतुष्टयकल्पनाधिष्ठानविषयं ज्ञानं परामृशति। इदं ब्रह्मेत्यत्र चतुष्टयाधिष्ठानमिदंशब्दार्थः। तृतीये च तस्य प्रकृतत्वं
३५ दर्शयति—यद्विषयेति। इदं सर्वमित्यत्र ब्रह्मज्ञानमिदमित्युक्तम्। सर्वं सर्वाप्तिसाधनमिति यावत्। तदेव स्पष्टयति—यस्मादिति ॥१॥

यथा पृथिवी मधुत्वेन व्याख्याता तथाऽऽपोऽपि व्याख्येया इत्याह—तथेति। रेतस इति विशेषणस्यार्थमाह—अध्यात्ममिति। 'आपो रेतो भूत्वा शिश्नं प्राविशन्' इति हि श्रुत्यन्तरम् ॥ २ ॥

अयमग्निः सर्वेषां भूतानां मध्वस्याग्नेः सर्वाणि भूतानि मधु यश्चाय-
मस्मिन्नग्नौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं वाङ्मयस्तेजो-
मयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥३॥

अयं वायुः सर्वेषां भूतानां मध्वस्य वायोः सर्वाणि भूतानि मधु
यश्चायमस्मिन्वायौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं प्राणस्तेजो- ५
मयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥४॥

अयमादित्यः सर्वेषां भूतानां मध्वस्यादित्यस्य सर्वाणि भूतानि मधु
यश्चायमस्मिन्नादित्ये तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं चाक्षुषस्तेजो-
मयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥५॥

इमा दिशः सर्वेषां भूतानां मध्वासां दिशाँ सर्वाणि भूतानि मधु यश्चाय- १०
मासु दिक्षु तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मँ श्रौत्रः प्रातिश्रुत्कस्तेजो-
मयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥६॥

तथाऽग्निः । वाच्यग्नेर्विशेषतोऽवस्थानम् ॥ ३ ॥

तथा वायुः । अध्यात्मं प्राणो भूतानां शरीरारम्भकत्वेनोपकारान्मधुत्वं तदन्तर्गतानां तेजोमयादीनां करण- १५
त्वेनोपकारान्मधुत्वम् । तथा चोक्तं "तस्यै वाचः पृथिवी शरीरं ज्योतीरूपमयमग्निः" इति ॥ ४ ॥

तथाऽऽदित्यो मधु । चाक्षुषोऽध्यात्मम् ॥ ५ ॥

तथा दिशो मधु । दिशां यद्यपि श्रोत्रमध्यात्मं शब्दप्रतिश्रवणवेलायां तु विशेषतः संनिहितो भवतीत्य-
ध्यात्मं प्रातिश्रुत्कः प्रतिश्रुत्कायां प्रतिश्रवणवेलायां भवः प्रातिश्रुत्कः ॥ ६ ॥

पृथिव्यामप्सु चोक्तं न्यायमग्नावतिदिशति—तथेति । वाङ्मय इत्यस्यार्थमाह—वाचीति । अग्निर्वाग्भूत्वा २०
मुखं प्राविशदिति हि श्रूयते ॥ ३ ॥

अग्नावुक्तं न्यायं वायौ योजयति—तथेति । 'वायुः प्राणो भूत्वा नासिके प्राविशत्' इति श्रुत्यन्तरमाश्रि-
त्याऽऽह—अध्यात्ममिति । पृथिव्यादीनां तदन्तर्वर्तिनां च पुरुषाणामेकत्रान्यथोपात्तानामेकरूपं मधुत्वमिति शङ्कां परि-
हरन्नवान्तरविभागमाह—भूतानामिति । पृथिव्यादीनां कार्यत्वं तेजोमयादीनां करणत्वमित्यत्र सप्तान्नाधिकारसंमति-
माह—तथा चोक्तमिति ॥४॥
२५

यद्यप्यादित्यस्तृतीये भूतेऽन्तर्भवति तथापि देवताभेदमाश्रित्याग्नावुक्तं न्यायं तस्मिन्नतिदिशति—तथेति ।
'आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत्' इति श्रुतिमाश्रित्याऽऽह—चाक्षुष इति ॥ ५ ॥

आदित्यगतं न्यायं दिक्षु संपादयति—तथेति । 'दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन्' इति श्रुतेः श्रोत्रमेव
दिशामध्यात्मं तथा चाध्यात्मं श्रौत्र इत्येव वक्तव्ये कथं प्रातिश्रुत्क इति विशेषणमित्याशङ्क्याऽऽह—दिशामिति ।
तथापीत्यस्मिन्नर्थे तुशब्दः ॥६॥
३०

अयं चन्द्रः सर्वेषां भूतानां मध्वस्य चन्द्रस्य सर्वाणि भूतानि मधु यश्चायमस्मिँश्चन्द्रे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं मानसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥७॥

इयं विद्युत्सर्वेषां भूतानां मध्वस्यै विद्युतः सर्वाणि भूतानि मधु यश्चायमस्यां विद्युति तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं तैजसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥८॥

अयँ स्तनयित्नुः सर्वेषां भूतानां मध्वस्य स्तनयित्नोः सर्वाणि भूतानि मधु यश्चायमस्मिन्स्तनयित्नौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मँ शाब्दः सौवरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥९॥

अयमाकाशः सर्वेषां भूतानां मध्वस्याकाशस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्नाकाशे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मँ हृद्याकाशस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥१०॥

अयं धर्मः सर्वेषां भूतानां मध्वस्य धर्मस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्धर्मे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं धार्मस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥११॥

तथा चन्द्रः। अध्यात्मं मानसः ॥ ७ ॥

तथा विद्युत्। त्वक्तेजसि भवस्तैजसोऽध्यात्मम् ॥ ८ ॥

तथा स्तनयित्नुः। शब्दे भवः शाब्दोऽध्यात्मं यद्यपि तथाऽपि स्वरे विशेषतो भवतीति सौवरोऽध्यात्मम् ॥ ९ ॥

तथाऽऽकाशः। अध्यात्मं हृद्याकाशः ॥ १० ॥

आकाशान्ताः पृथिव्यादयो भूतगणा देवतागणाश्च कार्यकरणसंघातात्मन उपकुर्वन्तो मधु भवन्ति प्रतिशरीरिणमित्युक्तम्। येन ते प्रयुक्ताः शरीरिभिः संबध्यमाना मधुत्वेनोपकुर्वन्ति तद्वक्तव्यमितीदमारभ्यते—

अयं धर्मोऽयमित्यप्रत्यक्षोऽपि धर्मः कार्येण तत्प्रयुक्तेन प्रत्यक्षेण व्यपदिश्यतेऽयं धर्म इति प्रत्यक्षवत्। धर्मश्च व्याख्यातः श्रुतिस्मृतिलक्षणः क्षत्त्रादीनामपि नियन्ता जगतो वैचित्र्यकृत्पृथिव्यादीनां परिणामहेतुत्वात्प्राणिभिरनुष्ठीयमानः।

दिक्षु व्यवस्थित न्यायं चन्द्रे दर्शयति—तथेति। 'चन्द्रमा मनो भूत्वा हृदयं प्राविशत्' इति श्रुतिमनुसृत्याऽऽह—अध्यात्ममिति ॥७॥

चन्द्रवद्विद्युतोऽपि मधुत्वमाह—तथेति। अध्यात्मं तैजस इत्यस्यार्थमाह—त्वगिति ॥८॥

पर्जन्योऽपि विद्युदादिवत्सर्वेषां भूतानां मधु भवतीत्याह—तथेति। अध्यात्मं शाब्दः सौवर इत्यस्यार्थमाह—शब्दे भव इति। यद्यप्यध्यात्मं शब्दे भव इति व्युत्पत्त्या शाब्दः पुरुषस्तथाऽपि स्वरे विशेषतो भवतीत्यध्यात्मं सौवरः पुरुष इति योजना ॥९॥

स्तनयित्नावुक्तं न्यायमाकाशेऽतिदिशति—तथेति ॥१०॥

पर्यायान्तरं वृत्तमनूद्योत्थापयति—आकाशान्ता इति। प्रतिशरीरिणं सर्वेषां शरीरिणां प्रत्येकमिति यावत्। धर्मस्य शास्त्रैकगम्यत्वेन परोक्षत्वादयमिति निर्देशानर्हत्वमाशङ्क्याऽऽह—अयमितीति। यद्यपि धर्मोऽप्रत्यक्षोऽयमिति निर्देशनार्हस्तथाऽपि पृथिव्यादिधर्मकार्यस्य प्रत्यक्षत्वात्तेन कारणस्याभेदमौपचारिकमादाय प्रत्यक्षघटादिवदयं धर्म इति व्यपदेशोपपत्तिरित्यर्थः। कोऽसौ धर्मो यस्य प्रत्यक्षत्वेन व्यपदेशस्तत्राऽऽह—धर्मश्चेति। व्याख्यातस्तच्छ्रेयोरूपमत्यसृजत धर्ममित्यादाविति शेषः। तर्हि तस्य प्रत्यक्षत्वान्न चोदनालक्षणत्वमित्याशङ्क्य गौणत्वमुख्यत्वाभ्यामविरोधमभिप्रेत्याऽऽह—श्रुतीति। तस्मिन्नेव कार्यलिङ्गकमनुमानं सूचयति—क्षत्त्रादीनामिति। तत्रैवानुमानान्तरं विवक्षित्वोक्तम्—

इदꣳ सत्यꣳ सर्वेषां भूतानां मध्वस्य सत्यस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्सत्ये तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मꣳ सात्यस्तेजो-मयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥१२॥

इदं मानुषꣳ सर्वेषां भूतानां मध्वस्य मानुषस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्मानुषे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं मानुषस्तेजो-मयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥१३॥ ५

ष्ठीयमानरूपश्च । तेन चायं धर्म इति प्रत्यक्षेण व्यपदेशः । सत्यधर्मयोश्चाभेदेन निर्देशः कृतः शास्त्राचारलक्षणयोरिह तु भेदेन व्यपदेश एकत्वे सत्यपि । दृष्टादृष्टभेदरूपेण कार्यारम्भकत्वात् । यस्त्वदृष्टोऽपूर्वाख्यो धर्मः स सामान्यविशेषा-त्मनाऽदृष्टेन रूपेण कार्यमारभते सामान्यरूपेण पृथिव्यादीनां प्रयोक्ता भवति विशेषरूपेण चाध्यात्मं कार्यकरण-संघातस्य । तत्र पृथिव्यादीनां प्रयोक्तरि यश्चायमस्मिन्धर्मे तेजोमयस्तथाऽध्यात्मं कार्यकरणसंघातकर्तरि धर्मे १० भवो धार्मः ॥११॥

तथा दृष्टेनानुष्ठीयमानेनाऽऽचाररूपेण सत्याख्यो भवति स एव धर्मः सोऽपि द्विप्रकार एव सामान्यविशेषा-त्मरूपेण । सामान्यरूपः पृथिव्यादिसमवेतो विशेषरूपः कार्यकरणसंघातसमवेतः । तत्र पृथिव्यादिसमवेते वर्तमानक्रियारूपे सत्ये तथाऽध्यात्मं कार्यकरणसंघातसमवेते सत्ये भवः सात्यः । 'सत्येन वायुरावाती'ति श्रुत्यन्तरात् ॥१२॥ १५

धर्मसत्याभ्यां प्रयुक्तोऽयं कार्यकरणसंघातविशेषः । स येन जातिविशेषेण संयुक्तो भवति स जातिविशेषो मानुषादिः । तत्र मानुषादिजातिविशिष्टा एव सर्वे प्राणिनिकायाः परस्परोपकार्योपकारकभावेन वर्तमाना दृश्यन्ते । अतो मानुषादिजातिरपि सर्वेषां भूतानां मधु । तत्र मानुषादिजातिरपि बाह्याऽऽध्यात्मिकी चेत्युभयथा निर्देश-भाग्भवति ॥१३॥

जगत इति । जगद्वैचित्र्यकारित्वे हेतुमाह—पृथिव्यादीनामिति । धर्मस्य प्रत्यक्षेण व्यपदेशे हेत्वन्तरमाह—प्राणिभि- २० रिति । तेनानुष्ठीयमानाचारेण प्रत्यक्षेण धर्मस्य लक्ष्यमाणत्वेनेति यावत् । ननु तृतीयेऽध्याये 'यो वै स धर्मः सत्य वै तदि'ति सत्यधर्मयोरभेदवचनात्तयोर्भेदेनात्र पर्यायद्वयोपादानमनुपपन्नमत आह—सत्येति । कथमेकत्वे सति भेदेनोक्ति-रित्याशङ्क्याऽऽह—दृष्टेति । अदृष्टेन रूपेण कार्यारम्भकत्वं प्रकटयति—यस्त्विति । सामान्यात्मनाऽऽरम्भकत्वमुदा-हरति—सामान्यरूपेणेति । विशेषात्मना कार्यारम्भकत्वं व्यनक्ति—विशेषेति । धर्मस्य द्वौ भेदावुक्तौ तयोर्मध्ये प्रथममधिकृत्य यश्चेत्यादि वाक्यमित्याह—तत्रेति । द्वितीयं विषयीकृत्य यश्चायमध्यात्ममित्यादि प्रवृत्तमित्याह— २५ तथेति ॥११॥

इदं सत्यमित्यस्मिन्पर्याये सत्यशब्दार्थमाह—तथा दृष्टेनेति । सोऽपीत्यपिशब्दो धर्मोदाहरणार्थः । द्वयोरपि प्रकारयोर्विनियोगं विभजते—सामान्यरूप इति । उभयत्र समवेतशब्दस्तत्र तत्र कारणत्वेनानुगत्यर्थः । यश्चाय-मस्मिन्नित्यादिवाक्यस्य विषयमाह—तत्रेति । सत्ये यश्चेत्यादि वाक्यमिति शेषः । यश्चायमध्यात्ममित्यादिवाक्यस्य विषयमाह—तथाऽध्यात्ममिति । सत्यस्य पृथिव्यादौ कार्यकरणसंघाते च कारणत्वे प्रमाणमाह—सत्येनेति ॥१२॥ ३०

इदं मानुषमित्यत्र मानुषग्रहणं सर्वजात्युपलक्षणमित्यभिप्रेत्याऽऽह—धर्मसत्याभ्यामिति । कथं पुनरेषा जातिः सर्वेषां भूतानां मधु भवति तत्राऽऽह—तत्रेति । भोगभूमिः सप्तम्यर्थः । यश्चायमस्मिन्नित्यादिवाक्यद्वयस्य विषयभेदं दर्शयति—तत्रेति । व्यवहारभूमाविति यावत् । धर्मादिवदित्यपेरर्थः । निर्देष्टुः स्वशरीरनिष्ठा जातिराध्यात्मिकी शरीरान्तराश्रिता तु बाह्येति भेदः । वस्तुतस्तु तत्र नोभयथात्वमित्यभिप्रेत्य निर्देशभागित्युक्तम् ॥१३॥

अयमात्मा सर्वेषां भूतानां मध्वस्यात्मनः सर्वाणि भूतानि मधु
यश्चायमस्मिन्नात्मनि तेजोमयोऽमृतमयः पुरुषो यश्चायमात्मा
तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् ॥१४॥
स वा अयमात्मा सर्वेषां भूतानामधिपतिः सर्वेषां भूतानां राजा तद्यथा
५ रथनाभौ च रथनेमौ चाराः सर्वे समर्पिता एवमेवास्मिन्नात्मनि सर्वाणि
भूतानि सर्वे देवाः सर्वे लोकाः सर्वे प्राणाः सर्व एत आत्मानः समर्पिताः ॥१५॥

यस्तु कार्यकरणसंघातो मानुषादिजातिविशिष्टः सोऽयमात्मा सर्वेषां भूतानां मधु। नन्वयं शारीरशब्देन निर्दिष्टः पृथिवीपर्याय एव। न। पार्थिवांशस्यैव तत्र ग्रहणात्। इह तु सर्वात्मा प्रत्यस्तमिताध्यात्माधिभूतादिसर्वविशेषः सर्वभूतदेवतागणविशिष्टः कार्यकरणसंघातः सोऽयमात्मेत्युच्यते। तस्मिन्नस्मिन्नात्मनि तेजोमयोऽमृतमयः
१० पुरुषोऽमूर्तरसः सर्वात्मको निर्दिश्यते। एकदेशेन तु पृथिव्यादिषु निर्दिष्टोऽत्राध्यात्मविशेषाभावात्स न निर्दिश्यते। यस्तु परिशिष्टो विज्ञानमयो यदर्थोऽयं देहलिङ्गसंघात आत्मा स यश्चायमात्मेत्युच्यते ॥ १४ ॥

यस्मिन्नात्मनि परिशिष्टो विज्ञानमयोऽन्त्ये पर्याये प्रवेशितः सोऽयमात्मा। तस्मिन्नविद्याकृतकार्यकरणसंघातोपाधिविशिष्टे ब्रह्मविद्यया परमार्थात्मनि प्रवेशिते स एवमुक्तोऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघनभूतः सर्वेषां भूतानाममयात्मा सर्वरूपास्थः सर्वेषां भूतानामधिपतिः सर्वभूतानां स्वतन्त्रो न कुमारामात्यवत्किं तर्हि सर्वेषां भूतानां
१५ राजा। राजत्वविशेषणमधिपतिरिति। भवति कश्चिद्राजोचितवृत्तिमाश्रित्य[1] राजा न त्वधिपतिरतो विशिनष्ट्यधिपतिरिति। एवं सर्वभूतात्मा विद्वान्ब्रह्मविन्मुक्तो भवति। यदुक्तं ब्रह्मविद्यया सर्वं भविष्यन्तो मनुष्या मन्यन्ते किमु तद्ब्रह्मावेद्यस्मात्तत्सर्वमभवदितीदं तद्व्याख्यातम्। एवमात्मानमेव सर्वात्मत्वेनाऽऽचार्यागमाभ्यां श्रुत्वा मत्वा तर्कतो विज्ञाय साक्षादेवं यथा मधुब्राह्मणे दर्शितं तथा। तस्माद्ब्रह्मविज्ञानादेवंलक्षणात्पूर्वमपि ब्रह्मैव सदविद्ययाऽब्रह्मा-

अन्तिमपर्यायमवतारयति—यस्त्विति। आत्मनः शारीरेण गतत्वात्पुनरुक्तिरनुपयुक्तेति शङ्कते—नन्विति।
२० अवयवावयविविषयत्वेन पर्यायद्वयमपुनरुक्तमिति परिहरति—नेत्यादिना। परमात्मानं व्यावर्तयति—सर्वभूतेति। चेतनं व्यवच्छिनत्ति—कार्येति। यश्चायमस्मिन्नित्यादिवाक्यस्य विषयमाह—तस्मिन्निति। यश्चायमध्यात्ममिति किमिति नोक्तमित्याशङ्क्याऽऽह—एकदेशेनेति। अत्रेत्यन्त्यपर्यायोक्तिः। यश्चायमात्मेत्यस्यार्थमाह—यस्त्विति ॥१४॥

स वा अयमात्मेत्यस्यार्थमाह—यस्मिन्निति। परिशिष्टः पूर्वपर्यायेष्वनुपदिष्टोऽन्त्ये च पर्याये यश्चायमात्मेत्युक्तो विज्ञानमयो यस्मिन्नात्मनि खिल्यदृष्टान्तवचसा प्रवेशितस्तेन परेणाऽऽत्मना तादात्म्यं गतो विद्वानत्राऽऽत्मशब्दार्थः।
२५ उक्तमात्मशब्दार्थमनूद्य सर्वेषामित्यादि व्याचष्टे—तस्मिन्निति। अविद्यया कृतः कार्यकरणसंघात एवोपाधिस्तेन विशिष्टे जीवे तस्मिन्परमार्थात्मनि ब्रह्मणि ब्रह्मविद्यया प्रवेशिते स एवायमात्मा यथोक्तविशेषणः सर्वरूपास्थः सर्वेषां भूतानामधिपतिरिति संबन्धः। व्याख्येयं पदमादाय तस्य वाच्यमर्थमाह—सर्वेषामिति। तस्यैव विवक्षितोऽर्थः सर्वरूपास्थ इत्युक्तः। स्वातन्त्र्यं व्यतिरेकद्वारा स्फोरयति—नेत्यादिना। सर्वेषां भूतानां राजेत्येतावतैव यथोक्तार्थसिद्धौ किमित्यधिपतिरिति विशेषणमित्याशङ्क्याऽऽह—राजत्वेति। राजत्वजात्यनाक्रान्तोऽपि कश्चित्तदुचितपरिपालनादिव्यवहार-
३० वानित्युपलब्धं न पुनस्तस्य स्वातन्त्र्यं राजपरतन्त्रत्वात्तस्मात्ततो व्यवच्छेदार्थमधिपतिरिति विशेषणमित्यर्थः। राजाऽधिपतिरित्युभयोरपि मिथो विशेषणविशेष्यत्वमभिप्रेत्य वाक्यार्थं निगमयति—एवमिति। उक्तस्य विद्याफलस्य तृतीयेनैकवाक्यत्वमाह—यदुक्तमिति। तदेव व्याख्यातं स्फोरयति—एवमिति। मैत्रेयीब्राह्मणोक्तक्रमेणेति यावत्। एवमित्यस्यार्थं कथयति—यथेति। मधुब्राह्मणे पूर्वब्राह्मणे चोक्तक्रमेणाऽऽत्मनि श्रवणादित्रयं संपाद्य विद्वान्ब्रह्माभवदिति संबन्धः। ननु मोक्षावस्थायामेव विदुषो ब्रह्मत्वापरिच्छिन्नत्वं न प्राच्यामविद्यादशायामित्याशङ्क्याऽऽह—तस्मादिति।
३५ समानाधिकरणं पञ्चमीत्रयम्। एवंलक्षणादहं ब्रह्मास्मीति श्रवणादिकृतात्तत्त्वसाक्षात्कारादिति यावत्। अब्रह्मत्वादि-

---

१. राजोचितवृत्तिमाश्रित्य—वृत्तिः प्रजापरिपालनं न तु स अधिपतिः स्वतन्त्रः राजाधीनत्वात्। पुरः पुरुष आविशत् इत्यनेन ब्रह्मण एव जीवरूपेण प्रवेश उक्तः यथा 'तत्सृष्ट्वा तदेवानुप्राविशत्' इति। अत्र पृथक् जीवप्रवेशानुक्त्या ब्रह्मैव जीवभावं प्राप इत्यर्थः स्पष्टः। यदत्र जीवशरीरकं ब्रह्मेत्यर्थ उच्यते तेनापि चिदचिच्छरीरकस्य सर्वशरीरविशिष्टस्य प्रवेशासंभवादयुक्तमिदम्। सृष्टेषु शरीरेषु पृथक् जीवप्रवेशानुक्तेः।

सोऽत्सर्वमेव च सदसर्वमासीत्तां त्वविद्यामस्माद्विज्ञानात्तिरस्कृत्य ब्रह्मविद्ब्रह्मैव सन्ब्रह्माभवत्सर्वः स सर्वमभवत् ।

परिसमाप्तः शास्त्रार्थो यदर्थः प्रस्तुतः । तस्मिन्नेतस्मिन्सर्वात्मभूते ब्रह्मविदि सर्वात्मनि सर्वं जगत्समर्पितमित्येतस्मिन्नर्थे दृष्टान्त उपादीयते—तद्यथा रथनाभौ च रथनेमौ चाराः सर्वे समर्पिता इति प्रसिद्धोऽर्थः । एवमेवास्मिन्नात्मनि परमात्मभूते ब्रह्मविदि सर्वाणि भूतानि ब्रह्मादिस्तम्बपर्यन्तानि सर्वे देवा अग्न्यादयः सर्वे लोका भूरादयः सर्वे प्राणा वागादयः सर्व एत आत्मानो जलचन्द्रवत्प्रतिशरीरानुप्रवेशिनोऽविद्याकल्पिताः । सर्वं जगदस्मिन्समर्पितम् । यदुक्तं ब्रह्मविद्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्चेति । स एष सर्वात्मभावो व्याख्यातः । स एष विद्वान्ब्रह्मवित्सर्वोपाधिः सर्वात्मा सर्वो भवति । निरुपाधिर्निरुपाख्योऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघनोऽजोऽजरोऽमृतोऽभयोऽचलो नेति नेत्यस्थूलोऽनणुरित्येवंविशेषणो भवति । ५

तमेतमर्थमजानन्तस्तार्किकाः केचित्पण्डितंमन्याश्चाऽऽगमविदः शास्त्रार्थं विरुद्धं मन्यमाना विकल्पयन्तो मोहमगाधमुपयान्ति । तमेतमर्थमेतौ मन्त्रावनुवदतः—"अनेजदेकं मनसो जवीयः" "तदेजति तन्नैजति" इति । तथा च तैत्तिरीयके—"यस्मात्परं नापरमस्ति किंचित्" । "एतत्साम गायन्नास्ते" । "अहमन्नमहमन्नमहमन्नम्" इत्यादि । तथा च च्छान्दोग्ये—"जक्षत्क्रीडन्रममाणः" स यदि पितृलोककामः "सर्वगन्धः सर्वरसः" सर्वज्ञः सर्ववित्" इत्यादि । आथर्वणे च—"दूरात्सुदूरे तदिहान्तिके च" । कठवल्लीष्वपि —"अणोरणीयान्महतो महीयान्" "कस्तं मदामदं देवम्" "तद्धावतोऽन्यानत्येति तिष्ठत्" इति च । तथा गीतासु—"अहं क्रतुरहं यज्ञः" "पिताऽहमस्य जगतः" "नाऽऽदत्ते कस्यचित्पापम्" "समं सर्वेषु भूतेषु" "अविभक्तं विभक्तेषु" "ग्रसिष्णु प्रभविष्णु च" इत्येवमाद्यागमार्थं विरुद्धमिव प्रतिभान्तं मन्यमानाः स्वचित्तसामर्थ्यादर्थनिर्णयाय विकल्पयन्तोऽस्त्यात्मा नास्त्यात्मा कर्ताऽकर्ता मुक्तो बद्धः क्षणिको विज्ञानमात्रं शून्यं चेत्येवं विकल्पयन्तो न पारमधिगच्छन्त्यविद्याया विरुद्धधर्मदर्शित्वात्सर्वत्र । तस्मात्तत्र य एव श्रुत्याचार्यदर्शितमार्गानुसारिणस्त एवाविद्यायाः पारमधिगच्छन्ति । त एव चास्मान्मोहसमुद्रादगाधादुत्तरिष्यन्ति नेतरे स्वबुद्धिकौशलानुसारिणः ॥१५॥ १० १५

धीष्वस्तिस्तर्हि कथमित्याशङ्कयाऽऽह—तां त्विति । २०

वृत्तमनूद्योत्तरग्रन्थमवतारयति—परिसमाप्त इति । यस्य शास्त्रस्यार्थो विषयप्रयोजनाख्यो ब्रह्मकण्डिकायां चतुर्थादौ च प्रस्तुतस्तस्यार्थो यथोक्तन्यायेन निर्धारित इत्यनुवादार्थः । सर्वात्मभूतत्वं सर्पादिवत्कल्पितानां सर्वेषामात्मभावेन स्थितत्वम् । सर्वं ब्रह्म तद्रूपत्वं सर्वात्मत्वम् । सर्वं एत आत्मान कुतो भेदोक्तिरात्मैक्यस्य शास्त्रीयत्वादित्याशङ्कयाऽऽह—जलचन्द्रवदिति । दार्ष्टान्तिकभागस्य संपिण्डितमर्थमाह—सर्वमिति । उक्तस्य सर्वात्मभावस्य तृतीयेनैकवाक्यत्वं निर्दिशति—यदुक्तमिति । सर्वात्मभावे विदुषः सप्रपञ्चत्वं स्यादित्याशङ्कयाऽऽह—स एष इति । सर्वेण कल्पितेन द्वैतेन सहितमधिष्ठानभूतं ब्रह्म प्रत्यग्भावेन पश्यन्विद्वान्सर्वोपाधिस्तत्तद्रूपेण स्थितः सर्वो भवति । तदेवं कल्पितं सप्रपञ्चत्वमविद्वद्दृष्ट्या विदुषोऽभीष्टमित्यर्थः विद्वद्दृष्ट्या तस्य निष्प्रपञ्चत्वं दर्शयति—निरुपाधिरिति । निरुपाख्यत्वं शब्दप्रत्ययागोचरत्वं ब्रह्मणः सप्रपञ्चत्वमविद्याकृत निष्प्रपञ्चत्वं तात्त्विकमित्यागमार्थाविरोध उक्तः । २५

कथं तर्हि तार्किका मीमांसकाश्च शास्त्रार्थं विरुद्ध पश्यन्तो ब्रह्मास्ति नास्तीत्यादि विकल्पयन्तो मोमुह्यन्ते तत्राऽऽह—तमेतमिति । वादिव्यामोहस्याज्ञानं मूलमुक्त्वा प्रकृते ब्रह्मणो द्वैरूप्ये प्रमाणमाह—तमित्यादिना । तैत्तिरीयश्रुतावादिशब्देनाहमन्नमन्नमदन्तमद्मीत्यादि गृह्यते । छान्दोग्यश्रुतावादिशब्देन सत्यकामः सत्यसंकल्पो विजरो विमृत्युरित्यादि गृहीतम् । श्रुतिसिद्धे द्वैरूप्ये स्मृतिमपि सम्वादयति—तथेति । पूर्वोक्तप्रकारेणाऽऽगमार्थविरोधसमाधाने विद्यमानेऽपि तदज्ञानाद्वादिविभ्रान्तिरित्युपसंहरति—इत्येवमादीति । विकल्पमेव स्फुटयति—अस्तीति । सर्वत्र श्रुतिस्मृतिष्वात्मनीति यावत् । के तर्हि पारमविद्यायाः समधिगच्छन्ति तत्राऽऽह—तस्मादिति । ब्रह्मज्ञानफलमाह—त एवेति ॥१५॥ ३० ३५

१. जलचन्द्रवदिति—प्रतिबिंबवादः समर्थितः विद्वान् सर्वोपाधिः जीवन्मुक्तः विद्वद्दृष्ट्या सर्वोपाधिः स्वतस्तु निरुपाधिः । २. अविद्याकल्पिताः—अविद्यातत्कार्यरूपोपाधिविशिष्टत्वेन अपरमार्थाः ।

३. मोहकमन्त्राः "अनेजत्" अचलं, "मनसो जवीय" इति चलम् । "यस्मात् परं नापरमस्ति" इति स्ववचनविरोधः वर्तमानस्य परापरान्यतरत्वप्रसंगात् अहमन्नमहमन्नाद इति विरोधः जक्षदित्यादिः संसारपरं, सर्वगन्ध इत्यसंसारित्वद्योतकं तयोपरिष्टात् । इमं मोहं निरसितुं सांप्रदायिका एव प्रभवन्ति अविद्यया चलनं पारमार्थिकमचलनं चोपपद्यते इति भावः । ४०

**इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच । तदेतदृषिः पश्यन्नवोचत् ।**
**तद्वां नरा सनये दँस उग्रमाविष्कृणोमि तन्यतुर्न वृष्टिम् ।**
**दध्यङ् ह यन्मध्वाथर्वणो वामश्वस्य शीर्ष्णा प्र यदीमुवाचेति ॥१६॥**

परिसमाप्ता ब्रह्मविद्याऽमृतत्वसाधनभूता । यां मैत्रेयी पृष्टवती भर्तारं "यदेव भगवानमृतत्वसाधनं वेद तदेव ५ मे ब्रूहीति । एतस्या ब्रह्मविद्यायाः स्तुत्यर्थेयमाख्यायिकाऽऽनीता तस्या आख्यायिकायाः संक्षेपतोऽर्थप्रकाशनार्थावेतौ मन्त्रौ भवतः । एवं हि मन्त्रब्राह्मणाभ्यां स्तुतत्वादमृतत्वसर्वप्राप्तिसाधनत्वं ब्रह्मविद्यायाः प्रकटीकृतं राजमार्गमुपनीतं भवति । यथाऽऽदित्य उद्यन्शार्वरं तमोऽपनयतीति तद्वत् । अपि चैवं स्तुता ब्रह्मविद्या येन्द्रराजरक्षिता सा दुष्प्राप्या देवैरपि । यस्मादश्विभ्यामपि देवभिषग्भ्यामिन्द्ररक्षिता विद्या महताऽऽयासेन प्राप्ता । ब्राह्मणस्य शिरश्छित्त्वाऽऽश्व्यं शिरः प्रतिसंधाय तस्मिन्निन्द्रेण च्छिन्ने पुनः स्वशिर एव प्रतिसंधाय तेन ब्राह्मणस्य स्वशिरसैवोक्ताऽशेषा १० ब्रह्मविद्या श्रुता । तस्मात्ततः परतरं किंचित्पुरुषार्थसाधनं न भूतं न भावि वा कुत एव वर्तमानमिति नातः परा स्तुतिरस्ति ।

अपि चैवं स्तूयते ब्रह्मविद्या । सर्वपुरुषार्थानां कर्म हि साधनमिति लोके प्रसिद्धम् । तच्च कर्म वित्तसाध्यं तेनाऽऽशाऽपि नास्त्यमृतत्वस्य । तदिदममृतत्वं केवलयाऽऽत्मविद्यया कर्मनिरपेक्षया प्राप्यते । यस्मात्कर्मप्रकरणे वक्तुं प्राप्ताऽपि सती प्रवर्ग्यप्रकरणे कर्मप्रकरणाद्बुत्तीर्य कर्मणा विरुद्धत्वात्केवलसंन्याससहिताऽभिहिताऽमृतत्वसाधनाय । १५ तस्मान्नातः परं पुरुषार्थसाधनमस्ति । अपि चैवं स्तुता ब्रह्मविद्या । सर्वो हि लोको द्वन्द्वारामः "स वै नैव रेमे तस्मादेकाकी न रमते" इति श्रुतेः । याज्ञवल्क्यो लोकसाधारणोऽपि सन्नात्मज्ञानबलाद्भार्यापुत्रवित्तादिसंसाररतिं परित्यज्य प्रज्ञानतृप्त आत्मरतिर्बभूव । अपि चैवं स्तुता ब्रह्मविद्या । यस्माद्याज्ञवल्क्येन संसारमार्गाद्व्युत्तिष्ठताऽपि प्रियायै भार्यायै प्रीत्यर्थमेवाभिहिता । प्रियं भाषस एह्यास्स्वेति लिङ्गात् ।

तत्रेयं स्तुत्यर्थाऽऽख्यायिकेत्यवोचाम । का पुनः साऽऽख्यायिकेति । उच्यते—इदमित्यनन्तरनिर्दिष्टं व्यप- २० दिशति बुद्धौ संनिहितत्वात् । वैशब्दः स्मरणार्थः । तदित्याख्यायिकानिर्वृत्तं प्रकरणान्तराभिहितं परोक्षं वैशब्देन स्मारयन्निह व्यपदिशति । यत्तत्प्रवर्ग्यप्रकरणे सूचितं नाऽऽविष्कृतं मधु तदिदं मध्विहानन्तरं निर्दिष्टमियं पृथिवीत्या-

तद्यथेत्यादिवाक्यार्थं विस्तरेणोक्त्वा वृत्तं कीर्तयति—**परिसमाप्तेति** । ब्रह्मविद्या परिसमाप्ता चेत्किमुत्तरग्रन्थेनेत्याशङ्क्याऽऽह—**एतस्या इति** । इयमिति प्रवर्ग्यप्रकरणस्थामाख्यायिकां परामृशति—आनीतेदं वै तन्मध्वित्यादिना ब्राह्मणेनेति शेषः । तदेतदृषिरित्यादेस्तात्पर्यमाह—**तस्या इति** । तद्वां नरेत्यादिरेको मन्त्रः । आथर्वणायेत्यादिरपरः । २५ मन्त्रब्राह्मणाभ्यां वक्ष्यमाणरीत्या ब्रह्मविद्यायाः स्तुतत्वे किं सिध्यतीत्याशङ्क्याऽऽह—**एवं हीति** । तस्या मुक्तिसाधनत्वं दृष्टान्तेन स्फुटयति—**यथेति** । केन प्रकारेण ब्रह्मविद्यायाः स्तुतत्वं तदाह—**अपि चेति** । अपिशब्दः स्तावकब्राह्मणसम्भावनार्थः । मन्त्रद्वयसमुच्चयार्थश्चशब्दः । एवं शब्दसूचितं स्तुतिप्रकारमेव प्रकटयति—**येन्द्रेति** । तस्या दुष्प्राप्यत्वे हेतुमाह—**यस्मादिति** । महान्तमायासं स्फुटयति—**ब्राह्मणस्येति** । कृतार्थेनापीन्द्रेण रक्षितत्वे विद्याया दौर्लभ्ये च फलितमाह—**तस्मादिति** ।

३० न केवलमुक्तेनैव प्रकारेण विद्या स्तूयते किंतु प्रकारान्तरेणापीत्याह—**अपि चेति** । तदेव प्रकारान्तरं प्रकटयति—**सर्वेति** । केवलयेत्यस्य व्याख्यानं कर्मनिरपेक्षयेति । तत्र हेतुमाह—**यस्मादिति** । किमिति कर्मप्रकरणे प्राप्ताऽपि प्रकरणान्तरे कथ्यते तत्राऽऽह—**कर्मणेति** । प्रसिद्धं पुमर्थोपायं कर्म त्यक्त्वा विद्यायामेवाऽऽदरे तदधिकता समधिगतेति फलितमाह—**तस्मादिति** । प्रकारान्तरेण ब्रह्मविद्यायाः स्तुतिं दर्शयति—**अपि चेति** । अनात्मरतिं त्यक्त्वाऽऽत्मन्येव रतिहेतुत्वान्महतीयं विद्येत्यर्थः । विधान्तरेण तस्याः स्तुतिमाह—**अपि चैवमिति** । कथं ब्रह्मविद्या ३५ भार्यायै प्रीत्यर्थमेवोक्तेति गम्यते तत्राऽऽह—**प्रियमिति** । आख्यायिकायाः स्तुत्यर्थत्वं प्रतिपाद्य वृत्तमनूद्याऽऽकाङ्क्षापूर्वकं तामवतार्य व्याकरोति—**तत्रेत्यादिना** । ब्रह्मविद्या सप्तम्यर्थः । पदार्थमुक्त्वा वाक्यार्थमाह—**यदिति** ।

---

१. प्रकरणान्तरं—प्रवर्ग्यप्रकरणं दशमकाण्डे ।

दिना। कथं तत्र प्रकरणान्तरे सूचितं दध्यङ् ह वा आभ्यामाथर्वणोमधु नाम ब्राह्मणमुवाच। "तदेनयोः प्रियं धाम तदेवैनयोरेतेनोपगच्छति"। स होवाचेन्द्रेण वा उक्तोऽस्म्येतच्चेदन्यस्मा अनुब्रूयास्तत एव ते शिरश्छिन्द्यामिति। तस्माद्वै बिभेमि यद्वै मे स शिरो न च्छिन्द्यात्तद्वामुपनेष्य इति। तौ होचतुरावां त्वा तस्मात्त्रास्यावहे इति। कथं मा त्रास्येथे इति। यदा नावुपनेष्यसे। अथ ते शिरश्छित्वाऽन्यत्राऽऽहृत्योपनिधास्यावः। यथाऽश्वस्य शिर आहृत्य तत्ते प्रतिधास्यावः। तेन नावनुवक्ष्यसि। स यदा नावनुवक्ष्यसि। अथ ते तदिन्द्रः शिरश्छेत्स्यति। अथ ते स्वं शिर आहृत्य तत्ते प्रतिधास्याव इति। तथेति तौ होपनिन्ये। तौ यदोपनिन्ये। अथास्य शिरश्छित्वाऽन्यत्रोपनिदधतुः। अथाश्वस्य शिर आहृत्य तद्धास्य प्रतिदधतुः। तेन हाऽऽभ्यामनूवाच। स यदाऽऽभ्यामनूवाचाथास्य तदिन्द्र शिर- शिरश्चिच्छेद। अथास्य स्वं शिर आहृत्य तद्धास्य प्रतिदधतुरिति। यावत्तु प्रवर्ग्यकर्माङ्गभूतं मधु तावदेव तत्रा- भिहितं न तु कक्ष्यमात्मज्ञानाख्यम्। तत्र याऽऽख्यायिकाऽभिहिता सेह स्तुत्यर्था प्रदर्श्यते। इदं वै तन्मधु दध्यङ्- ङाथर्वणोऽनेन प्रपञ्चेनाश्विभ्यामुवाच।

तदेतदृषिस्तदेतत्कर्म ऋषिर्मन्त्रः पश्यन्नुपलभमानोऽवोचदुक्तवान्। कथम्। तद्दंस इति व्यवहितेन सम्बन्धः। दंस इति कर्मणो नामधेयम्। तच्च दंसः किंविशिष्टम्। उग्रं क्रूरम्। वां युवयोः। हे नरा नराकारा- वश्विनौ। तच्च कर्म किंनिमित्तम्। सनये लाभाय। लाभलुब्धो हि लोकेऽपि क्रूरं कर्माऽऽचरति तथैवैतावुपलभ्येते यथा लोके तदाविः प्रकाशं कृणोमि करोमि यद्रहसि भवद्भ्यां कृतम्। किमिवेत्युच्यते। तन्यतुः पर्जन्यो नेव। नकारस्तूपरिष्टादुपचार उपमार्थीयो वेदे न प्रतिषेधार्थः। यथा'ऽश्वं न'। अश्वमिवेति यद्वत्। तन्यतुरिव वृष्टिं यथा पर्जन्यो वृष्टिं प्रकाशयति स्तनयित्न्वादिशब्दैस्तद्वदहं युवयोः क्रूरं कर्माऽऽविष्कृणोमीति सम्बन्धः। नन्वश्विनोः स्तुत्यर्थौ कथमिमौ मन्त्रौ स्यातां निन्दावचनौ होमौ। नैष दोषः। स्तुतिरेवैषा न निन्दावचनौ। यस्मादीदृश-

दध्यङ्ङित्यादि व्याकुर्वन्नाकाङ्क्षापूर्वकं प्रवर्ग्यप्रकरणस्थामाख्यायिकामनुकीर्तयति—कथमित्यादिना। आभ्याम- श्विभ्यामिति यावत्।

केन कारणेनोवाचेत्यपेक्षायामाह—तदेनयोरिति। एनयोरश्विनोस्तन्मधु प्रीत्यास्पदमासीत्तद्वशात्ताभ्यां प्रार्थितो ब्राह्मणस्तदुवाचेत्यर्थः। यदश्विभ्यां मधु प्रार्थितं तदेतेन वक्ष्यमाणेन प्रकारेण प्रयच्छन्नेवैनयोरश्विनोराचार्यत्वेन ब्राह्मणः समीपगमनं कृतवानित्याह—तदेवेति। आचार्यत्वानन्तरं ब्राह्मणस्य वचनं दर्शयति—स होवाचेति। एतच्छब्दो मध्वनुभवविषयः। यद्यर्थो यच्छब्दः। तच्छब्दस्तर्हीत्यर्थः। वां युवामुपनेष्ये शिष्यत्वेन स्वीकरिष्यामीति यावत्। तौ देवभिषजावश्विनौ शिरश्छेदनिमित्तं मरणं पञ्चम्यर्थः। नावावामुपनेष्यसे शिष्यत्वेन स्वीकरिष्यसि यदेति यावत्। अथशब्दस्तदेत्यर्थः। ब्राह्मणस्यानुज्ञानन्तर्यमथेत्युक्तम्। मधुप्रवचनानन्तर्यं तृतीयस्याथशब्दस्यार्थः। यदश्वस्य शिरो ब्राह्मणे निबद्धं तस्य च्छेदनानन्तर्यं चतुर्थस्याथशब्दस्यार्थः। तर्हि समस्तमपि मधु प्रवर्ग्यप्रकरणे प्रदर्शितमेवेति कृतमनेन ब्राह्मणेनेत्याशङ्क्याऽऽह—यावत्त्विति। प्रवर्ग्यप्रकरणे स्थिताऽऽख्यायिका किमर्थमत्राऽऽनीतेत्याशङ्क्य तस्या ब्रह्मविद्यायाः स्तुत्यर्थेयमाख्यायिकेत्यत्रोक्तमुपसंहरति—तत्रेति। ब्राह्मणभागव्याख्यां निगमयति—इदमिति।

तद्वामित्यादिमन्त्रमुत्थाप्य व्याचष्टे—तदेतदिति। कथं लाभायापि क्रूरकर्मानुष्ठानमत आह—लाभेति। ननु प्रतिषेधे मुख्यो नकारः कथमिवार्थे व्याख्यायते तत्राऽऽह—नकारस्त्विति। वेदे पदादुपरिष्टाद्यो नकारः श्रुतः स खलूपचार सन्नुपमार्थोऽपि संभवति न निषेधार्थ एवेत्यर्थः। तत्रोदाहरणमाह—यथेति। "अश्वं न गूढमश्विने"त्यत्र नकारो यथोपमार्थीयस्तथा प्रकृतेऽपीत्यर्थः। तदेव स्पष्टयति—अश्वमिवेति। यद्वदिति। उपमार्थीये नकारे सति वाक्यस्वरूपमनूद्य तदर्थं कथयति—तन्यतुरित्यादिना। विद्यास्तुतिद्वारा तद्वन्तावश्विनावत्र न स्तूयेते किंतु क्रूरकर्म- कारित्वेन निन्द्येते तदा चाऽऽख्यायिका विद्यास्तुत्यर्थेत्ययुक्तमिति शङ्कते—नन्विति। आख्यायिकाया विद्यास्तुत्यर्थत्वम- विरुद्धमिति परिहरति—नैष इति। लोममात्रमपि न मीयत इति यस्मात्तस्माद्विद्यास्तुत्या तद्वतोः स्तुतिरेवात्र विवक्षितेति योजना। यद्यपि क्रूरकर्मकारिणोरश्विनोर्न दृष्टहानिस्तथाऽप्यदृष्टहानिः स्यादेवेत्याशङ्क्य कैमुतिकन्या-

---

१. श० ब्रा० १४-१-१९।

इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच । तदेतदृषिः
पश्यन्नवोचत् । आथर्वणायाश्विना दधीचेऽश्व्यं शिरः प्रत्यैरयतम् ।
स वां मधु प्रवोचदृतायन्त्वाष्ट्रं यद्दस्रावपि कक्ष्यं वामिति ॥१७॥

इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच । तदेतदृषिः पश्यन्नवोचत् । पुरश्चक्रे
द्विपदः पुरश्चक्रे चतुष्पदः । पुरः स पक्षी भूत्वा पुरः पुरुष आविशदिति ।
स वा अयं पुरुषः सर्वासु पूर्षु पुरिशयो नैनेन किंचनानावृतं नैनेन किंचनासंवृतम् ॥१८॥

मप्यतिक्रूरं कर्म कुर्वतोर्युवयोर्न लोम च मीयत इति । न चान्यत्किञ्चिद्धीयत एवेति स्तुतावेतौ भवतः । निन्दां प्रशसां हि लौकिकाः स्मरन्ति । तथा प्रशंसारूपा च निन्दा लोके प्रसिद्धा । दध्यङ्नामाऽऽथर्वणः । हेत्यनर्थको निपातः । यन्मधु कक्ष्यमात्मज्ञानलक्षणमाथर्वणो वां युवाभ्यामश्वस्य शीर्ष्णा शिरसा प्र यदीमुवाच यत्प्रोवाच १० मधु । ईमित्यनर्थको निपातः ॥१६॥

इदं वै तन्मध्वित्यादि पूर्ववन्मन्त्रान्तरप्रदर्शनार्थम् । तथाऽन्यो मन्त्रस्तामेवाऽऽख्यायिकामनुसरति स्म । आथर्वणो दध्यङ्नामाऽऽथर्वणोऽन्यो विद्यत इत्यतो विशिनष्टि दध्यङ्नामाऽऽथर्वणस्तस्मै दधीच आथर्वणाय हेऽश्विनाविति मन्त्रदृशो वचनम् । अश्व्यमश्वस्य स्वभूतं शिरो ब्राह्मणस्य शिरसि छिन्नेऽश्वस्य शिरश्छित्त्वेदृशमतिक्रूरं कर्म कृत्वाऽश्व्यं शिरो ब्राह्मणं प्रत्यैरयतं गमितवन्तौ युवाम् । स चाऽऽथर्वणो वां युवाभ्यां तन्मधु प्रवोचद्यत्पूर्वं १५ प्रतिज्ञातं वक्ष्यामीति । स किमर्थमेवं जीवितसन्देहमारुह्य प्रवोचदित्युच्यते । ऋतायन्यत्पूर्वं प्रतिज्ञातं सत्यं तत्परिपालयितुमिच्छन् । जीवितादपि हि सत्यधर्मपरिपालना गुरुतरेत्येतस्य लिङ्गमेतत् । किं तन्मधु प्रावोचदित्युच्यते । त्वाष्ट्रं त्वष्टाऽऽदित्यस्तस्य सम्बन्धि यज्ञस्य शिरश्छिन्नं त्वष्टाऽभवत्तत्प्रतिसन्धानार्थं प्रवर्ग्यं कर्म । तत्र प्रवर्ग्यकर्माङ्गभूतं यद्विज्ञानं तत्त्वाष्ट्रं मधु यज्ञस्य शिरश्छेदनप्रतिसन्धानादिविषयं दर्शनं तत्त्वाष्ट्रं यन्मधु हे दस्रौ दस्राविति परबलानामुपक्षपयितारौ शत्रूणां वा हिंसितारौ । अपि च न केवलं त्वाष्ट्रमेव मधु कर्मसम्बन्धि २० युवाभ्यामवोचदपि च कक्ष्यं गोप्यं रहस्यं परमात्मसम्बन्धि यद्विज्ञानं मधु मधुब्राह्मणेनोक्तमध्यायद्वयप्रकाशितं तच्च वां युवाभ्यां प्रवोचदित्यनुवर्तते ॥१७॥

इदं वै तन्मध्विति पूर्ववत् । उक्तौ द्वौ मन्त्रौ प्रवर्ग्यसम्बन्ध्याख्यायिकोपसंहर्तारौ । द्वयोः प्रवर्ग्यकर्मार्थ-

येनाऽऽह—न चेति । कथं पुनर्निन्दायां दृश्यमानाया स्तुतिरिष्यते तत्राऽऽह—निन्दामिति । नहि निन्दा निन्द्यं निन्दितुमपि तु विधेयं स्तोतुमिति न्यायादित्यर्थ. । यथा निन्दा न निन्द्यं निन्दितुमेव तथा स्तुतिरपि स्तुत्य स्तोतुमेव न २५ भवति किंतु निन्दितुमपि । तथा च नानयोर्व्यवस्थितत्वमित्याह—तथेति । तद्वामित्यादिमन्त्रस्य पूर्वार्धं व्याख्यायाऽऽख्यायिकायाः स्तुत्यर्थत्वविरोधं चोद्धृत्योत्तरार्धं व्याचष्टे—दध्यङ्नामेति । यत्कक्ष्यं ज्ञानाख्यं मधु तदाथर्वणो युवाभ्यामश्वस्य शिरसा प्रोवाच । यच्चासौ मधु युवाभ्यामुक्तवांस्तदहमाविष्कृणोमीति संबन्धः ॥१६॥

समानार्थत्वे किमिति पुनरुच्यते तत्राऽऽह—मन्त्रान्तरेति । तुल्यार्थस्य ब्राह्मणस्य तात्पर्यमाह—तथेति । विशेपणकृत्यं दर्शयन्व्याकरोति—दध्यङ्नामेति । प्रथममश्व्यमित्यादि पदार्थवचनमश्वस्येत्यादौ छित्त्वेत्यस्य कर्मोक्ति- ३० रश्व्य शिर इत्यत्र त्वन्यार्थमुक्तमिति विभागः । प्रेक्षापूर्वकारिणामीदृशी प्रवृत्तिरयुक्तेति शङ्कित्वा समाधत्ते—स किमर्थमिति । ऋतायन्नित्यत्रार्थसिद्धमर्थं कथयति—जीवितादपीति । "यज्ञस्य शिरोऽच्छिद्यत ते देवा अश्विनावब्रुवन्भिषजौ वै स्थ इदं यज्ञस्य शिरः प्रतिधत्तम् ।" इत्यादिश्रुत्यन्तरमाश्रित्याऽऽह—यज्ञस्येत्यादिना । प्रवर्ग्यकर्मण्येवं प्रवृत्तेऽपि प्रकृते विज्ञाने किमायातं तदाह—तत्रेति । उक्तमेव संगृह्णाति—यज्ञस्येति । यद्यथोक्तं दर्शनं तत्वाष्ट्रं मधु यच्च तन्मधु तत्प्रवोचदिति सबन्ध. अध्यायद्वयप्रकाशितं तृतीयचतुर्थाभ्यामध्याभ्या प्रकटितमिति यावत् ॥१७॥

३५ उक्तमन्त्राभ्या वक्ष्यमाणमन्त्रयोरपुनरुक्तत्वादर्थवत्त्वं वक्तुं वृत्तं कीर्तयति—उक्ताविति । आख्यायिकाविशेपण-

१. न लोम च मीयते इति इन्द्रेण प्रतर्दनं प्रति ब्रह्मज्ञानप्रशंसावादः "अरुणमुखान् यतीन् सालावृकेभ्यः प्रायच्छं न मे लोम च मीयते" इति कौषीतके । यद्यपीयं निन्दा तथापि विद्याया. प्रशसैव क्रूरकर्मणः फलप्रदानासामर्थ्यं ब्रह्मज्ञानकृतमित्युक्तः ।

**इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच । तदेतदृषिः पश्यन्नवोचत् । रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय । इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शता दशेति । अयं वै हरयोऽयं वै दश च सहस्राणि बहूनि चानन्तानि च तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूरित्यनुशासनम् ॥१९॥**

**इति बृहदारण्यकोपनिषदि द्वितीयाध्याये पञ्चमं ब्राह्मणम् ॥५॥** ५

योरध्याययोरर्थं आख्यायिकाभूताभ्यां मन्त्राभ्यां प्रकाशितः । ब्रह्मविद्यार्थयोस्त्वध्याययोरर्थ उत्तराभ्यामृग्भ्यां प्रकाशयितव्य इत्यतः प्रवर्तते । यत्कक्ष्यं च मधूक्तवानाथर्वणो युवाभ्यामित्युक्तम् । किं पुनस्तन्मध्वित्युच्यते । पुरश्चक्रे पुरः पुराणि शरीराणि यत इयमव्याकृतव्याकरणप्रक्रिया स परमेश्वरो नामरूपे अव्याकृते व्याकुर्वाणः प्रथमं भूरादींल्लोकान्सृष्ट्वा चक्रे कृतवान्द्विपदो द्विपादुपलक्षितानि मनुष्यशरीराणि पक्षिशरीराणि । तथा पुरः शरीराणि चक्रे चतुष्पदश्चतुष्पादुपलक्षितानि पशुशरीराणि । पुरः पुरस्तात्स ईश्वरः पक्षी लिङ्गशरीरं भूत्वा पुरः शरीराणि पुरुष आविशदित्यस्यार्थमाचष्टे श्रुतिः । स वा अयं पुरुषः सर्वासु पूर्षु सर्वशरीरेषु पुरिशयः पुरि शेत इति पुरिशयः सन्पुरुष इत्युच्यते । नैनेनानेन किञ्चन किञ्चिदप्यनावृतमनाच्छादितम् । तथा नैनेन किञ्चनासंवृतमन्तरननुप्रवेशितं बाह्यभूतेनान्तर्भूतेन च नानावृतम् । एवं स एव नामरूपात्मनाऽन्तर्बहिर्भावेन कार्यकरणरूपेण व्यवस्थितः । पुरश्चक्र इत्यादिमन्त्रः संक्षेपत आत्मैकत्वमाचष्ट इत्यर्थः ॥१८॥ १०

इदं वै तन्मध्वित्यादि पूर्ववत् । रूपं रूपं प्रतिरूपो बभूव । रूपं रूपं प्रति प्रतिरूपो रूपान्तरं बभूवेत्यर्थः । प्रतिरूपोऽनुरूपो वा यादृक्संस्थानौ मातापितरौ तत्संस्थानस्तदनुरूप एव पुत्रो जायते । नहि चतुष्पदो द्विपाज्जायते द्विपदो वा चतुष्पात् । स एव हि परमेश्वरो नामरूपे व्याकुर्वाणो रूपं रूपं प्रतिरूपो बभूव । किमर्थं पुनः प्रतिरूपमागमनं तस्येत्युच्यते । तदस्याऽऽत्मनो रूपं प्रतिचक्षणाय प्रतिख्यापनाय । यदि हि नामरूपे न व्याक्रियेते १५

प्राप्तं संकोचं परिहरति—द्वयोरिति । उत्तरमन्त्रद्वयप्रवृत्तिं प्रतिजानीते—ब्रह्मेति । संप्रत्यवान्तरसंगतिमाह—यत्कक्ष्यं चेति । हिरण्यगर्भकर्तृकं शरीरनिर्माणमत्र नोच्यते किंतु प्रकरणबलादीश्वरकर्तृकमित्याह—यत इति । शरीरसृष्ट्यपेक्षया लोकसृष्टिप्राथम्यं पुरस्ताद्देहसृष्ट्यनन्तरं प्रवेशात्पूर्वमिति यावत् । स हि सर्वेषु शरीरेषु वर्तमानः पुरि शेत इति व्युत्पत्त्या पुरिशयः सन्पुरुषो भवतीत्युक्त्वा प्रकारान्तरेण पुरुषत्वं व्युत्पादयति—नेत्यादिना । वाक्यद्वयस्यैकार्थत्वमाशङ्क्य सर्वं जगदोतप्रोतत्वेनाऽऽत्मव्याप्तमित्यर्थविशेषमाश्रित्याऽऽह—बाह्यभूतेनेति । पूर्णत्वे सत्यात्मनः 'दिव्यो ह्यमूर्तः' इत्यादिश्रुतिमाश्रित्य फलितमाह—एवमिति । मन्त्रब्राह्मणयोरर्थवैमत्यमाशङ्क्याऽऽह—पुर इति ॥१८॥ २०

प्राचीनमेव ब्राह्मणमनूद्य मन्त्रान्तरमवतारयति—इदमिति । प्रतिशब्दस्तन्त्रेणोच्चारितः । रूपं रूपमुपाधिभेदं प्रति प्रतिरूपो रूपान्तरं प्रतिबिम्बं बभूवेत्येतत्प्रतिरूपो बभूवेत्यत्र विवक्षितमिति योजना । अनुरूपो वेत्युक्तं विवृणोति—यादृगित्यादिना । उक्तमर्थमनुभवारूढं करोति—नहीति । रूपान्तरभवने कर्त्रन्तरं वारयति—स एव हीति । प्रतिख्यापनाय शास्त्राचार्यादिभेदेन तत्त्वप्रकाशनायेत्यर्थः । तदेव व्यतिरेकेणान्वयेन च स्फुटयति—यदि हीत्यादिना । २५

१. तदस्य रूपं प्रतिचक्षणाय—यदि ब्रह्म कार्यकारणजगद्रूपेण नाभविष्यत् तदा न केनापि ब्रह्म ज्ञातुं पार्यते । यदा तु प्रपञ्चात्मनाऽभवत् तत्र च जलबिम्बवत् प्रविष्टः तदा आत्मज्ञानं कार्येण कारणानुमानरीत्या सर्वकारणं ब्रह्मोपलभ्येत तथा जीवरूपेण प्रवेशात् जीवस्वरूपं विविच्य ब्रह्मैव प्रविष्टं जीव इति ज्ञायेत । इन्द्रः प्रकरणी परमात्मा मायाभिः "माया प्रज्ञावयुनमि"ति निघण्टुवचनात् प्रज्ञाभिः वस्तुतस्तु मिथ्याज्ञानैः भ्रमाणामविद्योपादानकत्वात् बहुरूपत्वं न स्वतः । ३०

२. अयं वै हरयः इन्द्रियाणि चायमेव सर्वात्मकत्वात् । अयं वै हरय इति सर्वात्मकत्वमुक्तम् अयमेव नानाविधरूपेण प्रकाशत इत्यर्थः ।

३. लिङ्गशरीरं भूत्वेति परमात्मा लिङ्गशरीरे यत्प्रधानं मनः तत्र प्रतिबिम्बतो भूत्वा देहं प्राविशत् न तु स्वेनापरिच्छिन्नरूपेण तस्य विभुत्वेनाक्रियत्वात् । ३५

अथ द्वितीयाध्यायस्य षष्ठं ब्राह्मणम्

अथ वँशः पौतिमाष्यो गौपवनाद्गौपवनः पौतिमाष्यात्पौतिमाष्यो गौपवनाद्गौपवनः कौशि-
कात्कौशिकः कौण्डिन्यात्कौण्डिन्यः शाण्डिल्याच्छाण्डिल्यः कौशिकाच्च गौतमाच्च गौतमः ॥१॥
आग्निवेश्यादाग्निवेश्यः शाण्डिल्याच्चानभिम्लाताच्चानभिम्लात आनभिम्लातादानभिम्लात
५ आनभिम्लातादानभिम्लातो गौतमाद्गौतमः सैतवप्राचीनयोग्याभ्याँ सैतवप्राचीनयोग्यौ
पाराशर्यात्पाराशर्यो भारद्वाजाद्भारद्वाजो भारद्वाजाच्च गौतमाच्च गौतमो भारद्वाजा-
द्भारद्वाजः पाराशर्यात्पाराशर्यो बैजवापायनाद्बैजवापायनः कौशिकायनेः कौशिकायनिः ॥२॥

तदाऽस्याऽऽत्मनो निरुपाधिकं रूपं प्रज्ञानघनाख्यं न प्रतिख्यायेत। यदा पुनः कार्यकरणात्मना नामरूपे व्याकृते
भवतस्तदाऽस्य रूपं प्रतिख्यायेत। इन्द्रः परमेश्वरो मायाभिः प्रज्ञाभिर्नामरूपभूतकृतमिथ्याभिमानैर्वा न तु
१० परमार्थतः पुरुरूपो बहुरूप ईयते गम्यत एकरूप एव प्रज्ञानघनः सन्नविद्याप्रज्ञाभिः। कस्मात्पुनः कारणात्। युक्ता
रथ इव वाजिनः स्वविषयप्रकाशनाय हि यस्मादस्य हरयो हरणादिन्द्रियाणि शता शतानि दश च प्राणिभेद-
बाहुल्याच्छतानि दश च भवन्ति। तस्मादिन्द्रियविषयबाहुल्यात्तत्प्रकाशनायैव च युक्तानि तानि नाऽऽत्म-
प्रकाशनाय। "पराञ्चि खानि व्यतृणत्स्वयंभूः" इति हि काठके तस्मात्तैरेव विषयस्वरूपैरीयते न प्रज्ञानघनै-
करसेन स्वरूपेण।

१५ एवं तर्ह्ययमन्यः परमेश्वरोऽन्ये हरय इत्येवं प्राप्त उच्यते—अयं वै हरयोऽयं वै दश च सहस्राणि बहूनि
चानन्तानि च। प्राणिभेदस्याऽऽनन्त्यात्। किं बहुना तदेतद्ब्रह्म य आत्माऽपूर्वं नास्य कारणं पूर्वं विद्यत इत्यपूर्वम्।
नास्यापरं कार्यं विद्यत इत्यनपरम्। नास्य जात्यन्तरमन्तराले विद्यत इत्यनन्तरम्। तथा बहिरस्य न विद्यत
इत्यबाह्यम्। किं पुनस्तन्निरन्तरं ब्रह्मायमात्मा। कोऽसौ यः प्रत्यगात्मा द्रष्टा श्रोता मन्ता बोद्धा विज्ञाता
सर्वानुभूः सर्वात्मना सर्वमनुभवतीति सर्वानुभूरित्येतदनुशासनं सर्ववेदान्तोपदेशः। एष सर्ववेदान्तानामुप-
२० संहृतोऽर्थः। एतदमृतमभयं परिसमाप्तश्च शास्त्रार्थः ॥१९॥

इति बृहदारण्यकोपनिषद्भाष्ये द्वितीयाध्यायस्य पंचमं ब्राह्मणम् ॥ ५ ॥

मायाभिः प्रज्ञाभिरिति परपक्षमुक्त्वा स्वपक्षमाह—मायाभिरिति। मिथ्याधीहेतुभूताभिरनिर्वाच्यदण्डायमान ज्ञान-
वशादेष बहुरूपो भाति। प्रकारभेदात्तु बहूक्तिरिति वाक्यार्थमाह—एकरूप एवेति। अविद्याप्रज्ञाभिर्बहुरूपो गम्यत
इति पूर्वेण संबन्धः। परस्य बहुरूपत्वे निमित्तं प्रश्नपूर्वकं निवेदयति—कस्मादित्यादिना। यथा रथे युक्ता वाजिनो
२५ रथिनं स्वगोचरं देशं प्रापयितुं प्रवर्तन्ते तथाऽस्य प्रतीचो रथस्थानीये शरीरे युक्ता हरयः स्वविषयप्रकाशनाय
यस्मात्प्रवर्तन्ते तस्मादिन्द्रियाणां तद्विषयाणां च बहुलत्वात्तत्तद्रूपैरेष बहुरूपो भातीति योजना। हरिशब्दस्येन्द्रियेषु
प्रवृत्तौ निमित्तमाह—हरणादिति। प्रतीचो विषयान्प्रतीति शेषः। इन्द्रियबाहुल्ये हेतुमाह—प्राणीति। इन्द्रियविषय
बाहुल्यात् प्रत्यगात्मा बहुरूप इति शेषः। नन्वात्मानं प्रकाशयितुमिन्द्रियाणि प्रवृत्तानि न तु रूपादिकमेव तत्कथं
तद्विषयवशादात्मनोऽन्यथा प्रथेत्याशङ्क्याऽऽह—तत्प्रकाशनायेति। तस्मादिन्द्रियविषयबाहुल्यादित्यत्रोक्तमुपसंहरति—
३० तस्मादिति। यद्वा यथोक्तश्रुतिवशेन लब्धमर्थमाह—तस्मादिति। यस्मादिन्द्रियाणि पराग्विषये प्रवृत्तानि
तस्मात्तैरिन्द्रियैर्विषयस्वरूपैरेवाय प्रत्यगात्मा गम्यते न तु स्वासाधारणेन रूपेणेत्यर्थः।

युक्ता हीति संबन्धमाश्रित्य शङ्कते—एवं तर्हीति। अयमित्यादिवाक्येन परिहरति—अयमिति। तत्तदिन्द्रि-
यादिरूपेणाऽऽत्मन एवाविद्यया भानात्संबन्धस्य च कल्पितत्वान्नाद्वैतहानिरित्यर्थः। इन्द्रियानन्त्ये हेतुमाह—प्राणि-
भेदस्येति। वाक्यार्थव्याख्यानार्थमित्थं गतेन संदर्भेण भूमिकामारचय्य तत्परं वाक्यमवतार्य व्याकरोति—किं बहु-
३५ नेत्यादिना। न केवलमध्यायद्वयस्यैवार्थोऽत्र संक्षिप्योपसंहृतः किंतु सर्ववेदान्तानामित्याह—एष इति। तस्योभयविध-
पुरुषार्थरूपत्वमाह—एतदिति। वक्तव्यान्तरपरिशेषशङ्कां परिहरति—परिसमाप्तश्चेति ॥१९॥

इति बृहदारण्यकोपनिषद्भाष्यटीकायां द्वितीयाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

घृतकौशिकाद्घृतकौशिकः पाराशर्यायणात्पाराशर्यायणः पाराशर्यात्पाराशर्यो जातूकर्ण्या-ज्जातूकर्ण्य आसुरायणाच्च यास्काच्चासुरायणस्त्रैवणेस्त्रैवणिरौपजन्धनेरौपजन्धनिरा-सुरेरासुरिर्भारद्वाजाद्भारद्वाज आत्रेयादात्रेयो माण्टेर्माण्टिर्गौतमाद्गौतमो गौतमाद्-गौतमो वात्स्याद्वात्स्यः शाण्डिल्याच्छाण्डिल्यः कैशोर्यात्काप्यात् कैशोर्यः काप्यः कुमारहारितात्कुमारहारितो गालवाद्गालवो विदर्भीकौण्डिन्याद्विदर्भीकौण्डिन्यो वत्सनपातो बाभ्रवाद्वत्सनपाद्बाभ्रवः पथः सौभरात्पन्थाः सौभरोऽयास्यादाङ्गिरसादयास्य आङ्गिरस आभूतेस्त्वाष्ट्रादाभूतिस्त्वाष्ट्रो विश्वरूपात्त्वाष्ट्राद्विश्वरूपस्त्वाष्ट्रोऽश्विभ्यामश्विनौ दधीच आथर्वणाद्दध्यङ्ङाथर्वणोऽथर्वणो दैवादथर्वा दैवो मृत्योः प्राध्वँसनान्मृत्युः प्राध्वँ-सनः प्रध्वँसनात्प्रध्वँसन एकर्षेरेकर्षिर्विप्रचित्तेर्विप्रचित्तिर्व्यष्टेर्व्यष्टिः सनारोः सनारुः सनातनात्सनातनः सनगात्सनगः परमेष्ठिनः परमेष्ठी ब्रह्मणो ब्रह्म स्वयंभु ब्रह्मणे नमः ॥३॥

इति बृहदारण्यकोपनिषदि द्वितीयाध्याये षष्ठं ब्राह्मणम् ॥६॥

इति बृहदारण्यकोपनिषदि द्वितीयोऽध्यायः ॥२॥

बृहदारण्यकक्रमेण चतुर्थोऽध्यायः ॥४॥

अथेदानीं ब्रह्मविद्यार्थस्य मधुकाण्डस्य वंशः स्तुत्यर्थो ब्रह्मविद्यायाः। मन्त्रश्चायं स्वाध्यायार्थो जपार्थश्च। तत्र वंश इव वंशो यथा वेणुवंशः पर्वणः पर्वणो हि भिद्यते तद्वदग्रात्प्रभृत्या मूलप्राप्तेरयं वंशः। अध्यायचतुष्टय-स्याऽऽचार्यपरम्पराक्रमो वंश इत्युच्यते। तत्र प्रथमान्तः शिष्यः पञ्चम्यन्त आचार्यः। परमेष्ठी विराट्। ब्रह्मणो हिरण्यगर्भात्। ततः परमाचार्यपरम्परा नास्ति। यत्पुनर्ब्रह्म तन्नित्यं स्वयंभु तस्मै ब्रह्मणे स्वयंभुवे नमः ॥१–२–३॥

इति बृहदारण्यकोपनिषद्भाष्ये द्वितीयाध्यायस्य षष्ठं ब्राह्मणम् ॥६॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्यस्य श्रीमच्छंकरभगवतः कृतौ बृहदारण्यकोपनिषद्भाष्ये द्वितीयोऽध्यायः ॥२॥

ब्रह्मविद्या संक्षेपविस्तराभ्यां प्रतिपाद्य वंशब्राह्मणतात्पर्यमाह—अथेति। महाजनपरिगृहीता हि ब्रह्मविद्या तेन सा महाभागधेयेति स्तुतिः। ब्राह्मणस्यार्थान्तिरमाह—मन्त्रश्चेति। स्वाध्यायः स्वाधीनोच्चारणक्षमत्वे सत्यध्यापन जपस्तु प्रत्यहमावृत्तिरिति भेदः। यथोक्तनीत्या ब्राह्मणारम्भे स्थिते वंशशब्दार्थमाह—तत्रेति। तदेव स्फुटयति—यथेति। शिष्यावसानोपलक्षणीभूतात्पौतिमाष्यादारभ्य तदादिर्वेदाख्यब्रह्ममूलपर्यन्तोऽयं वंशः पर्वणः पर्वणो भिद्यत इति संबन्धः। वंशशब्देन निष्पन्नमर्थमाह—अध्यायचतुष्टयस्येति। अथात्र शिष्याचार्यवाचकशब्दाभावे कुतो व्यवस्थेति तत्राऽऽह—तत्रेति। पममेष्ठिब्रह्मशब्दयोरेकार्थत्वमाशङ्क्याऽऽह—परमेष्ठीति। कुतस्तर्हि ब्रह्मणो विद्याप्राप्ति-स्तत्राऽऽह—तत इति। स्वयंप्रतिभातवेदो हिरण्यगर्भो नाऽऽचार्यान्तरमपेक्षते। ईश्वरानुगृहीतस्य तस्य बुद्धावाविर्भूता-द्वेदादेव विद्यालाभसंभवादित्यर्थः। कुतस्तर्हि वेदो जायते तत्राऽऽह—यत्पुनरिति। परस्यैव ब्रह्मणो वेदरूपेणावस्था-नात्तस्य नित्यत्वान्न, हेत्वपेक्षेत्यर्थः। आदावन्ते च कृतमङ्गला ग्रन्थाः प्रचारिणो भवन्तीति द्योतयितुमन्ते ब्रह्मणे नम इत्युक्तम्। तद्व्याचष्टे—तस्मा इति ॥ १–२–३ ॥

इति बृहदारण्यकोपनिषद्भाष्यटीकायां द्वितीयाध्यायस्य षष्ठं ब्राह्मणम् ॥६॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्येण भगवदानन्दज्ञानेन कृताया बृहदारण्यकोपनिषद्भाष्यटीकाया द्वितीयोऽध्यायः ॥२॥

# अथ तृतीयोऽध्यायः

## अथ तृतीयाध्यायस्य प्रथमं ब्राह्मणम्

**ॐ जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेजे तत्र ह कुरुपञ्चालानां ब्राह्मणा अभिसमेता बभूवुस्तस्य ह जनकस्य वैदेहस्य विजिज्ञासा बभूव कःस्विदेषां ब्राह्मणानामनूचानतम इति स ह गवां सहस्रमवरुरोध दश दश पादा एकैकस्याः शृङ्गयोराबद्धा बभूवुः ॥१॥**

जनको ह वैदेह इत्यादि याज्ञवल्कीयं काण्डमारभ्यते। उपपत्तिप्रधानत्वादतिक्रान्तेन मधुकाण्डेन समानार्थत्वेऽपि सति न पुनरुक्तता। मधुकाण्डं ह्यागमप्रधानम्।[1] आगमोपपत्ती ह्यात्मैकत्वप्रकाशनाय प्रवृत्ते शक्नुतः करतलगतबिल्वमिव दर्शयितुम्। श्रोतव्यो मन्तव्य इति ह्युक्तम्। तस्मादागमार्थस्यैव परीक्षापूर्वकं निर्धारणाय याज्ञवल्कीयं काण्डमुपपत्तिप्रधानमारभ्यते। आख्यायिका तु विज्ञानस्तुत्यर्थोपायविधिपरा वा। प्रसिद्धो ह्युपायो विद्वद्भिः शास्त्रेषु च दृष्टो दानम्। दानेन ह्युपनमन्ते प्राणिनः। प्रभूतं हिरण्यं गोसहस्रदानं चेहोपलभ्यते। तस्मादन्यपरेणापि शास्त्रेण विद्याप्राप्त्युपायदानप्रदर्शनार्थाऽऽख्यायिकाऽऽरब्धा। अपि च तद्विद्यसंयोगस्तैश्च सह वादकरणं विद्याप्राप्त्युपायो न्यायविद्यायां दृष्टः। तच्चास्मिन्नध्याये प्राबल्येन प्रदर्श्यते। प्रत्यक्षा च विद्वत्संयोगे प्रज्ञावृद्धिः। तस्माद्विद्याप्राप्त्युपायप्रदर्शनार्थैवाऽऽख्यायिका।

मधुकाण्डे त्वाष्ट्रं कक्ष्यं चेति मधुद्वयं व्याख्यातं संप्रति काण्डान्तरारम्भं प्रतिजानीते—**जनक इति**। ननु पूर्वस्मिन्नध्यायद्वये व्याख्यातमेव तत्त्वमुत्तरत्रापि वक्ष्यते तथा च पुनरुक्तेरलं मुनिकाण्डेनेति तत्राऽऽह—**उपपत्तीति**। तुल्यमुपपत्तिप्रधानत्वं मधुकाण्डस्यापीति चेन्नेत्याह—**मधुकाण्डं हीति**। ननु प्रमाणादागमादेव तत्त्वज्ञानमुत्पत्स्यते किमुपपत्त्या तत्प्रधानेन काण्डेन चेति तत्राऽऽह—**आगमेति**। करणत्वेनाऽऽगमस्तत्त्वज्ञानहेतुरुपपत्तिरुपकरणतया पदार्थपरिशोधनद्वारा तद्धेतुरित्यत्र गमकमाह—**श्रोतव्य इति**। करणोपकरणयोरागमोपपत्त्योस्तत्त्वज्ञानहेतुत्वे सिद्धे फलितमुपसंहरति—**तस्मादिति**। यथोक्तरीत्या काण्डारम्भेऽपि किमित्याख्यायिका प्रणीयते तत्राऽऽह—**आख्यायिका त्विति**। विज्ञानवतां पूजाऽत्र प्रयुज्यमाना दृश्यते। तथा च विज्ञानं महाभागधेयमिति स्तुतिरत्र विवक्षितेत्यर्थः। विद्याग्रहणे दानाख्योपायप्रकारज्ञापनपरा वाऽऽख्यायिकेत्यर्थान्तरमाह—**उपायेति**। कथं पुनर्दानस्य विद्याग्रहणोपायत्वं तत्राऽऽह—**प्रसिद्धो हीति**।

"गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा"

इत्यादौ दानाख्यो विद्याग्रहणोपायो यस्मात्प्रसिद्धस्तस्मात्तस्य तदुपायत्वे नास्ति वक्तव्यमित्यर्थः। 'दाने सर्वं प्रतिष्ठितम्' इत्यादिश्रुतिषु विद्वद्भिरेव विद्याग्रहणोपायो दृष्टस्तस्मान्न तस्योपायत्वे विवदितव्यमित्याह—**विद्वद्भिरिति**। उपपन्नं च दानस्य विद्याग्रहणोपायत्वमित्याह—**दानेनेति**। भवतु दानं विद्याग्रहणोपायस्तथाऽपीयमाख्यायिका कथं तत्प्रदर्शनपरेत्याशङ्क्याऽऽह—**प्रभूतमिति**। ननु समुदितेषु ब्राह्मणेषु ब्रह्मिष्ठतमं निर्धारयितुं राजा प्रवृत्तस्तत्कथमन्यपरेण ग्रन्थेन विद्याग्रहणोपायविधानायाऽऽख्यायिकाऽऽरभ्यते तत्राऽऽह—**तस्मादिति**। उपलम्भो यथोक्तस्तच्छब्दार्थः। इतश्चाऽऽख्यायिका विद्याप्राप्त्युपायप्रदर्शनपरेत्याह—**अपि चेति**। तस्मिन्वेद्येऽर्थे विद्या येषां ते तद्विद्यास्तैः सह संबन्धश्च तैरेव प्रश्नप्रतिवचनद्वारा वादकरणं च विद्याप्राप्तावुपाय इत्यत्र गमकमाह—**न्यायविद्यायामिति**। तत्त्वनिर्णयफला हि वीतरागकथामिच्छन्ति। तद्विद्यसंयोगादेर्विद्याप्राप्त्युपायत्वेऽपि कथं प्रकृते तत्प्रदर्शनपरत्वमत आह—**तच्चेति**। तद्विद्यसंयोगादीति यावत्। न केवलं तर्कशास्त्रवशादेव तद्विद्यसंयोगे प्रज्ञावृद्धिः किंतु स्वानुभववशादपीत्याह—**प्रत्यक्षा चेति**। आख्यायिकातात्पर्यमुपसंहरति—**तस्मादिति**।

---

1. आगमप्रधानं आगमः उपदेशः। यथा य एवं वेद अहम् ब्रह्मास्मीति स इदं सर्वं भवति इति। आदेश इति च आगमस्य प्रधानत्वोक्त्या उपपत्तेः गुणत्वं सूच्यते। गार्ग्यब्राह्मणे प्राणनामभिः सुषुप्तस्यानुत्थानादा भोक्तृत्वोपपत्तिरुक्ता। तथा मैत्रेयीब्राह्मणे सर्वात्मकत्वे सर्वस्योत्पत्तिस्थितिलयकारणत्वहेतुबोधनेनोपपत्तिरुच्यते। मधुब्राह्मणे यत् परस्परोपकार्योपकारकं तत् एककारणपूर्वकं इत्याद्युपपत्तिरुक्तैव। सर्वमिदं गुणतया प्राधान्यं तु उपदेशस्यैव स एष नेति नेति इत्यादेः मूर्तामूर्तब्राह्मणे तदेतद्ब्रह्मापूर्वमपरमयमात्मा ब्रह्मेत्युपदेशः प्रधानम्।

तान्होवाच ब्राह्मणा भगवन्तो यो वो ब्रह्मिष्ठः स एता गा उदजतामिति । ते ह ब्राह्मणा न दधृषुरथ ह याज्ञवल्क्यः स्वमेव ब्रह्मचारिणमुवाचैताः सोम्योदज सामश्रवा३ इति ता होदाचकार ते ह ब्राह्मणाश्चुक्रुधुः कथं नो ब्रह्मिष्ठो ब्रुवीतेत्यथ ह जनकस्य वैदेहस्य होताऽश्वलो बभूव स हैनं पप्रच्छ त्वं नु खलु नो याज्ञवल्क्य ब्रह्मिष्ठोसी३ इति स होवाच नमो वयं ब्रह्मिष्ठाय कुर्मो गोकामा एव वयं स्म इति तं ह तत एव प्रष्टुं दध्रे होताऽश्वलः ॥२॥ ५

जनको नाम ह किल सम्राड्राजा बभूव विदेहानां तत्र भवो वैदेहः । स च बहुदक्षिणेन यज्ञेन शाखान्तरप्रसिद्धो वा बहुदक्षिणो नाम यज्ञोऽश्वमेधो वा दक्षिणाबाहुल्याद्बहुदक्षिण इहोच्यते तेनेजेऽयजत् । तत्र तस्मिन्यज्ञे निमन्त्रिता दर्शनकामा वा कुरूणां देशानां पञ्चालानां च ब्राह्मणास्तेषु हि विदुषां बाहुल्यं प्रसिद्धमभिसमेता अभिसंगता बभूवुः । तत्र महान्तं विद्वत्समुदायं दृष्ट्वा तस्य ह किल जनकस्य वैदेहस्य यजमानस्य को नु खल्वत्र ब्रह्मिष्ठ इति विशेषेण ज्ञातुमिच्छा विजिज्ञासा बभूव । कथं, कःस्वित्को नु खल्वेषां ब्राह्मणानामनूचानतमः सर्व १० इमेऽनूचानाः कःस्विदेषामतिशयेनानूचान इति । स हानूचानतमविषयोत्पन्नजिज्ञासः संस्तद्विज्ञानोपायार्थं गवां सहस्रं प्रथमवयसामवरुरोध गोष्ठेऽवरोधं कारयामास । किंविशिष्टास्ता गावोऽवरुद्धा इत्युच्यते । पलचतुर्थभागः पादः सुवर्णस्य । दश दश पादा एकैकस्या गोः शृङ्गयोराबद्धा बभूवुः । पञ्च पञ्च पादा एकैकस्मिञ्शृङ्गे ॥१॥

गा एवमवरुध्य ब्राह्मणांस्तान्होवाच । हे ब्राह्मणा भगवन्त इत्यामन्त्र्य यो वो युष्माकं ब्रह्मिष्ठः सर्वे यूयं ब्रह्माणोऽतिशयेन युष्माकं ब्रह्मा यः स एता गा उदजतामुत्कालयतु स्वगृहं प्रति । ते ह ब्राह्मणा न दधृषुः ह १५ किलएवमुक्ता ब्राह्मणा ब्रह्मिष्ठतामात्मनः प्रतिज्ञातुं न दधृषुर्न प्रगल्भाः संवृत्ताः । अप्रगल्भभूतेषु ब्राह्मणेष्वथ ह याज्ञवल्क्यः स्वमात्मीयमेव ब्रह्मचारिणमन्तेवासिनमुवाचैता गा हे सोम्योदजोद्गमयास्मद्गृहान्प्रति हे सामश्रवः सामविधिं हि शृणोत्यतोऽर्थाच्चतुर्वेदो याज्ञवल्क्यः । ता गा होदाचकारोत्कालितवानाचार्यगृहं प्रति । याज्ञवल्क्येन ब्रह्मिष्ठपणस्वीकरणेनाऽऽत्मनो ब्रह्मिष्ठता प्रतिज्ञातेति ते ह चुक्रुधुः क्रुद्धवन्तो ब्राह्मणाः । तेषां क्रोधाभिप्रायमाचष्टे— कथं नोऽस्माकमेकैकप्रधानानां ब्रह्मिष्ठोऽस्मीति ब्रुवीतेति । अथ हैवं क्रुद्धेषु ब्राह्मणेषु जनकस्य यजमानस्य होतर्त्विग- २० श्वलो नाम बभूवाऽऽसीत् । स एनं याज्ञवल्क्यं ब्रह्मिष्ठाभिमानो राजाश्रयत्वाच्च धृष्टो याज्ञवल्क्यं पप्रच्छ पृष्टवान् । कथं; त्वं नु खलु नो याज्ञवल्क्य ब्रह्मिष्ठोऽसी३इति । प्लुतिर्भर्त्सनार्था । स होवाच याज्ञवल्क्यो नमस्कुर्मो वयं ब्रह्मिष्ठाय । इदानीं गोकामाः स्मो वयमिति तं ब्रह्मिष्ठप्रतिज्ञं सन्तं तत एव ब्रह्मिष्ठपणस्वीकरणात्प्रष्टुं दध्रे धृतवान्मनो होताऽश्वलः ॥२॥

राजसूयाभिषिक्तः सार्वभौमो राजा सम्राडित्युच्यते । बहुदक्षिणेन यज्ञेनायजदिति सम्बन्धः । अश्वमेधे २५ दक्षिणाबाहुल्यमश्वमेधप्रकरणे स्थितम् । ब्राह्मणा अभिसंगता बभूवुरिति सम्बन्धः । कुरुपञ्चालानामिति कुतो विशेषणं तत्राऽऽह—तेषु हीति । तत्र यज्ञशालायामिति यावत् । विजिज्ञासामेवाऽऽकाङ्क्षापूर्विकां व्युत्पादयति—कथमित्यादिना । अनूचानत्वमनुवचनसमर्थत्वम् । एषां मध्येऽतिशयेनानूचानोऽनूचानतमः स कः स्यादिति योजना । एकस्य पलस्य चत्वारो भागास्तेषामेको भागः पाद इत्युच्यते । प्रत्येकं शृङ्गयोर्दश दश पादाः संबध्येरन्निति शङ्कां निराकर्तुं विभजते—पञ्चेति । एकैकस्मिञ्शृङ्ग आबद्धा बभूवुरिति पूर्वेण सम्बन्धः ॥ १ ॥ ३०

ब्राह्मणा वेदाध्ययनसंपन्नास्तदर्थनिष्ठा इति यावत् । उत्कालयतूद्गमयतु । यतो याज्ञवल्क्याद्यजुर्वेदविदः सकाशाद्ब्रह्मचारी सामविधिं शृणोति ऋक्षु चाध्यारूढं साम गीयते त्रिष्वेव च वेदेष्वन्तर्भूतोऽथर्ववेदस्तस्मादर्थाद्यजुर्वेदिनो मुनेः शिष्यस्य सामवेदाध्ययनानुपपत्तेर्वेदचतुष्टयविशिष्टो मुनिरित्याह—अत इति । निमित्तनिवेदनपूर्वकं ब्राह्मणानां सभ्यानां क्रोधप्राप्तिं दर्शयति—याज्ञवल्क्येनेति । क्रोधानन्तर्यमथशब्दार्थं कथयति—क्रुद्धेष्विति । अश्वलप्रश्नस्य प्राथम्ये हेतुः—राजेति । याज्ञवल्क्यमित्यनुवादोऽन्वयप्रदर्शनार्थः । प्रश्नमेव प्रश्नपूर्वकं विशदयति— ३५ कथमित्यादिना । अनौद्धत्यं ब्रह्मविदो लिङ्गमिति सूचयति—स हेति । किमिति तर्हि स्वगृहं प्रति गावो ब्रह्मिष्ठपणभूता नीतास्तत्राऽऽह—इदानीमिति । न तस्य तादृशी प्रतिज्ञा प्रतिभातीत्याशङ्क्याऽऽह—तत एवेति ॥ २ ॥

**याज्ञवल्क्येति होवाच यदिदँ सर्वं मृत्युनाप्तँ सर्वं मृत्युनाऽभिपन्नं केन यजमानो मृत्योराप्तिमतिमुच्यत इति होत्रर्त्विजाग्निना वाचा वाग्वै यज्ञस्य होता तद्येयं वाक्सोऽयमग्निः स होता स मुक्तिः साऽतिमुक्तिः ॥३॥**

याज्ञवल्क्येति होवाच। तत्र मधुकाण्डे पाङ्क्तेन कर्मणा दर्शनसमुच्चितेन यजमानस्य मृत्योरत्ययो ५ व्याख्यात उद्गीथप्रकरणे संक्षेपतस्तस्यैव परीक्षाविषयोऽयमिति तद्गतदर्शनविशेषार्थोऽयं विस्तर आरभ्यते। यदिदं साधनजातमस्य कर्मण ऋत्विगग्न्यादि मृत्युना कर्मलक्षणेन स्वाभाविकासङ्गसहितेनाऽऽप्तं व्याप्तं न केवलं व्याप्तमभिपन्नं च मृत्युना वशीकृतं च। केन दर्शनलक्षणेन साधनेन यजमानो मृत्योराप्तिमति मृत्युगोचरत्वमतिक्रम्य मुच्यते स्वतन्त्रो मृत्योरवशो भवतीत्यर्थः। नतूद्गीथ एवाभिहितं येनातिमुच्यते मुख्यप्राणात्मदर्शनेनेति। बाढमुक्तं योऽनुक्तो विशेषस्तत्र तदर्थोऽयमारम्भ इत्यदोषः।

१० होत्रर्त्विजाऽग्निना वाचेत्याह याज्ञवल्क्यः। एतस्यार्थं व्याचष्टे। कः पुनर्होता येन मृत्युमतिक्रामतीति। उच्यते—वाग्वै यज्ञस्य यजमानस्य "यज्ञो वै यजमानः' इति श्रुतेः। यज्ञस्य यजमानस्य या वाक्सैव होताऽधियज्ञे। कथं तत्तत्र येयं वाग्यज्ञस्य यजमानस्य सोऽयं प्रसिद्धोऽग्निरधिदैवतम्। तदेतत्त्र्यन्नप्रकरणे व्याख्यातम्। स च अग्नि-र्होता "अग्निर्वै होता" इति श्रुतेः। यदेतद्यज्ञस्य साधनद्वयं होता चर्त्विगधियज्ञमध्यात्मं च वागेतदुभयं साधनद्वयं परिच्छिन्नं मृत्युनाऽऽप्तं स्वाभाविकाज्ञानासङ्गप्रयुक्तेन कर्मणा मृत्युना प्रतिक्षणमन्यथात्वमापद्यमानं वशीकृतम्। १५ तदनेनाधिदैवतरूपेणाग्निना दृश्यमानं यजमानस्य यज्ञस्य मृत्योरतिमुक्तये भवति। तदेतदाह—स मुक्तिः स होताऽ-ग्निर्मुक्तिरग्निस्वरूपदर्शनमेव मुक्तिः। यदैव साधनद्वयमग्निरूपेण पश्यति तदानोमेव हि स्वाभाविकादासङ्गा-

तत्र प्रथमं मुनेराभिमुख्यमापादयितु सम्बोधयति—याज्ञवल्क्येतीति। उक्तरीत्याऽऽश्वलप्रश्ने प्रस्तुते तस्योद्गीथाधिकारेण सङ्गतिमाह—तत्रेति। मधुकाण्डे पूर्वत्र व्याख्याते यदुद्गीथप्रकरणं तस्मिन्नासङ्गपाप्मनो मृत्योरत्ययः समुच्चितेन कर्मणा संक्षेपतो व्याख्यात इति सम्बन्धः। तस्यैवोद्गीथदर्शनस्येति यावत्। परीक्षाविषयो २० विचारभूमिरय प्रश्नप्रतिवचनरूपो ग्रन्थ इत्यर्थः। तच्छब्दः समनन्तरनिर्दिष्टग्रन्थविषयः। दर्शनमुद्गीथोपासनं तस्य विशेषो वागादेरग्न्याद्यात्मत्वविज्ञानं तत्सिद्ध्यर्थोऽयं प्रक्रमः। एवमवान्तरसंगतिमुक्त्वा प्रश्नाक्षराणि व्याचष्टे—यदिदमिति। मृत्युनाऽऽप्तमित्यनेन मृत्युनाऽभिपन्नमित्यस्य गतार्थत्वमाशङ्क्याऽऽह—न केवलमिति। कर्मणो मृत्युत्वा-त्तेन मृत्योरत्ययायोगात्तदत्ययसाधनं किंचिद्दर्शनमेव वाच्यमित्याशयेन पृच्छति—केनेति। दर्शनविषयं प्रश्न-माक्षिपति—नन्विति। येन मुख्यप्राणात्मदर्शनेनातिमुच्यते तदुद्गीथप्रक्रियायामेवोक्तं तथा च मृत्योरत्ययोपायस्य २५ विज्ञानस्य निर्ज्ञातत्वात्केनेतिप्रश्नानुपपत्तिरिति योजना। तस्यैव परीक्षाविषयोऽयमित्यादावुक्तमादाय परिहरति—बाढमिति। उद्गीथप्रकरणे वागादेरग्न्याद्यात्मत्वदर्शनरूपो यो विशेषो वक्तव्योऽपि नोक्तस्तदुक्त्यर्थोऽयं प्रश्नप्रति-वचनरूपो ग्रन्थ इति कृत्वा केनेत्यादिप्रश्नोपपत्तिरित्यर्थः।

कीदृक्पुनर्दर्शनं मृत्युजयसाधनं होतेत्यादवुक्तमित्याशङ्क्याऽऽह—एतस्येति। व्याचष्टे वाग्वै यज्ञस्येत्यादिनेति शेषः। व्याख्यानमेव विशदयितुं पृच्छति—कः पुनरिति। दर्शनविषयं दर्शयन्नुत्तरमाह—उच्यत इति। यज्ञशब्दस्य ३० यजमाने वृद्धप्रयोगो नास्तीत्याशङ्क्याऽऽह—यज्ञ इति। यजमानस्य या वागध्यात्मं सैवाधियज्ञे होताऽस्तु तथाऽपि कथं तयोर्देवतात्मना दर्शनमित्याह—कथमिति। तयोरग्न्यात्मना दर्शनमुत्तरवाक्यावष्टम्भेन व्याचष्टे—तत्तत्रेति। कथं पुनर्वागग्न्योरेकत्वं तदाह—तदेतदिति। तयोरेकत्वेऽपि कुतो होतुस्तदैक्यमित्याशङ्क्याऽऽह— स चेति। स मुक्ति-रित्येतदवतारयितुं भूमिका करोति—यदेतदिति। न केवलमेतदुभयं मृत्युना सस्पृष्टमेव किंतु तेन वशीकृतं चेत्याह—स्वाभाविकेति। मृत्युनाऽऽप्तं मृत्युनाऽभिपन्नमित्यनयोरर्थमनूद्य होत्रेत्यादेरर्थमनुवदति—तदनेनेति। साधनद्वयं ३५ तच्छब्दार्थः। यजमानग्रहणं होतुरुपलक्षणम्। उक्तेऽर्थे समनन्तरवाक्यमवतार्य व्याकरोति—तदेतदाहेति। मुक्तिशब्द-स्तत्साधनविषयः। पदार्थमुक्त्वा वाक्यार्थमाह—अग्निस्वरूपेति। वाचो होतुश्चाग्निस्वरूपेण दर्शनमेव मुक्तिहेतुरिति

१. स्वाभाविकाज्ञानासंगः—स्वाभाविकं यत् अज्ञानं तत्प्रयुक्तः आचार्यागमोपदेशं विना अनादिदुर्वासनया प्राप्तः आसङ्गः प्रत्यक्षानुमानजनिता दृष्टविषये आसक्तिः।

याज्ञवल्क्येति होवाच यदिदँ सर्वमहोरात्राभ्यामाप्तँ सर्वमहोरात्राभ्यामभिपन्नं केन यजमानोऽहोरात्रयोराप्तिमतिमुच्यत इत्यध्वर्युणर्त्विजा चक्षुषाऽऽदित्येन चक्षुर्वै यज्ञस्याध्वर्युस्तद्यदिदं चक्षुः सोऽसावादित्यः सोऽध्वर्युः स मुक्तिः सातिमुक्तिः ॥४॥

न्मृत्योर्विमुच्यत आध्यात्मिकात्परिच्छिन्नरूपादाधिभौतिकाच्च। तस्मात्स होताऽग्निरूपेण दृष्टो मुक्तिर्मुक्ति- ५ साधनं यजमानस्य।

साऽतिमुक्तिः। यैव च मुक्तिः साऽतिमुक्तिरतिमुक्तिसाधनमित्यर्थः। साधनद्वयस्य परिच्छिन्नस्य याऽधि-देवतारूपेणापरिच्छिन्नेनाग्निरूपेण दृष्टिः सा मुक्तिः। याऽसौ मुक्तिरधिदेवतादृष्टिः सैवाध्यात्माधिभूतपरिच्छेद-विषयासङ्गास्पदं मृत्युमतिक्रम्याधिदेवतात्वस्याग्निभावस्य प्राप्तिर्या फलभूता साऽतिमुक्तिरित्युच्यते। तस्या अति-मुक्तेर्मुक्तिरेव साधनमिति कृत्वा साऽतिमुक्तिरित्याह। यजमानस्य ह्यतिमुक्तिर्वागादीनामग्न्यादिभाव इत्युद्गीथ-प्रकरणे व्याख्यातम्। तत्र सामान्येन मुख्यप्राणदर्शनमात्रं मुक्तिसाधनमुक्तं न तद्विशेषो वागादीनामग्न्यादिदर्शनमिह १० विशेषो वर्ण्यते। मृत्युप्राप्त्यतिमुक्तिस्तु सैव फलभूता योद्गीथब्राह्मणेन व्याख्याता मृत्युमतिक्रान्तो दीप्यत इत्याद्या ॥३॥

याज्ञवल्क्येति होवाच। स्वाभाविकादज्ञानासङ्गप्रयुक्तात्कर्मलक्षणान्मृत्योरतिमुक्तिर्व्याख्याता। तस्य कर्मणः सासङ्गस्य मृत्योराश्रयभूतानां दर्शपूर्णमासादिकर्मसाधनानां यो विपरिणामहेतुः कालस्तस्मात्कालात्पृथग-तिमुक्तिर्वक्तव्येतीदमारभ्यते क्रियानुष्ठानव्यतिरेकेणापि प्रागूर्ध्वं च क्रियायाः साधनविपरिणामहेतुत्वेन व्यापार- १५ दर्शनात्कालस्य। तस्मात्पृथक्कालादतिमुक्तिर्वक्तव्येत्यत आह–यदिदं सर्वमहोरात्राभ्यामाप्तं; स च कालो द्विरूपोऽहो-रात्रादिलक्षणस्तिथ्यादिलक्षणश्च। तत्राहोरात्रादिलक्षणात्तावदतिमुक्तिमाह—अहरोत्राभ्यां हि सर्वं जायते वर्धते

यावत्। उक्तमर्थं प्रपञ्चयति—यदैवेति। स मुक्तिरित्यस्यार्थमुपसंहरति—तस्मादिति।

वाक्यान्तरं समुत्थाप्य व्याचष्टे—साऽतिमुक्तिरिति। मुक्त्यतिमुक्त्योरसंकीर्णत्वं दर्शयति—साधनद्वयस्येति। प्राप्तिरतिमुक्तिरिति सम्बन्धः। तामेव संगृह्णाति—या फलभूतेति। फलभूतायामग्न्यादिदेवताप्राप्तौ कथमतिमुक्ति- २० शब्दोपपत्तिरित्याशङ्क्याऽऽह—तस्या इति। ननु वागादीनामग्न्यादिभावोऽत्र श्रूयते यजमानस्य तु न किञ्चिदुच्यते तत्राऽऽह—यजमानस्येति। तर्हि तेनैव गतार्थत्वादनर्थकमिदं ब्राह्मणमित्याशङ्क्य बाढमित्यादिनोक्तं स्मारयति—तत्रेति। दर्शनवत्फलेऽपि विशेषः स्यादित्याशङ्क्याऽऽह—मृत्युप्राप्तीति ॥३॥

प्रश्नान्तरमवतार्य तात्पर्यमाह—याज्ञवल्क्येति। आश्रयभूतानि कानि तानीत्याशङ्क्याऽऽह—दर्शपूर्णमासा-दीति। प्रतिक्षणमन्यथात्व विपरिणामः। अग्न्यादिसाधनान्याश्रित्य काम्यं कर्म मृत्युशब्दितमुत्पद्यते तेषां साधनानां २५ विपरिणामहेतुत्वात्कालो मृत्युस्ततोऽतिमुक्तिर्वक्तव्येत्युत्तरग्रन्थारम्भ इत्यर्थः। कर्मणो मुक्तिरुक्ता चेत्कालादपि सोक्तैव तस्य कर्मान्तर्भावेन मृत्युत्वादित्याशङ्क्याऽऽह—पृथगिति। कर्मनिरपेक्षतया कालस्य मृत्युत्वं व्युत्पादयति—क्रियेति। कालस्य पृथङ्मृत्युत्वे सिद्धे फलितमाह—तस्मादिति। उत्तरग्रन्थस्थप्रश्नयोर्विषयं भेत्तुं काल भिनत्ति—स चेति। आदित्यश्चन्द्रश्चेति कर्तृभेदाद्द्वैविध्यमुन्नेयम्। कालस्य द्वैरूप्ये सत्याद्यकण्डिकाविषयमाह—तत्रेति। अहोरात्रयोर्मृत्युत्वे सिद्धे ताभ्यामतिमुक्तिर्वक्तव्या तदेव कथमित्याशङ्क्याऽऽह—अहोरात्राभ्यामिति। यज्ञसाधनं च तथा ताभ्यां जायते ३०

---

१ अहोरात्राभ्या मृत्युरूपाभ्यां विमोचनं च भवति। आदित्यं गतस्याहोरात्राभावात्। अत्र चक्षुषः अध्वर्योश्चादित्य-रूपेणध्यानात् चक्षुरासंग जनित पाटमनिवृत्तिः तद्वत् आदित्यप्राप्त्या अहोरात्रपरिच्छेदनिवृत्तिः।

२. तृतीयखण्ड. मुख्यप्राणस्य हिरण्यगर्भरूपस्य अहमिति ध्यानं प्रथमाध्याये उद्गीथब्राह्मणे उक्तस्य अङ्गमने-नोच्यते। यजमानवाक् होता इत्युभयं अग्निरूपेण ध्येयमित्यर्थः। वाचः होतुश्चाग्निरूपेण दर्शनं मुक्तिः तत्फलं अग्निभावः अतिमुक्तिः। ३५

३ साधनानि आज्यदधिपयआदीनि तेपा विपरिणामहेतुः कालः ततो मुक्तिः आदित्यस्वरूपप्राप्त्या आदित्ये अहोरात्राभावात्।

**याज्ञवल्क्येति होवाच यदिदँ सर्वं पूर्वपक्षापरपक्षाभ्यामाप्तँ सर्वं पूर्वपक्षापरपक्षाभ्याम-
भिपन्नं केन यजमानः पूर्वपक्षापरपक्षयोराप्तिमतिमुच्यत इत्युद्गात्रर्त्विजा वायुना प्राणेन
प्राणो वै यज्ञस्योद्गाता तद्योऽयं प्राणः स वायुः स उद्गाता स मुक्तिः साऽतिमुक्तिः ॥५॥**

विनश्यति च। तथा यज्ञसाधनं च। यज्ञस्य यजमानस्य चक्षुरध्वर्युश्च शिष्टान्यक्षराणि पूर्ववन्नेयानि। यजमानस्य
५ चक्षुरध्वर्युश्च साधनद्वयमध्यात्माधिभूतपरिच्छेदं हित्वाऽधिदैवतात्मना दृष्टं यत्स मुक्तिः सोऽध्वर्युरादित्यभावेन दृष्टो
मुक्तिः सैव मुक्तिरेवातिमुक्तिरिति पूर्ववत् आदित्यात्मभावमापन्नस्य हि नाहोरात्रे संभवतः ॥४॥

इदानीं तिथ्यादिलक्षणादतिमुक्तिरुच्यते—यदिदं सर्वमहोरात्रयोरविशिष्टयोरादित्यः कर्ता न प्रतिपदादीनां
तिथीनाम्। तासां तु वृद्धिक्षयोपगमनेन प्रतिपत्प्रभृतीनां चन्द्रमाः कर्ता। अतस्तदापत्त्या पूर्वपक्षापरपक्षात्यय
आदित्यापत्त्याऽहोरात्रात्ययवत्। तत्र यजमानस्य प्राणो वायुः स एवोद्गातेत्युद्गीथब्राह्मणेऽवगतं "वाचा च ह्येव
१० स प्राणेन चोदगायदि"ति च निर्धारितम्। "अथैतस्य प्राणस्याऽऽपः शरीरं ज्योतीरूपमसौ चन्द्र" इति च। प्राणवायु-
चन्द्रमसामेकत्वाच्चन्द्रमसा वायुना चोपसंहारे न कश्चिद्विशेष एवंमन्यमाना श्रुतिर्वायुनाऽधिदैवतरूपेणोपसंहरति।
अपि च वायुनिमित्तौ हि वृद्धिक्षयौ चन्द्रमसः। तेन तिथ्यादिलक्षणस्य कालस्य कर्तुरपि कारयिता वायुः। अतो
वायुरूपापन्नस्तिथ्यादिकालादतीतो भवतीत्युपपन्नतरं भवति। तेन श्रुत्यन्तरे चन्द्ररूपेण दृष्टिर्मुक्तिरतिमुक्तिश्च।
इह तु काण्वानां साधनद्वयस्य तत्कारणरूपेण वाय्वात्मना दृष्टिर्मुक्तिरतिमुक्तिश्चेति न श्रुत्योर्विरोधः ॥५॥

१५ वर्धते नश्यति चेति सम्बन्धः। प्रतिवचनव्याख्याने यज्ञशब्दार्थमाह—**यजमानस्येति**। स मुक्तिरित्यस्य तात्पर्यार्थ-
माह—**यजमानस्येत्यादिना**। तस्यैवाक्षरार्थं कथयति—**सोऽध्वर्युरिति**। यथोक्तरीत्याऽऽदित्यात्मत्वेऽपि कथमहोरात्र-
लक्षणान्मृत्योरतिमुक्तिरत आह—**आदित्येति**। 'नोदेता नास्तमेता' इत्यादिश्रुतेरादित्ये वस्तुतो नाहोरात्रे स्तः। तथा
च तदात्मनि विदुष्यपि न ते सम्भवत इत्यर्थः ॥४॥

कण्डिकान्तरस्य तात्पर्यमाह—**इदानीमिति**। नन्वहोरात्रादिलक्षणे काले तिथ्यादिलक्षणस्य कालस्यान्तर्भा-
२० वात्ततोऽतिमुक्तावुक्ताया तिथ्यादिलक्षणादपि कालादसावुक्तैवेति कृतं पृथगारम्भेणेति तत्राऽऽह—**अहोरात्रयोरिति**।
अविशिष्टयोर्वृद्धिक्षयशून्ययोरिति यावत्। कथं तर्हि तिथ्यादिलक्षणात्कालादतिमुक्तिरत आह—**अतस्तदापत्त्येति**।
चन्द्रप्राप्त्या तिथ्याद्यत्ययो माध्यंदिनश्रुत्योच्यते काण्वश्रुत्या तु वायुभावापत्त्या तदत्यय उक्तः। तथा च श्रुत्योर्विरोधे
क. समाधिरित्याशङ्क्याऽऽह—**तत्रेति**। काण्वश्रुताविति यावत्। उद्गातुरपि प्राणात्मकवायुरूपत्वं श्रुतिद्वयानुसारेण
दर्शयति—**स एवेति**। न केवलमुद्गातुः प्राणत्वं प्रतिज्ञामात्रेण प्रतिपन्नं किन्तु विचार्य निर्धारितं चेत्याह—**वाचेति**।
२५ प्राणचन्द्रमसोश्चैकत्वं सप्तान्नाधिकारे निर्धारितमित्याह—**अथेति**। उक्तया रीत्या प्राणादीनामेकत्वे श्रुत्योरविरोधं
फलितमाह—**प्राणेति**। मनोब्रह्मणोश्चन्द्रमसा प्राणोद्गात्रोश्च वायुनोपास्यत्वेनोपसंग्रहे मृत्युतरणे विशेषो नास्तीति
श्रुत्योर्विकल्पेनोपपत्तिरित्यर्थः। उपसंहरति प्राणमुद्गातारं च तद्रूपेणोपास्यतया संगृह्णाति काण्वश्रुतिरित्यर्थः।
इतश्च काण्वश्रुतिरुपपन्नेत्याह—**अपि चेति**। वायुः सूत्रात्मा तन्निमित्तौ स्वावयवस्य चन्द्रमसो वृद्धिह्रासौ। सूत्राधीना
हि चन्द्रादेर्जगतश्चेष्टेत्यर्थः। वृद्ध्यादिहेतुत्वे फलितमाह—**तेनेति**। कर्तुश्चन्द्रस्येत्यर्थः। वायोश्चन्द्रमसि कारयितृत्वेऽपि
३० प्रकृते किमायातं तदाह—**अत इति**। उदितानुदितहोमवद्विकल्पमुपेत्याविरोधमुपसंहरति—**तेनेति**। श्रुत्यन्तरं माध्य-
न्दिनश्रुतिः। साधनद्वयस्येत्युभयत्र सम्बध्यते। तत्राऽऽदौ मनसो ब्रह्मणश्चेत्यर्थः। उत्तरत्र प्राणस्योद्गातुश्चेत्यर्थं।
तच्छब्दश्चन्द्रविषयः ॥५॥

---

१. चतुर्थखण्डेन यजमानस्य चक्षु. अध्वर्युश्चादित्यरूपेण द्रष्टव्यौ मुख्यप्राणोपास्त्यंगतया तेनासंगलक्षणमृत्युरपगच्छति।
२. अत्र सप्तमखण्डः माध्यन्दिनपाठे "यदिदं सर्वं पूर्वपक्षापरपक्षाभ्यामि"त्यारभ्य ब्रह्मणर्त्विजा मनसा चन्द्रेण
३५ सोऽसौ चन्द्र स मुक्तिः सातिमुक्तिरित्युक्तम्। काण्वे तु—उद्गात्रर्त्विजा वायुना प्राणेन इत्यादि—सोऽयं विरोध
भाष्ये परिह्रियते-प्राणवायुचन्द्रमसामिति। एतेषामेकत्वात् वायुना चन्द्रमसा चोपसंहारो युक्त इति। मनो
ब्रह्मणोः चन्द्रमसा अभेदेन इति माध्यन्दिनपाठात् प्राणोद्गात्रोश्च वायुनोपसंहारे न विशेषः। मृत्युतरणे
विशेषाभावेऽपि उपासनप्रकारः विकल्पेन द्रष्टव्य इत्याह—**श्रुत्योरिति**।

**याज्ञवल्क्येति होवाच यदिदमन्तरिक्षमनारम्बणमिव केनाक्रमेण यजमानः स्वर्गं लोकमाक्रमत इति ब्रह्मणर्त्विजा मनसा चन्द्रेण मनो वै यज्ञस्य ब्रह्मा तद्यदिदं मनः सोऽसौ चन्द्रः स ब्रह्मा स मुक्तिः साऽतिमुक्तिरित्यतिमोक्षा अथ सम्पदः ॥६॥**

मृत्योः कालादतिमुक्तिर्व्याख्याता यजमानस्य। सोऽतिमुच्यमानः केनावष्टम्भेन परिच्छेदविषयं मृत्युमतीत्य फलं प्राप्नोत्यतिमुच्यत इत्युच्यते। यदिदं प्रसिद्धमन्तरिक्षमाकाशोऽनारम्बणमनालम्बनमिवशब्दादस्त्येव तत्राऽऽलम्बनं तत्तु न ज्ञायत इत्यभिप्रायः। यत्तु तदज्ञायमानमालम्बनं तत्सर्वनाम्ना केनेति पृच्छ्यते। अन्यथा फलप्राप्तेरसंभवात्। येनावष्टम्भेनाऽऽक्रमेण यजमानः कर्मफलं प्रतिपद्यमानोऽतिमुच्यते किं तदिति प्रश्नविषयः। केनाऽऽक्रमेण यजमानः स्वर्गं लोकमाक्रमत इति स्वर्गं लोकं फलं प्राप्नोत्यतिमुच्यत इत्यर्थः। ब्रह्मणर्त्विजा मनसा चन्द्रेणेत्यक्षरन्यासः पूर्ववत्। तत्राध्यात्मं यज्ञस्य यजमानस्य यदिदं प्रसिद्धं मनः सोऽसौ चन्द्रोऽधिदैवतम्। मनोऽध्यात्मं चन्द्रमा अधिदैवतमिति हि प्रसिद्धम्। स एव चन्द्रमा ब्रह्मर्त्विक्तेनाधिभूतं ब्रह्मणः परिच्छिन्नं रूपमध्यात्मं च मनस एतद्द्वयमपरिच्छिन्नेन चन्द्रमसो रूपेण पश्यति। तेन चन्द्रमसा मनसाऽवलम्बनेन कर्मफलं स्वर्गं लोकं प्राप्नोत्यतिमुच्यत इत्यभिप्रायः। इतीत्युपसंहारार्थं वचनम्। इत्येवंप्रकारा मृत्योरतिमोक्षाः। सर्वाणि हि दर्शनप्रकाराणि यज्ञाङ्गविषयाण्यस्मिन्नवसर उक्तानीति कृत्वोपसंहार इत्यतिमोक्षाः। एवंप्रकारा अतिमोक्षा इत्यर्थः।

अथ संपदः। अथाधुना संपद उच्यन्ते। संपन्नाम केनचित्सामान्येनाग्निहोत्रादीनां कर्मणां महतां फलवतां तत्फलाय संपादनं संपत्। फलस्यैव वा सर्वोत्साहेन फलसाधनानुष्ठाने प्रयततां केनचिद्वैगुण्येनासंभवः। तदिदानीमाहिताग्निः सन्यत्किंचित्कर्माग्निहोत्रादीनां यथासंभवमादायाऽऽलम्बनीकृत्य कर्मफलविद्वत्तायां सत्यां यत्कर्मफलकामो भवति तदेव संपादयति। अन्यथा राजसूयाश्वमेधपुरुषमेधसर्वमेधलक्षणानामधिकृताना त्रैवर्णिकानामप्यसंभवस्तेषां

यदिदमन्तरिक्षमित्यादि प्रश्नान्तरं वृत्तानुवादपूर्वकमुपादत्ते—मृत्योरिति। व्याख्यानव्याख्येयभावेन क्रियापदे नेतव्ये। इत्येतत्प्रश्नरूपमुच्यते समनन्तरवाक्येनेति यावत्। तद्व्याचष्टे—यदिदमिति। केनेति प्रश्नस्य विषयमाह—यत्त्विति। प्रश्नविषयं प्रपञ्चयति—अन्यथेति। आलम्बनमन्तरेणेति यावत्। प्रश्नार्थं संक्षिप्योपसंहरति—केनेति। अक्षरन्यासोऽक्षराणामर्थेषु वृत्तिरिति यावत्। मनो वै यज्ञस्येत्यादेरर्थमाह—तत्रेति। व्यवहारभूमिः सप्तम्यर्थः। वाक्यार्थमाह—तेनेति। तृतीया तृतीयस्यां सम्बध्यते। दर्शनफलमाह—तेनेति। वागादीनामग्न्यादिभावेन दर्शनमुक्तं त्वगादीनां तु वाय्वादिभावेन दर्शनं वक्तव्यं तत्कथं वक्तव्यशेषे सत्युपसंहारोपपत्तिरित्याशङ्क्याऽऽह—सर्वाणीति। वागादावुक्तन्यायस्य त्वगादावतिदेशोऽत्र विवक्षित इत्याह—एवं प्रकारा इति।

अथशब्दो दर्शनप्रभेदकथनानन्तर्यार्थः। केयं सम्पन्नामेति पृच्छति—सम्पन्नामेति। उत्तरमाह—केनचिदिति। महतां फलवतामश्वमेधादिकर्मणा कर्मत्वादिना सामान्येनाल्पीयःसु कर्मसु विवक्षितफलसिद्ध्यर्थं सम्पत्तिः सम्पदुच्यते। यथाऽनत्यग्निहोत्रादिनिर्वर्तनेनाश्वमेधादि मया निर्वर्त्यत इति ध्यानं सम्पदित्यर्थः। यद्वा फलस्यैव देवलोकादेरुज्ज्वलत्वादिसामान्येनाऽऽज्याद्याहुतिषु सम्पादनं सम्पदित्याह—फलस्येति। सम्पदनुष्ठानावसरमादर्शयति—सर्वोत्साहेनेति। असम्भवोऽनुष्ठानस्य यदेति शेषः। कर्मिणामेव सम्पदनुष्ठानेऽधिकार इति दर्शयितुमाहिताग्निः सन्नित्युक्तम्। अग्निहोत्रादीनामिति निर्धारणे षष्ठी। यथासम्भवं वर्णाश्रमानुरूपमिति यावत्। आदायेत्यस्य व्याख्यानमालम्बनीकृत्येति। न केवलं कर्मित्वमेव सम्पदनुष्ठातुरपेक्ष्यते किन्तु तत्फलविद्यावत्त्वमपीत्याह—कर्मेति। तदेव कर्मफलमेवेत्यर्थः। कर्माण्येव फलवन्ति न सम्पदस्तत्कथं तासां कार्यतेत्याशङ्क्याऽऽह—अन्यथेति। विहिताध्ययनस्यार्थज्ञानानुष्ठानादिपरम्परया फलवत्त्वमिष्टम्। न चाश्वमेधादिषु सर्वेषामनुष्ठानसम्भवः कर्मस्वधिकृतानामपि त्रैवर्णिकानां केषाञ्चिदनुष्ठानासम्भवादतस्तेषां तदध्ययनार्थवत्त्वानुपपत्त्या सम्पदामपि फलवत्त्वमेष्टव्यमित्यर्थः। महतोऽश्वमेधादिफलस्य कथमल्पीयस्या सम्पदा प्राप्तिरित्याशङ्क्य शास्त्रप्रामाण्यादित्यभिप्रेत्याऽऽह—यदेति। तदा तत्पाठः स्वाध्यायार्थ

---

१. अथ संपदः संपन्नामेत्यादिना आरोप्यप्राधान्यमुक्तं यथा अग्निहोत्रस्य महायज्ञत्वध्यानम्। अध्यासस्तु अधिष्ठानप्रधानः यथा शालिग्रामशिलायां विष्णुबुद्धिः।

**याज्ञवल्क्येति होवाच कतिभिरयमद्यर्ग्भिर्होतास्मिन्यज्ञे करिष्यतीति तिसृभिरिति कतमास्तास्तिस्र इति पुरोनुवाक्या च याज्या च शस्यैव तृतीया किं ताभिर्जयतीति यत्किञ्चेदं प्राणभृदिति ॥७॥**

तत्पाठः स्वाध्यायार्थं एव केवलः स्यात्। यदि तत्फलप्राप्त्युपायः कश्चन न स्यात्। तस्मात्तेषां संपदैव तत्फलप्राप्तिस्तस्मात्संपदामपि फलवत्त्वमतः संपद आरभ्यन्ते ॥६॥

याज्ञवल्क्येति होवाचाभिमुखीकरणाय। कतिभिरयमद्यर्ग्भिर्होताऽस्मिन्यज्ञे कतिभिः कतिसंख्याभिर्ऋग्जातिभिरयं होतर्त्विगस्मिन्यज्ञे करिष्यति शस्त्रं शंसत्याहेतरस्तिसृभिर्ऋग्जातिभिरित्युक्तवन्तं प्रत्याहेतरः कतमास्तास्तिस्र इति। संख्येयविषयोऽयं प्रश्नः पूर्वस्तु संख्याविषयः। पुरोनुवाक्या च प्राग्यागकालाद्याः प्रयुज्यन्त ऋचः सर्ज्जातिः पुरोनुवाक्येत्युच्यते। यागार्थं या प्रयुज्यन्त ऋचः सर्ज्जातिर्याज्या। शस्त्रार्थं याः प्रयुज्यन्त ऋचः सर्ज्जातिः शस्या। सर्वास्तु याः काश्चनर्चस्ताः स्तोत्रिया वा अन्या वा सर्वा एतास्वेव तिसृषु ऋग्जातिष्वन्तर्भवन्ति। किं
१० ताभिर्जयतीति यत्किंचेदं प्राणभृदिति। अतश्च संख्यासामान्याद्यत्किंचित्प्राणभृज्जातं तत्सर्वं जयति तत्सर्वं फलजातं संपादयति संख्यादिसामान्येन ॥७॥

एवेति पूर्वेण सम्बन्धः। अध्ययनस्य फलवत्त्वे वक्तव्ये फलितमाह—तस्मादिति। तेषां राजसूयादीनामिति यावत्। ब्राह्मणादीनां राजसूयाद्यध्ययनसामर्थ्यात्तेषां सम्पदैव तत्फलप्राप्तावपि किं सिध्यति तदाह—तस्मात्सम्पदामिति। कर्मणामिवेति दृष्टान्तार्थोऽपिशब्दः। तासां फलवत्त्वे फलितमाह—अत इति ॥६॥

१५ संपदामारम्भमुपपाद्य प्रश्नवाक्यमुत्थापयति—याज्ञवल्क्येतीति। प्रतीकमादाय व्याचष्टे—कतिभिरित्यादिना। कतिभिः कतमा इति प्रश्नयोर्विषयभेदं दर्शयति—संख्येयेति। स्तोत्रिया नामान्याऽपि काचिदृग्जातिरस्तीत्याशङ्क्याऽऽह—सर्वास्त्विति। अन्या वेति शस्त्रजातिग्रहः। विधेयभेदात्सर्वशब्दापुनरुक्तिः। अतश्च सम्पत्तिकरणादित्यर्थः। संख्यासामान्यात् त्रित्वाविशेषादिति यावत्। प्राणभृज्जातं लोकत्रयं विवक्षितम् ॥७॥

---

१. पुरोऽनुवाक्या—अनुब्रूहि इति यदा अध्वर्युः नियोगबोधकं प्रैषमुच्चारयति तदा होत्रा यागशालायां स्थितेन
२० पठ्यमाना मन्त्राः पुरोऽनुवाक्यामन्त्राः तत्पठनकाले अध्वर्युं जुह्वां हविः पूरयति। ततः परं वेदिमतिक्रम्य दक्षिणभागे स्थित्वा 'यज' इति प्रैषं ब्रूते सा याज्या याज्यान्ते वौषट् इति पदेन त्यागवाचिपदं प्रयुज्यते तदा अध्वर्युः हविः आहवनीये प्रक्षिपति यजमानश्च 'अग्नय इदं न मम' इति देवतोद्देशेन द्रव्य त्यजति देवतोद्देशः देवतानामोच्चारणम् अग्नये इति चतुर्थ्यन्तपदेन। त्यागस्तु इदं न ममेति यजमानेन क्रियते पुरोऽनुवाक्या याज्या च इष्टिषु प्रयुज्येते।

२५ २. शस्येति शस्त्रमुच्यते—अप्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानं शस्त्रं तदेव प्रगीतमन्त्रसाध्यं चेत् स्तोत्रमित्युच्यते। स्तोत्रशस्त्रे सोमयागेषु प्रयुज्येते "ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकरोति स्तुतमनुशसति" इति वाक्यात् ग्रहाख्यदारुपात्रे सोमरसं गृहीत्वा अथवा चमसाख्यपात्रे सोमरसेन पूरयित्वा स्तोत्रायानुज्ञा ददाति अध्वर्युः। उद्गाता स्तोत्र प्रयुङ्क्ते तदर्था. ऋचः प्रसिद्धाः। ता ऋचः स्वरं विना दण्डाकारेण होता प्रयुङ्क्ते। अनन्तर याग. क्रियते इति क्रमो ज्ञातव्यः।

३० अत्रोक्तमुपासने सर्वत्र जपः यजमानकर्तृकः ज्ञानं तु ऋत्विक्कर्तृकमिति (वा० ३-१-४३) ध्येयम्। ब्रह्मसूत्रेष्वपि 'स्वामिनः फलश्रुते'रित्यात्रेयः आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते ( ३-४-४४-४३ ) अङ्गावबद्धोपासनेषु यजमानकर्तृकाण्येतापि उत ऋत्विक्कर्तृकाणीति संशये स्वामिकर्तृकाणीति पूर्वपक्षः तस्यैव फलश्रवणात् "वर्षत्यस्मै य उपास्ते" इति श्रुते.। सिद्धान्तस्तु-ऋत्विक्कर्माण्येतानि साङ्गकर्मानुष्ठानाय तस्मै दक्षिणा दत्वा परिग्रहात् तस्मात् तत्कर्तृकाण्येतानि गोदोहनादिवत् अधिकृताधिकारत्वात् ऋत्विज. परार्थत्वात् तस्मै
३५ फलं दक्षिणैव न तु यागजन्यफलं वाचनिकं तु यत्र श्रूयते तत्रैव यथा "आत्मने वा यजमानाय वा य कामं कामयते तमागायति" इत्युक्तेः।

३. गमसखण्डार्थः—भूरादौ पुरोऽनुवाक्यादौ च त्रित्वं सामान्यं ततश्च संख्यासादृश्यात् पुरोऽनुवाक्यादौ लोकत्रय संपाद्य तद्बलात् लोकत्रयं तद्वत् प्राणिजयं च प्राप्नोति वा० ९२।

याज्ञवल्क्येति होवाच कत्ययमद्याध्वर्युरस्मिन्यज्ञ आहुतीर्होष्यतीति तिस्र इति कतमास्तास्तिस्र इति या हुता उज्ज्वलन्ति या हुता अतिनेदन्ते या हुता अधिशेरते किं ताभिर्जयतीति या हुता उज्ज्वलन्ति देवलोकमेव ताभिर्जयति दीप्यत इव हि देवलोको या हुता अतिनेदन्ते पितृलोकमेव ताभिर्जयत्यतीव हि पितृलोको या हुता अधिशेरते मनुष्यलोकमेव ताभिर्जयत्यध इव हि मनुष्यलोकः ॥८॥　५

याज्ञवल्क्येति होवाच कतिभिरयमद्य ब्रह्मा यज्ञं दक्षिणतो देवताभिर्गोपायतीत्येकयेति कतमा सैकेति मन एवेत्यनन्तं वै मनोऽनन्ता विश्वे देवा अनन्तमेव स तेन लोकं जयति ॥९॥

याज्ञवल्क्येति होवाचेति पूर्ववत्। कत्ययमद्याध्वर्युरस्मिन्यज्ञ आहुतीर्होष्यतीति कत्याहुतिप्रकारास्तिस्र इति कतमास्तास्तिस्र इति पूर्ववत्। इतर आह या हुता उज्ज्वलन्ति समिदाज्याहुतयः। या हुता अतिनेदन्तेऽतीव शब्दं कुर्वन्ति मांसाद्याहुतयः। या हुता अधिशेरतेऽध्यधो गत्वा भूमेरधिशेरते पयःसोमाहुतयः। किं ताभिर्जयतीति १० ताभिरेवं निर्वर्तिताभिराहुतिभिः किं जयतीति। या आहुतयो हुता उज्ज्वलन्त्युज्ज्वलनयुक्ता आहुतयो निर्वर्तिताः फलं च देवलोकाख्यमुज्ज्वलमेव तेन सामान्येन या मयैता उज्ज्वलन्त्य आहुतयो निर्वर्त्यमानास्ता एताः साक्षाद्देवलोकस्य कर्मफलस्य रूपं देवलोकाख्यं फलमेव मया निर्वर्त्यत इत्येवं संपादयति। या हुता अतिनेदन्त आहुतयः पितृलोकमेव ताभिर्जयति कुत्सितशब्दकर्तृत्वसामान्येन। पितृलोकसंबद्धायां हि संयमन्यां पुर्यां वैवस्वतेन यात्यमानानां हा हताः स्म मुञ्च मुञ्चेति शब्दो भवति। तथाऽवदानाहुतयस्तेन पितृलोकसामान्यात्पितृलोक एव मया निर्वर्त्यत १५ इति संपादयति। या हुता अधिशेरते मनुष्यलोकमेव ताभिर्जयति भूम्युपरिसम्बन्धसामान्यादध इव ह्यध एव हि मनुष्यलोक उपरितनान्साध्याल्लोकानपेक्ष्याथवाऽधोगमनमपेक्ष्यातो मनुष्यलोक एव मया निर्वर्त्यत इति संपादयति पयःसोमाहुतिनिर्वर्तनकाले ॥८॥

याज्ञवल्क्येति होवाचेति पूर्ववत्। अयमृत्विग्ब्रह्मा दक्षिणतो ब्रह्मासने स्थित्वा यज्ञं गोपायति। कतिभिर्देवताभिर्गोपायतीति प्रासङ्गिकमेतद्बहुवचनम्। एकया हि देवतया गोपायत्यसौ। एवं ज्ञाते बहुवचनेन प्रश्नो २० नोपपद्यते स्वयं जानतस्तस्मात्पूर्वयोः कण्डिकयोः प्रश्नप्रतिवचनेषु कतिभिः कति तिसृभिस्तिस्र इति प्रसङ्गं दृष्ट्वेहापि बहुवचनेनैव प्रश्नोपक्रमः क्रियते। अथवा प्रतिवादिव्यामोहार्थं बहुवचनम्। इतर आहैकयेत्येका सा देवता यया दक्षिणतः स्थित्वा ब्रह्माऽऽसने यज्ञं गोपायति। कतमा सैकेति। मन एवेति मनः सा देवता। मनसा हि ब्रह्मा व्याप्रियते ध्यानेनैव। "तस्य यज्ञस्य मनश्च वाक्च वर्तनी तयोरन्यतरां मनसा संस्करोति ब्रह्मा" इति श्रुत्यन्तरात्। तेन मन एव देवता तया मनसा हि गोपायति ब्रह्मा यज्ञम्। तच्च मनो वृत्तिभेदेनाऽनन्तम्। २५

प्रथमः संख्याविषयो द्वितीयस्तु संख्येयविषयः प्रश्न इति विभागं लक्षयति—पूर्ववदिति। तेन सामान्येनोज्ज्वलत्वेनेति यावत्। उक्तमर्थं संक्षिप्याऽऽह—देवलोकाख्यमिति। कथं मांसाद्याहुतीनां पितृलोकेन सह यथोक्तं सामान्यमत आह—पितृलोकेति। अधोगमनमपेक्ष्येति। अस्ति हि सोमाद्याहुतीनामधस्ताद्गमनमस्ति च मनुष्यलोकस्य पापप्रचुरस्य तादृग्गमनं तदपेक्ष्येत्यर्थः। अतः सामान्यादिति यावत् ॥८॥

दक्षिणत आहवनीयस्येति शेषः। प्रासङ्गिकं बहुवचनमित्युक्तं प्रकटयति—एकया हीति। जल्पकथा प्रस्तुतेति ३० हृदि निधाय वक्तुर्गत्यन्तरमाह—अथवेति। मनसो देवतात्वं साधयति—मनसेति। वर्तनी वर्त्मनी तयोर्वाङ्मनसयोर्वर्त्मनोरन्यतरां वाचं मनसा मौनेन ब्रह्मा संस्करोति वाग्विसर्गे प्रायश्चित्तविधानादिति श्रुत्यन्तरस्यार्थः। तथाऽपि कथं संपदः सिद्धिस्तत्राऽऽह—तच्चेति। देवाः सर्वे यस्मिन्मनस्येकं भवन्त्यभिन्नत्वं प्रतिपद्यन्ते तस्मिन्विश्वदेवदृष्ट्या

१. अष्टमे घृताद्याहुतिषु देवलोकत्वेन संपदुपास्तिः तथा मांसाद्याहुतिषु पितृलोकसंपत् सोमाद्याहुतिषु मनुष्यलोकसंपत् कर्तव्या फलं तत्तल्लोकजयः त्रित्वसाम्यात् आदित्वमध्यत्वान्त्यत्वसाम्याच्च। भूरादीन् पुरोऽनुवाक्यादिषु ३५ संपादयेत् फलं च तत्तल्लोकजयः।

याज्ञवल्क्येति होवाच कत्ययमद्योद्गाताऽस्मिन्यज्ञे स्तोत्रियाः स्तोष्यतीति तिस्र इति कतमास्तास्तिस्र इति पुरोनुवाक्या च याज्या च शस्यैव तृतीया कतमास्ता या अध्यात्ममिति प्राण एव पुरोनुवाक्याऽपानो याज्या व्यानः शस्या किं ताभिर्जयतीति पृथिवीलोकमेव पुरोनुवाक्यया जयत्यन्तरिक्षलोकं याज्यया द्युलोकँ शस्यया ततो ह होताऽश्वल उपरराम ॥१०॥

५ इति बृहदारण्यकोपनिषदि तृतीयाध्याये प्रथमं ब्राह्मणम् ॥१॥

अथ तृतीयाध्यायस्य द्वितीयं ब्राह्मणम्

अथ हैनं जारत्कारव आर्तभागः पप्रच्छ याज्ञवल्क्येति होवाच कति ग्रहाः कत्यतिग्रहा इति। अष्टौ ग्रहा अष्टावतिग्रहा इति ये तेऽष्टौ ग्रहा अष्टावतिग्रहाः कतमे त इति ॥१॥

वैशब्दः प्रसिद्धावद्योतनार्थः। प्रसिद्धं मनस आनन्त्यम्। तदानन्त्याभिमानिनो देवाः। अनन्ता वै विश्वे देवाः।
१० 'सर्वे देवा यत्रैकं भवन्ती'त्यादिश्रुत्यन्तरात्। तेनाऽऽनन्त्यसामान्यादनन्तमेव स तेन लोकं जयति ॥९॥

याज्ञवल्क्येति होवाचेति पूर्ववत्। कति स्तोत्रियाः स्तोष्यतीत्ययमुद्गाता। स्तोत्रिया नाम ऋक्सामसमुदायः कतिपयानामृचाम्। स्तोत्रिया वा शस्या वा याः काश्चन ऋचस्ताः सर्वास्तिस्र एवेत्याह्। ताश्च व्याख्याताः पुरोनुवाक्या च याज्या च शस्यैव तृतीयेति। तत्र पूर्वमुक्तं यत्किचेदं प्राणभृत्सर्वं जयतीति तत्केन सामान्येनेत्युच्यते—कतमास्तास्तिस्र ऋचो या अध्यात्मं भवन्तीति। प्राण एव पुरोनुवाक्या। पशब्दसामान्यात्।
१५ अपानो याज्या। आनन्तर्यात्। अपानेन हि प्रत्तं हविर्देवता ग्रसन्ति। यागश्च प्रदानम्। व्यानः शस्या। "अप्राणन्ननपानन्नृचमभिव्याहरति" इति श्रुत्यन्तरात्। किं ताभिर्जयतीति व्याख्यातम्। तत्र विशेषसंबन्धसामान्यमनुक्तमिहोच्यते सर्वमन्यद्व्याख्यातम्। लोकसंबन्धसामान्येन पृथिवीलोकमेव पुरोनुवाक्यया जयत्यन्तरिक्षलोकं याज्यया मध्यमत्वसामान्यात्। द्युलोकं शस्ययोर्ध्वत्वसामान्यात्। ततो ह तस्मादात्मनः प्रश्ननिर्णयादसौ होताऽश्वल उपरराम नायमस्मद्गोचर इति ॥१०॥

२० इति बृहदारण्यकोपनिषद्भाष्ये तृतीयाध्यायस्य प्रथममश्वलब्राह्मणम् ॥ १ ॥

आख्यायिकासबन्धः प्रसिद्ध एव। मृत्योरतिमुक्तिर्व्याख्याता काललक्षणात्कर्मलक्षणाच्च। कः पुनरसौ भवत्यनन्तलोकप्राप्तिरिति श्रुत्यन्तरस्यार्थः। अनन्तमेवेत्यादि व्याचष्टे—तेनेति। उक्तेन प्रकारेणेति यावत्। तेन मनसि विश्वदेवदृष्ट्यध्यासेनेत्यर्थ। स इत्युपासकोक्तिः ॥ ९ ॥

पूर्ववदित्यभिमुखीकरणायेत्यर्थ। प्रतिवचनमुपादत्ते—स्तोत्रिया वेति। प्रगीतमृग्जातं स्तोत्रमप्रगीतं शस्त्रम्।
२५ कतमास्तास्तिस्र इत्यादेस्तात्पर्यमाह—ताश्चेति। प्रश्नान्तर वृत्तमनूद्योपादत्ते—तत्रेति। यज्ञाधिकारः सप्तम्यर्थ। पुरोनुवाक्यादिना लोकत्रयजयलक्षणं फल केन सामान्येनेत्यपेक्षाया सख्याविशेषेणेत्युक्तं स्मारयति—तदिति। अधियज्ञे त्रयमुक्तं स्मारयित्वाऽध्यात्मविशेषं दर्शयितुमुत्तरो ग्रन्थ इत्याह—उच्यत इति। प्राणादौ पुरोनुवाक्यादौ च पृथिव्यादिलोकदृष्टिरिति प्रश्नपूर्वकमाह—कतमा इति। अपाने याज्यादृष्टौ हेत्वन्तरमाह—अपानेन हीति। हस्ताद्यादानव्यापारेणेति यावत्। प्राणापानव्यापारव्यतिरेकेण शस्त्रप्रयोगस्य श्रुत्यन्तरे सिद्धत्वाद्व्याने शस्यादृष्टिरित्याह—
३० अप्राणन्निति। तत्र पुरोनुवाक्यादिषु चेति यावत्। इहेत्यनन्तरवाक्योक्ति। सर्वमन्यदिति संख्यासामान्योक्ति। किं तद्विशेषसम्बन्धसामान्यं तदाह—लोकेति। पृथिवीलक्षणेन लोकेन सह प्रथमत्वेन सम्बन्धसामान्य पुरोनुवाक्यायामस्ति तेन तया पृथिवीलोकमेव प्राप्नोतीत्यर्थ.। अश्वलस्य तूष्णीभाव भजतोऽभिप्रायमाह—नायमिति ॥ १० ॥

इति बृहदारण्यकोपनिषद्भाष्यटीकायां तृतीयाध्यायस्य प्रथममश्वलब्राह्मणम् ॥ १ ॥

ब्राह्मणान्तरमवतारयन्नाख्यायिका किमर्थेति शङ्कमानं प्रत्याह—आख्यायिकेति। याज्ञवल्क्यो हि विद्याप्रकर्ष-

---

३५ १. सर्वे देवा यत्रैकं भवन्ति ब्रह्मणि स योगिना मनसावगम्यते मानसीन इति वेदभाष्यम् ( तै० आ० ३ )।
२. काललक्षणात् = चतुर्थपञ्चमकण्डिकोक्तज्ञानात् कालाख्यात् मृत्योरतिक्रमः चक्षुपः अध्वर्योश्चादित्यरूपेण ध्यानादादित्यप्राप्तिः तेनाहोरात्राख्यमृत्योर्जयः। उद्गाता प्राणश्च वायुरूपेण द्रष्टव्य तेन वायुभाव. ब्रह्मा मनश्चचन्द्ररूपेण इति ध्यानात् चन्द्रप्राप्तिः। संपदुपासनया सर्वलोकजयश्च।

मृत्युर्यस्मादतिमुक्तिर्व्याख्याता। स च स्वाभाविकाज्ञानासङ्गास्पदोऽध्यात्माधिभूतविषयपरिच्छिन्नो ग्रहातिग्रहलक्षणो मृत्युः। तस्मात्परिच्छिन्नरूपान्मृत्योरतिमुक्तस्य रूपाण्यग्न्यादित्यादीन्युद्गीथप्रकरणे व्याख्यातानि। अश्वलप्रश्ने च तद्गतो विशेषः कश्चित्। तच्चैतत्कर्मणां ज्ञानसहितानां फलम्। एतस्मात्साध्यसाधनरूपात्संसारान्मोक्षः कर्तव्य इत्यतो बन्धनरूपस्य मृत्योः स्वरूपमुच्यते। बद्धस्य हि मोक्षः कर्तव्यः।

यद्यप्यतिमुक्तस्य स्वरूपमुक्त तत्रापि ग्रहातिग्रहाभ्यामविनिर्मुक्त एव मृत्युरूपाभ्याम्। तथा चोक्तमशनाया हि मृत्युरेष एव मृत्युरिति। आदित्यस्थं पुरुषमङ्गीकृत्याऽऽहैको "मृत्युर्बहवा" इति च। तदात्मभावापन्नो हि मृत्योराप्तिमतिमुच्यत इत्युच्यते। न च तत्र ग्रहातिग्रहौ मृत्युरूपौ न स्तः। "अथैतस्य मनसो द्यौः शरीरं ज्योतीरूपमसावादित्यः"। "मनश्च ग्रहः स कामेनातिग्राहेण गृहीत" इति वक्ष्यति प्राणो वै ग्रहः सोऽपानेनातिग्राहेणेति वाग्वै ग्रहः स नाम्नाऽतिग्राहेणेति च। तथा त्र्यन्नविभागे व्याख्यातमस्माभिः। सुविचारितं चैतद्यदेव प्रवृत्तिकारणं तदेव निवृत्तिकारणं न भवतीति।

केचित्तु सर्वमेव निवृत्तिकारणं मन्यन्ते। अतः कारणात्पूर्वस्मात्पूर्वस्मान्मृत्योर्मुच्यत उत्तरमुत्तरं प्रति-

वशादत्र पूजाभागी लक्ष्यते नाऽऽर्तभागस्तथा विद्यामान्द्यादतो विद्यास्तुत्यर्थेयमाख्यायिकेत्यर्थः। इदानीं ब्राह्मणार्थं वक्तुं वृत्तं कीर्तयति—मृत्योरिति। मृत्युस्वरूपं पृच्छति—कः पुनरसाविति। तत्स्वरूपनिरूपणार्थं ब्राह्मणमुत्थापयति—स चेति। मृत्युरिति सम्बन्धः। स्वाभाविक नैसर्गिकमनादिसिद्धमज्ञानं तस्मादासङ्गः स आस्पदमिवाऽऽस्पदं यस्य स तथेति विग्रहः। तस्य विषयमुक्त्वा व्याप्तिमाह—अध्यात्मेति। तस्य स्वरूपमाह—ग्रहेति। यथोक्तमृत्युव्याप्तिमग्न्यादीनां कथयति—तस्मादिति। तान्यपि ग्रहातिग्रहगृहीतान्येवार्थेन्द्रियसंसर्गित्वादित्यर्थः। तद्गतो विशेषोऽग्न्यादिगतो दृष्टिभेद इति यावत्। कश्चिद्व्याख्यात इति सम्बन्धः। सूत्रस्यापि मृत्युग्रस्तत्वमभिप्रेत्याऽऽह—तच्चेति। अग्न्यादित्याद्यात्मक सौत्रं पदमिति यावत्। फलं यथोक्तमृत्युग्रस्तमिति शेषः। किमिति मृत्योर्बन्धनरूपस्य स्वरूपमुच्यते तत्राऽऽह—एतस्मादिति। ननु मोक्षे कर्तव्ये बन्धरूपापवर्णनमनुपयुक्तमित्याशङ्क्याऽऽह—बद्धस्य हीति।

अग्न्यादीना यथोक्तमृत्युव्याप्तिमुक्तां व्यक्तीकरोति—यद्यपीति। अविनिर्मुक्त एवातिमुक्तोऽपीति शेषः। तथाऽपि कथं सूत्रस्य यथोक्तमृत्युव्याप्तिस्तत्राऽऽह—तथा चेति। तथाऽपि कथमग्न्यादीनां मृत्युव्याप्तिर्न हि तत्र प्रमाणमस्ति तत्राऽऽह—एक इति। बहवा इति च्छान्दसम्। तथाऽपि विदुषो मृत्योरतिमुक्तस्य न तदाप्तिरित्याशङ्क्याऽऽह—तदात्मेति। सौत्रे पदे मृत्युव्याप्तिं प्रकारान्तरेण प्रकटयति—न चेति। मनसि कार्यकरणरूपेण दिवश्चाऽऽदित्यस्य चैक्यमस्तु तथाऽपि कथं ग्रहातिग्रहगृहीतत्वं सूत्रस्येत्याशङ्क्याऽऽह—मनश्चेति। वागादेर्वक्तव्यादेश्च ग्रहत्वेऽतिग्रहत्वे च हिरण्यगर्भे किमायातमित्याशङ्क्याऽऽह—तथेति। कर्मफलस्य संसारत्वाच्च तत्फलं सौत्रं पदं मृत्युग्रस्तमेवेत्याह—सुविचारितं चेति। यदेव कर्मबन्धप्रवृत्तिप्रयोजकं तदेव बन्धनिवृत्तेर्न कारणमतः कर्मफलं हैरण्यगर्भं पदं बन्धनमेवेत्यर्थः।

स्वमतमुक्त्वा मतान्तरमाह—केचित्त्विति। सर्वमेव कर्मेति शेषः। स्वर्गकामवाक्ये देहात्मत्वनिवृत्तिर्गोदोहनवाक्ये स्वतन्त्राधिकारनिवृत्तिर्नित्यनैमित्तिकविधिष्वर्थान्तरोपदेशेन स्वाभाविकप्रवृत्तिनिरोधो निषेधेषु साक्षा-

---

१. अध्यात्माधिभूतविषयेति—आध्यात्मं शरीरसंबन्धि इन्द्रियमधिभूतं शब्दादयः तैः परिच्छिन्नम्।

२. परिच्छिन्नरूपान्मृत्योरिति शरीरपरिच्छिन्न ग्रहातिग्रहरूपमृत्युः हिरण्यगर्भपदप्राप्त्या सिध्यति सोऽपि मृत्युरेव व्यापित्वेऽपि अशनायाद्याक्रान्तत्वात् अतस्ततोऽपि मुक्तिसिद्ध्यर्थमार्तभागब्राह्मणम्।

३. अतिमुक्तिस्वरूपं हिरण्यगर्भस्वरूपं तदपि मृत्युग्रस्तम्।

४. एको मृत्युर्बहवो वा इति कस्याचिच्छाखायां विचारः प्रवृत्तः।

५. तद्गतो विशेषः आत्मन हिरण्यगर्भरूपप्राणाभेदध्यानाङ्गभूतः होतुः स्ववागिन्द्रियस्य चाग्नित्वध्यानादिः।

६. स्वर्गकामत्वं देहव्यतिरिक्तात्मदर्शिन एव संभवति देहात्मभ्रमवतः परलोकभोग्यस्वर्गकामनाऽसंभवात्।

७. गोदोहनवाक्यं गोदोहनेन पशुकामस्य प्रणयेदिति। तत्र च पशुकामस्य नित्यदर्शयाग एव किञ्चिदङ्गं प्रकारान्तरेण परिवृत्त्यकरणेनैव पशुप्राप्तौ स्वतन्त्राधिकारनिवृत्तिः नित्यादौ शास्त्रानधीनप्रवृत्तिनिरोधः। निषेधात् अनृतवदनादेर्निवृत्तिः एवं कर्मकाण्डादेव सर्वसिद्धेः।

पद्यमानो व्यावृत्त्यर्थमेव प्रतिपद्यते न तु तादर्थ्यमित्यत आ द्वैतक्षयात्सर्वं मृत्युर्द्वैतक्षये तु परमार्थतो मृत्योराप्तिमति-मुच्यते । अतश्चाऽऽपेक्षिकी गौणी मुक्तिरन्तराले ।

सर्वमेतदेवमबार्हदारण्यकम् । ननु सर्वैकत्वं मोक्षः "तस्मात्तत्सर्वमभवत्" इति श्रुतेः । बाढं भवत्येतदपि, न तु "ग्रामकामो यजेत पशुकामो यजेत" इत्यादिश्रुतीनां तादर्थ्यम् । यदि ह्यद्वैतार्थत्वमेवाऽऽसां ग्रामपशुस्वर्गाद्यर्थत्वं
५ नास्तीति ग्रामपशुस्वर्गादयो न गृह्येरन् गृह्यन्ते तु कर्मफलवैचित्र्यविशेषाः । यदि च वैदिकानां कर्मणां तादर्थ्यमेव संसार एव नाभविष्यत् ।

अथ तादर्थ्येऽप्यनुनिष्पादितपदार्थस्वभावः संसार इति चेत् । यथा च रूपदर्शनार्थ आलोके सर्वोऽपि तत्रस्थः प्रकाश्यत एव । न प्रमाणानुपपत्तेः । अद्वैतार्थत्वे वैदिकानां कर्मणां विद्यासहितानामन्यस्यानुनिष्पादितत्वे प्रमाणा-नुपपत्तिः । नऽप्रत्यक्षं नानुमानमत एव च नाऽऽगमः । उभयमेकेन वाक्येन प्रदर्श्यत इति चेत्कुल्याप्रणयनालोका-
१० दिवत् । तत्रैवं वाक्यधर्मानुपपत्तेः । न चैकवाक्यगतस्यार्थस्य प्रवृत्तिनिवृत्तिसाधनत्वमवगन्तुं शक्यते । कुल्याप्रण-यनालोकादावर्थस्य प्रत्यक्षत्वाददोषः ।

देव नैसर्गिकप्रवृत्तयो निरुध्यन्ते तदेवं सर्वमेव कर्मकाण्डं निवृत्तिद्वारेण मोक्षपरमित्यर्थः । ननु शास्त्रीयात्कर्मणो हेतोरुत्तरमुत्तरं कार्यकरणसंघातमतिशयवन्तमाऽब्रजात्प्रतिपद्यमानः संघातात्पूर्वस्मान्मुच्यते तत्कुतो निवृत्तिपरत्वं कर्मकाण्डस्येत्याशङ्क्याऽऽह—अतः कारणादिति । यद्यपीदमुत्तरमुत्तरं सातिशयं फलं प्राजापत्यं पदं तदपि प्रासादा-
१५ रोहणक्रमेण व्यावृत्तिद्वारा मोक्षमवतारयितुं न तु तत्रैव प्राजापत्ये पदे श्रुतेस्तात्पर्यं तस्यापि निरतिशयफलत्वा-भावादित्यर्थः । फलितमाह—इत्यत इति । यस्मात्पूर्वं पूर्वं परित्यज्योत्तरमुत्तरं प्रतिपद्यमानस्तत्तन्निवृत्तिद्वारा मुक्त्यर्थमेव तत्तत्प्रतिपद्यते न तु तत्तत्पदप्राप्त्यर्थमेव वाक्यं पर्यवसितं तस्यान्तवत्त्वेनाफलत्वात् । तस्माद्द्वैतक्षयपर्यन्तं सर्वोऽपि फलविशेषो मृत्युग्रस्तत्वात्प्रासादारोहणन्यायेन मोक्षार्थोऽवतिष्ठते हिरण्यगर्भपदप्राप्त्या द्वैतक्षये तु वस्तुतो मृत्योराप्तिमतीत्य परमात्मरूपेण स्थितो मुक्तो भवति । तथा च मनुष्यभावादूर्ध्वमर्वाक्च परमात्मभावान्मध्ये या
२० तत्तत्पदप्राप्तिः सा खल्वापेक्षिकी सती गौणी मुक्तिर्मुख्या तु पूर्वोक्तैवेत्यर्थः ।

सर्वमेतदुत्प्रेक्षामात्रेणाऽऽरचितं न तु बृहदारण्यकस्य श्रुत्यन्तरस्य वाऽर्थ इति दूषयति—सर्वमेतदिति । सर्वैकत्वलक्षणो मोक्षो बृहदारण्यकार्थ एवास्माभिरुच्यते तत्कथमस्मदुक्तमबार्हदारण्यकमिति शङ्कते—नन्विति । अङ्गी-करोति—बाढमिति । अङ्गीकृतमर्थं विशदयति—भवतीति । एतत्सर्वैकत्वमारण्यकार्थो भवत्यपीति योजना । कथं तर्हि सर्वमेतदबार्हदारण्यकमित्युक्तं तत्राऽऽह—न त्विति । त्वदुक्तया रीत्या कर्मश्रुतीनां यथोक्तमोक्षार्थत्वं न घटते तेन
२५ सर्वमेतदौत्प्रेक्षिकं न श्रौतमित्युक्तमित्यर्थः । कर्मश्रुतीनां मोक्षार्थत्वाभावं समर्थयते—यदि हीति । तस्मात्तासां न मोक्षार्थतेति शेषः । किंच संसारस्तावद्धर्माधर्महेतुकस्तौ च विधिनिषेधाधीनौ तयोश्चेत्त्वदुक्तरीत्या मोक्षार्थत्वं तदा हेत्वभावात्संसार एव न स्यादित्याह—यदि चेति ।

विधिनिषेधयोर्निवृत्तिद्वारा मुक्त्यर्थत्वेऽपि विद्यादिज्ञानादनुनिष्पादितो यः कर्मपदार्थस्तस्यायं स्वभावो यदुत कर्तारमनर्थेन संयुनक्तीति चोदयति—अथेति । मोक्षार्थमपि कर्मकाण्डं संसारार्थं भवतीति सदृष्टान्तमाह—यथेति ।
३० प्रमाणभावेन परिहरति—नेति । तदेव व्यनक्ति—अद्वैतार्थत्व इति । अन्यस्य बन्धस्येति यावत् । अनुपपत्तिं स्फोरयति—न प्रत्यक्षमिति । कर्मश्रुतिवाक्यस्यावान्तरतात्पर्यं यथाश्रुतेऽर्थे गृह्यते निवृत्तिद्वारा मुक्तौ तु महातात्पर्य-मित्यङ्गीकृत्य शङ्कते—उभयमिति । कृत्रिमाः क्षुद्राः सरितः कुल्यास्तासां प्रणयनं शाल्यर्थं पानीयार्थमाचमनीयाद्यर्थं च प्रदीपश्च प्रासादशोभार्थं कृतो गमनादिहेतुरपि भवति वृक्षमूले च सेचनमनेकार्थं तथा कर्मकाण्डमनेकार्थमित्युपपाद-यति—कुल्येति । एकस्य वाक्यस्य यथाश्रुतेनार्थेनार्थवत्त्वे संभवति नान्यत्र तात्पर्यं कल्प्यं कल्पकाभावान्न च त्वदुक्तया
३५ रीत्याऽनेकार्थत्वलक्षणो धर्मो वाक्यस्यैकस्योपपद्यतेऽर्थैकत्वादेकं वाक्यमिति न्यायादिति परिहरति—तत्रैवमिति । वाक्यस्यानेकार्थत्वाभावेऽपि तदर्थस्य कर्मणो बन्धमोक्षाख्यानेकार्थत्वं स्यादित्याशङ्क्याऽऽह—न चेति । परोक्तं दृष्टान्तं विघटयति—कुल्येति ।

यदप्युच्यते मन्त्रा अस्मिन्नर्थे दृष्टा इति। अयमेव तु तावदर्थः प्रमाणागम्यः। मन्त्राः पुनः किमस्मिन्नर्थ आहोस्विदन्यस्मिन्नर्थं इति मृग्यमेतत्[1]। तस्माद्ग्रहातिग्रहलक्षणो मृत्युर्बन्धस्तस्मान्मोक्षो वक्तव्य इत्यत इदमारभ्यते।

न च जानीमो विषयसंधाविवान्तरालेऽवस्थानमर्धजरतीयं कौशलम्। यत्तु मृत्योरतिमुच्यत इत्युक्त्वा ग्रहातिग्रहावुच्येते तत्त्वर्थसम्बन्धात्[2]सर्वोऽयं साध्यसाधनलक्षणो बन्धः। ग्रहातिग्रहाविनिर्मोकात्। निगडे हि निज्ञाते निगडितस्य मोक्षाय यत्नः कर्तव्यो भवति। तस्मात्तादर्थ्येनाऽऽरम्भः। ५

अथ हैनं हशब्द ऐतिह्यार्थः। अथानन्तरमश्वल उपरते प्रकृतं याज्ञवल्क्यं जरत्कारुगोत्रो जारत्कारव ऋतभागस्यापत्यमार्तभागः पप्रच्छ याज्ञवल्क्येति होवाचेत्यभिमुखीकरणाय। पूर्ववत्प्रश्नः कति ग्रहाः कत्यतिग्रहा इति। इतिशब्दो वाक्यपरिसमाप्त्यर्थः। तत्र निज्ञातेषु वा ग्रहातिग्रहेषु प्रश्नः स्यादनिर्ज्ञातेषु वा। यदि तावद्ग्रहा अतिग्रहाश्च निर्ज्ञातास्तदा तद्गतस्यापि गुणस्य संख्याया निज्ञातत्वात्कति ग्रहाः कत्यतिग्रहा इति संख्याविषयः प्रश्नो नोपपद्यते। अथानिर्ज्ञातास्तदा संख्येयविषयप्रश्न इति के ग्रहाः केऽतिग्रहा इति प्रष्टव्यं न तु कति ग्रहाः १० कत्यतिग्रहा इति प्रश्नः। अपि च निर्ज्ञातसामान्यकेषु विशेषविज्ञानाय प्रश्नो भवति यथा कतमेऽत्र कठाः कतमेऽत्र कालापा इति। न चात्र ग्रहातिग्रहा नाम पदार्थाः केचन लोके प्रसिद्धाः। येन विशेषार्थः प्रश्नः स्यात्। ननु चातिमुच्यत इत्युक्तं ग्रहगृहीतस्य हि मोक्षः स मुक्तिः साऽतिमुक्तिरिति हि द्विरुक्तम्। तस्मात्प्राप्ता ग्रहा अतिग्रहाश्च। ननु तत्रापि चत्वारो ग्रहा अतिग्रहाश्च निर्ज्ञाता वाक्चक्षुःप्राणमनांसि तत्र कतीति प्रश्नो नोपपद्यते निर्ज्ञातत्वात्।

विद्यां चाविद्यां चेत्यादयो मन्त्राः समुच्चयपरा दृष्टाः समुच्चयश्च कर्मकाण्डस्य निवृत्तिद्वारा मोक्षार्थत्वमित्य- १५ स्मिन्नर्थे सिध्यतीति शङ्कते—यदपीति। कर्मकाण्डस्योक्तरीत्या मोक्षार्थत्वे नास्ति प्रमाणमिति परिहरति—अयमेवेति। मन्त्राणां समुच्चयपरत्वात्तस्य च यथोक्तार्थाक्षेपकत्वात्कुतोऽस्यार्थस्य प्रमाणागम्यतेत्याशङ्क्याऽऽह—मन्त्राः पुनरिति। तेषां न समुच्चयपरतेत्यग्रे व्यक्तीभविष्यतीत्यर्थः। परमतासंभवे स्वमतमुपसंहरति—तस्मादिति। वन्धननिरूपणमनुपयोगीत्याशङ्क्याऽऽह—तस्मान्मोक्ष इति।

यत्तु कर्मकाण्डं बन्धाय मुक्तये वा न भवति किंत्वन्तरावस्थानकारणमिति तद्दूषयति—न चेति। यथा न २० जागर्ति न स्वपितीति विषयग्रहणच्छिद्रेऽन्तरालेऽवस्थानं दुर्घटं यथा चार्धं कुक्कुट्याः पाकार्थमर्धं च प्रसवायेति कौशलं नोपलभ्यते तथा कर्मकाण्डं न वन्धाय नापि साक्षान्मोक्षायेति व्याख्यानं कर्तुं न जानीम इत्यर्थः। यत्तु श्रुतिरेवोत्तरोत्तरपदप्राप्त्यभिधानव्याजेन मोक्षे पुरुषमवतारयतीति तत्राऽऽह—यत्त्विति। मृत्योराप्तिमतीत्य मुच्यत इत्युक्त्वा यदेतद्ग्रहातिग्रहवचनं तदयं सर्वः साध्यसाधनलक्षणो बन्ध इत्यनेनाभिप्रायेणोच्यते तस्यार्थेन मृत्युपदार्थेनान्वयदर्शनादिति योजना। अर्थसम्बन्धादित्युक्तं स्फुटयति—ग्रहातिग्रहाविनिर्मोकादिति। एषा हि श्रुतिर्बन्धमेव प्रतिपादयति २५ न तु मोक्षे पुरुषमवतारयतीति भावः। ननु पुरुषस्यापेक्षितो मोक्षः प्रतिपाद्यतां किमित्यनर्थात्मा बन्धः प्रतिपाद्यते तत्राऽऽह—निगडे हीति। बन्धज्ञानं विना ततो विश्लेषायोगान्मुमुक्षोः सप्रयोजकबन्धज्ञानार्थत्वेनानन्तरब्राह्मणप्रवृत्तिरित्युपसंहरति[3]— तस्मादिति।

कति ग्रहा इत्यादिः प्रथम. संख्याविषयः प्रश्नः कतमे त इति द्वितीय. संख्येयविषयः इत्याह–पूर्ववदिति। संप्रति प्रश्नमाक्षिपति—तत्रेत्यादिना। आद्य प्रश्नमाक्षिप्य द्वितीयमाक्षिपति–अपि चेति। विशेषतश्चाज्ञातेष्विति चशब्दार्थः। ३० मुक्त्यतिमुक्तिपदार्थद्वयप्रतियोगिनौ वन्धनाख्यौ ग्रहातिग्रहौ सामान्येन प्राप्तौ प्रश्नस्तु विशेषबुभुत्सायामिति प्रष्टा चोदयति—ननु चेति। तथाऽपि प्रश्नद्वयमनुपपन्नमित्याक्षेप्ता ब्रूते—ननु तत्रेति। वाग्वै यज्ञस्य होतेत्यादाविति यावत्।

१. मृग्यमेतत्—पुत्राद्येषणात्यागपूर्वकम् आत्मविचारोक्तेः कर्मानधिकृतायै मैत्रेय्यै ज्ञानोपदेशाच्च न समुच्चयः मोक्षायेत्यर्थः। यद्यपि मृत्योरतिमुक्तः तत्तु अल्पमृत्योरेव अतिमाचितः हिरण्यगर्भो भवति तत्पदमपि मृत्युग्रस्तमेव अशनायादिमत्त्वात् अतः महामृत्योर्मोक्षाय ब्राह्मणान्तरम्। अयमेवार्थ. कर्मकाण्डस्य मोक्षार्थत्वरूपः। ३५

२. अर्थसंबन्धात्—पूर्वत्र मृत्योरतिक्रमः अत्रापि मृत्योरेवातिक्रम इति अर्थसंबन्धः अनिर्मोक्षात् हिरण्यगर्भप्राप्त्यापीत्यर्थः।

३. सप्रयोजकेति—इन्द्रियविषयसंबन्धः मृत्युप्रयोजकः। ननु चातिमुच्यत इति सिद्धान्ती शङ्कते। तदप्ययुक्तमिति पूर्वपक्ष्याह—ननु चेति।

प्राणो वै ग्रहः सोऽपानेनातिग्राहेण गृहीतोऽपानेन हि गन्धाञ्जिघ्रति ॥२॥
वाग्वै ग्रहः स नाम्नाऽतिग्राहेण गृहीतो वाचा हि नामान्यभिवदति ॥३॥
जिह्वा वै ग्रहः स रसेनातिग्राहेण गृहीतो जिह्वया हि रसान्विजानाति ॥४॥
चक्षुर्वै ग्रहः स रूपेणातिग्राहेण गृहीतश्चक्षुषा हि रूपाणि पश्यति ॥५॥
५ श्रोत्रं वै ग्रहः स शब्देनातिग्राहेण गृहीतः श्रोत्रेण हि शब्दाञ्शृणोति ॥६॥
मनो वै ग्रहः स कामेनातिग्राहेण गृहीतो मनसा हि कामान्कामयते ॥७॥
हस्तौ वै ग्रहः स कर्मणाऽतिग्राहेण गृहीतो हस्ताभ्यां हि कर्म करोति ॥८॥

न। अनवधारणार्थत्वात्[1]। न हि चतुष्ट्वं तत्र विवक्षितमिह तु ग्रहातिग्रहादर्शनेऽष्टत्वगुणविवक्षया कतीति प्रश्न उपपद्यत एव। तस्मात्स मुक्तिः साऽतिमुक्तिरिति मुक्त्यतिमुक्ती द्विवक्ते ग्रहातिग्रहा अपि सिद्धाः। अतः कतिसंख्याका
१० ग्रहाः कति वाऽतिग्रहा इति पृच्छति। इतर आह—अष्टौ ग्रहा अष्टावतिग्रहा इति। ये तेऽष्टौ ग्रहा अभिहिताः कतमे ते नियमेन ग्रहीतव्या इति ॥१॥

तत्राऽऽह। प्राणो वै ग्रहः प्राण इति घ्राणमुच्यते। प्रकरणात्। वायुसहितः सः। अपानेनेति गन्धेनेत्येतत्। अपानसानिवृत्तत्वाद्वायुनो गन्ध उच्यते। अपानोपहृतं हि गन्धं घ्राणेन सर्वो लोको जिघ्रति। तदेतदुच्यतेऽपानेन हि गन्धाञ्जिघ्रतीति ॥२॥

१५ वाग्वै ग्रहः। वाचा ह्यध्यात्मपरिच्छिन्नयाऽऽसङ्गविषयास्पदयाऽसत्यानृतासभ्यबीभत्सादिवचनेषु व्यापृतया गृहीतो लोकोऽवबद्धस्तेन। वाग्ग्रहः स नाम्नाऽतिग्राहेण गृहीतः स वागाख्यो ग्रहो नाम्ना वक्तव्येन विषयेणातिग्रहेण अतिग्राहेणेति दैर्घ्यं छान्दसं नाम वक्तव्यार्था हि वाक्तेन वक्तव्येनार्थेन तादर्थ्येन प्रयुक्ता वाक्तेन वशीकृता तेन तत्कार्यमकृत्वा नैव तस्या मोक्षः। अतो नाम्नाऽतिग्राहेण गृहीता वागित्युच्यते। वक्तव्यासङ्गेन हि प्रवृत्ता सर्वानर्थ-

निर्वर्तनादिविशेषस्येति शेषः। अतिमोक्षोपदेशेन त्वगादेरपि सूचितत्वात्तेषु चतुष्ट्वानिर्धारणादविशेषेण प्रतिपन्नेषु
२० वागादिषु विशेषबुभुत्सया संख्यादिविषयत्वे प्रश्नस्योपपन्नार्थत्वात्प्रश्नोपपत्तिरिति समाधत्ते—नानवधारणार्थत्वा-
दिति। तदेव स्पष्टयति—न हीति। तत्र पूर्वब्राह्मणे वागादिष्विति यावत्। फलिता प्रथमप्रश्नोपपत्तिं कथयति—
इह त्विति। ननु ग्रहाणामेव पूर्वत्रोपदेशातिदेशाभ्यां प्रतिपन्नत्वात्तेषु विशेषबुभुत्सया कति ग्रहा इति प्रश्नेऽप्यति-
ग्रहाणामप्रतिपन्नत्वात्कथं कत्यतिग्रहा इति प्रश्नः स्यादत आह—तस्मादिति। पूर्वस्माद्ब्राह्मणादिति यावत्।
वागादयो वक्तव्यादयश्च चत्वारो ग्रहाश्चातिग्रहाश्च यद्यपि विशेषतो निर्ज्ञातास्तथाऽप्यतिदेशप्राप्ताश्चत्वारो विशेषतो न
२५ ज्ञायन्ते। तेन तेषु विशेषतो ज्ञानसिद्धये प्रश्न इत्यभिप्रेत्य विशिनष्टि—नियमेनेति ॥१॥

द्वितीये प्रश्ने परिहारमुत्थापयति—तत्राऽऽहेति। घ्राणशब्दस्य घ्राणविषयत्वे पूर्वोत्तरग्रन्थयोर्वागादीनां प्रकृतत्वं हेतुमाह—प्रकरणादिति। तस्य गन्धेन गृहीतत्वसिद्ध्यर्थं विशिनष्टि—वायुसहित इति। अपानशब्दस्य गन्धविषयत्वे गन्धस्यापानेनाविनाभावं हेतुमाह—अपानेति। तत्रैव हेत्वन्तरमाह—अपानोपहृतं हीति। अपश्वासोऽत्रापानशब्दार्थः। उक्तेऽर्थे वाक्यं पातयति—तदेतदिति ॥२॥

३० वाचो ग्रहत्वमुपपादयति—वाचा हीति। आसङ्गस्य विषयः शब्दादिरेवाऽऽस्पदं यस्या वाचस्तयेति विग्रहः। तत्सिद्ध्यर्थमध्यात्मपरिच्छिन्नयेति विशेषणम्[2]। असत्यं परपीडाकरं मिथ्यावचनं तदेव स्वदृष्टमात्रविरोध्यनृतं विपरीतं वा। आदिपदेनेष्टानिष्टोक्तिग्रहः। वाचि प्रकृतायां स नाम्नेति कथमुच्यते तत्राऽऽह—स वागाख्य इति। वक्तव्येन वाचो वशीकृतत्वं साधयति—वक्तव्यार्थेति। तादर्थ्येन वचनकरणत्वेनेति यावत्। वचनार्थं वाचो वक्तव्येन वशीकृतत्वे फलितमाह—तेनेति। तत्कार्यं वचनं मोक्षश्चासाधारणे देवतात्मनि पर्यवसानम्। वक्तव्यार्थोक्तिं विना वाचोऽपर्यवसाने
३५ सिद्धमर्थमाह—अत इति। वाचोऽतिग्रहगृहीतत्वमनुभवेन साधयति—वक्तव्येति। वाचा हीत्यादेरपानेन हीत्यादिना

१. अनवधारणार्थत्वात्—अनवधारितार्थत्वादित्यर्थः पूर्वत्र चत्वारो ग्रहाः उक्ताः वाक् चक्षुः मनः प्राण इति परं तु न निर्धारिताः इम एवेति अतः प्रश्नः।
२. अध्यात्मपरिच्छिन्नत्वं शरीरपरिच्छेदः। आसङ्गः आसक्तिः तद्विषयः प्रियः तद्विषया वाक् अनृतादि वदति।

त्वग्वै ग्रहः स स्पर्शेनातिग्राहेण गृहीतस्त्वचा हि स्पर्शान्वेदयत इत्येतेऽष्टौ ग्रहा अष्टावतिग्रहाः ॥९॥

याज्ञवल्क्येति होवाच यदिदꣳ सर्वं मृत्योरन्नं कास्वित्सा देवता यस्या मृत्युरन्नमित्यग्निर्वै मृत्युः सोऽपामन्नमप पुनर्मृत्युं जयति ॥१०॥

गृंज्यते । समानमन्यत् । इत्येते त्वक्पर्यन्ता अष्टौ ग्रहाः स्पर्शपर्यन्ताश्चैतेऽष्टावतिग्रहा इति ॥३-९॥

उपसंहृतेषु ग्रहातिग्रहेष्वाह पुनः—याज्ञवल्क्येति होवाच । यदिदं सर्वं मृत्योरन्नं यदिदं व्याकृतं सर्वं मृत्योरन्नं सर्वं जायते विपद्यते च ग्रहातिग्रहलक्षणेन मृत्युना ग्रस्तम् । कास्वित्का नु स्यात्सा देवता यस्या देवताया मृत्युरप्यन्नं भवेत् । "मृत्युर्यस्योपसेचनम्" इति श्रुत्यन्तरात् । अयमभिप्रायः प्रष्टु. । यदि मृत्योर्मृत्युं वक्ष्यत्यनवस्था स्यात् । अथ न वक्ष्यत्यस्माद्ग्रहातिग्रहलक्षणान्मृत्योर्मोक्षो नोपपद्यते । ग्रहातिग्रहमृत्युविनाशे हि मोक्षः स्यात् । स यदि मृत्योरपि मृत्युः स्याद्भवेद्ग्रहातिग्रहलक्षणस्य मृत्योर्विनाशः अतो दुर्वचनं प्रश्नं मन्वानः पृच्छति कास्वित्सा देवतेति । अस्ति तावन्मृत्योर्मृत्युः । नन्वनवस्था स्यात्तस्याप्यन्यो मृत्युरिति । नानवस्था । सर्वमृत्योर्मृत्य्वन्तरानुपपत्तेः । कथं पुनरवगम्यतेऽस्ति मृत्योर्मृत्युरिति । दृष्टत्वात् । अग्निस्तावत्सर्वस्य दृष्टो मृत्युर्विनाशकत्वात् । सोऽद्भिर्भक्ष्यते सोऽग्निरपामन्नम् । गृहाण तर्ह्यस्ति मृत्योर्मृत्युरिति । तेन सर्वं ग्रहातिग्रहजातं भक्ष्यते मृत्योर्मृत्युना । तस्मिन्बन्धने नाशिते मृत्युना भक्षिते संसारान्मोक्ष उपपन्नो भवति । बन्धनं हि ग्रहातिग्रहलक्षणमुक्तं तस्माच्च मोक्ष उपपद्यत इत्येतत्प्रसाधितम् । अतो बन्धमोक्षाय पुरुषप्रयासः सफलो भवत्यतोऽपजयति पुनर्मृत्युम् ॥१०॥

तुल्यार्थत्वादव्याख्येयत्वमाह—समानमिति । घ्राणं वाग्जिह्वा चक्षुः श्रोत्रं मनो हस्तौ त्वगित्युक्तान्ग्रहान्निगमयति—इत्येत इति । गन्धो नाम रसो रूपं शब्दः कामः कर्म स्पर्श इत्यतिग्रहानपि निगमयति—स्पर्शपर्यन्ताश्चेति ॥३-९॥

प्रतीकमादाय व्याचष्टे—यदिदमिति । यदिदं व्याकृतं जगत्सर्वं मृत्योरन्नमिति योजना । तस्य तदन्नत्वं साधयति—सर्वमिति । मृत्योरन्नत्वसंभावनाया श्रुत्यन्तरं संवादयति—मृत्युरिति । मृत्योर्मृत्युमधिकृत्य प्रश्नस्य काकदन्तनिरूपणवदप्रयोजनत्वमाशङ्क्याऽऽह—अयमिति । सत्येव ग्रहातिग्रहलक्षणे मृत्यौ मोक्षो भविष्यतीति चेन्नेत्याह—ग्रहेति । अस्तु तर्हि ग्रहातिग्रहनाशे मुक्तिरित्यत आह—स यदीति । न च मृत्योर्मृत्युरस्त्यनवस्थानादित्युक्तमिति भावः । पक्षेऽनवस्थानात्पक्षे चामुक्तेरित्यतः शब्दार्थ. । अस्तिपक्षं परिगृह्णाति—अस्ति तावदिति । [1]मृत्योर्मृत्युर्ब्रह्मात्मसाक्षात्कारो विवक्षितस्तस्याप्यन्यो मृत्युरस्ति चेदनवस्था नास्ति चेत्तद्धेत्वज्ञानस्यापि स्थितेरमुक्तिरिति शङ्कते—नन्विति । तत्रास्तिपक्षं परिगृह्य परिहरति—नानवस्थेति । यथोक्तस्य मृत्योः स्वपरविरोधित्वान्न किंचिदवद्यमित्यर्थः । उक्तं पक्षं प्रश्नद्वारा प्रमाणारूढं करोति—कथमिति । दृष्टत्वं स्पष्टयति—अग्निस्तावदिति । दृष्टत्वफलमाचष्टे—गृहाणेति । तस्य कार्यं कथयति—तेनेति । अप पुनर्मृत्युं जयतीत्यस्य पातनिका करोति—तस्मिन्निति । उक्तमेव व्यक्तीकरोति—बन्धनं हीति । प्रसाधितं मृत्योरपि मृत्युरस्तीति प्रदर्शनेनेति शेषः । मोक्षोपपत्तौ फलितमाह—अत इति । पुरुषप्रयासः शमादिपूर्वकश्रवणादिः । तत्फलस्य ज्ञानस्य फलं दर्शयन्वाक्यं योजयति—अत इति । ज्ञानं पञ्चम्यर्थः ॥१०॥

---

१. मृत्योर्मृत्युरस्ति स च ब्रह्मसाक्षात्कारः तस्य मृत्युः अन्यो नास्ति स्वयमेव नश्यतीत्यर्थः । हेत्वज्ञानस्यापि ब्रह्मसाक्षात्कारो वृत्तिरूपः मनोजन्यः तद्धेत्वज्ञानसत्वे कथं मोक्ष इत्यर्थ. । स्वयं नश्यतीति समाधानम्-वस्तुतस्तु नाशागीकारेप्यनवस्था विद्वान्नामरूपाद्विमुक्त इति श्रुतिविरोधश्च । अतः या या प्रमा सा स्वसमानविषयकाज्ञाननाशकत्ववृत्ति इति व्याप्त्यंगीकारात् । ज्ञानकाले अज्ञानं न तिष्ठतीत्यर्थः ।

२. मृत्योः अज्ञानेन भक्षणे सति शरीरात् प्राणोत्क्रान्तिरस्ति न वेति प्रश्नः ।

३. मृत्योरपि मुक्तिरस्तीति पूर्वखण्डेऽवघृतम् । स च ब्रह्मसाक्षात्कार एव भिद्यते हृदयग्रन्थिरिति शास्त्रात् तथा च साक्षात्कृततत्त्वस्य प्राणोत्क्रान्तिविषयः प्रश्नः । उत्क्रान्तिविषये ब्रह्मसूत्रचतुर्थद्वितीये विचारितम्—तथा हि—प्रतिषेधादिति चेन्न शारीरात् । अत्र पूर्वपक्षः । न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति इति श्रुतौ ( बृ० ४-४-१२ ) ब्रह्मविदः न तस्य प्राणा उत्क्रामन्ति इति श्रुत्या उत्क्रान्तिप्रतिषेधात् नोत्क्रामन्ति इति चेन्न—शारीरात् नोत्क्रामन्ति तेन सह भवन्ति इति हि तदर्थः तदुक्तं माध्यन्दिनपाठे न तस्मादिति । सिद्धान्तस्तु-स्पष्टो ह्येकेषाम् ( ४-४-१३ ) नैतदस्ति यदुक्तं परब्रह्मविदोऽपि देहादुत्क्रान्तिरस्तीति । नैतत् देहापादान एवायमुत्क्रान्तिप्रतिषेधः एकेषां शाखिनां स्पष्ट. । आर्तभागप्रश्ने यत्रायं पुरुषो म्रियते

याज्ञवल्क्येति होवाच यत्रायं पुरुषो म्रियत उदस्मात्प्राणाः क्रामन्त्याहो३ नेति नेति
होवाच याज्ञवल्क्योऽत्रैव समवनीयन्ते स उच्छ्वयत्याध्मायत्याध्मातो मृतः शेते ॥११॥
याज्ञवल्क्येति होवाच यत्रायं पुरुषो म्रियते किमेनं न जहातीति
नामेत्यनन्तं वै नामानन्ता विश्वे देवा अनन्तमेव स तेन लोकं जयति ॥१२॥

५ परेण मृत्युना मृत्यौ भक्षिते परमात्मदर्शनेन योऽसौ मुक्तो विद्वान्सोऽयं पुरुषो यत्र यस्मिन्काले म्रियत
उदूर्ध्वमस्माद्ब्रह्मविदो म्रियमाणात्प्राणा वागादयो ग्रहा नामादयश्चातिग्रहा वासनारूपा अन्तस्थाः प्रयोजकाः क्राम-
न्त्यूर्ध्वमुत्क्रामन्त्याहोस्विन्नेति। नेति होवाच याज्ञवल्क्यो नोत्क्रामन्त्यत्रैवास्मिन्नेव परेणाऽऽत्मनाऽविभागं गच्छन्ति
विदुषि कार्याणि करणानि च स्वयोनौ परब्रह्मसतत्त्वे समवनीयन्त एकीभावेन समवसृज्यन्ते प्रलीयन्त इत्यर्थः।
ऊर्मय इव समुद्रे। तथा च श्रुत्यन्तरं कलाशब्दवाच्यानां प्राणानां परस्मिन्नात्मनि प्रलयं दर्शयति—"एवमेवास्य
१० परिद्रष्टुरिमाः षोडश कलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ती"ति। इति परेणाऽऽत्मनाऽविभागं गच्छन्तीति दर्शि-
तम्। न तर्हि मृतो, नहि, मृतश्चायं यस्मात्स उच्छ्वयत्युच्छूनतां प्रतिपद्यत आध्मायति बाह्येन वायुना पूर्यते दृति-
वदाध्मातो मृतः शेते निश्चेष्टः बन्धननाशे मुक्तस्य न क्वचिद्गमनमिति वाक्यार्थः ॥११॥

मुक्तस्य किं प्राणा एव समवनीयन्त आहोस्वित्तत्प्रयोजकमपि सर्वम्। अथ प्राणा एव न तत्प्रयोजकं सर्वं,
प्रयोजके विद्यमाने पुनः प्राणानां प्रसङ्गः। अथ सर्वमेव कामकर्मादि, ततो मोक्ष उपपद्यत इत्येवमर्थं उत्तरः प्रश्नः।

१५ सम्यग्ज्ञानस्यापपुनर्मृत्युं जयतीत्युक्त फलं विशदीकर्तुं प्रश्नान्तरमुत्थापयति—परेणेति। परेण मृत्युना
परमात्मदर्शनेनेति सम्बध.। ग्रहातिग्रहलक्षणो बन्धः सप्तम्यर्थः। ग्रहशब्देन प्रयोज्यराशिर्गृहीतः। नामादीना स्थूलाना
बहिष्ठत्वेन स्वरसतस्त्यक्तत्वात्कथं तदुत्क्रान्तिः पृच्छ्यते तत्राऽऽह—वासनारूपा इति। तेषामनुत्क्रान्तौ मुक्त्यसम्भव
सूचयति—प्रयोजका इति। उत्क्रान्तिपक्षे ध्रुव जन्म मृतस्य चेति न्यायात्पुनरुत्पत्ति स्यादनुत्क्रान्तिपक्षे मरणप्रसिद्धि-
र्विरुध्येतेति भाव। द्वितीय पक्षं परिहरति—नेति होवाचेत्यादिना। कार्याणि करणानि च सर्वाणि परेणाऽऽत्मना
२० सहाविभागं गच्छन्ति सन्त्यस्मिन्नेव विदुषि समवनीयन्त इति सम्बन्ध। तेषां विदुषि विलये हेतुमाह—स्वयोना-
विति। विद्वानेव हि पूर्वमविद्यया तेषा योनिरासीत्तस्मिन्विद्यादशाया तद्बलादविद्यायामपनीताया परिपूर्णे तत्त्वे तेषा
पर्यवसानं सम्भवतीत्यर्थ.। कारणे कार्याणा प्रविलये दृष्टान्तमाह—ऊर्मय इति। प्राणादीनां कारणसंसर्गाख्यो
लयश्चेत्पुनरुत्पत्ति स्यादित्याशङ्क्य ज्ञाने सत्यज्ञानध्वंसान्नैवमित्यभिप्रेत्याऽऽह—तथा चेति। सविषयाण्ये-
कादशेन्द्रियाणि वायवश्च पञ्चेति षोडश कलास्तासा स्वातन्त्र्यमाश्रयान्तर च वारयति—पुरुषायणा इति। तासा
२५ निवृत्तिश्च पुरुषव्यतिरेकेण नास्तीति सूचयति—पुरुषं प्राप्येति। प्राणाश्चेन्नोत्क्रामन्ति तर्हि मृतो न भवतीति
प्रतीतिविरोधं शङ्कित्वा परिहरति—न तर्हीत्यादिना। दृतिशब्दो भस्त्राविषय। प्रकृतं वाक्य प्रत्यक्षसिद्धदेहमरणा-
नुवादकमित्यभिप्रेत्याऽऽह—बन्धनेति ॥११॥

प्राणा नोत्क्रामन्तीति विशेषणमाश्रित्य प्रश्नान्तरमादत्ते—मुक्तस्येति। पक्षद्वयेपि प्रयोजन कथयति—अथेत्या-
दिना। यत्पुत्रक्षेत्राद्यभूत्तदधुना नाममात्रावशेषमित्युक्ते नावशिष्ट किंचिदिति यथाऽवगम्यते तथाऽत्रापि नाममात्रं

---

३० उदस्मात् प्राणा क्रामन्ति आहोनेति प्रश्ने नेति होवाच याज्ञवल्क्य. इत्यनुत्क्रान्तिपक्षमुक्त्वा न तर्हि प्राणेषु
सत्सु मृत इति शङ्काया अत्रैव समवनीयन्ते। स उच्छ्वयत्याध्मायत्याध्मातो मृतः शेते इति प्राणाना लयश्रव-
णात्। यदि मृतेन सह गच्छेयुः प्राणाः तर्हि न लय उपपद्येत। श्रूयते च। अपि च चक्षुष्टो वा मूर्ध्नो वाऽन्येभ्यो
वा शरीरदेशेभ्य. उत्क्रान्तिमुक्त्वा इति नु कामयमान इति त कामयमानविषयत्वेनोपसहृत्य अथाकामयमान
इति ज्ञानिनः उत्क्रान्तिप्रतिषेध शरीरादेवेति स्पष्ट शरीरादुत्क्रान्तेरेव प्रसिद्धत्वात् जीवादुत्क्रान्तेरप्रसिद्धेः।
३५ वैष्णवास्तु—विदुषा सहैव गच्छन्ति न तु विद्वत्सकाशादुत्क्रामन्ति इति व्याकुर्वन्ति तत्पक्षे अत्रैव समवनीयन्ते
स उच्छ्वयत्याध्मायति इति प्राणलयः शरीरस्योच्छ्वयनादिकं च विरुद्धम्। 'अत्र ब्रह्म समश्नुते' इति वाक्य-
विरोधश्च तन्मते प्राणोत्क्रमणे ब्रह्मलोकस्थब्रह्मणा खलु सबन्धो वक्तव्य इति। अपि च किमेन न जहाति इति
प्रश्नस्य नामेति प्रतिवचन तन्मते अयुक्त प्राणसद्भावात्।

१. परेण मृत्युना परमात्मदर्शनेनेत्ति अभेदान्वयः।
४० २. वासनारूपा इति अत एव मुक्तस्य पुनर्जन्माभाव. सिद्धः अन्यथा वासनासद्भावे पुनर्जन्मापत्तिः।

याज्ञवल्क्येति होवाच यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यं मनश्चन्द्रं दिशः श्रोत्रं पृथिवीं शरीरमाकाशमात्मौषधीर्लोमानि वनस्पतीन्केशा अप्सु लोहितं च रेतश्च निधीयते क्वायं तदा पुरुषो भवतीत्याहर सोम्य हस्तमार्तभागाऽऽवामेवैतस्य वेदिष्यावो न नावेतत्सजन इति । तौ होत्क्रम्य मन्त्रयांचक्राते तौ ह यदूचतुः कर्म हैव तदूचतुरथ यत्प्रशशंसतुः कर्म हैव तत्प्रशशंसतुः पुण्यो वै ५ पुण्येन कर्मणा भवति पापः पापेनेति ततो ह जारत्कारव आर्तभाग उपरराम ॥१३॥

इति बृहदारण्यकोपनिषदि तृतीयाध्याये द्वितीयं ब्राह्मणम्

याज्ञवल्क्येति होवाच यत्रायं पुरुषो म्रियते किमेनं न जहातीति । आहेतरो नामेति सर्वं समवनीयत इत्यर्थः । नाममात्रं तु न लीयत आकृतिसम्बन्धात् । नित्यं हि नाम । अनन्तं वै नाम । नित्यत्वमेवाऽऽनन्त्यं नाम्नः । तदानन्त्याधिकृता अनन्ता वै विश्वे देवा अनन्तमेव स तेन लोकं जयति । तन्नामानन्त्याधिकृतान्विश्वान्देवानात्मत्वेनोपेत्य १० तेनाऽऽनन्त्यदर्शनेनानन्तमेव लोकं जयति ॥१२॥

ग्रहातिग्रहरूपं बन्धनमुक्तं मृत्युरूपं तस्य च मृत्योर्मृत्युसद्भावान्मोक्षश्चोपपद्यते । स च मोक्षो ग्रहातिग्रहरूपाणामिहैव प्रलयः प्रदीपनिर्वाणवत् । यद्वद्ग्रहातिग्रहाख्यं बन्धनं मृत्युरूपं तस्य यत्प्रयोजकं तत्स्वरूपनिर्धारणार्थमिदमारभ्यते । याज्ञवल्क्येति होवाच । अत्र केचिद्वर्णयन्ति ग्राहातिग्रहस्य सप्रयोजकस्य विनाशेऽपि किल न मुच्यते । नामावशिष्टोऽविद्ययोषरस्थानीयया स्वात्मप्रभवया प मात्मनः परिच्छिन्नो भोज्याच्च जगतो व्यावृत्त उच्छिन्न- १५

म्रियमाणं विद्वांसं न जहातीत्युक्ते न किंचिदवशिष्टमिति दृष्टिः स्यादिति प्रत्युक्तितात्पर्यमाह–सर्वमिति । यथाश्रुतमर्थमाश्रित्य प्रत्युक्तिं व्याचष्टे–नाममात्रं त्विति । विदुषो नामनित्यत्वे हेत्वन्तरमुत्तरवाक्यावष्टम्भेन दर्शयति–नित्यं हीति । अनन्तशब्दान्नाम्नो व्यक्तिप्राचुर्ये प्रतिभाति कुतो नित्यतेत्याशङ्क्याऽऽह–नित्यत्वमेवेति । व्यक्तिभेदस्य प्रसिद्धत्वान्न तद्वक्तव्यं ब्रह्मविदः स्वदृष्ट्या नामापि न शिष्यते परदृष्ट्या तदवशेषोक्तिः शुको मुक्त इत्यादिव्यपदेशदर्शनादतो नामनित्यत्वं व्यावहारिकमिति भावः । ब्रह्मास्मीति दर्शनेन विश्वान्देवानात्मत्वेनोपगम्यानन्तं लोकं जयतीति २० सिद्धानुवादो ब्रह्मविद्यां स्तोतुमित्यभिप्रेत्यानन्तरवाक्यमादत्ते–तदानन्त्येति । तद्व्याचष्टे–तन्नामानन्त्येति ॥१२॥

यत्रास्येत्यादेस्तात्पर्यं वृत्तानुवादपूर्वकं कथयति–ग्रहातिग्रहरूपमित्यादिना । किमेनमित्यादिवाक्यस्य स्वव्याख्यामुक्त्वा यत्रेत्यादेस्तात्पर्यं चोक्तम् । इदानीं भर्तृप्रपञ्चप्रस्थानमुत्थापयति–अत्रेति । किमेनमित्यादाविति यावत् । समुच्चयानुष्ठानाद्ग्रहयोः सप्रयोजकयोर्नाशेऽपि पुंसो मुक्तिर्न चेत्तर्हि तस्य बद्धत्वायोगात्कामसौ दशामवलम्बतामित्याशङ्क्याऽऽह–नामावशिष्ट इति । क्षितेरूषरवदवस्थितात्माविद्यया परस्मात्परिच्छिन्नश्चेदात्मा तर्हि बन्धपक्षस्यैव २५ स्यान्नतु भोज्याज्जगतो व्यावृत्तिरित्याशङ्क्याऽऽह–उच्छिन्नेति । सर्वस्य कर्मादिफलस्य सूत्रात्मनः समुच्चयासादितस्य

१. यत्रास्येति संसारिविषय प्रश्नः मुक्तविषये समाधानस्य समाप्तत्वात् ।

२. यत्रायं पुरुषो म्रियते किमेनं न जहातीति प्रश्ने नामेति वदन् रूपाख्य लिङ्गशरीरं समूलं नश्यतीति प्रतिवचनादपि विदुषः लोकान्तरगमनं नास्तीति सूचितम् । गमने तस्य लिङ्गशरीराद्यवश्यं भावात् । एतेन प्राणाः जीवेन सह गच्छन्तीति सिद्धान्तो निरस्त. ।

३० ३. नाम्नः योऽर्थ. अनन्तत्वं तत्राधिकृताः अनन्तत्वप्रापकशक्तिमन्तः तान् आत्मत्वेन ध्यायत' अनन्तलोकप्राप्तिः ।

४. अत्र केचिदिति–ग्रहातिग्रहसंबन्धस्य प्रयोजकं काम कर्म तच्च तत्कार्यं हिरण्यगर्भध्यानेन सह कर्मानुष्ठानेन निवर्तते तन्निवृत्तावपि न मुख्यो मोक्षो जात. अपि तु नामावशिष्ट' अविद्यया स्वात्मन एव पृथिव्या ऊषरवत् अंगभूतयापरिच्छिन्नः भोज्यप्रपञ्चाद्व्यावृत्त. उच्छिन्नकामकर्मबन्धन. अन्तराले तिष्ठति तस्य च ब्रह्मात्मैकत्वज्ञानवृत्त्या द्वैतबुद्धि निवर्तते । तदर्थमुपस्तप्रश्नमारभ्य आत्मपरमात्मैक्यबोधकः परो ग्रन्थ आरभ्यते इत्याहुः । ३५ समस्तद्वैतैकत्वं हिरण्यगर्भस्वरूपम् ।

५. सिद्धानुवाद इति ब्रह्मविद. सर्वात्मत्वेन सर्वानन्यत्वस्य सिद्धत्वात् विश्वान् देवानात्मत्वेन दृष्ट्वेति सिद्धानुवादः सर्वानन्यस्य विश्वेदेवानन्यत्वस्य स्वत.सिद्धत्वात् ।

शिरःपाण्यादिमतो मृतस्य वागग्निमप्येति वातं प्राणोऽप्येति चक्षुरादित्यमप्येतीति सर्वत्र सम्बध्यते। मनश्चन्द्रं दिशः श्रोत्रं पृथिवीं शरीरमाकाशमात्मेत्यत्राऽऽत्माधिष्ठानं हृदयाकाशमुच्यते। स आकाशमप्येति। ओषधीरपियन्ति लोमानि। वनस्पतीनपियन्ति केशाः। अप्सु लोहितं च रेतश्च निधीयत इति पुनरादानलिङ्गम्। सर्वत्र हि वागादिशब्देन देवताः परिगृह्यन्ते न तु करणान्येवापक्रामन्ति प्राङ्मोक्षात्। तत्र देवताभिरनधिष्ठितानि करणानि न्यस्तदात्राद्युपमानानि विदेहश्च कर्ता पुरुषोऽस्वतन्त्रः किमाश्रितो भवतीति पृच्छ्यते—क्वायं तदा पुरुषो भवतीति। किमाश्रितस्तदा पुरुषो भवतीति। यमाश्रयमाश्रित्य पुनः कार्यकरणसंघातमुपादत्ते येन ग्रहातिग्रहलक्षणं बन्धनं प्रयुज्यते तत्किमिति प्रश्नः। ५

अत्रोच्यते—स्वभाववदृच्छाकालकर्मदैवविज्ञानमात्रशून्यानि वादिभिः परिकल्पितानि। अतोऽनेकविप्रतिपत्तिस्थानत्वान्नैव जल्पन्यायेन वस्तुनिर्णयः। अत्र वस्तुनिर्णयं चेदिच्छस्याहर सोम्य हस्तमार्तभाग ह आवामेवैतस्य त्वत्पृष्टस्य वेदितव्यं यत्तद्वेदिष्यावो निरूपयिष्यावः। कस्मात्। न नावावयोरेतद्वस्तु सजने जनसमुदाये निर्णेतुं शक्यते। अत एकान्तं गमिष्यावो विचारणाय। तौ हेत्यादि श्रुतिवचनम्। तौ याज्ञवल्क्यार्तभागावेकान्तं गत्वा किं चक्रतुरित्युच्यते—तौ होत्क्रम्य सजनाद्देशान्मन्त्रयांचक्राते। आदौ लौकिकवादिपक्षाणामेकैकं परिगृह्य विचारितवन्तौ। तौ ह विचार्य यदूचतुरपोह्य पूर्वपक्षान्सर्वानेव तच्छृणु। कर्म हैवाऽऽश्रयं पुनः पुनः कार्यकरणोपादानहेतुं तत्तत्रोचतुरुक्तवन्तौ। न केवलं कालकर्मदैवेश्वरेष्वभ्युपगतेषु हेतुषु यत्प्रशशंसतुस्तौ कर्म हैव तत्प्रशशंसतुः। यस्मान्निर्धारितमेतत्कर्मप्रयुक्तं ग्रहातिग्रहादिकार्यकरणोपादानं पुनः पुनस्तस्मात्पुण्यो वै शास्त्रविहितेन पुण्येन कर्मणा भवति तद्विपरीतेन विपरीतो भवति पापः पापेनेत्येवं याज्ञवल्क्येन प्रश्नेषु निर्णीतेषु ततोऽशक्यप्रकम्प्यत्वाद्याज्ञवल्क्यस्य ह जारत्कारव आर्तभाग उपरराम ॥१३॥ १० १५

इति बृहदारण्यकोपनिषद्भाष्ये तृतीयाध्याये द्वितीयमार्तभागब्राह्मणम् ॥२॥

तत्संनिधेरित्याशङ्क्य वक्ष्यमाणकर्माश्रयत्वलिङ्गेन बाध्यः सनिधिरित्यभिप्रेत्याऽऽह—असम्यग्दर्शिन इति। संनिधिबाधे लिङ्गान्तरमाह—निधीयत इति। तस्य हि पुनरादानयोग्यद्रव्यनिधाने प्रयोगदर्शनादिहापि पुनरादानं लोहितादेराभात्यतः प्रसिद्धसंसारिगोचर एवायं प्रश्न इत्यर्थः। अविदुषो वागादिलयाभावाद्वाङ्मनसि दर्शनादिति न्यायात्तस्य चात्र श्रुतेर्विद्वानेव पुरुषस्तदीयकलाविलयस्य श्रुतिप्रसिद्धत्वादित्याशङ्क्याऽऽह—सर्वत्र हीति। अग्न्याद्यंशानां वागादिशब्दितानामपक्रमणेऽपि करणानां तदभावे तदधिष्ठानस्य देहस्यापि भावेन भोगसम्भवान्न प्रश्नावकाशोऽस्तीत्याशङ्क्याऽऽह—तत्रेति। देवतांशेषूपसहृतेष्विति यावत्। तेषां ताभिरनधिष्ठितत्वे सत्यर्थक्रियाक्षमत्वं फलतीत्याह—न्यस्तेति। करणानामधिष्ठातृहीनानां भोगहेतुत्वाभावेऽपि कथमाश्रयप्रश्नो भोक्तुः स्यादित्याशङ्क्याऽऽह—विदेहश्चेति। प्रश्नं विवृणोति—यमाश्रयमिति। २० २५

आहरेत्यादिपरिहारमवतारयति-अत्रेति। मीमांसका लोकायता ज्योतिर्विदो वैदिका देवताकाण्डीया[३] विज्ञानवादिनो माध्यमिकाश्चेत्यनेके विप्रतिपत्तारः। जल्पन्यायेन परस्परप्रचलितमात्रपर्यन्तेन विचारेणेति यावत्। अत्रेति प्रश्नोक्तिः। ननु प्रष्टाऽऽर्तभागो याज्ञवल्क्यश्च प्रतिवक्तेति द्वाविहोपलभ्येते। तथा च तौ हेत्यादिवचनमयुक्तं तृतीयस्यात्राभावादत आह—तौ हेत्यादीति। तत्रेत्येकान्ते स्थित्वा विचारावस्थायामिति यावत्। न केवलं कर्म कारणमूचतुः किंतु तदेव कालादिषु हेतुष्वभ्युपगतेषु सत्सु प्रशशंसतुः। अतः प्रशंसावचनात्कर्मणः प्राधान्यं गम्यते नतु कालादीनामहेतुत्वं तेषां कर्मस्वरूपनिष्पत्तौ कारकतया गुणभावदर्शनात्फलकालेऽपि तत्प्राधान्येनैव तद्धेतुत्वसम्भवादित्याह—न केवलमिति। पुण्यो वै पुण्येनेत्यादि व्याचष्टे—यस्मादित्यादिना ॥१३॥ ३०

इति बृहदारण्यकोपनिषद्भाष्यटीकायां तृतीयाध्याये द्वितीयमार्तभागब्राह्मणम् ॥२॥

---

१ स्वभाववादिनो लोकायतिका यदृच्छापि तन्मतमेव काल इति ज्योतिर्विद. कर्मेति मीमांसका देवमिति च। ३५

२. विज्ञानमात्रमिति योगाचार. शून्यमिति माध्यमिकः प्रचलितं वागाडम्बर। अत्र दैवमिति पक्ष. ईश्वर. स्वयं फलं ददातीति पक्ष। स च ईश्वरस्य स्वयं फलदातृत्वे वैषम्यनैर्घृण्यदोषप्रसंगान्निराकृत इति ज्ञेयम्।

३. देवताकाण्डीया.—अत्र संकर्षकाण्डशब्दिते देवताकाण्डे कर्मैव द्वादशाध्यायावशिष्टं विचार्यते जैमिनिना। परं तु देवतास्वरूपकार्यादिपरः कश्चन काण्डो वर्तते इति वदता मतमनुसृत्येदमुक्तम्। उपलभ्यमानस्य संकर्षकाण्डस्यैव देवताकाण्डमिति नाम तत्र द्वादशाधिकरणानि कर्माङ्गभूतदेवताविचारात्मकानि यतः उपलभ्यन्ते तस्मात् देवताकाण्ड इति प्रथेति परिमले प्रदानवदेव तदुक्तमित्यधिकरणे ( ३.३.४३ ) निरधारि। ४०

## अथ तृतीयाध्यायस्य तृतीयं ब्राह्मणम्

**अथ हैनं भुज्युर्लाह्यायनिः पप्रच्छ याज्ञवल्क्येति होवाच । मद्रेषु चरकाः पर्यव्रजाम ते पतञ्चलस्य काप्यस्य गृहानैम तस्यासीद्दुहिता गन्धर्वगृहीता तमपृच्छाम कोऽसीति सोऽब्रवीत् सुधन्वाङ्गिरस इति तं यदा लोकानामन्तानपृच्छामाथैनमब्रूम क्व पारिक्षिता अभवन्निति क्व पारिक्षिता अभवन्स त्वा पृच्छामि याज्ञवल्क्य क्व पारिक्षिता अभवन्निति ॥१॥**

अथ हैनं भुज्युर्लाह्यायनिः पप्रच्छ । ग्रहातिग्रहलक्षणं बन्धनमुक्तम् । यस्मात्सप्रयोजकान्मुक्तो मुच्यते येन वा बद्धः संसरति स मृत्युः । तस्माच्च मोक्ष उपपद्यते । यस्मान्मृत्योर्मृत्युरस्ति । मुक्तस्य च न गतिः क्वचित् । सर्वोत्सादो नाममात्रावशेषः प्रदीपनिर्वाणवदिति चावधृतम् । तत्र संसरतां मुच्यमानानां च कार्यकरणानां स्वकारणसंसर्गे समाने मुक्तानामत्यन्तमेव पुनरनुपादानम् । संसरतां तु पुनः पुनरुपादानं येन प्रयुक्तानां भवति तत्कर्मेत्यवधारितं विचारणापूर्वकम् । तत्क्षये च नामावशेषेण सर्वोत्सादो मोक्षः । तच्च पुण्यपापाख्यं कर्म । पुण्यो वै पुण्येन कर्मणा भवति पापः पापेनेत्यवधारितत्वात् । एतत्कृतः संसारः ।

तत्रापुण्येन स्थावरजङ्गमेषु स्वभावदुःखबहुलेषु नरकतिर्यक्प्रेतादिषु च दुःखमनुभवति पुनः पुनर्जायमानो म्रियमाणश्चेत्येतद्राजवर्त्मवत्सर्वलोकप्रसिद्धम् । यत्तु शास्त्रीयं पुण्यो वै पुण्येन कर्मणा भवति तत्रैवाऽदरः क्रियत इह श्रुत्या । पुण्यमेव च कर्म सर्वपुरुषार्थसाधनमिति सर्वे श्रुतिस्मृतिवादाः । मोक्षस्यापि पुरुषार्थत्वात्तत्साध्यता प्राप्ता । यावद्यावत्पुण्योत्कर्षस्तावत्तावत्फलोत्कर्षप्राप्तिः । तस्मादुत्तमेन पुण्योत्कर्षेण मोक्षो भविष्यतीत्याशङ्का स्यात् । सा निवर्तयितव्या ज्ञानसंहितस्य च प्रकृष्टस्य कर्मण एतावती गतिः । व्याकृतनामरूपास्पदत्वात्कर्मणस्तत्फलस्य च । न त्वकार्ये नित्येऽव्याकृतधर्मिण्यनामरूपात्मके क्रियाकारकफलस्वभाववर्जिते कर्मणो व्यापारोऽस्ति । यत्र च व्यापारः स संसार एवेत्यस्यार्थस्य प्रदर्शनाय ब्राह्मणमारभ्यते ।

यत्तु कैश्चिदुच्यते विद्यासहितं कर्म निरभिसंधि मन्त्रशर्करादियुक्तविषदध्यादिवत्कार्यान्तरमारभत इति ।

ब्राह्मणान्तरमवतार्य वृत्तं कीर्तयति—अथेत्यादिना । उक्तमेव तस्य मृत्युत्वं व्यक्तीकरोति—यस्मादिति । अग्निर्वै मृत्युरित्यादावुक्तं स्मारयति—तस्मादिति । यत्रायमित्यादावुक्तमनुद्रवति—मुक्तस्य चेति । यत्रास्येत्यादौ निर्णीतमनुभाषते—तत्रेति । पूर्वब्राह्मणस्थो ग्रन्थः सप्तम्यर्थः । तस्य चावधारितमित्यनेन संबन्धः । संसरतां मुच्यमानानां च यानि कार्यकरणानि तेषामिति वैयधिकरण्यम् । अनुपादानमुपादानमित्युभयत्र कार्यकरणानामिति संबन्धः । कर्मणो भावाभावाभ्यां बन्धमोक्षावुक्तौ तत्राभावद्वारा कर्मणो मोक्षहेतुत्वं स्फुटयति—तत्क्षये चेति । तस्य भावद्वारा बन्धहेतुत्वं प्रकटयति—तच्चेति ।

पुण्यपापयोरुभयोरपि संसारफलत्वाविशेषात्पुण्यफलवत्पापफलमप्यत्र वक्तव्यमन्यथा ततो विरागायोगादित्याशङ्क्य वर्तिष्यमाणस्य तात्पर्यं वक्तुं भूमिकां करोति—तत्रेति । पुण्येष्वपुण्येषु च निर्धारणार्था सप्तमी । स्वभावदुःखबहुलेष्वित्युभयतः संबध्यते । तर्हि पुण्यफलमपि सर्वलोकप्रसिद्धत्वान्नात्र वक्तव्यमित्याशङ्क्याऽऽह—यत्त्विति । शास्त्रीयं सुखानुभवमिति शेषः । इहेति ब्राह्मणोक्तिः शास्त्रीयं कर्म सर्वमपि संसारफलमेवेति वक्तुं ब्राह्मणमित्युक्त्वा शङ्कोत्तरत्वेनापि तदवतारयति—पुण्यमेवेत्यादिना । मोक्षस्य पुण्यसाध्यत्वं विधान्तरेण साधयति—यावद्यावदिति । कथं तस्या निवर्तनमित्याशङ्क्याऽऽह—ज्ञानसहितस्येति । समुच्चितमपि कर्म संसारफलमेवेत्यत्र हेतुमाह—व्याकृतेति । मोक्षेऽपि स्वर्गादाविव पुरुषार्थत्वाविशेषात्कर्मणो व्यापारः स्यादित्याशङ्क्याऽऽह—न त्विति । अकार्यत्वमुत्पत्तिहीनत्वम् । नित्यत्वं नाशशून्यत्वम् । अव्याकृतधर्मित्वं व्याकृतनामरूपराहित्यम् । 'अशब्दमस्पर्शम्' इत्यादिश्रुतिमाश्रित्याऽऽह—अनामेति । 'निष्कलं निष्क्रियम्' इत्यादिश्रुतिमाश्रित्याऽऽह—क्रियेति । चतुर्विधक्रियाफलविलक्षणे मोक्षे कर्मणो व्यापारो न संभवतीति भावः । नन्वास्थाणोराचप्रजापतेः सर्वत्र कर्मव्यापारात्कथं मोक्षे प्रजापतिभावलक्षणे तद्व्यापारो नास्ति तत्राऽऽह—यत्र चेति । कर्मफलस्य सर्वस्य संसारत्वमेवेति कुतः सिध्यति तत्राऽऽह—इत्यस्येति ।

विद्यासहितमपि कर्म संसारफलं विद्यैव मोक्षार्थेति स्वपक्षशुद्ध्यर्थं विचारयन्पूर्वपक्षयति—यत्त्विति । यथा केवलं विषदध्यादि मरणज्वरादिकरमपि मन्त्रशर्करादियुक्तं जीवनपुष्ट्याद्यारभते तथा स्वतो बन्धफलमपि कर्म

1. सप्रयोजकात्—प्रयोजकं कामसहितं कर्म मृत्योर्मृत्युः ब्रह्मसाक्षात्कारः । अत्र मृत्युः अध्यासे पर्यवसितः ।

2. ज्ञानसहितस्य उपासनासहितस्य व्याकृतनामरूपत्वं कर्मणः समिदाज्यादिसाध्यत्वं, तत्फलस्य तु व्याकृत-शरीर-भोग्यत्वम् ।

तत्र । अनारम्यत्वान्मोक्षस्य । बन्धनाश एव हि मोक्षो न कार्यभूतः बन्धनं चाविद्येत्यवोचाम । अविद्यायाश्च न
कर्मणा नाश उपपद्यते । दृष्टविषयत्वाच्च कर्मसामर्थ्यस्य । उत्पत्त्याप्तिविकारसंस्कारा हि कर्मसामर्थ्यस्य विषयाः ।
उत्पादयितुं प्रापयितुं विकर्तुं संस्कर्तुं च सामर्थ्यं कर्मणो नातो व्यतिरिक्तविषयोऽस्ति कर्मसामर्थ्यस्य । लोकेऽ-
प्रसिद्धत्वात् । न च मोक्ष एषां पदार्थानामन्यतमः । अविद्यामात्रव्यवहित इत्यवोचाम ।

बाढम् । भवतु केवलस्यैव कर्मण एवंस्वभावता । विद्यासंयुक्तस्य तु निरभिसंधेर्भवत्यन्यथा स्वभावः । ५
दृष्टं ह्यन्यशक्तित्वेन निर्ज्ञातानामपि पदार्थानां विषदध्यादीनां विद्यामन्त्रशर्करादिसंयुक्तानामन्यविषये सामर्थ्यम् ।
तथा कर्मणोऽप्यस्त्विति चेत् । न । प्रमाणाभावात् । तत्र हि कर्मण उक्तविषयव्यतिरेकेण विषयान्तरे सामर्थ्या-
स्तित्वे प्रमाणं न प्रत्यक्षं नानुमानं नोपमानं नार्थापत्तिर्न शब्दोऽस्ति ।

ननु फलान्तराभावे चोदनान्यथानुपपत्तिः प्रमाणमिति । न हि नित्यानां कर्मणां विश्वजिन्न्यायेन फलं
कल्प्यते । नापि श्रुतं फलमस्ति । चोद्यन्ते च तानि । पारिशेष्यान्मोक्षस्तेषां फलमिति गम्यते । अन्यथा हि पुरुषा १०
न प्रवर्तेरन् ।

ननु विश्वजिन्न्याय एवाऽऽयातो मोक्षस्य फलस्य कल्पितत्वात् । मोक्षे वाऽन्यस्मिन्वा फलेऽकल्पिते पुरुषा

फलाभिलाषमन्तरेणानुष्ठितं विद्यासमुच्चितं मोक्षाय क्षममित्यर्थः । मुक्तेः साध्यत्वाङ्गीकारे समुच्चितकर्मसाध्यत्वं
स्यान्न तु तस्याः साध्यत्वं धीमात्रायत्तत्वादित्युत्तरमाह—तन्नेति । हेतुमेव साधयति—बन्धनेति । किं तद्बन्धनं
तदाह—बन्धनं चेति । अविद्यानाशोऽपि कर्मारभ्यो भविष्यतीति चेन्नेत्याह—अविद्यायाश्चेति । मोक्षो न कर्मसाध्यो- १५
ऽविद्यास्तमयत्वाद्रज्ज्वविद्यास्तमयवदित्यर्थः । तत्रैव हेत्वन्तरमाह—दृष्टविषयत्वाच्चेति । न कर्मसाध्या मुक्तिरिति
शेषः । तदेव स्पष्टयति—उत्पत्तीति । उक्तमेव कर्मसामर्थ्यविषयमन्वयव्यतिरेकाभ्यां साधयति—उत्पादयितुमिति ।
अप्रसिद्धत्वादिति च्छेदः । उत्पत्त्यादीनामन्यतमत्वान्मोक्षस्यापि कर्मसामर्थ्यविषयता स्यादिति चेन्नेत्याह—न चेति ।
नित्यत्वादात्मत्वात्कूटस्थत्वान्नित्यशुद्धत्वान्निर्गुणत्वाच्चेत्यर्थः[2] । आत्मभूतो यथोक्तो मोक्षस्तर्हि किमिति सर्वेषां न प्रथत
इत्याशङ्क्याऽऽह—अविद्येति । २०

उक्तं कर्मसामर्थ्यं पूर्ववाद्यङ्गीकरोति—बाढमिति । अङ्गीकारमेव स्फोरयति—भवत्विति । एवंस्वभावतो-
त्पादनादौ समर्थता । का तर्हि विप्रतिपत्तिस्तत्राऽऽह—विद्यासंयुक्तस्येति । अन्यथा स्वभावश्चतुर्विधक्रियाफलविलक्षणे-
ऽपि मोक्षे समर्थतेति यावत् । उत्पत्त्यादौ समर्थस्य कर्मणो विद्यासंयुक्तस्य तद्विलक्षणेऽपि मोक्षे सामर्थ्यमस्तीत्यत्र
दृष्टान्तमाह—दृष्टं हीति । उक्तदृष्टान्तवशात्कर्मणोऽपि केवलस्य संसारफलस्य विद्यासयोगान्मुक्तिफलत्वमपि स्या-
दित्याह—तथेति । समाधत्ते—नेत्यादिना । २५

अतीन्द्रियत्वात्कर्मणो मुक्तिसाधनत्वे प्रत्यक्षाद्यसंभवेऽप्यर्थापत्तिरस्तीति शङ्कते—नन्विति । नित्येषु कर्मसु
मोक्षातिरिक्तस्य फलस्य श्रुतस्याभावे सति तदुपलभ्यमानचोदनाया मोक्षफलत्वं विनाऽनुपपत्तिस्तेषां तत्साधनत्वे
मानमित्यर्थः । ननु 'विश्वजिता यजेते'त्यत्र यागकर्तव्यतारूपो नियोगोऽवगम्यते तस्य नियोज्यसापेक्षत्वा'त्स स्वर्गः
स्यात्सर्वान्प्रत्यविशिष्टत्वादिति' न्यायेन स्वर्गकामो नियोज्योऽङ्गीकृतस्तथा नित्येष्वपि कर्मसु भविष्यति स्वर्गो नियोज्य-
विशेषणमत आह—न हीति । 'जीवञ्जुहुयादि'ति जीवनविशिष्टस्य नियोज्यस्य लाभान्न नित्येषु स्वर्गो नियोज्यविशेषण- ३०
मित्यर्थः । ननु जीवनविशिष्टोऽपि फलाभावे न नियोज्यः स्यात्तथा च 'कर्मणा पितृलोक' इति श्रुतं फलं तेषु कल्पयिष्यते
नेत्याह—नापीति । नित्यविधिप्रकरणे पितृलोकवाक्यस्याश्रवणादित्यर्थः । तर्हि फलाभावाच्चोदनैव मा भूदिति
चेन्नेत्याह—चोद्यन्ते चेति । तथाऽपि फलान्तरं कल्प्यतामित्याशङ्क्य कल्पकाभावान्मैवमित्यभिप्रेत्याऽऽह—पारिशेष्या-
दिति । मुक्तेर्यत्कल्पकं तदेव फलान्तरस्यापि किं न स्यादित्याशङ्क्य तस्य निरतिशयफलविषयत्वान्मुक्तिकल्पकत्वमेवे-
त्यभिप्रेत्याऽऽह—अन्यथेति । ३५

अनुपपत्त्या चेन्नियोज्यलाभाय नित्येषु फलं कल्प्यते कथं तर्हि विश्वजिन्न्यायो न प्राप्नोतीति सिद्धान्ती
प्रत्याह—नन्विति । उक्तमेव विवृणोति—मोक्षे वेति । अकल्पिते सतीति च्छेदः । श्रुतार्थापत्त्या विधेः श्रुतस्य

१. विद्यामन्त्रजप. तत्संयुक्तं विषं पुष्टिकारि । शर्करासयुक्तं दधि पुष्टिकारि केवलदध्नः ज्वरादिकारित्वात् ।
२. नित्यत्वात् नोत्पाद्यत्वम्, आत्मत्वात् नाप्यत्वं, कूटस्थत्वात् न विकार्यत्वं, नित्यशुद्धत्वात् न संस्कार्यत्वम् ।

न प्रवर्तेरन्निति मोक्षः फलं कल्प्यते श्रुतार्थापत्त्या यथा विश्वजिति। नन्वेवं सति कथमुच्यते विश्वजिन्न्यायो न
भवतीति। फलं च कल्प्यते विश्वजिन्न्यायश्च न भवतीति विप्रतिषिद्धमभिधीयते। मोक्षः फलमेव न भवतीति
चेत्। न। प्रतिज्ञाहानात्। कर्म कार्यान्तरं विषदध्यादिवदारभत इति हि प्रतिज्ञातम्। स चेन्मोक्षः कर्मणः कार्यं
फलमेव न भवतीति सा प्रतिज्ञा हीयेत। कर्मकार्यत्वे च मोक्षस्य स्वर्गादिफलेभ्यो विशेषो वक्तव्यः।

५ अथ कर्मकार्यं न भवति नित्यानां कर्मणां फलं मोक्ष इत्यस्या वचनव्यक्तेः कोऽर्थ इति वक्तव्यम्। न च
कार्यफलशब्दभेदमात्रेण विशेषः शक्यः कल्पयितुम्। अफलं च मोक्षो नित्यैश्च कर्मभिः क्रियते नित्यानां कर्मणां
फलं न कार्यमिति चैषोऽर्थो विप्रतिषिद्धोऽभिधीयते यथाऽग्निः शीत इति।

ज्ञानवदिति चेत्। यथा ज्ञानस्य कार्यं मोक्षो ज्ञानेनाक्रियमाणोऽप्युच्यते तद्वत्कर्मकार्यत्वमिति चेत्। न।
अज्ञाननिवर्तकत्वाज्ज्ञानस्य। अज्ञानव्यवधाननिवर्तकत्वाज्ज्ञानस्य मोक्षो ज्ञानकार्यमित्युपचर्यते। न तु कर्मणा
१० निवर्तयितव्यमज्ञानम्। न चाज्ञानव्यतिरेकेण मोक्षस्य व्यवधानान्तरं कल्पयितुं शक्यम्। नित्यत्वान्मोक्षस्य साधक-
स्वरूपाव्यतिरेकाच्च, यत्कर्मणा निवर्त्येत। अज्ञानमेव निवर्तयतीति चेत्। न। विलक्षणत्वात्। अनभिव्यक्तिर-
ज्ञानमभिव्यक्तिलक्षणेन ज्ञानेन विरुध्यते। कर्म तु नाज्ञानेन विरुध्यते तेन ज्ञानविलक्षणं कर्म। यदि ज्ञानाभावो
यदि संशयज्ञानं यदि विपरीतज्ञानं वोच्यतेऽज्ञानमिति सर्वं हि तज्ज्ञानेनैव निवर्त्यते। न तु कर्मणाऽन्यतमेनापि
विरोधाभावात्।

१५ अथादृष्टं कर्मणामज्ञाननिवर्तकत्वं कल्प्यमिति चेत्। न। ज्ञानेनाज्ञाननिवृत्तौ गम्यमानायामदृष्टनिवृत्ति-
कल्पनानुपपत्तेः। यथाऽवघातेन व्रीहीणां तुषनिवृत्तौ गम्यमानायामग्निहोत्रादिनित्यकर्मकार्याऽदृष्टा न कल्प्यते
तुषनिवृत्तिः। तद्वदज्ञाननिवृत्तिरपि नित्यकर्मकार्याऽदृष्टा न कल्प्यते। ज्ञानेन विरुद्धत्वं चासकृत्कर्मणामवोचाम।

प्रवर्तकत्वानुपपत्त्येति यावत्। विश्वजितीव नित्येषु मोक्षे फले कल्प्यमाने सति फलितमाह—नन्वेवमिति।
कथनित्युक्तानुपपत्तिमेव स्फुटयति—फलं चेति। फलकल्पनायां विश्वजिन्न्यायोऽवतरति मोक्षस्तु स्वरूपस्थितित्वेना-
२० नुत्पाद्यत्वात्फलमेव न भवतीति शङ्कते—मोक्ष इति। निग्रह[3]मुद्भावयन्नुत्तरमाह—नेति। प्रतिज्ञाहानिं प्रकटयति—
कर्मेत्यादिना। कर्मकार्यत्वं मुक्तेरपेत्योक्तं तदेवायुक्तमित्याह—कर्मकार्यत्वे चेति।

फलत्वेऽपि कर्मकार्यत्वं न मुक्तेरस्तीत्युक्तं दोषं परिहर्तुं चोदयति—अथेति। प्रतिज्ञाविरोधेन प्रतिविधत्ते—
नित्यानामिति। फलत्वमङ्गीकृत्य कार्यत्वेऽनङ्गीकृते कथं व्याघात इत्याशङ्क्याऽऽह—न चेति। विशेषोऽर्थगत इति
शेषः। फलत्वमङ्गीकृत्य कार्यत्वानङ्गीकारे व्याघातमुक्त्वा वैपरीत्येऽपि तं व्युत्पादयति—अफलं चेति। आद्यं व्याघातं
२५ दृष्टान्तेन स्पष्टयति—नित्यानामिति।

दृष्टान्तेन व्याघातं परिहरन्नाशङ्कते—ज्ञानवदिति चेदिति। तदेव स्फुटयति—यथेति। दृष्टान्तं विघटयति—
नेति। ज्ञानस्य मोक्षव्यवधिभूताज्ञाननिवर्तकत्वान्मोक्षस्तेनाक्रियमाणोऽपि तत्कार्यमिति व्यपदेशभाग्भवतीत्यर्थः। तदेव
स्फुटयति—अज्ञानेति। दार्ष्टान्तिकं निराचष्टे—न त्विति। यत्कर्मणा निवर्त्येत तन्मोक्षस्य व्यवधानान्तरं कल्पयितुं
न तु शक्यमिति संबन्धः। व्यवधानध्वंसे कर्मणोऽप्रवेशेऽपि मुक्तावेव तत्प्रवेशः स्यादिति चेन्नेत्याह—नित्यत्वादिति।
३० नित्यकर्मनिवर्त्यं व्यवधानान्तरं मा भूदज्ञानमेव तन्निवर्त्यं भविष्यति तथा च मोक्षस्य कर्मकार्यत्वं शक्यमुपचरितुमिति
शङ्कते—अज्ञानमेवेति। कर्मणो ज्ञानाद्विलक्षणत्वादज्ञाननिवर्तकत्वमित्युत्तरमाह—न विलक्षणत्वादिति। वैलक्षण्यमेव
प्रकटयति—अनभिव्यक्तिरिति। इतश्च ज्ञाननिवर्त्यमेवाज्ञानमित्याह—यदीति। अन्यतमेन नित्यादिना व्यस्तेन
वा श्रौतेन स्मार्तेन वेत्यर्थः। कर्माज्ञानयोरविरोधो हेत्वर्थः। अज्ञाननिवर्तकत्वं कर्मणो नान्वयव्यतिरेकसिद्धं किंत्व-
दृष्टमेव कल्प्यमिति शङ्कते—अथेति। दृष्टे सत्यदृष्टकल्पना न न्याय्येति परिहरति—न ज्ञानेनेति। उक्तमर्थं दृष्टान्तेन
३५ दृढयति—यथेत्यादिना। अदृष्टेति च्छेदः। अस्तु ज्ञानादज्ञानध्वस्तिः किंतु कर्मसमुच्चितादित्याशङ्क्याऽऽह—

1. अज्ञानस्य ज्ञानैकनाश्यत्वादित्यभिप्रायः प्रत्यक्षमेतत्।
2. नेति—दृष्टफलसंभवे अदृष्टफलकल्पनमन्याय्यमित्यर्थः यथा अध्ययनस्यार्थज्ञानफले दृष्टे संभवति नादृष्टस्वर्गादि-
कल्पना। तदुक्तं—'लभ्यमानफले दृष्टे नादृष्टफलकल्पना' वार्तिके।
3. निग्रहं निग्रहस्थानं प्रतिज्ञाहानिरूपम्।

यदविरुद्धं ज्ञानं कर्मभिस्तद्देवलोकप्राप्तिनिमित्तमित्युक्तं "विद्यया देवलोकः" इति श्रुतेः।

किंचान्यत्कल्प्ये च फले नित्यानां कर्मणां श्रुतानां यत्कर्मभिर्विरुध्यते द्रव्यगुणकर्मणां कार्यमेव न भवति, किं तत्कल्प्यताम् ? यस्मिन्कर्मणः सामर्थ्यमेव न दृष्टम्, किंवा यस्मिन्नदृष्टं सामर्थ्यं यच्च कर्मणां फलमविरुद्धं तत्कल्प्यतामिति। पुरुषप्रवृत्तिजननायावश्यं चेत्कर्मफलं कल्पयितव्यम् कर्माविरुद्धविषय एव श्रुतार्थापत्तेः क्षीणत्वान्नित्यो मोक्षः फलं कल्पयितुं न शक्यस्तद्व्यवधानाज्ञाननिवृत्तिर्वा। अविरुद्धत्वाद्दृष्टसामर्थ्यविषयत्वाच्चेति। ५

पारिशेष्यन्यायान्मोक्ष एव कल्पयितव्य इति चेत्। सर्वेषां हि कर्मणां सर्वं फलम् न चान्यदितरकर्मफलव्यतिरेकेण फलं कल्पनायोग्यमस्ति। परिशिष्टश्च मोक्षः। स चेष्टो वेदविदां फलम्। तस्मात्स एव कल्पयितव्य इति चेत्। न। कर्मफलव्यक्तीनामानन्त्यात्पारिशेष्यन्यायानुपपत्तेः। नहि पुरुषेच्छाविषयाणां कर्मफलानामेतावत्त्वं नाम केनचिदसर्वज्ञेनावधृतं तत्साधनानां वा पुरुषेच्छानां वाऽनियतदेशकालनिमित्तत्वात्पुरुषेच्छाविषयसाधनानां च पुरुषेष्टफलप्रयुक्तत्वात्। प्रतिप्राणि चेच्छावैचित्र्यात्फलानां तत्साधनानां चाऽऽनन्त्यसिद्धिः। तदानन्त्याच्चाशक्यमेतावत्त्वं पुरुषैर्ज्ञातुम्। अज्ञाते च साधनफलैतावत्त्वे कथं मोक्षस्य परिशेषसिद्धिरिति। १०

कर्मफलजातिपारिशेष्यमिति चेत्। सत्यपीच्छाविषयाणां तत्साधनानां चाऽऽनन्त्ये कर्मफलजातित्वं नाम

ज्ञानेनेति। ननु कर्मभिरविरुद्धमपि हिरण्यगर्भादिविज्ञानमस्ति तथा च समुच्चितं ज्ञानमज्ञानविध्वंसि भविष्यति नेत्याह—यदविरुद्धमिति।

नित्याना कर्मणां समुच्चितानामसमुच्चितानां च स्वरूपस्थितौ मोक्षे तत्प्रतिबन्धकाज्ञानध्वस्तौ वा नादृष्टं सामर्थ्यं कल्प्यमित्युक्तमिदानी तत्कल्पनामङ्गीकृत्यापि दूषयति—किञ्चेति। कर्मणा नास्ति मोक्षे सामर्थ्यमित्येतदुक्तादेव कारणान्न भवति। किन्त्वन्यच्च कारण तत्रास्तीत्यर्थः। तदेव दर्शयितुं विचारयति—कल्प्ये चेति। विरोधमभिनयति—द्रव्येति। कार्यत्वाभाव समर्थयते—यस्मिन्निति। पक्षान्तरमाह—किंवेति। सामर्थ्यविषयं विशदयति—यच्चेति। कथमिह निर्णयस्तत्राऽऽह—पुरुषेति। कल्पयितव्यं फलमिति संबन्धः। उत्पत्त्यादीनामन्यतमो हि कर्मभिरविरुद्धो विषयः। तत्रैव नित्यकर्मचोदनानुपपत्तेरुपशान्तत्वान्नित्यकर्मफलत्वेन मोक्षस्तद्व्यवधानाज्ञाननिवृत्तिर्वा न शक्यते कल्पयितुम्। कर्माज्ञानयोर्विरोधाभावाद्दृष्टं सामर्थ्यं यस्मिन्नुत्पत्त्यादौ तद्विषयत्वाच्च कर्मणस्तद्विलक्षणे मोक्षे न व्यापारः। तथा च नित्यकर्मविधिवशात्पुरुषप्रवृत्तिसंपादनाय फलं चेत्कल्पयितव्यं तर्हि तदुत्पत्त्यादीनामन्यतममेव तदविरुद्ध कल्प्यमित्यर्थः। इतिशब्द. श्रुतार्थापत्तिपरिहारसमाप्त्यर्थः। मोक्ष एव नित्याना कर्मणा फलत्वेन कल्पयितव्यः पारिशेष्यन्यायादिति शङ्कते—पारिशेष्येति। पारिशेष्यन्यायमेव विशदयति—सर्वेषामिति। सर्वं स्वर्गपशुपुत्रादीति यावत्। तथाऽपि मोक्षादन्यदेव नित्यकर्मफलं किं न स्यात्तत्राऽऽह—न चेति। मोक्षस्यापीतरकर्मफलनिवेशमाशङ्क्याऽऽह—परिशिष्टश्चेति। तस्य फलत्वमेव कथं सिद्धं तत्राऽऽह—स चेति। परिशेषायातमर्थं निगमयति—तस्मादिति। पारिशेष्यासिद्ध्या दूषयति—नेति। १५ २० २५

कर्मफलव्यक्त्यानन्त्यमुक्त व्यनक्ति—नहीति। फलवत् फलसाधनाना फलविषयेच्छानां चाऽऽनन्त्य कथयति—तत्साधनानामिति। तदानन्त्ये हेतुमाह—अनियतेति। इच्छाद्यानन्त्ये हेत्वन्तरमाह—पुरुषेति। एतावत्त्व नाम नास्तीत्युभयत्र संबन्धः। पुरुषस्येष्ट फल शोभनाध्यासविषयभूतं तत्र विषयिणा शोभनाध्यासेन प्रयुक्तत्वादिति हेत्वर्थः। इच्छाद्यानन्त्य प्राणिभेदेषु दर्शयित्वा तदानन्त्यमेकैकस्मिन्नपि प्राणिनि दर्शयति—प्रतिप्राणि चेति। इच्छाद्यानन्त्ये फलितमाह—तदानन्त्याच्चेति। साधनादिष्वेतावत्त्वाज्ञानेऽपि किं स्यात्तदाह—अज्ञाते चेति। इतिशब्दः पारिशेष्यानुपपत्तिसमाप्त्यर्थः। ३०

प्रकारान्तरेण पारिशेष्यं शङ्कते—कर्मेति। तामेव शङ्कां विशदयति—सत्यपीति। तथाऽपि कथं मोक्षस्य

---

१. इतरकर्मफलव्यतिरेकेण इतरकर्मणां यानि फलानि तदतिरिक्तफलाभावान्न मोक्ष. फलमित्यर्थः। ३५

२. पुरुषेष्टफलप्रयुक्तत्वात् पुरुषेष्टफलप्रयुक्तकृतिजन्यत्वात्। मोक्षस्य नित्यकर्मफलत्वमस्तु। न, नित्यकर्मफलत्वाभ्युपगमे तस्य कर्मफलजातीयत्वापत्ते.।

३. पारिशेष्य तदितरविशेषाभावकूटवत्त्वे सति सामान्यवत्त्वं पारिशेष्यासिद्धि. कर्मफलानामनन्तत्वात् पुरुषापेक्षाणामानन्त्याच्च।

सर्वेषां तुल्यम्। मोक्षस्त्वकर्मफलत्वात्परिशिष्टः स्यात्। तस्मात्परिशेषात्स एव युक्तः कल्पयितुमिति चेत्। न। तस्यापि नित्यकर्मफलत्वाभ्युपगमे कर्मफलसमानजातीयत्वोपपत्तेः परिशेषानुपपत्तिः। तस्मादन्यथाऽप्युपपत्तेः क्षीणा श्रुतार्थापत्तिः। उत्पत्त्याप्तिविकारसंस्काराणामन्यतममपि नित्यानां कर्मणां फलमुपपद्यत इति क्षीणा श्रुतार्थापत्तिः। चतुर्णामन्यतम एव मोक्ष इति चेत्। न तावदुत्पाद्यो नित्यत्वात्। अत एवाविकार्योऽसंस्कार्यश्चात

५ एव, असाधनद्रव्यात्मकत्वाच्च। साधनात्मकं हि द्रव्यं संस्क्रियते। यथा पात्राज्यादि प्रोक्षणादिना। न च संस्क्रियमाणः संस्कारनिर्वर्त्यो वा यूपादिवत्। पारिशेष्यादाप्यः स्यात्। नाऽऽप्योऽप्यात्मस्वभावत्वादेकत्वाच्च।

इतरैः कर्मभिर्वैलक्षण्यान्नित्यानां कर्मणां तत्फलेनापि विलक्षणेन भवितव्यमिति चेत्। न। कर्मत्वसालक्षण्यात्सलक्षणं कस्मात्फलं न भवतीतरकर्मफलैः। निमित्तवैलक्षण्यादिति चेत्। न। क्षामवत्यादिभिः समानत्वात्।

यथा हि गृहदाहादौ निमित्ते क्षामवत्यादीष्टिर्यथा भिन्ने जुहोति स्कन्ने जुहोतीत्येवमादौ नैमित्तिकेषु कर्मसु

१० न मोक्षः फलं कल्प्यते। तैश्चाविशेषान्नैमित्तिकत्वेन जीवनादिनिमित्ते च श्रवणात्। तथा नित्यानामपि न मोक्षः

परिशिष्टत्वं तदाह—मोक्षस्त्विति। परिशेषफलमाह—तस्मादिति। शङ्कितं परिशेषं दूषयति—नेत्यादिना। अर्थापत्तिपरिशेषौ पराकृत्यार्थापत्तिपराकरणं प्रपञ्चयितुं प्रस्तौति—तस्मादिति। अन्यथाऽप्युपपत्तिं प्रकटयति—उत्पत्तीति। नित्यानामुत्पत्त्यादिफलत्वेऽपि मोक्षस्य तत्फलत्वं सिध्यतीति शङ्कते—चतुर्णामिति। तत्र मोक्षस्योत्पाद्यत्वं दूषयति—न तावदिति। उभयत्रातः शब्दो नित्यत्वपरामर्शी। असंस्कार्यत्वे हेत्वन्तरमाह—असाधनेति। तदेव व्यतिरेकमुखेन

१५ विवृणोति—साधनात्मकं हीति। इतश्च मोक्षस्यासंस्क्रियमाणत्वमित्याह—न चेति। यथा यूपस्तक्षणाष्टाश्रीकरणाभ्यञ्जनादिना संस्क्रियते यथा चाऽऽहवनीयः संस्कारेण निष्पाद्यते न तथा मोक्षो नित्यशुद्धत्वान्निर्गुणत्वाच्चेत्यर्थः। पक्षान्तरमनुभाष्य दूषयति—पारिशेष्यादित्यादिना।

एकत्वं पूर्णत्वम्। साधनवैलक्षण्यं फलवैलक्षण्यं कल्पयतीति शङ्कते—इतरैरिति। हेतुवैलक्षण्यासिद्धौ कल्पकाभावात्फलवैलक्षण्यासिद्धिरिति दूषयति—न कर्मत्वेति। निमित्तकृतहेतुवैलक्षण्यवशात्फलवैलक्षण्यसिद्धिरिति

२० शङ्कते—निमित्तेति। निमित्तवैलक्षण्यं फलवैलक्षण्यस्यानिमित्तमिति परिहरति—न क्षामवत्यादिभिरिति।

तदेव प्रपञ्चयति—यथा हीति। "यस्याऽऽहिताग्नेरग्निर्गृहान्दहेदग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेद्" इत्यत्र दहेदिति विधिविभक्त्या प्रसिद्धार्थयच्छब्दोपहितया गृहदाहाख्यनिमित्तपरामर्शेनाग्नये क्षामवते पुरोडाशमित्यादिना क्षामवती विधीयते। "यस्योभयं हविरार्तिमार्च्छेत्स ऐन्द्रं पञ्चशरावमोदनं निर्वपेद्" इत्यत्र चाऽऽर्च्छेदिति विधिविभक्त्या निर्वपेदिति विधास्यमाननिर्वापनिमित्तं हविरार्तिमनूद्य निर्वापो विधीयते। भिन्ने[6] जुहोति स्कन्ने जुहोत्यथ यस्य[7]

२५ पुरोडाशौ क्षायतस्तं यज्ञं वरुणो गृह्णाति यदा तद्धविस्सन्तिष्ठेताथ तदेव हविर्निर्वपेद्यज्ञो हि यज्ञस्य प्रायश्चित्तमिति च

१. असंस्कार्यश्च अत एव नित्यत्वादेव। नित्यत्वात् निर्विकारत्वमित्यर्थः। साधनद्रव्यं संस्कार्यं न चात्मा साधनद्रव्यम्। न चात्मापि यज्ञोपवीतादिभिः संस्क्रियते, यस्यैतेऽष्टाचत्वारिंशत् संस्कारा स ब्रह्मणः सायुज्यं गच्छति इत्युक्तैरिति वाच्यम्। अनेन न शुद्धात्मा संस्क्रियते अपि तु शरीराद्युपहित भ्रान्त्या तत्तादात्म्यापन्न। तदुक्तं समन्वयभाष्ये—देहादिसंहतस्यैवाविद्यापरिगृहीतस्य संस्क्रियमाणत्वाद् इति। आत्मनः शुद्धत्वं च श्रुतियुक्तिसिद्धम्।

३० २. क्षामवत्यादि—यस्याहिताग्नेरग्नि गृहात् दहेत् सोऽग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेत् इति विधि. गृहदाहेनिमित्ते इष्टिविशेषं विधत्ते। समानत्वं नैमित्तिकत्वेन। नित्यकर्माणि विहिते काले शुद्धजीवननिमित्ते। उक्तेष्टिरपि निमित्ते। नित्यकर्माणि नियतनिमित्तकानि क्षामवत्यादिस्तु अनियतनिमित्तक इति भेद नैमित्तिकत्वमुभयसाधारणम्।

३. यूप इति पशुयागे छागपशो. बन्धनार्थं निखात. स्तम्भ। यूप तक्षति यूपमष्टाश्रीकरोति यूपाहुतिं जुहोति यूपमनक्ति इत्यादिविहितसंस्कारविशिष्ट काष्ठः। आहवनीयस्तु दिवा समन्त्रकमायतनविशेषे स्थापितोऽग्नि।

३५ ४. यस्योभयमिति—उभयं दधिपयश्चयदि आर्तिं नाशं गच्छेत् स पञ्चशरावतण्डुलसाध्येनौदनेन इन्द्राय याग कुर्यात्।

५. निर्वापः राशितः पृथक्करणम्। यागे लाक्षणिकम्।

६. अन्यानि नैमित्तिकान्याह—भिन्ने कपालानां भेदने होमः स्कन्ने आज्यादिर्हविषां भूमौ स्कन्दने होम. तत्र न फलं कल्पनीयम् अवश्यकर्तव्यत्वमात्रं कल्प्यते।

७. यस्य पुरोडाशौ क्षायतः ( दग्धौ भवत. ) तं यजमानं वरुणो गृह्णाति पीडयति तदा पुनर्निर्वपेत्। अत्रापि

४० निमित्ते सति अवश्यं कर्तव्यमन्यथा यागवैफल्यं स्यात्।

फलम्। आलोकस्य सर्वेषां रूपदर्शनसाधनत्व उलूकादय आलोकेन रूपं न पश्यन्तीत्युलूकादिचक्षुषो वैलक्षण्यादि-तरलोकचक्षुर्भिर्न रसादिविषयत्वं परिकल्प्यते रसादिविषये सामर्थ्यस्यादृष्टत्वात्। सुदूरमपि गत्वा यद्विषये दृष्टं सामर्थ्यं तत्रैव कश्चिद्विशेषः कल्पयितव्यः।

यत्पुनरुक्तं विद्यामन्त्रशर्करादिसंयुक्तविषदध्यादिवन्नित्यानि कार्यान्तरमारभन्त इति। आरभ्यतां विशिष्टं कार्यं तदिष्टत्वादविरोधः। निरभिसंधेः कर्मणो विद्यासंयुक्तस्य विशिष्टकार्यान्तरारम्भे न कश्चिद्विरोधः। देवे- ५ याज्यात्मयाजिनोरात्मयाजिनो विशेषश्रवणाद्देवयाजिनः 'श्रेयानात्मयाजी'त्यादौ 'यदेवे विद्यया करोती'त्यादौ च।

यस्तु परमात्मदर्शनविषये मनुनोक्त आत्मयाजिशब्दः 'समं पश्यन्नात्मयाजी'त्यत्र समं पश्यन्नात्मयाजी भवतीत्यर्थः। अथवा भूतपूर्वगत्या। आत्मयाज्यात्मसंस्कारार्थं नित्यानि कर्माणि करोति "इदं मेऽनेनाङ्गं संस्क्रियते" इति श्रुतेः। तथा गार्भैर्होमैरित्यादिप्रकरणे कार्यकरणसंस्कारार्थत्वं नित्यानां कर्मणां दर्शयति। संस्कृतश्च य आत्मयाजी तैः कर्मभिः समं द्रष्टुं समर्थो भवति। तस्येह वा जन्मान्तरे वा सममात्मदर्शनमुत्पद्यते १०

भेदनादिनिमित्तं प्रायश्चित्तमुक्त न च तन्मुक्तिफल तथा निमित्तभेदेऽपि न नित्य कर्म मुक्तिफलमित्यर्थः। क्षामवत्यादि-तुल्यत्वं नित्यकर्मणा कुतो लब्धमित्याशङ्क्याऽऽह—तैश्चेति। क्षामवत्यादिभिरिति यावत्। अविशेषे हेतुर्नैमित्ति-कत्वेनेति। तदेव कथमिति चेत्तत्राऽऽह—जीवनादीति। दार्ष्टान्तिकं स्पष्टयति—तथेति। नित्य कर्म कर्मान्तरा-द्विलक्षणमपि न मोक्षफलमित्यत्र दृष्टान्तमाह—आलोकस्येति। चक्षुरन्तरैरुलूकादिचक्षुषो वैलक्षण्येऽपि न रसादि-विषयत्वमित्यत्र हेतुमाह—रसादीति। वैलक्षण्। तर्हि कुत्रोपयुज्यते तत्राऽऽह—सुदूरमपीति। मनुष्यान्विहायोलूकादौ १५ गत्वाऽपीति यावत्। यद्विषये रूपादावित्यर्थः। विशेषो दूरसूक्ष्मादिरतिशय।

दार्ष्टान्तिक पूर्ववादानुवादपूर्वकमाचष्टे—यत्पुनरित्यादिना। तत्त्रेति यावत्। तदेव विवृणोति—निरभि-संधेरिति। विद्यासंयुक्तं कर्म विशिष्टकार्यकरमित्यत्र शतपथश्रुतिं प्रमाणयति—देवयाजीति। तदाहुरित्युपक्रम्य देवयाजिन श्रेयानित्यादौ काम्यकर्तुर्देवयाजिन सकाशादात्मशुद्ध्यर्थं कर्म कुर्वन्नात्मयाजी श्रेयानित्यात्मयाजिनो विशेषश्रवणा"त्सर्वक्रतुयाजिनामात्मयाजी विशिष्यत" इति स्मृतेश्च विशिष्टस्य कर्मणो विशिष्टकार्यारम्भकत्वमविरुद्ध- २० मित्यर्थः। छान्दोग्येऽपि विद्यासयुक्तस्य कर्मणो विशिष्टकार्यारम्भकत्वं दृष्टमित्याह—यदेवेति।

नन्वात्मयाजिशब्दो नित्यकर्मानुष्ठायिविषयो न भवति।

"सर्वभूतेषु चाऽऽत्मानं सर्वभूतानि चाऽऽत्मनि। संपश्यन्नात्मयाजी वै स्वाराज्यमधिगच्छति॥"

इत्यत्र परमात्मदर्शनविषये तस्य प्रयुक्तत्वादत आह—यस्त्विति। यदि समं पश्यन्भवेत्तदा परेणाऽऽत्मनैकीभूतः स्वराड् भवतीत्यात्मज्ञानस्तुतिरत्र विवक्षिता। महती हीयं ब्रह्मविद्या यद्ब्रह्मविदेवाऽऽत्मयाजी भवति। नहि तस्य तदनुष्ठानं २५ पृथगपेक्षते। ब्रह्मवित्पुण्यकृदिति च वक्ष्यतीत्यर्थ.। परदर्शनवत्यात्मयाजिशब्दस्य गत्यन्तरमाह—अथवेति। भूता या पूर्वस्थितिस्तामपेक्ष्याऽऽत्मयाजिशब्दो विदुषीत्यर्थः। तदेव प्रपञ्चयति—आत्मेति। तेषां तत्संस्कारार्थत्वे प्रमाणमाह—इदमिति। तत्रैव स्मृतिं प्रमाणयति—तथेति। गर्भसंबन्धिभिर्होमैर्मौञ्जीनिबन्धनादिभिश्च बैजिकमेवैनः शमयतीत्य-स्मिन्प्रकरणे नित्यकर्मणा संस्कारार्थत्वं निश्चितमित्यर्थ.। संस्कारोऽपि कुत्रोपयुज्यते तत्राऽऽह—संस्कृतश्चेति। यो हि नित्यकर्मानुष्ठायी स तदनुष्ठानजनितापूर्ववशात्परिशुद्धबुद्धिः सम्यग्धीयोग्यो भवति। ३०

"महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः"।

इति स्मृतेरित्यर्थ। कदा पुनरेषा सम्यग्धीरुत्पद्यते तत्राऽऽह—तस्येति। उत्पन्नस्य सम्यग्ज्ञानस्य फलमाह—

१. सुदूरं गत्वेति—यत्राप्यतिशयो दृष्ट स स्वार्थानतिलङ्घनात्। दूरसूक्ष्मादिदृष्टौ स्यात् न रूपे श्रोत्रवृत्तिता इति भट्टाचार्यैरुक्तम्।

२. देवयाजीति—देवयाजी श्रेयान् आत्मयाजी वा ? इति प्रकृत्य आत्मयाजी तु करोति इदं मेऽनेनाग संस्क्रियते इदं ३५ मे अनेनाङ्गमुपधीयते—इति श्रुतौ नित्यकर्मणां सस्काराधायकत्वोक्तेः।

३. यदेव विद्यया करोति—अत्र विद्या कर्माङ्गावबद्धोपासना तद्विशिष्ट करोति तद् वीर्यवत्तरम्—अधिकफलजनकं भवति। देवयाजी काम्यफलार्थं काम्यकर्मकर्त्ता।

४. गार्भैर्होमै' गर्भोत्पत्तिनिमित्तसीमन्तहोमादिभिः संस्कारःपापक्षय। गार्भिकं बैजिक चैनो द्विजानामपमृज्यते इति मनूक्ते।

५. समं द्रष्टुं समं ब्रह्मेत्यर्थ निर्दोषं हि सम ब्रह्मेति भगवदुक्ते। ४०

समं पश्यन्स्वाराज्यमधिगच्छतीत्येषोऽर्थः। आत्मयाजिशब्दस्तु भूतपूर्वगत्या प्रयुज्यते। ज्ञानयुक्तानां नित्यानां कर्मणां ज्ञानोत्पत्तिसाधनत्वप्रदर्शनार्थम्। किंचान्यत्—

ब्रह्मा¹ विश्वसृजो धर्मो महानव्यक्तमेव च। उत्तमां सात्त्विकीमेतां गतिमाहुर्मनीषिणः॥"

इति च देवसार्ष्टिव्यतिरेकेण भूताप्ययं दर्शयति भूतान्यप्येति पञ्च वै। भूतान्यत्येतीति पाठं ये कुर्वन्ति तेषां
५ वेदविषये परिच्छिन्नबुद्धित्वाददोषः।

न चार्थवादत्वमध्यायस्य ब्रह्मान्तकर्मविपाकार्थस्य तद्व्यतिरिक्तात्मज्ञानार्थस्य च कर्मकाण्डोपनिषद्भ्यां तुल्यार्थत्वदर्शनात्। विहिताकरणप्रतिषिद्धकर्मणां च स्थावरश्वसूकरादिफलदर्शनात्। वान्ताश्यादिप्रेतदर्शनाच्च।

न च श्रुतिस्मृतिविहितप्रतिषिद्धव्यतिरेकेण विहितानि वा प्रतिषिद्धानि वा कर्माणि केनचिदवगन्तुं शक्यन्ते।

सममिति। कथं पुनः सम्यग्ज्ञानवत्यात्मयाजिशब्द इत्याशङ्क्य पूर्वोक्तं स्मारयति—आत्मेति। किमीतीह भूतपूर्वगति-
१० राश्रितेति तत्राऽऽह—ज्ञानयुक्तानामिति। ऐहिकैरामुष्मिकैर्वा कर्मभिः शुद्धबुद्धेः श्रवणादिवशादैक्यज्ञानं मुक्तिफलमुदेति। कर्म तु विद्यासंयुक्तमपि संसारफलमेवेति भावः।

तत्रैव हेत्वन्तरमाह—किंचेति। विद्यायुक्तमपि कर्म बन्धायैवेत्यत्र न केवलमुक्तमेव कारणं किंत्वन्यच्च तदुपपादकमस्तीत्यर्थः। तदेव दर्शयति—ब्रह्मेति। सात्त्विकी सत्त्वगुणप्रसूतज्ञानसमुच्चितकर्मफलभूतामिति यावत्। अत्र हि विद्यायुक्तमपि कर्म संसारफलमेवेति सूच्यते।

१५ "एष सर्वः समुद्दिष्टस्त्रिप्रकारस्य कर्मणः"। "त्रिविधस्त्रिविधः कर्मसंसारः सार्वभौतिकः"॥

इत्युपसंहारादिति चकारार्थः। किंच—

"प्रवृत्तं कर्म संसेव्य देवानामेति साष्टिताम्"।

इति कर्मफलभूतदेवतासदृशैश्वर्यप्राप्तिमुक्त्वा तदतिरेकेण—

"निवृत्तं सेवमानस्तु भूतान्यप्येति पञ्च वै"।

२० इति भूतेष्वप्ययवचनान्न समुच्चयस्य मुक्तिफलतेत्याह—देवसार्ष्टीति।

"निवृत्तं सेवमानस्तु भूतान्यत्येति पञ्च वै"।

इति पाठान्मुक्तिरेव समुच्चयानुष्ठानाद्विवक्षितेति चेन्नेत्याह—भूतानीति। ज्ञानमेव मुक्तिहेतुरिति प्रतिपादकोपनिषद्विरोधान्नायं पाठः साधीयानित्यर्थः।

ननु विग्रहवती देवतैव नास्ति मन्त्रमयी हि सा देवताशब्दप्रत्ययालम्बनमतो ब्रह्मा विश्वसृज इत्यादेरर्थवाद-
२५ त्वान्न तद्बलेन नित्यकर्मणा मुक्तिसाधत्वं निराकर्तुं शक्यमत आह—न चेति। ज्ञानार्थस्य सपश्यन्नात्मयाजीत्यादेरिति शेषः। किंच—

"अकुर्वन्विहितं कर्म निन्दितं च समाचरन्। प्रसज्जंश्चेन्द्रियार्थेषु नरः पतनमृच्छति॥
शरीरजैः कर्मदोषैर्याति स्थावरतां नरः। वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम्॥
श्वसूकरखरोष्ट्राणां गोजाविमृगपक्षिणाम्। चण्डालपुल्कसानां च ब्रह्महा योनिमृच्छति"॥

३० इत्यादिवाक्यैः प्रतिपादितफलानां प्रत्यक्षेणापि दर्शनाद्यथा तत्र नाभूतार्थवादत्वं तथा यथोक्ताध्यायस्यापि नाभूतार्थवादतेत्याह—विहितेति। किंच बङ्गादिदेशे छर्दिताश्यादिप्रेतानां प्रत्यक्षत्वादध्ययनरहितानामपि स्त्रीशूद्रादीनां वेदोच्चारणदर्शनेन ब्रह्मग्रहसद्भावावगमाच्च न ब्रह्मादिवाक्यस्यार्थवादतेत्याह—वान्तेति।

ननु स्थावरादीनां श्रौतस्मार्तकर्मफलत्वाभावान्न तद्दर्शनेन वचनानां भूतार्थत्वं शक्यं कल्पयितुमत आह—न चेति। सेवादिदृष्टकारणसाम्येऽपि फलवैषम्योपलम्भादवश्यमतीन्द्रियं कारणं वाच्यम्। न च तत्र श्रुतिस्मृती
३५ विहायान्यन्मानमस्ति। तथा च श्रौतस्मार्तकर्मकृतान्येव स्थावरादीनि फलानीत्यर्थः। सन्निहितासन्निहितेषु स्थावरादिषु

१ ब्रह्मा चतुर्मुखः, विश्वसृजः कश्यपादयः, महान् महत्तत्त्वाभिमानी देवः, तथा अव्यक्ताभिमानी, धर्मः, यमः भूताप्ययः अव्यक्तपदेनोक्तः।

येषामकरणादनुष्ठानाच्च प्रेतश्वसूकरस्थावरादीनि कर्मफलानि प्रत्यक्षानुमानाभ्यामुपलभ्यन्ते । न चैषामकर्मफलत्वं केनचिदभ्युपगम्यते । तस्माद्विहिताकरणप्रतिषिद्धसेवानां यथैते कर्मविपाकाः प्रेततिर्यक्स्थावरादयस्तथोत्कृष्टेष्वपि ब्रह्मान्तेषु कर्मविपाकत्वं वेदितव्यम् । तस्मात् "स आत्मनो वपामुदखिदत्" "सोऽरोदीदि"त्यादिवन्नाभूतार्थवादत्वम् ।

तत्राप्यभूतार्थवादत्वं मा भूदिति चेत् । भवत्वेवम् । न चैतावताऽस्य न्यायस्य बाधो भवति । न चास्मत्पक्षो वा दुष्यति । न च "ब्रह्मा विश्वसृज" इत्यादीनां काम्यकर्मफलत्वं शक्यं वक्तुम् । तेषां देवसार्ष्टितायाः फलस्योक्तत्वात् । तस्मात्साभिसंधीनां नित्यानां कर्मणां सर्वमेधाश्वमेधादीनां च ब्रह्मत्वादीनि फलानि । ५

येषां पुनर्नित्यानि निरभिसंधीन्यात्मसंस्कारार्थानि तेषां ज्ञानोत्पत्त्यर्थानि तानि । "ब्राह्मीयं क्रियते तनु." इति स्मरणात् । तेषामारादुपकारकत्वान्मोक्षसाधनान्यपि कर्माणि भवन्तीति न विरुध्यते । यथा चायमर्थः षष्ठे प्रत्यक्षानुमानयोर्यथायोगं प्रवृत्तिरुन्नेया । स्थावराणां जीवशून्यत्वादकर्मफलत्वमिति केचित्तान्प्रत्याह—न चैषामिति । अस्मादादिवदेव वृक्षादीनां वृद्ध्यादिदर्शनात्सजीवत्वप्रसिद्धेः "तस्मात्पश्यन्ति पादपा" इत्यादिप्रयोगाच्च तेषां कर्मफलत्वसिद्धिरित्यर्थः । स्थावरादीना कर्मफलत्वे सिद्धे फलितमाह—तस्मादिति । ब्रह्मादीनां पुण्यकर्मफलत्वेऽपि प्रकृते किं स्यात्तदाह—तस्मादिति । १०

कर्मविपाकप्रकरणस्याभूतार्थवादत्वाभावे दृष्टान्तेऽपि तन्न स्यादिति शङ्कते—तत्रापीति । अङ्गीकरोति—भवत्विति । कथं तर्हि वैधर्म्यदृष्टान्तसिद्धिरत आह—न चेति । वैधर्म्यदृष्टान्ताभावमात्रेण कर्मविपाकाध्यायस्य नाभूतार्थवादतेत्यस्य न्यायस्य नैव बाधः साधर्म्यदृष्टान्तादपि तत्सिद्धेरित्यर्थः । ननु 'प्रजापतिरात्मनो वपामुदखिदत्' इत्यादीनामभूतार्थवादत्वाभावे कथमर्थवादाधिकरणं घटिष्यते तत्राऽऽह—न चेति । तदघटनायामपि नास्मत्पक्षक्षतिस्तवैव तदभूतार्थवादत्व त्यजतस्तद्विरोधादित्यर्थः । ननु कर्मविपाकप्रकरणस्यार्थवादत्वाभावेऽपि ब्रह्मादीनां काम्यकर्मफलत्वान्न ज्ञानसंयुक्तनित्यकर्मफलत्व ततो मोक्ष एव तत्फलमित्यत आह—न चेति । तेषां काम्यानां कर्मणामिति यावत् । देवसार्ष्टिताया देवैरिन्द्रादिभिः समानैश्वर्यप्राप्तेरित्यर्थः । उक्तत्वात् 'प्रवृत्तं कर्म संसेव्य देवानामेति सार्ष्टिताम्' इत्यत्रेति शेषः । ननु विद्यासंयुक्तानां नित्यानां कर्मणां फलं ब्रह्मादिभावश्चेत्कथं तानि ज्ञानोत्पत्त्यर्थान्यास्थीयन्ते तत्राऽऽह—तस्मादिति । कर्मणां मुक्तिफलत्वाभावस्तच्छब्दार्थः । साभिसंधीनां देवताभावे फलेऽनुरागवतामिति यावत् । १५ २०

---

१ सर्वमेधः ( शत० ब्रा० १३-७-९ , दशदिनसाध्यः सोमयागः सर्वेषु भूतेषु चात्मनं हुत्वा सर्वाणि भूतानि च आत्मनि सर्वश्रैष्ठ्यमाप्नोतीति विहितः । अश्वमेधः अश्वपशुकः संराजेन कर्तव्यः तत्फलं ब्रह्मपदप्राप्तिः ।

२. ब्रह्मत्वादिकं न काम्यकर्मफलं अपि तूपासनसंयुक्तनित्यकर्मफलमित्यर्थः । २५

३. साभिसन्धीना देवताभावे फले स्पृहावता; निरभिसन्धीनां तु ज्ञानद्वारा मोक्षफलम् ।

४. ब्राह्मीय—महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः—इति मनुः महायज्ञः वैश्वदेवः पञ्च वा एते महायज्ञा इत्युक्ताः ब्राह्मी ब्रह्मज्ञानार्हा इत्यर्थः ।

५. आरादुपकारकत्वं दूरे स्थित्वा उपकारकं चित्तशुद्धिवैराग्यश्रवणादिद्वारेत्यर्थः ।

६ स्थावराणामपि जीवाधिष्ठानत्वं छेदे सति पुनरुद्भवः प्राणवत्त्वं गमयति । तेन जीवं चेति न्यायदर्शने । छान्दोग्यषष्ठे च 'यदेकां शाखां जीवो जहाति अथ सा शुष्यति' इति वृक्षस्य सजीवत्वमुच्यते । शान्तिपर्वणि च तस्मात्पश्यन्ति पादपाः तस्माच्छृण्वन्ति पादपाः इत्युक्तं चेत्यर्थं. । ३०

७ दर्शनादिति—न केवलं शास्त्रोक्तं फलं प्रत्यक्षमपि दृश्यते ।

८. कर्मविपाकाध्याय. भूतार्थवाद एव न वपोत्खेदवाक्यवत् असदर्थवाद इत्यर्थः ।

९ दृष्टान्तेऽपि—वपोत्खेदवाक्येऽपि भूतार्थवादत्वमस्तु इति चेत् ।

१०. भवत्वित्यगीकारे । वपोत्खेदवाक्यं वैधर्म्यदृष्टान्तः यथा तद्वाक्यं अभूतार्थवाद. कर्मविपाको न तथा किं तु भूतार्थवादः इत्यर्थः । भवतु नाम—वपोत्खेदोऽपि भूतार्थः । तावता न्यायभंगो न कर्मविपाकाध्यायः भूतार्थ इति साधर्म्यदृष्टान्तेन ब्रह्मराक्षसादिपीडितानामज्ञानामपि वेदोच्चारणदर्शनात् सिध्यतीत्यर्थः । ३५

११. अर्थवादाधिकरणे—तदुक्त तत्रैव असद्वृत्तान्तान्वाख्यानं वपोत्खेदवाक्यं स्तुत्यर्थेन प्रशंसाया गम्यमानत्वादिति भाष्यम् ।

जनकाख्यायिकासमाप्तौ वक्ष्यामः। यत्तु विषदध्यादिवदित्युक्तं तत्र प्रत्यक्षानुमानविषयत्वाददविरोधः। यस्त्वत्यन्तशब्दगम्योऽर्थस्तत्र वाक्यस्याभावे तदर्थप्रतिपादकस्य न शक्यं कल्पयितुं विषदध्यादिसाधर्म्यम्।

न च प्रमाणान्तरविरुद्धार्थविषये श्रुतेः प्रामाण्यं कल्प्यते यथा शीतोऽग्निः क्लेदयतीति। श्रुते तु तादर्थ्ये वाक्यस्य प्रमाणान्तरस्याऽऽभासत्वम्। यथा खद्योतोऽग्निरिति तलमलिनमन्तरिक्षमिति बालानां यत्प्रत्यक्षमपि ५ तद्विषयप्रमाणान्तरस्य यथार्थत्वे निश्चिते निश्चितार्थमपि बालप्रत्यक्षमाभासीभवति। तस्माद्वेदप्रामाण्यस्याव्यभिचारात्तादर्थ्ये सति वाक्यस्य तथात्वं स्यात्। न तु पुरुषमतिकौशलम्। नहि पुरुषमतिकौशलात्सविता रूपं न प्रकाशयति। तथा वेदवाक्यान्यपि नान्यार्थानि भवन्ति। तस्मान्न मोक्षार्थानि कर्माणीति सिद्धम्। अतः कर्मफलानां संसारत्वप्रदर्शनायैव ब्राह्मणमारभ्यते।

अथानन्तरमुपरते जारत्कारवे भुज्युरिति नामतो लह्यस्यापत्यं लाह्यस्तदपत्यं लाह्यायनिः पप्रच्छ १० याज्ञवल्क्येति होवाच। आदावुक्तमश्वमेधदर्शनं समष्टिव्यष्टिफलश्चाश्वमेधक्रतुः। ज्ञानसमुच्चितो वा केवलज्ञान-

नित्यानि कर्माणि श्रौतानि स्मार्तानि चाग्निहोत्रसंध्योपासनप्रभृतीनि निरभिसंधीनि फलाभिलाषविकलानि परमेश्वरार्पणबुद्ध्या क्रियमाणानि। आत्मशब्दो मनोविषयः। कर्मणां चित्तशुद्धिद्वारा ज्ञानोत्पत्त्यर्थत्वे प्रमाणमाह—ब्राह्मेति। कथं तर्हि कर्मणा मोक्षसाधनत्वं केचिदाचक्षते तत्राऽऽह—तेषामिति। संस्कृतबुद्धीनामिति यावत्। कर्मणां परम्परया मोक्षसाधनत्वं कथं सिद्धवदुच्यते तत्राऽऽह—यथा चेति। अयमर्थस्तथेति शेषः। निरस्तमप्यधिक- १५ विवक्षया पुनरनुवदति—यस्त्विति। विषादेर्मन्त्रादिसहितस्य जीवनादिहेतुत्वं प्रत्यक्षादिसिद्धमतो दृष्टान्ते कार्यारम्भकत्वे विरोधो नास्तीत्याह—तत्रेति। कर्मणो विद्यासंयुक्तस्य कार्यान्तरारम्भकत्वलक्षणोऽर्थः शब्देनैव गम्यते। न च तत्र मानान्तरमस्ति। न च समुच्चितस्य कर्मणो मोक्षारम्भकत्वप्रतिपादकं वाक्यमुपलभ्यते तदभावे कर्मणि विद्यायुक्तेऽपि विषदध्यादिसाधर्म्यं कल्पयितुं न शक्यमित्याह—यस्त्विति। कर्मसाध्यत्वे च मोक्षस्यानित्यता स्यादिति भावः।

'अपाम सोमममृता अभूम' इत्यादिश्रुतेर्मोक्षस्य कर्मसाध्यस्यापि नित्यत्वमिति चेन्नेत्याह—न चेति। यत्कृतकं २० तदनित्यमित्यनुमानानुगृहीतं 'तद्यथेहे'त्यादिवाक्यं तद्विरोधेनार्थवादश्रुतेः स्वार्थेऽप्रामाण्यमित्यर्थः। प्रमाणान्तरविरुद्धेऽर्थे प्रामाण्यं श्रुतेर्नोच्यते चेदद्वैतश्रुतेरपि कथं प्रत्यक्षादिविरुद्धे स्वार्थे प्रामाण्यमित्याशङ्क्याऽऽह—श्रुते त्विति। तत्त्वमस्यादिवाक्यस्य षड्विधतात्पर्यलिङ्गैः सदद्वैतपरत्वे निर्धारिते सद्भेदविषयस्य प्रत्यक्षादेराभासत्वं भवतीत्यर्थः। तदेव दृष्टान्तेन साधयति—यथेत्यादिना। यदविवेकिनां यथोक्तं प्रत्यक्षं तद्यद्यपि प्रथमभावित्वेन प्रबलं निश्चितार्थं च तथाऽपि तस्मिन्नेवाऽऽकाशादौ विषये प्रवृत्तस्याऽऽप्तवाक्यादेर्मानान्तरस्य यथार्थत्वे सति तद्विरुद्धं पूर्वोक्तमविवेकि- २५ प्रत्यक्षमप्याभासीभवति। तथेदं द्वैतविषयं प्रत्यक्षाद्यद्वैतागमविरोधे भवत्याभास इत्यर्थः। ननु तात्पर्यं नाम पुरुषस्य मनोधर्मस्तद्वशाच्चेदद्वैतश्रुतेर्यथार्थत्वं तर्हि प्रतिपुरुषमन्यथैव तात्पर्यदर्शनात्तद्वशादन्यथैव श्रुत्यर्थः स्यादित्याशङ्क्य दार्ष्टान्तिकं निगमयन्नुत्तरमाह—तस्मादित्यादिना। तादर्थ्यमर्थपरत्वं तथात्वं याथार्थ्यं शब्दधर्मस्तात्पर्यं तच्च षड्विधलिङ्गगम्यं तथा च शब्दस्य पुरुषाभिप्रायवशान्नान्यथार्थत्वमित्यर्थः। उक्तमर्थं दृष्टान्तेन स्पष्टयति—नहीति। विचारार्थमुपसंहरति—तस्मादिति। विद्यासंयुक्तस्यापि कर्मणो मोक्षारम्भकत्वासंभवस्तच्छब्दार्थः। मा भूत्कर्मणा ३० मोक्षार्थत्वं किं तावतेत्याशङ्क्य ब्राह्मणारम्भं निगमयति—अत इति।

ब्राह्मणारम्भमेवं प्रतिपाद्य तदक्षराणि व्याकरोति—अथेति। याज्ञवल्क्यमभिमुखीकृत्य भुज्युः स्वस्य पूर्वनिर्वृत्तां कथां कथयंस्तामवतारयितुमश्वमेधस्वरूपं तत्फलं च विभज्य दर्शयति—आदाविति। क्रतुरुक्त इति पूर्वेण

१ विषं मन्त्रसंयुक्तं पुष्टिं ददाति दधि शर्करा युक्तं च तथा। तत्र दृष्टान्ते न दोषः ज्ञानयुक्तकर्मणस्तु न मोक्षफलम्। मोक्षः अज्ञाननिवृत्तिः सा च ज्ञानैकसाध्येति नियमात्। यत्तु अत्यन्तशब्दगम्यमोक्षस्य ज्ञानगम्यत्वं तत्र न ३५ दृष्टान्तोपयोगः।

२. श्रुते तादर्थ्ये जीवब्रह्मैक्यप्रपञ्चमिथ्यात्वादौ प्रत्यक्षस्यैव बाधः।

३. तद्यथेहेति कर्मचितो लोकः क्षीयते एवमेवामुत्रपुण्यचितो लोकः क्षीयते इति शेषः।

४. सद्भेदः घटस्सन् पटस्सन् इत्यादिप्रतीतेः सद्भेदप्राप्तिः तस्य श्रुत्या बाधः।

संपादितो वा सर्वकर्मणां परा काष्ठा। "भ्रूणहत्याऽश्वमेधाभ्यां न परं पुण्यपापयो"रिति हि स्मरन्ति। तेन हि समष्टिं व्यष्टीश्च प्राप्नोति। तत्र व्यष्टयो निर्दिष्टा अन्तरण्डविषया अश्वमेधयागफलभूताः। मृत्युरस्याऽऽत्मा भवत्येतासां देवतानामेको भवतीत्युक्तम्।

मृत्युश्चाशनायालक्षणो बुद्ध्यात्मा समष्टिः प्रथमजो वायुः सूत्रं सत्यं हिरण्यगर्भः। तस्य व्याकृतो विषयो यदात्मकं सर्वं द्वैतैकत्वं यः सर्वभूतान्तरात्मा लिङ्गममूर्तरसो यदाश्रितानि सर्वभूतकर्माणि यः कर्मणां कर्मसम्बद्धानां ५ च विज्ञानानां परा गतिः परं फलम्। तस्य क्रियाऽगोचरः कियती व्याप्तिः सर्वतः परिमण्डलीभूता सा वक्तव्या। तस्यामुक्तायां सर्वः संसारो बन्धगोचर उक्तो भवति। तस्य च समष्टिव्यष्ट्यात्मदर्शनस्यालौकिकत्वप्रदर्शनार्थ-माख्यायिकामात्मनो वृत्तां प्रकुरुते। तेन च प्रतिवादिबुद्धिं व्यामोहयिष्यामीति मन्यते।

मद्रेषु मद्रा नाम जनपदास्तेषु चरका अध्ययनार्थं व्रतचरणाच्चरका अध्वर्यवो वा पर्यव्रजाम पर्यटित-वन्तस्ते पतञ्चलस्य ते वयं पर्यटन्तः पतञ्चलस्य नामतः काप्यस्य कपिगोत्रस्य गृहानैम गतवन्तः। तस्याऽऽसीद् १० दुहिता गन्धर्वगृहीता गन्धर्वेणामानुषेण सत्त्वेन केनचिदाविष्टा गन्धर्वो वा धिष्ण्योऽग्निर्ऋत्विग्देवता विशिष्टविज्ञान-त्वादवसीयते। नहि सत्त्वमात्रस्येदृशं विज्ञानमुपपद्यते। तं सर्वे वयं परिवारिताः सन्तोऽपृच्छाम कोऽसीति कस्त्वमसि किंनामा किंसतत्त्वः। सोऽब्रवीद्गन्धर्वः सुधन्वा नामत आङ्गिरसो गोत्रतः। त यदा यस्मिन्काले

सबन्धः। क्रतोर्द्वैविध्यमाह—ज्ञानेति। अश्वमेधस्य द्विधा विभक्तस्य सर्वकर्मोत्कर्षमुद्गिरति—सर्वकर्मणामिति। तस्य पुण्यश्रेष्ठत्वे मानमाह—भ्रूणहत्येति। समष्टिव्यष्टिफलत्वेऽयुक्त स्पष्टयति—तेनेति। अश्वमेधेन सहकारिकामना- १५ भेदेन समष्टिं समनुगतरूपां व्यष्टीश्च व्यावृत्तरूपा देवताः प्राप्नोतीत्यर्थः। काः पुनर्व्यष्टयो विवक्ष्यन्ते तत्राऽऽह—तत्रेति। अग्निरादित्यो वायुरित्याद्या व्यष्टयो देवताः सोऽग्निरभवदित्यादावण्डान्तर्वर्तिन्योऽश्वमेधफलभूता दर्शिता इत्यर्थः। का तर्हि समष्टिर्देवतेत्युक्ते तत्रैवोक्तं स्मारयति—मृत्युरिति।

तामेव समष्टिरूपा देवतां प्रपञ्चयितुमिदं ब्राह्मणमिति वक्तु पातनिकां करोति—मृत्युश्चेति। प्राणात्मकबुद्धि-धर्मोऽशनाया कथं मृत्योर्लक्षणं तत्राऽऽह—बुद्ध्यात्मेति। तर्हि बुद्धेर्व्यष्टित्वान्मृत्युरपि तथा स्यादित्याशङ्क्याऽऽह— २० समष्टिरिति। प्रागेव व्यष्ट्युत्पत्तेरुत्पन्नत्वेन समष्टित्वं साधयति—प्रथमज इति। सर्वाश्रयत्वं दर्शयति—सूत्रमिति। तत्र वायुर्वै गौतमेत्यादि वाक्य प्रमाणमिति सूचयति—वायुरिति। तथाऽपि कथ प्रथमजत्वं भूतानां प्रथममुत्पत्तेरित्या-शङ्क्याऽऽह—सत्यमिति। हिरण्यगर्भस्योक्तलक्षणत्वेऽपि किमायातं मृत्योरित्याशङ्क्याऽऽह—हिरण्यगर्भ इति। जगदेव समष्टिव्यष्टिरूपं न सूत्रमित्याशङ्क्याऽऽह—यदात्मकमिति। द्वैतं व्यष्टिरूपमेकत्वं समष्टिरूपं तत्सर्वं यदात्मकं तस्येति सबन्धः। तस्योक्तप्रमाणत्व प्रकटयति—यः सर्वेति। विज्ञानात्मान व्यावर्तयति—लिङ्गमिति। 'त्यस्य ह्येष रसः' २५ इति श्रुतिमनुसृत्याऽऽह—अमूर्तेति। तस्य साधनाश्रयत्वं दर्शयति—यदाश्रितानीति। तस्यैव फलाश्रयत्वमाह—यः कर्मणामिति। परा गतिरित्यस्यैव व्याख्यान परं फलमिति। एव भूमिकामारचय्यानन्तरब्राह्मणमवतारयति—तस्येति। प्रश्नमेव प्रकटति—कियतीति। सर्वतः परितो मण्डलभावमासाद्य स्थितेति यावत्। ननु किमिति सा वक्तव्या तस्यामुक्तायापि वक्तव्यसंसारावशेषादाकाङ्क्षाविश्रान्त्यभावादत आह—तस्यामिति। इयान्बन्धो नाधिको न्यूनो वेत्यन्यव्यवच्छेदेन बन्धपरिमाणपरिच्छेदार्थं कर्मफलव्याप्तिरत्रोच्यते तत्परिच्छेदश्च वैराग्यद्वारा मुक्तिहेतुरिति ३० भावः ब्राह्मणस्यैव प्रवृत्तावपि किमिति भुज्युः स्वस्य पूर्वनिर्वृत्तां कथामाहेत्याशङ्क्याऽऽह—तस्य चेति। समष्टि-व्यष्ट्यात्मदर्शनस्यालौकिकत्वप्रदर्शनेन वा किं स्यात्तदाह—तेन चेति। इति मन्यते भुज्युरिति शेषः। जल्पे परपराज-येनाऽऽत्मजयस्येष्टत्वादित्यर्थः।

धिष्ण्यत्वमग्नेरुपास्यत्वम्। 'अग्निर्वै देवानां होता' इति श्रुतिमाश्रित्याह—ऋत्विगिति। यथोक्तगन्धर्व-शब्दार्थसंग्रहे लिङ्गमाह—विशिष्टेति। तस्यान्यथासिद्धिं दूषयति—नहीति। अथैनमित्यादेरर्थं विवृणोति—भुवनेति। ३५

१. समष्टि हिरण्यगर्भ व्यष्टीः अग्न्यादिदेवताः।

२. समष्टि. लिङ्गशरीरसमुदाय. व्यष्टिः तद्विशेषाः उभय हिरण्यगर्भ. प्रत्येकस्य तच्छरीरान्तर्भावात् तदात्मदर्शनं तस्याहमित्युपासनम्।

स होवाचोवाच वै सोऽगच्छन्वै ते तद्यत्राश्वमेधयाजिनो गच्छन्तीति क्व न्वश्वमेधयाजिनो गच्छन्तीति द्वात्रिँशतं वै देवरथाह्न्यान्ययं लोकस्तँ समन्तं पृथिवी द्विस्तावत्पर्येति ताँ समन्तं पृथिवीं द्विस्तावत्समुद्रः पर्येति तद्यावती क्षुरस्य धारा यावद्वा मक्षिकायाः पत्रं तावानन्तरेणाकाशस्तानिन्द्रः सुपर्णो भूत्वा वायवे प्रायच्छत्तान्वायुरात्मनि धित्वा
५ तत्रागमयद्यत्राश्वमेधयाजिनोऽभवन्नित्येवमिव वै स वायुमेव प्रशशँस तस्माद्वायुरेव व्यष्टिर्वायुः समष्टिरप पुनर्मृत्युं जयति य एवं वेद ततो ह भुज्युर्लाह्यायनिरुपरराम ॥२॥

इति बृहदारण्यकोपनिषदि तृतीयाध्याये तृतीयं ब्राह्मणम् ॥३॥

लोकानामन्तान्पर्यवसानान्यपृच्छामार्थेनं गन्धर्वमब्रूम भुवनकोशपरिमाणज्ञानाय प्रवृत्तेषु सर्वेष्वात्मानं श्लाघयन्तः पृष्टवन्तो वयं; कथं ? क्व पारिक्षिता अभवन्निति । स च गन्धर्वः सर्वमस्मभ्यमब्रवीत् । तेन दिव्येभ्यो मया लब्धं
१० ज्ञानं तत्तव नास्त्यतो निगृहीतोऽसीत्यभिप्रायः सोऽहं विद्यासम्पन्नो लब्धागमो गन्धर्वात्त्वा त्वां पृच्छामि याज्ञवल्क्य क्व पारिक्षिता अभवंस्तत्त्वं किं जानासि हे याज्ञवल्क्य कथय पृच्छामि क्व पारिक्षिता अभवन्निति ॥१॥

स होवाच याज्ञवल्क्य उवाच वै सः । वैशब्दः स्मरणार्थः । उवाच वै स गन्धर्वस्तुभ्यम् । अगच्छन्वै ते पारिक्षितास्तत्तत्र क्व ? यत्र यस्मिन्नश्वमेधयाजिनो गच्छन्तीति । निर्णीते प्रश्न आह—क्व नु कस्मिन्नश्वमेधयाजिनो गच्छन्तीति । तेषां गतिविवक्षया भुवनकोशपरिमाणमाह—द्वात्रिंशतं वै द्वे अधिके त्रिंशद्द्वात्रिंशतं वै देवरथाह्न्यानि
१५ देव आदित्यस्तस्य रथो देवरथस्तस्य रथस्य गत्याऽह्ना यावत्परिच्छिद्यते देशपरिमाण तद्देवरथाह्न्यं तद्द्वात्रिंशद्गुणितं देवरथाह्न्यानि तावत्परिमाणोऽयं लोको लोकालोकगिरिणा परिक्षिप्तः । यत्र वैराजं शरीरं यत्र च कर्मफलोपभोगः प्राणिनां स एष लोक एतावाँल्लोकोऽतः परमलोकस्तं लोकं समन्तं समन्ततो लोकविस्ताराद्द्विगुणपरिमाणविस्तारेण परिमाणेन तं लोकं परिक्षिप्ता पर्येति पृथिवी । तां पृथिवीं तथैव समन्तं द्विस्तावद्द्विगुणेन परिमाणेन समुद्रः पर्येति यं घनोदमाचक्षते पौराणिकाः ।

२० भवत्वेवं गन्धर्वं प्रति भवत. प्रश्नस्तथाऽपि किमायातं तदाह—स चेति । तेन गन्धर्ववचनेनेति यावत् । दिव्येभ्यो गन्धर्वेभ्य. सकाशादित्येतत् । एतज्ज्ञानाभावे त्वेैज्ञानमप्रतिभा ब्रह्मिष्ठत्वप्रतिज्ञाहानिश्चेत्याह—अत इति । प्रष्टुरभिप्रायमुक्त्वा प्रश्नाक्षराणि व्याचष्टे—सोऽहमिति । प्रथमा तावत्क्व पारिक्षिता अभवन्नित्युक्तिर्गन्धर्वप्रश्नार्था । द्वितीया तदनुरूपप्रतिवचनार्था । यो हि क्व पारिक्षिता अभवन्निति प्रश्नो गन्धर्वं प्रति कृतस्तस्य प्रत्युक्तिं सर्वां सोऽस्मभ्यमब्रवीदिति तत्र विवक्ष्यते तृतीया तु मुनिं प्रति प्रश्नार्थेति विभागः ॥१॥

२५ अज्ञानादिनिग्रहं परिहरन्नुत्तरमाह— स होवाचेति । स्मरणार्थो गन्धर्वाल्लब्धस्य ज्ञानस्येति शेष. किमुवाचेत्यपेक्षायामाह—अगच्छन्निति । अहोरात्रमादित्यरथगत्या यावान्पन्था मितस्तावान्देशो द्वात्रिंशद्गुणितस्तत्किरणव्याप्तः । स च चन्द्ररश्मिव्याप्तेन देशेन साकं पृथिवीत्युच्यते ।

'रविचन्द्रमसोर्यावन्मयूखैरवभास्यते । ससमुद्रसरिच्छैला तावती पृथिवी स्मृता' ॥

इति स्मृतेरित्याह—द्वात्रिंशतमित्यादिना । अय लोक इत्यस्यार्थमाह—तावदिति । तत्र लोकभागं विभजते—यत्रेति ।
३० उक्त लोकमनूद्यावशिष्टस्यालोकत्वमाह—एतावानिति । तमिति प्रतीकमादाय व्याचष्टे—लोकमित्यादिना । अन्वय दर्शयितु तं लोकमिति पुनरुक्तिः । तत्र पौराणिकसमतिमाह—यं घनोदमिति । उक्तं हि—

'अण्डस्यास्य समन्तात्तु सन्निविष्टोऽमृतोदधिः । समन्ताद्घनतोयेन धार्यमाणः स तिष्ठति' ॥ इति ।

---

१. पारिक्षिताः अश्वमेधयाजिनः ।

२ देवरथाह्न्यम् आदित्यरथः अहनि यावद्दूरं गच्छति तावत् तस्य द्वात्रिंशद्गुणितमित्यर्थः ।

३५ ३. अज्ञानम् अप्रतिभा प्रतिज्ञाहानिः इति त्रयं निग्रहस्थानं । अज्ञानं वादिना त्रिरभिहितस्य परिषदाविज्ञातस्य वाक्यार्थस्य अनवबोधः । अप्रतिभा परोक्तं बुद्ध्वापि उत्तरस्यास्फूर्ति । प्रतिज्ञाहानिः प्रतिज्ञातार्थस्य परित्यागो वा तद्विरुद्धार्थाभ्युपगमो वा ।

अथ तृतीयाध्यायस्य चतुर्थं ब्राह्मणम्

अथ हैनमुषस्तश्चाक्रायणः पप्रच्छ याज्ञवल्क्येति होवाच यत्साक्षादपरोक्षाद्ब्रह्म
य आत्मा सर्वान्तरस्तं मे व्याचक्ष्वेत्येष त आत्मा सर्वान्तरः कतमो
याज्ञवल्क्य सर्वान्तरो यः प्राणेन प्राणिति स त आत्मा सर्वान्तरो
योऽपानेनापानीति स त आत्मा सर्वान्तरो यो व्यानेन व्यानीति स त आत्मा ५
सर्वान्तरो य उदानेनोदानिति स त आत्मा सर्वान्तर एष त आत्मा सर्वान्तरः ॥१॥

तत्राण्डकपालयोर्विवरपरिमाणमुच्यते। येन विवरेण मार्गेण बहिर्निर्गच्छन्तो व्याप्नुवन्त्यश्वमेधयाजिनः। तत्र यावती यावत्परिमाण क्षुरस्य धाराग्रं यावद्वा सौक्ष्म्येण युक्तं मक्षिकायाः पत्रं तावांस्तावत्परिमाणोऽन्तरेण मध्येऽण्डकपालयोराकाशश्छिद्रं तेनाऽऽकाशेनेत्येतत्। तान्पारिक्षितानश्वमेधयाजिनः प्राप्तानिन्द्रः परमेश्वरो योऽश्वमेधेऽग्निश्चित्तः सुपर्णो यद्विषयं दर्शनमुक्तं तस्य प्राची दिक्शिर इत्यादिना सुपर्णः पक्षी भूत्वा पक्षपुच्छाद्यात्मकः १० सुपर्णो भूत्वा वायवे प्रायच्छन्मूर्तत्वान्नास्त्यात्मनो गतिस्तत्रेति। तान्पारिक्षितान्वायुरात्मनि धित्वा स्थापयित्वा स्वात्मभूतान्कृत्वा तत्र तस्मिन्नगमयत्। क। यत्र पूर्वेऽतिक्रान्ताः पारिक्षिता अश्वमेधयाजिनोऽभवन्निति। एवमिव वा एवमेव स गन्धर्वो वायुमेव प्रशशंस पारिक्षितानां गतिम्। समाप्ताऽऽख्यायिका। आख्यायिकानिर्वृत्तं त्वर्थमाख्यायिकातोऽपसृत्य श्रुतिः स्वमुखेनैवाऽऽचष्टेऽस्मभ्यम्। यस्माद्वायुः स्थावरजङ्गमानां भूतानामन्तरात्मा बहिश्च स एव तस्मादध्यात्माधिभूताधिदैवभावेन विविधा याऽष्टिर्व्याप्तिः स वायुरेव। तथा समष्टिः केवलेन सूत्रात्मना वायुरेव। १५ एवं वायुमात्मानं समष्टिव्यष्टिरूपात्मकत्वेनोपगच्छति य एवं वेद। तस्य किं फलमित्याह—अप पुनर्मृत्युं जयति सकृन्मृत्वा पुनर्न म्रियते। तत आत्मनः प्रश्ननिर्णयाद्भुज्युर्लाह्यायनिरुपरराम ॥२॥

इति बृहदारण्यकोपनिषद्भाष्ये तृतीयाध्यायस्य तृतीयं ब्राह्मणम् ॥ ३ ॥

अथ हैनमुषस्तश्चाक्रायणः पप्रच्छ। पुण्यपापप्रयुक्तैर्ग्रहातिग्रहैर्गृहीतः पुनः पुनर्ग्रहातिग्रहांस्त्यजन्नुपाददत्संसरतीत्युक्तम्। पुण्यस्य च पर उत्कर्षो व्याख्यातो व्याकृतविषयः समष्टिव्यष्टिरूपो द्वैतैकत्वात्मप्राप्तिः। यस्तु ग्रहाति- २०

तद्यावतीत्यादेस्तात्पर्यमाह—तत्रेति। लोकादिपरिमाणे यथोक्तरीत्या स्थिते सतीति यावत्। कपालविवरस्यानुपयुक्तत्वात्किं तत्परिमाणचिन्तयेत्याशङ्क्याऽऽह—येनेति। व्यवहारभूमिः सप्तम्यर्थः। परमात्मनं व्यावर्तयति—योऽश्वमेध इति। सुपर्णशब्दस्य श्येनसादृश्यमाश्रित्य चित्येऽग्नौ प्रवृत्तिं दर्शयति—यद्विषयमिति। उक्तार्थं पदमनुवदति—सुपर्ण इति। भूत्वेत्यस्यार्थमाह—पक्षेति। ननु चित्योऽग्निरण्डाद्बहिरश्वमेधयाजिनो गृहीत्वा स्वयमेव गच्छतु किमिति तान्वायवे प्रयच्छति तत्राऽऽह—मूर्तत्वादिति। आत्मनश्चित्यस्याग्नेरिति यावत्। तत्रेत्यण्डाद्बाह्यदेशोक्तिः। २५ इति युक्त वायवे प्रदानमिति शेषः। आख्यायिकासमाप्ताविति शब्दः। परितो दुरितं क्षीयते येन स परिक्षिदश्वमेधस्तद्याजिनः पारिक्षितास्तेषां गतिं वायुमिति संबन्धः। मुनिवचने वर्तमाने कथमाख्यायिकासमाप्तिस्तत्राऽऽह—समाप्तेति। वायुप्रशंसाया हेतुमाह—यस्मादिति। किं पुनर्यथोक्तवायुतत्त्वविज्ञानफलं तदाह—एवमिति।

इति बृहदारण्यकोपनिषद्भाष्यटीकायां तृतीयाध्यायस्य तृतीयं भुज्युब्राह्मणम् ॥३॥

ब्राह्मणान्तरमवतारयति—अथेति। तस्यापुनरुक्तमर्थं वक्तुमार्तभागप्रश्ने वृत्तं कीर्तयति—पुण्येति। भुज्यु- ३० प्रश्नान्ते सिद्धमर्थमनुद्रवति—पुण्यस्य चेति। नामरूपाभ्यां व्याकृतं जगद्धिरण्यगर्भात्मकं तद्विषयमुत्कर्षं विशिनष्टि—समष्टीति। कथं यथोक्तोत्कर्षस्य पुण्यकर्मफलत्वं तत्राऽऽह—द्वैतेति। संप्रत्यनन्तरब्राह्मणस्य विषयं दर्शयति—

१ यत् साक्षादपरोक्षाद्ब्रह्म—घटादिकं वृत्त्या घटेन अन्तःकरणसंबन्धे सति घटावच्छिन्नचैतन्यगताज्ञाननिवृत्तौ साक्षिसंबन्धात् प्रकाशते। आत्मा जीवस्तु स्वप्रकाशतया स्वत एवापरोक्ष इत्यर्थः। यत् साक्षादपरोक्षाद्ब्रह्मेति ब्रह्मणः सर्वान्तरात्मत्वोक्त्या च जीवब्रह्मणोरभेदः सूचितः। तस्य कहोलप्रश्नेऽपि करणे पौनरुक्त्य अन्तरेति ३५ सूत्रेण परिह्रियते। अत्र ब्रह्मसूत्रेषु विचारः क्रियते—किमुपस्तकहोलप्रश्नयोः एक एवात्मा निर्दिश्यते उत भिन्नो इति। अन्तराभूतग्रामवत् स्वात्मनः इति सूत्रम् उपस्तकहोलप्रश्नयोः अव्यवहितयाः विचार्यते यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तर इत्युभयत्र प्रश्ने प्रतिवचने च यः प्राणेन प्राणिति इत्युपस्तप्रश्नस्य योऽशनायापिपासे

ग्रहैर्ग्रस्तः संसरति सोऽस्ति वा नास्त्यस्तित्वे च किंलक्षण इत्यात्मन एव विवेकाधिगमायोषस्तप्रश्न आरभ्यते। तस्य च निरुपाधिस्वरूपस्य क्रियाकारकविनिर्मुक्तस्वभावस्याधिगमाद्यथोक्ताद्बन्धनाद्विमुच्यते सप्रयोजकात्। आख्यायिकासंबन्धस्तु प्रसिद्धः।

अथ हैनं प्रकृतं याज्ञवल्क्यमुषस्तो नामतश्चक्रस्यापत्यं चाक्रायणः पप्रच्छ। यद्ब्रह्म साक्षादव्यवहितं केन-
५ चिद्द्रष्टुरपरोक्षादगौणम्। न श्रोत्रब्रह्मादिवत्। किं तत्। य आत्मा। आत्मशब्देन प्रत्यगात्मोच्यते। तत्राऽऽत्म-शब्दस्य प्रसिद्धत्वात्। सर्वस्याभ्यन्तरः सर्वान्तरः यद्यःशब्दाभ्यां प्रसिद्ध आत्मा ब्रह्मेति। तमात्मानं मे मह्यं व्याचक्ष्वेति। विस्पष्टं भृङ्गे गृहीत्वा यथा गां दर्शयति तथाऽऽचक्ष्व सोऽयमित्येवं कथयस्वेत्यर्थः।

एवमुक्तः प्रत्याह याज्ञवल्क्यः—एष ते तवाऽऽत्मा सर्वान्तरः सर्वस्याभ्यन्तरः। सर्वविशेषणोपलक्षणार्थं सर्वान्तरग्रहणम्। यत्साक्षादव्यवहितमपरोक्षादगौणं ब्रह्म बृहत्तममात्मा सर्वस्य सर्वस्याभ्यन्तर एतैर्गुणैः समस्तैरुक्त
१० एषः। कोऽसौ तवाऽऽत्मा। योऽयं कार्यकरणसंघातस्तव येनाऽऽत्मनाऽऽत्मवान्स एष तवात्मा। तव कार्यकरण-संघातस्येत्यर्थः। तत्र पिण्डस्तस्याभ्यन्तरे लिङ्गात्मा करणसंघातस्तृतीयो यश्च संदिह्यमानस्तेषु कतमो ममाऽऽत्मा सर्वान्तरस्त्वया विवक्षित इत्युक्त इतर आह—यः प्राणेन मुखनासिकासंचारिणा प्राणिति प्राणचेष्टां करोति येन प्राणः प्रणीयत इत्यर्थः। स ते तव कार्यकरणसंघातस्याऽऽत्मा विज्ञानमयः। समानमन्यत्। योऽपानेनापानीति। यो व्यानेन व्यानीतीति च्छान्दसं दैर्घ्यम्। सर्वाः कार्यकरणसंघातगताः प्राणनादिचेष्टा दारुयन्त्रस्येव येन क्रियन्ते।
१५ नहि चेतनावदनधिष्ठितस्य दारुयन्त्रस्येव प्राणनादिचेष्टा विद्यन्ते। तस्माद्विज्ञानमयेनाधिष्ठितं विलक्षणेन दारुयन्त्र-वत्प्राणनादिचेष्टां प्रतिपद्यते। तस्मात्सोऽस्ति कार्यकरणसंघातविलक्षणो यश्चेष्टयति ॥१॥

यस्त्विति। माध्यमिकानामन्येषां चाऽऽद्यो विवादः किंलक्षणो देहादीनामन्यतयस्तेभ्यो विलक्षो वेति यावत्। इत्येवं विमृश्याऽऽत्मनो देहादिभ्यो विवेकेनाधिगमायेदं ब्राह्मणमित्याह—इत्यात्मन इति। विवेकाधिगमस्य भेदज्ञानत्वे-नानर्थकरत्वमाशङ्क्य कहोलप्रश्नतात्पर्यं संगृह्णाति—तस्य चेति। ब्राह्मणसंबन्धमुक्त्वाऽऽख्यायिकासंबन्धमाह—
२० आख्यायिकेति। विद्यास्तुत्यर्था सुखावबोधार्था चाऽऽख्यायिकेत्यर्थः। भुज्युप्रश्ननिर्णयानन्तर्यमथशब्दार्थः। संबोधनम-भिमुखीकरणार्थम्। द्रष्टुरव्यवहितमित्युक्ते घटादिवदव्यवधानं गौणमिति शङ्क्येत तन्निराकर्तुमपरोक्षादित्युक्तम्। मुख्यमेव द्रष्टुरव्यवहितं स्वरूपं ब्रह्म। तथा च द्रष्ट्रधीनसिद्धत्वाभावात्स्वतोऽपरोक्षमित्यर्थः। श्रोत्रं ब्रह्म मनो ब्रह्मे-त्यादि यथा गौणं न तथा गौणं द्रष्टुरव्यवहितं ब्रह्माद्वितीयत्वादित्याह—न श्रोत्रेति। उक्तमव्यवधानमाकाङ्क्षाद्वारा-ऽनन्तरवाक्येन साधयति—किं तदित्यादिना। तस्य परिच्छिन्नत्वशङ्कां वारयति—सर्वस्येति। सर्वनामभ्यां
२५ प्रत्यग्ब्रह्मविशेष्यं समर्प्यत इतरैस्तु शब्दैर्विशेषणानीति विभागमभिप्रेत्याऽऽह—यद्य. शब्दाभ्यामिति। इतिरुच्यत इत्यनेन संबध्यते। इतिशब्दो द्वितीय. प्रश्नसमाप्त्यर्थ.। तमेव प्रश्नं विवृणोति—विस्पष्टमिति।

त्वमर्थे वाक्यार्थान्वययोग्ये पृष्टे तत्प्रदर्शनार्थं प्रत्युक्तिमवतारयति—एवमुक्त इति। सर्वान्तर इति विशेषोक्त्या प्रश्नस्य विशेषान्तराणामनास्थामाशङ्क्याऽऽह—सर्वविशेषणेति। एष सर्वान्तर इति भागस्यार्थं विवृणोति—यत्साक्षादिति। एषशब्दार्थं प्रश्नपूर्वकमाह—कोऽसावीति। आत्मशब्दार्थं विवृणोति—योऽयमिति। येनेत्यत्र सशब्दो
३० द्रष्टव्यः। षष्ठ्यर्थं स्पष्टयति—तवेति। प्रश्नान्तरमुत्थाप्य प्रतिवक्ति—तत्रेत्यादिना.। सर्वान्तरस्तवाऽऽत्मेत्युक्ते सतीति यावत्। तृतीयो मातृसाक्षी प्रणीयते प्राणनविशिष्टः क्रियत इति यावत्। कथमेतावता संदेहोऽपाकृत इत्याशङ्क्य विवक्षितमनुमानं वक्तुं व्याप्तिमाह—सर्वा इति। या खल्वचेतनप्रवृत्तिः सा चेतनाधिष्ठानपूर्विका यथा रथादिप्रवृत्ति-रित्यर्थः। येन क्रियन्ते सोऽस्तीति संबन्ध। दृष्टान्तस्य साध्यवैकल्यं परिहरति—न हीति। संप्रत्यनुमानमारचयति—तस्माविति। विमता चेष्टा चेतनाधिष्ठानपूर्विकाऽचेतनप्रवृत्तित्वाद्रथादिचेष्टावदित्यर्थः। प्रतिपद्यते प्राणादीति शेषः।
३५ अनुमानफलमाह—तस्मात्सोऽस्तीति। चेष्टयति कार्यकरणसंघातमिति शेषः ॥१॥

---

शोकं मोहं जरां मृत्युमत्येति इति कहोलस्य तत्र विद्याभेद. अभ्यासात् इति प्राप्तौ उच्यते अन्तराम्नाना-विशेषाद्विद्यैकत्वमेव युक्तं उभयत्र य आत्मा सर्वान्तर इत्युक्तत्वात्। न हि द्वौ सर्वान्तरौ संभवतः इति सिद्धान्तः। अत्रोषस्तब्राह्मणेन शरीरादिव्यतिरिक्तो जीवः परमात्मज्ञानोपायत्वेन सूचित. प्रतिपाद्यस्तु परमात्मा कहोल-प्रश्ने तु तस्यैवात्मनः अशनायाद्यतीतत्वं प्रतिपाद्यते।

४० १. द्रष्ट्रधीनसिद्धित्वं घटादीनां अन्तःकरणस्यापि जडस्य द्रष्टा तु साक्षी स्वप्रकाशः स्वांशे संशयाभावात् अनन्याधीनसिद्धिक इत्यर्थः।

**स होवाचोषस्तश्चाक्रायणो यथा विब्रूयादसौ गौरसावश्व इत्येवमेवैतद्व्यपदिष्टं भवति यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तं मे व्याचक्ष्वेत्येष त आत्मा सर्वान्तरः कतमो याज्ञवल्क्य सर्वान्तरः। न दृष्टेर्द्रष्टारं पश्येर्न श्रुतेः श्रोतारँ शृणुया न मतेर्मन्तारं मन्वीथा न विज्ञातेर्विज्ञातारं विजानीयाः। एष त आत्मा सर्वान्तरोऽतोऽन्यदार्तं ततो होषस्तश्चाक्रायण उपरराम ॥२॥** ५

इति बृहदारण्यकोपनिषदि तृतीयाध्यायस्य चतुर्थं ब्राह्मणम् ॥४॥

स होवाचोषस्तश्चाक्रायणो यथा कश्चिदन्यथा प्रतिज्ञाय पूर्वं पुनर्विप्रतिपन्नो ब्रूयादन्यथाऽसौ गौरसावश्वो यश्चलति धावतीति वा पूर्वं प्रत्यक्षं दर्शयामीति प्रतिज्ञाय पश्चाच्चलनादिलिङ्गैर्व्यपदिशत्येवमेवैतद्ब्रह्म प्राणनादिलिङ्गैर्व्यपदिष्टं भवति त्वया। किं बहुना त्यक्त्वा गोतृष्णानिमित्तं व्याजं यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तं मे व्याचक्ष्वेति। इतर आह—यथा मया प्रथमं प्रतिज्ञातस्तवाऽऽत्मव (त्मा वि) लक्षण इति तां १० प्रतिज्ञामनुवर्त एव। तत्तथैव यथोक्तं मया।

यत्पुनरुक्तं तमात्मानं घटादिवद्विषयीकुर्विति तदशक्यत्वान्न क्रियते। कस्मात्पुनस्तदशक्यमिति। आह। वस्तुस्वाभाव्यात्। किं पुनस्तद्वस्तुस्वाभाव्यम्। दृष्ट्यादिद्रष्टृत्वम्। दृष्टेर्द्रष्टा ह्यात्मा। दृष्टिरिति द्विविधा भवति

प्रश्नप्रतिवचनयोरननुरूपत्वमाशङ्कते—स होवाचेति। दृष्टान्तमेव स्पष्टयति—असावित्यादिना। प्रत्यक्षं गामश्वं वा दर्शयामीति पूर्वं प्रतिज्ञाय पश्चाद्यश्चलत्यसौ गौर्यो वा धावति सोऽश्व इति चलनादिलिङ्गैर्यथा गवादि १५ व्यपदिशत्येवमेवब्रह्म प्रत्यक्षं दर्शयामीति मत्प्रश्नानुसारेण प्रतिज्ञाय प्राणादिलिङ्गैस्तद्व्यपदिशतस्ते प्रतिज्ञाहानिरनवधेयवचनता च स्यादित्यर्थः। प्रतिज्ञाप्रश्नावनुसर्तव्यौ बुद्धिपूर्वकारिणेति फलितमाह—किं बहुनेति। प्रत्युक्तितात्पर्यमाह—यथेति। प्रतिज्ञानुवर्तनमेवाभिनयति—तत्तथेति।

कतमो याज्ञवल्क्येत्यादिप्रश्नस्य तात्पर्यमाह—यत्पुनरिति। न दृष्टेरित्यादिवाक्यस्य तात्पर्यं वदन्नुत्तरमाह—तदशक्यत्वादिति। आत्मनो वस्तुत्वाद्घटादिवद्विषयीकरणं नाशक्यमिति शङ्कते—कस्मादिति। वस्तुस्वरूपमनुसृत्य २० परिहरति—आहेति। घटादेरपि तर्हि वस्तुस्वाभाव्यान्मा भूद्विषयीकरणमिति मन्वानः शङ्कते—किं पुनरिति। दृष्ट्यादिसाक्षित्वं वस्तुस्वाभाव्यं ततश्चाविषयत्वं न चैव वस्तुस्वाभाव्यं घटादेरस्तीत्युत्तरमाह—दृष्ट्यादीति। दृष्ट्यादिसाक्षिणोऽपि दृष्टिविषयत्वं किं न स्यादित्याशङ्क्याऽऽह—दृष्टेरिति। यथा प्रदीपो लौकिकज्ञानेन प्रकाश्यो न स्वप्रकाशकं ज्ञानं प्रकाशयति तथा दृष्टिसाक्षी दृष्ट्या न प्रकाश्यत इत्यर्थः। दृष्टेर्द्रष्टैव नास्तीति सौगतास्तान्प्रत्याह—

१. दृष्टेर्द्रष्टारं इत्यनेन दृष्टिविषयदृष्टिकर्तारं इत्यर्थे दृष्ट्यनवस्था अतः व्याप्तारमित्याह। दृष्टिः साक्षिरूपा स च २५ वृत्तौ प्रतिबिंबितो व्याप्नोति अतः व्याप्तारमित्युच्यते। भर्तृप्रपञ्चमते द्रष्टृत्वं न्यायमतवत् दृष्टिकर्तृत्वं दृष्ट्याश्रयत्वं वक्तव्यम्। ततश्चात्मा आगन्तुकज्ञानेनैव द्रष्टा स्वयं तु जड इति स्यात् ततश्च स्वयं स्वेन भासा स्वेन ज्योतिषा—प्रस्वपिति स्वप्नाश्च पश्यति इति उत्तरग्रन्थविरोधः। प्रश्नोपनिषदि एष हि द्रष्टा श्रोता इत्यादौ उपाधिगतं द्रष्टृत्वं उपहिते आत्मन्यारोप्यते स्फटिके लौहित्यवत् इत्युपाधिभिन्नोप्यात्मा द्रष्टेत्युच्यते—लौकिकद्रष्ट्या द्रष्टृत्वे नहि द्रष्टुर्दृष्टेर्विपरिलोप इति श्रुतिव्याकोपः। ३०

२. परे तु अत्रात्मशब्दः श्रीविष्णुपरमात्मपरः तस्य साक्षादपरोक्षत्वं नाम सर्वदेशकालसन्निहितत्वं सर्वान्तरत्वं अन्तर्यामित्वं यः प्राणेन प्राणिति इति प्राणादिव्यापारकर्ता तत्प्रयोजक इत्यर्थं व्याकुर्वन्ति। अत्र साक्षादपरोक्षत्वं यथार्थं त्यक्त्वा व्याप्तित्वे लक्षणा प्राणिति इति जीवे प्रयुज्यते श्वासोच्छ्वासकर्तेत्यर्थेन तु प्रयोजकव्यापारमभिप्रयन्ति तत्रापि लक्षणेति ज्ञेयम्। द्वैतिनस्तु साक्षादपरोक्षात् अपरोक्षमात्तः इति व्युत्पत्त्या सर्वं जगत् अपरोक्षं पश्यतीत्यर्थमाहुः भगवतोऽन्यापेक्षाभावः इत्यर्थं अत्रापि। रूढिव्यागः एव कथंचित् आग्रहेण ३५ अद्वैतविरुद्धार्थपरत्वापादनम्।

लौकिकी पारमार्थिकी चेति। तत्र लौकिकी चक्षुःसंयुक्तान्तःकरणवृत्तिः। सा क्रियत इति जायते विनश्यति च।
या त्वात्मनो दृष्टिरग्न्युष्णप्रकाशादिवत्सा च द्रष्टुः स्वरूपत्वान्न जायते न विनश्यति च। सा क्रियमाणयोपाधिभूतया
संसृष्टेवेति व्यपदिश्यते द्रष्टेति भेदवच्च द्रष्टा दृष्टिरिति च। याऽसौ लौकिकी दृष्टिश्चक्षुर्द्वारा रूपोपरक्ता जायमानैव
नित्ययाऽऽत्मदृष्ट्या संसृष्टेव तत्प्रतिच्छाया तया व्याप्तैव जायते तथा विनश्यति च तेनोपचर्यते द्रष्टा सदा पश्यन्नपि
५ पश्यति न पश्यति चेति। न तु पुनर्द्रष्टुर्दृष्टेः कदाचिदप्यन्यथात्वम्। तथा च वक्ष्यति षष्ठे—ध्यायतीव लेलायतीव।
नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यत इति च।

तमिममर्थमाह—लौकिक्या दृष्टेः कर्मभूताया द्रष्टारं स्वकीयया नित्यया दृष्ट्या व्याप्तारं न पश्येः। याऽसौ
लौकिकी दृष्टिः कर्मभूता सा रूपोपरक्ता रूपाभिव्यञ्जिका नाऽऽत्मानं स्वात्मनो व्याप्तारं प्रत्यञ्चं व्याप्नोति।
तस्मात्तं प्रत्यगात्मानं दृष्टेर्द्रष्टारं न पश्येः। तथा श्रुतेः श्रोतारं न शृणुयाः। तथा मतेर्मनोवृत्तेः केवलाया
१० व्याप्तारं न मन्वीथाः। तथा विज्ञातेः केवलाया बुद्धिवृत्तेर्व्याप्तारं न विजानीयाः। एष वस्तुनः स्वभावोऽतो
नैव दर्शयितुं शक्यते गवादिवत्।

न दृष्टेर्द्रष्टारमित्यत्राक्षराण्यन्यथा व्याचक्षते केचित्। न दृष्टेर्द्रष्टारं दृष्टेः कर्तारं दृष्टिभेदमकृत्वा दृष्टि-
मात्रस्य कर्तारं न पश्येरिति। दृष्टेरिति कर्मणि षष्ठी। सा दृष्टिः क्रियमाणा घटवत्कर्म भवति। द्रष्टारमिति तृजन्तेन
द्रष्टुर्दृष्टिकर्तृत्वमाचष्टे। तेनासौ दृष्टेर्द्रष्टा दृष्टेः कर्तेति व्याख्यातॄणामभिप्रायः। तत्र दृष्टेरिति षष्ठ्यन्तेन दृष्टिग्रहणं
१५ निरर्थकमिति दोषं न पश्यन्ति पश्यतां वा पुनरुक्तमसारः प्रमादपाठ इति वा नाऽऽदरः। कथं पुनराधिक्यं तृजन्तेनैव
दृष्टिकर्तृत्वस्य सिद्धत्वाद्दृष्टेरिति निरर्थकम्। तदा द्रष्टारं न पश्येरित्येतावदेव वक्तव्यम्। यस्माद्धातोः
परस्तृच्छ्रूयते तद्धात्वर्थकर्तरि हि तृच्स्मर्यते। गन्तारं भेत्तारं वा नयतीत्येतावानेव हि शब्दः प्रयुज्यते। न तु
गतेर्गन्तारं भिदेर्भेत्तारमित्यसत्यर्थविशेषे प्रयोक्तव्यः। न चार्थवादत्वेन हातव्यं सत्यां गतौ। न च प्रमाद-
पाठः। सर्वेषामविगानात्। तस्माद्व्याख्यातॄणामेव बुद्धिदौर्बल्यं नाध्येतृप्रमादः

२० दृष्टिरितीति। लौकिकीं व्याचष्टे—तत्रेति। पारमार्थिकीं दृष्टिं व्याकरोति—या त्विति। नन्वात्मा नित्यदृष्टिस्वभाव-
श्चेत्कथं द्रष्टेत्यादिव्यपदेशः सिध्यति तत्राऽऽह—सा क्रियमाणयेति। साक्ष्यबुद्धितद्वृत्तिगतं कर्तृत्वं क्रियात्वं
चाऽऽध्यासिकं नित्यदृग्रूपे व्यवह्रियत इत्यर्थः। आत्मनो नित्यदृष्टिस्वभावत्वे कथं 'पश्यति न पश्यति चेति'
कादाचित्को व्यवहार इत्याशङ्क्याऽऽह—याऽसाविति। या बहुविशेषणा लौकिकी दृष्टिरसौ तत्प्रतिच्छायेति संबन्धः।
तथा च या तत्प्रतिच्छाया तया व्याप्तैवेति यावत्। किमित्यौपचारिको व्यपदेशो मुख्यस्तु किं न स्यादित्या-
२५ शङ्क्याऽऽह—न त्विति। दृष्टेर्वस्तुतो न विक्रियावत्त्वमित्यत्र वाक्यशेषमनुकूलयति—तथा चेति।

उक्तेऽर्थे न दृष्टेरित्यादिश्रुतिमवतार्य व्याचष्टे—तमिममित्यादिना। उक्तमेव प्रपञ्चयति—याऽसाविति। न
दृष्टेरित्यादिवाक्यार्थं निगमयति—तस्मादिति। उक्तन्यायमुत्तरवाक्येष्वतिदिशति—तथेति। उक्तं वस्तुस्वाभाव्य-
मुपसहृत्य फलितमाह—एष इति। न दृष्टेरित्यत्र स्वपक्षमुक्त्वा भर्तृप्रपञ्चपक्षमाह—न दृष्टेरिति। कथमक्षराणामन्यथा
व्याख्येत्याशङ्क्य तदिष्टमक्षरार्थमाह—दृष्टेरिति। इतिशब्दो व्याचक्षत इत्यनेन संबध्यते। एवं व्याकुर्वतामभिप्राय-
३० माह—दृष्टेरितीति। कर्मणि षष्ठीमेव स्फुटयति—सा दृष्टिरिति। षष्ठीं व्याख्याय द्वितीयां व्याचष्टे—द्रष्टारमितीति।
पदार्थमुक्त्वा वाक्यार्थमाह—तेनेति।

उक्तां परकीयव्याख्यां दूषयति—तत्रेति। दृष्टिकर्तृत्वविवक्षायां तृजन्तेनैव तत्सिद्धेः षष्ठी निरर्थिकेत्यर्थः।
कथं पुनर्व्याख्यातारो यथोक्तं दोषं न पश्यन्ति तत्राऽऽह—पश्यतां वेति। षष्ठ्यानैरर्थक्यं प्रागुक्तमाकाङ्क्षाद्वारा
समर्थ्यते—कथमित्यादिना। कियत्तर्हीहार्थवदित्याशङ्क्याऽऽह—तदेति। तत्र हेतुमाह—यस्मादिति। क्रिया धात्वर्थः।
३५ कर्ता प्रत्ययार्थः। तथा चैकेनैव पदेनोभयलाभात्पृथक्क्रियाग्रहणमनर्थकमित्यर्थः। दृष्टेरित्यस्यानर्थकत्वं दृष्टान्तेन
साधयति—गन्तारमित्यादिना। अर्थवादत्वेन तर्हीदमुपात्तमित्याशङ्क्याऽऽह—न चेति। विधिशेषत्वासावादस्मदुक्त-
गत्या चार्थवत्त्वसंभवादित्यर्थः। अथ परपक्षे निरर्थकमेवेदं पदं प्रामादात्पठितमिति चेन्नेत्याह—न चेति। सर्वेषां
काण्वमाध्यंदिनानामिति यावत्। कथं तर्हीदं पदमनर्थकमिति परेषां प्रतीतिस्तत्राऽऽह—तस्मादिति।

### अथ तृतीयाध्यायस्य पञ्चमं ब्राह्मणम्

**अथ हैनं कहोलः कौषीतकेयः पप्रच्छ याज्ञवल्क्येति होवाच यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तं मे व्याचक्ष्वेत्येष त आत्मा सर्वान्तरः। कतमो याज्ञवल्क्य सर्वान्तरो योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति। एतं वै तमात्मानं विदित्वा**

यथा स्वस्माभिर्व्याख्यातं लौकिकदृष्टेर्विविच्य नित्यदृष्टिविशिष्ट आत्मा प्रदर्शयितव्यस्तया कर्तृकर्मविशेषणत्वेन दृष्टिशब्दस्य द्विःप्रयोग उपपद्यत आत्मस्वरूपनिर्धारणाय। 'नहि द्रष्टुर्दृष्टेरि'ति च प्रवेशान्तरवाक्येनैवैकवाक्यतोपपन्ना भवति। तथा च "चक्षूंषि पश्यति" "श्रोत्रमिदं श्रुतम्" इति श्रुत्यन्तरेणैकवाक्यतोपपन्ना। न्यायाच्च। एवमेव ह्यात्मनो नित्यत्वमुपपद्यते विक्रियाभावे विक्रियावच्च नित्यमिति च विप्रतिषिद्धम्। "ध्यायतीव लेलायतीव" "नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते" "एष नित्यो महिमा ब्राह्मणस्य" इति च श्रुत्यक्षराण्यन्यथा न गच्छन्ति। ननु द्रष्टा श्रोता मन्ता विज्ञातेत्येवमादीन्यप्यक्षराण्यात्मनोऽविक्रियत्वे न गच्छन्तीति। न। यथाप्राप्तलौकिकवाक्यानुवादित्वात्तेषाम्। नाऽऽत्मतत्त्वनिर्धारणार्थानि तानि। दृष्टेर्द्रष्टारमित्येवमादीनामन्यार्थासम्भवाद्यथोक्तार्थपरत्वमवगम्यते। तस्मादनवबोधादेव हि विशेषणं परित्यक्तं दृष्टेरिति। एष ते तवाऽऽत्मा सर्वैरुक्तैर्विशेषणैर्विशिष्टः। अत एतस्मादात्मनोऽन्यदार्तं कार्यं वा शरीरं करणात्मकं वा लिङ्गम्। एतदेवैकमनार्तमविनाशि कूटस्थम्। ततो होषस्तश्चाक्रायण उपरराम॥ २॥

इति बृहदारण्यकोपनिषद्भाष्ये तृतीयाध्यायस्य चतुर्थं ब्राह्मणम्॥ ४॥

बन्धनं[2] सप्रयोजकमुक्तम्। यश्च बद्धस्तस्याप्यस्तित्वमधिगतं व्यतिरिक्तत्वं च। तस्येदानीं बन्धमोक्षसाधनं ससंन्यासमात्मज्ञानं वक्तव्यमिति कहोलप्रश्न आरभ्यते—अथ हैनं कहोलो नामतः कुषीतकस्यापत्यं कौषीतकेयः पप्रच्छ याज्ञवल्क्येति होवाचेति पूर्ववत्। यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तं मे

कथं पुनर्भवतामपि दृशेर्द्विरुपादानमुपपद्यते तत्राऽऽह—यथा त्विति। प्रदर्शयितव्यपदादुपरिष्टादितिशब्दो द्रष्टव्यः। कर्तृकर्मविशेषणत्वेन साक्षिसाक्ष्यसमर्पकत्वेनेति यावत्। तत्समर्पणमपि कुत्रोपयुज्यते तत्राऽऽह—आत्मेति। दृष्ट्यादिसाक्ष्यात्मा न तद्विषय इति तत्स्वरूपनिश्चयार्थं साक्ष्यादिसमर्पणमित्यर्थः। आत्मा नित्यदृष्टिस्वभावो न दृश्याया दृष्टेर्विषय इत्येष चेन्न दृष्टेरित्यादिवाक्यस्यार्थस्तदा नहीत्यादिनाऽस्यैकवाक्यत्वं सिध्यति। तस्माद्यथोक्तार्थत्वमेव न दृष्टेरित्यादिवाक्यस्येत्याह—न होति। आत्मा कूटस्थदृष्टिरित्यत्र तलवकारश्रुतिं संवादयति—तथा चेति। तस्य कूटस्थदृष्टित्वे हेत्वन्तरमाह—न्यायाच्चेति। तमेवं न्यायं विशदयति—एवमेवेति। विपक्षे दोषमाह—विक्रियावच्चेति। इतश्चाऽऽत्मनो नास्ति विक्रियावत्त्वमित्याह—ध्यायतीवेति। अन्यथा विक्रियावत्त्वे सतीति यावत्। अविक्रियत्वेऽपि श्रुत्यक्षराण्यनुपपन्नानीति शङ्कते—नन्विति। न तेषां विरोधो, दृष्टं दृष्ट्यादिकर्तृत्वमनुसृत्य प्रवृत्ते लौकिके वाक्ये तदर्थानुवादित्वादुक्तश्रुत्यक्षराणां स्वार्थे प्रामाण्याभावादिति परिहरति—नेत्यादिना। न दृष्टेरित्यादीन्यपि तर्हि श्रुत्यक्षराणि न स्वार्थे प्रमाणानीत्याशङ्क्याऽऽह—न दृष्टेरिति। अन्योऽर्थो दृष्ट्यादिकर्ता। यथोक्तोऽर्थो दृष्ट्यादिसाक्षी। द्रष्टृपदस्य साक्षिविषयत्वे सिद्धे दृष्टेरिति साक्ष्यसमर्पणात्तदर्थवत्त्वोपपत्तिरित्युपसंहरति—तस्मादिति। पक्षान्तरं निराकृत्य स्वपक्षमुपपाद्यानन्तरं वाक्यं विभजते—एष इति। अन्यदार्तमितिविशेषणसामर्थ्यसिद्धमर्थमाह—एतदेवेति ॥२॥

इति बृहदारण्यकोपनिषद्भाष्यटीकायां तृतीयाध्यायस्य चतुर्थमुषस्तब्राह्मणम् ॥४॥

ब्राह्मणत्रयार्थं संगतिं वक्तुमनुवदति—बन्धनमिति। चतुर्थब्राह्मणार्थं संक्षिपति—यश्चेति। उत्तरब्राह्मणतात्पर्यमाह—तस्येति। उषस्तप्रश्नानन्तर्यमथशब्दार्थः। पूर्ववदित्यभिमुखीकरणार्थं संबोधितवानित्यर्थः। बन्धध्वंसि-

१. अशनापिपासे शोकमोहौ जरामृत्यू इति षडूर्मिरूपतया शास्त्रे व्यवहारः भिन्नकार्यत्वात् भिन्नकार्यजनकत्वात्।

२. बन्धनं द्वितीयब्राह्मणेन ग्रहातिग्रहनिरूपणात् स एव बद्धः तस्य शरीरादिभ्यो भेदः। उषस्तिप्रश्ने प्रतिपादितः इत्यर्थः।

ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं
चरन्ति या ह्येव पुत्रैषणा सा वित्तैषणा या वित्तैषणा सा लोकैषणोभे ह्येते
एषणे एव भवतः। तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्। बाल्यं
च पाण्डित्यं च निर्विद्याथ मुनिरमौनं च मौनं च निर्विद्याथ ब्राह्मणः स ब्राह्मणः
५ केन स्याद्येन स्यात्तेनेदृश एवातोऽन्यदार्तं ततो ह कहोलः कौषीतकेय उपरराम ॥१॥

इति बृहदारण्यकोपनिषदि तृतीयाध्यायस्य पञ्चमं ब्राह्मणम् ॥५॥

व्याचक्ष्वेति। यं विदित्वा बन्धनात्प्रमुच्यते। याज्ञवल्क्य आह–एष ते तवाऽऽत्मा।

किमुषस्तकहोलाभ्यामेक आत्मा पृष्टः किंवा भिन्नावात्मानौ तुल्यलक्षणाविति। भिन्नाविति युक्तं प्रश्नयोरपुनरुक्तत्वोपपत्तेः। यदि ह्येक आत्मोषस्तकहोलप्रश्नयोर्विवक्षितस्तत्रैकेनैव प्रश्नेनाधिगतत्वात्तद्विषयो
१० द्वितीयः प्रश्नोऽनर्थकः स्यात्। न चार्थवादरूपत्वं वाक्यस्य। तस्माद्भिन्नावेतावात्मानौ क्षेत्रज्ञपरमात्माख्याविति केचिद्व्याचक्षते।

तन्न। त इति प्रतिज्ञानात्। एष त आत्मेति हि प्रतिवचने प्रतिज्ञातम्। न चैकस्य कार्यकरणसंघातस्य द्वावात्मानावुपपद्येते। एको हि कार्यकरणसंघात एकेनाऽऽत्मनाऽऽत्मवान्। न चोषस्तस्यान्यः कहोलस्यान्यो जातितो भिन्न आत्मा भवति। द्वयोरगौणत्वात्मत्वसर्वान्तरत्वानुपपत्तेः। यद्येकमगौणं ब्रह्म द्वयोरितरेणावश्यं गौणेन
१५ भवितव्यं तथाऽऽत्मत्वं सर्वान्तरत्वं च। विरुद्धत्वात्पदार्थानाम्। यद्येकं सर्वान्तरं ब्रह्माऽऽत्मा मुख्य इतरेणासर्वान्तरेणानात्मनाऽमुख्येनावश्यं भवितव्यम्। तस्मादेकस्यैव द्विःश्रवणं विशेषविवक्षया।

यत्तु पूर्वोक्तेन समानं द्वितीये प्रश्नान्तर उक्तं तावन्मात्रं पूर्वस्यैवानुवादस्तस्यैवानुक्तः कश्चिद्विशेषो वक्तव्य इति। कः पुनरसौ विशेष इति। उच्यते–पूर्वस्मिन्प्रश्नेऽस्ति व्यतिरिक्त आत्मा यस्यायं सप्रयोजको बन्ध उक्त इति। द्वितीये तु तस्यैवाऽऽत्मनोऽशनायादिसंसारधर्मातीतत्वं विशेष उच्यते। यद्विशेषपरिज्ञानात्संन्याससहितात्पूर्वोक्ता-
२० द्बन्धनाद्विमुच्यते। तस्मात्प्रश्नप्रतिवचनयोरेष त आत्मेत्येवमन्तयोस्तुल्यार्थतैव।

ननु कथमेकस्यैवाऽऽत्मनोऽशनायाद्यतीतत्वं तद्वत्त्वं चेति विरुद्धधर्मसमवायित्वमिति। न। परिहृतत्वात्।

ज्ञानप्रश्नो नात्र प्रतिभाति किंत्वनुवादमात्रमित्याशङ्क्याऽऽह—यं विदित्वेति। तं व्याचक्ष्वेति पूर्वेण सबन्ध.।

प्रश्नयोरवान्तरविशेषप्रदर्शनार्थं परामृशति—किमुषस्तेति। तत्र पूर्वपक्षं गृह्णाति—भिन्नावितीति। उक्तमर्थं व्यतिरेकद्वारा विवृणोति—यदि हीत्यादिना। अथैकं वाक्यं वस्तुपरं तस्यार्थवादो द्वितीयं वाक्यं नेत्याह—न चेति।
२५ द्वयोर्वाक्ययोस्तुल्यलक्षणत्वे फलितमाह—तस्मादिति। तत्राऽऽद्यं वाक्यं क्षेत्रज्ञमधिकरोति द्वितीयं परमात्मानमित्यभिप्रेत्याऽऽह—क्षेत्रज्ञेति।

ब्राह्मणद्वयेनार्थद्वयं विवक्षितमिति भर्तृप्रपञ्चप्रस्थानं प्रत्याह—तन्नेति। प्रश्नप्रतिवचनयोरेकरूपत्वान्नार्थभेदोऽस्तीत्युक्तमुपपादयति—एष त इति। तथाऽप्यर्थभेदे काऽनुपपत्तिस्तत्राऽऽह—न चेति। तदेवोपपादयति—एको हीति। कार्यकरणसंघातभेदादात्मभेदमाशङ्क्याऽऽह—न चेति। जातित' स्वभावतोऽहमहमित्येकाकारस्फुरणादित्यर्थ.।
३० इतश्च न तत्त्वभेद इत्याह—द्वयोरिति। तदेव स्फुटयति—यदीति। द्वयोर्मध्ये यद्येकं ब्रह्मागौणं तदेतरेण गौणेनावश्यं भवितव्यं तथाऽऽत्मत्वादि यद्येकस्येष्टं तदेतरस्यानात्मत्वादीति कुत स्यादिति चेत्तत्राऽऽह—विरुद्धत्वादिति। उक्तोपपादनपूर्वकं द्वि.श्रवणस्याभिप्रायमाह—यदीत्यादिना। अनेकमुख्यत्वासंभवाद्वस्तुत. परिच्छिन्नस्य घटवदब्रह्मत्वादनात्मत्वाच्चैकमेव मुख्यं प्रत्यग्भूतं ब्रह्मेत्यर्थः। यदि जीवेश्वरभेदाभावात्प्रश्नयोर्नार्थभेदस्तर्हि पुनरुक्तिरनर्थिकेत्याशङ्क्याऽऽह—तस्मादिति।

३५ तर्हि स एव विशेषो दर्शयितव्यो येन पुनरुक्तिरर्थवतीत्याशङ्क्याऽऽह—यत्त्विति। अनुक्तविशेषकथनार्थमुक्तपरिमाणं निर्णेतुमुक्तानुवादश्चेदनुक्तो विशेषस्तर्हि प्रदर्श्यतामिति पृच्छति—कः पुनरिति। बुभुत्सितं विशेषं दर्शयति उच्यत इति। इतिशब्दः क्रियापदेन सम्बध्यते। किमित्येष विशेषो निर्दिश्यते तत्राऽऽह— यद्विशेषेति। अर्थभेदासंभवे फलितमाह— तस्मादिति। योऽशनायेत्यादिना तु विवक्षितविशेषोक्तिरिति शेष'।

एकमेवाऽऽत्मतत्त्वमधिकृत्य प्रश्नावित्यत्र चोदयति—नन्विति। विरुद्धधर्मवत्त्वान्मिथो भिन्नौ प्रश्नार्थावित्येत-

नामरूपविकारकार्यकरणलक्षणसंघातोपाधिभेदसंपर्कजनितभ्रान्तिमात्रं हि संसारित्वमित्यसकृदवोचाम। विरुद्ध-
श्रुतिव्याख्यानप्रसङ्गेन च। यथा रज्जुशुक्तिकागगनादयः सर्परजतमलिना भवन्ति पराध्यारोपितधर्मविशिष्टाः स्वतः
केवला एव रज्जुशुक्तिकागगनादयः। न चैवं विरुद्धधर्मसमवायित्वे पदार्थानां कश्चन विरोधः।

नामरूपोपाध्यस्तित्वे "एकमेवाद्वितीयम्" "नेह नानाऽस्ति किंचन" इति श्रुतयो विरुध्येरन्निति चेत्।
न। सलिलफेनदृष्टान्तेन परिहृतत्वान्मृदादिदृष्टान्तैश्च। यदा तु परमार्थदृष्ट्या परमात्मतत्त्वाच्छ्रुत्यनुसारिभिरन्यत्वेन ५
निरूप्यमाणे नामरूपे मृदादिविकारवद्वस्त्वन्तरे तत्त्वतो न स्तः सलिलफेनघटादिविकारवदेव तदा तदपेक्ष्य 'एक-
मेवाद्वितीयं' 'नेह नानाऽस्ति किंचने'त्यादिपरमार्थदर्शनगोचरत्वं प्रतिपद्यते। यदा तु स्वाभाविक्याऽविद्यया ब्रह्म-
स्वरूपं रज्जुशुक्तिकागगनस्वरूपवदेव स्वेन रूपेण वर्तमानं केनचिदस्पृष्टस्वभावमपि सन्नामरूपकृतकार्यकरणो-
पाधिभ्यो विवेकेन नावधार्यते नामरूपोपाधिदृष्टिरेव च भवति स्वाभाविकी तदा सर्वोऽयं वस्त्वन्तरास्तित्वव्यवहारः।
अस्ति चायं भेदकृतो मिथ्याव्यवहारो येषां ब्रह्मतत्त्वादन्यत्वेन वस्तु विद्यते येषां च नास्ति। १०

परमार्थवादिभिस्तु श्रुत्यनुसारेण निरूप्यमाणे वस्तुनि किं तत्त्वतोऽस्ति वस्तु किंवा नास्तीति ब्रह्मैकमेवा-
द्वितीयं सर्वसंव्यहारशून्यमिति निर्धार्यते तेन न कश्चिद्विरोधः। नहि परमार्थावधारणनिष्ठायां वस्त्वन्तरास्तित्वं
प्रतिपद्यामहे। "एकमेवाद्वितीयम्" "अनन्तरमबाह्यम्" इति श्रुतेः। न च नामरूपव्यवहारकाले त्वविवेकिनां
क्रियाकारकफलादिसंव्यवहारो नास्तीति प्रतिषिध्यते। तस्माज्ज्ञानाज्ञाने अपेक्ष्य सर्वः संव्यवहारः शास्त्रीयो

दूषयति—नेति। परिहृतत्वमेव प्रकटयति—नामरूपेति। तयोर्विकारः कार्यकरणलक्षणः संघातः स एवोपाधिभेदस्तेन १५
सम्पर्कस्तस्मिन्नहंममाध्यासस्तेन जनिता भ्रान्तिरहं कर्तेत्याद्या तावन्मात्रं संसारित्वमित्यनेकशो व्युत्पादितं तस्मा-
न्नास्ति वस्तुतो विरुद्धधर्मवत्त्वमित्यर्थः। किंच सविशेषत्वनिर्विशेषत्वश्रुत्योर्विषयविभागोक्तिप्रसङ्गेन संसारित्वस्य
मिथ्यात्वं मधुब्राह्मणान्तेऽवोचामेत्याह—विरुद्धेति। कथं तर्हि विरुद्धधर्मवत्त्वप्रतीतिरित्याशङ्क्याऽऽह—यथेति। परेण
पुरुषेणाज्ञानेन वाऽध्यारोपितैः सर्पत्वादिभिर्धर्मैर्विशिष्टा इति यावत्। स्वतश्चाध्यारोपेण विनेत्यर्थः। प्रतिभासतो
विरुद्धधर्मवत्त्वेऽपि क्षेत्रज्ञेश्वरयोर्भिन्नत्वाद्भिन्नार्थाविव प्रश्नाविति चेन्नेत्याह—न चैवमिति। निरुपाधिकरूपेणासंसारित्वं २०
सोपाधिकरूपेण संसारित्वमित्यविरोध उक्तः।

इदानीमुपाध्यभ्युपगमे सद्वयत्वं सतश्चैव घटादेरुपाधित्वदृष्टेरिति शङ्कते—नामेति। सलिलातिरेकेण न सन्ति
फेनादयो विकारा नापि मृदाद्यतिरेकेण तद्विकाराः शरावादयः सन्तीति दृष्टान्ताख्ययुक्तिबलादाविद्यनामरूपरचित-
कार्यकरणसंघातस्याविद्यामात्रत्वात्तस्याश्च विद्यया निरासान्नैवमिति परिहरति—नेत्यादिना। कार्यसत्त्वमभ्युपगम्यो-
क्तमिदानीं तदपि निरूप्यमाणे नास्तीत्याह—यदा त्विति। नेह नानाऽस्ति किंचनेत्यादिश्रुत्यनुसारिभिर्वस्तुदृष्ट्या २५
निरूप्यमाणे नामरूपे परमात्मतत्त्वादन्यत्वेनानन्यत्वेन वा निरूप्यमाणे तत्त्वतो वस्त्वन्तरे यदा तु न स्त इति संबंधः।
मृदादिविकारवदित्युक्तं प्रकटयति—सलिलेति। तदा तत्परमात्मतत्त्वमपेक्ष्येति योजनीयम्। कदा तर्हि लौकिको व्यव-
हारस्तत्राऽऽह—यदा त्विति। अविद्यया स्वाभाविक्या ब्रह्म यदोपाधिभ्यो विवेकेन नावधार्यते सदा लौकिको व्यव-
हारश्चेत्तर्हि विवेकिनां नासौ स्यादित्याशङ्क्याऽऽह—अस्ति चेति। भेदभानप्रयुक्तो व्यवहारो विवेकिनामविवेकिनां च
तुल्य एवायं वस्त्वन्तरास्तित्वाभिनिवेशस्तु विवेकिनां नास्तीति विशेषः। ३०

ननु यथाप्रतिभासं वस्त्वन्तरं पारमार्थिकमेव किं न स्यात्तत्राऽऽह—परमार्थेति। किं द्वितीयं वस्तु तत्त्वतो-
ऽस्ति किंवा नास्तीति वस्तुनि निरूप्यमाणे सति श्रुत्यनुसारेण तत्त्वदर्शिभिरेकमेवाद्वितीयं ब्रह्माव्यवहार्यमिति निर्धार्यते
तेन व्यवहारदृष्ट्याश्रयणेन भेदकृतो मिथ्याव्यवहारस्तत्त्वदृष्ट्याश्रयणेन च तदभावविषयः शास्त्रीयो व्यवहार इत्युभय-
विधव्यवहारसिद्धिरित्यर्थः। तत्र शास्त्रीयव्यवहारोपपत्तिं प्रपञ्चयति—नहीति। तथा च विद्यावस्थायां शास्त्रीयोऽभेद-
व्यवहारस्तदितरव्यवहारस्त्वाभासमात्रमिति शेषः। अविद्यावस्थायां लौकिकव्यवहारोपपत्तिं विवृणोति—न च ३५
नामेति। उभयविधव्यवहारोपपत्तिमुपसंहरति—तस्मादिति। उक्तरीत्या व्यवहारद्वयोपपत्तौ फलितमाह—अत इति।
त्वन्मतादिषु वेदान्तेषु चेति शेषः. ज्ञानाज्ञाने पुरस्कृत्य व्यवहारः शास्त्रीयो लौकिकश्चेति नास्माभिरेवोच्यते किंतु सर्वे-

१. न हीति—स्वानुभवः विवेकिनामनुभवश्च प्रकाश्येते।

लौकिकश्च। अतो न काचन विरोधशङ्का। सर्ववादिनामप्यपरिहार्यः परमार्थसव्यवहारकृतो व्यवहारः।

तत्र परमार्थात्मस्वरूपमपेक्ष्य प्रश्नः पुनः कतमो याज्ञवल्क्य सर्वान्तर इति। प्रत्याहेतरो योऽशनायापिपासे। अशितुमिच्छाऽशनाया पातुमिच्छा पिपासा। ते अशनायापिपासे योऽत्येतीति वक्ष्यमाणेन सम्बन्धः। अविवेकिभिस्तलमलवदिव गगनं गम्यमानमेव तलमले अत्येति परमार्थतस्ताभ्यामसंसृष्टस्वभावत्वात्। तथा मूढैरशनायापिपासादिमद्ब्रह्म गम्यमानमपि क्षुधितोऽहं पिपासितोऽहमिति ते अत्येत्येव परमार्थतस्ताभ्यामसंसृष्टस्वभावत्वात्। "न लिप्यते लोकदुःखेन बाह्यः" इति श्रुतेः। अविद्वल्लोका[1]ध्यारोपितदुःखेनेत्यर्थः। प्राणैकधर्मत्वात्समासकरणमशनायापिपासयोः।

शोकं मोहं शोक इति कामः। इष्टं वस्तूद्दिश्य चिन्तयतो यदरमणं तत्तृष्णाभिभूतस्य कामबीजं तेन हि कामो दीप्यते। मोहस्तु विपरीतप्रत्ययप्रभवोऽविवेको भ्रमः। स चाविद्या सर्वस्यानर्थस्य प्रसवबीजम्। भिन्नकार्यत्वात्तयोः शोकमोहयोरसमासकरणम्। तौ मनोधिकरणौ। तथा शरीराधिकरणौ जरां मृत्युं चात्येति। जरेति कार्यकरणसंघातविपरिणामो वलीपलितादिलिङ्गः। मृत्युरिति तद्विच्छेदो विपरिणामावसानः। तौ जरामृत्यू शरीराधिकरणावत्येति।

ये तेऽशनायादयः प्राणमनःशरीराधिकरणाः प्राणिष्वनवरतं वर्तमाना अहोरात्रादिवत्समुद्रोर्मिवच्च प्राणिषु संसार इत्युच्यते। योऽसौ दृष्टेर्द्रष्टेत्यादिलक्षणः साक्षादव्यवहितोऽपरोक्षादगौणः सर्वान्तर आत्मा ब्रह्मादिस्तम्बपर्यन्तानां भूतानामशनायापिपासादिभिः संसारधर्मैः सदा न स्पृश्यत आकाश इव घनादिमलैः। तमेतं वा आत्मानं स्वं तत्त्वं विदित्वा ज्ञात्वाऽयमहमस्मि परं ब्रह्म सदा सर्वसंसारविनिर्मुक्तं नित्यतृप्तमिति ब्राह्मणाः।

षामपि परीक्षकाणामेतत्संमतं संसारदशायां क्रियाकारकव्यवहारस्य मोक्षावस्थायां च तदभावस्येष्टत्वादित्याह—सर्ववादिनामिति।

निरुपाधिके परस्मिन्नात्मनि चिद्धातावनाद्यविद्याकल्पितोपाधिकृतमशनायादिमत्त्वं वस्तुतस्तु तद्राहित्यमित्युपपाद्यानन्तरप्रश्नमुत्थाप्य प्रतिवक्ति—तत्रेत्यादिना। कल्पिताकल्पितयोरात्मरूपयोर्निर्धारणार्थ सप्तमी। योऽत्येति स सर्वान्तरत्वादिविशेषणस्तवाऽऽत्मेति शेषः। ननु परो नाशनायादिमानप्रसिद्धेर्नापि जीवस्तथा तस्य परस्मादव्यतिरेकादत आह—अविवेकिभिरिति। परमार्थत इत्युभयतः सम्बध्यते। ब्रह्मैवाखण्डं सच्चिदानन्दमनाद्यविद्यातत्कार्यबुद्ध्यादिसम्बद्धमाभासद्वारा स्वानुभवादशनायादिमद्गम्यते तत्त्व वस्तुतोऽविद्याद्यसम्बन्धादशनायाद्यतीतं नित्यमुक्तं तिष्ठतीत्यर्थः। अशनायापिपासादिमद्ब्रह्म गम्यमानमिति वदन्नाचार्यो नानाजीववादस्यानिष्टत्वं सूचयति। परमार्थतो ब्रह्मण्यशनायाद्यसम्बन्धे मानमाह—न लिप्यत इति। बाह्यत्वमसङ्गत्वम्। लोकदुःखेनेत्ययुक्तं लोकस्यानात्मनो दुःखसम्बन्धानभ्युपगमादित्याशङ्क्याऽऽह—अविद्वदिति। अशनायापिपासयोः समस्योपादाने हेतुमाह—प्राणेति।

अरतिवाची शोकशब्दो न कामविषय इत्याशङ्क्याऽऽह—इष्टमिति। कामबीजत्वमरतेरनुभवेनाभिव्यनक्ति—तेन हीति। कामस्य शोको बीजमिति स कामतया व्याख्यातः। अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिविपरीतप्रत्ययस्तस्मान्मनसि प्रभवति कर्तव्याकर्तव्याविवेकः स लौकिकः सम्यग्ज्ञानविरोधाद्भ्रमोऽविद्येत्युच्यते। तस्याः सर्वानर्थोत्पत्तौ निमित्तत्वं मूलाविद्यायास्तूपादानत्व तदेतदाह—मोहस्त्विति। कामस्य शोको मोहो दुःखस्य हेतुरिति भिन्नकार्यत्वं तद्विच्छेद इत्यत्र कार्यकरणसघातस्तच्छब्दार्थः।

संसाराद्विरक्तस्य पारिव्राज्यं वक्तुमुत्तरं वाक्यमित्यभिप्रेत्य सक्षेपतः संसारस्वरूपमाह—ये त इत्यादिना। तेषामात्मधर्मत्वं व्यावर्तयितुं विशिनष्टि—प्राणेति। तेषा स्वरसतो विच्छेदशङ्का वारयति—प्राणिष्विति। प्रवाहरूपेण नैरन्तर्यं दृष्टान्तमाह—अहोरात्रादिवदिति। तेषामतिचपलत्वे दृष्टान्तः—समुद्रोर्मिवदिति। तेषा हेयत्व द्योतयति—प्राणिष्विति। ये यथोक्ताः प्राणिष्वशनायादयस्ते तेषु ससार इत्युच्यत इति योजना। एतं वै तमित्यत्रैतच्छब्दार्थं मुष्वस्तप्रश्नोक्त स्वपदार्थं कथयति—योऽसाविति। तच्छब्दार्थं कहोलप्रश्नोक्तं तत्पदार्थं दर्शयति—अशनायेति। तयोरैक्यं समानाधिकरण्येन सूचितमित्याह—तमेतमिति। ज्ञानमेव विशदयति—अयमित्यादिना। ज्ञात्वा

---

१. अविद्वल्लोके—तदुक्तमध्यासभाष्ये "तत्रैवं सति यत्र यदध्यासः तत्कृतेन दोषेण गुणेन वा अणुमात्रेणापि स न बध्यते" इति।

ब्राह्मणानामेवाधिकारो व्युत्थानेऽतो ब्राह्मणग्रहणम् । व्युत्थाय वैपरीत्येनोत्थानं कृत्वा । कुत इत्याह—पुत्रैषणायाः पुत्रार्थैषणा पुत्रैषणा । पुत्रेणेमं लोकं जयेयमिति लोकजयसाधनं पुत्रं प्रतीच्छैषणा दारसंग्रहः । दारसंग्रहमकृत्वेत्यर्थः । वित्तैषणायाश्च कर्मसाधनस्य गवादेरुपादानमनेन कर्म कृत्वा पितृलोकं जेष्यामीति विद्यासंयुक्तेन वा देवलोकं केवलया वा हिरण्यगर्भविद्यया दैवेन वित्तेन देवलोकम् ।

दैवाद्वित्ताद्व्युत्थानमेव नास्तीति केचित् । यस्मात्तद्बलेन हि किल व्युत्थानमिति । तदसत् । एतावान्वै ५ काम इति पठितत्वादेषणामध्ये दैवस्य वित्तस्य । हिरण्यगर्भादिदेवताविषयैव विद्या वित्तमित्युच्यते । देवलोकहेतुत्वात् । नहि निरुपाधिकप्रज्ञानघनविषया ब्रह्मविद्या देवलोकप्राप्तिहेतुः । "तस्मात्तत्सर्वमभवत्" "आत्मा ह्येषां स भवति" इति श्रुतेः । तद्बलेन हि व्युत्थानम् । "एतं वै तमात्मानं विदित्वा" इति विशेषवचनात् । तस्मात्त्रिभ्योऽप्येतेभ्योऽनात्मलोकप्राप्तिसाधनेभ्य एषणाविषयेभ्यो व्युत्थाय । एषणा कामः "एतावान्वै कामः" इति श्रुतेः । एतस्मिंस्त्रिविधेऽनात्मलोकप्राप्तिसाधने तृष्णामकृत्वेत्यर्थः । सर्वा हि साधनेच्छा फलेच्छैव । अतो व्याचष्टे—श्रुतिरे- १० कैवैषणेति । कथम् ? या ह्येव पुत्रैषणा सा वित्तैषणा । दृष्टफलसाधनत्वतुल्यत्वात् । या वित्तैषणा सा लोकैषणा फलार्थैव सा । सर्वः फलार्थप्रयुक्त एव हि सर्वं साधनमुपादत्ते । अत एकैवैषणा या लोकैषणा सा साधनमन्तरेण सम्पादयितुं न शक्यत इति साध्यसाधनभेदेनोभे हि यस्मादेते एषणे एव भवतः । तस्माद्ब्रह्मविदो नास्ति कर्म कर्मसाधनं वा ।

अतो येऽतिक्रान्ता ब्राह्मणाः सर्वं कर्म कर्मसाधनं च सर्वं देवपितृमानुषनिमित्तं यज्ञोपवीतादि तेन हि दैवं १५

ब्राह्मणा व्युत्थाय भिक्षाचर्यं चरन्तीति सम्बन्ध. । संन्यासविधायके वाक्ये किमित्यधिकारिणि ब्राह्मणपदं तत्राऽऽह—ब्राह्मणानामिति । पुत्रार्थमेषणामेव विवृणोति—पुत्रेणेति । ततो व्युत्थानं संगृह्णाति—दारसंग्रहमिति । वित्तैषणायाश्च व्युत्थानं कर्तव्यमित्याह—वित्तेति । वित्तं द्विविधं मानुषं दैवं च । मानुषं गवादि तस्य कर्मसाधनस्योपादानमुपार्जनं तेन कर्म कृत्वा केवलेन कर्मणा पितृलोकं जेष्यामि । दैवं वित्तं विद्या तत्संयुक्तेन कर्मणा देवलोकं केवलया च विद्यया तमेव जेष्यामीतीच्छा वित्तैषणा ततश्च व्युत्थानं कर्तव्यमिति व्याचष्टे—कर्मसाधनस्येति । एतेन २० लोकैषणायाश्च व्युत्थानमुक्तं वेदितव्यम् ।

दैवाद्वित्ताद्व्युत्थानमाक्षिपति—दैवादिति । तस्यापि कामत्वात्ततो व्युत्थातव्यमिति परिहरति—तदसदिति । तर्हि ब्रह्मविद्यायाः सकाशादपि व्युत्थानात्तन्मूलध्वंसे तद्व्याघातः स्यादित्याशङ्क्याऽऽह—हिरण्यगर्भादीति । देवतोपासनाया वित्तशब्दितविद्यात्वे हेतुमाह—देवलोकेति । तत्प्राप्तिहेतुत्वं ब्रह्मविद्यायामपि तुल्यमिति चेन्नेत्याह—नहीति । तत्र फलान्तरश्रवणं हेतूकरोति—तस्मादिति । इतश्च ब्रह्मविद्या दैवाद्वित्ताद्बहिरेवेत्याह—तद्बलेनेति । प्रागेव वेदनं २५ सिद्धं चेत्किं पुनर्व्युत्थानेनेत्याशङ्क्य प्रयोजकज्ञानं तत्प्रयोजकमुद्देश्यं तु तत्त्वसाक्षात्करणमिति विवक्षित्वाऽऽह—तस्मादिति । प्रयोजकज्ञान पञ्चम्यर्थं । व्युत्थाय भिक्षाचर्यं चरन्तीति सम्बन्धः । व्युत्थानस्वरूपप्रदर्शनार्थमेषणास्वरूपमाह—एषणेति । किमेतावतेत्याशङ्क्य व्युत्थानस्वरूपमाह—एतस्मिन्निति । सम्बन्धस्तु पूर्ववत् । या ह्येवेत्यादि श्रुतेस्तात्पर्यमाह—सर्वा इति । फलं नेच्छति साधनं च चिकीर्षतीति व्याघातात्फलेच्छान्तर्भूतैव साधनेच्छा तद्युक्तमेषणैक्यमित्यर्थः । श्रुतेस्तदैक्यव्युत्पादकत्वं प्रश्नपूर्वकं व्युत्पादयति—कथमित्यादिना । फलैषणान्तर्भावं साधनैषणायाः ३० समर्थयते—सर्व इति । उभे हीत्यादिश्रुतिमवतार्य व्याचष्टे—या लोकैषणेति ।

प्रयोजकज्ञानवतः साध्यसाधनरूपात्संसाराद्विरक्तस्य कर्मतत्साधनयोरसंभवे साक्षात्कारमुद्दिश्य फलितं संन्यासं दर्शयति—अत इति । अतिक्रान्ता ब्राह्मणाः किं प्रजयेत्यादिप्रकाशितास्तेषां कर्म कर्मसाधनं च यज्ञोपवीतादि नास्तीति पूर्वेण संबन्धः । देवपितृमानुषनिमित्तमिति विशेषणं विषदयति—तेन हीति । "प्राचीनावीतं पितृणामुपवीतं देवानामि"त्यादिशब्दार्थः । यस्मात्पूर्वे त्रिचारप्रयोजकज्ञानवन्तो ब्राह्मणा विरक्ताः संन्यस्य तत्प्रयुक्तं धर्ममन्वतिष्ठं- ३५

१. ब्राह्मणानामेवेति–वार्तिककृतस्तु इदमुपलक्षणम् त्रैवर्णिकानां सर्वेषामपि संन्यासमिच्छन्ति । तदुक्तं "त्रयाणामपि वर्णानां श्रुतौ संन्यासदर्शनात् । ब्राह्मणस्यैव संन्यास इति श्रुत्या विरुध्यते" । उपलक्षणं च ब्राह्मणग्रहणं श्रुतौ (१.४.१६५) ।

पित्र्यं मानुषं च कर्म क्रियते "निवीतं मनुष्याणाम्" इत्यादिश्रुतेः। तस्मात्पूर्वं ब्राह्मणा ब्रह्मविदो व्युत्थाय कर्मभ्यः कर्मसाधनेभ्यश्च यज्ञोपवीतादिभ्यः परमहंसपारिव्राज्यं प्रतिपद्य भिक्षाचर्यं चरन्ति भिक्षार्थं चरणं भिक्षाचर्यं चरन्ति त्यक्त्वा स्मार्तं लिङ्गं केवलमाश्रममात्रशरणानां जीवनसाधनं पारिव्राज्यव्यञ्जकम्। विद्वान्लिङ्गवर्जितः। "तस्मादलिङ्गो धर्मज्ञोऽव्यक्तलिङ्गोऽव्यक्ताचारः" इत्यादिस्मृतिभ्यः। "अथ परिव्राड्विवर्णवासा मुण्डोऽपरिग्रहः"
५ इत्यादिश्रुतेः। "सशिखान्केशान्निकृत्य विसृज्य यज्ञोपवीतम्"इति च।

ननु व्युत्थायाथ भिक्षाचर्यं चरन्तीति वर्तमानापदेशादर्थवादोऽयं न विधायकः प्रत्ययः कश्चिच्छ्रूयते लिङ्लोट्तव्यानामन्यतमोऽपि। तस्मादर्थवादमात्रेण श्रुतिस्मृतिविहितानां यज्ञोपवीतादीनां साधनानां न शक्यते परित्यागः कारयितुम्। यज्ञोपवीत्येवाधीयीत याजयेद्यजेत वा। पारिव्राज्ये तावदध्ययनं विहितम्—

"वेदसंन्यसनाच्छूद्रस्तस्माद्वेदं न संन्यसेत्" इति। "स्वाध्याय एवोत्सृजमानो वाचम्" इति चाऽऽपस्तम्बः।
१० "ब्रह्मोज्झं वेदनिन्दा च कौटसाक्ष्यं सुहृद्वधः। गर्हितान्नाद्ययोर्जग्धिः सुरापानसमानि षट्"॥

इति वेदपरित्यागे दोषश्रवणात्। "उपासने गुरूणां वृद्धानामतिथीनां होमे जप्यकर्मणि भोजन आचमने स्वाध्याये च यज्ञोपवीती स्यादि"ति परिव्राजकधर्मेषु च गुरूपासनस्वाध्यायभोजनाचमनादीनां कर्मणां श्रुतिस्मृतिषु कर्तव्यतया चोदितत्वाद्गुर्वाद्युपासनाङ्गत्वेन यज्ञोपवीतस्य विहितत्वात्तत्परित्यागो नैवावगन्तुं शक्यते। यद्यप्येषणाभ्यो व्युत्थानं विधीयत एव तथाऽपि पुत्राद्येषणाभ्यस्तिसृभ्य एव व्युत्थानं न तु सर्वस्मात्कर्मणः कर्मसाधनाच्च
१५ व्युत्थानम्। सर्वपरित्यागे चाश्रुतं कृतं स्याच्छ्रुतं च यज्ञोपवीतादि हापितं स्यात्। तथा च महानपराधो विहिताकरणप्रतिषिद्धाचरणनिमित्तः कृतः स्यात्। तस्माद्यज्ञोपवीतादिलिङ्गपरित्यागोऽन्धपरम्परैव।

न। "यज्ञोपवीतं वेदांश्च सर्वं तद्वर्जयेद्यतिः" इति श्रुतेः। अपि चाऽऽत्मज्ञानपरत्वात्सर्वस्या उपनिषदः। आत्मा द्रष्टव्यः श्रोतव्यो मन्तव्य इति हि प्रस्तुतं स चाऽऽत्मैव साक्षादपरोक्षात्सर्वान्तरोऽशनायादिसंसारधर्मवर्जित इत्येवं विज्ञेय इति तावत्प्रसिद्धम्। सर्वा हीयमुपनिषदेवंपरेति विध्यन्तरशेषत्वं तावन्नास्त्यतो नार्थवादः। आत्म-

२० स्तस्मादधुनातनोऽपि प्रयोजकज्ञानी विरक्तो ब्राह्मणस्तथा कुर्यादित्याह—तस्मादिति। 'त्रिदण्डेन यतिश्चैव' इत्यादिस्मृतेर्न परमहंसपारिव्राज्यमत्र विवक्षितमित्याशङ्क्याऽऽह—त्यक्त्वेति। तस्य दृष्टार्थत्वान्मुमुक्षुभिस्त्याज्यत्वं सूचयति—केवलमिति। अमुख्यत्वाच्च तस्य त्याज्यतेत्याह—पारिव्राज्येति। तथाऽपि त्वदिष्टः संन्यासो न स्मृतिकारैर्निबद्ध इति चेन्नेत्याह—विद्वानिति। प्रत्यक्षश्रुतिविरोधाच्च स्मार्तसंन्यासो मुख्यो न भवतीत्याह—अथेति।

एतं वै तमित्यादिवाक्यस्य विधायकत्वमुपेत्य सर्वकर्मतत्साधनपरित्यागपरत्वमुक्तमाक्षिपति—नन्विति। इतश्च
२५ यज्ञोपवीतमपरित्याज्यमित्याह—यज्ञोपवीत्येवेति। याजनादिसमभिव्याहारादसंन्यासिविषयमेतदित्याशङ्क्याऽऽह—पारिव्राज्ये तावदिति। वेदत्यागे दोषश्रुतेस्तदत्यागेऽपि कथं पारिव्राज्ये यज्ञोपवीतित्वमित्याशङ्क्याऽऽह—उपासन इति। इत्यनेन वाक्येन गुर्वाद्युपासनाङ्गत्वेन यज्ञोपवीतस्य विहितत्वात्परिव्राजकधर्मेषु गुरूपासनादीनां कर्तव्यतया श्रुतिस्मृतिषु चोदितत्वाद्यज्ञोपवीतपरित्यागोऽवगन्तुं नैव शक्यत इत्यन्वयः। सम्प्रति प्रौढिमारूढो व्युत्थाने विधिमङ्गीकृत्यापि दूषयति—यद्यपीत्यादिना। एषणाभ्यो व्युत्थाने सत्येषणात्वाविशेषात्कर्मणस्तत्साधनाच्च व्युत्थानं सेत्स्यती-
३० त्याशङ्क्य यज्ञोपवीतादेरेषणात्वमसिद्धमित्याशयेनाऽऽह—सर्वेति। अश्रुतकरणे श्रुतत्यागे च 'अकुर्वन्विहितं कर्म' इत्यादिस्मृतिमाश्रित्य दूषणमाह—तथा चेति। ननु दृश्यते यज्ञोपवीतादिलिङ्गत्यागः स कस्मान्निराक्रियते तत्राऽऽह—तस्मादिति।

नेयमन्धपरम्परेति परिहरति—नेत्यादिना। ब्रह्मचर्यादेव प्रव्रजेदित्यादिविध्युपलम्भेति प्रौढवादेनाऽऽत्मज्ञानविधिबलादेव संन्यासं साधयितुमात्मज्ञानपरत्वं तावदुपनिषदामुपन्यस्यति—अपि चेति। इतश्चास्ति संन्यासे विधि-
३५ रिति यावत्। तद्विधिबलादेव संन्याससिद्धिरिति शेषः। कथं सर्वोपनिषदात्मज्ञानपरेष्यते कर्तृस्तुतिद्वारा कर्मविधिशेषत्वेनार्थवादत्वादित्याशङ्क्याऽऽह—आत्मेत्यादिना। अस्तु यथोक्तं वस्तु विज्ञेयं तथाऽपि प्रस्तुते किं जातं तदाह—सर्वा हीति। ननु तस्य कर्तव्यत्वेऽपि कथं कर्मतत्साधनत्यागसिद्धिरत आह—आत्मा चेति। विपक्षे दोषमाह—अत

---

१. स्मार्तं लिङ्गं त्रिदण्डादि तत्त्यक्त्वा केवलाश्रममात्रेण जीविका।

२. एतं वै तमात्मानं विदित्वा व्युत्तिष्ठन्तीति विधिः अप्राप्तत्वात् लेटत्वकल्पनात्।

ज्ञानस्य कर्तव्यत्वात् । आत्मा चाशनायादिधर्मवान्न भवतीति साधनफलविलक्षणो ज्ञातव्यः । अतं ऽव्यतिरेकेणाऽऽ-
त्मनो ज्ञानमविद्या । "अन्योऽसावन्योऽहमस्मीति न स वेद" "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति"
"एकधैवानुद्रष्टव्यम्" "एकमेवाद्वितीयम्" "तत्त्वमसि" इत्यादिश्रुतिभ्यः । क्रियाफलं साधनं चाशनायादिसंसार-
धर्मातीतादात्मनोऽन्यदविद्याविषयम् । "यत्र हि द्वैतमिव भवति" "अन्योऽसावन्योऽहमस्मीति न स वेद" "अथ
येऽन्यथाऽतो विदुः" इत्यादिवाक्यशतेभ्यः । ५

न च विद्याविद्ये एकस्य पुरुषस्य सह भवतो विरोधात्तमः प्रकाशाविव । तस्मादात्मविदोऽविद्याविषयोऽ-
धिकारो न द्रष्टव्यः क्रियाकारकफलभेदरूपः । "मृत्योः स मृत्युमाप्नोति" इत्यादि निन्दितत्वात् । सर्वक्रियासाधन-
फलानां चाविद्याविषयाणां तद्विपरीतात्मविद्यया हातव्यत्वेनेष्टत्वात् । यज्ञोपवीतादिसाधनानां च तद्विषयत्वात् ।
तस्मादसाधनफलस्वभावादात्मनोऽन्यविषया विलक्षणैषणा । उभे ह्येते साधनफले एषणे एव भवतः । यज्ञोपवीता-
देस्तत्साध्यकर्मणां च साधनत्वात् । उभे ह्येते एषणे एवेति हेतुवचनेनावधारणात् । यज्ञोपवीतादिसाधनात्तत्साध्ये- १०
भ्यश्च कर्मभ्योऽविद्याविषयत्वादेषणारूपत्वाच्च जिहासितव्यरूपत्वाच्च व्युत्थानं विधित्सितमेव ।

ननूपनिषद आत्मज्ञानपरत्वाद्व्युत्थानश्रुतिस्तत्स्तुत्यर्था न विधिः । न । विधित्सितविज्ञानेन समानकर्तृकत्व-
श्रवणात् । न ह्यकर्तव्येन कर्तव्यस्य समानकर्तृकत्वेन वेदे कदाचिदपि श्रवणं संभवति । कर्तव्यानामेव ह्यभिषवहोम-
भक्षाणां यथा श्रवणमभिषुत्य हुत्वा भक्षयन्तीति तद्वदात्मज्ञानैषणाव्युत्थानभिक्षाचर्याणां कर्तव्यानामेव समानकर्तृ-
कत्वश्रवणं भवेत् । अविद्याविषयत्वादेषणात्वाच्चार्थप्राप्त आत्मज्ञानविधेरेव यज्ञोपवीतादिपरित्यागो न तु विधातव्य १५
इति चेन्न । सुतरामात्मज्ञानविधिनैव विहितस्य समानकर्तृकत्वश्रवणेन दार्ढ्योपपत्तिस्तथा भिक्षाचर्यस्य च ।

इति । साधनफलान्तर्भूतत्वेनाऽऽत्मनो ज्ञानमविद्येत्यत्र प्रमाणमाह—अन्योऽसावित्यादिना । क्रियाकारकफलविलक्षण-
स्याऽऽत्मनो ज्ञानं कर्तव्यं तत्सामर्थ्यात्साध्यसाधनत्याग सिध्यतीत्युक्तं सप्रत्यविद्याविपयत्वाच्च साध्यसाधनयोर्विद्या-
वता त्याज्यतेत्याह—क्रियेति । तस्याविद्याविषयत्वे श्रुतीरुदाहरति—यत्रेति ।

अविद्याविषयत्वेऽपि साधनादि विद्यावत एव भविष्यति विद्याविद्ययोरस्मदादिषु साहित्योपलम्भादित्या- २०
शङ्क्याऽऽह—न चेति । विद्याविद्ययोः साहित्यासंभवे फलितमाह—तस्मादिति । इतश्च प्रयोजकज्ञानवता साध्य-
साधनभेदो न द्रष्टव्यो विवक्षिततत्त्वसाक्षात्कारविरोधित्वादित्याह—सर्वेति । भवत्वविद्याविषयाणां विद्यावतस्त्याग-
स्तथाऽपि कुतो यज्ञोपवीतादीनां त्यागस्तत्राऽऽह—यज्ञोपवीतादीति । तद्विषयत्वादित्यत्र तच्छब्दोऽविद्याविषयः ।
एषणात्वाच्च यज्ञोपवीतादीना त्याज्यतेत्याह—तस्मादिति । ज्ञेयत्वेन प्रस्तुतादिति यावत् । साध्यसाधनविषया
तदात्मिकैषणा त्याज्येत्यत्र हेतुमाह—विलक्षणेति । पुरुषार्थरूपाद्विपरीता सा हेयेत्यर्थः । साध्यसाधनयोरेषणात्वं २५
साधयति—उभे हीति । तथाऽपि यज्ञोपवीतादीना कर्मणां च कथमेषणात्वमित्याशङ्क्य साधनान्तर्भावादित्याह—
यज्ञोपवीतादेरिति । तयोरेषणात्वं कथं प्रतिज्ञामात्रेण सेत्स्यतीत्याशङ्क्याऽऽह—उभे हीति । तयोरेषणात्वे सिद्धे फलित-
माह—यज्ञोपवीतादीति ।

आत्मज्ञानविधिरेव सन्यासविधिरित्युक्तत्वाद्व्युत्थायेत्यस्य नास्ति विधित्वमिति शङ्कते—नन्विति ।
व्युत्थाय विदित्वेति पाठक्रममतिक्रम्य व्याख्याने भवत्येवायं विविदिषोर्विधिरिति परिहरति—न विधित्सितेति । ३०
पाठक्रमेऽपि प्रयोजकज्ञानवतो विरक्तस्य भवत्येवायं विधिरित्यभिप्रेत्याऽऽह—नहीति । उक्तमेवान्वयमुखेनोदाहरणद्वारा
विवृणोति—कर्तव्यानामिति । अभिषुत्य सोमस्य कण्डन कृत्वा रसमादायेत्यर्थ. । पाठक्रममेवाऽऽश्रित्य शङ्कते—
अविद्येति । प्रयोजकज्ञानवतो विरक्तस्याऽऽत्मज्ञानविधिसामर्थ्यलब्धस्य यज्ञोपवीतादित्यागस्य कर्तव्यात्मज्ञानेन समान-
कर्तृकत्वश्रवणादतिशयेनाऽऽवश्यकत्वसिद्धिरित्युत्तरमाह—न सुतरामिति । व्युत्थाने दर्शितं न्यायं भिक्षाचर्येऽप्यति-

१. अव्यतिरेकेण ज्ञानं क्रियफलाभेदेन ज्ञानमविद्या । ३५

२ कर्तव्यानामेव ग्रावभिरषुत्य आहवनीये हुत्वा प्रत्यञ्च. परेत्य सदसि भक्षयन्ति इत्यत्र ल्यबन्ताना विधित्स्वीकारात्
प्रकृते च विदित्वा व्युत्थाय भिक्षाचार्यं चरन्ति इति सर्वेषामेककर्तृकत्वात् विधित्वं संन्यासस्य ।

३. यद्यप्यर्थप्राप्त सन्यास. तथापि दार्ढ्याय विधान वर्तमानार्थस्यलटः लेट्त्वाङ्गीकारात् विधित्वं चरेयुरिति ।

यत्पुनरुक्तं वर्तमानापदेशादर्थवादमात्रमिति । न । औदुम्बर[1]यूपादिविधिसमानत्वाददोषः ।

व्युत्थाय भिक्षाचर्यं चरन्तीत्यनेन पारिव्राज्यं विधीयते । पारिव्राज्याश्रमे च यज्ञोपवीतादिसाधनानि विहितानि लिङ्गं च श्रुतिभिः स्मृतिभिश्च । अतस्तद्वर्जयित्वाऽन्यस्माद्व्युत्थानमेषणात्वेऽपीति चेत् । न । विज्ञान[2]-समानकर्तृकात्पारिव्राज्यादेषणाव्युत्थानलक्षणात्पारिव्राज्यान्तरोपपत्तेः । यद्धि तदेषणाभ्यो व्युत्थानलक्षणं पारिव्राज्यं तदात्मज्ञानाङ्गम् । आत्मज्ञानविरोध्येषणापरित्यागरूपत्वात् । अविद्याविषयत्वाच्चैषणायाः । तद्व्यतिरेकेण चास्त्याश्रमरूपं पारिव्राज्यं ब्रह्मलोकादिफलप्राप्तिसाधनं यद्विषयं यज्ञोपवीतादिसाधनविधानं लिङ्गविधानं च । न चैषणारूपसाधनोपादानस्याऽऽश्रमधर्ममात्रेण पारिव्राज्यान्तरे विषये संभवति सति सर्वोपनिषद्विहितस्याऽऽत्मज्ञानस्य बाधनं युक्तम् । यज्ञोपवीताद्यविद्याविषयैषणारूपसाधनोपादित्सायां चावश्यमसाधनफलरूपस्याशनायादिसंसारधर्मवर्जितस्याहं ब्रह्मास्मीति विज्ञानं बाध्यते । न च तद्बाधनं युक्तम् । सर्वोपनिषदा तदर्थपरत्वात् ।

भिक्षाचर्यं चरन्तीत्येषै[3]णां ग्राहयन्ती श्रुतिः स्वयमेव बाधते इति चेत् । अथाप्येषणाभ्यो व्युत्थानं विधाय

दिशति—तथेति । भिक्षाचर्यस्य चाऽऽत्मज्ञानविधिनैकवाक्यस्य तथैव दार्ढ्योपपत्तिरिति संबन्धः । व्युत्थानादिवाक्यस्यार्थवादत्वमुक्तमनूद्य दूषयति—यत्पुनरित्यादिना । 'औदुम्बरो यूपो भवती'त्यादौ लेट्परिग्रहेण विधिस्वीकारवदत्रापि पञ्चमलकारेण विधिसिद्धेर्नार्थवादत्वशङ्केत्यर्थः ।

सम्प्रति प्रकृते वाक्ये पारिव्राज्यविधिमङ्गीकृत्य स्वयूथ्यः शङ्कते—व्युत्थायेति । का तर्हि विप्रतिपत्तिस्तत्राऽऽह—पारिव्राज्येति । लिङ्गं त्रिदण्डत्वादि । 'पुराणे यज्ञोपवीते विसृज्य नवमुपादायाऽऽश्रमं प्रविशेत्' 'त्रिदण्डी कमण्डलुमान्' इत्याद्याः श्रुतयः स्मृतयश्च । एषणात्वाद्यज्ञोपवतादीनामपि त्याज्यत्वमुक्तमित्याशङ्क्य श्रुतिस्मृतिवशाद्व्युत्थाने संकोचमभिप्रेत्याऽऽह—अत इति । उदाहृतश्रुतिस्मृतीना विषयान्तरं दर्शयन्नुत्तरमाह—नेत्यादिना । तदेव विवृणोति—यद्धीत्यादिना । तस्याऽऽत्मज्ञानाङ्गत्वे हेतुमाह—आत्मज्ञानेति । एषणायास्तद्विरोधित्वमेव कुतः सिद्धं तत्राऽऽह—अविद्येति । तर्हि यथोक्ताना श्रुतिस्मृतीना किमालम्बनं तदाह—तद्व्यतिरेकेणेति । आश्रमत्वेन रूप्यते वस्तुतस्तु नाऽऽश्रमस्तदाभास इति यावत् । तस्याऽऽत्मज्ञानाङ्गत्वं वारयति—ब्रह्मेति । अथ व्युत्थानवाक्योक्तमुख्यपारिव्राज्यविषयत्वमेव लिङ्गादिविधानस्य किं न स्यात्तत्राऽऽह—न चेति । एषणारूपाणि साधनानि यज्ञोपवीतादीनि तेषामुपादानमनुष्ठान तस्याऽऽश्रमधर्ममात्रेणोक्तस्य यथोक्ते सन्यासाभासे विषये सति प्रधानबाधेन मुख्यपारिव्राज्यविषयत्वे यज्ञोपवीतादेरिष्टे प्रधानबाधन तदाह—यज्ञोपवीतादीति । साध्यसाधनयोरासङ्गे तद्विलक्षणस्याऽऽत्मनो ज्ञान बाध्यते चेत्का नो हानिरित्याशङ्क्याऽऽह—न चेति ।

भिक्षाचर्यं तावद्विहित विहितानु[4]ष्ठानं च यज्ञोपवीतादि विना न संभवतीति श्रुत्यैवाऽऽत्मज्ञानं यज्ञोपवीतादि[5]-

---

१. औदुबरयूपादि—औदुंबरो यूपो भवति । अत्र भवेदिति लेट्त्वकल्पनया विधित्व शास्त्रकाराणामिष्ट विवादस्तु पशुफलार्थ फलाय गुणविधित्वे तच्च निराकृतं प्रथमाध्यायद्वितीयपादे तद्दृष्टान्तेनेत्यर्थः पारिव्राज्यन्तरोपपत्ते. यदुक्त यज्ञोपवीतं लिङ्गं च वर्जयित्वा अन्यस्माद्व्युत्थानमिति तत् न मुख्यसंन्यासपरम् ।

२. तत्त्वज्ञानसमानकर्तृकात् संन्यासात् स कुटीचकादिरूप. ।

३. भिक्षाचर्योक्त्या तद्विषया एषणा नानुमन्यते श्रुतिः तथात्वे भिक्षाचर्यं एषणाप्रयोजक भवेत् यथा तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिन इत्यत्र आमिक्षादध्यानयने प्रयोजिका तद्वत् । पर तु वाजिभ्यो वाजिनमिति वाक्यान्तरे आमिक्षोद्धारानन्तरं स्थितजलरूपं वाजिनं दध्यानयनस्य न प्रयोजकं अपितु प्रतिपत्तिकर्मत्वात् वाजिनसत्वे कार्यं वाजिनस्य नाशे न कार्यम् वाजिनयागस्य प्रतिपत्तिरूपत्वेन दध्यानयनं प्रत्यप्रयोजकत्वात् । ततश्च न भिक्षाचर्यमर्थप्राप्तमेवोच्यते प्रतिपत्तिकर्मैव तत् ।

४. विहितानुष्ठानमिति । वेदविहितस्यानुष्ठानं यज्ञोपवीतमपेक्षते 'यज्ञोपवीतिना कर्त्तव्यमि'ति सामान्यविधिना विहितकर्ममात्रे तद्विधानात् इति चेन्न ब्रह्मविदः नियमादृष्टस्यापि अनपेक्षणात् । भिक्षाचर्यस्य केवलप्रतिपत्तित्वात् न यज्ञोपवितापेक्षा । नास्यापूर्वविधित्वम् । नियमविधिरपि न नियमादृष्टाधायक. ब्रह्मविदो विरुद्धत्वात् ।

५. पारिव्राज्यान्तरं हंसरूपं तत्र यज्ञोपवीतादिरूपसाधनोपादान न निराक्रियते । परमहंसानामेव तु एषणाद्योतक यज्ञोपवीतादिकनेष्यत इत्यर्थः।

पुनरेषणैकदेशं भिक्षाचर्यं ग्राहयन्तो तत्संबद्धमन्यदपि ग्राहयतीति चेत् । न । भिक्षाचर्यस्याप्रयोजकत्वाद्धुत्वोत्तरकालभक्षणवत् शेषप्रतिपत्तिकर्मत्वादप्रयोजकं हि तत् । असंस्कारकत्वाच्च । भक्षणं पुरुषसंस्कारकमपि स्यान्न तु भिक्षाचर्यम् । नियमादृष्टस्यापि ब्रह्मविदोऽनिष्टत्वात् ।

नियमादृष्टस्यानिष्टत्वे किं भिक्षाचर्येणेति चेत् । न । अन्यसाधनाद्व्युत्थानस्य विहितत्वात् । तथाऽपि किं तेनेति चेत् । यदि स्याद्बाढमभ्युपगम्यते हि तत् । यानि पारिव्राज्येऽभिहितानि वचनानि यज्ञोपवीत्येवाधीयीतेत्यादीनि तान्यविद्वत्पारिव्राज्यमात्रविषयाणीति परिहृतानि । इतरथाऽऽत्मज्ञानबाधः स्यादिति ह्यवोचाम ।

"निराशिषमनारम्भं निर्नमस्कारमस्तुतिम् । अक्षीणं क्षीणकर्माणं तं देवा ब्राह्मणं विदुः ॥"

इति सर्वकर्माभावं दर्शयति स्मृतिर्विदुषः । 'विद्वांल्लिङ्गवर्जितः' 'तस्मादलिङ्गो धर्मज्ञ' इति च । तस्मात्परमहंसपारिव्राज्यमेव व्युत्थानलक्षणं प्रतिपद्येताऽऽत्मवित्सर्वकर्मसाधनपरित्यागरूपमिति ।

यस्मात्पूर्वे ब्राह्मणा एतमात्मानमसाधनफलस्वभावं[1] विदित्वा सर्वस्मात्साधनफलस्वरूपादेषणालक्षणाद्व्युत्थाय भिक्षाचर्यं चरन्ति स्म । दृष्टादृष्टार्थं कर्म तत्साधनं च हित्वा । तस्मादद्यत्वेऽपि ब्राह्मणो ब्रह्मवित्पाण्डित्यं पण्डितभावमेतदात्मविज्ञानं पाण्डित्यं निर्विद्य निःशेषं विदित्वाऽऽत्मविज्ञानं निरवशेषं कृत्वेत्यर्थः । आचार्यत आगमतश्च । एषणाभ्यो व्युत्थाय । एषणाव्युत्थानावसानमेव हि तत्पाण्डित्यम् । एषणातिरस्कारोद्भवत्वादेषणाविरुद्धत्वात् । एषणामतिरस्कृत्य न ह्यात्मविषयस्य पाण्डित्यस्योद्भव इत्यात्मज्ञानेनैव विहितमेषणाव्युत्थानम् । आत्म-

विरोधि बाधितमिति शङ्कते—भिक्षाचर्यमिति । शङ्कामेव विशदयति—अथापीत्यादिना । यथा हुतशेषस्य भक्षणं विहितमपि न द्रव्याक्षेपकं परिशिष्टद्रव्योपादानेन प्रवृत्तेस्तथा सर्वस्वत्यागे विहिते परिशिष्टभिक्षोपादानेन विहितमपि भिक्षाचरणमुपवीताद्यनाक्षेपकमित्युत्तरमाह—नेत्यादिना । दृष्टान्तमेव स्पष्टयति—शेषेति । तद्भक्षणमिति संबन्धः । अप्रयोजकं द्रव्यविशेषस्यानाक्षेपकमिति यावत् । यद्वा दार्ष्टान्तिकमेव स्फुटयति—शेषेति । सर्वस्वत्यागे विहिते शेषस्य कालस्य शरीरपातान्तस्य प्रतिपत्तिकर्ममात्रं भिक्षाचर्यमतो न तदुपवीतादिप्रापकमित्यर्थः । किंच भिक्षाचर्यस्य शरीरस्थित्यैवाऽऽक्षिप्तत्वान्न तत्रापि विधिर्दूरे तद्वशादुपवीतादिसिद्धिरित्याह—असंस्कारकत्वाच्चेति । तदेव स्फुटयते—भक्षणमिति । 'एककालं चरेद्भैक्षम्' इत्यादिनियमवशाददृष्टं सिध्यदुपवीतादिकमप्याक्षिपतीति चेन्नेत्याह—नियमेति । विविदिषोस्तदिष्टमपि नोपवीताद्याक्षेपक ज्ञानोत्पादकश्रवणाद्युपयोगिदेहस्थित्यर्थत्वेनैव चरितार्थत्वादिति भावः ।

तर्हि यथाकथंचिदुपनतेनान्नेन शरीरस्थितिसंभवाद्भिक्षाचर्यं चरन्तीति वाक्यं व्यर्थमिति शङ्कते—नियमादृष्टस्येति । भिक्षाचर्यानुवादेन प्रतिग्रहादिनिवृत्त्यर्थत्वाद्वाक्यस्य नाऽऽनर्थक्यमित्युत्तरमाह—नान्येति । निवृत्त्युपदेशेन वाक्यस्यार्थवत्त्वेऽपि तदुपदेशस्य नार्थवत्त्वं कूटस्थात्मज्ञानेनैव सर्वनिवृत्तेः सिद्धेरिति शङ्कते—तथाऽपीति । यदि निष्क्रियात्मज्ञानादशेषनिवृत्तिः स्यात्तर्हि तदस्माभिरपि स्वीक्रियते सत्यमित्यङ्गीकरोति—यदीति । यदि तु क्षुदादिदोषप्राबल्यादात्मानं निष्क्रियमपि विस्मृत्य प्रार्थनादिपरो भवति तदा निवृत्त्युपदेशोऽपि भवत्यर्थवानिति भावः । प्रागुक्तवाक्यविरोधान्निवृत्त्युपदेशोऽशक्य इति चेत्तत्राऽऽह—यानीति । मुख्यपरिव्राड्विषयत्वे दोषं स्मारयति—इतरथेति । निवृत्त्युपदेशानुग्राहकत्वेन स्मृतीरुदाहरति—निराशिषमित्यादिना । अमुख्यसंन्यासिविषयत्वासंभवान्मुख्यपरिव्राड्विषयं व्युत्थानवाक्यमित्युपसंहरति—तस्मादिति । इतिशब्दो व्युत्थानवाक्यव्याख्यानसमाप्त्यर्थः ।

तस्मादित्यादिवाक्यमवतार्य व्याचष्टे—यस्मादित्यादिना । उक्तमेव व्युत्थानं स्पष्टयति—दृष्टेति । विवेकवैराग्याभ्यामेषणाभ्यो व्युत्थाय श्रुत्याचार्याभ्यां कर्तव्यं ज्ञानं निःशेषं कृत्वा बाल्येन तिष्ठासेदिति व्यवहितेन संबन्धः । पाण्डित्यं निर्विद्येत्यनेनैव व्युत्थानं विहितमित्याह—एषणेति । तद्धि पाण्डित्यमेषणाभ्यो व्युत्थानस्यावसाने संभवति तदत्र व्युत्थानविधिरित्यर्थः । तदेव स्फुटयति—एषणेत्यादिना । तासां तिरस्कारेण पाण्डित्यमुद्भवति तस्यैषणाभ्यो विरुद्धत्वात्तथा च पाण्डित्यं निर्विद्येत्यत्र ताभ्यो व्युत्थानविधानमुचितमित्यर्थः । विनाऽपि व्युत्थानं पाण्डित्यमुद्भविष्यतीति चेन्नेत्याह—न हीति । पाण्डित्यं निर्विद्येत्यत्र व्युत्थानविधिमुक्तमुपसंहरति—इत्यात्मज्ञानेनेति । तर्हि

1. असाधनफलस्वभावः शुद्ध आत्मा न साधनं नापि फलं, अज्ञातः आत्मा मोक्षे प्रवृत्तस्य साधनं, ज्ञात आत्मा फलं इत्युपचारः आत्मन एकरूपत्वात् अज्ञानप्रयुक्तत्वात् साधनफलभावस्य । एषणालक्षणात् = एषणाप्रयुक्तात् । एषणातिरस्कारः तस्या निवृत्तिः । तेन पाण्डित्यं जायते यथार्थम् । विहित = आक्षिप्त ।

ज्ञानसमानकर्तृकक्त्वाप्रत्ययोपादानलिङ्गश्रुत्या दृढीकृतम्।

तस्मादेषणाभ्यो व्युत्थाय ज्ञानबलभावेन बाल्येन तिष्ठासेत्स्थातुमिच्छेत्। साधनफलाश्रयणं हि बलमितरेषामनात्मविदाम्। तद्बलं हित्वा विद्वानसाधनफलस्वरूपात्मविज्ञानमेव बलं तद्भावमेव केवलमाश्रयेत्। तदाश्रयणे हि करणान्येषणाविषय एनं हृत्वा स्थापयितुं नोत्सहन्ते। ज्ञानबलहीनं हि मूढं दृष्टादृष्टविषयायामेषणायामेवैनं
५ करणानि नियोजयन्ति। बलं नामाऽऽत्मविद्याऽशेषविषयदृष्टितिरस्करणम्। अतस्तद्भावेन बाल्येन तिष्ठासेत्। तथा "आत्मना विन्दते वीर्यम्" इति श्रुत्यन्तरात्। "नायमात्मा बलहीनेन लभ्यः" इति च।

बाल्यं च पाण्डित्यं च निर्विद्य निःशेषं कृत्वाऽथ मननान्मुनिर्योगी भवति। एतावद्धि ब्राह्मणेन कर्तव्यं यदुत सर्वानात्मप्रत्ययतिरस्करणमेतत्कृत्वा कृतकृत्यो योगी भवति। अमौनं चाऽऽत्मज्ञानानात्मप्रत्ययतिरस्कारौ पाण्डित्यबाल्यसंज्ञकौ निश्शेषं कृत्वा मौनं न मानात्मप्रत्ययतिरस्करणस्य पर्यवसानं फलं तच्च निर्विद्याथ ब्राह्मणः
१० कृतकृत्यो भवति। ब्रह्मैव सर्वमिति प्रत्यय उपजायते। स ब्राह्मणः कृतकृत्योऽतो ब्राह्मणः।

किमिति विदित्वा व्युत्थायेत्यत्र व्युत्थाने विधिरभ्युपगतस्तत्राऽऽह—आत्मज्ञानेति। तेन व्युत्थानस्य समानकर्तृकत्वे क्त्वाप्रत्ययस्योपादानमेव लिङ्गभूता श्रुतिस्तया दृढीकृतं नियमेन प्रापितं व्युत्थानमित्यर्थः।

बाल्येनेत्यादि वाक्यमुत्थाप्य व्याकरोति—तस्मादिति। विवेकादिवशादेषणाभ्यो व्युत्थाय पाण्डित्यं संपाद्य तस्मात्पाण्डित्याज्ज्ञानबलभावेन स्थातुमिच्छेदिति योजना। केयं ज्ञानबलभावेन स्थितिरित्याशङ्क्य तां व्युत्पादयति—
१५ साधनेत्यादिना। विद्वानिति विवेकित्वोक्तिः। यथोक्तबलभावावष्टम्भे करणानां विषयपारवश्यनिवृत्त्या पुरुषस्यापि तत्पारवश्यनिवृत्तिः फलतीत्याह—तदाश्रयणे हीति। उक्तमेवार्थं व्यतिरेकमुखेन विशदयति—ज्ञानबलेति। नन्वद्यापि ज्ञानस्य बलं कीदृगिति न ज्ञायते तत्राऽऽह—बलं नामेति। बाल्यवाक्यार्थमुपसंहरति—अत इति। यथा ज्ञानबलेन विषयाभिमुखी दृष्टिस्तिरस्क्रियते तथेति यावत्। आत्मना तद्विज्ञानातिशयेनेत्यर्थः। वीर्यं विषयदृष्टितिरस्करणसामर्थ्यमित्येतत्। बलहीनेन विषयदृष्टितिरस्करणसामर्थ्यरहितेनायमात्मा न लभ्यो न शक्यः साक्षात्कर्तुमित्यर्थः।

२० बाल्यं चेत्यादि वाक्यमादाय व्याचष्टे—बाल्यं चेति। पूर्वोक्तयोरुत्तरत्र हेतुत्वद्योतनार्थोऽथशब्दः। तदेवोपपादयति—एतावद्धीति। वाक्यान्तरमुत्थाप्य व्याकरोति—अमौनं चेत्यादिना। मौनामौनयोर्ब्राह्मण्यं प्रति सामग्रीत्वद्योतकोऽथशब्दः। ब्राह्मण्यमुपपादयति—ब्रह्मैवेति। आचार्यपरिचर्यापूर्वकं वेदान्तानां तात्पर्यावधारणं पाण्डित्यम्। युक्तितोऽनात्मदृष्टितिरस्कारो बाल्यम्। 'अहमात्मा परं ब्रह्म न मत्तोऽन्यदस्ति किंचन' इति मनसैवानुसंधानं मौनम्। महावाक्यार्थावगतिर्ब्राह्मण्यमिति विभागः।

---

२५ १. समानकर्तृकत्वाप्रत्ययेति—समानकर्तृकत्वस्य लिङ्गेऽन्वयः क्त्वाश्रुत्यैव दृढीकृतं व्युत्थानमित्यर्थ.। अत्र ब्रह्मसूत्रेषु अनाविष्कुर्वन्नन्वयात् (३-४-५०) इति सूत्रे बाल्यविषये विचारः कृतः। तदित्थ—तस्माद्ब्राह्मण पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत् इत्यत्र बाल्यं नाम बालस्य कृत्यं यथेष्टचेष्टत्वं वा परिग्राह्यं उत बालवत् भावशुद्धिः अप्ररूढेन्द्रियत्वं विधीयते इति संशये बालकृत्यस्य—कामचारकामवादकामभक्षादेर्विधाने धर्मशास्त्रविरोधात् धर्माविरुद्धं भावशुद्धिरूपं अप्ररूढेन्द्रियत्वं विधेयम्। तदुक्तं अनाविष्कुर्वन्न् .यात् ज्ञानाध्ययन-
३० धार्मिकत्वादिभि. आत्मानमनाविष्कुर्वन् दम्भदर्पादिरहितो भवेत् "यं न सन्तं न चासन्तं" "अन्धवज्जडवच्चैव" इत्यादिस्मृतेः। अन्वयात् प्रधानोपकार्यङ्गरूपार्थविधानेनान्वयात् इति। अत्र तु भाष्यकारै. अनात्मविषयदृष्टितिरस्करणं बाल्यमित्यभिधाय सूत्रोक्तार्थ एव दृढीकृतः। वार्तिके—पुत्रैषणायाश्च वित्तैषणायाश्चेत्यादौ वार्तिके देवतोपासनं वित्त तस्य दैववित्तत्वेन प्रथमाध्याये उक्तेः। अपि च नित्यकर्मप्रवृत्त्यर्थमुद्यमो वित्तम्। गवादिविषया एषणा तु काम्यकर्मारम्भायोद्यम. इत्याहुः। व्युत्थानं विरुद्धतया न्याय्यात्सन्मार्गादुत्थानं एषणा-
३५ प्रतिकूलतयेत्यर्थः। अत्र श्रवणमननशब्दितबाल्यपाण्डित्याभ्यां तृतीयं निदिध्यासनं वार्तिकमते तत्त्वपदार्थचिन्तनं। ध्यानस्यानपेक्षणात् इति मैत्रेयीब्राह्मणार्थः।

अथ तृतीयाध्यायस्य षष्ठं ब्राह्मणम्

**अथ हैनं गार्गी वाचक्नवी पप्रच्छ याज्ञवल्क्येति होवाच यदिदँ सर्वमप्स्वोतं च प्रोतं च कस्मिन्नु खल्वाप ओताश्च प्रोताश्चेति वायौ गार्गीति कस्मिन्नु खलु वायुरोतश्च प्रोतश्चेत्यन्तरिक्षलोकेषु गार्गीति**

निरुपचरितं हि तदा तस्य ब्राह्मण्यं प्राप्तमत आह–स ब्राह्मणः केन स्यात्केन चरणेन भवेद्येन स्याद्येन ५ चरणेन भवेत्तेनेदृश एवायम्। येन केनचिच्चरणेन स्यात्तेनेदृश एवोक्तलक्षण एव ब्राह्मणो भवति। येन केन चिच्चरणेनेति स्तुत्यर्थं येयं ब्राह्मण्यावस्था सेयं स्तूयते न तु चरणेऽनादरः। अत एतस्मात्ब्राह्मण्यावस्थानावश-नायाद्यतीतात्मस्वरूपा्दन्यत्प्रमादन्यदविद्याविषयमेषणालक्षणं वस्त्वन्तरमार्तं विनाश्यार्तिपरिगृहीतं स्वप्नमाया-मरीच्युदकसममसारमात्मैवैकः केवलो नित्यमुक्त इति। ततो ह कहोलः कौषीतकेय उपरराम ॥१॥

इति बृहदारण्यकोपनिषद्भाष्ये तृतीयाध्यायस्य पञ्चमं ब्राह्मणम् ॥५॥ १०

यत्साक्षादपरोक्षाद्ब्रह्म सर्वान्तर आत्मेत्युक्तं तस्य सर्वान्तरस्य स्वरूपाधिगमायाऽऽशाकल्यब्राह्मणाद्ग्रन्थ आरभ्यते। पृथिव्यादीनि ह्याकाशान्तानि भूतान्यन्तर्बहिर्भावेन व्यवस्थितानि तेषां यद्बाह्यं बाह्यमधिगम्याधिगम्य निराकुर्वन्द्रष्टुः साक्षात्सर्वान्तरोऽगौण आत्मा सर्वसंसारधर्मविनिर्मुक्तो दर्शयितव्य इत्यारम्भः। अथ हैनं गार्गी नामतो वाचक्नवी वचक्नोर्दुहिता पप्रच्छ याज्ञवल्क्येति होवाच। यदिदं सर्वं पार्थिवं धातुजातमप्सूदक ओतं च प्रोतं चोतं दीर्घपटतन्तुवत्प्रोतं तिर्यक्तन्तुवद्विपरीतं वा। अद्भिः सर्वतोऽन्तर्बहिर्भूताभिर्व्याप्तमित्यर्थः। अन्यथा सक्तुमुष्टि- १५ वद्विशीर्येत। इदं तावदनुमानमुपन्यस्तम्। यत्कार्यं परिच्छिन्नं स्थूलं कारणेनापरिच्छिन्नेन सूक्ष्मेण व्याप्तमिति

प्रागपि प्रसिद्धं ब्राह्मण्यमिति चेत्तत्राऽऽह—निरुपचरितमिति। ब्रह्मविदः समाचारं पृच्छति—स इति। अनियतं तस्य चरणमित्युत्तरमाह—येनेति। उक्तलक्षणत्वं कृतकृत्यत्वम्। अव्यवस्थितं चरणमिच्छतो ब्रह्मविदो यथेष्टचेष्टाऽभीष्टा स्यात्तथा च 'यद्यदाचरति श्रेष्ठः' इति स्मृतेरितरेषामप्याचारेऽनादरः स्यादित्याशङ्क्याऽऽह—येन केनचिदिति। विहितमाचरतो निषिद्धं च त्यजतः शुद्धबुद्धेः श्रुताद्वाक्यात्सम्यग्धीरुत्पद्यते तस्य च वासनावशाद्व्यव- २० स्थितैव चेष्टा नाव्यवस्थितेति न यथेष्टाचरणप्रयुक्तो दोष इत्यर्थः। अतोऽन्यदित्यादि व्याकरोति—अत इति। स्वप्नेत्यादि बहुदृष्टान्तोपादानं दार्ष्टान्तिकस्य बहुरूपत्वद्योतनार्थम्। अतोऽन्यदिति कुतो विशेषणमित्याशङ्क्याऽऽह—आत्मैवेति ॥१॥

इति बृहदारण्यकोपनिषद्भाष्यटीकायां तृतीयाध्यायस्य पंचमं कहोलब्राह्मणम् ॥५॥

पूर्वब्राह्मणयोरात्मनः सर्वान्तरत्वमुक्तं तन्निर्णयार्थमुत्तरं ब्राह्मणत्रयमिति संगतिमाह—यत्साक्षादिति। २५ उक्तमेव संबन्धं विवृणोति—पृथिव्यादीनीति। अन्तर्बहिर्भावेन सूक्ष्मस्थूलतारतम्यक्रमेणेत्यर्थः। बाह्यं बाह्यमिति वीप्सोपरिष्टात्तच्छब्दो द्रष्टव्यो यत्तदोर्नित्यसंबन्धात्। निराकुर्वन्यथा मुमुक्षुः सर्वान्तरमात्मानं प्रतिपद्यते तथा स यथोक्तविशेषणो दर्शयितव्य इत्युत्तरग्रन्थारम्भ इति योजना। कहोलप्रश्ननिर्णयानन्तर्यमथशब्दार्थः। यत्पार्थिवं धातुजातं तदिदं सर्वमप्स्वित्यादि योजनीयम्। पदार्थमुक्त्वा वाक्यार्थमाह—अद्भिरिति। पार्थिवस्य धातुजातस्याद्भि-र्व्याप्त्यभावे दोषमाह—अन्यथेति। किमत्र गार्ग्या विवक्षितमिति तदाह—इदं तावदिति। तदेव दर्शयितुं व्याप्तिमाह— ३० यत्कार्यमिति। कारणेन व्यापकेनेति शेषः। यत्कार्यं तत्कारणेन व्याप्तं यत्परिच्छिन्नं तद्व्यापकेन व्याप्तं यच्च स्थूलं

१. वार्तिके स ब्राह्मणः केन स्यादिति प्रश्नः सम्यग् ज्ञानयज्ञादिभिन्नं किं तस्य मुक्तौ साधनमिति। समाधानं तु येन स्यादिति—येन ब्राह्मणीनिर्व्यापारः स्यात्। सर्वकर्मत्यागः पारमहंस्यं ब्राह्मणो भवति न त्वन्यदपेक्ष्यते (वा) अथवा केन स्यादित्याक्षेपः ज्ञानातिरिक्तहेतूनामभावात् न केनापि स्यादित्यर्थः न मुक्त्यर्थं साधनान्तरमित्यर्थः येन केनापि साधनेन ईदृग एव स्यात् आकाशवदेकरूप्यादित्यर्थः। अथवा विदुषो मुक्तस्य लक्षणं केनेति प्रश्नः ३५ येन स्यादिति समाधानं ईदृग एव स्यात् स्वरूपमेव तल्लक्षणम्। अमानित्वादिकं तु व्यवहारावस्थस्यैव।

कस्मिन्नु खल्वन्तरिक्षलोका ओताश्च प्रोताश्चेति गन्धर्वलोकेषु गार्गीति कस्मिन्नु खलु गन्धर्वलोका ओताश्च प्रोताश्चेत्यादित्यलोकेषु गार्गीति कस्मिन्नु खल्वादित्यलोका ओताश्च प्रोताश्चेति चन्द्रलोकेषु गार्गीति कस्मिन्नु खलु चन्द्रलोका ओताश्च प्रोताश्चेति नक्षत्रलोकेषु गार्गीति कस्मिन्नु खलु नक्षत्रलोका ओताश्च प्रोताश्चेति

५ देवलोकेषु गार्गीति कस्मिन्नु खलु देवलोका ओताश्च प्रोताश्चेतीन्द्रलोकेषु गार्गीति कस्मिन्नु खल्विन्द्रलोका ओताश्च प्रोताश्चेति प्रजापतिलोकेषु गार्गीति कस्मिन्नु खलु प्रजापतिलोका ओताश्च प्रोताश्चेति ब्रह्मलोकेषु गार्गीति कस्मिन्नु खलु ब्रह्मलोका ओताश्च प्रोताश्चेति स होवाच गार्गि माऽतिप्राक्षीर्मा ते मूर्धा व्यपप्तदनतिप्रश्न्यां वै देवतामतिपृच्छसि गार्गि मातिप्राक्षीरिति ततो ह गार्गी वाचक्नव्युपरराम ॥१॥

१० इति बृहदारण्यकोपनिषदि तृतीयाध्याये षष्ठं ब्राह्मणम् ॥६॥

दृष्टम् । यथा पृथिव्यद्भिस्तथा पूर्वं पूर्वमुत्तरेणोत्तरेण व्यापिना भवितव्यमित्येष आ सर्वान्तरादात्मनः प्रश्नार्थः ।

तत्र भूतानि पञ्च संहतान्येवोत्तरमुत्तरं सूक्ष्मभावेन व्यापकेन कारणरूपेण च व्यवतिष्ठन्ते । न च परमात्मनोऽर्वाक्तद्व्यतिरेकेण वस्त्वन्तरमस्ति । "सत्यस्य सत्यम्" इति श्रुतेः । सत्यं च भूतपञ्चकं सत्यस्य सत्यं च पर आत्मा कस्मिन्नु खल्वाप ओताश्च प्रोताश्चेति । तासामपि कार्यत्वात्स्थूलत्वात्परिच्छिन्नत्वाच्च क्वचिद्व्योतप्रोत-
१५ भावेन भवितव्यम् । क्व तासामोतप्रोतभाव इत्येवमुत्तरोत्तरप्रश्नप्रसङ्गो योजयितव्यः । वायौ गार्गीति । नन्वग्ना-विति वक्तव्यम् । नैष दोषः । अग्नेः पार्थिवं वाऽऽप्यं वा धातुमनाश्रित्येतरभूतवत्स्वातन्त्र्येणाऽऽत्मलाभो नास्तीति तस्मिन्नोतप्रोतभावो नोपदिश्यते । कस्मिन्नु खलु वायुरोतश्च प्रोतश्चेत्यन्तरिक्षलोकेषु गार्गीति । तान्येव भूतानि संहतान्यन्तरिक्षलोकास्तान्यपि गन्धर्वलोकेषु गन्धर्वलोका आदित्यलोकेष्वादित्यलोकाश्चन्द्रलोकेषु चन्द्रलोका नक्षत्रलोकेषु नक्षत्रलोका देवलोकेषु देवलोका इन्द्रलोकेष्विन्द्रलोका विराट्शरीरारम्भकेषु भूतेषु प्रजापतिलोकेषु प्रजापति-
२० लोका ब्रह्मलोकेषु ब्रह्मलोका नामाण्डारम्भकाणि भूतानि । सर्वत्र हि सूक्ष्मतारतम्यक्रमेण प्राण्युपभोगाश्रयाकारपरिणतानि भूतानि संहतानि तान्येव पञ्चेति बहुवचनभाञ्जि । कस्मिन्नु खलु ब्रह्मलोका ओताश्च प्रोताश्चेति स होवाच याज्ञवल्क्यो हे गार्गि माऽतिप्राक्षीः स्वं प्रश्नं न्यायप्रकारमतीत्याऽऽगमेन प्रष्टव्यां देवतामनुमानेन मा प्राक्षीरित्यर्थः पृच्छन्त्याश्च मा ते तव मूर्धा शिरो व्यपप्तद्विस्पष्टं पतेत् । देवतायाः स्वप्रश्न आगमविषयस्त प्रश्नविषयतत्सूक्ष्मेण व्याप्तमिति त्रिप्रकारा व्याप्तिः । इतिशब्दस्तत्समाप्त्यर्थः । व्याप्तिभूमिमाह—यथेति । सप्रत्यनुमानमाह—
२५ तथेति । पूर्वं पूर्वमित्यबादेर्धर्मिणो निर्देशः । उत्तरेणोत्तरेण वाय्यादिकारणेनापरिच्छिन्नेन सूक्ष्मेण व्याप्तमिति शेषः । विमतं कारणेन व्यापकेन सूक्ष्मेण व्याप्तं कार्यत्वात्परिच्छिन्नत्वात्स्थूलत्वाच्च पृथिवीवदित्यर्थः । सर्वान्तरादात्मनोऽर्वागुक्तन्यायं सर्वत्र संचारयति—इत्येष इति ।

ननु तथाऽपि भूतपञ्चकव्यतिरिक्तानां गन्धर्वलोकादीनामप्यान्तरत्वेनोपदेशात्कथं भूतपञ्चकव्युदासेन सर्वान्तरप्रतिपत्तिर्विवक्षितेति तत्राऽऽह—तत्रेति । उक्तनीत्या प्रश्नार्थे स्थिते सतीति यावत् । भूतात्मस्थितिनिर्धारणे वा
३० सप्तमी । अथ परमात्मानं भूतानि च हित्वा पृथगेव गन्धर्वलोकादीनि वस्त्वन्तराणि भविष्यन्ति नेत्याह—न चेति । गन्धर्वलोकादीन्यपि भूतानामेवावस्थाविशेषास्ततः सत्यं भूतपञ्चकं तस्य सत्यं परं ब्रह्म नान्यदन्तराले प्रतिपत्तव्यमित्यन्यप्रतिषेधार्थौ च शब्दौ । तात्पर्यमुक्त्वा प्रश्नमुत्थाप्य तदक्षराणि व्याकरोति—कस्मिन्नित्यादिना । कस्मिन्नु खलु वायुरित्यादावुक्तन्यायमतिदिशति—एवमिति । वायावित्ययुक्ता प्रत्युक्तिरपामग्निकार्यत्वादग्नाविति वक्तव्यत्वादिति शङ्कते—नन्विति । अग्नेरुदकव्यापकत्वेऽपि काष्ठविद्युदादिपारतन्त्र्यात्स्वतन्त्रेण केनचिदपां व्याप्तिर्वक्तव्येत्यग्निं हित्वा
३५ तत्कारणं वायावित्युक्तं वायोश्च स्वकारणतन्त्रत्वेऽपि नोदकतन्त्रतेति तद्व्यापकत्वसिद्धिरित्युत्तरमाह—नैष दोष इत्यादिना । अन्तरिक्षलोकशब्दार्थमाह—तान्येवेति । प्रजापतिलोकशब्दार्थं कथयति—विराडिति । अन्तरिक्षलोकादीनां प्रत्येकमेकत्वात्कुतो बहुवचनमित्याशङ्क्याऽऽह—सर्वत्र हीति । पूर्ववदनुमानेन सूत्रं पृच्छन्ती गार्गी प्रतिषेधति—स होवाचेत्यादिना । उक्तमेव स्पष्टयन्नाक्षरार्थमाह—आगमेनेति । प्रतिषेधातिक्रमे दोषमाह—पृच्छन्त्याश्चेति ।

अथ तृतीयाध्यायस्य सप्तमं ब्राह्मणम्

अथ हैनमुद्दालक आरुणिः पप्रच्छ याज्ञवल्क्येति होवाच मद्रेष्ववसाम पतञ्चलस्य काप्यस्य गृहेषु यज्ञमधीयानास्तस्यासीद्भार्या गन्धर्वगृहीता तमपृच्छाम कोऽसीति सोऽब्रवीत्कबन्ध आथर्वण इति सोऽब्रवीत्पतञ्चलं काप्यं याज्ञिकाँश्च वेत्थ नु त्वं काप्य तत्सूत्रं येनायं च लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानि भवन्तीति सोऽब्रवीत्पतञ्चलः काप्यो नाहं तद्भगवन्वेदेति सोऽब्रवीत्पतञ्चलं काप्यं याज्ञिकाँश्च वेत्थ नु त्वं काप्य तमन्तर्यामिणं य इमं च लोकं परं च लोकँ सर्वाणि च भूतानि योऽन्तरो यमयतीति सोऽब्रवीत्पतञ्चलः काप्यो नाहं तं भगवन्वेदेति सोऽब्रवीत्पतञ्चलं काप्यं याज्ञिकाँश्च यो वै तत्काप्य सूत्रं विद्यात्तं चान्तर्यामिणमिति स ब्रह्मवित्स लोकवित्स देववित्स वेदवित्स भूतवित्स   ५ . १०

मतिक्रान्तो गार्ग्याः प्रश्न आनुमानिकत्वात्स यस्या देवतायाः प्रश्नः साऽतिप्रश्न्या नातिप्रश्न्याऽनतिप्रश्न्या स्वप्रश्नविषयैव केवलागमगम्येत्यर्थः। तामनतिप्रश्न्यां वै देवतामतिपृच्छसि। अतो गार्गि माऽतिप्राक्षीर्मर्तुं चेन्नेच्छसि ततो ह गार्गी वाचक्नव्युपरराम ॥१॥

इति बृहदारण्यकोपनिषद्भाष्ये तृतीयाध्यायस्य षष्ठं ब्राह्मणम् ॥६॥

इदानीं ब्रह्मलोकानामन्तरतमं सूत्रं वक्तव्यमिति तदर्थ आरम्भः तच्चाऽऽगमेनैव प्रष्टव्यमितीतिहासेनाऽऽगमोपन्यासः क्रियते–अथ हैनमुद्दालको नामतोऽरुणस्यापत्यमारुणिः पप्रच्छ याज्ञवल्क्येति होवाच। मद्रेषु देशेष्ववसामोषितवन्तः पतञ्चलस्य पतञ्चलो नामतस्तस्यैव कपिगोत्रस्य काप्यस्य गृहेषु यज्ञमधीयाना यज्ञशास्त्राध्ययनं कुर्वाणाः। तस्याऽऽसीद्भार्या गन्धर्वगृहीता तमपृच्छाम कोऽसीति। सोऽब्रवीत्कबन्धो नामतोऽथर्वणोऽपत्यमाथर्वण इति। १५

सोऽब्रवीद्गन्धर्वं पतञ्चलं काप्यं याज्ञिकांश्च तच्छिष्यान्वेत्थ नु त्वं हे काप्य जानीषे तत्सूत्रम्। किं तत्। येन सूत्रेणायं च लोक इदं च जन्म परश्च लोकः परं च प्रतिपत्तव्यं जन्म सर्वाणि च भूतानि ब्रह्मादिस्तम्बपर्यन्तानि संदृब्धानि संग्रथितानि स्रगिव सूत्रेण विष्टब्धानि भवन्ति येन तत्किं सूत्रं वेत्थ। सोऽब्रवीदेवं पृष्टः काप्यो नाहं तद्भगवन्वेदेति तत्सूत्रं नाहं जाने हे भगवन्निति सम्पूजयन्नाह। सोऽब्रवीत्पुनर्गन्धर्व उपाध्यायमस्मांश्च वेत्थ नु त्वं काप्य तमन्तर्यामिणमन्तर्यामीति विशेष्यते। य इमं च लोकं परं च लोकं सर्वाणि च भूतानि योऽन्तरोऽभ्यन्तरः सन्यमयति नियमयति दारुयन्त्रमिव भ्रामयति स्वं स्वमुचितव्यापारं कारयतीति। सोऽब्रवीदेवमुक्तः पतञ्चलः काप्यो नाहं तं जाने भगवन्निति सम्पूजयन्नाह। २० २५

सोऽब्रवीत्पुनर्गन्धर्वः सूत्रतदन्तर्गतान्तर्यामिणोर्विज्ञानं स्तूयते। यः कश्चिद्वै तत्सूत्रं हे काप्य विद्याद्विजानीयात्तं चान्तर्यामिणं सूत्रान्तर्गतं तस्यैव सूत्रस्य नियन्तारं विद्याच्च इत्येवमुक्तेन प्रकारेण स हि ब्रह्मवित्परमात्मवित्स लोकांश्च भूरादीनन्तर्यामिणा नियम्यमानांल्लोकान्वेत्ति स देवांश्चाग्न्यादींल्लोकिनो जानाति वेदांश्च सर्वप्रमाणभूतान्वेत्ति भूतानि च ब्रह्मादीनि सूत्रेण ध्रियमाणानि तदन्तर्गतेनान्तर्यामिणा नियम्यमानानि वेत्ति स आत्मानं च मूर्धपातप्रसङ्गं प्रकटयन्प्रतिपेवमुपसंहरति—देवताया इत्यादिना ॥१॥ ३०

इति बृहदारण्यकोपनिषद्भाष्यटीकायां तृतीयाध्यायस्य षष्ठं गार्गिब्राह्मणम् ॥६॥

पूर्वस्मिन्ब्राह्मणे सूत्रादर्वाक्तनं व्यापकमुक्तमिदानीं सूत्रं तदन्तर्गतमन्तर्यामिणं च निर्वक्तुमुत्तरब्राह्मणमिति संगतिमाह—इदानीमिति। ब्राह्मणतात्पर्यमुक्त्वाऽऽख्यायिकातात्पर्यमाह—तच्चाऽऽगमेनैवेति। आचार्योपदेशोऽत्राऽऽगमशब्दार्थः। गार्ग्या मूर्धपातभयादुपरतेरनन्तरमित्यथशब्दार्थः।

सोऽब्रवीदिति प्रतीकोपादानं तस्य तात्पर्यमाह—सूत्रेति। इतिशब्दार्थमाह—एवमिति। येनायं चेत्यादिरुक्तः प्रकारः स सर्वलोकांश्च वेत्तीति संबन्धः। विशेषणोक्तिपूर्वकं तानेव लोकाननुवदति—भूरादीनिति। स ब्रह्मविदित्या- ३५

आत्मवित्स सर्वविदिति तेभ्योऽब्रवीत्तदहं वेद तच्चेत्त्वं याज्ञवल्क्य सूत्रमविद्वांस्तं
चान्तर्यामिणं ब्रह्मगवीरुदजसे मूर्धा ते विपतिष्यतीति वेद वा अहं गौतम तत्सूत्रं तं
चान्तर्यामिणमिति यो वा इदं कश्चिद्ब्रूयाद्वेद वेदेति यथा वेत्थ तथा ब्रूहीति ॥१॥

स होवाच वायुर्वै गौतम तत्सूत्रं वायुना वै गौतम सूत्रेणायं च
५ लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानि भवन्ति
तस्माद्वै गौतम पुरुषं प्रेतमाहुर्व्यस्रंसिषतास्याङ्गानीति वायुना हि
गौतम सूत्रेण संदृब्धानि भवन्तीत्येवमेवैतद्याज्ञवल्क्यान्तर्यामिणं ब्रूहीति ॥२॥

कर्तृत्वभोक्तृत्वविशिष्टं तेनैवान्तर्यामिणा नियम्यमानं वेत्ति सर्वं च जगत्तथाभूतं वेत्तीत्येवं स्तुते सूत्रान्तर्यामिविज्ञाने
प्रलुब्धः काप्योऽभिमुखीभूतो वयं च तेभ्यश्चास्मभ्यमभिमुखीभूतेभ्योऽब्रवीद्गन्धर्वः सूत्रमन्तर्यामिणं च। तदहं
१० सूत्रान्तर्यामिविज्ञानं वेद गन्धर्वाल्लब्धागमः सन्। तच्चेद्याज्ञवल्क्य सूत्रं तं चान्तर्यामिणमविद्वांश्चेदब्रह्मवित्सन्यदि
ब्रह्मगवीरुदजसे ब्रह्मविदां स्वभूता गा उदजस उन्नयसि त्वमन्यायेन ततो मच्छापदग्धस्य मूर्धा शिरस्ते तव
विस्पष्टं पतिष्यति। एतमुक्तो याज्ञवल्क्य आह—वेद जानाम्यहं हे गौतमेति गोत्रतस्तत्सूत्रं यद्गन्धर्वस्तुभ्यमुक्त-
वान्यं चान्तर्यामिणं गन्धर्वाद्विदितवन्तो यूयं तं चान्तर्यामिणं वेदाहमित्येवमुक्ते प्रत्याह गौतमो यः कश्चित्प्राकृत इदं
यत्त्वयोक्तं ब्रूयात्कथं वेद वेदेत्यात्मानं श्लाघयन्किं तेन गर्जितेन कार्येण दर्शय यथा वेत्थ तथा ब्रूहीति ॥१॥

१५ स होवाच याज्ञवल्क्यः। ब्रह्मलोका यस्मिन्नोताश्च प्रोताश्च वर्तमाने काले यथा पृथिव्यप्सु तत्सूत्रमागम-
गम्यं वक्तव्यमिति तदर्थं प्रश्नान्तरमुत्थापितमतस्तन्निर्णयायाऽऽह—वायुर्वै गौतम तत्सूत्रं नान्यद्वायुरिति सूक्ष्ममा-
काशवद्विष्टम्भकं पृथिव्यादीनां यदात्मकं सप्तदशविधं लिङ्गं कर्मवासनासमवायि प्राणिनां यत्तत्समष्टिव्यष्ट्यात्मकं
यस्य बाह्या भेदाः सप्तसप्त मरुद्गणाः समुद्रस्येवोर्मयस्तदेतद्वायव्यं तत्त्वं सूत्रमित्यभिधीयते। वायुना वै गौतम
सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानि भवन्ति संग्रथितानि भवन्तीति प्रसिद्धमेतत्। अस्ति
२० च लोके प्रसिद्धिः। कथं यस्माद्वायु. सूत्रं वायुना विधृतं सर्वं तस्माद्वै गौतम पुरुषं प्रेतमाहुः कथयन्ति व्यस्रंसिषत
विस्रस्तान्यस्य पुरुषस्याङ्गानीति। सूत्रापगमे हि मण्यादीनां प्रोतानामवस्रंसनं दृष्टमेव वायुः सूत्रं तस्मिन्मणिवत्
प्रोतानि यद्यस्याङ्गानि स्युस्ततो युक्तमेतद्वाय्वपगमेऽवस्रंसनमङ्गानाम्। अतो वायुना हि गौतम सूत्रेण संदृब्धानि
भवन्तीति निगमयति। एवमेवैतद्याज्ञवल्क्य सम्यगुक्तं सूत्रं तदन्तर्गतं त्विदानीं तस्यैव सूत्रस्य नियन्तारमन्तर्यामिणं
ब्रूहीत्युक्त आह ॥२॥

२५ दिनोक्तं सक्षिपति—सर्वं चेति। तथाभूत सूत्रेण विधृतमन्तर्यामिणा च नियम्यमानमिति यावत्। प्रस्तुतस्तुतिप्रयोजन-
माह—इत्येवमिति। भवत्वेव तव सूत्रादिज्ञान मम किमायातमित्याशङ्क्याऽऽह—तच्चेदिति। किं तेनेत्यत्र तस्येत्य-
ध्याहारः। कार्येण दर्शयेत्युक्तं विवृणोति—यथेति ॥१॥

याज्ञवल्क्योक्तेस्तात्पर्यमाह—ब्रह्मलोका इति। इत्यभीष्टमागमविदामित्यध्याहृत्याऽऽद्यस्येतिशब्दस्य योजना।
प्रश्नान्तरं सूत्रविषयं गौतमवाक्यम्। वैशब्दार्थमाह—नान्यदिति। सूक्ष्मत्वे दृष्टान्तमाह—आकाशवदिति। वायुमेव
३० विशिनष्टि—यदात्मकमिति। पञ्च भूतानि दश बाह्यानीन्द्रियाणि पञ्चवृत्तिः प्राणश्चतुर्विधमन्त.करणमिति सप्तदश-
विधत्वम्। कर्मणा वासनाना चोत्तरसृष्टिहेतूना प्राणिभिरर्जितानामाश्रयत्वादपेक्षितमेव लिङ्गमित्याह—कर्मेति। तस्यैव
सामान्यविशेषात्मना बहुरूपत्वमाह—यत्तदिति। तस्यैव लोकपरीक्षकप्रसिद्धत्वमाह—यस्येति। तस्य सूत्रत्व साधयति—
वायुनेति। प्रसिद्धमेतत्सूत्रविदामिति शेषः। लौकिकी प्रसिद्धिमेव प्रश्नपूर्वकमनन्तरश्रुत्यवष्टम्भेन स्पष्टयति—कथमित्या-
दिना। उक्तमेव दृष्टान्तेन व्यनक्ति—सूत्रेत्यादिना। वायोः सूत्रत्वे सिद्धे फलितमाह—अत इति ॥२॥

य: पृथिव्यां तिष्ठन्पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी
शरीरं य: पृथिवीमन्तरो यमयत्येष त आत्मान्तर्याम्यमृत: ॥३॥

योऽप्सु तिष्ठन्नद्भ्योऽन्तरो यमापो न विदुर्यस्याप: शरीरं
योऽपोऽन्तरो यमयत्येष त आत्मान्तर्याम्यमृत: ॥४॥

य: पृथिव्यां तिष्ठन्भवति सोऽन्तर्यामी। सर्व: पृथिव्यां तिष्ठतीति सर्वत्र प्रसङ्गो मा भूदिति विशिनष्टि—पृथिव्या अन्तरोऽभ्यन्तर:। तत्रैतत्स्यात् पृथिवीदेवतैवान्तर्यामीत्यत आह—यमन्तर्यामिणं पृथिवी देवताऽपि न वेद मय्यन्य: कश्चिद्वर्तत इति। यस्य पृथिवी शरीरं यस्य च पृथिव्येव शरीरं नान्यत्पृथिवीदेवताया यच्छरीरं तदेव शरीरं यस्य। शरीरग्रहणं चोपलक्षणार्थं करणं च पृथिव्यास्तस्य। स्वकर्मप्रयुक्तं हि कार्यं करणं च पृथिवीदेवताया:। तदस्य स्वकर्माभावादन्तर्यामिणो नित्यमुक्तत्वात्। परार्थकर्तव्यतास्वभावत्वात्परस्य यत्कार्यं करणं च तदेवास्य न स्वतस्तदाह—यस्य पृथिवी शरीरमिति। देवताकार्यकरणस्येश्वरसाक्षिमात्रसांनिध्येन हि नियमेन प्रवृत्तिनिवृत्ती स्याताम्। य ईदृगीश्वरो[3] नारायणाख्य: पृथिवीं पृथिवीदेवतां यमयति नियमयति स्वव्यापारेऽन्तरोऽभ्यन्तरस्तिष्ठन्नेष त आत्मा ते तव मम च सर्वभूतानां चेत्युपलक्षणार्थमेतदन्तर्यामी यस्त्वया पृष्टोऽमृत: सर्वसंसारधर्मवर्जित इत्येतत् ॥३॥

समानमन्यत्। योऽप्सु तिष्ठन्नग्नावन्तरिक्षे वायौ दिव्यादित्ये दिक्षु चन्द्रतारक आकाशे यस्तमस्यावरणात्मके बाह्ये तमसि तेजसि तद्विपरीते प्रकाशसामान्य इत्येवमधिदैवतमन्तर्यामिविषयं दर्शनं देवतासु। अथाधिभूतं भूतेषु ब्रह्मादिस्तम्बपर्यन्तेष्वन्तर्यामिदर्शनमधिभूतम् ॥४-१४॥

नियन्तुरीश्वरस्य लौकिकनियन्तृवत्कार्यकरणवत्त्वमाशङ्क्याऽऽह—यस्य चेति। पृथिव्या: शरीरत्वमेव न तु शरीरवत्त्वमित्याशङ्क्याऽऽह—पृथिवीति। पृथिव्या यत्करणं तदेव तस्य करणं चेति योजना। कथं पृथिव्या: शरीरेन्द्रियवत्त्वं तदाह—स्वकर्मेति। अन्तर्यामिणोऽपि तथा किं न स्यात्तत्राऽऽह—तदस्येति। अस्यान्तर्यामिणस्तदेव कार्यं करणं च नान्यदित्यत्र हेतुमाह—स्वकर्मेति। तदेव हेत्वन्तरेण स्फोरयति—परार्थेति। य: पृथिवीमित्यादिवाक्यस्य तात्पर्यमाह—देवतेति। तत्र वाक्यमवतार्य व्याचष्टे—य इदृगिति। नियम्यपृथिवीदेवताकार्यकरणाभ्यामेव कार्यकरणवत्त्वमीदृशत्वम् ॥३॥

पृथिवीपर्याये दर्शितं न्यायं पर्यायान्तरेष्वतिदिशति—समानमिति ॥४-१४॥

१. अन्तर्याम्यधिकरणे ( ब्र० सू० १-२-१७ ) विचारितम् अन्तर्यामी अधिभूताधिदैवाध्यात्मादिषु नियामकत्वेन निर्दिष्ट: किं देवतात्मा, उत प्राप्ताणिमाद्यैश्वर्य: जीव: उत परमात्मा इति अपूर्वसंज्ञादर्शनात् संशय: अन्तर्यमनयोगात् अन्तर्यामीति प्रसिद्ध: देवता स्यात् तस्या: पृथिव्यादिषु स्थित्वा पृथिव्यादिनियामकत्वोपपत्ते: । यदि यं पृथिवी न वेद इति पृथिवीदेवताया अज्ञेयत्वमुच्यमानं तस्या न संभवति स्वस्य स्वसत्ताया संशयाभावादित्युच्यते । तदा अणिमाद्यैश्वर्ययुक्त: कश्चिद्योगी भवतु इति पूर्वपक्षे सिद्धान्त: अन्तर्याम्यधिदेवादिषु तद्धर्मव्यपदेशात्-पृथिव्याद्यन्तर्यामी परमात्मा तस्य सर्वकारणत्वात् पृथिव्याद्यन्तस्तिष्ठन् पृथिव्यादिनियमनमुपपद्यते अदृष्ट: अश्रुत इति च परमात्मनि उपपद्यते । न चाशरीरस्य कथं नियामकत्वं पृथिव्यादिरूपशरीरेणैव तस्य शरीरादिमत्त्वात् । नापि प्रधानमन्तर्यामी अदृष्टादिव्यपदेशसभवेऽपि द्रष्टृत्वादिव्यापदेशासभवात् । नापि जीव: यो विज्ञाने तिष्ठन् य आत्मनि तिष्ठन् इति काण्वमाध्यन्दिनपाठयो: विज्ञानमन्तरो यमयति य आत्मानमन्तरो यमयतीति जीवस्य अन्तर्यामिनियम्यत्वेन व्यपदेशात् ।

२. ईश्वर. साक्ष्यादि । ईश्वर: सर्व सन्निधिमात्रेण नियमयति श्रोत्रस्य श्रोत्रं मनसो मन इत्यादिश्रुते: केनेषितं पतति प्रेषित मन इति प्रश्नोत्तरत्वेनानुक्रमणात् ।

३. ईश्वरो नारायणाख्य इति नियमनस्य स्थितिहेतुत्वरूपत्वात् विष्णोश्च तथात्वात् । अनेनान्तर्यामी सगुणब्रह्मस्वरूप इति स्पष्टं प्रधानं तु अदृष्टत्वान्वयेऽपि द्रष्टृत्वानन्वयात् नान्तर्यामी ।

योऽग्नौ तिष्ठन्नग्नेरन्तरो यमग्निर्न वेद यस्याग्निः
शरीरं योऽग्निमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥ ५ ॥
योऽन्तरिक्षे तिष्ठन्नन्तरिक्षादन्तरो यमन्तरिक्षं न वेद यस्यान्तरिक्षँ-
शरीरं योऽन्तरिक्षमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ ६ ॥
यो वायौ तिष्ठन्वायोरन्तरो यं वायुर्न वेद यस्य वायुः
शरीरं यो वायुमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥ ७ ॥
यो दिवि तिष्ठन्दिवोऽन्तरो यं द्यौर्न वेद यस्य द्यौः शरीरं
यो दिवमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥ ८ ॥
य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद यस्यादित्यः
शरीरं य आदित्यमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥ ९ ॥
यो दिक्षु तिष्ठन्दिग्भ्योऽन्तरो यं दिशो न विदुर्यस्य दिशः
शरीरं यो दिशोऽन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥१०॥
यश्चन्द्रतारके तिष्ठँश्चन्द्रतारकादन्तरो यं चन्द्रतारकं न वेद यस्य चन्द्र-
तारकँ शरीरं यश्चन्द्रतारकमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥११॥
य आकाशे तिष्ठन्नाकाशादन्तरो यमाकाशो न वेद यस्याकाशः
शरीरं य आकाशमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥१२॥
यस्तमसि तिष्ठँस्तमसोऽन्तरो यं तमो न वेद यस्य तमः
शरीरं यस्तमोऽन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥१३॥
यस्तेजसि तिष्ठँस्तेजसोऽन्तरो यं तेजो न वेद यस्य तेजः शरीरं यस्तेजो-
ऽन्तरो यमयत्येष त आत्मान्तर्याम्यमृत इत्यधिदैवतमथाधिभूतम् ॥१४॥
यः सर्वेषु भूतेषु तिष्ठन्सर्वेभ्यो भूतेभ्योऽन्तरो यँ सर्वाणि भूतानि
न विदुर्यस्य सर्वाणि भूतानि शरीरं यः सर्वाणि भूतान्यन्तरो
यमयत्येष त आत्मान्तर्याम्यमृत इत्यधिभूतमथाध्यात्मम् ॥१५॥
यः प्राणे तिष्ठन्प्राणादन्तरो यं प्राणो न वेद यस्य प्राणः
शरीरं यः प्राणमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥१६॥
यो वाचि तिष्ठन्वाचोऽन्तरो यं वाङ्न वेद यस्य
वाक्शरीरं यो वाचमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥१७॥

यश्चक्षुषि तिष्ठंश्चक्षुषोऽन्तरो यं चक्षुर्न वेद यस्य चक्षुः शरीरं यश्चक्षुरन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥१८॥ यः श्रोत्रे तिष्ठञ्छ्रोत्रादन्तरो यꣳश्रोत्रं न वेद यस्य श्रोत्रꣳशरीरं यः श्रोत्रमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥१९॥ यो मनसि तिष्ठन्मनसोऽन्तरो यं मनो न वेद यस्य मनः शरीरं यो मनोऽन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥२०॥ यस्त्वचि तिष्ठꣳस्त्वचोऽन्तरो यं त्वङ्न वेद यस्य त्वक्शरीरं यस्त्वचमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥२१॥ यो विज्ञाने तिष्ठन्विज्ञानादन्तरो यं विज्ञानं न वेद यस्य विज्ञानꣳशरीरं यो विज्ञानमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥२२॥ यो रेतसि तिष्ठन्रेतसोऽन्तरो यꣳरेतो न वेद यस्य रेतः शरीरं यो रेतोऽन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतोऽदृष्टो द्रष्टाऽश्रुतः श्रोताऽमतो मन्ताऽविज्ञातो विज्ञाता नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता नान्योऽतोऽस्ति मन्ता नान्योऽतोऽस्ति विज्ञातैष त आत्मान्तर्याम्यमृतोऽतोऽन्यदार्तं ततो होद्दालक आरुणिरुपरराम ॥२३॥

इति बृहदारण्यकोपनिषदि तृतीयाध्यायस्य सप्तमं ब्राह्मणम् ॥७॥

अथाध्यात्मं यः प्राणे प्राणवायुसहिते घ्राणे यो वाचि चक्षुषि श्रोत्रे मनसि त्वचि विज्ञाने बुद्धौ रेतसि प्रजनने। कस्मात्पुनः कारणात्पृथिव्यादिदेवता महाभागाः सत्यो मनुष्यादिवदात्मनि तिष्ठन्तमात्मनो नियन्तारमन्तर्यामिणं न विदुरित्यत आह—अदृष्टो न दृष्टो न विषयीभूतश्चक्षुर्दर्शनस्य कस्यचित्स्वयं तु चक्षुषि संनिहितत्वाद्दृशिस्वरूप इति द्रष्टा। तथाऽश्रुतः श्रोत्रगोचरत्वमनापन्नः कस्यचित्स्वयं त्वलुप्तश्रवणशक्तिः सर्वश्रोत्रेषु संनिहितत्वाच्छ्रोता। तथाऽमतो मनःसंकल्पविषयतामनापन्नः। दृष्टश्रुते एव हि सर्वः संकल्पयत्यदृष्टत्वादश्रुतत्वादेवामतोऽलुप्तमननशक्तित्वात्सर्वमनःसु संनिहितत्वाच्च मन्ता। तथाऽविज्ञातो निश्चयगोचरतामनापन्नो रूपादिवत्सुखादिवद्वा स्वयं त्वलुप्तविज्ञानशक्तित्वात्तत्संनिधानाच्च विज्ञाता। तत्र यं पृथिवी न वेद यं सर्वाणि भूतानि न विदुरिति चान्ये नियन्तव्या विज्ञातारोऽन्यो नियन्ताऽन्तर्यामीति प्राप्तं तदन्यत्वाशङ्कानिवृत्त्यर्थमुच्यते—नान्योऽतो नान्यः। अतोऽस्मादन्तर्यामिणो नान्योऽस्ति द्रष्टा तथा नान्योऽतोऽस्ति श्रोता नान्योऽतोऽस्ति मन्ता नान्योऽतोऽस्ति विज्ञाता। यस्मात्परो नास्ति द्रष्टा श्रोता मन्ता विज्ञाता योऽदृष्टो द्रष्टाऽश्रुतः श्रोताऽमतो मन्ताऽविज्ञातो विज्ञाताऽमृतः सर्वसंसारधर्मवर्जितः सर्वसंसारिणां कर्मफलविभागकर्तैष त आत्माऽन्तर्याम्यमृतोऽस्मादीश्वरादात्मनोऽन्यदार्तं ततो होद्दालक आरुणिरुपरराम ॥१५-२३॥

इति बृहदारण्यकोपनिषद्भाष्ये तृतीयाध्यायस्य सप्तमं ब्राह्मणम् ॥७॥

सर्वत्र प्राणादौ तिष्ठन्नन्तर्यामी तवाऽऽत्मेति संबन्धः। वाक्यान्तरं प्रश्नपूर्वकमुत्थाप्य व्याचष्टे—कस्मादित्यादिना। यथा मनसि तथा बुद्धावपि संनिधानाज्ज्ञातृतेति यावत्। तत्रेति पूर्वसंदर्भोक्तिः। अन्वयमुपलक्षयितुमतो नान्य इत्युक्तम्। पदार्थान्व्याकरोति—अत इति। अन्यो द्रष्टा नास्तीति संबन्धः एष त इत्यादिवाक्यस्यार्थमाह—यस्मादित्यादिना ॥१५-२३॥

इति बृहदारण्यकोपनिषद्भाष्यटीकायां तृतीयाध्यायस्य सप्तममन्तर्यामिब्राह्मणम् ॥७॥

अथ तृतीयाध्यायस्याष्टमं ब्राह्मणम्

अथ ह वाचक्नव्युवाच ब्राह्मणा भगवन्तो हन्ताहमिमं द्वौ प्रश्नौ प्रक्ष्यामि तौ
चेन्मे वक्ष्यति न वै जातु युष्माकमिमं कश्चिद्ब्रह्मोद्यं जेतेति पृच्छ गार्गीति ॥१॥
सा होवाचाहं वै त्वा याज्ञवल्क्य यथा काश्यो वा वैदेहो वोग्रपुत्र उज्ज्यं
५ धनुरधिज्यं कृत्वा द्वौ बाणवन्तौ सपत्नातिव्याधिनौ हस्ते कृत्वोपोत्तिष्ठे-
देवमेवाहं त्वा द्वाभ्यां प्रश्नाभ्यामुपोदस्थां तौ मे ब्रूहीति पृच्छ गार्गीति ॥२॥
सा होवाच यदूर्ध्वं याज्ञवल्क्य दिवो यदवाक्पृथिव्या यदन्तरा द्यावापृथिवी
इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते कस्मिँस्तदोतं च प्रोतं चेति ॥३॥
स होवाच यदूर्ध्वं गार्गि दिवो यदवाक्पृथिव्या यदन्तरा द्यावापृथिवी इमे
१० यद्भूतं च भवच्च भविष्यच्चेत्याचक्षत आकाशे तदोतं च प्रोतं चेति ॥४॥

अतः परमशनायादिविनिर्मुक्तं निरुपाधिकं साक्षादपरोक्षात्सर्वान्तरं ब्रह्म वक्तव्यमित्यत आरम्भः—

अथ ह वाचक्नव्युवाच पूर्वं याज्ञवल्क्येन निषिद्धा मूर्धपातभयादुपरता सती पुनः प्रष्टुं ब्राह्मणानुज्ञां पार्थयते। हे ब्राह्मणा भगवन्तः पूजावन्तः श्रृणुत मम वचो हन्ताहमिमं याज्ञवल्क्यं पुनर्द्वौ प्रश्नौ प्रक्ष्यामि यद्यनुमतिर्भवतामस्ति। तौ प्रश्नौ चेद्यदि वक्ष्यति कथयिष्यति मे कथंचिन्न वै जातु कदाचिद्युष्माकं मध्य इमं याज्ञवल्क्यं
१५ कश्चिद्ब्रह्मोद्यं ब्रह्मवदनं प्रति जेता न वै कश्चिद्भवेदित्येवमुक्ता ब्राह्मणा अनुज्ञां प्रददुः पृच्छ गार्गीति ॥१॥

लब्धानुज्ञा ह याज्ञवल्क्यं सा होवाचाहं वै त्वा त्वा द्वौ प्रश्नौ प्रक्ष्यामीत्यनुषज्यते। कौ ताविति जिज्ञासायां तयोर्दुरुत्तरत्वं द्योतयितुं दृष्टान्तपूर्वकं तावाह—हे याज्ञवल्क्य यथा लोके काश्यः काशिषु भवः काश्यः प्रसिद्धं शौर्यं काश्ये वैदेहो वा विदेहानां वा राजोग्रपुत्रः शूरान्वय इत्यर्थः। उज्ज्यमवतारितज्याकं धनुः पुनरधिज्यमारोपितज्याकं कृत्वा द्वौ बाणवन्तौ बाणशब्देन शराग्रे यो वंशखण्डः संधीयते। तेन विनाऽपि शरो भवतीत्यतो
२० विशिनष्टि—बाणवन्ताविति। द्वौबाणवन्तौ शरौ तयोरेव विशेषणं सपत्नातिव्याधिनौ शत्रोः पीडाकरावतिशयेन हस्ते कृत्वोपोत्तिष्ठेत्समीपत आत्मानं दर्शयेदेवमेवाहं त्वा त्वा शरस्थानीयाभ्यां प्रश्नाभ्यां द्वाभ्यामुपोदस्थामुत्थितवत्यस्मि त्वत्समीपे। तौ मे ब्रूहीति ब्रह्मविच्चेत्। आहेतरः पृच्छ गार्गीति ॥ २ ॥

सा होवाच यदूर्ध्वमुपरि दिवोऽण्डकपालाद्यच्चावागधः पृथिव्या अधोऽण्डकपालाद्यच्चान्तरा मध्ये द्यावापृथिवी द्यावापृथिव्योरण्डकपालयोरिमे च द्यावापृथिवी यद्भूतं यच्चातीतं भवच्च वर्तमानं स्वव्यापारस्थं भवि-
२५ ष्यच्च वर्तमानादूर्ध्वंकालभाविलिङ्गगम्यं यत्सर्वमेतदाचक्षते कथयन्त्यागमतस्तत्सर्वं द्वैतजातं यस्मिन्नेकीभवतीत्यर्थः। तत्सूत्रसंज्ञं पूर्वोक्तं कस्मिन्नोतं च [ प्रोतं च ] पृथिवीधातुरिवाप्सु ॥३॥

स होवाचेतरो हे गार्गि यत्त्वयोक्तमूर्ध्वं दिव इत्यादि तत्सर्वं यत्सूत्रमाचक्षते तत्सूत्रमाकाशे तदोत च प्रोतं च यदेतद्व्याकृतं सूत्रात्मकं जगदव्याकृताकाशेऽप्स्विव पृथिवीधातुस्त्रिष्वपि कालेषु वर्तते उत्पत्तौ स्थितौ लये च ॥४॥

पूर्वस्मिन्ब्राह्मणे सूत्रान्तर्यामिणौ प्रश्नप्रत्युक्तिभ्या निर्धारितौ संप्रत्युत्तरब्राह्मणतात्पर्यमाह—अतः परमिति।
३० सोपाधिकवस्तुनिर्धारणानन्तर्यमथशब्दार्थः। ननु यस्माद्भयाद्गार्गी पूर्वमुपरता तस्य तदवस्थत्वात्कथं पुन. सा प्रष्टुं प्रवर्तते तत्राऽऽह—पूर्वमिति। हन्तेत्यस्यार्थमाह—यदीति। न वै जात्विति प्रतीकमादाय व्याचष्टे—कदाचिदित्यादिना। अन्वयं दर्शयितुं कश्चिदिति पुनरुक्तिः ॥१॥

संधीयते स उच्यत इति शेषः। प्रश्नयोरवश्यप्रत्युत्तरणीयत्वे ब्रह्मिष्ठत्वाङ्गीकारो हेतुरित्याह—ब्रह्मविच्चेदिति ॥२॥

३५ सूत्रस्याऽऽधारे प्रष्टव्ये किमिति सर्वं जगदनूद्यते तत्राऽऽह—यत्सर्वमिति। पूर्वोक्तं सर्वंजगदात्मकमिति यावत् ॥३॥

यथाप्रश्नमनूद्य प्रत्युक्तिमादत्ते—स होवाचेति। ता व्याचष्टे—यदेतदिति। यज्जगद्व्याकृतं सूत्रात्मकमेतदव्याकृताकाशे वर्तत इति संबन्धः। त्रिष्वपि कालेष्विति यदुक्तं तद्व्यनक्ति—उत्पत्ताविति ॥४-५॥

सा होवाच नमस्तेऽस्तु याज्ञवल्क्य यो म एतं
व्यवोचोऽपरस्मै धारयस्वेति पृच्छ गार्गीति ॥५॥

सा होवाच यदूर्ध्वं याज्ञवल्क्य दिवो यदवाक्पृथिव्या यदन्तरा द्यावापृथिवी
इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते कस्मिंस्तदोतं च प्रोतं चेति ॥६॥

स होवाच यदूर्ध्वं गार्गि दिवो यदवाक्पृथिव्या यदन्तरा द्यावापृथिवी　५
इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षत आकाश एव
तदोतं च प्रोतं चेति कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति ॥७॥

स होवाचैतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलोहित-
मस्नेहमच्छायमतमोऽवाय्वनाकाशमसङ्गमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनोऽते-
जस्कमप्राणममुखममात्रमनन्तरमबाह्यं न तदश्नाति किंचन न तदश्नाति कश्चन ॥८॥　१०

पुनः सा होवाच नमस्तेऽस्त्वित्यादि प्रश्नस्य दुर्वचत्वप्रदर्शनार्थम्। यो मे ममैतं प्रश्नं व्यवोचो विशेषणापाकृतवानसि। एतस्य दुर्वचत्वे कारणं सूत्रमेव तावदगम्यमितरैर्दुर्वाच्यं किमुत तद्यस्मिन्नोतं च प्रोतं चेत्यतो नमोऽस्तु ते तुभ्यमपरस्मै द्वितीयाय प्रश्नाय धारयस्व दृढीकुर्वात्मानमित्यर्थः। पृच्छ गार्गीतीतर आह ॥५॥

व्याख्यातमन्यत्। सा होवाच यदूर्ध्वं याज्ञवल्क्येत्यादिप्रश्नः प्रतिवचनं चोक्तस्यैवार्थस्यावधारणार्थं पुनरुच्यते। न किंचिदपूर्वमर्थान्तरमुच्यते ॥६॥　१५

सर्वं यथोक्तं गार्ग्या प्रत्युच्चार्य तमेव पूर्वोक्तमर्थमवधारितवानाकाश एवेति याज्ञवल्क्यः। गार्ग्याह— कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति। आकाशमेव तावत्कालत्रयातीतत्वाद्दुर्वाच्यम्। ततोऽपि कष्टतरमक्षरं यस्मिन्नाकाशमोतं च प्रोतं चातोऽवाच्यमिति कृत्वा न प्रतिपद्यते साऽप्रतिपत्तिर्नाम निग्रहस्थानं तार्किकसमये। अथावाच्यमपि वक्ष्यति तथाऽपि विप्रतिपत्तिर्नाम निग्रहस्थानं विरुद्धा प्रतिपत्तिर्हि सा यदवाच्यस्य वदनमतो दुर्वचनं प्रश्नं मन्यते गार्गी ॥७॥　२०

तद्दोषद्वयमपि परिजिहीर्षन्नाह—स होवाच याज्ञवल्क्य एतद्वै तद्यत्पृष्टवत्यसि कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति। किं तदक्षरं यन्न क्षीयते न क्षरतीति वाऽक्षरं तदक्षरं हे गार्गि ब्राह्मणा ब्रह्मविदोऽभिवदन्ति। ब्राह्मणाभिवदनकथनेन नाहमवाच्यं वक्ष्यामि न च न प्रतिपत्स्येमित्येवं दोषद्वयं परिहरति। एवमपाकृते प्रश्ने पुनर्गार्ग्याः

वक्ष्यमाण वाक्यमन्यदित्युच्यते। तदेव प्रश्नप्रतिवचनरूपमनुवदति—सा हेति। पुनरुक्तेरकिंचित्करत्वं व्यावर्तयति—उक्तस्यैवेति ॥६॥　२५

प्रतिवचनानुवादतात्पर्यमाह—गार्ग्येति। प्रश्नाभिप्रायं प्रकटयति—आकाशमेवेति ॥७॥

अप्रतिपत्तिविप्रतिपत्तिश्चेति दोषद्वय सामान्येनोक्तं विशेषतो ज्ञातुं पृच्छति—किं तदिति। अस्थूलादिवाक्य-

१. अक्षरब्राह्मणे प्रतिपाद्यं किमिति विचारः अक्षराधिकरणे दृश्यते (१-३-३) कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति प्रश्ने याज्ञवल्क्य आह—स होवाचैतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्तीत्यादि। अत्राक्षरपदार्थः प्रणवः उत ब्रह्मेति संशयः। तत्राक्षरसमाम्नाय इत्यादौ अक्षरशब्दस्य वर्णे प्रसिद्धत्वात्। ओंकारस्य ओंकार　३० एवेद सर्वं इत्यादौ सर्वात्मकत्वनिर्धारणात् वर्ण एवाक्षरमिति प्राप्ते ब्रूमः अक्षरपदार्थः ब्रह्म अम्बरान्तजगद्धारकत्वात्। न हि जीवः आकाशं धारयेत् अतः आकाशभिन्नः परमात्मा अक्षरम्। न च प्रधानमक्षरमस्तु तस्याकाशादिकारणत्वात् धारकत्वोपपत्तेः। सा च प्रशासनात् एतस्यैवाक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत इत्यादिश्रवणात् प्रशासन चेतनकर्म। अतः अचेतनं प्रधानं नाक्षरं अपि तु चेतनं ब्रह्मैव। अन्यदपि—अक्षरधिया त्ववरोध. इत्यधिकरणे (३-३-३३) क्वचित् अस्थूलमनणु इत्यादिरूपेण　३५ स्थूलत्वादि निराकृतं क्वचित् यत्तदद्रेश्यमग्राह्यमगोत्रमित्यादौ दृश्यत्वादयः निरस्ताः तदेजति तन्नेजति तद्दूरे इत्यादौ अक्षरसम्बद्धत्वेन ये ये अभावरूपा धर्मा.। ते सर्वे सर्वत्रावरोद्धव्याः सामान्यात् धर्मिणो ब्रह्मणः प्रतिपादनप्रक्रियाया. साम्यात्। शेषिब्रह्मणः सर्वत्र भावाच्च इति निर्णयः।

एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत
एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठत
एतस्य वा अक्षरस्य प्रशासने गार्गि निमेषा मुहूर्ता अहोरात्राण्यर्ध-
मासा मासा ऋतवः संवत्सरा इति विधृतास्तिष्ठन्त्येतस्य वा अक्षरस्य
५ प्रशासने गार्गि प्राच्योऽन्या नद्यः स्यन्दन्ते श्वेतेभ्यः पर्वतेभ्यः
प्रतीच्योऽन्या यां यां च दिशमन्वेतस्य वा अक्षरस्य प्रशासने गार्गि
ददतो मनुष्याः प्रशंसन्ति यजमानं देवा दर्वीं पितरोऽन्वायत्ताः ॥९॥

प्रतिवचनं द्रष्टव्यं ब्रूहि किं तदक्षरं यद्ब्राह्मणा अभिवदन्तीत्युक्त आह—अस्थूलं तत्स्थूलादन्यत्। एवं तर्ह्यण्वनणु।
अस्तु तर्हि ह्रस्वमह्रस्वम्। एवं तर्हि दीर्घं नापि दीर्घमदीर्घम्। एवमेतैश्चतुर्भिः परिमाणप्रतिषेधैर्द्रव्यधर्मः
१० प्रतिषिद्धो न द्रव्यं तदक्षरमित्यर्थः। अस्तु तर्हि लोहितो गुणस्ततोऽप्यन्यदलोहितम्। आग्नेयो गुणो लोहितः।
भवतु तर्ह्यपां स्नेहनं नास्नेहम्। अस्तु तर्हि च्छाया सर्वथाऽप्यनिर्देश्यत्वाच्छायाया अप्यन्यदच्छायम्। अस्तु तर्हि
तमोऽतमः। भवतु वायुस्तर्ह्यवायुः। भवेत्तर्ह्याकाशमनाकाशम्। भवतु तर्हि सङ्गात्मकं जतुवदसङ्गम्। रसोऽस्तु
तर्ह्यरसम्। तथा गन्धोऽस्त्वगन्धम्। अस्तु तर्हि चक्षुरचक्षुष्कं नहि चक्षुरस्य करणं विद्यतेऽतोऽचक्षुष्कम्।
"पश्यत्यचक्षुः" इति मन्त्रवर्णात्। तथाऽश्रोत्रं "स शृणोत्यकर्णः" इति। भवतु तर्हि वागवाक्। तथाऽमनः। तथाऽते-
१५ जस्कमविद्यमानं तेजोऽस्य तदतेजस्कम्। नहि तेजोऽग्न्यादिप्रकाशवदस्य विद्यते। अप्राणमाध्यात्मिको वायुः
प्रतिषिध्यतेऽप्राणमिति। मुखं तर्हि द्वारं तदमुखम्। अमात्रं मीयते येन तन्मात्रममात्रं मात्रारूपं तन्न भवति न तेन
किंचिन्मीयते। अस्तु तर्हि छिद्रवदनन्तरं नास्यान्तरमस्ति। सम्भवेत्तर्हि बहिस्तस्याबाह्यम्। अस्तु तर्हि भक्षयितृ
तन्न तदश्नाति किञ्चन। भवेत्तर्हि भक्ष्यं कस्यचिन्न तदश्नाति कश्चन। सर्वविशेषणरहितमित्यर्थः। एकमेवाद्वितीयं
हि तत्केन किं विशेष्यते ॥८॥

२० अनेकविशेषणप्रतिषेधप्रयासादस्तित्वं तावदक्षरस्योपगमितं श्रुत्या तथाऽपि लोकबुद्धिमपेक्ष्याऽऽशङ्क्यते
यतोऽतोऽस्तित्वायानुमानं प्रमाणमुपन्यस्यति—एतस्य वा अक्षरस्य। यदेतदधिगतमक्षरं सर्वान्तरं साक्षादपरोक्षाद्ब्रह्म
य आत्माऽशनायादिधर्मातीत एतस्य वा अक्षरस्य प्रशासने। यथा राज्ञः प्रशासने राज्यमस्फुटितं नियतं वर्तत
एवमेतस्याक्षरस्य प्रशासने हे गार्गि सूर्याचन्द्रमसौ सूर्यश्च चन्द्रमाश्च सूर्याचन्द्रमसावहोरात्रयोर्लोकप्रदीपौ
तादर्थ्येन प्रशासित्रा ताभ्यां निर्वर्त्यमानलोकप्रयोजनविज्ञानवता निर्मितौ विधृतौ च स्यातां साधारणसर्वप्राणिप्रका-
२५ शोपकारकत्वाल्लौकिकप्रदीपवत्।

मवतार्य व्याकरोति—एवमित्यादिना। 'यदग्ने रोहितं रूपम्' इत्यादिश्रुतिमाश्रित्याऽऽह—आग्नेय इति। अवायु-
विशेषणेनाप्राणविशेषणस्य पुनरुक्तिमाशङ्क्याऽऽह—आध्यात्मिक इति। अमात्रमिति मानमेयान्वयो निराक्रियते।
तस्येत्यात्मोक्तिः। सपिण्डितमर्थमाह—सर्वेति। तदुपपादयति—एकमिति ॥८॥

अथ यथोक्तया नीत्या श्रुत्यैवाक्षरास्तित्वे ज्ञापिते वक्तव्याभावात्किमुत्तरेण ग्रन्थेनेति तत्राऽऽह—अनेकेति।
३० यदस्ति तत्सविशेषणमेवेति लौकिकी बुद्धिः। आशङ्क्यते नास्त्यक्षरं निर्विशेषणमिति शेषः। अन्तर्यामिणि जगत्कारणे
परस्मिन्ननुमानसिद्धे विवक्षितं निरुपाध्यक्षरं सेत्स्यति जगत्कारणत्वस्योपलक्षणतया जन्मादिसूत्रे स्थितत्वादुपलक्षणद्वारा
ब्रह्मणि स्वरूपलक्षणप्रवृत्तेरन्तर्यामिण्यनुमा प्रकृतोपयुक्तेति भावः। अनुमानश्रुत्यक्षराणि व्याकरोति—यदेतदिति।
प्रशासने सूर्याचन्द्रमसौ विधृतौ स्यातामिति सबन्धः। उक्तमर्थं दृष्टान्तेन स्फोरयति—यथेति। तत्रापि पूर्ववदन्वयः।
जगद्व्यवस्था प्रशासितृपूर्विका व्यवस्थात्वाद्राज्यव्यवस्थावदित्यर्थः। सूर्याचन्द्रमसावित्यादौ विवक्षितमनुमानमाह—
३५ सूर्यश्चेत्यादिना। तादर्थ्येन लोकप्रकाशार्थत्वेन। प्रशासित्रा निर्मिताविति संबन्धः। निर्मातुर्विशिष्टविज्ञानवत्त्व-
माचष्टे—ताभ्यां निर्वर्त्यमानेति। सूर्याचन्द्रमसौ तच्छब्दवाच्यौ। विमतौ विशिष्टविज्ञानवता निर्मितौ प्रकाशत्वा-
त्प्रदीपवदित्यर्थः। विमतौ नियन्तृपूर्वकौ विशिष्टचेष्टावत्त्वाद्भृत्यादिवदित्यभिप्रेत्याऽऽह—विधृताविति। प्रकाशोप-
कारकत्वं तज्जनकत्वं निर्मातुर्विशिष्टविज्ञानसंभावनार्थं साधारणेति विशेषणं साधारणः सर्वेषां प्राणिनां यः प्रकाशस्तस्य
जनकत्वादिति यावत्। दृष्टान्ते लौकिकविशेषणं प्रासादादिविशिष्टदेशनिविष्टत्वसिद्ध्यर्थम्।

तस्मादस्ति तद्येन विधृतावीश्वरौ स्वतन्त्रौ सन्तौ निर्मितौ तिष्ठतो नियतदेशकालनिमित्तोदयास्तमयवृद्धिक्षयाभ्यां वर्तेते। तदस्त्येवमेतयोः प्रशासित्रक्षरं प्रदीपकर्तृविधारयितृवत्। एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ द्यौश्च पृथिवी च सावयवत्वात्स्फुटनस्वभावे अपि सत्यौ गुरुत्वात्पतनस्वभावे संयुक्तत्वाद्वियोगस्वभावे चेतनावदभिमानिदेवताधिष्ठितत्वात् स्वतन्त्रे अप्येतस्याक्षरस्य प्रशासने वर्तेते विधृते तिष्ठतः।

एतद्ध्यक्षरं सर्वव्यवस्थासेतुः सर्वमर्यादाविधरणमतो नास्याक्षरस्य प्रशासनं द्यावापृथिव्यावतिक्रामतस्तस्मात्सिद्धमस्यास्तित्वमक्षरस्य। अव्यभिचारि हि तल्लिङ्गं यद्द्यावापृथिव्यौ नियते वर्तेते। चेतनावन्तं प्रशासितारमसंसारिणमन्तरेण नैतद्युक्तम्। "येन द्यौरुग्रा पृथिवी च दृढा" इति मन्त्रवर्णात्। एतस्य वा अक्षरस्य प्रशासने गार्गि निमेषा मुहूर्ता इत्येते कालावयवाः सर्वस्यातीतानागतवर्तमानस्य जनिमतः कलयितारः। यथा लोके प्रभुणा नियमितो गणकः सर्वमायं व्ययं चाप्रमत्तो गणयति तथा प्रभुस्थानीय एषां कालावयवानां नियन्ता। तथा प्राच्यः प्रागञ्चनाः पूर्वदिग्गमना नद्यः स्यन्दन्ते स्रवन्ति श्वेतेभ्यो हिमवदादिभ्यः पर्वतेभ्यो गिरिभ्यो गङ्गाद्या नद्यस्ताश्च यथा प्रवर्तिता एव नियताः प्रवर्तन्तेऽन्यथापि प्रवर्तितुमुत्सहन्त्यस्तदेतल्लिङ्गं प्रशास्तुः। प्रतीच्योऽन्याः प्रतीचीं दिशमञ्चन्ति सिन्ध्वाद्या नद्यः। अन्याश्च यां यां दिशमनुप्रवृत्तास्तां तां न व्यभिचरन्ति तच्च लिङ्गम्।

किंच ददतो हिरण्यादीन्प्रयच्छत आत्मपीडां कुर्वतोऽपि प्रमाणज्ञा अपि मनुष्याः प्रशंसन्ति। तत्र यच्च दीयते ये च ददति ये च प्रतिगृह्णन्ति तेषामिहैव समागमो विलयश्चान्वक्षो दृश्यते। अदृष्टस्तु परः समागमः। तथाऽपि मनुष्या ददतां दानफलेन संयोगं पश्यन्तः प्रमाणज्ञतया प्रशंसन्ति। तच्च कर्मफलेन संयोजयितरि

अनुमानफलमुपसंहरति—तस्मादिति। विशिष्टचेष्टावत्त्वादित्युपदिष्टं हेतुं स्पष्टयति—नियतेति। नियतौ देशकालौ नियतं च निमित्तं प्राप्यदृष्टं तद्वन्तौ सूर्याचन्द्रमसावुद्यन्तावस्तं यन्तौ च येन विधृतावुदयास्तमयाभ्यां वृद्धिक्षयाभ्यां च वर्तेते। उदयश्चास्तमयश्चोदयास्तमयं वृद्धिश्च क्षयश्च वृद्धिक्षयमिति द्वद्व गृहीत्वा द्विवचनम्। एवं कर्तृत्वेन विधारयितृत्वेन चेत्यर्थः। विमते प्रयत्नवता विधृते सावयवत्वेऽप्यस्फुटितत्वाद्गुरुत्वेऽप्यपतितत्वात्संयुक्तत्वेऽप्यवियुक्तत्वाच्चेतनावत्त्वेऽप्यस्वतन्त्रत्वाच्च हस्तन्यस्तपाषाणादिवदिति द्वितीयपर्यायस्य तात्पर्यमाह—सावयवत्वादित्यादिना।

किमित्येतस्य प्रशासने द्यावापृथिव्यौ वर्तेते तत्राऽऽह—एतद्धीति। पृथिव्यादिव्यवस्था नियन्तारं विनाऽनुपपन्ना तत्कल्पिकेत्यर्थः। तथाऽपि किमित्येतेन विधृते द्यावापृथिव्याविति तत्राऽऽह—सर्वमर्यादेति। 'एष सेतुर्विधरणः' इति श्रुत्यन्तरमाश्रित्य फलितमाह—अतो नास्येति। द्वितीयपर्यायार्थमुपसंहरति—तस्मादिति। तच्छब्दोपात्तमर्थं स्फोरयति—अव्यभिचारीति। अव्यभिचारित्वं प्रकटयति—चेतनावन्तमिति। पृथिव्यादेर्नियतत्वमेतच्छब्दार्थः। नियन्तृसिद्धावपि कथमीश्वरसिद्धिरित्याशङ्क्याऽऽह—येनेति। उग्रत्वं पृथिव्यादेश्चेतनावदभिमानिदेवतावत्त्वेन स्वातन्त्र्यम्। 'येन स्वस्तभितं येन नाको यो अन्तरिक्षे रजसो विमानः कस्मै देवाय हविषा विधेम' इत्यत्र हिरण्यगर्भाधिष्ठातेश्वरः पृथिव्यादेर्नियन्तोच्यते। नहि हिरण्यगर्भमात्रस्यास्मिन्प्रकरणे पूर्वापरग्रन्थयोरुच्यमानं निरङ्कुशं सर्वनियन्तृत्वं संभवतीति भावः। एते कालावयवा विधृतास्तिष्ठन्तीति संबन्धः। तत्रानुमानं वक्तु हेतुमाह—सर्वस्येति। यः कलयिता स नियन्तृपूर्वक इति व्याप्तिभूमिमाह—यथेति। दार्ष्टान्तिक दर्शयन्ननुमानमाह—तथेति। निमेषादयो नियन्तृपूर्वकाः कलयितृत्वात्संप्रतिपन्नवदित्यर्थः। कास्ता नद्य इत्यपेक्षायामाह—गङ्गाद्या इति। अन्यथा प्रवर्तितुमुत्सहमानत्वं तत्तद्देवताना चेतनत्वेन स्वातन्त्र्यम्। विमता नियन्तृपूर्विका नियतप्रवृत्तित्वाद्भृत्यादिवदिति चतुर्थपर्यायार्थः। नियतप्रवृत्तिमत्त्वं तदेतदित्युच्यते। तच्चेत्यव्यभिचारितोक्तिः।

विमतं विशिष्टज्ञानवद्दातृकं कर्मफलत्वात्सेवाफलवदित्यभिप्रेत्य पञ्चमं पर्यायमुत्थापयति—किंचेति। दाता प्रतिग्रहीता दानं देयं वा फलं दास्यति किमीश्वरेणेत्याशङ्क्याऽऽह—तत्रेति। दात्रादीनामिहैव प्रत्यक्षो नाशो दृश्यते तेन तत्प्रयुक्तो दृष्टः। पुरुषार्थो न कश्चिदस्तीत्यर्थः। अदृष्टं पुरुषार्थं प्रत्याह—अदृष्टस्त्विति। समागमः फलप्रतिलाभः स खल्वैहिको न भवति किंतु पारलौकिकस्तथा च नासाविहैव नष्टदात्रादिप्रयुक्तः संभवतीत्यर्थः। तर्हि फलदातुरभावात्स्वार्थभ्रंशो हि मूर्खतेति न्यायाद्दातृप्रशंसैव मा भूदित्याशङ्क्याऽऽह—तथाऽपीति। फलसंयोगदृष्टौ हेतुमाह—

कर्तुः कर्मफलविभागज्ञे प्रशास्तर्यसति न स्यात्। दानक्रियायाः प्रत्यक्षविनाशित्वात्। तस्मादस्ति दानकर्तॄणां फलेन संयोजयिता।

अपूर्वमिति चेन्न तत्सद्भावे प्रमाणानुपपत्तेः। प्रशास्तुरपीति चेन्न। आगमतात्पर्यस्य सिद्धत्वात्। अवोचाम ह्यागमस्य वस्तुपरत्वम्। किञ्चान्यदपूर्वकल्पनायां चार्थापत्तेः क्षयोऽन्यथैवोपपत्तेः। सेवाफलस्य सेव्यात्प्राप्तिदर्शनात्।

सेवायाश्च क्रियात्वात्तत्सामान्याच्च यागदानहोमादीनां सेव्यादीश्वरादेः फलप्राप्तिरुपपद्यते। दृष्टक्रियाधर्मसामर्थ्यमपरित्यज्यैव फलप्राप्तिकल्पनोपपत्तौ दृष्टक्रियाधर्मसामर्थ्यपरित्यागो न न्याय्यः। कल्पनाधिक्याच्च। ईश्वरः कल्प्योऽपूर्वं वा। तत्र क्रियायाश्च स्वभावः सेव्यात्फलप्राप्तिर्दृष्टा न त्वपूर्वात्। न चापूर्वं दृष्टम्। तत्रापूर्वमदृष्टं कल्पयितव्यं तस्य च फलदातृत्वे सामर्थ्यं सामर्थ्ये च सति दानं चाभ्यधिकमिति। इह त्वीश्वरस्य सेव्यस्य सद्भावमात्रं कल्प्यं न तु फलदानसामर्थ्यं दातृत्वं च। सेव्यात्फलप्राप्तिदर्शनात्। अनुमानं च दर्शितं द्यावापृथिव्यौ विधृते तिष्ठत इत्यादि।

तथा च यजमानं देवा ईश्वराः सन्तो जीवनार्थेऽनुगताः पुरोडाशाद्युपजीवनप्रयोजनेनान्यथाऽपि जीवितुमुत्सहन्तः कृपणां हीनां वृत्तिमाश्रित्य स्थितास्तच्च प्रशास्तुः प्रशासनात्स्यात्। तथा पितरोऽपि तदर्थं दर्वीं दर्वीहोममन्वायत्ता अनुगता इत्यर्थः। समानं सर्वमन्यत् ॥९॥

प्रमाणज्ञतयेति। 'हिरण्यदा अमृतत्वं भजन्ते' इत्यादि प्रमाणम्। तथाऽपि कथमीश्वरसिद्धिस्तत्राऽऽह—कर्तुरिति। तद्धि दातृप्रशंसनं विशिष्टे नियन्तर्यसत्यनुपपन्नं तत्कल्पकमित्यर्थः। दानक्रियावशादेव तत्फलसिद्धौ कृतं नियन्त्रेति चेन्नेत्याह—दानेति। कर्मणः क्षणिकत्वात्फलस्य च कालान्तरभावित्वान्न तद्वशात्तदुत्पत्तिरित्यर्थः। अनुमानार्थापत्तिभ्यां सिद्धमर्थमुपसंहरति—तस्मादिति।

अपूर्वस्यैव फलदातृत्वात्कृतमीश्वरेणेति शङ्कते—अपूर्वमिति चेदिति। स्वयमचेतनं चेतनानधिष्ठितं चापूर्वं फलदातृ न कल्प्यमप्रामाणिकत्वादिति परिहरति—नेति। ईश्वरद्वेषी शङ्कते—प्रशास्तुरिति। तद्भावे प्रमाणानुपपत्तिरिति शेषः। परिहरति—नाऽऽगमेति। कथं कार्यपरस्याऽऽगमस्य वस्तुपरत्वमित्याशङ्क्याऽऽह—अवोचामेति। कर्मविधिर्हि फलदात्रतिरेकेण नोपपद्यते। न च कर्माऽऽशुतरविनाशि कालान्तरभाविफलानुकूलं तदर्थापत्तिसिद्धेऽपूर्वे कथं मानासिद्धिरित्याशङ्क्याऽऽह—किञ्चेति। न केवलं सद्भावे प्रमाणासत्त्वमेवापूर्वे दूषणं किन्त्वन्यच्च किञ्चिदस्तीति यावत्। तदेव प्रकटयति—अपूर्वेति। अपूर्वस्य कल्पनायां याऽर्थापत्तिः शङ्क्यते तस्याः कल्पितमपूर्वमन्तरेणाप्युपपत्तेः क्षयः स्यादिति योजना। अन्यथाऽप्युपपत्तिं विवृणोति—सेवेति। यागादिफलमपीश्वरात्संभवतीति शेषः।

कथमीश्वराधीना यागादिफलप्राप्तिस्तत्राऽऽह—सेवायाश्चेति। आदिपदेनेन्द्रादिदेवता गृह्यन्ते। विमता विशिष्टज्ञानवता दीयमानफलवती विशिष्टक्रियात्वात्सम्प्रतिपन्नवदिति भावः। इतश्चापूर्वकल्पना न युक्तेत्याह—दृष्टेति। दृष्टं सेवाया धर्मत्वेन सामर्थ्यं सेव्यात्फलप्रापकत्वं तदनुसृत्य दानादौ फलप्राप्तिसंभवे तत्परित्यागेनापूर्वकल्पना न न्याय्या दृष्टानुसारिण्यां कल्पनायां तद्विरोधिकल्पनायोगादित्यर्थः। अपूर्वस्य फलहेतुत्वे दोषान्तरमाह—कल्पनेति। तदाधिक्यं वक्तुं परामृशति—ईश्वर इति। नापूर्वं कल्प्यं क्लृप्तत्वात्तत्र कल्पनाधिक्यमित्याशङ्क्याऽऽह—तत्रेति। व्यवहारभूमिः सप्तम्यर्थः। भूमिकां कृत्वा कल्पनाधिक्यं स्फुटयति—तत्रेत्यादिना। अपूर्वस्यादृष्टत्वे सतीति यावत्। इति कल्पनाधिक्यमिति शेषः। त्वन्मतेऽपि तुल्या कल्पनेत्याशङ्क्याऽऽह—इह त्विति। स्वपक्षे धर्मिमात्रं कल्प्यं परपक्षे धर्मी धर्मश्चेत्याधिक्यं तस्मात्फलमत उपपत्तेरिति न्यायेन परस्यैव फलदातृतेति भावः। धर्मिणोऽपि प्रामाणिकत्वं न कल्प्यत्वमित्यभिप्रेत्याऽऽह—अनुमानं चेति।

ईश्वरास्तित्वे हेत्वन्तरमाह—तथा चेति। देवा यजमानमन्वायत्ता इति संबन्धः। जीवनार्थे जीवनं निमित्तीकृत्येति यावत्। देवतानामीश्वराणामपि हव्यार्थित्वेन मनुष्याधीनत्वात्यहीनवृत्तिभाक्त्वं नियन्तृकल्पकमित्यर्थः। यो न कस्यचित्प्रकृतित्वेन विकृतित्वेन वा वर्तते स दर्वीहोमः ॥९॥

यो वा एतदक्षरं गार्ग्यविदित्वाऽस्मिँल्लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राण्यन्तवदेवास्य तद्भवति यो वा एतदक्षरं गार्ग्यविदित्वास्माल्लोकात्प्रैति स कृपणोऽथ य एतदक्षरं गार्गि विदित्वास्माल्लोकात्प्रैति स ब्राह्मणः ॥१०॥ तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्ट्रश्रुतꣳ श्रोत्रमतं मन्त्रविज्ञातं विज्ञातृ नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ नान्यदतोऽस्ति मन्तृ नान्यदतोऽस्ति विज्ञात्रेतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चेति ॥११॥ सा होवाच ब्राह्मणा भगवन्तस्तदेव बहुमन्येध्वं यदस्मान्नमस्कारेण मुच्येध्वं न वै जातु युष्माकमिमं कश्चिद्ब्रह्मोद्यं जेतेति ततो ह वाचक्नव्युपरराम ॥१२॥ ५

इति बृहदारण्यकोपनिषदि तृतीयाध्यायस्याष्टमं ब्राह्मणम् ॥८॥

इतश्चास्ति तदक्षरं यस्मात्तदज्ञाने नियता संसारोपपत्तिर्भवितव्य तु तेन यद्विज्ञानात्तद्विच्छेदो न्यायोपपत्तेः। १० ननु क्रियात एव तद्विच्छित्तिः स्यादिति चेन्न। यो वा एतदक्षरं हे गार्ग्यविदित्वाऽविज्ञायास्मिँल्लोके जुहोति यजते तपस्तप्यते यद्यपि बहूनि वर्षसहस्राण्यन्तवदेवास्य तत्फलं भवति तत्फलोपभोगान्ते क्षीयन्त एवास्य कर्माणि। अपि च यद्विज्ञानात्कार्पण्यात्ययः संसारविच्छेदो यद्विज्ञानाभावाच्च कर्मकृत्कृपणः कृतफलस्यैवोपभोक्ता जननमरणप्रबन्धारूढः संसरति। तदस्त्यक्षरं प्रशासितृ तदेतदुच्यते। यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माँल्लोकात्प्रैति स कृपणः पणक्रीत इव दासादिः। अथ य एतदक्षरं गार्गि विदित्वाऽस्माँल्लोकात्प्रैति स ब्राह्मणः ॥१०॥ १५

अग्नेर्दहनप्रकाशकत्ववत्स्वाभाविकमस्य प्रशासितृत्वमचेतनस्यैवेत्यत आह—तद्वा एतदक्षरं गार्ग्यदृष्टं न केनचिद्दृष्टमविषयत्वात्स्वयं तु द्रष्टृ दृष्टिस्वरूपत्वात्। तथाऽश्रुतं श्रोत्राविषयत्वात्स्वयं श्रोतृ श्रुतिस्वरूपत्वात्। तथाऽमतं मनसोऽविषयत्वात्। स्वयं मन्तृ मतिस्वरूपत्वात्। तथाऽविज्ञातं बुद्धेरविषयत्वात्स्वयं विज्ञातृ विज्ञानस्वरूपत्वात्। किंच नान्यदतोऽस्मादक्षरादस्ति नास्ति किंचिद्द्रष्टृ दर्शनक्रियाकर्तृ। एतदेवाक्षरं दर्शनक्रियाकर्तृ सर्वत्र। तथा नान्यदतोऽस्ति श्रोतृ। तदेवाक्षरं श्रोतृ सर्वत्र। नान्यदतोऽस्ति मन्तृ तदेवाक्षरं मन्तृ सर्वत्र सर्वमनोद्वारेण। नान्यदतोऽस्ति विज्ञातृ विज्ञानक्रियाकर्तृ तदेवाक्षरं सर्वबुद्धिद्वारेण। विज्ञानक्रियाकर्तृ नाचेतनं प्रधानमन्यद्वा। एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चेति। यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरोऽशनायादिसंसारधर्मातीतो यस्मिन्नाकाश ओतश्च प्रोतश्चैषा परा काष्ठैषा परा गतिरेतत्परं ब्रह्मैतत्पृथिव्यादेराकाशान्तस्य सत्यस्य सत्यम् ॥११॥ २०

सा होवाच हे ब्राह्मणा भगवन्तः शृणुत मदीयं वचस्तदेव बहु मन्येध्वम्। किं तद्यदस्माद्याज्ञवल्क्यान्नम- २५

ईश्वरास्तित्वे हेत्वन्तरमाह—इतश्चेति। मोक्षहेतुज्ञानविषयत्वेनापि तदस्तीत्याह—भवितव्यमिति। यदज्ञानात्प्रवृत्तिर्या तज्ज्ञानात्सा निवर्तते' इति न्याय'। कर्मवशादेव मोक्षसिद्धेस्तद्धेतुज्ञानविषयत्वेनाक्षरं नाभ्युपेयमिति शङ्कते—नन्विति। उत्तरवाक्येनोत्तरमाह—नेत्यादिना। यस्याज्ञानादसकृदनुष्ठितानि विशिष्टफलान्यपि सर्वाणि कर्माणि संसारमेव फलयन्ति तदज्ञातमक्षरं नास्तीत्ययुक्तं संसाराभावप्रसङ्गादिति भाव.। अक्षरास्तित्वे हेत्वन्तरमाह—अपि चेति। पूर्ववाक्यं जीवदवस्थपुरुषविषयमिदं तु परलोकविषयमिति विशेषं मत्वोत्तरवाक्यमवतार्य व्याचष्टे—तदेतदित्यादिना ॥१०॥ ३०

प्रधानवादिनः शङ्कामनूद्योत्तरवाक्येन निराकरोति—अग्नेरित्यादिना। इतश्चाक्षरस्य नाचेतनत्वमित्याह—किंचेति। नास्तीत्यन्वयप्रदर्शनम्। अतोऽन्यदितिविशेषणसिद्धमर्थमाह—एतदिति। अन्यद्वा पूर्वोक्तमव्याकृतादिपृथिव्यन्तं निगमनवाक्यमुदाहृत्य तस्य तात्पर्यमाह—एतस्मिन्निति। परा काष्ठा परं पर्यवसानं नास्मादुपरिष्टादधिष्ठानं किंचिदस्तीत्यर्थ.। तस्यैव परमपुरुषार्थत्वमाह—एषेति। 'पुरुषान्न परं किंचित्सा काष्ठा सा परा गति' इति हि श्रुत्यन्तरम्। ब्रह्मास्मादक्षरादन्यदस्तीति चेन्नेत्याह—एतदिति। ननु चतुर्थे सत्यस्य सत्यं ब्रह्म व्याख्यातमक्षरं तु नैवमिति चेत्तत्राऽऽह—एतत्पृथिव्यादेरिति ॥११॥ ३५

किं तद्वचनं तदाह—तदेवेति। बहुमानविषयभूतं वस्तु पृच्छति—किं तदिति। यदादौ मदीयं वचनं तदेव

स्कारेण मुच्येध्वमस्मै नमस्कारं कृत्वा तदेव बहु मन्यध्वमित्यर्थः। जयस्त्वस्य मनसाऽपि नाऽऽशंसनीयः किमुत कार्यतः। कस्मान्न वै युष्माकं मध्ये जातु कदाचिदपीमं याज्ञवल्क्यं ब्रह्मोद्यं प्रति जेता। प्रश्नौ चेन्मह्यं वक्ष्यति न जेता भवितेति पूर्वमेव मया प्रतिज्ञातमद्यापि ममायमेव निश्चयो ब्रह्मोद्यं प्रत्येतत्तुल्यो न कश्चिद्विद्यत इति। ततो ह वाचक्नव्युपरराम। अत्रान्तर्यामिब्राह्मण एतदुक्तम्। यं पृथिवी न वेद यं सर्वाणि भूतानि न विदुरिति च। यमंतर्या-
५ मिणं न विदुर्ये च न विदुर्यच्च तदक्षरं दर्शनादिक्रियाकर्तृत्वेन सर्वेषां चेतनाधातुरित्युक्तम्। कस्त्वेषां विशेषः किंवा सामान्यमिति।

तत्र केचिदाचक्षते परस्य महासमुद्रस्थानीयस्य ब्रह्मणोऽक्षरस्याप्रचलितस्वरूपस्येषत्प्रचलितावस्थाऽन्तर्यामी। अत्यन्तप्रचलितावस्था क्षेत्रज्ञो यस्तं न वेदान्तर्यामिणम्। तथाऽन्याः पञ्चावस्थाः परिकल्पयन्ति। तथाऽष्टावस्था ब्रह्मणो भवन्तीति वदन्ति। अन्येऽक्षरस्य शक्तय एता इति वदन्त्यनन्तशक्तिमदक्षरमिति च। अन्ये त्वक्षरस्य
१० विकारा इति वदन्ति। अवस्थाशक्ती तावन्नोपपद्येते। अक्षरस्याशनायादिसंसारधर्मातीतत्वश्रुतेः। न ह्यशनायाद्यतीतत्वमशनायादिधर्मवदवस्थावत्त्वं चैकस्य युगपदुपपद्यते। तथा शक्तिमत्त्वं च। विकारावयवत्वे च दोषाः प्रदर्शिताश्चतुर्थे। तस्मादेता असत्याः सर्वा कल्पनाः।

कस्तर्हि भेद एषाम्। उपाधिकृत इति ब्रूमो न स्वत एषां भेदोऽभेदो वा सैन्धवघनवत्प्रज्ञानघनैकरसस्वाभाव्यात्। "अपूर्वमनपरमनन्तरमबाह्यम्" "अयमात्मा ब्रह्म" इति च श्रुतेः। "सबाह्याभ्यन्तरो ह्यजः" इति
१५ चाऽऽथर्वणे। तस्मान्निरुपाधिकस्याऽऽत्मनो निरुपाख्यत्वान्निर्विशेषत्वादेकत्वाच्च "नेति नेती"ति व्यपदेशो भवति। अविद्याकामकर्मविशिष्टकार्यकरणोपाधिरात्मा संसारी जीव उच्यते। नित्यनिरतिशयज्ञानशक्त्युपाधिरात्माऽन्तर्यामीश्वर उच्यते।

बहुमानयोग्यमित्याह—यदिति। तद्व्याकरोति—अस्मा इति। नमकारं कृत्वाऽस्मादनुज्ञां प्राप्येति शेषः। तदेवेति प्राथमिकवचनोक्ति। किमिति त्वदीय पूर्वं वचो बहु मन्यामहे जेतुं पुनरिममाशास्महे नेत्याह—जयस्त्विति। तत्र
२० प्रश्नपूर्वकं पूर्वोक्तमेव बहुमानविषयभूतं वाक्यमवतार्य व्याचष्टे—कस्मादित्यादिना। पराजिताया गार्ग्या वचो नोपादेयमित्याशङ्क्याऽऽह—प्रश्नौ चेदिति। ततश्च प्रश्ननिर्णयाद्याज्ञवल्क्यस्याप्रकम्प्यत्वं प्रतिपाद्य ब्राह्मणान्प्रति हितं चोक्त्वेत्यर्थः। अन्तर्यामी क्षेत्रज्ञोऽक्षरमित्येतेषामवान्तरविशेषप्रदर्शनार्थं प्रकृतत्वं दर्शयति—अत्रान्तर्यामीति। तत्रान्तर्यामिणः प्रकृतत्वं प्रकटयति—यमिति। क्षेत्रज्ञस्य प्रकृतत्वं स्फुटयति—ये चेति। अक्षरस्य प्रस्तुतत्वं प्रत्याययति—यच्चेति। सर्वेषां विषयाणां दर्शनश्रवणादिक्रियाकर्तृत्वेन चेतनाधातुरिति यत्तदक्षरमुक्तमित्यन्वयः। तेषु
२५ विचारमवतारयति—कस्त्विति।

तस्मिन्विचारे स्वयूथ्यमतमुत्थापयति—तत्रेति। क्षेत्रज्ञस्याप्रस्तुतत्वशङ्कां वारयति—यस्तमिति। यथा परस्याऽऽत्मनोऽन्तर्यामी जीवश्चेत्यवस्थे द्वे कल्प्येते तथा तस्यैवान्याः पञ्चावस्थाः पिण्डो जातिर्विराट् सूत्रं दैवमित्येवलक्षणा महाभूतसंस्थानभेदेन कल्पयन्तीत्याह—तथेति। उक्तरीत्या कल्पनाया पिण्डो जातिर्विराट् सूत्रं दैवमव्याकृतं साक्षी क्षेत्रज्ञश्चेत्यष्टावस्था ब्रह्मणो भवन्तीति वदन्तः परिकल्पयन्तीति संबन्धः। अवस्थापक्षमुक्त्वा शक्तिपक्षमाह—
३० अन्य इति। तुशब्देनावयवपक्षं दर्शयन्विकारपक्षं निक्षिपति—अन्ये त्विति। तत्र पक्षद्वयं प्रत्याह—अवस्थेति। अन्तर्यामिप्रभृतीनामिति शेषः। तस्य सासारिकधर्मातीतत्वश्रुतावपि कथमवस्थावत्त्वं शक्तिमत्त्वं वा न सिध्यतीत्याशङ्क्याऽऽह—न हीति। अवशिष्टपक्षद्वयनिराकरणं प्रागेव प्रवृत्तं स्मारयति—विकारेति। परपक्षनिराकरणमुपसंहरति—तस्मादिति।

परकीयकल्पनासंभवे पृच्छति—कस्तर्हीति। उत्तरमाह—उपाधीति। आत्मनि स्वतो विशेषाभावे हेतुमाह—
३५ सैन्धवेति। तत्रैव हेत्वन्तरमाह—अपूर्वमिति। बाह्यं कार्यमाभ्यन्तरं कारणं ताभ्यां कल्पिताभ्यां सहाधिष्ठानत्वेन सत्तास्फूर्तिप्रदतया वर्तते ब्रह्म स्वभावतस्तु जन्मादिसर्वविक्रियाशून्यं कूटस्थं तदित्याथर्वणश्रुतेरर्थः। आत्मनि स्वतो विशेषानवगमे फलितमाह—तस्मादिति। निरुपाख्यत्वं वाचा मनसा चागोचरत्वम्। तत्र निर्विशेषत्वमेकत्वं च हेतु। निरुपाधिकस्येति निर्विशेषत्वं साधयितुमुक्तम्। तत्र च वीप्सावाक्यं प्रमाणं कृतम्। कथं पुनरेवंविधस्य वस्तुनः संसारित्वं तदाह—अविद्येति। तैर्विशिष्टं यत्कार्यं करणं तेनोपाधिनोपहितः परमात्मा जीवः संसारीति च व्यपदेशभाग्भवतीत्यर्थः। तथाऽपि कथं तस्यान्तर्यामित्वं तदाह—नित्येति। नित्यं निरतिशयं सर्वत्राप्रतिबद्धं ज्ञानं तस्मिन्सत्त्व-
४० परिणामे सत्त्वप्रधाना मायाशक्तिरुपाधिस्तेन विशिष्टः सन्नात्मेश्वरोऽन्तर्यामीति चोच्यत इत्यर्थः।

अथ तृतीयाध्यायस्य नवमं ब्राह्मणम्

अथ हैनं विदग्धः शाकल्यः पप्रच्छ कति देवा याज्ञवल्क्येति स हैतयैव निविदा प्रतिपेदे यावन्तो वैश्वदेवस्य निविद्युच्यन्ते त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेत्योमिति होवाच कत्येव देवा याज्ञवल्क्येति त्रयस्त्रिँशदित्योमिति होवाच कत्येव देवा याज्ञवल्क्येति ५ षडित्योमिति होवाच कत्येव देवा याज्ञवल्क्येति त्रय इत्योमिति होवाच कत्येव देवा याज्ञवल्क्येति द्वावित्योमिति होवाच कत्येव देवा याज्ञवल्क्येत्यध्यर्ध इत्योमिति होवाच कत्येव देवा याज्ञवल्क्येत्येक इत्योमिति होवाच कतमे ते त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेति ॥१॥

स एव निरुपाधिः केवलः शुद्धः स्वेन स्वभावेनाक्षरं पर उच्यते। तथा हिरण्यगर्भाव्याकृतदेवताजाति- १० पिण्डमनुष्यतिर्यक्प्रेतादिकार्यकरणोपाधिभिर्विशिष्टस्तदाख्यस्तद्रूपो भवति। तथा "तदेजति तन्नैजती"ति व्याख्यातम्। तथा "एष त आत्मा" "एष सर्वभूतान्तरात्मा" "एष सर्वेषु भूतेषु गूढ." "तत्त्वमसि" "अहमेवेदं सर्वम्" "आत्मैवेदं सर्वम्" "नान्योऽतोऽस्ति द्रष्टा" इत्यादिश्रुतयो न विरुध्यन्ते। कल्पनान्तरेष्वेताः श्रुतयो न गच्छन्ति। तस्मादुपाधिभेदेनैवैषां भेदो नान्यथैकमेवाद्वितीयमित्यवधारणात्सर्वोपनिषत्सु ॥१२॥

इति बृहदारण्यकोपनिषद्भाष्ये तृतीयाध्यायस्याष्टमं ब्राह्मणम् ॥८॥ १५

अथ हैनं विदग्धः शाकल्यः पप्रच्छ। पृथिव्यादीनां सूक्ष्मतारतम्यक्रमेण पूर्वस्य पूर्वस्योत्तरस्मिन्नुत्तरस्मिन्नोतप्रोतभावं कथयन्सर्वान्तरं ब्रह्म प्रकाशितवान्। तस्य च ब्रह्मणो व्याकृतविषये सूत्रभेदेषु नियन्तृत्वमुक्तम्। व्याकृतविषये व्यक्ततरं लिङ्गमिति। तस्यैव ब्रह्मणः साक्षादपरोक्षत्वे नियन्तव्यदेवताभेदसंकोचविकासद्वारेणाधिगन्तव्ये इति तदर्थं शाकल्यब्राह्मणमारभ्यते।

कथं तर्हि तस्मिन्नक्षरशब्दप्रवृत्तिस्तत्राऽऽह—स एवेति। निरुपाधित्वं शुद्धत्वे हेतुः। केवलत्वमद्वितीयत्वम्। २० तथापि कथं तत्र हिरण्यगर्भादिशब्दप्रत्ययावित्याशङ्क्याऽऽह—तथेति। यथैकस्मिन्नेव परस्मिन्नात्मनि कल्पितोपाधिप्रयुक्तं नानात्वं तथा 'तदेजति तन्नैजती'त्यादिवाक्यमाश्रित्य प्रागेवोक्तमित्याह—तथेति। कल्पनया परस्य नानात्वं वस्तुतस्त्वेकरस्यमित्यत्र श्रुतीरुदाहरति—तथेत्यादिना। अवस्थाशक्तिविकारावयवपक्षेष्वपि यथोक्तश्रुतीनामुपपत्तिमाशङ्क्याऽऽह—कल्पनान्तरेष्विति। औपाधिकोऽन्तर्याम्यादिभेदो न स्वाभाविक इत्युपसंहरति—तस्मादिति। स्वतो वस्तुनि नास्ति भेदः किन्त्वैकरस्यमेवेत्यत्र हेतुमाह—एकमिति ॥१२॥ २५

इति बृहदारण्यकोपनिषद्भाष्यटीकायां तृतीयाध्यायस्याष्टमं ब्राह्मणम् ॥८॥

ब्राह्मणान्तरमुत्थापयति—अथेति। गार्गिप्रश्ने निर्णीते तथा ब्रह्मवदनं प्रत्येत्तुल्यो नास्तीति सर्वान्प्रति कथनानन्तर्यमथशब्दार्थः। संगतिं वक्तुं वृत्तं कीर्तयति—पृथिव्यादीनामिति। यत्साक्षादित्यादि प्रस्तुत्य सर्वान्तरत्वनिरूपणद्वारा साक्षित्वादिकमार्थिकं ब्राह्मणत्रये निर्धारितमित्यर्थः। अन्तर्यामिब्राह्मणे मुखतो निर्दिष्टमर्थमनुद्रवति—तस्य चेति। नामरूपाभ्या व्याकृतो विषयो द्वैतप्रपञ्चस्तत्र सूत्रस्य भेदा ये पृथिव्यादयस्तेषु नियम्येषु नियन्तृत्वं ३० तस्योक्तमिति योजना। किमिति व्याकृतविषये नियन्तृत्वमुक्तमिति तत्राऽऽह—व्याकृतेति। तत्र हि परतन्त्रस्य पृथिव्यादेर्ग्रहणं नियम्यत्वे स्पष्टतरं लिङ्गमिति तत्रैव नियन्तृत्वमुक्तमित्यर्थः। वृत्तमनूद्योत्तरस्य ब्राह्मणस्य तात्पर्यमाह—तस्यैवेति। नियन्तव्याना देवताभेदानां प्राणान्तः संकोचो विकासश्चाऽऽनन्त्यपर्यन्तस्तद्द्वारा प्रकृतस्यैव ब्रह्मणः साक्षात्परोक्षत्वे 'स एष नेति नेत्यात्मे'त्यादिनाऽधिगन्तव्ये इति कृत्वा प्रथमं देवतासंकोचविकासोक्तिरनन्तरं वस्तुनिर्देश इत्येतदर्थमेतद्ब्राह्मणमित्यर्थः।

स होवाच महिमान एवैषामेते त्रयस्त्रिँ शत्त्वेव देवा इति कतमे ते त्रयस्त्रिँ शदित्यष्टौ
वसव एकादश रुद्रा द्वादशादित्यास्त एकत्रिँ शदिन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिँ शाविति ॥२॥
कतमे वसव इत्यग्निश्च पृथिवी च वायुश्चान्तरिक्षं चादित्यश्च द्यौश्च चन्द्र-
माश्च नक्षत्राणि चैते वसव एतेषु हीदं वसु सर्वँ हितमिति तस्माद्वसव इति ॥३॥
५ कतमे रुद्रा इति दशेमे पुरुषे प्राणा आत्मैकादशस्ते यदास्माच्छरी-
रान्मर्त्यादुत्क्रामन्त्यथ रोदयन्ति तद्यद्रोदयन्ति तस्माद्रुद्रा इति ॥४॥

अथ हैनं विदग्ध इति नामतः शकलस्यापत्यं शाकल्यः पप्रच्छ कतिसंख्याका देवा हे याज्ञवल्क्येति। स
याज्ञवल्क्यो ह किलैतयैव वक्ष्यमाणया निविदा प्रतिपेदे संख्यां यां संख्यां पृष्टवाञ्छाकल्यो यावन्तो यावत्संख्याका
देवा वैश्वदेवस्य शस्त्रस्य निविदि। निविन्नाम देवतासंख्यावाचकानि मन्त्रपदानि कानिचिद्वैश्वदेवे शस्त्रे शस्यन्ते
१० तानि निवित्संज्ञकानि। तस्यां निविदि यावन्तो देवाः श्रूयन्ते तावन्तो देवा इति। का पुनः सा निविदिति। तानि
निवित्पदानि प्रदर्श्यन्ते—त्रयश्च त्री च शता त्रयश्च देवा देवानां त्री च त्रीणि च शतानि पुनरप्येवं त्रयश्च त्री च
सहस्रा सहस्राण्येतावन्तो देवा इति। शाकल्योऽप्योमिति होवाच। एवमेषां मध्यमा संख्या सम्यक्त्वया ज्ञाता।
पुनस्तेषामेव देवानां संकोचविषयां संख्यां पृच्छति—कत्येव देवा याज्ञवल्क्येति। त्रयस्त्रिंशत्षट्त्रयो द्वावध्यर्ध एक
इति। देवतासंकोचविकासविषयां संख्यां पृष्ट्वा पुनः संख्येयस्वरूपं पृच्छति—कतमे ते त्रयश्च त्री च शता त्री च
१५ सहस्रेति ॥१॥

स होवाचेतरो महिमानो विभूतय एषां त्रयस्त्रिंशतां देवानामेते त्रयश्च त्री च शतेत्यादयः। परमार्थतस्तु
त्रयस्त्रिंशत्त्वेव देवा इति। कतमे ते त्रयस्त्रिंशदित्युच्यते। अष्टौ वसव एकादश रुद्रा द्वादशाऽऽदित्यास्त एकत्रिंश-
दिन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिंशतां पूरणौ ॥२॥

कतमे वसव इति तेषां स्वरूपं प्रत्येकं पृच्छ्यते। अग्निश्च पृथिवी चेत्यग्न्याद्या नक्षत्रान्ता एते वसवः।
२० प्राणिनां कर्मफलाश्रयत्वेन कार्यकरणसंघातरूपेण तन्निवासत्वेन च विपरिणमन्तो जगदिदं सर्वं वासयन्ति वसन्ति
च। ते यस्माद्वासयन्ति तस्माद्वसव इति ॥३॥

कतमे रुद्रा इति दशेमे पुरुषे कर्मबुद्धीन्द्रियाणि प्राणा आत्मा मन एकादश एकादशानां पूरणस्त एते
प्राणा यदाऽस्माच्छरीरान्मर्त्यात्प्राणिनां कर्मफलोपभोगक्षय उत्क्रामन्ति। अथ तदा रोदयन्ति तत्संबन्धिनः।
तत्तत्र यस्माद्रोदयन्ति ते संबन्धिनस्तस्माद्रुद्रा इति ॥४॥

२५ ब्राह्मणारम्भमेवमुक्त्वा तदक्षराणि व्याकरोति—अथेत्यादिना। निविदि श्रूयन्ते तावन्तो देवा इत्युत्तरत्र
संबन्धः। केयं निविदिति पृच्छति—निविन्नामेति। उत्तरमाह—देवतेति। पदार्थमुक्त्वा वाक्यार्थं कथयति—तस्या-
मिति। यद्यपि भाष्ये निविद्व्याख्याता तथाऽपि प्रश्नद्वारा श्रुत्या तां व्याख्याति—का पुनरित्यादिना। अनुज्ञावाक्यं
व्याकरोति—एवमिति। मध्यमा संख्या षडधिकत्रिशताधिकत्रिसहस्रलक्षणा। कत्येवेत्यादिप्रश्नानां पूर्वप्रश्नेन पौन-
रुक्त्यमाशङ्क्य परिहरति—पुनरित्यादिना। कतमे ते त्रयश्चेत्यादिप्रश्नस्य विषयभेदं दर्शयति—देवतेति ॥१॥

३० कति तर्हि देवा निविदि भवन्ति तत्राऽऽह—परमार्थतस्त्विति। त्रयस्त्रिंशतो देवानां स्वरूपं प्रश्नद्वारा
निर्धारयति—कतमे त इति ॥२॥

उत्तरप्रश्नप्रपञ्चप्रतीकं गृहीत्वा तस्य तात्पर्यमाह—कतम इति। तेषां वस्वादीनां प्रत्येकं वस्वादित्रये
प्रतिगणमिन्द्रे प्रजापतौ चैकैकस्येत्यर्थः। तेषां वसुत्वमेतेषु हीत्यादिवाक्यारम्भेन स्पष्टयति—प्राणिनां मिति। तेषां
कर्मणस्तत्फलस्य चाऽऽश्रयत्वेन तेषामेव निवासत्वेन च शरीरेन्द्रियसमुदायाकारेण विपरिणमन्तोऽग्न्यादयो जगदेतद्वास-
३५ यन्ति स्वयं च तत्र वसन्ति तस्माद्युक्तं तेषां वसुत्वमित्यर्थः। वसुत्वं निगमयति—ते यस्मादिति ॥३॥

प्राणशब्दार्थमाह—कर्मेति। ते यदाऽस्मादित्यादिवाक्यमनुसृत्य तेषां रुद्रत्वमुपपादयति—त एते प्राणा
इति। मरणकालः सप्तम्यर्थः ॥४॥

कतम आदित्या इति द्वादश वै मासाः संवत्सरस्यैत आदित्या एते हीदँ सर्वमाददाना यन्ति ते यदिदँ सर्वमाददाना यन्ति तस्मादादित्या इति ॥५॥

कतम इन्द्रः कतमः प्रजापतिरिति स्तनयित्नुरेवेन्द्रो यज्ञः प्रजापतिरिति कतमः स्तनयित्नुरित्यशनिरिति कतमो यज्ञ इति पशव इति ॥६॥

कतमे षडित्यग्निश्च पृथिवी च वायुश्चान्तरिक्षं चाऽऽदित्यश्च द्यौश्चैते षडेते हीदँ सर्वँ षडिति ॥७॥ ५

कतमे ते त्रयो देवा इतीम एव त्रयो लोका एषु हीमे सर्वे देवा इति कतमौ तौ द्वौ देवावित्यन्नं चैव प्राणश्चेति कतमोऽध्यर्ध इति योऽयं पवत इति ॥८॥

तदाहुर्यदयमेक इवैव पवतेऽथ कथमध्यर्ध इति यदस्मिन्निदँ सर्वमध्यार्ध्नोत्तेनाध्यर्ध इति कतम एको देव इति प्राण इति स ब्रह्म त्यदित्याचक्षते ॥९॥

कतम आदित्या इति द्वादश वै मासाः संवत्सरस्य कालस्यावयवाः प्रसिद्धा एत आदित्याः। कथम्। एते १० हि यस्मात्पुनः पुनः परिवर्तमानाः प्राणिनामायूंषि कर्मफलं चाऽऽददाना गृह्णन्त उपाददतो यन्ति गच्छन्ति ते यत्तस्मादेवमिदं सर्वमाददाना यन्ति तस्मादादित्या इति ॥५॥

कतम इन्द्रः कतमः प्रजापतिरिति स्तनयित्नुरेवेन्द्रो यज्ञः प्रजापतिरिति कतमः स्तनयित्नुरित्यशनिरिति। अशनिर्वज्रं वीर्यं बलं यत्प्राणिनः प्रमापयति स इन्द्रः। इन्द्रस्य हि तत्कर्म। कतमो यज्ञ इति पशव इति। यज्ञस्य हि साधनानि पशवः। यज्ञस्यारूपत्वात्पशुसाधनाश्रयत्वाच्च पशवो यज्ञ इत्युच्यते ॥६॥ १५

कतमे षडिति। त एवाग्न्यादयो वसुत्वेन पठिताश्चन्द्रमसं नक्षत्राणि च वर्जयित्वा षड् भवन्ति षट्संख्याविशिष्टाः। एते हि यस्मात्त्रयस्त्रिंशदादि यदुक्तमिदं सर्वमेत एव षड् भवन्ति। सर्वो हि वस्वादिविस्तर एतेष्वेव षट्स्वन्तर्भवतीत्यर्थः ॥७॥

कतमे ते त्रयो देवा इति। इम एव त्रयो लोका इति। पृथिवीमग्निं चैकीकृत्यैको देवोऽन्तरिक्षं वायुं चैकीकृत्य द्वितीयो दिवमादित्यं चैकीकृत्य तृतीयस्त एव त्रयो देवा इति। एषु हि यस्माच्च त्रिषु देवेषु सर्वे देवा २० अन्तर्भवन्ति तेनैत एव देवास्त्रय इत्येष नैरुक्तानां केषांचित्पक्षः कतमौ तौ द्वौ देवाविति। अन्नं चैव प्राणश्चैतौ द्वौ देवावनयोः सर्वेषामुक्तानामन्तर्भावः कतमोऽध्यर्ध इति। योऽयं पवते वायुः ॥८॥

तत्तत्राऽऽहुश्चोदयन्ति यदयं वायुरेक इवैवैक एव पवते। अथ कथमध्यर्ध इति। यदस्मिन्निदं सर्वमध्यार्ध्नोदस्मिन्वायौ सतीदं सर्वमध्यार्ध्नोदधि ऋद्धिं प्राप्नोति तेनाध्यर्ध इति। कतम एको देव इति। प्राण इति। स

तेषामादित्यत्वमप्रसिद्धमिति शङ्कते—कथमिति। एते हीत्यादिवाक्येनोत्तरमाह—एते हीति ॥५॥ २५

प्रसिद्धं वज्रं व्यावर्तयति—वीर्यमिति। तदेव संघातनिष्ठत्वेन स्फुटयति—बलमिति। किं तद्बलमिति चेत्तत्राऽऽह—यत्प्राणिन इति। प्रमापणं हिंसनम्। कथं तस्येन्द्रत्वमुपचारादित्याह—इन्द्रस्य हीति। पशूनां यज्ञत्वमप्रसिद्धमित्याशङ्क्याऽऽह—यज्ञस्य हीति। कारणे कार्योपचारं साधयति—यज्ञस्येति। अमूर्तत्वात्साधनव्यतिरिक्तरूपाभावाद्यज्ञस्य पश्वाश्रयत्वाच्च पशवो यज्ञ इत्युच्यत इत्यर्थः ॥६॥

एते हीति प्रतीकमादाय व्याचष्टे—यस्मादिति। यत्त्रयस्त्रिंशदाद्युक्तं तत्सर्वमेत एव यस्मात्तस्मादेते षड् ३० भवन्तीति योजना अक्षरार्थमुक्त्वा वाक्यार्थमाह—सर्वो हीति ॥७॥

प्रतिज्ञासमाप्ताविति शब्दः। तत्र हेतुः—एषु हीति। देवलक्षणकृतां केषांचिदेव पक्षो दर्शितोऽन्येषा तु त्रयो लोका इत्यस्य यथाश्रुतोऽर्थ इत्याह—इत्येष इति ॥८॥

एकस्याध्यर्धत्वमाक्षिपति—तत्तत्रेति। इवशब्दस्तु कथमित्यत्र संबध्यते। परिहरति—यदस्मिन्निति। प्राणस्य ब्रह्मत्वं साधयति—सर्वेति। तेन महत्त्वेनेति यावत्। तस्य परोक्षत्वप्रतिपत्तौ प्रयत्नगौरवार्थं कथयति— ३५

पृथिव्येव यस्यायतनमग्निर्लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परा-
यणꣳ स वै वेदिता स्यात् । याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्वस्यात्मनः परायणं
यमात्थ य एवायꣳ शारीरः पुरुषः स एष वदैव शाकल्य तस्य का देवतेत्यमृतमिति होवाच ॥१०॥

प्राणो ब्रह्म सर्वदेवात्मकत्वान्महद्ब्रह्म तेन स ब्रह्म त्यदित्याचक्षते त्यदिति तद्ब्रह्माऽऽचक्षते परोक्षाभिधायकेन
५ शब्देन । देवानामेतदेकत्वं नानात्वं च । अनन्तानां देवानां निवित्संख्याविशिष्टेष्वन्तर्भावः । तेषामपि त्रयस्त्रिंशदा-
दिषूत्तरोत्तरेषु यावदेकस्मिन्प्राणे प्राणस्यैव चैकस्य सर्वोऽनन्तसंख्यातो विस्तरः । एवमेकश्चानन्तश्चावान्तरसंख्या-
विशिष्टश्च प्राण एव । तत्र च देवस्यैकस्य नामरूपकर्मगुणशक्तिभेदोऽधिकारभेदात् ॥९॥

इदानीं तस्यैव प्राणस्य ब्रह्मणः पुनरष्टधा भेद उपदिश्यते—

पृथिव्येव यस्य देवस्याऽऽयतनमाश्रयोऽग्निर्लोको यस्य लोकयत्यनेनेति लोकः पश्यतीत्यग्निना पश्यतीत्यर्थः ।
१० मनोज्योतिर्मनसा ज्योतिषा संकल्पविकल्पादिकार्यं करोति यः सोऽयं मनोज्योतिः । पृथिवीशरीरोऽग्निर्दर्शनो
मनसा संकल्पयिता पृथिव्यभिमानी कार्यकरणसंघातवान्देव इत्यर्थः । य एवंविशिष्टं वै तं पुरुषं विद्याद्विजानीया-
त्सर्वस्याऽऽत्मन आध्यात्मिकस्य कार्यकरणसंघातस्याऽऽत्मनः परमयनं पर आश्रयस्तं परायणम् । मातृजेन
त्वङ्मांसरुधिररूपेण क्षेत्रस्थानीयेन बीजस्थानीयस्य पितृजस्यास्थिमज्जाशुक्ररूपस्य परमयनं करणात्मनश्च स वै
वेदिता स्याद्य एतदेवं वेत्ति स वै वेदिता पण्डितः स्यादित्यभिप्रायः याज्ञवल्क्य त्वं तमजानन्नेव पण्डिताभि-
१५ मानीत्यभिप्रायः ।

यदि तद्विज्ञाने पाण्डित्यं लभ्यते वेद वा अहं तं पुरुषं सर्वस्याऽऽत्मनः परायणं यमात्थ यं कथयसि तमहं
वेद तत्र शाकल्यस्य वचनं द्रष्टव्यम् । यदि त्वं वेत्थ तं पुरुषं ब्रूहि किंविशेषणोऽसौ । शृणु यद्विशेषणः सः । य
एवायं शारीरः पार्थिवांशे शरीरे भवः शारीरो मातृजकोशत्रयरूप इत्यर्थः । स एष देवो यस्त्वया पृष्टो हे शाकल्य ।
किंत्वस्ति तत्र वक्तव्यं विशेषणान्तरं तद्वदैव पृच्छैवेत्यर्थो हे शाकल्य । स एवं प्रक्षोभितोऽमर्षवशग आह—तोत्रार्दित
२० इव गजस्तस्य देवस्य शारीरस्य का देवता यस्मान्निष्पद्यते यः सा तस्य देवतेत्यस्मिन्प्रकरणे विवक्षितम् । अमृत-

त्यदितीति । उक्तमर्थं प्रतिपत्तिसौकर्यार्थं संगृह्णाति—देवानामिति । एकत्वं प्राणे पर्यवसानम् । नानात्वमानन्त्यम् ।
षडधिकत्रिशताधिकत्रिसहस्रसंख्याकानामेव देवानामत्रोक्तत्वात्कथं तदानन्त्यमित्याशङ्क्य शतसहस्रशब्दाभ्यामनन्तता-
ऽप्युक्तेवेत्याशयेनाऽऽह—अनन्तानामिति । एकस्मिन्प्राणे पर्यवसानं यावद्भवति तावत्पर्यन्तमुत्तरोत्तरेषु त्रयस्त्रिंश-
दादिषु तेषामप्यन्तर्भाव इत्याह—तेषामपीति । प्राणस्य कस्मिन्नन्तर्भावस्तत्राऽऽह—प्राणस्यैवेति । संगृहीतमर्थमुप-
२५ संहरति—एवमिति । एकस्यानेकधाभावे किं निमित्तमित्याशङ्क्याऽऽह—तत्रेति । उक्तरीत्या प्राणस्वरूपे स्थिते सतीति
यावत् । देवस्यैकस्य प्रकृतस्य प्राणस्यैवेत्यर्थः । प्राणिनां ज्ञाने कर्मणि चाधिकारस्य स्वामित्वस्य भेदोऽधिकारभेदस्त-
न्निमित्तत्वेन देवस्यानेकसंस्थानपरिणामसिद्धिः । प्राणिनो हि ज्ञानं कर्म चानुष्ठाय सूत्रांशमग्न्यादिरूपमापद्यन्ते तद्युक्तो
यथोक्तो भेद इत्यर्थः ॥९॥

संकोचविकासाभ्यां प्राणस्वरूपोक्त्यनन्तरमवसरप्राप्तिरिदानीमित्युच्यते । उपदिश्यते ध्यानार्थमिति शेषः ।
३० अन्वयवशो वाक्यं योजयति—पृथिवीति । संपिण्डितं वाक्यत्रयार्थं कथयति—पृथिवीत्यादिना । वैशब्दोऽवधारणार्थः ।
तं परायणं य एव विजानीयात्स एव वेदिता स्यादिति संबन्धः । अथ केन रूपेण पृथिवीदेवस्य कार्यकरणसंघातं
प्रत्याश्रयत्वं तदाह—मातृजेनेति । पृथिव्या मातृशब्दवाच्यत्वाद्य एव देवोऽहं पृथिव्यस्मीति मन्यते स एव शरीरारम्भक-
मातृजकोशत्रयाभिमानितया वर्तते । तथा च तस्य तेन रूपेण पितृजत्रितयं कार्यं लिङ्गं च करणं प्रत्याश्रयत्वं संभव-
तीत्यर्थः । पृथिवीदेवस्य परायणत्वमुपपाद्यानन्तरवाक्यमुत्थाप्य व्याचष्टे—स वै वेदितेति । तथाऽपि मम किमायात-
३५ मित्याशङ्क्याऽऽह—याज्ञवल्क्येति ।

स पुरुषो येन विशेषणेन विशिष्टस्तद्विशेषणमुच्यमानं शृण्वित्युक्त्वा तदेवाऽऽह—य एवेति । शरीरं हि
पञ्चभूतात्मकं तत्र पार्थिवांशे जनकत्वेन स्थितः शारीर इति यावत् । तस्य जीवत्वं वारयति—मातृजेति । पृथिवी-
देवस्य निर्णीतत्वशङ्कां वारयति—किंत्विति । याज्ञवल्क्यो वक्ता सम्प्रष्टारं शाकल्यं प्रति कथं वदेवेति कथयति
तत्राऽऽह—पृच्छेति । क्षोभितस्यामर्षवशगत्वे दृष्टान्तः—तोत्रेति । प्राकरणिकं देवताशब्दार्थमाह—यस्मादिति ।

काम एव यस्यायतनँ हृदयं लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणँ स वै वेदिता स्यात् । याज्ञवल्क्य वेद वा अहं तं पुरुषँ सर्वस्यात्मनः परायणं यमात्थ य एवायं काममयः पुरुषः स एष वदैव शाकल्य तस्य का देवतेति स्त्रिय इति होवाच ॥११॥

रूपाण्येव यस्यायतनं चक्षुर्लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणँ स वै वेदिता स्यात् । याज्ञवल्क्य वेद वा अहं तं पुरुषँ सर्वस्यात्मनः परायणं यमात्थ य एवासावादित्ये पुरुषः स एष वदैव शाकल्य तस्य का देवतेति सत्यमिति होवाच ॥१२॥ ५

आकाश एव यस्यायतनँ श्रोत्रं लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणँ स वै वेदिता स्यात् । याज्ञवल्क्य वेद वा अहं तं पुरुषँ सर्वस्यात्मनः परायणं यमात्थ य एवायँ श्रौत्रः प्रातिश्रुत्कः पुरुषः स एष वदैव शाकल्य तस्यका देवतेति दिश इति होवाच ॥१३॥

मिति होवाचामृतमिति[2] यो भुक्तस्यान्नस्य रसो मातृजस्य लोहितस्य निष्पतिहेतुस्तस्माद्धयन्नरसाल्लोहितं[3] निष्पद्यते १० स्त्रियां श्रितं ततश्च लोहितमयं शरीरं बीजाश्रयम् । समानमन्यत् ॥१०॥

काम एव यस्याऽऽयतनम् । स्त्रीव्यतिकराभिलाषः कामः कामशरीर इत्यर्थः । हृदयं लोको हृदयेन बुद्धया पश्यति । य एवायं काममयः पुरुषोऽध्यात्ममपि काममय एव तस्य का देवतेति स्त्रिय इति होवाच । स्त्रीतो हि कामस्य दीप्तिर्जायते ॥११॥

रूपाण्येव यस्याऽऽयतनम् । रूपाणि शुक्लकृष्णादीनि । य एवासावादित्ये पुरुषः सर्वेषां हि रूपाणां १५ विशिष्टं कार्यमादित्ये पुरुषस्तस्य का देवतेति । सत्यमिति होवाच । सत्यमिति चक्षुरुच्यते । चक्षुषो ह्यध्यात्मत आदित्यस्याधिदैवतस्य निष्पत्तिः ॥१२॥

आकाश एव यस्याऽऽयतनम् । य एवायं श्रोत्रे भवः श्रौत्रस्तत्रापि प्रतिश्रवणवेलायां विशेषतो भवतीति प्रातिश्रुत्कस्तस्य का देवतेति । दिश इति होवाच । दिग्भ्यो ह्यसावाध्यात्मिको निष्पद्यते ॥१३॥[1]

पुरुषो निष्पत्तिकर्ता षष्ठयोच्यते । लोहितनिष्पत्तिहेतुत्वमन्नरसस्यानुभवेन साधयति—तस्माद्धीति । तस्य कार्यमाह— २० ततश्चेति । लोहितादद्वितीयपदार्थनिष्ठात्तत्कार्यं त्वङ्मांसरुधिररूपं बीजस्यास्थिमज्जाशुक्रात्मकस्याऽऽश्रयभूतं भवतीत्यर्थः । पर्यायसप्तकमाद्यपर्यायेण तुल्यार्थत्वान्न पृथग्व्याख्यानापेक्षमित्याह—समानमिति ॥१०॥

उत्तरपर्यायेषु येषां पदानामर्थभेदस्तेषां तत्कथनार्थं प्रतीकं गृह्णाति—काम इति । वाक्यार्थमाह—कामशरीर इत्यर्थ इति । स च हृदयदर्शनो मनसा संकल्पयितेति पूर्ववत् । तस्य विशेषणं दर्शयति—य एवेति । आध्यात्मिकस्य काममयस्य पुरुषस्य कारणं पृच्छति—तस्येति । तस्यास्तत्कारणत्वमनुभवेन व्यनक्ति—स्त्रीतो हीति ॥११॥ २५

रूपशरीरस्य चक्षुर्दर्शनस्य मनसा संकल्पयितुर्देवस्य कथमादित्ये पुरुषो विशेषणमित्याशङ्क्याऽऽह—सर्वेषां हीति । रूपमात्राभिमानिनो देवस्याऽऽदित्ये पुरुषो विशेषावच्छेदः । स च सर्वरूपप्रकाशकत्वात्सर्वं रूपैः स्वप्रकाशनायाऽऽरब्ध. । तस्माद्युक्तं यथोक्तं विशेषणमित्यर्थः । कथं चक्षुषः सकाशादादित्यस्योत्पत्तिरित्याशङ्क्य 'चक्षोः सूर्यो अजायत' इति श्रुतिमाश्रित्याऽऽह—चक्षुषो हीति ॥१२॥

तत्रापीति श्रौत्रोक्तिः । प्रतिश्रवणं संवादः प्रतिविषयं श्रवणं वा सर्वाणि श्रवणानि वा तद्दशायामिति यावत् । ३० दिशस्तत्राधिदैवतमिति श्रुतिमाश्रित्याऽऽह—दिग्भ्यो हीति ॥१३॥

---

१. आकाशायतनदेवस्य प्रतिश्रवणयुक्तं श्रोत्रं विशेषायतनं कारणं दिशः ।

२. अमृतशब्दस्यान्ये चान्द्रमसं पय इत्याहुः तच्च पर्जन्यादिना जात क्षितिदेहयोः दार्ढ्यकृत् ( इति वार्तिके ) ।

३ रसाल्लोहितं—रस भुक्तान्नरसः तस्मात् लोहितं जायते तस्य चाश्रयः पितृशरीराज्जातमस्थिमज्जाशुक्रात्मक बीजं तदेव लोहितस्याश्रय इत्यर्थः ।

३५

तम एव यस्यायतनं हृदयं लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणं स वै वेदिता स्यात् । याज्ञवल्क्य वेद वा अहं तं पुरुषं सर्वस्यात्मनः परायणं यमात्थ य एवायं छायामयः पुरुषः स एष वदैव शाकल्य तस्य का देवतेति मृत्युरिति होवाच ॥१४॥
रूपाण्येव यस्यायतनं चक्षुर्लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणं स
५ वै वेदिता स्यात् । याज्ञवल्क्य वेद वा अहं तं पुरुषं सर्वस्यात्मनः परायणं यमात्थ य एवायमादर्शे पुरुषः स एष वदैव शाकल्य तस्य का देवतेत्यसुरिति होवाच ॥१५॥
आप एव यस्यायतनं हृदयं लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणं स वै वेदिता स्यात् । याज्ञवल्क्य वेद वा अहं तं पुरुषं सर्वस्यात्मनः परायणं यमात्थ य एवायमप्सु पुरुषः स एष वदैव शाकल्य तस्य का देवतेति वरुण इति होवाच ॥१६॥
१० रेत एव यस्यायतनं हृदयं लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणं स वै वेदिता स्यात् । याज्ञवल्क्य वेद वा अहं तं पुरुषं सर्वस्यात्मनः परायणं यमात्थ य एवायं पुत्रमयः पुरुषः स एष वदैव शाकल्य तस्य का देवतेति प्रजापतिरिति होवाच ॥१७॥

तम एव यस्याऽऽयतनम् । तम इति शार्वराद्यन्धकारः परिगृह्यते । अध्यात्मं छायामयोऽज्ञानमयः पुरुषस्तस्य का देवेतेति । मृत्युरिति होवाच । मृत्युरधिदैवतं तस्य निष्पत्तिकारणम् ॥१४॥

१५ रूपाण्येव यस्याऽऽयतनम् । पूर्वं साधारणानि रूपाण्युक्तानीह तु प्रकाशकानि विशिष्टानि रूपाणि गृह्यन्ते । रूपायतनस्य देवस्य विशेषायतनं प्रतिबिम्बाधारमादर्शादि तस्य का देवतेत्यसुरिति होवाच तस्य प्रतिबिम्बाख्यस्य पुरुषस्य निष्पत्तिरसोः प्राणात् ॥१५॥

आप एव यस्याऽऽयतनम् । साधारणाः सर्वा आप आयतनं वापीकूपतडागाद्याश्रयास्वप्सु विशेषावस्थानम् । तस्य का देवतेति वरुण इति । वरुणात्संघातकर्त्र्योऽध्यात्ममाप एव वाप्याद्यपां निष्पत्तिकारणम् ॥१६॥

२० रेत एव यस्याऽऽयतनं य एवायं पुत्रमयो विशेषायतनं रेतआयतनस्य पुत्रमय इति चास्थिमज्जाशुक्राणि पितुर्जातानि । तस्य का देवतेति । प्रजापतिरिति होवाच । प्रजापतिः पितोच्यते । पितृतो हि पुत्रस्योत्पत्तिः ॥१७॥

अधिदैवतं मृत्युरीश्वरो 'मृत्युनैवेदमावृतमासीदि'ति श्रुतेः । स च तस्याज्ञानमयस्याऽऽध्यात्मिकस्य पुरुषस्योत्पत्तिकारणमविवेकिप्रवृत्तेरीश्वराधीनत्वा''दीश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव'' वेति हि पठन्ति तदाह—मृत्युरिति ॥१४॥

२५ पुनरुक्तिं प्रत्याह—पूर्वमिति । आधारशब्दो भावप्रधानस्तथा च प्रतिबिम्बस्याऽऽधारत्वं यत्र तदित्युक्तं भवति । आदिशब्देन स्वच्छस्वभावं खड्गादि गृह्यते । प्राणेन हि निघृष्यमाणे दर्पणादौ प्रतिबिम्बाभिव्यक्तियोग्यो रूपविशेषो निष्पद्यते । ततो युक्त प्राणस्य प्रतिबिम्बकारणत्वमित्यभिप्रेत्याऽऽह—तस्येति ॥१५॥

आप एव यस्याऽऽयतनं य एवायमप्सु पुरुष इत्युभयत्र सामान्यविशेषभावो न प्रतिभातीति शङ्कमानं प्रत्याह—साधारणा इति । कथ पुनर्वापीकूपादिविशेषायतनस्य वरुणो देवता न हि देवतात्मनो वरुणस्य तदधिष्ठातु-
३० स्तत्कारणत्वं तत्राऽऽह—वरुणादिति । आपो वापीकूपाद्या पीताः सत्योऽध्यात्म शरीरे मूत्रादिसघात कुर्वन्ति । ताश्च वरुणाद्भवन्ति । वरुणशब्देनाऽऽप एव रश्मिद्वारा भूमिं पतन्त्योऽभिधीयन्ते । तथा च ता एव वरुणात्मिका वाप्याद्यपा पीयमानानामुत्पत्तिकारणमिति युक्तं वरुणस्य वापीतडागाद्यायतनं पुरुषं प्रति कारणत्वमित्यर्थः ॥१६॥

वाक्यद्वयं गृहीत्वा तात्पर्यमाह—विशेषेति । पुत्रमयशब्दार्थं व्याचष्टे—पुत्रमय इति ॥१७॥

---

१. अन्धकारः तस्य छायामयः अज्ञानमयः पुरुषः आयतनं तस्य कारणं मृत्युः कथमज्ञस्यैव लोके मरणदर्शनात् ।
३५ ज्ञानिनस्तदभावादज्ञस्यैवेत्युक्तम् । आकाशायतनदेवस्य प्रतिश्रवणयुक्तं श्रोत्र विशेषायतनं दिशः कारणम्—वा० ।
२. द्वितीयवारमुक्तस्य रूपाण्येवेत्यस्य विशिष्टरूपाणि प्रकाशात्मकानि विषय. तस्यायतनं आदर्शादि, प्रतिबिम्बहेतुत्वात् कारणं प्राण' बलं घर्षणहेतुत्वात् ।

शाकल्येति होवाच याज्ञवल्क्यस्त्वाँ स्विदिमे ब्राह्मणा अङ्गारावक्षयणमक्रता३ इति ॥१८॥

याज्ञवल्क्येति होवाच शाकल्यो यदिदं कुरुपञ्चालानां ब्राह्मणानत्यवादीः किं ब्रह्म विद्वानिति दिशो वेद सदेवाः सप्रतिष्ठा इति यद्दिशो वेत्थ सदेवाः सप्रतिष्ठाः ॥१९॥

किंदेवतोऽस्यां प्राच्यां दिश्यसीत्यादित्यदेवत इति स आदित्यः कस्मिन्प्रतिष्ठित इति चक्षुषीति कस्मिन्नु चक्षुः प्रतिष्ठितमिति रूपेष्विति चक्षुषा हि रूपाणि पश्यति कस्मिन्नु रूपाणि प्रतिष्ठितानीति हृदय इति होवाच हृदयेन हि रूपाणि जानाति हृदये ह्येव रूपाणि प्रतिष्ठितानि भवन्तीत्येवमेवैतद्याज्ञवल्क्य ॥२०॥ ५

अष्टधा देवलोकपुरुषभेदेन त्रिधा त्रिधाऽऽत्मानं प्रविभज्यावस्थित एकैको देवः प्राणभेद एवोपासनार्थं व्यपदिष्टः। अधुना दिग्विभागेन पञ्चधा प्रविभक्तस्याऽऽत्मनन्युपसंहारार्थमाह—तूष्णींभूतं शाकल्यं याज्ञवल्क्यो ग्रहेणेवाऽऽवेशयन्नाह। शाकल्येति होवाच याज्ञवल्क्यस्त्वां स्विदिति वितर्के। इमे नूनं ब्राह्मणा अङ्गारावक्षयणमङ्गारा अवक्षीयन्ते यस्मिन्संदंशादौ तदङ्गारावक्षयणं तन्नूनं त्वामक्रत कृतवन्तो ब्राह्मणास्त्वं तु तन्न बुध्यस आत्मानं मया दह्यमानमित्यभिप्रायः ॥१८॥ १०

याज्ञवल्क्येति होवाच शाकल्यः। यदिदं कुरुपञ्चालानां ब्राह्मणानत्यवादीरत्युक्तवानसि स्वयं भीतास्त्वामङ्गारावक्षयणं कृतवन्त इति। किं ब्रह्म विद्वान्सन्नेवमधिक्षिपसि ब्राह्मणान्। याज्ञवल्क्य आह—ब्रह्मविज्ञानं तावदिदं मम किं तद्दिशो वेद दिग्विषयं विज्ञानं जाने। तच्च न केवलं दिश एव सदेवा देवैः सह दिगधिष्ठातृभिः किंच सप्रतिष्ठाः प्रतिष्ठाभिश्च सह। इतर आह। यद्यदि दिशो वेत्थ सदेवाः। सप्रतिष्ठा इति। सफलं यदि विज्ञानं त्वया प्रतिज्ञातम् ॥१९॥ १५

किंदेवतः का देवताऽस्य तव दिग्भूतस्य। असौ हि याज्ञवल्क्यो हृदयमात्मानं दिक्षु पञ्चधा विभक्तं दिगात्मभूतं तद्द्वारेण सर्वं जगदात्मत्वेनोपगम्याहमस्मि दिगात्मेति व्यवस्थितः। पूर्वाभिमुखः सप्रतिष्ठाववनाद्यथा याज्ञवल्क्यस्य प्रतिज्ञा तथैव पृच्छति। किंदेवतस्त्वमस्यां दिश्यसीति। सर्वत्र हि वेदे यां यां देवतामुपास्त इहैव तद्भूतस्तां तां प्रतिपद्यत इति। तथा च वक्ष्यति—देवो भूत्वा देवानप्येतीति। अस्यां प्राच्यां का देवता दिगात्म- २०

शाकल्येति होवाचेत्यादिग्रन्थस्य तात्पर्यं वक्तुं वृत्तं कीर्तयति—अष्टधेति। लोकः सामान्याकारः पुरुषो विशेषावच्छेदो देवस्तत्कारणमनेन प्रकारेण त्रिधा त्रिधाऽऽत्मानं प्रविभज्य स्थितो य एकैको देव उक्तः स प्राण एव सूत्रात्मा तद्भेदत्वात्पूर्वोक्तस्य सर्वस्य स चोपासनार्थमष्टधोपदिष्टोऽधस्तादित्यर्थः। उत्तरस्य तात्पर्यं दर्शयति—अधुनेति। प्रविभक्तस्य जगतः सर्वस्येति शेषः। आत्मशब्दो हृदयविषय.। याज्ञवल्क्यवाक्यस्य शाकल्ये प्रष्टव्यबुद्धिपूर्वकारित्वापादकत्वं दर्शयति—ग्रहेणेति ॥१८॥ २५

सर्वेषामेव ब्राह्मणाना प्रायेण हन्तव्यत्वेन संमतो भवानिति मुनेरभिसहितं शाकल्यस्तु कालचोदितत्वात्तदनुरोधिनीमन्यथाप्रतिपत्तिमेवाऽऽदाय चोदयतीत्याह—यदिदमिति। दिग्विषयं विज्ञानं जाने तन्ममास्तीत्यर्थः। तच्च विज्ञानं केवलं दिङ्मात्रस्य न भवति किंतु देवैः प्रतिष्ठाभिश्च सहिता दिशो वेदेत्याह—तच्चेति। अवतारितस्य वाक्यस्यार्थं संक्षिपति—सफलमिति ॥१९॥ ३०

प्राच्या दिशि का देवतेति वक्तव्ये कथमयथा पृच्छ्यते तत्राऽऽह—असौ हीति। आत्मानमात्मीयमिति यावत्। यथोक्तं हृदयमात्मत्वेनोपगम्येति संबन्धः। तथाऽपि प्रथमं प्राचीं दिशमधिकृत्य प्रश्ने को हेतुरिति चेत्तत्राऽऽह—पूर्वाभिमुख इति। यद्यपि दिगात्माऽऽहमस्मीति स्थितस्तथाऽपि कथं सर्वं जगदात्मत्वेनोपगम्य तिष्ठतीत्यवगम्यते तत्राऽऽह—सप्रतिष्ठेति। सप्रतिष्ठा दिशो वेदेति वचनात्सर्वमपि हृदयद्वारा जगदात्मत्वेनोपगम्य स्थितो मुनिरिति प्रतिभातीत्यर्थः। प्रतिज्ञानुसारित्वाच्चायं प्रश्नो युक्तिमानित्याह—यथेति। अहमस्मि दिगात्मेति प्रतिज्ञानुसारिण्यपि प्रश्ने देहपातोत्तरभावी देवताभावः पृच्छ्यते सति देहे ध्यानुस्तद्भावायोगादित्याशङ्क्याऽऽह—सर्वत्र हीति। इति न भाविदेवताभावः प्रश्नगोचर इति शेषः। उक्तेऽर्थे वाक्यशेषमनुकूलयति—तथा चेति। प्रश्नार्थमुपसंहरति—अस्या- ३५

किंदेवतोऽस्यां दक्षिणायां दिश्यसीति यमदेवत इति स यमः कस्मिन्प्रतिष्ठित इति यज्ञ इति कस्मिन्नु यज्ञः प्रतिष्ठित इति दक्षिणायामिति कस्मिन्नु दक्षिणा प्रतिष्ठितेति श्रद्धायामिति यदा ह्येव श्रद्धत्तेऽथ दक्षिणां ददाति श्रद्धायाँ ह्येव दक्षिणा प्रतिष्ठितेति कस्मिन्नु श्रद्धा प्रतिष्ठितेति हृदय इति होवाच ५ हृदयेन हि श्रद्धां जानाति हृदये ह्येव श्रद्धा प्रतिष्ठिता भवतीत्येवमेवैतद्याज्ञवल्क्य ॥२१॥

नस्त्वदधिष्ठात्री कया देवतया त्वं प्राचीदिग्रूपेण सम्पन्न इत्यर्थः। इतर आहाऽऽदित्यदेवत इति। प्राच्यां दिशि ममाऽऽदित्यो देवता सोऽहमादित्यदेवतः। सदेवा इत्येतदुक्तं सप्रतिष्ठा इति तु वक्तव्यमित्याह। स आदित्यः कस्मिन्प्रतिष्ठित इति। चक्षुषीति। अध्यात्मतश्चक्षुष आदित्यो निष्पन्न इति हि मन्त्रब्राह्मणवादाः "चक्षोः सूर्यो अजायत" "चक्षुष आदित्य" इत्यादयः। कार्यं हि कारणे प्रतिष्ठितं भवति। कस्मिन्नु चक्षुः प्रतिष्ठितमिति। १० रूपेष्विति। रूपग्रहणाय हि रूपात्मकं चक्षूरूपेण प्रयुक्तम्। यैर्हि रूपैः प्रयुक्तं तैरात्मग्रहणायाऽऽरब्धं चक्षुस्तस्मात्सादित्यं चक्षुः सह प्राच्या दिशा सह तत्स्थैः सर्वं रूपेषु प्रतिष्ठितम्। चक्षुषा सह प्राची दिक्सर्वा रूपभूता तानि च कस्मिन्नु रूपाणि प्रतिष्ठितानीति हृदय इति होवाच। हृदयारब्धानि रूपाणि रूपाकारेण हि हृदयं परिणतम्। यस्माद्धृदयेन हि रूपाणि सर्वो लोको जानाति। हृदयमिति बुद्धिमनसी एकीकृत्य निर्देशः। तस्माद् हृदये ह्येव रूपाणि प्रतिष्ठितानि। हृदयेन हि स्मरणं भवति रूपाणां वासनात्मनां तस्माद्धृदये रूपाणि प्रतिष्ठिता- १५ नीत्यर्थः। एवमेवैतद्याज्ञवल्क्य ॥२०॥

किंदेवतोऽस्यां दक्षिणायां दिश्यसीति पूर्ववत्। दक्षिणायां दिशि का देवता तव। यमदेवत इति। यमो देवता मम दक्षिणादिग्भूतस्य। स यमः कस्मिन्प्रतिष्ठित इति। यज्ञ इति। यज्ञे कारणे प्रतिष्ठितो यमः सह दिशा। कथं पुनर्यज्ञस्य कार्यं यम इत्युच्यते। ऋत्विग्भिर्निष्पादितो यज्ञो दक्षिणया यजमानस्तेभ्यो यज्ञं निष्क्रीय तेन यज्ञेन दक्षिणां दिशं सह यमेनाभिजयति। तेन यज्ञे यमः कार्यत्वात्प्रतिष्ठितः सह दक्षिणया दिशा। कस्मिन्नु यज्ञः २० प्रतिष्ठित इति। दक्षिणायामिति। दक्षिणया स निष्क्रीयते। तेन दक्षिणाकार्यं यज्ञः। कस्मिन्नु दक्षिणा प्रतिष्ठितेति। श्रद्धायामिति। श्रद्धा नाम दित्सुत्वमास्तिक्यबुद्धिर्भक्तिसहिता। कथं तस्यां प्रतिष्ठिता दक्षिणा। तस्माद्यदा ह्येव श्रद्धत्तेऽथ दक्षिणां ददाति नाश्रद्दधद्दक्षिणां ददाति। तस्माच्छ्रद्धायां ह्येव दक्षिणा प्रतिष्ठितेति। कस्मिन्नु श्रद्धा प्रतिष्ठितेति। हृदय इति होवाच। हृदयस्य हि वृत्तिः श्रद्धा यस्माद्धृदयेन हि श्रद्धां जानाति। वृत्तिश्च वृत्तिमति प्रतिष्ठिता भवति। तस्माद्धृदये ह्येव श्रद्धा प्रतिष्ठिता भवतीत्येवमेवैतद्याज्ञवल्क्य ॥२१॥

२५ मिति। आदित्यस्य चक्षुषि प्रतिष्ठितत्वं प्रकटयितुं कार्यकारणभावं तयोरादर्शयति—अध्यात्मतश्चक्षुष इति। 'चक्षोः सूर्यो अजायत' इत्यादयो मन्त्रवादास्तदनुसारिणश्च ब्राह्मणवादाः। भवतु कार्यकारणभावस्तथाऽपि कथं चक्षुष्यादित्यस्य प्रतिष्ठितत्वं तत्राऽऽह—कार्यं हीति। कथं चक्षुषो रूपेषु प्रतिष्ठितत्वं तत्राऽऽह—रूपग्रहणायेति। तथाऽपि कथं यथोक्तमाधाराधेयत्वमत आह—यैर्हीति। चक्षुषो रूपाधारत्वे फलितमाह—तस्मादिति। उपसंहृतमर्थं संगृह्णाति—चक्षुषेति। हृदयारब्धत्वं रूपाणां स्फुटयति—रूपाकारेणेति। हृदये रूपाणां प्रतिष्ठितत्वे हेत्वन्तरमाह—यस्मादिति। ३० हृदयशब्दस्य मांसखण्डविषयत्वं व्यावर्तयति—हृदयमिति। कथं पुनर्बहिर्मुखाणि रूपाण्यन्तर्हृदये स्थातुं पारयन्ति तत्राऽऽह—हृदयेन हीति। तथाऽपि कथं तेषां हृदयप्रतिष्ठितत्वं तत्राऽऽह—वासनात्मनामिति ॥२०॥

पूर्ववदित्युक्तमेव व्यनक्ति—दक्षिणायामिति। यमस्य यज्ञकार्यत्वमप्रसिद्धमिति शङ्कित्वा व्युत्पादयति—कथमित्यादिना। तस्य यज्ञकार्यत्वे फलितमाह—तेनेति। यज्ञस्य दक्षिणाया प्रतिष्ठितत्वं साधयति—दक्षिणयेति। कार्यं च कारणे प्रतिष्ठितमिति शेषः। दक्षिणायाः श्रद्धाया प्रतिष्ठितत्वं प्रकटयति—यस्मादिति। हृदये सा ३५ प्रतिष्ठितेत्यत्र हेतुमाह—हृदयस्येति। हृदयव्याप्यत्वाच्च श्रद्धायास्तत्प्रतिष्ठितत्वमित्याह—हृदयेन हीति। हृदयस्य श्रद्धा वृत्तिरस्तु तथाऽपि प्रकृते किमायातं तदाह—वृत्तिश्चेति ॥२१॥

---

१ यमेन सहिता दक्षिणां दिशं यजमानः यज्ञेन जयति प्राप्नोति। यज्ञः ऋत्विग्भि निर्वर्त्यते तेषां दक्षिणां दत्वा यजमानः तत्सकाशाद्यज्ञं क्रीत्वा दक्षिणां दिशं जयति।

२. हृदये रूपाणि वासनारूपेण प्रतिष्ठितानि।

किंदेवतोऽस्यां प्रतीच्यां दिश्यसीति वरुणदेवत इति स वरुणः कस्मिन्प्रतिष्ठित इत्यप्स्विति कस्मिन्न्वापः प्रतिष्ठिता इति रेतसीति कस्मिन्नु रेतः प्रतिष्ठितमिति हृदय इति तस्मादपि प्रतिरूपं जातमाहुर्हृदयादिव सृप्तो हृदयादिव निर्मित इति हृदये ह्येव रेतः प्रतिष्ठितं भवतीत्येवमेवैतद्याज्ञवल्क्य ॥२२॥

किंदेवतोऽस्यामुदीच्यां दिश्यसीति सोमदेवत इति स सोमः कस्मिन्प्रतिष्ठित इति दीक्षायामिति कस्मिन्नु दीक्षा प्रतिष्ठितेति सत्य इति तस्मादपि दीक्षितमाहुः सत्यं वदेति सत्ये ह्येव दीक्षा प्रतिष्ठितेति कस्मिन्नु सत्यं प्रतिष्ठितमिति हृदय इति होवाच हृदयेन हि सत्यं जानाति हृदये ह्येव सत्यं प्रतिष्ठितं भवतीत्येवमेवैतद्याज्ञवल्क्य ॥२३॥ ५

किंदेवतोऽस्यां ध्रुवायां दिश्यसीत्यग्निदेवत इति सोऽग्निः कस्मिन्प्रतिष्ठित इति वाचीति कस्मिन्नु वाक्प्रतिष्ठितेति हृदय इति कस्मिन्नु हृदयं प्रतिष्ठितमिति ॥२४॥ १०

किंदेवतोऽस्यां प्रतीच्यां दिश्यसीति। तस्यां वरुणोऽधिदेवता मम। स वरुणः कस्मिन्प्रतिष्ठित इत्यप्स्विति। अपां हि वरुणः कार्यम्। "श्रद्धा वा आपः" "श्रद्धातो वरुणमसृजत" इति श्रुतेः। कस्मिन्न्वापः प्रतिष्ठिता इति। रेतसीति। "रेतसो ह्यापः सृष्टाः" इति श्रुतेः कस्मिन्नु रेतः प्रतिष्ठितमिति। हृदय इति। यस्माद्धृदयस्य कार्यं रेतः। कामो हृदयस्य वृत्तिः। कामिनो हि हृदयाद्रेतोऽधिस्कन्दति। तस्मादपि प्रतिरूपमनुरूपं पुत्रं जातमाहुर्लौकिका। अस्य पितुर्हृदयादिवायं पुत्रः सृप्तो विनिःसृतो हृदयादिव निर्मितो यथा सुवर्णेन निर्मितः कुण्डलः। तस्माद्धृदये ह्येव रेतः प्रतिष्ठितं भवतीत्येवमेवैतद्याज्ञवल्क्य ॥२२॥ १५

किंदेवतोऽस्यामुदीच्यां दिश्यसीति। सोमदेवत इति। सोम इति लतां सोमं देवतां चैकीकृत्य निर्देशः। स सोमः कस्मिन्प्रतिष्ठित इति। दीक्षायामिति। दीक्षितो हि यजमानः सोमं क्रीणाति क्रीतेन सोमेनेष्ट्वा ज्ञानवानुत्तरां दिशं प्रतिपद्यते समदेवताधिष्ठितां सौम्याम्। कस्मिन्नु दीक्षा प्रतिष्ठितेति। सत्य इति। कथम्। यस्मात्सत्ये दीक्षा प्रतिष्ठिता तस्मादपि दीक्षितमाहुः सत्यं वदेति कारणभ्रेषे कार्यभ्रेषो मा भूदिति। सत्ये ह्येव दीक्षा प्रतिष्ठितेति। कस्मिन्नु सत्यं प्रतिष्ठितमिति। हृदय इति होवाच। हृदयेन हि सत्यं जानाति। तस्माद्धृदये ह्येव सत्यं प्रतिष्ठितं भवतीत्येवमेवैतद्याज्ञवल्क्य ॥२३॥ २०

किंदेवतोऽस्यां ध्रुवायां दिश्यसीति। मेरोः समन्ततो वसतामव्यभिचारादूर्ध्वा दिग्ध्रुवेत्युच्यते। अग्निदेवत इति। ऊर्ध्वायां हि प्रकाशभूयस्त्वं प्रकाशश्चाग्निः। सोऽग्निः कस्मिन्प्रतिष्ठित इति वाचीति। कस्मिन्नु २५

रेतसो हृदयकार्यत्वं साधयति—काम इति। तथाऽपि कथं रेतो हृदयस्य कार्यं तदाह—कामिनो हीति। तत्रैव लोकप्रसिद्धिं प्रमाणयति—तस्मादिति। अपिशब्दः संभावनार्थोऽवधारणार्थो वा ॥२२॥

दीक्षायां सोमस्य प्रतिष्ठितत्वं साधयति—दीक्षितो हीत्यादिना। दीक्षायाः सत्ये प्रतिष्ठितत्वमप्रसिद्धमिति शङ्कित्वा समाधत्ते—कथमित्यादिना। अपिशब्दोऽवधारणार्थः। सत्यं वदेति वदतामभिप्रायमाह—कारणेति। भ्रेषो भ्रंशो नाशः। इति तेषामभिप्राय इति शेषः। प्रकृतोपसंहारः—सत्ये हीति ॥२३॥ ३०

कथं पुनरूर्ध्वा दिगवस्थिता ध्रुवेत्युच्यते तत्राऽऽह—मेरोरिति। तत्राग्नेर्देवतात्वं प्रकटयति—ऊर्ध्वायां हीति। 'दिशो वेद' इत्यादिश्रुत्या जगतो विभागेन पञ्चधात्वं ध्यानार्थमुक्तमिदानीं विभागवादिन्याः श्रुतेरभिप्रायमाह—

१. ज्ञानवानिति—केवलकर्मणः उत्तरायणप्राप्तेरभावात्।

२. अव्यभिचारात्—सर्वेषामेव वर्णाणां मेरुरुत्तरतः स्थित इति वचनात् पूर्वादयः एकैकदिशि स्थितानां वर्णाणां भिन्नभिन्ना उर्ध्वा दिक् तु सर्वेषामेका अव्यभिचारिणीत्यर्थः। ३५

अहल्लिकेति होवाच याज्ञवल्क्यो यत्रैतदन्यत्रास्मन्मन्यासै यद्ध्येतदन्यत्रास्मत्स्याच्छ्वानो वैनदद्युर्वयाꣳसि वैनद्विमथ्नीरन्निति ॥२५॥

कस्मिन्नु त्वं चात्मा च प्रतिष्ठितौ स्थ इति प्राण इति कस्मिन्नु प्राणः प्रतिष्ठित इत्यपान इति कस्मिन्न्वपानः प्रतिष्ठित इति व्यान इति कस्मिन्नु व्यानः प्रतिष्ठित

५ वाक्प्रतिष्ठितेति। हृदय इति। तत्र याज्ञवल्क्यः सर्वासु दिक्षु विप्रसृतेन हृदयेन सर्वा दिश आत्मत्वेनाभिसंपन्नः। सदेवाः सप्रतिष्ठा दिश आत्मभूतास्तस्य नामरूपकर्मात्मभूतस्य याज्ञवल्क्यस्य। यद्रूपं तत्प्राच्या दिशा सह हृदयभूतं याज्ञवल्क्यस्य। यत्केवलं कर्म पुत्रोत्पादनलक्षणं च ज्ञानहितं च सह फलेनाधिष्ठात्रीभिश्च देवताभिर्दक्षिणाप्रतीच्युदीच्यः कर्मफलात्मिका हृदयमेवाऽऽपन्नास्तस्य। ध्रुवया दिशा सह नाम सर्वं वाग्द्वारेण हृदयमेवाऽऽपन्नम्। एतावद्धीदं सर्वं यदुत रूपं वा कर्म वा नाम वेति तत्सर्वं हृदयमेव तत्सर्वात्मकं हृदयं पृच्छ्यते कस्मिन्नु हृदयं
१० प्रतिष्ठितमिति ॥२४॥

अहल्लिकेति होवाच याज्ञवल्क्यो नामान्तरेण संबोधनं कृतवान्। यत्र यस्मिन्काल एतद्धृदयमात्माऽस्य शरीरस्यान्यत्र क्वचिद्देशान्तरेऽस्मदस्मत्तो वर्तत इति मन्यासै मन्यसे। यद्धि यदि ह्येतद्धृदयमन्यत्रास्मत्स्याद्भवेच्छ्वानो वैनच्छरीरं तदाऽद्युर्वयांसि वा पक्षिणो वैनद्विमथ्नीरन्विलोडयेयुर्विकर्षेरन्निति। तस्मान्मयि शरीरे हृदयं प्रतिष्ठितमित्यर्थः। शरीरस्यापि नामरूपकर्मात्मकत्वाद्धृदये प्रतिष्ठितत्वम् ॥२५॥

१५ हृदयशरीरयोरेवमन्योन्यप्रतिष्ठोक्ता कार्यकरणयोरतस्त्वां पृच्छामि। कस्मिन्नु त्वं च शरीरमात्मा च तव हृदयं प्रतिष्ठितौ स्थ इति। देहात्मानौ प्राणे प्रतिष्ठितौ स्यातां प्राणवृत्तौ कस्मिन्नु प्राणः प्रतितिष्ठित इत्यपान इति। साऽपि प्राणवृत्तिः प्रागेव प्रेयादपान वृत्त्या चेन्न निगृह्यते। कस्मिन्न्वपानः प्रतिष्ठित इति व्यान इति। साऽप्यपानवृत्तिरध एव यायात्प्राणवृत्तिश्च प्रागेव मध्यस्थया चेद्व्यानवृत्त्या न निगृह्यते कस्मिन्नु व्यानः प्रतिष्ठित इति। उदान इति। सर्वास्तिस्रोऽपि वृत्तय उदाने कीलस्थानीये चेन्न निबद्धा विष्वङ्ङेयुः। कस्मिन्नूदानः प्रतिष्ठित इति
२० समान इति। समानप्रतिष्ठा ह्येताः सर्वा वृत्तयः। एतदुक्तं भवति—शरीरहृदयवायवोऽन्योन्यप्रतिष्ठाः संघातेन

तत्रेति। यथोक्ते विभागे सतीति यावत्। उक्तमर्थं संक्षिपति—सदेवा इति। तत्रावान्तरविभागमाह—यद्रूपमिति। आद्ये पर्याये हृदये रूपप्रपञ्चोपसंहारो दर्शित.। 'हृदये ह्येव रूपाणि' इति श्रुतेरित्यर्थः। दक्षिणायामित्यादिपर्यायत्रयेण तत्रैव कर्मोपसंहार उक्त इत्याह—यत्केवलमिति। यद्धि केवलं कर्म तत्फलादिभिः सह दक्षिणादिगात्मकं हृद्युपसंह्रियते यज्ञस्य दक्षिणादिद्वारा हृदये प्रतिष्ठितत्वोक्तेर्दक्षिणस्या दिशस्तत्फलत्वात्पुत्रजन्माख्यं च कर्म प्रतीच्यात्मकं तत्रैवोप-
२५ संहृतम्। 'हृदये ह्येव रेत प्रतिष्ठितम्' इति श्रुतेः। पुत्रजन्मनश्च तत्कार्यत्वाज्ज्ञानसहितमपि कर्म फलप्रतिष्ठादेवताभिः सहोदीच्यात्मकं तत्रैवोपसंहृत सोमदेवताया दीक्षादिद्वारा तत्प्रतिष्ठित्वश्रुतेरेव दिक्त्रये सर्वं कर्म हृदि संहृतमित्यर्थ। पञ्चमपर्यायस्य तात्पर्यमाह—ध्रुवयेति। नामरूपकर्मसूपसंहृतेष्वपि किंचिदुपसंहर्तव्यान्तरमवशिष्टमस्ती त्याशङ्क्य निराकरोति—एतावद्धीति। प्रश्नान्तरमुत्थापयति—तत्सर्वात्मकमिति ॥२४॥

हृदयपदेन नामाद्याधारवदहल्लिकशब्देनापि हृदयाधिकरणं विवक्ष्यते वाक्यच्छायासाम्यादित्याशङ्क्याऽऽह—
३० नामान्तरेणेति। अहनि लीयत इति विगृह्य प्रेतवाचिनेति शेष.। देहे हृदय प्रतिष्ठितमिति व्युत्पादयति—यत्रेत्यादिना। तस्मिन्काले शरीरं मृत स्यादिति शेष.। शरीरस्य हृदयाश्रयत्वं विशदयति—यद्धीत्यादिना। देहादन्यत्र हृदयस्यावस्थाने यथोक्त दोषमितिशब्देन परामृश्य फलितमाह—इतीत्यादिना। देहस्तर्हि कुत्र प्रतिष्ठित इत्यत आह—शरीरस्येति ॥२५॥

वृत्तमनूद्य प्रश्नान्तरमुपादत्ते—हृदयेति। प्राणशब्दस्य सूत्रविषयत्व व्यवच्छेत्तु वृत्तिविशेषणम्। प्रागन्यापाने
३५ प्रतिष्ठितत्व व्यतिरेकद्वारा स्फोरयति—साऽपीति। प्राणापानयोरुभयोरपि व्यानाधीनत्व साधयति—साऽप्यपानेति।

---

१. प्राच्यां रूपोपसंहार: दक्षिणस्यां प्रतीच्यामुदीच्या च कर्मणामुपसंहार: ध्रुवायां नाम्न उपसंहार। इत्थं नामरूपकर्मात्मकस्य निखिलप्रपञ्चस्य हृदये उपसंहार. कृत तत्र च केवल कर्मणाम्नाता पुत्रजन्मनः प्रतीच्या ज्ञानयुक्त कर्मोदीच्या नाम्न: ध्रुवाया चोपसंहार: मनोऽपि सामर्थ्यात् तत्रोपसंहृतम्।

**इत्युदान इति कस्मिन्नूदानः प्रतिष्ठित इति समान इति स एष नेति नेत्यात्माऽगृह्यो न हि गृह्यतेऽशीर्यो न हि शीर्यतेऽसङ्गो न हि सज्यतेऽसितो न व्यथते न रिष्यति। एतान्यष्टावायतनान्यष्टौ लोका अष्टौ देवा अष्टौ पुरुषाः स यस्तान्पुरुषान्निरुह्य प्रत्युह्यात्यक्रामत्तं त्वौपनिषदं पुरुषं पृच्छामि तं चेन्मे न विवक्ष्यसि मूर्धा ते विपतिष्यतीति। तँ ह न मेने शाकल्यस्तस्य ह मूर्धा विपपातापि हास्य परिमोषिणोऽस्थीन्यपजह्रुरन्यन्मन्यमानाः ॥२६॥** ५

नियता वर्तन्ते विज्ञानमयार्थप्रयुक्ता इति। सर्वमेतद्येन नियतं यस्मिन्प्रतिष्ठितमाकाशान्तमोतं च प्रोतं च तस्य निरुपाधिकस्य साक्षादपरोक्षाद्ब्रह्मणो निर्देशः कर्तव्य इत्ययमारभः।

स एषः। स यो नेति नेतीति निर्दिष्टो मधुकाण्ड एष सः। सोऽयमात्माऽगृह्यो न गृह्यः। कथम्। यस्मात्सर्वकार्यधर्मातीतस्तस्मादगृह्यः कुतो यस्मान्नहि गृह्यते। यद्धि करणगोचरं व्याकृतं वस्तु तद्ग्रहणगोचरमिदं तु तद्विपरीतमात्मतत्त्वम्। तथाऽशीर्यो यद्धि मूर्तं संहतं शरीरादि तच्छीर्यतेऽयं तु तद्विपरीतोऽतो नहि शीर्यते। १० तथाऽसङ्गो मूर्तो मूर्तान्तरेण संबध्यमानः सज्यतेऽयं च तद्विपरीतोऽतो नहि सज्यते। तथाऽसितोऽबद्धो यद्धि मूर्तं तद्बध्यतेऽयं तु तद्विपरीतत्वादबद्धत्वान्न व्यथतेऽतो न रिष्यति। ग्रहणविशरणसङ्गबन्धकार्यधर्मरहितत्वान्न रिष्यति न हिंसामापद्यते न विनश्यतीत्यर्थः।

क्रममतिक्रम्यौपनिषदस्य पुरुषस्याऽऽख्यायिकातोऽपसृत्य श्रुत्या स्वेन रूपेण त्वरया निर्देशः कृतः। ततः पुनराख्यायिकामेवाऽऽश्रित्याऽऽह। एतानि यान्युक्तान्यष्टावायतनानि पृथिव्येव यस्याऽऽयतनमित्येवमादीन्यष्टौ लोका १५ अग्निलोकादयोऽष्टौ देवा अमृत मिति होवाचेत्येवमादयोऽष्टौ पुरुषाः शारीरः पुरुष इत्यादयः। स यः कश्चित्तान्पुरुषाञ्शारीरप्रभृतीन्निरुह्य निश्चयेनोह्य गमयित्वाऽष्टचतुष्कभेदेन लोकस्थितिमुपपाद्य पुनः प्राचीदिगादिद्वारेण प्रत्युह्य स्वात्मनि हृदयेऽत्यक्रामदतिक्रान्तवानुपाधिधर्मं हृदयाद्यात्मत्वं स्वेनैवाऽऽत्मना व्यवस्थितो य औपनिषदः पुरुषोऽशनायादिवर्जित उपनिषत्स्वेव विज्ञेयो नान्यप्रमाणगम्यस्तं त्वा त्वां विद्याभिमानिनं पुरुषं पृच्छामि तं

तिसृणां वृत्तीनामुक्तानामुदाने निबद्धत्व दर्शयति—सर्वा इति। विष्वङ्ङिति नानागतित्वोक्तिः। कस्मिन्नु हृदयमित्यादेः २० समानान्तस्य तात्पर्यमाह—एतदिति। तेषा प्रवर्तकं दर्शयति—विज्ञानमयेति। स एव इत्यादेस्तात्पर्यमाह—सर्वमिति।

यस्य कूटस्थदृष्टिमात्रस्यान्तर्यामित्वकल्पनाधिष्ठानस्याज्ञानवशात्प्रशासने द्यावापृथिव्यादि स्थितं स परमात्मैष प्रत्यगात्मैवेति पदयोरर्थं विवक्षित्वाऽऽह—स एष इति। निषेधद्वयं मूर्तामूर्तब्राह्मणे व्याख्यातमित्याह—स यो नेति। यो मधुकाण्डे चतुर्थे 'नेति नेती'ति निषेधमुखेन निर्दिष्टः 'स एष' कूर्चब्राह्मणे तन्मुखेनैव वक्ष्यत इति योजना। निषेधद्वारा निर्दिष्टमेव स्पष्टयति—सोऽयमिति। कार्यधर्माः शब्दादयोऽशनायादयश्च। श्रुत्युक्तं हेतुमवतार्य व्याचष्टे—कुत २५ इत्यादिना। तद्विपरीतत्व करणागोचरत्वं न चक्षुषेत्यादिश्रुतेः। तद्विपरीतत्वादमूर्तत्वादितियावत्। पूर्वत्राप्युभयत्र तद्वैपरीत्यमेतदेव। अतःशब्दार्थं स्फुटयन्नुक्तमुपपादयति—ग्रहणेति। कार्यधर्माः शब्दादयोऽशनायादयश्च प्रागुक्ताः।

ननु शाकल्ययाज्ञवल्क्ययोः संवादात्मिकेयमाख्यायिका तत्र कथ शाकल्येनापृष्टमात्मानं याज्ञवल्क्यो व्याचष्टे तत्राऽऽह—क्रममिति। विज्ञानादिवाक्ये वक्ष्यमाणत्वात्किमित्यत्र निर्देश इत्याशङ्क्याऽऽह—त्वरयेति। एतान्यष्टावित्यादिवाक्यस्य पूर्वेणासगतिमाशङ्क्याऽऽह—ततः पुनरिति। निश्चयेन गमयित्वेत्येतदेव स्पष्टयति—अष्टेति। प्रत्युह्योप- ३० संहृत्येति यावत्। औपनिपदत्वं पुरुषस्य व्युत्पादयति—उपनिषत्स्वेवेति। तं हेत्यादि याज्ञवल्क्यस्य वा मध्यस्थस्य

१. अगृह्य इन्द्रियैः ग्रहणायोग्य. तस्मान्न गृह्यते इति व्याख्यातमन्यत्र अन्यथा हेतुसाध्याभेदापत्तेः एव शरणायोग्यः संबन्धायोग्यश्चेति व्याख्येयम्।

२. बन्धकार्यधर्मेति—ग्रहणादयो ये कार्यधर्माः तद्रहितत्वादित्यर्थ.।

३. अतिकान्तवान् औपनिपद. अन्नभक्ष इतिवत् उपनिषदेकवेद्य इत्यर्थ.। अत्र वार्तिके याज्ञवल्क्यः शाकल्यं पप्रच्छ ३५ तस्याब्रह्मिष्ठत्वसिद्धये अत. सापराधो जायते शापार्हश्च। वा। अथवा—स एप नेति नेति इत्यारभ्य याज्ञवल्क्य प्रश्नः मध्ये वाक्यभेदद्योतकेतिशब्दाभावात्। शाकल्येन समासव्यासरूपेणोक्तं सर्वमविद्या तत्त्वं तु नेति नेत्यात्मकमित्यर्थ। आत्मविवेचनमत्रैव कुर्वन्ति न कर्मकाण्डे कर्मविरोधित्वात् अतः औपनिषदः। अत एव ज्ञानकर्मसमुच्चयोऽपि नेत्यर्थः।

४. हृदयाद्यात्मत्वं हिरण्यगर्भात्मत्वम्।

अथ होवाच ब्राह्मणा भगवन्तो यो वः कामयते स मा पृच्छतु सर्वे वा मा पृच्छत
यो वः कामयते तं वः पृच्छामि सर्वान्वा वः पृच्छामीति ते ह ब्राह्मणा न दधृषुः ॥२७॥

तान्हैतैः श्लोकैः पप्रच्छ—

यथा वृक्षो वनस्पतिस्तथैव पुरुषोऽमृषा ।
५ तस्य लोमानि पर्णानि त्वगस्योत्पाटिका बहिः ॥१॥

चेद्यदि मे न विवक्ष्यसि विस्पष्टं न कथयिष्यसि मूर्धा ते विपतिष्यतीत्याह याज्ञवल्क्यः। तं त्वौपनिषदं पुरुषं शाकल्यो न मेने ह न विज्ञातवान्किल। तस्य ह मूर्धा विपपात विपतितः। समानाऽऽख्यायिका श्रुतेर्वचनं तं ह न मेन इत्यादि। किंचापि हास्य परिमोषिणस्तस्करा अस्थीन्यपि संस्कारार्थं शिष्यैर्नीयमानानि गृहान्प्रत्यपजह्रुरप- हृतवन्तः। किंनिमित्तम्। अन्यद्धनं नीयमानं मन्यमानाः पूर्ववृत्ता ह्याख्यायिकेह सूचिता। अष्टाध्याय्यां किल
१० शाकल्येन याज्ञवल्क्यस्य समानान्त एव किल संवादो निर्वृत्तः। तत्र याज्ञवल्क्येन शापो दत्तः। पुरेऽतिथ्ये मरिष्यसि न तेऽस्थीनिचन गृहान्प्राप्स्यन्तीति स तथैव ममार। तस्य हाप्य [ न्य ] न्यन्मन्यमानाः परिमोषिणोऽस्थीन्यपजह्रुः। तस्मान्नोपवादी स्यादुत ह्येवंवित्परो भवतीति। सैषाऽऽख्यायिकाऽऽचारार्थं सूचिता विद्यास्तुतये चेह ॥२६॥
यस्य नेति नेतीत्यन्यप्रतिषेधद्वारेण ब्रह्मणो निर्देशः कृतस्तस्य विधिमुखेन कथं निर्देशः कर्तव्य इति पुनराख्यायिकामेवाऽऽश्रित्याऽऽह—मूलं च जगतो वक्तव्यमिति। आख्यायिकासंबन्धस्त्वब्रह्मविदो ब्राह्मणाञ्जित्वा
१५ गोधनं हर्तव्यमिति न्यायं मत्वाऽऽह—
अथ होवाच। अथानन्तरं तूष्णींभूतेषु ब्राह्मणेषु होवाच हे ब्राह्मणा भगवन्त इत्येवं संबोध्य। यो वो युष्माकं मध्ये कामयत इच्छति याज्ञवल्क्यं पृच्छामीति स मा मामागत्य पृच्छतु। सर्वे वा मा पृच्छत। सर्वे वा यूयं मा मां पृच्छत। यो वः कामयते याज्ञवल्क्यो मां पृच्छत्विति तं वः पृच्छामि सर्वान्वा वो युष्मानहं पृच्छामि। ते ह ब्राह्मणा न दधृषुस्ते ब्राह्मणा एवमुक्ता अपि न प्रगल्भाः संवृत्ताः किंचिदपि प्रत्युत्तरं वक्तुम् ॥२७॥
२० तेष्वप्रगल्भभूतेषु ब्राह्मणेषु तान्हैतैर्वक्ष्यमाणैः श्लोकैः पप्रच्छ प्रष्टवान्। यथा लोके वृक्षो वनस्पतिः। वृक्षस्य विशेषणं वनस्पतिरिति। तथैव पुरुषोऽमृषा। अमृषा सत्यमेतत्। तस्य लोमानि। तस्य पुरुषस्य लोमानीतरस्य वनस्पतेः पर्णानि। त्वगस्योत्पाटिका बहिस्त्वगस्य पुरुषस्येतरस्योत्पाटिका वनस्पतेः ॥१॥

वा वाक्यमिति शङ्कां वारयति—समानेति। ब्रह्मविद्विद्वेषे परलोकविरोधोऽपि स्यादित्याह—किंचेति। मूर्धा ते विपतिष्यतीति मूर्ध्नि पतिते शापेन किमत्यग्निहोत्राग्निसंस्कारमपि शाकल्यो न प्राप्तवानित्याशङ्क्याऽऽह—पूर्ववृत्तेति।
२५ तामेवाऽऽख्यायिकामनुक्रामति—अष्टाध्याय्यामिति। अष्टाध्यायी बृहदारण्यकात्प्राचीना कर्मविषया। पुरे पुण्यक्षेत्राति- रिक्ते देशे। अतिथ्ये पुण्यतिथिशून्ये काले। अस्थीनिचनेत्यत्र चनशब्दोऽप्यर्थः। उपवादी परिभवकर्ता। तच्छब्दार्थ- माह—उत इति। किमितीयमाख्यायिकाऽत्र विद्याप्रकरणे सूचितेत्याशङ्क्याऽऽह—सैषेति। ब्रह्मविदि विनीतेन भवितव्यमित्याचारः। महती हीयं ब्रह्मविद्या यत्तन्निष्ठावज्ञायामैहिकामुष्मिकविरोधः स्यादिति विद्यास्तुतिः ॥२६॥
अथ हेत्याद्युत्तरग्रन्थमवतारयति—यस्येत्यादिना। जगतो मूलं च वक्तव्यमित्याख्यायिकामेवाऽऽश्रित्याऽऽहेति
३० संबन्धः। आख्यायिका किमर्थेत्यत आह—आख्यायिकेति। इतिशब्दः संबन्धसमाप्त्यर्थः। ननु ब्राह्मणेषु तूष्णीभूतेषु प्रतिषेद्धुरभावाद्गोधनं हर्तव्यं किमिति तान्प्रति याज्ञवल्क्यो वदतीत्यत आह—न्यायं मत्वेति। ब्रह्मस्वं हि ब्राह्मणानु- मतिमनापाद्य नीयमानमनर्थाय स्यादिति न्यायः। संबोध्योवाचेति सबन्धः। यो व इति प्रतीकमादाय व्याचष्टे— युष्माकमिति। आख्यातं भागमनूद्य व्याख्येयमादाय व्याकरोति—यो व इत्यादिना। यथोक्तप्रश्नानन्तर ब्राह्मणानाम- प्रतिभा दर्शयति—ते हेति ॥२७॥
३५ स्वकीयज्ञानप्रकर्षप्रकटनार्थमेव प्रश्नान्तरमवतारयति—तेष्विति। वृक्षो वनस्पतिरिति पर्यायत्वात्पुनरुक्ति- रित्याशङ्क्याऽऽह—वृक्षस्येति। तच्च तस्य महत्त्वमाहेत्यपुनरुक्तिः। पुरुषस्य वृक्षसाधर्म्यमेतदिदयुच्यते। साधर्म्यमेव स्पष्टयति—तस्येत्यादिना। नीरसा त्वगुत्पाटिकेत्युच्यते ॥१॥

१. सामानान्त.—कस्मिन्नूदातः प्रतिष्ठित इति समान इति इत्यन्तः।

त्वच एवास्य रुधिरं प्रस्यन्दि त्वच उत्पटः ।
तस्मात्तदातृण्णात्प्रैति रसो वृक्षादिवाहतात् ॥२॥
मांसान्यस्य शकराणि किनाटं स्नाव तत्स्थिरम् ।
अस्थीन्यन्तरतो दारूणि मज्जा मज्जोपमा कृता ॥३॥
यद्वृक्षो वृक्णो रोहति मूलान्नवतरः पुनः । ५
मर्त्यः स्विन्मृत्युना वृक्णः कस्मान्मूलात्प्ररोहति ॥४॥
रेतस इति मा वोचत जीवतस्तत्प्रजायते ।
धानारुह इव वै वृक्षोऽञ्जसा प्रेत्य सम्भवः ॥५॥
यत्समूलमावृहेयुर्वृक्षं न पुनराभवेत् । मर्त्यः
स्विन्मृत्युना वृक्णः कस्मान्मूलात्प्ररोहति ॥६॥ १०

त्वच एव सकाशादस्य पुरुषस्य रुधिरं प्रस्यन्दि वनस्पतेस्त्वच उत्पटस्त्वच एवोत्स्फुटति यस्मादेवं सर्वं समानमेव वनस्पतेः पुरुषस्य च तस्मादातृण्णाद्धिसितात्प्रैति तद्रुधिरं निर्गच्छति वृक्षादिवाऽऽहताच्छिन्नाद्रसः ॥२॥

एवं मांसान्यस्य पुरुषस्य वनस्पतेस्तानि¹ शकराणि शकलानीत्यर्थः । किनाटं वृक्षस्य किनाटं नाम शकलेभ्योऽभ्यन्तरं वल्कलरूपं काष्ठसंलग्नं तत्स्नाव पुरुषस्य तत्स्थिरं तच्च किनाटं स्नाववदृढं हि तत् । अस्थीनि पुरुषस्य स्नाव्नोऽन्तरतोऽस्थीनि भवन्ति । तथा किनाटस्याभ्यन्तरतो दारूणि काष्ठानि । मज्जा मज्जैव वनस्पतेः १५ पुरुषस्य च मज्जोपमा कृता मज्जाया उपमा मज्जोपमा नान्यो विशेषोऽस्तीत्यर्थः । यथा वनस्पतेर्मज्जा तथा पुरुषस्य यथा पुरुषस्य तथा वनस्पतेः ॥३॥

यद्यदि वृक्षो वृक्णश्छिन्नो रोहति पुनः पुनः प्ररोहति प्रादुर्भवति मूलात्पुनर्नवतरः पूर्वस्मादभिनवतरः । यदेतस्माद्विशेषणात्प्राग्वनस्पतेः पुरुषस्य च सर्वं सामान्यमवगतम् । अयं तु वनस्पतौ विशेषो दृश्यते यच्छिन्नस्य प्ररोहणम् । न तु पुरुषे मृत्युना वृक्णे पुनः प्ररोहणं दृश्यते । भवितव्यं च कुतश्चित्प्ररोहणेन । तस्माद्वः पृच्छामि २० मर्त्यो मनुष्यः स्विन्मृत्युना वृक्णः कस्मान्मूलात्प्ररोहति मृतस्य पुरुषस्य कुतः प्ररोहणमित्यर्थः ॥४॥

यदि चेदेवं वदथ रेतसः प्ररोहतीति मा वोचत मैवं वक्तुमर्हथ । कस्मात् । यस्माज्जीवतः पुरुषात्तद्रेतः प्रजायते न मृतात् । अपि च धानारुहो धाना बीजं बीजरुहोऽपि वृक्षो भवति न केवलं काण्डरुह एव । इवशब्दोऽनर्थकः । वै वृक्षोऽञ्जसा साक्षात्प्रेत्य मृत्वा संभवो धानातोऽपि प्रेत्य संभवो भवेदञ्जसा पुनर्वनस्पतेः ॥५॥

यद्यपि सह मूलेन धानया वाऽऽवृहेयुरुद्यच्छेयुरुत्पाटयेयुर्वृक्षं न पुनराभवेत्पुनरागत्य न भवेत् । तस्माद्वः २५ पृच्छामि सर्वस्यैव जगतो मूलं मर्त्यः स्विन्मृत्युना वृक्णः कस्मान्मूलात्प्ररोहति ॥६॥

उत्पटो वृक्षनिर्यासः ॥२॥

विशेषाभावमेवाभिनयति—यथेति ॥३॥

साधर्म्ये सति वैधर्म्यं वक्तुमशक्यमित्याशयेनाऽऽह—यद्यदीति । इदमपि साधर्म्यमेव किं न स्यादित्याशङ्क्याऽऽह—यदेतस्मादिति । एतस्माद्विशेषणात्प्राग्यद्विशेषणमुक्तं तत्सर्वमुभयोः सामान्यमवगतमिति संबन्धः । ३० वृक्णस्याङ्गस्येति शेषः । मा भूत्तस्य प्ररोहणमिति चेन्नेत्याह—भवितव्यं चेति । 'ध्रुवं जन्म मृतस्य च' इति स्मृतेरित्यर्थः ॥४॥

जीवतो हि रेतो जायते स एव कुतो भवतीति विचार्यते न चासिद्धेनासिद्धस्य साधनं न च पुरुषान्तरादिति वाच्यमेकासिद्धावन्यतरप्रयोगानुपपत्तेरिति मन्वानो हेतुमाह—यस्मादिति । वैधर्म्यान्तरमाह—अपि चेति । काण्डरुहोऽपीत्यपेरर्थः । वैशब्द. प्रसिद्धिद्योतक इत्यभिप्रेत्याऽऽह—वै वृक्ष इति । अञ्जसेत्यादेरर्थमुक्त्वा वाक्यार्थमाह— ३५ धानातोऽपीति ॥५॥

तथाऽपि कथं वैधर्म्यमित्याशङ्क्याऽऽह—यद्यदीति । पुरुषस्यापि पुनरुत्पत्तिर्मा भूदित्याशङ्क्य पूर्वोक्तं निगमयति—तस्मादिति ॥६॥

**जात एव न जायते को न्वेनं जनयेत्पुनः । विज्ञान-**
**मानन्दं ब्रह्म रातिर्दातुः परायणं तिष्ठमानस्य तद्विद इति ॥७॥ ॥२८॥**

**इति बृहदारण्यकोपनिषदि तृतीयोऽध्यायः ॥३॥**
**बृहदारण्यकक्रमेण पञ्चमोऽध्यायः ॥५॥**

५ जात एवेति मन्यध्वं यदि किमत्र प्रष्टव्यमिति । जनिष्यमाणस्य हि संभवः प्रष्टव्यो न जातस्यायं तु जात एवातोऽस्मिन्विषये प्रश्न एत नोपपद्यत इति चेत् । न । किं तर्हि मृतः पुनरपि जायत एवान्यथाऽकृताभ्यागम-कृतनाशप्रसङ्गात् । अतो वः पृच्छामि को न्वेनं मृतं पुनर्जनयेत् । तत्र विजज्ञुर्ब्राह्मणा यतो मृतः पुनः प्ररोहति जगतो मूलं न विज्ञातं ब्राह्मणैः । अतो ब्रह्मिष्ठत्वाद्धृता गावो याज्ञवल्क्येन जिता ब्राह्मणाः । समाप्ताऽऽख्यायिका । यज्जगतो मूलं येन च शब्देन साक्षाद्व्यपदिश्यते ब्रह्म यद्याज्ञवल्क्यो ब्राह्मणान्पृष्टवांस्तत्स्वेन रूपेण श्रुतिरस्मभ्यमाह-
१० विज्ञानं विज्ञप्तिर्विज्ञानं तच्चाऽऽनन्दं न विषयविज्ञानवद्दुःखानुविद्धं किं तर्हि प्रसन्नं शिवमतुलमनायासं नित्यतृप्त-मेकरसमित्यर्थः । किं तद्ब्रह्मोभयविशेषणवद्राती रातेः षष्ठ्यर्थे प्रथमा धनस्येत्यर्थः । धनस्य दातुः कर्मकृतो यजमानस्य परायणं परा गतिः कर्मफलस्य प्रदातृ । किंच व्युत्थायैषणाभ्यस्तस्मिन्नेव ब्रह्मणि तिष्ठत्यकर्मकृत्तद्ब्रह्म वेत्तीति तद्विच्च तस्य तिष्ठमानस्य च तद्विदो ब्रह्मविद इत्यर्थः परायणमिति ।

अत्रेदं विचार्यते—आनन्दशब्दो लोके सुखवाची प्रसिद्धः । अत्र च ब्रह्मणो विशेषणत्वेनाऽऽनन्दशब्दः
१५ श्रूयत आनन्दं ब्रह्मेति । श्रुत्यन्तरे च—"आनन्दो ब्रह्मेति व्यजानात्" "आनन्दं ब्रह्मणो विद्वान्" "यदेष आकाश आनन्दो न स्यात्" "यो वै भूमा तत्सुखम्" इति च । "एष परम आनन्दः" इत्येवमाद्याः । संवेद्ये च सुख आनन्दशब्दः प्रसिद्धः । ब्रह्मानन्दश्च यदि संवेद्यः स्याद्युक्ता एते ब्रह्मण्यानन्दशब्दाः । ननु च श्रुतिप्रामाण्यात्संवेद्या-

स्वभाववादमुत्थापयति—जात इति । इतिशब्दश्चोद्यसमाप्त्यर्थः । तदेव स्फुटयति—जनिष्यमाणस्य हीति । न जायत इति भागेनोत्तरमाह—नेत्यादिना । स्वभाववादे दोषमाह—अन्यथेति । स्वभावासंभवे फलितमाह—
२० अत इति । उक्तमेव स्फुटयति—जगत इति । ब्रह्मविदा श्रेष्ठत्वे याज्ञवल्क्यस्य सिद्धे फलितमाह—अत इति । समाप्ता-ऽऽख्यायिकेति । ब्राह्मणाश्च सर्वे यथायथं जग्मुरित्यर्थः । विज्ञानादिवाक्यमुत्थापयति—यज्जगत इत्यादिना । विज्ञान-शब्दस्य कारणादिविषयत्वं वारयति—विज्ञप्तिरिति । आनन्दविशेषणस्य कृत्यं दर्शयति—नेत्यादिना । प्रसन्नं दुःखहेतुना कामक्रोधादिना संबन्धरहितम् । शिवं कामादिकारणेनाज्ञानेनापि संबन्धशून्यम् । सातिशयत्वप्रयुक्तदुःखराहित्य-माह—अतुलमिति । साधनसाध्यत्वाधानदुःखवैधुर्यमाह—अनायासमिति । दुःखनिवृत्तिमात्रं सुखमिति पक्षं प्रतिक्षि-
२५ पति—नित्यतृप्तमिति । आनन्दो ज्ञानमिति ब्रह्मण्याकारभेदमाशङ्क्याऽऽह—एकरसमिति । फलमत उपपत्तेरिति न्यायेन ब्रह्मणो जगन्मूलत्वमाह—रातिरित्यादिना । 'ब्रह्मसंस्थोऽमृतत्वमेति' इति श्रुत्यन्तरमाश्रित्य तस्यैव मुक्तोप-सृप्यत्वमुपदिशति—किंचेति । अक्षरव्याख्यानसमाप्ताविति शब्दः ।

सच्चिदानन्दात्मकं ब्रह्म विद्याविद्याभ्यां बन्धमोक्षास्पदमित्युक्तमिदानीं ब्रह्मानन्दे विचारमवतारयन्नविगीत-मर्थमाह—अत्रेति । तथाऽपि प्रकृते वाक्ये किमायातमिति तदाह—अत्र चेति । न च केवलमत्रैवाऽऽनन्दशब्दो ब्रह्म-
३० विशेषणार्थकत्वेन श्रुतः किंतु तैत्तिरीयकादावपीत्याह—श्रुत्यन्तरे चेति । ब्रह्मणो विशेषणत्वेनाऽऽनन्दशब्दः श्रूयत इति संबन्धः । अन्याः श्रुतीरेवोदाहरति—आनन्द इत्यादिना । एवमाद्याः श्रुतय इति शेषः । तथाऽपि कथं विचार-सिद्धिस्तत्राऽऽह—संवेद्य इति । लोकप्रसिद्धेरद्वैतश्रुतेश्च ब्रह्मण्यानन्दः संवेद्योऽसंवेद्यो[1] वेति विचारः कर्तव्य इत्यर्थः । उभयत्र फलं दर्शयति—ब्रह्मानन्दश्चेति । अन्यथा[2] लोकवेदयोः शब्दार्थभेदादविशिष्टस्तु वाक्यार्थ इति न्यायविरोधोऽ-संवेद्यत्वे पुनरद्वैतश्रुतिरविरुद्धेति भावः । विचारमाक्षिपति—नन्विति । विरुद्धश्रुत्यर्थनिर्णयार्थं विचारकर्तव्यता

३५ १. आनन्दस्य वेद्यत्वे द्वैतापत्तिः अवेद्यत्वे चाद्वैतोपपत्तिः ।

२. अन्यथेति विज्ञानानन्दशब्दौ ब्रह्मशब्दसामानाधिकरण्यात् ब्रह्मस्वरूपमेवानन्द इत्यावेदयतः तदनभ्युपगमे "अविशिष्टस्तु वाक्यार्थः" इति पूर्वमीमांसान्यायविरोधः तथाहि प्रथमाध्यायद्वितीयपादान्त्याधिकरणे मन्त्र-प्रामाण्यं विचार्यते तत्र सिद्धान्तसूत्रं "अविशिष्टस्तु वाक्यार्थः" इति । तत्र भाष्यं अविशिष्टस्तु लोके प्रयुज्यमानानां वेदे च पदानामर्थः स यथैव लोके विवक्षितः तथैव वेदेऽपि भवितुमर्हति ।

नन्दस्वरूपमेव ब्रह्म किं तत्र विचार्यमिति। न। विरुद्धश्रुतिवाक्यदर्शनात्। सत्यमानन्दशब्दो ब्रह्मणि श्रूयते विज्ञानप्रतिषेधश्चैकत्वे "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्तत्केन कं विजानीयाद्यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा" "प्राज्ञेनाऽऽत्मना संपरिष्वक्तो न बाह्यं किंचन वेद" इत्यादि। विरुद्धश्रुतिवाक्यदर्शनात्तेन कर्तव्यो विचारः। तस्माद्युक्तं वेदवाक्यार्थनिर्णयाय विचारयितुम्।

मोक्षवादिविप्रतिपत्तेश्च। सांख्या वैशेषिकाश्च मोक्षवादिनो नास्ति मोक्षे सुखं संवेद्यमित्येवं विप्रतिपन्नाः। अन्ये[1] निरतिशयं सुखं स्वसंवेद्यमिति। किं तावद्युक्तमानन्दादिश्रवणात्। "जक्षत्क्रीडन्रममाणः" "स यदि पितृलोककामो भवति" "यः सर्वज्ञः सर्ववित्" "सर्वान्कामान्समश्नुते" इत्यादिश्रुतिभ्यो मोक्षे सुखं संवेद्यमिति। नन्वेकत्वे कारकविभागाभावाद्विज्ञानानुपपत्तिः। क्रियायाश्चानेककारकसाध्यत्वाद्विज्ञानस्य च क्रियात्वात्। नैष दोषः। शब्दप्रामाण्याद्भवेद्विज्ञानमानन्दविषये। विज्ञानमानन्दमित्यादीन्यानन्दस्वरूपस्यासंवेद्यत्वेऽनुपपन्नानि वचनानीत्यवोचाम। १०

नन्[2] वचनेनाप्यग्नेः शैत्यमुदकस्य चौष्ण्यं न क्रियत एव ज्ञापकत्वाद्वचनानाम्। न च देशान्तरेऽग्निः शीत इति शक्यते ज्ञापयितुमगम्ये वा देशान्तर उष्णमुदकमिति। न। प्रत्यगात्मन्यानन्दविज्ञानदर्शनात्। न विज्ञानमानन्दमित्येवमादीनां वचनानां शीतोऽग्निरित्यादिवाक्यवत्प्रत्यक्षादिविरुद्धार्थप्रतिपादकत्वम्।

अनुभूयते त्वविरुद्धार्थता। सुख्यहमिति सुखात्मकमात्मानं स्वयमेव वेदयते। तस्मात्सुतरां प्रत्यक्षाऽ-

दर्शयति—नेति। संग्रहवाक्यं विवृणोति— त्यमित्यादिना। एकत्वे सति विज्ञानप्रतिषेधश्रुतिमेवोदाहरति—यत्रेत्यादिना। इत्यादि श्रवणमिति शेषः। फलितमाह—विरुद्धश्रुतेति। श्रुतिविप्रतिपत्तेर्विचारकर्तव्यतामुपसहरति—तस्मादिति। १५

तत्रैव हेत्वन्तरमाह—मोक्षेति। तामेव विप्रतिपत्तिं विवृणोति—सांख्या इति। विमर्शपूर्वकं पूर्वपक्षं गृह्णाति—किं तावदित्यादिना। आनन्दादिश्रवणाद्विज्ञानमानन्दं ब्रह्मेति श्रुतेर्मोक्षे सुखं सवेद्यमिति युक्तमिति संबन्ध.। तत्रैव वाक्यान्तराण्युदाहरति—जक्षदित्यादिना। पूर्वपक्षमाक्षिपति—नन्विति। मोक्षे चेदिष्यते सुखज्ञानं तर्हि तदनेककारकसाध्यं वाच्यं क्रियात्वात्पाकादिवत्तस्यैकत्वे च मोक्षे कारकविभागाभावान्न सुखसंवेदनं सभवतीत्यर्थः। जन्यस्य कारकापेक्षायामपि सुखज्ञानस्याजन्यत्वान्न तदपेक्षेत्याशङ्क्याऽऽह—क्रियायाश्चेति। या क्रिया साऽनेककारकसाध्येति व्याप्तेर्गमनादाववगतत्वाज्ज्ञानस्यापि धात्वर्थत्वेन क्रियात्वादनेककारकसाध्यता सिद्धैवेत्यर्थः। श्रुतिप्रामाण्यमाश्रित्य पूर्ववादी परिहरति—नैष दोष इति। तदेव स्फुटयति—विज्ञानमिति। २०

अद्वये ब्रह्मणि श्रुतिप्रामाण्यादानन्दज्ञानमुक्तमाक्षिपति—नन्विति। अद्वैतश्रुतिविरोधादद्ब्रह्मणि विज्ञानक्रियाकारकविभागापेक्षा नोपपद्यते। न हि 'विज्ञानमानन्दमि'त्यादिवचनानि मानान्तरविरोधेन विज्ञानक्रियां ब्रह्मण्युत्पादयन्ति तेषां ज्ञापकत्वाज्ज्ञापकस्य चा[3]विरोधापेक्षत्वादन्यथाऽतिप्रसङ्गादित्यर्थः। लौकिक[4]ज्ञानस्य क्रियात्वेऽपि मोक्षसुखज्ञानं क्रियैव न भवति। तन्न। विज्ञानादिवाक्यस्याद्वैतश्रुतिविरोधोऽस्तीत्याशङ्क्याऽऽह—न चेति। पय.पावकयोः सर्वत्रैकरूप्यवद्विज्ञानस्यापि लोकवेदयोरेकरूपत्वमेवेति भावः। मानान्तरविरोधादात्मन्यानन्दज्ञानस्य सत्त्वमेव वा निषिध्यते तस्य क्रियात्व वा निराक्रियते? तत्राऽऽद्यं दूषयति—नेत्यादिना। तदेव स्पष्टयति—न विज्ञानमिति। २५ ३०

सुखज्ञानस्य गुणत्वाङ्गीकारात्क्रियात्वनिराकरणमिष्टमेवेति मत्वाऽऽह—अनुभूयते त्विति। अनुभवमेवाभिनयति—सुख्यहमिति। तथाऽपि श्रुतिविरोधः स्यादित्याशङ्क्य प्रत्यक्षानुसारेण साऽपि नेतव्येत्याशयेनाऽऽह—तस्मा-

१. अन्ये सिद्धान्तिनो वेदान्तिन. स्वसंवेद्य स्वयमेव ज्ञानरूपत्वात् प्रत्यक्षं स्वप्रकाशसाक्ष्यभिन्नमित्यर्थः।

२. नन्विति सिद्धान्तिशङ्का। विज्ञानं क्रिया धात्वर्थः तत्र कारकभेदापेक्षा। न प्रत्यगात्मनीति मोक्षे आनन्दगुणप्रकाशवादिन्यायैकदेशिमतमाह—गुणविशिष्टगुण्यनु.व.। प्रदर्शयति-सुख्यहमिति। इदं च मोक्षे सुखानुभववादिभासर्वज्ञमतानुयायिभिरुत्प्रेक्ष्यते। शरीराभावे ज्ञानोत्पत्तेरभावात्। ३५

३. अविरोधापेक्षत्वात्—अनुभवविरोधे सति अन्यार्थत्वमङ्गीकरणीयं यथा "आदित्यो यूप"इति यूपवत् तेजस्वीत्यर्थं। अन्यथा तथा अंगीकारे आदित्याभेदस्य सूर्ये अङ्गीकरणापत्ते।

४. लौकिकज्ञानं क्रियेति तु धात्वर्थो हि क्रिया ज्ञेया इत्यभिप्रायेण ज्ञानस्य न्यायसिद्धान्ते गुणत्वात्। आनन्दज्ञानस्य आनन्दात्मकज्ञानस्य।

४०

विरुद्धार्थता। तस्मादानन्दं ब्रह्म विज्ञानात्मकं सत्स्वयमेव वेदयते। तथाऽऽनन्दप्रतिपादिकाः श्रुतयः समञ्जसाः स्युर्जक्षत्क्रीडन्रममाण इत्येवमाद्याः पूर्वोक्ताः।

न। कार्यकरणाभावेऽनुपपत्तेर्विज्ञानस्य। शरीरवियोगो हि मोक्ष आत्यन्तिकः। शरीराभावे च करणानुपपत्तिराश्रयाभावात्। ततश्च विज्ञानानुपपत्तिरकार्यकरणत्वात्। देहाद्यभावे च विज्ञानोत्पत्तौ सर्वेषां कार्यकरणोपादानानर्थक्यप्रसङ्गः। एकत्वविरोधाच्च। परं चेद्ब्रह्माऽऽनन्दात्मकमात्मानं नित्यविज्ञानत्वान्नित्यमेव विजानीयात्। तत्र। संसार्यपि संसारविनिर्मुक्तः स्वाभाव्यं प्रतिपद्येत। जलाशय इवोदकाञ्जलिः क्षिप्तो न पृथक्त्वेन व्यवतिष्ठ(ष्ठे)त आनन्दात्मकब्रह्मविज्ञाय। तदा मुक्त आनन्दात्मकमात्मानं वेदयत इत्येतदनर्थकं वाक्यम्।

अथ ब्रह्मानन्दमन्यः सन्मुक्तो वेदयते प्रत्यगात्मानं चाहमस्म्यानन्दस्वरूप इति। तदैकत्वविरोधः। तथा च सति सर्वश्रुतिविरोधः। तृतीया च कल्पना नोपपद्यते। किंचान्यद्ब्रह्मणश्च निरन्तरात्मानन्दविज्ञाने विज्ञानाविज्ञानकल्पनानर्थक्यम्। निरन्तरं चेदात्मानन्दविषयं ब्रह्मणो विज्ञानं तदेव तस्य स्वभाव इत्यात्मानन्दं विजानातीति कल्पनाऽनुपपन्ना। अतद्विज्ञानप्रसङ्गे हि कल्पनाया अर्थवत्त्वं यथाऽऽत्मानं परं च वेत्तीति। नहीष्वाद्यासक्तमनसो नैरन्तर्येणेषुज्ञानाज्ञानकल्पनाया अर्थवत्त्वम्।

अथ विच्छिन्नमात्मानन्दं विजानाति। विज्ञानस्याऽऽत्मविज्ञानच्छिद्रेऽन्यविषयत्वप्रसङ्गः। आत्मनश्च

विति। आत्मन्यानन्दज्ञानस्य क्रियात्वानङ्गीकारात्कारकभेदापेक्षाभावादित्यर्थः। गुणत्वपक्षे च प्रत्यक्षस्यानुगुणत्वादागमस्य विरोधिनस्तदनुसारेण नेयत्वादविरुद्धागमस्य भूयस्त्वादित्यतिशयः। अविरुद्धार्थता विज्ञानादिश्रुतेरिति शेषः। गुणगुणिभावेऽपि नाद्वैतश्रुति. शक्या नेतुमित्याशङ्क्य स्ववेद्यत्वपक्षमाश्रित्याऽऽह—तस्मादानन्दमिति। यथाकथंचिद्ब्रह्मण्यानन्दस्य वेद्यत्वे श्रुतीनामानुगुण्यमस्तीत्याह—तथेति।

आनन्दो वेद्यो ब्रह्मणीति चोदिते सिद्धान्तमाह—नेति। आगन्तुकमनागन्तुकं वा ज्ञानं मुक्तावानन्द गोचरयति? नाऽऽद्य इत्याह—कार्येति। अनुपपत्तिमेव स्फोरयति—शरीरेति। कार्यकरणयोरभावेऽपि मोक्षे ब्रह्मानन्दज्ञान जनिष्यते संसारे हि हेत्वपेक्षेत्याशङ्क्याऽऽह—देहादीति। द्वितीयं दूषयति—एकत्वेति। नहि ब्रह्म स्वरूपज्ञानेनैव वेद्यानन्दरूपं भवितुमुत्सहते विषयविषयिणोरेकत्वविरोधात्ततश्चानागन्तुकमपि ज्ञानं मुक्तौ नाऽऽनन्दमधिकरोतीत्यर्थः। किंच ब्रह्म वा मुक्तो वा संसारी वा ब्रह्मानन्दं गोचरयेत्तत्राऽऽद्यमनुवदति—परं चेदिति। तस्मिन्पक्षे न ब्रह्म स्वरूपानन्दं वेत्ति तेनैक्यादेकत्र विषयविषयित्वानुपपत्तेरुक्तत्वादिति दूषयति—तन्नेति। नापि संसारी ब्रह्मानन्दं गोचरयति स खल्वनिवृत्ते संसारे संसारिणमात्मानमभिमन्यमानो न ब्रह्मानन्दमाकलयितुमलं संसारे निवृत्ते तु ततो विनिर्मुक्तो ब्रह्मस्वाभाव्यं प्रतिपद्यमानस्तदानन्दं तद्वदेव विषयीकर्तुं नार्हतीति तृतीय प्रत्याह—संसार्यपीति। मुक्तोऽपि ब्रह्मणोऽभिन्नो भिन्नो वेति विकल्प्याभेदपक्षमनुभाषते—जलेति। ब्रह्माभिन्नस्य मुक्तस्य तदानन्दविषयीकरणमुक्तन्यायेन निरस्यति—तदेति।

भेदपक्षमनुवदति—अथेति। ब्रह्मानन्दं प्रत्यगात्मानमिति संबन्धः। वेदनप्रकारमभिनयति—अहमिति। तत्त्वमस्यादिश्रुतिविरोधेन निराकरोति—तदेति। मुक्तो ब्रह्मणः सकाशाद्भिन्नोऽभिन्नो वा मा भूद्भिन्नाभिन्नस्तु स्यादित्याशङ्क्याऽऽह—तृतीयेति। सर्वत्र भेदाभेदवादस्य दूषितत्वादित्यर्थः। ब्रह्मणः स्वानन्दस्यावेद्यत्वे हेत्वन्तरमाह—किंचान्यदिति। तदेवोपपादयति—निरन्तरं चेदिति। आख्यातप्रयोगस्य तर्हि कुत्रार्थवत्त्व तत्राऽऽह—अतद्विज्ञानेति। देवदत्तो हि बुद्धिपूर्वकारित्वावस्थाया स्वात्मानमन्य च विविच्य जानाति नान्यदेत्युभयथात्वदर्शनात्तत्राऽऽख्यातप्रयोगो युज्यते। नैवं ब्रह्मण्यज्ञानप्रसङ्गोऽस्ति। नित्यज्ञानस्वभावत्वात्तथा च तत्राऽऽख्यातप्रयोगो नार्थवानित्यर्थः। ब्रह्मण्याख्यातप्रयोगानर्थक्यं दृष्टान्तेन स्पष्टयति—नहीति।

प्रत्यगात्मनि नित्यज्ञानत्वासिद्धिं शङ्कयति—अथेति। विच्छिन्नमिति क्रियाविशेषणम्। परिहरति—विज्ञानस्येति। आत्मनो विज्ञानस्य च्छिद्रमन्तरालमसत्त्वावस्था तदाऽपि विज्ञानमस्ति चेत्तस्यान्यविषयत्वप्रसङ्गस्तथा च 'यत्रान्यत्पश्यति' इत्यादिश्रुतेरात्मनो मर्त्यत्वापत्तिर्न चेत्तदा विज्ञानं तदा पाषाणवदचेतनत्वं विज्ञप्तिरूपत्वानङ्गीकारादित्यर्थः। आत्मनोऽनित्यज्ञानवत्त्वे दोषान्तरमाह—आत्मनश्चेति। आनन्दज्ञाने ब्रह्मणि विषयविषयित्वा-

२. कारकभेदः कारकविशेष करण आनन्दो गुण इति पक्षंव्युदस्यति। आगन्तुकत्वे मोक्षकाले शरीराद्यभावात् आनन्दोत्पत्त्यसंभवः।

# अथ चतुर्थोऽध्यायः

## अथ चतुर्थाध्यायस्य प्रथमं ब्राह्मणम्

**ॐ जनको ह वैदेह आसांचक्रेऽथ ह याज्ञवल्क्य आवव्राज । तं होवाच याज्ञवल्क्य किमर्थमचारीः पशूनिच्छन्नण्वन्तानिति । उभयमेव सम्राडिति होवाच ॥१॥**

[ . . ] ततश्चानित्यत्वप्रसङ्गः । तस्माद्विज्ञानमानन्दमिति स्वरूपान्वाख्यानपरैव श्रुतिर्नाऽऽत्मानन्दसंवेद्य- ५
। जक्षत्क्रीडन्नित्यादिश्रुतिविरोधोऽसंवेद्यत्व इति चेन्न। सर्वात्मैकत्वे यथाप्राप्तानुवादित्वात् । मुक्तस्य सर्वात्मभावे सति यत्र क्वचिद्योगिषु देवेषु वा जक्षणादि प्राप्तं तद्यथाप्राप्तमेवानूद्यते तत्तस्यैव सर्वात्मभावादिति सर्वात्मभावमोक्षस्तुतये ।

यथाप्राप्तानुवादित्वे दुःखित्वमपीति चेत् । योग्यादिषु यथाप्राप्तजक्षणादिवत्स्थावरादिषु यथाप्राप्तदुःखित्व- मपीति चेत् । न । नामरूपकृतकार्यकरणोपाधिसंपर्कजनितभ्रान्त्यध्यारोपितत्वात्सुखित्वदुःखित्वादिविशेषस्येति १० परिहृतमेतत्सर्वम् । विरुद्धश्रुतीनां च विषयमवोचाम । तस्मादेषोऽस्य परम आनन्द इतिवत्सर्वाण्यानन्दवाक्यानि द्रष्टव्यानि ॥७–२८॥

इति बृहदारण्यकोपनिषद्भाष्ये तृतीयाध्यायस्य नवमं ब्राह्मणम् ॥९॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्यस्य श्रीमच्छंकरभगवतः कृतौ बृहदारण्यकोपनिषद्भाष्ये तृतीयोऽध्यायः ॥३॥ १५

जनको ह वैदेह आसांचक्रे । अस्य सम्बन्धः । शरीराद्यानष्टौ पुरुषानिरुह्य प्रत्युह्य पुनर्हृदये दिग्भेदेन च पुनः पञ्चधा व्यूह्य हृदये प्रत्युह्य हृदयं शरीरं च पुनरन्योन्यप्रतिष्ठं प्राणादिपञ्चवृत्त्यात्मके समानाख्ये जगदात्मनि

योगश्चेत्कथं विज्ञानादिवाक्यमित्याशङ्क्योपसंहरति—तस्मादिति । ब्रह्मण्यानन्दस्यावेद्यत्वे श्रुतिविरोधमुक्तं स्मार- यति—जक्षदिति । सर्वत्राऽऽत्मनो मुक्तस्यैक्ये सति योग्यादिषु यथा जक्षणादि प्राप्तं तथैव तदनुवादित्वादस्याः श्रुतेर्न विरोधोऽस्तीति परिहरति—नेत्यादिना । तदेव प्रपञ्चयति—मुक्तस्येति । किमनुवादे फलमिति चेत्तदाह—तत्तस्येति । २० मुक्तस्य योग्यादिषु सर्वत्राऽऽत्मभावादेव तत्र प्राप्तं जक्षणाद्यत्र मुक्तिस्तुतयेऽनूद्यते तन्नानुवादवैयर्थ्यमित्यर्थः ।

विदुषः सार्वात्म्येन योग्यादिषु प्राप्तजक्षणाद्यनुवादे स्यादतिप्रसक्तिरिति शङ्कते—यथाप्राप्तेति । अतिप्रसङ्गमेव प्रकटयति—योग्यादिष्विति । अविद्यात्मकनामरूपविरचितोपाधिद्वयसंबन्धनिबन्धनमिथ्याज्ञानाधीनत्वादात्मनि दुःखित्वादिप्रतीतेर्न तत्र वस्तुतो दुःखित्वं न च जक्षणाद्यपि वास्तवमाविद्यस्यैव मुक्तिस्तुतयेऽनुवादाद्दुःखित्वस्य हि नानुवादोऽतिहीनत्वप्राप्तेरिति परिहरति—नेत्यादिना । यत्तु विरुद्धश्रुतिदृष्टेर्नाऽऽगमार्थो निर्णीतो भवतीति तत्राऽऽह— २५ विरुद्धेति । वेद्यत्वावेद्यत्वादिश्रुतीनां सोपाधिकनिरुपाधिकविषयत्वेन मधुकाण्डे व्यवस्थोक्तेत्यर्थः । ब्राह्मणार्थ- मुपसंहरति—तस्मादिति । ब्रह्मण्यानन्दस्य वेद्यताया दुर्निरूपत्वं तच्छब्दार्थः । यथैषोऽस्येत्यत्र[1] भेदो न विवक्षितः सर्वात्मभावस्य प्रकृतत्वात्तथा विज्ञानादिवाक्येष्वानन्दस्य वेद्यता न विवक्षिता । उक्तरीत्या तद्वेद्यताया दुष्प्रतिपादत्वा- त्तस्मादनतिशयानन्दं चिदेकतानं वस्तु सिद्धमित्यर्थः ॥७–२८॥

इति बृहदारण्यकोपनिषद्भाष्यटीकायां तृतीयाध्यायस्य नवमं ब्राह्मणम् ॥ ९ ॥ ३०

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यश्रीमदानन्दज्ञानविरचिताया बृहदारण्यकोपनिषद्भाष्यटीकाया तृतीयोऽध्याय' ॥ ३ ॥

पूर्वस्मिन्नध्याये जल्प[2]न्यायेन सच्चिदानन्दं ब्रह्म निर्धारितम् । इदानीं वादन्यायेन तदेव निर्धारयितु- मध्यायान्तरमवतारयति—जनक इति । तत्र ब्राह्मणद्वयस्यावान्तरसंबन्धं प्रतिजानीते—अस्येति । तमेव वक्तुं वृत्तं

१. यथा "एषोऽस्य परम आनन्द" इति चतुर्थे भेदश्रवणं राहोश्शिर इतिवत् । सर्वात्मभावस्येति सर्वोऽस्मीति मन्यते ३५ सोऽस्य परमो लोक इति पूर्वं प्रकृतं दुष्प्रतिपादत्वं विषयविषयिणोरभेदासभवात् ।

२. जल्पः विजिगीष्वोः वादकथा जय प्रधाना । तन्न्यायेन । चतुर्थे तु शिष्याचार्ययोः उक्तिप्रत्युक्तिः कथा तत्त्व- निर्णयावसाना ।

यत्ते कश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मे जित्वा शैलिनिर्वाग्वै ब्रह्मेति यथा मातृमान्पितृमानाचार्यवान्ब्रूयात्तथा तच्छैलिनिरब्रवीद्वाग्वै ब्रह्मेत्यवदतो हि किं स्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मेऽब्रवीदित्येकपाद्वा एतत्सम्राडिति स वै नो ब्रूहि याज्ञवल्क्य । वागेवायतनमाकाशः प्रतिष्ठा प्रज्ञेत्येनदुपासीत । का प्रज्ञता

५ सूत्र उपसंहृत्य जगदात्मानं शरीरहृदयसूत्रावस्थमतिक्रान्तवान्य औपनिषदः पुरुषो नेति नेतीति व्यपदिष्टः स साक्षाच्चोपादानकारणस्वरूपेण च निर्दिष्टो विज्ञानमानन्दमिति । तस्यैव वागादिदेवताद्वारेण पुनरधिगमः कर्तव्य इत्यधिगमनोपायान्तरार्थोऽयमारम्भो ब्राह्मणद्वयस्य । आख्यायिका त्वाचारप्रदर्शनार्था—

जनको ह वैदेह आसाचक्र आसनं कृतवानास्थायिकां दत्तवानित्यर्थः । दर्शनकामेभ्यो राज्ञः । अथ ह तस्मिन्नवसरे याज्ञवल्क्य आवव्राजाऽऽगतवानात्मनो योगक्षेमार्थं राज्ञो वा विविदिषां दृष्ट्वाऽनुग्रहार्थम् । तमागत

१० याज्ञवल्क्यं यथावत्पूजां कृत्वोवाच होक्तवाञ्जनको हे याज्ञवल्क्य किमर्थमचारीरागतोऽसि किं पशूनिच्छन्पुनरण्वा-होस्विदण्वन्तान्सूक्ष्मवस्तुनिर्णयान्तान्प्रश्नान्मत्तः श्रोतुमिच्छन्निति । उभयमेव पशून्प्रश्नांश्च हे सम्राट् । सम्राडिति वाजपेययाजिनो लिङ्गं यश्चाऽऽज्ञया राज्यं प्रशास्ति स सम्राट् तस्याऽऽमन्त्रणं हे सम्राडिति समस्तस्य वा भारतस्य वर्षस्य राजा ॥१॥

किंतु यत्ते तुभ्यं कश्चिदब्रवीदाचार्योऽनेकाचार्यसेवी हि भवांस्तच्छृणवामेति । इतर आह—अब्रवीदुक्त-

१५ वान्मे ममाऽऽचार्यो जित्वा नामतः शिलिनस्यापत्यं शैलिनिर्वाग्वै ब्रह्मेति वाग्देवता ब्रह्मेति । आहेतरो यथा मातृमान्माता यस्य विद्यते पुत्रस्य सम्यगनुशास्त्र्यनुशासनकर्त्री स मातृमान् । अत ऊर्ध्वं पिता यस्यानुशास्ता स पितृमान् । उपनयनादूर्ध्वमा समावर्तनादाचार्यो यस्यानुशास्ता स आचार्यवान् । एवं शुद्धित्रयहेतुसंयुक्तः स साक्षादाचार्यः स्वयं न कदाचिदपि प्रामाण्याद्व्यभिचरति स यथा ब्रूयाच्छिष्याय तथाऽसौ जित्वा शैलिनिरुक्तवान्वाग्वै ब्रह्मेति । अवदतो हि किं स्यादिति । न हि मूकस्येहार्थममुत्रार्थं वा किञ्चन स्यात् । किंत्वब्रवीदुक्तवांस्ते तुभ्यं

२० तस्य ब्रह्मण आयतनं प्रतिष्ठां च । आयतनं नाम शरीरम् । प्रतिष्ठा त्रिष्वपि कालेषु य आश्रयः । आहेतरो न मेऽब्रवीदिति । इतर आह—यद्येवमेकपाद्वा एतदेकः पादो यस्य ब्रह्मणस्तदिदमेकपाद्ब्रह्म त्रिभिः पादैः शून्यमुपास्यमानमपि न फलाय भवतीत्यर्थः । यद्येवं स त्वं विद्वान्सन्नोऽस्मभ्यं ब्रूहि हे याज्ञवल्क्येति । स चाऽऽह—वागेवाऽऽयतनं वाग्देवस्य ब्रह्मणो वागेव करणमायतनं शरीरमाकाशोऽव्याकृताख्यः प्रतिष्ठोत्पत्तिस्थितिलयकालेषु । प्रज्ञेत्येनदुपासीत प्रज्ञेतीयमुपनिषद्ब्रह्मणश्चतुर्थः पादः प्रज्ञेति कृत्वैनद्ब्रह्मोपासीत ।

२५ कीर्तयति—शारीराद्यानिति । निरुह्य प्रत्युह्येति विस्तार्य व्यवहारमापाद्येत्यर्थः । प्रत्युह्य हृदये पुनरुपसंहृत्येति यावत् । जगदात्मनीत्यव्याकृतोक्तिः । सूत्रशब्देन तत्कारणं गृह्यते । अतिक्रमणं तद्गुणदोषासंस्पृष्टत्वम् । अनन्तरब्राह्मणद्वयतात्पर्यमाह—तस्यैवेति । वागाद्यधिष्ठात्रीष्वग्न्यादिदेवतासु ब्रह्मदृष्टिद्वारेत्यर्थः । पूर्वोक्तान्वयव्यतिरेकादिसाधनापेक्षयाऽन्तरशब्दः । आचार्यवता श्रद्धादिसंपन्नेन विद्या लब्धव्येत्याचारः । अप्राप्तप्राप्तिर्योगः, प्राप्तस्य रक्षणं क्षेम इति विभागः । भारतस्य वर्षस्य हिमवत्सेतुपर्यन्तस्य देशस्येति यावत् ॥१॥

३० तत्र राजानं प्रति प्रश्नमुत्थापयति—किंत्विति । कश्चिदिति विशेषणस्य तात्पर्यमाह—अनेकेति । प्रामाण्यमाप्तत्वम् । यथोक्तार्थानुमोदने युक्तिमाह—न हीति । यथोक्तब्रह्मविद्यया कृतकृत्यत्वं मन्वानं राजानं प्रत्याह—किंत्विति । आयतनप्रतिष्ठयोरेकत्वात्पुनरुक्तिमाशङ्क्य विभजते—आयतनं नामेति । एकपादत्वेऽपि ब्रह्मणस्तदुपासनादिष्टसिद्धिरिति चेन्नेत्याह—त्रिभिरिति । ब्रूहि प्रतिष्ठामायतनं चेति शेषः ।

---

१ यथा मातृमानिति—तदुक्तं कठोपनिषदि 'त्रिणाचिकेतस्त्रिभिरेत्य सन्धिमि'ति त्रिभिः मातापित्राचार्यैः यथा

३५ वत् शिक्षित इत्यर्थः तच्च 'प्रामाण्यकारणम्' इति भाष्ये च ।

२. उपायान्तरं पूर्वं विचारेण ब्रह्माधिगमः स च अन्वयव्यतिरेकन्यायः आत्मसान्निध्ये इन्द्रियादीनां व्यापारः तदभावे तदभावः तेनात्मा शरीरादिव्यतिरिक्तः सिध्यति न प्राणेन नापानेन मर्त्यो जीवति कश्चन इति श्रुतेः ।

याज्ञवल्क्य। वागेव सम्राडिति होवाच। वाचा वै सम्राड्बन्धुः प्रज्ञायत ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानानीष्टँ हुतमाशितं पायितमयं च लोकः परश्च लोकः सर्वाणि च भूतानि वाचैव सम्राट्प्रज्ञायन्ते वाग्वै सम्राट् परमं ब्रह्म नैनं वाग्जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति देवो भूत्वा देवानप्येति ५
य एवं विद्वानेतदुपास्ते। हस्त्यृषभँ सहस्रं ददामीति होवाच जनको वैदेहः। स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥२॥

यदेव ते कश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्म उदङ्कः शौल्बायनः प्राणो वै ब्रह्मेति यथा मातृमान्पितृमानाचार्यवान्ब्रूयात्तथा तच्छौल्बायनोऽब्रवीत्प्राणो वै ब्रह्मेत्यप्राणतो हि किँ स्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मेऽब्रवीदित्येकपाद्वा एतत्सम्राडिति १०
स वै नो ब्रूहि याज्ञवल्क्य प्राण एवायतनमाकाशः प्रतिष्ठा प्रियमित्येनदुपासीत का प्रियता याज्ञवल्क्य प्राण एव सम्राडिति होवाच प्राणस्य वै सम्राट्कामायायाज्यं याजयत्यप्रतिगृह्यस्य प्रतिगृह्णात्यपि तत्र वधाशङ्कं भवति यां दिशमेति प्राणस्यैव

का प्रज्ञता याज्ञवल्क्य किं स्वयमेव प्रज्ञोत प्रज्ञानिमित्तम्। यथाऽऽयतनप्रतिष्ठे ब्रह्मणो व्यतिरिक्ते तद्व-दिकम्। न, कथ तर्हि, वागेव सम्राडिति होवाच वागेव प्रज्ञेति होवाचोक्तवान्न व्यतिरिक्ता प्रज्ञेति। कथं पुनर्वा- १५
गेव प्रज्ञेति, उच्यते—वाचा वै सम्राड्बन्धुः प्रज्ञायतेऽस्माकं बन्धुरित्युक्ते प्रज्ञायते बन्धुस्तथर्ग्वेदादि। इष्टं याग-निमित्तं धर्मजातं हुतं होमनिमित्तं च। आशितमन्नदाननिमित्तं पायितं पानदाननिमित्तमयं च लोक इदं च जन्म परश्च लोकः प्रतिपत्तव्यं च जन्म सर्वाणि च भूतानि वाचैव सम्राट्प्रज्ञायन्तेऽतो वाग्वै सम्राट्परमं ब्रह्म नैनं यथोक्तब्रह्मविदं वाग्जहाति। सर्वाण्येनं भूतान्यभिक्षरन्ति बलिदानादिभिरिह। देवो भूत्वा पुनः शरीरपातोत्तरकालं देवानप्येत्यपिगच्छति य एवं विद्वानेतदुपास्ते। विद्यानिष्क्रयार्थं हस्तितुल्य ऋषभो हस्त्यृषभो यस्मिन्गोसहस्रे तद्ध- २०
स्त्यृषभं सहस्रं ददामीति होवाच जनको वैदेहः। स होवाच याज्ञवल्क्यः। अननुशिष्य शिष्यं कृतार्थमकृत्वा शिष्याद्धनं न हरेतेति मे मम पिताऽमन्यत ममाप्ययमेवाभिप्रायः ॥२॥

यदेव ते कश्चिदब्रवीदुदङ्को नामतः शुल्बस्यापत्यं शौल्बायनोऽब्रवीत्प्राणो वै ब्रह्मेति प्राणो वायुर्देवता पूर्ववत्। प्राण एवाऽऽयतनमाकाशः प्रतिष्ठोपनिषत्प्रियमित्येनदुपासीत। कथं पुनः प्रियत्वं, प्राणस्य वै हे सम्राट्-कामाय प्राणस्यार्थायायाज्यं याजयति पतितादिकमप्यप्रतिगृह्यस्याप्युग्रादेः प्रतिगृह्णात्यपि तत्र तस्यां दिशि वध- २५
निमित्तमाशङ्कं वधाशङ्केत्यर्थो यां दिशमेति तस्कराद्याकीर्णां च तस्यां दिशि वधाशङ्का तच्चैतत्सर्वं प्राणस्य

प्रश्नमेव विवृणोति—किं स्वयमेवेति। प्रज्ञा निमित्तं यस्या वाचः सा तथा। द्वितीयपक्षं विशदयति—यथेति। व्यतिरेकपक्षं निषेधति—नेति। आकाङ्क्षापूर्वकं पक्षान्तरं गृह्णाति—कथं तर्हीति। बलिदानमुपहारसमर्पणम्। आदिशब्देन स्रक्चन्दनवस्त्रालंकारादिग्रहः। विद्यानिष्क्रयार्थमुवाचेति संबन्धः। पितुरेतन्मतमस्तु तव किमायातं तदाह—ममापीति ॥२॥ ३०

यथा वागग्निर्देवता तद्वदित्याह—पूर्ववदिति। प्राण एवाऽऽयतनमित्यत्र प्राणशब्दः करणविषयः। पतितादिकमित्यादिपदमकुलीनग्रहार्थम्। उग्रो जातिविशेषः। आदिशब्देन म्लेच्छगणो गृह्यते ॥३॥

---

१. वाचैव प्रज्ञायन्ते—श्रुतिरूपवाचेत्यर्थः।
२. बलिं पूजां अभिक्षरन्ति समर्पयन्ति।

सम्राट् कामाय प्राणो वै सम्राट्परमं ब्रह्म नैनं प्राणो जहाति सर्वाण्येनं भूतान्य-
भिक्षरन्ति देवो भूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते हस्त्यृषभँ सहस्रं ददामीति
होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥३॥

यदेव ते कश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मे बर्कुर्वार्ष्णश्चक्षुर्वै ब्रह्मेति यथा मातृमान्पितृ-
५ मानाचार्यवान्ब्रूयात्तथा तद्वार्ष्णोऽब्रवीच्चक्षुर्वै ब्रह्मेत्यपश्यतो हि किँ स्यादित्यब्रवीत्तु ते
तस्यायतनं प्रतिष्ठां न मेऽब्रवीदित्येकपाद्वा एतत्सम्राडिति स वै नो ब्रूहि याज्ञवल्क्य
चक्षुरेवायतनमाकाशः प्रतिष्ठा सत्यमित्येनदुपासीत का सत्यता याज्ञवल्क्य चक्षुरेव
सम्राडिति होवाच चक्षुषा वै सम्राट्पश्यन्तमाहुरद्राक्षीरिति स आहाद्राक्षमिति[1] तत्सत्यं
भवति चक्षुर्वै सम्राट्परमं ब्रह्म नैनं चक्षुर्जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति
१० देवो भूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते हस्त्यृषभँ सहस्रं ददामीति होवाच
जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥४॥

यदेव ते कश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मे गर्दभीविपीतो भारद्वाजः श्रोत्रं वै
ब्रह्मेति यथा मातृमान्पितृमानाचार्यवान्ब्रूयात्तथा तद्भारद्वाजोऽब्रवीच्छ्रोत्रं वै
ब्रह्मेत्यशृण्वतो हि किँ स्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मेऽब्रवीदित्येकपाद्वा
१५ एतत्सम्राडिति स वै नो ब्रूहि याज्ञवल्क्य श्रोत्रमेवायतनमाकाशः प्रतिष्ठाऽनन्त
इत्येनदुपासीत काऽनन्तता याज्ञवल्क्य दिश एव सम्राडिति होवाच तस्माद्वै सम्राडपि
यां कां च दिशं गच्छति नैवास्या अन्तं गच्छत्यनन्ता हि दिशो दिशो वै सम्राट्
श्रोत्रँ श्रोत्रं वै सम्राट्परमं ब्रह्म नैनँ श्रोत्रं जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति
देवो भूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते हस्त्यृषभँ सहस्रं ददामीति
२० होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥५॥

प्रियत्वे भवति प्राणस्यैव सम्राट्कामाय । तस्मात्प्राणो वै सम्राट्परमं ब्रह्म नैनं प्राणो जहाति ।
समानमन्यत् ॥३॥

यदेव ते कश्चिद्बर्कुरिति नामतो वृष्णस्यापत्यं वार्ष्णश्चक्षुर्वै ब्रह्मेत्यादित्यो देवता चक्षुष्युपनिषत्सत्यम् ।
यस्माच्छ्रोत्रेण श्रुतमनृतमपि स्यान्न तु चक्षुषा दृष्टम् । तस्माद्वै सम्राट्पश्यन्तमाहुरद्राक्षीस्त्वं हस्तिनमिति स
२५ चेदद्राक्षमित्याह तत्सत्यमेव भवति । यस्त्वन्यो ब्रूयादहमश्रौषमिति । तद्व्यभिचरति । यत्तु चक्षुषा दृष्टं तदव्यभि-
चारित्वात्सत्यमेव भवति ॥४॥

यदेव ते गर्दभीविपीत इति नामतो भारद्वाजो गोत्रतः श्रोत्रं वै ब्रह्मेति । श्रोत्रे दिग्देवताऽनन्त इत्येनदुपा-
सीत । काऽनन्तता श्रोत्रस्य । दिश एव श्रोत्रस्याऽऽनन्त्यं यस्मात्तस्माद्वै सम्राट्प्राचीमुदीचीं वा यां कांचिदपि दिशं
गच्छति नैवास्या अन्तं गच्छति कश्चिदपि । अतोऽनन्ता हि दिशः । दिशो वै सम्राट्श्रोत्रम् । तस्माद्दिगानन्त्यमेव
३० श्रोत्रस्याऽऽनन्त्यम् ॥५॥

चक्षुर्ब्रह्मण. सत्यत्वं साधयति—यस्मादिति । उक्तमेवोपपादयति—यस्त्विति ॥४॥
दिशामानन्त्येऽपि श्रोत्रस्य किमायातं तदाह—दिशो वा इति ॥५॥

---

१. अद्राक्षमिति—तदुक्तमत्रैव पञ्चमाध्याये (५-१४-४) द्वौ विवदमानावेयातामहमदर्शमहमश्रौषमिति इति
तत्स्मारितं भाष्यकृद्भिः—यस्त्वन्य—इति ।

यदेव ते कश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मे सत्यकामो जाबालो मनो वै ब्रह्मेति यथा मातृमान्पितृमानाचार्यवान्ब्रूयात्तथा तज्जाबालोऽब्रवीन्मनो वै ब्रह्मेत्यमनसो हि किँ स्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मेऽब्रवीदित्येकपाद्वा एतत्सम्राडिति स वै नो ब्रूहि याज्ञवल्क्य मन एवायतनमाकाशः प्रतिष्ठानन्द इत्येनदुपासीत काऽऽनन्दता याज्ञवल्क्य मन एव सम्राडिति होवाच मनसा वै सम्राट्स्त्रियमभिहार्यते तस्यां प्रतिरूपः पुत्रो जायते स आनन्दो मनो वै सम्राट्परमं ब्रह्म नैनं मनो जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति देवो भूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते हस्त्यृषभँ सहस्रं ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥६॥ ५

यदेव ते कश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मे विदग्धः शाकल्यो हृदयं वै ब्रह्मेति यथा मातृमान्पितृमानाचार्यवान्ब्रूयात्तथा तच्छाकल्योऽब्रवीद्धृदयं वै ब्रह्मेत्यहृदयस्य हि किँ स्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मेऽब्रवीदित्येकपाद्वा एतत्सम्राडिति स वै नो ब्रूहि याज्ञवल्क्य हृदयमेवायतनमाकाशः प्रतिष्ठा स्थितिरित्येनदुपासीत का स्थितता याज्ञवल्क्य हृदयमेव सम्राडिति होवाच हृदयं वै सम्राट् सर्वेषां भूतानामायतनँ हृदयं वै सम्राट्सर्वेषां भूतानां प्रतिष्ठा हृदये ह्येव सम्राट्सर्वाणि भूतानि प्रतिष्ठितानि भवन्ति हृदयं वै सम्राट्परमं ब्रह्म नैनँ हृदयं जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति देवो भूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते हस्त्यृषभँ सहस्रं ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥७॥ १० १५

इति बृहदारण्यकोपनिषदि चतुर्थाध्यायस्य प्रथमं ब्राह्मणम् ॥१॥

सत्यकाम इति नामतो जबालाया अपत्यं जाबालः। चन्द्रमा मनसि देवता। आनन्द इत्युपनिषत्। यस्मान्मन एवाऽऽनन्दस्तस्मान्मनसा वै सम्राट्स्त्रियमभिकामयमानोऽभिहार्यते प्रार्थयत इत्यर्थः। तस्माद्यां स्त्रियमभिकामयमानोऽभिहार्यते तस्यां प्रतिरूपोऽनुरूपः पुत्रो जायते स आनन्दहेतुः पुत्रः स येन मनसा निर्वर्त्यते तन्मन आनन्दः ॥६॥ २०

विदग्धः शाकल्यो हृदयं वै ब्रह्मेति। हृदयं वै सम्राट्सर्वेषां भूतानामायतनम्। नामरूपकर्मात्मकानि हि भूतानि हृदयाश्रयाणीत्यवोचाम शाकल्यब्राह्मणे हृदयप्रतिष्ठानि चेति। तस्माद्धृदये ह्येव सम्राट्सर्वाणि भूतानि प्रतिष्ठितानि भवन्ति। तस्माद्धृदयं स्थितिरित्युपासीत हृदये च प्रजापतिर्देवता ॥७॥ २५

इति बृहदारण्यकोपनिषद्भाष्ये चतुर्थाध्यायस्य प्रथमं ब्राह्मणम् ॥१॥

तथापि कथमानन्दत्वं मनसः संभवति तत्राऽऽह—स येनेति ॥६॥

कथं हृदयस्य सर्वभूतायतनत्वं तत्प्रतिष्ठात्वं च तदाह—नामरूपेति। तस्मादिति शाकल्यन्यायपरामर्शः। भूताना हृदयप्रतिष्ठत्वे फलितमाह—तस्माद्धृदयमिति ॥७॥ ३०

इति बृहदारण्यकोपनिषद्भाष्यटीकायां चतुर्थाध्यायस्य प्रथमं ब्राह्मणम् ॥१॥

अथ चतुर्थाध्यायस्य द्वितीयं ब्राह्मणम्

जनको ह वैदेहः कूर्चादुपावसर्पन्नुवाच नमस्तेऽस्तु याज्ञवल्क्यानु मा शाधीति स होवाच यथा वै सम्राण्महान्तमध्वानमेष्यन्रथं वा नावं वा समाददीतैव-मेवैताभिरुपनिषद्भिः समाहितात्माऽस्येवं वृन्दारक आढ्यः सन्नधीतवेद ५ उक्तोपनिषत्क इतो विमुच्यमानः क्व गमिष्यसीति नाहं तद्भगवन्वेद यत्र गमिष्यामीत्यथ वै तेऽहं तद्वक्ष्यामि यत्र गमिष्यसीति ब्रवीतु भगवानिति ॥१॥

इन्धो ह वै नामैष योऽयं दक्षिणेऽक्षन्पुरुषस्तं वा एतमिन्धं सन्तमिन्द्र इत्याचक्षते परोक्षेणैव परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः ॥२॥

जनको ह वैदेहः। यस्मात्सविशेषणानि सर्वाणि ब्रह्माणि जानाति याज्ञवल्क्यस्तस्मादाचार्यकत्वं हित्वा १० जनकः कूर्चादासनविशेषादुत्थायोप समीपमवसर्पन्पादयोर्निपतन्नित्यर्थः। उवाचोक्तवान्नमस्ते तुभ्यमस्तु हे याज्ञ-वल्क्यानु मा शाध्यनुशाधि मामित्यर्थः। इतिशब्दो वाक्यपरिसमाप्त्यर्थः। स होवाच याज्ञवल्क्यो यथा वै लोके हे सम्राड्महान्तं दीर्घमध्वानमेष्यन्गमिष्यन्रथं वा स्थलेन गमिष्यन्नावं वा जलेन गमिष्यन्समाददीत। एवमेवैतानि ब्रह्माण्येताभिरुपनिषद्भिर्युक्तान्युपासीनः समाहितात्माऽस्यत्यन्तमेताभिरुपनिषद्भिः संयुक्तात्माऽसि न केवलमुपनिष-त्समाहित एवं वृन्दारकः पूज्यश्चाऽऽढ्यश्चेश्वरो न दरिद्र इत्यर्थः। अधीतवेदोऽधीतो वेदो येन स त्वमधीतवेद १५ उक्ताश्चोपनिषद आचार्यैस्तुभ्यं स त्वमुक्तोपनिषत्क एवं सर्वविभूतिसंपन्नोऽपि सन्भयमध्यस्थ एव परमात्मज्ञानेन विनाऽकृतार्थ एव तावदित्यर्थः। यावत्परं ब्रह्म न वेत्सि। इतोऽस्माद्देहाद्विमुच्यमान एताभिर्नौरथस्थानीयाभिः समाहितः क्व कस्मिन्गमिष्यसि किं वस्तु प्राप्स्यसीति। नाहं तद्वस्तु भगवन्पूजावन्वेद जाने यत्र गमिष्यामीति। अथ यद्येवं न जानीषे यत्र गतः कृतार्थः स्या अहं वै ते तुभ्यं तद्वक्ष्यामि यत्र गमिष्यसीति। ब्रवीतु भगवानिति, यदि प्रसन्नो मां प्रति। शृणु ॥१॥

२० इन्धो ह वै नाम। इन्ध इत्येवंनामा। यश्चक्षुर्वै ब्रह्मेति पुरोक्त आदित्यान्तर्गत पुरुषः स एष योऽयं दक्षिणेऽक्षन्नक्षणि विशेषेण व्यवस्थितः। स च सत्यनामा। तं वा एतं पुरुषं दीप्तिगुणत्वात्प्रत्यक्षं नामास्येन्ध इति तमिन्धं सन्तमिन्द्र इत्याचक्षते परोक्षेण। यस्मात्परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः प्रत्यक्षनामग्रहणं द्विषन्ति। एष त्वं वैश्वानरमात्मानं संपन्नोऽसि ॥२॥

पूर्वस्मिन्ब्राह्मणे कानिचिदुपासनानि ज्ञानसाधनान्युक्तानि। इदानीं ब्रह्मणस्तैर्ज्ञेयस्य जागरादिद्वारा ज्ञानार्थं २५ ब्राह्मणान्तरमवतारयति—जनको हेति। राज्ञो ज्ञानित्वाभिमाने शिष्यत्वविरोधिन्यपनीते मुनिं प्रति तस्य शिष्यत्वे-नोपसत्तिं दर्शयति—यस्मादिति। नमस्कारोक्तेरुद्देश्यमुपन्यस्यति—अनु मेति। अभीष्टमनुशासन कर्तुं प्राचीनज्ञानस्य फलाभासहेतुत्वोक्तिद्वारा परमफलहेतुरात्मज्ञानमेवेति विवक्षित्वा तत्र राज्ञो जिज्ञासामापादयति—स हेत्यादिना। यथोक्तगुणसपन्नश्चेदहं तर्हि कृतार्थत्वान्न मे कर्तव्यमस्तीत्याशङ्क्याऽऽह—एवमिति। याज्ञवल्क्यो राज्ञो जिज्ञासा-मापाद्य पृच्छति—इत इति। परवस्तुविषये गतेरयोगात्प्रश्नविषयं विवक्षित संक्षिपति—किं वस्त्विति। राज्ञा ३० स्वकीयमज्ञत्वमुपेत्य शिष्यत्वे स्वीकृते प्रत्युक्तिमवतारयति—अथेति। तत्रापेक्षितमथशब्दसूचित पूरयति–यद्येवमिति। आज्ञापनमनुचितमिति शङ्कां वारयति—ब्रवीति। प्रसादाभिमुख्यमात्मनः सूचयति—शृण्विति ॥१॥

विश्वतैजसप्राज्ञानुवादेन तुरीयं ब्रह्म दर्शयितुमादौ विश्वमनुवदति—इन्ध इति। कोऽसाविन्धनामेति चेत्त-माह—यश्चक्षुरिति। अधिदैवतं पुरुषमुक्त्वाऽध्यात्मं तं दर्शयति—योऽयमिति। तस्य पूर्वस्मिन्नपि ब्राह्मणे प्रस्तुतत्व-माह—स चेति। प्रकृते पुरुषे विदुषां संमतिमाह—तं वा एतमिति। इन्धत्वं साधयति—दीप्तेति। प्रत्यक्षस्य ३५ परोक्षेणाऽऽख्याने हेतुमाह—यस्मादिति ॥२॥

---

१. कूर्चात्—उच्चस्थानस्थितासनात्।

२. इन्ध इति विश्वः माण्डूक्योक्त उक्त. म जाग्रत्कालीनो जीवः। स एव स्वप्ने तैजसः तस्य विहारादिकल्पना।

**अथैतद्वामेऽक्षणि पुरुषरूपमेषाऽस्य पत्नी विराट्तयोरेष सꣳस्तावो य एषोऽन्तर्हृदय आकाशोऽथैनयोरेतदन्नं य एषोऽन्तर्हृदये लोहितपिण्डोऽथैनयोरेतत्प्रावरणं यदेतदन्तर्हृदये जालकमिवाथैनयोरेषा सृतिः सञ्चरणी यैषा हृदयादूर्ध्वा नाड्युच्चरति यथा केशः सहस्रधा भिन्न एवमस्यैता हिता नाम नाड्योऽन्तर्हृदये प्रतिष्ठिता भवन्त्येताभिर्वा एतदास्रवदास्रवति तस्मादेष प्रविविक्ताहारतर इवैव भवत्यस्माच्छारीरादात्मनः ॥३॥** ५

अथैतद्वामेऽक्षणि पुरुषरूपमेषाऽस्य पत्नी यं त्वं वैश्वानरमात्मानं संपन्नोऽसि तस्यास्येन्द्रस्य भोक्तुर्भोग्यैषा पत्नी विराडन्नं भोग्यत्वादेव तदेतदन्नं चात्ता चैकं मिथुनं स्वप्ने। कथम्। तयोरेष इन्द्राण्या इन्द्रस्य चैष संस्तावः संभूय यत्र संस्तवं कुर्वाते अन्योन्यं स एष संस्तावः। कोऽसौ। य एषोऽन्तर्हृदय आकाशोऽन्तर्हृदये हृदयस्य मांसपिण्डस्य मध्ये। अथैनयोरेतद्वक्ष्यमाणमन्नं भोज्यं स्थितिहेतुः। किं तत्। य एषोऽन्तर्हृदये लोहितपिण्डो लोहित एव पिण्डाकारापन्नो लोहितपिण्डः। अन्नं जग्धं द्वेधा परिणमते यत्स्थूलं तदधो गच्छति। यदन्यत्तत्पुनरग्निना १० पच्यमानं द्वेधा परिणमते। यो मध्यमो रसः स लोहितादिक्रमेण पाञ्चभौतिकं पिण्डं शरीरमुपचिनोति। योऽणिष्ठो रसः स एष लोहितपिण्ड इन्द्रस्य लिङ्गात्मनो हृदये मिथुनीभूतस्य। यं तैजसमाचक्षते स तयोरिन्द्रेन्द्राण्योर्हृदये मिथुनीभूतयोः सूक्ष्मासु नाडीष्वनुप्रविष्टः स्थितिहेतुर्भवति। तदेतदुच्यतेऽथैनयोरेतदन्नमित्यादि। किंचान्यत्। अथैनयोरेतत्प्रावरणम्। भुक्तवतोः स्वपतोश्च प्रावरणं भवति लोके तत्सामान्यं हि कल्पयति श्रुतिः। किं तदिह प्रावरणम्। यदेतदन्तर्हृदये जालकमिवानेकनाडीछिद्रबहुलत्वाज्जालकमिव। १५

अथैनयोरेषा सृतिर्मार्गः संचरतोऽनयेति संचरणी स्वप्नाज्जागरितदेशागमनमार्गः। का सा सृतिः। यैषा हृदयाद्धृदयदेशादूर्ध्वाऽभिमुखी सत्युच्चरति नाडी। तस्याः परिमाणमिदमुच्यते। यथा लोके केशः सहस्रधा भिन्नोऽत्यन्तसूक्ष्मो भवत्येवं सूक्ष्मा अस्य देहस्य संबन्धिन्यो हिता नाम हिता इत्येवं ख्याता नाड्यस्ताश्चान्तर्हृदये मांसपिण्डे प्रतिष्ठिता भवन्ति हृदयाद्विप्ररूढास्ताः सर्वत्र कदम्बकेसरवदेताभिर्नाडीभिरत्यन्तसूक्ष्माभिरेतदन्नमास्रवद्गच्छदास्रवति गच्छति। तदेतद्देवताशरीरमनेनान्नेन दामभूतेनोपचीयमानं तिष्ठति। तस्माद्यस्मात्स्थूलेनान्नेनोपचितः २० पिण्ड इदं तु देवताशरीरं लिङ्गं[1] सूक्ष्मेणान्नेनोपचितं तिष्ठति। पिण्डोपचयकरमप्यन्नं प्रविविक्तमेव मूत्रपुरीषादि-

एकस्यैव वैश्वानरस्योपासनार्थं प्रासङ्गिकमिन्द्रश्चेन्द्राणी चेतिमिथुनं कल्पयति—अथेत्यादिना। प्रासङ्गिकध्यानाधिकारार्थोऽथशब्दः। यदेतन्मिथुनं जागरिते विश्वशब्दितं तदेवैकं स्वप्ने तैजसशब्दवाच्यमित्याह—तदेतदिति। तच्छब्दितं तैजसमधिकृत्य पृच्छति—कथमिति। किं तस्य स्थानं पृच्छ्यतेऽन्नं वा प्रावरणं वा मार्गो वेति विकल्प्याऽऽद्यं प्रत्याह—तयोरिति। संस्तवं संगतिमिति यावत्। द्वितीयं प्रत्याह—अथेति। अन्नातिरेकेण स्थितेरसंभवात्तस्य २५ वक्तव्यत्वादित्यथशब्दार्थः। लोहितपिण्डं सूक्ष्मान्नरसं व्याख्यातुं भक्षितस्यान्नस्य तावद्विभागमाह—अन्नमिति। यदन्यत्पुनरिति योजनीयम्। तत्रेत्यध्याहृत्य यो मध्यम इत्यादिग्रन्थो योज्यः। उपाध्युपहितयोरेकत्वमाश्रित्याऽऽह—यं तैजसमिति। तस्यान्नत्वमुपपादयति—स तयोरिति। व्याख्यातेऽर्थे वाक्यस्यान्वितावयवत्वमाह—तदेतदिति। यदि प्रावरणं पृच्छ्यते तत्राऽऽह—किंचान्यदिति। भोगस्वापानन्तर्यमथशब्दार्थः। प्रावरणप्रदर्शनस्य प्रयोजनमाह—भुक्तवतोरिति। इहेति भोक्तृभोग्ययोरिन्द्रेन्द्राण्योरुक्तिः। हृदयजालकयोराधाराधेयत्वमविवक्षितं तस्यैव तद्भावात्। ३०

मार्गश्चेत्पृच्छ्यते तत्राऽऽह—अथेति। नाडीभिः शरीरं व्याप्तस्यान्नस्य प्रयोजनमाह—तदेतदिति। तस्मादित्यादिवाक्यमादाय व्याचष्टे—यस्मादिति। तथाऽपि प्रविविक्ताहार इत्येव वक्तव्ये प्रविविक्ताहारतर इति कस्मा-

1. देवताशरीरं लिङ्गशरीरम्। प्राणेन ध्रियते प्राणस्तु अन्नेन ध्रियते अन्नरसेन शरीरपोषणे सत्येव प्राणः शरीरे तिष्ठेत् नान्यथेत्यर्थः। लिङ्गशरीरात् तत्स्थापकप्राणात्मभावमापन्नः पुरुषः प्राणश्च प्राज्ञः। ततः प्राज्ञभावे सति तस्येश्वरादभेदात् तस्य प्राची प्राणाः प्राचीत्यादिना सर्वात्मत्वमुक्तं, अत्र माण्डूक्योक्तविश्व- ३५ तैजसप्राज्ञा एव नामान्तरेणोक्ताः प्राज्ञभावमापन्न ईश्वराभिन्नो भवति। ततः तस्य नेति नेतीत्यादिना प्रपञ्चनिषेधे शुद्धं चैतन्यमेवावशिष्यते स एव मोक्षः।

तस्य प्राची दिक्प्राञ्चः प्राणा दक्षिणा दिग्दक्षिणे प्राणाः प्रतीची दिक्प्रत्यञ्चः प्राणा उदीची दिगुदञ्चः प्राणा ऊर्ध्वा दिगूर्ध्वाः प्राणा अवाची दिगवाञ्चः प्राणाः सर्वा दिशः सर्वे प्राणाः स एष नेति नेत्यात्माऽगृह्यो न हि गृह्यतेऽशीर्यो न हि शीर्यतेऽसङ्गो न हि सज्यतेऽसितो न व्यथते न रिष्यत्यभयं वै जनक
५ प्राप्तोऽसीति होवाच याज्ञवल्क्यः। स होवाच जनको वैदेहोऽभयं त्वा गच्छता-द्याज्ञवल्क्य यो नो भगवन्नभयं वेदयसे नमस्तेऽस्त्विमे विदेहा अयमहमस्मि ॥४॥

इति बृहदारण्यकोपनिषदि चतुर्थाध्यायस्य द्वितीयं ब्राह्मणम् ॥२॥

स्थूलमपेक्ष्य लिङ्गस्थितिकरं त्वन्नं ततोऽपि सूक्ष्मतरम्। अतः प्रविविक्ताहारः पिण्डः। तस्मात्प्रविविक्ताहारादपि प्रविविक्ताहारतर एष लिङ्गात्मैवैव भवत्यस्माच्छरीराच्छारीरमेव शारीरं तस्माच्छारीरात्। आत्मनो वैश्वानरा-
१० त्तैजसः सूक्ष्मान्नोपचितो भवति ॥३॥

स एष हृदयभूतस्तैजसः सूक्ष्मभूतेन प्राणेन विध्रियमाणः प्राण एव भवति। तस्यास्य विदुषः क्रमेण वैश्वानरात्तैजसं प्राप्तस्य हृदयात्मानमापन्नस्य हृदयात्मनश्च प्राणात्मानमापन्नस्य प्राची दिक्प्राञ्चः प्रागताः प्राणाः। तथा दक्षिणा दिग्दक्षिणे प्राणाः। तथा प्रतीची दिक्प्रत्यञ्चः प्राणाः। उदीची दिगुदञ्चः प्राणाः। ऊर्ध्वा दिगूर्ध्वाः प्राणाः। अवाची दिगवाञ्चः प्राणाः। सर्वा दिशः सर्वे प्राणाः। एवं विद्वान्क्रमेण सर्वात्मकं प्राणमात्मत्वे-
१५ नोपगतो भवति। तं सर्वात्मानं प्रत्यगात्मन्युपसंहृत्य द्रष्टुर्हि द्रष्टृभावं नेति नेतीत्यात्मानं तुरीयं प्रतिपद्यते। यमेव विद्वाननेन क्रमेण प्रतिपद्यते स एष नेति नेत्यात्मेत्यादि न रिष्यतीत्यन्तं व्याख्यातमेतत्। अभयं वै जन्ममरणादि-निमित्तभयशून्यं हे जनक प्राप्तोऽसीति हैवं किलोवाचोक्तवान्याज्ञवल्क्यः। तदेतदुक्तमथ वै तेऽहं तद्वक्ष्यामि यत्र गमिष्यसीति। स होवाच जनको वैदेहोऽभयमेव त्वा त्वामपि गच्छतादागच्छतु यस्त्वं नोऽस्मान्हे याज्ञवल्क्य भगवन्पूजावन्नभयं ब्रह्म वेदयसे ज्ञापयसि प्रापितवानुपाधिकृताज्ञानव्यवधानापनयनेनेत्यर्थः। किमन्यदहं विद्या-
२० निष्क्रयार्थं प्रयच्छामि साक्षादात्मानमेव दत्तवते। अतो नमस्तेऽस्त्विमे विदेहास्तव यथेष्टं भुज्यन्तामयं चाहमस्मि दासभावे स्थितो यथेष्टं मां राज्यं च प्रतिपद्यस्वेत्यर्थः ॥४॥

इति बृहदारण्यकोपनिषद्भाष्ये चतुर्थाध्यायस्य द्वितीयं ब्राह्मणम् ॥२॥

दुच्यते तत्राऽऽह—पिण्डेति। यत्मादित्यस्यापेक्षितं कथयति—अत इति। शारीरादिति श्रूयते कथ शरीरादित्युच्यते तत्राऽऽह—शरीरमेवेति। उक्तमर्थं संक्षिप्योपसंहरति—आत्मन इति ॥३॥

२५ तस्य प्राची दिगित्याद्यवतारयितुं भूमिकां करोति—स एष इति। प्राणशब्देनाज्ञातः प्रत्यगात्मा प्राज्ञो गृह्यते। एवं भूमिकां कृत्वा वाक्यमादाय व्याकरोति—तस्येत्यादिना। तैजसं प्राप्तस्येत्यस्य व्याख्यानं हृदयात्मानमाप-न्नस्येति। उक्तमर्थं संक्षिप्याऽऽह—एवं विद्वानिति। विश्वस्य जागरिताभिमानिनस्तैजसे तस्य च स्वप्नाभिमानिनः सुषुप्त्यभिमानिनि प्राज्ञे क्रमेणान्तर्भावं जानन्नित्यर्थः। स एष नेति नेत्यात्मेत्यादेर्भूमिका करोति—तं सर्वात्मानमिति। तत्र वाक्यमवतार्य पूर्वोक्तं व्याख्यानं स्मारयति—यमेष इति। तुरीयादपि प्राप्तव्यमन्यदभयमस्तीत्याशङ्क्याऽऽह—
३० अभयमिति। गन्तव्यं वक्ष्यामीत्युपक्रम्यावस्थात्रयातीतं तुरीयमुपदिशन्नाम्रान्पृष्टः कोविदारानाचष्ट इतिन्यायविषयता नातिवर्तेतेत्याशङ्क्याऽऽह—तदेतदिति। विद्याया दक्षिणान्तराभावमभिप्रेत्याऽऽह—स होवाचेति। कथ पुनरन्यस्य स्थितस्य नष्टस्य वाऽन्यप्रापणमित्याशङ्क्याऽऽह—उपाधीति। पश्चादिक दक्षिणान्तर संभवतीत्याशङ्क्य तस्योक्तविद्यानुरूपत्व नास्तीत्याह—किमन्यदिति। वस्तुतो दक्षिणान्तराभावमुक्त्वा प्रतीतिमाश्रित्याऽऽह—अत इति। अक्षरार्थमुक्त्वा वाक्यार्थमाह—यथेष्टमिति ॥४॥

इति बृहदारण्यकभाष्यटीकायां चतुर्थाध्यायस्य द्वितीयं ब्राह्मणम् ॥ २ ॥

३५

अथ चतुर्थाध्यायस्य तृतीयं ब्राह्मणम्

**जनकँ ह वैदेहं याज्ञवल्क्यो जगाम स मेने न वदिष्य इत्यथ ह यज्जनकश्च वैदेहो याज्ञवल्क्यश्चाग्निहोत्रे समूदाते तस्मै ह याज्ञवल्क्यो वरं ददौ स ह कामप्रश्नमेव वव्रे तँ हास्मै ददौ तँ ह सम्राडेव पूर्वः पप्रच्छ ॥१॥**

जनकं ह वैदेहं याज्ञवल्क्यो जगामेत्यस्याभिसंबन्धः। विज्ञानमय आत्मा साक्षादपरोक्षाद्ब्रह्म सर्वान्तरः ५ पर एव। "नान्योऽतोऽस्ति द्रष्टा नान्यदतोऽस्ति द्रष्टृ"त्यादिश्रुतिभ्यः। स एष इह प्रविष्टो वदनादिलिङ्गोऽस्ति व्यतिरिक्त इति मधुकाण्डेऽजातशत्रुसंवादे प्राणादिकर्तृत्वभोक्तृत्वप्रत्याख्यानेनाधिगतोऽपि सन्पुनः प्राणनादिलिङ्गमुपन्यस्यौषस्तप्रश्ने प्राणनादिलिङ्गो यः सामान्येनाधिगतः प्राणेन प्राणितीत्यादिना दृष्टेर्द्रष्टेत्यादिनाऽलुप्तशक्तिस्वभावोऽधिगतः।

तस्य च परोपाधिनिमित्तः संसारो यथा रज्जूषरशुक्तिकागगनादिषु सर्पोदकरजतमलिनत्वादि पराध्या- १० रोपणनिमित्तमेव न स्वतस्तथा निरुपाधिको निरुपाख्यो नेति नेतीति व्यपदेश्यः साक्षादपरोक्षात्सर्वान्तर आत्मा ब्रह्माक्षरमन्तर्यामी प्रशास्तौपनिषदः पुरुषो विज्ञानमानन्दं ब्रह्मेत्यधिगतम्।

तदेव पुनरिन्धसंज्ञः प्रविविक्ताहारस्ततोऽन्तर्हृदये लिङ्गात्मा प्रविविक्ताहारतरस्ततः परेण जगदात्मा प्राणोपाधिस्ततोऽपि प्रविलाप्य जगदात्मानमुपाधिभूतं रज्ज्वादाविव सर्पादिकं विद्यया स एष नेति नेतीति साक्षात्सर्वान्तरं ब्रह्माधिगतम्। एवमभयं परिप्रापितो जनको याज्ञवल्क्येनाऽऽगमतः संक्षेपतः। अत्र च जाग्रत्स्वप्न- १५

पूर्वस्मिन्ब्राह्मणे जागरादिद्वारा तत्त्वं निर्धारितं संप्रति ब्राह्मणान्तरमवतार्य तस्य पूर्वेण संबन्धं प्रतिजानीते—जनकमिति। तमेव वक्तु तृतीये वृत्त कीर्तयति—विज्ञानमय इति। यद्ब्रह्म साक्षादपरोक्षात्सर्वान्तर आत्मा स पर एव विज्ञानमय आत्मेत्यत्र हेतुमाह—नान्य इति। विज्ञानमयः पर एवेत्यत्र वाक्यान्तरं पठति—स एष इति। वदन्वागित्यादावुक्तमनुवदति—वदनादीति। तार्तीयमर्थमनूद्य चातुर्थिकमर्थमनुवदति—अस्तीति। यदि मधुकाण्डे गार्ग्यकाश्यसंवादे प्राणादीनां कर्तृत्वादिनिराकरणेन तेभ्यो व्यतिरिक्तोऽस्ति विज्ञानात्मेति सोऽधिगतस्तर्हि किमिति पञ्चमे २० तत्सद्भावो व्युत्पाद्यते तत्राऽऽह—पुनरिति। यद्यपि विज्ञानमयसद्भावश्चतुर्थे स्थितस्तथाऽपि पुनरौषस्त्ये प्रश्ने यः प्राणेन प्राणितीत्यादिना प्राणनादिलिङ्गमुपन्यस्य तल्लिङ्गगम्यः सामान्येनाधिगतः स दृष्टेर्द्रष्टेत्यादिना कूटस्थदृष्टिस्वभावो विशेषतो निश्चितस्तथा च पञ्चमेऽपि तद्व्युत्पादनमुचितमित्यर्थः।

आत्मा कूटस्थदृष्टिस्वभावश्चेत्कथं तस्य संसारस्तत्राऽऽह—तस्य चेति। अज्ञानं तत्कार्यं चान्तःकरणादि परोपाधिशब्दार्थः। ससारस्याऽऽत्मन्यौपाधिकत्वे दृष्टान्तमाह—यथेति। दार्ष्टान्तिकस्यानेकरूपत्वादनेकदृष्टान्तोपादान- २५ मित्यभिप्रेत्य दार्ष्टान्तिकमाह—तथेति। यथोक्तदृष्टान्तानुसारेणाऽऽत्मन्यपि परोपाधिः संसार इति यावत्। सोपाधिकस्याऽऽत्मनः संसारित्वमुक्त्वा निरुपाधिकस्य नित्यमुक्तत्वमाह—निरुपाधिक इति। निरुपाख्यत्व वाचा मनसां चागोचरत्वम्। कथं तर्हि तत्राऽऽगमप्रामाण्यं तत्राऽऽह—नेति नेतीति व्यपदेश्य इति। कहोलप्रश्नोक्तमनुद्रवति—साक्षादिति। अक्षरब्राह्मणोक्तं स्मारयति—अक्षरमिति। अन्तर्यामिब्राह्मणोक्त स्मारयति—अन्तर्यामीति। शाकल्यब्राह्मणोक्तमनुसदधाति—औपनिषद इति। ३०

पाञ्चमिकमर्थमित्थमनूद्यातीते ब्राह्मणद्वये वृत्तमनुभाषते—तदेवेति। यत्साक्षादपरोक्षात्सर्वान्तर ब्रह्म तदेवाधिगमनोपायविशेषोपदर्शनपुरःसरं पुनरधिगतमिति संबन्धः। षडाचार्यब्राह्मणार्थं संक्षिप्य कूर्चब्राह्मणार्थं संक्षिपति—इन्ध इत्यादिना। इन्धस्य विशेषण प्रविविक्ताहार इति हृदयेऽन्तर्यो लिङ्गात्मा स ततो वैश्वानरादिन्धात्प्रविविक्ताहारतर इति योजना। विश्वतैजसावुक्त्वा प्राज्ञतुरीये प्रदर्शयति—ततः परेणेति। ततस्तस्माद्विश्वात्तैजसाच्च परेण व्यवस्थितो यो जगदात्मा प्राणोपाधिरव्याकृताख्यः प्राज्ञस्ततोऽपि तमप्युपाधिभूत जगदात्मानं केवले प्रतीचि विद्यया ३५ प्रविलाप्य स एष नेति नेतीति यत्तुरीय ब्रह्म तदधिगतमिति संबन्धः। विद्ययोपाधिविलापने दृष्टान्तमाह—रज्ज्वा-

१. ततः परेण—लिङ्गात्मापेक्षया परः समष्टिः सूत्रात्मा ततोऽपि तस्मादपि परं जगदात्मानं सूत्रं प्राणं विद्यया प्रविलाप्य शुद्धं ब्रह्म नेति नेतीति निर्देशेन ज्ञापितम्।

सुषुप्ततुरीयाण्युपन्यस्तान्यन्यप्रसङ्गेनेन्धः प्रविविक्ताहारतरः सर्वे प्राणाः स एष नेति नेतीति ।

इदानीं जाग्रत्स्वप्नादिद्वारेणैव महता तर्केण विस्तरतोऽधिगमः कर्तव्यः । अभयं प्रापयितव्यम् । सद्-भावश्चाऽऽत्मनो विप्रतिपत्त्याशङ्कानिराकरणद्वारेण । व्यतिरिक्तत्वं शुद्धत्वं स्वयंज्योतिष्ट्वमलुप्तशक्तिस्वरूपत्वं निरतिशयानन्दस्वाभाव्यमद्वैतत्वं चाधिगन्तव्यमितीदमारभ्यते ।

५ आख्यायिका तु विद्यासंप्रदानग्रहणविधिप्रकाशनार्था । विद्यास्तुतये च विशेषतः । वरदानादिसूचनात् । जनकं ह वैदेहं याज्ञवल्क्यो जगाम । स च गच्छन्नेवं मेने चिन्तितवान्न वदिष्ये किंचिदपि राज्ञे । गमनप्रयोजनं तु योगक्षेमार्थम् । न वदिष्य इत्येवंसंकल्पोऽपि याज्ञवल्क्यो यद्यज्जनकः पृष्टवांस्तत्तत्प्रतिपेदे तत्र को हेतुः संकल्पि-तस्यान्यथाकरण इत्यत्राऽऽख्यायिकामाचष्टे । पूर्वत्र किल जनकयाज्ञवल्क्ययोः संवाद आसीदग्निहोत्रे निमित्ते । तत्र जनकस्याग्निहोत्रविषयं विज्ञानमुपलभ्य परितुष्टो याज्ञवल्क्यस्तस्मै जनकाय ह किल वरं ददौ । स च जनको ह
१० कामप्रश्नमेव वरं वव्रे वृतवांस्तं च वरं हास्मै ददौ याज्ञवल्क्यः । तेन वरप्रदानसामर्थ्येनाव्याचिख्यासुमपि दावित्ति । अभयं वै जनकेत्यादावुक्तमनुवदति—एवमिति । कूर्चब्राह्मणोक्तमर्थमनुभाषितं संक्षिप्याऽऽह—अत्र चेति । अन्यप्रसङ्गेनोपासनाना क्रममुक्तिफलत्वप्रदर्शनप्रसंगेनेति यावत् । तेषामुपन्यासमेवाभिनयति—इन्ध इत्यादिना ।

वृत्तमनूद्योत्तरब्राह्मणस्य तात्पर्यमाह—इदानीमिति । आदिशब्दः सुषुप्तितुरीयसंग्रहार्थः । तर्कस्य महत्त्वं चतुर्विधदोषराहित्येनाबाधितत्वम् । अधिगमस्तस्यैव प्रस्तुतस्य ब्रह्मण इति शेषः । कर्तव्य इतीदमिदानीमारभ्यत
१५ इति संम्बन्धः । किमिद ब्रह्मणोऽधिगमस्य कर्तव्यत्व नाम तदाह—अभयमिति । अधिगन्तव्यमर्थान्तरमाह—सद्भा-वश्चेति । प्रागपि सद्भावस्तस्याधिगतस्तत्किमर्थं पुनस्तादर्थ्येन प्रयत्यते तत्राऽऽह—विप्रतिपत्तीति । बाह्यानां विप्रति-पत्त्या नास्तित्वशङ्कायां तन्निरासद्वाराऽऽत्मनः सद्भावोऽधिगन्तव्य इत्यर्थः । आत्मनोऽस्तित्वेऽपि केचिद्देहादौ तदन्त-र्भावमभ्युपयन्ति तान्प्रत्याह—व्यतिरिक्तत्वमिति । देहादिव्यतिरिक्तोऽप्यात्मा कर्ता भोक्ता चेत्येके भोक्तैव केवलमित्यपरे तान्प्रत्युक्तम्—शुद्धत्वमिति । तस्य जडत्वपक्षं प्रत्याचष्टे—स्वयंज्योतिष्ट्वमिति । तत्र कूटस्थदृष्टिस्वभावत्वं हेतुमाह-
२० अलुप्तेति । एतेन विज्ञानस्य गुणत्वपक्षोऽपि प्रत्युक्तो वेदितव्यः । ये त्वानन्दमात्मगुणमाहुस्तान्प्रत्याह—निरतिशयेति । आत्मनः सप्रपञ्चत्वपक्ष प्रत्यादिशति—अद्वैतत्वं चेति ।

ब्राह्मणतात्पर्यमभिधायाऽऽख्यायिकातात्पर्यमाह—आख्यायिका त्विति । विद्यायाः संप्रदानं शिष्यस्तस्य ग्रहण-विधिः श्रद्धादिप्रकारस्तस्य प्रकाशनार्थेयमाख्यायिकेति यावत् । प्रयोजनान्तरं तस्या दर्शयति—विद्येति । कथं कर्मभ्यो विशेषतो विद्यायाः स्तुतिरत्र लक्ष्यते तत्राऽऽह—वरेति । कामप्रश्नाख्यस्य वरस्य याज्ञवल्क्येन राज्ञे दत्तत्वात्तेन
२५ चावसरे ब्रह्मज्ञानस्यैव पृष्टत्वादनेन विधिना विद्यास्तुतेः सूचनात्साऽप्यत्र विवक्षितेत्यर्थः ।

तात्पर्यमेवमुक्त्वा व्याख्यामक्षराणामारभते—जनकमित्यादिना । संवादं न करोमीति व्रत चेत्किमिति गच्छतीत्याशङ्क्ते—गमनेति । उत्तरमाह—योगेति । अथ हेत्याद्यवतारयति—नेत्यादिना । अत्रोत्तरत्वेनेति शेषः । पूर्वत्रेति कर्मकाण्डोक्तिः । नन्वग्निहोत्रप्रकरणे कामप्रश्नो वरो दत्तश्चेत्किमिति तत्रैवाऽऽत्मयाथात्म्यप्रश्नप्रतिवचने नासूचिषाता तत्राऽऽह—तत्रैवेति । कर्मनिरपेक्षाया ब्रह्मविद्याया मोक्षहेतुत्वादपि कर्मप्रकरणे तदनुक्तिरित्याह—

---

३० १. अग्निहोत्रे समूदाते इत्यादि । शतपथब्राह्मणे एकादशकाण्डे षष्ठाध्याये पठ्यते—जनको ब्रूते ते वा एते आहुती उत्क्रामतः इत्यादीना पञ्चाग्निविद्यामधिकृत्य । एतदग्निहोत्रं याज्ञवल्क्य नातः परमस्तीति च । तस्मै ह याज्ञ-वल्क्यो वरं ददौ स होवाच ( जनकः ) कामप्रश्न एव मे त्वयि याज्ञवल्क्यासदीति । स मेने इत्यादि । अत्र वार्त्तिककाराः—सं एनेन वदिष्ये एनेन राज्ञा सम्यक् संवाद करिष्ये इत्यर्थ. समीचीनतर इत्याहुः—वरदानं तु अनुमतिं विना स्वयमेव राज्ञः प्रश्नस्य कारणं भवतु प्रश्नानन्तरं जाग्रत्स्वप्नाद्यवस्थाद्वारा अवस्थात्रयविमुक्तत्व
३५ शुद्धत्वं यद्वै तन्न पश्यति पश्यन् वै तन्न पश्यति इत्यादिना प्रोक्त स्वप्रकाशत्वं सकामाकामभेदेन उत्क्रान्तिभेद परस्यात्रैव ब्रह्मभावः अन्ते संन्यास इत्यादयः अपृष्टोत्तरतया येनिर्णीताः ते सर्वे सवदिष्ये इत्यर्थकरणे शोभन्ते । केवलं वरदानयन्त्रितस्य तु यावत् पृष्टं तावदेवोत्तरं भवेत् नाधिकम् । भाष्यकारास्तु—यथाश्रुतमर्थमादाय व्याचख्युरिति न तेषामुपरि दोषोद्घाटनम् ।

२. चतुर्विधदोषाः तर्कस्य आत्माश्रयः, अन्योन्याश्रयः, चक्रकम्, अनवस्था च । विपर्यये तत्कोट्यपर्यवसायित्वमपि दोष-माहुः । तर्कस्य व्याप्तिसापेक्षत्वेन व्याप्त्यनुग्राहकत्वे इमे दोषा प्रादुष्युः । केचिद्देहादौ चार्वाका आत्मानं अन्तर्भाव-
४० यन्ति । कर्ता भोक्तेति न्यायविदः । भोक्तैवेति साङ्ख्याः जडत्वपक्षः प्राभाकराणाम्, आनन्दमात्मगुणं न्याये वदन्ति ।

**याज्ञवल्क्य किंज्योतिरयं पुरुष इति । आदित्यज्योतिः सम्राडिति होवाचाऽऽ-
दित्येनैवायं ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते विपल्येतीत्येवमेवैतद्याज्ञवल्क्य ॥२॥**

याज्ञवल्क्यं तूष्णीं स्थितमपि सम्राडेव जनकः पूर्वं पप्रच्छ । तत्रैवानुक्तिर्ब्रह्मविद्यायाः कर्मणा विरुद्धत्वात् । विद्यायाश्च स्वातन्त्र्यात् । स्वतन्त्रा हि ब्रह्मविद्या सहकारिसाधनान्तरनिरपेक्षा पुरुषार्थसाधनेति च ॥१॥

हे याज्ञवल्क्येत्येवं संबोध्याभिमुखीकरणाय किंज्योतिरयं पुरुष इति किमस्य पुरुषस्य ज्योतिर्येन ज्योतिषा ५ व्यवहरति सोऽयं किंज्योतिरयं प्राकृतः कार्यकरणसंघातरूपः शिरःपाण्यादिमान्पुरुषः पृच्छ्यते । किमयं स्वावयवसंघातबाह्येन ज्योतिरन्तरेण व्यवहरत्याहोस्वित्स्वावयवसंघातमध्यपातिना ज्योतिषा ज्योतिष्कार्यमयं पुरुषो निर्वर्तयतीत्येतदभिप्रेत्य पृच्छति । किंचातो यदि व्यतिरिक्तेन यदि वाऽव्यतिरिक्तेन—ज्योतिषा ज्योतिष्कार्यं निर्वर्तयति । शृणु तत्र कारणम् । यदि व्यतिरिक्तेनैव ज्योतिषा ज्योतिष्कार्यनिर्वर्तकत्वमस्य स्वभावो निर्धारितो भवति ततोऽदृष्टज्योतिष्कार्यविषयेऽप्यनुमास्यामहे व्यतिरिक्तज्योतिर्निमित्तमेवेदं कार्यमिति । १०

अथाव्यतिरिक्तेनैव स्वात्मना ज्योतिषा व्यवहरति ततोऽप्रत्यक्षेऽपि ज्योतिषि ज्योतिष्कार्यदर्शनेऽव्यतिरिक्तमेव ज्योतिरनुमेयम् । अथानियम एव व्यतिरिक्तमव्यतिरिक्तं वा ज्योतिः पुरुषस्य व्यवहारहेतुस्ततोऽनध्यवसाय एव ज्योतिर्विषय इत्येवं मन्वानः पृच्छति जनको याज्ञवल्क्यं किंज्योतिरयं पुरुष इति ।

नन्वेवमनुमानकौशले जनकस्य किं प्रश्नेन स्वयमेव कस्मान्न प्रतिपद्यत इति । सत्यमेतत् । तथाऽपि लिङ्गलिङ्गिसंबन्धविशेषाणामत्यन्तसौक्ष्म्याद्दुरवबोध्यतां मन्यते बहूनामपि पण्डितानां किमुतैकस्य । अत एव हि १५ धर्मसूक्ष्मनिर्णये परिषद्व्यापार इष्यते । पुरुषविशेषश्चापेक्ष्यते । दशावरा परिषत्त्रयो वैको वेति ।

विद्यायाश्चेति । सर्वापेक्षाधिकरणन्यायान्न तस्याः स्वातन्त्र्यमित्याशङ्क्याऽऽह—स्वतन्त्रा हीति । सा हि स्वोत्पत्तौ स्वफले वा कर्माण्यपेक्षते ? नाऽऽद्योऽभ्युपगमात् । न द्वितीयः । अत एव चाग्नीन्धनाद्यनपेक्षेतिन्यायविरोधादित्यभिप्रेत्याऽऽह—सहकारीति । इत्यस्माच्च हेतोस्तत्रैवानुक्तिरिति संबन्धः ॥१॥

याज्ञवल्क्यव्रतभङ्गे हेतुमुक्त्वा जनकस्य प्रश्नमुत्थापयति—हे याज्ञवल्क्येति । अक्षरार्थमुक्त्वा प्रश्नवाक्ये २० विवक्षितमर्थमाह—किमयमित्यादिना । स्वशब्दो यथोक्तपुरुषविषयः । ज्योतिष्कार्यमित्यासनादिव्यवहारोक्तिः । इत्येतदिति कल्पद्वयं परामृश्यते । फलं पक्षद्वयेऽपि पृच्छति—किंचेति । सप्तम्यर्थे तसिः । उत्तरमाह—शृण्विति । तत्रेति पक्षद्वयोक्तिः । कारणं फलमिति यावत् । प्रथमपक्षमनूद्य स्वपक्षसिद्धिफलमाह—यदीत्यादिना । षष्ठी पुरुषमधिकरोति । यत्र कारणभूतं ज्योतिर्न दृश्यते तत्कार्यं त्वासनाद्युपलभ्यते तत्रापि विषये स्वप्नादाविति यावत् । अनुमानमेवाभिनयति—व्यतिरिक्तेति । विमतमतिरिक्तज्योतिरधीनं व्यवहारत्वात्संमतवदित्यर्थः । २५

पक्षान्तरमनूद्य लोकायतपक्षसिद्धिफलमाह—अथेत्यादिना । अप्रत्यक्षेपीत्यव्यतिरिक्तमिति च्छेदः । कल्पान्तरमाह—अथेति । अनियमं व्याकरोति—व्यतिरिक्तमिति । तस्मिन्पक्षे व्यवहारहेतौ ज्योतिष्यनिश्चयात्तद्विकारो व्यवहारोऽपि न स्थैर्यमालम्बेतेत्याऽऽह—तत इति । व्याख्यातं प्रश्नमुपसंहरति—इत्येवमिति ।

प्रश्नमाक्षिपति—नन्विति । व्यतिरिक्तज्योतिर्बुभुत्सया प्रश्नो भविष्यतीति चेत्तत्राऽऽह—स्वयमेवेति । राज्ञोऽनुमानकौशलमङ्गीकरोति—सत्यमिति । किमिति तर्हि पृच्छतीत्याशङ्क्याऽऽह—तथाऽपीति । व्याप्यव्यापकयोस्तत्संबन्धस्य चातिसूक्ष्मत्वादेकेन दुर्ज्ञानत्वात्तज्ज्ञाने याज्ञवल्क्योऽप्यपेक्षित इत्यर्थः । कथं तेषामतिसूक्ष्मत्वं तत्राऽऽह—बहूनामपीति । लिङ्गादिष्वनेकेषामपि विवेकिना दुर्बोधतास्ति किमुतैकस्य तेषु दुर्बोधता वाच्येत्यर्थः । तेषामत्यन्तसौक्ष्म्ये मानवी स्मृतिं प्रमाणयति—अत एवेति । कुशलस्यापि सूक्ष्मार्थनिर्णये पुरुषान्तरापेक्षायाः सत्त्वादेवेति यावत् । पुरुषविशेषो वेदविदध्यात्मविदित्यादिः । तत्र स्मृत्यर्थं संक्षिपति—दशेति । उक्तं हि— ३०

१. आदित्येनैवायं इत्यत्रैवाकारः नेतरव्यवच्छेदकः चन्द्रादिभिरपि शरीरोपकारदर्शनात् (वा) । ३५

२. ब्रह्मविद्या सर्वकर्मसापेक्षा, यज्ञेनविविदिषन्तीतिश्रुतेः । अत एव विद्यायाः स्वतन्त्र्येण फलसाधनत्वत् कर्मानपेक्षा ( ४४-२६ ब्र० सू० ) ब्र० सू० ३-८-१ ।

३. अदृष्टं ज्योतिः तत्कार्यं तु व्यवहार उपलभ्यते स्वप्ने इत्यर्थः अदृष्टं च तत् ज्योतिश्चादृष्टज्योति. अदृष्टज्योतिषः कार्यं स्वप्नः ।

४. लिङ्गं हेतुः लिङ्गि साध्य सम्बन्धो व्याप्तिः ।

४०

अस्तमित आदित्ये याज्ञवल्क्य किंज्योतिरेवायं पुरुष इति चन्द्रमा एवास्य ज्योतिर्भवतीति चन्द्रमसैवायं ज्योतिषास्ते पल्ययते कर्म कुरुते विपल्येतीत्येवमेवैतद्याज्ञवल्क्य ॥३॥ अस्तमित आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते किंज्योतिरेवायं पुरुष इत्यग्निरेवास्य ज्योतिर्भवतीत्यग्निनैवायं ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते विपल्येतीत्येवमेवैतद्याज्ञवल्क्य ॥४॥

५ अस्तमित आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते शान्तेऽग्नौ किंज्योतिरेवायं पुरुष इति वागेवास्य ज्योतिर्भवतीति वाचैवायं ज्योतिषाऽऽस्ते

तस्माद्यद्यप्यनुमानकौशलं राज्ञस्तथाऽपि तु युक्तो याज्ञवल्क्यः प्रष्टुम्। विज्ञानकौशलतारतम्योपपत्तेः पुरुषाणाम्। अथवा श्रुतिः स्वयमेवाऽऽख्यायिकाव्याजेनानुमानमार्गमुपन्यस्यास्मान्बोधयति पुरुषमतिमनुसरन्ती।

याज्ञवल्क्योऽपि जनकाभिप्रायाभिज्ञतया व्यतिरिक्तमात्मज्योतिर्बोधयिष्यञ्ज्ञनकं व्यतिरिक्तप्रतिपादकमेव १० लिङ्गं प्रतिपेदे यथा प्रसिद्धमादित्यज्योतिः सम्राडिति होवाच। कथम्। आदित्येनैव स्वावयवसंघातव्यतिरिक्तेन चक्षुषोऽनुग्राहकेण ज्योतिषाऽयं प्राकृतः पुरुष आस्त उपविशति पल्ययते पर्येति क्षेत्रमरण्यं वा तत्र गत्वा कर्म कुरुते विपल्येति विपर्येति च यथागतम्। अत्यन्तव्यतिरिक्तज्योतिष्ट्वप्रसिद्धताप्रदर्शनार्थमनेकविशेषणम्। बाह्यानेकज्योतिःप्रदर्शनं च लिङ्गस्याव्यभिचारित्वदर्शनार्थम्। एवमेवैतद्याज्ञवल्क्य ॥२॥

तथाऽस्तमित आदित्ये याज्ञवल्क्य किंज्योतिरेवायं पुरुष इति चन्द्रमा एवास्य ज्योतिः ॥३॥

१५ अस्तमित आदित्ये चन्द्रमस्यस्तमितेऽग्निर्ज्योतिः ॥४॥

शान्तेऽग्नौ वाग्ज्योतिः वागिति शब्दः परिगृह्यते। शब्देन विषयेण श्रोत्रमिन्द्रियं दीप्यते। श्रोत्रेन्द्रिये

"धर्मेणाधिगतो यैस्तु वेद सपरिबृंहणः। ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतव ॥
दशावरा वा परिषद्यं धर्मं परिचक्षते। त्र्यवरा वाऽपि वृत्तस्थास्तं धर्मं न विचारयेत् ॥
त्रैविद्यो हैतुकस्तर्की नैरुक्तो धर्मपाठकः। त्रयश्चाऽऽश्रमिणः पूर्वे पर्षदेषा दशावरा ॥
२० ऋग्वेदविद्यजुर्विच्च सामवेदविदेव च। त्र्यवरा परिषज्ज्ञेया धर्मसंशयनिर्णये" ॥ इति।

एको वेत्यध्यात्मविदुच्यते।

कुशलस्यापि राज्ञो याज्ञवल्क्य प्रति प्रश्नोपपत्तिमुपसंहरति—तस्मादिति। सूक्ष्मार्थनिर्णये पुरुषान्तरापेक्षाया वृद्धसंमतत्वादिति यावत्। तत्रैव हेत्वन्तरमाह—विज्ञानेति। राज्ञो याज्ञवल्क्यापेक्षामुपपाद्य पक्षान्तरमाह—अथवेति। तथा चात्र राज्ञो मुनेर्वा विवक्षितत्वाभावात्किमिति राजा मुनिमनुसरतीति चोद्य निरवकाशमिति शेषः।

२५ प्रश्नोपपत्तौ प्रतिवचनमुपपन्नमेवेति मन्वानस्तदुत्थापयति—याज्ञवल्क्योऽपीति। अतिरिक्ते ज्योतिषि प्रष्टू राज्ञोऽभिप्रायस्तदभिज्ञतया तथाविधं ज्योती राजानं बोधयिष्यन्यथाऽतिरिक्तज्योतिरावेदकं वक्ष्यमाणं लिङ्ग गृहीतव्याप्तिकं प्रसिद्ध भवति तथा तद्व्याप्तिग्रहणस्थलमादित्यज्योतिरित्यादिना मुनिरपि प्रतिपन्नवानित्यर्थः। व्याप्तिं बुभुत्समानः पृच्छति—कथमिति। यो व्यवहारः सोऽतिरिक्तज्योतिरधीनो यथा सवित्रधीनो जाग्रद्व्यवहार इति व्याप्तिं व्याकरोति—आदित्येनेति। एवकारं व्याचष्टे—स्वावयवेति। आदित्यापेक्षामन्तरेण चक्षुर्वशादेवाय व्यवहार- ३० सेत्स्यतीत्याशङ्क्याऽऽह—चक्षुष इति। आसनाद्यन्यतमव्यापारव्यपदेशे व्याप्तिसिद्धेर्वृथाविशेषणबहुत्वमित्याशङ्क्याऽऽह—अत्यन्तेति। आसनादीनामेकैकव्यभिचारे देहस्यान्यथाभावेऽपि नानुग्राहकं ज्योतिरन्यथा भवति। अतस्तदनुग्राह्यादत्यन्तविलक्षणमिति विवक्षित्वा व्यापारचतुष्टयमुपदिष्टमित्यर्थः। तथाऽपि किमर्थमादित्याद्यनेकपर्यायोपादानमेकेनैव व्याप्तिग्रहसंभवादित्याशङ्क्याऽऽह—बाह्येति। देहेन्द्रियमनोव्यापाररूपं कर्म लिङ्गं तस्य व्यतिरिक्तज्योतिरव्यभिचारसाधनार्थमनेकपर्यायोपन्यासो बहवो हि दृष्टान्ता व्याप्तिं द्रढयन्तीत्यर्थः ॥२-४॥

३५ इन्द्रियं व्यावर्तयति—वागितीति। शब्दस्य ज्योतिष्ट्वं स्पष्टयितुं पातनिकां करोति—शब्देनेति। तद्दीपन-

---

१. वाचैवायं ज्योतिषेत्यत्र वाक् शब्दो नेन्द्रियं स्वयं ज्योतिषिआत्मनि ज्ञातेऽज्ञाते वा न प्रश्नो घटते इति चेन्न मोहात्प्रश्नोपपत्तेः (वा) मोहोऽविद्या।

२. श्रोत्रेन्द्रिये संप्रदीप्ते—विषयेण संयुक्ते सति मन तद्द्वारा बहिर्गत्वा शब्दाकारा वृत्तिं जनयतीत्यर्थः।

**पल्ययते कर्म कुरुते विपल्येतीति तस्माद्वै सम्राडपि यत्र स्वः पाणिर्न विनिर्ज्ञायतेऽथ यत्र वागुच्चरत्युपैव तत्र न्येतीत्येवमेवैतद्याज्ञवल्क्य ॥५॥**

**अस्तमित आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते शान्तेऽग्नौ शान्तायां वाचि किंज्योतिरेवायं पुरुष इत्यात्मैवास्य ज्योतिर्भवतीत्यात्मनैवायं ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते विपल्येतीति ॥६॥**

संप्रदीप्ते मनसि विवेक उपजायते। तेन मनसा बाह्यां चेष्टां प्रतिपद्यते। "मनसा ह्येव पश्यति मनसा शृणोती"ति ५ ब्राह्मणम्। कथं पुनर्वाग्ज्योतिरिति वाचोज्योतिष्ट्वमप्रसिद्धमित्यत आह—तस्माद्वै सम्राडयस्माद्वाचा ज्योतिषाऽनुगृहीतोऽयं पुरुषो व्यवहरति तस्मात्प्रसिद्धमेतद्वाचो ज्योतिष्ट्वम्। कथमपि यत्र यस्मिन्काले प्रावृषि प्रायेण मेघान्धकारे सर्वज्योतिःप्रत्यस्तमये स्वोऽपि प्राणिर्हस्तो न विस्पष्टं निर्ज्ञायते। अथ तस्मिन्काले सर्वचेष्टानिरोधे प्राप्ते बाह्यज्योतिषोऽभावाद्यत्र वागुच्चरति श्वा वा भषति गर्दभो वा रौत्युपैव तत्र न्येति तेन शब्देन ज्योतिषा श्रोत्रमनसोर्नैरन्तर्यं भवति तेन ज्योतिष्कार्यत्वं वाक्प्रतिपद्यते तेन वाचा ज्योतिषोपन्येत्येवोपगच्छत्येव तत्र १० सन्निहितो भवतीत्यर्थः। तत्र च कर्म कुरुते विपल्येति। तत्र वाग्ज्योतिषो ग्रहणं गन्धादीनामुपलक्षणार्थम्। गन्धादिभिरपि हि प्राणादिष्वनुगृहीतेषु प्रवृत्तिनिवृत्त्यादयो भवन्ति। तेन तैरप्यनुग्रहो भवति कार्यकरणसंघातस्य। एवमेवैतद्याज्ञवल्क्य ॥५॥

शान्तायां पुनर्वाचि गन्धादिष्वपि च शान्तेषु। बाह्येष्वनुग्राहकेषु सर्वप्रवृत्तिनिरोधः प्राप्तोऽस्य पुरुषस्य। एतदुक्तं भवति। जाग्रद्विषये बहिर्मुखानि करणानि चक्षुरादीन्यादित्यादिज्योतिर्भिरनुगृह्यमाणानि यदा तदा स्फुटतरः १५ संव्यवहारोऽस्य पुरुषस्य भवतीति। एवं तावज्जागरिते स्वावयवसंघातव्यतिरिक्तेनैव ज्योतिषा ज्योतिष्कार्यसिद्धिरस्य पुरुषस्य दृष्टा। तस्मात्ते वयं मन्यामहे सर्वबाह्यज्योतिःप्रत्यस्तमयेऽपि स्वप्नसुषुप्तकाले जागरिते च तादृगवस्थायां स्वावयवसंघातव्यतिरिक्तेनैव ज्योतिषा ज्योतिष्कार्यसिद्धिरस्येति। दृश्यते च स्वप्ने ज्योतिष्कार्यसिद्धिर्बन्धुसंगमनवियोगदर्शनं देशान्तरगमनादि च। सुषुप्ताच्चोत्थानं सुखमहमस्वाप्सं न किंचिदवेदिषमिति। तस्मा-

कार्यमाह—श्रोत्रेति। मनसि विषयाकारपरिणामे सति किं स्यात्तदाह—तेनेति। तत्र प्रमाणमाह—मनसा हीति। २० एवं पातनिकां कृत्वा वाचो ज्योतिष्ट्वसाधनार्थं पृच्छति—कथमिति। का पुनरत्रानुपपत्तिस्तत्राऽऽह—वाच इति। तत्रानन्तरवाक्यमुत्तरत्वेनोत्थाप्य व्याकरोति—अत आहेत्यादिना। प्रसिद्धमेवाऽऽकाङ्क्षापूर्वकं स्फुटयति—कथमित्यादिना। उपैवेत्यादि व्याचष्टे—तेन शब्देनेति। ज्योतिष्कार्यत्वं तज्जन्यव्यवहाररूपकार्यवत्त्वमिति यावत्। तत्र वाग् ज्योतिष इत्यत्र चतुर्थपर्यायः सप्तम्यर्थः। किमिति गन्धादयः शब्देनोपलक्ष्यन्ते तत्राऽऽह—गन्धादिभिरिति। प्रश्नान्तरमुत्थापयति—एवमेवेति। तथाऽपि स्वप्नादौ तस्य प्रवृत्तिदर्शनात्तत्कारणीभूत ज्योतिर्वक्तव्यमिति शेषः ॥५॥ २५

कथं पुनरत्र पृच्छ्यते ज्योतिरन्तरमित्याशङ्क्य प्रष्टुरभिप्रायमाह—एतदुक्तं भवतीति। यो व्यवहारः सोऽतिरिक्तज्योतिर्निमित्तो यथाऽऽदित्यादिनिमित्तो जाग्रद्व्यवहार इति व्याप्तिमुक्त्वा निगमयति—एवं तावदिति। व्याप्तिज्ञानकार्यमनुमानमाह—तस्मादिति। तादृगवस्थायां सर्वज्योतिःप्रत्यस्तमयदशायामिति यावत्। विमतो व्यवहारोऽतिरिक्तज्योतिरधीनो व्यवहारत्वात्संप्रतिपन्नवदित्यधस्तादेवानुमानमावेदितमिति भावः। हेतोराश्रयासिद्धिमाशङ्क्य परिहरति—दृश्यते चेति। आदिशब्देन देशान्तरादौ कर्मकरणं गृह्यते। आश्रयैकदेशासिद्धिमाशङ्क्याऽऽह— ३० सुषुप्ताच्चेति। ध्यानदशायामिष्टदेवतादर्शनं चकारार्थः। अनुमानफलं निगमयति—तस्मादिति। यथोक्तानुमाना-

१. मनसा ह्येव पश्यति—मनसो बहिरगमने अन्येन्द्रियविषयेण संगमनेपि दर्शनादिकं न भवति अतः मनःसंबन्ध आवश्यकः।

२. सुषुप्तादुत्थानं। उत्थाने इति पाठश्चेद्वरम् अयं सुषुप्तिधर्मः न किंचिदवेदिषमिति परामर्शोऽपि सुषुप्त्याख्यवृत्तिकृता। किन्तु एवकारः पिण्डप्राणादिविलक्षणस्योपकारकत्वावधारणपरः ( वा० ४० ) परस्त्ववधारणमितरव्यवच्छेदकं ३५ मत्वा अस्तमित इत्याह—अथवा आदित्याद्युपाधिकः आत्मेति आदित्यपदार्थ. एवमग्रेऽपि तस्यभासेति श्रुतेः (वा) अन्ते तु यदुपाधिकं सूर्यादिप्रकाशते न आत्मेत्याह—बहूना बाह्यानामुपन्यासो व्याप्तिग्रहाय भूयोदर्शनम्।

दस्ति व्यतिरिक्तं किमपि ज्योतिः । किं पुनस्तच्छान्तायां वाचि ज्योतिर्भवतीति ।

उच्यते—आत्मैवास्य ज्योतिर्भवतीति । आत्मेति कार्यकरणस्वावयवसंघातव्यतिरिक्तं कार्यकरणावभासकमादित्यादिबाह्यज्योतिर्वत्स्वयमन्येनानवभास्यमानमभिधीयते ज्योतिरन्तःस्थं च तत्पारिशेष्यात् । कार्यकरणव्यतिरिक्तं तदिति तावत्सिद्धम् । यच्च कार्यकरणव्यतिरिक्तं कार्यकरणसंघातानुग्राहकं च ज्योतिस्तद्बाह्यैश्चक्षुरादिकरणैरुप-
५ लभ्यमानं दृष्टं न तु तथा तच्चक्षुरादिभिरुपलभ्यत आदित्यादिज्योतिःषूपरतेषु । कार्यं तु ज्योतिषो दृश्यते यस्मात्तस्मादात्मनैवायं ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते विपल्येतीति । तस्मान्नूनमन्तःस्थं ज्योतिरित्यवगम्यते । किंचाऽऽदित्यादिज्योतिर्विलक्षणं तदभौतिकं च स एव हेतुर्यच्चक्षुराद्यग्राह्यत्वमादित्यादिवत् । न । समानजातीयेनैवोपकारदर्शनात् । यदादित्यादिविलक्षणं ज्योतिरान्तरं सिद्धमित्येतदसत् । कस्मात् । उपक्रियमाणसमानजातीयेनैवाऽऽदित्यादिज्योतिषा कार्यकरणसंघातस्य भौतिकस्य भौतिकेनैवोपकारः क्रियमाणो दृश्यते ।
१० यथादृष्टं चेदमनुमेयम् । यदि नाम कार्यकरणादर्थान्तरं तदुपकारकमादित्यादिवज्ज्योतिस्तथाऽपि कार्यकरणसंघातसमानजातीयमेवानुमेयं कार्यकरणसंघातोपकारकत्वादादित्यादिज्योतिर्वत् । यत्पुनरन्तःस्थत्वादप्रत्यक्षत्वाच्च वैलक्षण्यमुच्यते तच्चक्षुरादिज्योतिर्भिरनैकान्तिकम् । यतोऽप्रत्यक्षाण्यन्तःस्थानि च चक्षुरादिज्योतींषि भौतिकान्येव । तस्मात्तव मनोरथमात्रं विलक्षणमात्मज्योतिः सिद्धमिति ।

कार्यकरणसंघातभावभावित्वाच्च संघातधर्मत्वमनुमीयते ज्योतिषः सामान्यतो दृष्टस्य चानुमानस्य
१५ व्यभिचारित्वादप्रामाण्यम् । सामान्यतो दृष्टबलेन हि भवानादित्यादिवद्व्यतिरिक्तं ज्योतिः साधयति कार्यकरणेभ्यः । न च प्रत्यक्षमनुमानेन बाधितुं शक्यते । अयमेव तु कार्यकरणसंघातः प्रत्यक्षं पश्यति शृणोति मनुते विजानाति च । यदि नाम ज्योतिरन्तरमस्योपकारकं स्यादादित्यादिवन्न तदाऽऽत्मा स्याज्ज्योतिरन्तरमादित्यादिवदेव ।

ज्ज्योतिः सिद्धं चेत्किं प्रश्नेनेत्याशङ्क्याऽऽह—किं पुनरिति । सर्वज्योतिरुपशमे दृश्यमानस्य व्यवहारस्य कारणतयाऽनुमानतो ज्योतिर्मात्रसिद्धावपि तद्विशेषबुभुत्साया प्रश्नोपपत्तिरित्यर्थः ।

२० प्रतिवचनमवतार्य व्याकरोति—उच्यत इत्यादिना । अवभासकत्वे दृष्टान्तमाह—आदित्यादीति । तत्र व्यतिरिक्तत्वं साधयति—कार्येति । अनुग्राहकत्वादादित्यादिवदिति शेषः । तच्चान्तःस्थं पारिशेष्यादित्युक्तमुपपादयति—यच्चेति । उपरतेष्वात्मज्योतिरिति शेषः । तदेव तर्हि मा भूदिति चेन्नेत्याह—कार्यं त्विति । स्वप्नादौ दृश्यमान व्यवहारं हेतूकृत्य फलितमाह—यस्मादित्यादिना । विमतमन्तःस्थमतीन्द्रियत्वादादित्यवदिति व्यतिरेकीत्यर्थः । व्यतिरेकान्तरमाह—किंचेति । संप्रति लोकायतश्चोदयति—नेत्यादिना । तत्र नञर्थं व्याचष्टे—यदिति । उक्त
२५ हेतुं प्रश्नपूर्वकं विभजते—कस्मादित्यादिना । यद्यपि देहादेरुपकार्याद्‌पकारकमादित्यादि सजातीय दृष्टं तथाऽपि नाऽऽत्मज्योतिरुपकार्यसजातीयमनुमेयमित्याशङ्क्याऽऽह—यथादृष्टं चेति । तदेव स्पष्टयति—यदि नामेति । विमतमन्तःस्थमतिरिक्त चातीन्द्रियत्वादादित्यवदिति[1] परोक्त व्यतिरेक्यनुमानमनूद्य दूषयति—यत्पुनरित्यादिना । अनैकान्तिकत्वं व्यनक्ति—यत इति । अन्तःस्थान्यव्यतिरिक्तानि च संघातादिति द्रष्टव्यम् । व्यभिचारफलमाह—तस्मादिति । विलक्षणमन्तःस्थं चेति मन्तव्यम् ।

३० किंच चैतन्यं शरीरधर्मस्तद्भावभावित्वाद्रूपादिवदित्याह—कार्यकरणेति । विमतं संघाताद्भिन्नं तद्भासकत्वादादित्यवदित्यनुमानान्न संघातधर्मत्वं चैतन्यस्येत्याशङ्क्याऽऽह—सामान्यतो दृष्टस्येति । लोकायतस्य हि देहावभासकमपि चक्षुस्ततो न भिद्यते तथा च व्यभिचारान्न त्वदनुमानप्रामाण्यमित्यर्थः । मनुष्योऽहं जानामीति प्रत्यक्षविरोधाच्च त्वदनुमानममानमित्याह—सामान्यतो दृष्टेति । ननु तेन प्रत्यक्षमुत्सार्यतामिति चेन्नेत्याह—न चेति । इतश्च देहस्यैव चैतन्यमित्याह—अयमेवेति । ज्योतिषो देहव्यतिरेकमङ्गीकृत्यापि दूषयति—यदि नामेति । विमत ज्योतिरनात्मा

३५ १. अनुमानमेव तावदप्रमाणं तथा हि—विशेषेऽनुगमाभावः सामान्ये सिद्धसाध्यता इत्यादिदोषदुष्टत्वान्नानुमानप्रमाणता । पर्वतनितम्बवर्तिवह्निसाधने महानसे तदभावात् दृष्टान्तस्य साध्यवैकल्यम् । अग्निमात्रस्य साधने तस्य क्वापि सिद्धत्वात् सिद्धसाध्यता । अतो नानुमानं प्रमाणम् (वा १४८) अस्य समाधानं तत्रैव (वा २८०) नहि वह्न्यादिकमेकरूपं सामान्यविशेषात्मकत्वस्वीकारात् । तथा च साध्यस्य सामान्यरूपत्वान्नाननुगतिः । विशेषरूपत्वाच्च न सिद्धसाधनमिति ।

य एव तु प्रत्यक्षं दर्शनक्रियां करोति स एवाऽऽत्मा स्यात्कार्यकरणसंघातो नान्यः। प्रत्यक्षविरोधेऽनुमानस्याप्रामाण्यात्।

नन्वयमेव चेद्दर्शनादिक्रियाकर्ताऽऽत्मा संघातः कथमविकलस्यैवास्य दर्शनादिक्रियाकर्तृत्वं कदाचिद्भवति कदाचिन्नेति। नैष दोषो दृष्टत्वात्। नहि दृष्टेऽनुपपन्नं नाम। नहि खद्योते प्रकाशाप्रकाशत्वेन दृश्यमाने कारणान्तरमनुमेयम्। अनुमेयत्वे च केनचित्सामान्यात्सर्वं सर्वत्रानुमेयं स्यात्। तच्चानिष्टम्। न च पदार्थस्वभावो नास्ति न ह्यग्नेरुष्णस्वाभाव्यमन्यनिमित्तमुदकस्य वा शैत्यम्। प्राणिधर्माधर्माद्यपेक्षमिति चेत्। धर्माधर्मयोर्निमित्तान्तरापेक्षत्वभावप्रसङ्गः। अस्त्विति चेन्न तदनवस्थाप्रसङ्गः। स चानिष्टः।

न। स्वप्नस्मृत्योर्दृष्टस्यैव दर्शनात्। यदुक्तं स्वभाववादिना देहस्यैव दर्शनादिक्रिया न व्यतिरिक्तस्येति। तन्न। यदि हि देहस्यैव दर्शनादिक्रिया स्वप्ने दृष्टस्यैव दर्शनं न स्यात्। अन्धः स्वप्नं पश्यन्दृष्टपूर्वमेव पश्यति न शाकद्वीपादिगतमदृष्टरूपम्। ततश्चैतत्सिद्धं भवति यः स्वप्ने पश्यति दृष्टपूर्वं वस्तु स एव पूर्वं विद्यमाने चक्षुष्यद्राक्षीन्न देह इति। देहश्चेद्द्रष्टा स येनाद्राक्षीत्तस्मिन्नुद्धृते चक्षुषि स्वप्ने तदेव दृष्टपूर्वं न पश्येत्। अस्ति च लोके प्रसिद्धिः पूर्वं दृष्टं मया हिमवतः शृङ्गमद्याहं स्वप्नेऽद्राक्षमित्युद्धृतचक्षुषामन्धानामपि। तस्मादनुद्धृतेऽपि चक्षुषि यः स्वप्नदृक्स एव द्रष्टा न देह इत्यवगम्यते।

तथा स्मृतौ दृष्टृस्मर्त्रोरेकत्वे सति य एव द्रष्टा स एव स्मर्ता यदा चैवं तदा निमीलिताक्षोऽपि स्मरन्दृष्टपूर्वं यद्रूपं तद्दृष्टवदेव पश्यतीति। तस्माद्यन्निमीलितं तन्न द्रष्टृ यन्निमीलिते चक्षुषि स्मरद्रूपं पश्यति तदेवानिमीलितेऽपि चक्षुषि द्रष्टासीदित्यवगम्यते। मृते च देहेऽविकलस्यैव च रूपादिदर्शनाभावात्। देहस्यैव द्रष्टृत्वे मृतेऽपि दर्शनादि-

देहोपकारकत्वादादित्यवदित्यर्थः। आत्मत्वं तर्हि कस्येत्याशङ्क्याऽऽह—य एव त्विति। अनुमानादात्मनो देहव्यतिरिक्तत्वमुक्तमित्याशङ्क्याऽऽह—प्रत्यक्षेति। नान्य आत्मेति पूर्वेण संबन्धः।

देहस्याऽऽत्मत्वे कादाचित्कं द्रष्टृत्वश्रोतृत्वाद्ययुक्तमिति शङ्कते—नन्विति। स्वभाववादी परिहरति—नैष दोष इति। कादाचित्के दर्शनादर्शने संभवतो देहस्वाभाव्यादित्यत्र दृष्टान्तमाह—नहीति। विमत कारणान्तरपूर्वकं कादाचित्कत्वाद्घटवदित्यनुमानं दृष्टान्ते भविष्यतीत्याशङ्क्याग्निरुष्ण इतिवदुष्णमुक्तमित्यपि द्रव्यत्वादिनाऽनुमीयेतेत्यतिप्रसङ्गमाह—अनुमेयत्वे चेति। ननु यद्भवति तत्सनिमित्तमेव न स्वभावाद्भवत्किंचिदस्माकं प्रसिद्धं तत्राऽऽह—न चेति। अग्नेरौष्ण्यमुदकस्य शैत्यमित्याद्यपि न निर्निमित्तं किंतु प्राण्यदृष्टापेक्षमिति शङ्कते—प्राणीति। आदिशब्देनेश्वरादि गृह्यते। गूढाभिसंधिः स्वभाववाद्याह—धर्मेति। प्रसङ्गस्येष्टत्वं शङ्कित्वा स्वाभिप्रायमाह—अस्त्वित्यादिना।

सिद्धान्ती स्वप्नादिसिद्ध्यनुपपत्त्या देहातिरिक्तमात्मानमभ्युपगमयन्नुत्तरमाह—नेत्यादिना। तत्र नञर्थं विभजते—यदुक्तमिति। स्वप्ने दृष्टस्यैव दर्शनादिति हेतुभागं व्यतिरेकद्वारा विवृणोति—यदि हीति। जाग्रद्देहस्य द्रष्टुः स्वप्ने नष्टत्वादतीन्द्रियस्य च संस्कारस्य चानिष्टत्वादन्यदृष्टे चान्यस्य स्वप्नायोगान्न स्वप्ने दृष्टस्यैव दर्शनं देहात्मवादे संभवतीत्यर्थः। मा भूद्दृष्टस्यैव स्वप्ने दृष्टिरन्धस्यापि स्वप्नदृष्टेरित्याशङ्क्याऽऽह—अन्ध इति। अपिशब्दोऽध्याहर्तव्यः। पूर्वदृष्टस्यैव स्वप्ने दृष्टत्वेऽपि कुतो देहव्यतिरिक्तो द्रष्टा सिध्यतीत्याशङ्क्याऽऽह—ततश्चेति। अथोभयत्र देहस्यैव द्रष्टृत्वे का हानिरिति चेदत आह—देहश्चेदिति। तत्र सहकारिचक्षुरभावाच्चक्षुरन्तरस्य चोत्पत्तौ देहान्तरस्यापि समुत्पत्तिसंभवादन्यदृष्टेऽन्यस्य न स्वप्नः स्यादित्यर्थः। मा भूत्पूर्वदृष्टे स्वप्नो हेत्वभावादित्याशङ्क्याऽऽह—अस्ति चेति। कथं ते जात्यन्धानामीदृग्दर्शनमिति चेज्जन्मान्तरानुभववशादिति ब्रूमः। अन्धस्य देहस्याद्रष्टृत्वेऽपि चक्षुष्मतस्तस्य स्यादेव द्रष्टृत्वमित्याशङ्क्याऽऽह—तस्मादिति।

स्वप्ने दृष्टस्यैव दर्शनादिति हेतुं व्याख्याय स्मृतौ दृष्टस्यैव दर्शनादिति हेतुं व्याचष्टे—तथेति। द्रष्टृस्मर्त्रोरेकत्वेऽपि कुतो देहातिरिक्तो द्रष्टेत्याशङ्क्याऽऽह—यदा चेति। देहातिरिक्तस्य स्मर्तृत्वेऽपि कुतो द्रष्टृत्वमित्याशङ्क्याऽऽह—तस्मादिति। द्रष्टृस्मर्त्रोरेकत्वस्योक्तत्वाद्देहातिरिक्तः स्मर्ता चेद्द्रष्टाऽपि तथा सिध्यतीति भावः।

---

१. धर्माधर्मादेरिति धर्मः कुतस्सुखहेतुः तथा अधर्मः दुःखस्येति प्रश्ने कारणान्तरं मृग्यं तत्रापि कारणप्रश्नेऽनवस्था। यदि स्वभावादेतदुपपद्येत सर्वं स्वभावादस्तु।

क्रिया स्यात्। तस्माद्यदपाये देहे दर्शनं न भवति यद्भावे च भवति तद्दर्शनादिक्रियाकर्तृ न देह इत्यवगम्यते।

चक्षुरादीन्येव दर्शनादिक्रियाकर्तॄणीति चेत्। न। यदहमद्राक्षं तत्स्पृशामीति भिन्नकर्तृकत्वे प्रतिसंधानानुप-
पत्तेः। मनस्तर्हीति चेत्। न। मनसोऽपि विषयत्वाद्रूपादिवद्दृष्टृत्वाद्यनुपपत्तिः। तस्मादन्तःस्थं व्यतिरिक्त-
मादित्यादिवदिति सिद्धम्। यदुक्तं कार्यकरणसंघातसमानजातीयमेव ज्योतिरन्तरमनुमेयम्। आदित्यादिभिस्तत्स-
५ मानजातीयैरेवोपक्रियमाणत्वादिति। तदसत्। उपकार्योपकारकभावस्यानियमदर्शनात्। कथं, पार्थिवैरिन्धनैः
पार्थिवत्वसमानजातीयैस्तृणोलपादिभिरग्नेः प्रज्वलनोपकारः क्रियमाणो दृश्यते। न च तावता तत्समानजाती-
यैरेवाग्नेः प्रज्वलनोपकारः सर्वत्रानुमेयः स्यात्। येनोदकेनापि प्रज्वलनोपकारो भिन्नजातीयेन वैद्युतस्याग्नेर्जाठरस्य
च क्रियमाणो दृश्यते।

तस्मादुपकार्योपकारकभावे समानजातीयासमानजातीयनियमो नास्ति। कदाचित्समानजातीया मनुष्या
१० मनुष्यैरेवोपक्रियन्ते कदाचित्स्थावरपश्वादिभिश्च भिन्नजातीयैः। तस्मादहेतुः कार्यकरणसंघातसमानजातीयैरेवाऽऽ-
दित्यादिज्योतिर्भिरुपक्रियमाणत्वादिति। यत्पुनरात्थ चक्षुरादिभिरादित्यादिज्योतिर्वददृश्यत्वादित्ययं हेतुर्ज्योति-
रन्तरस्यान्तःस्थत्वं वैलक्षण्यं च न साधयति चक्षुरादिभिरनैकान्तिकत्वादिति। तदसत्। चक्षुरादिकरणेभ्योऽन्यत्वे
सतीति हेतोर्विशेषणत्वोपपत्तेः। कार्यकरणसंघातधर्मत्वं ज्योतिष इति यदुक्तं तन्न। अनुमानविरोधात्। आदित्यादि-
ज्योतिर्वत्कार्यकरणसंघातादर्थान्तरं ज्योतिरिति ह्यनुमानमुक्तं तेन विरुध्यत इयं प्रतिज्ञा कार्यकरणसंघातधर्मत्वं
१५ ज्योतिष इति। तद्भावभावित्वं त्वसिद्धं मृते देहे ज्योतिषोऽदर्शनात्।

सामान्यतो दृष्टस्यानुमानस्याप्रामाण्ये सति पानभोजनादिसर्वव्यवहारलोपप्रसङ्गः। स चानिष्टः।
पानभोजनादिषु हि क्षुत्पिपासादिनिवृत्तिमुपलब्धवतस्तत्सामान्यात्पानभोजनाद्युपादानं दृश्यमानं लोके न प्राप्नोति।
दृश्यन्ते ह्युपलब्धपानभोजनाः सामान्यतः पुनः पानभोजनान्तरैः क्षुत्पिपासादिनिवृत्तिमनुमिन्वन्तस्तादर्थ्येन प्रवर्त-
मानाः। यदुक्तमयमेव तु देहो दर्शनादिक्रियाकर्तेति तत्प्रथममेव परिहृतं स्वप्नस्मृत्योर्देहादर्थान्तरभूतो द्रष्टेति।

२० देहस्याद्रष्टृत्वे हेत्वन्तरमाह—**मृते चेति**। न तस्य द्रष्टृतेति शेषः। तदेवोपपादयति—**देहस्यैवेति**। देहव्यतिरिक्त-
मात्मानमुपपादितमुपसंहरति—**तस्मादिति**। चैतन्यं यत्तदोरर्थः।

मा भूद्देहस्याऽऽत्मत्वमिन्द्रियाणां तु स्यादिति शङ्कते—**चक्षुरादीनीति**। अन्यदृष्टस्येतरेणाप्रत्यभिज्ञानादिति
न्यायेन परिहरति—**नेत्यादिना**। आत्मप्रतिपत्तिहेतूनां मनसि संभवादिति न्यायेन शङ्कते—**मन इति**। ज्ञातुर्ज्ञान-
साधनोपपत्तेः संज्ञाभेदमात्रमिति न्यायेन परिहरति—**न मनसोऽपीति**। देहादेरनात्मत्वे फलितमाह—**तस्मादिति**।
२५ आत्मज्योतिः संघातादिति शेषः। परोक्तमनुवदति—**यदुक्तमिति**। अनुग्राह्यसजातीयमनुग्राहकमित्यत्र हेतुमाह—
**आदित्यादिभिरिति**। उपकार्योपकारकत्वसाजात्यनियमं दूषयति—**तदसदिति**। अनियमदर्शनमाकाङ्क्षापूर्वकमुदाह-
रति—**कथं पार्थिवैरिति**। उलपं बालतृणम्। पार्थिवस्याग्निं प्रत्युपकारकत्वनियमं वारयति—**न चेति**। तावता
पार्थिवेनाग्नेरुपक्रियमाणत्वदर्शनेनेति यावत्। तत्समानजातीयैरिति तच्छब्दः पार्थिवत्वविषयः। तत्र हेतुमाह—**येनेति**।

दर्शनफलं निगमयति—**तस्मादिति**। उपकार्योपकारकभावे साजात्यानियमवदपकार्यापकारकभावेऽपि
३० वैजात्यनियमो नास्तीत्यर्थः। तत्रोपकार्योपकारकत्वे साजात्यनियमाभावमुदाहरणान्तरेण दर्शयति—**कदाचिदिति**।
अम्भसाऽग्निना वाऽग्नेरुपशान्त्युपलम्भादपकार्यापकारत्वे वैजात्यनियमोऽपि नास्तीति मत्वोपसंहरति—**तस्मादिति**।
उक्तानियमदर्शनं तच्छब्दार्थः। अहेतुरात्मज्योतिषः संघातेन समानजातीयतायामिति शेषः। अनुग्राहकमनुग्राह्यसजातीय-
मनुग्राहकत्वादादित्यवदित्यपास्तम्। संप्रतीन्द्रियत्वहेतोरनैकान्त्यं परोक्तमनुभाष्य दूषयति—**यत्पुनरित्यादिना**। विमतं
ज्योतिः संघातधर्मस्तद्भावभावित्वाद्रूपादिवदित्युक्तमनूद्य निराकरोति—**कार्येति**। अनुमानविरोधमेव साधयति—
३५ **आदित्यादीति**। कालात्ययापदेशमुक्त्वा हेत्वसिद्धिं दोषान्तरमाह—**तद्भावेति**। अदर्शनादिति च्छेदः।

यत्पुनर्विशेषेऽनुगमाभावः सामान्ये सिद्धसाध्यतेत्यनुमानदूषणमभिप्रेत्य सामान्यतो दृष्टस्य चेत्याद्युक्तं तद्-
दूषयति—**सामान्यतो दृष्टस्येति**। विशेषतोऽदृष्टस्येत्यपि द्रष्टव्यम्। किमित्यनुमानाप्रामाण्ये सर्वव्यवहारहानिरित्या-
शङ्क्याऽऽह—**पानेति**। तत्सामान्यात्पानत्वभोजनत्वादिसादृश्यादिति यावत्। पानभोजनाद्युपादानं दृश्यमानमित्युक्तं
विशदयति—**दृश्यन्ते हीति**। तादर्थ्येन क्षुत्पिपासादिनिवृत्त्युपायभोजनपानाद्यर्थत्वेनेति यावत्। देहस्यैव द्रष्टृत्व-
मित्युक्तमनूद्य पूर्वोक्तं परिहारं स्मारयति—**यदुक्तमित्यादिना**। ज्योतिरन्तरमादित्यादिवदनात्मेत्युक्तं प्रत्याह—
४० मित्युक्तमनूद्य पूर्वोक्तं परिहारं स्मारयति—**यदुक्तमित्यादिना**।

**कतम आत्मेति योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः स समानः सन्नुभौ लोकाव-नुसञ्चरति ध्यायतीव लेलायतीव स हि स्वप्नो भूत्वेमं लोकमतिक्रामति मृत्यो रूपाणि ॥७॥**

नेनैव ज्योतिरन्तरस्यानात्मत्वमपि प्रत्युक्तम् । यत्पुनः खद्योतादेः कादाचित्कं प्रकाशाप्रकाशत्वं सदसत् । क्षाद्यवयवसंकोचविकासनिमित्तत्वात्प्रकाशाप्रकाशत्वस्य । यत्पुनरुक्तं धर्माधर्मयोरवश्यं फलदातृत्वं स्वभावोऽ-भ्युपगन्तव्य इति । तदभ्युपगमे भवत. सिद्धान्तहानात् । एतेनानवस्थादोषः प्रत्युक्तः । तस्मादस्ति व्यतिरिक्तं ५ ान्तःस्थं ज्योतिरात्मेति ॥६॥

यद्यपि व्यतिरिक्तत्वादि सिद्धं तथाऽपि समानजातीयानुग्राहकत्वदर्शननिमित्तभ्रान्त्या करणानामेवान्यतमो यतिरिक्तो वेत्यविवेकतः पृच्छति—कतम इति । न्यायसूक्ष्मतया दुर्विज्ञेयत्वादुपपद्यते भ्रान्तिः । अथवा ारीरव्यतिरिक्ते सिद्धेऽपि करणानि सर्वाणि विज्ञानवन्तीव विवेकत आत्मनोऽनुपलब्धत्वात् । अतोऽहं पृच्छामि कतम आत्मेति । कतमोऽसौ देहेन्द्रियप्राणमनःसु यस्त्वयोक्त आत्मा । येन ज्योतिषाऽऽस्त इत्युक्तम् । १०

अथवा योऽयमात्मा त्वयाऽभिप्रेतो विज्ञानमयः । सर्वे इमे प्राणा विज्ञानमया इवैषु प्राणेषु कतमः । यथा समुदितेषु ब्राह्मणेषु सर्वे इमे तेजस्विनः कतम एषु षडङ्गविदिति । पूर्वस्मिन्व्याख्याने कतम आत्मेत्येतावदेव प्रश्नवाक्यं योऽयं विज्ञानमय इति प्रतिवचनम् । द्वितीये तु व्याख्याने प्राणेष्वित्येवमन्तं प्रश्नवाक्यम् । अथवा सर्वमेव प्रश्नवाक्यं विज्ञानमयो हृद्यन्तर्ज्योतिः पुरुषः कतम इत्येवमन्तम् । योऽयं विज्ञानमय इत्येतस्य शब्दस्य निर्धारितार्थविशेषविषयत्वं कतम आत्मेतीतिशब्दस्य प्रश्नवाक्यपरिसमाप्त्यर्थत्वं व्यवहितसंबन्धमन्तरेण युक्तमिति १५ कृत्वा कतम आत्मेत्येवमन्तमेव प्रश्नवाक्यं योऽयमित्यादि परं सर्वमेव प्रतिवचनमिति निश्चीयते । योऽयमित्यात्मनः प्रत्यक्षत्वान्निर्देशः । विज्ञानमयो विज्ञानप्रायो बुद्धिविज्ञानोपाधिसंपर्काविवेकाद्विज्ञानमय इत्युच्यते । बुद्धिविज्ञान-

अनेनेति । संघातादेर्दृष्टत्वनिराकरणेनेति यावत् । देहस्य कादाचित्कं दर्शनादिमत्त्वं स्वाभाविकमित्यत्र परोक्तं दृष्टान्तमनुभाष्य निराचष्टे—यत्पुनरित्यादिना । सिद्धान्तिनाऽपि स्वभाववादस्य क्वचिदेष्टव्यत्वमुपदिष्टमनूद्य दूषयति—यत्पुनरिति । धर्मादिर्यदि हेत्वन्तराधीनं फलदातृत्वं तदा हेत्वन्तरस्यापि हेत्वन्तराधीनं फलदातृत्वमित्यनवस्थेत्युक्तं २० प्रत्याह—एतेनेति । सिद्धान्तविरोधप्रसञ्जनेनेति यावत् । लोकायतमतासंभवे स्वपक्षमुपसंहरति—तस्मादिति ॥६॥

नन्वात्मज्योतिः संघाताद्व्यतिरिक्तमन्तःस्थं चेति साधितं तथा च कथं कतम आत्मेति पृच्छयते तत्राऽऽह—यद्यपीति । अनुग्राह्येण देहादिना समानजातीयस्याऽऽदित्यादेरनुग्राहकत्वदर्शनान्निमित्तादनुग्राहकत्वाविशेषादात्म-ज्योतिरपि समानजातीयं देहादिनेति भ्रान्तिर्भवति तयेति यावत् । अविवेकिनो निष्कृष्टदृष्ट्यभावादित्यर्थः । व्यतिरेक-साधकस्य न्यायस्य दर्शितत्वात्कुतो भ्रान्तिरित्याशङ्क्याऽऽह—न्यायेति । भ्रान्तिनिमित्ताविवेककृतं प्रश्नमुक्त्वा २५ प्रकारान्तरेण प्रश्नमुत्थापयति—अथवेति । प्रश्नाक्षराणि व्याचष्टे—कतमोऽसाविति । ननु ज्योतिर्निमित्तो व्यवहारो मयोक्तो न त्वात्मेत्याशङ्क्याऽऽह—येनेति । आत्मनैवायं ज्योतिषेत्युक्तत्वादासनादिनिमित्तं ज्योतिरात्मेत्यर्थः ।

प्रकारान्तरेण प्रश्नं व्याकरोति—अथवेति । सप्तम्यर्थं कथयति—सर्वे इति । योऽयं त्वयाऽभिप्रेतो विज्ञानमयः स प्राणेषु मध्ये कतमः स्यात्तेऽपि हि विज्ञानमया इव भान्तीति योजना । उक्तमर्थं दृष्टान्तेन बुद्धावारोपयति—यथेति । व्याख्यानयोरवान्तरविभागमाह—पूर्वस्मिन्नित्यादिना । हृदीत्यादि प्रतिवचनमिति शेषः । पक्षान्तरमाह—अथवेति । ३० सर्वस्य प्रश्नत्वे वाक्य योजयति—विज्ञानेति । स समानः सन्नित्यादि प्रतिवचनमिति शेषः । द्वितीयतृतीयपक्षयोररुचिं सूचयन्नाद्यं पक्षमङ्गीकरोति—योऽयमिति । यस्त्वया पृष्ट. सोऽयमित्यात्मनश्चिद्रूपत्वेन प्रत्यक्षत्वादयमिति निर्देश इति पदद्वयस्यार्थ. । देहव्यवच्छेदार्थं विशिनष्टि—विज्ञानमय इति । विज्ञानवदर्थमाचक्षाणस्तत्प्रायत्व प्रकटयति—बुद्धीति । बुद्धिरेव विज्ञानं विज्ञायतेऽनेनेति व्युत्पत्तेस्तेनोपाधिना संपर्क एवाविवेकस्तस्मादिति यावत् । तत्संपर्के प्रमाणमाह—बुद्धिविज्ञानेति । तस्माद्विज्ञानमय इति शेषः । ननु चक्षुर्मयः श्रोत्रमय इत्यादि हित्वा विज्ञानमय इत्येव कस्माद्- ३५

१. विज्ञानमयत्व बुद्धिविज्ञानाभेदापन्नत्वम्, अध्यासात् यथा राहुः ग्रहणकाले चन्द्रादित्यकिरणैः संपृक्त एव ज्ञायते न स्वत. तमोरूपत्वात् । यथा वा घटः पुरःस्थितदीपालोकविशिष्टो भासते इत्युपमानम् ।

संपृक्त एव हि यस्मादुपलभ्यते राहुरिव चन्द्रादित्यसंपृक्तः। बुद्धिर्हि सर्वार्थकरणं तमसीव प्रदीपः पुरोवस्थितः। "मनसा ह्येव पश्यति मनसा शृणोती"ति ह्युक्तम्। बुद्धिविज्ञानालोकविशिष्टमेव हि सर्वं विषयजातमुपलभ्यते पुरोवस्थितप्रदीपालोकविशिष्टमिव तमसि। द्वारमात्राणि त्वन्यानि करणानि बुद्धेः। तस्मात्तेनैव विशेष्यते विज्ञानमय इति।

५ येषां परमात्मविज्ञप्तिविकार इति व्याख्यानं तेषां विज्ञानमयो मनोमय इत्यादौ विज्ञानमयशब्दस्यान्यार्थदर्शनादश्रौतार्थताऽवसीयते। संदिग्धश्च पदार्थोऽन्यत्र निश्चितप्रयोगदर्शनान्निर्धारयितुं शक्यो वाक्यशेषात् निश्चितन्यायबलाद्वा। सधीरिति चोत्तरत्र पाठात्। हृद्यन्तरिति वचनाद्युक्तं विज्ञानप्रायत्वमेव। प्राणेष्विति व्यतिरेकप्रदर्शनार्था सप्तमी। यथा वृक्षेषु पाषाण इति सामीप्यलक्षणा। प्राणेषु हि व्यतिरेकाव्यतिरेकता संदिह्यत आत्मनः। प्राणेषु प्राणेभ्यो व्यतिरिक्त इत्यर्थः। यो हि येषु भवति स तद्व्यतिरिक्तो भवत्येव। यथा पाषाणेषु वृक्षः।

१० हृदि तत्रैतत्स्यात्प्राणेषु प्राणजातीयैव बुद्धिः स्यादित्यत आह—हृद्यन्तरिति। हृच्छब्देन पुण्डरीकाकारो मांसपिण्डस्तात्स्थ्याद्बुद्धिर्हृत्तस्यां हृदि बुद्धौ। अन्तरिति बुद्धिवृत्तिव्यतिरेकप्रदर्शनार्थम्। ज्योतिरवभासात्मकत्वादात्मोच्यते। तेन ह्यवभासकेनाऽऽत्मना ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते चेतनावानिव ह्ययं कार्यकरणपिण्डो

पदिश्यते तत्राऽऽह—बुद्धिर्हीति। तस्याः साधारणकरणत्वे प्रमाणमाह—मनसा हीति। मनसः सर्वार्थत्वं समर्थयते—बुद्धीति। किमर्थानि तर्हि चक्षुरादीनि करणानीत्याशङ्क्याऽऽह—द्वारमात्राणीति। बुद्धेः सति प्राधान्ये फलितमाह—
१५ तस्मादिति।

विज्ञानं परं ब्रह्म तत्प्रकृतिको जीवो विज्ञानमय इति भर्तृप्रपञ्चैरुक्तमनुवदति—येषामिति। विज्ञानमयादिग्रन्थे मयटो न विकारार्थतेति तैरेवोच्यते तत्र मनःसमभिव्याहाराद्विज्ञानं बुद्धिर्न चाऽऽत्मा तद्विकारस्तस्मादस्मिन्प्रयोगे मयटो विकारार्थत्वं वदतां स्वोक्तिविरोधः स्यादिति दूषयति—तेषामिति। कथं विज्ञानमयपदार्थनिर्णयार्थं प्रयोगान्तरमनुश्रीयते तत्राऽऽह—संदिग्धश्चेति। यथा "पुरोडाशं चतुर्धा कृत्वा बर्हिषद करोती"ति पुरोडाशमात्रचतुर्धाकरण-
२० वाक्यमेकार्थसंबन्धिना शाखान्तरीयेणा"ऽऽग्नेयं चतुर्धा करोती"त्यनेन विशेषविषयतया निश्चितार्थेनाऽऽग्नेय एव पुरोडाशे व्यवस्थाप्यते यथा चाक्ताः शर्करा उपदधातीत्यत्र केनाक्ततेत्यपेक्षायां "तेजो वै घृतमि"ति वाक्यशेषान्निर्णयस्तथेहापीत्यर्थः। आत्मविकारत्वे मोक्षानुपपत्त्याद्यबाधितन्यायाद्वा विज्ञानमयपदार्थनिश्चय इत्याह—निश्चतेति। यदुक्तं निर्णयो वाक्यशेषादिति तदेव व्यनक्ति—सधीरिति चेति। आधाराद्यर्था सप्तमी दृष्टा सा कथं व्यतिरेकप्रदर्शनार्थेत्याशङ्क्याऽऽह—यथेति। भवत्यत्रापि सामीप्यलक्षणा सप्तमी तथाऽपि कथं व्यतिरेकप्रदर्शनमित्याशङ्क्याऽऽह—
२५ प्राणेषु हीति। फलितं सप्तम्यर्थमभिनयति—प्राणेष्विति। तेषु समीपस्थोऽपि कथं तेभ्यो व्यतिरिच्यते तत्राऽऽह—यो हीति।

विशेषणान्तरमादाय व्यावर्त्यां शङ्कामुक्त्वा पुनरवतार्य व्याकरोति—हृदीत्यादिना। विशेषणान्तरस्य तात्पर्यमाह—अन्तरितीति। ज्योतिःशब्दार्थमाह—ज्योतिरिति। तस्य ज्योतिष्ट्वं स्पष्टयति—तेनेति। आत्मज्योतिषा

१. प्राणेषु इति—सप्तमी औपश्लेषिकार्थे, सप्तमी हि त्रिविधा—औपश्लेषिकवैषयिकाभिव्यापकभेदात् अत्राद्यः तदर्थश्च
३० संयुक्तसंयोगः कटे शेते इत्यत्र कटोपरिस्थितास्तरणे शेते इत्युदाहरणे संयुक्तसंयोगप्रतीते. आधाराधेयभावस्य भेदव्याप्यत्वात् अर्थसिद्धो भेदः न तु वाच्यः वृक्षसंयुक्तप्रदेशसंयुक्तः पाषाण इति प्रतीतौ वृक्षभेदप्रतीतेरार्थिकत्वात्।

२. 'पुरोडाशं चतुर्धा करोति'इत्यत्र पूर्णमासेष्टौ आग्नेयः अग्नीषोमीयश्च द्वौ पुरोडाशो वर्तेते। तत्र भक्षार्थं चतुर्धाकरणं श्रूयते पुरोडाशं चतुर्धा करोतीति अत्र क पुरोडाशो ग्राह्य इति सन्देहे आग्नेयं चतुर्धा करोति इति
३५ शाखान्तरवाक्यादवगम्यते तत्र न्यायः। अत्रानिश्चित निश्चितेननिर्णीयते, न्यायात्। तेजो घृतमिति तु वाक्यशेषान्निर्णीयते। अत्रापि सधीरिति वाक्यशेषोऽनुकूलः।

घटो यथा वा मरकतादिर्मणिः क्षीरादिद्रव्ये प्रक्षिप्तः परीक्षणायाऽऽत्मच्छायमेव तत्क्षीरादि करोति तादृगेतदात्मज्योतिर्बुद्धेरपि हृदयात्सूक्ष्मत्वाद्धृद्यन्तःस्थमपि हृदयादिकं कार्यकरणसंघातं चैको करोति। पारम्पर्येण सूक्ष्मस्थूलतारतम्यात्सर्वान्तरतमत्वात्। बुद्धिस्तावत्स्वच्छत्वादानन्त प्रतिच्छाया भवति। तेन हि विवेकिनामपि तत्राऽऽत्माभिमानबुद्धिः प्रथमा। ततोऽप्यान चैतन्यावभासता बुद्धिसंपर्कात्। तत इन्द्रियेषु। मनः संयोगात्। ततोऽनन्तरं शरीरे। इन्द्रियसंपर्कात्। ५ कृत्स्नं कार्यकरणसंघातमात्मा चैतन्यस्वरूपज्योतिषाऽवभासयति। तेन हि सर्वस्य लोकस्य कार्यकरण तद्वृत्तिषु चानियताऽऽत्माभिमानैर्बुद्धिर्यथाविवेकं जायते। तथा च भगवतोक्तं गीतासु—

"यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः। क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत॥"

"यदादित्यगतं तेजः" इत्यादि च। "नित्योऽनित्यानां चेतनश्चेतनानां" इति च काठके "तमेव भान्त सर्वं तस्य भासा सर्वमिदं विभाति" इति च। "येन सूर्यस्तपति तेजसेद्धः" इति च मन्त्रवर्णः। तेनायं १०

पुरुष आकाशवत्सर्वगत्वात्पूर्ण इति पुरुषः निरतिशयं चास्य स्वयंज्योतिष्ट्वं सर्वावभासकत्वात्स्वयमन्या नवभास्यत्वाच्च। स एष पुरुषः स्वयमेव ज्योतिःस्वभावो यं त्वं पृच्छसि कतम आत्मेति। बाह्यानां ज्योतिषां सर्व-

कार्यकरणसंघातस्य व्यवहारक्षमत्वे दृष्टान्तमाह—यथेति। चेतनावानिवेत्युक्तं दृष्टान्तेनोपपादयति—यथा वेति। हृदयं बुद्धिस्ततोऽपि सूक्ष्मत्वादात्मज्योतिस्तदन्तःस्थमपि हृदयादिकं संघातं च सर्वमेकीकृत्य स्वच्छायं करोतीति कृत्वा १५ यथोक्तमणिसादृश्यमुचितमिति दार्ष्टान्तिके योजना। कथमिदमात्मज्योतिः सर्वमात्मच्छायं करोति तत्राऽऽह— पारम्पर्येणेति। विषयादिषु प्रत्यगात्मान्तेषूत्तरोत्तरं सूक्ष्मतातारतम्यात्तेष्वेवाऽऽत्मादिविषयान्तेषु स्थूलतातारतम्याच्च प्रतीचः सर्वस्मादन्तरतमत्वात्तत्र तत्र स्वाकारहेतुत्वमस्तीत्यर्थः। बुद्धेरात्मच्छायत्वं समर्थयते—बुद्धिस्तावदिति। लौकिकपरीक्षकाणां बुद्धावात्माभिमानभ्रान्तिमुक्तेऽर्थे प्रमाणयति—तेन हीति। बुद्धेः पश्चान्मनस्यपि चिच्छायतेत्यत्र हेतुमाह—बुद्धीति। आत्मनः सर्वावभासकत्वमुक्तमुपसंहरति—एवमिति। आत्मनः सर्वावभासकत्वे किमिति कस्य- २० चित्क्वचिदेवाऽऽत्मधीरित्याशङ्क्याऽऽह—तेन हीति। बुद्ध्यादेरुक्तक्रमेणाऽऽत्मच्छायत्वं तच्छब्दार्थः। आत्मज्योतिषः सर्वावभासकत्वे लोकप्रसिद्धिरेव न प्रमाणं किंतु भगवद्वाक्यमपीत्याह—तथा चेति। नाशिनामयमनाशी चेतनाश्चेत- यितारो ब्रह्मादयस्तेषामयमेव चेतनो यथोदकादीनामनग्नीनामग्निनिमित्तं दाहकत्वं तथाऽऽत्मचैतन्यनिमित्तमेव चेतयितृत्वमन्येषामित्याह—नित्य इति। अनुगमनवदनुभानं स्वगतया भासा स्यादिति शङ्का प्रत्याह—तस्येति। येनेति। तत्र नावेदविन्मनुते तं बृहन्तमित्युत्तरत्र संबन्धः। ज्योतिःशब्दव्याख्यानमुपसंहरति—तेनेति। २५

हृद्यन्तःस्थितोऽयमात्मा सर्वावभासकत्वेन ज्योतिर्भवतीति योजना। पदान्तरमादाय व्याचष्टे—पुरुष इति। आदित्यादिज्योतिषः सकाशादात्मज्योतिषि विशेषमाह—निरतिशयं चेति। प्रतिवचनवाक्यार्थमुपसंहरति—स एष इति। स समानः सन्नित्याद्यवतारयितु वृत्तं कीर्तयति—बाह्यानामिति। तर्हि बाह्यज्योतिःसद्भावावस्थायामकिंचित्कर-

१. आनन्तर्यात् आत्मनः साक्षात्सन्निहितत्वात्। अत एव अहंप्रत्ययकाले सर्वदा अहंकारः प्रत्यक्षः आत्माभिमानरूपा बुद्धि यथाविवेकम्। पामराणां देह एवात्मबुद्धिः किञ्चिद्विवेकवता शरीरदाहदर्शनेन शरीरानात्मत्वनिरूपणात् ३० इन्द्रियेषु आत्मबुद्धि. तत. मनसि इति क्रमेण विवेकतारतम्यात् आत्माभिमानः पृथग्विधः।

२. बुद्धिवृत्तिविवेक बुद्धिवृत्तेर्भेदः।

३. चेतनानां चेतन. चैतन्यप्रद. शरीरादीनामित्यर्थ. यथाऽग्निः जलस्य।

४. येन सूर्यस्तपति तं बृहन्तं अवेदवित् न मनुते इति पूर्वेणान्वितम्।

५. स्वयंज्योतिष्ट्वं च अन्यानवभास्यत्वे सति इतरप्रकाशकत्वम्। ३५

६. स्वाकारहेतुत्वमात्मचैतन्याकारताया हेतुत्वम्। तत्र समीपस्थत्वमेव हेतुः।

७. अनुभानं न स्वगतभानेन अपि तु आत्मचैतन्यदीप्त्या। तदुक्तं 'तस्य भासे'त्यादि।

करणानुग्राहकाणां प्रत्यस्तमयेऽन्तःकरणद्वारेण हृद्यन्तर्ज्योतिः पुरुष आत्माऽनुग्राहकः करणानामित्युक्तम्। यद्यपि बाह्यकरणानुग्राहकाणामादित्यादिज्योतिषां भावस्तदाऽप्यादित्यादिज्योतिषां परार्थत्वात्कार्यकरणसंघातस्याचैतन्ये स्वार्थानुपपत्तेः स्वार्थज्योतिष आत्मनोऽनुग्रहाभावेऽयं कार्यकरणसंघातो न व्यवहाराय कल्पते। आत्मज्योतिरनुग्रहेणैव हि सर्वदा सर्वः संव्यवहारः। "यदेतद्धृदयं मनश्चैतत्संज्ञानम्" इत्यादिश्रुत्यन्तरात्। साभिमानो हि सर्व-
५ प्राणिसंव्यवहार.। अभिमानहेतुं च मरकतमणिदृष्टान्तेनावोचाम।

यद्यप्येवमेतत्तथाऽपि जाग्रद्विषये सर्वकरणागोचरत्वादात्मज्योतिषो बुद्ध्यादिबाह्याभ्यन्तरकार्यकरणव्यवहारसन्निपातव्याकुलत्वान्न शक्यते तज्ज्योतिरात्माख्यं मुञ्जेषीकावन्निष्कृष्य दर्शयितुमित्यतः स्वप्ने दिदर्शयिषुः प्रक्रमते—स समानः सन्नुभौ लोकावनुसंचरति। यः पुरुषः स्वयमेव ज्योतिरात्मा स समानः सदृशः सन्। केन। प्रकृतत्वात्सन्निहितत्वाच्च हृदयेन। हृदीति च हृच्छब्दवाच्या बुद्धिः प्रकृता सन्निहिता च। तस्मात्तयैव सामान्यम्।
१० किं पुनः सामान्यमश्वमहिषवद्विवेकतोऽनुपलब्धिः अवभास्या बुद्धिरभासकं तदात्मज्योतिरालोकवत्। अवभास्यावभासकयोर्विवेकतोऽनुपलब्धिः प्रसिद्धा। विशुद्धत्वाद्ध्यालोकोऽवभास्येन सदृशो भवति। यथा रक्तमवभासयन्रक्तसदृशो रक्ताकारो भवति। यथा हरितं नीलं लोहित चावभासयन्नालोकस्तत्समानो भवति। तथा बुद्धिमवभासयन्बुद्धिद्वारेण कृत्स्नं क्षेत्रमवभासयतीत्युक्तं मरकतमणिनिदर्शनेन। तेन सर्वेण समानो बुद्धिसामान्यद्वारेण। सर्वमय इति चात एव वक्ष्यति।

१५ मात्मज्योतिरित्याशङ्क्याऽऽह—यदाऽपीति। व्यतिरेकमुखेनोक्तमर्थमन्वयमुखेन कथयति—आत्मज्योतिरिति। आत्मज्योतिषः सर्वानुग्राहकत्वे प्रमाणमाह—यदेतद्धिति। "सर्वमन्त करणादिप्रज्ञानेत्रमि"त्यैतरेयके श्रवणाद्युक्तमात्मज्योतिषः सर्वानुग्राहकत्वमित्यर्थः। किंचाचेतनानां कार्यकरणाना चेतनत्वप्रसिद्ध्यनुपपत्त्या सदा चिदात्मव्याप्तिरेष्टव्येत्याह—साभिमानो हीति। कथमसङ्गस्य प्रतीच. सर्वत्र बुद्ध्यादावहंमान इत्याशङ्क्याऽऽह—अभिमानेति।

वृत्तमनूद्योत्तरवाक्यमवतारयति—यद्यपीति। यथोक्तमपि प्रत्यग्ज्योतिर्जागरिते दर्शयितुमशक्यमिति श्रुतिः
२० स्वप्न प्रस्तौतीत्यर्थः। अशक्यत्वे हेतुद्वयमाह—सर्वेति। स्वप्ने निष्कृष्ट ज्योतिरिति शेष। सदृश सन्ननुसचरतीति संबन्धः। सादृश्यस्य प्रतियोगिसापेक्षत्वमपेक्ष्य पृच्छति—केनेति। उत्तरम्—प्रकृतत्वादिति। प्राणानामपि तुल्य तदिति चेत्तत्राऽऽह—संनिहितत्वाच्चेति। हेतुद्वय साधयति—हृदीत्यादिना। प्रकृतत्वादिफलमाह—तस्मादिति। सामान्य प्रश्नपूर्वकं विशदयति—किं पुनरित्यादिना। विवेकतोऽनुपलब्धि व्यक्तीकर्तुं बुद्धिज्योतिषोः स्वरूपमाह—अवभास्येति। अवभासकत्वे दृष्टान्तमाह—आलोकवदिति। तथाऽपि कथ विवेकतोऽनुपलब्धिस्तत्राऽऽह—अवभास्येति। प्रसिद्धिमेव
२५ प्रकटयति—विशुद्धत्वाद्धीति। उक्तमर्थं दृष्टान्तेन बुद्धावारोपयति—यथेत्यादिना। दृष्टान्तगतमर्थं दार्ष्टान्तिके योजयति—तथेति। पुनरुक्तिं परिहरति—इत्युक्तमिति। सर्वावभासकत्वे कथं बुद्ध्यैव साम्यमित्याशङ्क्याऽऽह—तेनेति। सर्वावभासकत्व तच्छब्दार्थं। किमर्थं तर्हि बुद्ध्या सामान्यमुक्तमित्याशङ्क्य द्वारत्वेनेत्याह—बुद्धीति। आत्मनः सर्वेण समानत्वे वाक्यशेषमनुकूलयति—सर्वमय इति।

१. यदेतद्धृदय मनः हृदयस्थं मनः तस्य च वृत्तय. संज्ञानमाज्ञानमित्यादयः सर्वं तत् प्रज्ञानेत्रमित्यनेन आत्मचैतन्येन
३० दीपितमित्यर्थं। मनश्चैकीकृत्योक्तं मनसा चक्षुर्भूतेन पश्यति श्रोत्रभूतेन शृणोति इत्यादिरीत्या सर्वोपलब्धिसाधनं आत्मन. करणभूत मनः संज्ञानमाज्ञानमित्यादिना मन.परिणामानुक्त्वा सर्वं तत् प्रज्ञानेत्रमित्यनेन प्रज्ञात्मकात्मचैतन्यनेतृकमित्युक्तम्।
२ बाह्याभ्यन्तरेति—बाह्य चक्षुरादिजन्यज्ञानानि आभ्यन्तर. मानसवृत्तयः तेषा सन्निपातः ससर्गः तेन व्याकुल पीडित आत्मा तेन आत्मज्योति तद्व्यतिरेकेण निरूपयितुमशक्यम्। अतः स्वप्ने तस्य स्वयज्योतिष्ट्वमुपपाद-
३५ यितु शास्त्रं प्रवर्तते।
३ स समानस्सन्—बुद्ध्या समानस्सन् अनेन भेदाग्रह उक्त तत्फल चाध्याम. 'ध्यायतीवे'त्युक्तः।
४. रक्तमवभासयन् रक्तः स्फटिकद्वारा गच्छन् स्वच्छ.।
५. आलोक. रक्त इव। सर्वमय. सर्वतादात्म्यवान् वाङ्मय इत्यादिपर्याये। तादात्म्यं च कल्पितम्।

तेनासौ कुतश्चित्प्रविभज्य मुञ्जेषीकावत्स्वेन ज्योतीरूपेण दर्शयितुं न शक्यत इति सर्वव्यापारं तत्राध्यारोप्य नामरूपगत ज्योतिर्धर्मं च नामरूपयोर्नामरूपे चाऽऽत्मज्योतिषि सर्वो लोको मोमुह्यतेऽयमात्मा नायमात्मैवंधर्मा नैवंधर्मा कर्ताऽकर्ता शुद्धोऽशुद्धो बद्धो मुक्तः स्थितो गत आगतोऽस्ति नास्तीत्यादिविकल्पैः। अतः समानः सन्नुभौ लोकौ प्रतिपन्नप्रतिपत्तव्याविहलोकपरलोकावुपात्तदेहेन्द्रियादिसङ्घातत्यागान्योपादानसन्तानप्रबन्धशतसन्निपातैरनुक्रमेण सञ्चरति। धीसादृश्यमेवोभयलोकसंचरणहेतुर्न स्वत इति। ५

तत्र नामरूपोपाधिसादृश्यं भ्रान्तिनिमित्तं यत्तदेव हेतुर्न स्वत इत्येतदुच्यते। यस्मात्स समानः सन्नुभौ लोकावनुक्रमेण सञ्चरति तदेतत्प्रत्यक्षमित्येतद्दर्शयति—यतो ध्यायतीव ध्यानव्यापारं करोतीव चिन्तयतीव ध्यानव्यापारवतीं बुद्धिं स तत्स्थेन चित्स्वभावज्योतीरूपेणावभासयस्तत्सदृशस्तत्समानः सन्ध्यायतीवाऽऽलोकवदेव। अतो भवति चिन्तयतीति भ्रान्तिर्लोकस्य। न तु परमार्थतो ध्यायति। तथा लेलायतीवात्यर्थं चलतीव। तेष्वेव करणेषु बुद्ध्यादिषु वायुषु च चलत्सु तदवभासकत्वात्तत्सदृशं तदिति लेलायतीव। न तु परमार्थतश्चलनधर्मकं १० तदात्मज्योतिः।

कथं पुनरेतदवगम्यते तत्समानत्वभ्रान्तिरेवोभयलोकसंचरणादिहेतुर्न स्वत इत्यस्यार्थस्य प्रदर्शनाय हेतुरुपदिश्यते—स आत्मा हि यस्मात्स्वप्नो भूत्वा। स यया धिया समानः सा धीर्यद्यद्भवति तत्तदसावपि भवतीव तस्माद्यदाऽसौ स्वप्नो भवति स्वापवृत्तिं प्रतिपद्यते धीस्तदा सोऽपि स्वप्नवृत्तिं प्रतिपद्यते। यदा धीर्जिजागरिषति तदाऽसावप्यत आह—स्वप्नो भूत्वा स्वप्नवृत्तिमवभासयन्धियः स्वापवृत्त्याकारो भूत्वेमं लोकं जागरित- १५ व्यवहारलक्षणं कार्यकरणसङ्घातात्मकं लौकिकशास्त्रीयव्यवहारास्पदमतिक्रामत्यतीत्य क्रामति विविक्तेन स्वेनाऽऽत्मज्योतिषा स्वप्नात्मिकां धीवृत्तिमवभासयन्नवतिष्ठते यस्मात्तस्मात्स्वयंज्योतिःस्वभाव एवासौ विशुद्धः स कर्तृक्रियाकारकफलशून्यः। परमार्थतो धीसादृश्यमेव तूभयलोकसंचारादिसंव्यवहारभ्रान्तिहेतुः। मृत्यो रूपाणि मृत्युः कर्माविद्यादिर्न तस्यान्यद्रूपं स्वतः कार्यकरणान्येवास्य रूपाणि। अतस्तानि मृत्यो रूपाण्यतिक्रामति क्रियाफलाश्रयाणि। २०

नेनु[1] नास्त्येव धिया समानमन्यद्धियोऽवभासकमात्मज्योतिः धीव्यतिरेकेण प्रत्यक्षेण वाऽनुमानेन वाऽनु-

वाक्यशेषसिद्धेऽर्थे लोकभ्रान्तेर्गमकत्वमाह—तेनेति। सर्वंमयत्नेनेति यावत्। आत्मानात्मनोर्विवेकदर्शनस्याशक्यत्वे परस्पराध्यासस्तद्धर्माध्यासश्च स्यात्ततश्च लोकानां मोहो भवेदित्याह—इति सर्वेति। धर्मिविषयं मोहमभिनयति—अयमिति। धर्मविषयं मोहं दर्शयति—एवं धर्मेति। तदेव स्फुटयति—कर्त्रेत्यादिना। विकल्पैः सर्वो लोको मोमुह्यत इति संबन्धः। स समानः सन्नित्यस्यार्थमुक्त्वाऽवशिष्टं भागं व्याकरोति—अत इत्यादिना। २५

आत्मनः स्वाभाविकमुभयलोकसंचरणमित्याशङ्क्यानन्तरवाक्यमादत्ते—तत्रेति। आत्मा सप्तम्यर्थः यतःशब्दो वक्ष्यमाणात्तच्छब्देन संबध्यते। अक्षरोत्थमर्थमुक्त्वा वाक्यार्थमाह—ध्यानेति। ध्यानवती वुद्धिं व्याप्नुवदात्मा ध्यायतीवेत्यत्र दृष्टान्तमाह—आलोकवदिति। यथा खल्वालोको नीलं पीतं वा विषयं व्याप्नुवानस्तदाकारो दृश्यते तथाऽयमपि ध्यानवती वुद्धिं भासयन्ध्यानवानिव भवतीत्यर्थः। यथोक्तवुद्ध्यवभासकत्वमुक्तं हेतुमनूद्य फलितमाह—अत इति। इवशब्दार्थं कथयति—न त्विति। वुद्धिधर्माणमात्मन्यौपाधिकत्वेन मिथ्यात्वमुक्त्वा प्राणधर्माणामपि तत्र ३० तथात्वं कथयति—तथेति। आत्मनि चलनस्यौपाधिकत्वं साधयति—तेष्विति। इवशब्दसामर्थ्यसिद्धमर्थमाह—न त्विति।

स हीत्याद्यनन्तरवाक्यमाकाङ्क्षाद्वारोत्थापयति—कथमित्यादिना। तच्छब्दो वुद्धिविषयः। संचरणादीत्यादिशब्दो ध्यानादिव्यापारसंग्रहार्थः। स्वप्नो भूत्वा लोकमतिक्रामतीति संबन्धः। कथमात्मा स्वप्नो भवति तत्राऽऽह—स ययेति। उक्तेऽर्थे वाक्यमवतार्य व्याकरोति—अत आहेति। उक्तं हेतुमनूद्य फलितमाह—यस्मादित्यादिना। कार्यकरणातीतत्वात्प्रत्यगात्मनो न स्वतः संचारित्वमित्याह—मृत्योरिति। रूपाण्यतिक्रामतीति पूर्वेण संबन्धः। ३५ क्रियास्तत्फलानि चाऽऽश्रयो येषां यानि वा क्रियाणां तत्फलानां चाऽऽश्रयस्तानीति यावत्।

बुद्ध्यवभासकं ज्योतिरात्मेत्युक्तं श्रुत्वा शाक्यः शङ्कते—नन्विति। प्रमाणादतिरिक्तात्मोपलब्धिरित्याशङ्क्य प्रत्यक्षमनुमानं चेति प्रमाणद्वैविध्यनियममभिप्रेत्य ताभ्यामतिरिक्तात्मानुपलम्भान्नात्मास्तीत्याह—धीव्यतिरेकेणेति। तत्र

[1] ननु इत्यादिना बाह्यार्थवादी बौद्धः शंकते।

पलम्भात् । यथाऽन्या तत्काल एव द्वितीया धीः । यत्त्ववभास्यावभासकयोरन्यत्वेऽपि विवेकानुपलम्भात्सादृश्यमिति [तिः] घटाद्यालोकयोः । तत्र भवत्वन्यत्वेनाऽऽलोकस्योपलम्भाद्घटादेः संश्लिष्टयोः सादृश्यं भिन्नयोरेव न च तथेह घटादेरिव धियोऽवभासकं ज्योतिरन्तरं प्रत्यक्षेण वाऽनुमानेन वोपलभामहे । धीरेव हि चित्स्वरूपाऽवभासकत्वेन स्वाकारा विषयाकारा च । तस्मान्नानुमानतो नापि प्रत्यक्षतो धियोऽवभासकं ज्योतिः शक्यते प्रतिपादयितु
५ व्यतिरिक्तम् ।

यदपि दृष्टान्तरूपमभिहितमवभास्यावभासकयोर्भिन्नयोरेव घटाद्यालोकयोः संयुक्तयोः सादृश्यमिति । तत्राभ्युपगममात्रमस्माभिरुक्तं न तत्र घटाद्यवभास्यावभासकौ भिन्नौ । परमार्थतस्तु घटादिरेवावभासात्मकः सालोकः । अन्योऽन्यो हि घटादिरुत्पद्यते । विज्ञानमात्रमेव सालोकघटादिविषयाकारमवभासते । यदेवं तदा न बाह्यो दृष्टान्तोऽस्ति विज्ञानलक्षणमात्रत्वात्सर्वस्य । एवं तस्यैव विज्ञानस्य ग्राह्यग्राहकाकारतामलं परिकल्प्य
१० तस्यैव पुनर्विशुद्धिं परिकल्पयन्ति । तद्ग्राह्यग्राहकविनिर्मुक्तं विज्ञानं स्वच्छीभूतं क्षणिकं व्यवतिष्ठत इति केचित् । तस्यापि शान्तिं केचिदिच्छन्ति । तदपि विज्ञानं संवृतं ग्राह्यग्राहकांशविनिर्मुक्तं शून्यमेव घटादिबाह्यवस्तुवदित्यपरे माध्यमिका आचक्षते ।

सर्वा एताः कल्पना बुद्धिविज्ञानावभासकस्य व्यतिरिक्तस्याऽऽत्मज्योतिषोऽपह्नवादस्य श्रेयोमार्गस्य प्रतिपक्षभूता वैदिकस्य । तत्र येषां बाह्योऽर्थोऽस्ति तान्प्रत्युच्यते तावत् । न स्वात्मावभासकत्व घटादेः । तमस्यवस्थितो
१५ घटादिस्तावन्न कदाचिदपि स्वात्मनाऽवभास्यते । प्रदीपाद्यालोकसंयोगेन तु नियमेनैवावभास्यमानो दृष्टः सालोको घट इति । संश्लिष्टयोरपि घटालोकयोरन्यत्वमेव पुनः पुनः संश्लेषे विश्लेषे च विशेषदर्शनाद्रज्जुघटयोरिव । अन्यत्वे च व्यतिरिक्तावभासकत्वं न स्वात्मनैव स्वमात्मानमवभासयति ।

ननु प्रदीपः स्वात्मानमेवावभासयन्दृष्ट इति । न हि घटादिवत्प्रदीपदर्शनाय प्रकाशान्तरमुपादत्ते

दृष्टान्तमाह—यथेति । घटादिरालोकश्चेत्युभयोर्मिथः संसृष्टयोर्विवेकेनानुपलम्भवदवभास्यावभासकयोर्बुद्ध्यात्मनोर्भेदेऽपि
२० पृथगनुपलम्भादैक्यमवभासते वस्तुतस्तु तयोरन्यत्वमेवेति शङ्कामनुवदति—यत्त्विति । वैषम्यप्रदर्शनेनोत्तरमाह—तत्रेति । दृष्टान्तः सप्तम्यर्थः घटादेरन्यत्वेनेति सम्बन्धः । ज्योतिरन्तरं नास्ति चेत्कुतो ग्राह्यग्राहकसंवित्तिरित्याशङ्क्याऽऽह—धीरेवेति । बाह्यार्थवादिनोः सौत्रान्तिकवैभाषिकयोरभिप्रायमुपसहरति—तस्मादिति ।

इदानीं विज्ञानवादी बाह्यार्थवादिभ्यामभ्युपगतं दृष्टान्तमनुवदति—यदपीति । बाह्यार्थवादप्रक्रिया न सुगताभिप्रेतेति दूषयति—तत्रेति । उभयत्र दृष्टान्तस्वरूपं सप्तम्यर्थः । ननु घटादेरवभास्यादालोकोऽवभासको भिन्नो
२५ लक्ष्यते नेत्याह—परमार्थतस्त्विति । तस्य स्थायित्वं व्यावर्तयति—अन्योऽन्य इति । प्रतीतं विषयप्राधान्यं व्यावर्तयन्नुक्तमेव व्यनक्ति—विज्ञानमात्रमिति । विज्ञानवादे यथोक्तदृष्टान्तराहित्यं फलतीत्याह—यदेति । शिष्यबुद्ध्यनुसारेण त्रिविधं बुद्धाभिप्रायमुपसंहरति—एवमित्यादिना । परिकल्प्येत्यन्तेन बाह्यार्थवादमुपसहृत्य तस्यैवेत्यादिना विज्ञानवादमुपसंजहार । तत्र विज्ञानवादोपसंहारं विवृणोति—तद्ग्राह्येति । शून्यवादिमतमाह—तस्यापीति । तदेव स्फुटयति—तदपीति ।

३० पक्षत्रयेऽपि दोषं सम्भावयति—सर्वा इति । कथममूषा कल्पनाना दूषणमित्याशङ्क्य प्रथमं बाह्यार्थवादिनं प्रत्याह—तत्रेति । निर्धारणे सप्तमी । यत्तु धीरेवावभासकत्वेन स्वाकारेति तत्राऽऽह—नेति । यदवभास्य तत्स्वातिरिक्तावभास्यमवभास्यत्वाद्यथा घटादि । अवभास्या चेयं बुद्धिरित्यनुमानाद्बुद्धिव्यतिरिक्त साक्षी सिध्यतीत्यर्थ. । दृष्टान्तं साधयति—तमसीति । तस्यावभासकापेक्षा दर्शयितुं विशेषणम्—सालोको घट इति । संश्लेषावगमान्नास्ति घटस्य व्यतिरिक्तावभास्यत्वमित्याशङ्क्याऽऽह—संश्लिष्टयोरपीति । भवत्वन्यत्वं किं तावतेत्याशङ्क्याऽऽह—अन्यत्वे
३५ चेति । व्यतिरिक्तावभासकत्वं तादृशावभासकसाहित्यमिति यावत् । अवभासयति घटादिरिति शेष. ।

दृष्टान्तस्य साध्यविकलत्वे परिहृते व्यभिचारमाशङ्कते—नन्विति । तदेव व्यतिरेकमुखेनाऽऽह—नहीति ।

१. यदपीतियोगाचाराक्षेपः ।
२. एवं तस्यैवेति शून्यवादिनाम् ।
३. संवृत्तं संवृतिसिद्ध संवृतिः लौकिकव्यवहार ।

लौकिकाः। तस्मात्प्रदीपः स्वात्मानं प्रकाशयति। न। अवभास्यत्वाविशेषात्। यद्यपि प्रदीपोऽन्यस्यावभासकः स्वयमवभासात्मकत्वात्तथाऽपि व्यतिरिक्तचैतन्यावभास्यत्वं न व्यभिचरति घटादिवदेव। यदा चैवं तदा व्यतिरिक्तावभास्यत्वं तावदवश्यंभावि। ननु यथा घटश्चैतन्यावभास्यत्वेऽपि व्यतिरिक्तमालोकान्तरमपेक्षते न त्वेवं प्रदीपोऽन्यमालोकान्तरमपेक्षते। तस्मात्प्रदीपोऽन्यावभास्योऽपि सन्नात्मानं घटं चावभासयति।

न। स्वतः परतो वा विशेषाभावात्। यथा चैतन्यावभास्यत्वं घटस्य तथा प्रदीपस्यापि चैतन्यावभास्यत्वमविशिष्टम्। यत्तूच्यते प्रदीप आत्मानं घटं चावभासयतीति तदसत्। कस्मात्। यदाऽऽत्मानं नावभासयति तदा कीदृशः स्यात्। न हि तदा प्रदीपस्य स्वतो वा परतो वा विशेषः कश्चिदुपलभ्यते। स ह्यवभास्यो भवति यस्यावभासकसंनिधावसंनिधौ च विशेष उपलभ्यते। नहि प्रदीपस्य स्वात्मसंनिधिरसंनिधिर्वा शक्यः कल्पयितुम्। असति च कादाचित्के विशेष आत्मानं प्रदीपः प्रकाशयतीति मृषैवोच्यते। चैतन्यग्राह्यत्वं तु घटादिभिरविशिष्टं प्रदीपस्य। तस्माद्विज्ञानस्याऽऽत्मग्राह्यग्राहकत्वे न प्रदीपो दृष्टान्तः। चैतन्यग्राह्यत्वं च विज्ञानस्य बाह्यविषयैरविशिष्टम्। चैतन्यग्राह्यत्वे च विज्ञानस्य किं ग्राह्यविज्ञानग्राह्यतैव किंवा ग्राहकविज्ञानग्राह्यतेति तत्र सदिह्यमाने वस्तुनि योऽन्यत्र दृष्टो न्यायः स कल्पयितुं युक्तो न तु दृष्टविपरीतः। तथा च सति यथा व्यतिरिक्तेनैव ग्राहकेण बाह्यानां प्रदीपानां ग्राह्यत्वं दृष्टं तथा विज्ञानस्यापि चैतन्यग्राह्यत्वात्प्रकाशकत्वे सत्यपि प्रदीपवद्व्यतिरिक्तचैतन्यग्राह्यत्वं युक्तं कल्पयितुं न त्वनन्यग्राह्यत्वम्। यश्चान्यो विज्ञानस्य ग्रहीता स आत्मा ज्योतिरन्तरं विज्ञानात्।

तदाऽनवस्थेति चेत्। न। ग्राह्यत्वमात्रं हि तद्ग्राहकस्य वस्त्वन्तरत्वे लिङ्गमुक्तं न्यायतः। न त्वेकान्ततो ग्राहकत्वे तद्ग्राहकान्तरास्तित्वे वा कदाचिदपि लिङ्गं संभवति। तस्मान्न तदनवस्थाप्रसङ्गः।

अनैकान्तिकत्वं निगमयति—तस्मादिति। प्रदीपस्य पक्षतुल्यत्वान्न व्यभिचारोऽस्तीति परिहरति—नावभास्यत्वेति। अथान्यावभासकत्वात्तस्य नान्यावभास्यत्वमिति चेत्तत्राऽऽह—यद्यपीति। अवभास्यत्वहेतोरव्यभिचारे फलितमाह—यदा चेति। व्यतिरिक्तावभास्यत्वं बुद्धेरिति शेषः। अवभास्यत्वे सत्यपि प्रदीपे स्वातिरिक्तेनैवावभास्यत्वमिति नियमासिद्धेर्व्यभिचारतादवस्थ्यमिति शङ्कते—नन्विति।

यदि प्रदीपस्य स्वावभासनात्पूर्वमसन्विशेषः समनन्तरकाले स्यात्तदा स्वात्मानं भासयतीति वक्तुं युक्तं न च सोऽस्तीति दूषयति—नेत्यादिना। तदेव विवृणोति—यथेति। अवभास्यत्वाविशेषादित्यर्थः। प्रदीपे परोक्तं विशेषमनुभाष्य दूषयति—यत्त्वित्यादिना। यदा दीपो न स्वात्मानं भासयति तदाऽनवभासमानः स्यादित्याशङ्क्याऽऽह—नहीति। विशेषाभावेऽपि दीपस्य स्वेनैवावभास्यत्वं किं न स्यादिति चेत्तत्राऽऽह—स हीति। दीपस्य विशेषान्तराभावेऽपि स्वात्मसंनिध्यसंनिधी विशेषावित्याशङ्क्याऽऽह—न हीति। दीपस्य स्वेनान्येन वा स्वस्मिन्विशेषाभावे फलितमाह—असतीति। व्यभिचारनिरासपूर्वकं भास्यत्वानुमानमुपपाद्यानुमानान्तरमाह—चैतन्येति। यद्व्यञ्जकं तत्स्वविजातीयव्यङ्ग्यं यथा सूर्यादि व्यञ्जकं च विज्ञानं तस्माद्विज्ञानव्यतिरिक्तश्चिदात्मा सिध्यतीत्यर्थः। प्रदीपस्य न स्वावभास्यत्वं किन्तु विजातीयचैतन्यावभास्यत्वमिति स्थिते फलितमाह—तस्मादिति। यद्ग्राह्यं तद्ग्राहकान्तरग्राह्यं यथा दीपो ग्राह्यं चेदं विज्ञानमित्यनुमानान्तरमाह—चैतन्येति। तथाऽपि कथं त्वदिष्टग्राहकसिद्धिरित्याशङ्क्य विमृशति—चैतन्यग्राह्यत्वे चेति। कथं तर्हि निर्णयस्तत्राऽऽह—इति तत्र संदिह्यमान इति। अस्तु लोकानुसारो निश्चयो लोकस्तु कथमित्याशङ्क्याऽऽह—तथा चेति। तथापि कुतो विवक्षितात्मज्योतिस्तत्राऽऽह—यश्चेति।

विज्ञानस्य ग्राहकान्तरग्राह्यत्वे तस्यापि ग्राहकान्तरापेक्षायामनवस्थाप्रसक्तिरिति शङ्कते—तदाऽनवस्थेति चेदिति। कूटस्थबोधस्य विज्ञानसाक्षिणोऽविषयत्वान्नानवस्थेति परिहरति—नेति। यद्ग्राह्यं तत्स्वातिरिक्तग्राह्यं यथा घटादीति ग्राह्यत्वमात्रं बुद्धिग्राहकस्य ततो वस्त्वन्तरत्वे प्रदीपस्य स्वानवभास्यत्वन्यायेन लिङ्गमुक्तं न च बुद्धिसाक्षिणो ग्राह्यत्वमस्ति कूटस्थदृष्टिस्वाभाव्यात्तत्कुतोऽनवस्थेत्युपपादयति—ग्राह्यत्वमात्रं हीति। साक्षी स्वातिरिक्तग्राह्यो ग्राहकत्वाद्बुद्धिवदित्याशङ्क्याऽऽह—न त्विति। ग्राहकत्वं हि ग्रहणकर्तृत्वं वा तत्साक्षित्वं वा। आद्ये बुद्धिसाक्षिणो मुख्यवृत्त्या ग्रहणकर्तृत्वे न किञ्चिल्लिङ्गं सम्भवति। द्वितीये तस्य ग्राहकान्तरास्तित्वे न कदाचिदपि प्रमाणमस्ति तत्कुतोऽनवस्थेत्यर्थः।

१. विशेषदर्शनात् आलोकसवन्धे सालोकः तदभावे तमोविशिष्टः, विशेषो भेदः।

विज्ञानस्य व्यतिरिक्तग्राह्यत्वे करणान्तरापेक्षायामनवस्थेति चेत्। न। नियमाभावात्। न हि सर्वत्रायं नियमो भवति। यत्र वस्त्वन्तरेण गृह्यते वस्त्वन्तरं तत्र ग्राह्यग्राहकव्यतिरिक्तं करणान्तरं स्यादिति नैकान्तेन नियन्तुं शक्यते। वैचित्र्यदर्शनात्। कथम्। घटस्तावत्स्वात्मव्यतिरिक्तेनाऽऽत्मना गृह्यते तत्र प्रदीपादिरालोको ग्राह्यग्राहकव्यतिरिक्तं करणम्। न हि प्रदीपाद्यालोको घटांशश्चक्षुरंशो वा। घटवच्चक्षुर्ग्राह्यत्वेऽपि प्रदीपस्य चक्षुः
५ प्रदीपव्यतिरेकेण न बाह्यमालोकस्थानीयं किंचित्करणान्तरमपेक्षते। तस्मान्नैव नियन्तुं शक्यते यत्र यत्र व्यतिरिक्त-ग्राह्यत्वं तत्र तत्र करणान्तरं स्यादेवेति। तस्माद्विज्ञानस्य व्यतिरिक्तग्राहकग्राह्यत्वे न करणद्वाराऽनवस्था नापि ग्राहकत्वद्वारा कदाचिदप्युपपादयितुं शक्यते। तस्मात्सिद्धं विज्ञानव्यतिरिक्तमात्मज्योतिरन्तरमिति।

ननु नास्त्येव बाह्योऽर्थो घटादिः प्रदीपो वा विज्ञानव्यतिरिक्तः। यद्धि यद्व्यतिरेकेण नोपलभ्यते तत्ताव-न्मात्रं वस्तु दृष्टम्। यथा स्वप्नविज्ञानग्राह्यं घटपटादिवस्तु स्वप्नविज्ञानव्यतिरेकेणानुपलम्भात्स्वप्नघटप्रदीपादेः
१० स्वप्नविज्ञानमात्रताऽवगम्यते, तथा जागरितेऽपि घटप्रदीपादेर्जाग्रद्विज्ञानव्यतिरेकेणानुपलम्भाज्जाग्रद्विज्ञानमात्रतैव युक्ता भवितुम्। तस्मान्नास्ति बाह्योऽर्थो घटप्रदीपादिर्विज्ञानमात्रमेव तु सर्वम्। तत्र यदुक्तं विज्ञानस्य व्यतिरिक्ताव-भास्यत्वाद्विज्ञानव्यतिरिक्तमस्ति ज्योतिरन्तरं घटादेरिवेति तन्मिथ्या। सर्वस्य विज्ञानमात्रत्वे दृष्टान्ताभावात्। न। यावत्तावदभ्युपगमात्। न तु बाह्योऽर्थो भवतैकान्तेनैव नाभ्युपगम्यते। ननु मया नाभ्युपगम्यत एव। न। विज्ञानं घटः प्रदीप इति च शब्दार्थपृथक्त्वाद्यावत्तावदपि बाह्यमर्थान्तरमवश्यमभ्युपगन्तव्यम्। विज्ञानादर्थान्तरं
१५ वस्तु न चेदभ्युपगम्यते विज्ञानं घटः पट इत्येवमादीनां शब्दानामेकार्थत्वे पर्यायशब्दत्वं प्राप्नोति। तथा साधनानां फलस्य चैकत्वे साध्यसाधनभेदोपदेशशास्त्रानर्थक्यप्रसङ्गः। तत्कर्तुरज्ञानप्रसङ्गो वा।

किंचान्यत्। विज्ञानव्यतिरेकेण वादिप्रतिवादिवाददोषाभ्युपगमात्। न ह्यात्मविज्ञानमात्रमेव वादिप्रति-वादिवादस्तद्दोषो वाऽभ्युपगम्यते निराकर्तव्यत्वात्प्रतिवाद्यादीनाम्। न ह्यात्मीयं विज्ञानं निराकर्तव्यमभ्युपगम्यते स्वयं वाऽऽत्मा कस्यचित्। तथा च सति सर्वसंव्यवहारलोपप्रसङ्गः। न च प्रतिवाद्यादयः स्वात्मनैव गृह्यन्त
२० इत्यभ्युपगमः। व्यतिरिक्तग्राह्या हि तेऽभ्युपगम्यन्ते। तस्मात्तद्वत्सर्वमेव व्यतिरिक्तग्राह्यं वस्तु जाग्रद्विषयत्वा-

ग्राहकानवस्था परिहृत्य करणानवस्थामाशङ्कते—विज्ञानस्येति। तस्य हि ग्राह्यत्वे चक्षुरादिस्थानीयेन करणेन भवितव्यं तस्यापि ग्राह्यत्वेऽन्यत्करणमित्यनवस्था दूषयति—न। नियमाभावादिति। नियमाभावं साधयति—नहीत्यादिना। वैचित्र्यदर्शनमाकाङ्क्षापूर्वकं स्फुटयति—कथमित्यादिना। उभयव्यतिरेकं विशदयति—नहीति। तथाऽपि कथं वैचित्र्यं तत्राऽऽह—घटवदिति। नियमाभावमुपसंहरति—तस्मादिति। अनवस्थाद्वयनिराकरणं
२५ निगमयति—तस्माद्विज्ञानस्येति। बाह्यार्थवादिमतनिराकरणमुपसंहरति—तस्मात्सिद्धमिति।

बाह्यार्थवादिनी न्यस्ते विज्ञानवादी चोदयति—नन्विति। बाह्यार्थो विज्ञानातिरिक्तो नास्तीत्यत्र प्रमाण-माह—यद्धीति। नोपलभ्यते च जाग्रद्वस्तु जाग्रद्विज्ञानव्यतिरेकेणेति शेषः। दृष्टान्तं समर्थयते—स्वप्नेति। दार्ष्टान्तिकं विवृणोति—तथेति। उक्तमनुमानमुपसंहरति—तस्मादिति। सर्वं विज्ञानमात्रमिति स्थिते फलितमाह—तत्रेति। किमिति तस्य मिथ्यात्वं तत्राऽऽह—सर्वस्येति। बाह्यार्थापलापवादिनं दूषयति—नेत्यादिना। हेतुं विशदयति—
३० नन्विति। विज्ञानमात्रवादित्वादेकान्तेन बाह्यार्थानभ्युपगतिरिति शङ्कते—नन्विति। बाह्यार्थं हठादङ्गीकारयति—नेत्यादिना। अन्वयमुखेनोक्तमर्थं व्यतिरेकमुखेन विशदयति—विज्ञानादिति। ज्ञानज्ञेययोरैक्ये दोषान्तरमाह—तथेति। अनर्थकं शास्त्रमुपदिशतो बुद्धस्य सर्वज्ञत्वं न स्यादित्याह—तत्कर्तुरिति। वाशब्दश्चार्थः।

इतश्च सर्वस्य नास्ति विज्ञानमात्रत्वमित्याह—किंचान्यदिति। न केवलं पूर्वोक्तोपपत्तिवशादेव बाह्यार्थो-ऽभ्युपेयः किंतु तत्रैवान्यदपि कारणमुच्यत इति यावत्। तदेव स्फुटयति—विज्ञानेति। यद्ग्राह्यं तत्स्वव्यतिरिक्तग्राह्यं
३५ यथा प्रतिवाद्यादि जाग्रद्वस्तु चेदं ग्राह्यमित्यनुमानान्न बाह्यार्थापलापसिद्धिरित्यर्थः। दृष्टान्ते विप्रतिपत्तिं प्रत्याह—नहीति। निराकर्तव्यत्वेऽपि तेषां ज्ञानमात्रत्वं किं न स्यादित्याशङ्क्याऽऽत्मीयज्ञानत्वमात्मज्ञानत्वं वा तेषामिति विकल्प्य क्रमेण दूषयति—न हीत्यादिना। स्वकीयनिषेधे स्वनिषेधे चानिष्टापत्तिमाचष्टे—तथा चेति। त्वदङ्गीकारालोचनयाऽपि प्रतिवाद्यादीनां विज्ञानातिरेकः सेत्स्यतीत्याह—न चेति। अन्यथा विवादाभावापातादिति भावः। कथं तर्हि तेषामङ्गीकारस्तत्राऽऽह—व्यतिरिक्तेति। सिद्धे दृष्टान्ते फलितमनुमानं निगमयति—तस्मादिति। किंच नैरात्म्यवादिना
४० मैत्रमतानो व्यवहारादनुमीयते सर्वज्ञज्ञानेन चासर्वज्ञज्ञानानि ज्ञायन्ते तत्र भेदस्य तेऽपि सिद्धत्वाद्दृष्टान्तासिद्धिर्न-

ज्जाग्रद्वस्तुप्रतिवाद्यादिवदिति सुलभो दृष्टान्तः। संतत्यन्तरवद्विज्ञानान्तरवच्चेति। तस्माद्विज्ञानवादिनाऽपि न शक्यं विज्ञानव्यतिरिक्तं ज्योतिरन्तरं निराकर्तुम्।

स्वप्ने विज्ञानव्यतिरेकाभावादयुक्तमिति चेत्। न। अभावादपि भावस्य वस्त्वन्तरत्वोपपत्तेः। भवतैव तावत्स्वप्ने घटादिविज्ञानस्य भावभूतत्वमभ्युपगतम्। तदभ्युपगम्य तद्व्यतिरेकेण घटाद्यभाव उच्यते। स विज्ञानविषयो घटादिर्यद्यभावो यदि वा भावः स्यादुभयथाऽपि घटादिविज्ञानस्य भावभूतत्वमभ्युपगतमेव। न तु तन्निवर्तयितुं शक्यते तन्निवर्तकन्यायाभावात्। एतेन सर्वस्य शून्यता प्रत्युक्ता। प्रत्यगात्मग्राह्यता चाऽऽत्मनोऽहमिति मीमांसकपक्षः[1] प्रत्युक्तः। यत्तूक्तं सालोकोऽन्यश्चान्यश्च घटो जायत इति तदसत्। क्षणान्तरेऽपि स एवायं घट इति प्रत्यभिज्ञानात्। सादृश्यात्प्रत्यभिज्ञानं कृत्तोत्थितकेशनखादिष्वेवेति चेत्। न। तत्रापि क्षणिकत्वस्यासिद्धत्वात्। जात्येकत्वाच्च। कृत्तेषु पुनरुत्थितेषु च केशनखादिषु केशनखत्वजातेरेकत्वात्केशनखत्वप्रत्ययस्तन्निमित्तोऽभ्रान्त एव। न हि दृश्यमानलूनोत्थितकेशनखादिषु व्यक्तिनिमित्तः स एवेति प्रत्ययो भवति। कस्यचिद्दीर्घकालव्यवहितदृष्टेषु च तुल्यपरिमाणेषु तत्कालीनबालादितुल्या इमे केशनखाद्या इति प्रत्ययो भवति न तु त एवेति। घटादिषु पुनर्भवति स एवेति प्रत्ययः। तस्मान्न समो दृष्टान्तः।

प्रत्यक्षेण हि प्रत्यभिज्ञायमाने वस्तुनि तदेवेति न चान्यत्वमनुमातुं युक्तं प्रत्यक्षविरोधे लिङ्गस्याऽऽभासत्वोपपत्तेः[2]। सादृश्यप्रत्ययानुपपत्तेश्च। ज्ञानस्य क्षणिकत्वात्। एकस्य हि वस्तुदर्शिनो वस्त्वन्तरदर्शने सादृश्यप्रत्ययः स्यात्। न तु वस्तुदर्श्येको वस्त्वन्तरदर्शनाय क्षणान्तरमवतिष्ठते। विज्ञानस्य क्षणिकत्वात्सकृद्वस्तुदर्शनेनैव क्षयोपपत्तेः। तेनेदं सदृशमिति हि सादृश्यप्रत्ययो भवति। तेनेति दृष्टस्मरणम् इदमिति वर्तमानप्रत्ययः। तेनेति दृष्टं द्वियश्च भेदः शक्योऽनुमातुमित्याह—संतत्यन्तरवदिति। इति न बाह्यार्थापलापासिद्धिरिति शेषः। तदपलापासंभवे फलितमाह—तस्मादिति।

विज्ञानादर्थभेदोक्त्या प्रत्यगात्मा विज्ञानातिरिक्त उक्तः। संप्रति विमतं न ज्ञानभिन्नं ग्राह्यत्वात्स्वप्नग्राह्यवदित्युक्तमनुवदति—स्वप्न इति। अयुक्तं विज्ञानातिरिक्तत्वमर्थस्येति शेषः। दृष्टान्तस्य साध्यविकलतामभिप्रेत्य परिहरति—नाभावादपीति। संग्रहवाक्यं विवृणोति—भवतैवेति। बाह्यार्थवादिभ्यो विशेषमाह—तदभ्युपगम्येति। तथाऽपि कथं दृष्टान्तस्य साध्यविकलतेत्याशङ्क्याऽऽह—स इति। घटादिविज्ञानस्य भावभूतस्याभ्युपगतस्य घटादेर्भावादभावाद्वा विषयादर्थान्तरत्वाद्यस्य कस्यचिद्बाह्यार्थस्योपगमाद्दृष्टान्तस्य साध्यविकलता सुप्रसिद्धेत्यर्थः। माध्यमिकमतमतिदेशेन निराकरोति—एतेनेति। ज्ञानज्ञेययोर्निराकर्तुमशक्यत्ववचनेनेति यावत्। आत्मनो ग्राह्यस्याहमिति प्रत्यगात्मनैव ग्राह्यतेति मीमांसकमतमपि प्रत्युक्तमेकस्यैव ग्राह्यग्राहकताया निरस्तत्वादित्याह—प्रत्यगात्मेति। क्षणभङ्गवादिनोक्तमनूद्य प्रत्यभिज्ञाविरोधेन निराकरोति—यत्तूक्तमित्यादिना। स्वपक्षेऽपि प्रत्यभिज्ञोपपत्ति शाक्यः शङ्कते—सादृश्यादिति। दृष्टान्तं विघटयन्नुत्तरमाह—न तत्रापीति। तथाऽपि कथं तत्र प्रत्यभिज्ञेत्याशङ्क्याऽऽह—जातीति। तन्निमित्ता तेषु प्रत्यभिज्ञेति शेषः। तदेव प्रपञ्चयति—कृत्तेष्विति। अभ्रान्त इति च्छेदः। किमिति जातिनिमित्तैषा धीर्व्यक्तिनिमित्ता किं न स्यादत आह—नहीति। ननु सादृश्यवशाद्व्यक्तिमेव विषयीकृत्य प्रत्यभिज्ञानं केशादिषु किं न स्यात्तत्राऽऽह—कस्यचिदिति। अभ्रान्तस्येति यावत्। दार्ष्टान्तिके वैषम्यमाह—घटादिष्विति। वैषम्यमुपसंहरति—तस्मादिति।

यत्सत्तत्क्षणिकं यथा प्रदीपादि सन्तश्चामी भावा इत्यनुमानविरोधादभ्रान्तं प्रत्यभिज्ञानमित्याशङ्क्याऽऽह—प्रत्यक्षेणेति। अनुष्णतानुमानवत्प्रत्यक्षविरोधे क्षणिकत्वानुमानं नोदेत्यबाधितविषयत्वस्याप्यनुमित्यङ्गत्वादिति भावः। इतश्च प्रत्यभिज्ञानं सादृश्यनिबन्धनो भ्रमो न भवतीत्याह—सादृश्येति। तदनुपपत्तौ हेतुमाह—ज्ञानस्येति। तस्य क्षणिकत्वेऽपि किमिति सादृश्यप्रत्ययो न सिध्यतीत्याशङ्क्याऽऽह—एकस्येति। अस्तु तर्हि वस्तुद्वयदर्शित्वमेकस्येति

1. अत्र मीमांसक प्रभाकरः भट्टश्च आद्येन सर्वं ज्ञानमात्मानं विषयं च गृह्णातीत्यभ्युपगमात्। तथा चात्मा ग्रहाश्रयत्वेन ग्राहकः। तस्मिन्नेव ग्रहे विषयतया ग्राह्य आत्मा। भट्टमते आत्मा जडः स्वगतज्ञानं स्व च तेन गृह्यते न तु कर्मकर्तृभेदस्तैरङ्गीक्रियते। तन्निवर्तकन्यायाभावात्। ज्ञानं स्वातिरिक्तविषयशून्यं ज्ञानत्वात् स्वप्नज्ञानवदित्यनुमानेन वाच्यम्। तत्र च दृष्टान्ते साध्यवैकल्यं स्वप्नादिज्ञानेऽपि ज्ञायमानघटसत्वात् घटः ज्ञानव्यतिरेकेण नास्तीत्युक्तौ तस्याभावरूपत्वमापन्नं स एव भानविषयः इति दृष्टान्ते साध्यवैकल्यम्।
2. आभासत्वोपपत्ते. हेत्वाभासत्वमित्यर्थः प्रत्यक्षेण बाधितत्वात्। व्यपदेशकः शब्दप्रयोगः।

स्मृत्वा यावदिदमिति वर्तमानक्षणकालमवतिष्ठेत ततः क्षणिकवादहानिः। अथ तेनेत्येवोपक्षीणः स्मार्तः प्रत्यय इदमिति चान्य एव वार्तमानिकः प्रत्ययः क्षीयते ततः सादृश्यप्रत्ययानुपपत्तिस्तेनेदं सदृशमिति। अनेकदर्शिन एकस्याभावात्। व्यपदेशानुपपत्तिश्च द्रष्टव्यदर्शनेनैवोपक्षयाद्विज्ञानस्येदं पश्याम्यदोऽद्राक्षमितिव्यपदेशानुपपत्ति- र्दृष्टवतो व्यपदेशक्षणानवस्थानात्। अथावतिष्ठेत क्षणिकवादहानिः। अथादृष्टवतो व्यपदेशः सादृश्यप्रत्ययश्च तदानीं ५ जात्यन्धस्येव रूपविशेषव्यपदेशस्तत्सादृश्यप्रत्ययश्च सर्वमन्धपरम्परेति प्रसज्येत सर्वज्ञशास्त्रप्रणयनादि। न चैतदिष्यते। अकृताभ्यागमकृतविप्रणाशदोषौ तु प्रसिद्धतरौ क्षणवादे।

दृष्टव्यपदेशहेतुः पूर्वोत्तरसहित एक एव हि शृङ्खलावत्प्रत्ययो जायत इति चेत्। तेनेदं सदृशमिति च। न। वर्तमानातीतयोर्भिन्नकालत्वात्। तत्र वर्तमानप्रत्यय एकः शृङ्खलावयवस्थानीयोऽतीतश्चापरस्तौ प्रत्ययौ भिन्नकालौ तदुभयप्रत्ययविषयस्पृक्चेच्छृङ्खलाप्रत्ययस्ततः क्षणद्वयव्यापित्वादेकस्य विज्ञानस्य पुनः क्षणवादहानिः। १० ममतवतादिविशेषानुपपत्तेश्च सर्वसंव्यवहारलोपप्रसङ्गः। सर्वस्य च स्वसंवेद्यविज्ञानमात्रत्वे विज्ञानस्य च स्वच्छावबोधावभासमात्रस्वाभाव्याभ्युपगमात्तद्दर्शिनश्चान्यस्याभावेऽनित्यदुःखशून्यानात्मत्वाद्यनेककल्पनानुपपत्तिः।

न च दाडिमादेरिव विरुद्धानेकांशवत्त्वं विज्ञानस्य। स्वच्छावभासस्वाभाव्याद्विज्ञानस्य। अनित्यदुःखा- दीनां विज्ञानांशत्वे च सत्यनुभूयमानत्वाद्व्यतिरिक्तविषयत्वप्रसङ्गः। अथानित्यदुःखाद्यात्मैकत्वमेव विज्ञानस्य तदा तद्वियोगाद्विशुद्धिकल्पनानुपपत्तिः। संयोगिमलवियोगाद्धि विशुद्धिर्भवति। यथाऽऽदर्शप्रभृतीनाम्। न तु स्वाभाविकेन १५ धर्मेण कस्यचिद्वियोगो दृष्टः। न ह्यग्नेः स्वाभाविकेन प्रकाशेनौष्ण्येन वा वियोगो दृष्टः। यदपि पुष्पगुणानां रक्तत्वादीनां द्रव्यान्तरयोगेन वियोजनं दृश्यते तत्रापि संयोगपूर्वत्वमनुमीयते। बीजभावनया पुष्पफलादीनां चेत्तेत्याह—न त्विति। उक्तमेवार्थं प्रपञ्चयति—तेनेत्यादिना। भवतु किं तावतेति तत्राऽऽह—तेनेति दृष्टमिति। अवतिष्ठेत यदीति शेषः। क्षणिकत्वहानिपरिहारं शङ्कित्वा परिहरति—अथेत्यादिना। तत्र हेतुमाह—अनेकेति। परपक्षे दोषान्तरमाह—व्यपदेशेति। तदेव विवृणोति—इदमिति। व्यपदेशक्षणेऽनवस्थानासिद्धिं शङ्कित्वा दूषयति- २० अथेत्यादिना। अन्यो द्रष्टाऽन्यश्च व्यपदेष्टेत्याशङ्क्य परिहरति—अथेत्यादिना। शास्त्रप्रणयनादीत्यादिशब्देन शास्त्रीयं साध्यसाधनादि गृह्यते। क्षणिकत्वपक्षे दूषणान्तरमाह—अकृतेति।

व्यपदेशानुपपत्तिमुक्तां समादधानः शङ्कते—दृष्टेति। सादृश्यप्रत्ययश्च शृङ्खलास्थानीयेन प्रत्ययेनैव सेत्स्यती- त्याह—तेनेदमिति। अपसिद्धान्तप्रसक्त्या प्रत्याचष्टे—नेत्यादिना। तावेवोभौ यौ प्रत्ययौ विषयौ तदवगाही चेन्मध्य- वर्ती शृङ्खलावयवस्थानीयः प्रत्यय इति यावत्। क्षणानां मिथः संबन्धस्तर्हि मा भूदिति चेत्तत्राऽऽह—ममेति। २५ व्यपदेशसादृश्यप्रत्ययानुपपत्तिस्तु स्थितैवेति चकारार्थः। यत्तु विज्ञानस्य दुःखाद्युपप्लुतत्वं तद्दूषयति—सर्वस्य चेति। शुद्धत्वात्तत्संसर्गद्रष्टृभावाच्च न ज्ञानस्य दुःखादिसंप्लवः स्वसंवेद्यत्वाङ्गीकारादित्यर्थः।

ज्ञानस्य शुद्धबोधैकस्वाभाव्यमसिद्धं दाडिमादिवन्नानाविधदुःखाद्यंशवत्त्वाश्रयणादित्याशङ्क्याऽऽह—न चेति। तत्रैव हेत्वन्तरमाह—अनित्येति। तेषां तद्धर्मत्वे सत्यनुभूयमानत्वात्ततोऽतिरिक्तत्वं स्याद्धर्माणां धर्मिमात्रत्वाभावा- न्मेयानां च मानादर्थान्तरत्वादतो यन्मेयं न तज्ज्ञानांशो यथा घटादि मेयं च दुःखादीत्यर्थः। ज्ञानस्य दुःखादि धर्मो ३० न भवति किंतु स्वरूपमेवेति शङ्कामनुभाष्य दोषमाह—अथेत्यादिना। अनुपपत्तिमेव प्रकटयति—संयोगीत्यादिना। स्वाभाविकस्यापि वियोगोऽस्ति पुष्परक्तत्वादीनां तथोपलम्भादित्याशङ्क्याऽऽह—यदपीति। द्रव्यान्तरशब्देन पुष्प- संबन्धिनोऽवयवास्तद्गतरक्तत्वाद्यारम्भका विवक्षिता.। विमतं संयोगपूर्वकं विभागवत्त्वान्मेषादिवदित्यनुमानान्न स्वाभाविकस्य सति वस्तुनि नाशोऽस्तीत्यर्थः। अनुमानानुगुणं प्रत्यक्षं दर्शयति—बीजेति। कार्पासादिबीजे द्रव्य- विशेषसंपर्काद्रक्तादिवासनया तत्पुष्पादीनां रक्तादिगुणोदयोपलम्भात्तत्संयोगिद्रव्यापगमादेव तत्पुष्पादिषु रक्तत्वाद्यप- ३५ गतिरित्यर्थः। विशुद्ध्यनुपपत्तिमुपसंहरति—अत इति। कल्पनान्तरमनूद्य दूषयति—विषयविषयेति। कथं पुन- र्ज्ञानस्यान्येन संसर्गाभावस्तस्य विषयेण संसर्गादित्याशङ्क्याऽऽह—नहीति। अथान्यसंसर्गमन्तरेणापि ज्ञानस्य विषय-

१. ममत्वतवत्वादिप्रत्ययानुपपत्तिः इदं ज्ञानं मदीयमिति ज्ञानं तदनन्तरं व्यपदेशः एतदनुपपन्नं क्षणिकत्वात् प्रत्ययानां व्यपदेशक्षणेऽसत्त्वात्।

२. विज्ञानस्य दुःखसुखाद्यनेकांशत्वं यथा दाडिमफलस्य माधुर्यकटुत्वादिकमंशभेदेनेत्यर्थः।

४० ३. अनित्येति। बौद्धानां सर्वं क्षणिकं सर्वं दुःखं शून्यमित्यादिप्रत्ययानुपपत्ति.।

४ व्यतिरिक्तविषयत्वम्—व्यतिरिक्तो यो विषयस्तत्त्वं; विशुद्धिकल्पनानुपपत्तिः सर्वदुःखाना ज्ञानस्वाभाव्यात्।

रोत्पत्तिदर्शनात्। अतो विज्ञानस्य विशुद्धिकल्पनानुपपत्तिः। विषयविषय्याभासत्वं च यन्मलं परिकल्प्यते तस्य तदप्यन्यसंसर्गाभावादनुपपन्नम्। न ह्यविद्यमानेन विद्यमानस्य संसर्गः स्यात्। असति चान्यसंसर्गे यो यस्य दृष्टः स तत्स्वभावत्वान्न तेन वियोगमर्हति। यथाऽग्नेरौष्ण्यं सवितुर्वा प्रभा। तस्मादनित्यसंसर्गेण मलिनत्वं तद्विशुद्धिश्च विज्ञानस्येतीयं कल्पनाऽन्धपरम्परैव प्रमाणशून्येत्यवगम्यते।

यदपि तस्य विज्ञानस्य निर्वाणं पुरुषार्थं कल्पयन्ति तत्रापि फलाश्रयानुपपत्तिः। कण्टकविद्धस्य हि ५ कण्टकवेधजनितदुःखनिवृत्तिः फलं न तु कण्टकविद्धमरणे तद्दुःखनिवृत्तिफलस्याऽऽश्रय उपपद्यते। तद्वत्सर्वनिर्वाणेऽसति च फलाश्रये पुरुषार्थकल्पना व्यर्थैव। यस्य हि पुरुषशब्दवाच्यस्य सत्त्वस्याऽऽत्मनो विज्ञानस्य चार्थः तस्य पुनः पुरुषस्य निर्वाणे कस्यार्थः पुरुषार्थ इति स्यात्। यस्य पुनरस्त्यनेकार्थदर्शी विज्ञानव्यतिरिक्त आत्मा तस्य दृष्टस्मरणदुःखसंयोगवियोगादि सर्वमेवोपपन्नमन्यसंयोगनिमित्तं कालुष्यं तद्वियोगनिमित्ता च विशुद्धिरिति। शून्यवादिपक्षस्तु सर्वप्रमाणविप्रतिषिद्ध इति तन्निराकरणाय नाऽऽदरः क्रियते ॥७॥[4] १०

विषय्याभासत्वमलं स्यादिति चेत्तत्राऽऽह—असति चेति। कल्पनाद्वयमप्रामाणिकमनादेयमित्युपसहरति—तस्मादिति।

कल्पनान्तरमुत्थापयति—यदपीति। उपशान्तिर्निर्वाणशब्दार्थः। दूषयति—तत्रापीति। फल्यभावेऽपि फलं स्यादिति चेन्नेत्याह—कण्टकेति। दार्ष्टान्तिकं विवृणोति—यस्य हीति। ननु त्वन्मतेऽपि वस्तुनोऽद्वयत्वात्तस्याऽसङ्गस्य केनचिदपि संयोगवियोगयोरयोगात्फलित्वासंभवे मोक्षासंभवादि तुल्यमित्याशङ्क्याऽऽह—यस्य पुनरिति। यद्यपि पूर्णं वस्तु वस्तुतोऽसङ्गमङ्गीक्रियते तथाऽपि क्रियाकारकफलभेदस्याविद्यामात्रकृतत्वादस्मन्मते सर्वव्यवहारसंभवान्न साम्यमिति भावः। ननु बाह्यार्थवादो विज्ञानवादश्च निराकृतौ शून्यवादो निराकर्तव्योऽपि कस्मान्न निराक्रियते तत्राऽऽह—शून्यवादीति। समस्तस्य वस्तुनः सत्त्वेन मानान्मानानां च सर्वेषां सद्विषयत्वाच्छून्यस्य चाविषयतया प्राप्त्यभावेन निराकरणानर्हत्वात्तद्विषयत्वे च शून्यवादिनैव विषयनिराकरणोक्त्या शून्यस्यापह्नवात्तस्य च स्फुरणास्फुरणयोः सर्वशून्यत्वायोगात्तद्वादिनश्च सत्त्वासत्त्वयोस्तदनुपपत्तेः संवृतेश्चाऽऽश्रयाभावादसंभवात्तदाश्रयत्वे च शून्यस्य स्वरूपहानान्निराश्रयत्वे चासंवृतित्वान्नास्माभिस्तद्वादनिरासायाऽऽदरः क्रियते तत्सिद्धं बुद्ध्याद्यतिरिक्तं नित्यसिद्धमत्यन्तशुद्धं कूटस्थमद्वयमात्मज्योतिरिति भावः ॥७॥ १५ २०

---

१. निर्वाणं पुरुषार्थं इति। विशुद्धविज्ञानोदयो मोक्ष इत्यंगीकारात्। तदनुपपन्नमाश्रयाभावात् क्षणिकविज्ञानस्य स्थित्यभावात्।

२. सत्त्वस्य सद्रूपस्यात्मन इत्यर्थः तस्य ज्ञानस्य च प्रयोजनं परिकल्प्यते आस्तिकैः तस्यात्मन अभावे इत्यर्थः।

३. शून्यवादं स्वयं निरस्यति टीकाकारः। प्रमाणविषयत्वात् सद्वस्तु अस्ति। शून्यं तु प्रमाणाविषयत्वात् निराकरणानर्हमप्रसक्तेः। शून्यं स्फुरति न वा? आद्ये न शून्यता द्वितीये न तद्वादस्य प्रसक्ति। शून्यवादी सन् वा न वा सवृतिनिरूपणासभवात् न संवृत्तिसत्त्वम्। आश्रयाभावान्न संवृति. स्वीकार्या। २५

४. 'कतम आत्मे'ति इत्यत्र मन्त्रे परमते आत्मपदेन जीवग्रहणमुपगतं एव सति 'आत्मा वा इदमेक एवाग्र आसीत् स आत्मा तत्त्वमसी'त्यादौ आत्मपदस्य प्रत्यगात्मपरत्वसंभवात् आत्मशब्दस्य परमात्मनि रूढिरिति वदतां विरोधः। 'कतम आत्मे'त्यत्र गुणोपसंहारपादे विचार्यते—बृहदारण्यके 'कतम आत्मे'त्यादिना जीवमुपक्रम्य तस्यासंगत्वनिर्णयपूर्वकमुपसंहारे 'स वा एष महानज आत्माऽजरोऽमरो ब्रह्म'इति तस्य ब्रह्माभेदेनोपसंहार. श्रूयते। छान्दोग्ये तु 'सदेव सोम्येदमग्र आसीदि'ति सद्रूपेण ब्रह्मोपक्रम्य तस्य 'स आत्मा तत्त्वमसि'इति जीवाभेद उच्यते। तत्रोभयोः उपनिषदोः ऐकार्थ्यं विद्याभेदो वेति सन्देहे—अनयोरतुल्यार्थत्वं बृहदारण्यके आत्मशब्देनोपक्रमात् आत्मतत्त्वोपदेशः छान्दोग्ये तु उपक्रमे ब्रह्माश्रवणात्, उपसंहारे ब्रह्माभेदोपासन इति पूर्वपक्षे सिद्धान्तः—'आत्मगृहीतिरितरवदुत्तरात्'। छान्दोग्येऽपि आत्मनो ब्रह्माभेदोपदेशो ग्राह्य.। उत्तरात्—उपसंहरात् तदपि कुतः अवधारणात् 'येनाश्रुतमि'त्यादिना एकविज्ञानेन सर्वविज्ञानवधारणात्। इदं हि अवधारणं सच्छब्देनात्मपरिग्रहेऽवकल्पते। अन्यथा आत्मापरिग्रहे एकविज्ञानेन सर्वविज्ञानं नोपपादितं स्यात् आत्मनोऽन्यगिष्टत्वादिति। ३० ३५

स वा अयं पुरुषो जायमानः शरीरमभिसम्पद्यमानः पाप्मभिः
संसृज्यते स उत्क्रामन्म्रियमाणः पाप्मनो विजहाति ॥८॥

तस्य वा एतस्य पुरुषस्य द्वे एव स्थाने भवत इदं च परलोकस्थानं च संध्यं तृतीयं-स्वप्नस्थानं तस्मिन्संध्ये स्थाने तिष्ठन्नेते उभे स्थाने पश्यतीदं च परलोकस्थानं च। ५ अथ यथाक्रमोऽयं परलोकस्थाने भवति तमाक्रममाक्रम्योभयान्पाप्मन आनन्दांश्च पश्यति स यत्र प्रस्वपित्यस्य लोकस्य सर्वावतो मात्रामपादाय स्वयं विहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपित्यत्रायं पुरुषः स्वयंज्योतिर्भवति ॥९॥

यथैवेहैकस्मिन्देहे स्वप्नो भूत्वा मृत्यो रूपाणि कार्यकरणान्यतिक्रम्य स्वप्ने स्व आत्मज्योतिष्यास्त एवं स वै प्रकृतः पुरुषोऽयं जायमानः। कथ जायमान इत्युच्यते—शरीरं देहेन्द्रियसंघातमभिसंपद्यमानः शरीर आत्मभाव- १० मापद्यमान इत्यर्थः। पाप्मभिः पाप्मसमवायिभिर्धर्माधर्माश्रयैः कार्यकरणैरित्यर्थः, संसृज्यते संयुज्यते। स एवोत्क्रामञ्छरीरान्तरमूर्ध्वं क्रामन्गच्छन्म्रियमाण इत्येतस्य व्याख्यानमुत्क्रामन्निति। तानेव संश्लिष्टान्पाप्म-रूपान्कार्यकरणलक्षणान्विजहाति तैर्वियुज्यते तान्परित्यजति। यथाऽय स्वप्नजाग्रद्वृत्त्योर्वर्तमान एवैकस्मिन्देहे पाप्म-रूपकार्यकरणोपादानपरित्यागाभ्यामनवरतं संचरति धिया समानः सन्, तथा सोऽयं पुरुष उभाविहलोकपरलोकौ जन्ममरणाभ्यां कार्यकरणोपादानपरित्यागावनवरतं प्रतिपद्यमान आ संसारमोक्षात्संचरति। तस्मात्सिद्ध- १५ मस्याऽऽत्मज्योतिषोऽन्यत्वं कार्यकरणरूपेभ्यः पाप्मभ्यः संयोगवियोगाभ्याम्। न हि तद्धर्मत्वे सति तैरेव संयोगो वियोगो वा युक्तः ॥८॥

ननु न स्तोऽस्योभौ लोकौ यौ जन्ममरणाभ्यामनुक्रमेण संचरति स्वप्नजागरिते इव। स्वप्नजागरिते तु प्रत्यक्षमवगम्येते न त्विहलोकपरलोकौ केनचित्प्रमाणेन। तस्मादेते एव स्वप्नजागरिते इहलोकपरलोकाविति। उच्यते—तस्यैतस्य पुरुषस्य वै द्वे एव स्थाने भवतो न तृतीयं चतुर्थं वा। के ते। इदं च यत्प्रतिपन्नं वर्तमानं जन्म २० शरीरेन्द्रियविषयवेदनाविशिष्टं स्थानं प्रत्यक्षतोऽनुभूयमानम्। परलोक एव स्थानं परलोकस्थानम्। तच्च शरीरादि-वियोगोत्तरकालानुभाव्यम्। ननु स्वप्नोऽपि परलोकस्तथा च सति द्वे एवेत्यवधारणमयुक्तम्। न। कथं तर्हि।

प्रसङ्गागतं परपक्षं निराकृत्य श्रुतिव्याख्यानमेवानुवर्तयन्नुत्तरवाक्यतात्पर्यमाह—यथेति। एवमात्मा देहभेदेऽपि वर्तमानं जन्म त्यजञ्जन्मान्तरं चोपाददानः कार्यकरणान्यतिक्रामतीति शेषः। अतः स्वप्नजागरितसंचाराद्देहाद्व्यतिरेक-वदिहलोकपरलोकसंचारोक्त्याऽपि तदतिरेकस्तस्योच्यतेऽनन्तरवाक्येनेत्यर्थः। संप्रत्युत्तरं वाक्यं गृहीत्वा व्याकरोति— २५ स वा इत्यादिना। पाप्मशब्दस्य लक्षणया तत्कार्यविषयत्वं दर्शयति—पाप्मसमवायिभिरिति। पाप्मशब्दस्य पापवाचित्वेऽपि कार्यसाम्याद्धर्मेऽपि वृत्तिं सूचयति—धर्माधर्मेति। उक्तमर्थं दृष्टान्तत्वेनानुवदति—यथेति। अवस्थाद्वयसंचारस्य लोकद्वयसंचारं दार्ष्टान्तिकमाह—तथेति। इहलोकपरलोकावनवरतं संचरतीति सम्बन्धः। संचरणप्रकारं प्रकटयति—जन्मेति। जन्मना कार्यकरणयोरुपादानं मरणेन च तयोस्त्यागमविच्छेदेन लभमानो मोक्षादर्वागनवरतं संचरन्दुःखी भवतीत्यर्थः। स वा इत्यादिवाक्यतात्पर्यमुपसंहरति—तस्मादिति। तच्छब्दार्थमेव ३० स्फुटयति—संयोगेति। कथमेतावता तेभ्योऽन्यत्वं तत्राऽऽह—न हीति। स्वाभाविकस्य हि धर्मस्य सति स्वभावे कुतः संयोगवियोगौ वह्न्यौष्ण्यादिष्वदर्शनात्कार्यकरणयोश्च संयोगविभागवशादस्वाभाविकत्वे सिद्धमात्मनस्तदन्यत्व-मित्यर्थः ॥८॥

तस्येत्यादिवाक्यस्य व्यावर्त्यां शङ्कामाह—नन्विति। अवस्थाद्वयवल्लोकद्वयसिद्धिरित्याशङ्क्याऽऽह—स्वप्नेति। कथं तर्हि लोकद्वयप्रसिद्धिरत आह—तस्मादिति। तत्रोत्तरत्वेनोत्तर वाक्यमुत्थाप्य व्याकरोति—उच्यत इति। ३५ स्थानद्वयप्रसिद्धिद्योतनार्थो वैशब्दः। अवधारणं विवृणोति—नेति। वेदना सुखदुःखादिलक्षणा। आगमस्य परलोक-साधकत्वमभिप्रेत्याऽऽह—तच्चेति। अवधारणमाक्षिपति—नन्विति। तस्य स्थानान्तरत्वं दूषयति—नेति। स्वप्नस्य

संध्यं तत् । इहलोकपरलोकयोर्यः संधिस्तस्मिन्भवं संध्यं यत्तृतीयं तत्स्वप्नस्थानम् । तेन स्थानद्वित्वावधारणम् । न हि ग्रामयोः संधिस्तावेव ग्रामावपेक्ष्य तृतीयत्वपरिगणनमर्हति । कथं पुनस्तस्य परलोकस्थानस्यास्तित्वमवगम्यते यदपेक्ष्य स्वप्नस्थानं संध्यं भवेत् । यतस्तस्मिन्संध्ये स्वप्नस्थाने तिष्ठन्भवन्वर्तमान एते उभे स्थाने पश्यति । के ते उभे । इदं च परलोकस्थानं च । तस्मात्स्तः स्वप्नजागरितव्यतिरेकेणोभौ लोकौ यो धिया समानः सन्नुसंचरति जन्ममरणसंतानप्रबन्धेन । ५

कथं पुनः स्वप्ने स्थितः सन्नुभौ लोकौ पश्यति । किमाश्रयः केन विधिनेति । उच्यते—अथ कथं पश्यतीति शृणु । यथाक्रम अक्रामत्यनेनेत्याक्रम आश्रयोऽवष्टम्भ इत्यर्थः । यादृश आक्रमोऽस्य सोऽयं यथाक्रमः । अयं पुरुषः परलोकस्थाने प्रतिपत्तव्ये निमित्ते यथाक्रमो भवति यादृशेन परलोकप्रतिपत्तिसाधनेन विद्याकर्मपूर्वप्रज्ञालक्षणेन युक्तो भवतीत्यर्थः । तमाक्रमं परलोकस्थानायोन्मुखीभूतं प्राप्ताङ्कुरीभावमिव बीजं तमाक्रम्यावष्टभ्याऽऽश्रित्योभयान्पश्यति बहुवचनं धर्माधर्मफलानेकत्वादुभयानुभयप्रकारानित्यर्थः । कांस्तान्पाप्मनः पापफलानि । न तु पुनः १० साक्षादेव पाप्मनां दर्शनं संभवति तस्मात्पापफलानि दुःखानीत्यर्थः । आनन्दांश्च धर्मफलानि सुखानीत्येतत् । तानुभयान्पाप्मन आनन्दांश्च पश्यति जन्मान्तरदृष्टवासनामयान् । यानि च प्रतिपत्तव्यजन्मविषयाणि क्षुद्रधर्माधर्मफलानि धर्माधर्मप्रयुक्तो देवतानुग्रहाद्वा पश्यति ।

तत्कथमवगम्यते परलोकस्थानसंबन्धिपाप्मानन्ददर्शनं स्वप्न इति । उच्यते—यस्मादिह जन्मन्यननुभाव्यमपि पश्यति बहु । न च स्वप्नो नामापूर्वं दर्शनम् । पूर्वदृष्टस्मृतिर्हि स्वप्नः प्रायेण । तेन स्वप्नजागरितस्थान- १५ व्यतिरेकेण स्त उभौ लोकौ ।

यदादित्यादिबाह्यज्योतिषामभावेऽयं कार्यकरणसंघातः पुरुषो येन व्यतिरिक्तेनाऽऽत्मना ज्योतिषा व्यवहरतीत्युक्तम् तदेव नास्ति । यदाऽऽदित्यादिज्योतिषामभावगमनं यत्रेदं विविक्तं स्वयंज्योतिरुपलभ्येत । येन

लोकद्वयातिरिक्तस्थानत्वाभावे कथं तृतीयत्वप्रसिद्धिरित्याह—कथमिति । तस्य संध्यत्वाच्च स्थानान्तरत्वमित्युत्तरमाह—संध्यं तदिति । संध्यत्वं व्युत्पादयति—इहेति । यत्स्वप्नस्थानं तृतीयं मन्यसे तदिहलोकपरलोकयोः संध्यमिति २० संबन्धः । अस्य संध्यत्वे फलितमाह—तेनेति । पूरणप्रत्ययश्रुत्या स्थानान्तरत्वमेव स्वप्नस्य किं न स्यादित्याशङ्क्य प्रथमश्रुतसंध्यशब्दविरोधान्मैवमित्याह—न हीति । परलोकास्तित्वे प्रमाणान्तरजिज्ञासया पृच्छति—कथमिति । प्रत्यक्षं प्रमाणयन्नुत्तरमाह—यत इत्यादिना ।

स्वप्नप्रत्यक्ष परलोकास्तित्वे प्रमाणमित्युक्तं तदेवोत्तरवाक्येन स्फुटयितुं पृच्छति—कथमिति । कथंशब्दार्थमेव प्रकटयति—किमित्यादिना । उत्तरवाक्यमुत्तरत्वेनोत्थापयति—उच्यत इति । तत्राथशब्दमुक्तप्रश्नार्थतया २५ व्याकरोति—अथेति । उत्तरभागमुत्तरत्वेन व्याचष्टे—शृण्विति । यदुक्तं किमाश्रय इति तत्राऽऽह—यथाक्रम इति । यदुक्तं केन विधिनेति तत्राऽऽह—तमाक्रममिति । पाप्मशब्दस्य यथाश्रुतार्थत्वे संभवति किमिति फलविषयत्वं तत्राऽऽह—नत्विति । साक्षादागमादृते प्रत्यक्षेणेति यावत् । पाप्मनामेव साक्षाद्दर्शनासंभवस्तच्छब्दार्थः ! कथ पुनराद्ये वयसि पाप्मनामानन्दाना च स्वप्ने दर्शनं तत्राऽऽह—जन्मान्तरेति । यद्यपि मध्यमे वयसि करणपाटवादैहिकवासनया स्वप्नो दृश्यते तथाऽपि कथमन्तिमे वयसि स्वप्नदर्शनं तदाह—यानि चेति । फलाना क्षुद्रत्वमत्र लेशतो भुक्तत्वम् । ३० यानीत्युपक्रमात्तानीत्युपसंख्यातव्यम् ।

ऐहिकवासनावशादैहिकानामेव पाप्मनामानन्दाना च स्वप्ने दर्शनसंभवान्न स्वप्नप्रत्यक्षं परलोकसाधकमिति शङ्कते—तत्कथमिति । परिहरति—उच्यत इति । यद्यपि स्वप्ने मनुष्याणामिन्द्रादिभावोऽननुभूतोऽपि भाति तथाऽपि तदपूर्वमेव दर्शनमित्याशङ्क्याऽऽह—न चेति । स्वप्नधिया भाविजन्मभाविनोऽपि स्वप्ने दर्शनात्प्रायेणेत्युक्तम् । न च तदपूर्वदर्शनमपि सम्यग्ज्ञानमुत्थानप्रत्ययबाधात् । न चैवं स्वप्नधिया भाविजन्मासिद्धिर्यथाज्ञानमर्थाङ्गीकारादिति ३५ भावः । प्रमाणफलमुपसंहरति—तेनेति ।

स यत्रेत्यादिवाक्यस्य व्यवहितेन संबन्धं वक्तु वृत्तमनूद्याऽऽक्षिपति—यदित्यादिना । बाह्यज्योतिरभावे सत्ययं पुरुष. कार्यकरणसङ्घातो येन सङ्घातातिरिक्तेनाऽऽत्मज्योतिषा गमनागमनादि निर्वर्तयति तदात्मज्योतिरस्तीति यदुक्तमित्यनुवादार्थः । विशिष्टस्थानाभावं वक्तुं विशेषणाभाव तावद्दर्शयति—तदेवेति । आदित्यादिज्योतिरभावविशिष्ट-

सर्वदैवायं कार्यकरणसंघातः संसृष्ट एवोपलभ्येत। तस्मादसत्समोऽसन्नेव वा स्वेन विविक्तस्वभावेन ज्योतीरूपेणाऽऽत्मेति।

अथ क्वचिद्विविक्तः स्वेन ज्योतीरूपेणोपलभ्येत बाह्याध्यात्मिकभूतभौतिकसंसर्गशून्यस्ततो यथोक्तं सर्वं भविष्यतीत्येतदर्थमाह—स यः प्रकृत आत्मा यत्र यस्मिन्काले प्रस्वपिति प्रकर्षेण स्वापमनुभवति तदा किमुपादानः
५ केन विधिना स्वपिति संध्यं स्थानं प्रतिपद्यत इत्युच्यते। अस्य दृष्टस्य लोकस्य जागरितलक्षणस्य सर्वावतः सर्वं भवतीति सर्वावानयं लोकः कार्यकरणसंघातो विषयवेदनासंयुक्तः। सर्वावत्त्वमस्य व्याख्यातमन्नत्रयप्रकरणेऽथो अयं वा आत्मेत्यादिना। सर्वा वा भूतभौतिकमात्रा अस्य संसर्गकारणभूता विद्यन्त इति सर्ववान्सर्ववानेव सर्वावांस्तस्य सर्वावतो मात्रामेकदेशमवयवमपादायापच्छिद्याऽऽदाय गृहीत्वा दृष्टजन्मवासनावासितः सन्नित्यर्थः। स्वयमात्मनैव विहत्य देहं पातयित्वा निःसंबोधमापाद्य। जागरिते ह्यादित्यादीनां चक्षुरादिष्वनुग्रहो देहव्यव-
१० हारार्थः। देहव्यवहारश्चाऽऽत्मनो धर्माधर्मफलोपभोगप्रयुक्तस्तद्धर्माधर्मफलोपभोगोपरमणमस्मिन्देह आत्मकर्मोपरमकृतमित्यात्माऽस्य विहन्तेत्युच्यते। स्वयं निर्माय निर्माणं कृत्वा वासनामयं स्वप्नदेहं मायामयमिव। निर्माणमपि तत्कर्मापेक्षत्वात्स्वयंकर्तृकमुच्यते। स्वेनाऽऽत्मीयेन भासा मात्रोपादानलक्षणेन भासा दीप्त्या प्रकाशेन सर्ववासनात्मकेनान्तःकरणवृत्तिप्रकाशेनेत्यर्थः। सा हि तत्र विषयभूता सर्ववासनामयी प्रकाशते। सा तत्र स्वयं भा उच्यते। तेन स्वेन भासा विषयभूतेन स्वेन च ज्योतिषा तद्विषयिणा विविक्तरूपेणालुप्तदृक्स्वभावेन तद्भाव्यं
१५ वासनात्मकं विषयीकुर्वन्प्रस्वपिति। यदेवं वर्तनं तत्प्रस्वपितीत्युच्यते। अत्रैतस्यामवस्थायामेतस्मिन्कालेऽयं पुरुष आत्मा स्वयमेव विविक्तज्योतिर्भवति। बाह्याध्यात्मिकभूतभौतिकसंसर्गरहितं ज्योतिर्भवति।

नन्वस्य लोकस्य मात्रोपादानं कृतं कथं तस्मिन्सत्यत्रायं पुरुषः स्वयंज्योतिर्भवतीत्युच्यते। नैष दोषः। विषयभूतमेव हि तत्। तेनैव चात्रायं पुरुषः स्वयं ज्योतिर्दर्शयितुं शक्यः। न त्वन्यथाऽसति विषये कस्मिंश्चित्सुषुप्ति-

स्थानं यत्रेत्युक्तं तदेव स्थानं नास्ति विशेषणाभावादिति शेषः। यथोक्तस्थानाभावे हेतुमाह—येनेति। संसृष्टो
२० बाह्यैर्ज्योतिर्भिरिति शेषः। व्यवहारभूमौ बाह्यज्योतिरभावाभावे फलितमाह—तस्मादिति।

उत्तरग्रन्थमुत्तरत्वेनावतारयति—अथेत्यादिना। यथोक्तं सर्वव्यतिरिक्तत्वं स्वयंज्योतिष्ट्वमित्यादि। आह स्वप्नं प्रस्तौतीति यावत्। उपादानशब्दः परिग्रहविषयः। कथमस्य सर्वावत्त्वं तदाह—सर्वावत्त्वमिति। संसर्गकारणभूताः सह्याध्यात्मादिविभागेनेति शेष.। किमुपादान इत्यस्योत्तरमुक्त्वा केन विधिनेत्यस्योत्तरमाह—स्वयमित्यादिना। आपाद्य प्रस्वपितीत्युत्तरत्र संबन्धः। कथं पुनरात्मनो देहविहन्तृत्वं जाग्रद्धेतुकर्मफलोपभोगोपरमणाद्धि स विहन्यते
२५ तत्राऽऽह—जागरिते हीत्यादिना। निर्माणविषयं दर्शयति—वासनामयमिति। यथा मायावी मायामयं देहं निर्मिमीते तद्वदित्याह—मायामयमिवेति। कथं पुनरात्मनो यथोक्तदेहनिर्माणकर्तृत्वं कर्मकृतत्वात्तन्निर्माणस्येत्याशङ्क्याऽऽह—निर्माणमपीति। स्वेन भासेत्यत्रेत्थंभावे तृतीया। करणे तृतीयां व्यावर्तयति—सा हीति। तत्रेति स्वप्नोक्तिः यथोक्तान्तःकरणवृत्तेर्विषयत्वेन प्रकाशमानत्वेऽपि स्वभासे भवतु करणत्वमित्याशङ्क्याऽऽह—सा तत्रेति। स्वेन ज्योतिषेति कर्तरि तृतीया। स्वशब्दोऽत्राऽऽत्मविषयः। कोऽयं प्रस्वापो नाम तत्राऽऽह—यदेवमिति। विविक्तविशेषणं
३० विवृणोति—बाह्येति।

स्वप्ने स्वयं ज्योतिरात्मेत्युक्तमाक्षिपति—नन्वस्येति। वासनापरिग्रहस्य मनोवृत्तिरूपस्य विषयतया विषयित्वाभावादविरुद्धमात्मनः स्वप्ने स्वयंज्योतिष्ट्वमिति समाधत्ते—नैष दोष इति। कुतो वासनोपादानस्य विषयत्वमित्याशङ्क्य स्वयंज्योतिष्ट्वश्रुतिसामर्थ्यादित्याह—तेनेति। मात्रादानस्य विषयत्वेनेति यावत्। तदेव व्यतिरेकमुखेनाऽऽह—नन्विति। यथा सुषुप्तिकाले व्यक्तस्य विषयस्याभावे स्वयंज्योतिष्ट्वश्रुत्या मात्रादानस्य विषयत्वं

---

३५　१. अन्नत्रयप्रकरणे अथो अयं वा इत्यत्र गृहस्थः सकलप्राणिनामुपजीव्य इत्युक्तं ततश्च ये उपकाराः येभ्यश्च क्रियन्ते तत्सर्वविषयकसंस्कारवानित्यर्थः।

२. मात्राणामुपादानं स्वप्रकाशेनेत्यर्थः।

३. स्वेन भासा अन्तःकरणरूपप्रकाशेन विषयभूतेन सह प्रस्वपिति स्वेन ज्योतिषा चैतन्यज्योतिषा तत्कर्तृकः स्वाप इत्यर्थः।

**न[1] तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान्रथयोगान्पथः सृजते न तत्रानन्दा मुदः प्रमुदो भवन्त्यथानन्दान्मुदः प्रमुदः सृजते न तत्र वेशान्ताः पुष्करिण्यः स्रवन्त्यो भवन्त्यथ वेशान्तान्पुष्करिणीः स्रवन्तीः सृजते स हि कर्ता ॥१०॥**

काल इव। यदा पुनः सा भा वासनात्मिका विषयभूतोपलभ्यमाना भवति तदाऽसिः कोशादिव निष्कृष्टः सर्वसंसर्गरहितं चक्षुरादिकार्यकरणव्यावृत्तस्वरूपमलुप्तदृगात्मज्योतिः स्वेन रूपेणावभासयद्गृह्यते। तेनात्रायं पुरुषः स्वयंज्योतिर्भवतीति सिद्धम् ॥९॥ 　५

नन्वत्र कथं पुरुषः स्वयंज्योतिर्येन जागरित इव ग्राह्यग्राहकादिलक्षणः सर्वो व्यवहारो दृश्यते। चक्षुराद्यनुग्राहकाश्चाऽऽदित्याद्या लोकास्तथैव दृश्यन्ते यथा जागरिते। तत्र कथं विशेषावधारणं क्रियतेऽत्रायं पुरुषः स्वयं ज्योतिर्भवतीति। उच्यते—वैलक्षण्यात्स्वप्नदर्शनस्य। जागरिते हीन्द्रियबुद्धिमनआलोकादिव्यापारसंकीर्णमात्मज्योतिः। इह तु स्वप्न इन्द्रियाभावात्तदनुग्राहकादित्याद्यालोकाभावाच्च विविक्तं केवलं भवति। तस्माद्विलक्षणम्। ननु तथैव विषया उपलभ्यन्ते स्वप्नेऽपि यथा जागरिते तत्र कथमिन्द्रियाभावाद्वैलक्षण्यमुच्यते इति। शृणु— 　१०

न तत्र विषयाः स्वप्ने रथादिलक्षणाः। तथा न रथयोगा रथेषु युज्यन्त इति रथयोगा अश्वादयस्तत्र न विद्यन्ते। न च पन्थानो रथमार्गा भवन्ति। अथ रथान्रथयोगान्पथश्च सृजते स्वयम्।

कथं पुनः सृजते रथादिसाधनानां वृक्षादीनामभावे। उच्यते—ननूक्तमस्य लोकस्य सर्वावतो मात्रामपादाय स्वयं विहत्य स्वयं निर्मायेत्यन्तःकरणवृत्तिरस्य लोकस्य वासना मात्रा तामपादाय रथादिवासनारूपान्तःकरणवृत्तिस्तदुपलब्धिनिमित्तेन कर्मणा चोद्यमाना दृश्यत्वेन व्यवतिष्ठते तदुच्यते स्वयं निर्मायेति। तदेवाऽऽह— 　१५
रथादीन्सृजत इति। नतु तत्र करणं वा करणानुग्राहकाणि वाऽऽदित्यादिज्योतीषि तदवभास्या वा रथादयो विषया विद्यन्ते। तद्वासनामात्रं तु केवलं तदुपलब्धिकर्मनिमित्तचोदितोद्भूतान्तः[2]करणवृत्त्याश्रयं दृश्यते। तद्यस्य ज्योतिषो दृश्यतेऽलुप्तदृशस्तदात्मज्योतिरत्र केवलमसिरिव कोशाद्विविक्तम्।

प्रकाशितमित्यर्थः। भवतु स्वप्ने वासनादानस्य विषयत्वं तथाऽपि कथं स्वयंज्योतिरात्मा शक्यते विविच्य दर्शयितुमित्याशङ्क्याऽऽह—यदा पुनरिति। अवभासयदवभास्यं वासनात्मकमन्तःकरणमिति शेषः। स्वप्नावस्थायामात्मनोऽवभासकान्तराभावे फलितमाह—तेनेति ॥९॥ 　२०

यदुक्तं स्वप्ने स्वयज्योतिरात्मेति तत्प्रकान्तरेणाऽऽक्षिपति—नन्विति। अवस्थाद्वये विशेषाभावकृतं चोद्यं दूषयति—उच्यत इति। वैलक्षण्यं स्फुटयति—जागरिते हीति। मनस्तु स्वप्ने सदपि विषयत्वान्न स्वयंज्योतिष्ट्वं विघातीति भावः। उक्त वैलक्षण्यं प्रतोतिमाश्रित्याऽऽक्षिपति—नन्विति। न तत्रेत्यादिवाक्यं व्याकुर्वन्नुत्तरमाह—शृण्विति। प्रतीतिं घटयति—अथेति। 　२५

रथादिसृष्टिमाक्षिपति—कथं पुनरिति। वासनामयी सृष्टिः श्लिष्टेत्युत्तरमाह—उच्यत इति। तदुपलब्धिनिमित्तेनेत्यत्र तच्छब्देन वासनात्मिका मनोवृत्तिरेवोक्ता। उक्तमेव प्रपञ्चयति—नत्वित्यादिना। तदुपलब्धिर्वासनोपलब्धिस्तत्र यत्कर्म निमित्तं तेन चोदिता योद्भूताऽन्तःकरणवृत्तिर्ग्राहकावस्था तदाश्रयं तदात्मकं तद्वासनारूपं दृश्यत इति योजना। तथाऽपि कथमात्मज्योतिः स्वप्ने केवलं सिध्यति तत्राऽऽह—तद्यस्येति। यथा कोशादसिर्विविक्तो भवति तथा दृश्याया बुद्धेर्विविक्तमात्मज्योतिरिति कैवल्यं साधयति—असिरिवेति। 　३०

---

१. अत्र ब्रह्मसूत्रे सन्ध्ये सृष्टिराह हि ( ३-२-१ ) इत्यत्र स्वाप्नरथादीनां पारमार्थिकत्वं वा उत मायामयत्वमिति सन्देहे पारमार्थिकमिति प्राप्तं तथा हि श्रुतिराह–'रथान् रथयोगान् पथ. सृजते' इति। अपि च 'स्वप्ने आत्मानं निर्मातारमामनन्ति य एषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः' इति प्राज्ञनिर्मातृत्ववचनाच्च तस्य पारमार्थिकत्व वक्तव्यं सृष्टिप्रकरणोक्ताकाशादिवत् इति चेन्न। मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्। सन्ध्ये स्वप्ने सृष्टिः मायामयी अपारमार्थिकीत्यर्थः कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्। कार्त्स्न्यं देशकालनिमित्तसंपत्तिरबाधश्च नैते स्वाप्निकेषु संभवन्ति रथादिवस्तूना देहान्तरवस्थाने प्रदेशाभावात् प्रबोधानन्तरं बाधाच्च तस्मात् मायामयत्वम्। न चाद्भुतरूपत्वं तत् मायाशब्दस्य 'माया ह्येषा मया सृष्टा' इति भगवद्वचने मिथ्यार्थविषये प्रयोगाच्च। 　३५

२. अन्त.करणवृत्त्याश्रयात् तादृशवृत्तिजन्यात्, सुप्तान् वासनानामतीन्द्रियत्वात् तद्विषयाः पदार्थाः सुप्ता इव स्वेन रूपेणातीन्द्रियाः तानवभासयति।

तदेते श्लोका भवन्ति । स्वप्नेन शारीरमभिप्रहत्यासुप्तः सुप्तानभि-
चाकशीति । शुक्रमादाय पुनरैति स्थानँ हिरण्मयः पुरुष एकहँसः ॥११॥

प्राणेन रक्षन्नवरं कुलायं बहिष्कुलायादमृतश्चरित्वा ।
स ईयतेऽमृतो यत्र कामँ हिरण्मयः पुरुष एकहँसः ॥१२॥

५ तथा न तत्राऽऽनन्दाः सुखविशेषा मुदो हर्षाः पुत्रादिलाभनिमित्ताः प्रमुदस्त एव प्रकर्षोपेताः । अथ चाऽऽनन्दादीन्सृजते । तथा न तत्र वेशान्ताः पल्वलाः पुष्करिण्यस्तडागाः स्रवन्त्यो नद्यो भवन्ति । अथ वेशान्तादीन्सृजते वासनामात्ररूपान् । यस्मात्स हि कर्ता । तद्वासनाश्रयचित्तवृत्त्युद्भवनिमित्तकर्महेतुत्वेनेत्यवोचाम । तस्य कर्तृत्वं न तु साक्षादेव तत्र क्रिया संभवति साधनाभावात् । न हि कारकमन्तरेण क्रिया संभवति । न च तत्र हस्तपादादीनि क्रियाकारकाणि संभवन्ति । यत्र तु तानि विद्यन्ते जागरिते तत्राऽऽत्मज्योतिरवभासितैः कार्यकरणै-
१० रथादिवासनाश्रयान्तःकरणवृत्त्युद्भवनिमित्तं कर्म निर्वर्त्यते तेनोच्यते स हि कर्तेति । तदुक्तमात्मनैवायं ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुत इति । तत्रापि न परमार्थतः स्वतः कर्तृत्वं चैतन्यज्योतिषोऽवभासकत्वव्यतिरेकेण । यच्चैतन्यात्मज्योतिषाऽन्तःकरणद्वारेणावभासयति कार्यकरणानि तदवभासितानि कर्मसु व्याप्रियन्ते कार्यकरणानि तत्र कर्तृत्वमुपचर्यत आत्मनः । यदुक्तं ध्यायतीव लेलायतीवेति तदेवानूद्यते । स हि कर्तेतीह हेत्वर्थम् ॥१०॥

तदेत एतस्मिन्नुक्तेऽर्थे एते श्लोका मन्त्रा भवन्ति । स्वप्नेन स्वप्नभावेन शारीरं शरीरमभिहत्य निश्चेष्टमा-
१५ पाद्यासुप्तः स्वयमलुप्तदृगादिशक्तिस्वाभाव्यात्सुप्तान्वासनाकारोद्भूतानन्तःकरणवृत्त्याश्रयान्बाह्याध्यात्मिकान्सर्वानिव भावान्स्वेन रूपेण प्रत्यस्तमितान्सुप्तानभिचाकशीत्यलुप्तयाऽऽत्मदृष्ट्या पश्यत्यवभासतीत्यर्थः । शुक्रं शुद्धं ज्योतिष्मदिन्द्रियमात्रारूपमादाय गृहीत्वा पुनः कर्मणे जागरितस्थानमैति आगच्छति हिरण्मयो हिरण्मय इव चैतन्यज्योतिःस्वभावः पुरुष एकहंस एक इव हन्तीत्येकहंसः । एको जाग्रत्स्वप्नेहलोकपरलोकादीन् गच्छतीत्येकहंसः ॥११॥

तथा प्राणेन पञ्चवृत्तिना रक्षन्परिपालयन्नन्यथा मृतभ्रान्तिः स्यादवरं निकृष्टमनेकाशुचिसंघातत्वादत्यन्त-

२० तथा रथाद्यभाववदिति यावत् । सुखान्येव विशिष्यन्त इति विशेषाः सुखसामान्यानीत्यर्थः । तथेत्यानन्दाद्यभावो दृष्टान्तितः । अल्पीयांसि सरांसि पल्वलशब्देनोच्यन्ते । स हि कर्तेत्यत्र हिशब्दार्थो यस्मादित्युक्तस्तस्मात्सृजतीति शेषः । कुतोऽस्य कर्तृत्वं सहकार्यभावादित्याशङ्क्याऽऽह—तद्वासनेति । तच्छब्देन वेशान्तादिग्रहणम् । तदीयवासनाधारश्चित्तपरिणामस्तेनोद्भवति यत्कर्म तस्य सृज्यमाननिदानत्वेनेति यावत् । मुख्यं कर्तृत्वं वारयति—नन्विति । तत्रेति स्वप्नोक्तिः । साधनाभावेऽपि स्वप्ने क्रिया किं न स्यादित्याशङ्क्याऽऽह—नहीति । तर्हि स्वप्ने कारकाण्यपि भविष्यन्ति
२५ नेत्याह—न चेति । तर्हि पूर्वोक्तमपि कर्तृत्वं कथमिति चेत्तत्राऽऽह—यत्र त्विति । उक्तेऽर्थे वाक्योपक्रममनुकूलयति—तदुक्तमिति । उपक्रमे मुख्यं कर्तृत्वमिह त्वौपचारिकमिति विशेषमाशङ्क्याऽऽह—तत्रापीति । परमार्थतश्चैतन्यज्योतिषो व्यापारवदुपाध्यवभासकत्वव्यतिरेकेण स्वतो न कर्तृत्वं वाक्योपक्रमेऽपि विवक्षितमित्यर्थः । आत्मनो वाक्योपक्रमे कर्तृत्वमौपचारिकमित्युपसंहरति—यदिति । स हि कर्तेत्यौपचारिकं कर्तृत्वमित्युच्यते चेत्तस्य ध्यायतीवेत्यादिनोक्तत्वात्पुनरुक्तिरित्याशङ्क्याऽऽह—यदुक्तमिति । अनुवादे प्रयोजनमाह—हेत्वर्थमिति । स्वप्ने रथादिसृष्टाविति
३० शेषः ॥१०॥

तदेते श्लोका भवन्तीत्येतत्प्रतीकं गृहीत्वा व्याचष्टे—तदेत इति । उक्तोऽर्थः स्वयंज्योतिष्ट्वादिः शारीरमिति स्वार्थे वृद्धिः स्वयमसुप्तत्वे हेतुमाह—अलुप्तेति । व्याख्येयं पदमादाय व्याचष्टे—सुप्तानित्यादिना । उक्तमनूद्य पदान्तरमवतार्य व्याकरोति—सुप्तानभिचाकशीतीति ॥११॥

तथाशब्दः स्वप्नगतविशेषसमुच्चयार्थः । किमिति स्वप्ने प्राणेन शरीरमात्मा पालयति तत्राऽऽह—अन्यथेति ।

३५ १. एकहंसः एक एव हन्ति गच्छति अवस्थाः ।
२. बहिष्कुलायात् शरीरात् बहिरिवेत्यर्थः ।
३. तत्रापि जाग्रत्कालेऽपि । अन्तःकरणवृत्त्याश्रयान् तद्विषयान् स्वाप्निकान् बाह्यांश्चाभिचाकशीति ।
४. इन्द्रियमात्रारूपं—इन्द्रियजन्यज्ञानसंस्काररूपम् । इन्द्रियमात्राः इन्द्रियाणां सूक्ष्मांशाः ।

स्वप्नान्त उच्चावचमीयमानो रूपाणि देवः कुरुते बहूनि ।
उतेव स्त्रीभिः सह मोदमानो जक्षदुतेवापि भयानि पश्यन् ॥१३॥

आराममस्य पश्यन्ति न तं पश्यति कश्चनेति । तं नाऽऽयतं बोधयेदित्याहुः ।
दुर्भिषज्यं हास्मै भवति यमेष न प्रतिपद्यते । अथो खल्वाहुर्जागरितदेश
एवास्यैष इति यानि ह्येव जाग्रत्पश्यति तानि सुप्त इत्यत्रायं पुरुषः ५
स्वयंज्योतिर्भवति सोऽहं भगवते सहस्रं ददाम्यत ऊर्ध्वं विमोक्षाय ब्रूहीति ॥१४॥

बीभत्सं कुलायं नीडं शरीरं स्वयं तु बहिस्तस्मात्कुलायाच्चरित्वा । यद्यपि शरीरस्थ एव स्वप्नं पश्यति तथाऽपि तत्संबन्धाभावात्तत्स्थ इवाऽऽकाशो बहिश्चरित्वेत्युच्य़ते । अमृतः स्वयममरणधर्मेयते गच्छति यत्र कामं यत्र यत्र कामी विषयेषूद्भूतवृत्तिर्भवति तं तं कामं वासनारूपेणोद्भूतं गच्छति ॥१२॥

किंच स्वप्नान्ते स्वप्नस्थान उच्चावचमुच्चं देवादिभावमवचं तिर्यगादिभावं निकृष्टं तदुच्चावचमीयमानो १० गम्यमानः प्राप्नुवन्रूपाणि देवो द्योतनावान्कुरुते निर्वर्तयति वासनारूपाणि बहून्यसंख्येयानि उतापि स्त्रीभिः सह मोदमान इव जक्षदिव हसन्निव वयस्यैः । उतेवापि भयानि बिभेत्येभ्य इति भयानि सिंहव्याघ्रादीनि पश्यन्निव ॥१३॥

आराममारमणमाक्रीडामनेन निर्मितां वासनारूपामस्याऽऽत्मनः पश्यन्ति सर्वे जनाः । ग्रामं नगरं स्त्रियमन्नाद्यमित्यादिवासनानिर्मितमाक्रीडनरूपम् । न तं पश्यति तं न पश्यति कश्चन । कष्टं भो वर्ततेऽत्यन्तविविक्तं १५ दृष्टिगोचरापन्नमप्यहो भाग्यहीनता लोकस्य यच्छक्यदर्शनमप्यात्मानं न पश्यतीति लोकं प्रत्यनुक्रोशं दर्शयति श्रुतिः । अत्यन्तविविक्तः स्वयंज्योतिरात्मा स्वप्ने भवतीत्यभिप्रायः । तं नाऽऽयतं बोधयेदित्याहुः । प्रसिद्धिरपि लोके विद्यते स्वप्न आत्मज्योतिषो व्यतिरिक्तत्वे । काऽसौ । तमात्मानं सुप्तमायतं सहसा भृशं न बोधयेदित्याहुरेवं कथयन्ति चिकित्सकादयो जना लोके । नूनं ते पश्यन्ति जाग्रद्देहादिन्द्रियद्वारतोऽपसृत्य केवलो बहिर्वर्तत इति यत आहुस्तं नाऽऽयतं बोधयेदिति । तत्र च दोषं पश्यन्ति भृशं ह्यसौ बोध्यमानस्तानीन्द्रियद्वाराणि सहसा प्रतिबोध्य- २० मानो न प्रतिपद्यत इति । तदेतदाह—दुर्भिषज्यं हास्मै भवति यमेष न प्रतिपद्यते यमिन्द्रियद्वारदेशं यस्माद्देशाच्छु-क्रमादायापसृतस्तमिन्द्रियदेशमेष आत्मा पुनर्न प्रतिपद्यते । कदाचिद्व्यत्यासेनेन्द्रियमात्राः प्रवेशयति । तत आन्ध्य-बाधिर्यादिदोषप्राप्तौ दुर्भिषज्यं दुःखभिषक्कर्मता हास्मै देहाय भवति दुःखेन चिकित्सनीयोऽसौ देहो भवतीत्यर्थः । तस्मात्प्रसिद्ध्याऽपि स्वप्ने स्वयं ज्योतिष्ट्वमस्य गम्यते ।

बहिश्चरित्वेत्ययुक्तं शरीरस्थस्य स्वप्नोपलम्भादित्याशङ्क्याऽऽह—यद्यपीति । तत्सम्बन्धाभावाद्बहिश्चरित्वेत्युच्यत इति २५ सम्बन्धः । देहस्थस्यैव तदसम्बन्धे दृष्टान्तमाह—तत्स्थ इति ॥१२॥

स्वप्नस्थं विशेषान्तरमाह—किञ्चेति । उच्चावचं विषयीकृत्य तेन तेनाऽऽत्मना स्वेनैव स्वयं गम्यमान इति यावत् ॥१३॥

आरामं विवृणोति—ग्राममित्यादिना । न तमित्यादेस्तात्पर्यमाह—कष्टमिति । दृष्टिगोचरापन्नमपि न पश्य-तीति सम्बन्धः । कष्टमित्यादिनोक्तं प्रपञ्चयति—अहो इति । श्लोकानां तात्पर्यमुपसंहरति—अत्यन्तेति । वाक्यान्तर- ३० मादाय तात्पर्यमुक्त्वाऽऽकाङ्क्षापूर्वकमक्षराणि व्याकरोति—तं नेत्यादिना । तेषामभिप्रायमाह—नूनमिति । इन्द्रियाण्येव द्वाराण्यस्येतीन्द्रियद्वारो जाग्रद्देहस्तस्मादिति यावत् । तथाऽपि सहसाऽसौ बोध्यतां का हानिरित्याशङ्क्याऽऽह—तत्रेति । सहसा बोध्यमानत्वं सप्तम्यर्थः । किमत्र प्रमाणमित्याशङ्क्यानन्तरवाक्यमवतार्य व्याचष्टे—तदेतदाहेत्यादिना । पुनर-प्रतिपत्तौ दोषप्रसङ्गं दर्शयति—कदाचिदिति । व्यत्यासप्रवेशस्य कार्यं दर्शयन्दुर्भिषज्यमित्यादि व्याचष्टे—तत इति । उक्तां प्रसिद्धिमुपसंहरति—तस्मादिति ।

**स वा एष एतस्मिन्सम्प्रसादे रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च। पुनः प्रतिन्यायं प्रतियोन्याद्रवति स्वप्नायैव स यत्तत्र किंचित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुष इत्येवमेवैतद्याज्ञवल्क्य सोऽहं भगवते सहस्रं ददाम्यत ऊर्ध्वं विमोक्षायैव ब्रूहीति ॥१५॥**

स्वप्नो भूत्वाऽतिक्रान्तो मृत्यो रूपाणीति तस्मात्स्वप्ने स्वयंज्योतिरात्मा। अथो अपि खल्वन्य आहुर्जा-
५ गरितदेश एवास्यैष यः स्वप्नः। न संध्यं स्थानान्तरमिहलोकपरलोकाभ्यां व्यतिरिक्तं किं तर्हीहलोक एव जागरित-
देशः। यद्येवं, किंचातः। शृण्वतो यद्भवति, यदा जागरितदेश एवायं स्वप्नस्तदाऽयमात्मा कार्यकरणेभ्यो न
व्यावृत्तस्तैर्मिश्रीभूतः। अतो न स्वयंज्योतिरात्मेत्यतः स्वयंज्योतिष्ट्वबाधनायान्य आहुर्जागरितदेश एवास्यैष
इति। तत्र च हेतुमाचक्षते जागरितदेशत्वे यानि हि यस्माद्धस्त्यादीनि पदार्थजातानि जाग्रज्जागरितदेशे पश्यति
लौकिकस्तान्येव सुप्तोऽपि पश्यतीति। तदसत्। इन्द्रियोपरमात्। उपरतेषु हीन्द्रियेषु स्वप्नान्पश्यति। तस्मान्-
१० नान्यस्य ज्योतिषस्तत्र संभवोऽस्ति। तदुक्तं न तत्र रथा न रथयोगा इत्यादि। तस्मादत्रायं पुरुषः स्वयं-
ज्योतिर्भवत्येव।

स्वयंज्योतिरात्माऽस्तीति स्वप्ननिदर्शनेन प्रदर्शितम्। अतिक्रामति मृत्यो रूपाणीति च। क्रमेण संचरन्निह-
लोकपरलोकादीनिहलोकपरलोकादिव्यतिरिक्तः। तथा जाग्रत्स्वप्नकुलायाभ्यां व्यतिरिक्तः। तत्र च क्रमसंचारात्नि-
त्यश्चेत्येतत्प्रतिपादितं याज्ञवल्क्येन। अतो विद्यानिष्क्रयार्थं सहस्रं ददामीत्याह जनकः सोऽहमेव बोधितस्त्वया
१५ भगवते तुभ्यं सहस्रं ददामि। विमोक्षश्च कामप्रश्नो मयाऽभिप्रेतः। तदुपयोग्ययं तादर्थ्यात्तदेकदेश एव। अतस्त्वां
नियोक्ष्यामि समस्तकामप्रश्ननिर्णयश्रवणेन विमोक्षायात ऊर्ध्वं ब्रूहीति। येन संसाराद्विप्रमुच्येयम्, त्वत्प्रसादात्।
विमोक्षपदार्थैकदेशनिर्णयहेतोः सहस्रदानम् ॥१४॥

यत्प्रस्तुतमात्मनैवायं ज्योतिषाऽऽस्त इति। तत्प्रत्यक्षतः प्रतिपादितमत्रायं पुरुषः स्वयंज्योतिर्भवतीति

वृत्तमनूद्य मतान्तरमुत्थापयति—स्वप्नो भूत्वेत्यादिना। इतिशब्दो यस्मादर्थे। तदेव मतान्तरं स्फोरयति—
२० नेत्यादिना। उक्तमङ्गीकृत्य फलं पृच्छति—यद्येवमिति। स्वप्नो जागरितदेश इत्येवं यदीष्टमतश्च किं स्यादिति
प्रश्नार्थः। फलं प्रतिज्ञाय प्रकटयति—शृण्विति। मतान्तरोपन्यासस्य स्वमतविरोधित्वमाह—इत्यत इति। स्वप्नस्य
जाग्रद्देशत्वं दूषयति—तदसदिति। तस्य जाग्रद्देशत्वाभावे फलितमाह—तस्मादिति। स्वप्ने बाह्यज्योतिषः सम्भवो
नास्तीत्यत्र प्रमाणमाह—तदुक्तमिति। बाह्यज्योतिरभावेऽपि स्वप्ने व्यवहारदर्शनात्तत्र स्वयंज्योतिष्ट्वमाक्षेप्तुमशक्य-
मित्युपसंहरति—तस्मादिति।

२५ कथं पुनर्विद्यायामनुक्तायां सहस्रदानवचनमित्याशङ्क्य वृत्तं कीर्तयति—स्वयंज्योतिरिति। मृत्यो रूपाण्यति-
क्रामतीत्यत्र च कार्यकरणव्यतिरिक्तत्वमात्मनो दर्शितमित्याह—अतिक्रामतीति। लोकद्वयसंचारवशादुक्तमर्थमनुद्रवति-
क्रमेणेति। आदिशब्दस्तत्तद्देहादिविषयः। स्थानद्वयसंसारवशादुक्तमनुभाषते—तथेति। इहलोकपरलोकाभ्यामिवेति
यावत्। लोकद्वये स्थानद्वये च क्रमसंचारप्रयुक्तमर्थान्तरमाह—तत्र चेति। आत्मनः स्वयंज्योतिषो देहादिव्यति-
रिक्तस्य नित्यस्य ज्ञापितत्वादित्यतःशब्दार्थः। कामप्रश्नस्य निर्णीतत्वान्निराकाङ्क्षत्वमिति शङ्कां वारयति—
३० विमोक्षश्चेति। सम्यग्बोधस्तद्धेतुरिति यावत्। ननु स एव प्रागुक्तो नासौ वक्तव्योऽस्ति तत्राऽऽह—तदुपयोगीति।
अयमित्युक्तात्मप्रत्ययोक्तिः। तादर्थ्यात्पदार्थज्ञानस्य वाक्यार्थज्ञानशेषत्वादिति यावत्। पदार्थस्य वाक्यार्थबहिर्भाव
दूषयति—तदेकदेश एवेति। कामप्रश्नो नाद्यापि निर्णीत इत्यत्रोत्तरवाक्यं गमकमित्याह—अत इति। कामप्रश्नस्या-
निर्णीतत्वादिति यावत्। तेनापेक्षितेन हेतुनेत्यर्थः। विमोक्षशब्दस्य सम्यग्ज्ञानविषयत्वं सूचयति—येनेति। सम्यग्ज्ञान-
प्राप्तौ गुरुप्रसादस्य प्राधान्यं दर्शयति—त्वत्प्रसादादिति। ननु विमोक्षपदार्थो निर्णीतोऽन्यथा सहस्रदानस्याऽऽकस्मि-
३५ कत्वप्रसङ्गादत आह—विमोक्षेति ॥१४॥

उत्तरकण्डिकामवतारयितुं वृत्तं कीर्तयति—यत्प्रस्तुतमिति। आत्मनैवेत्यादिना यदात्मनः स्वयंज्योतिष्ट्वं

स्वप्ने। यत्तूक्तं स्वप्नो भूत्वेमं लोकमतिक्रामति मृत्यो रूपाणीति। तत्रैतदाशङ्क्यते मृत्यो रूपाण्येवातिक्रामति न मृत्युम्। प्रत्यक्षं ह्येतत्स्वप्ने कार्यकरणव्यावृत्तस्यापि मोदत्रासादिदर्शनम्। तस्मान्नूनं नैवायं मृत्युमतिक्रामति। कर्मणो हि मृत्योः कार्यं मोदत्रासादि दृश्यते। यदि च मृत्युना बद्ध एवायं स्वभावतस्ततो विमोक्षो नोपपद्यते। न हि स्वभावात्कश्चिद्विमुच्यते। अथ स्वभावो न भवति मृत्युस्ततस्तस्मान्मोक्ष उपपत्स्यते। यथाऽसौ मृत्युरात्मीयो धर्मो न भवति तथा प्रदर्शनायात ऊर्ध्वं विमोक्षाय ब्रूहीत्येवं जनकेन पर्यनुयुक्तो याज्ञवल्क्यस्तद्विदर्शयिषया ५ प्रववृते—स वै प्रकृतः स्वयंज्योतिः पुरुषः। एष यः स्वप्ने प्रदर्शित एतस्मिन्संप्रसादे सम्यक्प्रसीदत्यस्मिन्निति संप्रसादः। जागरिते देहेन्द्रियव्यापारशतसंनिपातजं हित्वा कालुष्यं तेभ्यो विप्रमुक्त ईषत्प्रसीदति स्वप्ने। इह तु सुषुप्ते सम्यक्प्रसीदतीत्यतः सुषुप्तं संप्रसाद उच्यते। "तीर्णो हि तदा सर्वान् शोकान्" "सलिल एको द्रष्टे"ति वक्ष्यति सुषुप्तस्थमात्मानम्। स वा एष एतस्मिन्संप्रसादे क्रमेण संप्रसन्नः सन्सुषुप्ते स्थित्वा। कथं संप्रसन्नः। स्वप्नात्सुषुप्तं प्रविविक्षुः स्वप्नावस्थ एव रत्वा रतिमनुभूय मित्रबन्धुजनदर्शनादिना चरित्वा विहृत्यानेकधा १० चरणफलं श्रममुपलभ्येत्यर्थः। दृष्ट्वैव न कृत्वेत्यर्थः पुण्यं च पुण्यफलं पापं च पापफलम्। न तु पुण्यपापयोः साक्षाद्दर्शनमस्तीत्यवोचाम। तस्मान्न पुण्यपापाभ्यामनु बद्धः। यो हि करोति पुण्यपापे स ताभ्यामनुबध्यते। नहि दर्शनमात्रेण तदनुबद्धः स्यात्। तस्मात्स्वप्नो भूत्वा मृत्युमतिक्रामत्येव न मृत्युरूपाण्येव केवलम्।

अतो न मृत्योरात्मस्वभावत्वाशङ्का। मृत्युश्चेत्स्वभावोऽस्य स्वप्नेऽपि कुर्यात्। न तु करोति। स्वभावश्चेत्क्रिया स्यादनिर्मोक्षतैव स्यात्। न तु स्वभावः स्वप्नेऽभावात्। अतो विमोक्षोऽस्योपपद्यते मृत्योः पुण्यपापा- १५ भ्याम्। ननु जागरितेऽस्य स्वभाव एव। न। बुद्ध्याद्युपाधिकृतं हि तत्। तच्च प्रतिपादितं सादृश्याद्ध्यायतीव

ब्राह्मणादौ प्रस्तुतं तदत्रायमित्यादिना प्रत्यक्षतः स्वप्ने प्रतिपादितमिति सम्बन्धः। वृत्तमर्थान्तरमनूद्य चोद्यमुत्थापयति—यत्तूक्तमिति। मृत्युं नातिक्रामतीत्यत्र हेतुमाह—प्रत्यक्षं हीति। इच्छाद्वेषादिरादिशब्दार्थः। तथापि कुतो मृत्युं नातिक्रामति तत्राऽऽह—तस्मादिति। कार्यस्य कारणादन्यत्र प्रवृत्त्ययोगादिति यावत्। उक्तमुपपादयति—कर्मणो हीति। अतः स्वप्नं गतो मृत्युं कर्माख्यं नातिक्रामतीति शेषः। मा तर्हि मृत्योरतिक्रमो भूत्, को दोषस्तत्राऽऽह—यदि २० चेति। स्वभावादपि मृत्योर्विमुक्तिमाशङ्क्याऽऽह—न हीति। उक्तं हि—

"नहि स्वभावो भावानां व्यावर्तेतौष्ण्यवद्रवेः"॥ इति।

कथं तर्हि मोक्षोपपत्तिरित्याशङ्क्याऽऽह—अथेति। एषा च शङ्का प्रागेव राज्ञा कृतेति दर्शयन्नुत्तरमुत्थापयति—यथेत्यादिना। तद्विदर्शयिषयेत्यत्र तच्छब्देन मृत्योरतिक्रमणं गृह्यते।

वैशब्दस्य प्रसिद्धार्थत्वमुपेत्य सशब्दार्थमाह—प्रकृत इति। एषशब्दमनूद्य व्याकरोति—एष इति। संप्रसादे २५ स्थित्वा मृत्युमतिक्रामतीति शेषः। सुषुप्तस्य संप्रसादत्वं साधयति—जागरित इत्यादिना। तत्र वाक्यशेषमनुकूलयति—तीर्णो हीति। अस्तु संप्रसादः सुषुप्तं स्थानं तथाऽपि किमायातमित्यत आह—स वा इति। पूर्वोक्तेन क्रमेण संप्रसादे सुषुप्ते स्थित्वा संप्रसन्नः सन्मृत्युमतिक्रामतीत्यर्थः उक्तमर्थमुपपादयितुमाकाङ्क्षामाह—कथमिति। रत्वेत्यादि व्याकुर्वन्परिहरति—स्वप्नादिति। पुण्यपापशब्दयोर्यथाश्रुतार्थत्वमाशङ्क्याऽऽह—न त्विति। अवोचा'मोभयान्पाप्मन आनन्दांश्च पश्यती'त्यत्रेति शेषः। पुण्यपापयोर्दर्शनमेव न करणमित्यत्र फलितमाह—तस्मादिति। तद्द्रष्टुरपि तदनुबन्धः ३० स्यादित्याशङ्क्यातिप्रसङ्गान्मैवमित्याह—यो हीत्यादिना। पुण्यपापाभ्यामात्मनोऽसंस्पर्शे फलितमाह—तस्मादिति।

मृत्योरतिक्रमणे किं स्यादित्याशङ्क्याऽऽह—अतो नेति। मृत्योरस्वभावत्वमुपपादयति—मृत्युश्चेदिति। इष्टापत्तिमाशङ्क्याऽऽह—न त्विति। अनन्वागतवाक्यादसङ्गवाक्याच्चेत्यर्थः। मोक्षशास्त्रप्रामाण्यादपि मृत्योरस्वभावत्वमित्याह—स्वभावश्चेदिति। इतश्च मृत्युः स्वभावो न भवतीत्याह—न त्विति। अभावादिति च्छेदः। तस्याः स्वभावत्वे लब्धमर्थं कथयति—अत इति। मृत्युमेव व्याचष्टे—पुण्यपापाभ्यामिति। स्वप्ने मृत्योः स्वभावत्वाभावेऽपि ३५ जागदवस्थाया कर्तृत्वमात्मनः स्वभावस्तया च नियमेन तस्य मृत्योरतिक्रमो न सिध्यतीति शङ्कते—नन्विति। औपाधिकत्वात्कर्तृत्वस्य स्वाभाविकत्वाभावादात्मनो मृत्योरतिक्रमः संभवतीति परिहरति—नेति। कथमौपाधिकत्वं कर्तृत्वस्य सिद्धवदुच्यते तत्राऽऽह—तच्चेति। ध्यायतीवेत्यादौ सादृश्यवाचकादिवशब्दादौपाधिकत्वं कर्तृत्वस्य प्रागेव

लेलायतीवेति । तस्मादेकान्तेनैव स्वप्ने मृत्युरूपातिक्रमणान्न स्वाभाविकत्वाशङ्काऽनिर्मोक्षता वा । तत्र चरित्वेति चरणफलं श्रममुपलभ्येत्यर्थः । ततः संप्रसादानुभवोत्तरकालं पुनः प्रतिन्यायं यथान्यायं यथागतं निश्चित आयो न्यायः । अयनमायो निर्गमनं पुनः पूर्वगमनवैपरीत्येन यदागमनं स प्रतिन्यायः । यथागतं पुनरागच्छतीत्यर्थः । प्रतियोनि यथास्थानम् । स्वप्नस्थानाद्धि सुषुप्तं प्रतिपन्नः सन्यथास्थानमेव पुनरागच्छति । प्रतियोन्याद्रवति
५ स्वप्नायैव स्वप्नस्थानायैव ।

ननु स्वप्ने न करोति पुण्यपापे तयोः फलमेव पश्यतीति कथमवगम्यते तथा जागरिते यथा करोत्येव स्वप्नेऽपि तुल्यत्वाद्दर्शनस्येति, अत आह स आत्मा यत्किंचित्तत्र स्वप्ने पश्यति पुण्यपापफलमनन्वागतोऽननुबद्धस्तेन दृष्टेन भवति नैवानुबद्धो भवति । यदि हि स्वप्ने कृतमेव तेन स्यात्तेनानुबध्येत । स्वप्नादुत्थितोऽपि समन्वागतः स्यात् । न च तल्लोके स्वप्नकृतकर्मणाऽन्वागतप्रसिद्धिः । न हि स्वप्नकृतेनाऽऽगसाऽऽगस्कारिणमात्मानं
१० मन्यते कश्चित् । न च स्वप्नदृशः आगः श्रुत्वा लोकस्तं गर्हति परिहरति वा । अतोऽनन्वागत एव तेन भवति । तस्मात्स्वप्ने कुर्वन्निवोपलभ्यते न तु क्रियाऽस्ति परमार्थतः । उतेव स्त्रीभिः सह मोदमान इति श्लोक उक्तः । आख्यातारश्च स्वप्नस्य सहेवशब्देनाऽऽचक्षते हस्तिनोऽद्य घटीकृता धावन्तीव मया दृष्टा इति । अतो न तस्य कर्तृत्वमिति ।

कथं पुनरस्याकर्तृत्वमिति । कार्यकरणैर्मूर्तैः संश्लेषो मूर्तस्य स तु क्रियाहेतुर्दृष्टः । नह्यमूर्तः कश्चित्क्रियावा-
१५ न्दृश्यतेऽमूर्तश्चाऽऽत्माऽतोऽसङ्गः । यस्माच्चासङ्गोऽयं पुरुषस्तस्मादनन्वागतस्तेन स्वप्नदृष्टेन । अत एव न क्रियाकर्तृत्वमस्य कथंचिदुपपद्यते । कार्यकरणसंश्लेषेण हि कर्तृत्वं स्यात्स च संश्लेषः सङ्गोऽस्य नास्ति यतोऽसङ्गो ह्ययं

दर्शितमित्यर्थः । जागरितेऽपि कर्तृत्वस्य स्वाभाविकत्वाभावे फलितमाह—तस्मादिति । मृत्योः स्वाभाविकत्वाशङ्काभावकृतं फलमाह—अनिर्मोक्षता वेति । वाशब्दो नञनुकर्षणार्थः । पुण्यं च पापं चेत्येतदन्तं वाक्यं व्याख्याय पुनरित्यादि व्याचष्टे—तत्रेति । स्वप्नाद्व्युत्थाय सुषुप्तिमनुभूयोत्तरकालमिति यावत् । स्थानात्स्थानान्तरप्राप्तावभ्यास
२० वक्तुं पुनःशब्दः । प्रतिन्यायमित्यस्यावयवार्थमुक्त्वा विवक्षितमर्थमाह—पुनरिति । संप्रसादादूर्ध्वमिति यावत् । जागरितात्स्वप्नं ततः सुषुप्तं गच्छतीति पूर्वगमनं ततो वैपरीत्येन सुषुप्तात्स्वप्नं जागरितं वा गच्छतीति यदागमनं स प्रतिन्यायः । तमेव संक्षिपति—यथेति । यथास्थानमाद्रवतीत्येतद्विवृणोति—स्वप्नस्थानादिति । उक्तेऽर्थे वाक्यं पातयति—प्रतियोनीति । किमर्थं यथास्थानमागमनं तदाह—स्वप्नायेति ।

स यदित्यादिवाक्यस्य व्यावर्त्यामाशङ्कामाह—नन्विति । तत्र वाक्यमुत्तरत्वेनावतार्य व्याकरोति—अत
२५ आहेति । अननुबद्ध इत्यस्यार्थं स्फुटयति नैवेति । स यदित्यादिवाक्यस्याक्षरार्थमुक्त्वा तात्पर्यमाह—यदि हीति । तेनाऽऽत्मनेति यावत् । स्वप्ने कृतं कर्म पुनस्तेनेत्युक्तम् । अनुबन्धे दोषमाह—स्वप्नादिति । इष्टापत्तिमाशङ्क्याऽऽह—न चेति । स्वप्नकृतेन कर्मणा जाग्रदवस्थस्य पुरुषस्यान्वागतत्वप्रसिद्धिरिति यदुच्यते तन्न व्यवहारभूमौ संप्रतिपन्नमित्यर्थः । स्वप्नदृष्टेन जाग्रद्गतस्य न संगतिरित्यत्र स्वानुभवं दर्शयति—नहीति । यथोक्तेऽनुभवे लोकस्यापि संमतिं दर्शयति—न चेति । तत्र फलितमाह—अत इति । कथं तर्हि स्वप्ने कर्तृत्वप्रतीतिस्तत्राऽऽह—तस्मादिति । स्वप्न-
३० स्याऽऽभासत्वाच्च न तत्र वस्तुतोऽस्ति क्रियेत्याह—उतेवेति । तदाभासत्वे लोकप्रसिद्धिमनुकूलयति—आख्यातारश्चेति । स्वप्नस्याऽऽभासत्वे फलितमाह—अत इति ।

अनन्वागतवाक्यं प्रतिज्ञारूपं व्याख्यायासङ्गवाक्यं हेतुरूपमवतारयितुमाकाङ्क्षामाह—कथमिति । मूर्तस्य मूर्तान्तरेण संयोगे क्रियोपलम्भादमूर्तस्य तदभावादात्मनश्चामूर्तत्वेनासंयोगात्क्रियाऽयोगादकर्तृत्वसिद्धिरित्युत्तरं हेतुवाक्यार्थकथनपूर्वकं कथयति—कार्यकरणैरित्यादिना । आत्मनोऽसङ्गत्वेनाकर्तृत्वमुक्तं समर्थयते—अत एवेति ।
३५ अत शब्दार्थं विशदयति—कार्येति । क्रियावत्त्वाभावे जन्ममरणादिराहित्यं कौटस्थ्यं फलतीत्याह—तस्मादिति । नैराकाङ्क्ष्यं व्यावर्तकर्मप्रविवेकमुक्तमङ्गीकरोति—एवमिति । तत्प्रविविक्तात्मज्ञाने दार्ढ्यं सूचयति—सोऽहमिति ।

१. ननु स्वप्ने आत्मा न करोति किन्तु पश्यत्येव तथा जागरिते पश्यत्येव केवलं न तु करोतीति कथमुच्यते इति चेत् अयं विशेषः स्वप्नजागरयोः स्वप्ने कर्मेन्द्रियाणि ज्ञानेन्द्रियाणि च न कुर्वन्ति । जागरे तु तानि कुर्वन्त्येव आत्मा तु केवलं प्रेक्षकः न तु कर्ता । आत्मनः प्रेक्षकत्वमुभयत्र तुल्यम् ।

**स वा एष एतस्मिन्स्वप्ने रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं प्रतियोन्याद्रवति बुद्धान्तायैव स यत्तत्र किञ्चित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुष इत्येवमेवैतद्याज्ञवल्क्य सोऽहं भगवते सहस्रं ददाम्यत ऊर्ध्वं विमोक्षायैव ब्रूहीति ॥१६॥**

**स वा एष एतस्मिन्बुद्धान्ते रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं प्रतियोन्याद्रवति स्वप्नान्तायैव ॥१७॥**

पुरुषः। तस्मादमृतः। एवमेवैतद्याज्ञवल्क्य। सोऽहं भगवते सहस्रं ददाम्यत ऊर्ध्वं विमोक्षायैव ब्रूहि। मोक्षपदार्थैकदेशस्य कर्मप्रविवेकस्य सम्यग्दर्शितत्वात्। अत ऊर्ध्वं विमोक्षायैव ब्रूहीति ॥१५॥

तत्रासङ्गो ह्ययं पुरुष इत्यसङ्गताऽकर्तृत्वे हेतुरुक्तः। उक्तं च पूर्वं कर्मवशात्स ईयते यत्र काममिति। कामश्च सङ्गोऽतोऽसिद्धो हेतुरुक्तोऽसङ्गो ह्ययं पुरुष इति। न त्वेतदस्ति। कथं तर्हि। असङ्ग एवेत्येतदुच्यते—स वा एष एतस्मिन्स्वप्ने व वा एष पुरुषः। संप्रसादात्प्रत्यागतः स्वप्ने रत्वा चरित्वा यथाकामं दृष्ट्वैव पुण्यं च पापं चेति सर्वं पूर्ववत्। बुद्धान्तायैव जागरितस्थानाय। तस्मादसङ्ग एवायं पुरुषः। यदि स्वप्ने सङ्गवान्स्यात्कामी ततस्तत्सङ्गजैर्दोषैर्बुद्धान्ताय प्रत्यागतो लिप्येत ॥१६॥

यथाऽसौ स्वप्नेऽसङ्गत्वात्स्वप्नसङ्गजैर्दोषैर्जागरिते प्रत्यागतो न लिप्यत एवं जागरितसङ्गजैरपि दोषैर्न लिप्यत एव बुद्धान्तेन। तदेतदुच्यते—

स वा एष एतस्मिन्बुद्धान्ते जागरिते रत्वा चरित्वेत्यादि पूर्ववत्। स यत्तत्र बुद्धान्ते किञ्चित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुष इति। ननु दृष्ट्वैवेति कथमवधार्यते करोति च तत्र पुण्यपापे तत्फलं च पश्यति। न। कारकावभासकत्वेन कर्तृत्वोपपत्तेः। आत्मनैवायं ज्योतिषाऽऽस्त इत्यादिनाऽऽत्मज्योतिषाऽवभासितः कार्यकरणसङ्घातो व्यवहरति तेनास्य कर्तृत्वमुपचर्यते न स्वतः कर्तृत्वम्। तथा चोक्तं ध्यायतीव लेलायतीवेति। बुद्ध्याद्युपाधिकृतमेव न स्वतः। इह तु परमार्थापेक्षयोपाधिनिरपेक्ष उच्यते दृष्ट्वैव पुण्यं च पापं च न कृत्वेति तेन न पूर्वापरव्याघाताशङ्का। यस्मान्निरुपाधिकः परमार्थतो न करोति न लिप्यते क्रियाफलेन। तथा च भगवतोक्तम्—

"अनादित्वान्निर्गुणत्वात्परमात्माऽयमव्ययः। शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते" ॥ इति।

यति—अत इति। कथं तर्हि सहस्रदानमित्याशङ्क्याऽऽह—मोक्षेति। कामप्रविवेकविषयनियोगमभिप्रेत्य पुनरनुक्रामति—अत ऊर्ध्वमिति ॥१५॥

उत्तरकण्डिकाव्यावर्त्यां शङ्कामाह—तत्रेति। पूर्वकण्डिका सप्तम्यर्थः। भवत्वकर्तृत्वहेतुरसङ्गत्वं किं तावतेत्याशङ्क्याऽऽह—उक्तं चेति। पूर्वं श्लोकोपन्यासदशायामिति यावत्। कर्मवशात्स्वप्नहेतुकर्मसामर्थ्यादित्यर्थः। आत्मनः स्वप्ने कामकर्मसंबन्धेऽपि किमिति नासङ्गत्वं तत्राऽऽह—कामश्चेति। हेत्वसिद्धिं परिहरति—न त्विति। न चेद्धेतोरसिद्धत्वं तर्हि कथं तत्सिद्धिरिति पृच्छति—कथमिति। हेतुसमर्थनार्थमुत्तरग्रन्थमुत्थापयति—असङ्ग इति। प्रतियोन्याद्रवतीत्येतदन्तं सर्वमित्युक्तम्। स्वप्ने कर्तृत्वाभावस्तच्छब्दार्थः. उक्तमसङ्गत्वं व्यतिरेकमुखेन विशदयति—यदीति। सङ्गवानित्यस्य व्याख्यानम्—कामीति। तत्सङ्गजैस्तत्र स्वप्ने विषयविशेषेषु कामाख्यसङ्गवशादुत्पन्नैरपराधैरिति यावत्। न तु लिप्यते प्रायश्चित्तविधानस्यापि स्वप्नसूचिताशुभाशङ्कानिवर्हणार्थत्वाद्वस्तुवृत्तानुसारित्वाभावादिति शेषः ॥१६॥

उक्तमर्थं दृष्टान्तीकृत्य जागरितेऽपि निर्लेपत्वमात्मनो दर्शयति—यथेत्यादिना। तत्र प्रमाणमाह—तदेतदिति। जाग्रदवस्थायामुक्तमकर्तृत्वमाक्षिपति—नन्विति। तत्र कल्पितं कर्तृत्वमित्युत्तरमाह—नेत्यादिना। तदेव विवृणोति—आत्मनैवेति। स्वतोऽकर्तृत्वे वाक्योपक्रमं संवादयति—तथा चेति। वाक्यार्थं संगृह्णाति—बुद्ध्यादीति। कर्तृत्वमिति शेषः। नन्वौपाधिकं कर्तृत्वं पूर्वमुक्तमिदानीं तन्निराकरणे पूर्वापरविरोधः स्यादित्याशङ्क्याऽऽह—इह त्विति। उपाधिनिरपेक्ष. कर्तृत्वाभाव इति शेषः। तेनेत्युक्तं हेतुं स्फुटयति—यस्मादिति। आत्मनो लेपाभावे भगवद्वाक्यमपि प्रमाणमित्याह—तथा चेति।

**तद्यथा महामत्स्य उभे कूले अनुसञ्चरति पूर्वं चापरं चैवमेवायं पुरुष एतावुभावन्तावनुसञ्चरति स्वप्नान्तं च बुद्धान्तं च ॥१८॥**

तथा सहस्रदाने तु कामप्रविवेकस्य दर्शितत्वात्। तथा स वा एष एतस्मिन्स्वप्ने स वा एष एतस्मिन्बुद्धान्त इत्येताभ्यां कण्डिकाभ्यामसङ्गतैव प्रतिपादिता। यस्माद्बुद्धान्ते कृतेन स्वप्नान्तं गतः संप्रसन्नोऽसंबद्धो
५ भवति स्तैन्यादिकार्यादर्शनात्तस्मात्त्रिष्वपि स्थानेषु स्वतोऽसङ्ग एवायम्। अतोऽमृतः। स्थानत्रयधर्मविलक्षणः प्रतियोन्याद्रवति स्वप्नान्तायैव संप्रसादायेत्यर्थः। दर्शनवृत्तेः स्वप्नस्य स्वप्नशब्देनाभिधानदर्शनादन्तशब्देन च विशेषणोपपत्तेः। एतस्मा अन्ताय धावतीति च सुषुप्तं दर्शयिष्यति। यदि पुनरेवमुच्यते "स्वप्नान्ते रत्वा चरित्वैतावुभावन्तावनुसंचरति स्वप्नान्तं च बुद्धान्तं चे"ति दर्शनात्स्वप्नान्तायैवेत्यत्रापि दर्शनवृत्तिरेव स्वप्न उच्यत इति तथाऽपि न किंचिद्दुष्यत्यसङ्गता हि सिषाधयिषिता सिध्यत्येव। यस्माज्जागरिते दृष्ट्वैव पुण्यं च पापं च
१० रत्वा चरित्वा च स्वप्नान्तमागतो न जागरितदोषेणानुगतो भवति ॥१७॥

एवमयं पुरुष आत्मा स्वयंज्योतिः कार्यकरणविलक्षणस्तत्प्रयोजककाभ्यां कामकर्मभ्यां विलक्षणो यस्मादसङ्गो ह्ययं पुरुषोऽसङ्गत्वादित्ययमर्थः "स वा एष एतस्मिन्संप्रसाद" इत्याद्याभिस्तिसृभिः कण्डिकाभिः प्रतिपादितः। तत्रासङ्गतैवाऽऽत्मनः कुतो यस्माज्जागरितात्स्वप्नं स्वप्नाच्च संप्रसादं संप्रसादाच्च पुनः स्वप्न क्रमेण बुद्धान्तं जागरित बुद्धान्ताच्च पुनः स्वप्नान्तमित्येवमनुक्रमसंचारेण स्थानत्रयस्य व्यतिरेकः सिद्धः। पूर्वमप्युपन्यस्तो-
१५ ऽयमर्थः स्वप्नो भूत्वेमं लोकमतिक्रामति मृत्यो रूपाणीति तं विस्तरेण प्रतिपाद्य केवलं दृष्टान्तमात्रमवशिष्टं तद्वक्ष्यामीत्यारभ्यते—

तत्तत्रैतस्मिन्यथाप्रदर्शितेऽर्थे दृष्टान्तोऽयमुपादीयते—यथा लोके महामत्स्यो महांश्चासौ मत्स्यश्च नादेयेन स्रोतसाऽहार्य इत्यर्थः। स्रोतश्च विष्टम्भयति स्वच्छन्दचार्युभे कूले नद्याः पूर्वं चापरं चानुक्रमेण सचरति। संचरन्नपि कूलद्वयं तन्मध्यवर्तिनोदकस्रोतोवेगेन न परवशी क्रियते। एवमेवायं पुरुष एतावुभा अन्ता अनुसंचरति। कौ तौ।
२० स्वप्नान्तं च बुद्धान्तं च। दृष्टान्तप्रदर्शनफलं तु मृत्युरूपः कार्यकरणसंघातः सह तत्प्रयोजकाभ्यां कामकर्मभ्यामनात्मधर्मोयं चाऽऽत्मैतस्माद्विलक्षण इति विस्तरतो व्याख्यातम् ॥१८॥

अवस्थात्रयेऽप्यसङ्गत्वमनन्वागतत्वं चाऽऽत्मनः सिद्धं चेद्विमोक्षपदार्थस्य निर्णीतत्वाज्जनकस्य नैराकाङ्क्ष्यमित्याशङ्क्याऽऽह—तथेति। यथा मोक्षैकदेशस्य कर्मविवेकस्य दर्शितत्वात्पूर्वत्र सहस्रदानमुक्तं तथाऽत्रापि तदेकदेशस्य कामविवेकस्य दर्शितत्वात्तद्दानं न तु कामप्रवनस्य निर्णीतत्वादित्यर्थः। द्वितीयतृतीयकण्डिकयोस्तात्पर्यं संगृह्णाति—
२५ तथेत्यादिना। यथा प्रथमकण्डिकया कर्मविवेकः प्रतिपादितस्तथेति यावत्। कण्डिकात्रितयार्थं संक्षिप्योपसंहरति—यस्मादिति। अवस्थात्रयेऽप्यसङ्गत्वे किं सिध्यति तदाह—अत इति। प्रतीकमादाय स्वप्नान्तशब्दार्थमाह—प्रतियोनीति। कथं पुनस्तस्य सुषुप्तविषयत्वमत आह—दर्शनवृत्तेरिति। दर्शनं वासनामयं तस्य वृत्तिर्यस्मिन्निति व्युत्पत्त्या स्वप्नो दर्शनवृत्तिस्तस्य स्वप्नशब्देनैव सिद्धत्वादन्तशब्दवैयर्थ्यात्तिस्यान्तो लयो यस्मिन्निति व्युत्पत्त्या स्वप्नान्तशब्देन सुषुप्तग्रहे सत्यन्तशब्देन स्वप्नस्य व्यावृत्त्युपपत्तेरत्र सुषुप्तस्थानमेव स्वप्नान्तशब्दितमित्यर्थः।
३० तत्रैव वाक्यशेषानुगुण्यमाह—एतस्मा इति। स्वप्नान्तशब्दस्य स्वप्ने प्रयोगदर्शनादिहापि तस्यैव तेन ग्रहणमिति पक्षान्तरमुत्थाप्याङ्गीकरोति—यदीत्यादिना। सिषाधयिषितार्थसिद्धौ हेतुमाह—यस्मादिति ॥१७॥

कण्डिकात्रयेण सिद्धमर्थमनुवदति—एवमिति। आत्मनः स्थानत्रयसचारादसिद्धोऽसङ्गत्वहेतुरिति शङ्कते—तत्रेति। प्रतिज्ञाहेत्वोर्हेतुनिर्धारणं सप्तम्यर्थः। सप्रयोजकाद्देहद्वयाद्विलक्षण्यं तु दूरनिरस्तमित्येवशब्दार्थः। एवं चोदिते हेतुसमर्थनार्थं महामत्स्यवाक्यमिति संगतिमभिप्रेत्य संगत्यन्तरमाह—पूर्वमपीति। यथाप्रदर्शितोऽर्थोऽसङ्गत्वं कार्य-
३५ करणविनिर्मुक्तत्वं च अहार्यत्वमप्रकम्प्यत्वम्। स्वच्छन्दचारित्वं प्रकटयति—संचरन्नपीति। किं पुनर्दृष्टान्तेन दार्ष्टान्तिके लभ्यते तदाह—दृष्टान्तेति ॥१८॥

---

१. कामकर्मविलक्षणः असङ्गत्वात् संबन्धसामान्याभावात्।

**तद्यथास्मिन्नाकाशे श्येनो वा सुपर्णो वा विपरिपत्य श्रान्तः सꣳहृत्य पक्षौ संलयायैव ध्रियत एवमेवायं पुरुष एतस्मा अन्ताय धावति यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति ॥१९॥**

अत्र च स्थानत्रयानुसंचारेण स्वयंज्योतिष आत्मनः कार्यकरणसंघातव्यतिरिक्तस्य कामकर्मभ्यां विविक्ततोक्ता स्वतो नायं संसारधर्मवानुपाधिनिमित्तमेव त्वस्य संसारित्वमविद्याध्यारोपितमित्येष समुदायार्थ उक्तः। ५ तत्र च जाग्रत्स्वप्नसुषुप्तस्थानानां त्रयाणां विप्रकीर्णरूप उक्तो न पुञ्जीकृत्यैकत्र दर्शितः। यस्माज्जागरिते ससङ्गः समृत्युः सकार्यकरणसंघात उपलक्ष्यतेऽविद्यया। स्वप्ने तु कामसंयुक्तो मृत्युरूपविनिर्मुक्त उपलभ्यते। सुषुप्ते पुनर्बुद्धान्तमागतो बुद्धान्ताच्च सुषुप्ते संप्रसन्नोऽसङ्गो भवतीत्यसंगताऽपि दृश्यते। एकवाक्यतया तूपसंह्रियमाणं फलं नित्यमुक्तबुद्धशुद्धस्वभावताऽस्य नैकत्र पुञ्जीकृत्य प्रदर्शितेति तत्प्रदर्शनाय कण्डिकाऽऽरभ्यते। सुषुप्ते ह्येवंरूपताऽस्य वक्ष्यमाणा "तद्वा अस्यैतदतिच्छन्दा अपहतपाप्माऽभयं रूपमि"ति। यस्मादेवंरूपं विलक्षणं सुषुप्तं १० प्रविविक्षति। तत्कथमित्याह—दृष्टान्तेनास्यार्थस्य प्रकटीभावो भवतीति तत्र दृष्टान्त उपादीयते।

तद्यथाऽस्मिन्नाकाशे भौतिके श्येनो वा सुपर्णो वा। सुपर्णशब्देन क्षिप्रः श्येन उच्यते। यथाऽऽकाशेऽस्मिन्विहृत्य विपरिपत्य श्रान्तो नानापरिपतनलक्षणेन कर्मणा परिखिन्नः संहृत्य पक्षौ संगमय्य संप्रसार्य पक्षौ सम्यग्लीयतेऽस्मिन्निति संलयो नीडो नीडायैव ध्रियते स्वात्मनैव धार्यते स्वयमेव। यथाऽयं दृष्टान्त एवमेवायं पुरुष एतस्या एतस्मै अन्ताय धावति। अन्तशब्दवाच्यस्य विशेषणं यत्र यस्मिन्नन्ते सुप्तो न कञ्चन न कञ्चिदपि कामं १५ कामयते। तथा च न कञ्चन स्वप्नं पश्यति। न कंचन काममिति स्वप्नबुद्धान्तयोरविशेषेण सर्वः कामः प्रतिषिध्यते। कंचनेत्यविशेषिताभिधानात्। तथा न कंचन स्वप्नमिति। जागरितेऽपि यद्दर्शनं तदपि स्वप्नं मन्यते श्रुतिरत आह—न कंचन स्वप्नं पश्यतीति। तथा च श्रुत्यन्तरम् "तस्य त्रय आवसथास्त्रयः स्वप्नाः" इति। यथा दृष्टान्ते पक्षिणः परिपतनजश्रमापनुत्तये स्वनीडोपसर्पणमेवं जाग्रत्स्वप्नयोः कार्यकरणसंयोगजक्रियाफलैः

श्येनवाक्यमवतारयितुं वृत्तं कीर्तयति-अत्र चेति। पूर्वसंदर्भः सप्तम्यर्थः। देहद्वयेन सप्रयोजकेन वस्तुतोऽसंबंधे २० फलितमाह—स्वत इति। कथं तर्हि तत्र संसारित्वधीरित्याशङ्क्याऽऽह—उपाधीति। औपाधिकस्यापि वस्तुत्वमाशङ्क्याऽऽह—अविद्येति। वृत्तमनूद्योत्तरग्रन्थमवतारयन्भूमिकामाह—तत्रेति। स्थानत्रयसम्बन्धित्वेन विप्रकीर्णं विश्लिष्टं रूपमस्येत्यात्मा तथा। पुञ्जीकृत्य विवक्षितं सर्वं विशेषणमादायेति यावत्। एकत्रेति वाक्योक्तिः। तत्र हेतुं वदञ्जाग्रद्वाक्येन विवक्षितात्मोक्तिरित्याह—यस्मादिति। ससङ्गत्वादेर्दृश्यमानरूपस्य मिथ्यात्वं सूचयति—अविद्ययेति। स्वप्नवाक्ये विवक्षितात्मसिद्धिमाशङ्क्याऽऽह—स्वप्ने त्विति। तर्हि सुषुप्तवाक्ये तत्सिद्धिर्नेत्याह—सुषुप्ते पुनरिति। २५ तत्राप्यविद्यानिर्मोको न प्रतिभातीति भावः। एवं पातनिकां कृत्वा श्येनवाक्यमादत्ते—एकवाक्यतयेति। पूर्ववाक्यानामिति शेषः। कुत्र तर्हि यथोक्तमात्मरूपं पुञ्जीकृत्य प्रदर्श्यते तत्राऽऽह—सुषुप्ते हीति। तत्राभयमित्यविद्याराहित्यमुच्यते। सा च सुषुप्ते स्वरूपेण सत्यपि नाभिव्यक्ता भातीति द्रष्टव्यम्। यस्मात्सुषुप्ते यथोक्तमात्मरूपं वक्ष्यते तस्मादिति यावत्। एवंरूपमित्येतदेव प्रकटयति—विलक्षणमिति। कार्यकरणविनिर्मुक्तं कामकर्मविद्यारहितमित्यर्थः। स्थानद्वयं हित्वा कथं सुषुप्तं प्रवेष्टुमिच्छतीति पृच्छति—तत्कथमिति। स्वप्नादौ दुःखानुभवात्तत्त्यागेन ३० सुषुप्तं प्राप्नोतीत्याह—आहेति। अथोत्तरा श्रुतिः स्थानान्तरप्राप्तिमभिधत्तां तथाऽपि किं दृष्टान्तवचनेनेत्याशङ्क्याऽऽह—दृष्टान्तेनेति। अस्यार्थस्य सुषुप्तिप्राप्तिरूपस्येत्येतत्। त एवार्थस्तत्रेति सप्तम्यर्थः।

परमात्माकाशं व्यावर्तयितुं भौतिकविशेषणम्। महाकायो मन्दवेगः श्येनः सुपर्णस्तु वेगवानल्पविग्रह इति भेदः। धारणे सौकर्यं वक्तुं स्वयमेवेत्युक्तम्। स्वप्नजागरितयोरवसानमन्तमज्ञातं ब्रह्म। तथा न कंचन स्वप्नमिति स्वप्नजागरितयोरविशेषेण सर्वं दर्शनं निषिध्यत इति शेषः। स्वप्नविशेषणात्स्वप्नदर्शननिषेधेऽपि कुतो जाग्रद्दर्शनं ३५ निषिध्यते तत्राऽऽह—जागरितेऽपीति। कथमयमभिप्रायः श्रुतेरवगत इत्याशङ्क्य विशेषणसामर्थ्यादित्याह—अत आहेति। जागरितस्यापि स्वप्नत्वे श्रुत्यन्तरं संवादयति—तथा चेति। दृष्टान्तदार्ष्टान्तिकयोर्विवक्षितमंशं दर्शयति—यथेत्यादिना।

ता वा अस्यैता हिता नाम नाड्यो यथा केशः सहस्रधा भिन्नस्तावताऽणिम्ना तिष्ठन्ति शुक्लस्य नीलस्य पिङ्गलस्य हरितस्य लोहितस्य पूर्णा अथ यत्रैनं घ्नन्तीव जिनन्तीव हस्तीव विच्छाययति गर्तमिव पतति यदेव जाग्रद्भयं पश्यति तदत्राविद्यया मन्यतेऽथ यत्र देव इव राजेवाहमेवेदꣳ सर्वोऽस्मीति मन्यते सोऽस्य परमो लोकः ॥२०॥

५ संयुज्यमानस्य पक्षिणः परिपतनज इव श्रमो भवति तच्छ्रमापनुत्तये स्वात्मनो नीडमायतनं सर्वसंसारधर्मविलक्षणं सर्वक्रियाकारकफलायासशून्यं स्वमात्मानं प्रविशति ॥१९॥

यद्यस्यायं स्वभावः सर्वसंसारधर्मशून्यता परोपाधिनिमित्तं चास्य संसारधर्मित्वम्। यन्निमित्तं चास्य परोपाधिकृतं संसारधर्मित्व सा चाविद्या। तस्या अविद्यायाः किं स्वाभाविकत्वमाहोस्वित्कामकर्मादिवदागन्तुकत्वम्। यदि चाऽऽगन्तुकत्वं ततो विमोक्ष उपपद्यते। तस्याश्चाऽऽगन्तुकत्वे कोपपत्तिः कथं वा नाऽऽत्मधर्मोऽविद्येति, १० सर्वानर्थबीजभूताया अविद्यायाः सतत्त्वावधारणार्थं परा कण्डिकाऽऽरभ्यते—

ता वा अस्य शिरःपाण्यादिलक्षणस्य पुरुषस्यैता हिता नाम नाड्यो यथा केशः सहस्रधा भिन्नस्तावता तावत्परिमाणेनाणिम्नाऽणुत्वेन तिष्ठन्ति। ताश्च शुक्लस्य रसस्य नीलस्य पिङ्गलस्य हरितस्य लोहितस्य पूर्णा एतैः शुक्लत्वादिभी रसविशेषैः पूर्णा इत्यर्थः। एते च रसानां वर्णविशेषा वातपित्तश्लेष्मणामितरेतरसंयोगवैषम्यविशेषाद्विचित्रा बहवश्च भवन्ति।

१५ तास्वेवंविधासु नाडीषु सूक्ष्मासु बालाग्रसहस्रभेदपरिमाणासु शुक्लादिरसपूर्णासु सकलदेहव्यापिनीषु सप्तदशकं लिङ्गं वर्तते। तदाश्रिताः सर्वा वासना उच्चावचसंसारधर्मानुभवजनिताः। तल्लिङ्गं वासनाश्रयं सूक्ष्मत्वात्स्वच्छं स्फटिकमणिकल्पं नाडीगतरसोपाधिसंसर्गवशाद्धर्माधर्मप्रेरितोद्भूतवृत्तिविशेषं स्त्रीरथहस्त्याद्याकारविशेषैर्वासनाभिः प्रत्यवभासते। अथैवं सति यत्र यस्मिन्काले केचन शत्रवोऽन्ये वा तस्करा मामागत्य घ्नन्तीति मृषैव वासनानिमित्त प्रत्ययोऽविद्याख्यो जायते तदेतदुच्यत एनं स्वप्नदृशं घ्नन्तीवेति। तथा जिनन्तीव वशी कुर्वन्तीव। २० न केचन घ्नन्ति नापि वशीकुर्वन्ति केवलं त्वविद्यावासनोद्भवनिमित्तं भ्रान्तिमात्रम्। तथा हस्तीवैनं विच्छाययति

संयुज्यमानस्य क्षेत्रज्ञस्येति शेषः। सर्वसंसारधर्मविलक्षणमिति विशेषणं व्याचष्टे—सर्वेति ॥१९॥

श्येनवाक्योनाऽऽत्मनः सौषुप्तं रूपमुक्तमिदानीं नाडीखण्डस्य संबन्धं वक्तुं चोदयति—यद्यस्येति। परः सन्नुपाधिर्बुद्ध्यादिः। असङ्गत्वतः स्वतो बुद्ध्यादिसंबन्धासंभवमुपेत्याऽऽह—यन्निमित्तं चेति। सिद्धान्ताभिप्रायमनूद्य पूर्ववादी विकल्पयति—तस्या इति। आगन्तुकत्वमस्वाभाविकत्वम्। आद्ये मोक्षानुपपत्तिं विवक्षित्वाऽऽह—यदि चेति। २५ अस्तु तर्हि द्वितीयो मोक्षोपपत्तेरित्याशङ्क्याऽऽह—तस्याश्चेति। मा भूदविद्याऽऽत्मस्वभावस्तद्धर्मस्तु स्याद्धर्म्यन्तराभावादित्याह—कथं वेति। तत्रोत्तरत्वेनोत्तरग्रन्थमुत्थापयति—सर्वानर्थेति। तासां परमसूक्ष्मत्वं दृष्टान्तेन दर्शयति—यथेति। कथमन्नरसस्य वर्णविशेषप्राप्तिरित्याशङ्क्याऽऽह—वातेति। भुक्तस्यान्नस्य परिणामविशेषो वातबाहुल्ये नीलो भवति पित्ताधिक्ये पिङ्गलो जायते श्लेष्मातिशये शुक्लो भवति पित्ताल्पत्वे हरितः साम्ये च धातूनां लोहित इति तेषां मिथः संयोगवैषम्यात्तत्साम्याच्च विचित्रा बहवश्चान्नरसा भवन्ति तद्व्याप्तानां नाडीनामपि तादृशो वर्णो ३० जायते।

"अरुणाः शिरा वातवहा नीलाः पित्तवहाः शिराः। असृग्वहास्तु रोहिण्यो गौर्यः श्लेष्मवहाः शिराः॥"

इति सौश्रुते दर्शनादित्यर्थः।

नाडीस्वरूपं निरूप्य तत्र जागरिते लिङ्गशरीरस्य वृत्तिं दर्शयति—तास्विति। एवंविधास्वित्यस्यैव विवरणं सूक्ष्मास्वित्यादि। पञ्च भूतानि दशेन्द्रियाणि प्राणोऽन्तःकरणमिति सप्तदशकम्। जागरिते लिङ्गशरीरस्य स्थितिमुक्त्वा स्वाप्नीं तत्स्थितिमाह—तल्लिङ्गमिति। विवक्षितां स्वप्नस्थितिमुक्त्वा श्रुत्यक्षराणि योजयति—अथेत्या- ३५ दिना। स्वप्ने धर्मादिनिमित्तवशान्मिथ्यैव लिङ्गं नानाकारमवभासते तन्मिथ्याज्ञानं लिङ्गानुगतमूलाविद्याकार्यत्वादविद्येति स्थिते सतीत्यथशब्दार्थमाह—एवं सतीति। तस्मिन्काले स्वप्नदर्शनं विज्ञेयमिति शेषः। इवशब्दार्थमाह—

विच्छादयति विद्रावयति धावयतीवेत्यर्थः। गर्तमिव पतति गर्तं जीर्णकूपादिकमिव पतन्तमात्मानमुपलक्षयति। तादृशी ह्यस्य मृषा वासनोद्भवत्यत्यन्तनिकृष्टाऽधर्मोद्भासितान्तःकरणवृत्त्याश्रया दुःखस्वरूपत्वात्।

किंबहुना यदेव जाग्रद्भयं पश्यति हस्त्यादिलक्षणं तदेव भयरूपमत्रास्मिन्स्वप्ने विनैव हस्त्यादिरूपं भयमविद्यावासनया मृषैवोद्भूतया मन्यते। अथ पुनर्यत्राविद्याऽपकृष्यमाणा विद्या चोत्कृष्यमाणा किंविषया किंलक्षणा चेत्युच्यते—अथ पुनर्यत्र यस्मिन्काले देव इव स्वयं भवति। देवताविषया विद्या यदोद्भूता जागरित- ५ काले तदोद्भूतया वासनया देवमिवाऽऽत्मानं मन्यते। स्वप्नेऽपि तदुच्यते देव इव राजेव राज्यस्थोऽभिषिक्तः स्वप्नेऽपि राजाऽहमिति मन्यते राजवासनावासितः। एवमत्यन्तप्रक्षीयमाणाऽविद्योद्भूता च विद्या सर्वात्मविषया यदा यदा स्वप्नेऽपि तद्भावभावितोऽहमेवेदं सर्वोऽस्मीति मन्यते। स यः सर्वात्मभावः सोऽस्याऽऽत्मनः परमो लोकः परम आत्मभावः स्वाभाविकः। यत्तु सर्वात्मभावादर्वाग्बालाग्रमात्रमप्यन्यत्वेन दृश्यते नाहमस्मीति। तदवस्थाऽ- विद्या तयाऽविद्यया ये प्रत्युपस्थापिता अनात्मभावा लोकास्तेऽपरमाः स्थावरान्तास्तान्संव्यवहारविषयाँल्लोकान- १० पेक्ष्यायं सर्वात्मभावः समस्तोऽनन्तरोऽबाह्यः सोऽस्य परमो लोकः।

तस्मादपकृष्यमाणायामविद्यायां विद्यायां च काष्ठां गतायां सर्वात्मभावो मोक्षः। यथा स्वयंज्योतिष्ट्वं स्वप्ने प्रत्यक्षत उपलभ्यते तद्वद्विद्याफलमुपलभ्यत इत्यर्थः। तथाऽविद्यायामप्युत्कृष्यमाणायां तिरोधीयमानायां च विद्यायामविद्यायाः फलं प्रत्यक्षत एवोपलभ्यतेऽस्य यत्रैनं घ्नन्तीव जिनन्तीवेति। ते एते विद्याविद्याकार्ये सर्वात्म- भावः परिच्छिन्नात्मभावश्च। विद्यया शुद्धया सर्वात्मा भवति। अविद्यया चासर्वो भवति। अन्यतः कुतश्चि- १५ त्प्रविभक्तो भवति। यतः प्रविभक्तो भवति तेन विरुध्यते। विरुद्धत्वाद्धन्यते जीयते विच्छाद्यते च। असर्वविषयत्वे च भिन्नत्वादेतद्भवति। समस्तस्तु सन्कुतो भिद्यते येन विरुध्येत विरोधाभावे केन हन्यते जीयते विच्छाद्यते च। अत इदमविद्यायाः सतत्त्वमुक्तं भवति। सर्वात्मानं सन्तमसर्वात्मत्वेन ग्राहयति। आत्मनोऽन्यद्वस्त्वन्तरमविद्यमानं प्रत्युपस्थापयति। आत्मानमसर्वमापादयति। ततस्तद्विषयः कामो भवति। यतो भिद्यते कामतः क्रियामुपादत्ते।

नेत्यादिना। उक्तोदाहरणेन समुच्चित्योदाहरणान्तरमाह—तथेति। गर्तादिपतनप्रतीतौ हेतुमाह—तादृशी हीति। २० तादृशत्वं विशदयति—अत्यन्तेति। यथोक्तवासनाप्रभवत्वं कथं गर्तपतनादेरवगतमित्याशङ्क्याऽऽह—दुःखेति।

यदेवेत्यादिश्रुतेरर्थमाह—किं बहुनेति। भयमित्यस्य भयरूपमिति व्याख्यानम्। भयं रूप्यते येन तत्कारणं तथा। हस्त्यादि नास्ति चेत्कथं स्वप्ने भातीत्याशङ्क्याऽऽह—अविद्येति। अथ यत्र देव इवेत्यादेस्तात्पर्यमाह— अथेति। तत्र तस्याः फलमुच्यत इति शेषः। तात्पर्योक्त्याऽथशब्दार्थमुक्त्वा विद्याया विषयस्वरूपे प्रश्नपूर्वकं वदन्यत्रे- त्यादेरर्थमाह—किं विषयेति। इवशब्दप्रयोगात्स्वप्न एवोक्त इति शङ्कां वारयति—देवतेति। विद्येत्युपास्तिरुक्ता। २५ अभिषिक्तो राज्यस्थो जाग्रदवस्थायामिति शेषः। अहमेवेदमित्याद्यवतारयति—एवमिति। यथाऽविद्यायामपकृष्य- माणायां कार्यमुक्तं तद्वदित्यर्थः। यदेति जागरितोक्तिः। इदं चैतन्यमहमेव चिन्मात्रं न तु मदतिरेकेणास्ति तस्मादहं सर्वः पूर्णोऽस्मीति जानातीत्यर्थः। सर्वात्मभावस्य परमत्वमुपपादयति—यत्त्वित्यादिना। तत्र तेनाऽऽकारेणाविद्या- ऽवस्थितेत्याह—तदवस्थेति। तस्याः कार्यमाह—तयेति। समस्तत्वं पूर्णत्वम्। अनन्तरत्वमेकरसत्वम्। अबाह्यत्वं प्रत्यक्त्वम्। योऽयं यथोक्तो लोकः सोऽस्याऽऽत्मनो लोकान्पूर्वोक्तानपेक्ष्य परम इति संबन्धः। ३०

वाक्यार्थमुपसंहरति—तस्मादिति। मोक्षो विद्याफलमित्युत्तरत्र संबन्धः। तस्य प्रत्यक्षत्वं दृष्टान्तेन स्पष्टयति—यथेति। विद्याफलवदविद्याफलमपि स्वप्ने प्रत्यक्षमित्युक्तमनुवदति—तथेति। विद्याफलमविद्याफलं चेत्युक्त- मुपसंहरति—ते एते इति। उक्तं फलद्वयं विभजते—विद्ययेति। असर्वो भवतीत्येतत्प्रकटयति—अन्यत इति। प्रविभागफलमाह—यत इति। विरोधफलं कथयति—विरुद्धत्वादिति। अविद्याकार्यं निगमयति—असर्वेति। अविद्यायाश्चेत्परिच्छिन्नफलत्वं तदा तस्य भिन्नत्वादेव यथोक्तं विरोधादि दुर्वारमित्यर्थः। विद्याफलं निगमयति— ३५ समस्तस्त्विति। नन्वविद्याया सतत्त्वं निरूपयितुमारब्धं न च तदद्यापि दर्शितं तथा च किं कृतं स्यादत आह— अत इति। कार्यवशादिति यावत्। इदंशब्दार्थमेव स्फुटयति—सर्वात्मनमिति। ग्राहकत्वमेव व्यनक्ति—आत्मन इति। वस्त्वन्तरोपस्थितिफलमाह—तत इति। कामस्य कार्यमाह—यत इति। क्रियातः फलं लभते तद्भोगकाले च

तद्वा अस्यैतदतिच्छन्दा अपहतपाप्माभयꣳ रूपम् । तद्यथा प्रियया स्त्रिया संपरिष्वक्तो न बाह्यं किञ्चन वेद नाऽऽन्तरमेवमेवायं पुरुषः प्राज्ञेनाऽऽत्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद नाऽऽन्तरं तद्वा अस्यैतदाप्तकाममात्मकाममकामꣳ रूपꣳ शोकान्तरम् ॥२१॥

ततः फलम् । तदेतदुक्तम् । वक्ष्यमाणं च यत्र हि द्वैतमिव भवति तदितर इतर पश्यतीत्यादि । इदमविद्यायाः
५ सतत्त्वं सहकार्येण प्रदर्शितम् । विद्यायाश्च कार्यं सर्वात्मभावः प्रदर्शितोऽविद्याया विपर्ययेण । सा चाविद्या नाऽऽत्मनः स्वाभाविको धर्मो यस्माद्विद्यायामुत्कृष्यमाणायां स्वयमपचीयमाना सती काष्ठां गतायां विद्यायां परिनिष्ठिते सर्वात्मभावे सर्वात्मना निवर्तते रज्ज्वामिव सर्पज्ञानं रज्जुनिश्चये । तच्चोक्तं यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येदित्यादि । तस्मान्नाऽऽत्मधर्मोऽविद्या । न हि स्वाभाविकस्योच्छित्तिः कदाचिदप्युपपद्यते सवितुरिवौष्ण्यप्रकाशयोः । तस्मात्तस्या मोक्ष उपपद्यते ॥२०॥

१० इदानीं योऽसौ सर्वात्मभावो मोक्षो विद्याफलं क्रियाकारकफलशून्यं स प्रत्यक्षतो निर्दिश्यते यत्राविद्याकामकर्माणि न सन्ति । तदेतत्प्रस्तुतं यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यतीति । तदेतद्वा अस्य रूपं यः सर्वात्मभावः सोऽस्य परमो लोक इत्युक्तस्तदतिच्छन्दा अतिच्छन्दमित्यर्थः । रूपपरत्वात् । छन्दः कामोऽतिगतश्छन्दो यस्माद्रूपात्तदतिच्छन्दं रूपम् । अन्योऽसौ सान्तश्छन्दःशब्दो गायत्र्यादिच्छन्दोवाची । अयं तु कामवचनोऽतः स्वरान्त एव । तथाऽप्यतिच्छन्दा इति पाठः स्वाध्यायधर्मो द्रष्टव्यः । अस्ति च लोके कामवचनप्रयुक्त-
१५ श्छन्दन्दशब्दः स्वच्छन्दः परच्छन्द इत्यादौ । अतोऽतिच्छन्द मित्येवमुपनेयं कामवर्जितमेतद्रूपमित्यस्मिन्नर्थे ।

तथाऽपहतपाप्म पाप्मशब्देन धर्माधर्मावुच्येते[1] । पाप्मभिः संसृज्यते पाप्मनो विजहातीत्युक्तत्वात् । अपहतपाप्म धर्माधर्मवर्जितमित्येतत् । किञ्च, अभयम् । भयं हि नामाविद्याकार्यम् । अविद्यया भयं मन्यत इति ह्युक्तम् । रागादिना क्रियामादधातीत्यविच्छिन्नः संसारस्तद्यावन्न सम्यग्ज्ञान तावन्मिथ्याज्ञाननिदानमविद्या दुर्वारेत्याह—तत इति । भेददर्शननिदानमविद्येत्यविद्यासूत्रे[2] वृत्तमित्याह—तदेतदिति । तत्रैव वाक्यशेषमनुकूलयति—वक्ष्यमाणं चेति ।
२० अविद्याऽऽत्मनः स्वभावो न वेति विचारे किं निर्णीतं भवतीत्याशङ्क्य वृत्तं कीर्तयति—इदमिति । अविद्यायाः परिच्छिन्नफलत्वमस्ति ततो वैपरीत्येन विद्यायाः कार्यमुक्तं स च सर्वात्मभावो दर्शित इति योजना । संप्रति निर्णीतमर्थं दर्शयति—सा चेति । ज्ञाने सत्यविद्यानिवृत्तिरित्यत्र वाक्यशेषं प्रमाणयति—तच्चेति । अविद्या नाऽऽत्मनः स्वभावो निवर्त्यत्वाद्रज्जुसर्पवदित्याह—तस्मादिति । निवर्त्यत्वेऽप्यात्मस्वभावत्वे का हानिरित्याशङ्क्याऽऽह—नहीति । अविद्यायाः स्वाभाविकत्वाभावे फलितमाह—तस्मादिति ॥२०॥

२५ तद्वा अस्यैतदित्यनन्तरवाक्यतात्पर्यमाह—इदानीमिति । विद्याविद्ययोस्तत्फलयोश्च प्रदर्शनानन्तरमिति यावत् । मोक्षमेव विशिनिष्टि—यत्रेति । पदद्वयस्यान्वयं दर्शयन्विवक्षितमर्थमाह—तदेतदिति । यत्रेत्यन्तशब्दितं ब्रह्मोच्यते । व्याख्यातं पदद्वयमनूद्य वैशब्दस्य प्रसिद्धार्थत्वं मन्वानो रूपशब्देन षष्ठ्याः संबन्धं दर्शयति—तदिति । अतिच्छन्दमिति प्रयोगे हेतुमाह—रूपपरत्वादिति । कथमतिच्छन्दमित्यात्मरूपं विवक्ष्यते तत्राऽऽह—छन्द इति । छन्दःशब्दस्य गायत्र्यादिच्छन्दोविषयस्य कथं कामविषयत्वमित्याशङ्क्याऽऽह—अन्योऽसाविति । गायत्र्यादिविषयत्वं
३० त्यक्त्वा छन्दः न्द)शब्दस्य कामविषयत्वमत.शब्दार्थः । यद्यात्मरूपं कामवर्जितमित्येतदत्र विवक्षितं किमिति तर्हि दैर्घ्यं प्रयुज्यते तत्राऽऽह—तथाऽपीति । स्वाध्यायधर्मत्वं छान्दसत्वम् । वृद्धव्यवहारमन्तरेण कमावाचित्वं छन्दे[3].(न्द)शब्दस्य कथमित्याशङ्क्याऽऽह—अस्ति चेति । तस्य कामवचनत्वे सति सिद्धं यद्रूपमनूद्य तस्यार्थमुपसंहरति—अत इति ।

तथा कामवर्जितत्ववदित्येतत् । नन्वत्राधर्मवर्जितत्वमेव प्रतीयते न धर्मवर्जितत्वं पाप्मशब्दस्याधर्ममात्रवच-
३५ नत्वादत आह—पाप्मशब्देनेति । उपक्रमानुसारेण पाप्मशब्दस्योभयविषयत्वे विशेषणमनूद्य विवक्षितमर्थं कथयति—

१. पाप्मशब्देन धर्माधर्मौ उच्येते । वेदान्तेषु यत्र यत्र धर्मशब्दोऽधर्मशब्दो वा तत्र धर्माधर्मपरत्वमिति छान्दोग्ये 'न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्ते' इत्युक्तत्वादिति निर्णीतम् ।

२. अविद्यासूत्रं 'अन्योऽसावन्योऽहमस्मीति न स वेद' इति पूर्वोक्तं—तेनाविद्या । निदानं भेदज्ञानस्य विद्यायाः फलं सर्वात्मभाव. अहमेवेदं सर्वोऽस्मीति मन्यते इत्युक्तः ।

३. छन्दशब्दस्येति पाठः स्यात् साधुः ।

तत्कार्यद्वारेण कारणप्रतिषेधोऽयम्। अभयं रूपमित्यविद्यावर्जितमित्येतत्। यत्तेदद्विद्याफलं सर्वात्मभावस्तदेत-दतिच्छन्दापहतपाप्माभयं रूपं सर्वसंसारधर्मवर्जितमतोऽभयं रूपमेतत्। इदं च पूर्वमेवोपन्यस्तमतीतान्तरब्राह्मण-समाप्तावभयं वै जनक प्राप्तोऽसीत्यागमतः। इह तु तर्कतः प्रपञ्चितं दर्शितागमार्थप्रत्ययदार्ढ्याय।

अयमात्मा स्वयं चैतन्यज्योतिःस्वभावः सर्वं स्वेन चैतन्यज्योतिषाऽवभासयति। स यत्तत्र किञ्चित्पश्यति रमते चरति जानाति चेत्युक्तम्। स्थितं चैतन्न्यायतो नित्यं स्वरूपं चैतन्यज्योतिष्ट्वमात्मनः। स यद्यात्माऽत्रा- ५ विनष्टः स्वेनैव रूपेण वर्तते कस्मादयमहमस्मीत्यात्मानं वा बहिर्वेमानि भूतानीति जाग्रत्स्वप्नयोरिव न जानातीत्य-त्रोच्यते। शृण्वत्राज्ञानहेतुम्। एकत्वमेवाज्ञानहेतुः। तत्कथमिति। उच्यते। दृष्टान्तेन हि प्रत्यक्षीभवति विवक्षितोऽर्थ इत्याह—तत्तत्र यथा लोके प्रियया स्त्रिया सम्परिष्वक्तः सम्यक्परिष्वक्तः कामयन्त्या कामुकः सन्न बाह्यमात्मनः किञ्चन किञ्चिदपि वेद मत्तोऽन्यद्वस्त्विति न चाऽऽन्तरमयमहमस्मि सुखी दुःखी वेति। अपरिष्वक्तस्तु तया प्रविभक्तो जानाति सर्वमेव बाह्यमाभ्यन्तरं च। परिष्वङ्गोत्तरकालं त्वेकत्वापत्तेर्न जनाति। १०

एवमेव यथा दृष्टान्तोऽयं पुरुषः क्षेत्रज्ञो भूतमात्रासंसर्गतः सैन्धवखिल्यवत्प्रविभक्तो जलादौ चन्द्रादि-प्रतिबिम्बवत्कार्यकरण इह प्रविष्टः सोऽयं पुरुषः प्राज्ञेन परमार्थेन स्वाभाविकेन स्वेनाऽऽत्मना परेण ज्योतिषा सम्परिष्वक्तः सम्यक्परिष्वक्त एकीभूतो निरन्तरः सर्वात्मा न बाह्यं किञ्चन वस्त्वन्तरं नाप्यान्तरमात्मन्ययमह-मस्मि सुखी दुःखी वेति वेद। तत्र चैतन्यज्योतिःस्वभावत्वे कस्मादिह न जानातीति यदप्राक्षीस्तत्रायं हेतुर्मयोक्त एकत्वं यथा स्त्रीपुंसयोः सम्परिष्वक्तयोः। तत्रार्थाज्ज्ञानात्वं विशेषविज्ञानहेतुरित्युक्तं भवति। नानात्वे च कारण- १५ मात्मनो वस्त्वन्तरस्य प्रत्युपस्थापिकाऽविद्येत्युक्तम्। तत्र चाविद्याया यदा प्रविविक्तो भवति तदा सर्वेणैकत्वमेवास्य भवति। ततश्च ज्ञानज्ञेयादिकारकविभागेऽसति कुतो विशेषविज्ञानप्रादुर्भावः कामो वा सम्भवति स्वाभाविके स्वरूपस्य आत्मज्योतिषि।

अपहतेति। तर्हि कार्यमेवाविद्याया निषिध्यते नेत्याह—तत्कार्येति। तस्मादर्थे तच्छब्दः। वाक्यार्थमुपसंहरति—यदेतदिति। कूर्चब्राह्मणान्तेऽपीदं रूपमुक्तमित्याह—इदं चेति। आगमवशात्तत्रोक्तं चेत्किमित्यत्र पुनरुच्यते तत्राऽऽह— २० इह त्विति। सविशेषत्वं चेदात्मत्वानुपपत्तिरित्यादिस्तर्कः। आगमसिद्धे किं तर्कोपन्यासेनेत्याशङ्क्याऽऽह—दर्शितेति।

स्त्रीवाक्यस्य संगतिं वक्तुं वृत्तमनुद्रवति—अयमिति। अनन्वागतवाक्ये चाऽऽत्मनश्चेतनत्वमुक्तमित्याह—स यदिति। आत्मनः सदा चैतन्यज्योतिष्ट्वं स्वरूपं न केवलमुक्तादागमादेव सिद्धं किंतु पूर्वोक्तादनुमानाच्च स्थित-मित्याह—स्थितं चेति। वृत्तमनूद्य सम्बन्धं वक्तुकामश्चोदयति—स यदीति। अत्रेति सुषुप्तिरुक्ता। चैतन्यस्वभावस्यैव सुषुप्ते विशेषज्ञानाभावं साधयति—उच्यत इति। सुषुप्तिः सप्तम्यर्थः। अज्ञानं विशेषज्ञानाभावः। कोऽसावज्ञानहेतुस्तमाह— २५ एकत्वमिति। जीवस्य परेणाऽऽत्मना यदेकत्वं तत्कथं सुषुप्ते विशेषज्ञानाभावे कारणं तस्मिन्सत्यपि चैतन्यस्व-भावानिवृत्तेरिति शङ्कते—तत्कथमिति। तत्र स्त्रीवाक्यमुत्तरत्वेनोत्थापयति—उच्यत इति। तत्र दृष्टान्तभागमाचष्टे—दृष्टान्तेनेति। एकत्वकृतो विशेषज्ञानाभावो विवक्षितोऽर्थः परिष्वङ्गप्रयुक्तसुखाभिनिवेशादज्ञानं किमिति कल्प्यते स्वाभाविकमेव तत्किं न स्यादित्याशङ्क्याऽऽह—अपरिष्वक्तस्त्विति। तर्हि परिष्वङ्गवतोऽपि स्वभावविपरिलोपा-संभवाद्विशेषविज्ञानं स्यादिति चेन्नेत्याह—परिष्वङ्गेति। स्त्रीपुंसलक्षणयोर्व्यामिश्रत्वं परिष्वङ्गस्तदुत्तरकालं सभोग- ३० फलप्राप्तिरेकत्वापत्तिस्तद्वशाद्विशेषाज्ञानमित्यर्थः।

दार्ष्टान्तिकं व्याकरोति—एवमेवेति। भूतमात्राः शरीरेन्द्रियलक्षणास्ताभिश्चिदात्मनस्तादात्म्याध्यासात्तत्प्रति-बिम्बो जातस्ततो विभक्तवद्भातीत्यत्र दृष्टान्तमाह—सैन्धवेति। तस्य देहादौ प्रवेशं दृष्टान्तेन दर्शयति—जलादा-विति। उपसर्गवललब्धमर्थं कथयति—एकीभूत इति। तादात्म्यं व्यावर्तयितुं निरन्तर इत्युक्तम्। परमात्माभेदप्रयुक्त-मनवच्छिन्नत्वमाह—सर्वात्मेति। एवं स्त्रीवाक्याक्षराणि व्याख्याय चोद्यपरिहारं प्रकटयति—तत्रेति। प्रत्यगात्मनीति ३५ यावत्। इहेति सुषुप्तिरुच्यते। यथा परिष्वक्तयोः स्त्रीपुंसयोरेकत्वं पुंसो विशेषविज्ञानाभावे कारणं तथा परेणाऽऽत्मना सुषुप्ते जीवस्यैकत्वं विशेषविज्ञानाभावे तस्य तत्र कारणमुक्तमित्यर्थः। स्त्रीवाक्ये श्रौतमर्थमभिधायाऽऽर्थिकमर्थमाह—तत्रेति। किं पुनर्नानात्वे कारणमिति तदाह—नानात्वे चेति। उक्तमथ योज्यामित्यादावित्यर्थः। किमेतावता सुषुप्ते विशेषविज्ञानाभावस्याऽऽगतं तत्राऽऽह—तत्रेति। विशेषविज्ञाने नानात्वं तत्र चाविद्या कारणमिति स्थिते सतीति यावत्। यदा तदेति सुषुप्तिर्विवक्षिता। प्रविविक्तत्वं कार्यकारणाविद्याविरहितत्वम्। सर्वेण पूर्णेन परमात्मना ४० सहेत्यर्थः। विज्ञानात्मा पष्ठ्योच्यते। एकत्वफलमाह—ततश्चेति।

अत्र पिताऽपिता भवति माताऽमाता लोका अलोका देवा अदेवा वेदा
अवेदाः। अत्र स्तेनोऽस्तेनो भवति भ्रूणहाऽभ्रूणहा चाण्डालो-
ऽचाण्डालः पौल्कसोऽपौल्कसः श्रमणोऽश्रमणस्तापसोऽतापसोऽनन्वागतं
पुण्येनानन्वागतं पापेन तीर्णो हि तदा सर्वाञ्छोकान्हृदयस्य भवति ॥२२॥

५ यस्मादेवं सर्वैकत्वमेवास्य रूपमतस्तद्वा अस्याऽऽत्मनः स्वयंज्योतिःस्वभावस्यैतद्रूपमाप्तकामं यस्मात्स-
मस्तमेतत्तस्मादाप्ताः कामा अस्मिन्रूपे तदिदमाप्तकामम्। यस्य ह्यन्यत्वेन प्रविभक्तः कामस्तदनाप्तकामं भवति।
यथा जागरितावस्थायां देवदत्तादिरूपं न त्विदं तथा कुतश्चित्प्रविभज्यतेऽतस्तदाप्तकामं भवति। किमन्यस्माद्वस्त्व-
न्तरात्प्रविभज्यत आहोस्विदात्मैव तद्वस्त्वन्तरमत आह नान्यदस्त्यात्मनः। कथम्। यत आत्मकाममात्मैव
कामा यस्मिन्रूपेऽन्यत्र प्रविभक्ता इवान्यत्वेन काम्यमाना यथा जाग्रत्स्वप्नयोस्तस्याऽऽत्मैवान्यत्वप्रत्युपस्थापक-
१० हेतोरविद्याया अभावादात्मकाममत एवाकाममेतद्रूपं काम्यविषयाभावाच्छोकान्तरं शोकच्छिद्रं शोकशून्यमित्येत-
च्छोकमध्यमिति वा सर्वथाऽप्यशोकमेतद्रूपं शोकवर्जितमित्यर्थः ॥२१॥

प्रकृतः स्वयंज्योतिरात्माऽविद्याकामकर्मविनिर्मुक्त इत्युक्तम्। असङ्गत्वादात्मन आगन्तुकत्वाच्च तेषाम्।
तत्रैवमाशङ्का जायते चैतन्यस्वभावत्वे सत्यप्येकीभावान्न जानाति स्त्रीपुंसयोरिव संपरिष्वक्तयोरित्युक्तम्। तत्र
प्रासङ्गिकमेतदुक्तं कामकर्मादिवत्स्वयंज्योतिष्ट्वमप्यस्याऽऽत्मनो न स्वभावः। यस्मात्संप्रसादे नोपलभ्यत इत्या-
१५ शङ्कायां प्राप्तायां तन्निराकरणाय स्त्रीपुंसयोर्दृष्टान्तोपादानेन विद्यमानस्यैव स्वयंज्योतिष्ट्वस्य सुषुप्तेऽग्रहणमेकी-
भावाद्धेतोर्न तु कामकर्मादिवदागन्तुकम्। इत्येतत्प्रासङ्गिकमभिधाय यत्प्रकृतं तदेवानुप्रवर्तयति। अत्र चैतत्प्रकृतम-
विद्याकामकर्मविनिर्मुक्तमेव तद्रूपं यत्सुषुप्त आत्मनो गृह्यते प्रत्यक्षत इति। तदेतद्यथाभूतमेवाभिहितं सर्वसंबन्धा-
तीतमेतद्रूपमिति यस्मादत्रैतस्मिन्सुषुप्तस्थानेऽतिच्छन्दापहतपाप्माभयमेतद्रूपं तस्मादत्र पिता जनकः। तस्य च
जनयितृत्वाद्यत्पितृत्वं पुत्रं प्रति तत्कर्मनिमित्तं तेन च कर्मणाऽयमसंबद्धोऽस्मिन्काले तस्मात्पितापुत्रसंबन्धनिमित्तात्

२० उक्तमुपजीव्याऽऽप्तकामवाक्यमवतार्य व्याचष्टे—यस्मादिति। आप्तकामत्वं समर्थयते—यस्मात्समस्तमिति।
तदेव व्यतिरेकमुखेन विशदयति—यस्य हीत्यादिना। विशेषणान्तरमाकाङ्क्षापूर्वकमादाय व्याचष्टे—किमन्यस्मा-
दित्यादिना। सुषुप्तेरन्यत्राऽऽत्मनः सकाशादन्यत्वेन प्रविभक्ता इव काम्यमानाः सुषुप्तावात्मैव कामास्तस्मादात्मकाम-
मात्मरूपमित्येतद्दृष्टान्तेनाऽऽह—यथेति। अवस्थाद्वये खल्वात्मनः सकाशादन्यत्वेन प्रविभक्ता इव कामाः काम्यन्त
इति कामाः। न चैवं सुषुप्त्यवस्थायामात्मनस्ते भिद्यन्ते किंतु सुषुप्तस्याऽऽत्मैव कामा इत्यात्मकामं तद्रूपमित्यर्थः।
२५ तस्याऽऽत्मैवेत्यत्र हेतुमाह—अन्यत्वेति। यद्यपि सुषुप्तेऽविद्या विद्यते तथाऽपि न साऽभिव्यक्ताऽस्तीत्यनर्थपरिहारोपपत्ति-
रित्यर्थः। कामानामात्माश्रयत्वपक्षं प्रतिक्षेप्तुं तृतीयं विशेषणम्। शोकमध्यं शोकस्यान्तरं प्रत्यग्भूतमिति यावत्। तर्हि
शोकवत्त्वं प्राप्तं नेत्याह—सर्वथेति। पक्षद्वयेऽपि शोकशून्यमात्मरूपम्। न हि शोको येनाऽऽत्मवांस्तस्य शोकवत्त्व
शोकस्याऽऽत्माधीनसत्तास्फूर्तेरात्मातिरेकेणाभावादित्यर्थः ॥२१॥

अत्र पितेत्यादिवाक्यमवतारयितुं वृत्तमनुद्रवति—प्रकृत इति। अविद्यादिनिर्मोके हेतुद्वयमाह—असङ्गत्वा-
३० दिति। यद्यपि नाऽऽगन्तुकत्वमविद्याया युक्तं तथाऽप्यभिव्यक्ता साऽनर्थहेतुरागन्तुकीति द्रष्टव्यम्। स्त्रीवाक्यनिरस्या
शङ्कामनुवदति—तत्रेति। कामादिविमोके दर्शिते सतीति यावत्। स्वभावस्यापायो न संभवतीत्यभिप्रेत्य हेतुमाह—
यस्मादिति। शङ्कोत्तरत्वेन स्त्रीवाक्यमवतार्य तत्तात्पर्यं पूर्वोक्तमनुकीर्तयति—स्वयमिति। वृत्तमनूद्योत्तरग्रन्थमुत्थाप-
यति—इत्येतदिति। स्वयंज्योतिष्ट्वस्य स्वाभाविकत्वमेतच्छब्दार्थः। प्रासङ्गिकं कामादेरागन्तुकत्वोक्तिप्रसंगादागतमिति
यावत्। प्रकृतमेव दर्शयति—अत्र चेति। अतिच्छन्दादिवाक्यं सप्तम्यर्थः। प्रत्यक्षतः स्वरूपचैतन्यवशाद्यथोक्तात्मरूपस्य
३५ सुषुप्ते गृह्यमाणत्वमुत्थितस्य परामर्शादवधेयम्। कामादिसंबन्धवदात्मनस्तद्रहितमपि रूपं कल्पितमेवेत्याशङ्क्याऽऽह—
तदेतदिति। प्रकृतमर्थमुक्त्वोत्तरवाक्यस्थसप्तम्यर्थमाह—एतस्मिन्निति। जनकोऽप्यत्रापिता भवतीति संबन्धः।
पिताऽप्यत्रापिता भवतीत्युपपादयति—तस्य चेत्यादिना। यथाऽस्मिन्काले पिता पुत्रस्यापिता भवति तद्वदित्याह—

१. शोकच्छिद्रं—छिद्रं अवकाशः शोकस्य च्छिद्र अभावो यस्मिन्नित्यर्थः।

कर्मणो विनिर्मुक्तत्वात्पिताऽप्यपिता भवति। तथा पुत्रोऽपि पितुरपुत्रो भवतीति सामर्थ्याद्गम्यते। उभयोर्हि संबन्धनिमित्तं कर्म तमयतिक्रान्तो वर्तते। अपहतपाप्मेति ह्युक्तम्। तथा माताऽमाता लोकाः कर्मणा जेतव्या जिताश्च तत्कर्मसंबन्धाभावाल्लोका अलोकाः। तथा देवाः कर्माङ्गभूतास्तत्कर्मसंबन्धात्ययाद्देवा अदेवाः। तथा वेदाः साध्यसाधनसंबन्धाभिधायका मन्त्रलक्षणाश्चाभिधायकत्वेन कर्माङ्गभूता अधीता अध्येतव्याश्च कर्मनिमित्त-मेव संबध्यन्ते पुरुषेण तत्कर्मातिक्रमणादेतस्मिन्काले वेदा अप्यवेदाः संपद्यन्ते। ५

न केवलं शुभकर्मसंबन्धातीतः किं तर्ह्यशुभैरप्यत्यन्तघोरैः कर्मभिरसंबद्ध एवायं वर्तत इत्येतमर्थमाह— अत्र स्तेनो ब्राह्मणसुवर्णहर्ता भ्रूणघ्ना सह पाठादवगम्यते। स तेन घोरेण कर्मणैतस्मिन्काले विनिर्मुक्तो भवति। येनायं कर्मणा महापातकी स्तेन उच्यते। तथा भ्रूणहाऽभ्रूणहा तथा चाण्डालो न केवलं प्रत्युत्पन्नेनैव कर्मणा विनिर्मुक्तः। किं तर्हि सहजेनाप्यत्यन्तनिकृष्टजातिप्रापकेणापि विनिर्मुक्त एवायम्। चाण्डालो नाम शूद्रेण ब्राह्मण्या-मुत्पन्नश्चण्डाल एव चाण्डालः। स जातिनिमित्तेन कर्मणाऽसंबद्धत्वादचाण्डालो भवति। पौल्कसः पुल्कस एव १० पौल्कसः शूद्रेणैव क्षत्रियायामुत्पन्नः। सोऽप्यपुल्कसो भवति। तथाऽऽश्रमलक्षणैश्च कर्मभिरसंबद्धो भवतीत्युच्यते। श्रमणः परिव्राड्यत्कर्मनिमित्तो भवति स तेन विनिर्मुक्तत्वादश्रमणः। तथा तापसो वानप्रस्थोऽतापसः सर्वेषां वर्णाश्रमादीनामुपलक्षणार्थमुभयोर्ग्रहणम्।

किं बहुनाऽन्वागतं नान्वागतमनन्वागतमसंबद्धमित्येतत्पुण्येन शास्त्रविहितेन कर्मणा तथा पापेन विहिता-करणप्रतिषिद्धक्रियालक्षणेन। रूपपरत्वान्नपुंसकलिङ्गम्। अभयं रूपमिति ह्यनुवर्तते। किं पुनरसंबद्धत्वे कारणमिति १५ तद्धेतुरुच्यते—तीर्णोऽतिक्रान्तो हि यस्मादेवंरूपस्तदा तस्मिन्काले सर्वाञ्छोकाञ्शोकाः कामाः। इष्टविषयप्रार्थना हि तद्विषयवियोगे शोकत्वमापद्यते। इष्टं हि विषयमप्राप्तं वियुक्तं चोद्दिश्य चिन्तयानस्तद्गुणान्संतप्यते पुरुषोऽतः शोको रतिः काम इति पर्यायाः। यस्मात्सर्वकामातीतो ह्यत्रायं भवति। न कंचन कामं कामयतेऽतिच्छन्दा इति ह्युक्तं तत्प्रक्रियापतितोऽयं शोकशब्दः कामवचन एव भवितुमर्हति। कामश्च कर्महेतुः। वक्ष्यति हि—"स यथाकामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत्कर्म कुरुते" इति। अतः सर्वकामातितीर्णत्वाद्युक्तमनन्वागतं पुण्येनेत्यादि। २०

तथेति। नास्यार्थस्य प्रतिपादकः शब्दोऽस्तीत्याशङ्क्याऽऽह—सामर्थ्यादिति। तदेव सामर्थ्यं दर्शयति—उभयोरिति। सुषुप्ते कर्मातिक्रमे प्रमाणमाह—अपहतेति। पुनर्लोकदेवशब्दावनुवादार्थौ। वाक्यान्तरमादाय व्याचष्टे—तथेत्यादिना। साध्यसाधनसंबन्धाभिधायका ब्राह्मणलक्षणा इति शेषः। अभिधायकत्वेन प्रमाणत्वेन प्रमेयत्वेन चेत्यर्थः।

अत्र स्तेनोऽस्तेनो भवतीत्यादेस्तात्पर्यमाह—न केवलमिति। स्तेनशब्दोऽत्र चोरमात्रे भाति कथं विशेषण-मित्याशङ्क्याऽऽह—भ्रूणघ्नेति। भ्रूणहा च वरिष्ठब्रह्महन्तोच्यते। तदेव घोरं कर्म विशिनष्टि—येनेति। महत्पातक- २५ मस्येति व्युत्पत्त्या महापातकी स्तेनः। स्तेनादिवाक्येन चाण्डालादिवाक्यस्य गतार्थत्वमाशङ्क्याऽऽह—नेत्यादिना। प्रत्युत्पन्नमागन्तुकम्। "ब्राह्मण्यां क्षत्रियात्सूतो वैश्याद्वैदेहकस्तथा। शूद्राज्जातस्तु चाण्डालः सर्वधर्मबहिष्कृतः॥" इति श्रुतिमाश्रित्याऽऽह—चाण्डालो नामेति। 'जातो निषादाच्छूद्रायां जात्या भवति पुल्कसः' इति स्मृतेः शूद्राया ब्राह्मणाज्जातो निषादः स च जात्या शूद्रस्तस्मात्क्षत्रियायां जातः पुल्कसो भवतीति व्याख्यानमुपेत्याऽऽह—शूद्रेणैवेति। श्रमणादिवाक्यस्य तात्पर्यमाह—तथेति। तथा चाण्डालवदिति यावत्। परिव्राट्तापसयोरेव ग्रहणात्तत्कर्मायोगेऽपि ३० सौषुप्तस्य वर्णाश्रमान्तरकर्मयोगं शङ्कित्वाऽऽह—सर्वेषामिति। आदिशब्देन वयोवस्थादि गृह्यते।

सौषुप्ते पुरुषे प्रकृते कथमनन्वागतमिति नपुंसकप्रयोगस्तत्राऽऽह—रूपपरत्वादिति। तत्परत्वे हेतुमनुषङ्गं दर्शयति—अभयमिति। हेतुवाक्यमाकाङ्क्षापूर्वकमुत्थाप्य व्याचष्टे—किं पुनरित्यादिना। यस्मादतिच्छन्दादिवाक्योक्त-स्वभावोऽयमात्मा सुषुप्तिकाले हृदयनिष्ठान्सर्वाञ्छोकानतिक्रामति तस्मादेतदात्मरूपं पुण्यपापाभ्यामनन्वागतं युक्त-मित्यर्थः। शोकशब्दस्य कामविषयत्वं साधयति—इष्टेति। कथं तस्याः शोकत्वापत्तिरित्याशङ्क्याऽऽह—इष्टं हीति। ३५ तेषां पर्यायत्वेऽपि प्रकृते किमायातं तदाह—यस्मादिति। अत्रेति सुषुप्तिरुच्यते। अतः सर्वकामातितीर्णत्वादित्युत्तरत्र संबन्धः। न केवलं शोकशब्दस्य कामविषयत्वमुपपन्नमेव किन्तु संनिधेरपि सिद्धमित्याह—न कंचनेति। शोकशब्दस्य कामविषयत्वेपि तदत्ययमात्रात्कथं कर्मात्ययः स्यादित्याशङ्क्याऽऽह—कामश्चेति। तत्र वाक्यशेषं प्रमाणयति—वक्ष्यति हीति। कामस्य कर्महेतुत्वे सिद्धे फलितमाह—अत इति।

हृदयस्य हृदयमिति पुण्डरीकाकारो मांसपिण्डस्तत्स्थमन्तःकरणं बुद्धिर्हृदयमित्युच्यते। तात्स्थ्यान्मञ्चक्रोशनवत्। हृदयस्य बुद्धेर्ये शोकाः बुद्धिसंश्रया हि ते। 'कामः संकल्पो विचिकित्सेत्यादि सर्वं मन एवे'त्युक्तत्वात्। वक्ष्यति च—"कामा येऽस्य हृदि श्रिताः" इति। आत्मसंश्रयभ्रान्त्यपनोदाय ह्येवं वचनं—हृदि श्रिता हृदयस्य शोका इति च। हृदयकरणसंबन्धातीतश्चायमस्मिन्काले‌ऽतिक्रामति मृत्यो रूपाणीति ह्युक्तम्। हृदयकरणसंबन्धा-
५ तीतत्वात्तत्संश्रयकामसंबन्धातीतो भवतीति युक्ततरं वचनम्।

ये तु वादिनो हृदि श्रिताः कामा वासनाश्च हृदयसंबन्धिनमात्मनमुपसृप्योपश्लिष्यन्ति हृदयवियोगेऽपि चाऽऽत्मन्यवतिष्ठन्ते पुटतैलस्य इव पुष्पादिगन्ध इत्याचक्षते। तेषां कामः संकल्पो हृदये ह्येव रूपाणि हृदयस्य शोका इत्यादीनां वचनानामानर्थक्यमेव। हृदयकरणोत्पाद्यत्वादिति चेत्। न। हृदि श्रिता इति विशेषणात्। न हि हृदयस्य करणमात्रत्वे हृदि श्रिता इति वचनं समञ्जसं हृदये ह्येव रूपाणि प्रतिष्ठितानीति च। आत्मविशुद्धेश्च
१० विवक्षितत्वाद्धृच्छ्रयणवचनं यथार्थमेव युक्तम्। ध्यायतीव लेलायतीवेति च श्रुतेरन्यार्थासंभवात्।

कामा येऽस्य हृदि श्रिता इति विशेषणादात्माश्रया अपि सन्तीति चेत्। न। अनाश्रितापेक्षत्वात् नात्राऽऽश्रयान्तरमपेक्ष्य ये हृदीति विशेषणं किं तर्हि ये हृद्यनाश्रिताः कामास्तानपेक्ष्य विशेषणम्। ये त्वप्ररूढा भविष्या भूताश्च प्रतिपक्षतो निवृत्तास्ते नैव हृदि श्रिताः संभाव्यन्ते च ते। अतो युक्तं तानपेक्ष्य विशेषणम्। ये प्ररूढा वर्तमाना विषये ते सर्वे प्रमुच्यन्त इति। तथाऽपि विशेषणानर्थक्यमिति चेत्। न। तेषु यत्नाधिक्याद्धेया-
१५ र्थत्वात्। इतरथाऽश्रुतमनिष्टं च कल्पितं स्यादात्माश्रयत्वं कामानाम्। न कंचन कामं कामयत इति प्राप्तप्रति-

हृदयस्य शोकानतिक्रामतीत्यत्र हृदयशब्दार्थमाह—हृदयमितीति। मांसपिण्डविशेषविषयं हृदयपदं कथं बुद्धिमाहेत्याशङ्क्याऽऽह—तात्स्थ्यादिति। यथा मञ्चाः क्रोशन्तीति मंचक्रोशनमुच्यमानं मंचस्थान्पुरुषानुपचारादाह तथा हृदयस्थत्वाद्बुद्धेरुपचाराद्बुद्धिं हृदयशब्दो दर्शयतीत्यर्थः। हृदयशब्दार्थमुक्त्वा तस्य संबन्धं दर्शयति—हृदयस्येति। ताननतिक्रान्तो भवतीति शेषः। आत्माश्रयास्ते न बुद्धिमाश्रयन्तीत्याशङ्क्याऽऽह—बुद्धीति। कथं तर्हि
२० केचिदात्माश्रयत्वं तेषां वदन्तीत्याशङ्क्य भ्रान्तिवशादित्याह—आत्मेति। भवतु कामानां हृदयाश्रितत्वं तथाऽपि तत्संबन्धद्वारा तदाश्रयत्वसंभवात्कथमात्मा सुषुप्ते कामानतिवर्तते तत्राऽऽह—हृदयेति। तत्संबन्धातीतत्वे श्रुतिसिद्धे फलितमाह—हृदयकरणेति।

भर्तृप्रपञ्चप्रस्थानमुत्थापयति—ये त्विति। सत्येव हृदये तन्निष्ठाना कामादीनामात्मन्युपश्लेषो न तन्निवृत्तावित्याशङ्क्याऽऽह—हृदयवियोगेऽपीति। तन्मते श्रुतिविरोधमाह—तेषामिति। हृदयेन करणेनोत्पाद्यत्वादात्मविका-
२५ राणामपि कामादीनां हृदयसंबन्धसंभवान्नाऽऽनर्थक्यं श्रुतीनामिति शंकते—हृदयेति। न कामादिसंबन्धमात्रं हृदयस्य श्रुत्यर्थः किंत्वाश्रयाश्रयित्वं तच्च करणत्वे न स्यात्। नहि चक्षुराद्याश्रयं रूपादिज्ञानं दृष्टमिति परिहरति—न हृदीति। चकाराद्वचनं न समञ्जसमिति संबध्यते। प्रदीपायत्तं घटज्ञानमितिवत् अन्तःकरणायत्तमात्माश्रितं कामादीति तस्य तदाश्रयत्ववचनमौपचारिकमित्याशङ्क्याऽऽह—आत्मविशुद्धेश्चेति। इतश्चेदं यथार्थमित्याह—ध्यायतीवेति। अन्यार्थसंभवाद्बुद्ध्याश्रयणवचनस्येति शेषः।

३० दक्षिणेनाक्ष्णा पश्यतीत्युक्ते वामेन न पश्यतीतिवत्प्रमुच्यन्ते हृदि श्रिता इति विशेषणमाश्रित्याऽऽशङ्कते—कामा य इति। प्रकारान्तरेण विशेषणस्यार्थवत्त्वं दर्शयति—नेत्यादिना। अत्रेति प्रकृतश्रुत्युक्तिः। आश्रयान्तरं बुद्ध्यतिरिक्तमात्माख्यम्। बुद्ध्यनाश्रिता कामा एव न सन्ति यदपेक्षया हृदयाश्रयत्वविशेषणमित्याशङ्क्याऽऽह—ये त्विति। प्रतिपक्षतो विषयदोषदर्शनादिति यावत्। कामानां वर्तमानत्वनियमाभावाद्भूतभविष्यतामपि संभवे फलितमाह—अत इति। हृदयानाश्रितभूतभविष्यत्कामसंभवेऽपि सर्वकामनिवृत्तेर्विवक्षितत्वाद्वर्तमानविशेषणमनर्थ-
३५ कमिति शङ्कते—तथाऽपीति। अतीतानागतकामाभावः संभवति स्वतः सिद्धो न तन्निवृत्तौ यत्नोऽपेक्ष्यते मुक्त्वात्मदिदृक्षुणा तु मुमुक्षुणा वर्तमानकामनिरासे यत्नाधिक्यमाधेयमिति ज्ञापयितुं वर्तमानग्रहणमिति परिहरति—न तेष्विति। यदि यथोक्तं व्याख्यानमनादृत्याऽऽत्माश्रयत्वमेव कामानामाश्रीयते तदाऽश्रुतं मोक्षासंभवेनानिष्टं च कल्पितं स्यादित्याह—इतरथेति। अश्रुतत्वमसिद्धमिति शङ्कते—न कञ्चनेति। अर्थादात्माश्रयत्वं श्रुतमेव कामानामित्येत-

यद्वै तन्न पश्यति पश्यन्वै तन्न पश्यति न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वात् । न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत् ॥२३॥

षेधादात्माश्रयत्वं कामानां श्रुतमेवेति चेत् । न । सधीः स्वप्नो भूत्वेति परनिमित्तत्वात्कामाश्रयत्वप्राप्तेरसङ्गवचनाच्च । न हि कामाश्रयत्वेऽसङ्गवचनमुपपद्यते । सङ्गश्च काम इत्यवोचाम । आत्मकाम इति श्रुतेरात्मविषयोऽस्य कामो भवतीति चेत् । न व्यतिरिक्तकामाभावार्थत्वात्तस्याः ।

वैशेषिकादितन्त्रन्यायोपपन्नमात्मनः कामाद्याश्रयत्वमिति चेत । न । हृदि श्रिता इत्यादिविशेषश्रुतिविरोधानपेक्ष्यास्ता वैशेषिकादितन्त्रोपपत्तयः । श्रुतिविरोधे न्यायाभासत्वोपगमात् । स्वयंज्योतिष्ट्वबाधनाच्च । कामादीनां च स्वप्ने केवलदृशिमात्रविषयत्वात्स्वयंज्योतिष्ट्वं सिद्धं स्थितं च बाध्येत । आत्मसमवायित्वे दृश्यत्वानुपपत्तेश्चक्षुर्गतविशेषवत् । द्रष्टुर्हि दृश्यमर्थान्तरभूतमिति द्रष्टुः स्वयंज्योतिष्ट्वं सिद्धम् । तद्बाधितं स्याद्यदि कामाद्याश्रयत्वं परिकल्प्येत् ।

सर्वशास्त्रार्थविप्रतिषेधाच्च । परस्यैकदेशकल्पनायां कामाद्याश्रयत्वे च सर्वशास्त्रार्थजातं कुप्येत । एतच्च विस्तरेण चतुर्थेऽवोचाम । महता हि प्रयत्नेन कामाद्याश्रयत्वकल्पनाः प्रतिषेद्धव्या आत्मानः परेणैकत्वशास्त्रार्थसिद्धये: तत्कल्पनायां पुनः क्रियमाणायां शास्त्रार्थ एव बाधितः स्यात् । यथेच्छादीनामात्मधर्मत्वं कल्पयन्तो वैशेषिका नैयायिकाश्चोपनिषच्छास्त्रार्थेन न संगच्छन्ते, तथेयमपि कल्पनोपनिषच्छास्त्रार्थबाधनान्नाऽऽदरणीया ॥२२॥

स्त्रीपुंसयोरिवैकत्वान्न पश्यतीत्युक्तं स्वयंज्योतिरिति च । स्वयंज्योतिष्ट्वं नाम चैतन्यात्मस्वभावता ।

दूषयति—नेत्यादिना । निषेधो हि प्राप्तिमपेक्षते न वास्तवं कामानामात्मधर्मत्वं प्राप्तिस्तु भ्रान्त्याऽपि संभवति । तस्मादात्मनो वस्तुतो न कामाद्याश्रयत्वमित्यर्थः । इतश्चाऽऽत्मनो न कामाद्याश्रयत्वमित्याह—असङ्गेति । नन्वसङ्गवचनमात्मनः सङ्गाभावं साधयत्तस्य कामित्वे न विरुध्यते तत्राऽऽह—सङ्गश्चेति । कामश्च सङ्गस्ततोऽसिद्धो हेतुरत्रेति शेषः । वाक्यान्तरमाश्रित्याऽऽत्मनि कामाश्रयत्वं शङ्कित्वा दूषयति—आत्मेत्यादिना ।

इच्छादयः क्वचिदाश्रिता गुणत्वाद्रूपादिवदित्यनुमानात्परिशेषात्कामाद्याश्रयत्वमात्मनः सेत्स्यतीति शङ्कते—वैशेषिकादीति । श्रुत्यवष्टम्भेन निराचष्टे—नेत्यादिना । स्वयंज्योतिष्ट्वबाधनाच्च नाऽऽत्माश्रयत्वं कामादीनामिति शेषः । तदेव विवृणोति—कामादीनामिति । स्थितं चानुमानादिति शेषः । यद्यत्र समवेतं तत्तेन न दृश्यते । यथा चक्षुर्गतं कार्ष्ण्यं तेनैव चक्षुषा न दृश्यते तथा कामादीनामात्मसमवायित्वे दृश्यत्वं न स्याद्दृश्यत्वबलेनैव स्वयंज्योतिष्ट्वं साधितं तथा च तद्बाधे पूर्वोक्तमनुमानमपि बाध्येतेत्यर्थः । कथं कामादीनामात्मदृश्यत्वमाश्रित्य स्वप्ने स्वयंज्योतिष्ट्वस्योपदिष्टत्वं तत्राऽऽह—द्रष्टुरिति । तथाऽपि तेषामात्माश्रयत्वे काऽनुपपत्तिस्तत्राऽऽह—तद्बाधितमिति ।

यत्तु परमात्मैकदेशं जीवमाश्रित्य तदाश्रितं कामादीति तत्राऽऽह—सर्वशास्त्रेति । तदेव स्फुटयति—परस्येति । शास्त्रार्थजात निरवयवत्वप्रत्यगेकत्वादि तस्य कथं कोपः स्यादित्याशङ्क्याऽऽह—एतच्चेति । चतुर्थे चेद्भर्तृप्रपञ्चमतं निरस्त तर्हि पुनर्निराकरणमकिञ्चित्करमित्याशङ्क्याऽऽह—महतेति । परेण सह प्रत्यगात्मनो यदेकत्वं तस्य शास्त्रार्थस्य सिद्धयर्थमिति यावत् । अंशत्वादिकल्पनायामपि शास्त्रार्थसिद्धिमाशङ्क्याऽऽह—तत्कल्पनायामिति । भर्तृप्रपञ्चकल्पनाया हेयत्वमुपसंहरति—यथेत्यादिना ॥२२॥

यद्वै तन्न पश्यतीत्यादेः सम्बन्धं वक्तुं वृत्तं कीर्तयति—स्त्रीपुंसयोरिति । चकारादुक्तं स्वयंज्योतिष्ट्वमिति

१. कामा. आत्माश्रयाः अहं इच्छामीति प्रतीतेरिति नैयायिकाः तन्न युक्तम् । 'कामा येऽस्य हृदि श्रिताः' इति श्रुत्या बाधात् । श्रुतिसिद्धस्वयंज्योतिष्ट्वबाधापत्तेश्च ।

२. आत्मसमवायित्वे आत्मधर्मत्वे आत्मदृश्यत्वं न स्यात् विषयविषयिणोर्भेदनियमात् कामानामात्मसमवायित्वे आत्मदृश्यत्व स्वप्ने दृश्यमानं नोपपद्येत कर्मकर्तृभावस्यैकस्मिन् विरोधात् स्वयंज्योतिष्ट्वं ज्योतिरन्तरासहकृतत्वं बाध्येत कामादीना दृश्यत्वेनैव स्वप्ने तत्साधनम् ।

३. पूर्वोक्तमनुमानम् इच्छादयः क्वचिदाश्रिता इत्यनेन पूर्वमुक्तमनुमानम् ।

यदि ह्यग्न्युष्णत्वादिवच्चैतन्यात्मस्वभाव आत्मा स कथमेकत्वेऽपि हि स्वभावं जह्यान्न जानीयात्। अथ न जहाति कथमिह सुषुप्ते न पश्यति। विप्रतिषिद्धमेतच्चैतन्यमात्मस्वभावो न जानाति चेति। न विप्रतिषिद्धमुभयमप्येतदुपपद्यत एव। कथम्—यद्वै सुषुप्ते तन्न पश्यति पश्यन्वै तत्तत्र पश्यन्नेव न पश्यति। यत्तत्र सुषुप्ते न पश्यतीति जानीषे तन्न तथा गृह्णीया। कस्मात्। पश्यन्वै भवति तत्र।

५ नन्वेवं न पश्यतीति सुषुप्ते जानीमः यतो न चक्षुर्वा मनो वा दर्शने करणं व्यापृतमस्ति। व्यापृतेषु हि दर्शनश्रवणादिषु पश्यतीति व्यवहारो भवति शृणोतीति वा। न च व्यापृतानि करणानि पश्यामः। तस्मान्न पश्यत्येवायम्। न हि। किं तर्हि पश्यन्नेव भवति। कथम्। न हि यस्माद्द्रष्टुर्दृष्टिकर्तुर्या दृष्टिस्तस्या दृष्टेर्विपरिलोपो विनाशः स न विद्यते। यथाऽग्नेरौष्ण्यं यावदग्निभावि तथाऽयं चाऽऽत्मा द्रष्टाऽविनाश्यतोऽविनाशित्वादात्मनो दृष्टिरप्यविनाशिनी यावद्द्रष्टृभाविनी हि सा। ननु विप्रतिषिद्धमिदमभिधीयते द्रष्टुः सा दृष्टिर्न विपरिलुप्यत इति १० च। दृष्टिश्च द्रष्ट्रा क्रियते दृष्टिकर्तृत्वाद्धि द्रष्टेत्युच्यते। क्रियमाणा च द्रष्ट्रा दृष्टिर्न विपरिलुप्यत इति चाशक्यं वक्तुम्। ननु न विपरिलुप्यत इति वचनादविनाशिनी स्यात्। न। वचनस्य ज्ञापकत्वात्। नहि न्यायप्राप्तो विनाशः कृतकस्य वचनशतेनापि वारयितुं शक्यते। वचनस्य यथाप्राप्तार्थज्ञापकत्वात्।

नैष दोषः। आदित्यादिप्रकाशकत्ववद्दर्शनोपपत्तेः। यथाऽऽदित्यादयो नित्यप्रकाशस्वभावा एव सन्तः स्वाभाविकेन नित्येनैव प्रकाशेन प्रकाशयन्ति। न ह्यप्रकाशात्मानः सन्तः प्रकाशं कुर्वन्तः प्रकाशयन्तीत्युच्यन्ते। १५ किं तर्हि स्वभावेनैव नित्येन प्रकाशेन। तथाऽयमप्यात्माऽविपरिलुप्तस्वभावया दृष्ट्या नित्यया द्रष्टेत्युच्यन्ते। गौणं तर्हि द्रष्टृत्वम्। नैवमेव मुख्यत्वोपपत्तेः। यदि ह्यन्यथाऽप्यात्मनो द्रष्टृत्वं दृष्टं तदाऽस्य द्रष्टृत्वस्य गौणत्वं न त्वात्मनोऽन्यो दर्शनप्रकारोऽस्ति तदेवमेव मुख्यं द्रष्टृत्वमुपपद्यते नान्यथा। यथाऽऽदित्यादीनां प्रकाशयितृत्वं नित्येनैव स्वभाविकेनाक्रियमाणेन प्रकाशकेन तदेव च प्रकाशयितृत्वं मुख्यं प्रकाशयितृत्वान्तरानुपपत्तेः। तस्मान्न द्रष्टुर्दृष्टिर्विपरिलुप्यत इति न विप्रतिषेधगन्धोऽप्यस्ति।

२० संबध्यते। किमिदं स्वयंज्योतिष्ट्वमिति तदाह—स्वयंज्योतिष्ट्वं नामेति। एवं वृत्तमनूद्योत्तरवाक्यव्यावर्त्यां शङ्कामाह—यदीत्यादिना। स्वभावत्यागमेवाभिनयति—न जानीयादिति। तत्त्यागाभावे सुषुप्ते विशेषविज्ञानराहित्यमयुक्तमित्याह—अथेत्यादिना। आत्मा चिद्रूपोऽपि सुषुप्ते विशेषं न जानाति चेत्किं दुष्यतीत्याशङ्क्याऽऽह—विप्रतिषिद्धमिति। परिहरति—नेति। उभयं चैतन्यस्वभावत्व विशेषविज्ञानराहित्यं चेत्यर्थः। उभयस्वीकारे शङ्कित विप्रतिषेधमाकाङ्क्षापूर्वकं श्रुत्या निराकरोति—कथमित्यादिना। यद्वै तदित्यादिवाक्यं चोदितार्थानुवादस्तत्परिहारस्तु २५ पश्यन्नित्यादिवाक्यमिति विभजते—यत्तत्रेति।

न हीत्यादिवाक्यनिरस्यामाशङ्कामाह—नन्विति। चक्षुरादिव्यापाराभावेऽपि सुषुप्ते दर्शनादि किं न स्यादित्याशङ्क्याऽऽह—व्यापृतेष्विति। अस्तु तर्हि तत्रापि करणव्यापारो नेत्याह—न चेति। अयमिति सुषुप्तपुरुषोक्तिः। न पश्यत्येवेति नियमं निषेधति—न हीति। तत्र हेतुं वक्तुं प्रश्नपूर्वकं प्रतिज्ञा प्रस्तौति—किं तर्हीति। तत्राऽऽकाङ्क्षापूर्वकं हेतुवाक्यमुत्थाप्य व्याचष्टे—कथमित्यादिना। अविनाशित्वादित्येतद्व्याकुर्वन्दृष्टेर्विनाशाभावं स्पष्टयति—३० यथेत्यादिना। द्रष्टुर्दृष्टिर्न नश्यतीत्यत्र विरोधं चोदयति—नन्विति। विप्रतिषेधमेव साधयति—दृष्टिश्चेति। कार्यस्यापि वचनादविनाशः स्यादिति शङ्कते—नन्विति। तस्याकारकत्वान्नैवमिति परिहरति—न वचनस्येति। तदेव स्फुटयति—न हीति। यत्कृतकं तदनित्यमितिव्याप्त्यनुगृहीतानुमानविरोधाद्वचो न कार्यनित्यत्वबोधकमित्यर्थः।

कूटस्थदृष्टिरेवात्र द्रष्टृशब्दार्थो न दृष्टिकर्ता तन्न विप्रतिषेधोऽस्तीति सिद्धान्तयति—नैष दोष इति। आदित्यादिप्रकाशकत्ववदित्युक्तं दृष्टान्तं व्याचष्टे—यथेति। दृष्टान्तेऽपि विप्रतिपन्नं प्रत्याह—न हीति। दर्शनोपपत्तेरित्युक्त ३५ दार्ष्टान्तिकं विभजते—तथेति। आत्मनो नित्यदृष्टित्वे दोषमाशङ्कते—गौणमिति। गौणस्य मुख्यापेक्षत्वान्मुख्यस्य चान्यस्य द्रष्टृत्वस्याभावान्नैवमित्युत्तरमाह—नेत्यादिना। तामेवोपपत्तिमुपदर्शयति—यदि हीत्यादिना। अन्यथा कूटस्थदृष्टित्वमन्तरेणेति यावत्। दर्शनप्रकारस्यान्यत्व क्रियात्मत्वम्। तस्य निष्क्रियत्वश्रुतिस्मृतिविरोधादिति शेषः। द्रष्टृत्वान्तरानुपपत्तौ फलितमाह—तदेवमेवेति। नित्यदृष्टित्वेनैवेत्यर्थः। उक्तेऽर्थे दृष्टान्तमाह—यथेत्यादिना। तथाऽऽत्मनोऽपि द्रष्टृत्वं नित्येनैव स्वभाविकेन चैतन्यज्योतिषा सिध्यति तदेव च द्रष्टृत्वं मुख्यं द्रष्टृत्वान्तरानुपपत्तेरिति ४० शेषः। आत्मनो नित्यदृष्टिस्वभावत्वे फलितमाह—तस्मादिति।

यद्वै तन्न जिघ्रति जिघ्रन्वै तन्न जिघ्रति न हि घ्रातुर्घ्रातेर्विपरिलोपो
विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यज्जिघ्रेत् ॥२४॥
यद्वै तन्न रसयते रसयन्वै तन्न रसयते न हि रसयितू रसयतेर्विपरिलोपो
विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्रसयेत् ॥२५॥
यद्वै तन्न वदति वदन्वै तन्न वदति न हि वक्तुर्वक्तेर्विपरिलोपो ५
विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्वदेत् ॥२६॥

नन्वनित्यक्रियाकर्तृविषय एव तृच्प्रत्ययान्तस्य शब्दस्य प्रयोगो दृष्टो यथा छेत्ता भेत्ता गन्तेति तथा द्रष्टेत्यत्रापीति चेत् । न । प्रकाशयितेति दृष्टत्वात् । भवतु प्रकाशकेष्वन्यथाऽसंभवान्न त्वात्मनीति चेत् । न, दृष्टचविपरिलोपश्रुतेः । पश्यामि न पश्यामीत्यनुभवदर्शनान्नेति चेत् । न । करणव्यापारविशेषापेक्षत्वात् । उद्घृतचक्षुषां च स्वप्न आत्मदृष्टेरविपरिलोपदर्शनात् । तस्मादविपरिलुप्तस्वभावैवाऽऽत्मनो दृष्टिः । अतस्तयाऽविपरिलुप्तया दृष्ट्या १० स्वयञ्ज्योतिःस्वभावया पश्यन्नेव भवति सुषुप्ते ।

कथं तर्हि न पश्यतीति । उच्यते । न तु तदस्ति किं तत् । द्वितीयं विषयभूतम् । किंविशिष्टम् । ततो द्रष्टुरन्यदन्यत्वेन विभक्तं यत्पश्येद्यदुपलभेत यद्धि तद्विशेषदर्शनकारणमन्तःकरणं चक्षू रूपं च तदविद्ययाऽन्यत्वेन प्रत्युपस्थापितमासीत् । तदेतस्मिन्काल एकीभूतम् । आत्मनः परेण परिष्वङ्गात् । द्रष्टुर्हि परिच्छिन्नस्य विशेषदर्शनाय करणमन्यत्वेन व्यतिष्ठते । अयं तु स्वेन सर्वात्मना संपरिष्वक्तः स्वेन परेण प्राज्ञेनाऽऽत्मना प्रिययेव १५ पुरुषः । तेन न पृथक्त्वेन व्यवस्थितानि करणानि विषयाश्च । तदभावाद्विशेषदर्शनं नास्ति । करणादिकृतं हि तत्राऽऽत्मकृतम् । आत्मकृतमिव प्रत्यवभासते । तस्मात्तत्कृतेयं भ्रान्तिरात्मनो दृष्टिः परिलुप्यत इति ॥२३॥

समानमन्यत् । यद्वै तन्न जिघ्रति । यद्वै तन्न रसयते । यद्वै तन्न वदति । यद्वै तन्न शृणोति । यद्वै तन्न मनुते । यद्वै तन्न स्पृशति । यद्वै तन्न विजानातीति मननविज्ञानयोर्हष्ट्याादिसहकारित्वेऽपि सति चक्षुरादिनिरपेक्षो भूतभविष्यद्वर्तमानविषयव्यापारो विद्यत इति पृथग्ग्रहणम् । किं पुनर्दृष्ट्यादीनामग्नेरौष्ण्यप्रकाशनज्वलनादि- २०

तृजन्तं द्रष्टृशब्दमाश्रित्य शङ्कते—नन्विति । अत्राप्यनित्यक्रियाकर्तृविषयास्तृजन्तशब्दप्रयोग इति शेषः । तृजन्तशब्दप्रयोगस्यानित्यक्रियाकर्तृविषयत्वं व्यभिचारयन्नुत्तरमाह—नेति । वैषम्यमाशङ्कते—भवत्विति । आदित्यादिषु स्वाभाविकप्रकाशेन प्रकाशयितृत्वमस्तु कादाचित्कप्रकाशेन प्रकाशयितृत्वस्य तेष्वसंभवान्न त्वात्मनि नित्या दृष्टिरस्ति तन्मानाभावात् । तथा च कादाचित्कदृष्ट्यैव तस्य द्रष्टृतेत्यर्थः । प्रतीचश्चिद्रूपत्वस्य श्रौतत्वात्कर्तृत्वं विना प्रकाशयितृत्वमविशिष्टमित्युत्तरमाह—न दृष्टीति । कूटस्थदृष्टिरात्मेत्युक्ते प्रत्यक्षविरोधं शङ्कते—पश्यामीति । द्विवि- २५ धोऽनुभवस्तस्य कूटस्थदृष्टित्वमनुगृह्णाति चक्षुरादिव्यापारभावापेक्षया पश्यामि न पश्यामीति धियोरात्मसाक्षिकत्वादित्युत्तरमाह—न करणेति । आत्मदृष्टेर्नित्यत्वे हेत्वन्तरमाह—उद्घृतेति । आत्मदृष्टेर्नित्यमुपसंहरति—तस्मादिति । तन्नित्यत्वोक्तिफलमाह—अत इति ।

वाक्यान्तरमाकाङ्क्षापूर्वकमुत्थाप्य व्याचष्टे—कथमित्यादिना । द्वितीयादिपदानां पौनरुक्त्यमाशङ्क्यार्थभेदं दर्शयति—यद्धीत्यादिना । साभासमन्तःकरणं यत्पश्येदिति विशेषदर्शनकारणं प्रमातृ द्वितीयं तस्मादन्यच्चक्षुरादि ३० प्रमाणं रूपादि च प्रमेयं विभक्त तत्सर्वं जाग्रत्स्वप्नयोरविद्याप्रतिपन्नं सुषुप्तिकाले कारणमात्रतां गतमभिव्यक्तं नास्तीत्यर्थः । सुषुप्ते द्वितीयं प्रमातृरूप नास्तीत्येतदुपपादयति—आत्मन इति । प्रामातृरूपं पृथङ्नास्तीति शेषः । तथाऽपि करणव्यापारकृत विषयदर्शनमात्मनः स्यादित्याशङ्क्याऽऽह—द्रष्टुरिति । सुषुप्तस्यापि परिच्छिन्नत्वमाशङ्क्याऽऽह—अयं त्विति । तस्य परेणैकीभावफलमाह—तेनेति । विषयेन्द्रियाभावकृतं फलमाह—तदभावादिति । किमिति विषयाद्यभावाद्विशेषदर्शनं निषिध्यते सत्त्वमेव तस्याऽऽत्मसत्त्वाधीनं किं न स्यादित्याशङ्क्याऽऽह—करणादिति । नन्ववस्थाद्वये ३५ विशेषदर्शनमात्मकृत प्रतिभाति तस्य प्रधानत्वादत आह—आत्मकृतमिवेति । नन्वित्यादेस्तात्पर्यमुपसंहरति—तस्मादिति । प्रमातृकरणविषयकृतत्वाद्विशेषदृष्टेस्तेषां च सुषुप्तावभावात्तत्कार्याया विशेषदृष्टेरपि तत्राभावादिति यावत् । तत्कृता जागरादावात्मकृतत्वेन भ्रान्तिर्प्रतिपन्नविशेषदर्शनाभावप्रयुक्तेत्यर्थः ॥२३॥

यद्वै तन्न पश्यतीत्यादावुक्तन्यायमुत्तरवाक्येष्वतिदिशति—समानमन्यदिति । मनोबुद्ध्योः साधारणकरणत्वात्पृथग्व्यापाराभावे कथं पृथङ्निर्देशः स्यादित्याशङ्क्याऽऽह—मननेति । वाक्यानि व्याख्याय स्वसिद्धान्तस्फुटी- ४० करणार्थं विचारयति—किं पुनरिति । धर्मभेदो धर्मिणा सता मिथो धर्मिणश्च भेदोऽस्तीति यावत् । धर्मस्य दृष्ट्यादि-

यद्वै तन्न शृणोति शृण्वन्वै तन्न शृणोति न हि श्रोतुः श्रुतेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यच्छृणुयात् ॥२७॥
यद्वै तन्न मनुते मन्वानो वै तन्न मनुते न हि मन्तुर्मतेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यन्मन्वीत ॥२८॥
यद्वै तन्न स्पृशति स्पृशन्वै तन्न स्पृशति न हि स्प्रष्टुः स्पृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्स्पृशेत् ॥२९॥
यद्वै तन्न विजानाति विजानन्वै तन्न विजानाति न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्विजानीयात् ॥३०॥

वद्धर्मभेद आहोस्विदभिन्नस्यैव धर्मस्य परोपाधिनिमित्तं धर्मान्यत्वमिति। अत्र केचिद्व्याचक्षते। आत्मवस्तुनः स्वत एवैकत्वं नानात्वं च यथा गोर्गोद्रव्यतयैकत्वं सास्नादीनां धर्माणां परस्परतो भेदः। यथा स्थूलेष्वेकत्वं नानात्वं च तथा निरवयवेष्वमूर्तवस्तुष्वेकत्वं नानात्वं चानुमेयम्। सर्वत्राव्यभिचारदर्शनादात्मनोऽपि तद्वदेव दृष्ट्यादीनां परस्परं नानात्वमात्मना चैकत्वमिति।

नान्यपरत्वात्[1]। न हि दृष्ट्यादिधर्मभेदप्रदर्शनपरमिदं वाक्यं यद्वै तदित्यादि। किं तर्हि। यदि चैतन्यात्मज्योतिः कथं न जानाति सुषुप्ते नूनमतो न चैतन्यात्मज्योतिरित्येवमाशङ्काप्राप्तौ तन्निराकरणायैतदारब्धं यद्वै तदित्यादि। यदस्य जाग्रत्स्वप्नयोश्चक्षुराद्यनेकोपाधिद्वारं चैतन्यात्मज्योतिः स्वाभाव्यमुपलक्षितं दृष्ट्याद्यभिधेयव्यवहारापन्नं सुषुप्त उपाधिभेदव्यापारनिवृत्तावनुद्भास्यमानत्वादनुपलक्ष्यमाणस्वभावमप्युपाधिभेदेन भिन्नमिव यथाप्राप्तानुवादेनैव विद्यमानत्वमुच्यते। तत्र दृष्ट्यादिधर्मभेदकल्पनाविवक्षितार्थानभिज्ञतया। सैन्धवघनवत्[2] प्रज्ञानैकरसघनश्रुतिविरोधाच्च। "विज्ञानमानन्दम्" "सत्यं ज्ञानम्" "प्रज्ञानं ब्रह्म" इत्यादिश्रुतिभ्यश्च। शब्दप्रवृत्तेश्च। लौकिकी च शब्दप्रवृत्तिश्चक्षुषा रूपं विजानाति श्रोत्रेण शब्दं विजानाति[3] रसनेनान्नस्य रसं विजानातीति च सर्वत्रैव च दृष्ट्यादिशब्दाभिधेयानां विज्ञानशब्दवाच्यतामेव दर्शयति। शब्दप्रवृत्तिश्च प्रमाणम्।

पदार्थस्येत्यर्थः। परोपाधिनिमित्तं चक्षुराद्युपाधिकृतमित्येतत्। धर्मान्यत्वं धर्मत्वं धर्मिणो मिथोऽन्यत्वं चेत्यर्थः। भर्तृप्रपञ्चमतेन पूर्वपक्षं गृह्णाति—अत्रेति। गवादीनां सावयवत्वाद्रूपभेदसंभवादेकेन रूपेणाभिन्नत्वं रूपान्तरेण भिन्नत्वमित्युभयथात्वेऽपि निरवयवेष्वात्मादिषु कथमनेकरसत्वसिद्धिरित्याशङ्क्याऽऽह—यथा स्थूलेष्विति। एकरूपत्वे वस्तुनो दृष्टान्तादृष्टेर्नानारूपत्वे गवादिदृष्टान्तदर्शनात्तदेवानुमेयम्। विमतं भिन्नाभिन्नं वस्तुत्वाद्गवादिवदित्यर्थः। यद्यपि गगनादिषु भिन्नाभिन्नत्वमनुमीयते तथाऽपि कथमात्मनि तदनुमानमित्याशङ्क्य वस्तुत्वस्य नानारूपत्वेनाव्यभिचारादात्मन्यपि यथोक्तमनुमानं निरङ्कुशप्रसरमित्याह—सर्वत्रेति। यथोक्तानुमानानुग्रहाद्यद्वै तदित्यादेर्भिन्नाभिन्ने वस्तुनि तात्पर्यमिति भावः।

भर्तृप्रपञ्चोक्तं वाक्यतात्पर्यं निराकरोति—नेत्यादिना। चैतन्याविनाशे वाक्यतात्पर्यं चेत्कथं तर्हि दृष्ट्यादिभेदवचनमित्याशङ्क्याऽऽह—यदस्येति। तद्धि सुषुप्त्यवस्थायामुपाधेरन्तःकरणस्य चक्षुरादिभेदाधीनपरिणामव्यापारनिवृत्तौ सत्यामुपाधिभेदस्यानुद्भास्यमानत्वात्तेन भिन्नमिवानुपलक्ष्यमाणस्वभावं यद्यपि तथाऽपि चक्षुर्द्वारेण जायमानायां बुद्धिवृत्तौ व्यक्तं चैतन्यं दृष्टिर्घ्राणद्वारेण जातायां तस्यां व्यक्तं घ्रातिरित्युपाधिभेदात्प्राप्तभेदानुवादेन चैतन्यस्याविनाशित्वे वाक्यतात्पर्यमित्यर्थः। उक्ते वाक्यतात्पर्ये स्थिते फलितमाह—तत्रेति। इतश्च दृष्ट्यादिभेदकल्पना न क्लिष्टेत्याह—सैन्धवेति। तदेव स्पष्टयति—विज्ञानमिति। न दृष्ट्यादिभेदकल्पनेति शेषः। यथा घटाकाशो महाकाश इत्येकशब्दविषयत्वादुपाधिभेदेऽप्याकाशस्यैकत्वमिष्टं तथैकशब्दप्रवृत्तेरेकत्वं चित्तोऽपि स्वीकर्तव्यं तत्कुतो दृष्ट्यादिभेदसिद्धिरित्याह—शब्दप्रवृत्तेश्चेति। तामेव विवृणोति—लौकिकी चेति।

1. न अन्यपरत्वात्। आत्मनः दृष्टिः, श्रुतिः, घ्रातिः स्पृष्टिः इत्यादयो धर्मभेदाः। चक्षुरादिजन्यवृत्त्यभिव्यक्तचैतन्यस्य उपाधिभेदभिन्नस्य उपाधिमिथ्यात्वात् भेदो नास्त्येव तथापि तादृशौपाधिकभेदस्य सुषुप्तौ चैतन्ये अभावात् तदनुवादेन शुद्धचैतन्यं सुषुप्तौ भातीत्यर्थः।

2. 'यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवैवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव' इति मैत्रेयीब्राह्मणे तद्विरोधात्।

3. जानाति जानाति इति ज्ञानरूपत्वस्य सर्ववृत्तिषु अनुगतत्वात् ज्ञानाभेदः विषयाणामेव न भेदः।

**दृष्टान्तोपपत्तेश्च। यथा हि लोके स्वच्छस्वाभाव्ययुक्तः स्फटिकस्तन्निमित्तमेव केवलं हरितनीललोहिताद्युपाधिभेदसंयोगात्तदाकारत्वं भजते। न च स्वच्छस्वाभाव्यव्यतिरेकेण हरितनीललोहितादिलक्षणा धर्मभेदाः स्फटिकस्य कल्पयितुं शक्यन्ते। तथा चक्षुराद्युपाधिभेदसंयोगात्प्रज्ञानघनस्वभावस्यैवाऽऽत्मज्योतिषो दृष्ट्यादिशक्तिभेद उपलक्ष्यते। प्रज्ञानघनस्य स्वच्छस्वाभाव्यात्स्फटिकस्वच्छस्वाभाव्यवत्स्वयंज्योतिष्ट्वाच्च। यथा चाऽऽदित्यज्योतिरवभास्यभेदैः संयुज्यमानं हरितनीलपीतलोहितादिभेदैरविभाग्यं तदाकाराभासं भवति। तथा च कृत्स्नं जगदवभासयच्चक्षुरादीनि च तदाकारं भवति। तथा चोक्तमात्मनैवायं ज्योतिषाऽऽस्त इत्यादि।**

**न च निरवयवेष्वनेकात्मता शक्यते कल्पयितुम्। दृष्टान्ताभावात्। यदप्याकाशस्य सर्वगतत्वादिधर्मभेदः परिकल्प्यते परमाण्वादीनां च गन्धरसाद्यनेकगुणत्वं तदपि निरूप्यमाणं परोपाधिनिमित्तमेव भवति। आकाशस्य तावत्सर्वगतत्वं नाम न स्वतो धर्मोऽस्ति। सर्वोपाधिसंश्रयाद्धि सर्वत्र स्वेन रूपेण सत्त्वमपेक्ष्य सर्वगतत्वव्यवहारो न त्वाकाशः क्वचिद्गतो वाऽगतो वा स्वतः। गमनं हि नाम देशान्तरस्थस्य देशान्तरेण संयोगकारणम्। सा च क्रिया नैवाविशेषे संभवति। एवं धर्मभेदा नैव सन्त्याकाशे।**

**तथा परमाण्वादावपि। परमाणुर्नाम पृथिव्या गन्धघनायाः परमसूक्ष्मोऽवयवो गन्धात्मक एव न तस्य पुनर्गन्धवत्त्व नाम शक्यते कल्पयितुम्। अथ तस्यैव रसादिमत्त्वं स्यादिति चेन्न। तत्राप्यबादिसंसर्गनिमित्तत्वात् तस्मान्न निरवयवस्यानेकधर्मवत्त्वे दृष्टान्तोऽस्ति। एतेन दृगादिशक्तिभेदानां पृथक्चक्षूरूपादिभेदेन परिणामभेदकल्पना परमात्मनि प्रयुक्ता ॥२४-३०॥**

यत्तु सिद्धान्ते दृष्टान्तो नास्तीति तत्राऽऽह—**दृष्टान्तेति**। किमेकरूपत्वे वस्तुनो दृष्टान्तो नास्ति किंवा मिथ्यात्वे तन्नानारूपत्वस्येति वक्तव्यम्। नाऽऽद्यः। नानारूपवस्तुवादिभिरप्येकैकरूपस्यानवस्थापरिहारार्थमनानारूपत्वाङ्गीकारादस्माकं दृष्टान्तसिद्धेर्वस्तुत्वहेतोश्च तत्रैवानैकान्तिकत्वात्तस्मादेकरूपमेव वस्तु स्वीकर्तव्यमिति भावः[1]। द्वितीयं दूषयति—**यथा हीति**। तन्निमित्तमेवेत्यत्र तच्छब्देन स्वच्छस्वाभाव्यं परामृश्यते। स्फटिके हरितादिधर्माणां स्वाभाविकत्वं किं न स्यादित्याशङ्क्याऽऽह—**न चेति**। तस्य हि स्वच्छस्वाभाव्यं तद्वशेन हरिताद्युपाधिभेदसम्बन्धव्यतिरेकेणेति यावत्। एकस्य नानारूपत्व मिथ्येत्यत्र दृष्टान्तमुक्त्वा दार्ष्टान्तिकमाह—**तथेति**। आत्मा मिथ्यानानानिर्भास उपहितत्वात्स्फटिकवदित्यर्थः। किञ्चाऽऽत्मा मिथ्यानानात्वाधारः स्वच्छत्वात्संप्रतिपन्नवदित्याह—**प्रज्ञानेति**। किञ्चाऽऽत्मा कल्पितनानात्वाधारो ज्योतिष्ट्वादादित्यादिज्योतिर्वदित्याह—**स्वयमिति**। आदित्यादावकल्पितोऽपि भेदोऽस्तीत्याशङ्क्य विवक्षितं साम्यमाह—**यथा चेत्यादिना**। अविभाग्य वस्तुतो विभागायोग्यमिति यावत्। चक्षुरादीनि चावभासयदिति सम्बन्धः। आत्मनः सर्वावभासकत्वे वाक्योपक्रमं प्रमाणयति—**तथा चेति**।

यत्तु निरवयवेष्वपि नानारूपत्वमनुमेयमिति तत्राऽऽह—**न चेति**। आकाशादीनां दृष्टान्तत्वमाशङ्क्य निराचष्टे—**यदपीत्यादिना**। कथमाकाशस्यानेकधर्मवत्त्वमौपाधिकमित्याशङ्क्य तस्य सर्वगतत्वं तावदौपाधिकमिति साधयति—**आकाशस्येति**। कथं तर्हि सर्वगतत्वव्यवहारस्तत्राऽऽह—**सर्वोपाधीति**। नन्वाकाशस्य सर्वत्र गमनमपेक्ष्य सर्वगतत्वं किमिति न व्यवह्रियते तत्राऽऽह—**न त्विति**। आकाशे गमनायोगं वक्तुं तत्स्वरूपमाह—**गमनं हीति**। ननु कुतश्चिद्विभागे संयोगे च केनचिद्देशेन तत्कारणीभूता क्रियाऽपि श्येनादाविवाऽऽकाशे भविष्यति नेत्याह—**सा चेति**। सावयवे हि श्येनादौ क्रिया दृश्यत आकाशं त्वविशेषं निरवयवं कुतस्तत्र क्रियेत्यर्थः। तथाऽपि धर्मान्तराण्याकाशे भविष्यन्तीत्याशङ्क्य तेषामपि क्रियापूर्वकाणामुक्तन्यायकवलीकृतत्वमाह—**एवमिति**। भेदाभेदाभ्यां दुर्वचत्वाच्च तत्र धर्मधर्मिभावो न सम्भवतीति भावः।

आकाशे दर्शितन्यायमन्यत्रापि सञ्चारयति—**तथेति**। पार्थिवत्वं परमाणोरेकं रूपं गन्धवत्त्वं चापरमित्यनेकरूपत्वमित्याशङ्क्याऽऽह—**परमाणुर्नामेति**। न हि पार्थिवत्वातिरेकि गन्धवत्त्वं प्रामाणिकमिति भावः। वैशेषिकपरिभाषामाश्रित्य शङ्कयति—**अथेति**। पार्थिवे परमाणौ रसादिमत्त्वमनौपाधिकं न भवति जलादिसंसर्गकृतत्वात्तथा च निरुपाधिकभेदे नेदमुदाहरणमिति परिहरति—**न तत्रापीति**। उक्तन्यायस्य दिगादावपि समत्वं मत्वोपसंहरति—**तस्मादिति**। सन्ति परस्मिन्नात्मनि दृगादिशक्तिभेदास्तेषां मध्ये दृक्शक्तिश्चक्षुरात्मना रूपात्मना च पृथगेव परिणमते घ्रातिशक्तिश्च घ्राणात्मना गन्धात्मना चेत्यनेन क्रमेण परस्मिन्परिणामकल्पना भर्तृप्रपञ्चैर्या कृता साऽपि परस्यैकरूपत्वोपपादनेन निरस्तेत्याह—**एतेनेति** ॥२४-३०॥

---

१. नानारूपं वस्तु भिन्नाभिन्नमिति मतेऽपि एकैकस्य रूपस्य नानारूपत्वाङ्गीकारेऽनवस्था एकरूपत्वांगीकारे तत्र नानारूपत्वं नास्ति वस्तुत्वहेतुरस्ति इति त्वदुक्तानुमाने सर्वं नानारूपं वस्तुत्वात् इत्यत्र व्यभिचारः।

यत्र वा अन्यदिव स्यात्तत्रान्योऽन्यत्पश्येदन्योऽन्यज्जिघ्रेदन्योऽन्यद्रसयेदन्यो-
ऽन्यद्वदेदन्योऽन्यच्छृणुयादन्योऽन्यन्मन्वीतान्योऽन्यत्स्पृशेदन्योऽन्यद्विजानीयात् ॥२१॥
सलिल एको द्रष्टाऽद्वैतो भवत्येष ब्रह्मलोकः सम्राडिति हैनमनुशशास
याज्ञवल्क्य एषास्य परमा गतिरेषास्य परमा संपदेषोऽस्य परमो लोक
५ एषोऽस्य परम आनन्द एतस्यैवानन्दस्यान्यानि भूतानि मात्रा[3]मुपजीवन्ति ॥३२॥

जाग्रत्स्वप्नयोरिव यद्विजानीयात्तद्द्वितीयं प्रविभक्तमन्यत्वेन नास्तीत्युक्तमतः सुषुप्ते न विजानाति विशेषम्। ननु यद्यस्यायमेव स्वभावः किंनिमित्तमस्य विशेषविज्ञानं स्वभावपरित्यागेन। अथ विशेषविज्ञानमेवास्य स्वभावः कस्मादेष विशेषं न विजानातीति। उच्यते शृणु। यत्र यस्मिञ्जागरिते स्वप्ने वा अन्यदिवाऽऽत्मनो वस्त्वन्तरमिवाविद्यया प्रत्युपस्थापितं भवति तत्र तस्मादविद्याप्रत्युपस्थापितादन्योऽन्यमिवाऽऽत्मानं मन्य-
१० मानोऽसत्यात्मनः प्रविभक्ते वस्त्वन्तरेऽसति चाऽऽत्मनि ततः प्रविभक्तेऽन्योऽन्यत्पश्येदुपलभेत। तच्च दर्शितं स्वप्ने प्रत्यक्षतो घ्नन्तीव जिनन्तीवेति। तथाऽन्योऽन्यज्जिघ्रेद्रसयेद्वदेच्छृणुयान्मन्वीत स्पृशेद्विजानीयादिति ॥२१॥

यत्र पुनः साऽविद्या सुषुप्ते वस्त्वन्तरप्रत्युपस्थापिका शान्ता तेनान्यत्वेनाविद्याप्रविभक्तस्य वस्तुनोऽभावात्केन कं पश्येज्जिघ्रेद्विजानीयाद्वा। अतः स्वेनैव हि प्राज्ञेनाऽऽत्मना स्वयंज्योतिःस्वभावेन संपरिष्वक्तः समस्तः संप्रसन्न आप्तकाम आत्मकामः सलिलवत्स्वच्छीभूतः सलिल इव सलिल एको द्वितीयस्याभावात्। अविद्यया हि
१५ द्वितीयः प्रविभज्यते। सा च शान्ताऽत्रात एको द्रष्टा दृष्टेरविपरिलुप्तत्वादात्मज्योतिःस्वभावाया अद्वैते द्रष्टव्यस्य द्वितीयस्याभावात्। एतदमृतमभयमेष ब्रह्मलोको ब्रह्मैव लोको ब्रह्मलोकः पर एवायमस्मिन्काले व्यावृत्तकार्यकरणोपाधिभेदः स्व आत्मज्योतिषि शान्तसर्वसंबन्धो वर्तते। हे सम्राडिति हैव हैनं जनकमनुशशासानुशिष्टवान्याज्ञवल्क्य इति श्रुतिवचनमेतत्।

औपाधिको दृष्ट्यादिभेदो न वास्तवोऽस्तीत्युपपाद्य वृत्तमनुद्रवति—जाग्रदिति। यत्रेत्युत्तरवाक्यव्यावर्त्या-
२० माशङ्कां दर्शयति—नन्विति। किमस्य विशेषविज्ञानराहित्यं स्वरूपं किंवा विशेषविज्ञानत्वम्। आद्ये जाग्रत्स्वप्नयोरनुपपत्तिः। द्वितीये सुषुप्तेरसिद्धिरिति भावः। प्रतीचश्चिन्मात्रज्योतिषो विशेषविज्ञानराहित्यमेव स्वरूपं तथाऽपि स्वाविद्याकल्पितविशेषविज्ञानवत्त्वमाश्रित्यावस्थाद्वयं सिध्यतीत्युत्तरवाक्यमवलम्ब्योत्तरमाह—उच्यत इत्यादिना। तच्चेत्यादिना दर्शनमित्यर्थ. ॥२१॥

पूर्वोक्तवस्तूपसंहारार्थं सलिलवाक्यमुत्थापयति—यत्रेत्यादिना। तेनाविद्यायाः शान्तत्वेनेति यावत्। वस्तुनोऽ-
२५ भावात्तत्रेति शेषः। सुषुप्ते विशेषविज्ञानाभावप्रयुक्तं फलमाह—अत इति। पूर्वमेवास्यार्थस्योक्तत्वं द्योतयितुं हिशब्दः। संपरिष्वङ्गफलं समस्तत्वमपरिच्छिन्नत्वं तत्फलं सम्प्रसन्नत्वम्। असम्प्रसादो हि परिच्छेदाभिमानकृतः। सम्प्रसन्नत्वे हेत्वन्तरमाह—आप्तकाम इति। तदेव सम्प्रसन्नत्वं दृष्टान्तेन स्पष्टयति—सलिलवदिति। उक्तेऽर्थे वाक्याक्षराणि योजयति—सलिल इवेति। द्वितीयस्याभावं सुषुप्तेऽव्यक्तीकरोति—अविद्ययेति। अद्रष्टा द्रष्टेति वा छेदः। एकोऽद्वैत इत्यभ्यासस्तात्पर्यलिङ्गं तस्य परमपुरुषार्थत्वं दर्शयन्कूटस्थत्वमाह—एतदिति। किमिति षष्ठीसमासमुपेक्ष्य कर्मधारयो
३० गृह्यते तत्राऽऽह—पर एवेति। अस्मिन्काले सुषुप्त्यवस्थायामित्येतत्।

१. 'सलिल एको दृष्टाऽद्वैतो भवति' इत्यपि परेषां दुर्घटं परमात्मनि जीवस्यैकीभावासंभवात् स्वतोऽत्यन्तभिन्नत्वात् अद्वैतः अभिन्न इत्यपि सर्वथा दुर्घटं द्वैताभावस्यानङ्गीकारात् अभेदस्यावास्तवत्वेन श्रुतेः मिथ्यावादित्वस्वीकारप्रसंगात्। एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीत्यस्य परे. इतरे आनन्दा इति व्याख्या।
२. 'अहमेवेदं सर्वोऽस्मीति मन्यते सोऽस्य परमो लोक' इत्यस्य स्वव्यतिरिक्तानुकूलप्रतिकूलानुपलम्भ इति
३५ विवरणमपि अशब्दार्थं एव 'एषोऽस्य परम आनन्द' इत्यपि तन्मतप्रतिकूलं तदा आनन्दाभावात्।
३. 'मात्रामुपजीवन्ती'त्यस्य ब्रह्मानन्दसहस्रांश इति विवरणं विषयानन्दब्रह्मानन्दयोर्भेदः न्यूनपरिमाणत्वं चाभ्युपेत्योक्तम्। एतच्चो'पजीवन्ति सर्वाणि भूतानी'त्येतेन विरुद्धं भेदात्। ४. सुषुप्ते शान्ता इत्यन्वयः।
५. एकः द्वितीयरहितः अद्वैत इत्यपि द्वितीयरहितार्थक' अयं वेदगतोऽभ्यासः अद्वैते तात्पर्यं गमयति। 'अभ्यासोऽपूर्वताफलमि'त्युक्तेः। ६. कर्मधारयः निषादस्थपतिन्यायादित्यर्थः।

स यो मनुष्याणाँ राद्धः समृद्धो भवत्यन्येषामधिपतिः सर्वैर्मानुष्यकैर्भोगैः संपन्नतमः स मनुष्याणां परम आनन्दोऽथ ये शतं मनुष्याणामानन्दाः स एकः पितॄणां जितलोकानामानन्दोऽथ ये शतं पितॄणां जितलोकानामानन्दाः स एको गन्धर्वलोक आनन्दोऽथ ये शत गन्धर्वलोक आनन्दाः स एकः कर्मदेवानामानन्दो ये कर्मणा देवत्वमभिसंपद्यन्तेऽथ ये शतं कर्मदेवानामानन्दाः स एक आजानदेवानामानन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतोऽथ ये शतमाजानदेवानामानन्दाः स एकः प्रजापतिलोक आनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतोऽथ ये शतं प्रजापतिलोक आनन्दाः स एको ब्रह्मलोक आनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतोऽथैष एव परम आनन्द एष ब्रह्मलोकः सम्राडिति होवाच याज्ञवल्क्यः सोऽहं भगवते सहस्रं ददाम्यत ऊर्ध्वं विमोक्षायैव ब्रूहीत्यत्र ह याज्ञवल्क्यो बिभयांचकार मेधावी राजा सर्वेभ्यो माऽन्तेभ्य उदरौत्सीदिति ॥३३॥ ५ १०

कथ वाऽनुशशास । एषाऽस्य विज्ञानमयस्य[1] परमा गतिः । यास्त्वन्या देहग्रहणलक्षणा ब्रह्मादिस्तम्बपर्यन्ता अविद्याकल्पितास्ता गतयोऽतोऽपरमा अविद्याविषयत्वात् । इयं तु देवत्वादिगतीनां कर्मविद्यासाध्यानां परमोत्तमा यः समस्तात्मभावो[2] यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानातीत्येषैव च परमा संपत्सर्वासां संपदां विभूतीनामियं परमा स्वाभाविकत्वादस्याः कृतका ह्यन्याः संपदः । तथैषोऽस्य परमो लोकः । येऽन्ये कर्मफलाश्रया लोकास्तेऽस्मादपरमाः । अयं तु न केनचन कर्मणा मीयते स्वाभाविकत्वादेषोऽस्य परमो लोकः । तथैषोऽस्य परम आनन्दः । यान्यन्यानि विषयेन्द्रियसंबन्धजनितान्यानन्दजातानि तान्यपेक्ष्यैषोऽस्य परम आनन्दो नित्यत्वात् । "यो वै भूमा तत्सुखम्" इति श्रुत्यन्तरात् । यत्रान्यत्पश्यन्यद्विजानाति तदल्पं मर्त्यममुख्यं क्षुद्रमिदं तु तद्विपरीतम् । अत एवैषोऽस्य परम आनन्दः । एतस्यैवाऽऽनन्दस्य मात्रां कलामविद्याप्रत्युपस्थापितां विषयेन्द्रियसंबन्धकालविभाव्यामन्यानि भूतान्युपजीवन्ति । कानि तानि तत एवाऽऽनन्दादविद्यया प्रविभज्यमानस्वरूपाण्यन्यत्वेन तानि ब्रह्मणः परिकल्प्यमानान्यन्यानि सन्त्युपजीवन्ति भूतानि विषयेन्द्रियसंपर्कद्वारेण विभाव्यमानाम् ॥३२॥ १५ २०

यस्य परमानन्दस्य मात्रा अवयवा ब्रह्मादिभिर्मनुष्यपर्यन्तैर्भूतैरुपजीव्यन्ते तदानन्दमात्राद्वारेण मात्रिणं परमानन्दमधिजिगमयिषन्नाह सैन्धवलवणशकलैरिव लवणशैलम् । स यः कस्मिन्मनुष्याणां मध्ये राद्धः संसिद्धोऽविकलः समग्रावयव इत्यर्थः । समृद्ध उपभोगोपकरणसंपन्नो भवति । किंचान्येषां समानजातीयानामधिपतिः स्वतन्त्र पतिर्न माण्डलिकः सर्वैः समस्तैर्मानुष्यकैरिति दिव्यभोगोपकरणनिवृत्त्यर्थं मनुष्याणामेव यानि भोगोप-

परमत्व साधयति—यास्त्विति । प्रस्तुतं समस्तात्मभावं विशेषविज्ञानराहित्येन विशिनष्टि—यत्रेति । सर्वात्मभावाख्यस्य लोकस्य परमत्वमुपपादयति—येऽन्य इति । मीयते परिच्छिद्यते साध्यत इति यावत् । सोपुप्तस्य सर्वात्मभावस्य परमानन्दत्व विशदयति—यानीति । आत्मनोऽनवच्छिन्नानन्दत्वे छान्दोग्यश्रुतिं सम्वादयति—यो वै भूमेति । ननु वैषयिकमेक सुखमात्मरूपं चापरमिति सुखभेदाङ्गीकारादपसिद्धान्तः स्यादित्याशङ्क्य मुख्यामुख्यभेदेन तदुपपत्तेर्मैवमित्याह—यत्रेत्यादिना । किञ्च वस्तुतो नास्त्येवाऽऽत्मसुखातिरिक्तं वैषयिकं सुखमित्याह—एतस्येति । ब्रह्मातिरिक्तचेतनाभावे कान्युपजीवकानि स्युरित्याशङ्क्य परिहरति—कानीत्यादिना । विभाव्यमानामानन्दस्य मात्रामिति पूर्वेण सम्बन्ध. ॥३२॥ २५ ३०

स यो मनुष्याणामित्यादिवाक्यतात्पर्यमाह—यस्येति । यथा सैन्धवावयवैः सैन्धवाचलं लोको बोधयति तथा तस्याऽऽनन्दस्य मात्रा नामावयवास्तत्प्रदर्शनद्वारेणावयविन परमानन्दमधिगमयितुमिच्छन्ननन्तरो ग्रन्थः प्रवृत्त इत्यर्थः । तात्पर्यमुक्त्वाऽक्षराणि व्याचष्टे—स यः कश्चिदित्यादिना । राद्धत्वमविकलत्वं चेत्समृद्धत्वेन पुनरुक्तिरित्याशङ्क्याऽऽह—समग्रेति । तदेव समृद्धत्वमपीत्याशङ्क्य व्याकरोति—उपभोगेति । अन्तर्वहिः सम्पत्तिभेदादपुनरुक्तिरिति भाव. । न केवलमुक्तमेव तस्य विशेषण किन्तु विशेषणान्तरं चास्तीत्याह—किञ्चेति । विशेषणतात्पर्यमाह—दिव्येति । ३५

---

१. विज्ञानमयस्य जीवस्य ।

२. समस्तात्मभावः सर्वात्मभावः ।

करणानि तैः संपन्नानामप्यतिशयेन संपन्नः संपन्नतमः स मनुष्याणां परम आनन्दः ।

तत्राऽऽनन्दानन्दिनोरभेदनिर्देशान्नार्थान्तरभूतत्वमित्येतत् । परमानन्दस्यैवेयं विषयविषय्याकारेण मात्रा प्रसृतेति ह्युक्तं यत्र वा अन्यदिव स्यादित्यादिवाक्येन । तस्माद्युक्तोऽयं परम आनन्द इत्यभेदनिर्देशः । युधिष्ठिरादि-तुल्यो राजाऽत्रोदाहरणम् । दृष्टं मनुष्यानन्दमादिं कृत्वा शतगुणोत्तरोत्तरक्रमेण श्रीय परमानन्दं यत्र भेदो निवर्तते
५ तमधिगमयति । अत्रायमानन्दः शतगुणोत्तरोत्तरक्रमेण वर्धमानो यत्र वृद्धिकाष्ठामनुभवति । यत्र गणितभेदो निवर्ततेऽन्यदर्शनश्रवणमननाभावात्तं परमानन्दं विवक्षन्नाह । अथ ये मनुष्याणामेवंप्रकाराः शतमानन्दभेदाः स एकः पितॄणाम् । तेषां विशेषणं जितलोकानामिति । श्राद्धादिकर्मभिःपितॄंस्तोषयित्वा तेन कर्मणा जितो लोको येषां ते जितलोकाः पितरस्तेषां पितॄणां जितलोकानां मनुष्यानन्दशतगुणीकृतपरिमाण एक आनन्दो भवति । सोऽपि शतगुणीकृतो गन्धर्वलोक एक आनन्दो भवति । स च शतगुणीकृतः कर्मदेवानामेक आनन्दः ।

१० अग्निहोत्रादिश्रौतकर्मणा ये देवत्वं प्राप्नुवन्ति ते कर्मदेवाः । तथैवाऽऽजानदेवानामेक आनन्दः । आजानत एवोत्पत्तित एव ये देवास्त आजानदेवाः । यश्च श्रोत्रियोऽधीतवेदोऽवृजिनो वृजिनं पापं तद्रहितो यथोक्तकारीत्यर्थः । अकामहतो वीततृष्ण आजानदेवेभ्योऽर्वाग्यावन्तो विषयास्तेषु । तस्य चैवंभूतस्याऽऽजानदेवैः समान आनन्द इत्येतदन्वाकृष्यते चशब्दात्तच्छतगुणीकृतपरिमाणः प्रजापतिलोक एक आनन्दो विराट्शरीरे । तथा तद्विज्ञानवा-ञ्श्रोत्रियोऽधीतवेदश्चावृजिन इत्यादि पूर्ववत् । तच्छतगुणीकृतपरिमाण एक आनन्दो ब्रह्मलोके हिरण्यगर्भात्मनि ।

१५ यश्चेत्यादि पूर्ववदेव । अतः परं गणितनिवृत्तिः । एष परम आनन्द इत्युक्तः । यस्य च परमानन्दस्य ब्रह्मलोकाद्यानन्दा मात्रा उदधेरिव विप्रुषः । एवं शतगुणोत्तरोत्तरवृद्ध्युपेता आनन्दा यत्रैकतां यान्ति यश्च श्रोत्रियप्रत्यक्षोऽस्यैष एव संप्रसादलक्षणः परम आनन्दस्तत्र हि नान्यत्पश्यति नान्यच्छृणोति । अतो भूमा भूमत्वादमृतः । इतरे तद्विपरीताः । अत्र च श्रोत्रियत्वादवृजिनत्वे तुल्ये । अकामहतत्वकृतो विशेष आनन्दशतगुण-

तदनिवर्तने त्वस्य वक्ष्यमाणगन्धर्वादिष्वन्तर्भावः स्यादिति भावः । अतिशयेन सम्पन्न इति शेषः ।

२० अभेदनिर्देशस्याभिप्रायमाह—तत्रेति । प्रकृतं वाक्यं सप्तम्यर्थः । आत्मनः सकाशादानन्दस्येति शेषः । औपचारिकत्वमभेदनिर्देशस्य भविष्यतीत्याशङ्क्याऽऽह—परमानन्दस्येति । तस्यैव विषयत्वं विषयित्वमिति स्थिते फलितमाह—तस्मादिति । यथोक्तो मनुष्यो न दृष्टिपथमवतरतीत्याशङ्क्याऽऽह—युधिष्ठिरादीति । अथ ये शत मनुष्याणामित्यादेस्तात्पर्यमाह—दृष्टमिति । शतगुणेनोत्तरत्राऽऽनन्दस्योत्कर्षप्रदर्शनक्रमेण परमानन्दमुन्नीय तमधिगमय-त्युत्तरेण ग्रन्थेनेति संबन्धः । परमानन्दमेव विशिनष्टि—यत्रेति । भेदः संख्याव्यवहारः । उक्तमेव प्रपञ्चयति—
२५ यत्रेत्यादिना । परमानन्दे विवृद्धिकाष्ठायां हेतुमाह—अन्येति । यद्यपि यस्येत्यादिनोक्तमेतत्तथाऽपीहाक्षरव्याख्यानावसरे तदेव विवृतमित्यविरोधः । तत्तदानन्दप्रदर्शनानन्तर्यं तत्र तत्राथशब्दार्थः । तत्तद्वाक्योपक्रमो वा । एवंप्रकारत्वं समृद्धत्वादि । पितॄणामानन्द इति संबन्धः श्राद्धादिकर्मभिरित्यादिशब्देन पिण्डपितृयज्ञादि गृह्यते ।

के ते कर्मदेवा नाम तत्राऽऽह—अग्निहोत्रादीति । यथा गन्धर्वानन्दः शतगुणीकृतः कर्मदेवानामेक आनन्द-स्तथा कर्मदेवानन्दः शतगुणीकृतः सन्नाजानदेवानामेक आनन्दो भवतीत्याह—तथैवेति । कुत्र वीततृष्णत्वं तत्राऽऽह—
३० आजानदेवेभ्य इति । श्रोत्रियादिवाक्यस्य प्रकृतासंगतिमाशङ्क्याऽऽह—तस्य चेति । एवंभूतस्य विशेषणत्रयविशिष्ट-स्येति यावत् । प्रजापतिलोकशब्दस्य ब्रह्मलोकशब्दादर्थभेदमाह—विराडिति । यथा विराडात्मन्याजानदेवानन्द-शतगुणीकृतः सन्नेक आनन्दो भवति तथा विराडात्मोपासिता श्रोत्रियत्वादिविशेषणो विराजा तुल्यानन्दः स्यादि-त्याह—तथेति । तच्छतगुणीकृतेति तच्छब्दो विराडानन्दविषयः ।

श्रोत्रियत्वादिविशेषणवानपि हिरण्यगर्भोपासकस्तेन तुल्यानन्दो भवतीत्याह—यश्चेति । हिरण्यगर्भानन्दा-
३५ दुपरिष्टादपि ब्रह्मानन्दे गणितभेदे प्राकरणिके प्राप्ते प्रत्याह—अतः परमिति । एषोऽस्य परम आनन्द इत्युपक्रम्य किमित्यानन्दान्तरमुपदर्शितमित्याशङ्क्याऽऽह—एष इति । तथाऽपि तस्य सर्वात्मत्वमुपेक्षितमिति चेन्नेत्याह—यस्य चेति । प्रकृतस्य ब्रह्मानन्दस्यापरिच्छिन्नत्वमाह—तत्र हीति । अनवच्छिन्नत्वफलमाह—भूमत्वादिति । ब्रह्मा-नन्दादितरे परिच्छिन्ना मर्त्याश्चेत्याह—इतर इति । अथ यत्रान्यत्पश्यतीत्यादिश्रुतेरिति भावः । श्रोत्रियादिपदानि व्याख्याय तात्पर्यं दर्शयति—अत्र चेति । मध्ये विशेषणेषु त्रिष्विति यावत् । तुल्ये सर्वपर्यायेष्विति शेषः । विशेष-
४० णान्तरे विशेषमाह—अकामहतत्वेति । यथोक्तं विभागमुपपादयितुं सिद्धमर्थमाह—अत्रैतानीति । यश्चेत्यादिवाक्यं

स वा एष एतस्मिन्स्वप्नान्ते रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं प्रतियोन्याद्रवति बुद्धान्तायैव ॥३४॥

वृद्धिहेतुः। अत्रैतानि साधनानि श्रोत्रियत्वावृजिनत्वाकामहतत्वानि तस्य तस्याऽऽनन्दस्य प्राप्तावर्थादभिहितानि। यथा कर्माण्यग्निहोत्रादीनि देवानां देवत्वप्राप्तौ।

तत्र च श्रोत्रियत्वावृजिनत्वलक्षणे कर्मणी अधरभूमिष्वपि समाने इति नोत्तरानन्दप्राप्तिसाधने अभ्युपेयेते। ५ अकामहतत्वं तु वैराग्यतारतम्योपपत्तेरुत्तरोत्तरभूम्यानन्दप्राप्तिसाधनमित्यवगम्यते। स एष परम आनन्दो वितृष्णश्रोत्रियप्रत्यक्षोऽधिगतः। तथा च वेदव्यासः—

"यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम्। तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम्" ॥ इति।

एष ब्रह्मलोको हे सम्राडिति होवाच याज्ञवल्क्यः सोऽहमेवनुशिष्टो भगवते तुभ्यं सहस्रं ददामि गवाम्। अत ऊर्ध्वं विमोक्षायैव ब्रूहीति व्याख्यातमेतत्। अत्र ह बिमोक्षायेत्यस्मिन्वाक्ये याज्ञवल्क्यो बिभयांचकार भीतवान्। १० याज्ञवल्क्यस्य भयकारणमाह श्रुतिः। न याज्ञवल्क्यो वक्तृत्वसामर्थ्याभावाद्भीतवानज्ञानाद्वा किं तर्हि मेधावी राजा सर्वेभ्यो मा मामन्तेभ्यः प्रश्ननिर्णयावसानेभ्य उदरौत्सीदावृणोदवरोधं कृतवानित्यर्थः। यद्यन्मया निर्णीतं प्रश्नरूपं विमोक्षार्थं तत्तदेकदेशत्वेनैव कामप्रश्नस्य गृहीत्वा पुनः पुनर्मां पर्यनुयुङ्क्त एव मेधावित्वादित्येतद्भय-कारणं सर्वं मदीयं विज्ञानं कामप्रश्नव्याजेनोपादित्सतीति ॥३३॥

अत्र विज्ञानमयः स्वयंज्योतिरात्मा स्वप्ने प्रदर्शितः। स्वप्नान्तबुद्धान्तसंचारेण कार्यकरणव्यतिरिक्तता। १५ कामकर्मप्रविवेकश्चासङ्गतया महामत्स्यदृष्टान्तेन प्रदर्शितः। पुनश्चाविद्याकार्यं स्वप्न एव घ्नन्तीवेत्यादिना प्रदर्शितम्। अर्थादविद्यायाः सतत्त्वं निर्धारितमतद्धर्माध्यारोपणरूपत्वमनात्मधर्मत्वं च। तथा विद्यायाश्च कार्यं प्रदर्शितं सर्वात्मभावः स्वप्न एव प्रत्यक्षतः सर्वोऽस्मीति मन्यते सोऽस्य परमो लोक इति। तत्र च सर्वात्मभावः स्वभावोऽस्यैवमविद्याकामकर्मादिसर्वसंसारधर्मसंबन्धातीतं रूपमस्य साक्षात्सुषुप्ते गृह्यत इत्येतद्विज्ञापितं स्वयं-ज्योतिरात्मैव परम आनन्दः। एष विद्याया विषयः। स एष परमः संप्रसादः सुखस्य च परा काष्ठेत्येतदेवमन्तेन २०

सप्तम्यर्थः। तस्य तस्याऽऽनन्दस्येति दैवप्राजापत्यादिनिर्देशः। अर्थादभिहितत्वे दृष्टान्तमाह—यथेति। ये कर्मणा देवत्वमित्यादिश्रुतिसामर्थ्याद्देवानन्दाप्तौ यथा कर्माणि साधनान्युक्तानि तथा यश्चेत्यादिश्रुतिसामर्थ्यादेतान्यपि श्रोत्रिय-त्वादीनि तत्तदानन्दप्राप्तौ साधनानि विवक्षितानीत्यर्थः।

ननु त्रयाणामविशेषश्रुतौ कथ श्रोत्रियत्वावृजिनत्वयोः सर्वत्र तुल्यत्वं न हि ते पूर्वभूमिषु श्रुते तथा चाका-महतत्ववदानन्दोत्कर्षे तयोरपि हेतुतेति तत्राऽऽह—तत्र चेति। निर्धारणार्था सप्तमी। न हि श्रोत्रियत्वादिशून्यः २५ सार्वभौमादिसुखमनुभवितुमुत्सहते। तथा च सर्वत्र श्रोत्रियत्वादेस्तुल्यत्वान्न तदानन्दातिरेकप्राप्तावसाधारणं साधन-मित्यर्थः। यदुक्तमानन्दशतगुणवृद्धिहेतुरकामहतत्वकृतो विशेष इति तदुपपादयति—अकामहतत्वं त्विति। पूर्वपूर्व-भूमिषु वैराग्यमुत्तरोत्तरभूम्यानन्दप्राप्तिसाधनं वैराग्यस्य तरतमभावेन परमकाष्ठोपपत्तेर्निरतिशयस्य तस्य परमानन्द-प्राप्तिसाधनत्वसंभवादित्यर्थः। यश्चेत्यादिवाक्यस्येत्थं तात्पर्यमुक्त्वा प्रकृते परमानन्दे विद्वदनुभवं प्रमाणयति—स एष इति। निरतिशयमकामहतत्वं परमानन्दप्राप्तिहेतुरित्यत्र प्रमाणमाह—तथा चेति। प्रकृतं प्रत्यग्भूतं परमानन्दमेष ३० इति परामृशति। श्रुतिर्मेधावीत्याद्या तां व्याचष्टे—नेत्यादिना। तथाऽपि किं तद्भयकारण तदाह—यद्यदिति। मेधावित्वात्प्रज्ञातिशयशालित्वादिति यावत्। तदेव भयकारणं प्रकटयति—सर्वमिति ॥३३॥

स वा एष एतस्मिन्नित्याद्युत्तरग्रन्थस्य संबन्धं वक्तुं वृत्तं कीर्तयति—अत्रेति। अत्रायं पुरुषः स्वयंज्योतिर्भवतीति वाक्यं सप्तम्यर्थः। वृत्तमर्थान्तरमनुद्रवति—स्वप्नान्तेति। कार्यकरणव्यतिरिक्तत्वं प्रदर्शितमिति सबन्धः। उक्तमर्थान्तर-माह—कामेति। अथ यत्रैनं घ्नन्तीवेत्यादावुक्तमनुभाषते—पुनश्चेति। किं तत्कार्यप्रदर्शनसामर्थ्यान्निर्धारितमविद्यायाः ३५ सतत्त्वं तदाह—अतद्धर्मेति। अनात्मधर्मत्वमात्मनि चैतन्यवदस्वाभाविकत्वम्। अविद्याकार्यवद्विद्याकार्यं च स्वप्ने सर्वात्मभावलक्षणं प्रत्यक्षत एव प्रदर्शितमित्याह—तथेति। सुषुप्तेऽपि स्वप्नवदेतद्दर्शितमित्याह—एवमिति। साक्षा-त्स्वरूपचैतन्यवशादित्येतत्। अन्यथोत्थितस्य सुखपरामर्शो न स्यादिति भावः। उक्तं विद्याकार्यं निगमयति—एष इति।

तद्यथाऽनः सुसमाहितमुत्सर्जद्यायादेवमेवायँ शारीर आत्मा प्राज्ञेनाऽऽत्मनाऽन्वारूढ उत्सर्जन्याति यत्रैतदूर्ध्वोच्छ्वासी भवति ॥३५॥

ग्रन्थेन व्याख्यातम् । तच्चैतत्सर्वं विमोक्षपदार्थस्य दृष्टान्तभूतं बन्धनस्य च । ते चैते मोक्षबन्धने सहेतुके सप्रपञ्चे निर्दिष्टे विद्याविद्याकार्ये तत्सर्वं दृष्टान्तभूतमेवेति तद्दार्ष्टान्तिकस्थानीये मोक्षबन्धने सहेतुके कामप्रश्नार्थभूते त्वया
५ वक्तव्ये इति पुनः पर्यनुयुङ्क्ते जनकोऽत ऊर्ध्वं विमोक्षायैव ब्रूहीति । '

तत्र महामत्स्यवत्स्वप्नबुद्धान्तावसङ्गः संचरत्येक आत्मा स्वयंज्योतिरित्युक्तम् । यथा चासौ कार्यकरणानि मृत्युरूपाणि परित्यजन्नुपाददानश्च महामत्स्यवत्स्वप्नबुद्धान्तावनुसंचरति तथा जायमानो म्रियमाणश्च तैरेव मृत्युरूपैः संयुज्यते वियुज्यते च । उभौ लोकावनुसंचरतीति संचरणं स्वप्नबुद्धान्तानुसंचारस्य दार्ष्टान्तिकत्वेन सूचितम् । तदिह विस्तरेण सनिमित्तं संचरणं वर्णयितव्यमिति तदर्थोऽयमारम्भः तत्र च बुद्धान्तात्स्वप्नान्तमय-
१० मात्माऽनुप्रवेशितः । तस्मात्संप्रसादस्थानं मोक्षदृष्टान्तभूतम् । ततः प्रच्याव्य बुद्धान्ते संसारव्यवहारः प्रदर्शयितव्य इति तेनास्य संबन्धः । स वै बुद्धान्तात्स्वप्नान्तक्रमेण संप्रसन्न एष एतस्मिन्संप्रसादे स्थित्वा ततः पुनरीषत्प्रच्युतः स्वप्नान्ते रत्वा चरित्वेत्यादि पूर्ववद्बुद्धान्तायैवाऽऽद्रवति ॥३४॥

इत आरभ्यास्य संसारो वर्ण्यते । यथाऽयमात्मा स्वप्नान्ताद्बुद्धान्तमागत एवमयमस्माद्देहाद्देहान्तरं प्रतिपत्स्यत इत्याहात्र दृष्टान्तम् । तत्तत्र यथा लोकेऽनः शकटं सुसमाहितं सुष्ठु भृशं वा समाहितं भाण्डोपस्करणेनोलू-
१५ खलमुसलशूर्पपिठरादिनाऽन्नाद्येन च संपन्न संभारेणाऽऽक्रान्तमित्यर्थः । तथा भाराक्रान्तं सदुत्सर्जच्छब्दं कुर्वद्यथा यायाद्गच्छेच्छाकटिकेनाधिष्ठितं सत् । एवमेव यथोक्तो दृष्टान्तोऽयं शारीरः शारीरे भवः । कोऽसौ । आत्मा लिङ्गोपाधिः । यः स्वप्नबुद्धान्ताविव जन्ममरणाभ्यां पाप्मसंसर्गवियोगलक्षणाभ्यामिहलोकपरलोकावनुसंचरति । यस्योत्क्रमणमनु प्राणाद्युत्क्रमणं स प्राज्ञेन परेणाऽऽत्मना स्वयंज्योतिःस्वभावेनान्वारूढोऽधिष्ठितोऽवभास्यमानः । तथा चोक्तमात्मनैवायं ज्योतिषाऽऽस्ते पल्ययत इति । उत्सर्जन्याति । तत्र चैतन्यात्मज्योतिषा भास्ये लिङ्गे
२० प्राणप्रधाने गच्छति तदुपाधिरप्यात्मा गच्छतीव । तथा श्रुत्यन्तरम्—"कस्मिन्न्वहम्" इत्यादि "ध्यायतीव" इति च । अत एवोक्तं प्राज्ञेनाऽऽत्मनाऽन्वारूढ इति । अन्यथा प्राज्ञेनैकीभूतः शकटवत्कथमुत्सर्जन्याति । तेन लिङ्गे-

तमेव विद्याविषयं विशदयति—स एष इति । वृत्तानुवादमुपसंहरति—इत्येतदिति । एवमन्तेन ग्रन्थेन ब्रह्मलोकान्तवाक्येनेति यावत् । सोऽहमित्यादेस्तात्पर्यमनुवदति—तच्चेति । यतो राजेत्थं मन्यतेऽतस्तस्य सहस्रदाने युक्ता प्रवृत्तिरित्यर्थः । अत ऊर्ध्वमित्यादेरभिप्रायमनुद्रवति—ते चेति । यद्यपि यथोक्तलक्षणे मोक्षबन्धने प्रागेवोपदिष्टे तथाऽपि पूर्वोक्तं
२५ सर्वं दृष्टान्तभूतमेव तयोरिति यतो राजा भ्राम्यत्यतो मोक्षबन्धने दार्ष्टान्तिकभूते वक्तव्ये याज्ञवल्क्येनेति मन्यमानस्तं प्रेरयतीत्यर्थः ।

बन्धमोक्षयोर्वक्तव्यत्वेन प्राप्तयोरपि प्रथमं बन्धो वर्ण्यत इति वक्तुं दृष्टान्तं स्मारयति—तत्रेति । दृष्टान्तमनूद्य दार्ष्टान्तिकस्य बन्धस्य सूचितत्वं दर्शयति—यथा चेत्यादिना । उभौ लोकावित्यत्र प्रथममेवंशब्दो द्रष्टव्यः । वृत्तमनूद्यानन्तरप्रकरणमुत्थापयति—तदिहेति । अत्र संसारी सप्तम्यर्थः । सनिमित्त कामादिना निमित्तेन सहितमित्येतत् ।
३० प्रकरणारम्भमुक्त्वा समनन्तरवाक्यस्य व्यवहितेन संबन्धमाह—तत्र चेति । स वा एष एतस्मिन्बुद्धान्ते रत्वेत्युपक्रम्य स्वप्नान्तायैवेति वाक्यं सप्तम्या परामृश्यते । स्वप्नान्तशब्दस्य स्वप्नविषयव्यावृत्त्यर्थं विशिनष्टि—संप्रसादेति । कथं पुनः सप्रसन्नस्य संसारोपवर्णनमित्याशङ्क्याऽऽह—तत इति । प्रागुक्तः सप्तम्यर्थो व्यवहितो ग्रन्थस्तेनेति परामृश्यते । समनन्तरग्रन्थः षष्ठ्योच्यते । वाक्यस्य व्यवहितेन संबन्धमुक्त्वा तदक्षराणि योजयति—स वै बुद्धान्तादिति । स्वप्नान्ते रत्वा चरित्वेत्यादि बुद्धान्तायैवाऽऽद्रवतीत्येतदन्तं पूर्ववदिति योजना ॥३४॥

३५ तद्यथेत्यादेरिति नु कामयमान इत्यन्तस्य संदर्भस्य तात्पर्यं तदिहेत्यत्रोक्तमनुवदति—इत आरभ्येति । तद्यथेत्यस्माद्वाक्यादित्येतत् । दृष्टान्तवाक्यमुत्थाप्य व्याकरोति—यथेत्यादिना । इत्यत्र दृष्टान्तमाहेति योजना । भाण्डोपस्करणेन भाण्डप्रमुखेन गृहोपस्करणेनेति यावत् । तदेवोपस्करणं विशिनष्टि—उलूखलेति । पिठरं पाकार्थं स्थूलं भाण्डम् । अन्वयं दर्शयितुं यथाशब्दोऽनूद्यते । लिङ्गविशिष्टमात्मानं विशिनष्टि—यः स्वप्नेति । जन्ममरणे विशदयति—पाप्मेति । कार्यकरणानि पाप्मशब्देनोच्यन्ते । शारीरस्य प्राधान्यं द्योतयति—यस्येति । उत्सर्जन्यातीति

**स यत्रायमणिमानं न्येति जरया वोपतपता वाऽणिमानं निगच्छति तद्यथाऽऽम्रं वोदुम्बरं वा पिप्पलं वा बन्धनात्प्रमुच्यत एवमेवायं पुरुष एभ्योऽङ्गेभ्यः संप्रमुच्य पुनः प्रतिन्यायं प्रतियोन्याद्रवति प्राणायैव ॥३६॥**

पाधिरात्मोत्सर्जन्मर्मसु निकृत्यमानेषु दुःखवेदनयाऽऽर्तः शब्दं कुर्वन्याति गच्छति तत्कस्मिन्काल इति । उच्यते—
यत्रैतद्भवति । एतदिति क्रियाविशेषणम् । ऊर्ध्वोच्छ्वासी यत्रोर्ध्वोच्छासित्वमस्य भवतीत्यर्थः । दृश्यमानस्याप्य- ५
नुवदनं वैराग्यहेतोः ईदृशः कष्टः खल्वयं संसारः येनोत्क्रान्तिकाले मर्मसूत्कृत्यमानेषु स्मृतिलोपो दुःखवेदनार्तस्य
पुरुषार्थसाधनप्रतिपत्तौ चासामर्थ्यं परवशीकृतचित्तस्य । तस्माद्यावदियमवस्था नाऽऽगमिष्यति तावदेव पुरुषार्थ-
साधनकर्तव्यतायामप्रमत्तो भवेदित्याह कारुण्याच्च श्रुतिः ॥३५॥

तदस्योर्ध्वोच्छ्वासित्वं कस्मिन्काले किंनिमित्तं कथं किमर्थं वा स्यादित्येतदुच्यते—सोऽयं प्राकृतः शिरः
पाण्यादिमान्पिण्डो यत्र यस्मिन्कालेऽयमणिमानमणोर्भावमणुत्वं कार्श्यमित्यर्थः । न्येति निगच्छति । किंनिमित्तं १०
जरया वा स्वयमेव कालपक्वफलवज्जीर्णः कार्श्यं गच्छति । उपतपतीत्युपतपञ्ज्वरादिरोगस्तेनोपतपता वा । उप-
तप्यमानो हि रोगेण विषमाग्नितयाऽन्नं भुक्तं न जरयति ततोऽन्नरसेनानुपचीयमानः पिण्डः कार्श्यमापद्यते तदुच्यत
उपतपता वेति । अणिमानं निगच्छति । यदाऽत्यन्तकार्श्यं प्रतिपन्नो जरादिनिमित्तैस्तदोर्ध्वोच्छ्वासी भवति ।
यदोर्ध्वोच्छ्वासो तदा भृशाहितसंभारशकटवदुत्सर्जन्याति । जराभिभवो रोगादिपीडनं कार्श्यापत्तिश्च शरीरवतोऽ-
वश्यंभाविन एतेऽनर्था इति वैराग्यायेदमुच्यते । १५

यदाऽसावुत्सर्जन्याति तदा कथं शरीरं विमुञ्चतीति दृष्टान्त उच्यते—तत्तत्र यथाऽऽम्रं वा फलमुदुम्बरं वा
पिप्पलं वा फलम् । विषमानेकदृष्टान्तोपादानं मरणस्यानियतनिमित्तत्वख्यापनार्थम् । अनियतानि हि मरणस्य
निमित्तान्यसंख्यातानि च । एतदपि वैराग्यार्थमेव । यस्मादयमनेकमरणनिमित्तवांस्तस्मात्सर्वदा मृत्योरास्ये वर्तत

चेत्तदाऽङ्गीकृतमात्मनो गमनमित्याशङ्क्याऽऽह—तत्रेति । लिङ्गोपाधेरात्मनो गमनप्रतीतिरित्यत्राऽऽथर्वणश्रुतिं प्रमाण-
यति—तथा चेति । उत्सर्जन्यातीति श्रुतेर्मुख्यार्थत्वार्थमात्मनो वस्तुतो गमनं किं न स्यादित्याशङ्क्याऽऽह— २०
ध्यायतीवेति चेति । औपाधिकमात्मनो गमनमित्यत्र लिङ्गान्तरमाह—अत एवेति । कथमेतावता निरुपाधेरात्मनो
गमनं नेष्यते तत्राऽऽह—अन्यथेति । प्रमाणफलं निगमयति—तेनेति । तत्कस्मिन्नित्यत्र तच्छब्देनाऽऽर्तस्य शब्दविशेष-
करणपूर्वकं गमनं गृह्यते । एतदूर्ध्वोच्छ्वासित्वमस्य यथा स्यात्तथाऽवस्था यस्मिन्काले भवति तस्मिन्काले तद्गमन-
मित्युपपादयति—उच्यत इत्यादिना । किमिति प्रत्यक्षमर्थं श्रुतिरनुवदति तत्राऽऽह—दृश्यमानस्येति । कथ ससार-
स्वरूपानुवादमात्रेण वैराग्यसिद्धिस्तत्राऽऽह—ईदृश इति । ईदृशत्वमेव विशदयति—येनेत्यादिना । अनुवादश्रुतेरभि- २५
प्रायमुपसंहरति—तस्मादिति ॥३५॥

प्रश्नचतुष्टयमनूद्य तदुत्तरत्वेन स यत्रेत्यादि वाक्यमादाय व्याकरोति—तदस्येत्यादिना । प्रश्नपूर्वकं कार्श्य-
निमित्तं स्वाभाविकमागन्तुकं चेति दर्शयति—किंनिमित्तमित्यादिना । कथं ज्वरादिना कार्श्यप्राप्तिरित्याशङ्क्याऽऽह—
उपतप्यमानो हीति । यथोक्तनिमित्तद्वयवशात्कार्श्यप्राप्तिं निगमयति—अणिमानमिति । कस्मिन्काले तदूर्ध्वोच्छ्वा-
सित्वमस्येति प्रश्नस्योत्तरमुक्तया विधया सिद्धमित्याह—यदेति । अवशिष्टप्रश्नत्रयस्योत्तरमाह—यदोर्ध्वोच्छ्वासीति । ३०
तत्र हि कार्श्यनिमित्तं सभृतशकटवन्नानाशब्दकरणं स्वरूपं शरीरविमोक्षण प्रयोजनमित्यर्थः । स यत्रेत्यादिवाक्यादर्थ-
सिद्धमर्थमाह—जरेति ।

तद्यथेत्यादिवाक्य प्रश्नपूर्वकमादाय व्याचष्टे—यदेत्यादिना । कथं बन्धनात्प्रमुच्यत इति संबन्धः । किमिति
विषमानेकदृष्टान्तोपादानमेकेनापि विवक्षितसिद्धेरित्याशङ्क्याऽऽह—विषमेति । कथं मरणस्यानियतान्यनेकानि
निमित्तानि संभवन्तीत्याशङ्क्यानुभवमनुसृत्याऽऽह—अनियतानीति । अथ मरणस्यानेकानियतनिमित्तवत्त्वसंकीर्तनं ३५
कुत्रोपयुज्यते तत्राऽऽह—एतदपीति । तदर्थवत्त्वमेव समर्थयते—यस्मादिति । इत्यप्रमत्तैर्भवितव्यमिति शेषः । वृत्तेन

**तद्यथा राजानमायान्तमुग्राः प्रत्येनसः सूतग्रामण्योऽन्नैः पानैरावसथैः प्रतिकल्पन्तेऽयमायात्ययमागच्छतीत्येवꣳ हैवंविदꣳ सर्वाणि भूतानि प्रतिकल्पन्त इदं ब्रह्माऽऽयातीदमागच्छतीति ॥३७॥**

इति। बन्धनाद्वध्यते येन वृन्तेन सह स बन्धनकारणो रसो यस्मिन्वा बध्यत इति वृन्तमेवोच्यते बन्धनं तस्माद्रसाद्वृन्ताद्वा बन्धनात्प्रमुच्यते वाताद्यनेकनिमित्तमेवमेवायं पुरुषो लिङ्गात्मा लिङ्गोपाधिरेभ्योऽङ्गेभ्यश्चक्षुरादि-
५ देहावयवेभ्यः संप्रमुच्य सम्यङ्निर्लेपेन प्रमुच्य। न सुषुप्तगमनकाल इव प्राणेन रक्षन्। किं तर्हि सह वायुनोपसंहृत्य। पुनः प्रतिन्यायं पुनःशब्दात्पूर्वमप्ययं देहाद्देहान्तरमसकृद्गतवान्यथा स्वप्नबुद्धान्तौ पुनः पुनर्गच्छति तथा पुनः प्रतिन्यायं प्रतिगमनं यथागतमित्यर्थः। प्रतियोनि योनिं योनिं प्रति कर्मश्रुतादिवशादाद्रवति। किमर्थम्। प्राणायैव प्राणव्यूहायैवेत्यर्थः। सप्राण एव हि गच्छति ततः प्राणयैवेति विशेषणमनर्थकम्। प्राणव्यूहाय हि गमनं देहाद्देहान्तरं प्रति। तेन ह्यस्य कर्मफलोपभोगार्थसिद्धिर्न प्राणसत्तामात्रेण। तस्मात्तादर्थ्यं युक्तं विशेषणं
१० प्राणव्यूहायेति ॥३६॥

तत्रास्येदं शरीरं परित्यज्य गच्छतो नान्यस्य देहान्तरस्योपादाने सामर्थ्यमस्ति। देहेन्द्रियवियोगात्। न चान्येऽस्य भृत्यस्थानीया गृहमिव राज्ञे शरीरान्तरं कृत्वा प्रतीक्षमाणा विद्यन्ते। अथैवं सति कथमस्य शरीरान्तरोपादानमिति। उच्यते—सर्वं ह्यस्य जगत्स्वकर्मफलोपभोगसाधनत्वायोपात्तं स्वकर्मफलोपभोगाय चायं प्रवृत्तो देहाद्देहान्तरं प्रतिपित्सुस्तस्मात्सर्वमेव जगत्स्वकर्मणा प्रयुक्तं तत्कर्मफलोपभोगयोग्यं साधनं कृत्वा प्रतीक्षत एव।

१५ सह फलं येन रसेन संबध्यते स रसो बन्धनकारणभूतो बन्धनं वृन्तमेव वा बन्धनं यस्मिन्फलं बध्यते रसेनेति व्युत्पत्तेस्तस्माद्बन्धनादनेकनिमित्तवशात्पूर्वोक्तस्य फलस्य भवति प्रमोक्षणमित्याह—बन्धनादित्यादिना। लिङ्गमात्मोपाधिरस्येति तद्विशिष्टः शारीरस्तथोच्यते। संप्रमुच्याऽऽद्रवतीति संबन्धः। समित्युपसर्गस्य तात्पर्यमाह—नेत्यादिना। यदि स्वप्नावस्थायामिव मरणावस्थायां प्राणेन देहं रक्षन्नाद्रवतीति नाऽऽद्रियते केन प्रकारेण तर्हि तदा देहान्तरं प्रति गमनमित्याशङ्क्याऽऽह—किं तर्हीति। वायुना प्राणेन सह करणजातमुपसंहृत्याऽऽद्रवतीति पूर्ववत्संबन्धः। पुनः
२० प्रतिन्यायमिति प्रतीकमादाय पुनःशब्दस्य तात्पर्यमाह—पुनरित्यादिना। तथा पुनराद्रवतीति संबन्धः। यथा पूर्वमिमं देहं प्राप्तवान्पुनरपि तथैव देहान्तरं गच्छतीत्याह—प्रतिन्यायमिति। देहान्तरगमने कारणमाह—कर्मेति। आदिशब्देन पूर्वप्रज्ञा गृह्यते। प्राणव्यूहाय प्राणानां विशेषाभिव्यक्तिलाभायेति यावत्। प्राणायेति श्रुतिः किमर्थमित्थं व्याख्यायते तत्राऽऽह—सप्राण इति। एतच्च तदन्तरप्रतिपत्त्यधिकरणे निर्धारितम्। प्राणायेति विशेषणस्याऽऽनर्थक्याद्युक्तं प्राणव्यूहायेति विशेषणमित्याह—प्राणेति। नन्वस्य प्राणः सह वर्तते चेत्तावतैव भोगसिद्धेरलं प्राणव्यूहेने-
२५ त्याशङ्क्याऽऽह—तेन हीति। अन्यथा सुषुप्तिमूर्छयोरपि भोगप्रसक्तेरित्यर्थः। तादर्थ्यं प्राणस्य भोगशेषत्वसिद्ध्यर्थमिति यावत् ॥३६॥

तद्यथा राजानमित्यादिवाक्यव्यावर्त्यामाशङ्कामाह—तत्रेति। मुमूर्षावस्था सप्तम्यर्थः। अथास्य स्वयमसामर्थ्येऽपि शरीरान्तरकर्तारोऽन्ये भविष्यन्ति यथा राज्ञो भृत्या गृहनिर्मातारस्तत्राऽऽह—न चेति। स्वयमसामर्थ्यमन्येषां चासत्त्वमिति स्थिते फलितमाह—अथेति। तद्यथेत्यादिवाक्यस्य तात्पर्यं दर्शयन्नुत्तरमाह—उच्यत इति। भवत्वज्ञस्य
३० स्वकर्मफलोपभोगे साधनत्वसिद्ध्यर्थं सर्वं जगदुपात्तं तथाऽपि देहाद्देहान्तरं प्रतिपित्समानस्य किमायातमित्याशङ्क्याऽऽह—स्वकर्मेति। स्वकर्मणेत्यत्र स्वशब्दस्तत्कर्मफलोपभोगयोग्यमित्यत्र तच्छब्दश्च प्रकृतभोक्तृविषयौ। तत्र प्रमाणमाह—कृतमिति। पुरुषो हि त्यक्तवर्तमानदेहो भूतपञ्चकादिना निर्मितमेव देहान्तरमभिव्याप्य जायत इति

---

१. प्राणव्यूहाय—प्राणाः मुख्यप्राणा इन्द्रियाणि च तेषां व्यूहः तत्तत्प्रदेशे शरीरे निवेशः 'हृदि प्राणो गुदेऽपानः' इत्यादिरीत्या तदन्तरप्रतिपत्त्यधिकरणे ब्रह्मसूत्रभाष्ये तृतीयाध्यायप्रथमपादे निरूपितम्। तत्र देहाद्देहान्तरप्राप्तौ
३५ जीवः पञ्चभूतसूक्ष्मैः संपरिष्वक्तो गच्छति इति भूतसूक्ष्माणां गमनं तत्रैवाश्रितत्वेन प्राणानां गमनमुक्तम्। ब्र० सू० ( ३.१.२ )

**तद्यथा राजानं प्रयियासन्तमुग्राः प्रत्येनसः सूतग्रामण्योऽभिसमायन्त्येवमेवेम-मात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति यत्रैतदूर्ध्वोच्छ्वासी भवति ॥३८॥**

इति बृहदारण्यकोपनिषदि चतुर्थाध्यायस्य तृतीयं ब्राह्मणम् ॥३॥

"कृतं लोकं पुरुषोऽभिजायते" इति श्रुतेः। यथा स्वप्नाज्जागरितं प्रतिपित्सोः। तत्कथमिति लोकप्रसिद्धो दृष्टान्त उच्यते—तत्तत्र यथा राजानं राज्याभिषिक्तमायान्तं स्वराष्ट्र उग्रा जातिविशेषाः क्रूरकर्माणो वा प्रत्येनसः ५ प्रति प्रत्येनसि पापकर्मणि नियुक्ताः प्रत्येनसस्तस्करादिदण्डनादौ नियुक्ताः सूताश्च ग्रामण्यश्च सूतग्रामण्यः सूता वर्णसंकरजातिविशेषा ग्रामण्यो ग्रामनेतारस्ते पूर्वमेव राज्ञ आगमनं बुद्ध्वाऽन्नैर्भोज्यभक्ष्यादिप्रकारैः पानै-र्मदिरादिभिरावसथैश्च प्रासादादिभिः प्रतिकल्पन्ते निष्पन्नैरेव प्रतीक्षन्तेऽयं राजाऽऽयात्ययमागच्छतीत्येवं वदन्तः। यथाऽयं दृष्टान्त एवं हैवंविदं कर्मफलस्य वेदितारं संसारिणमित्यर्थः। कर्मफलं हि प्रस्तुतं तदेवंशब्देन परामृश्यते। सर्वाणि भूतानि शरीरकर्तॄणि करणानुग्राहीतॄणि चाऽऽदित्यादीनि तत्कर्मप्रयुक्तानि कृतैरेव कर्मफलोपभोगसाधनैः १० प्रतीक्षन्ते। इदं ब्रह्म भोक्तृ कर्तृ चास्माकमायाति तथेदमागच्छतीत्येवमेव च कृत्वा प्रतीक्षन्त इत्यर्थः ॥३७॥

तमेवं जिगमिषुं के सह गच्छन्ति। ये वा गच्छन्ति ते किं तत्क्रियाप्रणुन्ना आहोस्वित्तत्कर्मवशात्स्वयमेव गच्छन्ति परलोकशरीरकर्तॄणि च भूतानीति। अत्रोच्यते दृष्टान्तः—तद्यथा राजानं प्रयियासन्तं प्रकर्षेण यातु-मिच्छन्तमुग्राः प्रत्येनसः सूतग्रामण्यस्तं यथाऽभिसमायन्त्याभिमुख्येन समायन्त्येकीभावेन तमभिमुखा आयन्त्यनाज्ञप्ता एव राज्ञा केवलं तज्जिगमिषाभिज्ञाः, एवमेवेममात्मानं भोक्तारमन्तकाले मरणकाले सर्वे प्राणा वागादयोऽभिस- १५ मायन्ति। यत्रैतदूर्ध्वोच्छ्वासी भवतीति व्याख्यातम् ॥३८॥

इति बृहदारण्यकोपनिषद्भाष्ये चतुर्थाध्यायस्य तृतीयं ब्राह्मणम् ॥३॥

श्रुतेरर्थ.। उक्तमेवार्थं दृष्टान्तेन स्पष्टयति—यथेति। स्वप्नस्थानाज्जागरितस्थानं प्रतिपत्तुमिच्छतः शरीरं पूर्वमेव कृतं नापूर्वं क्रियते तथा देहाद्देहान्तरं प्रतिपित्समानस्य पञ्चभूतादिना कृतमेव देहान्तरमित्यर्थः। सर्वेषां भूतानां देहान्तर कृत्वा संसारिणि परलोकाय प्रस्थिते प्रतीक्षणं केन प्रकारेणेति प्रश्नपूर्वकं दृष्टान्तवाक्यमुत्थाप्य व्याचष्टे— २० तत्तत्रेत्यादिना। तत्र पापकर्मणि नियुक्तत्वमेव व्यनक्ति—तस्करादीति। आदिपदेनान्येऽपि निग्राह्या गृह्यन्ते। दण्डनादावित्यादिशब्दो हिंसाप्रभेदसंग्रहार्थ.। 'ब्राह्मण्यां क्षत्रियात्सूतः' इति स्मृतिमाश्रित्य सूतशब्दार्थमाह—वर्णसंकरेति। भोज्यभक्ष्यादिप्रकारैरित्यादिशब्देन लेह्यचोष्ययो. संग्रहः। मदिरादिभिरित्यादिपदेन क्षीरादि गृह्यते। प्रासादादिभिरित्यादिशब्दो गोपुरतोरणादिग्रहार्थः। विद्वन्मात्रे प्रतीयमाने किमति कर्मफलस्य वेदितारमिति विशेषोपादानमित्याशङ्क्याऽऽह—कर्मफलं हीति। तत्कर्मप्रयुक्तानीत्यत्र तच्छब्दः संसारिविषयः। संसारिणो वस्तुतो २५ ब्रह्माभिन्नत्वात्तस्मिन्ब्रह्मशब्दः। अभ्यासस्तूभयत्राऽऽदरार्थ.॥३७॥

तद्यथा राजानं प्रयियासन्तमित्यादिवाक्यव्यावर्त्यं चोद्यमुत्थापयति—तमेवमिति। वागादयस्तमनुगच्छन्ती-त्याशङ्क्याऽऽह—ये वेति। तत्क्रियाप्रणुन्नास्तस्य गन्तुर्वागादिव्यापारेण प्रेरिताः समाहूता इति यावत्। यानि च भूतानि परलोकगन्वित शरीरं कुर्वन्ति यानि वा करणानुग्रहीतॄण्यादित्यादीनि तेष्वपि यथोक्तप्रश्नप्रवृत्तिं दर्शयति—परलोकेति। नाऽऽद्य.। परलोकार्थं प्रस्थितस्य वागादिव्य.पाराभावादाह्वानानुपपत्ते.। न द्वितीयो भोक्तृकर्मणाऽपि ३० वागादिष्वचेतनेषु स्वयं प्रवृत्तेरनुपपत्तेरिति चोदयितुरभिमानः। उत्तरवाक्येनोत्तरमाह—अत्रेत्यादिना। मरणकालमेव विशिनष्टि—यत्रेति। अचेतनानामपि रथादीनां चेतनप्रेरितानां प्रवृत्तिदर्शनाद्वागादीनामपि भोक्तृकर्म-वशात्तदाहूतत्वमन्तरेण प्रवृत्तिः सम्भवतीति भावः ॥३८॥

इति बृहदारण्यकोपनिषद्भाष्यटीकायां चतुर्थाध्यायस्य तृतीयं ज्योतिर्ब्राह्मणम् ॥३॥

अथ चतुर्थाध्यायस्य चतुर्थं ब्राह्मणम्

स यत्रायमात्माऽबल्यं न्येत्य संमोहमिव न्येत्यथैनमेते प्राणा अभिसमायन्ति स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामति स यत्रैष चाक्षुषः पुरुषः पराङ्पर्यावर्ततेऽथारूपज्ञो भवति ॥१॥

५ स यत्रायमात्मा। संसारोपवर्णनं प्रस्तुतम्। तत्रायं पुरुष एभ्योऽङ्गेभ्यः संप्रमुच्येत्युक्तम्। तत्संप्रमोक्षणं कस्मिन्काले कथं वेति सविस्तरं संसरणं वर्णयितव्यमित्यारभ्यते—सोऽयमात्मा प्रस्तुतो यत्र यस्मिन्कालेऽबल्यमबलभावं नि एत्य गत्वा। यद्देहस्य दौर्बल्यं तदात्मन एव दौर्बल्यमित्युपचर्यतेऽबल्यं न्येत्येति। न ह्यसौ स्वतोऽमूर्तत्वादबलभावं गच्छति। तथा संमोहमिव संमूढता संमोहो विवेकाभावः संमूढतामिव न्येति निगच्छति। न चास्य स्वतः समोहोऽसंमोहो वाऽस्ति। नित्यचैतन्यज्योतिःस्वभावत्वात्। तेनेवशब्दः संमोहमिव न्येतीति। उत्क्रान्तिकाले १० हि करणोपसंहारनिमित्तो व्याकुलीभाव आत्मन इव लक्ष्यते लौकिकैः। तथा च वक्तारो भवन्ति संमूढः संमूढोऽयमिति।

अथ वोभयत्रेवशब्दप्रयोगो योज्यः। अबल्यमिव न्येत्य संमोहमिव न्येतीति। उभयस्य परोपाधिनिमित्तत्वाविशेषात्। समानकर्तृकनिर्देशाच्च। अथास्मिन्काल एते प्राणा वागादय एनमात्मानमभिसमायन्ति तदाऽस्य शारीरस्याऽऽत्मनोऽङ्गेभ्यः संप्रमोक्षणम्। कथं पुनः संप्रमोक्षणं केन वा प्रकारेणाऽऽत्मानमभिसमायन्तीति। १५ उच्यते—स आत्मैतास्तेजोमात्रास्तेजसो मात्रास्तेजोमात्रास्तेजोवयवा रूपादिप्रकाशकत्वाच्चक्षुरादीनि करणानीत्यर्थः। ता एताः समभ्याददानः सम्यङ्निर्लेपेनाभ्याददान आभिमुख्येनाऽऽददानः संहरमाणस्तत्स्वप्नापेक्षया विशेषणं समिति। न तु स्वप्ने निर्लेपेन सम्यगादानम्। अस्ति त्वादानमात्रम्। 'गृहीता वाग्गृहीतं चक्षुः' 'अस्य लोकस्य सर्वावतो मात्रामपादाय' 'शुक्रमादाये'त्यादिवाक्येभ्यः।

हृदयमेव पुण्डरीकाकारमन्ववक्रामत्यन्वागच्छति। हृदयेऽभिव्यक्तविज्ञानो भवतीत्यर्थः। बुद्ध्यादिवि-

२० ब्राह्मणान्तरमुत्थापयति—स यत्रेति। तस्य सम्बन्धं वक्तुमुक्तं कीर्तयति—संसारेति। वक्ष्यमाणोपयोगित्वेनोक्तमर्थान्तरमनुद्रवति—तत्रेति। संसारप्रकरणं सप्तम्यर्थः। सम्प्रत्याकांक्षापूर्वकमुत्तरब्राह्मणमादत्ते—तत्सम्प्रमोक्षणमिति। एवं ब्राह्मणमवतार्य तदक्षराणि व्याकरोति—सोऽयमित्यादिना। गत्वा समोहमिव न्येतीत्युत्तरत्र सम्बन्धः। कथमात्मनो दौर्बल्यं तदाह—यद्देहस्येति। किमित्युपचारो मुख्यमेवाऽऽत्मनो दौर्बल्यं किं न स्यादित्याङ्क्याऽऽह—न हीति। यथाऽयमबलभावं निगच्छति तथा संमोहं संमूढतामिव प्रतिपद्यते। विवेकाभावो हि संमोहः। तथा च २५ संमूढतामिव निगच्छतीति युक्तमित्याह—तथेति। इवशब्दार्थमाह—न चेति। कथं पुनरात्मनः समारोपितोऽपि समोहः स्यान्नित्यचैतन्यज्योतिष्ट्वादित्याशङ्क्याऽऽह—उत्क्रान्तीति। व्याकुलीभावो लिङ्गस्येति शेषः। तत्र लौकिकी वार्तामनुकूलयति—तथेति।

यथाश्रुतमिवशब्दं गृहीत्वा वाक्यं व्याख्याय पक्षान्तरमाह—अथवेति। इवशब्दप्रयोगस्योभयत्र योजनामेवाभिनयति—अबल्यमिति। उभयत्र तद्योजने हेतुमाह—उभयस्येति। तुल्यप्रत्ययेनाबल्यसंमोहयोरेककर्तृकत्वनिर्देशा- ३० दप्युभयत्रेवकारो द्रष्टव्य इत्याह—समानेति। अथेत्यादि वाक्यमवतार्य व्याकुर्वन्कस्मिन्काले तत्संप्रमोक्षणमित्यस्योत्तरमाह—अथेत्यादिना। कथं वेत्युक्तप्रश्नमनूद्य प्रश्नान्तरं प्रस्तौति—कथमिति। अत्रोत्तरत्वेनोत्तरं वाक्यमादाय व्याकरोति—उच्यत इत्यादिना। रूपादिप्रकाशनशक्तिमत्सत्त्वप्रधानभूतकार्यत्वात्तेजोमात्राश्चक्षुरादीनीत्युक्तं सम्प्रति समभ्याददान इत्यस्यार्थमाह—ता एता इति। संहरमाणो हृदयमन्ववक्रामतीत्यन्वयः। तत्समिति विशेषणं स्वप्नापेक्षयेति सम्बन्धः। कथं स्वप्नापेक्षया विशेषणं तदाह—न त्विति। आदानमात्रमपि स्वप्ने नास्तीति कुतस्तद्व्या- ३५ वृत्त्यर्थं विशेषणमित्याशङ्क्याऽऽह—अस्तीति।

स एतास्तेजोमात्राः समभ्याददान इत्येतद्व्याख्याय हृदयमेवेत्यादि व्याचष्टे—हृदयमित्यादिना। सविज्ञानो भवतीति वाक्यशेषमाश्रित्य वाक्यार्थमाह—हृदय इति। कथमात्मनो निष्क्रियस्य तेजोमात्रादानकर्तृत्वमित्या-

एकीभवति न पश्यतीत्याहुरेकीभवति न जिघ्रतीत्याहुरेकीभवति न रसयत इत्याहुरेकीभवति न वदतीत्याहुरेकीभवति न शृणोतीत्याहुरेकीभवति न मनुत इत्याहुरेकीभवति न स्पृशतीत्याहुरेकीभवति न विजानातीत्याहुस्तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुष्टो वा मूर्ध्नो वाऽन्येभ्यो वा शरीरदेशेभ्यस्तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तँ सर्वे प्राणा अनूत्क्रामन्ति सविज्ञानो भवति सविज्ञानमेवान्ववक्रामति । तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च ॥२॥ ५

क्षेपोपसंहारे सति । न हि तस्य स्वतश्चलनं विक्षेपोपसंहारादिविक्रिया वा । ध्यायतीव लेलायतीवेत्युक्तत्वात् । बुद्ध्याद्युपाधिद्वारैव हि सर्वविक्रियाऽध्यारोप्यते तस्मिन् । कदा पुनस्तस्य तेजोमात्राभ्यादानमिति । उच्यते—स 'यत्रैष चक्षुषि भवश्चाक्षुषः पुरुष आदित्यांशो भोक्तुः कर्मणा प्रयुक्तो यावद्देहधारणं तावच्चक्षुषोऽनुग्रहं कुर्वन्वर्तते । मरणकाले त्वस्य चक्षुरनुग्रहं परित्यजति स्वमादित्यात्मानं प्रतिपद्यते । १०

तदेतदुक्तं "यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यमि"त्यादि । पुनर्देहग्रहणकाले संश्रयिष्यन्ति । तथा स्वप्स्यतः प्रबुध्यतश्च । तदेतदाह—चाक्षुषः पुरुषो यत्र यस्मिन्काले पराङ्पर्यावर्तते परिसमन्तात्पराङ्व्यावर्तत इति । अथात्रास्मिन्कालेऽरूपज्ञो भवति मुमूर्षू रूपं न जानाति तदाऽयमात्मा चक्षुरादितेजोमात्राः समभ्याददानो भवति स्वप्नकाल इव ॥१॥

एकीभवति करणजातं स्वेन लिङ्गात्मना । तदैनं पार्श्वस्था आहुर्न पश्यतीति । तथा घ्राणदेवतानिवृत्तौ घ्राणमेकीभवति लिङ्गात्मना तदा न जिघ्रतीत्याहुः । समानमन्यत् । जिह्वायां सोमो वरुणो वा देवता तन्निवृत्त्यपेक्षया न रसयत इत्याहुः । तथा न वदति न शृणोति न मनुते न स्पृशति न विजानातीत्याहुः । तदोपलक्ष्यते देवतानिवृत्तिः करणानां च हृदय एकीभावः । तत्र हृदय उपसंहृतेषु करणेषु योऽन्तर्व्यापारः स कथ्यते—तस्य हैतस्य प्रकृतस्य हृदयस्य हृदयच्छिद्रस्येत्येतत् । अग्रं नाडीमुखं निर्गमनद्वारं प्रद्योतते स्वप्नकाल इव स्वेन भासा १५

शङ्क्याऽऽह—बुद्ध्यादीति । तेषां तद्विक्षेपस्य चोपसंहारे सत्यात्मनस्तदादानकर्तृत्वमौपचारिकमित्यर्थः । तर्हि तद्विक्षेपोपसंहर्तृत्ववत्तदादानकर्तृत्वमपि मुख्यमेव भविष्यतीत्याशङ्क्याऽऽह—न हीति । आदिशब्देन क्रियाविशेषः सर्वो गृह्यते । कथं तर्हि प्रतीचि कर्तृत्वादिप्रथेत्याशङ्क्याऽऽह—बुद्ध्यादीति । स यत्रेत्यादि वाक्यमाकाङ्क्षापूर्वकमवतार्य व्याकरोति—कदा पुनरित्यादिना । तस्य पुरुषशब्दाद्भोक्तृत्वे प्राप्ते विशिनष्टि—आदित्यांश इति । तस्य चाक्षुषत्वं साधयति—भोक्तुरित्यादिना । यावद्देहधारणमिति कुतो विशेषणं तत्राऽऽह—मरणकाले त्विति । आदित्यांशस्य चक्षुरनुग्रहमकुर्वतः स्वातन्त्र्यं वारयति—स्वमिति । २० २५

मरणावस्थाया चक्षुराद्यनुग्राहकदेवतांशानामधिदेवतात्मनोपसंहारे श्रुत्यन्तरं सम्वादयति—तदेतदिति । तर्हि देहान्तरे वागादिराहित्य स्यादित्याशङ्क्याऽऽह—पुनरिति । संश्रयिष्यन्ति वागादयस्तत्तद्देवताधिष्ठिता यथास्थानमिति शेषः । मुमूर्षोरिव स्वप्स्यतः सर्वाणि करणानि लिङ्गात्मनोपसंह्रियन्ते प्रबुध्यमानस्य चोत्पित्सोरिव तानि यथास्थानं प्रादुर्भवन्तीत्याह—तथेति । उक्तेऽर्थे वाक्यं पातयति—तदेतदाहेति । पराङ्पर्यावर्तत इति रूपवैमुख्य चाक्षुषस्य विवक्षितमिति शेषः । ३०

तर्हि भोक्त्रोपसंहृतं चक्षुरत्यन्ताभावीभूतमित्याशङ्क्याऽऽह—एकीति । उक्तेऽर्थे लोकप्रसिद्धिं दर्शयति—तदेति । चक्षुषि दर्शितं न्यायं घ्राणेऽतिदिशति—तथेति । यथा चक्षुर्देवताया निवृत्तौ लिङ्गात्मना चक्षुरेकीभवति तथा घ्राणदेवतांशस्य घ्राणानुग्रहनिवृत्तिद्वारेणाधिदेवतयैक्ये लिङ्गात्मना घ्राणमेकीभवतीत्यर्थः । तन्निवृत्त्यपेक्षया वरुणादिदेवताया जिह्वायामनुग्रहनिवृत्तौ जिह्वाया लिङ्गात्मनैक्यव्यपेक्षयेत्यर्थः । तत्तदनुग्राहकदेवतांशस्य तत्र तत्रानुग्रहनिवृत्त्या तत्तदधिदेवताप्राप्तौ तत्तत्करणस्य लिङ्गात्मनैक्यं भवतीत्यभिप्रेत्याऽऽह—तथेति । मरणदशाया रूपादिदर्शनराहित्यमर्थद्वयसाधकमित्याह—तदेति । तस्य हैतस्येत्यादिवाक्यमुपादत्ते—तत्रेति । मुमूर्षावस्था सप्तम्यर्थः । केनाय प्रद्योतो भवतीत्यपेक्षायामाह—स्वप्नेति । यथा स्वप्नकाले स्वेन भासा स्वेन ज्योतिषा प्रस्वपितीति व्याख्यातं ३५

तेजोमात्रादानकृतेन स्वेनैव ज्योतिषाऽऽत्मनैव च। तेनाऽऽत्मज्योतिषा प्रद्योतेन हृदयाग्रेणैष आत्मा विज्ञानमयो लिङ्गोपाधिर्निर्गच्छति निष्क्रामति। तथाऽऽथर्वणे "कस्मिन्न्वहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीति स प्राणमसृजत" इति।

तत्र चाऽऽत्मचैतन्यज्योतिः सर्वदाऽभिव्यक्ततरम्। तदुपाधिद्वारा ह्यात्मनि जन्ममरणगमनागमनादि-
५ सर्वविक्रियालक्षणः संव्यवहारः। तदात्मकं हि द्वादशविधं करणं बुद्ध्यादि तत्सूत्रं तज्जीवनं सोऽन्तरात्मा जगतस्त-स्थुषश्च। तेन प्रद्योतेन हृदयाग्रप्रकाशेन निष्क्रममाणः केन मार्गेण निष्क्रामतीति। उच्यते—चक्षुष्टो वा। आदित्यलोकप्राप्तिनिमित्तं ज्ञानं कर्म वा यदि स्यात्। मूर्ध्नो वा ब्रह्मलोकप्राप्तिनिमित्तं चेत्। अन्येभ्यो वा शरीर-देशेभ्यः शरीरावयवेभ्यो यथाकर्म यथाश्रुतम्। तं विज्ञानात्मानमुत्क्रामन्तं परलोकाय प्रस्थितं परलोकायोद्भूता-कूतमित्यर्थः। प्राणः सर्वाधिकारिस्थानीयो राज्ञ इवानूत्क्रामति। तं च प्राणमनूत्क्रामन्तं वागादयः सर्वे प्राणा
१० अनूत्क्रामन्ति।

यथाप्रधानान्वाचिख्यासेयं न तु क्रमेण सार्थवद्गमनमिह विवक्षितम्। तदैष आत्मा सविज्ञानो भवति स्वप्न इव विशेषविज्ञानवान्भवति कर्मवशान्न स्वतन्त्रः स्वातन्त्र्येण हि सविज्ञानत्वे सर्वः कृतकृत्यः स्यात्। नैव तु तल्लभ्यते। अत एवाऽऽह व्यासः "सदा तद्भावभावितः" इति। कर्मणा तूद्भाव्यमानेनान्तःकरणवृत्ति-विशेषाश्रितवासनात्मकविशेषविज्ञानेन सर्वो लोक एतस्मिन्काले सविज्ञानो भवति। सविज्ञानमेव च गन्तव्य-
१५ मन्ववक्रामत्यनुगच्छति विशेषविज्ञानोद्भासितमेवेत्यर्थः। तस्मात्तत्काले स्वातन्त्र्यार्थं योगधर्मानुसेवनं परिसंख्या-

तथाऽत्रापि तेजोमात्राणां यदादानं तत्कृतेन वासनारूपेण प्राप्यफलविषयबुद्धिवृत्तिरूपेण स्वेन भासा स्वेन चाऽऽत्मना चैतन्यज्योतिषा हृदयाग्रप्रद्योतनमित्यर्थः। तस्यार्थक्रियां दर्शयति—तेनेति। किमिति लिङ्गद्वाराऽऽत्मनो निर्गमनं प्रतिज्ञायते तत्राऽऽह—तथेति।

यदि मरणकाले तेजोमात्रादानं न तर्हि सदा लिङ्गोपाधिरात्मेत्याशङ्क्याऽऽह—तत्र चेति। सप्तम्या लिङ्ग-
२० मुच्यते। सर्वदेति लिङ्गसत्तादशोक्तिः। आत्मोपाधिभूते लिङ्गे किं प्रमाणमित्याशङ्क्याऽऽत्मनि कूटस्थे संव्यवहार-दर्शनमित्याह—तदुपाधीति। चक्षुरादिप्रसिद्धिरपि प्रमाणमित्याह—तदात्मकं हीति। एकादशविधं करणमित्यभ्यु-पगमात्कुतो द्वादशविधत्वमित्याशङ्क्य विशिनष्टि—बुद्ध्यादीति। 'वायुर्वै गौतम तत्सूत्रम्' इत्यादिश्रुतिरपि यथोक्ते लिङ्गे प्रमाणमित्याह—तत्सूत्रमिति। जगतो जीवनमपि तत्र मानमित्याह—तज्जीवनमिति। 'एष सर्वभूतान्तरात्मा' इति श्रुतिरपि यथोक्तं लिङ्गं साधयतीत्याह—सोऽन्तरात्मेति। लिङ्गोपाधेरात्मनो यथोक्तप्रकाशेन मरणकाले हृदया-
२५ न्निष्क्रमणे मार्गं प्रश्नपूर्वकमुत्तरवाक्येनोपदिशति—तेनेत्यादिना। चक्षुष्टो वेति विकल्पे निमित्तं सूचयति—आदित्येति। मूर्ध्नो वेति विकल्पे हेतुमाह—ब्रह्मलोकेति। तत्प्राप्तिनिमित्तं चेज्ज्ञानं कर्म वा स्यादिति पूर्वेण सम्बन्धः। देहावयवान्तरेभ्यो निष्क्रमणे नियामकमाह—यथेति। कथं परलोकाय प्रस्थितमित्युच्यते प्राणगमनाधीनत्वाद्वि-ज्ञानात्मगमनस्येत्याशङ्क्याह—परलोकायेति।

ननु जीवस्य प्राणादितादात्म्ये सति कथमनुशब्देन क्रमो विवक्ष्यते तत्राऽऽह—यथाप्रधानेति। प्रधानमनति-
३० क्रम्य हीयमन्वाख्यानेच्छा। तथा च जीवादेः प्राधान्याभिप्रायेणानुशब्दप्रयोगो न क्रमाभिप्रायेण देशकालभेदाभावा-दित्यर्थः। सार्थे समूहे व्यक्तिषु क्रमेण गमनं दृश्यते न तथा प्राणादिष्विति व्यतिरेकः। यदुक्तं हृदयाग्रप्रद्योतनं तत्स-विज्ञानश्रुत्या प्रकटयति—तदेति। कर्मवशादिति विशेषणं साधयति—नेति। विपक्षे दोषमाह—स्वातन्त्र्येणेति। इष्टापत्तिमाशङ्क्याऽऽह—नैवेति। मुमूर्षोरस्वातन्त्र्ये मानमाह—अत एवेति। कर्मवशादुक्तं सविज्ञानत्वमुपसंहरति—कर्मणेति। अन्तःकरणस्य वृत्तिविशेषो भाविदेहविषयस्तदाश्रितं तद्रूपं यद्वासनात्मकं विशेषविज्ञानं तेनेति यावत्।
३५ म्रियमाणस्य सविज्ञानत्वे सत्यर्थसिद्धमर्थमाह—सविज्ञानमेवेति। गन्तव्यस्य सविज्ञानत्वं विज्ञानाश्रयत्वमित्याशङ्क्य विशिनष्टि—विशेषेति। प्रागेवोत्क्रान्तेः सविज्ञानत्ववादिश्रुतेस्तात्पर्यमाह—तस्मादिति। पुरुषस्य कर्मानुसारित्व

१. वृत्तिविशेषः भाविदेहविषयः तदाश्रितं तद्रूपं विज्ञानं तेन भासितं स्थानं प्राप्नोति। स्वातन्त्र्यार्थमिति। तत्काले स्वप्नवत् पराधीनं ज्ञानं स्वाधीनध्येयदेवताज्ञानसिध्यर्थं योगजधर्मानुसेवनं यमनियमादे तथा परि-संख्याभ्यासः गद्यरूपे उपदेशसाहस्रीप्रबन्धे अन्ते परिसंख्या भगवत्पादैरुपदिष्टा।

नाभ्यासश्च विशिष्टपुण्योपचयश्च श्रद्दधानैः परलोकार्थिभिरप्रमत्तैः कर्तव्य इति।

सर्वशास्त्राणां यत्नतो विधेयोऽर्थो दुश्चरिताच्चोपरमणम्। न हि तत्काले शक्यते किञ्चित्सम्पादयितुम्। कर्मणा नीयमानस्य स्वातन्त्र्याभावात्। 'पुण्यो वै पुण्येन कर्मणा भवति पापः पापेने'त्युक्तम्। एतस्य ह्यनर्थस्योपशमोपायविधानाय सर्वशाखोपनिषदः प्रवृत्ताः। न हि तद्विहितोपायानुसेवनं मुक्त्वाऽऽत्यन्तिकोऽस्यानर्थस्योपशमोपायोऽस्ति। तस्मादत्रैवोपनिषद्विहितोपाये यत्नपरैर्भवितव्यमित्येष प्रकरणार्थः। शकटवत्संभृतसंभार उत्सर्जन्यातीत्युक्तं, किं पुनस्तस्य परलोकाय प्रवृत्तस्य पथ्यदनं शाकटिकसंभारस्थानीयं गत्वा वा परलोकं यद्भुङ्क्ते शरीराद्यारम्भकं च यत्तत्किमिति। उच्यते—तं परलोकाय गच्छन्तमात्मानं विद्याकर्मणी विद्या च कर्म च विद्याकर्मणी विद्या सर्वप्रकारा विहिता प्रतिषिद्धा चाविहिताऽप्रतिषिद्धा च। तथा कर्म विहितं प्रतिषिद्धं चाविहितमप्रतिषिद्धं च समन्वारभेते सम्यगन्वारभेते अन्वालभेते अनुगच्छतः पूर्वप्रज्ञा च पूर्वानुभूतविषया प्रज्ञा-पूर्वप्रज्ञाऽतीतकर्मफलानुभववासनेत्यर्थः। १०

सा च वासनाऽपूर्वकर्मारम्भे कर्मविपाके चाङ्गं भवति। तेनासावप्यन्वारभते। न हि तया वासनया विना कर्म कर्तुं फलं चोपभोक्तुं शक्यते। न ह्यनभ्यस्ते विषये कौशलमिन्द्रियाणां भवति। पूर्वानुभववासनाप्रवृत्तानां त्विन्द्रियाणामिहाभ्यासमन्तरेण कौशलमुपपद्यते। दृश्यते च केषांचित्कासुचित्क्रियासु चित्रकर्मादिलक्षणासु विनैवेहाभ्यासेन जन्मत एव कौशलं कासुचिदत्यन्तसौकर्ययुक्तास्वप्यकौशलं केषाञ्चित्। तथा विषयोपभोगेषु स्वभावत एव केषाञ्चित्कौशलाकौशले दृश्येते। तच्चैतत्सर्वं पूर्वप्रज्ञोद्भवानुद्भवनिमित्तम्। तेन पूर्वप्रज्ञया विना कर्मणि १५ वा फलोपभोगे वा न कस्यचित्प्रवृत्तिरुपपद्यते। तस्मादेतत्त्रयं शाकटिकसम्भारस्थानीयं परलोकपथ्यदनं विद्याकर्मपूर्वप्रज्ञाख्यम्। यस्माद्विद्याकर्मणी पूर्वप्रज्ञा च देहान्तरप्रतिपत्त्युपभोगसाधनं तस्माद्विद्याकर्मादि शुभमेव समाचरेद्यथेष्टदेहसम्भोगोपभोगौ स्यातामिति प्रकरणार्थः ॥२॥

तच्छब्दार्थः। योगश्चित्तवृत्तिनिरोधः। तस्य धर्मा यमनियमप्रभृतयः। तेषामनुसेवनं पुनः पुनरावर्तनम्। परिसङ्ख्यानाभ्यासो योगानुष्ठानम्। कर्तव्य इति प्रकृतश्रुतेर्विधेयोऽर्थ इति शेषः। २०

किञ्च पुण्योपचयकर्तव्यतारूपेऽर्थे सर्वमेव विधिकाण्डं पर्यवसितमित्याह—सर्वशास्त्राणामिति। सर्वस्मादागामिदुश्चरितादुपरमणं कर्तव्यमित्यस्मिन्नर्थे निषेधशास्त्रमपि पर्यवसितमित्याह—दुश्चरिताच्चेति। ननु पूर्वं यथेष्टचेष्टां कृत्वा मरणकाले सर्वमेतत्संपादयिष्यते नेत्याह—न हीति। कर्मणा नीयमानत्वे मानमाह—पुण्य इति। तर्हि पुण्योपचयादेव यथोक्तानर्थनिवृत्तेर्व्यर्थं तत्त्वज्ञानमित्याशङ्क्याऽऽह—एतस्येति। उपशमोपायस्तत्त्वज्ञानं तस्य विधानं प्रकाशनं तदर्थमिति यावत्। देवताध्यानादनर्थो निवर्तिष्यते किं तत्त्वज्ञानेनेत्याशङ्क्याऽऽह—न हीति। तद्विहितेति तच्छब्देन २५ प्रकृताः सर्वशाखोपनिषदो गृह्यन्ते। विधान्तरेणानर्थध्वंसासिद्धौ फलितमाह—तस्मादिति। ज्ञापितःसविज्ञानवाक्येनेति शेषः। वृत्तमनूद्य प्रश्नपूर्वकमुत्तरवाक्यमवतार्य व्याचष्टे—शकटवदित्यादिना। विहिता विद्या ध्यानात्मिका। प्रतिषिद्धा नग्नस्त्रीदर्शनादिरूपा। अविहिता घटादिविषया। अप्रतिषिद्धा पथि पतिततृणादिविषया। विहितं कर्म यागादि। प्रतिषिद्धं ब्रह्महननादि। अविहितं गमनादि। अप्रतिषिद्धं नेत्रपक्ष्मविक्षेपादि।

विद्याकर्मणोरुपभोगसाधनत्वप्रसिद्धेरन्वारम्भेऽपि किमित्यन्वारभते वासनेत्याशङ्क्याऽऽह—सा चेति। ३० अपूर्वकर्मारम्भादावङ्गं पूर्ववासनेत्यत्र हेतुमाह—न हीति। उक्तमेव हेतुमुपपादयति—नहीत्यादिना। इन्द्रियाणां विषयेषु कौशलमनुष्ठाने प्रयोजकं तच्च फलोपभोगे हेतुः। न चान्तरेणाभ्यासमिन्द्रियाणा विषयेषु कौशलं संभवति। तस्मादनुष्ठानाद्यभ्यासाधीनमित्यर्थः। तथाऽपि कथं पूर्ववासना कर्मानुष्ठानादावङ्गमित्याशङ्क्याऽऽह—पूर्वानुभवेति। तत्र लोकानुभवं प्रमाणयति—दृश्यते चेति। चित्रकर्मादीत्यादिशब्देन प्रासादनिर्माणादि गृह्यते। पूर्ववासनोद्भवकृतं कार्यमुक्त्वा तदभावकृतं कार्यमाह—कासुचिदिति। रज्जुनिर्माणादिष्विति यावत्। तत्रैवोदाहरणान्तरमाह— ३५ तथेति। तत्र हेत्वन्तरमाशङ्क्य परिहरति—तच्चेति। कर्मानुष्ठानादौ पूर्वप्रज्ञाया हेतुत्वमुपसंहरति—तेनेति। समन्वारम्भवचनार्थं निगमयति—तस्मादिति। तस्यैव तात्पर्यार्थमाह—यस्मादिति ॥२॥

तद्यथा तृणजलायुका तृणस्यान्तं गत्वाऽन्यमाक्रममाक्रम्यात्मानमुपसꣳहरत्येवमेवाय-
मात्मेदꣳ शरीरं निहत्याविद्यां गमयित्वाऽन्यमाक्रममाक्रम्याऽऽत्मानमुपसꣳहरति ॥३॥

एवं विद्यादिसम्भारसम्भृतो देहान्तरं प्रतिपद्यमानो मुक्त्वा पूर्वं देहं पक्षीव वृक्षान्तरं देहान्तरं प्रतिपद्यते। अथवाऽऽतिवाहिकेन शरीरान्तरेण कर्मफलजन्मदेशं नीयते। किञ्चात्रस्यस्यैव सर्वगतानां करणानां वृत्तिलाभो ५ भवत्याहोस्विच्छरीरस्थस्य संकुचितानि करणानि मृतस्य भिन्नघटप्रदीपप्रकाशवत्सर्वतो व्याप्य पुनर्देहान्तरारम्भे सङ्कोचमुपगच्छन्ति। किंच मनोमात्रं वैशेषिकसमय इव देहान्तरारम्भदेशं प्रति गच्छति किंवा कल्पनान्तरमेव वेदान्तसमय इति। उच्यते—"त एते सर्व एव समाः सर्वेऽनन्ताः" इति श्रुतेः सर्वात्मकानि तावत्करणानि। सर्वात्मकप्राणसंश्रयाच्च। तेषामाध्यात्मिकाधिभौतिकपरिच्छेदः प्राणिकर्मज्ञानभावनानिमित्तः। अतस्तद्वशात्स्व-भावतः सर्वगतानामनन्तानामपि प्राणानां कर्मज्ञानवासनानुरूपेणैव देहान्तरारम्भवशात्प्राणानां वृत्तिः संकुचति १० विकसति च। तथा चोक्तम्—"समः प्लुषिणा समो मशकेन समो नागेन सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेण" इति। तथा चेदं वचनमनुकूलम्—"स यो हैताननन्तानुपास्ते" इत्यादि। "तं यथा यथोपासते" इति च।

तत्र वासना पूर्वप्रज्ञाख्या विद्याकर्मतन्त्रा जलूकावत्संततैव स्वप्नकाल इव कर्मकृतं देहाद्देहान्तरमारभते हृदयस्थैव पुनर्देहान्तरारम्भे देहान्तरं पूर्वाश्रयं विमुञ्चतीत्येतस्मिन्नर्थे दृष्टान्त उपादीयते—तत्तत्र देहान्तरसञ्चार इदं निदर्शनम्। यथा येन प्रकारेण तृणजलायुका तृणजलूका तृणस्यान्तमवसानं गत्वा प्राप्यान्यं १५ तृणान्तरमाक्रममाक्रम्यत इत्याक्रमस्तमाक्रममाक्रम्याऽऽश्रित्याऽऽत्मानमात्मनः पूर्वावयवमुपसंहरत्यन्त्यावयवस्थाने। एवमेवायमात्मा यः प्रकृतः संसारीदं शरीरं पूर्वोपात्तं निहत्य स्वप्नं प्रतिपित्सुरिव पातयित्वाऽविद्यां गमयित्वाऽचेतनं कृत्वा स्वात्मोपसंहारेणान्यमाक्रमं तृणान्तरमिव तृणजलूका शरीरान्तरं गृहीत्वा प्रसारितया वासनयाऽऽत्मानमुप-संहरति। तत्राऽऽत्मभावमारभते यथा स्वप्ने देहान्तरमारभते स्वप्नदेहान्तरस्थ शरीरारम्भदेश आरभ्यमाणे देहे जङ्गमे स्थावरे वा। तत्र च कर्मवशात्करणानि लब्धवृत्तीनि संहन्यन्ते। बाह्यं च कुशमृत्तिकास्थानीयं शरीरमा-

२० तृणजलायुकावाक्यमवतारयितुं वृत्तमनूद्य वादिविवादान्दर्शयन्नादौ दिगम्बरमतमाह—एवमित्यादिना। देवतावादिमतमाह—अथवेति। देवता येन शरीरेण विशिष्टं जीवं परलोकं नयति तदातिवाहिकं शरीरान्तरं तेनेति यावत्। सांख्यादिमतमाह—किंचेति। सिद्धान्तं सूचयति—आहोस्विदिति। वैशेषिकादिपक्षमाह—किंचेति। न्यूनत्वनिवृत्त्यर्थमाह—किंवा कल्पान्तरमिति। तत्र सिद्धान्तस्य प्रामाणिकत्वेनोपादेयत्वं वदन्कल्पनान्तराणाम-प्रामाणिकत्वेन त्याज्यत्वमभिप्रेत्याऽऽह—उच्यत इति। तेषां सर्वात्मकत्वे हेत्वन्तरमाह—सर्वात्मकेति। कथं तर्हि करणानां २५ परिच्छिन्नत्वधीरित्याशङ्क्याऽऽह—तेषामिति। आधिदैविकेन रूपेणापरिच्छिन्नानामपि करणानामाध्यात्मिकादि-रूपेण परिच्छिन्नतेति स्थिते फलितमाह—अत इति। तद्वशादुदाहृतश्रुतिवशादित्येतत्। स्वभावतो देवतास्वरूपानु-सारेणेति यावत्। कर्मज्ञानवासनानुरूपेणेत्यत्र भोक्तुरिति शेषः। उभयत्र संबन्धार्थं प्राणानामिति द्विरुक्तम्। तेषां वृत्तिसंकोचादौ प्रमाणमाह—तथा चेति। परिच्छिन्नापरिच्छिन्नप्राणोपासने गुणदोषसंकीर्तनमपि प्राणसंकोचविकासयोः सूचकमित्याह—तथा चेदमिति।

३० आधिदैविकेन रूपेण सर्वगतानामपि करणानामाध्यात्मिकाधिभौतिकरूपेण परिच्छिन्नत्वात्तत्परिवृतस्य गमनं सिध्यतीति सिद्धान्तो दर्शितः। इदानीं तृणजलायुकादृष्टान्ताद्देहान्तरं गृहीत्वा पूर्वदेहं मुञ्चत्यात्मेति स्थूलदेह-विशिष्टस्यैव परलोकगमनमिति पौराणिकप्रक्रिया प्रत्याख्यातुं दृष्टान्तवाक्यस्य तात्पर्यमाह—तत्रेत्यादिना। देहनिर्ग-मनात्प्रागवस्था सप्तम्यर्थः। तदैव यथोक्ता वासना हृदयस्था विद्याकर्मनिमित्तं भाविदेहं स्पृशति जीवोऽपि तत्राभिमानं करोति पुनश्च पूर्वदेहं त्यजति। यथा स्वप्ने देवोऽहमित्यभिमन्यमानो देहान्तरस्थ एव भवति तथोत्क्रान्तावपि। ३५ तस्मान्न पूर्वदेहविशिष्टस्यैव परलोकगमनमित्यर्थः. स्वात्मोपसंहारो देहे पूर्वस्मिन्नात्माभिमानत्यागः। प्रसारितया वासनया शरीरान्तरं गृहीत्वेति संबन्धः। उपसंहारस्य स्वरूपमाह—तत्रेति। सप्तम्यर्थं विवृणोति—आरभ्यमाण इति। आरब्धे देहान्तरे सूक्ष्मदेहस्याभिव्यक्तिमाह—तत्र चेति। कर्मग्रहणं विद्यापूर्वप्रज्ञयोरुपलक्षणम्। ननु लिङ्गदेह-बलादेवार्थक्रियासिद्धौ कृतं स्थूलशरीरेणेत्याशङ्क्य तद्व्यतिरेकेणेतरस्यार्थक्रियाकारित्वं नास्तीति मत्वाऽऽह—बाह्यं

१. अन्यमाक्रममाक्रम्येति भावनादीर्घोभावमात्रं विवक्षितमित्यर्थः—दीर्घीभावः भाविविषयकत्वम्।

तद्यथा पेशस्कारी पेशसो मात्रामपादायान्यन्नवतरं कल्याणतरꣳ रूपं तनुत एवमेवायमात्मेदꣳ शरीरं निहत्याविद्यां गमयित्वान्यन्नवतरं कल्याणतरꣳ रूपं कुरुते पित्र्यं वा गान्धर्वं वा दैवं वा प्राजापत्यं वा ब्राह्मं वाऽन्येषां वा भूतानाम् ॥४॥
स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमयः प्राणमयश्चक्षुर्मयः श्रोत्रमयः पृथिवीमय आपोमयो वायुमय आकाशमयस्तेजोमयोऽतेजोमयः काममयोऽकाममयः ५ क्रोधमयोऽक्रोधमयो धर्ममयोऽधर्ममयः सर्वमयस्तद्यदेतदिदंमयोऽदोमय इति यथाकारी यथाचारी तथा भवति साधुकारी साधुर्भवति पापकारी पापो भवति पुण्यः पुण्येन कर्मणा भवति पापः पापेन । अथो खल्वाहुः काममय एवायं पुरुष इति स यथाकामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत्कर्म कुरुते यत्कर्म कुरुते तदभिसंपद्यते ॥५॥

रभ्यते । तत्र च करणव्यूहमपेक्ष्य वागाद्यनुग्रहायाग्न्यादिदेवताः संश्रयन्ते । एष देहान्तरारम्भविधिः ॥३॥ १०

तत्र देहान्तरारम्भे नित्योपात्तमेवोपादानमुपमृद्योपमृद्य देहान्तरमारभत आहोस्विदपूर्वमेव पुनः पुनरादत्त इति । अत्रोच्यते दृष्टान्तः—तत्तत्रैतस्मिन्नर्थे । यथा पेशस्कारी पेशः सुवर्णं तत्करोतीति पेशस्कारी सुवर्णकारः पेशसः सुवर्णस्य मात्रामपादायापच्छिद्य गृहीत्वाऽन्यत्पूर्वस्माद्रचनाविशेषान्नवतरमभिनवतरं कल्याणात्कल्याणतरं रूपं तनुते निर्मिनोति । एवमेवायमात्मेत्यादि पूर्ववत् । नित्योपात्तान्येव पृथिव्यादीन्याकाशान्तानि पञ्च भूतानि यानि द्वे वाव ब्रह्मणो रूपे इति चतुर्थे व्याख्यातानि पेशस्थानीयानि तान्येवोपमृद्योपमृद्यान्यदन्यच्च देहान्तरं नवतरं १५ कल्याणतरं रूपं संस्थानविशेषं देहान्तरमित्यर्थः । कुरुते पित्र्यं वा पितृभ्यो हितं पितृलोकोपभोगयोग्यमित्यर्थः । गान्धर्वं गन्धर्वाणामुपभोगयोग्यं तथा देवानां दैवं प्रजापतेः प्राजापत्यं ब्रह्मण इदं ब्राह्मं वा । यथाकर्म यथाश्रुतमन्येषां वा भूतानां संबन्धि शरीरान्तरं कुरुत इत्यभिसंबध्यते ॥४॥

येऽस्य बन्धनसंज्ञका उपाधिभूता यैः संयुक्तस्तन्मयोऽयमिति विभाव्यते ते पदार्थाः पुञ्जीकृत्येहैकत्र प्रतिनिर्दिश्यन्ते—स वा अयं य एवं संसरत्यात्मा ब्रह्मैव पर एव योऽशनायाद्यतीतो, विज्ञानमयो विज्ञानं बुद्धिस्तेनोपलक्ष्य- २०

चेति । आरब्धे देहद्वये करणेषु देवतानामनुग्राहकत्वेनावस्थानं दर्शयति—तत्रेति । स्थूलो देहः सप्तम्यर्थः । करणव्यूहस्तेषामभिव्यक्तिः ॥३॥

पेशस्कारिवाक्यव्यावर्त्यामाशङ्कामाह—तत्रेति । संसारिणो हि प्रकृते देहान्तरारम्भे किमुपादानमस्ति किंवा नास्ति ? नास्ति चेन्न भावरूपं कार्यं सिध्येत् । अस्ति चेत्तर्त्कि भूतपञ्चकमुतान्यत् । आद्येऽपि तन्नित्योपात्तमेव पूर्वपूर्वदेहोपमर्देनान्यमन्यं देहमारभते किंवाऽन्यदन्यद्भूतपञ्चकमन्यमन्यं देहं जनयति । नाऽऽद्यः । भूतपञ्चकस्य तत्तद्देहोपादानत्वे २५ मायायाः सर्वकारणत्वस्वीकारविरोधात् । न द्वितीयः । भूतपञ्चकोत्पत्तावपि कारणान्तरस्य मृग्यत्वात्तस्यैव देहान्तरकारणत्वसंभवान्नेतरो देहस्य पाञ्चभौतिकत्वप्रसिद्धिविरोधादिति भावः । उत्तरं वाक्यमुत्तरत्वेनाऽऽदत्ते—अत्रेति । तच्छब्दार्थमपेक्षितं पूरयन्नाह—दृष्टान्त इति । अवशिष्टं भागमादाय व्याचष्टे—यथेत्यादिना । किं पुनरुपादानमेतावता देहान्तरारम्भेऽभ्युपगतं भवति तत्राऽऽह—नित्योपात्तानीति । शरीरद्वयारम्भकाणीति शेषः । तेषामुभयारम्भकत्वेन मूर्तामूर्तब्राह्मणे प्रस्तुतत्वं दर्शयति—यानीति । देहविकल्पे नियामकमाह—यथाकर्मेति ॥४॥ ३०

शरीरारम्भे मायात्मकभूतपञ्चकमुपादानमिति वदता भूतावयवानामपि सहैव गमनमित्युक्तम् । इदानीं स वा अयमात्मेत्यादेस्तात्पर्यमाह—येऽस्येति । तानेवोपाधिभूतान्पदार्थान्विशिनष्टि—यैरिति । ननु पूर्वमप्येते पदार्था दर्शिताः किं पुनस्तत्प्रदर्शनेनेत्याशङ्क्याऽऽह—पुञ्जीकृत्येति । स वा अयमात्मा ब्रह्मेति भागं व्याकुर्वन्नात्मनो ब्रह्मैक्यं वास्तवं वृत्तं दर्शयति—स वा इति । तस्यैवावास्तवं रूपमुपन्यस्यति—विज्ञानमय इत्यादिना । ज्योतिर्ब्राह्मणेऽपि व्याख्यातं

१. यथाकारी यथाचारीत्यत्र ब्रह्मसूत्रेषु विचारः । श्रुतिः कर्मचरणे भेदेन व्यपदिशति यथाकारी यथाचारीति तेन 'तद्य इह रमणीयचरणा रमणीया योनिमापद्येरन्' इति श्रुतिः चरणस्यैव जन्महेतुत्वं वदति सा उपलक्षणार्थेति कार्ष्णाजिनिराचार्यो मन्यते । न च चरणं शीलं तस्यैव विहितप्रतिपिद्धस्य जन्महेतुत्वमिति वाच्यम् । चरणस्य कर्मोपलक्षणत्वात् । बादरिस्तु चरणशब्दः सुकृतदुष्कृतपर इत्याह । ब्र० सू० ३-१-११ ३५

माणस्तन्मयः। कतम आत्मेति योऽयं विज्ञानमयः प्राणेष्विति ह्युक्तम्। विज्ञानमयो विज्ञानप्रायो यस्मात्तद्धर्मत्वमस्य विभाव्यते ध्यायतीव लेलायतीवेति। तथा मनोमयो मनःसंनिकर्षान्मनोमयः। तथा प्राणमयः प्राणः पञ्चवृत्तिस्तन्मयो येन चेतनश्चलतीव लक्ष्यते। तथा चक्षुर्मयो रूपदर्शनकाले। एवं श्रोत्रमयः शब्दश्रवणकाले। एवं तस्य तस्येन्द्रियस्य व्यापारोद्भवे तत्तन्मयो भवति।

५ एवं बुद्धिप्राणद्वारेण चक्षुरादिकरणमयः सञ्शरीरारम्भकपृथिव्यादिभूतमयो भवति। तत्र पार्थिवशरीरारम्भे पृथिवीमयो भवति। तथा वरुणादिलोकेष्वाप्यशरीरारम्भ आपोमयो भवति। तथा वायव्यशरीरारम्भे वायुमयो भवति। तथाऽऽकाशशरीरारम्भ आकाशमयो भवति। एवमेतानि तैजसानि देवशरीराणि। तेष्वारभ्यमाणेषु तन्मयस्तेजोमयो भवति। अतो व्यतिरिक्तानि पश्वादिशरीराणि नरकप्रेतादिशरीराणि चातेजोमयानि तान्यपेक्ष्याऽऽहातेजोमय इति। एवं कार्यकरणसंघातमयः सन्नात्मा प्राप्तव्यं वस्त्वन्तरं पश्यन्निदं मया प्राप्तमदो

१० मया प्राप्तव्यमित्येवं विपरीतप्रत्ययस्तदभिलाषः काममयो भवति। तस्मिन्कामे दोषं पश्यतस्तद्विषयाभिलाषप्रशमे चित्तं प्रसन्नमकलुषं शान्तं भवति। तन्मयोऽकाममयः। एवं तस्मिन्विहते कामे केनचित्स कामः क्रोधत्वेन परिणमते तेन तन्मयो भवन्क्रोधमयः। स क्रोधः केनचिदुपायेन निवर्तितो यदा भवति तदा प्रसन्नमनाकुलं चित्तमक्रोध उच्यते तेन तन्मयः। एवं कामक्रोधाभ्यामकामाक्रोधाभ्यां च तन्मयो भूत्वा धर्ममयोऽधर्ममयश्च भवति। न हि कामक्रोधादिभिर्विना धर्मादिप्रवृत्तिरुपपद्यते। "यद्यद्धि कुरुते कर्म तत्तत्कामस्य चेष्टितम्"। इति स्मरणात्। धर्म-

१५ मयोऽधर्मयश्च भूत्वा सर्वमयो भवति। समस्तं धर्माधर्मयोः कार्यं यावत्किंचिद्व्याकृतं तत्सर्वं धर्माधर्मयोः फलं तत्प्रतिपद्यमानस्तन्मयो भवति।

किं बहुना तदेतत्सिद्धमस्य यदयमिदंमयो गृह्यमाणविषयादिदंमयस्तस्मादयमदोमयः। अद इति परोक्षं कार्येण गृह्यमाणेन निर्दिश्यते। अनन्ता ह्यन्तःकरणे भावनाविशेषाः। नैव ते विशेषतो निर्देष्टुं शक्यन्ते। तस्मिंस्तस्मिन्क्षणे कार्यतोऽवगम्यन्त इदमस्य हृदि वर्ततेऽदोऽस्येति तेन गृह्यमाणकार्येणेदंमयतया निर्दिश्यते परोक्षोऽन्तःस्थो

२० व्यवहारोऽयमिदानीमदोमय इति। संक्षेपतस्तु यथा कर्तुं यथा वा चरितुं शीलमस्य सोऽयं यथाकारी यथाचारी स तथा भवति। करणं नाम नियता क्रिया विधिप्रतिषेधादिगम्या चरणं नामानियतमिति विशेषः। साधुकारी साधुर्भवतीति यथाकारीत्यस्य विशेषणं पापकारी पापो भवतीति च यथाचारीत्यस्य।

ताच्छील्यप्रत्ययोपादानादत्यन्ततात्पर्यतैव तन्मयत्वं न तु तत्कर्ममात्रेणेत्याशङ्क्याऽऽह—पुण्यः पुण्येन कर्मणा भवति पापः पापेनेति। पुण्यपापकर्ममात्रेणैव तन्मयता स्यान्न तु ताच्छील्यमपेक्षते। ताच्छील्ये तु तन्मय-

२५ विज्ञानमयत्वमित्याह—कतम इति। कस्मिन्नर्थे मयट् प्रयुज्यते तत्राऽऽह—विज्ञानेति। उक्ते मयडर्थे हेतुमाह—यस्मादिति। बुद्ध्यैक्याध्यासात्तद्धर्मस्य कर्तृत्वादेरात्मनि प्रतीतिरित्यत्र मानमाह—ध्यायतीवेति। मनःसन्निकर्षात्तेन द्रष्टव्यतया संबन्धादिति यावत्। चक्षुर्मयत्वादेरुपलक्षणत्वमङ्गीकृत्याऽऽह—एवमिति।

उक्तमनूद्य सामान्येन भूतमयत्वमाह—एवं बुद्धीति। भूतमयत्वे सत्यवान्तरविशेषमाह—तत्रेत्यादिना। न चाऽऽकाशपरमाण्वभावादाकाशस्य शरीरानारम्भकत्वं श्रुतिविरुद्धारम्भप्रक्रियानभ्युपगमादित्यभिप्रेत्याह—तथाऽऽका-

३० शेति। कथं पुनर्धर्मादिमयत्वे कामादिमयत्वमुपयुज्यते तत्राऽऽह—न हीति। कथं धर्मादिमयत्वं सर्वमयत्वे कारणमित्याशङ्क्याऽऽह—समस्तमिति।

तद्यदेतदित्यादेरर्थमाह—किं बहुनेति। विषयः शब्दादिस्ततोऽन्यदपि प्रत्यक्षतो गृह्यमाणमादिशब्दार्थः। इदंमयत्वमदोमयत्वे गमकमित्याह—तस्मादिति। विशेषतस्तन्मयत्वोक्तिं विना किमिति सामान्योक्तिरित्याशङ्क्याऽऽह—अनन्ता हीति। तदस्तित्वे मानमाह—तस्मिन्निति। अवगतिप्रकारमभिनयति—इदमस्येति। इदंमयत्वमदोमयत्वं

३५ चोपसंहरति—तेनेत्यादिना। परोक्षत्वं व्याकरोति—अन्तःस्थ इति। व्यवहितविषयव्यवहारवानिति यावत्। इदानीमित्यस्मादुपरिष्टादपि तेनेति संबध्यते। परोक्षत्वादस्येदानीमित्युक्तम्। तृतीयया च प्रकृतो व्यवहारो निर्दिश्यते। इतिशब्दः सर्वमयत्वोपसंहारार्थः। विज्ञानमयादिवाक्यार्थं संक्षिपति—संक्षेपतस्त्विति। करणचरणयोरैक्येन पौनरुक्त्यमाशङ्क्याऽऽह—करणं नामेति। आदिशब्दः शिष्टाचारसंग्रहार्थः।

वाक्यतान्तरं शङ्कोत्तरत्वेनोत्थाप्य व्याचष्टे—ताच्छील्येत्यादिना। कुत्र तर्हि ताच्छील्यमुपयुज्यते तत्राऽऽह—

४० ताच्छील्ये त्विति। पूर्वपक्षमुपसंहरति—तत्रेत्यादिना। कर्मणः संसारकारणत्वमुपसंहरति—एतत्प्रयुक्तो हीति।

**तदेष श्लोको भवति । तदेव सक्तः सह कर्मणैति लिङ्गं मनो यत्र निषक्तमस्य । प्राप्यान्तं कर्मणस्तस्य यत्किंचेह करोत्ययम् । तस्माल्लोकात्पुनरैत्यस्मै लोकाय कर्मण इति नु कामयमानोऽथाकामयमानो योऽकामो निष्काम आप्तकाम आत्मकामो न[1] तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन्ब्रह्माप्येति ॥६॥**

त्वातिशय इत्ययं विशेषः । तत्र कामक्रोधादिपूर्वकपुण्यापुण्यकारिता सर्वमयत्वे हेतुः संसारस्य कारणं देहाद्देहान्तर- ५ संचारस्य च । एतत्प्रयुक्तो ह्यन्यदन्यद्देहान्तरमुपादत्ते । तस्मात्पुण्यापुण्ये संसारस्य कारणम् । एतद्विषयौ हि विधिप्रतिषेधौ । अत्र शास्त्रस्य साफल्यमिति । अथो अप्यन्ये बन्धमोक्षकुशलाः खल्वाहुः—सत्यं कामादिपूर्वके पुण्यापुण्ये शरीरग्रहणकारणं तथाऽपि कामप्रयुक्तो हि पुरुषः पुण्यापुण्ये कर्मणी उपचिनोति कामप्रहाणे तु कर्म विद्यमानमपि पुण्यापुण्योपचयकरं न भवति । उपचिते अपि पुण्यपुण्ये कर्मणी कामशून्ये फलारम्भके न भवतः । तस्मात्काम एव संसारस्य मूलम् । तथा चोक्तमाथर्वणे—"कामान्यः कामयते मन्यमानः स कामभिर्जायते तत्र १० तत्र" इति । तस्मात्काममय एवायं पुरुषो यदन्यमयत्वं तदकारणं विद्यमानमपीत्यतोऽवधारयति काममय एवेति । यस्मात्स च काममयः सन्यादृशेन कामेन यथाकामो भवति तत्क्रतुर्भवति स काम ईषदभिलाषमात्रेणाभिव्यक्तो यस्मिन्विषये भवति सोऽविहन्यमानः स्फुटीभवन्क्रतुत्वमापद्यते । क्रतुर्नामाध्यवसायो निश्चयो यदनन्तरा क्रिया प्रवर्तते । यत्क्रतुर्भवति यादृक्कामकार्येण क्रतुना यथारूपः क्रतुरस्य सोऽयं यत्क्रतुर्भवति तत्कर्म कुरुते यद्विषयः क्रतुस्तत्फलनिर्वृत्तये यद्योग्यं कर्म तत्कुरुते निर्वर्तयति । यत्कर्म कुरुते तदभिसंपद्यते, तदीयं फलमभिसंपद्यते । १५ तस्मात्सर्वमयत्वेऽस्य संसारित्वे च काम एव हेतुरिति ॥५॥

तत्तस्मिन्नर्थ एष श्लोको मन्त्रोऽपि भवति । तदेवैति तदेव गच्छति सक्त आसक्तस्तत्रोद्भूताभिलाषः सन्नित्यर्थः । कथमेति । सह कर्मणा यत्कर्मफलासक्तः सन्नकरोत्तेन कर्मणा सहैव तदेति तत्फलमेति । किं तल्लिङ्गं मनः । मनःप्रधानत्वाल्लिङ्गस्य मनो लिङ्गमित्युच्यते । अथवा लिङ्ग्यतेऽवगम्यतेऽवगच्छति येन तल्लिङ्गं तन्मनो

संसारप्रयोजके कर्मणि प्रमाणमाह—एतद्विषयौ हीति । कथं यथोक्तकर्मविषयत्वं विधिनिषेधयोरित्याशङ्क्याऽऽह— २० अत्रेति । इतिशब्दः पूर्वपक्षसमाप्त्यर्थः । सिद्धान्तमवतारयति—अथो इति । संसारकारणस्याज्ञानस्य प्राधान्येन कामः सहकारीति स्वसिद्धान्तं समर्थयते—सत्यमित्यादिना । कामाभावेऽपि कर्मणः सत्त्वं दृष्टमित्याशङ्क्याऽऽह—कामप्रहाणे त्विति । ननु कामाभावेऽपि नित्याद्यनुष्ठानात्पुण्यापुण्ये संचीयते तत्राऽऽह—उपचिते इति । यो हि पशुपुत्रस्वर्गादीननतिशयपुरुषार्थान्मन्यमानस्तानेव कामयते स तत्तद्भोगभूमौ तत्तत्कामसंयुक्तो भवतीत्याथर्वणश्रुतेरर्थः । श्रुतियुक्तिसिद्धमर्थं निगमयति—तस्मादिति । धर्मादिमयत्वस्यापि सत्त्वादवधारणानुपपत्तिमाशङ्क्याऽऽह—यदिति । स यथा- २५ कामो भवतीत्यादि व्याचष्टे—यस्मादित्यादिना । यस्मादित्यस्य तस्मादिति व्यवहितेन संबन्धः इतिशब्दो ब्राह्मणसमाप्त्यर्थः ॥५॥

तत्रेति गन्तव्यफलपरामर्शः । तदेव गन्तव्यं फलं विशेषतो ज्ञातुं पृच्छति—किं तदिति । प्रतीकमादाय व्याचष्टे—लिङ्गमिति । योऽवगच्छति स प्रमात्रादिसाक्षी येन साक्ष्येण मनसाऽवगम्यते तन्मनो लिङ्गमिति पक्षान्तर-

---

१. 'न तस्य प्राणा उत्क्रामन्ती'ति वाक्यस्थाने 'न तस्मात् प्राणा उत्क्रामन्ति' इति माध्यन्दिनपाठमादाय ३० जीवात् प्राणाः नोत्क्रामन्ति तेन सह भवन्ति इति पूर्वपक्षमुक्त्वा 'स्पष्टो ह्येकेषामि'ति सूत्रेण 'स उच्छ्वयत्याध्मायति' इत्यादिवाक्यात् शरीरादुत्क्रान्तिनिषेध एवायमिति सिद्धान्तः कृतः ब्र० सू० ४-२-१३ बन्धनिवृत्तिः मोक्ष इति नाभ्युपगम्यते । निवृत्तेः अस्तित्वे 'विद्वान् नामरूपाद्विमुक्त' इति श्रुतिविरोधात् । अपि तु तत्त्वमस्यादिवाक्योत्थसम्यग्धीजन्ममात्रतः । 'अविद्या सह कार्येण नासीदस्ति भविष्यति' इति वार्तिकोक्तदिशा 'या या प्रमा स स्वसमानविषयकाज्ञाननक्षणावृत्तिरि'ति व्याप्त्यभ्युपगमात् ज्ञानकालमारभ्य बन्धाभावः । ३५ जीवोत्क्रान्तिप्रकारः छान्दोग्ये श्रूयते 'अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायां' इति । अत्रापि 'तेजोमात्राः इन्द्रियाणि समादाय प्राणाः हृदयमागच्छन्ति' इति श्रुतं तत्र मनः उपरतवृत्ति मत् इतरेन्द्रियसहितं लिङ्गात्मना एकीभवति । न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन्

यत्र यस्मिन्निषक्तं निश्चयेन सक्तमुद्भूताभिलाषमस्य संसारिणः। तदभिलाषो हि तत्कर्म कृतवान्। तस्मात्तन्मनोऽभिषङ्गवशादेवास्य तेन कर्मणा तत्फलप्राप्तिः। तेनैतत्सिद्धं भवति कामो मूलं संसारस्येति। अत उच्छिन्नकामस्य विद्यमानान्यपि कर्माणि ब्रह्मविदो वन्ध्यप्रसवानि भवन्ति। "पर्याप्तकामस्य कृतात्मनश्च इहैव सर्वे प्रविलीयन्ति कामाः" इति श्रुतेः। किंच प्राप्यान्तं कर्मणः प्राप्य भुक्त्वाऽन्तमवसानं यावत्कर्मणः फलपरिसमाप्तिं कृत्वेत्यर्थः। कस्य कर्मणोऽन्तं प्राप्येत्युच्यते—तस्य यत्किंच कर्मेहास्मिल्लोके करोति निर्वर्तयत्ययं तस्य कर्मणः फलं भुक्त्वाऽन्तं प्राप्य तस्माल्लोकात्पुनरैत्यागच्छत्यस्मै लोकाय कर्मणेऽयं हि लोकः कर्मप्रधानस्तेनाऽऽह कर्मण इति। पुनः कर्मकरणाय पुनः कर्म कृत्वा फलासङ्गवशात्पुनरमुं लोकं यातीत्येवम्। इति न्वेवं नु कामयमानः संसरति। यस्मात्कामयमान एवैवं संसरत्यथ तस्मादकामयमानो न क्वचित्संसरति।

फलासक्तस्य हि गतिरुक्ता। अकामस्य हि क्रियानुपपत्तेरकामयमानो मुच्यत एव। कथं पुनरकामयमानो
१० भवति। योऽकामो भवत्यसावकामयमानः कथमकामतेत्युच्यते—यो निष्कामो यस्मान्निर्गताः कामाः सोऽयं निष्कामः। कथं कामा निर्गच्छन्ति। य आप्तकामो भवत्याप्ताः कामा येन स आप्तकामः। कथमाप्यन्ते कामा आत्मकामत्वेन यस्याऽऽत्मैव नान्यः कामयितव्यो वस्त्वन्तरभूतः पदार्थो भवति। आत्मैवानन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एकरसो नोर्ध्वं न तिर्यङ्नाध आत्मनोऽन्यत्कामयितव्यं, वस्त्वन्तरम्। यस्य सर्वमात्मैवाभूत्तत्केन कं पश्येच्छृणुयान्मन्वीत विजानीयाद्वैवं विजानन्कं कामयेत। ज्ञायमानो ह्यन्यत्वेन पदार्थः कामयितव्यो भवति। न
१५ चासावन्यो ब्रह्मविद आप्तकामस्यास्ति। य एवाऽऽत्मकामतयाऽऽप्तकामः स निष्कामोऽकामोऽकामयमानश्चेति मुच्यते। न हि यस्याऽऽत्मैव सर्वं भवति तस्यानात्मा कामयितव्योऽस्ति। अनात्मा चान्यः कामयितव्यः सर्वं

माह—अथवेति। यस्मिन्निश्चयेन संसारिणो मनः सक्तं तत्फलप्राप्तिस्तस्येति संबन्धः। तदेवोपपादयति—तदभिलाषो हीति। पूर्वार्धार्थमुपसंहरति—तेनेति। कामस्य संसारमूलत्वे सत्यर्थसिद्धमर्थमाह—अत इति। वन्ध्यप्रसवत्वं निष्फलत्वम्। पर्याप्तकामस्य प्राप्तपरमपुरुषार्थस्येति यावत्। कृतात्मनः शुद्धबुद्धेर्विदितसतत्त्वस्येत्यर्थः इहेति जीवदव-
२० स्थोक्तिः। कामप्रधानः संसरति चेत्कर्मफलभोगानन्तरं कामाभावान्मुक्तिः स्यादित्याशङ्क्याऽऽह—किंचेति। इतश्च संसारस्य कामप्रधानत्वमास्थेयमित्यर्थः। यावदवसानं तावद्भुक्त्वेति संबन्धः उक्तमेव संक्षिपति—कर्मण इति। इत्येवं पारम्पर्येण संसरणादृते ज्ञानान्न मुक्तिरिति शेषः। संसारप्रकरणमुपसंहरति—इति न्विति। अवस्थाद्वयस्य दार्ष्टान्तिकं बन्धं प्रबन्धेन दर्शयित्वा सुषुप्तस्य दार्ष्टान्तिकं मोक्षं वक्तुमथेत्यादि वाक्यं तत्राथशब्दार्थमाह—यस्मादिति।

कामरहितस्य संसाराभावं साधयति—फलासक्तस्येति। विदुषो निष्कामस्य क्रियाराहित्ये नैष्कर्म्यमयत्न-
२५ सिद्धमिति भावः। अकामयमानत्वे प्रश्नपूर्वकं हेतुमाह—कथमित्यादिना। बाह्येषु शब्दादिषु विषयेष्वासङ्गराहित्यादकामयमानतेत्यर्थः। अकामत्वे हेतुमाकाङ्क्षापूर्वकमाह—कथमिति। वासनारूपकामाभावादकामतेत्यर्थः। निष्कामत्वे प्रश्नपूर्वकं हेतुमुत्थाप्य व्याचष्टे—कथमिति। प्राप्तपरमानन्दत्वान्निष्कामतेत्यर्थः। आप्तकामत्वे हेतुमाकाङ्क्षापूर्वकमाह—कथमित्यादिना। हेतुमेव साधयति—यस्येति। तस्य युक्तमाप्तकामत्वमिति शेषः। उक्तमर्थं प्रमाणप्रदर्शनार्थं प्रपञ्चयति—आत्मैवेति। कामयितव्याभावं ब्रह्मविदः श्रुत्यवष्टम्भेन स्पष्टयति—यस्येति। इति
३० विद्यावस्था यस्य विदुषोऽस्ति सोऽन्यमविजानन्न कंचिदपि कामयेतेति योजना। पदार्थोऽन्यत्वेनाविज्ञातोऽपि कामयितव्यः स्यादिति चेन्नेत्याह—ज्ञायमानो हीति। अनुभूते स्मरणविपरिवर्तिनि कामनियमादित्यर्थः। अन्यत्वेन ज्ञायमानस्तर्हि पदार्थो विदुषोऽपि कामयितव्यः स्यादित्याशङ्क्याऽऽह—न चेति। आप्तकामस्य ब्रह्मविदो दर्शितरीत्या कामयितव्याभावे मुक्तिः सिद्धेत्युपसंहरति—य एवेति। कथं कामयितव्याभावोऽनात्मनस्तथात्वादित्याशङ्क्याऽऽह—न हीति। सर्वात्मत्वमनात्मकामयितृत्वं च स्यादित्याशङ्क्याऽऽह—अनात्मा चेति। अथेत्यादिवाक्ये श्रौतमर्थ-

३५ ब्रह्माप्येति—अत्र ब्रह्मसूत्रे विचारः—प्रतिषेधादिति चेन्न शारीरात् (४.२.१२) 'न तस्मात्प्राणा उत्क्रामन्ति' इति माध्यन्दिनश्रुतेः विदुषः प्राणा नोत्क्रामन्ति इति चेन्न 'स्पष्टो ह्येकेषां' काण्वाना 'न तस्य प्राणा उत्क्रामन्ति' इति स्पष्टमुत्क्रान्तिनिषेधात् 'स उच्छ्वयत्याध्मायति' इति विद्वच्छरीरस्योच्छ्वयवादिदर्शनात्। अत्र परे—'ब्रह्मैव सन् ब्रह्माप्येति' इत्यस्य आविर्भूतब्रह्मरूपस्सन् ब्रह्मणि लीयत इत्यर्थः लयश्च तद्व्यतिरेके सत्यपि तद्रूपेणादृश्यमानत्वमिति वदन्ति। अत्र ब्रह्मसमश्नुते इत्यस्यब्रह्मानुभववानित्यर्थ इति व्याचक्रु तदिदं
४० सर्वमविशिष्टस्तु वाक्यार्थः लोकवेदयोरिति मीमांसान्यायविरुद्धम्।

चाऽऽत्मैवाभूदिति विप्रतिषिद्धम् । सर्वात्मदर्शिनः कामयितव्याभावात्कर्मानुपपत्तिः ।

ये तु प्रत्यवायपरिहारार्थं कर्म कल्पयन्ति ब्रह्मविदोऽपि तेषां नाऽऽत्मैव सर्वं भवति । प्रत्यवायस्य जिहासितव्यस्याऽऽत्मनोऽन्यस्याभिप्रेतत्वात् । येन चाशनायाद्यतीतो नित्यं प्रत्यवायासंबद्धो विदित आत्मा तं वयं ब्रह्मविदं ब्रूमः । नित्यमेवाऽशनायाद्यतीतमात्मानं पश्यति । यस्माच्च जिहासितव्यमन्यमुपादेयं वा यो न पश्यति तस्य कर्म न शक्यत एव संबद्धु ( न्धु ) म् । यस्त्वब्रह्मवित्तस्य भवत्येव प्रत्यवायपरिहारार्थं कर्मेति न विरोधः । अतः ५ कामाभावादकामयमानो न जायते मुच्यत एव ।

तस्यैवमकामयमानस्य कर्माभावे गमनकारणाभावात्प्राणा वागादयो नोत्क्रामन्ति नोर्ध्वं क्रामन्ति देहात् । स च विद्वानाप्तकाम आत्मकामतयेहैव ब्रह्मभूतः । सर्वात्मनो हि ब्रह्मणो दृष्टान्तत्वेन प्रदर्शितमेतद्रूपं तद्वा अस्यैतदाप्तकाममात्मकाममकामं रूपमिति । तस्य हि दार्ष्टान्तिकभूतोऽयमर्थं उपसंह्रियतेऽथाकामयमान इत्यादिना । स कथमेवंभूतो मुच्यत इत्युच्यते—यो हि सुषुप्तावस्थमिव निर्विशेषमद्वैतमलुप्तचिद्रूपज्योतिःस्वभावमात्मानं पश्यति १० तस्यैवाकामयमानस्य कर्माभावे गमनकारणाभावात्प्राणा वागादयो नोत्क्रामन्ति । किंतु विद्वान्स इहैव ब्रह्म, यद्यपि देहवानिव लक्ष्यते स ब्रह्मैव सन्ब्रह्माप्येति ।

यस्मान्न हि तस्याब्रह्मत्वपरिच्छेदहेतवः कामाः सन्ति तस्मादिहैव ब्रह्मैव सन्ब्रह्माप्येति न शरीरपातोत्तरकालम् । न हि विदुषो मृतस्य भावान्तरापत्तिर्जीवतोऽन्यभावो देहान्तरप्रतिसंधानाभावमात्रेणैव तु ब्रह्माप्येतीत्युच्यते । भावान्तरापत्तौ हि मोक्षस्य सर्वोपनिषद्विवक्षितोऽयं आत्मैकत्वाख्यः स बाधितो भवेत् । कर्महेतुकश्च १५ मोक्षः प्राप्नोति न ज्ञाननिमित्त इति । स चानिष्टोऽनित्यत्वं च मोक्षस्य प्राप्नोति । न हि क्रियानिर्वृत्तोऽर्थो नित्यो दृष्टः । नित्यश्च मोक्षोऽभ्युपगम्यते । "एष नित्यो महिमा" इति मन्त्रवर्णात् ।

मुक्त्वाऽर्थसिद्धमर्थं कथयति—सर्वात्मदर्शिन इति ।

कर्मजडानां मतमुत्थाप्य श्रुतिविरोधेन प्रत्याचष्टे—ये त्विति । ब्रह्मविदि प्रत्यवायप्राप्तिमङ्गीकृत्योक्तमिदानी तत्प्राप्तिरेव तस्मिन्नास्तीत्याह—येन चेति । यथोक्तस्या । ब्रह्मविदो विहितत्वादेव नित्याद्यनुष्ठानं स्यादिति चेन्नेत्याह— २० नित्यमेवेति । यो हि सदैवासंसारिणमात्मानमनुभवति न च हेयमादेयं वाऽऽत्मनोऽन्यत्पश्यति । यस्मादेवं तस्मात्तस्य कर्म संस्प्रष्टुमयोग्यम् । यथोक्तब्रह्मविद्यया कर्माधिकारहेतूनामुपमृदितत्वादित्यर्थः । कर्मसंबन्धस्तर्हि कस्येत्याशङ्क्याऽऽह—यस्त्विति । न विरोधो विधिकाण्डस्येति शेषः । श्रुत्यर्थाभ्यां सिद्धमर्थमुपसंहरति—अत इति । विद्यावशादित्येतत् । कामाभावात्कर्माभावाच्चेति द्रष्टव्यम् । अकामयमानोऽकुर्वाणश्चेति शेषः ।

देशान्तरप्राप्त्यायत्ता मुक्तिरित्येतन्निराकर्तुं न तस्येत्यादि व्याचष्टे—तस्येत्यादिना । ब्रह्मैव सन्नित्येतदव- २५ तारयति—स चेति । कथं वर्तमाने देहे तिष्ठन्नेव ब्रह्मभूतो भवति तत्राऽऽह—सर्वात्मनो हीति । दृष्टान्तालोचनया दार्ष्टान्तिकेऽपि सदा ब्रह्मत्वं भातीति भावः । सदा ब्रह्मभूतस्य मुक्तिर्नाम नास्तीति शङ्कित्वा परिहरति—स कथमिति । परिहारमेव स्फोरयितुं न तस्येत्यादिवाक्यार्थमनुद्रवति—तस्यैवेति । ब्रह्मैव सन्नित्यस्यार्थमनुवदति—किंत्विति । विद्वानिहैव ब्रह्म चेत्कथं तस्य ब्रह्मप्राप्तिरित्याशङ्क्याऽऽह—ब्रह्मैवेति ।

यदुक्तं ब्रह्मैव सन्नित्यादि तदुपपादयति—यस्मादिति । प्रागपि ब्रह्मभूतस्यैव पुनर्देहपाते ब्रह्मप्राप्तिरित्ययुक्त ३० विदुषो मृतस्य भावान्तरापत्तिस्वीकारादित्याशङ्क्याऽऽह—न हीति । कथं तर्हि ब्रह्माप्येतीत्युच्यते तत्राऽऽह—देहान्तरेति । विदुषो भावान्तरापत्तिर्मुक्तिरिति पक्षेऽपि किं दूषणमिति चेत्तदाह—भावान्तरापत्तौ हीति । तथा चोपनिषदामप्रामाण्यं विना हेतुना स्यादिति भावः । भावान्तरापत्तिर्मुक्तिरित्यत्र दोषान्तरमाह—कर्मेति । इतिपदादुपरिष्टात्क्रियापदस्य संबन्धः । अस्तु कर्मनिमित्तो मोक्षो ज्ञाननिमित्तस्तु मा भूत्तत्राऽऽह—स चेति । प्रसङ्गः सर्वनाम्ना परामृश्यते प्रतिषेधशास्त्रविरोधादिति भावः । मोक्षस्य कर्मसाध्यत्वे दोषान्तरमाह—अनित्यत्वं चेति । तत्रोपयुक्तां ३५ व्याप्तिमाह—न हीति । अस्तु तर्हि प्रासादादिवत्क्रियासाध्यस्य मोक्षस्याप्यनित्यत्वं नेत्याह—नित्यश्चेति ।

---

१. देहान्तरप्रतिसन्धानाभावमात्रेण पूर्वमपि ब्रह्मत्वात् मुक्त्यनन्तरमपि ब्रह्मत्वात् देहान्तरप्रतिसन्धानाभाव-एवावशिष्टः मुक्तौ ।

न च स्वाभाविकात्स्वभावादन्यन्नित्यं कल्पयितुं शक्यम्। स्वाभाविकश्चेदग्न्युष्णवदात्मनः स्वभावः स न
शक्यते पुरुषव्यापारानुभावीति वक्तुम्। न ह्यग्नेरौष्ण्यं प्रकाशो वाऽग्निव्यापारानन्तरानुभावी। अग्निव्यापारानु-
भावी स्वाभाविकश्चेति विप्रतिषिद्धम्। ज्वलनव्यापारानुभावित्वमुष्णप्रकाशयोरिति चेत्। न। अन्योपलब्धिव्यव-
धानापगमाभिव्यक्त्यपेक्षत्वात्। ज्वलनादिपूर्वकमग्निरुष्णप्रकाशगुणाभ्यामभिव्यज्यते तत्रान्यपेक्षया किं तर्ह्यन्य-
५ दृष्टेरग्नेरौष्ण्यप्रकाशौ धर्मौ व्यवहितौ कस्यचिद्दृष्ट्या त्वसंबध्यमानौ ज्वलनापेक्षया व्यवधानापगमे दृष्टेरभिव्यज्येते
तदपेक्षया भ्रान्तिरुपजायते ज्वलनपूर्वकावेतावुष्णप्रकाशौ धर्मौ जाताविति।

यद्युष्णप्रकाशयोरपि स्वाभाविकत्वं न स्यात्। यः स्वाभाविकोऽग्नेर्धर्मस्तमुदाहरिष्यामः। न च स्वा-
भाविको धर्म एव नास्ति पदार्थानामिति शक्यं वक्तुम्। न च निगडभङ्ग इवाभावभूतो मोक्षो बन्धननिवृत्तिरुप-
पद्यते। परमात्मैकत्वाभ्युपगमात् 'एकमेवाद्वितीयम्' इति श्रुतेः। न चान्यो बद्धोऽस्ति यस्य निगडनिवृत्तिवद्बन्धन-
१० निवृत्तिर्मोक्षः स्यात्। परमात्मव्यतिरेकेणान्यस्याभावं विस्तरेणावादिष्म। तस्मादविद्यानिवृत्तिमात्रे मोक्षव्यवहार
इति चावोचाम यथा रज्ज्वादौ सर्पाद्यज्ञाननिवृत्तौ सर्पादिनिवृत्तिः।

येऽप्याचक्षते मोक्षे विज्ञानान्तरमानन्दान्तरं चाभिव्यज्यत इति तैर्वक्तव्योऽभिव्यक्तिशब्दार्थः। यदि
तावल्लौकिक्येवोपलब्धिविषयव्याप्तिरभिव्यक्तिशब्दार्थः। ततो वक्तव्यं किं विद्यमानमभिव्यज्यतेऽविद्यमानमिति
वा। विद्यमानं चेद्यस्य मुक्तस्य तदभिव्यज्यते तस्याऽऽत्मभूतमेव तदित्युपलब्धिव्यवधानानुपपत्तेर्नित्याभिव्यक्तत्वा-

१५ कृतकोऽपि ब्रह्मभावो ध्वंसवन्नित्यः स्यादित्याशङ्क्याऽऽह—न चेति। कृत्रिमस्वभावव्यावृत्त्यर्थं स्वाभाविक-
पदम्। 'अतोऽन्यदार्तम्' इति हि श्रुतिः। ध्वंसस्य तु विकल्पमात्रत्वान्नित्यत्वमसंमतमिति भावः। मोक्षोऽकृत्रिम-
स्वभावोऽपि कर्मोत्थः स्यादित्याशङ्क्याऽऽह—स्वाभाविकश्चेदिति। अग्नेरौष्ण्यवदात्मनो मोक्षश्च स्वाभाविकस्वभावश्चेन्न
स क्रियासाध्यो व्याघातादित्यर्थः। दृष्टान्तं समर्थयते—न हीति। अरणिगतस्याग्नेरौष्ण्यप्रकाशौ नोपलभ्येते सति च
ज्वलने दृश्येते तेन स्वाभाविकावपि तावागन्तुकौ कादाचित्कोपलब्धिमत्त्वादिति शङ्कते—ज्वलनेति। न हि सतोऽग्ने-
२० रौष्ण्यादि कादाचित्कं युक्तं तद्दृष्टेर्व्यवधानस्य दावदिध्वंसे मथनज्वलनादिना वह्न्यभिव्यक्तिमपेक्ष्य तत्स्वभावस्यौष्ण्या-
देर्व्यक्त्यभ्युपगमादिति परिहरति—नान्येति। तदेव प्रपञ्चयति—ज्वलनादीति। मथनादिव्यापारवशात्प्रकाशादिना
व्यज्यतेऽग्निरिति यदुच्यते तदग्नौ सत्येव तद्गतव्यापारापेक्षया तदौष्ण्याद्यभिव्यक्तिवशान्न भवति किन्तु देवदत्त-
दृष्टेरग्निधर्मौ व्यवहितौ न तु तौ कस्यचिद्दृष्ट्या सम्बध्येते ज्वलनादिव्यापारात्तु दृष्टेर्व्यवधानभङ्गे तयोरभिव्यक्ति-
रित्यर्थः। कथं तर्हि ज्वलनादिव्यापारादग्नेरौष्ण्यप्रकाशौ जाताविति बुद्धिस्तत्राऽऽह—तदपेक्षयेति। ज्वलनादि-
२५ व्यापाराद्दृष्टिव्यवधानभङ्गे वह्नेरौष्ण्यप्रकाशाभिव्यक्त्यपेक्षयेति यावत्।

यथा वह्नेरौष्ण्यादि स्वाभाविकं न क्रियासाध्यं तथाऽऽत्मनो मुक्तिः स्वाभाविकी न क्रियासाध्येत्युक्तमिदानी-
मग्नेरौष्ण्यादि न स्वाभाविकमित्याशङ्क्याऽऽह—यदीति। उदाहरिष्यामो मोक्षस्याऽऽत्मस्वभावस्याकर्मसाध्यत्वायेति
शेषः। अथाग्नेः स्वाभाविको न कश्चिद्धर्मोऽस्ति यो मोक्षस्य दृष्टान्तः स्यादत आह—न चेति। लब्धात्मकं हि वस्तु
वस्त्वन्तरेण सम्बध्यते। अस्ति च निम्बादौ तिक्तत्वादिधीरित्यर्थः। भावान्तरापत्तिपक्षं प्रतिक्षिप्य पक्षान्तरं प्रत्याह—
३० न चेति। न हि बन्धस्य तथाभूतस्य निवृत्तिर्विरोधान्नाप्यन्यथाभूतस्यानवस्थानात्। न च प्रसिद्धिविरोधो दुर्निरूप-
ध्वस्तिविषयत्वादिति भावः। किञ्च परस्मादन्यस्य बन्धनिवृत्तिस्तस्यैव वा नाऽऽद्य इत्याह—न चेति। तत्र हेतुत्वेन
परमात्मैकत्वाभ्युपगमादित्यादिभाष्यं व्याख्येयम्। न द्वितीयस्तस्य नित्यमुक्तस्य त्वयाऽपि बद्धत्वानभ्युपगमादिति
द्रष्टव्यम्। कथं परस्मादन्यो बद्धो नास्तीत्याशङ्क्य प्रवेशविचारादावुक्तं स्मारयति—परमात्मेति। न चेदन्यो बद्धोऽस्ति
कथं मोक्षव्यवहारः स्यादित्याशङ्क्याऽऽह—तस्मादिति। अन्यस्य बद्धस्याभावात्परस्य च नित्यमुक्तत्वादिति यावत्।
३५ यथा रज्ज्वादावधिष्ठाने सर्पादिहेतौ रज्ज्वज्ञानस्य निवृत्तौ सत्यां सर्पादेरपि निवृत्तिस्तथाऽविद्याया बन्धहेतोर्निवृत्ति-
मात्रेण तत्कार्यस्य बन्धस्यापि निवृत्तिव्यवहारो भवतीति चावादिष्मेति योजना।

मतान्तरमुद्भावयति—येऽप्याचक्षत इति। वैषयिकज्ञानानन्दापेक्षयाऽन्तरशब्दः। केयमभिव्यक्तिरुत्पत्तिर्वा
प्रकाशो वा। नाऽऽद्यो मोक्षे सुखाद्युत्पत्तौ तदनित्यत्वापत्तेरित्यभिप्रेत्याऽऽह—तैरिति। द्वितीयमालम्बते—यदीति।
तत्र दोषं वक्तुं विकल्पयति—तत इति। द्वितीये खरविषाणवदपरोक्षाभिव्यक्तिर्न स्यादित्यभिप्रेत्याऽऽद्यमनुभाष्य
४० दूषयति—विद्यमानं चेदिति। उपलब्धिस्वभावस्तावदात्मा तस्य विद्यमानं सुखादि व्यज्यते चेज्ज्ञानानन्दयोर्दर्शनादि-

न्मुक्तस्याभिव्यज्यत इति विशेषवचनमनर्थकम् । अथ कदाचिदेवाभिव्यज्यत उपलब्धिव्यवधानादनात्मभूतं तदित्यन्यतोऽभिव्यक्तिप्रसङ्गः । तथा चाभिव्यक्तिसाधनापेक्षता । उपलब्धिसमानाश्रयत्वे तु व्यवधानकल्पनानुपपत्तेः सर्वदाऽभिव्यक्तिरनभिव्यक्तिर्वा । नत्वन्तरालकल्पनायां प्रमाणमस्ति ।

न च समानाश्रयाणामेकस्याऽऽत्मभूतानां धर्माणामितरेतरविषयविषयित्वं संभवति । विज्ञानसुखयोश्च प्रागभिव्यक्तेः संसारित्वमभिव्यक्त्युत्तरकालं च मुक्तत्वं यस्य सोऽन्यः परस्मान्नित्याभिव्यक्तज्ञानस्वरूपादत्यन्त- ५ वैलक्षण्याच्छैत्यमिवौष्ण्यात् । परमात्मभेदकल्पनायां च वैदिकः कृतान्तः परित्यक्तः स्यात् । मोक्षस्येदानीमिव निर्विशेषत्वे तदर्थाविकयत्नानुपपत्तिः शास्त्रवैयर्थ्यं च प्राप्नोतीति चेन्न । न, अविद्याभ्रमापोहार्थत्वात् । न हि वस्तुतो मुक्तामुक्तत्वविशेषोऽस्ति । आत्मनो नित्यैकरूपत्वात् । किंतु तद्विषयाऽविद्याऽपोह्यते शास्त्रोपदेशजनितविज्ञानेन । प्राक्तदुपदेशप्राप्तेस्तदर्थश्च प्रयत्न उपपद्यत एव ।

अविद्यावतोऽविद्यानिवृत्त्यनिवृत्तिकृतो विशेष आत्मनः स्यादिति चेत् । न । अविद्याकल्पनाविषयत्वाभ्यु- १० पगमाद्रज्जूषरशुक्तिकागगनानां सर्पोदकरजतमलिनत्वादिवददोष इत्यवोचाम । तिमिरातिमिरदृष्टिवदविद्याकर्तृत्वा- कर्तृत्वकृत आत्मनो विशेषः स्यादिति चेत् । न । ध्यायतीव लेलायतीवेति स्वतोऽविद्याकर्तृत्वस्य प्रतिषिद्धत्वात् । अनेकव्यापारसन्निपातजनितत्वाच्चाविद्याभ्रमस्य । विषयत्वोपपत्तेश्च ।

यस्य चाविद्याभ्रमो घटादिवद्विविक्तो गृह्यते स नाविद्याभ्रमवान् । अहं न जाने मुग्धोऽस्मीति प्रत्यय- दर्शनादविद्याभ्रमवत्त्वमेवेति चेन्न । तस्यापि विवेकग्रहणात् । न हि यो यस्य विवेकेन ग्रहीता स तस्मिन्भ्रान्त १५

व्यवधानाभावादानन्दः सदैव व्यज्यत इति मुक्तिविशेषणमनर्थकमित्यर्थः । चक्षुर्घटयोर्विषयविषयित्वप्रतिबन्धक- कुड्यादिवदधर्मादिप्रतिबन्धादानन्दो ज्ञानं च संसारदशायां न व्यज्यते मोक्षे तु व्यज्यते तदभावादिति शङ्कते— अथेति । उपलब्धिदेशाद्भिन्नदेशस्यैव घटादेरुपलब्धिप्रतिबन्धदर्शनादनात्मभूतं सुखं न स्वभावभूतयोपलब्ध्या प्रकाश्येत किन्तु विषयेन्द्रियसम्पर्कादित्युत्तरमाह—उपलब्धीति । अन्यतोऽभिव्यक्तौ किं स्यादिति चेत्तदाह—तथा चेति । तत्साधनानि चेन्मुक्तौ स्युः संसारादविशेषः स्यादिति भावः । उपलब्धिव्यवधानमानन्दस्याङ्गीकृत्योक्तमिदानी तदेव २० नास्तीत्याऽऽह—उपलब्धीति । कदाचिदभिव्यक्तिरनभिव्यक्तिश्च कदाचिदित्येवं कालभेदेनोभयं किं न स्यादित्या- शङ्कयाऽऽह—न त्विति ।

आनन्दज्ञानयोर्विषयविषयित्वमभ्युपेत्य कादाचित्की तावदभिव्यक्तिर्निरस्ता, संप्रति तदपि न संभवतीत्याह— न चेति । आत्मभूतत्व स्वाभाविकत्वम् । विमतं न समानाश्रयविषयं धर्मत्वात्प्रदीपप्रकाशवदिति भावः । मुक्तावानन्द- ज्ञानाभिव्यक्तिपक्षे दोषान्तरं वक्तुं भूमिकां करोति—विज्ञानसुखयोश्चेति । तद्भेदापादनमिष्टमेवेत्याशङ्क्य विवक्षितं २५ दोषमाह—परमात्मेति । परमते निराकृते सिद्धान्तेऽपि दोषद्वयमाशङ्कते—मोक्षस्येति । मोक्षार्थोऽधिको यत्नः शम- दमादिः । शास्त्रं मोक्षविषयम् । मोक्षस्य निर्विशेषत्वेऽपि प्रत्यगविद्यातदुत्थानर्थध्वंसित्वेनोभयमर्थवदिति परिहरति— नाविद्येति । तत्र नञर्थं विवृणोति—नहीति । कथं तर्हि शास्त्राद्यर्थवत्त्वमित्याशङ्क्याऽऽह—किंत्विति । तत्र शास्त्र- स्यार्थवत्त्वं समर्थयति—तद्विषयेति । प्रस्तुतात्मविषयस्तच्छब्दः । संप्रति प्रयत्नस्यार्थवत्त्वं प्रकटयति—प्रागिति । प्रथमस्तच्छब्दः शास्त्रविषयः । द्वितीयो मोक्षविषयः । ३०

आत्मनः सदैकरूपत्वं प्रागुक्तमाक्षिपति—अविद्येति । आविद्यः सोऽपीति समाधत्ते—नेति । यथा रज्ज्वाद्य- विद्योत्थसर्पादिस्तद्विषयया ध्वंसाध्वंसयो रज्ज्वादेर्न वास्तवो विशेषस्तथाऽऽत्मनोऽपि स्वाविद्यामात्रोत्थविशेषत्वेऽपि तद्ध्वंसाध्वंसयोर्न वास्तवो विशेषोऽस्तीत्यर्थः । अदोषः सविशेषत्वदोषराहित्यम् । प्रकारान्तरेण सविशेषत्वं शङ्कते— तिमिरेति । किमिदमविद्याकर्तृत्वं किं तज्जनकत्वं किंवा तदाश्रयत्वमिति विकल्प्याऽऽद्यं दूषयति—न । ध्यायतीवेति । आत्मनः स्वतोऽविद्याकर्तृत्वाभावे हेत्वन्तरमाह—अनेकेति । विषयविषय्याकारोऽन्तःकरणस्य तत्र चिदाभासोदयश्चा- ३५ ऽऽत्मनो व्यापारस्तथा चानेकव्यापारसंनिपाते सत्यहं संसारीत्यविद्यात्मको भ्रमो जायते । तस्मान्न तस्याऽऽत्मकार्यते- त्यर्थः । कल्पान्तरं प्रत्याह—विषयत्वेति । अविद्यादेरात्मदृश्यत्वान्न तदाश्रयत्वं न हि तद्गतस्य तद्ग्राह्यत्वमंशतः स्वग्रहापत्तेरित्यर्थः ।

तदेव स्फोरयति—यस्य चेति । अनुभवमनुसृत्य शङ्कते—अहं नेत्यादिना । साक्षिसाक्ष्यभावेन भेदाभ्युप- गमान्नाऽऽत्मनोऽविद्याश्रयत्वमित्युत्तरमाह—न तस्यापीति । तदेव स्पष्टयति—न हीति । अविद्यादेर्विवेकेन ग्रहीतर्यपि ४०

इत्युच्यते । तस्य च विवेकग्रहणं तस्मिन्नेव च भ्रम इति विप्रतिषिद्धम् । न जाने मुग्धोऽस्मीति दृश्यत इति ब्रवीषि तद्दर्शिनश्चाज्ञानं मुग्धरूपता दृश्यत इति च तद्दर्शनस्य विषयो भवति कर्मतामापद्यत इति तत्कथं कर्मभूतं सत्कर्तृस्वरूपदृशिविशेषणज्ञानमुग्धते स्याताम् । अथ दृशिविशेषणत्वं तयोः कथं कर्म स्यातां दृशिना व्याप्येते । कर्मं हि कर्तृक्रियया व्याप्यमानं भवति । अन्यच्च व्याप्यमन्यद्व्यापकं न तेनैव तद्व्याप्यते । वद कथमेवं सत्यज्ञानमुग्धते
५ दृशिविशेषणे स्याताम् । न चाज्ञानविवेकदर्श्यज्ञानमात्मनः कर्मभूतमुपलभमान उपलब्धृधर्मत्वेन गृह्णाति शरीरे कार्श्यरूपादिवत्तथा ।

सुखदुःखेच्छाप्रयत्नादीन्सर्वो लोको गृह्णातीति चेत् । तथाऽपि ग्रहीतुर्लोकस्य विविक्ततैवाभ्युपगता स्यात् । न जानेऽहं त्वदुक्तं मुग्ध एवेति चेत् । भवत्वज्ञो मुग्धो यस्त्वेवंदर्शी तं ज्ञमभुग्धं प्रतिजानीमहे वयम् । तथा व्यासेनोक्तम् । इच्छादि कृत्स्नं क्षेत्रं क्षेत्री प्रकाशयतीति ।

१० "समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् । विनश्यत्स्वविनश्यन्तम्" इत्यादि शतश उक्तम् । तस्मान्नाऽऽत्मनः स्वतो बद्धमुक्तज्ञानाज्ञानकृतो विशेषोऽस्ति । सर्वदा समैकरसस्वाभाव्याभ्युपगमात् ।

ये त्वतोऽन्यथाऽऽत्मवस्तु परिकल्प्य बन्धमोक्षादिशास्त्रं चार्थवादमापादयन्ति त उत्सहन्ते खेऽपि शाकुनं पदं द्रष्टुं खं वा मुष्टिनाऽऽक्रष्टुं चर्मवद्वेष्टितुम् । वयं तु तत्कर्तुमशक्ताः सर्वदा समैकरसमद्वैतमविक्रियमजमजरममरममृतमभयमात्मतत्त्वं ब्रह्मैव स्म इत्येष सर्ववेदान्तनिश्चितोऽर्थ इत्येवं प्रतिपद्यामहे । तस्माद्ब्रह्माप्येतीत्युपचारमात्र-
१५ मेतद्विपरीतग्रहवद्देहसंततेर्विच्छेदमात्रं विज्ञानफलमपेक्ष्य ॥६॥

तद्विषये भ्रान्तत्वे का हानिरित्याशङ्क्याह—तस्य चेति । अज्ञानं मुग्धत्वं चाऽऽत्मनो न विशेषणमिति विधान्तरेण दर्शयितुं चोद्यवाक्यमनुवदति—न जान इति । तद्व्याचष्टे—तद्दर्शिनश्चेति । अज्ञानादिस्तच्छब्दार्थः । दृश्यमानत्वमेव विशदयति—कर्मतामिति । इति ब्रवीषीति संबन्धः । एवं परकीयं वाक्यं व्याख्याय फलितमाह—तत्कथमिति । तत्र चोद्यवाक्यार्थे दर्शितरीत्या स्थिते सति कर्तृविशेषणं नाज्ञानमुग्धते स्याता तयोः प्रत्येकं कर्मभूतत्वादित्यर्थः । विपक्षे
२० दोषमाह—अथेति । कथं कर्म स्यातामित्येतदेव व्याचष्टे—दृशिनेति । तत्रापि कथंशब्दः संबध्यते । एतदेव स्फुटयति—कर्मं हीति । एवं सति व्याप्यव्यापकभावस्य भेदनिष्ठत्वे सतीत्येतत् । किंचाज्ञानमुपलब्धृधर्मो न भवत्युपलभ्यमानत्वाद्देहग कार्श्यादिवदित्याह—न चेति । अज्ञानतत्तत्कार्यमपि नाऽऽत्मधर्मः स्यादित्यतिदिशति—तथेति ।

अज्ञानोत्थस्येच्छादेरात्मध'त्वनिराकरणे प्रतीतिविरोधः स्यादिति शङ्कते—सुखेति । तेषा ग्राह्यत्वमङ्गीकृत्य परिहरति—तथाऽपीति । आत्मनिष्ठत्वे सुखादीना चैतन्यवदात्मग्राह्यत्वायोगात्तद्ग्राह्याणा तेषा न तद्धर्मतेति भाव ।
२५ प्रकारान्तरेण निराकर्तुं निराकृतमेव चोद्यमनुद्रवति—न जान इति । किं प्रमातुरज्ञानाद्याश्रयत्वमनुभवादभिदधासि तत्साक्षिणो वा । तत्राऽऽद्यं प्रत्याह—भवत्विति । कल्पातरं निराकरोति—यस्त्विति । न हि यो यत्र साक्षी स तत्राज्ञो मूढो वेति । तथा च सर्वसाक्षी नाज्ञानादिमान्भवतीत्यर्थः । आत्मनो मोहादिराहित्ये भगवद्वाक्य प्रमाणयति—तथेति । तस्य सर्वविशेषशून्यत्वे वाक्यान्तरमुदाहरति—सममिति । आदिपदेन सम पश्यन्हि सर्वत्र । ज्योतिषामपि तज्ज्योति-रित्यादि गृह्यते । आत्मनो निर्विशेषत्वे प्रामाणिके स्वमतमुपसंहरति—तस्मान्नेति ।

३० पक्षान्तरमनुभाषते—ये त्विति । अतो निर्विशेषस्वाभाव्यादिति यावत् । अज्ञानाद्बन्धो ज्ञानान्मुक्तिरिति शास्त्रमर्थवादः । आदिशब्देन रुद्ररोदनाद्यर्थवादं दृष्टान्त सूचयति । सोपहासं दूषयति—त उत्सहन्त इति । न हि सविशेषत्वं शक्यमात्मनः प्रतिपत्तु निर्विशेषत्वप्रत्यायकागमविरोधादीति भाव. । कथं तर्हि भवद्भिरात्मतत्त्वमभ्युपगम्यते तत्राऽऽह—वयं त्विति । प्रमाणविरुद्धार्थदर्शनं तच्छब्देन परामृश्यते । सत्त्वादीनामिव साम्य दूषयति—सर्वदेति । भेदाभेदमपवदति—एकरसमिति । तत्र हेतुमाह—अद्वैतमिति । द्वैताभावोपलक्षितत्वादित्यर्थः । ऐकरस्ये कौटस्थ्य
३५ हेत्वन्तरमाह—अविक्रियमिति । तदुपपादयति—अजमित्यादिना । अमर मरणायोग्यम् । तत्र सर्वत्राविद्यासंबन्ध-राहित्य हेतुमाह—अभयमिति । ननु ब्रह्मैवंविध न त्वात्मतत्त्वमित्याशङ्क्याऽऽह—ब्रह्मैवेति । यथोक्तं प्रत्यग्भूतं ब्रह्मेत्यत्र प्रमाणमाह—इत्येष इति । तत्रैव विद्वदनुभव प्रमाणयति—इत्येवमिति । परपक्षनिरासेन प्रकृत वाक्यार्थमुपसंहरति—तस्मादिति । उपचारनिमित्तमाह—विपरीतेति । आत्मा तत्त्वत. ससारीति विपरीतग्रहवति या देहसंततिस्तस्या विच्छेदमात्रं ज्ञानफलमपेक्ष्योपचारमात्रमित्यर्थः ॥६॥

**तदेष श्लोको भवति । यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत इति । तद्यथाऽहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदँ शरीरँ शेतेऽथायमशरीरोऽमृतः प्राणो ब्रह्मैव तेज एव सोऽहं भगवते सहस्रं ददामीति होवाच जनको वैदेहः ॥७॥**

स्वप्नबुद्धान्तगमनदृष्टान्तस्य दार्ष्टान्तिकः संसारो वर्णितः। संसारहेतुश्च विद्याकर्मपूर्वप्रज्ञा वर्णिता। ५ यैश्चोपाधिभूतैः कार्यकरणलक्षणभूतैः परिवेष्टितः संसारित्वमनुभवति तानि चोक्तानि। तेषां साक्षात्प्रयोजकौ धर्माधर्माविति पूर्वपक्षं कृत्वा काम एवेत्यवधारितम्। यथा च ब्राह्मणेनायमर्थोऽवधारित एवं मन्त्रेणापीति बन्धं बन्धकारणं चोक्त्वोपसंहृतं प्रकरणं "इति नु कामयमान" इति। अथाकामयमान इत्यारभ्य सुषुप्तदृष्टान्तस्य दार्ष्टान्तिकभूतः सर्वात्मभावो मोक्ष उक्तः। मोक्षकारणं चाऽऽत्मकामतया यदाप्तकामत्वमुक्तं तच्च सामर्थ्याद्-नात्मज्ञानमन्तरेणाऽऽत्मकामतयाऽऽप्तकामत्वमिति सामर्थ्याद्ब्रह्मविद्यैव मोक्षकारणमित्युक्तम्। अतो यद्यपि कामो १० मूलमित्युक्तं तथाऽपि मोक्षकारणविपर्ययेण बन्धकारणमविद्येत्येतदप्युक्तमेव भवति। अत्रापि मोक्षो मोक्षसाधनं च ब्राह्मणेनोक्तम्। तस्यैव दृढीकरणाय मन्त्र उदाह्रियते श्लोकशब्दवाच्यः—

तत्तस्मिन्नेवार्थं एष श्लोको मन्त्रो भवति। यदा यस्मिन्काले सर्वे समस्ताः कामास्तृष्णाप्रभेदाः प्रमुच्यन्ते। आत्मकामस्य ब्रह्मविदः समूलतो विशीर्यन्ते। ये प्रसिद्धा लोक इहामुत्रार्थाः पुत्रवित्तलोकैषणालक्षणा अस्य प्रसिद्धस्य पुरुषस्य हृदि बुद्धौ श्रिता आश्रिताः। अथ तदा मर्त्यो मरणधर्मा सन्कामवियोगात्समूलतोऽमृतो भवति। १५ अर्थादनात्मविषयाः कामा अविद्यालक्षणा मृत्यव इत्येतदुक्तं भवति। अतो मृत्युवियोगे विद्वाञ्जीवन्नेवामृतो भवति। अत्रास्मिन्नेव शरीरे वर्तमानो ब्रह्म समश्नुते ब्रह्मभावं मोक्षं प्रतिपद्यत इत्यर्थः। अतो मोक्षो न देशान्तरगमनाद्य-पेक्षते। तस्माद्विदुषो नोत्क्रामन्ति प्राणा यथावस्थिता एव स्वकारणे पुरुषे समवनीयन्ते। नाममात्रं ह्यवशिष्यत इत्युक्तम्।

कथं पुनः समवनीतेषु प्राणेषु देहे च स्वकारणे प्रलीने विद्वान्मुक्तोऽत्रैव सर्वात्मा सन्वर्तमानः पुनः २० पूर्ववद्देहित्वं संसारित्वलक्षणं न प्रतिपद्यत इति। अत्रोच्यते—तत्तत्रायं दृष्टान्तो यथा लोकेऽहिः सर्पस्तस्य निर्ल्वयनी निर्मोकः साऽहिनिर्ल्वयनी वल्मीके सर्पाश्रये वल्मीकादावित्यर्थः। मृता प्रत्यस्ता प्रक्षिप्ताऽनात्मभावेन सर्पेण परि-त्यक्ता शयीत वर्तेत। एवमेव यथाऽयं दृष्टान्त इदं शरीरं सर्पस्थानीयेन मुक्तेनानात्मभावेन परित्यक्तं मृतमिव शेते।

ब्राह्मणोक्तेऽर्थे मन्त्रमवतारयितुं ब्राह्मणार्थमनुवदति—स्वप्नेत्यादिना। अयमर्थः संसारस्तद्धेतुश्च। मन्त्रस्तदेव सक्तः सह कर्मणेत्यादिः। आत्मज्ञानस्य तर्हि मोक्षकारणत्वमुपेक्षितमित्याशङ्क्याऽऽह—तच्चेति। अतो ब्रह्मज्ञानं २५ मोक्षकारणमित्युक्तत्वादिति यावत्। मूलं बन्धस्येति शेषः। अत्रेति मोक्षप्रकरणोक्तिः। बन्धप्रकरणं दृष्टान्तयितुमपि-शब्दः। उक्तेऽर्थे तदेष इत्याद्यक्षराणि व्याचष्टे—तत्तस्मिन्नेवेति। यस्मिन्काले विद्यापरिपाकावस्थायामित्यर्थः। सुषुप्ति-व्यावृत्त्यर्थं सर्वविशेषणमिति मत्वाऽऽह—समस्ता इति। कामशब्दस्यार्थान्तरविषयत्वं व्यावर्तयति—तृष्णेति। क्रिया-पदं सोपसर्गं व्याकरोति—आत्मकामस्येति। तानेव विशिनष्टि—ये प्रसिद्धा इति। कामानामात्माश्रयत्वं निराकरोति—हृदीति। समूलतः कामवियोगादिति सबन्धः। कामवियोगादमृतो भवतीति निर्देशसामर्थ्यसिद्धमर्थमाह—अर्थादिति। ३० तेषां मृत्युत्वे किं स्यात्तदाह—अत इति। अत्रेत्यादिना विवक्षितमर्थमाह—अतो मोक्ष इति। आदिपदमुत्क्रान्त्यादि-संग्रहार्थम्। मुक्तेस्तदपेक्षाभावे फलितमाह—तस्मादिति। तर्हि मरणासिद्धिरित्याशङ्क्याऽऽह—यथेति। उत्क्रान्ति-गत्यागतिराहित्यं यथावस्थितम्। एतच्च पञ्चमे प्रतिपादितमित्याह—नाममात्रमिति।

तद्यथेत्यादिवाक्यनिरस्यां शङ्कामाह—कथं पुनरिति। विदुषो विद्ययाऽऽत्ममात्रत्वेन प्राणादिषु बाधितेष्वपि देहे चेदसौ वर्तते ततोऽस्य पूर्ववद्देहित्वाद्विद्यावैयर्थ्यमित्यर्थः। दृष्टान्तेन परिहरति—अत्रेत्यादिना। देहे वर्तमानस्यापि ३५ विदुषस्तत्राभिमानराहित्यं तत्रेत्युच्यते। यस्यां त्वचि सर्पो नितरां लीयते सा निर्ल्वयनी सर्पत्वगुच्यते। सर्पनिर्मोक-दृष्टान्तस्य दार्ष्टान्तिकमाह—एवमेवेति।

अथेतरः सर्पस्थानीयो मुक्तः सर्वात्मभूतः सर्पवत्तत्रैव वर्तमानोऽप्यशरीर एव न पूर्ववत्पुनः सशरीरो भवति। कामकर्मप्रयुक्तशरीरात्मभावेन हि पूर्वं शरीरो मर्त्यश्च। तद्वियोगादथेदानीमशरीरोऽत एव चामृतः। प्राणः प्राणितीति प्राणः। प्राणस्य प्राणमिति हि वक्ष्यमाणे श्लोके। "प्राणबन्धनं हि सोम्य मनः" इति च श्रुत्यन्तरे। प्रकरणवाक्यसामर्थ्याच्च पर एवाऽऽत्माऽत्र प्राणशब्दवाच्यः। ब्रह्मैव परमात्मैव। किं पुनस्तत्तेज एव विज्ञानं
५ ज्योतिर्येनाऽऽत्मज्योतिषा जगदवभास्यमानं प्रज्ञानेत्रं विज्ञानज्योतिष्मत्सदविभ्रंशद्वर्तते।

यः कामप्रश्नो विमोक्षार्थो याज्ञवल्क्येन वरो दत्तो जनकाय सहेतुको बन्धमोक्षार्थलक्षणो दृष्टान्तदार्ष्टान्तिकभूतः स एष निर्णीतः सविस्तरो जनकयाज्ञवल्क्याख्यायिकारूपधारिण्या श्रुत्या। संसारविमोक्षोपाय उक्तः प्राणिभ्यः। इदानीं श्रुतिः स्वयमेवाऽऽह विद्यानिष्क्रयार्थं जनकेनैवमुक्तमिति। कथं? सोऽहमेवं विमोक्षितस्त्वया भगवते तुभ्यं विद्यानिष्क्रयार्थं सहस्रं ददामीति हैवं किलोवाचोक्तवाञ्जनको वैदेहः। अत्र कस्माद्विमोक्षपदार्थे
१० निर्णीते विदेहराज्यमात्मानमेव च न निवेदयत्येकदेशोक्ताविव सहस्रमेव ददाति तत्र कोऽभिप्राय इति।

अत्र केचिद्वर्णयन्ति—अध्यात्मविद्यारसिको जनकः श्रुतमप्यर्थं पुनर्मन्त्रैः शुश्रूषति। अतो न सर्वमेव निवेदयति। श्रुत्वाऽभिप्रेतं याज्ञवल्क्यात्पुनरन्ते निवेदयिष्यामीति हि मन्यते। यदि चात्रैव सर्वं निवेदयामि निवृत्ताभिलाषोऽयं श्रवणादिति मत्वा श्लोकान्न वक्ष्यतीति च भयात्सहस्रदानं शुश्रूषालिङ्गज्ञापनायेति। सर्वमप्येतदसत्। पुरुषस्येव प्रमाणभूतायाः श्रुतेर्व्याजानुपपत्तेः। अर्थशेषोपपत्तेश्च। विमोक्षपदार्थे उक्तेऽप्यात्मज्ञानसाधन आत्म-
१५ ज्ञानशेषभूतः सर्वैषणापरित्यागः संन्यासाख्यो वक्तव्योऽर्थशेषो विद्यते। तस्माच्छ्लोकमात्रशुश्रूषाकल्पनाऽनृजवी। अगतिका हि गतिः पुनरुक्तार्थकल्पना। सा चायुक्ता सत्यां गतौ।

न च तत्स्तुतिमात्रमित्यवोचाम। नन्वेवं सत्यत ऊर्ध्वं विमोक्षायैवेति वक्तव्यम्। नैष दोषः। आत्म-

सर्पदृष्टान्तस्य दार्ष्टान्तिकं दर्शयति—अथेति। अज्ञानेन सह देहस्य नष्टत्वमशरीरत्वादौ हेतुरथशब्दार्थः। अथशब्दावद्योतितहेत्ववष्टम्भेनाशरीरत्वं विशदयति—कामेति। पूर्वमित्यविद्यावस्थोक्तिः। इदानीमिति विद्यावस्थोच्यते
२० व्युत्पत्त्यनुसारिणं रूढं च मुख्यं प्राणं व्यावर्तयति—प्राणस्येति। श्लोके पर एवाऽऽत्मा यथा प्राणशब्दस्तथाऽत्रापीत्यर्थः। यथा च श्रुत्यन्तरे प्राणशब्दः पर एवाऽऽत्मा तथाऽत्रापीत्याह—प्राणेति। किंच परविषयमिदं प्रकरणमथाकामयमान इति प्राज्ञस्य प्रकान्तत्वादथायमित्यादि वाक्यं च तद्विषयमन्यथा ब्रह्मादिशब्दानुपपत्तेः। तस्मादुभयसामर्थ्यादत्र पर एवाऽऽत्मा प्राणशब्दित इत्याह—प्रकरणेति। विशेष्यं दर्शयित्वा विशेषणं दर्शयति—ब्रह्मैवेति। ब्रह्मशब्दस्य कमलासनादिविषयत्वं वारयति—किं पुनरिति। तेजःशब्दस्य कार्यज्योतिर्विषयत्वमाशङ्क्याऽऽह—विज्ञानेति। तत्र प्रमाण-
२५ माह—येनेति। प्रज्ञा प्रकृष्टा ज्ञप्तिः स्वरूपचैतन्यं नेत्रमिव नेत्रं प्रकाशकमस्येति तथोक्तम्।

सोऽहमित्यादेस्तात्पर्यं वक्तुं वृत्तं कीर्तयति—यः कामप्रश्न इति। निर्णयप्रकारं संक्षिपति—संसारेति। सोऽहमित्यादिवाक्यान्तरमुत्थापयति—इदानीमिति। आकाङ्क्षापूर्वकं वाक्यमादाय विभजते—कथमिति। सहस्रदानमाक्षिपति—अत्रेति।

सर्वस्वदानप्राप्तावपि सहस्रदाने हेतुमेकदेशीयं दर्शयति—अत्रेत्यादिना। कदा तर्हि गुरवे सर्वस्वं राजा
३० निवेदयिष्यति तत्राऽऽह—श्रुत्वेति। ननु पुनः शुश्रूषुरपि राजा किमिति संप्रत्येव गुरवे न प्रयच्छति प्रभूता हि दक्षिणा गुरुं प्रीणयन्ती स्वीयां शुश्रूषां फलयति तत्राऽऽह—यदि चेति। अनाप्तोक्तौ हृदयेऽन्यन्निधाय वाचाऽन्यनिष्पादनात्मकं व्याजोत्तरं युक्तं श्रुतौ त्वपौरुषेय्यामपास्ताशेषदोषशङ्कायां न व्याजोक्तिर्युक्ता तदीयस्वारसिकप्रामाण्यभङ्गप्रसङ्गादिति दूषयति—सर्वमपीति। एकदेशीयपरिहारासंभवे हेत्वन्तरमाह—अर्थेति। तदुपपत्तिमेवोपपादयति—विमोक्षेति। तस्यापि पूर्वमसकृदुक्तेस्तदीयशुश्रूषाधीनं सहस्रदानमनुचितमित्याशङ्क्य शमादेर्ज्ञानसाधनत्वेन प्रागनुक्तेस्तेन सह भूयोऽपि
३५ संन्यासस्य वक्तव्यत्वयोगात्तदपेक्षया युक्तं सहस्रदानमित्याह—अगतिका हीति।

ननु संन्यासादि विद्यास्तुत्यर्थमुच्यते महाभागा हीयं यत्तदर्थी दुष्करमपि करोत्यतो नार्थशेषसिद्धिस्तत्राऽऽह—न चेति। न तावत्संन्यासो विद्यास्तुतिर्विदित्वा व्युत्थायेति समानकर्तृत्वनिर्देशादिति पञ्चमे स्थितं नापि शमादिर्विद्यास्तुतिस्तत्रापि विधेर्वक्ष्यमाणत्वादित्यर्थः। अर्थशेषशुश्रूषया सहस्रदानमित्यत्र जनकस्याकौशलं चोदयति—नन्विति। राज्ञः शङ्कितमकौशलं दूषयति—नैष इति। तत्र हेतुमाह—आत्मज्ञानवदिति। यथाऽऽत्मज्ञानं मोक्षे प्रयोजकं न तथा संन्यासो न चास्मिन्पक्षे तस्याकर्तव्यत्वं प्रतिपत्तिकर्मवदनुष्ठानसंभवादिति राजा यतो मन्यते ततः संन्यासस्य न ज्ञान-
४०

**तदेते श्लोका भवन्ति ।**

**अणुः पन्था विततः पुराणो माँ स्पृष्टोऽनुवित्तो मयैव ।**

**तेन धीरा अपियन्ति ब्रह्मविदः स्वर्गं लोकमित ऊर्ध्वं विमुक्ताः ॥८॥**

ज्ञानवदप्रयोजकः संन्यासः पक्षे प्रतिपत्तिकर्मवदिति हि मन्यते । "संन्यासेन तनुं त्यजेत्" इति स्मृतेः । साध-त्व-पक्षेऽपि नात ऊर्ध्वं विमोक्षायैवेति प्रश्नमर्हति मोक्षसाधनभूतात्मज्ञानपरिपाकार्थत्वात् ॥७॥ ५

आत्मकामस्य ब्रह्मविदो मोक्ष इत्येतस्मिन्नर्थे मन्त्रब्राह्मणोक्ते विस्तरप्रतिपादका एते श्लोका भवन्ति । अणुः सूक्ष्मः पन्था दुर्विज्ञेयत्वाद्विततो विस्तीर्णो विस्पष्टतरणहेतुत्वाद्वा वितर इति पाठान्तरान्मोक्षसाधनो ज्ञानमार्गः पुराणश्चिरंतनो नित्यश्रुतिप्रकाशितत्वान्न तार्किकबुद्धिप्रभवकुदृष्टिमार्गवदर्वाक्कालिको मां स्पृष्टो मया लब्ध इत्यर्थः । यो हि येन लभ्यते स तं स्पृशतीव संबध्यते तेनायं ब्रह्मविद्यालक्षणो मोक्षमार्गो मया लब्धत्वान्मां स्पृष्ट इत्युच्यते । न केवलं मया लब्धः किंत्वनुवित्तो मयैव । अनुवेदनं नाम विद्यायाः परिपाकापेक्षया फलावसानतानिष्ठा १० प्राप्तिः । भुजेरिव तृप्त्यवसानता । पूर्वं तु ज्ञानप्राप्तिसंबन्धमात्रमेवेति विशेषः ।

किमसावेव मन्त्रदृगेको ब्रह्मविद्याफलं प्राप्तो नान्यः प्राप्तवान्येनानुवित्तो मयैवेत्यवधारयति । नैष दोषः । अस्याः फलमात्मसाक्षिकमनुत्तममिति ब्रह्मविद्यायाः स्तुतिपरत्वात् । एवं हि कृतार्थात्माभिमानकरमात्मप्रत्यय-साक्षिकमात्मज्ञानं किमतः परमन्यत्स्यादिति ब्रह्मविद्यां स्तौति । न तु पुनरन्यो ब्रह्मवित्तत्फलं न प्राप्नोतीति । "तद्यो यो देवानाम्" इति सर्वार्थश्रुतेः । तदेवाऽऽह—तेन ब्रह्मविद्यामार्गेण धीराः प्रज्ञावन्तोऽन्येऽपि ब्रह्मविद १५ इत्यर्थः । अपियन्त्यपिगच्छन्ति ब्रह्मविद्याफलं मोक्षं स्वर्गं लोकम् स्वर्गलोकशब्दस्त्रिविष्टपवाच्यमपि सन्निह प्रकरणान्मोक्षाभिधायकः । इतोऽस्माच्छरीरपातादूर्ध्वं जीवन्त एव विमुक्ताः सन्तः ॥८॥

तुल्यत्वमतो नात ऊर्ध्वं विमोक्षायैव ब्रूहीति पृच्छतीत्यर्थः । संन्यासस्य प्रतिपत्तिकर्मवत्कर्तव्यत्वे प्रमाणमाह—संन्यासेनेति । ननु विविदिषासंन्यासमङ्गीकुर्वता न तस्य प्रतिपत्तिकर्मवदनुष्ठेयत्वमिष्यते तत्राऽऽह—साधनत्वेति । 'त्यजतैव हि तज्ज्ञेयं त्युक्तुः प्रत्यक्परं पदम्' इत्युक्तत्वादित्यर्थः ॥७॥ २०

राज्ञोऽकौशल परिहृत्य मन्त्रानवतारयति—आत्मकामस्येति । यदेत्याद्यतीतश्लोकेनाऽऽगामिश्लोकानामर्थ-पौनरुक्त्यं सूचयति—विस्तरेति । ज्ञानमार्गस्य सूक्ष्मत्वे हेतुमाह—दुर्विज्ञेयत्वादिति । विस्तीर्णत्वं पूर्णवस्तुविषयत्वादवधेयम् । माध्यंदिनश्रुतिमाश्रित्याऽऽह—विस्पष्टेति । प्रयत्नसाध्यत्व तस्य पञ्चम्या विवक्ष्यते । कथं पुनरधुनातनो वैदिको ज्ञानमार्गश्चिरंतनो निरुच्यते तत्राऽऽह—नित्येति । विशेषणप्रकाशितमर्थमुक्त्वा तस्य व्यवच्छेदमाह—न तार्किकेति । मन्त्रदृशा लब्धत्वेऽपि कुतो ज्ञानमार्गस्य तत्संस्पर्शित्वमित्याशङ्क्याऽऽह—यो हीति । अनुवेदनलाभयोर्विशेषाभावात्पौन- २५ रुक्त्यमाशङ्क्याऽऽह—अनुवेदनमिति । पूर्वशब्देन पाठक्रमानुसारेण लाभो गृह्यते ।

एवकारमाश्रित्य शङ्कते—किमसाविति । तथा च तद्यो यो देवानामित्याद्यविशेषश्रुतिर्विरुध्येतेति शेषः । अवधारणश्रुतेरन्यपरत्वेनान्ययोगव्यवच्छेदकाभावमभिप्रेत्य परिहरति—नैष दोष इति । स्तुतिपरत्वमेव प्रकटयति—एवं हीति । कृतार्थोऽस्मीत्यात्मन्यभिमानकरं स्वानुभवसिद्धमात्मज्ञानं नास्मादन्यदुत्कृष्टं किंचिदित्येवं विद्यामवधारण-श्रुतिः स्तौतीत्यर्थः । यथाश्रुतार्थत्वे को दोषः स्यादिति चेत्तत्राऽऽह—नन्विति । इत्यवधारणश्रुत्या विवक्षितमिति शेषः । ३० तत्र हेतुः—तद्यो य इति । सर्वार्थश्रुतेर्ब्रह्मविद्या सर्वार्था सर्वसाधारणीति श्रवणादिति यावत् । ब्रह्मविद्यायाः सर्वार्थत्वे वाक्यशेषं प्रमाणत्वेनावतार्य व्याचष्टे—तदेवेति । ननु मोक्षे स्वर्गशब्दो न युज्यते तस्यार्थान्तरे रूढत्वादत आह—स्वर्गेति । यथा ज्योतिष्टोमप्रकरणे श्रुतो ज्योतिःशब्दो ज्योतिष्टोमविषयस्तथा मोक्षप्रकरणे श्रुतः स्वर्गशब्दो मोक्षमधिकरोति । रूढ्यङ्गीकारे ब्रह्मविद्याया निकर्षप्रसङ्गादिति भावः । जीवन्त एव मुक्ताः सन्तः शरीरपातादूर्ध्वं मोक्षमपि-यन्तीति सबन्धः ॥८॥

३५

तस्मिञ्छुक्लमुत नीलमाहुः पिङ्गलं हरितं लोहितं च ।
एष पन्था ब्रह्मणा हानुवित्तस्तेनैति ब्रह्मवित्पुण्यकृत्तैजसश्च ॥९॥

तस्मिन्मोक्षसाधनमार्गे विप्रतिपत्तिर्मुमुक्षूणाम् । कथम् । तस्मिञ्शुक्लं शुद्धं विमलमाहुः केचिन्मुमुक्षवो नीलमन्ये पिङ्गलमन्ये हरितं लोहितं च यथादर्शनम् । नाड्यस्त्वेताः सुषुम्नाद्याः श्लेष्मादिरससंपूर्णाः शुक्लस्य
५ नीलस्य पिङ्गलस्येत्याद्युक्तत्वात् । आदित्यं वा मोक्षमार्गमेवंविधं मन्यन्ते । "एष शुक्ल एष नीलः" इत्यादिश्रुत्यन्तरात् । दर्शनमार्गस्य शुक्लादिवर्णासंभवात् । सर्वथाऽपि तु प्रकृताद्ब्रह्मविद्यामार्गादन्य एते शुक्लादयः ।

ननु शुक्लः शुद्धोऽद्वैतमार्गः । न । नीलपीतादिशब्दैर्वर्णवाचकैः सहानुद्रवणात् । याञ्शुक्लादीन्योगिनो मोक्षपथानाहुर्न ते मोक्षमार्गाः संसारविषया एव हि ते । चक्षुष्टो वा मूर्ध्नो वाऽन्येभ्यो वा शरीरदेशेभ्य इति शरीरदेशान्निःसरणसंबन्धात् । ब्रह्मादिलोकप्रापका हि ते । तस्मादयमेव मोक्षमार्गो य आत्मकामत्वेनाऽऽप्तकामतया
१० सर्वकामक्षये गमनानुपपत्तौ प्रदीपनिर्वाणवच्चक्षुरादीनां कार्यकरणानामत्रैव समवनय इत्येष ज्ञानमार्गः पन्था ब्रह्मणा परमात्मस्वरूपेणैव ब्राह्मणेन त्यक्तसर्वैषणेनानुवित्तः । तेन ब्रह्मविद्यामार्गेण ब्रह्मविदन्योऽप्येति । कीदृशो ब्रह्मवित्तेनैतीत्युच्यते—पूर्वं पुण्यकृद्भूत्वा पुनस्त्यक्तपुत्राद्येषणः परमात्मतेजस्यात्मानं संयोज्य तस्मिन्नभिनिर्वृत्तस्तैजसश्चाऽऽत्मभूत इहैवेत्यर्थः । ईदृशो ब्रह्मवित्तेन मार्गेणेति । न पुनः पुण्यादिसमुच्चयकारिणो ग्रहणं विरोधादित्यवोचाम ।

१५ "अपुण्यपुण्योपरमे यं पुनर्भवनिर्भयाः । शान्ताः संन्यासिनो यान्ति तस्मै मोक्षात्मने नमः ॥

इति च स्मृतेः । त्यज धर्ममधर्मं च" इत्यादिपुण्यापुण्यत्यागोपदेशात् ।

"निराशिषमनारम्भं निर्नमस्कारमस्तुतिम् । अक्षीणं क्षीणकर्माणं तं देवा ब्राह्मणं विदुः ॥"

तस्मिन्नित्यादिपूर्वपक्षमुत्थापयति—तस्मिन्निति । विप्रतिपत्तिमेव प्रश्नपूर्वकं विशदयति—कथमित्यादिना । पिंगलं वह्निज्वालातुल्यम् । लोहितं जपाकुसुमसन्निभम् । सप्रपञ्चं शब्दस्पर्शरूपरसादिमद्ब्रह्म तदुपासनमनुसृत्य
२० तत्प्राप्तिमार्गे विवादो मुमुक्षूणामित्याह—यथादर्शनमिति । तथाऽपि कथं ब्रह्मप्राप्तिमार्गे शुक्लादिरूपसिद्धिः । नहि ज्ञानस्य रूपादिमत्त्वमित्याशङ्क्याऽऽह—नाड्यस्त्विति । तासामपि कथं यथोक्तरूपवत्त्वमित्याशङ्क्याऽऽह—श्लेष्मादीति । तथाऽपि कथं शुक्लादिरूपवत्त्वमित्याशङ्क्य नाडीखण्डोक्तं स्मारयति—शुक्लस्येति । नाडीपरिग्रहे नियामकाभावमाशङ्क्य पक्षान्तरमाह—आदित्यं वेति । एवंविधं शुक्लादिनानावर्णमित्यर्थः । तस्य तथात्वे प्रमाणमाह—एष इति । प्रकृते ज्ञानमार्गे किमिति मार्गान्तरं कल्प्यते तत्राऽऽह—दर्शनेति । तर्हि नाडीपक्षो वाऽऽदित्यपक्षो वा कतरो
२५ विवक्षितस्तत्राऽऽह—सर्वथाऽपीति ।

शुक्लमार्गस्य ज्ञानमार्गादन्यत्वमाक्षिपति—नन्विति । शुक्लशब्दस्य नाद्वैतमार्गविषयत्वं नीलादिशब्दसमभिव्याहारविरोधादिति परिहरति—न नीलेति । सैद्धान्तिकमन्त्रभागं व्याख्यातु पूर्वपक्षं दूषयति—याञ्शुक्लादीनिति । न केवलं देहदेशनिःसरणसंबन्धादेव नाडीभेदाना संसारविषयत्वं किंतु ब्रह्मलोकादिसबन्धादपीत्याह—ब्रह्मादीति । आदित्योऽपि देवयानमध्यपाती ब्रह्मलोकप्रापकः ससारहेतुरेवेति मन्वानो मोक्षमार्गमुपसंहरति—तस्मादिति । आप्त-
३० कामतया ज्ञानमार्ग इति सबन्धः । एवं भूमिका कृत्वैष इत्यस्यार्थमाह—सर्वकामेति । तथा तैलादिविलये प्रदीपस्य ज्वलनानुपपत्तौ तेजोमात्रे निर्वाणमिष्यते तथा स्थूलस्य सूक्ष्मस्य च सर्वस्यैव कामस्य ज्ञानात्क्षये सति गत्यनुपपत्तावत्रैव प्रत्यगात्मनि कार्यकरणानामेकीभावेनावसानमित्ययमेषशब्दार्थ इत्यर्थः । पन्था इत्येतद्व्याचष्टे—ज्ञानमार्ग इति । इत्थंभावे तृतीयामाश्रित्याऽऽह—परमात्मेति । अनुवेदनकर्तुर्ब्राह्मणस्य संन्यासित्वं दर्शयति—त्यक्तेति । विप्रतिपत्तिं निराकृत्य मोक्षमार्गं निर्धार्य तेन धीरा अपियन्तीत्यत्रोक्तं निगमयति—तेनेति । अन्योऽपि मन्त्रदृशः सकाशादिति
३५ शेषः । इहेति जीवदवस्थोक्तिः ।

समुच्चयकारिणोऽत्र ब्रह्मप्राप्तिर्विवक्षितेति केचित्तान्प्रत्याह—न पुनरिति । विरोधाज्ज्ञानकर्मणोरिति शेषः । किंच क्रमसमुच्चयः समसमुच्चयो वेति विकल्प्याऽऽद्यमङ्गीकृत्य द्वितीयं दूषयति—अपुण्येति । ज्ञानस्य कर्मासमुच्चयेऽपि विवेकज्ञानेन समुच्चयोऽस्तीत्याशङ्क्याऽऽह—त्यजेति । ब्रह्मविदोऽपि स्तुत्यादिदृष्टेस्तेन समुच्चयो ज्ञानस्येत्याशङ्क्याऽऽह—निराशिषमिति । काम्याननुष्ठानमनारम्भः । अक्षीणत्वं निषिद्धानाचरणम् । क्षीणकर्मत्वं नित्यादिकर्मराहित्यम् ।

**अन्धं तमः प्रविशन्ति येऽविद्यामुपासते । ततो भूय इव ते तमो य उ विद्यायाँ रताः ॥१०॥**
**अनन्दा नाम ते लोका अन्धेन तमसाऽऽवृताः । ताँस्ते प्रेत्याभिगच्छन्त्यविद्वाँसोऽबुधो जनाः ॥११॥**
**आत्मानं चेद्विजानीयादयमस्मीति पूरुषः । किमिच्छन्कस्य कामाय शरीरमनुसंज्वरेत् ॥१२॥**

"नैतादृशं ब्राह्मणस्यास्ति वित्तं यथैकता समता सत्यता च ।
शीलं स्थितिर्दण्डनिधानमार्जवं ततस्ततश्चोपरमः क्रियाभ्यः ॥" इत्यादिस्मृतिभ्यश्च । ५

उपदेक्ष्यति चेहापि तु "एष नित्यो महिमा ब्राह्मणस्य न वर्धते कर्मणा नो कनीयान्" इति कर्मप्रयोजनाभावे हेतुमुक्त्वा "तस्मादेवंविच्छान्तो दान्त" इत्यादिना सर्वक्रियोपरमम् । तस्माद्यथाव्याख्यातमेव पुण्यकृत्त्वम् । अथवा यो ब्रह्मवित्तेनैति स पुण्यकृत्तैजसश्चेति ब्रह्मवित्स्तुतिरेषा । पुण्यकृति तैजसे च योगिनि महाभाग्यं प्रसिद्ध लोके ताभ्यामतो ब्रह्मवित्स्तूयते प्रख्यातमहाभाग्यत्वाल्लोके ॥९॥

अन्धमदर्शनात्मकं तमः संसारनियामकं प्रविशन्ति प्रतिपद्यन्ते । के । येऽविद्यां विद्यातोऽन्यां साध्यसाधन- १० लक्षणामुपासते कर्मानुवर्तन्त इत्यर्थः । ततस्तस्मादपि भूय इव बहुतरमिव तमः प्रविशन्ति । के । य उ विद्यायाम-विद्यावस्तुप्रतिपादिकायां कर्मार्थायां त्रय्यामेव विद्यायां रता अभिरताः विधिप्रतिषेधपर एव वेदो नान्योऽस्तीत्युप-निषदर्थानपेक्षिण इत्यर्थः ॥१०॥

यदि तेऽदर्शनलक्षणं तमः प्रविशन्ति को दोष इत्युच्यते—अनन्दा अनानन्दा असुखा नाम ते लोकास्तेनान्धे-नादर्शनलक्षणेन तमसाऽऽवृता व्याप्तास्ते तस्याज्ञानतमसो गोचरास्तांस्ते प्रेत्य मृत्वाऽभिगच्छन्त्यभियान्ति । के । १५ येऽविद्वांसः । किं सामान्येनाविद्वत्तामात्रेण नेत्युच्यते—अबुधः । बुधेरवगमनार्थस्य धातोः क्विप्प्रत्ययान्तस्य रूपम् । आत्मावगमवर्जिता इत्यर्थः । जनाः प्रकृता एव । जननधर्मिणो वेत्येतत् ॥११॥

आत्मानं स्वं परं रूपं सर्वप्राणिमनीषितज्ञं हृत्स्थमशनायादिधर्मातीतं चेद्यदि विजानीयात्सहस्रेषु कश्चित् । चेदित्यात्मविद्याया दुर्लभत्वं दर्शयति । कथमयं पर आत्मा सर्वप्राणिप्रत्ययसाक्षी यो नेति नेतीत्याद्युक्तो यस्मान्ना-न्योऽस्ति द्रष्टा श्रोता मन्ता विज्ञाता समः सर्वभूतस्थो नित्यशुद्धबुद्धमुक्तस्वभावोऽस्मि भवामीति पूरुषः पुरुषः । स २० किमिच्छंस्तत्स्वरूपव्यतिरिक्तमन्यद्वस्तु फलभूतं किमिच्छन्कस्य वाऽन्यस्याऽऽत्मनो व्यतिरिक्तस्य कामाय

असमुच्चये वाक्यान्तरमाह—नेत्यादिना । एकता निरपेक्षता सर्वोदासीनतेति यावत् । समता मित्रोदासीनशत्रुबुद्धि-व्यतिरेकेण सर्वत्र स्वस्मिन्निव दृष्टिः । दण्डनिधानमहिंसापरत्वम् ।

"अर्थस्य मूलं निकृतिः क्षमा च कामस्य चित्त च वपुर्वयश्च ।
धर्मस्य यागादि दया दमश्च मोक्षस्य सर्वोपरमः क्रियाभ्यः ॥" २५

इत्यादि चतुर्विधे पुरुषार्थे साधनभेदोपदेशि वाक्यमादिशब्दार्थः । इत्यादिस्मृतिभ्यश्च न पुण्यादिसमुच्चयकारिणो ग्रहण-मिति संबन्धः ।

तथाऽपि प्रकृते मन्त्रे समुच्चयो भातीत्याशङ्क्याह—उपदेक्ष्यतीति । वाक्यशेषादिपर्यालोचनासिद्धमर्थमुप-संहरति—तस्मादिति । पूर्वं पुण्यकृद्भूत्वा पुनस्त्यक्तपुत्राद्येषणो ब्रह्मवित्तेनैतीति क्रमो न युज्यतेऽश्रुतत्वादित्या-शङ्क्याऽऽह—अथवेति । स्तुतिमेवोपपादयति—पुण्यकृतीति । तेजांसि करणान्युपसंहृत्य स्थितस्तैजसो दहराद्युपासीनो ३० योगी तस्मिन्नणिमाद्यैश्वर्यान्महानुभावत्वप्रसिद्धिः । ताभ्या पुण्यकृत्तैजसाभ्यामित्यर्थः । अतः शब्दपरामृष्टं स्पष्टयति—प्रख्यातेति । पुण्यकृत्तैजसयोरिति शेषः ॥९॥

प्रस्तुतज्ञानमार्गस्तुत्यर्थं मार्गान्तरं निन्दति—अन्धमित्यादिना । विद्यायामिति प्रतीकमादाय व्याकरोति—अविद्येति । कथं पुनस्त्रय्यामभिरतानामधःपतनमित्याशङ्क्याऽऽह—विधीति ॥१०॥

मन्त्रान्तरमाकाङ्क्षाद्वारोत्थाप्य व्याचष्टे—यदीत्यादिना । अबुध इत्यस्य निष्पत्तिं सूचयन्विवक्षितमर्थमाह— ३५ बुधेरिति ॥११॥

उक्तात्मज्ञानस्तुत्यर्थमेव तन्निष्ठस्य कायक्लेशराहित्यं दर्शयति—आत्मानमित्यादिना । विज्ञानात्मनो वैलक्षण्यार्थं विशिनष्टि—सर्वेति । तादर्थ्यं व्यावर्तयति—हृत्स्थमिति । बुद्धिसंबन्धप्राप्तं संसारित्वं वारयति—अशनायादीति । प्रश्नपूर्वकं ज्ञानप्रकारं प्रकटयति—कथमित्यादिना । सर्वभूतसंबन्धप्रयुक्तं दोषं वारयितुं विशिनष्टि—नित्येति । इति

यस्यानुवित्तः प्रतिबुद्ध आत्माऽस्मिन्संदेह्ये गहने प्रविष्टः ।
स विश्वकृत्स हि सर्वस्य कर्ता तस्य लोकः स उ लोक एव ॥१३॥
इहैव सन्तोऽथ विद्मस्तद्वयं न चेदवेदिर्महती विनष्टिः ।
ये तद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापियन्ति ॥१४॥

५ प्रयोजनाय । न हि तस्याऽऽत्मन एष्टव्यं फलम् । न चाप्यात्मनोऽन्योऽस्ति यस्य कामायेच्छति सर्वस्याऽऽत्मभूतत्वात् । अतः किमिच्छन्कस्य कामाय शरीरमनुसंज्वरेदनुशेत् । शरीरोपाधिकृतदुःखमनु दुःखी स्यात् । शरीरतापमनुतप्येत । अनात्मदर्शिनो हि तद्व्यतिरिक्तवस्त्वन्तरेप्सोः ममेदं स्यात्पुत्रस्येदं भार्याया इदमित्येवमीहमानः पुनः पुनर्जनन-मरणप्रबन्धारूढः । शरीररोगमनु रुज्यते सर्वात्मदर्शिनस्तु तदसंभव इत्येतदाह ॥१२॥

किंच यस्य ब्राह्मणस्यानुवित्तोऽनुलब्धः प्रतिबुद्धः साक्षात्कृतः कथं? अहमस्मि परं ब्रह्मेत्येवं प्रत्यगात्मत्वेनाव-
१० गत आत्माऽस्मिन्संदेह्ये संदेहेऽनेकानर्थसंकटोपचये गहने विषमेऽनेकशतसहस्रविवेकविज्ञानप्रतिपक्षे विषमे प्रविष्टः स यस्य ब्राह्मणस्यानुवित्तः प्रतिबोधेनेत्यर्थः । स विश्वकृद्विश्वस्य कर्ता । कथं विश्वकृत्त्वं तस्य ? किं विश्वकृदिति नामेत्याशङ्क्याऽऽह—स हि यस्मात्सर्वस्य कर्ता न नाममात्रं न केवलं विश्वकृत्परप्रयुक्तः सन् । किं तर्हि तस्य लोकः सर्वः । किमन्यो लोकोऽन्योऽसावित्युच्यते—स उ लोक एव । लोकशब्देनाऽऽत्मोच्यते । तस्य सर्व आत्मा स च सर्वस्याऽऽत्मेत्यर्थः । य एष ब्राह्मणेन प्रत्यगात्मा प्रतिबुद्धतयाऽनुवित्त आत्माऽनर्थसंकटे गहने प्रविष्टः स न
१५ संसारी किंतु पर एव । यस्माद्विश्वस्य कर्ता सर्वस्याऽऽत्मा तस्य च सर्व आत्मा । एक एवाद्वितीयः पर एवास्मीत्यनु-संधातव्य इति श्लोकार्थः ॥१३॥

किंचेहैवानेकानर्थसंकुले सन्तो भवन्तोऽज्ञानदीर्घनिद्रामोहिताः सन्तः कथंचिदिव ब्रह्मतत्त्वमात्मत्वेनाथ विद्मो विजानीमः । तदेतद्ब्रह्म प्रकृतमहो वयं कृतार्था इत्यभिप्रायः । यदेतद्ब्रह्म विजानीमस्तत्र चेद्विदितवन्तो वयं वेदनं वेदो वेदोऽस्यास्तीति वेदी वेद्येव वेदिनं वेदिरवेदिः । ततोऽहमवेदिः स्याम् । यद्यवेदिः स्यां को दोषः
२० स्यान्महत्यनन्तपरिमाणा जन्ममरणादिलक्षणा विनष्टिर्विनशनम् । अहो वयमस्मान्महतो विनशनान्निर्मुक्ता यदद्वयं ब्रह्म विदितवन्त इत्यर्थः । यथा च वयं ब्रह्म विदित्वाऽस्माद्विनशनाद्विप्रमुक्ता एवं ये तद्विदुरमृतास्ते भवन्ति ये पुनर्नैव ब्रह्म विदुस्त इतरे ब्रह्मविद्भ्योऽन्येऽब्रह्मविद इत्यर्थः । दुःखमेव जन्ममरणादिलक्षणमेवापियन्ति प्रतिपद्यन्ते न कदाचिदप्यविदुषां ततो विनिवृत्तिरित्यर्थः । दुःखमेव हि त आत्मत्वेनोपगच्छन्ति ॥१४॥

विजानीयादिति संबन्धः । प्रयोजनाय शरीरमनुसंज्वरेदिति संबन्धः । किमिच्छन्नित्याक्षेपं समर्थयते—न हीति । कस्य
२५ वा कामायेत्याक्षेपमुपपादयति—न चेति । आक्षेपद्वयं निगमयति—अत इति । तदेव स्पष्टयति—शरीरेति । विदु-षस्तापाभावं व्यतिरेकमुखेन विशदयति—अनात्मेति । वस्त्वन्तरेप्सोस्तापसंभव इति शेषः । स चेत्यध्याहृत्य ममेद-मित्यादि योज्यम् । इत्येतदाह किमिच्छन्नित्याद्या श्रुतिरिति शेषः ॥१२॥

न केवलमात्मविद्यारसिकस्य कायक्लेशराहित्यं किंतु कृतकृत्यता चास्तीत्याह—किंचेति । सन्देहे पृथिव्या-दिभिर्भूतैरुपचिते शरीरे । सदेहत्वं साधयति—अनेकेति । विषमत्वं विशदयति—अनेकशतेति । न नाममात्रमित्यत्र
३० पुरस्तान्नञस्तस्मादिति पठितव्यं यस्मादित्युपक्रमाद्विश्वकृत्त्वमिति शेषः । परशब्दो विद्याविषयः । विश्वकृत्कृतकृत्य इत्येतत् लोकलोकिविभागेन भेदं शङ्कित्वा दूषयति—किमित्यादिना । यस्येत्यादिमन्त्रस्य तात्पर्यार्थं सगृह्णाति—य एष इति । अस्त्वेवं किं तावतेत्याशङ्क्याऽऽह—एक एवेति । यो हि परः सर्वप्रकारभेदराहित्यात्पूर्णतया वर्तते स एवास्मीत्यात्माऽनुसंधातव्य इति योजना ॥१३॥

ब्रह्मविदो विद्यया कृतकृत्यत्वे श्रुतिसंप्रतिपत्तिरेव केवलं न भवति किंतु स्वानुभवसंप्रतिपत्तिरस्तीत्याह—
३५ किंचेति । अथेत्यस्य कथंचिदिवेति व्याख्यानम् । तदित्यस्य ब्रह्मतत्त्वमित्युक्तमर्थं स्फुटयति—तदेतदिति । ब्रह्मज्ञाने कृतार्थत्वं श्रुत्यनुभवाभ्यामुक्त्वा तदभावे दोषमाह—यदेतदिति । तर्हि महती विनष्टिरिति संबन्धः । बहुत्वं न विवक्षितं ज्ञानान्मोक्षोऽत्र विवक्षित इत्यभिप्रेत्य वेदिरित्यस्यार्थमाह—वेदनमित्यादिना । न चेद्ब्रह्म विदितवन्तो वयं ततोऽहम-वेदिः स्यामिति योजना । विद्याभावे दोषमुक्त्वा विद्वदनुभवसिद्धमर्थं निगमयति—अहो वयमिति । इहैवेत्यादिना पूर्वार्धेनोक्तमेवार्थमुत्तरार्धेन प्रपञ्चयति—यथा चेत्यादिना । दुःखादविदुषां विनिर्मोकाभावे हेतुमाह—दुःखमेवेति ॥१४॥

यदैतमनुपश्यत्यात्मानं देवमञ्जसा । ईशानं भूतभव्यस्य न ततो विजुगुप्सते ॥१५॥
यस्मादर्वाक्संवत्सरोऽहोभिः परिवर्तते । तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम् ॥१६॥
यस्मिन्पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः । तमेव मन्य आत्मानं विद्वान्ब्रह्मामृतोऽमृतम् ॥१७॥
प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रं मनसो
ये मनो विदुः । ते निचिक्युर्ब्रह्म पुराणमग्र्यम् ॥१८॥ ५

यदा पुनरेतमात्मानं कथंचित्परमकारुणिकं कंचिदाचार्यं प्राप्य ततो लब्धप्रसादः सन्ननु पश्चात्पश्यति साक्षात्करोति स्वमात्मानं देवं द्योतनवन्तं दातारं वा सर्वप्राणिकर्मफलानां यथाकर्मानुरूपमञ्जसा साक्षादीशानं स्वामिनं भूतभव्यस्य कालत्रयस्येत्येतत् । न ततस्तस्मादीशानाद्देवादात्मानं विशेषेण जुगुप्सते गोपायितुमिच्छति । सर्वो हि लोक ईश्वराद्गुप्तिमिच्छति भेददर्शी । अयं त्वेकत्वदर्शी न बिभेति कुतश्चन । अतो न तदा विजुगुप्सते । यदेशानं देवमञ्जसाऽऽत्मत्वेन पश्यति न तदा निन्दति वा कंचित् । सर्वमात्मानं हि पश्यति स एवं पश्यन्कमसौ निन्द्यात् ॥१५॥ १०

किंच यस्मादीशानादर्वाग्यस्मादन्यविषय एवेत्यर्थः । संवत्सरः कालात्मा सर्वस्य जनिमतः परिच्छेत्ता यमपरिच्छिन्दन्नर्वागेव वर्ततेऽहोभिः स्वावयवैरहोरात्रैरित्यर्थः । तज्ज्योतिषां ज्योतिरादित्यादिज्योतिषामप्यवभासकत्वादायुरित्युपासते देवा अमृतं ज्योतिरतोऽन्यन्म्रियते न हि ज्योतिः । सर्वस्य ह्येतज्ज्योतिरायुः । आयुर्गुणेन यस्माद्देवास्तज्ज्योतिरुपासते तस्मादायुष्मन्तस्ते । तस्मादायुष्कामेनाऽऽयुर्गुणेनोपास्यं ब्रह्मेत्यर्थः ॥१६॥

किंच यस्मिन्यत्र ब्रह्मणि पञ्च पञ्चजना गन्धर्वादयः पञ्चैव संख्याता गन्धर्वाः पितरो देवा असुरा रक्षांसि १५ निषादपञ्चमा वा वर्णा आकाशश्चाव्याकृताख्यो यस्मिन्सूत्रमोतं च प्रोतं च । यस्मिन्प्रतिष्ठित एतस्मिन्नु खल्वक्षरे गार्ग्याकाश इत्युक्तं तमेवाऽऽत्मानममृतं ब्रह्म मन्येऽहं न चाहमात्मानं ततोऽन्यत्वेन जाने । किं तर्ह्यमृतोऽहं ब्रह्म विद्वान्सन्नज्ञानमात्रेण तु मर्त्योऽहमासं तदपगमाद्विद्वानहममृत एव ॥१७॥

किंच तेन हि चैतन्यात्मज्योतिषाऽवभास्यमानः प्राण आत्मभूतेन प्राणिति तेन प्राणस्यापि प्राणः स तं प्राणस्य प्राणम् । तथा चक्षुषोऽपि चक्षुरुत श्रोत्रस्यापि श्रोत्रम् । ब्रह्मशक्त्यधिष्ठितानां हि चक्षुरादीनां दर्शनादि- २०

किंच विदुषो विहिताकरणादिप्रयुक्त भय नास्तीति विद्या स्तोतुमेव मन्त्रान्तरमादाय व्याचष्टे—यदा पुनरित्यादिना । उक्तमर्थं व्यतिरेकमुखेन विशदयति—सर्वो हीति । जुगुप्साया निन्दात्वेन प्रसिद्धत्वात्कथमवयवार्थमादाय व्याख्यायते रूढिर्योगमपहरतीति न्यायादित्याशङ्क्याऽऽह—यदेति । तदेवोपपादयति—सर्वमिति ॥१५॥

अथेश्वरस्यापि कालान्यत्वे सति वस्तुत्वाद्घटवत्कालावच्छिन्नत्वान्न कालत्रयं प्रति युक्तमीश्वरत्वमत आह—किंचेति । यस्मादीशानादर्वाक्संवत्सरो वर्तते तमुपासते देवा इति संबन्धः । ननु कथं सवत्सरोऽर्वागित्युच्यते कालस्य २५ कालन्तराभावेन पूर्वकालसंबन्धाभावादत आह—यस्मादिति । अन्वयस्तु पूर्ववत् । आत्मज्योतिषो गुणमायुष्ट्वलक्षणं स्पष्टयन्नुपासकस्य फलमाह—सर्वस्येति । यथोक्तोपासने देवानामेवाधिकारो विशेषवचनादित्याशङ्क्याऽऽह—तस्मादिति ॥१६॥

ज्योतिषा ज्योतिरमृतमित्युक्तं तस्यामृतत्वं सर्वाधिष्ठानत्वेन साधयति—किंचेति । एवकारार्थमाह—न चेति । यद्यात्मानं ब्रह्म जानासि तर्हि किं ते तद्विद्याफलमिति प्रश्नपूर्वकमाह—किं तर्हीति । कथं तर्हि ते मर्त्यत्वप्रतीति- ३० स्तत्राऽऽह—अज्ञानमात्रेणेति ॥१७॥

प्रकृताः पंचजनाः पंच ज्योतिषा सह प्राणादयो वा स्युरित्यभिप्रेत्याऽऽह—किंचेति । कथं चक्षुरादिषु चक्षुरादित्वं ब्रह्मण. सिध्यति तत्राऽऽह—ब्रह्मशक्तीति । विमतानि केनचिदधिष्ठितानि प्रवर्तन्ते करणत्वाद्वास्यादि-

१. यस्मिन् पञ्चेति— न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च ( १४.११ ) इत्यधिकरणे इदं वाक्यं साङ्ख्योक्तपञ्चविंशतितत्त्वप्रतिपादकं सत् तन्मतस्य श्रुतिमत्त्वं दर्शयति पञ्च पञ्चेति गुणनेन साङ्ख्यमतसिद्ध ३५ पञ्चविंशतितत्त्वानां प्रतिपादनात् इति पूर्वपक्षे प्राप्ते । न संख्योपसंग्रहादपि प्रधानादीना श्रुतिमत्त्वं प्रत्याशा कर्त्तव्या साङ्ख्यमततत्त्वानि नानाभूतानि पञ्च पञ्चेति प्रतिपञ्चकं अवान्तरगणनार्थसंख्याभावात् आत्माकाशाभ्यां संख्यातिरेकाच्च न साङ्ख्यमतानुवाद इत्यर्थः । अपि तु वाक्यशेषात् प्राणादय एवात्र ग्राह्याः सन्निहितत्वात् । पञ्चजनाः पञ्च ते च प्राणादयः वाक्यशेषादिति सिद्धान्त. ।

मनसैवानुद्रष्टव्यं नेह नानाऽस्ति किंचन । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥१९॥
एकधैवानुद्रष्टव्यमेतदप्रमयं ध्रुवम् । विरजः पर आकाशादज आत्मा महान्ध्रुवः ॥२०॥

सामर्थ्यं स्वतः काष्ठलोष्टसमानि हि तानि चैतन्यात्मज्योतिःशून्यानि । मनसोऽपि मन इति ये विदुश्चक्षुरादिव्यापारानुमितास्तित्वं प्रत्यगात्मानं न विषयभूतं ये विदुस्ते निश्चिक्युर्निश्चयेन ज्ञातवन्तो ब्रह्म पुराणं चिरंतनमग्र्यमग्रे ५ भवम् । "तद्यदात्मविदो विदुः" इति ह्याथर्वणे ॥१८॥

तद्ब्रह्मदर्शने साधनमुच्यते मनसैव परमार्थज्ञानसंस्कृतेनाऽऽचार्योपदेशपूर्वकं चानुद्रष्टव्यम् । तत्र च दर्शनविषये ब्रह्मणि नेह नानाऽस्ति किंचन किंचिदपि । असति नानात्वे नानात्वमध्यारोपयत्यविद्यया । स मृत्योर्मरणात् मृत्युं मरणमाप्नोति । कोऽसौ । य इह नानेव पश्यति । अविद्याध्यारोपणव्यतिरेकेण नास्ति परमार्थतो द्वैतमित्यर्थः ॥१९॥

१० यस्मादेवं तस्मादेकधैवैकेनैव प्रकारेण विज्ञानघनैकरसप्रकारेणाऽऽकाशवन्निरन्तरेणानुद्रष्टव्यम् । यस्मादेतद्ब्रह्माप्रमयमप्रमेयम् । सर्वैकत्वात् । अन्येन ह्यन्यत्प्रमीयत इदं त्वेकमेवातोऽप्रमेयम् ध्रुवं नित्यं कूटस्थमविचाल्यीत्यर्थः । ननु विरुद्धमिदमुच्यतेऽप्रमेयं ज्ञायत इति च । ज्ञायत इति प्रमाणैर्मीयत । इत्यर्थोऽप्रमेयमिति च तत्प्रतिषेधः । नैष दोषः । अन्यवस्तुवदनागमप्रमाणप्रमेयत्वप्रतिषेधार्थत्वात् । यथाऽन्यानि वस्तून्यागमनिरपेक्षैः प्रमाणैर्विषयीक्रियन्ते न तथैतदात्मतत्त्वं प्रमाणान्तरेण विषयीकर्तुं शक्यते । सर्वस्याऽऽत्मत्वे केन कं पश्येद्विजानीयादिति १५ प्रमातृप्रमाणादिव्यापारप्रतिषेधेनैवाऽऽगमोऽपि विज्ञापयति न त्वभिधानाभिधेयलक्षणवाक्यधर्माङ्गीकरणेन । तस्मान्नाऽऽगमेनापि स्वर्गमेर्वादिवत्तत्प्रतिपाद्यते । प्रतिपादयित्रात्मभूतं हि तत् । प्रतिपादयितुः प्रतिपादनस्य प्रतिपाद्यविषयत्वात् । भेदे हि सति तद्भवति ।

ज्ञानं च तस्मिन्परात्मभावनिवृत्तिरेव । न तस्मिन्साक्षादात्मभावः कर्तव्यो विद्यमानत्वादात्मभावस्य ।

चदिति चक्षुरादिव्यापारेणानुमितास्तित्वं प्रत्यगात्मानं ये विदुरिति योजना । विदिक्रियाविषयत्वं व्यावर्तयति— २० नेति । प्रत्यगात्मविदा कथं ब्रह्मवित्त्वमित्याशङ्क्याऽऽह—तदिति ॥१८॥

मनसो ब्रह्मदर्शनसाधनत्वे कथं ब्रह्मणो वाङ्मनसातीतत्वश्रुतिरित्याशङ्क्याऽऽह—परमार्थेति । केवलं मनो ब्रह्माविषयीकुर्वदपि श्रवणादिसंस्कृतं तदाकारं जायते तेन द्रष्टव्यं तदुच्यतेऽत एव वृत्तिव्याप्यं ब्रह्मेत्युपगच्छन्तीति भाव. । अनुशब्दार्थमाह—आचार्येति । द्रष्टृद्रष्टव्यादिभावेन भेदमाशङ्क्याऽऽह—तत्र चेति । एवकारार्थमाह—नेहेति । कथमात्मनि वस्तुतो भेदरहितेऽपि भेदो भातीत्याशङ्क्याऽऽह—असतीति । नेहेत्यादेः संपिण्डितमर्थं कथयति— २५ अविद्येति ॥१९॥

द्वैताभावे कथमनुद्रष्टव्यमित्याशङ्क्याऽऽह—यस्मादिति । तमेवैकं प्रकारं प्रकटयति—विज्ञानेति । परिच्छिन्नत्वं व्यवच्छिनत्ति—आकाशवदिति । एकरसत्वं हेतूकृत्याप्रमेयत्वं प्रतिजानीते—यस्मादिति । एतद्ब्रह्म यस्मादेकरसं तस्मादप्रमेयमिति योजना । हेत्वर्थं स्फुटयति—सर्वैकत्वादिति । तथाऽपि कथमप्रमेयत्वं तदाह—अन्येनेति । मिथो विरोधमाशङ्कते—नन्विति । विरोधमेव स्फोरयति—ज्ञायत इतीति । चोदितं विरोधं निराकरोति—नैष दोष इति । ३० संगृहीतं समाधानं विशदयति—यथेत्यादिना । तस्य मानान्तरैर्विषयीकर्तुमशक्यत्वे हेतुमाह—सर्वस्येति । इति सर्वद्वैतोपशान्तिश्रुतेरिति शेषः । आगमोऽपि तर्हि कथमात्मानमावेदयेदित्याशङ्क्याऽऽह—प्रमात्रिति । आत्मनः स्वर्गादिवद्विषयत्वेनाऽऽगमप्रतिपाद्यत्वाभावे हेतुमाह—प्रतिपादयित्रिति । तथाऽपि किमिति विषयत्वेनाप्रतिपाद्यत्वं तत्राऽऽह—प्रतिपादयितुरिति । तदिति प्रतिपाद्यत्वमुक्तम् ।

कथं तर्हि तस्मिन्नागमिकं ज्ञानं तत्राऽऽह—ज्ञानं चेति । परस्मिन्देहादावात्मभावस्याऽऽरोपितस्य निवृत्तिरेव ३५ वाक्येन क्रियते । तथा चाऽऽत्मनि परिशिष्टे स्वाभाविकमेव स्फुरणं प्रतिबन्धविगमात्प्रकटीभवतीति भावः । ननु

१. 'नानेव पश्यति' इत्यस्य मिथ्याभूतं द्वैतं पश्यतीत्यर्थः । परे तु इवशब्दः अल्पार्थः अल्पमपि भेदमित्यर्थः इदमपि न स्वरसम् एको देवः सर्वभूतेषु गूढ इति श्रुतेः नानात्वस्याप्रसक्तेः । 'य एषोन्तर्हृदय आकाशस्तस्मिन् इत्यर्थ. प्राकरणिकः । परे तु 'य एषो जीवः तस्मिन् शेते इत्यर्थमूचुः तच्च ब्रह्मण उपपन्न न तु जीवे तत्र ब्रह्मणः शयनासंभवात् ।

**तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः । नानुध्यायाद्बहूञ्छब्दान्वाचो विग्लापनं हि तदिति ॥२१॥**

**स वा एष महानज आत्मा योऽयं विज्ञानमयः[1] प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः स न साधुना कर्मणा भूयान्नो एवासाधुना कनी-**

नित्यो ह्यात्मभावः सर्वस्यातद्विषय इव प्रत्यवभासते। तस्मादतद्विषयावभासनिवृत्तिव्यतिरेकेण न तस्मिन्नात्मभावो विधीयते। अन्यात्मभावनिवृत्तावात्मभावः स्वात्मनि स्वाभाविको यः स केवलो भवतीत्यात्मा ज्ञायत इत्युच्यते। ५ स्वतश्चाप्रमेयः प्रमाणान्तरेण न विषयीक्रियत इत्युभयमप्यविरुद्धमेव। विरजो विगतरजो रजो नाम धर्माधर्मादिमलं तद्रहित इत्येतत्। परः परो व्यतिरिक्तः सूक्ष्मो व्यापी वाऽऽकाशादप्यव्याकृताख्यात्। अजो न जायते जन्मप्रतिषेधादुत्तरेऽपि भावविकाराः प्रतिषिद्धाः। सर्वेषां जन्मादित्वात्। आत्मा महान्परिमाणतो महत्तरः सर्वस्मात्। ध्रुवोऽविनाशी ॥२०॥

तमीदृशमात्मानमेव धीरो धीमान्विज्ञायोपदेशतः शास्त्रतश्च प्रज्ञां शास्त्राचार्योपदिष्टविषयां जिज्ञासापरि- १० समाप्तिकरीं कुर्वीत ब्राह्मणः। एवं प्रज्ञाकरणसाधनानि संन्यासशमदमोपरमतितिक्षासमाधानानि कुर्यादित्यर्थः। नानुध्यायान्नानुचिन्तयेद्बहून्प्रभूताञ्छब्दान्। तत्र बहुत्वप्रतिषेधात्केवलात्मैकत्वप्रतिपादकाः स्वल्पाः शब्दा अनुज्ञायन्ते "ओमित्येवं ध्यायथ आत्मानमन्या वाचो विमुञ्चथ" इति चाऽऽथर्वणे। वाचो विग्लापनं विशेषेण ग्लानिकरं श्रमकरं हि यस्मात्तद्बहुशब्दाभिध्यानमिति ॥२१॥

सहेतुकौ बन्धमोक्षावभिहितौ मन्त्रब्राह्मणाभ्यां श्लोकैश्च पुनर्मोक्षस्वरूपं विस्तरेण प्रतिपादितमेवमेत- १५ स्मिन्नात्मविषये सर्वो वेदो यथोपयुक्तो भवति तत्तथा वक्तव्यमिति तदर्थेयं कण्डिकाऽऽरभ्यते। तच्च तथाऽस्मिन्प्र-

ब्रह्मण्यात्मभावः श्रुत्या कर्तव्यो विवक्ष्यते न तु देहादावात्मत्वव्यावृत्तिरत आह—न तस्मिन्निति। ब्रह्मणश्चेदात्मभावः सदा मन्यते कथमन्यथा प्रथेत्याशङ्क्याऽऽह—नित्यो हीति। सर्वस्य पूर्णस्य ब्रह्मण इत्येतत्। अतद्विषयो ब्रह्मव्यतिरिक्तविषय इत्यर्थः। ब्रह्मण्यात्मभावस्य सदा विद्यमानत्वे फलितमाह—तस्मादिति। अतद्विषयावभासो देहादावात्मत्वप्रतिभासः। तस्मिन्ब्रह्मणीत्यर्थः। अन्यस्मिन्नात्मभावनिवृत्तिरेवाऽऽगमेन क्रियते चेत्तर्हि कथमात्मा तेन गम्यत २० इत्युच्यते तत्राऽऽह—अन्येति। यद्यागमिकवृत्तिव्याप्यत्वेनाऽऽत्मनो मेयत्वमिष्यते कथं तर्हि तस्यामेयत्ववाचोयुक्तिरित्याशङ्क्याऽऽह—स्वतश्चेति। वृत्तिव्याप्यत्वेन मेयत्वं स्फुरणाव्याप्यत्वेन चामेयत्वमित्युसंहरति—इत्युभयमिति। यदुक्तं ध्रुवत्व तदुपस्कारपूर्वकमुपपादयति—विरज इत्यादिना। कथं जन्मनिषेधादितरे विकारा निषिध्यन्ते तत्राऽऽह—सर्वेषामिति ॥२०॥

यथोक्तं वस्तुनिदर्शन निगमयति—तमीदृशमीति। नित्यशुद्धत्वादिलक्षणमिति यावत्। उक्तरीत्या प्रज्ञाकरणे २५ कानि साधनानीति चेत्तानि दर्शयति—एवमिति। काम्यनिषिद्धत्यागः संन्यास, उपरमो नित्यनैमित्तिकत्याग इति भेदः। बहूनितिविशेषणवशादायातमर्थं दर्शयति—तत्रेति। चिन्तनीयेषु शब्देष्विति यावत्। तत्र श्रुत्यन्तरं संवादयति—ओमित्येवमिति। नानुध्यायादित्यत्र हेतुमाह—वाच इति। तस्माद्बहूञ्छब्दान्नानुचिन्तयेदिति पूर्वेण संबन्धः। इतिशब्दः श्लोकव्याख्यानसमाप्त्यर्थः ॥२१॥

काण्डिकान्तरमवतारयितु वृत्त कीर्तयति—सहेतुकाविति। उत्तरकण्डिकातात्पर्यमाह—एवमिति। विरजः ३० पर इत्यादिनोक्तक्रमेणावस्थिते ब्रह्मणीति यावत्। तदित्युपयुक्तोक्तिः। तदर्था ब्रह्मात्मनि सर्वस्य वेदस्य विनियोगप्रदर्शनार्थेति यावत्। ननु विविदिपाव वयेन ब्रह्मात्मनि सर्वस्य वेदस्य विनियोगो वक्ष्यते तथा च तस्मात्प्राक्तनवाक्य किमर्थमित्याशङ्क्याऽऽह—तच्चेति। यथाऽस्मिन्नध्याये सफलमात्मज्ञानमुक्तं तथैव तदनूद्येति योजना। कथं

[1] योऽयं विज्ञानमयः प्राणेषु प्रकृतः स वा अयं महानज आत्मा सर्वस्येशानः सर्वस्याधिपतिः इति महावाक्याद्वधार्यते। तदुपयोगितयैव त्वंपदार्थजीवस्यावस्थात्रयसंबन्धाभावेन शुद्धत्वं निर्णीतं तत्पदार्थशोधनाय 'नेह ३५ नानास्ति किञ्चने'त्युक्तम्। इह ब्रह्मणि नाना द्वैतं किञ्चिदपि नास्तीत्यर्थः तेनाभेदयोग्यताऽवधृता 'मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति' इति च द्वैतद्रष्टुः मरणान्मरणं भवतीति तन्निन्दा च कृता। मतान्तरे तु 'नेह नानास्ति' ब्रह्मणि नानात्व नास्तीत्यर्थः इति व्याचक्षु. सजातीयद्वितीयस्वगतभेदराहित्यं तदर्थः इदं च एकमेवा द्वितीयमिति श्रुतिसिद्धत्वात् ब्रह्मभेदाप्रसक्तेः तन्मते वाक्यं निष्प्रयोजनम्।

यानेष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसंभेदाय तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेनैतमेव विदित्वा मुनिर्भवति। एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति। एतद्ध स्म वै तत्पूर्वे विद्वांसः प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोक इति ते ह स्म पुत्रैषणायाश्च
५ वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति या ह्येव पुत्रैषणा सा वित्तैषणा या वित्तैषणा सा लोकैषणोभे ह्येते एषणे एव भवतः। स एष नेति नेत्यात्माऽगृह्यो न हि गृह्यतेऽशीर्यो न हि शीर्यतेऽसङ्गो न हि सज्यतेऽसितो न व्यथते न रिष्यत्येतमु हैवैते न तरत इत्यतः पापमकरवमित्यतः कल्याणमकरवमित्युभे उ हैवैष एते तरति नैनं कृताकृते तपतः ॥२२॥

पाठकेऽभिहितं सप्रयोजनमनूद्यात्रैवोपयोगः कृत्स्नस्य वेदस्य काम्यराशिवर्जितस्येत्येवमर्थं उक्तार्थानुवादः स वा
१० एष इत्यादिः। स इत्युक्तपरामर्शार्थः। कोऽसावुक्तः परामृश्यते तं प्रति निर्दिशति य एष विज्ञानमय इति। अतीतान्तरवाक्योक्तसंप्रत्ययो मा भूदिति य एषः। कतम एष इत्युच्यते—विज्ञानमयः प्राणेष्विति। उत्तरवाक्योल्लिङ्गनं संशयनिवृत्त्यर्थम्। उक्तं हि पूर्वं जनकप्रश्नारम्भे कतम आत्मेति योऽयं विज्ञानमयः प्राणेष्वित्यादि।

एतदुक्तं भवति योऽयं विज्ञानमयः प्राणेष्वित्यादिना वाक्येन प्रतिपादितः स्वयंज्योतिरात्मा स एष कामकर्मविद्यानामनात्मधर्मत्वप्रतिपादनद्वारेण मोक्षितः परमात्मभावमापादितः पर एवायं नान्य इत्येष स साक्षान्म-
१५ हानज आत्मेत्युक्तः। योऽयं विज्ञानमयः प्राणेष्विति यथाव्याख्यातार्थ एव। य एषोऽन्तर्हृदये हृदयपुण्डरीकमध्ये य एष आकाशो बुद्धिविज्ञानसंश्रयस्तस्मिन्नाकाशे बुद्धिविज्ञानसहिते शेते तिष्ठति। अथवा संप्रसादकालेऽन्तर्हृदये य एष आकाशः पर एवाऽऽत्मा निरुपाधिको विज्ञानमयस्य स्वस्वभावस्तस्मिन्स्वस्वभावे परमात्मन्याकाशाख्ये शेते। चतुर्थ एतद्व्याख्यातं क्वैष तदाऽभूदित्यस्य प्रतिवचनत्वेन। स च सर्वस्य ब्रह्मेन्द्रादेर्वशी। सर्वो ह्यस्य वशे वर्तते। उक्तं चैतस्य वा अक्षरस्य प्रशासन इति। न केवलं वशी सर्वस्येशान ईशिता च ब्रह्मेन्द्रप्रभृतीनामीशितृत्वं
२० च कदाचिज्जातिकृतं यथा राजकुमारस्य बलवत्तरानपि भृत्यान्प्रति तद्वन्मा भूदित्याह सर्वस्याधिपतिरधिष्ठाय पालयिता स्वतन्त्र इत्यर्थः। न राजपुत्रवदमात्यादिभृत्यतन्त्रः। त्रयमप्येतद्वशित्वादिहेतुहेतुमद्रूपम्।

यस्मात्सर्वस्याधिपतिस्ततोऽसौ सर्वस्येशानः। यो हि यमधिष्ठाय पालयति स तं प्रतीष्ट एवेति प्रसिद्धम्।

यथोक्ते ज्ञाने सर्वो वेदो विनियोक्तुं शक्यते स्वर्गकामादिवाक्यस्य स्वर्गादावेव पर्यवसानादित्याशङ्क्य संयोगपृथक्त्वन्यायमनादृत्य विशिनष्टि—काम्यराशीति। उक्तस्य सफलस्याऽऽत्मज्ञानस्यानुवाद इति यावत्। उक्ताना भूयस्त्वे
२५ विशेषं ज्ञातुं पृच्छति—कोऽसाविति। विशेषणानर्थक्यमाशङ्क्य परिहरति—अतीतेति। तद्धि विरज पर इत्यादि तेनोक्तो यो महत्त्वादिविशेषण परमात्मा तत्र सशब्दात्प्रतीतिर्मा भूदिति कृत्वा तेन ज्योतिर्ब्राह्मणस्थं जीवं परामृश्य तमेव वैशब्देन स्मारयित्वा तस्य संनिहितेन परेणाऽऽत्मनैक्यमेषशब्देन निर्दिशतीत्यर्थः। विशेषणवाक्यस्थमेषशब्दं प्रश्नपूर्वकं व्याचष्टे—कतम इतिः। कथं जीवो विज्ञानमयः कथं वा प्राणेष्विति सप्तमी प्रयुज्यते तत्राऽऽह—उक्तेति। तदनुवादस्य सशब्दार्थसंदेहापोहं फलमाह—संशयेति। उक्तवाक्योल्लिङ्गनमित्युक्तं विवृणोति—उक्तं हीति।
३० योऽयं विज्ञानमयः प्राणेषु प्रागुक्तः स एव महानज आत्मेति जीवानुवादेन परमात्मभावो विहित इति वाक्यार्थमाह—एतदिति। परमात्मभावापादनप्रकारमनुवदति—साक्षादिति। विशेषणवाक्यस्य व्याख्येयत्वप्राप्तावुक्तवाक्योल्लिङ्गनमित्यत्रोक्तं स्मारयति—योऽयमिति। वाक्यान्तरमवतार्य व्याचष्टे—य एष इति। कथं पुनराकाशशब्दस्य परमात्मविषयत्वमुपेत्य द्वितीयं व्याख्यानं तस्यार्थान्तरे रूढत्वादित्याशङ्क्याऽऽह—चतुर्थ इति। इत्थमुक्तज्ञानमनूद्य तत्फलमनुवदति—स चेत्यादिना। कथं पुनर्निरुपाधिकस्येश्वरस्य वशित्वं कथं च तदभावे तदात्मनो
३५ विदुषस्तदुपपद्यते तत्राऽऽह—उक्तं चेति।

विशेषणत्रयस्य हेतुहेतुमद्रूपत्वमेव विशदयति—यस्मादित्यादिना। तत्र प्रसिद्धिं प्रमाणयति—यो हीति।

यस्माच्च सर्वस्येशानस्तस्मात्सर्वस्य वशीति । किंचान्यत्स एवंभूतो हृद्यन्तर्ज्योतिः पुरुषो विज्ञानमयो न साधुना शास्त्रविहितेन कर्मणा भूयान्भवति न वर्धते पूर्वावस्थातः केनचिद्धर्मेण । नो एव शास्त्रप्रतिषिद्धेनासाधुना कर्मणा कनीयानल्पतरो भवति पूर्वावस्थातो न हीयत इत्यर्थः । किंच सर्वो ह्यधिष्ठानपालनादि कुर्वन्परानुग्रहपीडाकृतेन धर्माधर्माख्येन युज्यतेऽस्यैव तु कथ तदभाव इति । उच्यते—यस्मादेष सर्वेश्वरः सन्कर्मणोऽपीशितुं भवत्येव शील- मस्य तस्मान्न कर्मणा संबध्यते । किंचैष भूताधिपतिर्ब्रह्मादिस्तम्बपर्यन्तानां भूतानामधिपतिरित्युक्तार्थं पदम् । एष ५ भूतानां तेषामेव पालयिता रक्षिता । एष सेतुः । किंविशिष्ट इत्याह–विधरणो वर्णाश्रमादिव्यवस्थाया विधारयिता । तदाहैषां भूरादीनां ब्रह्मलोकान्तानां लोकानामसंभेदायासंभिन्नमर्यादायै । परमेश्वरेण सेतुवदविधार्यमाणा लोकाः संभिन्नमर्यादाः स्युः । अतो लोकानामसंभेदाय सेतुभूतोऽयं परमेश्वरो यः स्वयंज्योतिरात्मैव । एवंवित्सर्वस्य वशीत्यादि ब्रह्मविद्यायाः फलमेतन्निर्दिष्टम् । किंज्योतिरयं पुरुष इत्येवमादिषष्ठप्रपाठकविहितायामेतस्यां ब्रह्म- विद्यायामेवंफलायां काम्यैकदेशवर्जितं कृत्स्नं कर्मकाण्डं तादर्थ्येन विनियुज्यते । तत्कथमित्युच्यते—तमेतमेवंभूत- १० मौपनिषदं पुरुषं वेदानुवचनेन मन्त्रब्राह्मणाध्ययनेन नित्यस्वाध्यायलक्षणेन विविदिषन्ति वेदितुमिच्छन्ति । के । ब्राह्मणाः । ब्राह्मणग्रहणमुपलक्षणार्थम् । अविशिष्टो ह्यधिकारस्त्रयाणां वर्णानाम् । अथवा कर्मकाण्डेन मन्त्र- ब्राह्मणेन वेदानुवचनेन विविदिषन्ति । कथं विविदिषन्तीत्युच्यते—यज्ञेनेत्यादि ।

ये पुनर्मन्त्रब्राह्मणलक्षणेन वेदानुवचनेन प्रकाश्यमानं विविदिषन्तीति व्याचक्षते तेषामारण्यकमात्रमेव वेदानुवचनं स्यात् । न हि कर्मकाण्डेन पर आत्मा प्रकाश्यते । तं त्वौपनिषदमिति विशेषश्रुतेः । वेदानुवचनेनेति १५ चाविशेषितत्वात्समस्तग्राहीदं वचनम् । न च तदेकदेशोत्सर्गो युक्तः । ननु त्वत्पक्षेऽप्युपनिषद्वर्जमित्येकदेशत्वं स्यात् । नाऽऽद्यव्याख्यानेऽविरोधादस्मत्पक्षे नैष दोषो भवति । यदा वेदानुवचनशब्देन नित्यः स्वाध्यायो विधीयते तदोपनिषदपि गृहीतैवेति वेदानुवचनशब्दार्थैकदेशो न परित्यक्तो भवति । यज्ञादिसहपाठाच्च ।

यज्ञादीनि कर्माण्येवानुक्रमिष्यन्वेदानुवचनशब्दं प्रयुङ्क्ते । तस्मात्कर्मैव वेदानुवचनशब्देनोच्यत इति गम्यते । कर्म हि नित्यस्वाध्यायः । कथं पुनर्नित्यस्वाध्यायादिभिः कर्मभिरात्मानं विविदिषन्ति । नैव हि तान्यात्मानं २०

न केवलमुक्तमेव विद्याफलं किंत्वन्यच्चास्तीत्याह—किञ्चेति । एवंभूतत्वं ज्ञातपरमात्माभिन्नत्वम् । परिशुद्धत्वमर्थमनु- वदति–हृदीति । ब्रह्मीभूतस्य विदुषः स्वातन्त्र्यादित्वद्धर्माधर्मास्पर्शित्वमपि फलमित्यर्थः । अधिष्ठानादिकर्तृत्वाद्विदुषोऽपि लौकिकवद्धर्मादिसम्बन्धित्वं स्यादिति शङ्कते—सर्वो हीति । परतन्त्रत्वमुपाधिरिति । परिहरति—उच्यत इति । सर्वाधिपत्यराहित्यं चोपाधिरित्याह—किञ्चेति । सर्वपालकत्वराहित्यं चोपाधिरित्याह—एष इति । सर्वानाधारत्वं चोपाधिरित्याह—एष इति । कथं विधारयितृत्वमित्याशङ्क्याऽऽह—तदाहेति । तदेव साधयति—परमेश्वरेणेति । २५ सर्वस्य वशीत्यादिनोक्तमुपसंहरति—एवंविदिति । सफलं ज्ञानमनूद्य विविदिषावाक्यमवतारयति—किंज्योतिरिति । एवंफलायां सर्वस्य वशीत्यादिनोक्तफलोपेतायामिति यावत् । तादर्थ्येन परम्परया ज्ञानोत्पत्तिशेषत्वेनेत्यर्थः । विनियोजकं वाक्यमाकाङ्क्षापूर्वकमादाय व्याचष्टे—तत्कथमित्यादिना । एवंभूतं श्लोकोक्तविशेषणमित्यर्थः । ब्राह्मणशब्दस्य क्षत्रियाद्युपलक्षणत्वे हेतुमाह—अविशिष्टो हीति । सम्भावितं पक्षान्तरमाह—अथवेति । तेन विविदिषाप्रकारं प्रश्न- पूर्वकं विवृणोति—कथमित्यादिना । ३०

भर्तृप्रपञ्चप्रस्थानमुत्थाप्य प्रत्याचष्टे—ये पुनरित्यादिना । तत्र हेतुमाह—न हीति । भवतूपनिषन्मात्रग्रहण- मित्याशङ्क्य वेदो वाऽनूच्यते गुरूच्चारणानन्तर पठ्यत इति व्युत्पत्तेर्वेदानुवचनशब्देन सर्ववेदग्रहे सम्भवति तदेक- देशत्यागो न युक्त इत्याह—वेदेति । दोषसाम्यमाशङ्कते—नन्विति । सिद्धान्तेऽप्युपनिषदं वर्जयित्वा वेदानुवचनशब्देन कर्मकाण्डं गृहीतमिति कृत्वा तस्य वेदैकदेशविषयत्व स्यात्तत्र—

"यत्रोभयोः समो दोषः परिहारोऽपि वा समः । नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे ॥" ३५

इति न्यायविरोध इत्यर्थं । नित्यस्वाध्यायो वेदानुवचनमिति पक्षमादाय परिहरति—नेत्यादिना । वेदैक- देशपरिग्रहपरित्यागात्मकविरोधाभाव साधयति—यदेति । तर्हि व्याख्यानान्तरमुपेक्षितमित्याशङ्क्य तदपि वाक्यशेष- वशादपेक्षितमेवेत्याह—यज्ञादीति ।

संग्रहवाक्यं विवृणोति—यज्ञादीनि कर्माणीति । तर्हि प्रथमव्याख्याने कथं वाक्यशेषोपपत्तिरित्याशङ्क्याऽऽह— कर्म हीति । वेदानुवचनादीनामात्मविविदिषासाधनत्वमाक्षिपति—कथमिति । उपनिषद्भिरिवाऽऽत्मा तैरपि ज्ञायता- ४०

प्रकाशयन्ति यथोपनिषदः । नैष दोषः—कर्मणां विशुद्धिहेतुत्वात् । कर्मभिः संस्कृता हि विशुद्धात्मानः शक्नुवन्त्या-
त्मानमुपनिषत्प्रकाशितमप्रतिबन्धेन वेदितुम् । तथा ह्याथर्वणे—"विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः"
इति ; स्मृतिश्च—"ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः" इत्यादिः ।

कथं पुनर्नित्यानि कर्माणि संस्कारार्थानीत्यवगम्यते "स ह वा आत्मयाजी यो वेदेदं मेऽनेनाङ्गं संस्क्रियत
५ इदं मेऽनेनाङ्गमुपधीयते" इत्यादिश्रुतेः । सर्वेषु च स्मृतिशास्त्रेषु कर्माणि संस्कारार्थान्येवाऽऽचक्षतेऽष्टाचत्वारिंश-
त्संस्कारा इत्यादिषु । गीतासु च—

"यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् । सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः" ॥ इति

यज्ञेनेति द्रव्ययज्ञा ज्ञानयज्ञाश्च संस्कारार्थाः । संस्कृतस्य च विशुद्धसत्त्वस्य ज्ञानोत्पत्तिरप्रतिबन्धेन भविष्य-
त्यतो यज्ञेन विविदिषन्ति । दानेन दानमपि पापक्षयहेतुत्वाद्धर्मवृद्धिहेतुत्वाच्च । तपसा तप इत्यविशेषेण
१० कृच्छ्रचान्द्रायणादिप्राप्तौ विशेषणमनाशकेनेति । कामानशनमनाशकं न तु भोजननिवृत्तिः भोजननिवृत्तौ म्रियत एव
नाऽऽत्मवेदनम् ।

वेदानुवचनयज्ञदानतपःशब्देन सर्वमेव नित्यं कर्मोपलक्ष्यते । एवं काम्यवर्जितं नित्यं कर्मजातं सर्वमात्म-
ज्ञानोत्पत्तिद्वारेण मोक्षसाधनत्वं प्रतिपद्यते । एवं कर्मकाण्डेनास्यैकवाक्यतावगतिः । एवं यथोक्तेन न्यायेनैतमेवाऽऽ-
त्मानं विदित्वा यथाप्रकाशितं मुनिर्भवति मननान्मुनिर्योगी भवतीत्यर्थः । एतमेव विदित्वा मुनिर्भवति नान्यम् ।
१५ नन्वन्यवेदनेऽपि मुनित्वं स्यात्कथमवधार्यत एतमेवेति । बाढमन्यवेदनेऽपि मुनिर्भवेत् । किन्त्वन्यवेदने न मुनिरेव
स्यात्किं तर्हि कर्म्यपि भवेत्सः । एतं त्वौपनिषदं पुरुषं विदित्वा मुनिरेव स्यान्न तु कर्मी । अतोऽसाधारणं मुनित्वं
विवक्षितमस्येत्यवधारयत्येतमेवेति । एतस्मिन्हि विदिते केन कं पश्येदित्येवं क्रियासम्भवान्मननमेव स्यात् ।
किञ्चैतमेवाऽऽत्मानं स्वं लोकमिच्छन्तः प्रार्थयन्तः प्रव्राजिनः प्रव्रजनशीलाः प्रव्रजन्ति प्रकर्षेण व्रजन्ति सर्वाणि
कर्माणि संन्यस्यन्तीत्यर्थः ।

२० मित्याशङ्क्याऽऽह—नैवेति । कर्मणामप्रमाणत्वेऽपि परम्परया ज्ञानहेतुत्वाद्विविदिषाश्रुतिरविरुद्धेति समाधत्ते—नैष दोष
इति । तदेव स्फुटयति—कर्मभिरिति । तत्र श्रुत्यन्तरं प्रमाणयति—तथा हीति । ततो नित्याद्यनुष्ठानाद्विशुद्धधीरा-
त्मानं सदा चिन्तयन्नुपनिषद्भिस्तं पश्यतीत्यर्थः । आदिशब्देन "कषायपक्तिः" इत्यादिस्मृतिसंग्रहः ।

नित्यकर्मणां संस्कारार्थत्वे प्रमाणं पृच्छति—कथमिति । यद्यपि श्रुतिस्मृतिभ्यां कर्मभिः संस्कृतस्योपनिष-
द्भिरात्मा ज्ञातुं शक्यते तथाऽपि तेषां संस्कारार्थत्वे किं प्रमाणमिति प्रश्ने श्रुतिस्मृती प्रमाणयति—स ह वा इत्यादिना ।
२५ किं पुनः स्मृतिशास्त्रं तदाह—अष्टाचत्वारिंशदिति । अष्टावनायासादयो गुणाश्चत्वारिंशद्गर्भाधानादयः संस्कारा इति
विभागः । बहुवचनोपात्तं स्मृत्यन्तरमाह—गीतासु चेति । पदान्तरमादाय व्याचष्टे—यज्ञेनेतीति । तेषां संस्कारार्थत्वेऽपि
कथं ज्ञानसाधनत्वमित्याशङ्क्याऽऽह—संस्कृतस्येति । दानेन विविदिषन्तीति पूर्वेण सम्बन्धः । कथं पुनः स्वतन्त्रं
दानं विविदिषाकारणमत आह—दानमपीति । विविदिषाहेतुरिति शेषः । तपसेत्यत्रापि पूर्ववदन्वयः । कामानशनं
रागद्वेषरहितैरिन्द्रियैर्विषयसेवनं यदृच्छालाभसन्तुष्टत्वमिति यावत् । यथाश्रुतार्थत्वे का हानिरित्याशङ्क्याऽऽह—
३० न त्विति ।

भवतूपात्तानां वेदानुवचनादीनामिष्यमाणे ज्ञाने विनियोगस्तथाऽपि कथं सर्वं नित्यं कर्म तत्र विनियुक्त-
मित्याशङ्क्याऽऽह—वेदानुवचनेति । उपलक्षणफलमाह—एवमिति । प्रणाड्या कर्मणो मुक्तिहेतुत्वे काण्डद्वयस्यैक-
वाक्यत्वमपि सिध्यतीत्याह—एवं कर्मेति । वाक्यान्तरमवतार्य व्याकरोति—एवमिति । तस्यैवार्थमाह—यथोक्तेनेति ।
यज्ञाद्यनुष्ठानाद्विशुद्धिद्वारा विविदिषोत्पत्तौ गुरुपादोपसर्पणं श्रवणादि चेत्यनेन क्रमेणेत्यर्थः । यथाप्रकाशितं मोक्षप्रकरणं
३५ मन्त्रब्राह्मणाभ्यामुक्तलक्षणमित्यर्थः । योगिशब्दो जीवन्मुक्तविषयः । एवकारं व्याकरोति—एतमेवेति । अवधारण-
माक्षिप्य समाधत्ते—नन्वित्यादिना । एवकारस्तर्हि त्यज्यतामित्याशङ्क्याऽऽह—किन्त्विति । आत्मवेदनेऽपि कर्मित्व-
स्यादिति चेन्नेत्याह—एतं त्विति । कथमात्मविदोऽपि मुनित्वमसाधारणं तदाह—एतस्मिन्निति । तथाऽऽत्मविदो
न कर्मित्वमित्याह—किञ्चेति । आत्मलोकमिच्छता मुमुक्षूणामपि कर्मत्यागश्रवणादात्मविदा न कर्मितेति किं वक्तव्य-
मित्यर्थः । ताच्छील्यं वैराग्यातिशयशालित्वम् ।

एतमेव लोकमिच्छन्त इत्यवधारणान्न बाह्यलोकत्रयेप्सूनां पारिव्राज्येऽधिकार इति गम्यते। न हि गङ्गाद्वारं प्रतिपित्सुः काशीदेशनिवासी पूर्वाभिमुखः प्रैति। तस्माद्बाह्यलोकत्रयार्थिनां पुत्रकर्मापरब्रह्मविद्याः साधनम्। "पुत्रेणायं लोको जय्यो नान्येन कर्मणा" इत्यादिश्रुतेः। अतस्तदर्थिभिः पुत्रादिसाधनं प्रत्याख्याय न पारिव्राज्यं प्रतिपत्तुं युक्तम्। अतत्साधनत्वात्पारिव्राज्यस्य। तस्मादेतमेव लोकमिच्छन्तः प्रव्रजन्तीति युक्तमवधारणम्। आत्मलोकप्राप्तिर्ह्यविद्यानिवृत्तौ स्वात्मन्यवस्थानमेव। तस्मादात्मानं चेल्लोकमिच्छति यस्तस्य सर्वक्रियोपरम एवाऽऽत्मलोकसाधनं मुख्यमन्तरङ्गम्। यथा पुत्रादिरेव बाह्यलोकत्रयस्य। पुत्रादिकर्मणः आत्मलोकं प्रत्यसाधनत्वात्। असम्भवेन विरुद्धत्वमवोचाम। तस्मादात्मानं लोकमिच्छन्तः प्रव्रजन्त्येव सर्वक्रियाभ्यो निवर्तेरन्नेवेत्यर्थः। यथा च बाह्यलोकत्रयार्थिनः प्रतिनियतानि पुत्रादीनि साधनानि विहितान्येवमात्मलोकार्थिनः सर्वैषणानिवृत्तिः पारिव्राज्यं ब्रह्मविदो विधीयत एव। ५

कुतः पुनस्त आत्मलोकार्थिनः प्रव्रजन्त्येवेत्युच्यते। तत्रार्थवादवाक्यरूपेण हेतुं दर्शयति। एतद्ध स्म वै तत्। तदेतत्पारिव्राज्ये कारणमुच्यते—ह स्म वै किल पूर्वेऽतिक्रान्तकालीना विद्वांस आत्मज्ञाः प्रजां कर्मापरब्रह्मविद्यां च। प्रजोपलक्षितं हि त्रयमेतद्बाह्यलोकत्रयसाधनं निर्दिश्यते प्रजामिति। प्रजां किं? न कामयन्ते पुत्रादिलोकत्रयसाधनं नानुतिष्ठन्तीत्यर्थः। नन्वपरब्रह्मदर्शनमनुतिष्ठन्त्येव। तद्बलाद्धि व्युत्थानम्। न, अपवादात्। ब्रह्म तं परादाद्योऽन्यत्राऽऽत्मनो ब्रह्म वेद सर्वं तं परादादित्यपरब्रह्मदर्शनमप्यपवदत्येव। अपरब्रह्मणोऽपि सर्वमध्यान्तर्भावात्। यत्र नान्यत्पश्यतीति च। पूर्वापरबाह्यान्तरदर्शनप्रतिषेधाच्चापूर्वमनपरमनन्तरमबाह्यमिति। तत्केन कं पश्येद्धि- १० १५

अवधारणसामर्थ्यसिद्धमर्थमाह—एतमेवेति। पारिव्राज्ये लोकत्रयार्थिनामनधिकारे दृष्टान्तमाह—न हीति। लोकत्रयार्थिनश्चेत्पारिव्राज्ये नाधिक्रियन्ते कुत्र तर्हि तेषामधिकारस्तत्राऽऽह—तस्मादिति। स्वर्गकामस्य स्वर्गसाधने यागेऽधिकारवल्लोकत्रयार्थिनामपि तत्साधने पुत्रादावधिकार इत्यर्थः। पुत्रादीनां बाह्यलोकसाधनत्वे प्रमाणमाह—पुत्रेणेति। पुत्रादीनां लोकत्रयसाधनत्वे सिद्धे फलितमाह—अत इति। अतत्साधनत्वं लोकत्रयं प्रत्यनुपायत्वम्। अवधारणार्थमुपसंहरति—तस्मादिति। लोकत्रयार्थिनां पारिव्राज्येऽनधिकारादिति यावत्। आत्मलोकस्य स्वरूपत्वेन सदाऽऽप्तत्वात्कथं तत्रेच्छेत्याशङ्क्याऽऽह—आत्मेति। तस्याऽऽत्मत्वेन नित्यप्राप्तत्वेऽप्यविद्यया व्यवहितत्वात्प्रेप्सा सम्भवतीति भावः। भवत्वात्मलोकप्रेप्सा तथाऽपि किं तत्प्राप्तिसाधनं तदाह—तस्मादिति। अविद्यावशात्तदीप्सासम्भवादित्यर्थः। तदिच्छाया दौर्लभ्यं द्योतयितुं चेच्छब्दः। मुख्यत्वं श्रुत्यक्षरप्रतिपन्नत्वम्। प्रनाडिकासाधनेभ्यो वेदानुवचनादिभ्यो विशेषमाह—अन्तरङ्गमिति। पारिव्राज्यमेवाऽऽत्मलोकस्यान्तरङ्गसाधनमिति दृष्टान्तमाह—यथेति। तथा पारिव्राज्यमेवाऽऽत्मलोकस्य साधनमिति शेषः। पारिव्राज्यमेवेति नियमे हेतुमाह—पुत्रादीति। तस्यान्यत्र विनियुक्तत्वादिति शेषः। यद्यपि केवलं पुत्रादिकं नाऽऽत्मलोकप्रापकं तथाऽपि पारिव्राज्यसमुच्चितं तथा स्यादित्याशङ्क्याऽऽह—असम्भवेनेति। न हि परिव्राजकस्य पुत्रादि तद्वतो वा पारिव्राज्यं सम्भवति। उक्तं च समुच्चयं निराकुर्वद्भिः सपरिकरस्य ज्ञानस्य कर्मादिना विरुद्धत्वं तेन कुतः समुच्चितं पुत्राद्यात्मलोकप्रापकमित्यर्थः। साधनान्तरासम्भवे फलितमुपसंहरति—तस्मादात्मानमिति। प्रव्रजन्तीति वर्तमानापदेशान्नात्र विधिरस्तीत्याशङ्क्याग्निहोत्रं जुहोतीतिवद्विधिमाश्रित्याऽऽह—यथा चेति। २० २५ ३०

पारिव्राज्यविधिमुक्त्वा तदपेक्षितमर्थवादमाकाङ्क्षापूर्वकमुत्थापयति—कुतः पुनरिति। उत्थापितस्यार्थवादस्य तात्पर्यमाह—तत्रेति। आत्मलोकार्थिना पारिव्राज्यनियमः सप्तम्यर्थः। अर्थवादस्यान्यक्षराणि व्याचष्टे—तदेतदिति। क्रियापदेन स्मेति सम्बध्यते। निपातद्वयस्यार्थमाह—किलेति। प्रजा न कामयन्त इत्युत्तरत्र सम्बन्धः। प्रजामात्रे श्रुते कथं कर्मादि गृह्यते तत्राऽऽह—प्रजेति। आकाङ्क्षापूर्वकमन्वयमन्वाचष्टे—प्रजां किमिति। अकामयमानत्वस्य पर्यवसानं दर्शयति—पुत्रादीति। पूर्वे विद्वांसः साधनत्रयं नानुतिष्ठन्तीत्युक्तमाक्षिपति—नन्विति। एषणाभ्यो व्युत्तिष्ठतां किं तदनुष्ठानेनेत्याशङ्क्याऽऽह—तद्बलाद्धीति। आत्मविदामपरविद्यानुष्ठानं दूषयति—नापवादादिति। अथात्र सर्वस्याऽनात्मनो दर्शनमेवापोद्यते न त्वपरस्य ब्रह्मणो दर्शनमत आह—अपरब्रह्मणोऽपीति। तदपवादे श्रुत्यन्तरमाह—यत्रेति। यस्मिन्भूम्नि स्थितश्चक्षुरादिभिरन्यन्न पश्यति न शृणोतीत्यादिना च दर्शनादिव्यवहारस्य वारितत्वादात्मविदो न युक्तमपरब्रह्मदर्शनमित्यर्थः। तत्रैव हेत्वन्तरमाह—पूर्वेति। प्रतिषेधप्रकारमभिनयति—अपूर्वमिति। इतश्चाऽऽत्मविदां ३५

जानीयादिति च । तस्मान्नाऽऽत्मदर्शनव्यतिरेकेणान्यद्व्युत्थानकारणमपेक्षते ।

कः पुनस्तेषामभिप्राय इत्युच्यते किं प्रयोजनं फलं साध्यं करिष्यामः प्रजया साधनेन । प्रजा हि बाह्य-
लोकसाधनं निर्ज्ञाता । स च बाह्यलोको नास्त्यस्माकमात्मव्यतिरिक्तः । सर्वं ह्यस्माकमात्मभूतमेव सर्वस्य च
वयमात्मभूताः । आत्मा च नाऽऽत्मत्वादेव न केनचित्साधनेनोत्पाद्य आप्यो विकार्यः संस्कार्यो वा । यदप्यात्मयाजिनः
५ संस्कारार्थं कर्मेति तदपि कार्यकरणात्मदर्शनविषयमेव । इदं मेऽनेनाङ्गं संस्क्रियत इत्यङ्गाङ्गित्वादिश्रवणात् । न
हि विज्ञानघनैकरसनैरन्तर्यदर्शिनोऽङ्गाङ्गिसंस्कारोपधानदर्शनं सम्भवति । तस्मान्न किंचित्प्रजादिसाधनैः करि-
ष्यामः । अविदुषां हि तत्प्रजादिसाधनैः कर्तव्यं फलम् । न हि मृगतृष्णिकायामुदकपानाय तदुदकदर्शी प्रवृत्त इति
तत्रोषरमात्रमुदकाभावं पश्यतोऽपि प्रवृत्तिर्युक्ता । एवमस्माकमपि परमार्थात्मलोकदर्शिनां प्रजादिसाधनसाध्ये
मृगतृष्णिकादिसमेऽविद्वद्दर्शनविषये न प्रवृत्तिर्युक्तेत्यभिप्रायः । तदेतदुच्यते—येषामस्माकं परमार्थदर्शिनां नोऽय-
१० मात्माऽशनायादिविनिर्मुक्तः साध्वसाधुभ्यामविकार्योऽयं लोकः फलमभिप्रेतम् । न चाऽऽस्याऽऽत्मनः साध्यसाधनादि-
सर्वसंसारधर्मविनिर्मुक्तस्य साधनं किंचिदेषितव्यम् । साध्यस्य हि साधनान्वेषणा क्रियते । असाध्यस्य साधना-
न्वेषणायां हि जलबुद्ध्या स्थल इव तरणं कृतं स्यात् । खे वा शाकुनपदान्वेषणम् । तस्मादेतमात्मानं विदित्वा
प्रव्रजेयुरेव ब्राह्मणा न कर्माऽऽरभेरन्नित्यर्थः । यस्मात्पूर्वे ब्राह्मणा एवं विद्वांसः प्रजामकामयमानाः ।

त एवं साध्यसाधनसंव्यवहारं निन्दन्तोऽविद्वद्विषयोऽयमिति कृत्वा किं कृतवन्त इत्युच्यते—ते ह स्म किल
१५ पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्तीत्यादि व्याख्यातम् । तस्मादात्मानं
लोकमिच्छन्तः प्रव्रजन्ति प्रव्रजेयुरित्येष विधिरर्थवादेन संगच्छते । हि सार्थवादस्यास्य लोकस्तुत्यभिमुख्यमुपपद्यते ।
प्रव्रजन्तीत्यस्यार्थवादरूपो ह्येतद्ध स्मेत्यादिरुत्तरो ग्रन्थः । अर्थवादश्चेन्नार्थवादान्तरमपेक्षेत । अपेक्षते त्वेतद्ध
स्मेत्याद्यर्थवादं प्रव्रजन्तीत्येतत् । यस्मात्पूर्वे विद्वांसः प्रजादिकर्मभ्यो निवृत्ताः प्रव्रजितवन्त एव तस्मादधुनातना
अपि प्रव्रजन्ति प्रव्रजेयुरित्येवं सम्बध्यमानं न लोकस्तुत्यभिमुखं भवितुमर्हति । विज्ञानसमानकर्तृकत्वोपदेशादित्यानाऽ-
२० वोचाम । वेदानुवचनादिसहपाठाच्च । यथाऽऽत्मवेदनसाधनत्वेन विहितानां वेदानुवचनादीनां यथार्थत्वमेव नार्थ-
नापरब्रह्मदर्शनमित्याह—तत्केनेति । अपरब्रह्मदर्शनासम्भवे किं तेषामेषणाभ्यो व्युत्थाने कारणमित्याशङ्क्याऽऽह—
तस्मादिति ।

साधनत्रयमननुतिष्ठतामभिप्रायं प्रश्नपूर्वकमाह—कः पुनरित्यादिना । कैवल्यमेव तत्साध्यं फलमित्या-
शङ्क्याऽऽह—प्रजा हीति । निर्ज्ञाता सोऽयमित्यादिश्रुताविति शेषः । स एव तर्हि प्रजया साध्यतामिति चेन्नेत्याह—
२५ स चेति । आत्मव्यतिरिक्तो नास्तीत्युक्तमुपपादयति—सर्वं हीति । आत्मव्यतिरिक्तस्यैव लोकस्य प्रजादिसाध्यत्व-
मिष्यतामिति चेन्नेत्याह—आत्मा चेति । आत्मयाजिनः संस्कारार्थं कर्मेत्यङ्गीकारादात्मनोऽस्ति संकार्यत्वमित्या-
शङ्क्याऽऽह—यदपीति । अथाङ्गाङ्गित्वं संस्कार्यत्वं च मुख्यात्मदर्शनविषयमेव किं नेष्यते तत्राऽऽह—न हीति ।
आत्मविदां प्रजादिसाध्याभावमुपसंहरति—तस्मान्नेति । केषां तर्हि प्रजादिभिः साध्यं फलं तदाह—अविदुषां हीति ।
केषांचित्पुत्रादिषु प्रवृत्तिश्चेत्तेनैव न्यायेन विदुषामपि तेषु प्रवृत्तिः स्यादित्याशङ्क्याऽऽह—न हीति । तत्र प्रवृत्तिरिति
३० सम्बन्धः । अविद्वद्दर्शनविषय इतिच्छेदः । उक्तेऽर्थे वाक्यमवतार्य व्याचष्टे—तदेतदिति । आत्मा चेत्तदभिप्रेतं फलं तर्हि
तत्र साधनेन भवितव्यमित्याशङ्क्याऽऽह—न चेति । क्व तर्हि साधनमेष्टव्यमित्याशङ्क्याऽऽह—साध्यस्येति । विपक्षे
दोषमाह—असाध्यस्येति । येषामित्यादिवाक्यार्थमुपसंहरति—तस्मादिति । ब्राह्मणानां ब्रह्मविदां प्रजादीभिः साध्या-
भावादिति यावत् ।

वाक्यान्तरं प्रश्नद्वारेणावतार्य पाञ्चमिकं व्याख्यानं तस्य स्मारयति—त एवमित्यादिना । यद्यर्थोऽयमर्थवादस्त
३५ विधिं निगमयति—तस्मादिति । महानुभावोऽयमात्मलोको यत्तदर्थिनो दुष्करमपि पारिव्राज्यं कुर्वन्तीति स्तुतिरत्र
विवक्षिता न विधिरित्याशङ्क्याऽऽह—न हीति । तदेव प्रपञ्चयति—प्रव्रजन्तीत्यस्येति । तथाऽपि प्रव्रजन्तीतिवाक्य-
स्यार्थवादत्वं किं न स्यादित्याशङ्क्याऽऽह—अर्थवादश्चेदिति । अपेक्षाप्रकारमेव प्रकटयन्नस्य स्तुत्यभिमुखत्वाभावा-
द्विधित्वमेवेत्याह—यस्मादिति । किंच विदित्वा व्युत्थाय भिक्षाचर्यं चरन्तीत्यत्र विज्ञानेन समानकर्तृकत्वं व्युत्थानादे-
रुपदिश्यते विज्ञानं च सर्वासूपनिषत्सु विधीयतेऽतो व्युत्थानमपि विधिमर्हतीत्युक्तं तथा चात्रापि व्युत्थानापरपर्यायं
४० पारिव्राज्यं विधेयमित्याह—विज्ञानेति । इतश्च पारिव्राज्यवाक्यमर्थवादो न भवतीत्याह—वेदेति । तदेव साधयति—
पारिव्राज्यस्य विधेयत्वे हेत्वन्तरमाह—फलेति । पुत्रादिफलापेक्षया पारिव्राज्यफल विभागेनोप-
पत्त्येत्यादिना । पारिव्राज्यस्य विधेयत्वे हेत्वन्तरमाह—फलेति ।

वादत्वं तथा तैरेव सह पठितस्य पारिव्राज्यस्याऽऽत्मलोकप्राप्तिसाधनत्वेनार्थवादत्वमयुक्तम् । फलविभागो-
पदेशाच्च । एतमेवाऽऽत्मानं लोकं विदित्वेत्यन्यस्माद्बाह्याल्लोकादात्मानं फलान्तरत्वेन प्रविभजति । यथा पुत्रेणै-
वायं लोको जय्यो नान्येन कर्मणा कर्मणा पितृलोक इति । न च प्रव्रजन्तीत्येतत्प्राप्तवल्लोकस्तुतिपरम् । प्रधान-
वच्चार्थवादापेक्षम् सकृच्छ्रुतं स्यात् । तस्माद्भ्रान्तिरेवैषा लोकस्तुतिपरमिति ।

न चानुष्ठेयेन पारिव्राज्येन स्तुतिरुपपद्यते । यदि पारिव्राज्यमनुष्ठेयमपि सदन्यस्तुत्यर्थं स्याद्दर्शपूर्णमासा- ५
दीनामप्यनुष्ठेयानां स्तुत्यर्थता स्यात् । न चान्यत्र कर्तव्यतैतस्माद्विषयान्निर्ज्ञाता यत इह स्तुत्यर्थो भवेत् । यदि पुनः
क्वचिद्विधिः परिकल्प्येत पारिव्राज्यस्य स इहैव मुख्यो नान्यत्र सम्भवति । यदप्यनधिकृतविषये पारिव्राज्यं
परिकल्प्यते तत्र वृक्षाद्यारोहणाद्यपि पारिव्राज्यवत्कल्प्येत । कर्तव्यत्वेनानिर्ज्ञातत्वाविशेषात् । तस्मात्स्तुतित्व-
गन्धोऽप्यत्र न शक्यः कल्पयितुम् ।

यद्ययमात्मा लोक इष्यते किमर्थं तत्प्राप्तिसाधनत्वेन कर्माण्येव नाऽऽरभेरन्किं पारिव्राज्येनेति । अत्रोच्यते– १०
अस्याऽऽत्मलोकस्य कर्मभिरसंबन्धात् । यमात्मानमिच्छन्तः प्रव्रजेयुः स आत्मा साधनत्वेन फलत्वेन चोत्पाद्यत्वा-
दिप्रकाराणामन्यतमत्वेनापि कर्मभिर्न संबध्यते । तस्मात्स एष नेति नेत्यात्माऽगृह्यो न हि गृह्यत इत्यादिलक्षणः ।
यस्मादेवंलक्षण आत्मा कर्मफलसाधनासंबन्धी सर्वसंसारधर्मविलक्षणोऽशनायाद्यतीतोऽस्थूलादिधर्मवानजोऽजरोऽम-
रोऽमृतोऽभयः सैन्धवघनवद्विज्ञानैकरसस्वभावः स्वयंज्योतिरेक एवाद्वयोऽपूर्वोऽनपरोऽनन्तरोऽबाह्य इत्येतदागमत-
स्तर्कतश्च स्थापितं विशेषतश्चेह जनकयाज्ञवल्क्यसंवादेऽस्मिस्तस्मादेवंलक्षण आत्मनि विदित आत्मत्वेन नैव १५
कर्मारम्भ उपपद्यते । तस्मादात्मा निर्विशेषः । न हि चक्षुष्मान्पथि प्रवृत्तोऽहनि कूपे कण्टके वा पतति । कृत्स्नस्य

दिश्यते । तथा च फलवत्त्वात्पुत्रादिवत्पारिव्राज्यस्य विधेयत्वसिद्धिरित्यर्थः । तदेव विवृणोति—एतमेवेति । प्रकृत-
मात्मानं स्वं लोकमापाततो विदित्वा तमेव साक्षात्कर्तुमिच्छन्त' प्रव्रजन्तीति वचनात्पुत्रादिसाध्यान्मनुष्यादि-
लोकादात्माख्यं लोकं पारिव्राज्यस्य फलान्तरत्वेन यतः श्रुतिर्विभज्याभिदधाति । अतस्तस्य विधेयत्वमप्रत्यूहमित्यर्थः ।
फलविभागोपदेशे दृष्टान्तमाह—यथेति । तथा पारिव्राज्येऽपि फलविभागोक्तेर्विधेयतेति दार्ष्टान्तिकमितिशब्दार्थः । २०
पारिव्राज्यस्य स्तुतिपरत्वाभावे हेत्वन्तरमाह—न चेति । यथा 'वायुर्वै क्षेपिष्ठे''त्यादिरर्थवादः प्राप्तार्थो देवतादिस्तुत्यर्थः
स्थितो न तथेदं स्तुतिपर तदवद्योतिशब्दाभावादित्यर्थः । किञ्च प्रधानस्य दर्शपूर्णमासादेरर्थवादापेक्षावत्पारिव्राज्यमपि
तदपेक्षमुपलभ्यते तेन तस्य दर्शादिवद्विधेयत्वं दुर्वारमित्याह—प्रधानवच्चेति । किञ्च पारिव्राज्यं सकृदेव श्रुतं चेद-
विवक्षितमन्यस्तुतिपर स्यान्न चेद सकृदेव श्रूयते "प्रव्रजन्ती''त्युपक्रम्य 'प्रजा न कामयन्ते" "व्युत्थायाथ भिक्षाचर्यं
चरन्ती''त्यभ्यासादतोऽपि न स्तुतिमात्रमेतदित्याह—सकृदिति । न चेत्तत्रापि सम्बध्यते कथं तर्हि पारिव्राज्यस्य स्तुति- २५
परत्वप्रतीतिस्तत्राऽऽह—तस्मादिति ।

अस्तु तर्हि विधेयमपि पारिव्राज्यं स्तावकमपीति चेन्नेत्याह—न चेति । विपक्षे दोषमाह—यदीति । अथ
पारिव्राज्यं यज्ञादिवदन्यत्र विधीयतामिह तु स्तुतिरेवेत्याशङ्क्याऽऽह—न चान्यत्रेति । आत्मज्ञानाधिकारादन्यत्र
पारिव्राज्यविध्यनुपलम्भादित्यर्थः । अन्यत्र विध्यनुपलम्भं समर्थयते—यदीत्यादिना । अन्यत्र प्रक्रियायामिति यावत् ।
कर्माधिकारे तत्त्यागविधेर्विरुद्धत्वादिति भावः । भवत्विह पारिव्राज्ये विधिस्तथाऽपि सर्वकर्मानधिकृतविषय. स्यादित्या- ३०
शङ्क्याऽऽह—यदपीति । तत्र कर्मानधिकृते पुंसीत्येतत् । तत्र हेतुमाह—कर्तव्यत्वेनेति । कर्मानधिकृतेन कर्तव्यतया
ज्ञातत्वं वृक्षारोहणादाविव पारिव्राज्येऽपि नास्ति तथा चानधिकृतविषये पारिव्राज्यं कल्प्यते चेत्तस्मिन्विषये वृक्षा-
रोहणाद्यपि कल्प्येताविशेषादित्यर्थ. । पारिव्राज्यस्याधिकृतविषयत्वे विधेयत्वे च सिद्धे फलितमाह—तस्मादिति ।

सार्थवादं पारिव्राज्यं व्याख्याय स एष इत्यादि व्याकर्तुं शङ्कयति—यदीति । परिहरति—अत्रेति । तदर्थिनो
नाऽऽरम्भन्ते कर्माणीति शेषः । कर्मभिरसंबन्धमात्मलोकस्य साधयति—यमात्मानमिति । तस्य कर्मासंबन्धे निष्प्र- ३५
पञ्चत्वं फलतीत्याह—तस्मादिति । आत्मनो निष्प्रपञ्चत्वेऽपि कथं तदर्थिना पारिव्राज्यसिद्धिरित्याशङ्क्याऽऽह—
यस्मादिति । निर्विशेषस्तत्र तत्र वाक्ये दर्शितस्वरूपोऽयमात्मेत्येतदागमोपपत्तिभ्या यथा पूर्वत्र स्थापितं तथैवात्रापि
ब्राह्मणद्वये विशेषतो यस्मान्निर्धारितं तस्मादस्मिन्नात्मन्यापाततो ज्ञाते कर्मानुष्ठानप्रयत्नासिद्धिरिति योजना । उक्तात्म-
विषयविवेकविज्ञानवतो न कर्मानुष्ठानमित्यत्र दृष्टान्तमाह—न हीति । ब्रह्मज्ञानफले सर्वकर्मफलान्तर्भावाच्च तदर्थिनो
मुमुक्षोर्न कर्तव्यं कर्मेत्याह—कृत्स्नस्येति । तथापि विचित्रफलानि कर्माणीति विवेकी कुतूहलवशादनुष्ठास्यतीत्या- ४०

तदेतदृचाभ्युक्तम् । एष नित्यो महिमा ब्राह्मणस्य न वर्धते कर्मणा नो कनीयान् ।
तस्यैव स्यात्पदवित्तं विदित्वा न लिप्यते कर्मणा पापकेनेति । तस्मादेवंविच्छान्तो
दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्यति सर्वमात्मानं पश्यति
नैनं पाप्मा तरति सर्वं पाप्मानं तरति नैनं पाप्मा तपति सर्वं पाप्मानं तपति
५ विपापो विरजोऽविचिकित्सो ब्राह्मणो भवत्येष ब्रह्मलोकः सम्राडेनं प्रापितोऽसीति
होवाच याज्ञवल्क्यः सोऽहं भगवते विदेहान्ददामि मां चापि सह दास्यायेति ॥२३॥

च कर्मफलस्य विद्याफलेऽन्तर्भावात् । न चायत्नप्राप्ये वस्तुनि विद्वान्यत्नमातिष्ठति ।

"अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत् । इष्टस्यार्थस्य संप्राप्तौ को विद्वान्यत्नमाचरेत् ॥"

"सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ।'

१० इति गीतासु । इहापि चैतस्यैव परमानन्दस्य ब्रह्मवित्प्राप्यस्यान्यानि भूतानि मात्रामुपजीवन्तीत्युक्तम् । अतो ब्रह्मविदां न कर्मारम्भः ।

यस्मात्सर्वैषणाविनिवृत्तः स एव नेति नेत्यात्मानमात्मत्वेनोपगम्य तद्रूपेणैव वर्तते तस्मादेतमेवंविदं नेति नेत्यात्मभूतमु हैवैते वक्ष्यमाणे न तरतो न प्राप्नुत इति युक्तमेवेति वाक्यशेषः । के ते इत्युच्यते—अतोऽस्मान्निमित्ताच्छरीरधारणादिहेतोः पापमपुण्यं कर्माकरवं कृतवानस्मि कष्टं खलु मम वृत्तमनेन पापेन कर्मणाऽहं नरकं
१५ प्रतिपत्स्य इति योऽयं पश्चात्तापं कर्म कृतवतः परितापः स एनं नेति नेत्यात्मभूतं न तरति । यथाऽतः कल्याणं फलविषयकामात्रिमित्ताद्यज्ञदानादिलक्षणं पुण्यं शोभनं कर्म कृतवानस्मि । अतोऽहमस्य फलं सुखमुपभोक्ष्ये देहान्तर इत्येषोऽपि हर्षस्तं न तरति । उभे उ हैवैष ब्रह्मविदेते कर्मणी तरति पुण्यपापलक्षणे ।

एवं ब्रह्मविदः संन्यासिन उभे अपि कर्मणी क्षीयेते पूर्वजन्मनि कृते ये ते इह जन्मनि कृते ये ते चापूर्वे च नाऽऽरभ्येते । किंच नैनं कृताकृते कृतं नित्यानुष्ठानमकृतं तस्यैवाक्रिया ते अपि कृताकृते एनं न तपतः । अनात्मज्ञं
२० हि कृतं फलदानेनाकृतं प्रत्यवायोत्पादनेन तपतः । अयं तु ब्रह्मविदात्मविद्याग्निना सर्वाणि कर्माणि भस्मीकरोति "यथैधांसि समिद्धोऽग्निः" इत्यादिस्मृतेः । शरीरारम्भकयोस्तूपभोगेनैव क्षयः । अतो ब्रह्मविदकर्मसंबन्धी ॥२२॥

तदेतद्वस्तु ब्राह्मणेनोक्तमृचा मन्त्रेणाभ्युक्तं प्रकाशितम् । एष नेति नेत्यादिलक्षणो नित्यो महिमा । अन्ये तु महिमानः कर्मकृता इत्यनित्याः । अयं तु तद्विलक्षणो महिमा स्वाभाविकत्वान्नित्यो ब्रह्मविदो ब्राह्मणस्य त्यक्तसर्वैषणस्य । कुतोऽस्य नित्यत्वमिति हेतुमाह—कर्मणा न वर्धते शुभलक्षणेन कृतेन वृद्धिलक्षणां विक्रियां न प्राप्नोति ।
२५ शङ्कयाऽऽह—नचेति । तत्र लौकिकं न्यायं दर्शयति—अर्के चेदिति । पुरोदेशे मधु लभेत चेदिति यावत् । ज्ञानफले कर्म फलान्तर्भावे मानमाह—सर्वमिति । अखिलं समग्राङ्गोपेतमित्यर्थः । तत्रैव श्रुतिं संवादयति—इहापीति । निषेधवाक्यतात्पर्यमुपसंहरति—अत इति ।

एतमित्यादि वाक्यं योजयति—यस्मादिति । उ हेति निपाताभ्यां सूचितोऽर्थो यस्मादित्यनुभाषित । इतिशब्दस्यापेक्षितं पूरयति—युक्तमिति । आकाङ्क्षापूर्वकमुत्तरवाक्यमवतार्य व्याकरोति—के ते इत्यादिना । यथोक्तात्म-
३० विदस्तापहर्षासंस्पर्शे हेतुमाह—उभे हीति ।

पुण्यपापे तरतीत्युक्ते पृथगवस्थानं तयोः शङ्क्येत तन्निरस्यति—एवमिति । निषेधवाक्योक्तक्रमेणेति यावत् । इतश्चाऽऽत्मविदो धर्मादिसंबन्धो नास्तीत्याह—किंचेति । तदेवानन्तरवाक्यव्याख्यानेन स्फोरयति—नैनमिति । तयोस्तर्हि कुत्र तापकत्वं तदाह—अनात्मज्ञं हीति । पुरुषत्वाद्ब्रह्मविदुष्यपि कृताकृतयोस्तापकत्वं स्यादित्याशङ्क्याऽऽह—अयं त्विति । अत्र भगवद्वाक्यं प्रमाणयति—यथेति । यद्यपि पूर्वोत्तरयोर्धर्माधर्मयोरनारब्धयोरात्म-
३५ विद्यावशाद्विनाशाश्लेषौ तथाऽपि प्रारब्धयोरस्ति तयोस्तापकत्वमित्याशङ्क्याऽऽह—शरीरेति । प्रकृत विद्याफलमुपसंहरति—अत इति । कर्मकार्यासंबन्धादिति यावत् ॥२२॥

उक्ते विद्याफले मन्त्रं सवादयति—तदेतदिति । एष नित्यो महिमेत्यत्र नित्यत्वमुपपादयति—अन्ये त्विति । तद्विलक्षणत्वमकर्मकृतत्वम् । अकर्मकृतो महिमा स्वाभाविकत्वान्नित्य इत्यत्राकर्मकृतत्वेन स्वाभाविकत्वमसिद्धमित्याशङ्क्याऽऽह—कुतोऽस्येति । वृद्धिरपक्षयश्चेति विक्रियाद्वयाभावेऽपि विक्रियान्तराणि भविष्यन्तीत्याशङ्क्याऽऽह—

अशुभेन कर्मणा नो कनीयान्नाप्यपक्षयलक्षणां विक्रियां प्राप्नोति। उपचयापचयहेतुभूता एव हि सर्वा विक्रिया इत्येताभ्यां प्रतिषिध्यन्ते। अतोऽविक्रियत्वान्नित्य एष महिमा। तस्मात्तस्यैव महिम्नः स्यात्भवेत्पदवित्पदस्य वेत्ता पद्यते गम्यते ज्ञायत इति महिम्नः स्वरूपमेव पदं तस्य पदस्य वेदिता। किं तत्पदवेदनेन स्यादित्युच्यते—तं विदित्वा महिमानं न लिप्यते न संबध्यते कर्मणा पापकेन धर्माधर्मलक्षणेनोभयमपि पापकमेव विदुषः।

यस्मादेवमकर्मसंबन्ध्येष ब्राह्मणस्य महिमा नेति नेत्यादिलक्षणस्तस्मादेवंविच्छान्तो बाह्येन्द्रियव्यापारत उपशान्तस्तथा दान्तोऽन्तःकरणतृष्णातो निवृत्त उपरतः सर्वैषणाविनिर्मुक्तः संन्यासी तितिक्षुर्द्वंद्वसहिष्णुः समाहित इन्द्रियान्तःकरणचलनरूपाद्व्यावृत्त्यैकाग्र्यरूपेण समाहितो भूत्वा। तदेतदुक्तं पुरस्ताद्बाल्यं च पाण्डित्यं च निर्विद्येति। आत्मन्येव स्वे कार्यकरणसंघात आत्मानं प्रत्यक्चेतयितारं पश्यति। तत्र किं तावन्मात्रं परिच्छिन्नं नेत्युच्यते—सर्वं समस्तमात्मानमेव पश्यति नान्यदात्मव्यतिरिक्तं वालाग्रमात्रमप्यस्तीत्येवं पश्यति। मननान्मुनिर्भवति जाग्रत्स्वप्नसुषुप्ताख्यं स्थानत्रयं हित्वा। एवं पश्यन्तं ब्राह्मणं नैनं पाप्मा पुण्यपापलक्षणस्तरति न प्राप्नोति। अयं तु ब्रह्मवित्सर्वं पाप्मानं तरत्यात्मभावेनैव व्याप्नोत्यतिक्रामति। नैनं पाप्मा कृताकृतलक्षणस्तपतीष्टफलप्रत्यवायोत्पादनाभ्याम्। सर्वं पाप्मानमयं तपति ब्रह्मवित्सर्वात्मदर्शनवह्निना भस्मीकरोति। स एष एवंविद्विपापो विगतधर्माधर्मो विरजो विगतरजो रजःकामो विगतकामोऽविचिकित्सश्छिन्नसंशयोऽहमस्मि सर्वात्मा परं ब्रह्मेति निश्चितमतिर्ब्राह्मणो भवति।

अयं त्वेवंभूत एतस्यामवस्थायां मुख्यो ब्राह्मणः प्रागेतस्माद्ब्रह्मस्वरूपावस्थानाद्गौणमस्य ब्राह्मण्यम्। एष ब्रह्मलोको ब्रह्मैव लोको ब्रह्मलोको मुख्यो निरुपचरितः सर्वात्मभावलक्षणो हे सम्राट्। एनं ब्रह्मलोकं परिप्रापितोऽस्यभयं नेति नेत्यादिलक्षणमिति होवाच याज्ञवल्क्यः। एवं ब्रह्मभूतो जनको याज्ञवल्क्येन ब्रह्मभावमापादितः प्रत्याह—सोऽहं त्वया ब्रह्मभावमापादितः सन्भगवते तुभ्यं विदेहान्देशान्मम राज्यं समस्तं ददामि मां च सह विदेहैर्दास्याय दासकर्मणे ददामीति चशब्दात्संबध्यते। परिसमापिता ब्रह्मविद्या सह संन्यासेन साङ्गा सेतिकर्तव्यताका। परिसमाप्तः परमपुरुषार्थः। एतावत्पुरुषेण कर्तव्यमेषा निष्ठैषा परा गतिरेतन्निःश्रेयसमेतत्प्राप्य कृतकृत्यो ब्राह्मणो भवत्येतत्सर्ववेदानुशासनमिति ॥२३॥

उपचयेति। एताभ्या निषेधाभ्यायिति यावत्। आत्मनः सर्वविक्रियाराहित्ये फलितमाह—अत इति। तस्य नित्यत्वेऽपि किं तदाह—तस्मादिति। अधर्मलक्षणेनेति वक्तव्ये किमिदं धर्माधर्मलक्षणेनेत्युक्तमत आह—उभयमपीति। संसारहेतुत्वाविशेषादित्यर्थः।

तस्मादित्यादिवाक्यं व्याचष्टे—यस्मादिति। एवंविदात्मा कर्मतत्फलसंबन्धशून्य इत्यापाततो जानन्नित्यर्थः। विशेषणाभ्यामुत्सर्गतो विहितस्योभयविधकरणव्यापारोपरमस्य यावज्जीवादिश्रुतिविहितं कर्मापवादस्तस्माद्विरक्तस्यापि न नित्यादित्यागः। "उत्सर्गस्यापवादेन बाधः कस्य न संमतः" इत्यादिन्यायादित्याशङ्क्याऽऽह—उपरत इति। जीवनविच्छेदव्यतिरिक्तशीतादिसहिष्णुत्व तितिक्षुत्वम्। यत्र कर्तुः स्वातन्त्र्यं तेषां कर्मणां निवृत्तिः शमादिपदैरुक्ता। यत्र तु सम्यग्धीविरोधिनी निद्रालस्यादौ पुंसो न स्वातन्त्र्यं तन्निवृत्तिः समाधानम्। समाहितो भूत्वा पश्यतीति संबन्धः। पश्यतीति वर्तमानापदेशात्कथ विशेषणेषु सङ्क्रामितो विधिरित्याशङ्क्याऽऽह—तदेतदिति। यथोक्तैः साधनैरुदिताया विद्याया किं स्यादित्याशङ्क्याऽऽह—एवमिति। तस्य पुण्यपापासंस्पर्शे हेतुमाह—अयं त्विति। इतश्च विदुषो न कर्मसंबन्धोऽस्तीत्याह—नैनमिति। किमिति पाप्मा ब्रह्मविद न तपतीत्याशङ्क्याऽऽह—सर्वमिति।

कथ ब्राह्मणो भवतीत्यपूर्ववदुच्यते प्रागपि ब्राह्मण्यस्य सत्त्वादित्याशङ्क्याऽऽह—अयं त्विति। मुख्यत्वमबाधितत्वम्। सफलां विद्यां मन्त्रब्राह्मणाभ्यामुपदिश्योपसंहरति—एष इति। तत्र कर्मधारयसमासं सूचयति—ब्रह्मैवेति। तथाविधस्य सपरिग्रहे प्रकरणमनुग्राहकमभिप्रेत्याह—मुख्य इति। तथाऽपि किं मम सिद्धमिति तदाह—एनमिति। आत्मीयं विद्यालाभ द्योतयितु राज्ञो वचनमित्याह—एवमिति। सति वक्तव्यशेषे कथमित्थं राज्ञो वचनमित्याशङ्क्याऽऽह—परिसमापितेति। तथाऽपि परमपुरुषार्थस्य वक्तव्यत्वमित्याशङ्क्याऽऽह—परिसमाप्त इति। कर्तव्यान्तरं वक्तव्यमस्तीत्याशङ्क्याऽऽह—एतावदिति। तथाऽपि यत्र निष्ठा कर्तव्या तद्वाच्यमित्याशङ्क्याऽऽह—एषेति। तथाऽपि परमा निष्ठाऽन्याऽस्तीति चेन्नेत्याह—एषेति। निश्चितं श्रेयोऽन्यदस्तीत्याशङ्क्याऽऽह—एतदिति। तथाऽपि कृतकृत्यतया मुख्यब्राह्मण्यसिद्ध्यर्थं वक्तव्यान्तरमस्तीत्याशङ्क्याऽऽह—एतत्प्राप्येति। किमस्या प्रतिज्ञापरम्परायां नियामकमित्याशङ्क्याऽऽह—एतदिति। निरुपाधिकब्रह्मज्ञानात्कैवल्यमिति गमयितुमितिशब्दः ॥२३॥

स वा एष महानज आत्माऽन्नादो वसुदानो विन्दते वसु य एवं वेद ॥२४॥

स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयो
ब्रह्माभयं वै ब्रह्माभयं हि वै ब्रह्म भवति य एवं वेद ॥२५॥

इति बृहदारण्यकोपनिषदि चतुर्थाध्यायस्य चतुर्थं ब्राह्मणम् ॥४॥

५ योऽयं जनकयाज्ञवल्क्याख्यायिकायां व्याख्यात आत्मा स वा एष महानज आत्माऽन्नादः सर्वभूतस्थः सर्वान्नानामत्ता वसुदानो वसु धनं सर्वप्राणिकर्मफलं तस्य दाता प्राणिनां यथाकर्म फलेन योजयितेत्यर्थः। तमेतमजमन्नादं वसुदानमात्मानमन्नादवसुदानगुणाभ्यां युक्तं यो वेद स सर्वभूतेष्वात्मभूतोऽन्नमत्ति विन्दते च वसु सर्वं कर्मफलजातं लभते सर्वात्मत्वादेव य एवं यथोक्तं वेद। अथवा दृष्टफलार्थिभिरप्येवंगुण उपास्यः। तेनान्नादो वसोश्च लब्धा दृष्टेनैव फलेनान्नात्तृत्वेन गोश्वादिना चास्य योगो भवतीत्यर्थः ॥२४॥

१० इदानीं समस्तस्यैवाऽऽरण्यकस्य योऽर्थ उक्तः स समुच्चित्यास्यां कण्डिकायां निर्दिश्यत एतावान्समस्तारण्यकार्थ इति। स वा एष महानज आत्माऽजरो न जीर्यत इति न विपरिणमत इत्यर्थः। अमरो यस्माच्चाजरस्तस्मादमरो न म्रियत इत्यजरः। यो हि जायते जीर्यते च स विनश्यति म्रियते वा। अयं त्वजत्वादजरत्वाच्चाविनाशी यतोऽत एवामृतः। यस्माज्जनिप्रभृतिभिस्त्रिभिर्भावविकारैर्वर्जितस्तस्मादितरैरपि भावविकारैस्त्रिभिस्तत्कृतैश्च कामकर्ममोहादिभिर्मृत्युरूपैर्वर्जित इत्येतत्। अभयोऽत एव। यस्माच्चैवं पूर्वोक्तविशेषणस्तस्माद्भयवर्जितः
१५ भयं च हि नामाविद्याकार्यं तत्कार्यप्रतिषेधेन भावविकारप्रतिषेधेन चाविद्यायाः प्रतिषेधः सिद्धो वेदितव्यः। अभय आत्मैवंगुणविशिष्टः किमसौ ब्रह्म परिवृढं निरतिशयं महदित्यर्थः। अभयं वै ब्रह्म। प्रसिद्धमेतल्लोकेऽभयं ब्रह्मेति। तस्माद्युक्तमेवंगुणविशिष्ट आत्मा ब्रह्मेति।

य एवं यथोक्तमात्मानमभयं ब्रह्म वेद सोऽभयं हि वै ब्रह्म भवति। एष सर्वस्या उपनिषदः संक्षिप्तोऽर्थ उक्तः। एतस्यैवार्थस्य सम्यक्प्रबोधायोत्पत्तिस्थितिप्रलयादिकल्पना क्रियाकारकफलाध्यारोपणा चाऽऽत्मनि कृता
२० तदपोहेन च नेति नेतीत्यध्यारोपितविशेषापनयद्वारेण पुनस्तत्त्वमावेदितम्। यथैकप्रभृत्यापरार्धसंख्यास्वरूपपरि-

संप्रति सोपाधिकब्रह्मज्ञानादभ्युदयं दर्शयति—योऽयमित्यादिना। ईश्वरश्चेत्प्राणिभ्यः कर्मफलं ददाति तर्हि तस्य वैषम्यनैर्घृण्ये स्यातामित्याशङ्क्याऽऽह—प्राणिनामिति। उपास्यस्वरूपं दर्शयित्वा तदुपासनं सफलं दर्शयति—तमेतमिति। सर्वात्मत्वफलमुपासनमुक्त्वा पक्षान्तरमाह—अथवेति। दृष्टं फलमन्नात्तृत्वं धनलाभश्च। उक्तगुणकमीश्वरं ध्यायतः फलमाह—तेनेति। तदेव फलं स्पष्टयति—दृष्टेनेति। अन्नात्तृत्वं दीप्ताग्नित्वम् ॥२४॥

२५ निरुपाधिकब्रह्मज्ञानान्मुक्तिरुक्ता सोपाधिकब्रह्मध्यानाच्चाभ्युदय उक्तस्तथा च किमुत्तरकण्डिकयेत्याशङ्क्याऽऽह—इदानीमिति। अजत्वाच्चाविनाशीति वक्तुं चशब्दः। कथं जन्मजराभावयोरमरत्वाविनाशित्वसाधकत्वं तदाह—यो हीति। अयं त्वजत्वादविनाश्यजरत्वाच्चामरोऽमरत्वाच्चाविनाशीति योजना। मरणायोग्यत्वमुपजीव्य मरणकार्याभावं दर्शयति—अत एवेति। जन्मापक्षयविनाशानामेव भावविकाराणामिह मुखतो निषेधाद्वृद्ध्यादीनि विकारान्तराण्यात्मनि भविष्यन्ति विशेषनिषेधस्य शेषाभ्यनुज्ञापरत्वादित्याशङ्क्याऽऽह—यस्मादिति। इतरे
३० सत्त्वविवृद्धिविपरिणामाः। अत एवाभय इत्युक्तं विवृणोति—यस्माच्चेति। किं तद्भयं तदाह—भयं चेति। अविद्यानिषेधविशेषणाभावादात्मानं सा सदा स्पृशतीत्याशङ्क्याऽऽह—तत्कार्येति। विशेषणान्तरं प्रश्नपूर्वकमुत्थाप्य व्याकरोति—अभय इति। कथं पुनरभयगुणविशिष्टस्याऽऽत्मनो ब्रह्मत्वं तदाह—अभयमिति। वैशब्दार्थमाह—प्रसिद्धमिति। लोकशब्दः शास्त्रस्याप्युपलक्षणम्।

वेद्यस्वरूपमुक्त्वा विद्याफलं कथयति—य एवमिति। कण्डिकार्थमुपसंहरति—एष इति। सृष्ट्यादेरपि
३५ तदर्थत्वात्किमित्यत्राविह नोपसंह्रियते तत्राऽऽह—एतस्येति। सृष्ट्यादेरारोपितत्वे गमकमाह—तदपोहेनेति। तच्छब्दः सृष्ट्यादिप्रपञ्चविषयः। तदपोहेनेति यदुक्तं तदेव स्फुटयति—नेतीति। अध्यारोपापवादन्यायेन तत्त्वस्याऽऽवेदितत्वादारोपितं भवत्येव सृष्ट्यादिद्वैतमित्यर्थः। अध्यारोपापवादन्यायस्य पङ्कप्रक्षालनन्यायविरुद्धत्वात्तत्त्वं विवक्षितं चेत्तदेवोच्यतां कृतं सृष्ट्या द्वैतारोपेणेत्याशङ्क्याऽऽह—यथेति। उदाहरणान्तरमाह—यथा चेति। दृष्टान्तद्वयमनूद्य

ज्ञानाय रेखा[1]ध्यारोपणं कृत्वैकेयं रेखा दशेयं शतेयं सहस्रेयमिति ग्राहयत्यवगमयति संख्यास्वरूपं केवलं न तु संख्याया रेखात्मत्वमेव यथा चाकारादीन्यक्षराणि विजिग्राहयिषुः पत्रमषीरेखादिसंयोगोपायमास्थाय वर्णानां सतत्त्वमावेदयति न पत्रमष्याद्यात्मतामक्षराणां ग्राहयति तथा चेहोत्पत्त्याद्यनेकोपायमास्थायैकं ब्रह्मतत्त्वमावेदितम्। पुनस्तत्कल्पितोपायजनितविशेषपरिशोधनार्थं नेति नेतीति तत्त्वोपसंहारः कृतः। तदुपसंहृतं पुनः परिशुद्धं केवलमेव सफलं ज्ञानमन्तेऽस्यां कण्डिकायामिति ॥२५॥ ५

इति श्रीमद्बृहदारण्यकोपनिषद्भाष्ये चतुर्थाध्यायस्य चतुर्थं ब्राह्मणम् ॥४॥

आगमप्रधानेन मधुकाण्डेन ब्रह्मतत्त्वं निर्धारितम्। पुनस्तस्यैवोपपत्तिप्रधानेन याज्ञवल्कीयेन काण्डेन पक्षप्रतिपक्षपरिग्रहं कृत्वा विगृह्यवादेन विचारितम्। शिष्याचार्यसंबन्धेन च षष्ठे प्रश्नप्रतिवचनन्यायेन सविस्तरं विचार्योपसंहृतम्। अथेदानीं निगमनस्थानीयं मैत्रेयीब्राह्मणमारभ्यते। अयं च न्यायो वाक्यकोविदैः परिगृहीतो हेत्वपदेशात्प्रतिज्ञायाः पुनर्वचनं निगमनमिति[2]। अथवाऽऽगमप्रधानेन मधुकाण्डेन यदमृतत्वसाधनं ससंन्यासमात्मज्ञानमभिहितं तदेव तर्केणाप्यमृतत्वसाधनं ससंन्यासमात्मज्ञानमधिगम्यते। तर्कप्रधानं हि याज्ञवल्कीयं काण्डम्। तस्माच्छास्त्रतर्काभ्यां निश्चितमेतद्यदेतदात्मज्ञानं ससंन्यासममृतत्वसाधनमिति। तस्माच्छास्त्रश्रद्धावद्भिरमृतत्वप्रतिपित्सुभिरेतत्प्रतिपत्तव्यमिति। आगमोपपत्तिभ्यां हि निश्चितोऽर्थः श्रद्धेयो भवत्यव्यभिचारादिति। अक्षराणां तु चतुर्थे यथा व्याख्यातोऽर्थस्तथा प्रतिपत्तव्योऽत्रापि। यान्यक्षराण्यव्याख्यातानि तानि व्याख्यास्यामः। १०

दार्ष्टान्तिकमाचष्टे—तथा चेति। इहेति मोक्षशास्त्रोक्तिः। तथाऽपि कल्पितप्रपञ्चसंबन्धप्रयुक्तं सविशेषत्वं ब्रह्मणः स्यादित्याशङ्क्याऽऽह—पुनरिति। तस्मिन्नात्मनि कल्पितः सृष्ट्यादिरुपायस्तेन जनितो विशेषस्तस्मिन्कारणत्वादिस्तस्य निरासार्थमिति यावत्। तर्हि द्वैताभावविशिष्टं तत्त्वमिति चेन्नेत्याह—तदुपसंहृतमिति। परिशुद्धं भाववदभावेनापि न संस्पृष्टमित्यर्थः। केवलमित्यद्वितीयोक्तिः। सृष्ट्यादिवचनस्य गतिमुक्त्वा प्रकृतमुपसंहरति—सफलमिति। इतिशब्दः संग्रहसमाप्त्यर्थो ब्राह्मणसमाप्त्यर्थो वा ॥२५॥ १५

इति बृहदारण्यकोपनिषद्भाष्यटीकायां चतुर्थाध्यायस्य चतुर्थं शारीरकब्राह्मणम् ॥४॥ २०

समाप्ते शारीरकब्राह्मणे वंशब्राह्मणं व्याख्यातव्यं कृतं गतार्थेन मैत्रेयीब्राह्मणेनेत्याशङ्क्य मधुकाण्डार्थमनुद्रवति—आगमेति। पाञ्चमिकमर्थमनुभाषते—पुनरिति। तस्यैव ब्रह्मणस्तत्त्वमिति शेषः। विगृह्यवादो जयपराजयप्रधानो जल्पन्यायः। षष्ठे प्रतिष्ठापितमनुवदति—शिष्येति। प्रश्नप्रतिवचनन्यायस्तत्त्वनिर्णयप्रधानो वादः। उपसंहृतं तदेव तत्त्वमिति शेषः। संप्रत्युत्तरब्राह्मणस्यागतार्थत्वमाह—अथेति। आगमोपपत्तिभ्यां निश्चिते तत्त्वे निगमनमकिंचित्करमित्याशङ्क्याऽऽह—अयं चेति। प्रकारान्तरेण संगतिमाह—अथवेति। कथमिह तर्केणाधिगतिस्तत्राऽऽह—तर्केति। मुनिकाण्डस्य तर्कप्रधानत्वे किं स्यात्तदाह—तस्मादिति। इति फलतीति शेषः। शास्त्रादिना यथोक्तस्य ज्ञानस्य निश्चितत्वेऽपि किं सिध्यति तदाह—तस्माच्छास्त्रश्रद्धावद्भिरिति। एतच्छब्दो यथोक्तज्ञानपरामर्शार्थः। इति सिध्यतीति शेषः। तत्र हेतुमाह—आगमेति। अव्यभिचारान्मानयुक्तिगम्यस्यार्थस्य तथैव सत्त्वादिति यावत्। इतिशब्दो ब्राह्मणसंगतिसमाप्त्यर्थः। तात्पर्यार्थे व्याख्याते सत्यक्षरव्याख्यानप्रसक्तावाह—अक्षराणां त्विति। तर्हि ब्राह्मणेऽस्मिन्वक्तव्याभावात्परिसमाप्तिरेवेत्याशङ्क्याऽऽह—यानीति। २५

---

१. रेखासंख्यान्यायः रेखाक्षरन्यायश्च प्रथम स्थाने विक्षिप्ता रेखा एकत्वसंख्यां गमयति सैव रेखा द्वितीयस्थाने दशत्वं तृतीये शतत्वमित्यादिना रेखाया तत्तत्सख्यारोपणेन तत्तत्सख्या निवेद्यते संख्यायाः स्वरूपेण सत्यत्वेऽपि तत्तत्स्थानविशिष्टत्वेनासत्यत्वम्। एव अकारादिवर्णाः रेखासु आरोप्यन्ते तादृशरेखाणां स्वरूपेण सत्यत्वेऽपि तादृशाक्षरतादात्म्येन असत्यत्वात् असत्येन सत्यज्ञान सुलभम्। एव सृष्ट्यादिप्रपञ्चनमपि वेदे ब्रह्मस्वरूपज्ञानार्थ ज्ञानेन तु उपायस्य कल्पितस्य नेति नेतीति निषेधात् सत्य ब्रह्मावगम्यते। ३०

२ हेतुव्यपदेशात् प्रतिज्ञायाः पुनर्वचन निगमनम्—यथा तस्माद्वह्निमान् इति। धूमज्ञानज्ञाप्यवह्निमानित्यर्थः। ३५

अथ चतुर्थाध्यायस्य पञ्चमं ब्राह्मणम्

अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुर्मैत्रेयी च कात्यायनी च तयोर्ह मैत्रेयी
ब्रह्मवादिनी बभूव स्त्रीप्रज्ञैव तर्हि कात्यायन्यथ ह याज्ञवल्क्योऽन्यद्वृत्तमुपाकरिष्यन् ॥१॥

मैत्रेयीति होवाच याज्ञवल्क्यः प्रव्रजिष्यन्वा अरेऽहमस्मा-
५ त्स्थानादस्मि हन्त तेऽनया कात्यायन्याऽन्तं करवाणीति ॥२॥

सा होवाच मैत्रेयी यन्नु म इयं भगोः सर्वा पृथिवी वित्तेन पूर्णा स्यात्स्यां
न्वहं तेनामृताहो३ नेति नेति होवाच याज्ञवल्क्यो यथैवोपकरणवतां
जीवितं तथैव ते जीवितं स्यादमृतत्वस्य तु नाशास्ति वित्तेनेति ॥३॥

सा होवाच मैत्रेयी येनाहं नामृता स्यां किमहं तेन कुर्यां यदेव भगवान्वेद तदेव मे ब्रूहीति ॥४॥

१० स होवाच याज्ञवल्क्यः प्रिया वै खलु नो भवती सती प्रियमवृधद्धन्त
तर्हि भवत्येतद्व्याख्यास्यामि ते व्याचक्षाणस्य तु मे निदिध्यासस्वेति ॥५॥

स होवाच न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो
भवति । न वा अरे जायायै कामाय जाया प्रिया भवत्यात्मनस्तु कामाय जाया प्रिया

अथेति हेतूपदेशानन्तर्यप्रदर्शनार्थः । हेतुप्रधानानि हि वाक्यान्यतीतानि तदनन्तरमागमप्रधानेन प्रति-
१५ ज्ञातोऽर्थो निगम्यते मैत्रेयीब्राह्मणेन । हशब्दो वृत्तावद्योतकः । याज्ञवल्क्यस्यर्षेः किल द्वे भार्ये पत्न्यौ बभूवतुरास्तां मैत्रेयी च नामत एकाऽपरा कात्यायनी नामतः तयोर्भार्ययोर्मैत्रेयीह किल ब्रह्मवादिनी ब्रह्मवदनशीला बभूवा-ऽऽसीत् । स्त्रीप्रज्ञा स्त्रियां योचिता सा स्त्रीप्रज्ञा सैव यस्याः प्रज्ञा गृहप्रयोजनान्वेषणालक्षणा सा स्त्रीप्रज्ञैव तर्हि तस्मिन्काल आसीत्कात्यायनी । अथैवं सति ह किल याज्ञवल्क्योऽन्यत्पूर्वस्माद्गार्हस्थ्यलक्षणाद्वृत्तात्पारिव्राज्य-लक्षणं वृत्तमुपाकरिष्यन्नुपाचिकीर्षुः सन् ॥१॥

२० हे मैत्रेयीति ज्येष्ठा भार्यामामन्त्रयामास । आमन्त्र्य चोवाच ह प्रव्रजिष्यन्पारिव्राज्यं करिष्यन्वा अरे मैत्रेय्यस्मात्स्थानाद्गार्हस्थ्यादहमस्मि भवामि । मैत्रेय्यनुजानीहि मां हन्तेच्छसि यदि तेऽनया कात्यायन्याऽन्तं करवाणीत्यादि व्याख्यातम् ॥२॥

सैवमुक्तोवाच मैत्रेयी सर्वेयं पृथिवी वित्तेन पूर्णा स्यान्नु किं स्यां किमहं वित्तसाध्येन कर्मणाऽमृताऽहो न स्यामिति । नेति होवाच याज्ञवल्क्य इत्यादि समानमन्यत् ॥३-४॥

२५ स होवाच प्रियैव पूर्वं खलु नोऽस्मभ्यं भवती भवन्ति सती प्रियमेवावृधद्वर्धितवती निर्धारितवत्यसि । अतस्तुष्टोऽहं हन्तेच्छसि चेदमृतत्वसाधनं ज्ञातुं हे भवति ते तुभ्यं तदमृतत्वसाधनं व्याख्यास्यामि ॥५॥

आत्मनि खल्वरे मैत्रेयी दृष्टे । कथं दृष्ट आत्मनीति, उच्यते—पूर्वमाचार्यागमाभ्यां श्रुते पुनस्तर्कणोप-पत्त्या मते विचारिते । श्रवणं त्वागममात्रेण मत उपपत्त्या पश्चाद्विज्ञात एवमेतन्नान्यथेति निर्धारिते । किं भवती-

ननु वाक्यानि पूर्वत्र व्याख्यातानि न हेतुरुपदिष्टस्तत्कथं तदुपदेशानन्तर्यं ससन्यासस्यामृतत्वहेतोरात्मज्ञान-
३० स्याथशब्देन द्योत्यते तत्राऽऽह—हेतुप्रधानानीति । तदेव वृत्त व्यनक्ति—याज्ञवल्क्यस्येति । अथेत्यस्यार्थमाह—एवं सतीति । भार्याद्वये दर्शितरीत्या स्थिते स्वस्य च वैराग्यातिरेके सतीति यावत् ॥१॥

तस्या ब्रह्मवादित्व तदामन्त्रणद्वारेण ता प्रत्येव सवादे हेतूकर्तव्यम् । तस्या ब्रह्मवादित्व द्योतयितुमिच्छसि यदीत्युक्तम् ॥२॥

मैत्रेयी त्वमृतत्वमात्रार्थितामात्मनो दर्शयति—सैवमिति ॥३-४॥

गुरुप्रसादाधीना विद्यावाप्तिरिति द्योतनार्थमाह—स होवाचेति । ज्ञानेच्छादुर्लभताद्योतनाय चेदित्युक्तम् ॥५॥
३५ व्याख्यानप्रकारमेवाऽऽह—आत्मनीति । दृष्टे सर्वमिद विदितं भवतीत्युत्तरत्र सवन्ध. । केनोपायेनाऽऽत्मनि दृष्टे सर्वं दृष्ट भवतीत्युपायं पृच्छति—कथमिति । आत्मदर्शनोपाय श्रवणादिकं दर्शयन्नुत्तरमाह—उच्यत इति । इदं सर्वमित्यनूद्य तस्यार्थमाह—यदात्मनोऽन्यदिति । तदात्मनि उक्तोपायफल प्रश्नपूर्वकमाह—किमित्यादिना ।

भवति। न वा अरे पुत्राणां कामाय पुत्राः प्रिया भवन्त्यात्मनस्तु कामाय पुत्राः प्रिया भवन्ति। न वा अरे वित्तस्य कामाय वित्तं प्रियं भवत्यात्मनस्तु कामाय वित्तं प्रियं भवति। न वा अरे पशूनां कामाय पशवः प्रिया भवन्त्यात्मनस्तु कामाय पशवः प्रिया भवन्ति। न वा अरे ब्रह्मणः कामाय ब्रह्म प्रियं भवत्यात्मनस्तु कामाय ब्रह्म प्रियं भवति। न वा अरे क्षत्त्रस्य कामाय क्षत्त्रं प्रियं भवत्यात्मनस्तु कामाय क्षत्त्रं प्रियं भवति। न वा अरे लोकानां कामाय लोकाः प्रिया भवन्त्यात्मनस्तु कामाय लोकाः प्रिया भवन्ति। न वा अरे देवानां कामाय देवाः प्रिया भवन्त्यात्मनस्तु कामाय देवाः प्रिया भवन्ति। न वा अरे वेदानां कामाय वेदाः प्रिया भवन्त्यात्मनस्तु कामाय वेदाः प्रिया भवन्ति। न वा अरे भूतानां कामाय भूतानि प्रियाणि भवन्त्यात्मनस्तु कामाय भूतानि प्रियाणि भवन्ति। न वा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवति। आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदꣳ सर्वं विदितम् ॥६॥

ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्म वेद क्षत्त्रं तं परादाद्योऽन्यत्रात्मनः क्षत्त्रं वेद लोकास्तं परादुर्योऽन्यत्रात्मनो लोकान्वेद देवास्तं परादुर्योऽन्यत्रात्मनो देवान्वेद वेदास्तं परादुर्योऽन्यत्रात्मनो वेदान्वेद भूतानि तं परादुर्योऽन्यत्रात्मनो भूतानि वेद सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेदेदं ब्रह्मेदं क्षत्त्रमिमे लोका इमे देवा इमे वेदा इमानि भूतानीदꣳ सर्वं यदयमात्मा ॥७॥

स यथा दुन्दुभेर्हन्यमानस्य न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय
दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीतः ॥८॥

स यथा शङ्खस्य ध्मायमानस्य न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय शङ्खस्य तु ग्रहणेन शङ्खध्मस्य वा शब्दो गृहीतः ॥९॥

स यथा वीणायै वाद्यमानायै न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय वीणायै तु ग्रहणेन वीणावादस्य वा शब्दो गृहीतः ॥१०॥

स यथार्द्रैधाग्नेरभ्याहितस्य पृथग्धूमा विनिश्चरन्त्येवं वा अरेऽस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानानीष्टꣳ हुतमाशितं पायितमयं च लोकः परश्च लोकः सर्वाणि च भूतान्यस्यैवैतानि सर्वाणि निःश्वसितानि ॥११॥

स यथा सर्वासामपाꣳ समुद्र एकायनमेवꣳ सर्वेषाꣳ स्पर्शानां त्वगेकायनमेवꣳ सर्वेषां गन्धानां नासिके एकायनमेवꣳ सर्वेषाꣳ रसानां जिह्वैकायनमेवꣳ सर्वेषाꣳ रूपाणां चक्षुरेकायनमेवꣳ-

त्युच्यत इदं विदितं भवति। इदं सर्वमिति यदात्मनोऽन्यत्। आत्मव्यतिरेकेणाभावात् ॥६॥

तमयथार्थदर्शिनं परादात्पराकुर्यात्कैवल्यासंबन्धिनं कुर्यादयमनात्मस्वरूपेण मां पश्यतीत्यपराधादिति भावः ॥७-१०॥

चतुर्थे शब्दनिःश्वासेनैव लोकाद्यर्थनिःश्वासः सामर्थ्यादुक्तो भवतीति पृथङ्नोक्तः। इह तु सर्वशास्त्रोपदृष्टं दृष्टं स्यादिति शेषः। कथमन्यस्मिन्दृष्टे सत्यन्यद्दृष्टं भवति तत्राऽऽह—आत्मव्यतिरेकेणेति ॥६-१०॥

स यथाऽऽर्द्रैधाग्नेरित्यादाविष्टं हुतमित्याद्यधिकं दृष्टं तस्यार्थमाह—चतुर्थ इति। सामर्थ्यादर्थशून्यस्य शब्द-

सर्वेषाँ शब्दानाँ श्रोत्रमेकायनमेवँ सर्वेषाँ संकल्पानां मन एकायनमेवँ सर्वासां विद्यानाँ हृदयमेकायनमेवँ सर्वेषां कर्मणाँ हस्तावेकायनमेवँ सर्वेषामानन्दानामुपस्थ एकायनमेवँ सर्वेषां विसर्गाणां पायुरेकायनमेवँ सर्वेषामध्वनां पादावेकायनमेवँ सर्वेषां वेदानां वागेकायनम् ॥१२॥

स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवैवं वा अरेऽयमा-त्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्ये-वानुविनश्यति न प्रेत्य संज्ञाऽस्तीत्यरे ब्रवीमीति होवाच याज्ञवल्क्यः ॥१३॥

सा होवाच मैत्रेय्यत्रैव मा भगवान्मोहान्तमापीपिपन्न वा अहमिमं विजानामीति स होवाच न वा अरेऽहं मोहं ब्रवीम्यविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा ॥१४॥

यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति तदितर इतरं जिघ्रति तदितर इतरँ रसयते
१० तदितर इतरमभिवदति तदितर इतरँ शृणोति तदितर इतरं मनुते तदितर इतरँ स्पृशति

संहार इति कृत्वाऽर्थप्राप्तोऽप्यर्थः स्पष्टीकर्तव्य इति पृथगुच्यते ॥११-१२॥

सर्वकार्यप्रलये विद्यानिमित्ते सैन्धवघनवदनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एक आत्माऽवतिष्ठते। पूर्वं तु भूतमात्रासंसर्गविशेषाल्लब्धविशेषविज्ञानः सन्। तस्मिन्प्रविलापिते विद्यया विशेषविज्ञाने तन्निमित्ते च भूत-संसर्गे न प्रेत्य संज्ञाऽस्तीत्येवं याज्ञवल्क्येनोक्ता ॥१३॥

१५ सा होवाचात्रैव मा भगवानेतस्मिन्नेव वस्तुनि प्रज्ञानघन एव न प्रेत्य संज्ञाऽस्तीति मोहान्तं मोहमध्यमापीपिपदापीपददवगमितवानसि संमोहितवानसीत्यर्थः। अतो न वा अहमिममात्मानमुक्तलक्षणं विजानामि विवेकत इति। स होवाच नाहं मोहं ब्रवीम्यविनाशी वा अरेऽयमात्मा यतो विन(नं)ष्टुं शीलमस्येति विनाशी न विनाश्यविनाशी विनाशब्देन विक्रियाऽविनाशीत्यविक्रिय आत्मेत्यर्थः। अरे मैत्रेय्ययमात्मा प्रकृतोऽनुच्छित्ति-धर्मा। उच्छित्तिरुच्छेद उच्छेदोऽन्तो विनाश उच्छित्तिर्धर्मोऽस्येत्युच्छित्तिधर्मा नोच्छित्तिधर्माऽनुच्छित्तिधर्मा नापि
२० विक्रियालक्षणो नाप्युच्छेदलक्षणो विनाशोऽस्य विद्यत इत्यर्थः ॥१४॥

चतुर्ष्वपि प्रपाठकेष्वेक आत्मा तुल्यो निर्धारितः परं ब्रह्म। उपायविशेषस्तु तस्याधिगमेऽन्यश्चान्यश्च। उपेयस्तु स एवाऽऽत्मा यश्चतुर्थेऽथात आदेशो नेति नेतीति निर्दिष्टः। स एव पञ्चमे प्राणपणोपन्यासेन शाकल्य-याज्ञवल्क्यसंवादे निर्धारितः। पुनः पञ्चमसमाप्तौ। पुनर्जनकयाज्ञवल्क्यसंवादे। पुनरिहोपनिषत्समाप्तौ। चतुर्णामपि प्रपाठकानामेतदात्मनिष्ठता नान्योऽन्तराले कश्चिदपि विवक्षितोऽर्थ इत्येतत्प्रदर्शनायान्त उपसंहारः स एष
२५ नेति नेत्यादिः।

स्यानुपपत्तेरित्यर्थः। नन्वत्रापि सामर्थ्यविशेषात्पृथगुक्तिरयुक्तेत्याशङ्क्याऽऽह—इह त्विति ॥११-१२॥

स यथा सैन्धवघन इत्यादिवाक्यतात्पर्यमाह—सर्वकार्येति। एतेभ्यो भूतेभ्य इत्यादेरर्थमाह—पूर्वं त्विति। ज्ञानोदयात्प्रागवस्थायामित्यर्थ.। लब्धविशेषविज्ञान' सन्व्यवहरतीति शेषः। प्रविलापिते तस्येत्यध्याहार ॥१३॥

पूर्वोत्तरविरोधं शङ्कित्वा परिहरति—सा होवाचेत्यादिना। अविनाशित्व पूर्वत्र हेतुरित्याह—यत इति ॥१४॥

३० प्रत्यध्यायमन्यथाऽन्यथा प्रतिपादनादात्मनः सविशेषत्वमाशङ्क्य स एष इत्यादेस्तात्पर्यमाह—चतुर्ष्वपीति। केन प्रकारेण तस्य तुल्यत्वमित्याशङ्क्याऽऽह—परं ब्रह्मेति। अध्यायभेदस्तर्हि कथमित्याशङ्क्याऽऽह—उपायेति। उपायभेदवदुपेयभेदोऽपि स्यादित्याशङ्क्याऽऽह—उपेयस्त्विति। चातुर्थिकादर्थात्पाञ्चमिकस्यार्थस्य भेद व्यावर्तयति—स एवेति। प्राणपणोपन्यासेन मूर्धा ते विपतिष्यतीति मूर्धपातोपन्यासात्प्राणा' पणत्वेन गृहीता इति गम्यते। तेन शाकल्यब्राह्मणेन निर्विशेषः प्रत्यगात्मा निर्धारित इत्यर्थः। विज्ञानमानन्द ब्रह्मेत्यादावुक्त स्मारयति—पुनरिति।
३५ पंचमसमाप्तौ पुनर्विज्ञानमित्यादिना स एव निर्धारित इति योजना। कूर्चब्राह्मणादावपि स एवोक्त इत्याह—पुनर्जनकेति। अस्मिन्नपि ब्राह्मणे स एवोक्त इत्याह—पुनरिहेति। किमिति पूर्वत्र तत्र तत्रोक्तस्य निर्विशेषस्याऽऽत्म-नोऽवसाने वचनमित्याशङ्क्याऽऽह—चतुर्णामपीति।

तदितर इतरं विजानाति यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्तत्केन कं जिघ्रेत्तत्केन कं रसयेत्तत्केन कमभिवदेत्तत्केन कं शृणुयात्तत्केन कं मन्वीत तत्केन कं स्पृशेत्तत्केन कं विजानीयाद्येनेदं सर्वं विजानाति तं केन विजानीयात्स एष नेति नेत्यात्माऽगृह्यो न गृह्यतेऽशीर्यो न हि शीर्यतेऽसङ्गो न हि सज्यतेऽसितो न व्यथते न रिष्यति विज्ञातारमरे केन विजानीयादित्युक्तानुशासनाऽसि मैत्रेय्येतावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्यो विजहार ॥१५॥

इति बृहदारण्यकोपनिषदि चतुर्थाध्यायस्य पञ्चमं ब्राह्मणम् ॥५॥

यस्मात्प्रकारशतेनापि निरूप्यमाणे तत्त्वे नेति नेत्यात्मैव निष्ठा नान्योपलभ्यते तर्केण वाऽऽगमेन वा तस्मादेतदेवामृतत्वसाधनं यदेतन्नेति नेत्यात्मपरिज्ञानं सर्वसंन्यासश्चेत्येतमर्थमुपसंजिहीर्षन्नाह–एतावदेतावन्मात्रं यदेतन्नेति नेत्यद्वैतात्मदर्शनमिदं चान्यसहकारिकारणनिरपेक्षमेवारे मैत्रेय्यमृतत्वसाधनम्। यत्पृष्टवत्यसि यदेव भगवान्वेद तदेव मे ब्रूह्यमृतत्वसाधनमिति तदेतावदेवेति विज्ञेयं त्वयेति हैवं किलामृतत्वसाधनमात्मज्ञानं प्रियायै भार्यायै उक्त्वा याज्ञवल्क्य किं कृतवान्यत्पूर्वं प्रतिज्ञातं प्रव्रजिष्यन्नस्मीति तच्चकार विजहार प्रव्रजितवानित्यर्थः। परिसमाप्ता ब्रह्मविद्या संन्यासपर्यवसाना। एतावानुपदेश एतद्वेदानुशासनमेषा परमनिष्ठैष पुरुषार्थकर्तव्यतान्त इति।

इदानीं विचार्यते शास्त्रार्थविवेकप्रतिपत्तये। यत आकुलानि हि वाक्यानि दृश्यन्ते "यावज्जीवमग्निहोत्रं जुहुयात्" "यावज्जीवं दर्शपूर्णमासाभ्यां यजेत" "कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः" "एतद्वै जरामर्यं सत्रं यदग्निहोत्रम्" इत्यादीन्यैकाश्रम्यज्ञापकान्यन्यानि चाऽऽश्रमान्तरप्रतिपादकानि वाक्यानि "विदित्वा व्युत्थाय प्रव्रजन्ति" "ब्रह्मचर्यं समाप्य गृही भवेद्गृहाद्वनी भूत्वा प्रव्रजेत्" "यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वा" इति। "द्वावेव पन्थानावनुनिष्क्रान्ततरौ भवतः क्रियापथश्चैव पुरस्तात्संन्यासश्च तयोः संन्यास एवातिरेचयति" इति। "न कर्मणा न प्रजया धनेन त्यागेनैकेऽमृतत्वमानशुः" इत्यादीनि। तथा स्मृतयश्च—"ब्रह्मचर्यवान्प्रव्रजति" 'अविशीर्णब्रह्मचर्यो यमिच्छेत्तमावसेत्" तस्याऽऽश्रमविकल्पमेके ब्रुवते" तथा—

"वेदानधीत्य ब्रह्मचर्येण पुत्रपौत्रानिच्छेत्पावनार्थं पितृणाम्।
अग्नीनाधाय विधिवच्चेष्टयज्ञो वनं प्रविश्याथ मुनिर्बुभूषेत्॥"

पौर्वापर्यपर्यालोचनायामुपनिषदर्थो निर्विशेषमात्मतत्त्वमित्युपपाद्य वाक्यान्तरमवतार्य व्याकरोति—यस्मादित्यादिना। इति होक्त्वेत्यादिवाक्यमाकाङ्क्षापूर्वकमादाय व्याचष्टे—यत्पृष्टवत्यसीत्यादिना। ब्राह्मणार्थमुपसंहरति—परिसमाप्तेति। तथाऽप्युपदेशान्तर कर्तव्यमस्तीत्याशङ्क्याऽऽह—एतवानिति। किमत्र प्रमाणमिति तदाह—एतदिति। तथाऽपि परमा निष्ठा सन्यासिनो वक्तव्येति चेन्नेत्याह—एषेति। आत्मज्ञाने ससन्यासे सत्यपि पुरुषार्थान्तरं कर्तव्यमस्तीत्याशङ्क्याऽऽह—एष इति। इतिशब्दो ब्राह्मणसमाप्त्यर्थः।

ससंन्यासमात्मज्ञानममृतत्वसाधनमित्युपपाद्य संन्यासमविकृत्य विचारमवतारयति—इदानीमिति। तत्र तत्र प्रागेव विचारितत्वात्किं पुनर्विचारेणेत्याशङ्क्याऽऽह—शास्त्रार्थेति। विरक्तस्य संन्यासो ज्ञानस्यान्तरङ्गसाधनं ज्ञानं तु केवलममृतत्वस्येति शास्त्रार्थे विवेकरूपा प्रतिपत्तिरपि प्रागेव सिद्धेति किं तदर्थेन विचारारम्भेणेत्याशङ्क्याऽऽह—यत इति। अतो विचार. कर्तव्यो नान्यथा शास्त्रार्थविवेकः स्यादित्युपसंहारार्थो हिशब्दः। वाक्यानामाकुलत्वमेव दर्शयति—यावदिति। यदग्निहोत्रमित्यादीनीत्यादिशब्दादैकाश्रम्य त्वाचार्याः प्रत्यक्षविधानाद्गार्हस्थ्यस्येत्यादिस्मृतिवाक्यं गृह्यते। कथमेतावता वाक्यानि व्याकुलानीत्याशङ्क्याऽऽह—अन्यानि चेति। विदित्वा व्युत्थाय भिक्षाचर्यं चरन्तीति वाक्य पाठक्रमेण विद्वत्संन्यासपरमर्थक्रमेण तु विविदिषासंन्यासपरमात्मानमेव लोकमिच्छन्त. प्रव्रजन्तीति तु विविदिषासंन्यासपरमेवेति विभाग.। क्रमसन्यासपरां श्रुतिमुदाहरति—ब्रह्मचर्यमिति। अक्रमसन्यासविषय वाक्य पठति—यदि वेति। कर्मसंन्यासयोः कर्मसन्यासस्याऽऽधिक्यप्रदर्शनपरां श्रुतिं दर्शयति—द्वावेवेति। अनुनिष्क्रान्ततरौ शास्त्रे क्रमेणाभ्युदयनिःश्रेयसोपायत्वेन पुनः पुनरुक्तावित्यर्थः। ज्ञानद्वारा सन्यासस्य मोक्षोपायत्वे श्रुत्यन्तरमाह—न कर्मणेति। 'तानि वा एतान्यवराणि तपांसि न्यास एवात्यरेचयत्' इत्यादिवाक्यमादिशब्दार्थः। यथा श्रुतयस्तथा स्मृतयोऽप्याकुला दृश्यन्त इत्याह—तथेति। तत्राक्रमसंन्यासे स्मृतिमादावुदाहरति—ब्रह्मचर्यवानिति। यथेष्टाश्रमप्रतिपत्तौ प्रमाणभूतां स्मृतिं दर्शयति—अविशीर्णेति। आश्रमविकल्पविषया स्मृतिं पठति—तस्येति। ब्रह्मचारी षष्ठ्यर्थः। क्रमसंन्यासे

"प्राजापत्यां निरुप्येष्टिं सर्ववेदसदक्षिणाम्। आत्मन्यग्नीन्समारोप्य ब्राह्मणः प्रव्रजेद्गृहात् ॥" इत्याद्याः।

एवं व्युत्थानविकल्पक्रमयथेष्टाश्रमप्रतिपत्तिप्रतिपादकानि हि श्रुतिस्मृतिवाक्यानि शतश उपलभ्यन्त इतरेतरविरुद्धानि। आचारश्च तद्विदाम्। विप्रतिपत्तिश्च शास्त्रार्थप्रतिपत्तॄणां बहुविदामपि। अतो न शक्यते शास्त्रार्थो मन्दबुद्धिभिर्विवेकेन प्रतिपत्तुम्। परिनिष्ठितशास्त्रन्यायबुद्धिभिरेव ह्येषां वाक्यानां विषयविभागः ५ शक्यतेऽवधारयितुम्। तस्मादेषां विषयविभागज्ञापनाय यथाबुद्धिसामर्थ्यं विचारयिष्यामः। यावज्जीवश्रुत्यादिवाक्यानामन्यार्थासंभवात्क्रियावसान एव वेदार्थः। तं यज्ञपात्रैर्दहन्तीत्यन्त्यकर्मश्रवणाज्जरामर्यश्रवणाच्च लिङ्गाच्च भस्मान्तं शरीरमिति। न हि पारिव्राज्यपक्षे भस्मान्तता शरीरस्य स्यात्। स्मृतिश्च—

"निषेकादिश्मशानान्तो मन्त्रैर्यस्योदितो विधिः। तस्य शास्त्रेऽधिकारोऽस्मिञ्ज्ञेयो नान्यस्य कस्यचित् ॥" इति।

समन्त्रकं हि यत्कर्म वेदेनेह विधीयते तस्य श्मशानान्ततां दर्शयति स्मृतिः। अधिकाराभावप्रदर्शनाच्चात्यन्त-१० मेवं श्रुत्यधिकाराभावोऽकर्मिणो गम्यते। अग्न्युद्वासनापवादाच्च 'वीरहा वा एष देवानां योऽग्निमुद्वासयते' इति।

ननु व्युत्थानादिविधानाद्वैकल्पिकं क्रियावसानत्वं वेदार्थस्य। न। अन्यार्थत्वाद्व्युत्थानादिश्रुतीनाम्। "यावज्जीवमग्निहोत्रं जुहोति" "यावज्जीवं दर्शपूर्णमासाभ्यां यजेत" इत्येवमादीनां श्रुतीनां जीवनमात्रनिमित्तत्वाद्यदा न शक्यतेऽन्यार्थता कल्पयितुं तदा व्युत्थानादिवाक्यानां कर्मानधिकृतविषयत्वसंभवात्। "कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः" इति च मन्त्रवर्णाज्जरया वा ह्येवास्मान्मुच्यते मृत्युना वेति च जरामृत्युभ्यामन्यत्र १५ कर्मवियोगच्छिद्रासंभवात्कर्मिणां श्मशानान्तत्वं न वैकल्पिकम्। काणकुब्जादयोऽपि कर्मण्यनधिकृता अनुग्राह्या एव श्रुत्येति व्युत्थानाद्याश्रमान्तरविधानं नानुपपन्नम्।

पारिव्राज्यक्रमविधानस्यानवकाशत्वमिति चेत्। न। विश्वजित्सर्वमेधयोर्यावज्जीवविध्यपवादत्वात्।

प्रमाणमाह—तथेति। तत्रैव वाक्यान्तरं पठति—प्राजापत्यामिति। सर्ववेदसं सर्वस्वं दक्षिणा यस्या तां निर्वर्त्येत्यर्थः। आदिपदेन मुण्डा निस्तन्तवश्चेत्यादिवाक्यं गृह्यते। इत्याद्याः स्मृतयश्चेति पूर्वेण संबन्धः।

२० व्याकुलानि वाक्यानि दर्शितान्युपसंहरति—एवमिति। इतश्च कर्तव्यो विचार इत्याह—आचारश्चेति। श्रुतिस्मृतिविदामाचारः स विरुद्धो लक्ष्यते। केचिद्ब्रह्मचर्यादेव प्रव्रजन्ति। अपरे तु तत्परिसमाप्य गार्हस्थ्यमेवाऽऽचरन्ति। अन्ये तु चतुरोऽप्याश्रमान्क्रमेणाऽऽश्रयन्ते। तथा च विना विचारं निर्णयासिद्धिरित्यर्थः। इतश्चास्ति विचारस्य कार्यतेत्याह—विप्रतिपत्तिश्चेति। यद्यपि बहुविदः शास्त्रार्थप्रतिपत्तारो जैमिनिप्रभृतयस्तथाऽपि तेषां विप्रतिपत्तिरुपलभ्यते। केचिदूर्ध्वरेतस आश्रमाः सन्तीत्याहुर्न सन्तीत्यपरे। तत्कुतो विचारादृते निश्चयसिद्धिरित्यर्थः। अथ केषांचि-२५ दन्तरेणापि विचारं शास्त्रार्थो विवेकेन प्रतिभास्यति तत्राऽऽह—अत इति। श्रुतिस्मृत्याचारविप्रतिपत्तेरिति यावत्। कैस्तर्हि शास्त्रार्थो विवेकेन ज्ञातुं शक्यते तत्राऽऽह—परिनिष्ठितेति। नानाश्रुतिदर्शनादिवशादुपपादितं विचारारम्भमुपसंहरति—तस्मादिति। विचारकर्तव्यतामुक्त्वा पूर्वपक्षं गृह्णाति—यावदित्यादिना। श्रुत्यादीत्यादिशब्देन कुर्वन्नित्यादिमन्त्रवादो गृह्यते। ऐकाश्रम्ये हेत्वन्तरमाह—तमिति। "एतद्वै जरामर्यं सत्रं यदग्निहोत्रमि"ति श्रुतेश्च पारिव्राज्यासिद्धिरित्याह—जरेति। तत्रैव हेत्वन्तरमाह—लिङ्गाच्चेति। पारिव्राज्यपक्षेऽपि तदुपपत्तिमाशङ्क्याऽऽह—न हीति। ३० इतश्च नास्ति पारिव्राज्यमित्याह—स्मृतिश्चेति। तस्यास्तात्पर्यमाह—समन्त्रकं हीति। नान्यस्य कस्यचिदित्यत्र सूचितमर्थं कथयति—अधिकारेति। गृहस्थस्य पारिव्राज्याभावे हेत्वन्तरमाह—अग्नीति।

पूर्वपक्षमाक्षिपति—नन्विति। उभयविधिदर्शने षोडशीग्रहणाग्रहणवदधिकारभेदेन विकल्पो युक्तो न तु क्रियावसान एव वेदार्थ इति पक्षपाते निबन्धनमस्तीत्यर्थः। तुल्यविधिद्वयदर्शने हि विकल्पो भवत्यत्र तु सावकाशानवकाशत्वेनातुल्यत्वान्नैवमित्याह—नान्यार्थत्वादिति। तदेव स्फुटयति—यावज्जीवमित्यादिना। कर्मानधिकृतविषयत्वान्न ३५ वैकल्पिकमिति संबन्धः। क्रियावसानत्वं वेदार्थस्येति शेषः। तत्रैव हेत्वन्तराण्याह—कुर्वन्नित्यादिना। न वैकल्पिकमित्यत्र पूर्ववदन्वयः। व्युत्थानादिवाक्यानां कथमनधिकृतविषयमित्याशङ्क्याऽऽह—काणेति।

अनधिकृतविषयत्वं तेषामशक्यं वक्तुं "ब्रह्मचर्यं समाप्य"इत्यादावधिकृतविषये क्रमदर्शनादिति शङ्कते—पारि-

१. विश्वजित्सर्वमेधयोरिति। विश्वजिति सर्वस्वं दद्यात् इति विधिना सर्वधनत्यागात् संन्यासोपपत्तिः। एवं सर्वमेधेऽपि सर्वं स्वदानं विहितम्।

यावज्जीवाग्निहोत्रादिविधेर्विश्वजित्सर्वमेधयोरेवापवादस्तत्र च क्रमप्रतिपत्तिसंभवो "ब्रह्मचर्यं समाप्य गृही भवेद्-गृहाद्वनी भूत्वा प्रव्रजेदि"ति विरोधानुपपत्तेः। न ह्येवंविषयत्वे पारिव्राज्यक्रमविधानवाक्यस्य कश्चिद्विरोधः क्रमप्रतिपत्तेः। अन्यविषयपरिकल्पनायां तु यावज्जीवविधानश्रुतिः स्वविषयात्संकोचिता स्यात्। क्रमप्रतिपत्तेस्तु विश्वजित्सर्वमेधविषयत्वान्न कश्चिद्बाधः। नाऽऽत्मज्ञानस्यामृतत्वहेतुत्वाभ्युपगमात्।

यत्तावदात्मेत्येवोपासीतेत्यारभ्य स एष नेति नेत्येतदन्तेन ग्रन्थेन यदुपसंहृतमात्मज्ञानं तदमृतत्वसाधन- ५ मित्यभ्युपगतं भवता। तत्रैतावदेवामृतत्वसाधनमन्यनिरपेक्षमित्येतन्न मृष्यते। तत्र भवन्तं पृच्छामि किमर्थमात्म-ज्ञानं मर्षयति भवानिति। शृणु तत्र कारणं यथा स्वर्गकामस्य स्वर्गप्राप्त्युपायमजानतोऽग्निहोत्रादि स्वर्गप्राप्ति-साधनं ज्ञापयति तथेहाप्यमृतत्वप्रतिपित्सोरमृतत्वप्राप्त्युपायमजानतो यदेव भगवान्वेद तदेव मे ब्रूहीत्येवमा-काङ्क्षितममृतत्वसाधनमेतावदर इत्येवमादौ वेदेन ज्ञाप्यत इति। एवं तर्हि यथा ज्ञापितमग्निहोत्रादि स्वर्ग-साधनमभ्युपगम्यते तथेहाप्यात्मज्ञानम्। यथा ज्ञाप्यते तथाभूतमेवामृतत्वसाधनमात्मज्ञानमभ्युपगन्तुं युक्तम्। १० तुल्यप्रामाण्यादुभयत्र।

यद्येवं किं स्यात्। सर्वकर्महेतूपमर्दकत्वादात्मज्ञानस्य विद्योद्भवे कर्मनिवृत्तिः स्यात्। दाराग्निसंबद्धानां तावदग्निहोत्रादिकर्मणां भेदबुद्धिविषयसंप्रदानकारकसाध्यत्वम्। अन्यबुद्धिपरिच्छेद्यां ह्यग्न्यादिदेवतां संप्रदान-कारकभूतामन्तरेण न हि तत्कर्म निर्वर्त्यते। यया हि संप्रदानकारकबुद्ध्या संप्रदानकारकं कर्मसाधनत्वेनोप-दिश्यते सेह विद्यया निवर्त्यते "अन्योऽसावन्योऽहमस्मीति न स वेद" "देवास्तं परादुर्योऽन्यत्राऽऽत्मनो देवान्वेद" १५ "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" "एकधैवानुद्रष्टव्यं सर्वमात्मानं पश्यति" इत्यादिश्रुतिभ्यः। न च देशकालनिमित्ताद्यपेक्षत्वं व्यवस्थितात्मवस्तुविषयत्वादात्मज्ञानस्य। क्रियायास्तु पुरुषतन्त्रत्वात्स्याद्देशकाल-

व्राज्येति। गत्यन्तरं दर्शयन्नुत्तरमाह—न विश्वजिदिति। "यावज्जीवमग्निहोत्रं जुहोती"त्युत्सर्गस्तस्यापवादो विश्व-जित्सर्वमेधौ तदनुष्ठाने सर्वस्वदानादेव साधनसंपद्विरहात्पारिव्राज्यस्यावश्यंभावित्वादतस्तद्विषयं क्रमविधानमित्यर्थः। तदेव स्फुटयति—यावज्जीवेति। कथं क्रमविधेरेवविषयत्व कल्पकाभावादित्याशङ्क्याऽऽह—विरोधानुपपत्तेरिति। २० गृहस्थस्यापि विरक्तस्य पारिव्राज्यमिति किमिति क्रमविषयो नेष्यते तत्राऽऽह—अन्यविषयेति। क्रमविधेरपि त्वत्पक्षे संकोचः स्यादित्याशङ्क्याऽऽह—क्रमप्रतिपत्तेस्त्विति। सति ज्ञाने कर्मत्यागो निषिध्यते सत्यां वा जिज्ञासायामिति विकल्प्याऽऽद्यं दूषयति सिद्धान्ती—नाऽऽत्मज्ञानस्येति।

विद्वत्संन्यासस्यावश्यंभावित्वान्न कर्मावसान एव वेदार्थ इति संगृहीतं वस्तु विवृणोति—यत्तावदिति। विद्या-सूत्रादारभ्य निषेधवाक्यान्तेन ग्रन्थेन यदात्मज्ञानमुपसंहृतं तत्तवन्मुक्तिसाधनमिति भवताऽपि यस्मादभ्युपगतं पराङ्गं २५ चाऽऽत्मविज्ञानादन्यत्रेत्यवधारणादिति न्यायात्तस्माज्ज्ञाने सति कर्मानुष्ठानं निरवकाशमित्यर्थः। अथाऽऽत्मज्ञानं कर्म-सहितममृतत्वसाधनमिष्यते न केवलं तथा च ज्ञानोत्तरकालमपि न कर्मत्यागसिद्धिरिति शङ्कते—तत्रेति। आत्म-ज्ञानस्यामृतत्वसाधनत्वे सत्यपीति यावत्। कर्मनिरपेक्षत्वं चेदात्मज्ञानस्य भवान्न सहते किमिति तर्हि ज्ञानमेवोपगत-मिति सिद्धान्ती पृच्छति—तत्रेति। तस्य कर्मानपेक्षत्वानङ्गीकारे सतीत्यर्थः। तत्र पूर्ववादी शास्त्रीयत्वादात्मज्ञानम-मृतत्वसाधनमभ्युपगतमिति शङ्कते—शृण्विति। ज्ञापयति वेद इति शेषः। शास्त्रानुसारेणाऽऽत्मज्ञानाङ्गीकारे ३० कर्मनिरपेक्षमेवाऽऽत्मज्ञानं मोक्षसाधनं सेत्स्यतीति परिहरति—एवं तर्हीति। उभयत्र ज्ञाने कर्मणि चेत्यर्थः। यद्वा ज्ञानस्यामृतत्वसाधनत्वे तस्य कर्मनिरपेक्षत्वे चेत्यर्थः। तुल्यप्रामाण्यात्प्रामाण्यस्य तुल्यत्वाद्वेदस्येति शेषः।

यथाशास्त्रं ज्ञानाभ्युपगमेऽपि कथं तत्केवलं कैवल्यकारणमिति पृच्छति—यद्येवमिति। शास्त्रानुसारेण ज्ञानमभ्युपगच्छन्त प्रत्याह—सर्वकर्मेति। आत्मज्ञानस्य तदुपमर्दकत्वं दर्शयितुं कर्महेतुं तावद्दर्शयति—दाराग्नीति। अग्निहोत्रादीनां संप्रदानकारकसाध्यत्वं व्यतिरेकद्वारा साधयति—अन्येति। तथाऽपि कथमात्मज्ञानस्य कर्महेतूपमर्दक- ३५ त्वमित्याशङ्क्याऽऽह—यया हीति। इहेति विद्यादशोक्तिः। विद्यायाः श्रुतिजन्यत्वेन बलवत्त्वं दर्शयति—अन्योऽसा-वित्यादिना। ननु शुचौ देशे दिवसादौ काले शास्त्राचार्यादिवशादुत्पन्नं ज्ञानं पुमर्थसाधनम्। 'शुचौ देशे प्रतिष्ठाप्य' इत्यादिस्मृतेस्तथा च कथं तस्य भेदबुद्ध्युपमर्दकत्वमत आह—न चेति। यत्रैकाग्रता तत्राविशेषादितिन्यायाज्ज्ञान-साधनस्य समावेरपि न देशाद्यपेक्षा दूरतस्तु कूटस्थवस्तुतन्त्रस्य ज्ञानस्येति भावः। विमतं देशाद्यपेक्षं शास्त्रार्थत्वाद्ध-र्मवदित्याशङ्क्य पुरुषतन्त्रत्वमुपाधिरित्याह—क्रियायास्त्विति। साधनव्याप्तिं दूषयति—ज्ञानं त्विति। विमतं न ४०

निमित्ताद्यपेक्षत्वम्। ज्ञानं तु वस्तुतन्त्रत्वान्न देशकालनिमित्ताद्यपेक्षते। यथाऽग्निरुष्ण आकाशोऽमूर्त इति तथाऽऽत्मविज्ञानमपि।

नन्वेवं सति प्रमाणभूतस्य कर्मविधेर्निरोधः स्यात्। न च तुल्यप्रमाणयोरितरेतरनिरोधो युक्तः। न। स्वाभाविकभेदबुद्धिमात्रनिरोधकत्वात्। न हि विध्यन्तरनिरोधकमात्मज्ञानं स्वाभाविकभेदबुद्धिमात्रं निरुणद्धि। तथाऽपि हेत्वपहारात्कर्मानुपपत्तेर्विधिनिरोध एव स्यादिति चेत्। न। कामप्रतिषेधात्काम्यप्रवृत्तिनिरोधवददोषात्। यथा स्वर्गकामो यजेतेति स्वर्गसाधने यागे प्रवृत्तस्य कामप्रतिषेधविधेः कामे विहते काम्ययागानुष्ठानप्रवृत्तिर्निरुध्यते। न चैतावता काम्यविधिर्निरुद्धो भवति। कामप्रतिषेधविधिना काम्यविधेरनर्थकत्वज्ञानात्प्रवृत्त्यनुपपत्तेर्निरुद्ध एव स्यादिति चेत्। भवत्वेवैवं कर्मविधिनिरोधोऽपि। यथा कामप्रतिषेधे काम्यविधेरेवं प्रामाण्यानुपपत्तिरिति चेत्। अननुष्ठेयत्वेऽनुष्ठातुरभावादनुष्ठानविध्यानर्थक्यादप्रामाण्यमेव कर्मविधीनामिति चेत्। न। प्रागात्मज्ञानात्प्रवृत्त्युपपत्तेः स्वाभाविकस्य क्रियाकारकफलभेदविज्ञानस्य प्रागात्मज्ञानात्कर्महेतुत्वमुपपद्यत एव। यथा कामविषये दोषविज्ञानोत्पत्तेः प्राक्काम्यकर्मप्रवृत्तिहेतुत्वं स्यादेव स्वर्गादी च्छायाः स्वाभाविक्यास्तद्वत्।

तथा सत्यनर्थार्थौ वेद इति चेत्। न। अर्थानर्थयोरभिप्रायतन्त्रत्वात्। मोक्षमेकं वर्जयित्वाऽन्यस्याविद्याविषयत्वात्। पुरुषाभिप्रायतन्त्रौ ह्यर्थानर्थौ। मरणादिकाम्येष्टिदर्शनात्। तस्माद्यावदात्मज्ञानविधेराभिमुख्यं तावदेव कर्मविषयः। तस्मान्नाऽऽत्मज्ञानसहभावित्वं कर्मणामित्यतः सिद्धमात्मज्ञानमेवामृतत्वसाधनमेतावदरे खल्वमृतत्वमिति। कर्मनिरपेक्षत्वाज्ज्ञानस्य। अतो विदुषस्तावत्पारिव्राज्यं सिद्धं संप्रदानादिकर्मकारकजात्यादिशून्याविक्रियब्रह्मात्मदृढप्रतिपत्तिमात्रेण वचनमन्तरेणाप्युक्तन्यायतः।

देशाद्यपेक्षं प्रमाणत्वादुष्णाग्निज्ञानवदिति प्रत्यनुमानमाह—यथेति।

आत्मज्ञानस्य सर्वकर्महेतूपमर्दकत्वे दोषमाशङ्कते—नन्विति। इष्टापत्तिमाशङ्क्याऽऽह—न चेति। कर्मकाण्डेन काण्डान्तरस्यापि निरोधसंभवादित्यर्थः। साक्षादात्मज्ञानं कर्मविधिनिरोध्यर्थद्वेति विकल्प्याऽऽद्यं दूषयति—नेत्यादिना। तदेव स्फुटयति—न हि विध्यन्तरेति। द्वितीयं शङ्कते—तथाऽपीति। यथा न कामी स्यादिति निषेधात्कस्यचित्कामप्रवृत्तिर्न भवतीत्येतावता न सर्वान्प्रति काम्यविधिर्निरुध्यते। तथा कस्यचिदात्मज्ञानात्कर्मविधिनिरोधेऽपि न सर्वान्प्रत्यसौ निरुद्धो भविष्यतीति परिहरति—न कामेति। दृष्टान्तमेव स्पष्टयति—यथेत्यादिना। प्रतिषेधशास्त्रार्थानभिज्ञं प्रति तदुपपत्तेरिति भावः। अभिप्रायमविद्वानाशङ्कते—कामप्रतिषेधविधिनेति। अनर्थकत्वज्ञानात्कामस्येति शेषः। प्रवृत्त्यनुपपत्तेः काम्येषु कर्मस्विति द्रष्टव्यम्। निरुद्धः स्यात्काम्यविधिरित्यध्याहर्तव्यम्। गूढाभिसंधिः सिद्धान्ती ब्रूते—भवत्विति। पुनरभिप्रायमप्रतिपद्यमानश्चोदयति—यथेति। एवमिति ज्ञानेन कर्मविधिनिरोधे सतीति यावत्। तत्प्रामाण्यानुपपत्तिरिति शेषः। तदेव चोद्यं विशदयति—अननुष्ठेयत्व इति। तेषामनुष्ठेयानामग्निहोत्रादीनां कर्मणां ये विधयस्तेषामिति यावत्। सिद्धान्ती स्वाभिसंधिमुद्घाट्यमुत्तरमाह—नेत्यादिना। उपपत्तिमेवोपदर्शयति—स्वाभाविकस्येति। तदेव दृष्टान्तेन स्पष्टयति—यथेति।

अज्ञानावस्थायामेव कर्मविधिप्रवृत्तिरित्यत्रानिष्टमाशङ्कते—तथा सतीति। कर्मविधेरपि पुरुषाभिप्रायवशात्पुरुषार्थोपयोगित्वसिद्धेर्नानिष्टापत्तिरित्युत्तरमाह—नार्थेति। अर्थस्य पुरुषाभिप्रायतन्त्रत्वे मोक्षस्यापि वास्तवं पुरुषार्थत्वं न स्यादित्याशङ्क्याऽऽह—मोक्षमिति। अर्थानर्थयोरभिप्रायतन्त्रत्वं साधयति—पुरुषेति। मरणं "महाप्रस्थानमि"त्यादि काम्यं कृत्वा जीवदवस्थायामेव महाभारतादाविष्टिनिधानं दृष्टमतोऽर्थानर्थावभिप्रायतन्त्रकावेवेत्यर्थः[1]। कर्मविधीनामात्मज्ञानात्प्राचीनत्व प्रतिपादितमुपसंहरति—तस्मादिति। तथाऽपि प्रकृते किमायातं तदाह—तस्मान्नेति। तत्र प्रमाणमाह—इत्यत इति। अतःशब्दार्थं स्फुटयति—कर्मेति। ज्ञानस्य कर्मविरोधित्वे तन्निरपेक्षत्वे च सिद्धे फलितमाह—अत इति। आत्मज्ञानस्यामृतत्वहेतुत्वाभ्युपगमादित्यादेरुक्तन्यायादात्मसाक्षात्कारस्य केवलस्य कैवल्यकारणत्वसिद्धेः सति तस्मिञ्जीवन्मुक्तस्य कर्मानुष्ठानानवकाशात्तदुद्देशेन प्रवृत्तस्याधीतवेदस्य विदितपदपदार्थस्य परोक्षज्ञानवतस्तन्मात्रेण प्रमाणापेक्षामन्तरेण सिद्धं सर्वकर्मत्यागलक्षणं पारिव्राज्यमेष एव विद्वत्संन्यासो न त्वपरोक्षज्ञानवतः प्रारब्धफलप्राप्तिमन्तरेणानुष्ठेयं किंचिदस्तीति भावः। विध्यविषयत्वाज्ज्ञातसाक्षात्कारस्य कथं पारिव्राज्यं तत्राऽऽह—वचनमिति। उक्तन्यायः शान्तादिवाक्यसूचितः। विधिं विनाऽपि फलभूतं पारिव्राज्यमित्यर्थः।

---

१. मरणकामस्य सर्वस्वारो नाम यज्ञः तं विधाय मरणकामो ह्येतेन यजेत इति ताण्डिकब्राह्मणे श्रुतम्।

तथाच व्याख्यातमेतत् "येषां नोऽयमात्माऽयं लोक" इति हेतुवचनेन । पूर्वे विद्वांसः प्रजामकामयमाना व्युत्तिष्ठन्तीति पारिव्राज्यं विदुषामात्मलोकावबोधादेव । तथाच विविदिषोरपि सिद्धं पारिव्राज्यम् । "एतमेवाऽऽत्मानं लोकमिच्छन्तः प्रव्रजन्ति" इति वचनात् । कर्मणां चाविद्वद्विषयत्वमवोचाम । अविद्याविषये चोत्पत्त्याप्तिविकारसंस्कारार्थानि कर्माणीत्यतः आत्मसंस्कारद्वारेणाऽऽत्मज्ञानसाधनत्वमपि कर्मणामवोचाम यज्ञादिभिर्विविदिषन्तीति । अथैवं सत्यविद्वद्विषयाणामाश्रमकर्मणां बलाबलविचारणायामात्मज्ञानोत्पादनं प्रति यमप्रधानानाममानित्वादीना मानसानां च ध्यानज्ञानवैराग्यादीनां सन्निपत्योपकारकत्वम् । हिंसारागद्वेषादिबाहुल्याद्बहुक्लिष्टकर्मविमिश्रिता इतर इत्यतः पारिव्राज्यं मुमुक्षूणां प्रशंसन्ति—

"त्याग एव हि सर्वेषामुक्तानामपि कर्मणाम् । वैराग्यं पुनरेतस्य मोक्षस्य परमोऽवधिः" ॥

"किं ते धनेन किमु बन्धुभिस्ते किं ते दारैर्ब्राह्मण यो मरिष्यसि ।
आत्मानमन्विच्छ गुहां प्रविष्टं पितामहास्ते क्व गताः पिता च ॥"

एवं सांख्ययोगशास्त्रेषु च संन्यासो ज्ञानं प्रति प्रत्यासन्न उच्यते । कामप्रवृत्त्यभावाच्च । कामप्रवृत्तेर्हि ज्ञानप्रतिकूलता सर्वशास्त्रेषु प्रसिद्धा । तस्माद्विरक्तस्य मुमुक्षोर्विनाऽपि ज्ञानेन ब्रह्मचर्यादेव प्रव्रजेदित्याद्युपपन्नम् ।

सत्यां जिज्ञासायां कर्मत्यागो न शक्यते निषेद्धुमिति वदन्विविदिषासंन्यासं साधयति—तथाचेत्यादिना । एतत्पारिव्राज्यमिति संबन्धः । विदुषामात्मसाक्षात्कारार्थिनां तत्परोक्षनिश्चयवतामिति यावत् । आत्मलोकस्यावबोधोऽपि व्युत्थानहेतुः परोक्षनिश्चय एव । सतीतरस्मिन्फलावस्थस्य व्युत्थानाद्यनुष्ठानायोगात्तदन्तरेण तत्प्राप्त्यभावाच्च । उक्त हि शमादिवदुपरतेरपि तत्त्वसाक्षात्कारे नियत साधनत्वं तदाह—तथा चेति । विविदिषुर्नामाधीतवेदो विचारप्रयोजकापातिकज्ञानवान्मुमुक्षुर्मोक्षसाधनं तत्त्वसाक्षात्कारमपेक्षमाणस्तस्मिन्परोक्षनिश्चयेनापि शून्यो विवक्षितस्तस्य कथं पारिव्राज्यमत आह—एतमेवाऽऽत्मानमिति । इतश्च विविदिषासंन्यासोऽस्तीत्याह—कर्मणां चेति । तथा चाविद्याविरुद्धा विद्यामिच्छन्नशेषाणि कर्माणि शरीरधारणमात्रकारणेतराणि त्यजेदिति शेषः । विविदिषासंन्यासे हेत्वन्तरमाह—अविद्याविषये चेति । चतुर्विधफलानि कर्माण्यविद्याविषये परं संभवन्ति न त्वसाध्ये वस्तुनीत्यतो वस्तुजिज्ञासायां त्याज्यानि तानीत्यर्थः । कथं तर्हि कर्मणामुत्तमफलान्वयस्तत्राऽऽह—आत्मेति । बुद्धिशुद्धिद्वारा ज्ञानहेतुत्वात्कर्मणामस्ति प्रणाड्या परमपुरुषार्थान्वय इत्यर्थः । 'सन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ' इति स्मृतेर्विविदिषूणां मुमुक्षूणा कथं पारिव्राज्यस्यैव कर्तव्यत्वमित्याशङ्क्याऽऽह—अथेति । यथा विद्वत्संन्यासस्तथा विविदिषासन्यासेऽपि यथोक्तनीत्या संभाविते सतीति यावत् । आत्मज्ञानोत्पादनं प्रत्याश्रमधर्माणां बलाबलविचारणा नामान्तरङ्गत्वबहिरङ्गत्वचिन्ता तस्या सत्यामित्यर्थः । अहिंसास्तेयब्रह्मचर्यादयो यमाः । वैराग्यादीनामित्यादिशब्देन शमादयो गृह्यन्ते । इतरे नियमप्रधाना आश्रमधर्मा बहुना क्लिष्टेन पापेन कर्मणा संकीर्णा हिंसादिप्राचुर्यात् । 'यमान्पतत्यकुर्वाणो नियमान्केवलान्भजन्' इति स्मृतेस्तस्मात्पूर्वेषामन्तरङ्गत्वमुत्तरेषां बहिरङ्गत्वमित्याशयेनाऽऽह—हिंसेति । कर्मयोगापेक्षया तत्त्यागस्याधिकारिविशेषं प्रति प्रशस्तत्वमुपसंहरति—इत्यत इति । तत्प्रशंसाप्रकारमेवाभिनयति—त्याग एवेति । उक्तानामाश्रमैरनुष्ठेयत्वेनेति शेषः । तत्त्यागे हेतुमाह—वैराग्यमिति । मोक्षस्य कर्मपरित्यागस्येत्यर्थः । उत्तमपुमर्थार्थिनः संन्यासद्वारा श्रवणादि कर्तव्यमित्यत्र वाक्यान्तरमुदाहरति—किं ते धनेनेति । अथ पित्रादिर्भिर्गतं पन्थानमन्वेषयामि नाऽऽत्मानमित्याशङ्क्याऽऽह—पितामहा इति । विविदिषासंन्यासे साख्यादिसंमतिमाह—एवमिति । यथाऽऽहुः साख्याः—'ज्ञानेन चापवर्गो विपर्ययादिष्यते बन्धः' इति । 'विवेकख्यातिपर्यन्तमज्ञानाच्चित्तचेष्टितम्' इति च । अविपर्ययाद्विशुद्धं केवलमुत्पद्यत ज्ञानम्' इति च ।

योगशास्त्रविदश्चाऽऽहुः—'अभ्यासवैराग्याभ्या तन्निरोधः' इति । तत्र वैराग्येण विषयस्रोतः परिखिलीक्रियते । विवेकदर्शनाभ्यासेन कल्याणस्रोत उत्पाद्यत इति च । 'दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम्' इति च । इतश्च संन्यासो ज्ञानं प्रति प्रत्यासन्न इत्याह—कामेति । संन्यासिनः कामप्रवृत्त्यभावेऽपि कथं सन्यासस्य ज्ञानं प्रति प्रत्यासन्नत्वमित्याशङ्क्याऽऽह—कामप्रवृत्तेरिति । 'इति नु कामयमानः' 'काम एष क्रोध एष रजोगुणसमुद्भवः । महाशनो महापाप्मा विद्ध्येनमिह वैरिणम्' ॥ इत्यादीनि शास्त्राणि । विविदिषासंन्यासमुपसंहरति—

ननु सावकाशत्वादनधिकृतविषयमेतदित्युक्तं यावज्जीवश्रुत्युपरोधात् । नैष दोषः । नितरां सावकाशत्वा- द्यावज्जीवश्रुतीनाम् । अविद्वत्कामिकर्तव्यतां ह्यवोचाम सर्वकर्मणाम् । न तु निरपेक्षमेव जीवननिमित्तमेव कर्तव्यं कर्म । प्रायेण हि पुरुषाः कामबहुलाः । कामश्चानेकविषयोऽनेककर्मसाधनसाध्यश्च । अनेकफलसाधनानि च वैदिकानि कर्माणि दाराग्निसंबन्धपुरुषकर्तव्यानि पुनः पुनश्चानुष्ठीयमानानि बहुफलानि कृष्यादिवद्वर्षशतसमाप्तीनि च ५ गार्हस्थ्ये वाऽरण्ये वाऽतस्तदपेक्षया यावज्जीवश्रुतयः । 'कुर्वन्नेवेह कर्माणि' इति च मन्त्रवर्णः ।

तस्मिंश्च पक्षे विश्वजित्सर्वमेधयोः कर्मपरित्यागः । यस्मिंश्च पक्षे यावज्जीवानुष्ठानं तदा श्मशानान्तत्वं भस्मान्तता च शरीरस्य । इतरवर्णापेक्षया वा यावज्जीवश्रुतिः । न हि क्षत्रियवैश्ययोः पारिव्राज्यप्रतिपत्तिरस्ति । तथा 'मन्त्रैर्यस्योदितो विधिः' । 'ऐकाश्रम्यं त्वाचार्याः' इत्येवमादीनां क्षत्रियवैश्यापेक्षत्वम् । तस्मात्पुरुषसामर्थ्य- ज्ञानवैराग्यकामाद्यपेक्षया व्युत्थानविकल्पक्रमपारिव्राज्यप्रतिपत्तिप्रकारा न विरुध्यन्ते । अनधिकृतानां च १० पृथग्विधानात्पारिव्राज्यस्य 'स्नातको वाऽस्नातको वोत्सन्नाग्निरनग्निको वे'त्यादिना । तस्मात्सिद्धान्याश्र- मान्तराण्यधिकृतानामेव ॥१५॥

इति श्रीमद्बृहदारण्यकोपनिषद्भाष्ये चतुर्थाध्यायस्य पञ्चमं ब्राह्मणम् ॥५॥

**तस्मादिति** । यथोक्तस्याधिकारिणो दर्शितया विधया ज्ञानेन विनाऽपि संन्यासस्य प्राप्तत्वाद्ब्रह्मचर्यादेवेत्यादि विधिवाक्यमुपपन्नमिति योजना ।

१५ अथ पारिव्राज्यविधानमनधिकृतविषयमुचितं तथा सति सावकाशत्वान्न त्वधिकृतविषय यावज्जीवश्रुति- विरोधात्तस्या निरवकाशत्वात्सावकाशनिरवकाशयोश्च निरवकाशस्यैव बलवत्त्वादित्युक्तं शङ्कते—**नन्विति** । यावज्जीवश्रुतेर्निरवकाशत्वं दूषयति—**नैष दोष इति** । कथमतिशयेन सावकाशत्वं तत्राऽऽह—**अविद्वदिति** । जीवन- मात्रं निमित्तीकृत्य चोदितं कर्म कथं कामिना कर्तव्य तत्राऽऽह—**न त्विति** । प्रत्यवायपरिहारादेरिष्टत्वादित्यर्थः । अनुष्ठातृस्वरूपनिरूपणायामपि न जीवनमात्रं निमित्तीकृत्य कर्म कर्तव्यमित्याह—**प्रायेणेति** । तथाऽपि नित्येषु कर्मसु २० न कामनिमित्ता प्रवृत्तिस्तत्र काम्यमानफलाभावादित्याशङ्क्याऽऽह—**कामश्चेति** । प्रत्यवायपरिहारादेरपि कामितत्व युक्तमिति भावः । तथाऽपि नित्ये कर्मणि काम्यमानं फलं विध्युद्देशे किंचिन्न श्रुतमित्याशङ्क्याऽऽह—**अनेकेति** । कर्म- भिरनेकैः साधनैर्यद्दुरितनिबर्हणादि साध्यं तदेवास्याश्रुतमपि विध्युद्देशे साध्य भवति । 'यद्यद्धि कुरुते जन्तुस्तत्त- त्कामस्य चेष्टितम्' इति स्मृतेस्तद्व्यतिरेकेण प्रवृत्त्यनुपपत्तेरतो नित्येऽपि कामितं फलमस्तीत्यर्थः । ननु वैदिकानां कर्मणा नियतफलत्वात्कामोऽपि नियतफलो युक्तस्तथा च नित्येषु तदभावान्न कामितं फल सेत्स्यति तत्राऽऽह—**अनेकफलेति** । २५ अथ तानि पुरुषमात्रकर्तव्यानीति कुतो विवक्षितसंन्याससिद्धिस्तत्राऽऽह—**दारेति** । नन्वविरक्तेनापि गृहिणा सकृदेव तान्यनुष्ठेयानि तावता विधेश्चरितार्थत्वात्तथाच कथं फलबाहुल्यमित्याशङ्क्याऽऽह—**पुनः पुनश्चेति** । यावज्जीवोपबन्धा- दावृत्तिसिद्धिरिति भावः । तर्हि यावज्जीवश्रुतिवशादशेषाश्रमानुष्ठेयान्यनवरतमग्निहोत्रादीनीति कुतो यथोक्तसंन्यासोप- पत्तिरित्याशङ्क्याऽऽह—**वर्षशतेति** । अविरक्तगृहिविषयत्व श्रुतिमन्त्रयोरित्युपसंहरति—**अत इति** ।

यत्तु यावज्जीवश्रुतेरपवादो विश्वजित्सर्वमेधयोरिति तदपि कामिगृहिविषयत्वान्न ब्रह्मचर्यादेव प्रव्रजेदिति- ३० विध्यपवादकमित्याह—**तस्मिंश्चेति** । परोक्त लिङ्गमपि तद्विषयत्वान्न सर्वस्य वेदस्य कर्मावसानत्वं द्योतयतीत्याह—**यस्मिंश्चेति** । यावज्जीवश्रुतेर्गत्यन्तरमाह—**इतरेति** । कथ सा क्षत्रियवैश्यविषयत्वेन प्रवृत्ता त्रैवर्णिकानामपि पारि- व्राज्यपरिग्रहादित्याशङ्क्याऽऽह—**न हीति** । यावज्जीवश्रुतिवदैकाश्रम्यप्रतिपादकस्मृतीनामपि क्षत्रियादिविषयत्व- माह—**तथेति** । श्रुतिस्मृतीना कर्मतत्संन्यासार्थानां भिन्नविषयत्वे फलितमुपसंहरति—**तस्मादिति** । यत्तु काण- कुब्जादयोऽपि कर्मण्यनधिकृता अनुग्राह्या एव श्रुत्येति तत्राऽऽह—**अनधिकृताना चेति** । सत्यामेव भार्यायां त्यक्ताग्नि- ३५ रुत्सन्नाग्निस्तस्यामसत्यां परित्यक्ताग्निरनग्निक इति भेदः । आश्रमान्तरविषयश्रुतिस्मृतीनामनधिकृतविषयत्वाभावे सिद्धमर्थं निगमयति—**तस्मादिति** ॥१५॥

इति बृहदारण्यकोपनिषद्भाष्यटीकायां चतुर्थाध्यायस्य पञ्चमं ब्राह्मणम् ॥५॥

अथ चतुर्थाध्यायस्य षष्ठं ब्राह्मणम्

अथ वꣳशः पौतिमाष्यो गौपवनाद्गौपवनः पौतिमाष्यात्पौतिमाष्यो गौपवनाद्गौपवनः कौशिकात्कौशिकः कौण्डिन्यात्कौण्डिन्यः शाण्डिल्याच्छाण्डिल्यः कौशिकाच्च गौतमाच्च गौतमः ॥१॥

आग्निवेश्यादाग्निवेश्यो गार्ग्याद्गार्ग्यो गार्ग्याद्गार्ग्यो गौतमाद्गौतमः सैतवात्सैतवः पाराशर्यायणात्पाराशर्यायणो गार्ग्यायणाद्गार्ग्यायण उद्दालकायनादुद्दालकायनो जाबालायनाज्जाबालायनो माध्यंदिनायनान्माध्यंदिनायनः सौकरायणात्सौकरायणः काषायणात्काषायणः सायकायनात्सायकायनः कौशिकायनेः कौशिकायनिः ॥२॥

घृतकौशिकाद्घृतकौशिकः पाराशर्यायणात्पाराशर्यायणः पाराशर्यात्पाराशर्यो जातूकर्ण्याज्जातूकर्ण्य आसुरायणाच्च यास्काच्चासुरायणस्त्रैवणेस्त्रैवणिरौपजन्धनेरौपजन्धनिरासुरेरासुरिर्भारद्वाजाद्भारद्वाज आत्रेयादात्रेयो माण्टेर्माण्टिर्गौतमाद्गौतमो गौतमाद्गौतमो वात्स्याद्वात्स्यः शाण्डिल्याच्छाण्डिल्यः कैशोर्यात्काप्यात्कैशोर्यः काप्यः कुमारहारितात्कुमारहारितो गालवाद्गालवो विदर्भीकौण्डिन्याद्विदर्भीकौण्डिन्यो वत्सनपातो बाभ्रवाद्वत्सनपाद्बाभ्रवः पथः सौभरात्पन्थाः सौभरोऽयास्यादाङ्गिरसादयास्य आङ्गिरस आभूतेस्त्वाष्ट्रादाभूतिस्त्वाष्ट्रो विश्वरूपात्त्वाष्ट्राद्विश्वरूपस्त्वाष्ट्रोऽश्विभ्यामश्विनौ दधीच आथर्वणाद्दध्यङ्ङाथर्वणोऽथर्वणो दैवादथर्वा दैवो मृत्योः प्राध्वꣳसनान्मृत्युः प्राध्वꣳसनः प्रध्वꣳसनात्प्रध्वꣳसन एकर्षेरेकर्षिर्विप्रचित्तेर्विप्रचित्तिर्व्यष्टेर्व्यष्टिः सनारोः सनारुः सनातनात्सनातनः सनगात्सनगः परमेष्ठिनः परमेष्ठी ब्रह्मणो ब्रह्म स्वयंभु ब्रह्मणे नमः ॥३॥

इति बृहदारण्यकोपनिषदि चतुर्थाध्यायस्य षष्ठं ब्राह्मणम् ॥६॥
इति बृहदारण्यकोपनिषदि चतुर्थोऽध्यायः ॥४॥
बृहदारण्यकक्रमेण षष्ठोऽध्यायः ॥६॥

अथानन्तरं याज्ञवल्कीयस्य काण्डस्य वंश आरभ्यते यथा मधुकाण्डस्य वंशः। व्याख्यानं तु पूर्ववत्। ब्रह्म स्वयंभु ब्रह्मणे नम ॐमिति ॥१-३॥

इति श्रीमद्बृहदारण्यकोपनिषद्भाष्ये चतुर्थाध्यायस्य षष्ठं ब्राह्मणम् ॥६॥

इति श्रीमद्गोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्यस्य श्रीशंकरभगवतः कृतौ बृहदारण्यकोपनिषद्भाष्ये चतुर्थोऽध्यायः ॥४॥

तदेवं विचारद्वारा श्रुतिस्मृतीनामापाततो विरुद्धानामविरोधं प्रतिपाद्याथ वंश इत्यस्यार्थमाह—अथेति। साङ्गोपाङ्गस्य सफलास्याऽऽत्मविज्ञानस्य प्रवचनानन्तर्यमथशब्दार्थमाह—अनन्तरमिति। यथा प्रथमान्ताः शिष्यो गुरवस्तु पञ्चम्यन्त इति चतुर्थान्ते व्याख्यातं तथाऽत्रापीत्याह—व्याख्यानं त्विति। इत्यागमोपपत्तिभ्यां ससंन्यासं सेतिकर्तव्यताकमात्मज्ञानममृतत्वसाधनं सिद्धमित्युपसंहर्तुमितिशब्दः। परिसमाप्तौ मङ्गलमाचरति—ब्रह्मेति ॥१-३॥

इति बृहदारण्यकोपनिषद्भाष्यटीकायां चतुर्थाध्यायस्य षष्ठं वंशब्राह्मणम् ॥६॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दभगवत्पूज्यपादशिष्यश्रीमद्भगवदानन्दज्ञानविरचितायां श्रीमद्बृहदारण्यकोपनिषद्भाष्यटीकायां चतुर्थोऽध्यायः ॥४॥

# अथ पञ्चमोऽध्यायः

## अथ पञ्चमाध्यायस्य प्रथमं ब्राह्मणम्

ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते। पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते। ॐ खं ब्रह्म। खं पुराणं वायुरं खमिति ह स्माऽऽह कौरव्यायणीपुत्रो वेदोऽयं ब्राह्मणा विदुर्वेदैनेन यद्वेदितव्यम्॥

५ इति बृहदारण्यकोपनिषदि पञ्चमाध्यायस्य प्रथमं ब्राह्मणम्॥१॥

पूर्णमद इत्यादि खिलकाण्डमारभ्यते। अध्यायचतुष्टयेन यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरो निरुपाधिकोऽशनायाद्यतीतो नेति नेतीति व्यपदेश्यो निर्धारितो यद्विज्ञानं केवलममृतत्वसाधनमधुना तस्यैवाऽऽत्मनः सोपाधिकस्य शब्दार्थादिव्यवहारविषयापन्नस्य पुरस्तादनुक्तान्युपासनानि कर्मभिरविरुद्धानि प्रकृष्टाभ्युदय-
१० साधनानि क्रममुक्तिभाञ्जि च तानि वक्तव्यानीति परः संदर्भः सर्वोपासनशेषत्वेनोकारो दमं दानं दयामित्येतानि च विधित्सितानि। पूर्णमदः पूर्णं न कुतश्चिद्व्यावृत्तं व्यापीत्येतत्। निष्ठा च कर्तरि द्रष्टव्या। अद इति परोक्षाभिधायि सर्वनाम तत्परं ब्रह्मेत्यर्थः। तत्संपूर्णमाकाशवद्व्यापि निरन्तरं निरुपाधिकं च। तदेवेदं सोपाधिकं नामरूपस्थं व्यवहारापन्नं पूर्णं स्वेन रूपेण परमात्मना व्याप्येव नोपाधिपरिच्छिन्नेन विशेषात्मना। तदिदं विशेषापन्नं कार्यात्मकं ब्रह्म पूर्णात्कारणात्मन उदच्यत उद्रिच्यत उद्गच्छतीत्येतत्। यद्यपि कार्यात्मनोद्रिच्यते तथाऽपि
१५ यत्स्वरूपं पूर्णत्वं परमात्मभावं तन्न जहाति पूर्णमेवोद्रिच्यते। पूर्णस्य कार्यात्मनो ब्रह्मणः पूर्णं पूर्णत्वमादाय गृहीत्वाऽऽत्मस्वरूपैकरसत्वमापद्य विद्ययाऽविद्याकृतं भूतमात्रोपाधिसंसर्गजमन्यत्वावभासं तिरस्कृत्य पूर्णमेवानन्तरमबाह्यं प्रज्ञानघनैकरसस्वभावं केवलं ब्रह्मावशिष्यते।

पूर्वस्मिन्नध्याये ब्रह्मात्मज्ञानं सफलं साङ्गोपाङ्गं वादन्यायेनोक्तमिदानीं काण्डान्तरमवतारयति—पूर्णमिति। पूर्वाध्यायेष्वेव सर्वस्य वक्तव्यस्य समाप्तत्वादलं खिलकाण्डारम्भेणेत्याशङ्क्य पूर्वत्रानुक्तं परिशिष्टं वस्तु खिलशब्दवाच्य-
२० मस्तीत्याह—अध्यायचतुष्टयेनेति। सर्वान्तर इत्युक्त इति शेषः। अमृतत्वसाधनं निर्धारितमिति पूर्वेण संबन्धः। शब्दार्थादीत्यादिशब्देन मानमेयादिग्रहः। दया शिक्षेदित्युक्तानीति शेषः। ॐकारादि यत्र साधनत्वेन विधित्सितं तत्पूर्वोक्तमैक्यज्ञानमनुवदति—पूर्णमिति। अवयवार्थमुक्त्वा समुदायार्थमाह—तत्संपूर्णमिति। अदः पूर्णमित्यनेन लक्ष्यं तत्पदार्थं दर्शयित्वा त्वंपदार्थं दर्शयति—तदेवेति। कथं सोपाधिकस्य पूर्णत्वमित्याशङ्क्याऽऽह—स्वेनेति। व्यावर्त्यमाह—नोपाधीति। न वयमुपहितेन विशिष्टेन रूपेण पूर्णतां वर्णयाम किंतु केवलेन स्वरूपेणेत्यर्थः। लक्ष्यौ
२५ तत्त्वंपदार्थावुक्त्वा तावेव वाच्यौ कथयति—तदिदमिति। कथं कार्यात्मनोद्रिच्यमानस्य पूर्णत्वमित्याशङ्क्याऽऽह—यद्यपीति। लक्ष्यपदार्थैक्यज्ञानफलमुपन्यस्यति—पूर्णस्येति।

---

१. खिलशब्दः खण्डवाची सैन्धवखिल्य इत्यादौ खण्डे प्रसिद्धत्वात्। प्रकृते च अध्याये "पूर्णमद" इत्यादिना शुद्धस्य ब्रह्मणः ओंखमिति उपहितब्रह्मणः "तद्यत्तत्सत्यमि"त्यत्र सत्यब्रह्मणः "विद्युद् ब्रह्म अन्नं ब्रह्मे"त्यादौ उपहितोपासनस्य च विधानात्। द्वितीयब्राह्मणे दमदानदयारूपाणां ज्ञानोत्पत्तिसाधनानामन्ते तुरीयगायत्र्युपास-
३० नस्य च विधानादत्र निखिलस्याध्यायस्यैकार्थकत्वाभावात्। विप्रकीर्णानां बहूनां विधानात् खिलकाण्डत्वमस्य षष्ठाध्यायस्य च स्पष्टम्। षष्ठे प्राणोपासनस्य पञ्चाग्निविद्यायाश्च प्राधान्यात्। गृहस्थकर्तव्यानां च केषांचित्कर्मणां विधानाच्च खिलमेव षष्ठोऽपि।

२. पूर्णमदः निरुपाधिकं ब्रह्म पूर्णमिदं शरीराद्युपाध्युपहितं पूर्णात् निरुपाधिकादुपहितमुदच्यते। औपाधिकभेदमनुभवति। तस्य वस्तुतः पूर्णस्य वास्तवं पूर्णत्वं ज्ञात्वा पूर्णब्रह्मैवावशिष्यते। अयमेव प्रकारः श्रीमधुसूदन-
३५ सरस्वतीभिः सिद्धौ अनुसृतः मङ्गले। मायाकल्पितेत्यादि सत्यं ज्ञानसुखात्मकमिति ब्रह्मैव जीवरूपेण व्यवहरति सत्यज्ञानसुखात्मकोऽपि सन् स च श्रुतिशिखोत्थाखण्डसाक्षात्कारविषयः गुरूपदेशाज्जातः। तत मिथ्याबन्धविधूननेन परमानन्दैकतानात्मकं मोक्षं प्राप्त इव प्राप्तेः स्वरूपत्वात्। अप्राप्तप्राप्तित्वाभावात् इवकारः।

३. न कुतश्चित् देशात् कालात् वस्तुतो वा व्यावृत्तम्।

यदुक्तं ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेत्तस्मात्तत्सर्वमभवदित्येषोऽस्य मन्त्रस्यार्थः। तत्र ब्रह्मेत्यस्यार्थः पूर्णमद इति। इदं पूर्णमिति ब्रह्म वा इदमग्र आसीदित्यस्यार्थः। तथा च श्रुत्यन्तरम्–"यदेवेह तदमुत्र यदमुत्र तदन्विह" इति। अतोऽदःशब्दवाच्यं पूर्णं ब्रह्म तदेवेदं पूर्णं कार्यस्थं नामरूपोपाधिसंयुक्तमविद्ययोद्रिक्तम्। तस्मादेव परमार्थस्वरूपादन्यदिव प्रत्यवभासमानम्। तद्यदात्मानमेव परं पूर्णं ब्रह्म विदित्वाऽहमदः पूर्णं ब्रह्मास्मीत्येवं पूर्णमादाय तिरस्कृत्यापूर्णस्वरूपतामविद्याकृतां नामरूपोपाधिसंपर्कजामेतया ब्रह्मविद्यया पूर्णमेव केवलमवशिष्यते। ५ तथा चोक्तम् "तस्मात्तत्सर्वमभवत्" इति।

यः सर्वोपनिषदर्थो ब्रह्म स एषोऽनेन मन्त्रेणानूद्यत उत्तरसम्बन्धार्थम्। ब्रह्मविद्यासाधनत्वेन हि वक्ष्यमाणानि साधनान्योंकारदमदानदयाख्यानि विधित्सितानि खिलप्रकरणसम्बन्धात्सर्वोपासनाङ्गभूतानि च। अत्रैके वर्णयन्ति—पूर्णात्कारणात्पूर्णं कार्यमुद्रिच्यते। उद्रिक्तं कार्यं वर्तमानकालेऽपि पूर्णमेव परमार्थवस्तुभूतं द्वैतरूपेण। पुनः प्रलयकाले पूर्णस्य कार्यस्य पूर्णतामादायाऽऽत्मनि धित्वा पूर्णमेवावशिष्यते कारणरूपम्। एवमुत्पत्तिस्थिति- १० प्रलयेषु त्रिष्वपि कालेषु कार्यकारणयोः पूर्णतैव। सा चैकैव पूर्णता कार्यकारणयोर्भेदेन व्यपदिश्यते। एवं च द्वैताद्वैतात्मकमेकं ब्रह्म। यथा किल समुद्रो जलतरङ्गफेनबुद्बुदाद्यात्मक एव। यथा च जलं सत्यं तदुद्भवाश्च तरङ्गफेनबुद्बुदादयः समुद्रात्मभूता एवाऽऽविर्भावतिरोभावधर्मिणः परमार्थसत्या एव। एवं सर्वमिदं द्वैतं परमार्थसत्यमेव जलतरङ्गादिस्थानीयं समुद्रजलस्थानीयं तु परं ब्रह्म। एवं च किल द्वैतस्य सत्यत्वे कर्मकाण्डस्य प्रामाण्यं यदा पुनर्द्वैतं द्वैतमिवाविद्याकृतं मृगतृष्णिकावदनृतमद्वैतमेव परमार्थतस्तदा किल कर्मकाण्डं विषयाभावादप्रमाणं १५ भवति। तथा च विरोध एव स्यात्। वेदैकदेशभूतोपनिषत्प्रमाणं परमार्थाद्वैतवस्तुप्रतिपादकत्वादप्रमाणं कर्मकाण्डमसद्द्वैतविषयत्वात्। तद्विरोधपरिजिहीर्षया श्रुत्यैतदुक्तं कार्यकारणयोः सत्यत्वं समुद्रवत्पूर्णमद इत्यादिनेति।

तदसत्। विशिष्टविषयापवादविकल्पयोरसम्भवात्। न हीयं सुविवक्षिता कल्पना। कस्मात्। यथा क्रियाविषय उत्सर्गप्राप्तस्यैकदेशेऽपवादः क्रियते। यथाऽहिंसन्सर्वभूतान्यन्यत्र तीर्थेभ्य इति हिंसा सर्वभूतविषयोत्सर्गेण

उपक्रमोपसहारयोरैकरूप्यमैक्ये श्रुतितात्पर्यलिङ्गं संगिरते—यदुक्तमिति। कथं पूर्णकण्डिकाया ब्रह्मकण्डिकया २० सहैकार्थत्वेनैकवाक्यत्वमित्याशङ्क्य तद्व्युत्पादयति—तत्रेत्यादिना। उपक्रमोपसंहारसिद्धे ब्रह्मात्मैक्ये कठश्रुतिं संवादयति—तथा चेति। ब्रह्मात्मनोरैक्यमुक्तमुपजीव्य वाक्यार्थमाह—अत इति। पूर्णं यद्ब्रह्मेति यच्छब्दो द्रष्टव्यः। उक्तमेव व्यनक्ति—तस्मादेवेति। संसारावस्थां दर्शयित्वा मोक्षावस्था दर्शयति—यद्यदात्मानमिति। उक्ते विद्याफले वाक्योपक्रममनुकूलयति—तथा चोक्तमिति।

न केवलं ब्रह्मकण्डिकयैवास्य मन्त्रस्यैकवाक्यत्वं किन्तु सर्वाभिरुपनिषद्भिरित्याह—य. सर्वोपनिषदर्थ इति। २५ अनुवादफलमाह—उत्तरेति। तदेव स्फुटयति—ब्रह्मविद्येति। तस्माद्युक्तो ब्रह्मणोऽनुवाद इति शेषः। कथं तर्हि सर्वोपासनशेषत्वेन विधित्सितत्वमोकारादीनामुक्तमत आह—खिलेति। अद्वितीय ब्रह्मेत्युत्सर्गप्रवृत्तं शास्त्रं प्रलयावस्थब्रह्मविषयं सृष्टिशास्त्रं तु विशेषप्रवृत्त तस्यापवादस्ततो द्वैताद्वैतरूपं ब्रह्म सर्वोपनिषदर्थस्तदेव ब्रह्मानेन मन्त्रेण सक्षिप्यत इति भर्तृप्रपञ्चपक्षमुत्थापयति—अत्रेत्यादिना। कार्यकारणयोरुत्पत्तिकाले पूर्णत्वमुक्त्वा स्थितिकालेऽपि तदाह—उद्रिक्तमिति। प्रलयकालेऽपि तयोः पूर्णत्वं दर्शयति—पुनरिति। कालभेदेन कार्यकारणयोरुक्तां पूर्णतां ३० निगमयति—एवमिति। कार्यकारणे द्वे पूर्णे चेत्तर्हि कथमद्वैतसिद्धिरित्याशङ्क्याऽऽह—सा चेति। कथं तर्हि द्वयोरुक्तं पूर्णत्वं तदाह—कार्यकारणयोरिति। एका पूर्णता व्यपदिश्यते च द्वयोरिति स्थिते लब्धमर्थमाह—एवं चेति। एकं ह्यनेकात्मकमिति विप्रतिषेधमाशङ्क्य दृष्टान्तेन निराचष्टे—यथा किलेति। एवमेकं ब्रह्मानेकात्मकमिति शेषः। ब्रह्मणो द्वैताद्वैतात्मकत्वेऽपि सत्यमद्वैतमसत्यमितरदित्याशङ्क्याऽऽह—यथा चेत्यादिना। द्वैतस्य परमार्थसत्यत्वे कर्मकाण्डश्रुतिमनुकूलयति—एवं चेति। विपक्षे दोषमाह—यदा पुनरिति। अस्तु कर्मकाण्डाप्रामाण्यं नेत्याह—तथा ३५ चेति। विरोधोऽध्ययनविधेरिति शेषः। तमेव विरोध साधयति—वेदेति। कथं तर्हि विरोधसमाधिस्तत्राऽऽह—तद्विरोधेति।

प्राप्त भर्तृप्रपञ्चप्रस्थानं प्रत्याचष्टे—तदसदिति। विशिष्टमद्वितीय ब्रह्म तद्विषयोत्सर्गापवादयोर्विकल्पसमुच्चययोश्चासम्भवं वक्तु प्रतिज्ञाभागं विभजते—न हीति। तत्र प्रश्नपूर्वकं हेतु विवृणोति—कस्मादित्यादिना। यथेत्यादिग्रन्थस्य न च तथेत्यादिना सम्बन्ध। क्रियायामुत्सर्गापवादसम्भावनामुदाहरति—यथेत्यादिना। तथाऽन्यत्रापि ४०

निवारिता तीर्थं विशिष्टविषये ज्योतिष्टोमादावनुज्ञायते। न च तथा वस्तुविषय इहाद्वैतं ब्रह्मोत्सर्गेण प्रतिपाद्य
पुनस्तदेकदेशेऽपवदितुं शक्यते। ब्रह्मणोऽद्वैतत्वादेवैकदेशानुपपत्तेः। तथा विकल्पानुपपत्तेश्च। यथाऽतिरात्रे षोडशिनं
गृह्णाति नातिरात्रे षोडशिनं गृह्णातीति ग्रहणाग्रहणयोः पुरुषाधीनत्वाद्विकल्पो भवति। न त्विह तथा वस्तुविषये
द्वैतं वा स्यादद्वैतं वेति विकल्पः सम्भवत्यपुरुषतन्त्रत्वादात्मवस्तुनः। विरोधाच्च द्वैताद्वैतत्वयोरेकस्य। तस्मान्न
५ सुविवक्षितेयं कल्पना।

श्रुतिन्यायविरोधाच्च। सैन्धवघनवत्प्रज्ञानैकरसघनं निरन्तरं पूर्वापरबाह्याभ्यन्तरभेदविवर्जितं सबाह्याभ्य-
न्तरमजं नेति नेत्यस्थूलमनण्वजमजरमभयममृतमित्येवमाद्याः श्रुतयो निश्चितार्थाः संशयविपर्यासाशङ्कारहिताः सर्वाः
समुद्रे प्रक्षिप्ताः स्युरकिञ्चित्करत्वात्। तथा न्यायविरोधोऽपि सावयवस्यानेकात्मकस्य क्रियावतो नित्यत्वानुपपत्तेः।
नित्यत्वं चाऽऽत्मनः स्मृत्यादिदर्शनादनुमीयते। तद्विरोधश्च प्राप्नोत्यनित्यत्वे। भवत्कल्पनानर्थक्यं च। स्फुटमेव
१० चास्मिन्पक्षे कर्मकाण्डानर्थक्यम्। अकृताभ्यागमकृतविप्रणाशप्रसङ्गात्।

ननु ब्रह्मणो द्वैताद्वैतात्मकत्वे समुद्रादिदृष्टान्ता विद्यन्ते कथमुच्यते भवतैकस्य द्वैताद्वैतत्वं विरुद्धमिति। न।
अन्यविषयत्वात्। नित्यनिरवयववस्तुविषयं हि विरुद्धत्वमवोचाम द्वैताद्वैतत्वस्य न कार्यविषये सावयवे।
तस्माच्छ्रुतिस्मृतिन्यायविरोधादनुपपन्नेयं कल्पना। अस्याः कल्पनाया वरमुपनिषत्परित्याग एव।

अध्येयत्वाच्च न शास्त्रार्थेयं कल्पना। न हि जननमरणाद्यनर्थशतसहस्रभेदसमाकुलं समुद्रवनादिवत्साव-
१५ यवमनेकरसं ब्रह्म ध्येयत्वेन विज्ञेयत्वेन वा श्रुत्योपदिश्यते। प्रज्ञानघनतां चोपदिशति। एकधैवानुद्रष्टव्यमिति च।
अनेकधादर्शनापवादाच्च "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" इति। यच्च श्रुत्या निन्दितं तन्न
कर्तव्यम्। यच्च न क्रियते न स शास्त्रार्थः। ब्रह्मणोऽनेकरसत्वमनेकधात्वं च द्वैतरूपं निन्दितत्वान्न द्रष्टव्यम्। अतो

क्रियायामुत्सर्गापवादौ द्रष्टव्याविति शेषः। वैधर्म्यदृष्टान्तस्य दार्ष्टान्तिकमाह—न चेति। विषयभेदे सत्युत्सर्गापवादौ दृष्टौ
न तावदद्वितीये ब्रह्मणि सम्भवतः। न हि ब्रह्माद्वयमेव जायते लीयते चेति सम्भावनास्पदमिति भावः। उत्सर्गाप-
२० वादानुपपत्तिवद्ब्रह्मणि विकल्पानुपपत्तेश्च तदेकरसमेषितव्यमित्याह—तथेति। विकल्पानुपपत्तिमुपपादयति—
यथेत्यादिना। सम्प्रति समुच्चयासम्भवमभिदधाति—विरोधाच्चेति। उत्सर्गापवादविकल्पसमुच्चयानामसम्भवान्न
युक्ता ब्रह्मणो नानारसत्वकल्पनेति फलितमाह—तस्मादिति।

परकीयकल्पनानुपपत्तौ हेत्वन्तरं प्रतिज्ञाय श्रुतिविरोधं प्रकटीकृत्य न्यायविरोधं प्रकटयति—तथेति।
ब्रह्मणोऽनेकरसत्वे स्यादिति शेषः। नित्यत्वानुपपत्तेरात्मनो नित्यत्वाङ्गीकारविरोधः स्यादित्यध्याहारः। ननु तस्य
२५ अनित्यत्वं नाङ्गीक्रियते मानाभावादिति प्रासङ्गिकीमाशङ्कां प्रत्याह—नित्यत्वं चेति। स्मृत्यादिदर्शनादित्यादिशब्देन
स एव तु कर्मानुस्मृतिशब्दविधिभ्य इत्यधिकरणोक्ता हेतवो गृह्यन्ते। अनुमीयते कल्प्यते स्वीक्रियत इति यावत्।
तद्विरोधश्च स्मृत्यादिदर्शनकृतात्मनित्यत्वानुमानविरोधश्चेत्यर्थः। आत्मनोऽनित्यत्वे दोषान्तरमाह—भवदिति। कर्म-
काण्डस्य सत्यार्थत्वं परेण कल्प्यते तदानर्थक्यमात्मानित्यत्वे स्पष्टमापतेदित्युक्तमेव स्फुटयति—स्फुटमेवेति।

ब्रह्मणो नानारसत्वे विरोधमुक्तमसहमानः स्वोक्तं स्मारयति—नन्विति। समुद्रादीनां कार्यत्वसावयवत्वा-
३० भ्यामनेकात्मकत्वमविरुद्धं ब्रह्मणस्तु नित्यत्वान्निरवयवत्वाच्च नानेकात्मकत्वं युक्तमिति वैधर्म्यमादर्शयन्नुत्तरमाह—
नेत्यादिना। ब्रह्मणो नानारसत्वकल्पनानुपपत्तिमुपसंहरति—तस्मादिति। 'अजो नित्यः शाश्वतोऽयं पुराणः' इत्याद्याः
स्मृतयः। ननु प्रत्यक्षाद्यविरोधेनोपनिषदा विषयसिद्ध्यर्थमेषा कल्पना क्रियते तथा च कथं साऽनुपपन्नेत्याशङ्क्याऽऽह—
अस्या इति। विरुद्धार्थत्वे कल्पितेऽपि तत्प्रामाण्यानुपपत्तेरविशेषादिति भावः।

किञ्च ब्रह्मणो नानारसत्वं लौकिकं वैदिकं वा। नाऽऽद्यः। तस्यालौकिकत्वात्तन्नानारसत्वे लोकस्य तटस्थ-
३५ त्वात्। न द्वितीयः। तन्नानारसत्वस्य ध्येयत्वेन ज्ञेयत्वेन वा शास्त्रेणानुपदेशादित्याह—अध्येयत्वाच्चेति। तदेव
स्फुटयति—न हीति। इतश्च नानारसं ब्रह्म न यथाशास्त्रप्रकाश्यमित्याह—प्रज्ञानेति। चकारादुपदिशतीत्याकृष्यते।
अनेकधादर्शनापवादाच्च नानारसं ब्रह्म शास्त्रार्थो न भवतीति शेषः। भेददर्शनस्य निन्दितत्वे लब्धमर्थमाह—
यच्चेति। अकर्तव्यत्वे प्राप्तमर्थं कथयति—यच्च नेति। सामान्यन्यायं प्रकृते योजयति—ब्रह्मण इति। कस्तर्हि

न शास्त्रार्थः । यत्त्वेकरसत्वं ब्रह्मणस्तद्द्रष्टव्यत्वात्प्रशस्तं प्रशस्तत्वाच्च शास्त्रार्थो भवितुमर्हति ।

यत्तूक्तं वेदैकदेशस्याप्रामाण्यं कर्मविषये द्वैताभावादद्वैते च प्रामाण्यमिति । तन्न । यथाप्राप्तोपदेशार्थत्वात् । न हि द्वैतमद्वैतं वा वस्तु जातमात्रमेव पुरुषं ज्ञापयित्वा पश्चात्कर्म वा ब्रह्मविद्यां वोपदिशति शास्त्रम् । न चोपदेशार्हं द्वैतं जातमात्रप्राणिबुद्धिगम्यत्वात् ।

न च द्वैतस्यानृतत्वबुद्धिः प्रथममेव कस्यचित्स्यात् । येन द्वैतस्य सत्यत्वमुपदिश्य पश्चादात्मनः प्रामाण्यं ५ प्रतिपादयेच्छास्त्रम् । नापि पाषण्डिभिरपि प्रस्थापिता. शास्त्रस्य प्रामाण्यं न गृह्णीयुः ।

तस्माद्यथाप्राप्तमेव द्वैतमविद्याकृतं स्वाभाविकमुपादाय स्वाभाविक्यैवाविद्यया युक्ताय रागद्वेषादिदोषवते यथाभिमतपुरुषार्थसाधनं कर्मोपदिशत्यग्रे पश्चात्प्रसिद्धक्रियाकारकफलस्वरूपदोषदर्शनवते तद्विपरीतौदासीन्यस्वरूपावस्थानफलार्थिने तदुपायभूतामात्मैकत्वदर्शनात्मिकां ब्रह्मविद्यामुपदिशति । अथैवं सति तदौदासीन्यस्वरूपावस्थाने फले प्राप्ते शास्त्रस्य प्रामाण्यं प्रत्यर्थित्वं निवर्तते । तदभावाच्छास्त्रस्यापि शास्त्रत्वं तं प्रति १० निवर्तत एव ।

तथा प्रतिपुरुषं[1] परिसमाप्तं शास्त्रमिति न शास्त्रविरोधगन्धोऽप्यस्ति । अद्वैतज्ञानावसानत्वाच्छास्त्रशिष्यशासनादिद्वैतभेदस्य । अन्यतमावस्थाने[2] हि विरोधः स्यादवस्थितस्येतरेतरापेक्षत्वात्तु शास्त्रशिष्यशासनानां नान्यशास्त्रार्थस्तत्राऽऽह—यत्त्विति ।

ब्रह्मैकरस्ये प्रागुक्तं दोषमनुभाषते—यत्तूक्तमिति । कर्मकाण्डस्य कर्मविषये न प्रामाण्यमसद्द्वैतविषयत्वाद्- १५ ब्रह्मकाण्डस्य त्वद्वैते प्रामाण्यं परमार्थाद्वैतवस्तुप्रतिपादकत्वात्तथा च विरोधोऽध्ययनविधेरित्यनुवादार्थः । कर्मकाण्डाप्रामाण्यं प्रत्याचष्टे—तन्नेति । प्रसिद्धं भेदमादाय तत्रैव विधिनिषेधोपदेशस्य प्रवृत्तिनिवृत्तिद्वाराऽर्थवत्त्वान्न कर्मकाण्डानर्थक्यमित्यर्थः । ननु शास्त्रमेवाऽऽदौ भेदं बोधयित्वा पश्चादभ्युदयसाधनं कर्मोपदिशति । तथा च नास्ति भेदस्यान्यतः प्राप्तिरत आह—न हीति । यथा हि शास्त्रं जातमात्रं पुरुषं प्रत्यद्वैतं वस्तु ज्ञापयित्वा पश्चाद्ब्रह्मविद्यामुपदिशतीति नेष्यते तथा प्रथममेव पुरुषं प्रति द्वैतं बोधयित्वा कर्म पुनर्बोधयतीत्यपि नाभ्युपेयं प्रथमतो भेदावेदनावस्थायामस्य २० शास्त्रानधिकारित्वादित्यर्थः । द्वैतस्योपदेशार्हत्वमङ्गीकृत्योक्तं तदेव नास्तीत्याह—न चेति ।

ननु द्वैतस्य सत्यबुद्ध्यभावे श्रुत्युक्तानुष्ठानाय पुंसां प्रवृत्त्यनुपपत्तेः स्वप्रामाण्यसिद्ध्यर्थमेव द्वैतसत्यत्वं श्रुतिर्बोधयिष्यति नेत्याह—न च द्वैतस्येति । द्वैतानृतत्ववादिषु कर्मजडानां प्रद्वेषप्रतीतेर्न प्रथमतो द्वैतानृतत्वबुद्धिर्न च द्वैतसत्यत्वं श्रुत्यर्थस्तत्परिचयहीनानामपि द्वैतसत्यत्वाभिनिवेशादित्यर्थः । किञ्च न द्वैतवैतथ्यं शास्त्रप्रामाण्यविघातकं यतो बौद्धादिभिः श्रेयसे प्रस्थापिताः स्वशिष्या द्वैतमिथ्यात्वावगमेऽपि स्वर्गकामश्चैत्यं वन्देतेत्यादिशास्त्रस्य प्रामाण्यं २५ गृह्णन्ति । तथाऽग्निहोत्रादिशास्त्रस्यापि प्रामाण्यं भविष्यति साधनत्वशक्त्यनपहारादित्याह—नापीति ।

काण्डद्वयस्य प्रामाण्योपपत्तिमुपसंहरति—तस्मादित्यादिना । प्रसिद्धो योऽयं क्रियादिरूपे द्वैते दोषः सातिशयत्वादिस्तद्दर्शनं विवेकस्तद्वते तस्माद्द्वैताद्विपरीतमौदासीन्योपलक्षितं स्वरूपं तस्मिन्नवस्थानं कैवल्यं तदर्थिने मुमुक्षवे साधनचतुष्टयसम्पन्नायेत्यर्थः । किञ्च तत्त्वज्ञानादूर्ध्वं पूर्वं वा काण्डयोर्विरोधः शङ्क्यते । नाऽऽद्य इत्याह—अथेति । अवस्थाभेदादेकस्मिन्नपि पुरुषे काण्डद्वयस्य प्रामाण्यमविरुद्धमित्येवं स्थिते सत्युपनिषद्भ्यस्तत्त्वज्ञानोत्पत्त्यनन्तरं ३० नान्तरीयकत्वेन प्राप्ते कैवल्ये पुरुषस्य नैराकांक्ष्यं जायते न च निराकांक्षं पुरुषं प्रति शास्त्रस्य शास्त्रत्वमस्ति ।

'प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा । पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते' ॥

इति न्यायात्कृतकृत्यं प्रति प्रवर्तकत्वादिविरहिणः शास्त्रत्वायोगादतो ज्ञानादूर्ध्वं धर्म्यभावाद्विरोधासिद्धिरित्यर्थः ।

एकस्मिन्पुरुषे दर्शितन्यायं सर्वत्रातिदिशति—तथेति । ज्ञानादूर्ध्वं विरोधाभावमुपसंहरति—इति नेति । कल्पान्तरं प्रत्याह—अद्वैतेति । तत्त्वज्ञानात्पूर्वं भेदस्यावस्थितत्वात्तमाविद्यमादायाविकारिभेदादवस्थाभेदाद्वा[3] काण्डयोर- ३५ विरोधसिद्धिरित्यर्थः । भेदमेवोपपादयति—अन्यतमेति । शिष्यादीनामन्यतमस्यैवावस्थानं चेदवस्थितस्येतरस्मिश्च

---

१. प्रतिपुरुषं परिसमाप्तम् । ज्ञानोत्पत्तेः पूर्वंशास्त्रत्वं तदूर्ध्वं शास्त्रत्वाभावश्च प्रतिपुरुषं व्यवस्थितमित्यर्थः ।

२. अन्यतमेति—शास्त्रशिष्यशासनानि अन्योन्यसापेक्षाणि एकसत्त्वे एवेतरसत्त्वात् एकाभावेऽन्याभावात् एकतरसद्भावमास्थाय न विरोधशंका युक्ता ।

३. आविद्य अविद्याप्रयुक्तम् ।

तमोऽप्यवतिष्ठते । सर्वसमाप्तौ तु कस्य विरोध आशङ्क्येताद्वैते केवले शिवे सिद्धे । नाप्यविरोधताऽत एव ।

अथाप्यभ्युपगम्य ब्रूमः—द्वैताद्वैतात्मकत्वेऽपि शास्त्रविरोधस्य तुल्यत्वात् । यदाऽपि समुद्रादिवद्द्वैताद्वैतात्मकमेकं ब्रह्माभ्युपगच्छामो नान्यद्वस्त्वन्तरं तदाऽपि भवदुक्ताच्छास्त्रविरोधान्न मुच्यामहे । कथम् । एकं हि परं ब्रह्म द्वैताद्वैतात्मकं तच्छोकमोहाद्यतीतत्वादुपदेशं न कांक्षति । न चोपदेष्टाऽन्यो ब्रह्मणो द्वैताद्वैतरूपस्य ब्रह्मण एकस्यै-
५ वाभ्युपगमात् ।

अथ द्वैतविषयस्यानेकत्वादन्योन्योपदेशो न ब्रह्मविषय उपदेश इति चेत् । तदा द्वैताद्वैतात्मकमेकमेव ब्रह्म नान्यदस्तीति विरुध्यते । यस्मिन्द्वैतविषयेऽन्योन्योपदेशः सोऽन्यो द्वैतं चान्यदेवेति समुद्रदृष्टान्तो विरुद्धः । न च समुद्रोदकैकत्ववद्विज्ञानैकत्वे ब्रह्मणोऽन्यत्रोपदेशग्रहणादिकल्पना सम्भवति । न हि हस्तादिद्वैताद्वैतात्मके देवदत्ते वाक्कर्णयोर्देवदत्तैकदेशभूतयोर्वागुपदेष्ट्री कर्णः केवल उपदेशस्य ग्रहीता देवदत्तस्तु नोपदेष्टा नाप्युपदेशस्य ग्रहीतेति
१० कल्पयितुं शक्यते । समुद्रैकोदकात्मत्ववदेकविज्ञानवत्वाद्देवदत्तस्य । तस्माच्छ्रुतिन्यायविरोधश्चाभिप्रेतार्थासिद्धिश्चैवं-कल्पनायां स्यात् । तस्माद्यथाव्याख्यात एवास्माभिः पूर्णमद इत्यस्य मन्त्रस्यार्थः ।

ॐ खं ब्रह्मेति मन्त्रोऽयं चान्यत्राविनियुक्त इह ब्राह्मणेन ध्यानकर्मणि विनियुज्यते । अत्र च ब्रह्मेति विशेष्याभिधानं खमिति विशेषणम् । विशेषणविशेष्ययोश्च सामानाधिकरण्येन निर्देशो नीलोत्पलवत् खं ब्रह्मेति । ब्रह्मशब्दो बृहद्वस्तुमात्रास्पदोऽविशेषितोऽतो विशेष्यते खं ब्रह्मेति । यत्तत्खं ब्रह्म तदोंशब्दवाच्यमोंशब्दस्वरूपमेव

१५ सापेक्षत्वान्न सोऽप्यवतिष्ठेत । न च ज्ञानात्प्रागन्यतमस्यैवावस्थानं सर्वेषामेव तेषां यथाप्रतिभासमवस्थानादतो न पूर्वं विरोधशङ्केत्यर्थः । ऊर्ध्वं विरोधशङ्काभावमधिकविवक्षयाऽनुवदति—सर्वेति । कथं कैवल्यं विरोधाभावस्य सत्त्वादित्याशङ्क्याऽऽह—नापीति । अद्वैतत्वादेवाभावस्यापि तत्त्वनिमज्जनादित्याह—अत एवेति ।

अद्वितीयमेव ब्रह्म न द्वैताद्वैतात्मकमित्युपपादितमिदानी ब्रह्मणो द्वैताद्वैतात्मकत्वाभ्युपगमेऽपि विरोधो न शक्यते परिहर्तुमित्याह—अथापीति । तुल्यत्वात्तदभ्युपगमो वृथेति शेषः । उक्तमेवोपपादयति—यदाऽपीति । द्वैता-
२० द्वैतात्मकं ब्रह्मेति पक्षे कथं विरोधो न समाधीयते द्वैतमद्वैतं चाधिकृत्य काण्डद्वयप्रामाण्यसम्भवादित्याक्षिपति—कथमिति । किं ब्रह्मविषयः शास्त्रोपदेशः किं वाऽब्रह्मविषयः । प्रथमे द्वैताद्वैतरूपस्यैकस्यैव ब्रह्मणोऽभ्युपगमात्तस्य च नित्यमुक्तत्वान्नोपदेशः सम्भवतीत्याह—एकं हीति । तस्योपदेशाभावे हेत्वन्तरमाह—न चेति । उपदेष्टा हि ब्रह्मणोऽन्योऽनन्यो वा । नाऽऽद्योऽभ्युपगमविरोधात् । न द्वितीयो भेदमन्तरेणोपदेश्योपदेशकभावासम्भवादिति भावः ।

कल्पान्तरमुत्थापयति—अथेति । प्रतिज्ञाविरोधेन निराकरोति—तदेति । किञ्च सर्वस्य ब्रह्मरूपत्वे य. समुद्र-
२५ दृष्टान्तः स न स्यात्परस्परोपदेशस्याब्रह्मविषयत्वादित्याह—यस्मिन्निति । अथ यथा फेनादिविकाराणां भिन्नत्वेऽपि समुद्रोदकात्मत्वं तथा जीवादीनां भिन्नत्वेऽपि ब्रह्मस्वभावविज्ञानैक्याद्ब्रह्म सर्वमिति न विरुध्यते तत्राऽऽह—न चेति । समुद्रोदकात्मत्वं ... नन्तु नानारूपवस्तु-सर्वस्य ब्रह्मत्वमङ्गीकृतं चेद्ब्रह्मविषय एवोपदेशः स्याद्भेदस्याविचारितरमणीयत्वादित्यर्थः । नन्तु नानारूपवस्तु-समुदायो ब्रह्म तत्र प्रदेशभेदादुपदेश्योपदेशकभावो ब्रह्म तु नोपदेश्यमुपदेशकं चेति तत्राऽऽह—न हीति । तत्र हेतुमाह—समुद्रेति । यथा समुद्रस्योदकात्मना फेनादिष्वेकत्वं तथा देवदत्तक्षेत्रज्ञस्य वागाद्यवयवेष्वेकत्वेन विज्ञान-
३० वत्त्वान्न व्यवस्थासम्भवस्तथा ब्रह्मण्यपि द्रष्टव्यमित्यर्थः । मतान्तरनिराकरणमुपसंहरति—तस्मादिति । आत्मैकरस्य-प्रतिपादिका श्रुतिर्न्यायश्च सावयवस्यानेकात्मकस्येत्यादावुक्तः । अभिप्रेतार्थासिद्धिर्भवत्कल्पनानर्थक्यं चेत्यादिना दर्शिता । एवंकल्पनायामेकानेकात्मकं ब्रह्मेत्यभ्युपगतावित्यर्थः । परकीयव्याख्यानासम्भवे फलितमाह—तस्मादिति ।

ध्यानशेषत्वेनोपनिषदर्थं ब्रह्मानूद्य तद्विधानार्थं तस्मिन्विनियुक्तं मन्त्रमुत्थापयति—ॐ खमिति । इषे त्वेत्यादि-वत्तस्य कर्मान्तरे विनियुक्तत्वमाशङ्क्याऽऽह—अयं चेति । विनियोजकाभावादिति भावः । तर्हि ध्यानेऽपि नायं
३५ विनियुक्तो विनियोजकाभावाविशेषादित्याशङ्क्याऽऽह—इहेति । ख पुराणमित्यादि ब्राह्मणं तस्य च विनियोजकत्वं ध्यान[1]समवेतार्थप्रकाशनसामर्थ्यात् । यद्य[2]पि मन्त्रनिष्ठं सामर्थ्यं विनियोजकं तथाऽपि मन्त्रब्राह्मणयोरेकार्थत्वाद्ब्राह्मणस्य सामर्थ्यद्वारा विनियोजकत्वमविरुद्धमिति भावः । अत्रेति मन्त्रोक्तिः । विशेषणविशेष्यत्वे यथोक्तसामानाधिकरण्य हेतू-करोति—विशेषणेति । ब्रह्मेत्युक्ते सत्याकाङ्क्षाभावात्किं विशेषणेनेत्याशङ्क्याऽऽह—ब्रह्मशब्द इति । निरुपाधिकस्य

---

१. ध्यानसमवेतेति—ध्यानविषयेत्यर्थः ।

४० २. यद्यपीति—लिङ्गविनियोजकसूत्रे मन्त्रलिङ्गस्यैव विनियोजकत्वमुक्तं न तु ब्राह्मणगतलिङ्गस्य तथापीत्यर्थं ।

**वोभयथाऽपि सामानाधिकरण्यमविरुद्धम् ।**

**इह च ब्रह्मोपासनसाधनत्वार्थमोशब्दः प्रयुक्तः । तथा च श्रुत्यन्तरात् "एतदालम्बनं श्रेष्ठमेतदालम्बनं परम्" "ओमित्यात्मानं युञ्जीत" "ओमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत" "ओमित्येवं ध्यायथ आत्मानम्" इत्यादेः । अन्यार्थासंभवाच्चोपदेशस्य । यथाऽन्यत्रोमिति शंसत्योमित्युद्गायतीत्येवमादौ स्वाध्यायारम्भापवर्गयोश्चोंकारप्रयोगो विनियोगादवगम्यते न च तथाऽर्थान्तरमिहावगम्यते । तस्माद्ध्यानसाधनत्वेनैवेहोंकारशब्दस्योपदेशः ।** ५

**यद्यपि ब्रह्मात्मादिशब्दा ब्रह्मणो वाचकास्तथाऽपि श्रुतिप्रामाण्याद्ब्रह्मणो नेदिष्ठमभिधानमोंकारः । अत एव ब्रह्मप्रतिपत्ताविदं परं साधनम् । तच्च द्विप्रकारेण प्रतीकत्वेनाभिधानत्वेन च । प्रतीकत्वेन यथा विष्ण्वादिप्रतिमाऽभेदेन, एवमोंकारो ब्रह्मेति प्रतिपत्तव्यः । तथा ह्योंकारालम्बनस्य[1] ब्रह्म प्रसीदति । "एतदालम्बनं श्रेष्ठमेतदालम्बनं परम् । एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते" इति श्रुतेः । तत्र खमिति भौतिके खे प्रतीतिर्मा** १० **भूदित्याह—खं पुराणं चिरंतनं खं परमात्माकाशमित्यर्थः । यत्तत्परमात्माकाशं पुराणं खं तच्चक्षुराद्यविषयत्वान्निरालम्बनमशक्यं ग्रहीतुमिति श्रद्धाभक्तिभ्यां भावविशेषेण चोंकार आवेशयति । यथा विष्ण्वङ्गाङ्कितायां शिलादिप्रतिमायां विष्णुं लोक एवम् । वायुरं खं वायुरस्मिन्विद्यत इति वायुरं खं खमात्रं खमित्युच्यते न पुराणं खमित्येवमाह स्म । कोऽसौ । कौरव्यायणीपुत्रः । वायुरे हि खे मुख्यः खशब्दव्यवहारस्तस्मान्मुख्ये संप्रत्ययो युक्त इति मन्यते । तत्र यदि पुराणं खं ब्रह्म निरुपाधिस्वरूपं यदि वा वायुरं खं सोपाधिकं ब्रह्म सर्वथाऽप्योंकारः** १५ **प्रतीकत्वेनैव प्रतिमावत्साधनत्वं प्रतिपद्यते । "एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोंकारः" इति श्रुत्यन्तरात् । केवलं खशब्दार्थे विप्रतिपत्तिः ।**

**वेदोऽयमोंकारो वेद विजानात्यनेन यद्वेदितव्यम् । तस्माद्वेद ॐकारो वाचकोऽभिधानम् । तेनाभिधानेन यद्वेदितव्यं ब्रह्म प्रकाश्यमानमभिधीयमानं वेद साधको विजानात्युपलभते । तस्माद्वेदोऽयमिति ब्राह्मणा विदुः ।**

सोपाधिकस्य वा ब्रह्मणो विशेषणत्वेऽपि कथं तस्मिन्नोशब्दप्रवृत्तिरित्याशङ्क्याऽऽह—**यत्तदिति** । २०

किमिति यथोक्ते ब्रह्मण्योंशब्दो मन्त्रे प्रयुज्यते तत्राऽऽह—**इह चेति** । ॐ शब्दो ब्रह्मोपासने साधनमित्यत्र मानमाह—**तथा चेति** । सापेक्षं श्रैष्ठ्यं वारयति—**परमिति** । आदिशब्देन प्रणवो धनुरित्यादि गृह्यते । ॐ ब्रह्मेति सामानाधिकरण्योपदेशस्य ब्रह्मोपासने साधनत्वमोकारस्येत्यस्मादर्थान्तरासम्भवाच्च तस्य तत्साधनत्वमेष्टव्यमित्याह—**अन्यार्थेति** । एतदेव प्रपञ्चयति—**यथेत्यादिना** । अन्यत्रेति तैत्तिरीयश्रुतिग्रहणम् । अपवर्गः स्वाध्यायावसानम् । अर्थान्तरावगतेरभावे फलितमाह—**तस्मादिति** । २५

ननु शब्दान्तरेष्वपि ब्रह्मवाचकेषु सत्सु किमित्योशब्द एव ध्यानसाधनत्वेनोपदिश्यते तत्राऽऽह—**यद्यपीति** । नेदिष्ठं निकटतमं सम्प्रियतममित्यर्थः । प्रियतमत्वप्रयुक्तं फलमाह—**अत एवेति** । साधनत्वेऽवान्तरविशेषं दर्शयति—**तच्चेति** । प्रतीकत्वेन कथं साधनत्वमिति पृच्छति—**प्रतीकत्वेनेति** । कथमित्यध्याहारः । परिहरति—**यथेति** । ॐकारो ब्रह्मेति प्रतिपत्तौ किं स्यात्तदाह—**तथा हीति** । मन्त्रमेवं व्याख्याय ब्राह्मणमवतार्य व्याचष्टे—**तत्रेत्यादिना** । मन्त्रः सप्तम्यर्थः । ननु यथोक्तं तत्त्वं स्वेनैव रूपेण प्रतिपत्तुं शक्यते किं प्रतीकोपदेशेनेत्याशङ्क्याऽऽह—**यत्तदिति** । भावविशेषो ३० बुद्धेर्विषयपारवश्यं परिहृत्य प्रत्यग्ब्रह्मज्ञानाभिमुख्यम् । ओङ्कारे ब्रह्मावेशनमुदाहरणेन द्रढयति—**यथेति** । कल्पान्तरमाह—**वायुरमित्यादिना** । किमिति सूत्राधिकरणमव्याकृतमाकाशमत्र गृह्यते तत्राऽऽह—**वायुरे हीति** । तदेव भूताकाशात्मना विपरिणतमिति भावः । तर्हि पक्षद्वये सम्प्लवमाने कः सिद्धान्तः स्यादित्याशङ्क्याधिकारिभेदमाश्रित्याऽऽह—**तत्रेति** । श्रुत्यन्तरस्यान्यथासिद्धिसम्भवादोङ्कारस्य प्रतीकत्वेऽपि विप्रतिपत्तिमाशङ्क्याऽऽह—**केवलमिति** । इतरत्र विप्रतिपत्तिद्योतकाभावादिति भावः । ३५

प्रतीकपक्षमुपपाद्याभिधानपक्षमुपपादयति—**वेदोऽयमिति** । तदेव प्रपञ्चयति—**तेनेति** । वेदेत्यत्राऽऽदौ तच्छब्दो द्रष्टव्यः । ब्राह्मणा विदुरिति विशेषनिर्देशस्य तात्पर्यमाह—**तस्मादिति** । प्रतीकपक्षेऽपि वेदोऽयमित्यादिग्रन्थो

1. ओंकारालम्बनस्य पुरुषस्येत्यर्थः ।

## अथ पञ्चमाध्यायस्य द्वितीयं ब्राह्मणम्

त्रयाः प्राजापत्याः प्रजापतौ पितरि ब्रह्मचर्यमूषुर्देवा मनुष्या असुरा उषित्वा ब्रह्मचर्यं देवा ऊचुर्ब्रवीतु नो भवानिति तेभ्यो हैतदक्षरमुवाच द इति व्यज्ञासिष्टा३ इति व्यज्ञासिष्मेति होचुर्दाम्यतेति न आत्थेत्योमिति होवाच व्यज्ञासिष्टेति ॥१॥

५ तस्माद्ब्राह्मणानामभिधानत्वेन साधनत्वमभिप्रेतमोंकारस्य । अथवा वेदोऽयमित्याद्यर्थवादः । कथमोंकारो ब्रह्मणः प्रतीकत्वेन विहितः । ॐ खं ब्रह्मेति सामानाधिकरण्यात्तस्य स्तुतिरिदानीं वेदत्वेन । सर्वो ह्ययं वेद ॐकार एव । एतत्प्रभव एतदात्मकः सर्वं ऋग्यजुःसामादिभेदभिन्न एष ओंकारः "तद्यथा शङ्कुना सर्वाणि पर्णानि" इत्यादि-श्रुत्यन्तरात् । इतश्चायं वेद ओंकारो यद्वेदितव्यं तत्सर्वं वेदितव्यमोंकारेणैव वेदैनेनातोऽयमोंकारो वेदः । इतरस्यापि वेदस्य वेदत्वमत एव । तस्माद्विशिष्टोऽयमोंकारः साधनत्वेन प्रतिपत्तव्य इति । अथवा वेदः सः । कोऽसौ । यं
१० ब्राह्मणा विदुरोंकारम् । ब्राह्मणानां ह्यसौ प्रणवोद्गीथादिविकल्पैर्विज्ञेयः । तस्मिन्हि प्रयुज्यमाने साधनत्वेन सर्वो वेदः प्रयुक्तो भवतीति ॥१॥

इति श्रीबृहदारण्यकोपनिषद्भाष्ये पञ्चमाध्यायस्य प्रथमं ब्राह्मणम् ॥१॥

अधुना दमादिसाधनत्रयविधानार्थोऽयमारम्भः—त्रयास्त्रिसंख्याकाः प्राजापत्याः प्रजापतेरपत्यानि प्राजापत्यास्ते किं प्रजापतौ पितरि ब्रह्मचर्यं शिष्यत्ववृत्तेर्ब्रह्मचर्यस्य प्राधान्याच्छिष्याः सन्तो ब्रह्मचर्यमूषुरुषितवन्त
१५ इत्यर्थः । के ते । विशेषतो देवा मनुष्या असुराश्च । ते चोषित्वा ब्रह्मचर्यं किमकुर्वन्नित्युच्यते—तेषां देवा ऊचुः पितरं प्रजापतिम् । किमिति । ब्रवीतु कथयतु नोऽस्मभ्यं यदनुशासनं भवानिति । तेभ्य एवमर्थिभ्यो हैतदक्षरं वर्णमात्रमुवाच द इति । उक्त्वा च तान्पप्रच्छ पिता किं व्यज्ञासिष्टा ३ इति । मयोपदेशार्थमभिहितस्याक्षरस्यार्थं विज्ञातवन्त आहोस्विन्नेति । देवा ऊचुर्व्यज्ञासिष्मेति विज्ञातवन्तो वयम् । यद्येवमुच्यतां किं मयोक्तमिति । देवा ऊचुर्दाम्यतादान्ता यूयं स्वभावतोऽतो दान्ता भवतेति नोऽस्मानात्थ कथयसि । इतर आहोमिति सम्यग्व्य-
२० ज्ञासिष्टेति ॥१॥

निर्वहतीत्याह—अथवेति । विध्यभावे कथमर्थवादः संभवतीत्याशङ्क्य परिहरति—कथमित्यादिना । वेदत्वेन स्तुतिमोंकारस्य संग्रहविवरणाभ्यां दर्शयति—सर्वो हीति । ॐकारे सर्वस्य नामजातस्यान्तर्भावे प्रमाणमाह—तद्यथेति । तत्रैव हेत्वन्तरमवतार्य व्याकरोति—इतश्चेति । वेदितव्यं परमपरं वा ब्रह्म । 'द्वे ब्रह्मणी वेदितव्ये' इति श्रुत्यन्तरात् । तद्वेदनसाधनत्वेऽपि कथमोंकारस्य वेदत्वमित्याशङ्क्याऽऽह—इतरस्यापीति । अत एव वेदितव्यवेदन-
२५ हेतुत्वादेवेत्यर्थः । प्रतीकपक्षे वाक्ययोजनां निगमयति—तस्मादिति । अभिधानपक्षे प्रतीकपक्षे चैकं वाक्यमेकेकत्र योजयित्वा पक्षद्वयेऽपि साधारण्येन योजयति—अथवेति । तस्य पूर्वोक्तनीत्या वेदत्वे लाभं दर्शयति—तस्मिन्निति । ॐकारस्य ब्रह्मोपास्तिसाधनत्वमित्थं सिद्धमित्युपसंहर्तुमितिशब्दः ।

इति बृहदारण्यकोपनिषद्भाष्यटीकायां पञ्चमाध्यायस्य प्रथमं ब्राह्मणम् ॥१॥

ब्राह्मणान्तरस्य तात्पर्यमाह—अधुनेति । तद्विधानं सर्वोपास्तिशेषत्वेनेति द्रष्टव्यम् । आख्यायिकाप्रवृत्तिरा-
३० रम्भः । पितरि ब्रह्मचर्यमूषुरिति संबन्धः । प्रजापतिसमीपे ब्रह्मचर्यवासमात्रेण किमित्यसौ देवादिभ्यो हितं ब्रूयादित्या-शङ्क्याऽऽह—शिष्यत्वेति । शिष्यभावेन वृत्ते. संबन्धिनो ये धर्मास्तेषां मध्ये ब्रह्मचर्यस्येत्यादि योज्यम् । तेषामिति निर्धारणे षष्ठी । ऊहापोहशक्तानामेव शिष्यत्वमिति द्योतनार्थो हशब्दः । विचारार्था प्लुतिरित्यङ्गीकृत्य प्रश्नमेव व्याचष्टे—मयेति । ॐमित्यनुज्ञामेव विभजते—सम्यगिति ॥१॥

अथ हैनं मनुष्या ऊचुर्ब्रवीतु नो भवानिति तेभ्यो हैतदेवाक्षरमुवाच द इति व्यज्ञासिष्टा३ इति व्यज्ञासिष्मेति होचुर्दत्तेति न आत्थेत्योमिति होवाच व्यज्ञासिष्टेति ॥२॥

अथ हैनमसुरा ऊचुर्ब्रवीतु नो भवानिति तेभ्यो हैतदेवाक्षरमुवाच द इति व्यज्ञासिष्टा३ इति व्यज्ञासिष्मेति होचुर्दयध्वमिति न आत्थेत्योमिति होवाच व्यज्ञासिष्टेति तदेतदेवैषा दैवी वागनुवदति स्तनयित्नुर्द द द इति दाम्यत दत्त दयध्वमिति तदेतत्त्रयँ शिक्षेद्दमं दानं दयामिति ॥३॥

इति बृहदारण्यकोपनिषदि पञ्चमाध्यायस्य द्वितीयं ब्राह्मणम् ॥२॥

समानमन्यत्। स्वभावतो लुब्धा यूयमतो यथाशक्ति संविभजत दत्तेति नोऽस्मानात्थ किमन्यद्ब्रूयान्नो हितमिति मनुष्याः ॥२॥

तथाऽसुरा दयध्वमिति। क्रूरा यूयं हिंसादिपरा अतो दयध्वं प्राणिषु दयां कुरुतेति। तदेतत्प्रजापतेरनुशासनमद्याप्यनुवर्तत एव। यः पूर्वं प्रजापतिर्देवादीननुशशास सोऽद्याप्यनुशास्त्येव दैव्या स्तनयित्नुलक्षणया वाचा कथमेषा श्रूयते दैवी वाक्। काऽसौ स्तनयित्नुर्द द द इति दाम्यत दत्त दयध्वमित्येषां वाक्यानामुपलक्षणाय त्रिर्दकार उच्चार्यतेऽनुकृतिर्न तु स्तनयित्नुशब्दस्त्रिरेव संख्यानियमस्य लोकेऽप्रसिद्धत्वात्। यस्मादद्यापि प्रजापतिर्दाम्यत दत्त दयध्वमित्यनुशास्त्येव तस्मात्कारणादेतत्त्रयम्। किं तत्त्रयमित्युच्यते दमं दानं दयामिति शिक्षेदुपाददयात्प्रजापतेरनुशासनमस्माभिः कर्तव्यमित्येवं मतिं कुर्यात्। तथा च स्मृतिः—

"त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः। कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत्" इति।

अस्य हि विधेः शेषः पूर्वः। तथाऽपि देवादीनुद्दिश्य किमर्थं दकारत्रयमुच्चारितवान्प्रजापतिः पृथगनुशासनार्थिभ्यः। ते वा कथं विवेकेन प्रतिपन्नाः प्रजापतेर्मनोगतं समानेनैव दकारवर्णमात्रेणेति पराभिप्रायज्ञा विकल्पयन्ति।

समानत्वेनोत्तरस्य सर्वस्यैवार्थवादस्याव्याख्येयत्वे प्राप्ते दत्तेत्यत्र तात्पर्यमाह—स्वभावत इति। दानमेव लोभत्यागरूपमुपदिष्टमिति कुतो निर्दिष्टं किंत्वन्यदेव हितं किंचिदादिष्टं किं न स्यादित्याशङ्क्याऽऽह—किमन्यदिति ॥२॥

यथा देवां मनुष्याश्च स्वाभिप्रायानुसारेण दकारश्रवणे सत्यर्थं जगृहुस्तथेति यावत्। दयध्वमित्यत्र तात्पर्यमीरयति—क्रूरा इति। हिंसादीत्यादिशब्देन परस्वापहारादि गृह्यते। प्रजापतेरनुशासनं प्रागासीदित्यत्र लिंगमाह—तदेतदिति। अनुशासनस्यानुवृत्तिमेवं व्याकरोति—यः पूर्वमिति। द इति विसंधिकरणं सर्वत्र वर्णान्तरभ्रमापोहार्थम्। यथा दकारत्रयमत्र विवक्षितं तथा स्तनयित्नुशब्देऽपि त्रित्वं विवक्षितं चेत्प्रसिद्धिविरोधः स्यादित्याशङ्क्याऽऽह—अनुकृतिरिति। दशब्दानुकारमात्रमत्र विवक्षित न तु स्तनयित्नुशब्दे त्रित्वं प्रमाणाभावादित्यर्थः। प्रकृतस्यार्थवादस्य विधिपर्यवसायित्वं फलितमाह—यस्मादिति। उपादानप्रकारमेवाभिनयति—प्रजापतेरिति। श्रुतिसिद्धविध्यनुसारेण भगवद्वाक्यप्रवृत्तिं दर्शयति—तथा चेति।

तदेतत्त्रयं शिक्षेदित्येष विधिश्चेत्कृतं त्रयाः प्राजापत्या इत्यादिना ग्रन्थेनेत्याशंक्य यस्मादित्यादिना सूचितमाह—अस्येति। सर्वैरेव त्रयमनुष्ठेयं चेत्तर्हि देवादीनुद्दिश्य दकारत्रयोच्चारणमनुपपन्नमिति शंकते—तथेति। दमादित्रयस्य सर्वैरनुष्ठेयत्वे सतीति यावत्। किंच पृथक्पृथगनुशासनार्थिनो देवादयस्तेभ्यो दकारमात्रोच्चारणेनापेक्षितमनुशासनं सिध्यतीत्याह—पृथगिति। किमर्थमित्यादिना पूर्वेण संबन्धः। दकारमात्रमुच्चारयतोऽपि प्रजापतेर्विभागेनानुशासनमभिसंहितमित्याशंक्याह—ते वेति। त्रयं सर्वैरनुष्ठेयमिति परस्य सिद्धान्तिनोऽभिप्रायस्तदभिज्ञाः सन्तो यथोक्तनीत्या विकल्पयन्तीति योजना। पराभिप्रायज्ञा इत्युपहासो[1] वा परस्य प्रजापतेर्मनुष्यादीनां चाभिप्रायज्ञा इति। नञुल्लेखी[2] वा पाठः।

१. पराभिप्रायज्ञत्वे कथं विकल्पयेयुः इति चेत् उपहासार्थमेतद्वचनं भाष्यकारस्येत्युक्तम् अथवा पक्षे पराभिप्रायाज्ञाः इत्यर्थात् विकल्पवं युक्तमित्यर्थः।

२. नञुल्लेखी—पराभिप्रायानभिज्ञा इति पाठो वा।

अत्रैक आहुरदान्तत्वादानत्वादयालुत्वैरपराधित्वमात्मनो मन्यमानाः शङ्किता एव प्रजापतावूचुः किं नो वक्ष्यतीति। तेषां च दकारश्रवणमात्रादेवात्माशङ्कावशेन तदर्थप्रतिपत्तिरभूत्। लोकेऽपि हि प्रसिद्धं पुत्राः शिष्याश्चानुशास्याः सन्तो दोषान्निवर्तयितव्या इति। अतो युक्तं प्रजापतेर्दकारमात्रोच्चारणम्। दमादित्रये च दकारान्वयादात्मनो दोषानुरूप्येण देवादीनां विवेकेन प्रतिपत्तुं चेति। फलं त्वेतदात्मदोषज्ञाने सति दोषान्निवर्तयितुं
५ शक्यतेऽल्पेनाप्युपदेशेन दकारमात्रेणेति।

नन्वेतत्त्रयाणां देवादीनामनुशासनं देवादिभिरप्येकैकमेवोपादेयमद्यत्वेऽपि न तु त्रयं मनुष्यैः शिक्षितव्य- मिति। अत्रोच्यते—पूर्वैर्देवादिभिर्विशिष्टैरनुष्ठितमेतत्त्रयं तस्मान्मनुष्यैरेव शिक्षितव्यमिति। तत्र दयालुत्वस्याननुष्ठे- यत्वं स्यात्कस्य असुरैरप्यसज्जनैरनुष्ठितत्वादिति चेत्। न, तुल्यत्वात्त्रयाणामतोऽन्योऽत्राभिप्रायः। प्रजापतेः पुत्रा देवादयस्त्रय. पुत्रैश्च हितमेव पित्रोपदेष्टव्यम्। प्रजापतिश्च हितज्ञो नान्यथोपदिशति। तस्मात्पुत्रानुशासनं
१० प्रजापतेः परममेतद्धितम्। अतो मनुष्यैरेवैतत्त्रयं शिक्षितव्यमिति।

अथवा न देवा असुरा वाऽन्ये केचन विद्यन्ते मनुष्येभ्यः। मनुष्याणामेवादान्ता येऽन्यैरुत्तमैर्गुणैः संपन्नास्ते देवा लोभप्रधाना मनुष्यास्तथा हिंसापराः क्रूरा असुरास्त एव मनुष्या अदान्तत्वादिदोषत्रयमपेक्ष्य देवादिशब्द- भाजो भवन्तीतरांश्च गुणान्सत्त्वरजस्तमांस्यपेक्ष्य। अतो मनुष्यैरेव शिक्षितव्यमेतत्त्रयमिति तदपेक्षयैव प्रजापति-

एतीयं परिहारमुत्थापयति—अत्रेति। अस्तु तेषामेषा शङ्का तथाऽपि दकारमात्रात्कीदृशी प्रतिपत्तिरित्या-
१५ शङ्क्याऽऽह—तेषां चेति। तदर्थो दकारार्थो दमादिस्तस्य प्रतिपत्तिस्तद्द्वारेणादान्तत्वादिनिवृत्तिरासीदित्यर्थः। किमिति प्रजापतिर्दोषज्ञापनद्वारेण ततो देवादीननुशास्यान्दोषान्निवर्तयिष्यति तत्राऽऽह—लोकेऽपीति। दकारोच्चारणस्य प्रयोजने सिद्धे फलितमाह—अत इति। यत्तूक्तं ते वा कथमित्यादि तत्राऽऽह—दमादीति। प्रतिपत्तु च युक्तं दमादीति शेषः। इतिशब्दः स्वयूथ्यमतसमाप्त्यर्थः। परोक्तं परिहारमङ्गीकृत्याऽऽख्यायिकातात्पर्यं सिद्धान्ती ब्रूते—फलं त्विति। निर्ज्ञातदोषा देवादयो यथा दकारमात्रेण ततो निवर्तेरन्त इति शेषः। इतिशब्दो दार्ष्टान्तिकप्रदर्शनार्थः।

२० विशिष्टान्प्रत्यनुशासनस्य प्रवृत्तत्वादस्माकं तदभावादनुपादेयं दमादीति शङ्कते—नन्विति। किंच देवादि- भिरपि प्रातिस्विकानुशासनवशादेकैकमेव दमाद्यनुष्ठेयं न तत्त्रयमित्याह—देवादिभिरिति। यथा पूर्वस्मिन्काले देवादिभिरेकैकमेवोपादेयमित्युक्तं तथा वर्तमानेऽपि काले मनुष्यैरेकैकमेव कर्तव्यं पूर्वाचारानुसाराच्च तु त्रयं शिक्षितव्यं तथा च कस्याय विधिरित्याह—अद्यत्वेऽपीति। आचार[1]प्रामाण्यमाश्रित्य परिहरति—अत्रेति। इत्येकैकमेव नोपा- देयमिति शेषः। दयालुत्वस्यानुष्ठेयत्वमाक्षिपति—तत्रेति। मध्ये दमादीनामिति यावत्। असुरैरनुष्ठितत्वेऽपि दयालु-
२५ त्वमनुष्ठेयं हितसाधनत्वाद्दानादिवदिति परिहरति—नेत्यादिना। देवादिषु प्रजापतेरविशेषात्तेभ्यस्तदुपदिष्टमद्यत्वेऽपि सर्वमनुष्ठेयमित्यर्थः। हितस्यैवोपदेष्टव्यत्वेऽपि तदज्ञानात्प्रजापतिरन्यथोपदिशतीत्याशङ्क्याऽऽह—प्रजापतिश्चेति। हितज्ञस्य पितुरहितोपदेशित्वाभावस्तस्मादित्युक्तः। विशिष्टैरनुष्ठितस्यास्मदादिभिरनुष्ठेयत्वे फलितमाह—अत इति। प्राजापत्या देवादयो विग्रहवन्तः सन्तीत्यर्थवादस्य यथाश्रुतेऽर्थे[2] प्रामाण्यमभ्युपगम्य दकारत्रयस्य तात्पर्यं सिद्धमिति वक्तुमितिशब्दः।

३० संप्रति कर्ममीमांसकमतमनुसृत्याऽऽह—अथवेति। कथं मनुष्येष्वेव देवासुरत्वं तत्राऽऽह—मनुष्याणामिति। अन्ये गुणा ज्ञानादयः। किं पुनर्मनुष्येषु देवादिशब्दप्रवृत्तौ निमित्तं तदाह—अदान्तत्वादीति। देवादिशब्दप्रवृत्तौ निमित्तान्तरमाह—इतरांश्चेति। मनुष्येष्वेव देवादिशब्दप्रवृत्तौ फलितमाह—अत इति। इतिशब्दो विध्युपपत्तिप्रदर्श- नार्थः। मनुष्यैरेव त्रयं शिक्षितव्यमित्यत्र हेतुमाह—तदपेक्षयेति। मनुष्याणामेव देवादिभावे प्रमाणमाह—तथा हीति।

---

१. आचारप्रामाण्यमाश्रित्येति—पूर्वमीमांसाप्रथमतृतीये श्रुतिस्मृतिः सदाचार इत्यादिमनुस्मृतेः शिष्टैः अपूर्वसाधन-
३५ त्वेनानुष्ठीयमानाः आचाराः होलिकादयः प्रमाणानि आचारेण स्मृतेः स्मृत्या श्रुतेश्चानुमानात्।

२. यथाश्रुतार्थ इति—अर्थवादाना विधिस्तुतावेव तात्पर्यं न तु यथाश्रुतार्थे इति मीमांसकाः। बादरायणाचार्यास्तु प्रमाणान्तरविरोधे गुणवादत्वमविरोधेऽनुवादत्वमिति मीमांसकमतमुक्त्वा प्रमाणान्तरविरोधाविरोधयोः सतोः यथाश्रुतार्थे प्रामाण्यमभ्युपेयमिति देवताधिकरणेऽङ्गीकृतमिति प्रकृतेऽपि स्वार्थे प्रामाण्यमित्यर्थः।

अथ पञ्चमाध्यायस्य तृतीयं ब्राह्मणम्

**एष प्रजापतिर्यद्धृदयमेतद्ब्रह्मैतत्सर्वं तदेतत्त्र्यक्षरं हृदयमिति हृ इत्येकमक्षरमभिहरन्त्यस्मै स्वाश्चान्ये च य एवं वेद द इत्येकमक्षरं ददत्यस्मै स्वाश्चान्ये च य एवं वेद यमित्येकमक्षरमेति स्वर्गं लोकं य एवं वेद ॥१॥**

इति बृहदारण्यकोपनिषदि पञ्चमाध्यायस्य तृतीयं ब्राह्मणम् ॥३॥　　५

नोपविष्टत्वात् । तथा हि मनुष्य अदान्ता लुब्धाः क्रूराश्च दृश्यन्ते । तथा च स्मृतिः—"कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत्" इति ॥३॥

इति बृहदारण्यकोपनिषद्भाष्ये पञ्चमाध्यायस्य द्वितीयं ब्राह्मणम् ॥२॥

दमादिसाधनत्रयं सर्वोपासनशेषं विहितम् । दान्तोऽलुब्धो दयालुः सन्सर्वोपासनेष्वधिक्रियते । तत्र निरुपाधिकस्य ब्रह्मणो दर्शनमतिक्रान्तमथाधुना सोपाधिकस्य तस्यैवाभ्युदयफलानि वक्तव्यानीत्येवमर्थोऽयमारम्भः १० एष प्रजापतिर्यद्धृदयं प्रजापतिरनुशास्तीत्यनन्तरमेवाभिहितम् । कः पुनरसावनुशास्ता प्रजापतिरिति । उच्यते—एष प्रजापतिः । कोऽसौ यत्हृदयं हृदयमिति हृदयस्था बुद्धिरुच्यते । यस्मिञ्शाकल्यब्राह्मणान्ते नामरूपकर्मणामुपसंहार उक्तो दिग्विभागद्वारेण तदेतत्सर्वभूतप्रतिष्ठं सर्वभूतात्मभूतं हृदयं प्रजापतिः प्रजानां स्रष्टा । एतद्ब्रह्म बृहत्त्वात्सर्वात्मत्वाच्च ब्रह्म । एतत्सर्वम् । उक्तं पञ्चमाध्याये हृदयस्य सर्वत्वम् । तत्सर्वं यस्मात्तस्मादुपास्यं हृदयं ब्रह्म । तत्र हृदयनामाक्षरविषयमेव तावदुपासनमुच्यते । तदेतद्धृदयमिति नाम त्र्यक्षरं त्रीण्यक्षराण्यस्येति त्र्यक्षरम् । कानि पुनस्तानि त्रीण्यक्षराण्युच्यन्ते । हृ इत्येकमक्षरम् । अभिहरन्ति हृतेराहृतिकर्मणो हृ इत्येतद्रूपमिति यो वेद यस्माद्धृदयाय ब्रह्मणे स्वाश्चेन्द्रियाण्यन्ये च विषयाः शब्दादयः स्वं स्वं कार्यमभिहरन्ति हृदयं च भोक्त्रर्थमभिहरति । अतो हृदयनाम्नो हृ इत्येतदक्षरमिति यो वेदास्मै विदुषेऽभिहरन्ति स्वाश्च ज्ञातयोऽन्ये चासंबद्धाः । बलिमिति वाक्यशेषः । विज्ञानानुरूप्येणैतत्फलम् ।　　१५

तथा द इत्येतदप्येकाक्षरमेतदपि दानार्थस्य ददातेर्द इत्येतद्रूपं हृदयनामाक्षरत्वेन निबद्धम् । अत्रापि २० हृदयाय ब्रह्मणे स्वाश्च करणान्यन्ये च विषयाः स्वं स्वं वीर्यं ददति हृदयं च भोक्त्रे ददाति स्वं वीर्यमतो दकार इत्येवं यो वेदास्मै ददति स्वाश्चान्ये च । तथा यमित्येतदप्येकमक्षरम् । इणो गत्यर्थस्य यमित्येतद्रूपमस्मिन्नाम्नि निबद्धमिति यो वेद स स्वर्गं लोकमेति । एवं नामाक्षरादपीदृशं विशिष्टं फलं प्राप्नोति किमु वक्तव्यं हृदयस्वरूपोपासनादिति हृदयस्तुतये नामाक्षरोपन्यासः ॥१॥

इति श्रीमद्बृहदारण्यकोपनिषद्भाष्ये पञ्चमाध्यायस्य तृतीयं ब्राह्मणम् ॥३॥　　२५

त्रयं शिक्षितव्यमित्यत्र स्मृतिमुदाहरति—तथा चेति । इतिशब्दो ब्राह्मणसमाप्त्यर्थः ॥३॥

इति बृहदारण्यकोपनिषद्भाष्यटीकायां पञ्चमाध्यायस्य द्वितीयं ब्राह्मणम् ॥२॥

सार्थवादेन विधिना सिद्धमर्थमनुवदति—दमादीति । कथं तस्य सर्वोपासनशेषत्वं तदाह—दान्त इति । अलुब्ध इति च्छेदः संप्रत्युत्तरसंदर्भस्य तात्पर्यं वक्तुं भूमिकां करोति—तत्रेति । काण्डद्वयं सप्तम्यर्थः । अनन्तरसंदर्भस्य तात्पर्यमाह—अथेति । पापक्षयादिरभ्युदयस्तत्फलान्युपासनानीति शेषः । अनन्तरब्राह्मणमादाय तस्य ३० संगतिमाह—एष इत्यादिना । उक्तस्य हृदयशब्दार्थस्य पाञ्चमिकत्वं दर्शयन्प्रजापतित्वं साधयति—यस्मिन्निति । कथं हृदयस्य सर्वत्वं तदाह—उक्तमिति । सर्वत्वसंकीर्तनफलमाह—तत्सर्वमिति । तत्र हृदयस्योपास्यत्वे सिद्धे सतीत्येतत् । फलोक्तिमुत्थाप्य व्याकरोति—अभिहरन्तीति । यो वेदास्मै विदुषेऽभिहरन्तीति संबन्धः । वेदनमेव विशदयति—यस्मादित्यादिना । स्वं कार्यं रूपदर्शनादि । हृदयस्य तु कार्यं सुखादि । असंबद्धा ज्ञातिव्यतिरिक्ताः । औचित्यमुक्ते फले कथयति—विज्ञानेति ।　　३५

अत्रापीति दकाराक्षरोपासनेऽपि फलमुच्यत इति शेषः । तामेव फलोक्तिं व्यनक्ति—हृदयायेति । अस्मै विदुषे स्वाश्चान्ये च ददति । बलिमिति शेषः । नामाक्षरोपासनानि त्रीणि हृदयस्वरूपोपासनमेकमिति चत्वार्युपासनान्यत्र विवक्षितानीत्याशङ्क्याऽऽह—एवमिति । १॥

इति बृहदारण्यकोपनिषद्भाष्यटीकायां पञ्चमाध्यायस्य तृतीयं ब्राह्मणम् ॥३॥

### अथ पञ्चमाध्यायस्य चतुर्थं ब्राह्मणम्

तद्वै तदेतदेव तदास सत्यमेव स यो हैतं महद्यक्षं प्रथमजं वेद सत्यं ब्रह्मेति जयतीमाँल्लो-काञ्जित इन्न्वसावसद्य एवमेतन्महद्यक्षं प्रथमजं वेद सत्यं ब्रह्मेति सत्यं ह्येव ब्रह्म ॥१॥

इति बृहदारण्यकोपनिषदि पञ्चमाध्यायस्य चतुर्थं ब्राह्मणम् ॥४॥

### अथ पञ्चमाध्यायस्य पंचमं ब्राह्मणम्

आप एवेदमग्र आसुस्ता आपः सत्यमसृजन्त सत्यं ब्रह्म ब्रह्म प्रजापतिं प्रजा-पतिर्देवाँस्ते देवाः सत्यमेवोपासते तदेतत्त्र्यक्षरँ सत्यमिति स इत्येकमक्षरं तीत्येकमक्षरं यमित्येकमक्षरं प्रथमोत्तमे अक्षरे सत्यं मध्यतोऽनृतं तदेतदनृत-मुभयतः सत्येन परिगृहीतँ सत्यभूयमेव भवति नैनं विद्वाँसमनृतँ हिनस्ति ॥१॥

तस्यैव हृदयाख्यस्य ब्रह्मणः सत्यमित्युपासनं विधित्सन्नाह—तत्तदिति हृदयं ब्रह्म परामृष्टम्। वा इति स्मरणार्थम्। तद्यद्धृदयं ब्रह्म स्मर्यत इत्येकस्तच्छब्दः। तदेतदुच्यते प्रकारान्तरेणेति द्वितीयस्तच्छब्दः। किं पुन-स्तत्प्रकारान्तरम्। एतदेव तदित्येतच्छब्देन संबध्यते तृतीयस्तच्छब्दः। एतदिति वक्ष्यमाणं बुद्धौ सन्निधीकृत्याऽऽह। आस बभूव। किं पुनरेतदेवाऽऽस यदुक्तं हृदयं ब्रह्मेति तदिति तृतीयस्तच्छब्दो विनियुक्तः। किं तदिति विशेषतो निर्दिशति सत्यमेव सच्च त्यच्च मूर्तं चामूर्तं च सत्यं ब्रह्म पञ्चभूतात्मकमित्येतत्। स यः कश्चित्सत्यात्मानमेतं महन्महत्त्वाद्यक्षं पूज्यं प्रथमजं प्रथमजातं सर्वस्मात्संसारिण एतदेवाग्रे जातं ब्रह्मातः प्रथमजं वेद विजानाति सत्यं ब्रह्मेति। तस्येदं फलमुच्यते—यथा सत्येन ब्रह्मणेमे लोका आत्मसात्कृता जिता एवं सत्यात्मानं ब्रह्म महद्यक्षं प्रथमजं वेद स जयतीमाँल्लोकान्। किंच जितो वशीकृत इन्न्वित्थं यथा ब्रह्मणाऽसौ शत्रुरिति वाक्यशेषः। असच्चासद्भवेदसौ शत्रुर्जितो भवेदित्यर्थः। कस्यैतत्फलमिति पुनर्निगमयति—य एवमेतन्महद्यक्षं प्रथमजं वेद सत्यं ब्रह्मेति। अतो विद्यानुरूपं फलं युक्तम्। सत्यं ह्येव यस्माद्ब्रह्म ॥१॥

इति श्रीमद्बृहदारण्यकोपनिषद्भाष्ये पञ्चमाध्यायस्य चतुर्थं ब्राह्मणम् ॥४॥

सत्यस्य ब्रह्मणः स्तुत्यर्थमिदमाह। महद्यक्षं प्रथमजमित्युक्तं तत्कथं प्रथमजत्वमिति। उच्यते—आप एवेदमग्र आसुः। आप इति कर्मसमवायिन्योऽग्निहोत्राद्याहुतयः। अग्निहोत्राद्याहुतेर्द्रवात्मकत्वादप्त्वम्। ताश्चाऽऽपोऽग्नि-

ब्राह्मणान्तरमुत्थाप्याक्षराणि व्याचष्टे—तस्येत्यादिना। सत्यशब्दार्थं सत्यज्ञानादिवाक्योपात्तं व्यावर्तयति—सच्चेति। सर्वात्मत्वस्य चतुर्थे प्रस्तुत्वं सूचयति—मूर्तं चेति। वेदनमनूद्य फलोक्तिमवतारयति—स य इति। प्रथम-जत्वं प्रकटयति—सर्वस्मादिति। स यः कश्चिद्वेदेति संबन्धः। कैमुतिकसिद्धं फलान्तरमाह—किंचेति। वशीकृतस्य शत्रोः स्वरूपेण सत्त्वं वारयति—असच्चेति। स यो हैतमित्यादिना य एवमेतदित्यादेरेकार्थं वात्पुनरुक्तिरित्याशङ्क्याऽऽह—कस्यैतदिति। कथमस्य विज्ञानस्येदं फलमित्याशङ्क्याऽऽह—अत इति। पञ्चमीपरामृष्टं स्पष्टयति—सत्यं हीति ॥१॥

इति बृहदारण्यकोपनिषद्भाष्यटीकायां पञ्चमाध्यायस्य चतुर्थं ब्राह्मणम् ॥४॥

इदमा ब्राह्मणं गृह्यते। तस्यावान्तरसंगतिमाह—महदिति। आहुतीनामेव कर्मसमवायित्वं न त्वपामित्या-शङ्क्याऽऽह—अग्निहोत्रादीति। यद्यप्यापः सोमाद्या हूयमानाः कर्मसमवायिन्यस्तथाऽप्युत्तरकाले कथं तासां तथात्वं कर्मणोऽस्थायित्वादित्याशङ्क्याऽऽह—ताश्चेति। कर्मसमवायित्वमपरित्यजन्त्यस्तत्संबन्धित्वेनाऽऽपः प्रथमं प्रवृत्तास्तन्नाशोत्तरकालं सूक्ष्मेणादृष्टेनाऽऽत्मनाऽतीन्द्रियेणाऽऽत्मना तिष्ठन्तीति योजना। आप इति विशेषणं

१. सत्यब्रह्मोपासनमधिकृत्य ब्रह्मसूत्रेषु विचार्यते-सैव हि सत्यादयः ( ३-३-३६ ) स यो हैतं महद्यक्षं प्रथमजं ब्रह्म वेद इति सनामाक्षरोपासनां सत्यविद्यां विधायानन्तरं "तद्यत्तत्सत्यमसौ स आदित्य" इत्यादिना पुनस्सत्य-विद्या विधीयते—तत्र किमेते द्वे सत्यविद्ये उतैका इति सन्देहे फलसंयोगभेदाद् भेदः प्रथमे लोकजयः फलं द्वितीये तु पाप्मनाश इति भेदात्। तस्माद्भेद इति प्राप्ते सिद्धान्तः अभिन्ने एते विद्ये तद्यत्तत्सत्यमसौ इति तच्छब्देन पूर्वानुकर्षणात् फलान्तरश्रवणं तु अंगफलविषयम्। अपि च विधिवाक्ये फलाश्रवणात् अर्थवादादेव फले कल्पीये उभयत्र श्रुतं फलद्वयमपि एकोपासनफलमित्यदोषः।

**तद्यत्तत्सत्यमसौ स आदित्यो य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन्पुरुषस्तावेतावन्योन्यस्मिन्प्रतिष्ठितौ रश्मिभिरेषोऽस्मिन्प्रतिष्ठितः प्राणैरयममुष्मिन्स यदोत्क्रमिष्यन्भवति शुद्धमेवैतन्मण्डलं पश्यति नैनमेते रश्मयः प्रत्यायन्ति ॥२॥**

होत्रादिकर्मापवर्गोत्तरकालं केनचिददृष्टेन सूक्ष्मेणाऽऽत्मना कर्मसमवायित्वमपरित्यजन्त्य इतरभूतसहिता एव न केवलाः। कर्मसमवायित्वात्तु प्राधान्यमपामिति। सर्वाण्येव भूतानि प्रागुत्पत्तेरव्याकृतावस्थानि कर्तृसहितानि निर्दिश्यन्त आप इति। ता आपो बीजभूता जगतोऽव्याकृतात्मनाऽवस्थितास्ता एवेदं सर्वं नामरूपविकृतं जगदग्र आसुर्नान्यत्किंचिद्विकारजातमासीत्। ताः पुनरापः सत्यमसृजन्त। तस्मात्सत्यं ब्रह्म प्रथमजम्। तदेतद्धिरण्यगर्भस्य सूत्रात्मनो जन्म यदव्याकृतस्य जगतो व्याकरणम्। तत्सत्यं ब्रह्म कुतः। महत्त्वात्। कथं महत्त्वमित्याह। यस्मात्सर्वस्य स्रष्टृ। कथम्। यत्सत्यं ब्रह्म तत् प्रजापतिं प्रजानां पतिं विराजं सूर्यादिकरणमसृजतेत्यनुषङ्गः। प्रजापतिर्देवान्स विराट्प्रजापतिर्देवानसृजत। यस्मात्सर्वमेवं क्रमेण सत्याद्ब्रह्मणो जातं तस्मान्महत्सत्यं ब्रह्म। कथं पुनर्यक्षमिति। उच्यते—स एवं सृष्ट्वा देवाः पितरमपि विराजमतीत्य तदेव सत्यं ब्रह्मोपासते। अत एतत्प्रथमजं महद्यक्षम्। तस्मात्सर्वात्मनोपास्यं तत्तस्यापि सत्यस्य ब्रह्मणो नाम सत्यमिति तदेतत्त्र्यक्षरम्। कानि तान्यक्षराणीत्याह—स इत्येकमक्षरम्। तीत्येकमक्षरम्। तीतीकारानुबन्धो निर्देशार्थः। यमित्येकमक्षरम्। तत्र तेषां प्रथमोत्तमे अक्षरे सकारयकारौ सत्यम्। मृत्युरूपाभावात्। मध्यतो मध्येऽनृतम्। अनृतं हि मृत्युः। मृत्य्वनृतयोस्तकारसामान्यात्। तदेतदनृतं तकाराक्षरं मृत्युरूपमुभयतः सत्येन सकारयकारलक्षणेन परिगृहीतं व्याप्तमन्तर्भावितं सत्यरूपाभ्यामतोऽकिंचित्करं तत्सत्यभूयमेव सत्यबाहुल्यमेव भवति। एवं सत्यबाहुल्यं सर्वस्य मृत्योरनृतस्याकिंचित्करत्वं च यो विद्वांस्तमेवं विद्वांसमनृतं कदाचित्प्रमादोक्तं न हिनस्ति ॥१॥

अस्याधुना सत्यस्य ब्रह्मणः संस्थानविशेष उपासनमुच्यते—तद्यत्। किं तत्सत्यं ब्रह्म प्रथमजं किमसौ सः। कोऽसावादित्यः कः पुनरसावादित्यो य एष क एष य एतस्मिन्नादित्यमण्डले पुरुषोऽभिमानी सोऽसौ सत्यं ब्रह्म। यश्चायमध्यात्मं योऽयं दक्षिणेऽक्षन्नक्षिणि पुरुषः। चशब्दात्स च सत्यं ब्रह्मेति संबन्धः। तावेतावादित्याक्षिस्थौ पुरुषावेकस्य सत्यस्य ब्रह्मणः संस्थानविशेषौ यस्मात्तस्मादन्योन्यस्मिन्नितरेतरस्मिन्नादित्यश्चाक्षुषे चाक्षुषश्चाऽऽदित्ये प्रतिष्ठितौ। अध्यात्माधिदैवतयोरन्योन्योपकार्योपकारकत्वात्। कथं प्रतिष्ठितावित्युच्यते रश्मिभिः प्रकाशेनानुग्रहं कुर्वन्नेष आदित्योऽस्मिन्चाक्षुषेऽध्यात्मे प्रतिष्ठितः। अयं च चाक्षुषः प्राणैरादित्यमनुगृह्णन्नमुष्मिन्नादित्येऽधिदैवे प्रतिष्ठितः। सोऽस्मिञ्छरीरे विज्ञानमयो भोक्ता यदा यस्मिन्काल उत्क्रमिष्यन्भवति तदाऽसौ चाक्षुष आदित्यपुरुषो रश्मीनुपसंहृत्य केवलेनौदासीन्येन रूपेण व्यवतिष्ठते। तदाऽयं विज्ञानमयः पश्यति शुद्धमेव केवलं विरश्म्येतन्मण्डलं चन्द्रमण्डलमिव। तदेतदरिष्टदर्शनं प्रासङ्गिकं प्रदर्श्यते। कथं नाम पुरुषः करणीये यत्नवान्स्यादिति। नैनं चाक्षुषं पुरुषमुररीकृत्य तं प्रत्यनुग्रहायैते रश्मयः स्वामिकर्तव्यवशात्पूर्वमागच्छन्तोऽपि पुनस्तत्कर्मक्षयमनुरुध्यमाना

भूतान्तरव्यासेवार्थमिति मतिं वारयति—इतरेति। कथं तर्हि तासामेव श्रुतावुपादानं तदाह—कर्मेति। इति तासामेवात्र ग्रहणमिति शेषः विवक्षितपदार्थं निगमयति—सर्वाण्येवेति। पदार्थमुक्तमनूद्य वाक्यार्थमाह—ता इति। यास्ता यथोक्ता आपस्ता एवेति यच्छब्दानुबन्धेन योजना। सत्यं ज्ञानमनन्तं ब्रह्मेति श्रुतं कथं भूतान्तरसहिताभ्योऽद्भ्यो जायते तत्राऽऽह—तदेतदिति। तस्य ब्रह्मत्वं प्रश्नपूर्वकं विशदयति—तत्सत्यमिति। सत्यस्य ब्रह्मणो महत्त्वं प्रश्नद्वारा साधयति—कथमित्यादिना। तस्य सर्वस्रष्टृत्वं प्रश्नद्वारेण स्पष्टयति—कथमिति। महत्त्वमुपसंहरति—यस्मादिति। विशेषणत्रये सिद्धे फलितमाह—तस्मादिति। तस्यापीत्यपिशब्दो हृदयब्रह्मदृष्टान्तार्थः। बुद्धिपूर्वकमनृतं विदुषोऽपि बाधकमित्यभिप्रेत्य विशिनष्टि—प्रमादोक्तमिति ॥१॥

ब्राह्मणान्तरमवतार्य व्याकरोति—अस्येत्यादिना। तत्राऽऽधिदैविकं स्थानविशेषमुपन्यस्यति—तदित्यादिना। संप्रत्याध्यात्मिकं स्थानविशेषं दर्शयति—यश्चेति। प्रदेशभेदवर्तिनोः स्थानभेदेन भेदं शङ्कित्वा परिहरति—तावेताविति। अन्योन्यमुपकार्योपकारकत्वेनान्योन्यस्मिन्प्रतिष्ठितत्वं प्रश्नपूर्वकं प्रकटयति—कथमित्यादिना। प्राणैश्चक्षुरादिभिरिन्द्रियैरिति यावत्। अनुगृह्णन्नादित्यमण्डलात्मानं प्रकाशयन्नित्यर्थः। प्रासङ्गिकमुपासनाप्रसङ्गागतमित्यर्थः। तत्प्रदर्शनस्य किं फलमित्याशङ्क्याऽऽह—कथमिति। पुरुषद्वयस्यान्योन्यमुपकार्योपकारकत्वमुक्तं

१. काश्चित् मातृकासु अतः षष्ठं ब्राह्मणमारभ्यते।

य एष एतस्मिन्मण्डले पुरुषस्तस्य भूरिति शिर एकं शिर एकमेतदक्षरं भुव इति बाहू द्वौ बाहू द्वे एते अक्षरे स्वरिति प्रतिष्ठा द्वे प्रतिष्ठे द्वे एते अक्षरे तस्योपनिषदहरिति हन्ति पाप्मानं जहाति च य एवं वेद ॥३॥

योऽयं दक्षिणेऽक्षन्पुरुषस्तस्य भूरिति शिर एकं शिर एकमेतदक्षरं भुव
५ इति बाहू द्वौ बाहू द्वे एते अक्षरे स्वरिति प्रतिष्ठा द्वे प्रतिष्ठे द्वे एते अक्षरे तस्योपनिषदहमिति हन्ति पाप्मानं जहाति च य एवं वेद ॥४॥

इति बृहदारण्यकोपनिषदि पञ्चमाध्यायस्य पञ्चमं ब्राह्मणम् ॥५॥

अथ पञ्चमाध्यायस्य षष्ठं ब्राह्मणम्

मनोमयोऽयं पुरुषो भाःसत्यस्तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवो वा स
१० एष सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति यदिदं किं च ॥१॥

इति बृहदारण्यकोपनिषदि पञ्चमाध्यायस्य षष्ठं ब्राह्मणम् ॥६॥

इव नोपयन्ति न प्रत्यागच्छन्त्येनम्। अतोऽवगम्यते परस्परोपकार्योपकारकभावात्सत्यस्यैवैकस्याऽऽत्मनोंऽशावेताविति ॥२॥

तत्र योऽसौ को य एष एतस्मिन्मण्डले पुरुषः सत्यनामा तस्य व्याहृतयोऽवयवाः। कथम्। भूरिति येयं
१५ व्याहृतिः सा तस्य शिरः। प्राथम्यात्। तत्र सामान्यं स्वयमेवाऽऽह श्रुतिः—एकमेकसंख्यायुक्तं शिरस्तथैतदक्षरमेकं भूरिति। भुव इति बाहू द्वित्वसामान्याद्द्वौ बाहू द्वे एते अक्षरे। तथा स्वरिति प्रतिष्ठा द्वे प्रतिष्ठे द्वे एते अक्षरे। प्रतिष्ठे पादौ प्रतितिष्ठत्याभ्यामिति। तस्यास्य व्याहृत्यवयवस्य सत्यस्य ब्रह्मण उपनिषद्रहस्यमभिधानम्। येनाभिधानेनाभिधीयमानं तद्ब्रह्माभिमुखो भवति लोकवत्। काऽसावित्याह—अहरिति अहरिति चैतद्रूपं हन्तेर्जहातेश्चेति यो वेद स हन्ति जहाति च पाप्मानं य एवं वेद ॥३॥
२० एवं योऽयं दक्षिणेऽक्षन्पुरुषस्तस्य भूरिति शिर इत्यादि सर्वं समानम्। तस्योपनिषदहमिति। प्रत्यगात्मभूतत्वात्। पूर्ववद्धन्तेर्जहातेश्चेति ॥४॥

इति बृहदारण्यकोपनिषद्भाष्ये पञ्चमाध्यायस्य पञ्चमं ब्राह्मणम् ॥५॥

उपाधीनामनेकत्वादनेकविशेषणत्वाच्च तस्यैव प्रकृतस्य ब्रह्मणो मनउपाधिविशिष्टस्योपासनं विधित्सन्नाह—मनोमयो मनःप्रायो मनस्युपलभ्यमानत्वात्। मनसा चोपलभत इति मनोमयोऽयं पुरुषो भाः सत्यो भा एव
२५ सत्यं सद्भावः स्वरूपं यस्य सोऽयं भाः सत्यो भास्वर इत्येतत्। मनसः सर्वार्थावभासकत्वान्मनोमयत्वाच्चास्य

निगमयति—नेत्यादिना। पुनःशब्देन मृतेरुत्तरकालो गृह्यते। रश्मीनामचेतनत्वादिवशब्दः। पुनर्नकारोच्चारणमन्वयप्रदर्शनार्थम् ॥२॥

तत्र स्थानद्वयसंबन्धिनः सत्यस्य ब्रह्मणो ध्याने प्रस्तुते सतीत्यर्थः। तत्रेति प्रथमव्याहृतौ शिरोदृष्ट्यारोपे विवक्षिते। तस्योपनिषदित्यादि व्याचष्टे—तस्येत्यादिना। यथा लोके गवादिः स्वेनाभिधानेनाभिधीयमानः संमुखी-
३० भवति तद्वदित्याह—लोकवदिति। नामोपास्तिफलमाह—अहरिति चेति ॥३॥

यथा मण्डलपुरुषस्य व्याहृत्यवयवस्य सोपनिषत्कस्याधिदैवतमुपासनमुक्तं तथाऽध्यात्मं चाक्षुषपुरुषस्योक्तविशेषणस्योपासनमुच्यते इत्याह—एवमिति। चाक्षुषस्य पुरुषस्य कथमहमित्युपनिषदिष्यते तत्राऽऽह—प्रत्यगिति। हन्तेर्जहातेश्चाहमित्येतद्रूपमिति यो वेद स हन्ति पाप्मानं जहाति चेति पूर्ववत्फलवाक्यं योज्यमित्याह—पूर्ववदिति ॥४॥

इति बृहदारण्यकोपनिषद्भाष्यटीकायां पञ्चमाध्यायस्य पञ्चमं ब्राह्मणम् ॥५॥
३५
ब्राह्मणान्तरमुत्थापयति—उपाधीनामिति। अनेकविशेषणत्वाच्च प्रत्येकं तेषामिति शेषः। तत्प्रायत्वे हेतुमाह—मनसीति। प्रकारान्तरेण तत्प्रायत्वमाह—मनसा चेति। तस्य भास्वररूपत्वं साधयति—मनस इति।

अथ पञ्चमाध्यायस्य सप्तमं ब्राह्मणम्

विद्युद्ब्रह्मेत्याहुर्विदानाद्विद्युद्विद्यत्येनं पाप्मनो य एवं वेद विद्युद्ब्रह्मेति विद्युद्ध्येव ब्रह्म ॥१॥

इति बृहदारण्यकोपनिषदि पञ्चमाध्यायस्य सप्तमं ब्राह्मणम् ॥७॥

अथ पञ्चमाध्यायस्याष्टमं ब्राह्मणम्

वाचं धेनुमुपासीत तस्याश्चत्वारः स्तनाः स्वाहाकारो वषट्कारो हन्तकारः ५

स्वधाकारस्तस्यै द्वौ स्तनौ देवा उपजीवन्ति स्वाहाकारं च वषट्कारं च

हन्तकारं मनुष्याः स्वधाकारं पितरस्तस्याः प्राण ऋषभो मनो वत्सः ॥१॥

इति बृहदारण्यकोपनिषदि पञ्चमाध्यायस्याष्टमं ब्राह्मणम् ॥८॥

भास्वरत्वम्। तस्मिन्नन्तर्हृदये हृदयस्यान्तस्तस्मिन्नित्येतत्। यथा व्रीहिर्वा यवो वा परिमाणत एवंपरिमाणस्त-स्मिन्नन्तर्हृदये योगिभिर्दृश्यत इत्यर्थः। स एव सर्वस्येशानः सर्वस्य स्वभेदजातस्येशानः स्वामी। स्वामित्वेऽपि १० सति कश्चिदमात्यादितन्त्रोऽयं तु न तथा किं तर्ह्यधिपतिरधिष्ठाय पालयिता। सर्वमिदं प्रशास्ति यदिदं किञ्च यत्किंचित्सर्वं जगत्तत्सर्वं प्रशास्ति। एवं मनोमयस्योपासनात्तथारूपापत्तिरेव फलम्। तं यथा यथोपासते तदेव भवतीति ब्राह्मणम् ॥१॥

इति बृहदारण्यकोपनिषद्भाष्ये पञ्चमाध्यायस्य षष्ठं ब्राह्मणम् ॥६॥

तथैवोपासनान्तरं सत्यस्य ब्रह्मणो विशिष्टफलमारभ्यते—विद्युद्ब्रह्मेत्याहुः। विद्युतो ब्रह्मणो निर्वचन- १५ मुच्यते—विदानादवखण्डनात्तमसो मेघान्धकारं विदार्य ह्यवभासतेऽतो विद्युत्। एवंगुणं विद्युद्ब्रह्मेति यो वेदासौ विद्यत्यवखण्डयति विनाशयति पाप्मन एनमात्मानं प्रति प्रतिकूलभूताः पाप्मानो ये तान्सर्वान्पाप्मनोऽवखण्डय-तीत्यर्थः। य एवं वेद विद्युद्ब्रह्मेति तस्यानुरूपं फलम्। विद्युद्धि यस्माद्ब्रह्म ॥१॥

इति बृहदारण्यकोपनिषद्भाष्ये पञ्चमाध्यायस्य सप्तमं ब्राह्मणम् ॥७॥

पुनरुपासनान्तरं तस्यैव ब्रह्मणो वाग्वै ब्रह्मेति वागिति शब्दस्त्रयी तां वाचं धेनुं धेनुरिव धेनुर्यथा २० धेनुश्चतुर्भिः स्तनैः स्तन्यं पयः क्षरति वत्सायैवं वाग्धेनुर्वक्ष्यमाणैः स्तनैः पय इवान्नं क्षरति देवादिभ्यः। के पुनस्ते स्तना ये वा ते येभ्यः क्षरति। तस्या एतस्या वाचो धेन्वा द्वौ स्तनौ देवा उपजीवन्ति वत्सस्थानीयाः। कौ तौ। स्वाहाकारं च वषट्कारं च। आभ्यां हि हविर्दीयते देवेभ्यः। हन्तकारं मनुष्याः। हन्तेति मनुष्येभ्योऽन्नं प्रयच्छन्ति। स्वधाकारं पितरः। स्वधाकारेण हि पितृभ्यः स्वधां प्रयच्छन्ति। तस्या धेन्वा वाचः प्राण ऋषभः। प्राणेन हि वाक्प्रसूयते। मनो वत्सः। मनसा हि प्रस्राव्यते। मनसा ह्यालोचिते विषये वाक्प्रवर्तते। तस्मान्मनो वत्सस्था- २५ नीयम्। एवं वाग्धेनूपासकस्ताद्भाव्यमेव प्रतिपद्यते ॥१॥

इति बृहदारण्यकोपनिषद्भाष्ये पञ्चमाध्यायस्याष्टमं ब्राह्मणम् ॥८॥

तस्य ध्यानार्थं स्थानं दर्शयति—तस्मिन्निति। औपाधिकमिदं परिमाणं स्वाभाविकं त्वानन्त्यमित्यभिप्रेत्याऽऽह— स एष इति। यदुक्तं सर्वस्येशान इति तन्निगमयति—सर्वमिति। यथाऽन्यत्र तथाऽत्राफलश्रुतेरफलमिदमुपा-सनमकार्यमिति चेन्नेत्याह—एवमिति ॥१॥ ३०

इति बृहदारण्यकोपनिषद्भाष्यटीकायां पञ्चमाध्यायस्य षष्ठं ब्राह्मणम् ॥६॥

ब्राह्मणान्तरमुद्भाव्य विभजते—तथैवेत्यादिना। तमसो विदानाद्विद्युदिति संबन्धः। तदेव स्फुटयति—मेघेति। उक्तमेव फलं प्रकटयति—एनमिति ॥१॥

इति बृहदारण्यकोपनिषद्भाष्यटीकायां पञ्चमाध्यायस्य सप्तमं ब्राह्मणम्

ब्राह्मणान्तरमवतारयति—पुनरिति। ता धेनुमुपासीतेति संबन्धः। वाचो धेन्वाश्च सादृश्यं विशदयति— ३५ यथेत्यादिना। स्तनचतुष्टयं भोक्तृत्रयं च प्रश्नपूर्वकं प्रकटयति—के पुनरित्यादिना। कथं देवा यथोक्तौ स्तनावुप-जीवन्ति तत्राऽऽह—आभ्यां हीति। हन्त यद्यपेक्षितमित्यर्थः स्ववामन्नम्। प्रस्राव्यते प्रस्नुता क्षरणोद्यता क्रियते। मनसा हीत्यादिनोक्तं विवृणोति—मनसेति। फलाश्रवणादेतदुपासनमकिंचित्करमित्याशङ्क्याऽऽह—एवमिति। ताद्भाव्यं यथोक्तवागुपाधिकब्रह्मरूपत्वमित्यर्थः ॥१॥

इति बृहदारण्यकोपनिषद्भाष्यटीकायां पञ्चमाध्यायस्याष्टमं ब्राह्मणम् ॥८॥ ४०

अथ पञ्चमाध्यायस्य नवमं ब्राह्मणम्

**अयमग्निर्वैश्वानरो योऽयमन्तः पुरुषे येनेदमन्नं पच्यते यदिदमद्यते तस्यैष घोषो भवति यमेतत्कर्णावपिधाय शृणोति स यदोत्क्रमिष्यन्भवति नैनं घोषं शृणोति ॥१॥**

इति बृहदारण्यकोपनिषदि पञ्चमाध्यायस्य नवमं ब्राह्मणम् ॥९॥

५ अथ पञ्चमाध्यायस्य दशमं ब्राह्मणम्

**यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्ध्व आक्रमते स आदित्यमागच्छति तस्मै स तत्र विजिहीते यथा लम्बरस्य खं तेन स ऊर्ध्व आक्रमते स चन्द्रमसमागच्छति तस्मै स तत्र विजिहीते यथा दुन्दुभेः खं तेन स ऊर्ध्व आक्रमते स लोकमागच्छत्यशोकमहिमं तस्मिन्वसति शाश्वतीः समाः ॥१॥**

१० इति बृहदारण्यकोपनिषदि पञ्चमाध्यायस्य दशमं ब्राह्मणम् ॥१०॥

अयमग्निर्वैश्वानरः पूर्ववदुपासनान्तरमयमग्निर्वैश्वानरः। कोऽयमग्निरित्याह—योऽयमन्तःपुरुषे। किं शरीरारम्भको नेत्युच्यते—येनाग्निना वैश्वानराख्येनेदमन्नं पच्यते। किं तदन्नम्। यदिदमद्यते भुज्यतेऽन्नं प्रजाभिः जाठरोऽग्निरित्यर्थः। तस्य साक्षादुपलक्षणार्थमिदमाह—तस्याग्नेरन्नं पचतो जाठरस्यैष घोषो भवति। कोऽसौ। यं घोषमेतदिति क्रियाविशेषणं कर्णावपिधायाङ्गुलीभ्यामपिधानं कृत्वा शृणोति तं प्रजापतिमुपासीत वैश्वानर- १५ मग्निम्। अत्रापि तादृग्भाव्यं फलम्। तत्र प्रासङ्गिकमिदमरिष्टलक्षणमुच्यते—सोऽत्र शरीरे भोक्ता यदोत्क्रमिष्यन्भवति नैनं घोषं शृणोति ॥१॥

इति बृहदारण्यकोपनिषद्भाष्ये पञ्चमाध्यायस्य नवमं ब्राह्मणम् ॥९॥

सर्वेषामस्मिन्प्रकरण उपासनानां गतिरियं फलं चोच्यते—यदा वै पुरुषो विद्वानस्माल्लोकात्प्रैति शरीरं परित्यजति स तदा वायुमागच्छत्यन्तरिक्षे तिर्यग्भूतो वायुः स्तिमितोऽभेद्यस्तिष्ठति। स वायुस्तत्र स्वात्मनि तस्मै २० सम्प्राप्ताय विजिहीते स्वात्मावयवान्विगमयति च्छिद्रीकरोत्यात्मानमित्यर्थः। किंपरिमाणं छिद्रमिति। उच्यते—यथा रथचक्रस्य खं छिद्रं प्रसिद्धपरिमाणम्। तेन छिद्रेण स विद्वानूर्ध्व आक्रमत ऊर्ध्वः सन्गच्छति स आदित्यमागच्छति। आदित्यो ब्रह्मलोकं जिगमिषोर्मार्गनिरोधं कृत्वा स्थितः सोऽप्येवंविद उपासकाय द्वारं प्रयच्छति। तस्मै स तत्र विजिहीते। यथा लम्बरस्य खं वादित्रविशेषस्य च्छिद्रपरिमाणं तेन स ऊर्ध्व आक्रमते स चन्द्रमसमागच्छति। सोऽपि तस्मै तत्र विजिहीते। यथा दुन्दुभेः खं प्रसिद्धं तेन स ऊर्ध्वं आक्रमते स लोकं प्रजापतिलोकमागच्छति।

२५ ब्राह्मणान्तरमनूद्य तस्य तात्पर्यमाह—अयमिति। अन्नपानस्य पक्ता। तत्सद्भावे मानमाह—तस्येति। क्रियायाः श्रवणस्य तदिति विशेषणं तद्यथा भवति तथेत्यर्थः। कौक्षेयाग्न्युपाधिकस्य परस्योपासने प्रस्तुते सतीत्याह तत्रेति ॥१॥

इति बृहदारण्यकोपनिषद्भाष्यटीकायां पञ्चमाध्यायस्य नवमं ब्राह्मणम् ॥९॥

ब्राह्मणान्तरस्य तात्पर्यमाह—सर्वेषामिति। फलं चाश्रुतफलानामिति शेषः। किमिति विद्वान्वायुमागच्छति ३० तमुपेक्ष्यैव ब्रह्मलोकं कुतो न गच्छतीत्याशङ्क्याऽऽह—अन्तरिक्ष इति। आदित्यं प्रत्यागमने हेतुमाह—आदित्य इति। उक्तेऽर्थे वाक्यं पातयति—तस्मा इति। बहून्कल्पानित्यवान्तरकल्पोक्तिः ॥१॥

इति बृहदारण्यकोपनिषद्भाष्यटीकायां पञ्चमाध्यायस्य दशमं ब्राह्मणम् ॥१०॥

---

१. "यदा वै पुरुष" इत्यत्र वायुः आदित्यश्चोत्तरायणमार्गे श्रुतौ तौ च कुत्र निवेशनीयौ इति विचार्यते। "वायुमब्दादविशेषविशेषाभ्याम्" इत्यधिकरणे "तेऽर्चिषमभिसंभवन्ति अर्चिषोऽह" इत्यादिना श्रुतमार्गे वायुः संवत्सरादूर्ध्वमादित्यात्पूर्वं चाभिसंभवन्ति। स वायुमागच्छति तस्मै स तत्र विजिहीते स आदित्यमागच्छति इति ३५ श्रवणात् इति निर्णयः कृतः। "स वायुलोकं स वरुणलोकं स ब्रह्मलोकम्" इत्याम्नाये क्रमबोधकशब्दाभावाच्च न तेन विरोधः। आतिवाहिकाः अर्चिरादयो देवताः चेतना आतिवाहिकास्तल्लिङ्गादिति सूत्रे तदुपपादनात्।

अथ पञ्चमाध्यायस्यैकादशं ब्राह्मणम्

एतद्वै परमं तपो यद्व्याहितस्तप्यते परम ँ हैव लोकं जयति य एवं वेदैतद्वै परमं तपो यं प्रेतमरण्य ँ हरन्ति परम ँ हैव लोकं जयति य एवं वेदैतद्वै परमं तपो यं प्रेतमग्नावभ्यादधति परम ँ हैव लोकं जयति य एवं वेद ॥१॥

इति बृहदारण्यकोपनिषदि पञ्चमाध्यायस्यैकादशं ब्राह्मणम् ॥११॥　५

अथ पञ्चमाध्यायस्य द्वादशं ब्राह्मणम्

अन्नं ब्रह्मेत्येक आहुस्तन्न तथा पूयति वा अन्नमृते प्राणात्प्राणो ब्रह्मेत्येक आहुस्तन्न तथा शुष्यति वै प्राण ऋतेऽन्नादेते ह त्वेव देवते एकधाभूयं भूत्वा परमतां गच्छतस्तद्ध स्माऽऽह प्रातृदः पितरं कि ँ स्विदेवैवं विदुषे साधु कुर्यां किमेवास्मा असाधु कुर्यामिति स ह स्माऽऽह पाणिना मा प्रातृद कस्त्वेनयोरेकधाभूयं भूत्वा परमतां गच्छतीति तस्मा उ हैतदुवाच　१० वीत्यन्नं वै व्यन्ने हीमानि सर्वाणि भूतानि विष्टानि रमिति प्राणो वै रं प्राणे हीमानि सर्वाणि भूतानि रमन्ते सर्वाणि ह वा अस्मिन्भूतानि विशन्ति सर्वाणि भूतानि रमन्ते य एवं वेद ॥१॥

इति बृहदारण्यकोपनिषदि पञ्चमाध्यायस्य द्वादशं ब्राह्मणम् ॥१२॥

गच्छति । किंविशिष्टम् । अशोकं मानसेन दुःखेन विवर्जितमित्येतत् । अहिमं हिमवर्जितं शारीरदुःखवर्जितमित्यर्थः । तं प्राप्य तस्मिन्वसति शाश्वतीर्नित्याः समाः संवत्सरानित्यर्थः । ब्रह्मणो बहून्कल्पान्वसतीत्येतत् ॥१॥　१५

इति बृहदारण्यकोपनिषद्भाष्ये पञ्चमाध्यायस्य दशमं ब्राह्मणम् ॥१०॥

एतद्वै परमं तपः । किं तत् । यद्व्याहितो व्याधितो ज्वरादिपरिगृहीतः सन्यत्तप्यते तदेतत्परमं तप इत्येवं चिन्तयेत् । दुःखसामान्यात् । तस्यैवं चिन्तयतो विदुषः कर्मक्षयहेतुस्तदेव तपो भवत्यनिन्दतोऽविषीदतः । स एव च तेन विज्ञानतपसा दग्धकिल्बषः परमं हैव लोकं जयति य एवं वेद । तथा मुमूर्षुरादावेव कल्पयति किमेतद्वै परमं तपोयं प्रेतं मां ग्रामादरण्यं हरन्ति । ऋत्विजोऽन्त्यकर्मणे तद्ग्रामादरण्यगमनसामान्यात्परमं मम तत्तपो भविष्यति ।　२० ग्रामादरण्यगमनं परमं तप इति हि प्रसिद्धम् । परमं हैव लोकं जयति य एवं वेद । तथैतद्वै परमं तपो यं प्रेतमग्नावभ्यादधति । अग्निप्रवेशसामान्यात् । परमं हैव लोकं जयति य एवं वेद ॥१॥

इति बृहदारण्यकोपनिषद्भाष्ये पञ्चमाध्यायस्यैकादशं ब्राह्मणम् ॥११॥

अन्नं ब्रह्मेति । तथैतदुपासनान्तरं विधित्सन्नाह—अन्नं ब्रह्मान्नमद्यते यत्तद्ब्रह्मेत्येक आचार्या आहुस्तन्न तथा ग्रहीतव्यमन्नं ब्रह्मेति । अन्ये चाऽऽहुः प्राणो ब्रह्मेति तच्च तथा न ग्रहीतव्यम् । किमर्थं पुनरन्नं ब्रह्मेति न ग्राह्यम् ।　२५ यस्मात्पूयति क्लिद्यते पूतिभावमापद्यत ऋते प्राणात्तत्कथं ब्रह्म भवितुमर्हति । ब्रह्म हि नाम तदव्यविनाशि । अस्तु तर्हि प्राणो ब्रह्म । नैव । यस्माच्छुष्यति वै प्राणः शोषमुपैति ऋतेऽन्नात् । अत्ता हि प्राणः । अतोऽन्नेनाऽऽद्येन विना न शक्नोत्यात्मानं धारयितुम् । तस्माच्छुष्यति वै प्राण ऋतेऽन्नात् । अत एकैकस्य ब्रह्मता नोपपद्यते यस्मात्तस्मा- देते ह त्वेवान्नप्राणदेवते एकधाभूयमेकधाभावं भूत्वा गत्वा परमतां परमत्वं गच्छतो ब्रह्मत्वं प्राप्नुतः ।

ब्रह्मोपासनप्रसगेन फलवदब्रह्मोपासनमुपन्यस्यति—एतदिति । यद्व्याहित इति प्रतीकमादाय व्याचष्टे—　३० ज्वरादीति । कर्मक्षयहेतुरित्यत्र कर्मशब्देन पापमुच्यते । परम हैव लोकमित्यत्र तपसोऽनुकूलं फलं लोकशब्दार्थः । अस्तु ग्रामादरण्यगमनं तथाऽपि कथं तपस्त्वमित्याशङ्क्याऽऽह—ग्रामादिति ॥१॥

इति बृहदारण्यकोपनिषद्भाष्यटीकायां पञ्चमाध्यायस्यैकादशं ब्राह्मणम् ॥११॥

ब्राह्मणान्तरं गृहीत्वा तात्पर्यमाह—अन्नमिति । यथा पूर्वस्मिन्ब्राह्मणे फलवदब्रह्मोपासनमुक्तं तद्वदित्याह— तथेति । एतदिति ब्रह्मविषयोक्तिः । उपास्यं ब्रह्म निर्धारयितुं विचारयति—अन्नमित्यादिना । अन्नस्य विनाशित्वेऽपि　३५ ब्रह्मत्वं किं न स्यादत आह—ब्रह्म हीति । कथमन्नं विना प्राणस्य शोषप्राप्तिस्तत्राऽऽह—अत्ता हीति । प्रत्येकं नाशित्वमतःशब्दार्थः ।

अथ पञ्चमाध्यायस्य त्रयोदशं ब्राह्मणम्

उक्थं प्राणो वा उक्थं प्राणो हीदँ सर्वमुत्थापयत्युद्धास्मादुक्थविद्वीरस्तिष्ठत्युक्थस्य सायुज्यँ सलोकतां जयति य एवं वेद ॥१॥

यजुः प्राणो वै यजुः प्राणे हीमानि सर्वाणि भूतानि युज्यन्ते युज्यन्ते हास्मै
५ सर्वाणि भूतानि श्रैष्ठ्याय यजुषः सायुज्यँ सलोकतां जयति य एवं वेद ॥२॥

तदेतदेवमध्यवस्य ह स्माऽऽह स्म प्रातृदो नाम पितरमात्मनः किंस्विदितिस्विदिति वितर्के। यथा मया ब्रह्म परिकल्पितमेवं विदुषे किंस्वित्साधु कुर्यां साधु शोभनं पूजां कां त्वस्मै कुर्यामित्यभिप्रायः। किमेवास्मै विदुषेऽसाधु कुर्यां कृतकृत्योऽसावित्यभिप्रायः। अन्नप्राणौ सहभूतौ ब्रह्मेति विद्वानसावसाधुकरणेन खण्डितो भवति। नापि साधुकरणेन महीकृतः। तदेवंवादिनं स पिता ह स्माऽऽह पाणिना हस्तेन निवारयन्मा प्रातृद मैवं वोचः।
१० कस्त्वेनयोरन्नप्राणयोरेकधाभूयं भूत्वा परमतां कस्तु गच्छति न कश्चिदपि विद्वाननेन ब्रह्मदर्शनेन परमतां गच्छति। तस्मान्नैवं वक्तुमर्हसि कृतकृत्योऽसाविति। यद्येवं ब्रवीतु भवान्कथं परमतां गच्छतीति। तस्मा उ हैतद्वक्ष्यमाणं वच उवाच। किं तत्। वीति। किं तद्वीति। उच्यते—अन्नं वै वि। अन्ने हि यस्मादिमानि सर्वाणि भूतानि विष्टान्याश्रितान्यतोऽन्नं वीत्युच्यते। किंच रमिति। रमिति चोक्तवान्पिता। किं पुनस्तद्रम्। प्राणो वै रम्। कुत इत्याह। प्राणे हि यस्माद्बलाश्रये सति सर्वाणि भूतानि रमन्तेऽतो रं प्राणः। सर्वभूताश्रयगुणमन्नं सर्वभूतरतिगुणश्च प्राणः।
१५ न हि कश्चिदनायतनो निराश्रयो रमते। नापि सत्यप्यायतनेऽप्राणो दुर्बलो रमते। यदा त्वायतनवान्प्राणी बलवांश्च तदा कृतार्थमात्मानं मन्यमानो रमते लोकः। "युवा स्यात्साधुयुवाऽध्यायकः" इत्यादिश्रुतेः। इदानीमेवंविदः फलमाह—सर्वाणि ह वा अस्मिन्भूतानि विशन्त्यन्नगुणज्ञानात्सर्वाणि भूतानि रमन्ते प्राणगुणज्ञानाद्य एवं वेद ॥१॥

इति बृहदारण्यकोपनिषद्भाष्ये पञ्चमाध्यायस्य द्वादशं ब्राह्मणम् ॥१२॥

उक्थम्। तथोपासनान्तरमुक्थं शस्त्रम्। तद्धि प्रधानं महाव्रते क्रतौ। किं पुनस्तदुक्थम्। प्राणो वा उक्थम्।
२० प्राणश्च प्रधान इन्द्रियाणामुक्थं च शस्त्राणामत उक्थमित्युपासीत। कथं प्राण उक्थमित्याह—प्राणो हि यस्मादिदं सर्वमुत्थापयति। उत्थापनादुक्थ प्राणः। न ह्यप्राणः कश्चिदुत्तिष्ठति। तदुपासनफलमाह—उद्धास्मादेवंविद उक्थवित्प्राणविद्वीरः पुत्र उत्तिष्ठति ह दृष्टमेतत्फलम्। अदृष्टं तूक्थस्य सायुज्यं सलोकतां जयति य एवं वेद ॥१॥

यजुरिति चोपासीत प्राणम्। प्राणो वै यजुः। कथं युजः प्राणः। प्राणे हि यस्मात्सर्वाणि भूतानि युज्यन्ते। न ह्यसति प्राणे केनचित्कस्यचिद्योगसामर्थ्यम्। अतो युनक्तीति प्राणो यजुः। एवंविदः फलमाह—

२५ किंस्विदित्यादिवाक्यस्यार्थं विवृणोति—अन्नप्राणाविति। कस्त्विति प्रतीकमादाय व्याकरोति—एनयोरिति। यद्येवमुक्तरीत्या परमत्वं यदि नास्तीत्यर्थः। उक्तमसंकीर्णं गुणद्वयं संक्षिप्याऽऽह—सर्वभूतेति। अन्नगुणं विना प्राणगुणादेतद्ध्यानं सिध्यतीत्याशङ्क्याऽऽह—न हीति। प्राणगुणस्याप्यन्नगुणत्वसंभवादलं प्राणेनेत्याशङ्क्याऽऽह—नापीति। गुणद्वयस्य परस्परापेक्षामनुभवानुसारेण स्फोरयति—यदा त्विति। आयतनवतो बलवतश्च कृतार्थतेत्यत्र तैत्तिरीयश्रुतिं संवादयति—युवा स्यादिति। आशिष्ठो दृढिष्ठो बलिष्ठस्तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा
३० स्यादित्येतदादिशब्देन गृह्यते ॥१॥

इति बृहदारण्यकोपनिषद्भाष्यटीकायां पञ्चमाध्यायस्य द्वादशं ब्राह्मणम् ॥१२॥

अन्नप्राणयोर्गुणद्वयविशिष्टयोर्मिलितयोरुपासनमुक्तमिदानीं ब्राह्मणान्तरमादाय तात्पर्यमाह—उक्थमिति। सत्सु शस्त्रान्तरेषु किमित्युक्थमुपास्यत्वेनोपन्यस्यते तत्राऽऽह—तद्धीति। कस्मिन्किमारोप्य कस्योपास्यत्वमिति प्रश्नद्वारा विवृणोति—किं पुनरिति। तस्मिन्नुक्थदृष्टौ हेतुमाह—प्राणश्चेति। तस्मिन्नुक्थशब्दस्य समवेतार्थत्वं प्रश्न-
३५ पूर्वकमाह—कथमित्यादिना। उत्थानस्य स्वतोऽपि सम्भवान्न प्राणकृतत्वमित्याशङ्क्याऽऽह—न हीति। उक्थस्य प्राणस्यैतद्विज्ञानतारतम्यमपेक्ष्य सायुज्यं सालोक्यं च व्याख्येयम् ॥१॥

यजुःशब्दस्यान्यत्र रूढत्वादयुक्तं प्राणविषयत्वमिति शङ्कित्वा परिहरति—कथमित्यादिना। असत्यपि प्राणे योगः सम्भवतीत्याशङ्क्याऽऽह—न हीति। प्रकरणानुगृहीतप्राणशब्दश्रुत्या यजुःशब्दस्य रूढिं त्यक्त्वा योगोऽङ्गीक्रियते

साम प्राणो वै साम प्राणे हीमानि सर्वाणि भूतानि सम्यञ्चि सम्यञ्चि हास्मै सर्वाणि भूतानि श्रैष्ठ्याय कल्पन्ते साम्नः सायुज्यँ सलोकतां जयति य एवं वेद ॥३॥

क्षत्रं प्राणो वै क्षत्रं प्राणो हि वै क्षत्रं त्रायते हैनं प्राणः क्षणितोः प्र क्षत्रमत्रमाप्नोति क्षत्रस्य सायुज्यँ सलोकतां जयति य एवं वेद ॥४॥

इति बृहदारण्यकोपनिषदि पञ्चमाध्यायस्य त्रयोदशं ब्राह्मणम् ॥१३॥

अथ पञ्चमाध्यायस्य चतुर्दशं ब्राह्मणम्

भूमिरन्तरिक्षं द्यौरित्यष्टावक्षराण्यष्टाक्षरँ ह वा एकं गायत्र्यै पदमेतदु हैवास्या एतत्स यावदेषु त्रिषु लोकेषु तावद्ध जयति योऽस्या एतदेवं पद वेद ॥१॥

युज्यन्त उद्यच्छन्त इत्यर्थः । हास्मा एवंविदे सर्वाणि भूतानि श्रैष्ठ्यं श्रेष्ठभावस्तस्मै श्रैष्ठ्याय श्रेष्ठभावाय नः श्रेष्ठो भवेदिति । यजुषः प्राणस्य सायुज्यमित्यादि सर्वं समानम् ॥२॥ १०

सामेति चोपासीत प्राणम् । प्राणो वै साम । कथं प्राणः साम । प्राणे हि यस्मात्सर्वाणि भूतानि सम्यञ्चि संगच्छन्ते संगमनात्साम्यापत्तिहेतुत्वात्साम प्राणः । सम्यञ्चि संगच्छन्ते हास्मै सर्वाणि भूतानि । न केवलं संगच्छन्त एव श्रेष्ठभावाय चास्मै कल्पन्ते समर्थ्यन्ते । साम्नः सायुज्यमित्यादि पूर्ववत् ॥३॥

तं प्राणं क्षत्रमित्युपासीत । प्राणो वै क्षत्रं प्रसिद्धमेतत्प्राणो हि वै क्षत्रम् । कथं प्रसिद्धतेत्याह—त्रायते पालयत्येनं पिण्डं देहं प्राणः क्षणितोः शस्त्रादिहिंसितात्पुनर्मांसेनाऽऽपूरयति यस्मात्तस्मात्क्षतत्राणात्प्रसिद्धं क्षत्रत्वं प्राणस्य । विद्वत्फलमाह—प्र क्षत्रमत्रं न त्रायतेऽन्येन केनचिदित्यत्रं क्षत्रं प्राणस्यमत्रं क्षत्रं प्राणं प्राप्नोतीत्यर्थः । शाखान्तरे वा पाठात्क्षत्रमात्रं प्राणो भवतीत्यर्थः । क्षत्रस्य सायुज्यं सलोकतां जयति य एवं वेद ॥४॥ १५

इति बृहदारण्यकोपनिषद्भाष्ये पञ्चमाध्यायस्य त्रयोदशं ब्राह्मणम् ॥१३॥

ब्रह्मणो हृदयाद्यनेकोपाधिविशिष्टस्योपासनमुक्तमथेदानीं गायत्र्युपाधिविशिष्टस्योपासनं वक्तव्यमित्यारभ्यते । सर्वच्छन्दसां हि गायत्रीच्छन्दः प्रधानभूतम् । तत्प्रयोक्तृगयत्राणाद्गायत्रीति वक्ष्यति । न चान्येषां छन्दसां प्रयोक्तृप्राणत्राणसामर्थ्यम् । प्राणात्मभूता च सा सर्वच्छन्दसां चाऽऽत्मा प्राणः । प्राणश्च क्षतत्राणात्क्षत्रमित्युक्तम् । प्राणश्च गायत्री । तस्मात्तदुपासनमेव विधित्स्यते । द्विजोत्तमजन्महेतुत्वाच्च । गायत्र्या ब्राह्मणमसृजत त्रिष्टुभा राजन्यं जगत्या वैश्यमिति द्विजोत्तमस्य द्वितीयं जन्म गायत्रीनिमित्तम् । तस्मात्प्रधाना गायत्री ब्राह्मणा व्युत्थाय ब्राह्मणा अभिवदन्ति स ब्राह्मणो विपापो विरजोऽविचिकित्सो ब्राह्मणो भवतीत्युत्तमपुरुषार्थसंबन्धं इत्याह—अत इति ॥२॥ २० २५

संगमनादित्येतदेव व्याचष्टे—साम्येति ॥३॥

शाखान्तरशब्देन माध्यंदिनशाखोच्यते ॥४॥

इति बृहदारण्यकोपनिषद्भाष्यटीकायां पञ्चमाध्यायस्य त्रयोदशं ब्राह्मणम् ॥१३॥

वृत्तमनूद्य गायत्रीब्राह्मणस्य तात्पर्यमाह—ब्रह्मण इत्यादिना । छन्दोन्तरेष्वपि विद्यमानेषु किमिति गायत्र्युपाधिकमेव ब्रह्मोपास्यमिष्यते तत्राऽऽह—सर्वच्छन्दसामिति । तत्प्राधान्ये हेतुमाह—तत् प्रयोक्त्रिति । तुल्यं प्रयोक्तृप्राणत्राणसामर्थ्यं छन्दोन्तराणामपीति चेन्नेत्याह—न चेति । प्रमाणाभावादिति भावः । किंच प्राणात्मभावो गायत्र्या विवक्ष्यते प्राणश्च सर्वेषां छन्दसां निर्वर्तकत्वादात्मा तथा च सर्वच्छन्दोव्यापकगायत्र्युपाधिकब्रह्मोपासनमेवात्र विवक्षितमित्याह—प्राणात्मेति । तदात्मभूता गायत्रीत्युक्तं व्यक्तीकरोति—प्राणश्चेति । तत्प्रयोक्तृगयत्राणाद्धि गायत्री । प्राणश्च वागादीनां त्राता । तन्त्रैकलक्षणत्वात्तयोस्तादात्म्यमित्यर्थः । प्राणगायत्र्योस्तादात्म्ये फलितमाह—तस्मादिति । गायत्रीप्राधान्ये हेत्वन्तरमाह—द्विजोत्तमेति । तदेव स्फुटयति—गायत्र्येति । तत्प्राधान्ये हेत्वन्तरमाह—ब्राह्मणा इति । ३० ३५

ऋचो यजूँषि सामानीत्यष्टावक्षराण्यष्टाक्षरँ ह वा एकं गायत्र्यै पदमेतदु
हैवास्या एतत्स यावतीयं त्रयी विद्या तावद्ध जयति योऽस्या एतदेवं पदं वेद ॥२॥
प्राणोऽपानो व्यान इत्यष्टावक्षराण्यष्टाक्षरँ ह वा एकं गायत्र्यै पदमेतदु हैवास्या एतत्स
यावदिदं प्राणि तावद्ध जयति योऽस्या एतदेवं पदं वेदाथास्य एतदेव तुरीयं दर्शतं पदं
५ परोरजा य एष तपति यद्वै चतुर्थं तत्तुरीयं दर्शतं पदमिति ददृश इव ह्येष परोरजा इति
सर्वमु ह्येवैष रज उपर्युपरि तपत्येवँ हैव श्रिया यशसा तपति योऽस्या एतदेवं पदं वेद ॥३॥

ब्राह्मणस्य दर्शयति। तच्च ब्राह्मणत्वं गायत्रीजन्ममूलमतो वक्तव्यं गायत्र्याः सतत्त्वम्। गायत्र्या हि यः सृष्टो द्विजोत्तमो निरङ्कुश एवोत्तमपुरुषार्थसाधनेऽधिक्रियतेऽतस्तन्मूलः परमपुरुषार्थसंबन्धः। तस्मात्तदुपासनविधानायाऽऽह—भूमिरन्तरिक्षं द्यौरित्येतान्यष्टावक्षराणि। अष्टाक्षरमष्टावक्षराणि यस्य तदिदमष्टाक्षरम्। ह वै प्रसिद्धाव-
१० द्योतकौ। एकं प्रथमं गायत्र्यै गायत्र्याः पदम्। यकारेणैवाष्टत्वपूरणम्। एतदु हैवैतदेवास्या गायत्र्याः पदं पादः प्रथमो भूम्यादिलक्षणस्त्रैलोक्यात्मा। अष्टाक्षरत्वसामान्यात्। एवमेतत्त्रैलोक्यात्मकं गायत्र्याः प्रथमं पदं यो वेद तस्यैतत्फलम्—स विद्वान्यावत्किंचिदेषु त्रिषु जेतव्यं तावत्सर्वं ह जयति योऽस्या एतदेवं पदं वेद ॥१॥

तथर्चो यजूंषि सामानीति त्रयीविद्यानामाक्षराण्येतान्यप्यष्टावेव तथैवाष्टाक्षरं ह वा एकं गायत्र्यै पदं द्वितीयमेतदु हैवास्या एतदृग्यजुःसामलक्षणमष्टाक्षरत्वसामान्यादेव। स यावतीयं त्रयी विद्या त्रय्या विद्यया
१५ यावत्फलजातमाप्यते तावद्ध जयति योऽस्या एतद्गायत्र्यास्त्रैविद्यलक्षणं पदं वेद ॥२॥

तथा प्राणोऽपानो व्यान एतान्यपि प्राणाद्यभिधानाक्षराण्यष्टौ। तच्च गायत्र्यास्तृतीयं पदं यावदिदं प्राणिजातं तावद्ध जयति योऽस्या एतदेवं गायत्र्यास्तृतीयं पदं वेद। अथानन्तरं गायत्र्यास्त्रिपदायाः शब्दात्मिकायास्तुरीयं पदमुच्यतेऽभिधेयभूतमस्याः प्रकृताया गायत्र्या एतदेव वक्ष्यमाणं तुरीयं दर्शतं पदं परोरजा य एष तपति। तुरीयमित्यादिवाक्यपदार्थं स्वमेव व्याचष्टे श्रुतिः—यद्वै चतुर्थं प्रसिद्धं लोके तदिदं तुरीयशब्देनाभिधीयते।
२० दर्शतं पदमित्यस्य कोऽर्थ इत्युच्यते—ददृश इव दृश्यत इव ह्येष मण्डलान्तर्गतः पुरुषोऽतो दर्शतं पदमुच्यते। परोरजा इत्यस्य पदस्य कोऽर्थ इत्युच्यते—सर्वं समस्तमु ह्येवैष मण्डलस्थः पुरुषो रजो रजोजातं समस्तं लोकमित्यर्थः। उपर्युपर्याधिपत्यभावेन सर्वं लोकं रजोजातं तपति। उपर्युपरीति वीप्सा सर्वलोकाधिपत्यख्यापनार्था। ननु सर्वशब्देनैव सिद्धत्वाद्वीप्साऽनर्थिका। नैष दोषः। येषामुपरिष्टात्सविता दृश्यते तद्विषय एव सर्वशब्दः स्यादित्याशङ्कानिवृत्त्यर्था वीप्सा। 'ये चामुष्मात्पराञ्चो लोकास्तेषां चेष्टे देवकामानां च' इति श्रुत्यन्तरात्। तस्मात्सर्वा-

२५ कथमेतावता गायत्रीप्राधान्यं तत्राऽऽह—तच्चेति। अतो वक्तव्यमित्यत्रातः शब्दार्थमाह—गायत्र्या हीति। अधिकारित्वकृतं कार्यमाह—अत इति। तच्छब्दो गायत्रीविषयः। गायत्रीवैशिष्ट्यं परामृश्य फलितमुपसहरति—तस्मादिति। गायत्रीप्रथमपादस्य सप्ताक्षरत्वं प्रतीयते न त्वष्टाक्षरत्वमित्याशङ्क्याऽऽह—यकारेणेति। गायत्रीप्रथमपादस्य त्रैलोक्यनाम्नश्च संख्यासामान्यप्रयुक्तं कार्यमाह—एतदिति। गायत्रीप्रथमपादे त्रैलोक्यदृष्ट्यारोपस्य प्रयोजनं दर्शयति—एवमिति। प्रथमपादज्ञाने विराडात्मकत्वं फलतीत्यर्थः ॥१॥

३० प्रथमे पादे त्रैलोक्यदृष्टिवद्द्वितीये पादे कर्तव्या त्रैविद्यदृष्टिरित्याह—तथेति। दृष्टिविध्युपयोगित्वेन संख्यासामान्यं कथयति—ऋच इति। संख्यासामान्यफलमाह—एतदिति। विद्याफलं दर्शयति—स यावतीति ॥२॥

प्रथमद्वितीयपादयोस्त्रैलोक्यत्रैविद्यदृष्टिवत्तृतीये पादे प्राणादिदृष्टिः कर्तव्येत्याह—तथेति। ननु त्रिपदा गायत्री व्याख्याता चेत्किमुत्तरग्रन्थेनेत्याशङ्क्याऽऽह—अथेति। शब्दात्मकगायत्रीप्रकरणविच्छेदार्थोऽथशब्दः। यद्वै चतुर्थमित्यादिग्रन्थस्य पूर्वेण पौनरुक्त्यमाशङ्क्याऽऽह—तुरीयमिति। इहेति प्रकृतवाक्योक्तिः। योगिभिर्दृश्यत इवेदि लक्ष्यते
३५ न तु मुख्यमीश्वरस्य दृश्यत्वमतीन्द्रियत्वादित्याह—दृश्यत इवेति। 'लोका रजांस्युच्यन्ते' इति श्रुत्यन्तरमाश्रित्याऽऽह—सर्वं समस्तमिति। आधिपत्यभावेनेति कथं व्याख्यानमित्याशङ्क्याऽऽह—उपर्युपरीति। वीप्सामाक्षिपति—नन्विति। येषां लोकानामिति रजस्तपतीत्येतावतैव सर्वाधिपत्यस्य सिद्धत्वाद्व्यर्था वीप्सेति चोद्यं दूषयति—नैष दोष इति। येषां लोकानामिति मण्डलपुरुषस्य निरङ्कुशमाधिपत्यमित्यत्र च्छान्दोग्यश्रुतिमनुकूलयति—ये चेति। वीप्सार्थवत्त्वमुपसंहरति—यावत्।

**सैषा गायत्र्येतस्मिꣳस्तुरीये दर्शते पदे परोरजसि प्रतिष्ठिता तद्वै तत्सत्ये प्रतिष्ठितं चक्षुर्वै सत्यं चक्षुर्हि वै सत्यं तस्माद्यदिदानीं द्वौ विवदमानावेयातामहमदर्शमहमश्रौषमिति य एवं ब्रूयादहमदर्शमिति तस्मा एव श्रद्दध्याम तद्वै तत्सत्यं बले प्रतिष्ठितं प्राणो वै बलं तत्प्राणे प्रतिष्ठितं तस्मादाहुर्बलꣳसत्यादोगीय इत्येवम्वेषा गायत्र्यध्यात्मं प्रतिष्ठिता सा हैषा गयाꣳस्तत्रे प्राणा वै गयास्तत्प्राणाꣳस्तत्रे तद्यद्गयाꣳस्तत्रे तस्माद्गायत्री नाम स यामेवामूꣳसावित्रीमन्वाहैषैव सा स यस्मा अन्वाह तस्य प्राणाꣳस्त्रायते ॥४॥** ५

रोधार्था वीप्सा। यथाऽसौ सविता सर्वाधिपत्यलक्षणया श्रिया यशसा च ख्यात्या तपत्येवं हैव श्रिया यशसा च तपति योऽस्या एतदेवं तुरीयं दर्शतं पदं वेद ॥३॥

सैषा त्रिपदोक्ता या त्रैलोक्यत्रैविद्यप्राणलक्षणा गायत्र्येतस्मिंश्चतुर्थे तुरीये दर्शते पदे परोरजसि प्रतिष्ठिता। मूर्तामूर्तरसत्वादादित्यस्य। रसापाये हि वस्तु नीरसमप्रतिष्ठितं भवति। यथा काष्ठादि दग्धसारं तद्वत्। १० तथा मूर्तामूर्तात्मकं जगत्त्रिपदा गायत्र्यादित्ये प्रतिष्ठिता तद्रसत्वात्सह त्रिभिः पादैः। तद्वै तुरीयं पदं सत्ये प्रतिष्ठितम्। किं पुनस्तत्सत्यमित्युच्यते—चक्षुर्वै सत्यम्। कथं चक्षुः सत्यमित्याह—प्रसिद्धमेतच्चक्षुर्हि वै सत्यम्। कथं प्रसिद्धतेत्याह—तस्माद्यदिदानीमेव द्वौ विवदमानौ विरुद्धं वदमानावेयातामागच्छेयातामहमदर्शं दृष्टवानस्मीत्यन्य आहाहमश्रौषं त्वया दृष्टं न तथा तद्वस्त्विति तयोर्य एवं ब्रूयादहमद्राक्षमिति तस्मा एव श्रद्दध्याम न पुनर्यो ब्रूयादहमश्रौषमिति। श्रोतुर्मृषा श्रवणमपि संभवति न तु चक्षुषो मृषा दर्शनम्। तस्मान्नाश्रौषमित्युक्तवते श्रद्दध्याम। १५ तस्मात्सत्यप्रतिपत्तिहेतुत्वात्सत्यं चक्षुस्तस्मिन्सत्ये चक्षुषि सह त्रिभिरितरैः पादैस्तुरीयं पदं प्रतिष्ठितमित्यर्थः। उक्तं च स आदित्यः कस्मिन्प्रतिष्ठित इति चक्षुषीति।

तद्वै तुरीयपदाश्रयं सत्यं बले प्रतिष्ठितम्। किं पुनस्तद्बलमित्याह—प्राणो वै बलं तस्मिन्प्राणे बले प्रतिष्ठितं सत्यम्। तथा चोक्तं सूत्रे तदोतं च प्रोतं चेति। यस्माद्बले सत्यं प्रतिष्ठितं तस्मादाहुर्बलं सत्यादोगीय ओजीय ओजस्तरमित्यर्थः। लोकेऽपि यस्मिन्हि यदाश्रितं भवति तस्मादाश्रितादाश्रयस्य बलवत्तरत्वं प्रसिद्धम्। न हि २० दुर्बलं बलवतः क्वचिदाश्रयभूतं दृष्टम्। एवमुक्तन्यायेन उ एषा गायत्र्यध्यात्ममध्यात्मे प्राणे प्रतिष्ठिता। सैषा गायत्री प्राणः। अतो गायत्र्यां जगत्प्रतिष्ठितम्। यस्मिन्प्राणे सर्वे देवा एकं भवन्ति। सर्वं वेदाः कर्माणि फलं च सैवं गायत्री प्राणरूपा सती जगत आत्मा। सा हैषा गयांस्तत्रे त्रातवती। के पुनर्गयाः। प्राणा वागादयो वै गयाः।

तस्मादिति। चतुर्थपादज्ञानस्य फलवत्त्वं कथयति—यथेति ॥३॥

अभिधानाभिधेयात्मिकां गायत्रीं व्याख्यायाभिधानस्याभिधेयतन्त्रत्वमाह—सैषेति। आदित्ये प्रतिष्ठिता २५ मूर्तामूर्तात्मिका गायत्रीत्यत्र हेतुमाह—मूर्तेति। भवतु मूर्तामूर्तब्राह्मणानुसारेणाऽऽदित्यस्य तत्सारत्वं तथाऽपि कथं गायत्र्यास्तत्प्रतिष्ठितत्वं पृथगेव सा मूर्ताद्यात्मिका स्यात्स्यतीत्याशङ्क्याऽऽह—रसेति। तद्वदादित्यसंबन्धाभावे मूर्ताद्यात्मिका गायत्री स्यादप्रतिष्ठितेति शेषः। सारादृते स्वातन्त्र्येण मूर्तादिर्न स्थितिरिति स्थिते फलितमाह—तथेति। आदित्यस्य स्वातन्त्र्यं वारयति—तद्वा इति। सत्यशब्दस्यानृतविपरीतवाग्विषयत्वं शङ्काद्वारा वारयति—किं पुनरित्यादिना। चक्षुषः सत्यत्वे प्रमाणाभावं शङ्कित्वा दूषयति—कथमित्यादिना। श्रोतरि श्रद्धाभावे हेतुमाह— ३० श्रोतुरिति। द्रष्टुरपि मृषादर्शनं संभवतीत्याशङ्क्याऽऽह—न त्विति। क्वचित्कथंचित्संभवेऽपि श्रोत्रपेक्षया द्रष्टरि विश्वासो दृष्टो लोकस्येत्याह—तस्मान्नेति। विश्वासातिशयफलमाह—तस्मादिति। आदित्यस्य चक्षुषि प्रतिष्ठितत्वं पञ्चमेऽपि प्रतिपादितमित्याह—उक्तं चेति।

सत्यस्य स्वातन्त्र्यं प्रत्याह—तद्वा इति। सत्यस्य प्राणप्रतिष्ठितत्वं च पाञ्चमिकमित्याह—तथा चेति। सूत्रं प्राणो वायुः। तच्छब्देन सत्यशब्दितसर्वभूतग्रहणम्। सत्यं बले प्रतिष्ठितमित्यत्र लोकप्रसिद्धिं प्रमाणयति—तस्मादिति। ३५ तदेवोपपादयति—लोकेऽपीति। तदेव व्यतिरेकमुखेनाऽऽह—न हीति। एतेन गायत्र्याः सूत्रात्मत्वं सिद्धमित्याह—

ताँ हैतामेके सावित्रीमनुष्टुभमन्वाहुर्वागनुष्टुबेतद्वाचमनुब्रूम इति न तथा कुर्याद्गायत्रीमेव सावित्रीमनुब्रूयाद्यदि ह वा अप्येवंविद्बह्विव प्रतिगृह्णाति न हैव तद्गायत्र्या एकंचन पदं प्रति ॥५॥

स य इमाँस्त्रींल्लोकान्पूर्णान्प्रतिगृह्णीयात्सोऽस्या एतत्प्रथमं पदमाप्नुयादथ यावतीयं त्रयी विद्या यस्तावत्प्रतिगृह्णीयात्सोऽस्या एतद्द्वितीयं पदमाप्नुयादथ यावदिदं
५ प्राणि यस्तावत्प्रतिगृह्णीयात्सोऽस्या एतत्तृतीयं पदमाप्नुयादथास्या एतदेव तुरीयं दर्शतं पदं परोरजा य एष तपति नैव केनचनाऽऽप्यं कुत उ एतावत्प्रतिगृह्णीयात् ॥६॥

शब्दकरणात् । तांस्तत्रे सैषा गायत्री । तत्त्र यद्यस्माद्गयांस्तत्रे तस्माद्गायत्री नाम । गयत्राणाद्गायत्रीति प्रथिता । स आचार्य उपनीय माणवकमष्टवर्षं यामेवामूं गायत्रीं सावित्रीं सवितृदेवताकामन्वाह पच्छोऽर्धर्चशः समस्तां च । एषैव सा साक्षात्प्राणो जगत आत्मा माणवकाय समर्पितेहेदानीं व्याख्याता नान्या स आचार्यो यस्मै
१० माणवकायान्वाहानुवक्ति तस्य माणवकस्य गयान्प्राणांस्त्रायते नरकादिपतनात् ॥४॥

तामेतां सावित्रीं हैके शाखिनोऽनुष्टुभमनुष्टुप्छन्दस्कामन्वाहुरुपनीताय । तदभिप्रायमाह—वागनुष्टुप् । वाक्च शरीरे सरस्वती तामेव हि वाचं सरस्वतीं माणवकायानुब्रूम इत्येतद्वदन्तः । न तथा कुर्यान्न तथा विद्याद्यत्त आहुर्मृषैव तत् । किं तर्हि गायत्रीमेव सावित्रीमनुब्रूयात् । कस्मात् । यस्मात्प्राणो गायत्रीत्युक्तम् । प्राण उक्ते वाक्च सरस्वती चान्ये च प्राणाः सर्वं माणवकाय समर्पितं भवति । किंचेदं प्रासङ्गिकमुक्त्वा गायत्रीविदं
१५ स्तौति—यदि ह वा अप्येवंविद्बह्विव न हि तस्य सर्वात्मनो बहु नामास्ति किंचित्सर्वात्मकत्वाद्विदुषः प्रतिगृह्णाति न हैव तत्प्रतिग्रहजातं गायत्र्या एकंचनैकमपि पदं प्रति पर्याप्तम् ॥५॥

स य इमांस्त्रीन्स यो गायत्रीविदिमान्भूरादींस्त्रीन्गोऽश्वादिधनपूर्णाल्लोकान्प्रतिगृह्णीयात्स प्रतिग्रहोऽस्या गायत्र्या एतत्प्रथमं पदं यद्व्याख्यातमाप्नुयात्प्रथमपदविज्ञानफलं तेन भुक्तं स्यान्न त्वधिकदोषोत्पादकः स प्रतिग्रहः । अथ पुनर्यावतीयं त्रयी विद्या यस्तावत्प्रतिगृह्णीयात्सोऽस्या एतद्द्वितीयं पदमाप्नुयात् । द्वितीयपदविज्ञानफलं तेन
२० भुक्तं स्यात् । तथा यावदिदं प्राणि यस्तावत्प्रतिगृह्णीयात्सोऽस्या एतत्तृतीयं पदमाप्नुयात् । तेन तृतीयपदविज्ञानफलं भुक्तं स्यात् । कल्पयित्वेदमुच्यते । पादत्रयसममपि यदि कश्चित्प्रतिगृह्णीयात्तत्पादत्रयविज्ञानफलस्यैव क्षयकारणं न त्वन्यस्य दोषस्य कर्तृत्वे क्षमम् । न चैवं दाता प्रतिग्रहीता वा । गायत्रीविज्ञानस्तुतये कल्प्यते । दाता प्रतिग्रहीता

एवमिति । तस्मिन्नर्थे वाक्यं योजयति–सैषेति । गायत्र्याः प्राणत्वे किं सिध्यति तदाह—अत इति । तदेव स्पष्टयति—यस्मिन्नित्यादिना । गायत्रीनामनिर्वचनेन तस्या जगज्जीवनहेतुत्वमाह—सा हैषेति । प्रयोक्तृशरीरं सप्तम्यर्थः ।
२५ गायन्तीति गया वागुपलक्षिताश्चक्षुरादयः । ब्राह्मण्यमूलत्वेन स्तुत्यर्थं गायत्र्या एव सावित्रीत्वमाह—स आचार्य इति । पच्छ' पादशः । सावित्र्या गायत्रीत्व साधयति—स इति । अतः सावित्री गायत्रीति शेषः ॥४॥

मतान्तरमुद्भावयति—तामेतामिति । 'तत्सवितुर्वृणीमहे वयं देवस्य भोजनम् । श्रेष्ठं सर्वधातमं तुरं भगस्य धीमहि' इत्यनुष्टुभं सावित्रीमाहुः । सवितृदेवताकत्वादित्यर्थः । उपनीतस्य माणवकस्य प्रथमतः सरस्वत्या वर्णोत्पि'काया सापेक्षत्वं द्योतयितुं हि शब्द. । दूषयति—नेत्यादिना । नन्वपेक्षितवागात्मकसरस्वतीसमर्पण विना गायत्री-
३० समर्पणमयुक्तमिति शङ्कित्वा परिहरति—कस्मादित्यादिना । यदि हेत्यादेरुत्तरस्य ग्रन्थस्याव्यवहितपूर्वग्रन्थासंगतिमाशङ्क्याऽऽह—किंचेदमिति । सावित्र्या गायत्रीत्वमिति यावत् । इवशब्दार्थं दर्शयति—न हीति । यद्यपि बहु प्रतिगृह्णाति विद्वानिति पूर्वेण संबन्धः । तथाऽपि न तेन प्रतिग्रहजातेनैकस्यापि गायत्रीपदस्य विज्ञानफल भुक्तं स्यात् । दूरतस्तु दोषाधायकत्वं तस्येत्यर्थः ॥५॥

गायत्रीविदः प्रतिगृह्णतो दोषाभावं सामान्येनोक्त्वा विशेषतस्तदभावमाह—स य इति । यथा त्रैलोक्या-
३५ वच्छिन्नस्य त्रैविद्यावच्छिन्नस्य चार्थस्य प्रतिग्रहेण पादद्वयविज्ञानफलमेव भुक्तं नाधिक दूषणं तथेति यावत् । प्रतिग्रहीता दाता वा नैवंविधः संभाव्यते किंतु स्तुत्यर्थं श्रुत्यैतत्कल्पितमित्याह—कल्पयित्वेति । उक्तमेव संगृह्णाति—पादत्रयेति । कल्पयित्वेदमुच्यत इति किमिति कल्प्यते मुख्यमेवैतत्किं न स्यादित्याशङ्क्याऽऽह–न चेति । कल्पनाऽपि तर्हि किमर्थेत्याशङ्क्याऽऽह—गायत्रीति । अङ्गीकृत्योत्तरवाक्यमुत्थापयति—दातेति । तदेवाऽऽकाङ्क्षापूर्वकमाह—कस्मादिति । वागात्मकपदत्रयविज्ञानफलभोगोक्त्यानन्तर्यमथशब्दार्थः । नैव प्राप्यं प्रतिग्रहेण केनचिदपि नैव भुक्तं स्यादित्यर्थः ।

**तस्या उपस्थानं गायत्र्यस्येकपदी द्विपदी त्रिपदी चतुष्पद्यपदसि न हि पद्यसे। नमस्ते तुरीयाय दर्शताय पदाय परोरजसेऽसावदो मा प्रापदिति यं द्विष्यादसावस्मै कामो मा समृद्धीति वा न हैवास्मै स कामः समृध्यते यस्मा एवमुपतिष्ठतेऽहमदः प्रापमिति वा ॥७॥ एतद्ध वै तज्जनको वैदेहो बुडिलमाश्वतराश्विमुवाच यन्नु हो तद्गायत्रीविदब्रूथा अथ कथं हस्तीभूतो वहसीति मुखं ह्यस्याः सम्राण्न विदांचकारेति होवाच तस्या अग्निरेव मुखं यदि ह वा अपि बह्विवाग्नावभ्यादधति सर्वमेव तत्संदहत्येवं हैवैवंविद्यद्यपि बह्विव पापं कुरुते सर्वमेव तत्संप्साय शुद्धः पूतोऽजरोऽमृतः संभवति ॥८॥** ५

**इति बृहदारण्यकोपनिषदि पञ्चमाध्यायस्य चतुर्दशं ब्राह्मणम् ॥१४॥**

च यद्यप्येवं संभाव्यते नासौ प्रतिग्रहोऽपराधक्षमः। कस्माद्यतोऽभ्यधिकमपि पुरुषार्थविज्ञानमवशिष्टमेव चतुर्थपादविषयं गायत्र्यास्तद्दर्शयति। अथास्या एतदेव तुरीयं दर्शतं पदं परोरजा य एष तपति। यच्चैतन्नैव केनचन १० केनचिदपि प्रतिग्रहेणाऽऽप्यं नैव प्राप्यमित्यर्थः। यथा पूर्वोक्तानि त्रीणि पदानि। एतान्यपि नैवाऽऽप्यानि केनचित्कल्पयित्वैवमुक्तं परमार्थतः कुत उ एतावत्प्रतिगृह्णीयात्त्रैलोक्यादिसमम्। तस्माद्गायत्र्येवंप्रकारोपास्येत्यर्थः ॥६॥

तस्या उपस्थानं तस्या गायत्र्या उपस्थानमुपेत्य स्थानं नमस्करणमनेन मन्त्रेण। कोऽसौ मन्त्र इत्याह—हे गायत्र्यसि भवसि त्रैलोक्यपादेनैकपदी त्रयीविद्यारूपेण द्वितीयेन द्विपदी। प्राणादिना तृतीयेन त्रिपद्यसि। १५ चतुर्थेन तुरीयेण चतुष्पद्यसि। एवं चतुर्भिः पादैरुपासकैः पद्यसे ज्ञायसेऽतः परं परेण निरुपाधिकेन स्वेनाऽऽत्मनाऽपदसि। अविद्यमानं पदं यस्यास्तव येन पद्यसे सा त्वमपदसि यस्मान्नहि पद्यसे नेति नेत्यात्मत्वात्। अतो व्यवहारविषयाय नमस्ते तुरीयाय दर्शताय पदाय पोरजसे। असौ शत्रुः पाप्मा त्वत्प्राप्तिविघ्नकरोऽदस्तदात्मनः कार्यं यत्त्वत्प्राप्तिविघ्नकर्तृत्वं मा प्रापन्मैव प्राप्नोतु। इतिशब्दो मन्त्रपरिसमाप्त्यर्थः। यं द्विष्यात्तं प्रति द्वेषं कुर्यात्स्वयं विद्वांस्तं प्रत्यनेनोपस्थानमसौ शत्रुरमुकनामेति नाम गृह्णीयादस्मै यज्ञदत्तायाभिप्रेतः कामो मा समृद्धि समृद्धिं मा २० प्राप्नोत्विति वोपतिष्ठते। न हैवास्मै देवदत्ताय स कामः समृध्यते। कस्मै। यस्मा एवमुपतिष्ठते। अहमदो देवदत्ताभिप्रेतं प्रापमिति वोपतिष्ठते। असावदो मा प्रापदित्यादित्रयाणां मन्त्रपदानां यथाकामं विकल्पः ॥७॥

गायत्र्या मुखविधानायार्थवाद उच्यते—एतद्ध किल वै स्मर्यते। तत्त्र गायत्रीविज्ञानविषये जनको वैदेहो बुडिलो नामतोऽश्वतराश्वस्यापत्यमाश्वतराश्विस्तं किलोक्तवान्। यन्नु इति वितर्के हो अहो इत्येतत्त्वद्यस्त्वं गायत्रीविदब्रूथा गायत्रीविदस्मीति यदब्रूथाः किमिदं तस्य वचसोऽननुरूपम्। अथ कथं यदि गायत्रीवित्प्रति- २५ ग्रहदोषेण हस्तीभूतो वहसीति। स प्रत्याह राज्ञा स्मारितो मुखं गायत्र्या हि यस्मादस्या हे सम्राण्न विदांचकार न विज्ञातवानस्मीति होवाच। एकाङ्गविकलत्वाद्गायत्रीविज्ञानं ममाफलं जातम्। शृणु तर्हि तस्या गायत्र्या

तत्रैव वैधर्म्यदृष्टान्तमाह—यथेति। तानि प्रतिग्रहेण यथाऽऽप्यानि न तथैतदाप्यमित्यर्थः। कुत इत्यादिवाक्यस्य तात्पर्यमाह—एतान्यपीति। गायत्रीविदः स्तुतिरुक्ता तत्फलमाह—तस्मादिति। एवंप्रकारा पादचतुष्टयरूपा सर्वात्मिकेत्यर्थ. ॥६॥ ३०

प्रकृतमुपासनमेव मन्त्रेण संगृह्णाति—तस्या इत्यादिना। ध्येयं रूपमुक्त्वा ज्ञेयं गायत्र्या रूपमुपन्यस्यति—अतः परमिति। चतुर्थस्य पादस्य पादत्रयापेक्षया प्राधान्यमभिप्रेत्याऽऽह—अत इति। यथोक्तनमस्कारस्य प्रयोजनमाह—असाविति। द्विविधमुपस्थानमाभिचारिकमाभ्युदयिकं च तत्राऽऽद्यं द्वेधा व्युत्पादयति—यं द्विष्यादिति। नाम गृह्णीयात्तदीयं नाम गृहीत्वा च तदभिप्रेतं मा प्रापदित्यनेनोपस्थानमिति संबन्ध.। आभ्युदयिकमुपस्थानं दर्शयति—अहमिति। कीदृगुपस्थानमत्र मन्त्रपदेन कर्तव्यमित्याशङ्क्य यथारुचि विकल्पं दर्शयति—असाविति ॥७॥ ३५

किं तद्गायत्रीविज्ञानप्रतिकूलमुपलभ्यते तदाह—अथेति। पूर्वापरविरोधावद्योतकोऽथशब्दः। तथाऽपि गायत्रीविज्ञानस्य फलवत्त्वे सति प्रतिकूलमिदं हस्तीभूतस्य तव मा प्रति वहनमित्याशङ्क्याऽऽह—एकाङ्गेति। राजा

अथ पञ्चमाध्यायस्य पञ्चदशं ब्राह्मणम्

हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् । तत्त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये । पूषन्नेकर्षे यम सूर्य प्राजापत्य व्यूह रश्मीन् । समूह तेजो यत्ते रूपं कल्याणतमं तत्ते पश्यामि । योऽसावसौ पुरुषः सोऽहमस्मि । वायुरनिलममृतमथेदं भस्मान्तँ शरीरम् ।
५ ॐ क्रतो स्मर कृतँ स्मर क्रतो स्मर कृतँ स्मर । अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम ॥१॥

इति बृहदारण्यकोपनिषदि पञ्चमाध्यायस्य पञ्चदशं ब्राह्मणम् ॥१५॥

इति बृहदारण्यकोपनिषदि पञ्चमोऽध्यायः ॥५॥

बृहदारण्यकक्रमेण सप्तमोऽध्यायः ॥७॥

१० अग्निरेव मुखम् । यदि ह वा अपि बह्विवेन्धनमग्नावभ्यादधति लौकिकाः सर्वमेव तत्संदहत्येवेन्धनमग्निरेवं हैवैवंविद्गायत्र्या अग्निमुखमित्येवं वेत्तीत्येवंवित्स्यात्स्वयं गायत्र्यात्माऽग्निमुखः सन् । यद्यपि बह्विव पापं कुरुते प्रतिग्रहादिदोषं तत्सर्वं पापजातं संप्साय भक्षयित्वा शुद्धोऽग्निवत्पूतश्च तस्मात्प्रतिग्रहदोषाद्गायत्र्यात्माऽजरोऽमृतश्च संभवति ॥८॥

इति बृहदारण्यकोपनिषद्भाष्ये पंचमाध्यायस्य चतुर्दशं ब्राह्मणम् ॥१४॥

१५ यो ज्ञानकर्मसमुच्चयकारी सोऽन्तकाल आदित्यं प्रार्थयति । अस्ति च प्रसङ्गो गायत्र्यास्तुरीयः पादो हि सः । तदुपस्थानं प्रकृतमतः स एव प्रार्थ्यते । हिरण्मयेन ज्योतिर्मयेन पात्रेण यथा पात्रेणेष्टं वस्त्वपिधीयत एवमिदं सत्याख्यं ब्रह्म ज्योतिर्मयेन मण्डलेनापिहितमिवासमाहितचेतसामदृश्यत्वात्तदुच्यते । सत्यस्यापिहितं मुखं मुख्यं स्वरूपं तदपिधानं पात्रमपिधानमिव दर्शनप्रतिबन्धकारणं तत्त्वं हे पूषञ्जगतः पोषणात्पूषा सविताऽपावृण्वपावृतं कुरु दर्शनप्रतिबन्धकारणमपनयेत्यर्थः । सत्यधर्माय सत्यं धर्मोऽस्य मम सोऽहं सत्यधर्मा तस्मै त्वदात्मभूताये-
२० त्यर्थः । दृष्टये दर्शनाय । पूषन्नित्यादीनि नामान्यामन्त्रणार्थानि सवितुः । एकर्ष एकश्चासावृषिश्चैकर्षिर्दर्शनादृषिः । स हि सर्वस्य जगत आत्मा चक्षुश्च सन्सर्वं पश्यत्येको वा गच्छतीत्येकर्षिः "सूर्य एकाकी चरति" इति मन्त्रवर्णात् । यम सर्वं हि जगतः संयमनं त्वत्कृतम् । सूर्य सुष्ठु वीरयते रसान्रश्मीन्प्राणान्धियो वा जगत इति ।

प्राजापत्य प्रजापतेरीश्वरस्यापत्यं हिरण्यगर्भस्य वा हे प्राजापत्य व्यूह विगमय रश्मीन् । समूह संक्षिपाऽऽत्मनस्तेजो येनाहं शक्नुयां द्रष्टुम् । तेजसा ह्यपहतदृष्टिर्न शक्नुयां त्वत्स्वरूपमञ्जसा द्रष्टुम् । विद्योतन इव रूपाणा-
२५ बूते—श्रृणिवति । मुखविज्ञानस्य दृष्टान्तावष्टम्भेन फलमाचष्टे—यदीत्यादिना । इवशब्दोऽवधारणार्थ. । पापसंस्पर्शराहित्यं शुद्धिस्तत्फलासंस्पर्शस्तु पूततेति भेदः । गायत्रीज्ञानस्य क्रममुक्तिफलत्वं दर्शयति—गायत्र्यात्मेति ॥८॥

इति बृहदारण्यकोपनिषद्भाष्यटीकायां पंचमाध्यायस्य चतुर्दशं ब्राह्मणम् ॥१४॥

ब्राह्मणान्तरस्य तात्पर्यमाह—यो ज्ञानकर्मेति । आदित्यस्याप्रस्तुतत्वात्कथं तत्प्रार्थनेत्याशङ्क्याऽऽह—अस्ति चेति । तथाऽपि कथमादित्यस्य प्रसङ्गस्तत्राऽऽह—तदुपस्थानमिति । नमस्ते तुरीयायेति हि दर्शितमित्यर्थः । आदि-
३० त्यस्य प्रसङ्गे सति फलितमाह—अत इति । समाहितचेतसा प्रयततां दृश्यत्वान्नापिहितमेव किंतु पिहितमिवेत्यत्र हेतुमाह—असमाहितेति । जगतः पोषणाद्धर्मंहिमवृष्ट्यादिदानेनेतिशेषः । अपावरणकरणमेव विवृणोति—दर्शनेति । सत्यं परमार्थस्वरूपं ब्रह्म धर्मस्वभाव इति यावत् । ननु दर्शनार्थं तत्प्रतिबन्धकनिवृत्तौ पूषणि नियुक्ते किमित्यन्ये सबोध्य नियुज्यन्ते तत्राऽऽह—पूषन्नित्यादीनीति । दर्शनादृषिरित्युक्तं विशदयति—स हीति । 'सूर्य आत्मा जगतस्तस्थुषश्च' इति मन्त्रवर्णमाश्रित्योक्तम्—जगत आत्मेति । 'चक्षुर्मित्रस्य वरुणस्याग्नेः' इत्येतदाश्रित्याऽऽह—चक्षुश्चेति ।
३५ स्वाभाविका रश्मयो न निगमयितुं शक्या इत्याशङ्क्याऽऽह—समूहेति । मदीयतेजः सक्षेपं विनाऽपि ते मत्स्वरूपदर्शनं स्यादित्याशङ्क्याऽऽह—तेजसा हीति । विद्योतनं विद्युत्प्रकाशस्तस्मिन्सति रूपाणा स्वरूपमञ्जसा चक्षुषा न

१. विद्योतन इवेति—यथा विद्युत् रूपं प्रकाश्य तिरोधत्ते तद्वत् पाप विगमयतीत्यर्थ. ।

मत उपसंहर तेजः। यत्ते तव रूपं सर्वकल्याणानामतिशयेन कल्याणं कल्याणतमं तत्ते पश्यामि। पश्यामो वयं वचनव्यत्ययेन। योऽसौ भूर्भुवःस्वर्व्याहृत्यवयवः पुरुषः पुरुषाकृतित्वात्पुरुषः सोऽहमस्मि भवामि। अहरहमिति चोपनिषद उक्तत्वादादित्यचाक्षुषयोस्तदेवेदं परामृश्यते सोऽहमस्म्यमृतमिति संबन्धः। ममामृतस्य सत्यस्य शरीरपाते शरीरस्थो यः प्राणो वायुः सोऽनिलं बाह्यं वायुमेव प्रतिगच्छतु। तथाऽन्या देवताः स्वां स्वां प्रकृतिं गच्छन्तु। अथेदमपि भस्मान्तं सत्पृथिवीं यातु शरीरम्। ५

अथेदानीमात्मनः संकल्पभूतां मनसि व्यवस्थितामग्निदेवतां प्रार्थयते—ॐ क्रतो। ॐमिति क्रतो इति च संबोधनार्थावेव। ॐकारप्रतीकत्वादोम्। मनोमयत्वाच्च क्रतुः। हे ॐ हे क्रतो स्मर स्मर्तव्यमन्तकाले हि त्वत्स्मरणवशादिष्टा गतिः प्राप्यतेऽतः प्रार्थ्यते यन्मया कृतं तत्स्मर पुनरुक्तिरादरार्था। किंच हेऽग्ने नय प्रापय सुपथा शोभनेन मार्गेण राये धनाय कर्मफलप्राप्तय इत्यर्थः। न दक्षिणेन कृष्णेन पुनरावृत्तियुक्तेन किं तर्हि शुक्लेनैव सुपथाऽस्मान्विश्वानि सर्वाणि हे देव वयुनानि प्रज्ञानानि सर्वप्राणिनां विद्वान्। किंच युयोध्यपनय वियोजयास्मदस्मत्तो जुहुराणं कुटिलमेनः पापं पापजातं सर्वम्। तेन पापेन वियुक्ता वयमेष्याम उत्तरेण पथा त्वत्प्रसादात्। किंतु वयं तुभ्यं परिचर्या कर्तुं न शक्नुमो भूयिष्ठां बहुतमां ते तुभ्यं नमउक्तिं नमस्कारवचनं विधेम नमस्कारोक्त्या परिचरेमेत्यर्थः। अन्यत्कर्तुमशक्ताः सन्त इति ॥१॥ १०

इति श्रीबृहदारण्यकोपनिषद्भाष्ये पञ्चमाध्यायस्य पञ्चदशं ब्राह्मणम् ॥१५॥

इति श्रीमद्गोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्यस्य श्रीशंकरभगवतः कृतौ बृहदारण्यकोपनिषद्भाष्ये पञ्चमोऽध्यायः ॥५॥ १५

शक्यं द्रष्टुं तस्य चक्षुर्मोषित्वात्तथेत्याह—विद्योतन इवेति। तेजः संक्षेपस्य प्रयोजनमाह—यदिति। किंच नाहं त्वां भृत्यवद्याचेऽभेदेन ध्यातत्वादित्याह—योऽसाविति। व्याहृतिशरीरे कथमहमिति प्रयोगोपपत्तिरित्याशङ्क्याऽऽह—अहरिति। तदेवेदमित्यहंरूपमुच्यते। ननु तव शरीरपातेऽपि नामृतत्वमाध्यात्मिकवाय्वादिप्रतिबन्धादत आह—ममेति। वायुग्रहणस्योपलक्षणत्वं विवक्षित्वाऽऽह—तथेति। देहस्थदेवतानामप्रतिबन्धकत्वेऽपि देहस्यैव सूक्ष्मतां गतस्य प्रतिबन्धकत्वान्न तवामृतत्वमित्याशङ्क्याऽऽह—अथेति। २०

मन्त्रान्तरमवतार्य व्याकरोति—अथेदानीमित्यादिना। अवतीत्योमीश्वरः सर्वस्य रक्षकस्तस्य जाठराग्निप्रतीकत्वेन ध्यातत्वादग्निशब्देन निर्देशः। एवमग्निदेवतां संबोध्य नियुङ्क्ते—स्मरेति। इष्टां गतिं जिगमिषता किमिति स्मरणे देवता नियुज्यते तत्राऽऽह—स्मरणेति। प्रार्थनान्तरं समुच्चिनोति—किंचेति। उक्तमेव व्यनक्ति—नेत्यादिना। अस्मान्नयेति पूर्वेण संबन्धः। प्रज्ञानग्रहणं कर्मादीनामुपलक्षणम्। प्रार्थनान्तरं दर्शयति—किंचेति। पापवियोजनफलमाह—तेनेति। भवद्भिराराधितो भवतां यथोक्तं फलं साधयिष्यामीत्याशङ्क्याऽऽह—किं त्विति। बहुतमत्वं भक्तिश्रद्धातिरेकयुक्तत्वम्। यागादिनाऽपि परिचरणं क्रियतामित्याशङ्क्याऽऽह—अन्यदिति। संततनमस्कारोक्त्या परिचरेमेति पूर्वेण संबन्धः। अशक्तिश्च मुमूर्षावशादिति द्रष्टव्यम्। इतिशब्दोऽध्यायसमाप्त्यर्थः ॥१॥ २५

इति बृहदारण्यकोपनिषद्भाष्यटीकायां पञ्चमाध्यायस्य पञ्चदशं ब्राह्मणम् ॥१५॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दभगवत्पूज्यपादशिष्यश्रीमद्भगवदानन्दज्ञानविरचितायां श्रीमद्बृहदारण्यकोपनिषद्भाष्यटीकायां पञ्चमोऽध्यायः ॥५॥ ३०

१. पश्याम इति। उत्तरत्र सुपथाराये अस्मान् इति बहुवचनदर्शनात्।

# अथ षष्ठोऽध्यायः

## अथ षष्ठाध्यायस्य प्रथमं ब्राह्मणम्

**ॐ यो ह वै ज्येष्ठं च श्रेष्ठं च वेद ज्येष्ठश्च श्रेष्ठश्च स्वानां भवति प्राणो वै ज्येष्ठश्च श्रेष्ठश्च ज्येष्ठश्च श्रेष्ठश्च स्वानां भवत्यपि च येषां बुभूषति य एवं वेद ॥१॥**

५ ॐ प्राणो गायत्रीत्युक्तम् । कस्मात्पुनः कारणात्प्राणभावो गायत्र्या न पुनर्वागादिभाव इति यस्माज्ज्येष्ठश्च श्रेष्ठश्च प्राणो न वागादयो ज्यैष्ठ्यश्रैष्ठ्यभाजः । कथं ज्येष्ठत्वं श्रेष्ठत्वं च प्राणस्येति तन्निर्दिधारयिषयेदमारभ्यते । अथवोक्थयजुःसामक्षत्त्रादिभावैः प्राणस्यैवोपासनमभिहितं सत्स्वप्यन्येषु चक्षुरादिषु । तत्र हेतुमात्रमिहाऽऽनन्तर्येण संबध्यते । न पुनः पूर्वशेषता । विवक्षितं तु खिलत्वादस्य काण्डस्य पूर्वत्र यदनुक्तं विशिष्टफलं प्राणविषयमुपासनं तद्वक्तव्यमिति ।

१० यः कश्चिद्ध वा इत्यवधारणार्थं । यो ज्येष्ठश्रेष्ठगुणं वक्ष्यमाणं यो वेदासौ भवत्येव ज्येष्ठश्च श्रेष्ठश्च । एवं फलेन प्रलोभितः सन्प्रश्नायाभिमुखीभूतस्तस्मै चाऽऽह–प्राणो वै ज्येष्ठश्च श्रेष्ठश्चेति । कथं पुनरवगम्यते प्राणो ज्येष्ठश्च श्रेष्ठश्चेति । यस्मान्निषेककाल एव शुक्रशोणितसंबन्धः प्राणादिकलापस्याविशिष्टः । तथाऽपि नाप्राणं शुक्रं विरोहतीति प्रथमो वृत्तिलाभः प्राणस्य चक्षुरादिभ्यः । अतः ज्येष्ठो वयसा प्राणः । निषेककालादारभ्य गर्भं पुष्यति प्राणः । प्राणे हि लब्धवृत्तौ पश्चाच्चक्षुरादीनां वृत्तिलाभः । अतो युक्तं प्राणस्य ज्येष्ठत्वं चक्षुरादिषु । भवति तु कश्चित्कुले ज्येष्ठो १५ गुणहीनत्वात्तु न श्रेष्ठः । मध्यमः कनिष्ठो वा गुणाढ्यत्वाद्भवेच्छ्रेष्ठो न ज्येष्ठः । न तु तथेहेत्याह—प्राण एव तु ज्येष्ठश्च श्रेष्ठश्च । कथं पुनः श्रैष्ठ्यमवगम्यते प्राणस्य तदिह संवादेन दर्शयिष्यामः । सर्वथाऽपि तु प्राणं ज्येष्ठश्रेष्ठगुणं यो वेदोपास्ते स स्वानां ज्ञातीनां ज्येष्ठश्च श्रेष्ठश्च भवति । ज्येष्ठश्रेष्ठगुणोपासनसामर्थ्यात्स्वव्यतिरेकेणापि च येषां मध्ये ज्येष्ठश्च श्रेष्ठश्च भविष्यामीति बुभूषति भवितुमिच्छति तेषामपि ज्येष्ठश्रेष्ठप्राणदर्शी ज्येष्ठश्च श्रेष्ठश्च भवति । ननु वयोनिमित्तं ज्येष्ठत्वं तदिच्छातः कथं भवतीत्युच्यते । नैष दोषः । प्राणवद्वृत्तिलाभस्यैव ज्येष्ठत्वस्य २० विवक्षितत्वात् ॥१॥

ॐकारो दमादित्रयं ब्रह्माब्रह्मोपासनानि तत्फलं तदर्था गतिरादित्याद्युपस्थानमित्येषोऽर्थः सप्तमे निवृत्तः । संप्रति प्राधान्येनाब्रह्मोपासनं सफलं श्रीमन्थादिकर्म च वक्तव्यमित्यष्टममध्यायमारभमाणो ब्राह्मणसंगतिमाह—प्राण इति । तस्मात्प्राणो गायत्रीति युक्तमुक्तमिति शेषः । प्राणस्य ज्येष्ठत्वादि नाद्यापि निर्धारितमिति शङ्कित्वा परिहरति–कथमित्यादिना । प्रकारान्तरेण पूर्वोत्तरग्रन्थसंगतिमाह—अथवेति । आदिशब्दादन्नवैशिष्ट्यादिनिर्देशः । तत्रेति प्राणस्यैव २५ विशिष्टगुणकस्योपास्यत्वोक्तिः । हेतुर्ज्येष्ठत्वादिस्तन्मात्रमिहानन्तरग्रन्थे कथ्यत इति शेषः । तदेवं पूर्वग्रन्थस्य हेतुमत्त्वादुत्तरस्य च हेतुत्वादानन्तर्येण पौर्वापर्येण पूर्वग्रन्थेन सहोत्तरग्रन्थजातं संबध्यत इति फलितमाह—आनन्तर्येणेति । वक्ष्यमाणप्राणोपासनस्य पूर्वोक्तोक्थाद्युपास्तिशेषत्वमाशङ्क्य गुणभेदात्फलभेदाच्च नैवमित्यभिप्रेत्याऽऽह—न पुनरिति । किमिति प्राणोपासनमिह स्वतन्त्रमुपदिश्यते तत्राऽऽह—खिलत्वादिति । इतिशब्दो ब्राह्मणारम्भोपसंहारार्थः ।

एवं ब्राह्मणारम्भं प्रतिपाद्याक्षराणि व्याचष्टे—यः कश्चिदित्यादिना । यच्छब्दस्य पुनरुपादानमन्वयार्थम् । ३० निपातयोरर्थमवधारणमेव प्रागुक्तं प्रकटयति—भवत्येवेति । प्रश्नाय कोऽसौ ज्येष्ठश्च श्रेष्ठश्चेति प्रश्नस्तदर्थमिति यावत् । प्राणस्य ज्येष्ठत्वादिकमाक्षिपति—कथमिति । तत्र हेतुमाह—यस्मादिति । तस्माज्ज्येष्ठत्वादिकं तुल्यमेवेति शेषः । संबन्धाविशेषमङ्गीकृत्य ज्येष्ठत्वं प्राणस्य साधयति—तथाऽपीति । उक्तमेव समर्थयते—निषेककालादिति । तत्रापि विप्रतिपन्नं प्रत्याह—प्राणे हीति । ज्येष्ठत्वेनैव श्रेष्ठत्वे सिद्धे किमिति पुनरुक्तिरित्याशङ्क्याऽऽह—भवति त्विति । प्राणश्रेष्ठत्वे ज्येष्ठत्वे सत्यपि श्रेष्ठत्वाभावमुक्त्वा तस्मिन्सत्यपि ज्येष्ठत्वाभावमाह—मध्यम इति । इहेति प्राणोक्तिः । आरोपेणानारोपेण ३५ प्रमाणाभावमाशङ्क्य प्रत्याह—कथमित्यादिना । पूर्वोक्तमुपास्तिफलमुपसंहरति—सर्वथाऽपीति । इच्छातो वेत्यर्थः । ज्येष्ठस्य विद्याफलत्वमाक्षिपति—नन्विति । तस्य विद्याफलत्वं साधयति—उच्यत इति । ज्यैष्ठ्यं दुःसाध्यमिति दोषस्यासत्त्वमाह—नेति । तत्र हेतुमाह—प्राणवदिति । यथा प्राणकृताशनादिप्रयुक्तचक्षुरादीनां ज्येष्ठत्वं न वयोनिबन्धनमित्यर्थः ॥१॥
वृत्तिलाभस्तथा प्राणोपासकादीनां जीवनमन्येषां स्वानां च भवतीति प्राणदर्शिनो

यो ह वै वसिष्ठां वेद वसिष्ठः स्वानां भवति वाग्वै वसिष्ठा
वसिष्ठः स्वानां भवत्यपि च येषां बुभूषति य एवं वेद ॥२॥
यो ह वै प्रतिष्ठां वेद प्रतितिष्ठति समे प्रतितिष्ठति दुर्गे चक्षुर्वै प्रतिष्ठा चक्षुषा
हि समे च दुर्गे च प्रतितिष्ठति प्रतितिष्ठति समे प्रतितिष्ठति दुर्गे य एवं वेद ॥३॥
यो ह वै संपदं वेद सँ हास्मै पद्यते यं कामं कामयते श्रोत्रं वै संपच्छ्रोत्रे ५
हीमे सर्वे वेदा अभिसंपन्नाः सँ हास्मै पद्यते यं कामं कामयते य एवं वेद ॥४॥
यो ह वा आयतनं वेदायतनँ स्वानां भवत्यायतनं जनानां मनो
वा आयतनमायतनँ स्वानां भवत्यायतनं जनानां य एवं वेद ॥५॥

यो ह वै वसिष्ठां वेद वसिष्ठः स्वानां भवति। तद्दर्शनानुरूपेण फलम्। येषां च ज्ञातिव्यतिरेकेण वसिष्ठो भवितुमिच्छति तेषां च वसिष्ठो भवति। उच्यतां तर्हि काऽसौ वसिष्ठेति। वाग्वै वसिष्ठा। वासयत्यतिशयेन १० वस्ते वेति वसिष्ठा। वाग्मिनो हि धनवन्तो वसन्त्यतिशयेन। आच्छादनार्थस्य वा वसेर्वसिष्ठा। अभिभवन्ति हि वाचा वाग्मिनोऽन्यान्। तेन वसिष्ठगुणवत्परिज्ञानाद्वसिष्ठगुणो भवतीति दर्शनानुरूपं फलम् ॥२॥

यो ह वै प्रतिष्ठां वेद प्रतितिष्ठत्यनयेति प्रतिष्ठा तां प्रतिष्ठां प्रतिष्ठागुणवतीं यो वेद तस्यैतत्फलं प्रतितिष्ठति समे देशे काले च। तथा दुर्गे विषमे च दुर्गमने च देशे दुर्भिक्षादौ वा काले विषमे। यद्येवमुच्यतां काऽसौ प्रतिष्ठा। चक्षुर्वै प्रतिष्ठा। कथं चक्षुषः प्रतिष्ठात्वमित्याह—चक्षुषा हि समे च दुर्गे दृष्ट्वा प्रतितिष्ठति। अतोऽनुरूपं फलं १५ प्रतितिष्ठति समे प्रतितिष्ठति दुर्गे य एवं वेदेति ॥३॥

यो ह वै सम्पदं वेद सम्पद्गुणयुक्तं यो वेद तस्यैतत्फलमस्मै विदुषे संपद्यते ह। किम्। यं कामं कामयते स कामः। किं पुनः संपद्गुणकम्। श्रोत्रं वै संपत्। कथं पुनः श्रोत्रस्य संपद्गुणत्वमिति। उच्यते—श्रोत्रे सति हि यस्मात्सर्वे वेदा अभिसम्पन्नाः श्रोत्रेन्द्रियवतोऽध्येयत्वात्। वेदविहितकर्मायत्ताश्च कामास्तस्माच्छ्रोत्रं संपत्। अतो विज्ञानानुरूपं फलम्। सं हास्मै पद्यते यं कामं कामयते य एवं वेद ॥४॥ २०

यो ह वा आयतनं वेद। आयतनमाश्रयस्तद्यो वेदाऽऽयतनं स्वानां भवत्यायतनं जनानामन्येषामपि। किं पुनस्तदायतनमिति। उच्यते—मनो वा आयतनमाश्रय इन्द्रियाणां विषयाणां च। मनआश्रिता हि विषया आत्मनो भोग्यत्वं प्रतिपद्यन्ते। मनःसंकल्पवशानि चेन्द्रियाणि प्रवर्तन्ते निवर्तन्ते च। अतो मन आयतनमिन्द्रियाणाम्। अतो दर्शनानुरूपेण फलमायतनं स्वानां भवत्यायतनं जनानां य एवं वेद ॥५॥

वसिष्ठत्वमपि प्राणस्यैवेति वक्तुमुत्तरवाक्यमुत्थाप्य व्याचष्टे—यो हेत्यादिना। फलेन प्रलोभितं शिष्यं २५ प्रश्नाभिमुखं प्रत्याह—उच्यतामित्यादिना। वाचो वसिष्ठत्वं द्विधा प्रतिजानीते—वासयतीति। वासयत्यतिशयेनेत्युक्तं विशदयति—वाग्मिनो हीति। वासयन्ति चेति द्रष्टव्यम्। वस्ते वेत्युक्तं स्फुटयति—आच्छादनार्थस्य वेति। आच्छादनार्थत्वमनुभवेन साधयति—अभिभवन्तीति। उक्तमुपास्तिफलं निगमयति—तेनेति ॥२॥

गुणान्तरं वक्तुं वाक्यान्तरमादाय व्याचष्टे—यो ह वा इति। समे प्रतिष्ठा विद्यां विनाऽपि स्यादित्याशङ्क्याऽऽह—तथेति। विषमे च प्रतितिष्ठतीति संबन्धः। विषमशब्दस्यार्थमाह—दुर्गमने चेति। इदानीं प्रश्नपूर्वकं प्रतिष्ठां दर्शयति— ३० यद्येवमिति। प्रतिष्ठात्वं चक्षुषो व्युत्पादयति—कथमित्यादिना। विद्याफलं निगमयति—अत इति ॥३॥

वाक्यान्तरमादाय विभजते—यो ह वै संपदमिति। प्रश्नपूर्वकं संपदुत्पत्तिवाक्यमुपादत्ते—किं पुनरिति। श्रोत्रस्य संपद्गुणत्वं व्युत्पादयति—कथमिति। अध्येयत्वमध्ययनार्हत्वम्। तथाऽपि कथं श्रोत्रं संपद्गुणकमित्याशङ्क्याऽऽह—वेदेति। पूर्वोक्तं फलमुपसंहरति—अत इति ॥४॥

वाक्यान्तरमादाय विभजते—यो ह वा आयतनमिति। सामान्येनोक्तमायतनं प्रश्नपूर्वकं विशदयति—किं ३५ पुनरिति। मनसो विषयाश्रयत्वं विशदयति—मन इति। इन्द्रियाश्रयत्वं तस्य स्फुटयति—मनःसंकल्पेति। पूर्ववत्फलं निगमयति—अत इति ॥५॥

यो ह वै प्रजातिं वेद प्रजायते ह प्रजया पशुभी रेतो
वै प्रजातिः प्रजायते ह प्रजया पशुभिर्य एवं वेद ॥६॥

ते हेमे प्राणा अहꣳश्रेयसे विवदमाना ब्रह्म जग्मुस्तद्धोचुः को नो वसिष्ठ इति
तद्धोवाच यस्मिन्व उत्क्रान्त इदꣳशरीरं पापीयो मन्यते स वो वसिष्ठ इति ॥७॥

५ वाग्घोच्चक्राम सा संवत्सरं प्रोष्याऽऽगत्योवाच कथमशकत मदृते जीवितुमिति
ते होचुर्यथाऽकला अवदन्तो वाचा प्राणन्तः प्राणेन पश्यन्तश्चक्षुषा शृण्वन्तः
श्रोत्रेण विद्वाꣳसो मनसा प्रजायमाना रेतसैवमजीविष्मेति प्रविवेश ह वाक् ॥८॥

चक्षुर्होच्चक्राम तत्संवत्सरं प्रोष्याऽऽगत्योवाच कथमशकत मदृते जीवितुमिति
ते होचुर्यथाऽन्धा अपश्यन्तश्चक्षुषा प्राणन्त प्राणेन वदन्तो वाचा शृण्वन्तः
१० श्रोत्रेण विद्वाꣳसो मनसा प्रजायमाना रेतसैवमजीविष्मेति प्रविवेश ह चक्षुः ॥९॥

यो ह वै प्रजातिं वेद प्रजायते ह प्रजया पशुभिश्च सम्पन्नो भवति। रेतो वै प्रजातिः। रेतसा प्रजननेन्द्रियमुपलक्ष्यते। तद्विज्ञानानुरूपं फलं प्रजायते ह प्रजया पशुभिर्य एवं वेद ॥६॥

ते हेमे प्राणा वागादयोऽहंश्रेयसेऽहं श्रेयानित्येतस्मै प्रयोजनाय विवदमाना विरुद्धं वदमाना ब्रह्म जग्मुर्ब्रह्म गतवन्तो ब्रह्मशब्दवाच्यं प्रजापतिं गत्वा च तद्ब्रह्म होचुरुक्तवन्तः। को नोऽस्माकं मध्ये वसिष्ठः कोऽस्माकं मध्ये
१५ वसति च वासयति च। तद्ब्रह्म तैः पृष्टं सद्धोवाचोक्तवद्यस्मिन्वो युष्माकं मध्य उत्क्रान्ते निर्गते शरीरादिदं शरीरं पूर्वस्मादतिशयेन पापीयः पापतरं मन्यते लोकः। शरीरं हि नामानेकाशुचिसंघातत्वाज्जीवतोऽपि पापमेव ततोऽपि कष्टतरं यस्मिन्नुत्क्रान्ते भवति। वैराग्यार्थमिदमुच्यते—पापीय इति। स वो युष्माकं मध्ये वसिष्ठो भविष्यति जानन्नपि वसिष्ठं प्रजापतिर्नोवाचायं वसिष्ठ इतीतरेषामप्रियपरिहाराय ॥७॥

त एवमुक्ता ब्रह्मणा प्राणा आत्मनो वीर्यपरीक्षणाय क्रमेणोच्चक्रमुः। तत्र वागेव प्रथमं ह्यस्माच्छरीरा-
२० दुच्चक्रामोत्क्रान्तवती। सा चोत्क्रम्य संवत्सरं प्रोष्य प्रोषिता भूत्वा पुनरागत्योवाच—कथमशकत शक्तवन्तो यूयं मदृते मां विना जीवितुमिति। त एवमुक्ता ऊचुर्यथा लोकेऽकला मूका अवदन्तो वाचा प्राणन्तः प्राणव्यापारं कुर्वन्तः प्राणेन पश्यन्तो दर्शनव्यापारं चक्षुषा कुर्वन्तस्तथा शृण्वन्तः श्रोत्रेण विद्वांसो मनसा कार्याकार्यविविषयं प्रजायमाना रेतसा पुत्रानुत्पादयन्त एवमजीविष्म वयमित्येवं प्राणैर्दत्तोत्तरा वागात्मनोऽस्मिन्नवसिष्ठत्वं बुद्ध्वा प्रविवेश ह वाक् ॥८॥

२५ तथा चक्षुर्होच्चक्रामेत्यादि पूर्ववत्। श्रोत्रं मनः प्रजातिरिति ॥९-१२॥

गुणान्तरं वक्तुं वाक्यान्तरं गृहीत्वा तदक्षराणि व्याकरोति—यो हेत्यादिना। वागादीन्द्रियाणि तत्तद्गुणविशिष्टानि शिष्ट्वा रेतो विशिष्टगुणमाचक्षाणस्य प्रकरणविरोधः स्यादित्याशङ्क्याऽऽह—रेतसेति। विद्याफलमुपसंहरति—तद्विज्ञानेति ॥६॥

उक्ता वसिष्ठत्वादिगुणा न वागादिगामिनः किंतु मुख्यप्राणगता एवेति दर्शयितुमाख्यायिका करोति—ते
३० हेत्यादिना। ईयसुन्प्रयोगस्य तात्पर्यमाह—शरीरं हीति। किमिति शरीरस्य पापीयस्त्वमुच्यते तदाह—वैराग्यार्थमिति। शरीरे वैराग्योत्पादनद्वारा तस्मिन्नहंममाभिमानपरिहारार्थमित्यर्थः। वसिष्ठो भवतीत्युक्तवानिति सम्बन्धः। किमिति साक्षादेव मुख्यं प्राणं वसिष्ठत्वादिगुणं नोक्तवान्प्रजापतिः स हि सर्वज्ञ इत्याशङ्क्याह—जानन्नपीति ॥७॥

वाग्घोच्चक्रामेत्यादेस्तात्पर्यमाह—त एवमिति। उक्तेऽर्थे श्रुत्यक्षराणि व्याचष्टे—तत्रेत्यादिना। कार्याकार्यादिविषयमित्यादिशब्देनोपेक्षणीयसंग्रहः। चक्षुरादिभिर्दत्तोत्तरा पुनर्वाक्किमकरोदिति तत्राऽऽह—आत्मन
३५ इति ॥८-१२॥

श्रोत्र्ँ होच्चक्राम तत्संवत्सरं प्रोष्याऽऽगत्योवाच कथमशकत मदृते जीवितुमिति
ते होचुर्यथा बधिरा अशृण्वन्तः श्रोत्रेण प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्त-
श्चक्षुषा विद्वाँसो मनसा प्रजायमाना रेतसैवमजीविष्मेति प्रविवेश ह श्रोत्रम् ॥१०॥

मनो होच्चक्राम तत्संवत्सरं प्रोष्याऽऽगत्योवाच कथमशकत मदृते जीवितुमिति
ते होचुर्यथा मुग्धा अविद्वाँसो मनसा प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्त- ५
श्चक्षुषा शृण्वन्तः श्रोत्रेण प्रजायमाना रेतसैवमजीविष्मेति प्रविवेश ह मनः ॥११॥

रेतो होच्चक्राम तत्संवत्सरं प्रोष्याऽऽगत्योवाच कथमशकत मदृते जीवितुमिति
ते होचुर्यथा क्लीबा अप्रजायमाना रेतसा प्राणन्तः प्राणेन वदन्तो वाचा
पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण विद्वाँसो मनसैवमजीविष्मेति प्रविवेश ह रेतः ॥१२॥

अथ ह प्राण उत्क्रमिष्यन्यथा महासुहयः सैन्धवः पड्वीशशङ्कून्संवृहेदेवँ हैवेमान्प्राणान्संववर्ह १०
ते होचुर्मा भगव उत्क्रमीर्न वै शक्ष्यामस्त्वदृते जीवितुमिति तस्यो मे बलिं कुरुतेति तथेति ॥१३॥

सा ह वागुवाच यद्वा अहं वसिष्ठाऽस्मि त्वं तद्वसिष्ठोऽसीति यद्वा अहं प्रतिष्ठाऽस्मि त्वं
तत्प्रतिष्ठोऽसीति चक्षुर्यद्वा अहँ संपदस्मि त्वं तत्संपदसीति श्रोत्रं यद्वा अहमायतनमस्मि

अथ ह प्राण उत्क्रमिष्यन्नुत्क्रमणं करिष्यंस्तदानीमेव स्वस्थानात्प्रचलिता वागादयः। किमिवेत्याह—यथा लोके महांश्चासौ सुहयश्च महासुहयः शोभनो हयो लक्षणोपेतो महान्परिमाणतः सिन्धुदेशे भवः सैन्धवोऽभि- १५
जनतः पड्वीशशङ्कून्पादबन्धनशङ्कून्पड्वीशाश्च ते शङ्कवश्च तान्संवृहेदुद्यच्छेद्युगपदुत्खनेदश्वारोह आरूढे परीक्षणाय। एवं हैवेमान्वागादीन्प्राणान्संववर्होद्यतवान्स्वस्थानाद्भ्रंशितवान्। ते वागादयो होचुर्हे भगवो भगवन्मोत्क्रमीर्यस्मान्नवै शक्ष्यामस्त्वदृते त्वां विना जीवितुमिति। यद्येवं मम श्रेष्ठता विज्ञाता भवद्भिरहमत्र श्रेष्ठस्तस्य उ मे मम बलिं करं कुरुत करं प्रयच्छतेति। अयं च प्राणसम्वादः कल्पितो विदुषः श्रेष्ठपरीक्षणप्रकारोपदेशः। अनेन हि प्रकारेण विद्वान्को नु खल्वत्र श्रेष्ठ इति परीक्षणं करोति। स एष परीक्षणप्रकारः सम्वादभूतः कथ्यते। २०
न ह्यन्यथा संहत्यकारिणां सतामेषामञ्जसैव संवत्सरमात्रमेवैकैकस्य निर्गमनाद्युपपद्यते। तस्माद्विद्वानेवानेन प्रकारेण विचारयति वागादीनां प्रधानबुभुत्सुरुपासनाय। बलिं प्रार्थिताः सन्तः प्राणास्तथेति प्रतिज्ञातवन्तः ॥१३॥

सा ह वाक्प्रथमं बलिदानाय प्रवृत्ता ह किलोवाचोक्तवती यद्वा अहं वसिष्ठाऽस्मि यन्मम वसिष्ठत्वं तत्त्वैव तेन वसिष्ठगुणेन त्वं तद्वसिष्ठोऽसीति। यद्वा अहं प्रतिष्ठाऽस्मि त्वं तत्प्रतिष्ठोऽसि या मम प्रतिष्ठा सा त्वमसीति। चक्षुः। समानमन्यत्। सम्पदायतनप्रजातित्वगुणान्क्रमेण समर्पितवन्तः। यद्येवं साधु बलिं दत्तवन्तो भवन्तो ब्रूत २५
तस्य उ मे एवंगुणविशिष्टस्य किमन्नं किं वास इति। आहुरितरे—यदिदं लोके किञ्च किञ्चिदन्नं नामाप्या श्वभ्य

वागादिप्रकरणविच्छेदार्थोऽथशब्दः। उत्क्रमणं करिष्यन्यदा भवतीति शेषः। उक्तमर्थं दृष्टान्तेन स्पष्टयन्नुत्तरवाक्यमवतारयति—किमिवेत्यादिना। प्राणस्य श्रेष्ठत्वं वागादिभिर्निर्धारितमित्याह—ते वागादय इति। तर्हि तत्फलेन भवितव्यमित्याह—यद्येवमिति। यथोक्तस्य प्राणसंवादस्य काल्पनिकत्वं दर्शयति—अयं चेति। कल्पनाफलं सूचयति—विदुष इति। तदेव स्पष्टयति—अनेन हीति। उपास्यपरीक्षणप्रकारो विवक्षितश्चेत्किं संवादेनेत्याशङ्क्याऽऽह— ३०
स एष इति। संवादस्य मुख्यार्थत्वादकल्पितत्वमाशङ्क्याऽऽह—न हीति। संवादस्य कल्पितत्वे फलितमाह—तस्मादिति। एवं प्राणसंवादस्य—तात्पर्यमुक्त्वा प्रकृतामक्षरव्याख्यामेवानुवर्तयति—बलिमिति ॥१३॥

सा ह वागिति प्रतीकमादाय व्याचष्टे—प्रथममिति। तेन वसिष्ठगुणेन त्वमेव वसिष्ठोऽसि तथा च तद्वसिष्ठत्वं तवैवेति योजना। बलिदानमङ्गीकृत्यान्नवाससी पृच्छसि—यद्येवमित्यादिना। एवंगुणविशिष्टस्य ज्येष्ठत्वश्रेष्ठत्ववसिष्ठत्वादिसंबद्धस्येत्यर्थः। यदिदमित्यादि वाक्यं व्याचष्टे—यदिदमिति। प्रकृतेन शुनामन्नेन कीटादीनां चान्नेन सह ३५

त्वं तदायतनमसीति मनो यद्वा अहं प्रजातिरस्मि त्वं तत्प्रजातिरसीति रेतस्तस्यो मे किमन्नं किं वास इति यदिदं किंचाऽऽश्वभ्य आ कृमिभ्य आ कीटपतङ्गेभ्यस्तत्तेऽन्नमापो वास इति न ह वा अस्यानन्नं जग्धं भवति नानन्नं प्रतिगृहीतं य एवमेतदनस्यान्नं वेद तद्विद्वांसः श्रोत्रिया अशिष्यन्त आचामन्त्यशित्वाऽऽचामन्त्येतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते ॥१४॥

५ इति बृहदारण्यकोपनिषदि षष्ठाध्यायस्य प्रथमं ब्राह्मणम् ॥१॥

आ कृमिभ्य आ कीटपतङ्गेभ्यः। यच्च श्वान्नं कृम्यन्नं कीटपतङ्गान्नं च तेन सह सर्वमेव यत्किंचित्प्राणिभिरद्यमानमन्नं तत्सर्वं तवान्नं सर्वं प्राणस्यान्नमिति दृष्टिरत्र विधीयते।

केचित्तु सर्वभक्षणे दोषाभावं वदन्ति प्राणान्नविदः। तदसत्। शास्त्रान्तरेण प्रतिषिद्धत्वात्। तेनास्य विकल्प इति चेत्। न। अविधायकत्वात्। न ह वा अस्यानन्नं जग्धं भवतीति सर्वं प्राणस्यान्नमित्येतस्य विज्ञानस्य

१० विहितस्य स्तुत्यर्थमेतत्। तेनैकवाक्यतापत्तेः। न तु शास्त्रान्तरविहितस्य बाधने सामर्थ्यमन्यपरत्वादस्य। प्राणमात्रस्य सर्वमन्नमित्येतद्दर्शनमिहि विधित्सितं न तु सर्वं भक्षयेदिति।

यत्तु सर्वभक्षणे दोषाभावज्ञानं तन्मिथ्यैव प्रमाणाभावात्। विदुषः प्राणत्वात्सर्वान्नोपपत्तेः सामर्थ्यादवोष एवेति चेत्। न। अशेषान्नत्वानुपपत्तेः। सत्यं यद्यपि विद्वान्प्राणो येन कार्यकरणसंघातेन विशिष्टस्य विद्वत्ता तेन कार्यकरणसंघातेन कृमिकीटदेवाद्यशेषान्नभक्षणं नोपपद्यते। तेन तत्राशेषान्नभक्षणे दोषाभावज्ञापनमनर्थकम्।

१५ यत्किञ्चित्कृम्यन्नं दृश्यते तत्सर्वमेव तवान्नमिति योजना। तदेव स्फुटयति—यत्किंचिदिति। पदार्थमुक्त्वा वाक्यार्थं कथयति—सर्वमिति।

अस्मिन्नेव वाक्ये पक्षान्तरमुत्थापयति—केचित्त्विति। न ह वा अस्येत्याद्यर्थवाददर्शनादित्यर्थः। तद्दूषयति—तदसदिति। शास्त्रान्तरेण 'क्रिमयो भवन्त्यभक्ष्यभक्षिण' इत्यादिनेत्यर्थः। प्राणविदतिरिक्तविषयं शास्त्रान्तर सर्वभक्षणं तु प्राणदर्शिनो विवक्षितमतो व्यवस्थितविषयत्वात्प्रतिषेधेन सर्वभक्षणस्योदितानुदितहोमवद्विकल्पः स्यादिति

२० शङ्कते—तेनेति। किं तर्हि सर्वान्नभक्षणं विहितं न वा? न चेन्न तस्य निषिद्धस्यानुष्ठानं प्राणविदि तत्प्रापकाभावाद्विहितं चेत्तत्किं यदिदमित्यादिना न हेत्यादिना वा विहितं नाऽऽद्य इत्याह—नाविधायकत्वादिति। यदिदमित्यादिना हि सर्वं प्राणस्यान्नमिति ज्ञानमेव विधीयते न तु प्राणा[न्न]विदः सर्वान्नभक्षणं तदवद्योतिपदाभावान्न विकल्पोपपत्तिरित्यर्थः। द्वितीयं दूषयति—न ह वा इति। अस्येति विद्वत्परामर्शान्निपातयोरर्थवादत्वावद्योतिनोर्दर्शनादेकवाक्यत्वसंभवे वाक्यभेदस्यान्याय्यत्वाच्चेति हेतुमाह—तेनेति। अर्थवादस्यापि स्वार्थे प्रामाण्य देवताधिकरणन्यायेन भविष्य-

२५ तीत्याशङ्क्य "न कलञ्जं भक्षयेदि"त्यादिविहितस्य भक्षणाभावस्य तस्य बाधने न हेत्यादेर्न सामर्थ्यं दृष्टिपरत्वादस्य मानान्तरविरोधे स्वार्थे मानत्वायोगादित्याह—न त्विति। न हेत्यादेरन्यपरत्वं प्रपञ्चयति—प्राणमात्रस्येति।

तत्र दोषाभावज्ञापनात्तदेव विधित्सितमित्याशङ्क्याऽऽह—यत्त्विति। अर्थवादस्य मानान्तरविरोधे स्वार्थे मानत्वायोगस्योक्तत्वादिति भावः। प्रमाणाभावस्यासिद्धिमाशङ्कते—विदुष इति। सामर्थ्यात्प्राणस्वरूपबलादिति यावत्। अदोषः सर्वान्नभक्षणे तस्येति शेषः। अर्थापत्तिं दूषयति—नेत्यादिना। अनुपपत्तिमेव विवृणोति—सत्यमिति।

३० १. "अशिष्यन्त आचामन्त्यशित्वाचाचामान्तीत्य"त्र ब्रह्मसूत्रेषु विचारः कृतः। छन्दोगा वाजसनेयिनश्च प्राणसंवादे आचमनमनग्नताचिन्तनं च प्राणस्य प्रतीयते। अत्र किमुभयं विधीयते आहोस्विदेकं तत्रापि आचमनं अनग्नताचिन्तनं वेति सन्देहे उभयविधाने वाक्यभेदप्रसंगात् आचमनमात्रं विधीयते तत्र विधिप्रवीणे अनग्नताचिन्तनं तु अर्थप्राप्तमनूद्यते इति प्राप्ते उच्यते भोजनस्य पूर्वमुत्तरं च विहितमाचमनमनूद्य तत्संबन्धिमन्त्रे अनग्नताचिन्तनमात्रं विधेयम्। अपूर्वत्वात्। आचमनं तु स्मृतितः प्राप्तमनूद्यते। अत एवापोशानमन्त्र "अमृतापिधानमसि" इति जलस्य पिधानत्वं सूचयति।

३५ २. देवताधिकरणन्यायः—प्रमाणान्तरेण प्राप्तौ विरोधे चासति अर्थवादाना स्वार्थे अबाधाभावाभ्युपगमः देवताधिकरणन्यायः।

अप्राप्तत्वादशेषान्नभक्षणदोषस्य। ननु प्राणः सन्भक्षयत्येव कृमिकीटाद्यन्नमपि। बाढम्। किन्तु न तद्विषयः[1] प्रतिषेधोऽस्ति। तस्माद्धैवरक्तं किंशुकं तत्र दोषाभावः। अतस्तद्रूपेण दोषाभावज्ञापनमनर्थकम्। अप्राप्तत्वादशेषान्नभक्षण-दोषस्य। येन[2] तु कार्यकरणसंघातसम्बन्धेन प्रतिषेधः क्रियते तत्सम्बन्धेन त्विह नैव प्रतिप्रसवोऽस्ति। तस्मात्तत्प्रतिषेधातिक्रमे दोष एव स्यादन्यविषयत्वान्न ह वा इत्यादेः।

न च ब्राह्मणादिशरीरस्य सर्वान्नत्वदर्शनमिह विधीयते किंतु प्राणमात्रस्यैव। यथा च सामान्येन सर्वान्नस्य ५ प्राणस्य किंचिदन्नजातं कस्यचिज्जीवनहेतुः। यथा विषं विषजस्य क्रिमेस्तदेवान्यस्य प्राणान्नमपि सद्दृष्टमेव दोषमुत्पादयति मरणादिलक्षणम्। तथा सर्वान्नस्यापि प्राणस्य प्रतिषिद्धान्नभक्षणे ब्राह्मणत्वादिदेहसंबन्धाद्दोष एव स्यात्। तस्मान्मिथ्याज्ञानमेवाभक्ष्यभक्षणे दोषाभावज्ञानम्।

आपो वास इत्यापो भक्ष्यमाणा वासःस्थानीयास्तव। अत्र च प्राणस्या[3]ऽऽपो वास इत्येतद्दर्शनं विधीयते। न तु वासःकार्ये आपो विनियोक्तुं शक्याः। तस्माद्यथाप्राप्तेऽब्भक्षणे दर्शनमात्रं कर्तव्यम्। न ह वा अस्य सर्वं १० प्राणस्यान्नमित्येवंविदोऽनन्नमनदनीयं जग्धं भुक्तं न भवति ह। यद्यप्यनेनानदनीयं भुक्तमदनीयमेव भुक्तं स्यान्न तु तत्कृतदोषेण लिप्यत इत्येतद्विद्यास्तुतिरित्यवोचाम। तथा नानन्नं प्रतिगृहीतं यद्यप्यप्रतिग्राह्यं हस्त्यादि प्रतिगृहीतं

येनेत्यस्मात्प्राक्कथाऽपीति वक्तव्यम्। यद्यपीत्युपक्रमात्। प्राणस्वरूपसामर्थ्यादनुपपत्तिरपि शाम्यतीति शङ्कते—नन्विति। किं फलात्मना विदुषः सर्वान्नभक्षणं साध्यते किंवा साधकत्वरूपेणेति विकल्प्याऽऽद्यमङ्गीकरोति—बाढमिति। प्राणरूपेण सर्वभक्षणं तच्छब्दार्थः। तत्र प्रतिषेधाभावे सदृष्टान्तं फलितमाह—तस्मादिति। तथा स्वारसिकं प्राणस्य १५ सर्वभक्षणं तत्र चाप्रतिषेधाद्दोषराहित्यमिति शेषः। तद्राहित्ये किं स्यादिति चेत्तदाह—अत इति। पञ्चम्यर्थमेव स्फोरयति—अप्राप्तत्वादिति। प्राणविदः साधकत्वाकारेण साध्यते सर्वान्नभक्षणमिति पक्षं प्रत्याह—येन त्विति। इहेति प्राणविदुच्यते। निमित्तान्तरादत्यन्ताप्राप्तविषयो विधिः प्रतिप्रसवो यथा ज्वरितस्याशनप्रतिषेधेऽप्यौषधं पिबेदिति तथा शास्त्राधिकारिणः सर्वाभक्ष्यभक्षणनिषेधेऽपि प्राणविदो विशेषविधिर्नोपलभ्यते। तथा च तस्य भक्षणं दुःसाध्यमित्यर्थः। प्रतिप्रसवाभावे लब्धं दर्शयति—तस्मादिति। अर्थवादस्य तर्हि का गतिरित्याशङ्क्याऽऽह— २० अन्यविषयत्वादिति। तस्य स्तुतिमात्रार्थत्वान्न तद्वशान्निषेधातिक्रम इत्यर्थः।

ननु विशिष्टस्य प्राणस्य सर्वान्नत्वदर्शनमत्र विधीयते तथा च विदुषोऽपि तदात्मनः सर्वान्नभक्षणे न दोषो यथादर्शनं फलाभ्युपगमादत आह—न चेति। इतोऽपि सर्वं प्राणस्यान्नमित्येतदवष्टम्भेन प्राणविदः सर्वभक्षणं न विधेयमित्याह—यथा चेति। प्राणस्य यथोक्तस्य स्वीकारेऽपि कस्यचित्किंचिदन्नं जीवनहेतुरित्यत्र दृष्टान्तमाह—यथेति। तथा सर्वप्राणिषु व्यवस्थयाऽन्नसंबन्धे दार्ष्टान्तिकमाह—तथेति। प्राणविदोऽपि कार्यकरणवतो २५ निषेधातिक्रमायोगे फलितमाह—तस्मादिति।

वाक्यान्तरमादाय व्याकरोति—आप इति। स्मार्तादाचमनादन्यदेव श्रौतमाचमनमन्यतोऽप्राप्तं विधेयं तदर्थमिदं वाक्यमिति केचित्तान्प्रत्याह—अत्र चेति। वासःकार्यं परिधानम्। तत्र साक्षादपां विनियोगायोगे प्राप्तमर्थं-माह—तस्मादिति। यदिदं किंचेत्यादावुक्तं दृष्टिविधेरर्थवादमादाय व्याचष्टे—नेत्यादिना। पुनर्नञनुकर्षणमन्वयाय। पदार्थमुक्त्वा वाक्यार्थमाह—यद्यपीति। अभक्ष्यभक्षणं तर्हि स्वीकृतमिति चेन्नेत्याह—इत्येतदिति। यथा ३०

---

१. तद्विषयः प्राणकर्तृकसर्वभक्षणविषयः प्राणे सर्वभक्षके दोषाभावात्।

२. येन त्विति—ब्राह्मणशरीरेण प्रतिषेधः तेन देहेन न प्रतिप्रसवः। प्रतिप्रसवो नाम प्रसक्तप्राप्तिकस्य कारणान्तरेण निवृत्तिप्रसक्तौ पुनर्विधानम्। यथा अनृतवदनस्य रागात् प्रसक्तस्य नानृतं वदेदिति निवृत्तिप्रसक्तौ विवाहेष्वनृतं ब्रूयादिति अभ्यनुज्ञा। यथा वा "न हिंस्यादि"ति निषेधः रागप्राप्तहिंसाविषयः तस्यैव च "अग्नीषोमीयं पशुं हिंस्यादि"ति पुनर्विधानम्। तद्वत् सर्वभक्षणं रागप्राप्तं "न पलाण्डुं भक्षयेत्" इत्यादिना निषिद्धं तस्यात्र ३५ पुनर्विधानमिति वक्तुमशक्यम्।

३. प्राणस्य वासोविज्ञानं इति सम्बन्धः। इतिकर्तव्यता अयं प्राणोपासनाङ्गमित्यर्थः।

स्यात्तदप्यन्नमेव प्रतिग्राह्यं प्रतिगृहीतं स्यात्तत्राप्यप्रतिग्राह्यप्रतिग्रहदोषेण न लिप्यत इति स्तुत्यर्थमेव य एवमेतद-
नस्य प्राणस्यान्नं वेद। फलं तु प्राणात्मभाव एव न त्वेतत्फलाभिप्रायेण किं तर्हि स्तुत्यभिप्रायेणेति। नन्वेतदेव
फलं कस्मान्न भवति। न प्राणात्मदर्शिनः प्राणात्मभाव एव फलम्। तत्र च प्राणात्मभूतस्य सर्वात्मनोऽनदनी-
यमप्याद्यमेव। तथाऽप्रतिग्राह्यमपि प्रतिग्राह्यमेवेति यथाप्राप्तमेवोपादाय विद्या स्तूयते। अतो नैव फलविधिसरूपता
५ वाक्यस्य।

यस्मादापो वासः प्राणस्य तस्माद्विद्वांसो ब्राह्मणाः श्रोत्रिया अधीतवेदा अशिष्यन्तो भोक्ष्यमाणा आचा-
मन्त्यपोऽशित्वाऽऽचामन्ति भुक्त्वा चोत्तरकालमपो भक्षयन्ति। तत्र तेषामाचामतां कोऽभिप्राय इत्याह—एतमेवानं
प्राणमनग्नं कुर्वन्तो मन्यन्ते। अस्ति चैतद्यो यस्मै वासो ददाति स तमनग्नं करोमीति हि मन्यते। प्राणस्य चाऽऽपो
वास इति ह्युक्तम्। यदपः पिबामि तत्प्राणस्य वासो ददामीति विज्ञानं कर्तव्यमित्येवमर्थमेतत्। ननु भोक्ष्यमाणो
१० भुक्तवांश्च प्रयतो भविष्यामीत्याचामति। तत्र च प्राणस्यानग्नताकरणार्थत्वे च द्विकार्यताऽऽचमनस्य स्यात्। न
च कार्यद्वयमाचमनस्यैकस्य युक्तम्। यदि प्रायत्यार्थं नानग्नतार्थमथानग्नतार्थं न प्रायत्यार्थम्। यस्मादेवं तस्माद्-
द्वितीयमाचमनान्तरं प्राणस्यानग्नताकरणाय भवतु। न। क्रियाद्वित्वोपपत्तेः। द्वे ह्येते क्रिये भोक्ष्यमाणस्य भुक्तवतश्च
यदाचमनं स्मृतिविहितं तत्प्रायत्यार्थं भवति। क्रियामात्रमेव न तु तत्र प्रायत्यं दर्शनाद्यपेक्षते। तत्र चाऽऽचमनाङ्ग-
भूतास्वप्सु वासोविज्ञानं प्राणस्येतिकर्तव्यतया चोद्यते न तु तस्मिन्क्रियमाण आचमनस्य प्रायत्यार्थता बाध्यते
१५ क्रियान्तरत्वादाचमनस्य। तस्माद्भोक्ष्यमाणस्य भुक्तवतश्च यदाचमनं तत्राऽऽपो वासः प्राणस्येति दर्शनमात्रं
विधीयते। अप्राप्तत्वादन्यतः ॥१४॥

इति बृहदारण्यकोपनिषद्भाष्ये षष्ठाध्यायस्य प्रथमं ब्राह्मणम् ॥१॥

प्राणविदो नानन्नं भुक्तं भवति तथेत्येतत्। अनुमतस्तर्हि प्राणविदो दुष्प्रतिग्रहोऽपीत्याशङ्क्याऽऽह—तत्रापीति।
असत्प्रतिग्रहे प्राप्तेऽपीत्यर्थः। किमित्ययं स्तुत्यर्थवादः फलवाद एव किं न स्यादित्याशङ्क्याऽऽह—फलं त्विति।
२० इतिशब्दः सर्वं प्राणस्यान्नमितिदृष्टिविधेः सार्थवादस्योपसंहारार्थः। उक्तमेवार्थं चोद्यसमाधिभ्यां समर्थयते—
नन्वित्यादिना। यथाप्राप्तं प्रकृतवाक्यवशात्प्रतिपन्नं रूपमनतिक्रम्येति यावत्। वाक्यस्य विद्यास्तुतित्वे फलितमाह—
अत इति।

यदुक्तमापो वास इति तस्य शेषभूतमुत्तरग्रन्थमुत्थाप्य व्याचष्टे—यस्मादिति। तत्रेत्यशनात्प्रागूर्ध्वंकालोक्तिः।
उक्तेऽभिप्राये लोकप्रसिद्धिमनुकूलयति—अस्ति चेति। तत्रैव वाक्योपक्रमस्याऽऽनुकूल्यं दर्शयति—प्राणस्येति।
दृष्टिविधानमसहमानः शङ्कते—
२५ किमर्थमिदं सोपक्रमं वाक्यमित्यपेक्षायामत्र चेत्यादावुक्तं स्मारयति—यदप इति। दृष्टिविधानमसहमानः शङ्कते—
नन्विति। अस्तु प्रायत्यार्थमाचमनं प्राणपरिधानार्थं चेत्याशङ्क्याऽऽह—तत्रेति। कुल्याप्रणयनन्यायेन द्विकार्यत्वा-
विरोधमाशङ्क्याऽऽह—न चेति। तत्र प्रत्यक्षत्वात्कार्यभेदस्याविरोधेऽपि प्रकृते प्रमाणाभावाद्द्विकार्यत्वानुपपत्तिरित्यभि-
प्रेत्योक्तमुपपादयति—यदीति। ननु स्मार्ताचमनस्य प्रायत्यार्थत्वं तथैवानग्नतार्थत्वं प्रकृतवाक्याधिगतं तथा च कथं
द्विकार्यत्वमप्रामाणिकमित्याशङ्क्य वाक्यस्य विषयान्तरं दर्शयति—यस्मादिति। द्विकार्यत्वदोषमुक्तं दूषयति—
३० नेत्यादिना। तच्चाऽऽचमनं दर्शननिरपेक्षमित्याह—क्रियामात्रमेवेति। नन्वाचमने फलभूतं प्रायत्यं दर्शनसापेक्षमिति
चेन्नेत्याह—नत्विति। क्रियाया एव तदाधानसामर्थ्यादित्यर्थः। तत्रेत्याचमने शुद्ध्यर्थे क्रियान्तरे सतीत्यर्थः।
सर्वान्नविज्ञानवदिति
प्राणविज्ञानप्रकरणे वासोविज्ञानं चोद्यते चेद्वाक्यभेदः स्यादित्याशङ्क्याऽऽह—प्राणस्येति। सर्वान्नविज्ञानवदिति
चकारार्थः। आचमनीयास्वप्सु वासोविज्ञानं क्रियते चेत्कथमाचमनस्य प्रायत्यार्थत्वमित्याशङ्क्याऽऽह—न त्विति।
द्विकार्यत्वदोषाभावे फलितं दर्शनविधिमुपसंहरति—तस्मादिति। अप्राप्तत्वाद्वासोदृष्टेर्विधिर्व्यतिरेकेण प्राप्त्यभावाद्दृष्टे-
३५ रत्र प्रकृतत्वात्कार्याख्यानादपूर्वमिति च न्यायादित्यर्थः ॥१४॥

इति बृहदारण्यकोपनिषद्भाष्यटीकायां षष्ठाध्यायस्य प्रथमं ब्राह्मणम् ॥१॥

२. कुल्याप्रणयनं नदीसकाशात् अल्पाः कुल्याः क्रियन्ते सस्यपोषणार्थं गवादीनां जलपानार्थं च तद्वदित्यर्थः।

अथ षष्ठाध्यायस्य द्वितीयं ब्राह्मणम्

**श्वेतकेतुर्ह वा आरुणेयः पञ्चालानां परिषदमाजगाम स आजगाम जैवलिं प्रवाहणं परिचारयमाणं तमुदीक्ष्याभ्युवाद कुमारा३ इति स भो३ इति प्रतिशुश्रावानुशिष्टोऽन्वसि पित्रेत्योमिति होवाच ॥१॥**

श्वेतकेतुर्ह वा आरुणेय इत्यस्य संबन्धः। खिलाधिकारोऽयं तत्र यदनुक्तं तदुच्यते। सप्तमाध्यायान्ते ज्ञान- ५
कर्मसमुच्चयकारिणाऽग्नेर्मार्गयाचनं कृतम्–अग्ने नय सुपथेति। तत्रानेकेषां पथां सद्भावो मन्त्रेण सामर्थ्यात्प्रदर्शितः।
सुपथेति विशेषणात्। पन्थानश्च कृत[1]विपाकप्रतिपत्तिमार्गाः। वक्ष्यति च यत्कृत्वेत्यादि। तत्र च कति कर्मविपाक-
प्रतिपत्तिमार्गा इति सर्वसंसारगत्युपसंहारार्थोऽयमारम्भः। एतावती हि संसारगतिः। एतावान्कर्मणो विपाकः
स्वाभाविकस्य शास्त्रीयस्य च सविज्ञानस्येति। यद्यपि द्वया ह प्राजापत्या इत्यत्र स्वाभाविकः पाप्मा सूचितः। न
च तस्येदं कार्यमिति विपाकः प्रदर्शितः। शास्त्रीयस्यैव तु विपाकः प्रदर्शितस्त्र्यन्नात्मप्रतिपत्त्यन्तेन। १०
ब्रह्मविद्यारम्भे तद्वैराग्यस्य विवक्षितत्वात्। तत्रापि केवलेन कर्मणा पितृलोको विद्यया विद्यासंयुक्तेन च कर्मणा
देवलोक इत्युक्तम्। तत्र केन मार्गेण पितृलोकं प्रतिपद्यते केन वा देवलोकमिति नोक्तम्। तच्चेह खिलप्रकरणेऽशेषतो
वक्तव्यमित्यत आरभ्यते। अन्ते च सर्वोपसंहारः शास्त्रस्येष्टः।

अपि चैतावदमृतत्वमित्युक्तं न कर्मणोऽमृतत्वाशाऽस्तीति च तत्र हेतुर्नोक्तस्तदर्थश्चायमारम्भः। यस्मादियं
कर्मणो गतिर्न नित्येऽमृतत्वे व्यापारोऽस्ति तस्मादेतावदेवामृतत्वसाधनमिति सामर्थ्याद्धेतुत्वं संपद्यते। अपि चोक्त- १५

ब्राह्मणान्तरमादाय तस्य पूर्वेण संबन्धं प्रतिजानीते—श्वेतकेतुरिति। कोऽसौ संबन्धस्तमाह—खिलेति।
तत्र कर्मकाण्डे ज्ञानकाण्डे वा यद्वस्तु प्राधान्येन नोक्तं तदस्मिन्काण्डे वक्तव्यमस्य खिलाधिकारत्वात्तथा च पूर्वमनुक्तं
वक्तुमिदं ब्राह्मणमित्यर्थः। वक्तव्यशेषं दर्शयितुं वृत्तं कीर्तयति—सप्तमेति। समुच्चयकारिणो मुमूर्षोरग्निप्रार्थनेऽपि
किं स्यादित्याशङ्क्याऽऽह—तत्रेति। अध्यायावसानं सप्तम्यर्थः। सामर्थ्यमेव दर्शयति—सुपथेतीति। विशेषणवशाद्बहवो
मार्गा भान्तु किं पुनस्तेषां स्वरूपं तदाह—पन्थानश्चेति। तत्र वाक्यशेषमनुकूलयति—वक्ष्यति चेति। संप्रत्याकाङ्क्षा- २०
द्वारा समनन्तरब्राह्मणतात्पर्यमाह—तत्रेति। उपसंह्रियमाणां संसारगतिमेव परिच्छिनत्ति—एतावती होति।
दक्षिणोदगधोगत्यात्मिकेति यावत्। कर्मविपाकस्तर्हि कुत्रोपसंह्रियते तत्राऽऽह—एतावानिति। इतिशब्दो
यथोक्तसंसारगत्यतिरिक्तकर्मविपाकाभावात्तदुपसंहारार्थ एवायमारम्भ इत्युपसंहारार्थः। अथोद्गीथाधिकारे सर्वोऽपि
कर्मविपाकोऽनर्थ एवेत्युक्तत्वात्परिशिष्टसंसारगत्यभावात्कथं खिलकाण्डे तन्निर्देशसिद्धिरत आह—यद्यपीति। कस्तर्हि
विपाकस्तत्रोक्तस्तत्राऽऽह—शास्त्रीयस्येति। तत्र सुकृतविपाकस्यैवोपन्यासे हेतुमाह—ब्रह्मविद्येति। अनिष्टविपाकात्तु २५
वैराग्यं सुकृताभिमुख्यादेव सिद्धमिति न तत्र तद्विवक्षा। इह पुनः शास्त्रसमाप्तौ खिलाधिकारे तद्विपाकोऽप्युपसंह्रियत
इति भावः। प्रकारान्तरेण संगतिं वक्तुमुक्तं स्मारयति—तत्रापीति। शास्त्रीयविपाकविषयेऽपीत्यर्थः। उत्तरग्रन्थस्य
विषयपरिशेषार्थं पातनिकामाह—तत्रेति। लोकद्वयं सप्तम्यर्थः। प्रागनुक्तमपि देवयानाद्यत्र वक्तव्यमिति कुतो
नियमसिद्धिस्तत्राऽऽह—तच्चेति। वक्तव्यशेषस्य सत्त्वे फलितमाह—इत्यत इति। यत्तर्हि प्रागनुक्तं तद्देवयानादि
वक्तव्यं प्रगेवोक्तं तु ब्रह्मलोकादि कस्मादुच्यते तत्राऽऽह—अन्ते चेति। शास्त्रस्यान्ते चेति संबन्धः। ३०

इतश्चेदं ब्राह्मणमगतार्थत्वादारभ्यमित्याह—अपि चेति। एतावदित्यात्मज्ञानोक्तिः। अमृतत्वं तत्साधनमिति
यावत्। चकारादुक्तमित्यनुषङ्गः। ज्ञानमेवामृतत्वे हेतुरित्युक्तोऽर्थस्तत्रेति सप्तम्यर्थः तदर्थो हेत्वपदेशार्थः। कथं
पुनर्वक्ष्यमाणा कर्मगतिर्ज्ञानमेवामृतत्वसाधनमित्यत्र हेतुत्वं प्रतिपद्यते तत्राऽऽह—यस्मादिति। व्यापारोऽस्ति कर्मण
इति शेषः। सामर्थ्याज्ज्ञानातिरिक्तस्योपायस्य संसारहेतुत्वनियमादित्यर्थः। प्रकारान्तरेण ब्राह्मणतात्पर्यं वक्तुमग्निहोत्र-
विषये जनकयाज्ञवल्क्यसंवादसिद्धमर्थमनुवदति—अपि चेत्यादिना। एतयोरग्निहोत्राहुत्योः सायं प्रातश्चानुष्ठितयोरिति ३५
यावत्। लोकं प्रत्युत्थायिनं यजमानं परिवेष्ट्येमं लोकं प्रत्यावृत्तयोस्तयोरनुष्ठानोपचितयोः परलोकं प्रति स्वाश्रयोत्थानहेतुं
परिणाममित्येतदिति प्रश्नषट्कमग्निहोत्रविषये जनकेन याज्ञवल्क्यं प्रत्युक्तमिति संबन्धः। तत्रेत्याक्षेपगतप्रश्न-

१. कृतविपाकेति—कृतमनुष्ठितं कर्म उपासनं वा तस्य विपाकः फलं तस्य प्रतिपत्तिः प्राप्तिः।

**वेत्थ यथेमाः प्रजाः प्रयत्यो विप्रतिपद्यन्ता३ इति नेति होवाच वेत्थो यथेमं लोकं पुनरापद्यन्ता३ इति नेति हैवोवाच वेत्थो यथाऽसौ लोक एवं बहुभिः पुनः पुनः प्रयद्भिर्न संपूर्यता३ इति नेति हैवोवाच वेत्थो यतिथ्यामाहुत्यां हुतायामापः**

मग्निहोत्रे न त्वेवैनयोस्त्वमुत्क्रांतिं न गतिं न प्रतिष्ठां न तृप्तिं न पुनरावृत्तिं न लोकं प्रत्युत्थायिनं वेत्थेति । तत्र ५ प्रतिवचने ते वा एते आहुती हुते उत्क्रामत इत्यादिना आहुतेः कार्यमुक्तम् । तच्चैतत्कर्तुराहुतिलक्षणस्य कर्मणः फलम् । न हि कर्तारमनाश्रित्याऽऽहुतिलक्षणस्य कर्मणः स्वातन्त्र्येणोत्क्रान्त्यादिकार्यारम्भ उपपद्यते । कर्त्रर्थत्वात्कर्मणः कार्यारम्भस्य । साधनाश्रयत्वाच्च कर्मणः । तत्राग्निहोत्रस्तुत्यर्थत्वादग्निहोत्रस्यैव कार्यमित्युक्तं षट् प्रकारमपि । इह तु तदेव कर्तुः फलमित्युपदिश्यते । षट्प्रकारमपि कर्मफलविज्ञानस्य विवक्षितत्वात् । तद्द्वारेण च पञ्चाग्निदर्शनमिहोत्तरमार्गप्रतिपत्तिसाधनं विधित्सितम् । एवमशेषसंसारगत्युपसंहारः । कर्मकाण्डस्यैषा निष्ठेत्ये- १० तद्द्वयं दिदर्शयिषुराख्यायिकां प्रणयति ।

श्वेतकेतुर्नामतोऽरुणस्यापत्यमारुणिस्तस्यापत्यमारुणेयः । हशब्द ऐतिह्यार्थः । वै निश्चयार्थः । पित्राऽनुशिष्टः सन्नात्मनो यशःप्रथनाय पञ्चालानां परिषदमाजगाम । पञ्चालाः प्रसिद्धास्तेषां परिषदमागत्य जित्वा राज्ञोऽपि परिषदं जेष्यामीति गर्वेण स आजगाम । जीवलस्यापत्यं जैवलिं पञ्चालराजं प्रवाहणनामानं स्वभृत्यैः परिचारयमाणमात्मनः परिचरणं कारयन्तमित्येतत् । स राजा पूर्वमेव तस्य विद्याभिमानगर्वं श्रुत्वा विनेतव्योऽय- १५ मिति मत्वा तमुदीक्ष्योत्प्रेक्ष्याऽऽगतमात्रमेवाभ्युवादाभ्युक्तवान्कुमारा३इति संबोध्य । भर्त्सनार्था प्लुतिः । एवमुक्तः स प्रतिशुश्राव भो३इति । भो३इत्यप्रतिरूपमपि क्षत्रियं प्रत्युक्तवान्क्रुद्धः सन् । अनुशिष्टोऽनुशासितोऽसि भवसि किं पित्रेत्युवाच राजा । प्रत्याहेतर ॐमिति बाढमनुशिष्टोऽस्मि पृच्छ यदि संशयस्ते ॥१॥

यद्येवं वेत्थ विजानासि किं यथा येन प्रकारेणेमाः प्रजाः प्रसिद्धाः प्रयत्यो म्रियमाणा विप्रतिपद्यन्ता ३ इति विप्रतिपद्यन्ते विचारणार्था प्लुतिः । समानेन मार्गेण गच्छन्तीनां मार्गद्वैविध्यं यत्र भवति यत्र काश्चित्प्रजा २० अन्येन मार्गेण गच्छन्ति काश्चिदन्येनेति विप्रतिपत्तिः । यथा ताः प्रजा विप्रतिपद्यन्ते तत्किं वेत्थेत्यर्थः । नेति होवाचेतरः । तर्हि वेत्थ उ यथेमं लोकं पुनरापद्यन्ता ३ इति पुनरापद्यन्ते यथा पुनरागच्छन्तीमं लोकम् । नेति

षट्कोक्तिः । ननु फलवतोऽश्रवणात्कस्येदमाहुतिफलं न हि तत्स्वतन्त्रं संभवति तत्राऽऽह—तच्चेति । कर्तृवाचिपदाभावादाहुत्यपूर्वस्यैवोत्क्रान्त्यादिकार्यारम्भकत्वान्न तत्र कर्तृगामिकफलमुक्तमित्याशङ्क्याऽऽह—न हीति । किंच कारकाश्रयवत्त्वात्कर्मणो युक्तं तत्फलस्य कर्तृगामित्वमित्याह—साधनेति । स्वातन्त्र्यासंभवादाहुत्योः स्वकर्तृकयोरेव २५ गत्यादि विवक्षितं चेत्तर्हि कथं तत्र केवलाहुत्योर्गत्यादि गम्यते तत्राऽऽह—तत्रेति । अग्निहोत्रप्रकरणं सप्तम्यर्थः । अग्निहोत्रस्तुत्यर्थत्वात्प्रश्नप्रतिवचनरूपस्य संदर्भस्येति शेषः । भवत्वेवमग्निहोत्रप्रकरणस्थितिः प्रकृते तु क्रियायातं तत्राऽऽह—इह त्विति । किमिति विद्याप्रकरणे कर्मफलविज्ञानं विवक्ष्यते तत्राऽऽह—तद्द्वारेणेति । ब्राह्मणारम्भमुपपादितमुपसंहरति—एवमिति । संसारगत्युपसंहारेण कर्मविपाकस्य सर्वस्यैवोपसंहारः सिद्धो भवति तदतिरिक्तविपाकाभावादित्याह—कर्मकाण्डस्येति । यथोक्तं वस्तु दर्शयितुं ब्राह्मणमारभते चेत्तत्र किमित्याख्यायिका प्रणीयते ३० तत्राऽऽह—इत्येतद्द्वयमिति । सर्वमेव पूर्वोक्तं वस्तु दर्शयितुमिच्छन्वेदः सुखावबोधार्थमाख्यायिका करोतीत्यर्थः ।

यदा कदाचिदतिक्रान्ते काले वृत्तार्थद्योतित्वं निपातस्य दर्शयति—हशब्दइति । यशःप्रथनं विद्वत्सु स्वकीयविद्यासामर्थ्यख्यापनं प्रसिद्धविद्वज्जनविशिष्टत्वेनेति शेषः । क्वचिज्जयस्य प्राप्तत्वं गर्वे हेतुः । किमिति राजा श्वेतकेतुमागतमात्रं तदीयाभिप्रायमप्रतिपद्य तिरस्कुर्वन्निव संबोधितवानित्याशङ्क्याऽऽह—स राजेति । संबोध्य भर्त्सनं कृतवानिति शेषः । तदवद्योति पदमिह नास्तीत्याशङ्क्याऽऽह—भर्त्सनार्थेति । भो ३ इति प्रतिवचनमाचार्यं ३५ प्रत्युचितं न क्षत्रियं प्रति तस्य हीनत्वादित्याह—भो ३ इतीति । अप्रतिरूपवचने क्रोधं हेतूकरोति—क्रुद्धः सन्निति । पितुः सकाशात्तव लब्धानुशासनत्वे लिङ्गं नास्तीत्याशङ्क्याऽऽह—पृच्छेति ॥१॥

पदार्थमुक्त्वा वाक्यार्थमाह—समानेनेति । नाडीरूपेण साधारणेन मार्गेणाभ्युदयं गच्छतां यत्र मार्गविप्रतिपत्तिस्तत्किं जानासीति प्रश्नार्थः । विप्रतिपत्तिमेव विशदयति—तत्रेति । अधिकृतप्रजानिर्धारणार्था सप्तमी । प्रथमप्रश्नं निगमयति—यथेति । प्रश्नान्तरमादत्ते—तर्हीति । तदेव स्पष्टयति—यथेति । परलोकगताः

पुरुषवाचो भूत्वा समुत्थाय वदन्ती३ इति नेति हैवोवाच वेत्थो देवयानस्य वा पथः प्रतिपदं पितृयाणस्य वा यत्कृत्वा देवयानं वा पन्थानं प्रतिपद्यन्ते पितृयाणं वापि हि न ऋषेर्वचः श्रुतं द्वे सृती अशृणवं पितृणामहं देवानामुत मर्त्यानां ताभ्यामिदं विश्वमेजत्समेति यदन्तरा पितरं मातरं चेति नाहमत एकंचन वेदेति होवाच ॥२॥

अथैनं वसत्योपमन्त्रयांचक्रेऽनादृत्य वसतिं कुमारः प्रदुद्राव स आजगाम पितरं तं होवाचेति वाव किल नो भवान्पुराऽनुशिष्टानवोचदिति कथं सुमेध इति पञ्च मा प्रश्नान्राजन्यबन्धुरप्राक्षीत्ततो नैकंचन वेदेति कतमे त इतीम इति ह प्रतीकान्युदाजहार ॥३॥

हैवोवाच श्वेतकेतुः । वेत्थो यथाऽसौ लोकः एवं प्रसिद्धेन न्यायेन पुनः पुनरसकृत्प्रयद्भिर्म्रियमाणैर्यथायेन प्रकारेण न संपूर्यता३ इति न संपूर्यतेऽसौ लोकस्तत्किं वेत्थ । नेति हैवोवाच । वेत्थो यतिथ्यां यत्संख्याकायामाहुत्यामाहुतौ हुतायामापः पुरुषवाचः पुरुषस्य या वाक्सैव यासां वाक्ताः पुरुषवाचो भूत्वा पुरुषशब्दवाच्या वा भूत्वा । यदा पुरुषाकारपरिणतास्तदा पुरुषवाचो भवन्ति । समुत्थाय सम्यगुत्थायोद्भूताः सत्यो वदन्ती३ इति । नेति हैवोवाच । यद्येवं वेत्थ उ देवयानस्य पथो मार्गस्य प्रतिपदं प्रतिपद्यते येन सा प्रतिपत्तां प्रतिपदं पितृयाणस्य वा प्रतिपदं प्रतिपच्छब्दवाच्यमर्थमाह । यत्कर्म कृत्वा यथाविशिष्टं कर्म कृत्वेत्यर्थः । देवयानं वा पन्थानं मार्गं प्रतिपद्यन्ते पितृयाणं वा यत्कर्म कृत्वा प्रतिपद्यन्ते तत्कर्म प्रतिपदुच्यते तां प्रतिपदं किं वेत्थ देवलोकपितृलोकप्रतिपत्तिसाधनं किं वेत्थेत्यर्थः ।

अप्यत्रास्यार्थस्य प्रकाशकमृषेर्मन्त्रस्य वचो वाक्यं नः श्रुतमस्ति । मन्त्रोऽप्यस्यार्थस्य प्रकाशको विद्यत इत्यर्थः । कोऽसौ मन्त्र इति । उच्यते—द्वे सृती द्वौ मार्गावशृणवं श्रुतवानस्मि तयोरेका पितॄणां प्रापिका पितृलोकसंबद्धा तया सृत्या पितृलोकं प्राप्नोतीत्यर्थः । अहमशृणवमिति व्यवहितेन संबन्धः । देवानामुतापि देवानां संबन्धिन्यन्या देवान्प्रापयति सा । के पुनरुभाभ्यां सृतिभ्यां पितॄन्देवांश्च गच्छन्तीति । उच्यते—उतापि मर्त्यानां मनुष्याणां संबन्धिन्यौ मनुष्या एव हि सृतिभ्यां गच्छन्तीत्यर्थः । ताभ्यां सृतिभ्यामिदं विश्वं समस्तमेतदृगच्छत्समेति संगच्छते । ते च द्वे सृती यदन्तरा ययोरन्तरा यदन्तरा पितरं मातरं च मातापित्रोरन्तरा मध्य इत्यर्थः । कौ तौ मातापितरौ द्यावापृथिव्यावण्डकपाले । इयं वै माताऽसौ पितेति हि व्याख्यातं ब्राह्मणेन । अण्डकपालयोर्मध्ये संसारविषये एवैते सृती नाऽऽत्यन्तिकामृतत्वगमनाय । इतर आह—नाहमतोऽस्मात्प्रश्नसमुदायादेकंचनैकमपि प्रश्नं न वेद नाहं वेदेति होवाच श्वेतकेतुः ॥२॥

अथानन्तरमपनीय विद्याभिमानगर्वमेनं प्रकृतं श्वेतकेतुं वसत्या वसतिप्रयोजनेनोपमन्त्रयांचक्रे । इह वसन्तु भवन्तः पाद्यमर्घ्यं चाऽऽनीयतामित्युपमन्त्रणं कृतवान्राजा । अनादृत्य तां वसतिं कुमारः श्वेतकेतुः प्रदुद्राव प्रति-

प्रजाः पुनरिमं लोकं यथाऽऽगच्छन्ति तथा किं वेत्थेति योजना । प्रश्नान्तरप्रतीकमुपादत्ते—वेत्थेति । तद्व्याकरोति—एवमिति । प्रसिद्धो न्यायो जराज्वरादिमरणहेतुः प्रश्नान्तरमुत्थाप्य व्याचष्टे—वेत्थेत्यादिना । पुरुषशब्दवाच्या भूत्वा समुत्थाय वदन्तीति संबन्धः । कथमपां पुरुषशब्दवाच्यत्वं तदाह—यदेति । प्रश्नान्तरमवतारयति—यद्येवं वेत्थेति । पितृयाणस्य वा प्रतिपदं वेत्थेति संबन्धः । यत्कृत्वा प्रतिपद्यन्ते पन्थानं तत्कर्म प्रतिपदिति योजना । वाक्यार्थमाह—देवयानमिति । उक्तमर्थं संक्षिप्याऽऽह—देवलोकेति ।

मार्गद्वयमेव नास्ति त्वया तूत्प्रेक्षामात्रेण पृच्छयते तत्राऽऽह—अपीति । अत्रेति कर्मविपाकप्रक्रियोक्तिः । अस्यार्थस्य मार्गद्वयस्येत्येतत् । तेषामेव मार्गद्वयेऽधिकृतत्वमिति वक्तुं हीत्युक्तं तदेव स्फुटयति—ताभ्यामिति । विश्वं साध्यसाधनात्मकं संगच्छते गन्तव्यत्वेन गन्तृत्वेन चेति शेषः प्रकृतमन्त्रव्याख्यानग्रन्थो ब्राह्मणशब्दार्थः । यदन्तरेत्यादौ विवक्षितमर्थमाह—अण्डकपालयोरिति ॥२॥

श्वेतकेतोरभिमाननिवृत्तिद्योतनार्थं बहुवचनम् । राजन्यदत्तवसत्यनादरे हेतुमाह—कुमार इति ।

स होवाच तथा नस्त्वं तात जानीथा यथा यदहं किंच वेद सर्वमहं तत्तुभ्यमवोचं प्रेहि तु तत्र प्रतीत्य ब्रह्मचर्यं वत्स्याव इति भवानेव गच्छत्विति स आजगाम गौतमो यत्र प्रवाहणस्य जैवलेरास तस्मा आसनमाहृत्योदकमाहारयांचकाराथ हास्मा अर्घ्यं चकार तं होवाच वरं भगवते गौतमाय दद्म इति ॥४॥

५ स होवाच प्रतिज्ञातो म एष वरो यां तु कुमारस्यान्ते वाचमभाषथास्तां मे ब्रूहीति ॥५॥

स होवाच दैवेषु वै गौतम तद्वरेषु मानुषाणां ब्रूहीति ॥६॥

स होवाच विज्ञायते हास्ति हिरण्यस्यापात्तं गोअश्वानां दासीनां प्रवाराणां परिदानस्य मा नो भवान्बहोरनन्तस्यापर्यन्तस्याभ्यवदान्यो भूदिति स वै गौतम तीर्थेनेच्छासा इत्युपैम्यहं भवन्तमिति वाचा ह स्मैव पूर्व उपयन्ति स होपायनकीर्त्योवास ॥७॥

१० गतवान्पितरं प्रति। स चाऽऽजगाम पितरमागत्य चोवाच तं कथमिति वाव किलैवं किल नोऽस्मान्भवान्पुरा समावर्तनकालेऽनुशिष्टान्सर्वाभिर्विद्याभिरवोचोऽवोचविति। सोपालम्भं पुत्रस्य वचः श्रुत्वाऽऽह पिता। कथं केन प्रकारेण तव दुःखमुपजातं हे सुमेधः शोभना मेधा यस्येति सुमेधाः। शृणु मम यथा वृत्तं पञ्च पञ्चसंख्याकान्प्रश्नान्मा मां राजन्यबन्धू राजन्या बन्धवो यस्येति। परिभववचनमेतद्राजन्यबन्धुरिति। अप्राक्षीत्पृष्टवांस्ततस्तस्मादेकञ्चनैकमपि न वेद न विज्ञातवानस्मि। कतमे ते राज्ञाः पृष्टाः प्रश्ना इति पित्रोक्तः पुत्र इमे त इति ह प्रतीकानि मुखानि

१५ प्रश्नानामुदाजहारोदाहृतवान् ॥३॥

स होवाच पिता पुत्रं क्रुद्धमुपशमयंस्तथा तेन प्रकारेण नोऽस्मांस्त्वं हे तात वत्स जानीथा गृह्णीथा यथा यदहं किञ्च विज्ञानजातं वेद सर्वं तत्तुभ्यमवोचमित्येव जानीथाः। कोऽन्यो मम प्रियतरोऽस्ति त्वत्तो यदर्थं रक्षिष्ये। अहमप्येतस्य जानामि यद्राज्ञा पृष्टम्। तस्मात्प्रेह्यागच्छ तत्र प्रतीत्य गत्वा राज्ञि ब्रह्मचर्यं वत्स्यावो विद्यार्थमिति। स आह भवानेव गच्छत्विति नाहं तस्य मुखं निरीक्षितुमुत्सहे। स आजगाम गौतमो गोत्रतो गौतम

२० आरुणिर्यत्र प्रवाहणस्य जैवलेरासाऽऽसनमास्थायिका षष्ठ्येयं प्रथमास्थाने। तस्मै गौतमायाऽऽगतायाऽऽसनमनुरूपमाहृत्योदकं भृत्यैराहारयाञ्चकार। अथ हास्मा अर्घ्यं पुरोधसा कृतवान्मन्त्रवन्मधुपर्कं च। कृत्वा चैवं पूजां तं होवाच वरं भगवते गौतमाय तुभ्यं दद्म इति गोऽश्वादिलक्षणम् ॥४॥

स होवाच गौतमः प्रतिज्ञातो मे ममैष वरस्त्वयाऽस्यां प्रतिज्ञायां दृढो कुर्वात्मानं यां तु वाचं कुमारस्य मम पुत्रस्यान्ते समीपे वाचमभाषथाः प्रश्नरूपां तामेव मे ब्रूहि स एव नो वर इति ॥५॥

२५ स होवाच राजा दैवेषु वरेषु तद्वै गौतम यस्त्वं प्रार्थयसे मानुषाणामन्यतमं प्रार्थय वरम् ॥६॥

स होवाच गौतमो भवताऽपि विज्ञायते ह ममास्ति सः। न तेन प्रार्थितेन कृत्यं मम यं त्वं दित्ससि मानुषं वरम्। यस्मान्ममाप्यस्ति हिरण्यस्य प्रभूतस्यापात्तं प्राप्तं गोअश्वानामापात्तमस्तीति सर्वत्रानुषङ्गो दासीनां प्रवाराणां परिवाराणां परिधानस्य च। न च यन्मम विद्यमानं तत्त्वत्तः प्रार्थनीयं त्वया वा देयम्। प्रतिज्ञातश्च वरस्त्वया त्वमेव जानीषे यदत्र युक्तं प्रतिज्ञा रक्षणीया तवेति। मम पुनरयमभिप्रायो मा भून्नोऽस्मानन्यस्मानेव

३० एवं किलेति राजपराभवलिङ्गकं पितृवचसो मृषात्वं द्योत्यते। अज्ञानाधीनं दुःखं तवासंभावितमिति सूचयति—सुमेध इति ॥३॥

सत्यं किंचिदुक्तं किंचित्तु विज्ञानमन्यस्मै प्रियतमाय दातुं रक्षितमित्याशङ्क्याऽऽह—कोऽन्य इति। राज्ञा यत्पृष्टं तन्मया न विज्ञातं तथा च तस्मिन्विषये त्वया वञ्चितोऽस्मीत्याशङ्क्याऽऽह—अहमपीति। तर्हि तज्ज्ञानं कथं साध्यतामित्याशङ्क्याऽऽह—तस्मादिति ॥४॥

विवक्षितविद्यागौरवं विवक्षित्वाऽऽह—अस्यामिति। तदिति सामान्योक्त्या वरो निर्दिश्यते ॥५-६॥

३५ ममास्ति स इति यदुक्तं तदुपपादयति—यस्मादित्यादिना। न च यन्ममेत्यत्र तस्मादिति पठितव्यम्। किं तर्हि मया कर्तव्यमित्याशङ्क्याऽऽह—प्रतिज्ञातश्चेति। यत्तवाभिप्रेतं तदहं न करोमीत्याशङ्क्याऽऽह—ममेति। मा भूदित्यन्वयं दर्शयन्प्रतीकमादाय व्याचष्टे—नोऽस्मानिति। वदान्यो दानशीलो विभवे सत्यदाता कदर्य इति भेदः।

**स होवाच तथा नस्त्वं गौतम माऽपराधास्तव च पितामहा यथेयं विद्येतः पूर्वं न कस्मिँश्चन ब्राह्मण उवास तां त्वहं तुभ्यं वक्ष्यामि को हि त्वैवं ब्रुवन्तमर्हति प्रत्याख्यातुमिति ॥८॥**

**असौ वै लोकोऽग्निर्गौतम तस्यादित्य एव समिद्रश्मयो धूमोऽहरर्चिर्दिशोऽङ्गारा अवान्तरदिशो विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुत्यै सोमो राजा संभवति ॥९॥**

केवलान्प्रति भवान्सर्वत्र वदान्यो भूत्वाऽवदान्यो मा भूत्कदर्यो मा भूदित्यर्थः। बहोः प्रभूतस्यानन्तस्यानन्तफलस्ये- ५ त्येतत्। अपर्यन्तस्यापरिसमाप्तिकस्य पुत्रपौत्रादिगामिकस्येत्येतत्। ईदृशस्य वित्तस्य मां प्रत्येव केवलमदाता मा भूद्भवान्। न चान्यत्रादेयमस्ति भवतः। एवमुक्त आह—स त्वं वै हे गौतम तीर्थेन न्यायेन शास्त्रविहितेन विद्यां मत्त इच्छासा इच्छान्वाप्तुमित्युक्तो गौतम आह—उपैम्युपगच्छामि शिष्यत्वेनाहं भवन्तमिति। वाचा ह स्मैव किल पूर्व ब्राह्मणाः क्षत्रियान्विद्यार्थिनः सन्तो वैश्यान्वा क्षत्रिया वा वैश्यानापद्युपयन्ति शिष्यवृत्त्या ह्युपगच्छन्ति नोपायनशुश्रूषादिभिः। अतः स गौतमो होपायनकीर्त्योपगमनकीर्तनमात्रेणैवोवासोषितवान्नोपायनं चकार ॥७॥ १०

एवं गौतमेनाऽऽपदन्तर उक्ते स होवाच राजा पीडितं मत्वा क्षामयंस्तथा नोऽस्मान्प्रति माऽपराधा अपराधं मा कार्षीरस्मदीयोऽपराधो न ग्रहीतव्य इत्यर्थः। तव च पितामहा अस्मत्पितामहेषु यथाऽपराधं न जगृहुस्तथा पितामहानां वृत्तमस्मास्वपि भवता रक्षणीयमित्यर्थः। यथेयं विद्या त्वया प्रार्थितेतस्त्वत्संप्रदानात्पूर्वं प्राड्न कस्मिन्नपि ब्राह्मण उवासोषितवती तथा त्वमपि जानीषे सर्वदा क्षत्रियपरम्परयेयं विद्याऽऽगता सा स्थितिर्मयाऽपि रक्षणीया यदि शक्यत इत्युक्त दैवेषु गौतम तद्वरेषु मानुषाणां ब्रूहीति न पुनस्त्वयादेयो वर इतीतः १५ परं न शक्यते रक्षितुम्। तामपि विद्यामहं तुभ्यं वक्ष्यामि को ह्यन्योऽपि हि यस्मादेवं ब्रुवन्तं त्वामर्हति प्रत्याख्यातुं न वक्ष्यामीति। अहं पुनः कथं न वक्ष्ये तुभ्यमिति ॥८॥

असौ वै लोकोऽग्निर्गौतमेत्यादिचतुर्थः प्रश्नः प्राथम्येन निर्णीयते। क्रमभङ्गस्त्वेतन्निर्णयायत्तत्वादितर- प्रश्ननिर्णयस्य। असौ द्यौर्लोकोऽग्निर्हे गौतम द्युलोकेऽग्निदृष्टिरनग्नौ विधीयते यथा योषित्पुरुषयोस्तस्य द्युलोकाग्ने- रादित्य एव समित्समिन्धनात्। आदित्येन हि समिध्यतेऽसौ लोकः। रश्मयो धूमः समिध उत्थानसामान्यात्। २० आदित्याद्धि रश्मयो निर्गताः। समिधश्च धूमो लोक उत्तिष्ठति। अहरर्चिः प्रकाशसामान्यात्। दिशोऽङ्गारा उपशमसामान्यात्। अवान्तरदिशो विस्फुलिङ्गा विस्फुलिङ्गवद्विक्षेपात्। तस्मिन्नेतस्मिन्नेवंगुणविशिष्टे द्युलोकाग्नौ देवा इन्द्रादयः श्रद्धां जुह्वत्याहुतिद्रव्यस्थानीयां प्रक्षिपन्ति। तस्या आहुत्या आहुतेः सोमो राजा पितॄणां ब्राह्मणानां च संभवति। तत्र के देवाः कथं जुह्वति किंवा श्रद्धाख्यं हविरित्यत उक्तमस्माभिः संबन्धे। न त्वेवैनयोस्त्व-

परिशिष्टं भाग व्याकुर्वन्वाक्यार्थमाह—बहोरित्यादिना। मा प्रत्येवेति नियमस्य कृत्यं दर्शयति—न चेति। कोऽसौ २५ न्यायस्तत्राऽऽह—शास्त्रेति। उपसदनवाक्यं शास्त्रमित्युच्यते। गौतमो राजानं प्रति शिष्यत्ववृत्तिं कुर्वाणः शास्त्रार्थं विरोधमाचरतीत्याशङ्क्याऽऽह—वाचा हेति। आपदि समादधिकाद्वा विद्याप्राप्त्यसंभवावस्थायामित्यर्थः। उपायनमुप- गमन पादोपसर्पणमिति यावत् ॥७॥

विद्याराहित्यापेक्षया निहीनशिष्यभावोपगतिरापदन्तरम्। तथाशब्दार्थमेव विशदयति—तव चेति। सन्तु पितामहा यथा तथा किमस्माकमित्याशङ्क्याऽऽह—पितामहानामिति। किमिति तर्हीयं विद्या झटिति मह्यं नोप- ३० दिश्यते तत्राऽऽह—न कस्मिन्निति। तर्हि भवता सा स्थिती रक्ष्यतामहं तु यथागतं गमिष्यामीत्याशङ्क्याऽऽह—इतः परमिति। तवाहं शिष्योऽस्मीत्येवं ब्रुवन्त मत्तोऽन्योऽपि न वक्ष्यामीति यस्मान्न प्रत्याख्यातुमर्हति तस्मादहं पुनस्तुभ्यं कथ न वक्ष्ये किन्तु वक्ष्याम्येव विद्यामित्युक्तमुपपादयति—को हीत्यादिना ॥८॥

असावित्यादिना यतिथ्यामित्यादिचतुर्थप्रश्नस्य प्राथम्येन निर्णये क्रमभङ्गः स्यात्तत्र च कारण वाच्यमित्या- शङ्क्याऽऽह—क्रमभङ्गस्त्विति। मनुष्यजन्मस्थितिलयाना चतुर्थप्रश्ननिर्णयाधीनतया तस्य प्राधान्यात्प्राधान्ये सत्यर्थ- ३५ क्रममाश्रित्याविवक्षितस्य पाठक्रमस्य भङ्ग इत्यर्थः। इन्द्रादीना कर्मानधिकारित्वाद्द्युलोकस्य चाऽऽहवनीयत्वाप्रसिद्धया होमाधारत्वायोगात्प्रत्ययस्य च श्रद्धाया होम्यत्वानुपपत्तेस्तस्मिन्नित्यादि वाक्यमयुक्तमिति शङ्कते—तत्रेति। होमकर्म- सम्पर्थः। अस्य ब्राह्मणस्य संबन्धग्रन्थे समाधानमस्य चोद्यस्यास्माभिरुक्तमित्याह—अत इति। तदेव दर्शयितुमग्नि-

मुत्क्रान्तिमित्यादिपदार्थषट्कनिर्णयार्थमग्निहोत्र उक्तम्। ते वा एते अग्निहोत्राहुती हुते सत्यावुत्क्रामतः। ते अन्तरिक्षमाविशतः। ते अन्तरिक्षमाहवनीयं कुर्वाते वायुं समिधं मरीचीरेव शुक्रामाहुतिम्। ते अन्तरिक्षं तर्पयतः। ते तत उत्क्रामतः। ते दिवमाविशतः। ते दिवमाहवनीयं कुर्वाते आदित्यं समिधमित्येवमाद्युक्तम्।

तत्राग्निहोत्राहुती ससाधने एवोत्क्रामतः। यथेह यैः साधनैर्विशिष्टे ये ज्ञायेते आहवनीयाग्निसमिद्धू-
५ माङ्गारविस्फुलिङ्गाहुतिद्रव्यैस्ते तथैवोत्क्रामतोऽस्माल्लोकादमुं लोकम्। तत्राग्निरग्नित्वेन समित्समित्त्वेन धूमो धूमत्वेनाङ्गारा अङ्गारत्वेन विस्फुलिङ्गा विस्फुलिङ्गत्वेनाऽऽहुतिद्रव्यमपि पयआद्याहुतिद्रव्यत्वेनैव सर्गादावव्याकृतावस्थायामपि परेण सूक्ष्मेणाऽऽत्मना व्यवतिष्ठते। तद्विद्यमानमेव ससाधनमग्निहोत्रलक्षणं कर्मापूर्वेणाऽऽत्मना व्यवस्थितं सत्तत्पुनर्व्याकरणकाले तथैवान्तरिक्षादीनामाहवनीयाद्यग्न्यादिभावं कुर्वद्विपरिणमते। तथैवेदानीमप्यग्निहोत्राख्यं कर्म।

१० एवमग्निहोत्राहुत्यपूर्वविपरिणामात्मकं जगत्सर्वमित्याहुत्योरेव स्तुत्यर्थत्वेनोत्क्रान्त्याद्या लोकं प्रत्युत्थायित्वान्ताः षट् पदार्थाः कर्मप्रकरणेऽधस्तान्निर्णीताः। इह तु कर्तुः कर्मविवक्षायां द्युलोकाग्न्याद्यारभ्य पञ्चाग्निदर्शनमुत्तरमार्गप्रतिपत्तिसाधनं विशिष्टकर्मफलोपभोगाय विधित्सितमिति द्युलोकाग्न्यादिदर्शनं प्रस्तूयते। तत्र य आध्यात्मिकाः प्राणा इहाग्निहोत्रस्य होतारस्त एवाऽऽधिदैविकत्वेन परिणताः सन्त इन्द्रादयो भवन्ति त एव तत्र होतारो द्युलोकाग्नौ। ते चेहाग्निहोत्रस्य फलभोगायाग्निहोत्रं हुतवन्तः। त एव फलपरिणामकालेऽपि तत्फल-
१५ भोक्तृत्वात्तत्र तत्र होतृत्वं प्रतिपद्यन्ते तथा तथा विपरिणममाना देवशब्दवाच्याः सन्तः। अत्र च यत्पयोद्रव्यहोत्रप्रकरणे वृत्तं स्मारयति—न त्विति। किं तदुक्तमिति चेत्तदाह—तेवा इति। आहुत्योः स्वतन्त्रयोरुत्क्रान्त्यादि कथमित्याशङ्क्याऽऽह—तत्रेति।

यजमानस्य मृतिकालः सप्तम्यर्थः। ससाधनयोरेव तयोरुत्क्रान्तिर्न स्वतन्त्रयोरेवेत्येतदुपपादयति-यथेत्यादिना। इहेति जीवदवस्थोच्यते। नष्टानामग्न्यादीनामव्याकृतभावापन्नत्वेनाविशेषप्रसङ्गान्न तैः सहाऽऽहुत्योरुत्क्रान्त्यादिसिद्धि-
२० रित्याशङ्क्याऽऽह—तत्राग्निरिति। नाशादूर्ध्वमपि प्रातिस्विकशक्तिरूपेणाग्न्यादिरवतिष्ठते तथा चाविशेषप्रसङ्गाभावादाहुत्योः ससाधनयोरेवोत्क्रान्त्यादिसिद्धिरित्यर्थः। यथोक्तयोराहुत्योरुत्क्रान्त्यादिसमर्थनेनाग्निहोत्राद्यपूर्वस्य जगदारम्भकत्वमुक्तं भवतीत्याह—तद्विद्यमानमिति। विद्यमानमेव विशदयति—अपूर्वेणेति। अथ यथोदितया विधया कथमपि पूर्वकल्पीयं कर्म प्रलयदशायामव्याकृतात्मना स्थितं पुनर्जगदारभतां तथाऽपीदनीतनमग्निहोत्रादिक कर्म कथं जगदारम्भकं भविष्यतीत्याशङ्क्याऽऽह—तथैवेति। विमतमारम्भकं तच्छक्तिमत्त्वात्संप्रतिपन्नवदिति भावः।
२५ अग्निहोत्रप्रकरणस्यार्थं संगृहीतमुपसंहरति—एवमिति। उक्तमुपजीव्य प्रकृतब्राह्मणप्रवृत्तिप्रकार दर्शयति—इह त्विति। उत्तरमार्गप्रतिपत्तिसाधनं विधित्सितमिति संबन्धः। किमित्युत्तरमार्गप्रतिपत्तिस्तत्राऽऽह—विशिष्टेति। ब्राह्मणप्रवृत्तिमभिधायासौ वै लोकोऽग्निरित्यादिवाक्यप्रवृत्तिप्रकारमाह—इति द्युलोकेति। इत्थं ब्राह्मणे स्थिते सतीत्येतत्। भवत्वेवं तथाऽपि के देवा इति प्रश्नस्य किमुत्तरं तत्राऽऽह—तत्रेति। उक्तनीत्या पञ्चाग्निदर्शने प्रस्तुते सतीत्येतत्। इहेति व्यवहारभूमिग्रहः। कथं तेषां तत्र होतृत्वं तदाह—ते चेति। तथाऽपि कथं द्युलोकेऽग्नौ तेषां होतृत्वं
३० तदाह—त एवेति। तत्फलभोक्तृत्वादित्यत्र तच्छब्दोऽग्निहोत्रादिकर्मविषयस्तद्भोक्तृत्वं च प्राणानां जीवोपाधित्वादवधेयम्। तथा तथा द्युपर्जन्यादिसंबन्धयोग्याकारेणेति यावत्। के देवा इति प्रश्नो निर्णीतः संप्रत्यवशिष्टं प्रश्नद्वय निर्णेतुमाह—अत्र चेति। जीवदवस्थायामिति यावत्। सह कर्मेत्यत्र तच्छब्दो द्रष्टव्यः। अमुं लोकमाविशतीति

१. पञ्चाग्निविद्यायां प्रथमाहुतिः श्रद्धा सा च जीवस्य गुणः। अत्र तु अग्निहोत्राहुतिजन्यापूर्वमित्यर्थः। तत्कथमिति ब्रह्मसूत्रं "प्रथमेऽश्रवणादिति चेन्न ता एवह्युपपत्ते." । पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीत्यत्र आपः इत्युक्त्वा
३५ श्रद्धाशब्दार्थ. स्पष्टीकृतः श्रद्धापूर्वककर्मसमवायित्वात् कर्मसमवायिन्यः सोमाज्यपयःप्रभृतय. श्रद्धापदेनोच्यन्ते। त्रिवृत्करणश्रुत्या च आपः पञ्चभूतोपलक्षकाः ताभि. सहितो गच्छति न स्वतन्त्रः कर्त्ता वा आपो वा इत्यत्र सूत्रं "तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्त" इति देहाद्देहान्तरप्रतिपत्तौ अद्भिः सहैव जीवो गच्छति कुत आप पञ्चम्यामाहुतौ पुरुषवचसो भवन्ति इति प्रश्न. इति तु पञ्चम्यामाहुतौ इति प्रतिवचनम्। तथापि कथ जीव. परिवेष्टितो रंहति इत्यत्र सूत्रं "अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीते" इति। "अथ य इमे ग्रामे इष्टा-
४० पूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति" इति श्रुतेः।

**पर्जन्यो वा अग्निर्गौतम तस्य संवत्सर एव समिदभ्राणि धूमो विद्युदर्चिरशनिरङ्गारा ह्रादुनयो विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवाः सोम् राजानं जुह्वति तस्या आहुत्यै वृष्टिः संभवति ॥१०॥ अयं वै लोकोऽग्निर्गौतम तस्य पृथिव्येव समिदग्निर्धूमो रात्रिरर्चिश्चन्द्रमा अङ्गारा नक्षत्राणि विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवा वृष्टिं जुह्वति तस्या आहुत्या अन्न् संभवति ॥११॥**

मग्निहोत्रकर्माश्रयभूतमिहाऽऽहवनीये प्रक्षिप्तमग्निना भक्षितमदृष्टेन सूक्ष्मेण रूपेण विपरिणतं सह कर्त्रा यजमानेनामुं ५ लोकं धूमादिक्रमेणान्तरिक्षाद्द्युलोकमाविशति। ताः सूक्ष्मा आप आहुतिकार्यभूता अग्निहोत्रसमवायिन्यः कर्तृसहिताः श्रद्धाशब्दवाच्याः सोमलोके कर्तुः शरीरान्तरारम्भाय द्युलोकं प्रविशन्त्यो हूयन्ते इत्युच्यन्ते। तास्तत्र द्युलोकं प्रविश्य सोममण्डले कर्तुः शरीरमारभन्ते। तदेतदुच्यते देवाः श्रद्धां जुह्वति तस्या आहुत्यै सोमो राजा संभवतीति। "श्रद्धा वा आपः" इति श्रुतेः।

वेत्थ यतिथ्यामाहुत्यां हुतायामापः पुरुषवाचो भूत्वा समुत्थाय वदन्तीति प्रश्नस्तस्य च निर्णयविषयेऽसौ १० वै लोकोऽग्निरिति प्रस्तुतम्। तस्मादापः कर्मसमवायिन्यः कर्तुः शरीरारम्भिकाः श्रद्धाशब्दवाच्या इति निश्चीयते। भूयस्त्वादापः पुरुषवाच इति व्यपदेशो न त्वितराणि भूतानि न सन्तीति। कर्मप्रयुक्तश्च शरीरारम्भः। कर्म चाप्समवायि। ततश्चापां प्राधान्यं शरीरकर्तृत्वे। तेन चाऽऽपः पुरुषवाच इति व्यपदेशः। कर्मकृतो हि जन्मारम्भः सर्वत्र। तत्र यद्यप्यग्निहोत्राहुतिस्तुतिद्वारेणोत्क्रान्त्यादयः प्रस्तुताः षट्पदार्था अग्निहोत्रे तथाऽपि वैदिकानि सर्वाण्येव कर्माण्यग्निहोत्रप्रभृतीनि लक्ष्यन्ते। दाराग्निसंबद्धं हि पाङ्क्तं कर्म प्रस्तुत्योक्तम्—कर्मणा पितृलोक इति। १५ वक्ष्यति च—अथ ये यज्ञेन दानेन तपसा लोकाञ्जयन्तीति ॥९॥

पर्जन्यो वा अग्निर्गौतम द्वितीय आहुत्याधार आहुत्योरावृत्तिक्रमेण। पर्जन्यो नाम वृष्ट्युपकरणाभिमानी देवतात्मा। तस्य संवत्सर एव समित्। संवत्सरेण हि शरदादिभिर्ग्रीष्मान्तैः स्वावयवैर्विपरिवर्तमानेन पर्जन्योऽग्निर्दीप्यते। अभ्राणि धूमः। धूमप्रभवत्वाद्धूमवदुपलक्ष्यत्वाद्वा। विद्युदर्चिः। प्रकाशसामान्यात्। अशनिरङ्गाराः। उपशान्तकाठिन्यसामान्याभ्याम्। ह्रादुनयो ह्रादुनयः स्तनयित्नुशब्दा विस्फुलिङ्गाः। विक्षेपानेकत्वसामान्यात्। २० तस्मिन्नेतस्मिन्नित्याहुत्यधिकरणनिर्देशः। देवा इति त एव होतारः सोमं राजानं जुह्वति। योऽसौ द्युलोकाग्नौ श्रद्धायां हुतायामभिनिर्वृत्तः सोमः स द्वितीये पर्जन्याग्नौ हूयते। तस्याश्च सोमाहुतेर्वृष्टिः संभवति ॥१०॥

अयं वै लोकोऽग्निर्गौतम। अयं लोक इति प्राणिजन्मोपभोगाश्रयः क्रियाकारकफलविशिष्टः स तृतीयोऽग्निः। तस्याग्नेः पृथिव्येव समित्। पृथिव्या ह्ययं लोकोऽनेकप्राण्युपभोगसंपन्नया समिध्यते। अग्निर्धूमः। पृथिव्याश्रयोत्थानसामान्यात्। पार्थिवं हीन्धनद्रव्यमाश्रित्याग्निरुत्तिष्ठति। यथा समिदाश्रयेण धूमः। रात्रिरर्चिः। २५

सबन्धः। आवेशप्रकारमाह—धूमादीति। कथमेतावता किं पुनः श्रद्धाख्यं हविरिति प्रश्नो निर्णीतस्तत्राऽऽह—ताः सूक्ष्मा इति। तथाऽपि कथं जुह्वतीति प्रश्नस्य कथं निर्णयस्तत्राऽऽह—सोमलोक इति। तथाऽपि तस्या आहुतेः सोमो राजा संभवतीति कथमुच्यते तत्राऽऽह—तास्तत्रेति। निर्णीतेऽर्थे श्रुतिमवतारयति—तदेतदिति। कथं पुनरापः श्रद्धाशब्दवाच्या न हि लोके श्रद्धाशब्द तासु प्रयुञ्जते तत्राऽऽह—श्रद्धेति।

उपक्रमवशादप्यापोऽत्र श्रद्धाशब्दवाच्या इत्याह—वेत्थेति। अपामेव पुरुषशब्दवाच्याना शरीरारम्भकत्वात्र ३० भूतान्तराणामिति कृत्वा तस्य पञ्चभूतारब्धत्वाभ्युपगमभङ्गः स्यादिति चेन्नेत्याह—भूयस्त्वादिति। अपां पुरुषशब्दवाच्यत्वे हेत्वन्तरमाह—कर्मेति। अथाकर्मप्रयुक्तमपि प्रकृष्टं जन्मास्ति तत्कथमपा सर्वत्र पुरुषशब्दवाच्यत्वं तत्राऽऽह—कर्मकृतो हीति। अन्यथा तत्र तत्र सुखदु खप्रभेदापभोगासभवादिति भावः। यदि कर्मापूर्वशब्दवाच्य भूतसूक्ष्मं सर्वत्र शरीरारम्भकं कथ तर्हि पूर्वमग्निहोत्राहुत्योरेव व्यक्तजगदारम्भकत्वमुक्तं तत्राऽऽह—तत्रेति। लक्ष्यन्तेऽग्निहोत्राहुत्येति शेष.। लक्षणाया पूर्वोत्तरवाक्ययोर्गमकत्वमाह—दाराग्नीति ॥९॥ ३५

आद्यमाहुत्याधारमेव निरूप्याऽऽहुत्याधारान्तराणि क्रमेण निरूपयति—पर्जन्यो वा अग्निरित्यादिना। कुतोऽस्य द्वितीयत्वमिति शङ्कित्वोक्तम्—आहुत्योरिति। अस्ति खल्वभ्राणा धूमप्रभवत्वे गाथा 'धूमज्योतिःसलिलमरुता संनिपात. क्व मेघ' इति ॥१०॥

पुरुषो वा अग्निर्गौतम तस्य व्यात्तमेव समित्प्राणो धूमो वागर्चिश्चक्षुरङ्गाराः श्रोत्रं विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवा अन्नं जुह्वति तस्या आहुत्यै रेतः संभवति ॥१२॥

योषा वा अग्निर्गौतम तस्या उपस्थ एव समिल्लोमानि धूमो योनिरर्चिर्यदन्तः करोति तेऽङ्गारा अभिनन्दा विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति

५ तस्या आहुत्यै पुरुषः संभवति स जीवति यावज्जीवत्यथ यदा म्रियते ॥१३॥

अथैनमग्नये हरन्ति तस्याग्निरेवाग्निर्भवति समित्समिद्धूमो

समित्संबन्धप्रभवसामान्यात्। अग्नेः समित्संबन्धेन ह्यर्चिः संभवति। तथा पृथिवीसमित्संबन्धेन शर्वरी। पृथिवीछायां हि शार्वरं तम आचक्षते। चन्द्रमा अङ्गाराः। तत्प्रभवत्वसामान्यात्। अर्चिषो ह्यङ्गाराः प्रभवन्ति तथा रात्रौ चन्द्रमाः। उपशान्तत्वसामान्याद्वा। नक्षत्राणि विस्फुलिङ्गाः। विस्फुलिङ्गवद्विक्षेपसामान्यात्। तस्मिन्ने-
१० तस्मिन्नित्यादि पूर्ववत्। वृष्टिं जुह्वति तस्या आहुतेरन्नं संभवति। वृष्टिप्रभवत्वस्य प्रसिद्धत्वाद्व्रीहियवादेरन्नस्य ॥११॥

पुरुषो वा अग्निर्गौतम प्रसिद्धः शिरःपाण्यादिमान्पुरुषश्चतुर्थोऽग्निस्तस्य व्यात्तं विवृतं मुखं समित्। विवृतेन हि मुखेन दीप्यते पुरुषो वचनस्वाध्यायादौ। यथा समिधाऽग्निः प्राणो धूमस्तदुत्थानसामान्यात्। मुखाद्धि प्राण उत्तिष्ठति। वाक्शब्दोऽर्चिर्व्यञ्जकत्वसामान्यात्। अर्चिश्च व्यञ्जकम्। तथा च वक्शब्दोऽभिधेयव्यञ्जकः। चक्षुरङ्गारा उपशमसामान्यात्प्रकाशाश्रयत्वाद्वा। श्रोत्रं विस्फुलिङ्गा विक्षेपसामान्यात्। तस्मिन्नन्नं जुह्वति। ननु
१५ नैव देवा अन्नमिह जुह्वतो दृश्यन्ते। नैष दोषः। प्राणानां देवत्वोपपत्तेः। अधिदैवमिन्द्रादयो देवास्त एवाध्यात्मं प्राणास्ते चान्नस्य पुरुषे प्रक्षेप्तारः। तस्या आहुते रेतः संभवति। अन्नपरिणामो हि रेतः ॥१२॥

योषा वा अग्निर्गौतम। योषेति स्त्री पञ्चमो होमाधिकरणोऽग्निस्तस्या उपस्थ एव समित्। तेन हि सा समिध्यते। लोमानि धूमस्तदुत्थानसामान्यात्। योनिरर्चिर्वर्णसामान्यात्। यदन्तः करोति तेऽङ्गारा अन्तः करणं मैथुनव्यापारस्तेऽङ्गारा वीर्योपशमहेतुत्वसामान्यात्। वीर्याद्युपशमकारणं मैथुनम्। तथाऽङ्गारभावोऽग्नेरुपशम-
२० कारणम्। अभिनन्दाः सुखलवाः क्षुद्रत्वसामान्याद्विस्फुलिङ्गाः। तस्मिन्रेतो जुह्वति। तस्या आहुतेः पुरुषः संभवति। एवं द्युपर्जन्यायंलोकपुरुषयोषाग्निषु क्रमेण हूयमानाः श्रद्धासोमवृष्ट्यन्नरेतोभावेन स्थूलतारतम्यक्रममापद्यमानाः श्रद्धाशब्दवाच्या आपः पुरुषशब्दमारभन्ते। यः प्रश्नश्चतुर्थो वेत्थ यतिथ्यामाहुत्यां हुतायामापः पुरुषवाचो भूत्वा समुत्थाय वदन्ती३ इति स एष निर्णीतः। पञ्चम्यामाहुतौ योषाग्नौ हुताया रेतोभूता आपः पुरुषवाचो भवन्तीति। स पुरुष एवं क्रमेण जातो जीवति। कियन्तं कालमिति। उच्यते—यावज्जीवति यावदस्मि-
२५ ञ्छरीरे स्थितिनिमित्तं कर्म विद्यते तावदित्यर्थः। अथ तत्क्षये यदा यस्मिन्काले म्रियते ॥१३॥

अथ तदैनं मृतमग्नयेऽन्त्यर्थमेवान्त्याहुत्यै हरन्ति ऋत्विजस्तस्याऽऽहुतिभूतस्य प्रसिद्धोऽग्निरेव होमाधि-

एतल्लोकपृथिव्योर्देहदेहिभावेन भेद इत्याह—पृथिवीछायां हीति। 'एतानि हि चन्द्रं रात्रेस्तमसो मृत्योर्बिभ्यतमत्यपारयन्' इति श्रुते रात्रेस्तमस्त्वावगमात्तस्य च मृत्युर्वै तमश्छाया मृत्युमेव तत्तमश्छाया तरतीति भूछायात्वं श्रुतम्। तमो राहुस्थानं तच्च भूच्छायेति हि प्रसिद्धम्—

३० "उद्धृत्य पृथिवीच्छायां निर्मितं मण्डलाकृति। स्वर्भानोस्तु बृहत्स्थानं तृतीयं यत्तमोमयम् ॥"

इति स्मृतेरित्यर्थः। सोमचन्द्रमसोराश्रयाश्रयिभावेन भेदः ॥११॥

योग्यानुलब्धिविरोधमाशङ्कते—नन्विति। इहेति पुरुषाग्निनिर्देशः। शङ्कितं विरोधं निराकरोति—नैष दोष इति। उपपत्तिमेव दर्शयति—अधिदैवमिति ॥१२॥

तस्या आहुत्यै पुरुषः संभवतीति वाक्यं व्याकरोति—एवमिति। पञ्चाग्निदर्शनस्य चतुर्थप्रश्ननिर्णायकत्वेन
३५ प्रकृतोपयोगं दर्शयति—यः प्रश्न इति। निर्णयप्रकारमनुवदति—पञ्चम्यामिति। यथोक्तनीत्या जाते देहे कथं पुरुषस्य जीवनकालो नियम्यते तत्राऽऽह—स पुरुष इति। पञ्चाग्निक्रमेण जातोऽग्निलयश्चाहं तेनान्त्यात्मेति ध्यानमिदं षष्ठमग्निमन्त्याहुत्यधिकरणं प्रस्तौति—अथेति। जीवननिमित्तकर्मविषयस्तच्छब्दः ॥१३॥

---

1. अथेनमग्नये हरन्ति इत्यादौ संशयः अत्र द्युपर्जन्यपृथिवीपुरुषयोषिदाख्यपञ्चाग्नीनुक्त्वा षष्ठमप्यग्निं वाजसनेयिनः पठन्ति। छन्दोगास्तु पञ्चैव पठन्ति तत्र किं विद्याभेदः उत अभेदः इति संशये अभेद इति सिद्धान्तः

**धूमोऽर्चिरर्चिरङ्गारा अङ्गारा विस्फुलिङ्गा विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवाः पुरुषं जुह्वति तस्या आहुत्यै पुरुषो भास्वरवर्णः संभवति ॥१४॥**

**ते य एवमेतद्विदुर्ये चामी अरण्ये श्रद्धा सत्यमुपासते तेऽर्चिरभिसंभवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान्षण्मासानुदङ्ङादित्य एति मासेभ्यो देवलोक देवलोकादादित्यमादित्याद्वैद्युतं तान्वैद्युतान्पुरुषो मानस एत्य ब्रह्मलोकान्गमयति ते तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति तेषां न पुनरावृत्तिः ॥१५॥** ५

करणं न परिकल्प्योऽग्निः। प्रसिद्धैव समित्समिद्धूमो धूमोऽर्चिरर्चिरङ्गारा अङ्गारा विस्फुलिङ्गा विस्फुलिङ्गा यथाप्रसिद्धमेव सर्वमित्यर्थः। तस्मिन्पुरुषमन्त्याहुतिं जुह्वति तस्या आहुत्या आहुतेः पुरुषो भास्वरवर्णोऽतिशयदीप्तिमान्निषेकादिभिरन्त्याहुत्यन्तैः कर्मभिः संस्कृतत्वात्संभवति निष्पद्यते ॥१४॥

इदानीं प्रथमप्रश्ननिराकरणार्थमाह—ते। के। य एवं यथोक्तं पञ्चाग्निदर्शनमेतद्विदुः। एवं शब्दादग्निसमिद्धूमार्चिरङ्गारविस्फुलिङ्गश्रद्धादिविशिष्टाः पञ्चाग्नयो निर्दिष्टास्तानेवमेतान्पञ्चाग्नीन्विदुरित्यर्थः। नन्वग्निहोत्राहुतिदर्शनविषयमेवैतद्दर्शनम्। तत्र ह्युक्तमुत्क्रान्त्यादिपदार्थषट्कनिर्णये दिवमेवाऽऽहवनीयं कुर्वाते इत्यादि। इहाप्यमुष्य लोकस्याग्नित्वमादित्यस्य च समित्त्वमित्यादि बहु साम्यम्। तस्मात्तच्छेषमेवैतद्दर्शनमिति। न, यतिथ्यामिति प्रश्नप्रतिवचनपरिग्रहात्। यतिथ्यामित्यस्य प्रश्नस्य प्रतिवचनस्य यावदेव परिग्रहस्तावदेवैवंशब्देन परामृष्टुं युक्तम्। अन्यथा प्रश्नानर्थक्यान्निर्ज्ञातत्वाच्च संख्याया अग्नय एव वक्तव्याः। अथ निर्ज्ञातमप्यनूद्यते। १५

वक्ष्यमाणकीटादिदेहव्यावृत्तये भास्वरवर्णविशेषणम्। दीप्त्यतिशयवत्त्वे हेतुमाह—निषेकादिभिरिति ॥१४॥

पञ्चाग्निविदो गतिं विवक्षुरुत्तरग्रन्थमवतारयति—इदानीमिति। ये विदुस्तेऽर्चिषमभिसम्भवन्तीति सम्बन्धः। एवंशब्दस्य प्रकृतपञ्चाग्निपरामर्शित्वं स्फुटीकर्तुं चोदयति—नन्विति। एवमेतद्विदुरिति श्रुतमेतद्दर्शनमित्युक्तं तदेवेदमिति प्रत्यभिज्ञापकं दर्शयति—तत्र हीति। आदिपदमादित्य समिदमित्यादि संग्रहीतुं, रश्मीनां धूमत्वमह्नोऽर्चिष्ट्वमित्यादि ग्रहीतुं द्वितीयमादिपदम्। प्रत्यभिज्ञाफलमाह—तस्मादिति। प्रश्नप्रतिवचनविषयस्यैव प्रकृतस्यैवंशब्देन परामर्शान्न २० षट्प्रश्नीयं दर्शनमिह परामृष्टमिति परिहरति—नेत्यादिना। संगृहीतं परिहारं विवृणोति—यतिथ्यामित्यस्येति। व्यधिकरणे षष्ठ्यौ। यावदेव वस्तुपरिग्रहो विषय इत्यर्थः। षट्प्रश्नीयमेव व्यवहितं दर्शनमत्र परामृष्टं चेत्तदा यतिथ्यामिति प्रश्नो व्यर्थः स्यात्। षट्प्रश्नीनिर्णीतदर्शनशेषभूतदर्शनस्य प्रश्नादृते प्रतिवचनसम्भवादित्याह—अन्यथेति।

---

भूयसो वेदराशेः साम्यात्। अपि चायमनुवाद एव अग्नौ अग्नित्वस्य स्वभावसिद्धत्वात् नात्र चिन्तनविधिः—३-३-७ २५

१. ते य एवमेतद्विदुर्ये चामी अरण्ये श्रद्धा सत्यमुपासते इति श्रुतिवाक्यं गीताटीकायां श्रीमधुसूदनसरस्वत्यः व्याकुर्वन्ति—( ६-४० ) अत्राविशेषेण पञ्चाग्निविद्याविदामिव अतत्क्रतूनां श्रद्धासत्यवतां मुमुक्षूणामपि देवयानमार्गेण ब्रह्मलोकप्राप्तिवचनात् श्रवणादिपरायणस्य च योगभ्रष्टस्य श्रद्धावित्तो भूत्वेत्यनेन श्रद्धायाः प्राप्तत्वात् ब्रह्मलोकोऽस्त्येव। सत्यशब्दस्यानृतवर्जनरूपत्वात्। सत्यं ज्ञानमनन्तं ब्रह्मेति श्रुतेः सत्यशब्दस्य ब्रह्मपरत्वेऽपि वेदान्तश्रवणादेरपि सत्यब्रह्मचिन्तनरूपत्वात् अतत्क्रतुत्वेऽपि पञ्चाग्निविदामिव ब्रह्मलोकप्राप्ति- ३० संभवात्। तथा च संन्यासश्रद्धासत्यब्रह्मविचाराणामन्यतमेनापि ब्रह्मलोकः किमुत समुदितेनेति। स्मर्यते च—
स्नातं तेन समस्ततीर्थसलिले सर्वापि दत्तावनिर्यज्ञानां च कृतं सहस्रमखिला देवाश्च संपूजिताः।
संसाराच्च समुद्धृताः स्वपितरस्त्रैलोक्यपूज्योऽप्यसौ यस्य ब्रह्मविचारणे क्षणमपि स्थैर्यं मनः प्राप्नुयात्॥
—गी०, मधुसूदनीटीका ६.४०

२. अत्र पञ्चाग्निविद्यामवलम्ब्य ब्रह्मसूत्रेषु विचाराः कृताः तथाहि—जीवः लिङ्गशरीरसहितः पूर्वदेहं विहाय ३५ देहान्तरं प्रतिपद्यमानः देहारम्भकैः भूतसूक्ष्मैः संपरिष्वक्त एव गच्छति। कुतः वेत्थ पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति इति प्रश्नस्योत्तरमुक्त्वा इति तु पञ्चम्यामाहुतावापः पुरुषवचस इति निर्णीतम् (ब्र. सू. ३-१-१) तत्रापि अग्निहोत्रादिजन्यापूर्वाणि कर्मणा सोमाज्यपयःप्रभृतिभिः जलप्रचुरैः कृतत्वात् तज्जन्यापूर्वाणां आप इत्युक्तिः अप्सहितपञ्चभूतसूक्ष्मैरित्यर्थः। तत्र च श्रद्धां जुह्वति इति श्रुतौ श्रद्धाशब्दः जलपरः जल-

यथाप्राप्तस्यैवानुवदनं युक्तं न त्वसौ लोकोऽग्निरिति। अथोपलक्षणार्थः तथाऽप्याद्येनान्त्येन चोपलक्षणं युक्तम्। श्रुत्यन्तराच्च। समाने हि प्रकरणे छान्दोग्यश्रुतौ पञ्चाग्नीन्वेदेति पञ्चसंख्याया एवोपादानादनग्निहोत्रशेषमेतत् पञ्चाग्निदर्शनम्। यत्त्वग्निसमिदादिसामान्यं तदग्निहोत्रस्तुत्यर्थमित्यवोचाम। तस्मान्नोत्क्रान्त्यादिपदार्थषट्क-परिज्ञानादर्चिरादिप्रतिपत्तिः। एवमिति प्रकृतोपादानेनार्चिरादिप्रतिपत्तिविधानात्।

५ के पुनस्ते य एवं विदुर्गृहस्था एव। ननु तेषां यज्ञादिसाधनेन धूमादिप्रतिपत्तिर्विधित्सिता। न, अनेवं-विदामपि गृहस्थानां यज्ञादिसाधनोपपत्तेः। भिक्षुवानप्रस्थयोश्चारण्यसंबन्धेन ग्रहणात्। गृहस्थकर्मसंबद्धत्वाच्च

किञ्च पूर्वस्मिन्ग्रन्थे प्रचयशिष्टतया पञ्चत्वसंख्याया निश्चितत्वात्तदवच्छिन्ना. साम्पदिकाग्नय एवात्रैवंशब्देन परा-परामृष्टुमुचिता इत्याह—निर्ज्ञातत्वाच्चेति। अग्निहोत्रप्रकरणे निर्ज्ञातमेवाग्न्यादि पूर्वग्रन्थेऽप्यनूद्यते। तथा चाग्नि-होत्रदर्शनमव्यवहितमेवंशब्देन किं न परामृष्टमिति शङ्कते—अथेति। अग्निहोत्रदर्शनं पूर्वग्रन्थेऽनूद्यते चेत्तत्प्रकरणे
१० प्राप्तं रूपमनतिक्रम्यैवान्तरिक्षादेरप्यत्रानुवदनं स्यान्न तु तद्वैपरीत्येनानुवदनं युक्तम्। अनुवादस्य पुरोवादसापेक्षत्वात्। न चात्रान्तरिक्षाद्यनूद्यते। तस्मादेवंशब्दो नाग्निहोत्रपरामर्शीति परिहरति—यथाप्राप्तस्येति। द्युलोकादिवादस्यान्त-रिक्षाद्युपलक्षणार्थत्वात्पूर्वस्यानुवादत्वसम्भवादेवंशब्दस्याग्निहोत्रविषयत्वसिद्धिरिति चोदयति—अथेति। प्रापकाभावा-दुपलक्षणपक्षायोगेऽप्यङ्गीकृत्य पञ्चाग्निनिर्देशवैयर्थ्येन दूषयति—तथाऽपीति। इतश्च स्वतन्त्रमेव पञ्चाग्निदर्शनमेवशब्द-परामृष्टमित्याह—श्रुत्यन्तराच्चेति। समिदादिसाम्यदर्शनादग्निहोत्रदर्शनशेषभूतमेवैतद्दर्शनमित्युक्तमनूद्य दूषयति—
१५ यत्त्वित्यादिना। अवोचामाग्निहोत्रस्तुत्यर्थत्वादग्निहोत्रस्यैव कार्यमित्युक्तमित्यत्रेति शेषः। एवशब्देनाग्निहोत्रपरा-मर्शासम्भवे फलितमाह—तस्मादिति। तच्छब्दार्थमेव स्फुटयति—एवमितीति। प्रकृत पञ्चाग्निदर्शनं तच्च स्वतन्त्र-मित्युक्त तद्वतामर्चिरादिप्रतिपत्तिर्न केवलकर्मिणामित्यर्थः।

प्रश्नपूर्वकं वेदितृविशेषं निर्दिशति—के पुनरित्यादिना। गृहस्थानां यज्ञादिना पितृयाणप्रतिपत्तेर्वक्ष्यमाणत्वान्न देवयाने पथि प्रवेशोऽस्तीति शङ्कते—नन्विति। पञ्चाग्निविदा गृहस्थाना देवयाने पथ्यधिकारस्तद्रहिताना तु तेषामेव
२० यज्ञादिना पितृयाणप्राप्तिरिति विभागोपपत्तेर्न वाक्यशेषविरोधोऽस्तीति समाधत्ते—नेत्यादिना। एवं विदुरिति सामान्य-वचनात्परिव्राजकादेरप्यत्र ग्रहणं स्यादिति चेन्नेत्याह—भिक्षुवानप्रस्थयोश्चेति। विधान्तरेण तयोरुत्तरमार्गे प्रवेशाभिधानात् पञ्चाग्निविषयत्वेन ग्रहणं पुनरुक्तेरित्यर्थः। गृहस्थानामेव पञ्चाग्निविदा तत्र ग्रहणमित्यत्र हेत्वन्तरमाह—गृहस्थेति।

---

प्रधानत्वात् हविषाम्। प्राणगतेश्च तदाश्रयाः पञ्चभूतसूक्ष्माश्च गच्छन्तीत्युक्तम्।

(१) इतः स्वर्गं गताना तं देवा भक्षयन्ति इत्युक्तं मूले एवं सति स्वर्गाय कर्मकरणं नोपपद्यते गन्तॄणां वधप्रसङ्गात्
२५ इति चेन्न अत्र भक्षणं न चर्वणं अपितु स्वर्गगामिभिस्सह देवानां सुखविहरणम्–तदुक्त "भाक्तं वाऽनात्म-वित्त्वात्" इत्यादिना। एते कर्मिणः देवाना पशुवदुपकुर्वन्ति। तस्मात् देवा भक्षयन्तीत्युक्तम्।

(२) स्वर्गभोगानन्तरं प्रत्यागच्छन्तः स्वर्गार्थकर्मण फलं समग्र भुक्त्वा अन्येनाभुक्तफलेन कर्मणा इम लोकं प्रत्यवरोहन्ति न तु स्वर्गार्थकर्मावशेषेण, प्राप्यान्तं कर्मणस्तस्य यत्किञ्चेह करोत्ययमिति श्रुतेः।

(३) ये तु इष्टादिकर्म न कुर्वन्ति ते न स्वर्गं गच्छन्ति अपि तु इहैव तृतीय पन्थानमाश्रयन्ति—ये वै के च
३० अस्माल्लोकात्प्रयन्ति ते सर्वे स्वर्गं गच्छन्ति इति श्रुतौ सर्वे अधिकारिण इत्यर्थः।

(४) अथैतमेवाध्वान प्रतिपद्यन्ते यथेतमाकाशं आकाशाद्वायुमित्यादौ आकाशप्रतिपत्तिः आकाशसाम्यमेव अदृश्यरूपाः आकाशे भवन्ति न तु आकाशमेव भवन्ति इति श्रुत्यर्थः।

(५) तत्रैव व्रीह्यादिभावप्रतिपत्त्यनन्तरं "अतो वै खलु दुर्निष्प्रपतरं" इति श्रूयते तदनेन व्रीहिभावप्रतिपत्तेः पूर्वं सुखेन शीघ्रमेवावरोहण सिद्धम्। व्रीह्यादिभावानन्तरं पुरुषशरीरप्राप्तौ महान् विलम्ब सोढव्य वृष्ट्या
३५ सह भूमौ पतता समुद्रादिषु पतनसंभवात् मत्स्यादिभिर्भक्षणसंभवाच्च। अतः परमेव विलम्बेन रेतस्सिग्-भावापत्तिरिति व्रीह्यादिसंसृष्टानामनुशयिना व्रीहीणा छेदनेन भक्षणेन च न व्यथा भवति समुग्धावस्थाया स्थितत्वात् व्रीहिरूपेण कर्मवशात् जन्मप्राप्ताना तु भवत्येव दुःखं इमे तु केवल संश्लेषभाजः इत्युक्तम्। न च पशुहिंसादियुक्तत्वेनाशुद्धेन यागादिना स्वर्गं गत्वा अवरोहता मुख्यमेव व्रीह्यादिजन्मास्तु प्रतिषिद्ध-हिंसाकर्तृत्वात् इति वाच्य विहितहिंसासु निषेधाप्रसरात् विशेषशास्त्रेण सामान्यशास्त्रबाधात् तदुक्तं—
४० अशुद्धमिति चेन्न शब्दादिति।

पञ्चाग्निदर्शनस्य। अतो नापि ब्रह्मचारिण एवं विदुरिति गृह्यन्ते। तेषां तूत्तरे पथि प्रवेशः स्मृतिप्रामाण्यात्—

"अष्टाशीतिसहस्राणामृषीणामूर्ध्वरेतसाम्। उत्तरेणार्यम्णः पन्थास्तेऽमृतत्वं हि भेजिरे" इति।

तस्माद्ये गृहस्था एवमग्निजोऽहमग्न्यपत्यमित्येवं क्रमेणाग्निभ्यो जातोऽग्निरूप इत्येवं ये विदुस्ते च ये चामी अरण्ये वानप्रस्थाः परिव्राजकाश्चारण्यनिष्ठाः श्रद्धां श्रद्धायुक्ताः सन्तः सत्यं ब्रह्म हिरण्यगर्भात्मानमुपासते न पुनः श्रद्धां चोपासते ते सर्वेऽर्चिरभिसंभवन्ति। ५

यावद्गृहस्थाः पञ्चाग्निविद्यां सत्यं वा ब्रह्म न विदुस्तावच्छ्रद्धाद्याहुतिक्रमेण पञ्चम्यामाहुतौ हुतायां ततो योषाग्नेर्जाताः पुनर्लोकं प्रत्युत्थायिनोऽग्निहोत्रादिकर्मानुष्ठातारो भवन्ति। तेन कर्मणा धूमादिक्रमेण पुनः पितृलोकं पुनः पर्जन्यादिक्रमेणेममावर्तन्ते। पुनर्योषाग्नेर्जाताः पुनः कर्म कृत्वेत्येवमेव घटीयन्त्रवद्गत्यागतिभ्यां पुनः पुनरावर्तन्ते। यदा त्वेवं विदुस्ततो घटीयन्त्रभ्रमणाद्विनिर्मुक्ताः सन्तोऽर्चिरभिसंभवन्ति। अर्चिरिति नाग्निज्वालामात्रं किं तर्ह्यर्चिरभिमानिन्यर्चिःशब्दवाच्या देवतोत्तरमार्गलक्षणा व्यवस्थितैव तामभिसंभवन्ति। न हि परिव्राजकानामग्न्यर्चिषैव साक्षात्सम्बन्धोऽस्ति। तेन देवतैव परिगृह्यतेऽर्चिःशब्दवाच्या। अतोऽहर्देवताम्। मरणकालनियमानुपपत्तेरहःशब्दोऽपि देवतैव। आयुषः क्षये हि मरणम्। न ह्येवंविदाऽहन्येव मर्तव्यमित्यहर्मरणकालो नियन्तुं शक्यते। न च रात्रौ प्रेताः सन्तोऽहः प्रतीक्षन्ते। "स यावत्क्षिप्येन्मनस्तावदादित्यं गच्छति" इति श्रुत्यन्तरात्। १०

ब्रह्मचारिणां तर्हीह ग्रहणं भविष्यति नेत्याह—अत इति। पञ्चाग्निदर्शनस्य गृहस्थकर्मसम्बन्धादेवेत्येतत्। कथं तर्हि नैष्ठिकब्रह्मचारिणा देवयाने पथि प्रवेशस्तत्राऽऽह—तेषां त्विति। अर्यम्णः सम्बन्धी यः पन्थास्तमासाद्य तेनोत्तरेण पथा ते यथोक्तसंख्या ऋषयः सापेक्षममृतत्वं प्राप्ता इति स्मृत्यर्थः। आश्रमान्तराणां पञ्चाग्निविषयत्वेनाग्रहणे फलितमाह—तस्मादिति। अग्निजत्वे फलितमाह—अग्न्यपत्यमिति। अग्निजत्वं साधयति—एवमिति। अग्न्यपत्यत्वे किं स्यात्तदाह—अग्नीति। इत्येवं ये गृहस्था विदुस्ते चेति योजना। अरण्यं स्त्रीजनासंकीर्णो देशः। परिव्राजकाश्चेति त्रिदण्डिनो गृह्यन्तेऽन्येषामेषणाभ्यो व्युत्थितानां सम्यग्ज्ञाननिष्ठाना देवयाने पथ्यप्रवेशादाश्रमात्रनिष्ठा वा तेऽपि गृह्येरन्निति द्रष्टव्यम्। श्रद्धाऽपि स्वयमुपास्या कर्मत्वश्रवणादित्याशङ्क्य प्रत्ययमात्रस्य सापेक्षत्वादुपास्यत्वानुपपत्तेर्मैवमित्याह—न पुनरिति। सर्वे पञ्चाग्निविदः सत्यब्रह्मविदश्चेत्यर्थः। १५ २०

विनाऽपि विद्याबलमर्चिरभिसम्पत्तिः स्यादिति चेन्नेत्याह—यावदिति। कर्म कृत्वा लोकं प्रत्युत्थायिन इति पूर्वेण सम्बन्धः केवलकर्मिणां। देवयानमार्गप्राप्तिर्नास्तीत्युक्तं निगमयति—इत्येवमेवेति। विदुषामेव देवयानप्राप्तिमुपसंहरति—यदा त्विति। नन्वर्चिषो ज्वालात्मनोऽस्थैर्यात्तदभिसम्पत्तिर्न फलाय कल्पते तत्राऽऽह—अर्चिरितीति। अर्चिःशब्देन यथोक्तदेवताग्रहे लिङ्गमाह—न हीति। अतोऽर्चिर्देवताया. सकाशादिति यावत्। अहःशब्दस्य कालविषयत्वमुक्तदोषाभावादिति चेन्नेत्याह—मरणेति। नियमाभावमेव व्यनक्ति—आयुष इति। विद्वद्विषये नियममाशङ्क्याऽऽह—न हीति। ननु रात्रौ मृतोऽपि विद्वानहरपेक्ष्य फली सम्पत्स्यते नेत्याह—न चेति। २५

---

१. अर्चिरिति—अत्र सूत्रम्—आतिवाहिकास्तल्लिङ्गात् (४-३-४) अर्चिरादिपदेन तत्तदभिमानिन्यो देवता विवक्षिताः। न ज्वालादिमात्र तल्लिङ्गात् "चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति" इति चेतनस्य गमयितृत्वं वदति। तदेव लिङ्गं इतरेषामर्चिरादीना चेतनत्वे। न चैतत्तन्मात्रविषयं प्राप्तमानवत्वनिवृत्तिपरत्वाद्विशेषणस्येति। अत्र ब्रह्मलोकान् गमयति इति श्रूयते। छान्दोग्ये तु स एनान् ब्रह्म गमयति इति श्रूयते समानप्रकरणे। तत्र विचार. (ब्र० ४-३-७) अत्र ब्रह्मपदेन हिरण्यगर्भाख्य सत्यलोकस्थं ब्रह्म ग्राह्यमुत परं ब्रह्मेति सन्देहे सिद्धान्त "कार्यं बादरिरस्य गत्युपपत्ते"। कार्यमेव ब्रह्म ग्राह्यं तस्यैव गन्तव्यत्वमुपपद्यते। मुख्य चेत् तस्य सर्वगतत्वात् मार्गेण गन्तव्यत्वानुपपत्ते। "अत्र ब्रह्म समश्नुते" इति न्यायात्। केचित्तु ब्रह्मपदेन परमेव ग्राह्यं 'पर जैमिनिर्मुख्यत्वादि'ति तस्य मुख्यवृत्त्या ब्रह्मपदार्थत्वादित्याहुः। तन्न। आकाशाधिकरणादिविरोधात्। तत्र हि आकाशपदस्य मुख्यार्थः भूताकाश एव ग्राह्यऽति प्राप्तेऽनन्यथासिद्धेन सर्वभूतोत्पत्तिस्थितिलयाधारत्वलिङ्गेन श्रुतमपि आकाशपदं ब्रह्मविषयं निर्णीतम्। तद्वदत्र गन्तव्यत्वानुपपत्तेः ब्रह्म न मुख्यं अपि तु गौण हिरण्यगर्भाख्यमिति भाष्यकारा.। ३० ३५

अथ ये यज्ञेन दानेन तपसा लोकाञ्जयन्ति ते धूममभिसंभवन्ति धूमाद्रात्रिँ रात्रेरप-
क्षीयमाणपक्षमपक्षीयमाणपक्षाद्यान्षण्मासान्दक्षिणाऽऽदित्य एति मासेभ्यः पितृ-
लोकं पितृलोकाच्चन्द्रं ते चन्द्रं प्राप्यान्नं भवन्ति ताँस्तत्र देवा यथा सोमँ राजान-
माप्यायस्वापक्षीयस्वेत्येवमेनाँस्तत्र भक्षयन्ति तेषां यदा तत्पर्यवैत्यथेममेवाऽऽ-
५ काशमभिनिष्पद्यन्त आकाशाद्वायुं वायोर्वृष्टिं वृष्टेः पृथिवीं ते पृथिवीं प्राप्यान्नं
भवन्ति ते पुनः पुरुषाग्नौ हूयन्ते ततो योषाग्नौ जायन्तेते लोकान्प्रत्युत्थायिनस्त
एवमेवानुपरिवर्तन्तेऽथ य एतौ पन्थानौ न विदुस्ते कीटाः पतङ्गा यदिदं दन्दशूकम् ॥१६॥

इति बृहदारण्यकोपनिषदि षष्ठाध्यायस्य द्वितीयं ब्राह्मणम् ॥२॥

अह्न आपूर्यमाणपक्षमहर्देवतयाऽतिवाहिता आपूर्यमाणपक्षदेवतां प्रतिपद्यन्ते शुक्लपक्षदेवतामित्येतत्।
१० आपूर्यमाणपक्षाद्यान्षण्मासानुदङ्ङुत्तरां दिशमादित्यः सवितेति तान्मासान्प्रतिपद्यन्ते शुक्लपक्षदेवतयाऽतिवाहिताः
सन्तः। मासानिति बहुवचनात्संघचारिण्यः षडुत्तरायणदेवतास्तेभ्यो मासेभ्यः षण्मासदेवताभिरतिवाहिता देव-
लोकाभिमानिनीं देवतां प्रतिपद्यन्ते। देवलोकादादित्यमादित्याद्वैद्युतं विद्युदभिमानिनीं देवतां प्रतिपद्यन्ते। विद्युद्-
देवतां प्राप्तान्ब्रह्मलोकवासी पुरुषो ब्रह्मणा मनसा सृष्टो मानसः कश्चिदेत्याऽऽगत्य ब्रह्मलोकान्गमयति। ब्रह्मलोका-
नित्यधरोत्तरभूमिभेदेन भिन्ना इति गम्यन्ते। बहुवचनप्रयोगात्। उपासनतारतम्योपपत्तेश्च। ते तेन पुरुषेण गमिताः
१५ सन्तस्तेषु ब्रह्मलोकेषु पराः प्रकृष्टाः सन्तः स्वयं परावतः प्रकृष्टाः समाः संवत्सराननेकान्वसन्ति। ब्रह्मणोऽनेकान्क-
ल्पान्वसन्तीत्यर्थः। तेषां ब्रह्मलोकं गतानां नास्ति पुनरावृत्तिरस्मिन्संसारे न पुनरागमनमिहेति शाखान्तरपाठात्।
इहेत्याकृतिमात्रग्रहणमिति चेच्छ्वोभूते पौर्णमासीमिति यद्वत्। न, इहेतिविशेषणानर्थक्यात्। यदि हि नाऽऽवर्तन्त
एवेहग्रहणमनर्थकमेव स्यात्। श्वोभूते पौर्णमासीमित्यत्र पौर्णमास्याः श्वोभूतत्वमनुक्तं न ज्ञायत इति युक्त
विशेषयितुम्। न हि तत्र श्वआकृतिः शब्दार्थो विद्यत इति श्वःशब्दो निरर्थक एव प्रयुज्यते। यत्र तु विशेषणशब्दे
२० प्रयुक्तेऽन्विष्यमाणे विशेषणफलं चेन्न गम्यते तत्र युक्तो निरर्थकत्वेनोत्स्रष्टुं विशेषणशब्दो न तु सत्यां विशेषण-
फलावगतौ। तस्मादस्मात्कल्पादूर्ध्वमावृत्तिर्गम्यते ॥१५॥

अथ पुनर्ये नैवं विदुरुत्क्रान्त्याद्यग्निहोत्रसंबन्धपदार्थषट्कस्यैव वेदितारः केवलकर्मिणो यज्ञेनाग्निहोत्रादिना
दानेन बहिर्वेदि भिक्षमाणेषु द्रव्यसंविभागलक्षणेन तपसा बहिर्वेद्येव दीक्षादिव्यतिरिक्तेन कृच्छ्रचान्द्रायणादिना

एकस्मिन्नेव ब्रह्मलोके कथं बहुवचनमित्याशङ्क्याऽऽह—ब्रह्मेति। ब्रह्मलोकानिति बहुवचनप्रयोगादिति
सम्बन्ध.। अत्र ब्रह्मलोका विशेष्यत्वेन गृह्यन्ते। बहुवचनोपपत्तौ हेत्वन्तरमाह—उपासनेति। कल्पशब्दोऽत्रावान्तर-
२५ कल्पविषयः। तेषामिह न पुनरावृत्तिरिति क्वचित्पाठादस्मिन्नित्यादिव्याख्यानमयुक्तमिति शङ्कते—इहेति। यथा
"श्वोभूते पौर्णमासीं यजेते"त्यत्राऽऽकृतिः पौर्णमासीशब्दार्थः श्वोभूतत्वं च न व्यावर्तकं पौर्णमासीपदलक्ष्येष्टेः प्रतिपद्येव
कर्तव्यतानियमात्तथेहाऽऽकृतेरिहशब्दार्थत्वान्निरङ्कुशैवानावृत्तिरत्र सिध्यतीत्यर्थः। परिहरति—नेत्यादिना। परोक्तं
दृष्टान्तं विघटयति—श्वोभूत इति। कृतसम्भारदिवसापेक्षं हि श्वोभूतत्वं पौर्णमासीदिने चातुर्मास्येष्टौ कृताया कदा
पौर्णमासीष्टिः कर्तव्येति विना वचनं न ज्ञायते तत्र श्वोभूतत्वं विशेषणं भवत्यन्यव्यावर्तकं तद्वदिहेति विशेषणमपि
३० व्यावर्तकमेवेति नाऽऽत्यन्तिकानावृत्तिसिद्धिरित्यर्थः। यत्तु पौर्णमासीशब्दवदिहशब्दस्याऽऽकृतिवाचित्वादव्यावर्तकत्वमिति
तत्राऽऽह—न हीति। यद्यपि प्रकृते वाक्ये पौर्णमासीशब्दो भवत्याकृतिवचनस्तथाऽपि श्वःशब्दार्थोऽपि काचिदाकृति-
रस्तीत्यङ्गीकृत्याव्यावर्तकः श्वोभूतशब्दो नैव प्रयुज्यते। तथाऽत्रापि विशेषणशब्दस्य व्यावर्तकत्वमावश्यकमित्यर्थः।
सुषिरमाकाशमित्यादौ व्यावर्त्याभावेऽपि विशेषणप्रयोगवदत्रापि विशेषणं स्वरूपानुवादमात्रमित्याशङ्क्याऽऽह—यत्र
३५ त्विति। विशेषणफलमुपसंहरति—तस्मादिति ॥१५॥

देवयानं पन्थानमुक्त्वा पथ्यन्तरं वक्तुं वाक्यान्तरमादाय पदद्वयं व्याकरोति—अथेत्यादिना। कथं ते फल-
भागिनो भवन्तीत्याकाङ्क्षायामाह—यज्ञेनेति। ननु दानतपसी यज्ञग्रहणेनैव गृहीते न पृथग्ग्रहीतव्ये तत्राऽऽह—

लोकाञ्जयन्ति । लोकानिति बहुवचनात्तत्रापि फलतारम्यमभिप्रेतम् । ते धूममभिसंभवन्ति । उत्तरमार्ग इवेहापि देवता एव धूमादिशब्दवाच्याः । धूमदेवतां प्रतिपद्यन्त इत्यर्थः । आतिवाहिकत्वं च देवतानां तद्वदेव । धूमाद्रात्रिं रात्रिदेवतां ततोऽपक्षीयमाणपक्षमपक्षीयमाणपक्षदेवतां ततो यान्षण्मासान्दक्षिणां दिशमादित्य एति तान्मासदेवताविशेषान्प्रतिपद्यन्ते ।

मासेभ्यः पितृलोकं पितृलोकाच्चन्द्रम् । ते चन्द्रं प्राप्यान्नं भवन्ति तांस्तत्रान्नभूतान्यथा सोमं राजानमिह ५ यज्ञ ऋत्विज आप्यायस्वापक्षीयस्वेति भक्षयन्त्येवमेनांश्चन्द्रं प्राप्तान्कर्मिणो भृत्यानिव स्वामिनो भक्षयन्त्युपभुञ्जते देवाः आप्यायस्वापक्षीयस्वेति न मन्त्रः किं तर्ह्याप्याय्याऽऽप्याय्य चमसस्थं भक्षणेनापक्षयं च कृत्वा पुनः पुनर्भक्षयन्तीत्यर्थः । एवं देवा अपि सोमलोके लब्धशरीरान्कर्मिण उपकरणभूतान्पुनः पुनर्विश्रामयन्तः कर्मानुरूपं फलं प्रयच्छन्तः । तद्धि तेषामाप्यायनं सोमस्याऽऽप्यायनमिवोपभुञ्जत उपकरणभूतान्देवाः तेषां कर्मिणां यदा यस्मिन्काले तद्यज्ञदानादिलक्षणं सोमलोकप्रापकं कर्म पर्यवैति परिगच्छति परिक्षीयत इत्यर्थः । अथ तदेममेव प्रसिद्धमाकाशमभि- १० निष्पद्यन्ते । यास्ताः श्रद्धाशब्दवाच्या द्युलोकाग्नौ हुता आपः सोमाकारपरिणता याभिः सोमलोके कर्मिणामुपभोगाय शरीरमारब्धमम्मयं ताः कर्मक्षयाद्धिमपिण्ड इवाऽऽतपसंपर्कात्प्रविलीयन्ते । प्रविलीनाः सूक्ष्मा आकाशभूता इव भवन्ति तदिदमुच्यत इममेवाऽऽकाशमभिनिष्पद्यन्त इति । ते पुनरपि कर्मिणस्तच्छरीराः सन्तः पुरोवातादिना इतश्चामुतश्च नीयन्तेऽन्तरिक्षगास्तदाह—आकाशाद्वायुमिति । वायोर्वृष्टिं प्रतिपद्यन्ते । तदुक्तम्—पर्जन्याग्नौ सोमं राजानं जुह्वतीति । ततो वृष्टिभूता इमां पृथिवीं पतन्ति । ते पृथिवीं प्राप्य व्रीहियवाद्यन्नं भवन्ति । तदुक्तमस्मिल्लो- १५ केऽग्नौ वृष्टिं जुह्वति तस्या आहुत्या अन्नं संभवतीति । ते पुनः पुरुषाग्नौ हूयन्तेऽन्नभूता रेतःसिचि । ततो रेतोभूता योषाग्नौ हूयन्ते ततो जायन्ते लोकं प्रत्युत्थायिनस्ते लोकं प्रत्युत्तिष्ठन्तोऽग्निहोत्रादिकर्मानुतिष्ठन्ति । ततो धूमादिना पुनः पुनः सोमलोकं पुनरिमं लोकमिति । त एवं कर्मिणोऽनुपरिवर्तन्ते घटीयन्त्रवच्चक्रीभूता बंभ्रमन्तीत्यर्थः । उत्तरमार्गाय सद्योमुक्तये वा यावद्ब्रह्म न विदुः । इति नु कामयमानः संसरतीत्युक्तम् ।

अथ पुनर्य उत्तरं दक्षिणं चैतौ पन्थानौ न विदुरुत्तरस्य दक्षिणस्य वा पथः प्रतिपत्तये ज्ञानं कर्म वा नानु- २०

बहिर्ब्रवीति । दीक्षादीत्यादिपदेन पयोव्रतादियज्ञाङ्गसंग्रहः । तत्रेति [1]पितृलोकोक्तिः अपिशब्दो ब्रह्मलोकदृष्टान्तार्थः । धूमसम्पत्तेरपुरुषार्थत्वमाशङ्क्योक्तम्—उत्तरमार्ग इवेति । इहापीति पितृयाणमार्गेऽपीत्यर्थः । तद्वदेवेत्युत्तरमार्गगामिनीनां देवतानामिवेत्यर्थः ।

तत्रेति प्रकृतलोकोक्तिः । कर्मिणां तर्हि देवैर्भक्ष्यमाणाना चन्द्रलोकप्राप्तिरनर्थायैवेत्याशङ्क्याऽऽह—उपभुञ्जत इति । अन्यथाप्रतिभासं व्यावर्तयति—आप्यायस्वेति । एवं देवा अपीति संक्षिप्तं दार्ष्टान्तिकं विवृणोति—सोमलोक २५ इति । कथं पौनःपुन्येन विश्रान्तिः संपाद्यते तत्राऽऽह—कर्मानुरूपमिति । दृष्टान्तवद्दार्ष्टान्तिके किमित्याप्यायनं नोक्तं तत्राऽऽह—तद्धीति । पुनः पुनर्विश्रामाभ्यनुज्ञानमिति यावत् । लोकद्वयप्रापकौ पन्थानावित्थं व्याख्याय पुनरेतल्लोकप्राप्तिप्रकारमाह—तेषामित्यादिना । कथं चन्द्रस्थलस्खलितानां कर्मिणामाकाशतादात्म्यमित्याशङ्क्याऽऽह—यास्ता इति । सोमाकारपरिणतत्वमेव स्फोरयति—याभिरिति । तस्य झटिति द्रवीभवनयोग्यता दर्शयति—अम्मयमिति । साभाव्यापत्तिरुपपत्तेरिति न्यायेनाऽऽह—आकाशभूता इवेति । अकाशाद्वायुप्राप्तिप्रकारमाह—ते पुनरिति । अन्याधिष्ठिते ३० पूर्ववदभिलापादिति न्यायेनाऽऽह—ते पृथिवीमिति । रेतःसिग्योगोऽथेति न्यायमाश्रित्याऽऽह—ते पुनरिति । योनेः शरीरमिति न्यायमनुसृत्याऽऽह—तत इति । उत्पन्नानां केषाचिदिष्टादिकारित्वमाह—लोकमिति । कर्मानुष्ठानानन्तरं तत्फलभागित्वमाह—ततो धूमादिनेति । सोमलोके फलभोगानन्तरं पुनरेतल्लोकप्राप्तिमाह—पुनरिति । पौनःपुन्येन विपरिवर्तनस्यावधिं सूचयति—उत्तरमार्गायेति । प्राग्ज्ञानात्संसरणं पष्ठेऽपि व्याख्यातमित्याह—इति न्विति ।

स्थानद्वयमावृत्तिसहितमुक्त्वा स्थानान्तरं दर्शयति—अथेत्यादिना । स्थानद्वयात्तृतीये स्थाने विशेषं कथयति– ३५

---

१. आप्यायस्वेति भक्षयति इति—अत्र इतः स्वर्गं गताना कर्मानुष्ठातृणा देवै भक्षणं निर्दिश्यते तच्च न मोदकादिदवच्चर्वणम् । अपि तु इष्टैः मित्रादिभिरिव तैः सह विहरणम् । अन्यथा कृतकर्मणः फलभोगानुपपत्तेः क्रियासमभिव्याहारे लोट् ( ३-४-२ ) इति सूत्रात् क्रियायाः पौनःपुन्ये द्योत्ये लोट् ।

अथ षष्ठाध्यायस्य तृतीयं ब्राह्मणम्

स यः कामयेत महत्प्राप्नुयामित्युदगयन आपूर्यमाणपक्षस्य पुण्याहे द्वादशाहमुपस-
द्व्रती भूत्वौदुम्बरे कँ्से चमसे वा सर्वौषधं फलानीति संभृत्य परिसमुह्य परि-
लिप्याग्निमुपसमाधाय परिस्तीर्याऽऽवृताऽऽज्यँ सँ्स्कृत्य पुँ्सा नक्षत्रेण मन्थँ संनीय
५ जुहोति । यावन्तो देवास्त्वयि जातवेदस्तिर्यञ्चो घ्नन्ति पुरुषस्य कामान् ।
तेभ्योऽहं भागधेयं जुहोमि ते मा तृप्ताः सर्वैः कामैस्तर्पयन्तु स्वाहा । या तिरश्ची
निपद्यतेऽहं विधरणी इति तां त्वा घृतस्य धारया यजे सँ्राधनीमहँ्स्वाहा ॥१॥

तिष्ठन्तीत्यर्थः । ते किं भवन्तीति । उच्यते—ते कीटाः पतङ्गा यदिदं यच्चेदं दन्दशूकं दंशमशकमित्येतद्भवन्ति ।
एवं हीयं संसारगतिः कष्टाऽस्यां निमग्नस्य पुनरुद्धार एव दुर्लभः । तथा च श्रुत्यन्तरम्—"तानीमानि क्षुद्राण्यस-
१० कृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्व" इति । तस्मात्सर्वोत्साहेन यथाशक्ति स्वाभाविककर्मज्ञानहानेन
दक्षिणोत्तरमार्गप्रतिपत्तिसाधनं शास्त्रीयं कर्म ज्ञानं वाऽनुतिष्ठेदिति वाक्यार्थः । तथा चोक्तम् "अतो वै खलु दुर्नि-
ष्प्रपतरं तस्माज्जुगुप्सेत" इति श्रुत्यन्तरान्मोक्षाय प्रयतेतेत्यर्थः । अत्राप्युत्तरमार्गप्रतिपत्तिसाधन एव महान्यत्नः
कर्तव्य इति गम्यते । एवमेवानुपरिवर्तन्त इत्युक्तत्वात् । एवं प्रश्नाः सर्वे निर्णीताः । असौ वै लोक इत्यारभ्य पुरुषः
संभवतीतिचतुर्थः प्रश्नो यतिथ्यामाहुत्यामित्यादिः प्राथम्येन । पञ्चमस्तु द्वितीयत्वेन देवयानस्य वा पथः प्रतिपदं
१५ पितृयाणस्य वेति दक्षिणोत्तरमार्गप्रतिपत्तिसाधनकथनेन । तेनैव च प्रथमोऽप्यग्नेरारभ्य केचिदर्चिः प्रतिपद्यन्ते
केचिद्धूममिति विप्रतिपत्तिः । पुनरावृत्तिश्च द्वितीयः प्रश्न आकाशादिक्रमेणेमं लोकमागच्छन्तीति । तेनैवासौ
लोको न संपूर्यते कीटपतङ्गादिप्रतिपत्तेश्च केषांचिदिति तृतीयोऽपि प्रश्नो निर्णीतः ॥१६॥

इति बृहदारण्यकोपनिषद्भाष्ये षष्ठाध्यायस्य द्वितीयं ब्राह्मणम् ॥२॥

स यः कामयेत । ज्ञानकर्मणोर्गतिरुक्ता । तत्र ज्ञानं स्वतन्त्रं कर्म तु दैवमानुषवित्तद्वयायत्तं तेन कर्मार्थं
२० वित्तमुपार्जनीयम् । तच्चाप्रत्यवायकारिणोपायेनेति तदर्थं मन्थाख्यं कर्माऽऽरभ्यते महत्त्वप्राप्तये । महत्त्वे च सत्यर्थं
सिद्धं हि वित्तम् । तदुच्यते—स यः कामयेत स यो वित्तार्थी कर्मण्यधिकृतो यः कामयेत । किम् । महन्महत्त्वं

एवमिति । तृतीये स्थाने छान्दोग्यश्रुतिं संवादयति—तथा चेति । अमुष्या गतेरतिकष्टत्वे परिशिष्टं वाक्यार्थमाचष्टे—
तस्मादिति । सर्वोत्साहो वाक्कायचेतसां प्रयत्नः । यदुक्तमस्यां निमग्नस्य पुनरुद्धारो दुर्लभो भवतीति तत्र श्रुत्यन्तर-
मनुकूलयति—तथा चेति । अतो व्रीह्यादिभावादित्यर्थः । तस्मादित्यतिकष्टात्संसारादित्यर्थः । दक्षिणोत्तरमार्गप्राप्ति-
२५ साधने यत्नसाम्यमाशङ्क्याऽऽह—अत्रापीति । पञ्च प्रश्नान्प्रस्तुत्य किमिति प्रत्येकं तेषां निर्णयो न कृत इत्याशङ्क्याऽऽह—
एवमिति । निर्णीतं प्रकारमेव संगृह्णाति—असावित्यादिना । प्राथम्येन निर्णीत इति संबन्धः । देवयानस्येत्यादिः
पञ्चमः प्रश्नः । स तु द्वितीयत्वेन दक्षिणादिमार्गापत्तिसाधनोक्त्या निर्णीत इत्यर्थः । तेनैव मार्गद्वयप्राप्तिसाधनोपदेशेनैवेति
यावत् । मृतानां प्रजानां विप्रतिपत्तिः प्रथमप्रश्नस्तस्य निर्णयप्रकारमाह—अग्नेरिति । द्वितीयप्रश्नस्वरूपमनूद्य तस्य
निर्णीतत्वप्रकारं प्रकटयति—पुनरावृत्तिश्चेति । आगच्छन्तीति निर्णीत इत्युत्तरत्र संबन्धः । तेनैव पुनरावृत्तेः सत्त्वेने-
३० त्यर्थः । अमुष्य लोकस्यासंपूर्तिर्हि तृतीयः प्रश्नः । स च द्वाभ्यां हेतुभ्यां प्रागुक्ताभ्यां निर्धारितो भवतीति भावः ॥१६॥

इति बृहदारण्यकोपनिषद्भाष्यटीकायां षष्ठाध्यायस्य द्वितीयं ब्राह्मणम् ॥२॥

ब्राह्मणान्तरमवतार्य संगतिमाह—स य इति । तत्रेति निर्धारणे सप्तमी । कथं तर्हि वित्तोपार्जनं संभवति
तत्राऽऽह—तच्चेति । तदर्थं वित्तसिद्ध्यर्थमिति यावत् । ननु महत्त्वसिद्ध्यर्थमिदं कर्माऽऽरभ्यते महत्प्राप्नुयामिति
श्रुतेस्तत्कथमन्यथा प्रतिज्ञातमिति शङ्कते—महत्त्वेति । परिहरति—महत्त्वे चेति । उक्तेऽर्थे श्रुत्यक्षराणि योजयति—
३५ तदुच्यत इत्यादिना । स यो वित्तार्थी कामयेत तस्येदं कर्मेति शेषः । यस्य कस्यचिद्वित्तार्थिनस्तर्हीदं कर्म स्यादित्या-
शङ्क्याऽऽह—कर्मण्यधिकृत इति । तत्र वित्तार्थिनि पुंसीति यावत् । उपसदो नामेष्टिविशेषाः । ज्योतिष्टोमे प्रवर्ग्याह-

प्राप्नुया महान्स्यामितीत्यर्थः। तत्र मन्थकर्मणो विधित्सितस्य कालोऽभिधीयते—उदगयन आदित्यस्य तत्र सर्वत्र प्राप्तावापूर्यमाणपक्षस्य शुक्लपक्षस्य। तत्रापि सर्वत्र प्राप्तौ पुण्याहेऽनुकूल आत्मनः कर्मसिद्धिकर इत्यर्थः। द्वादशाहं यस्मिन्पुण्येऽनुकूले कर्म चिकीर्षति ततः प्राक्पुण्याहमेवाऽऽरम्य द्वादशाहमुपसद्व्रती। उपसत्सु व्रतमुपसदः प्रसिद्धा ज्योतिष्टोमे। तत्र च स्तनोपचयापचयद्वारेण पयोभक्षणं तद्व्रतम्। अत्र च तत्कर्मानुपसंहारात्केवलमितिकर्तव्यता-शून्यं पयोभक्षणमात्रमुपादीयते। ननूपसदो व्रतमिति यदा विग्रहस्तदा सर्वमितिकर्तव्यतारूपं ग्राह्यं भवति तत्कस्मान्न ५ परिगृह्यत इति। उच्यते—स्मार्तत्वात्कर्मणः। स्मार्तं हीदं मन्थकर्म। ननु श्रुतिविहितं सत्कथं स्मार्तं भवितुमर्हति। स्मृत्यनुवादिनी हि श्रुतिरियम्। श्रौतत्वे हि प्रकृतिविकारभावस्ततश्च प्राकृतधर्मग्राहित्वं विकारकर्मणो न त्विह श्रौतत्वम्। अत एव चाऽऽवसथ्याग्नावेतत्कर्म विधीयते। सर्वा चाऽऽवृत्स्मार्तैवेति। उपसद्व्रती भूत्वा पयोव्रती सन्नित्यर्थः।

औदुम्बर उदुम्बरवृक्षमये कंसे चमसे वा तस्यैव विशेषणं कंसाकारे चमसाकारे वौदुम्बर एव। आकारे १० तु विकल्पो नौदुम्बरत्वे। अत्र सर्वौषधं सर्वासामोषधीनां समूहं यथासम्भवं यथाशक्ति च सर्वा ओषधीः समाहृत्य तत्र ग्राम्याणां तु दश नियमेन ग्राह्या व्रीहियवाद्या वक्ष्यमाणाः। अधिकग्रहणे तु न दोषः। ग्राम्याणां फलानि च यथासम्भवं यथाशक्ति च। इतिशब्दः समस्तसम्भारोपचयप्रदर्शनार्थः। अन्यदपि यत्सम्भरणीयं तत्सर्वं संभृत्येत्यर्थः। क्रमस्तत्र गृह्योक्तो द्रष्टव्यः। परिसमूहनपरिलेपने भूमिसंस्कारः। अग्निमुपसमाधायेति वचनादावसथ्येऽग्नाविति गम्यते। एकवचनादुपसमाधानश्रवणाच्च। विद्यमानस्यैवोपसमाधानम्। परिस्तीर्य दर्भानावृता स्मार्तत्वात्कर्मणः १५

स्विति शेषः। किं पुनस्तासु व्रतमिति तदाह—तत्र चेति। यदुपसत्सु स्तनोपचयापचयाभ्यां पयोभक्षणं यजमानस्य प्रसिद्धं तदत्रोपसद्व्रतमित्यर्थः। प्रकृतेऽपि तर्हि स्तनोपचयापचयाभ्यां पयोभक्षणं स्यादिति चेन्नेत्याह—अत्र चेति। मन्थाख्यं कर्म सप्तम्यर्थः। तत्कर्मेत्युपसद्रूपकर्मोक्तिः। केवलमित्यस्यैवार्थमाह—इति कर्तव्यताशून्यमिति। समासान्तर-माश्रित्य शङ्कते—नन्विति। कर्मधारयरूपं समासवाक्यं तदित्युक्तम्। मन्थाख्यस्य कर्मणःस्मार्तत्वादत्र श्रुत्युक्तानामुप-सदामुपसंग्रहाभावान्न कर्मधारयः सिध्यतीत्युत्तरमाह—उच्यत इति। मन्थकर्मणः स्मार्तत्वमाक्षिपति—नन्विति। २० परिसमूहनपरिलेपनाग्न्युपसमाधानादेः स्मार्तार्थस्यात्रोच्यमानत्वादियं श्रुतिः स्मृत्यनुवादिनी युक्ता। तथा चैतत्कर्म भवत्येव स्मार्तमिति परिहरति—स्मृतीति। ननु श्रुतेर्न स्मृत्यनुवादिनीत्वं वैपरीत्यादतो भवतीदं श्रौतमित्याशङ्क्याऽऽह—श्रौतत्वे हीति। यदीदं कर्म श्रौत तदा ज्योतिष्टोमेनास्य प्रकृतिविकृतिभावः स्यात्। समग्राङ्गसंयुक्ता प्रकृतिर्विकलाङ्ग-संयुक्ता च विकृतिः। प्रकृतिविकृतिभावे च विकृतिकर्मणः प्राकृतधर्मग्राहित्वादुपसद एव व्रतमिति विगृह्य सर्वमिति-कर्तव्यतारूपं शक्यं ग्रहीतुं न चात्र श्रौतत्वमस्ति परिलेपनादिसंबन्धात्। न च पूर्वभाविन्याः श्रुतेरुत्तरभाविस्मृत्य- २५ नुवादित्वासिद्धिस्तस्यास्त्रैकाल्यविषयत्वाभ्युपगमादिति भावः। मन्थकर्मणः स्मार्तत्वे लिंगमाह—अत एवेति। तत्रैव हेत्वन्तरमाह—सर्वा चेति। मन्थगतेतिकर्तव्यताऽत्राऽऽवृदित्युच्यते। उपसद एव व्रतमिति विग्रहासंभवादुपसत्सु व्रतमित्यस्मदुक्तं सिद्धमुपसंहर्तुमितिशब्दः। पयोव्रती सन्वक्ष्यमाणेन क्रमेण जुहोतीति संबन्धः।

ताम्रमौदुम्बरमिति शङ्कां वारयति—उदुम्बरवृक्षमय इति। तस्यैवेति प्रकृतपात्रपरामर्शः। औदुम्बरत्वे विकल्पमाशङ्क्याऽऽह—आकार इति। अत्रेति पात्रनिर्देशः। असंभवादशक्यत्वाच्च सर्वौषधं समाहृत्येत्ययुक्तमित्या- ३० शङ्क्याऽऽह—यथासंभवमिति। ओषधिषु नियमं दर्शयति—तत्रेति। परिसङ्ख्यां वारयति—अधिकेति। इति सम्भृत्या-त्रेतिशब्दस्य प्रदर्शनार्थत्वे फलितं वाक्यार्थं कथयति—अन्यदपीति। ओषध्यादीनां संभरणानन्तरं परिसमूहनादिक्रमे किं प्रमाणमित्याशङ्क्याऽऽह—क्रम इति। तत्रेति परिसमूहनाद्युक्तिः। होमाधारत्वेन त्रेताग्निपरिग्रहं वारयति—अग्नि-मिति। आवसथ्येऽग्नौ होम इति शेषः। कथमेतावता त्रेताग्निपरित्यागस्तत्राऽऽह—एकवचनादिति। कथमुपसमाधान-श्रवणं त्रेताग्निनिवारकं तत्राऽऽह—विद्यमानस्येति। आहवनीयादेश्चाऽऽधेयत्वान्न प्रागेव सत्त्वमिति भावः। मध्ये ३५ स्वस्याग्नेश्चेति शेषः। आवापस्थानमाहुतिविशेषप्रक्षेपप्रदेश.। भो जातवेदस्त्वदधीना यावन्तो देवा वक्रमतयः सन्तो ममार्थान्प्रतिबध्नन्ति तेभ्योऽहमाज्यभाग त्वय्यर्पयामि ते च तेन तृप्ता भूत्वा सर्वैरपि पुरुषार्थैर्मा तर्पयन्तु। अहं च त्वदधीनोऽर्पित इत्याद्यमन्त्रस्यार्थ.। जातं जात वेत्तीति वा जाते जाते विद्यत इति वा जातवेदाः। या देवता कुटिल-मतिर्भूत्वा सर्वस्यैवाहमेव धारयन्तीति मत्वा त्वामाश्रित्य वर्तते ता सर्वसाधनी देवतामहं घृतस्य धारया यजे स्वाहेति पूर्ववदेव द्वितीयमन्त्रार्थः ॥१॥ ४०

ज्येष्ठाय स्वाहा श्रेष्ठाय स्वाहेत्यग्नौ हुत्वा मन्थे सँस्रवमवनयति प्राणाय स्वाहा वसिष्ठायै स्वाहेत्यग्नौ हुत्वा मन्थे सँस्रवमवनयति वाचे स्वाहा प्रतिष्ठायै स्वाहेत्यग्नौ हुत्वा मन्थे सँस्रवमवनयति चक्षुषे स्वाहा संपदे स्वाहेत्यग्नौ हुत्वा मन्थे सँस्रवमवनयति श्रोत्राय स्वाहाऽऽयतनाय स्वाहेत्यग्नौ हुत्वा मन्थे सँस्रवमवनयति मनसे स्वाहा प्रजात्यै स्वाहेत्यग्नौ ५ हुत्वा मन्थे सँस्रवमवनयति रेतसे स्वाहेत्यग्नौ हुत्वा मन्थे सँस्रवमवनयति ॥२॥

अग्नये स्वाहेत्यग्नौ हुत्वा मन्थे सँस्रवमवनयति सोमाय स्वाहेत्यग्नौ हुत्वा मन्थे सँस्रवमवनयति भूः स्वाहेत्यग्नौ हुत्वा मन्थे सँस्रवमवनयति भुवः स्वाहेत्यग्नौ हुत्वा मन्थे सँस्रवमवनयति स्वः स्वाहेत्यग्नौ हुत्वा मन्थे सँस्रवमवनयति भूर्भुवः स्वः स्वाहेत्यग्नौ हुत्वा मन्थे सँस्रवमवनयति ब्रह्मणे स्वाहेत्यग्नौ हुत्वा १० मन्थे सँस्रवमवनयति क्षत्राय स्वाहेत्यग्नौ हुत्वा मन्थे सँस्रवमवनयति भूताय स्वाहेत्यग्नौ हुत्वा मन्थे सँस्रवमवनयति भविष्यते स्वाहेत्यग्नौ हुत्वा मन्थे सँस्रवमवनयति विश्वाय स्वाहेत्यग्नौ हुत्वा मन्थे सँस्रवमवनयति सर्वाय स्वाहेत्यग्नौ हुत्वा मन्थे सँस्रवमवनयति प्रजापतये स्वाहेत्यग्नौ हुत्वा मन्थे सँस्रवमवनयति ॥३॥

अथैनमभिमृशति भ्रमदसि ज्वलदसि पूर्णमसि प्रस्तब्धमस्येकसभमसि हिंकृत-
१५ मसि हिंक्रियमाणमस्युद्गीथमस्युद्गीयमानमसि श्रावितमसि प्रत्याश्रावितमस्यार्द्रे
संदीप्तमसि विभूरसि प्रभूरस्यन्नमसि ज्योतिरसि निधनमसि संवर्गोऽसीति ॥४॥

स्थालीपाकावृत्परिगृह्यते । तयाऽऽज्यं संस्कृत्य पुंसा नक्षत्रेण पुंनाम्ना नक्षत्रेण पुण्याहसंयुक्तेन मन्थं सर्वौषधफलपिष्टं तत्रौदुम्बरे चमसे दधनि मधुनि घृते चोपसिच्यैकयोपमन्थन्योपमंमथ्य संनीय मन्थे सस्थाप्यौदुम्बरेण स्रुवेणाऽऽवाप-स्थान आज्यस्य जुहोत्येतैर्मन्त्रैर्यावन्तो देवा इत्याद्यैः ॥१॥

२० ज्येष्ठाय स्वाहा श्रेष्ठाय स्वाहेत्यारभ्य द्वे द्वे आहुती हुत्वा मन्थे संस्रवमवनयति । स्रुवावलेपनमाज्यं मन्थे संस्रावयति । एतस्मादेव ज्येष्ठाय श्रेष्ठायेत्यादिप्राणलिङ्गाज्ज्येष्ठश्रेष्ठादिप्राणविद एवास्मिन्कर्मण्यधिकारः । रेतस इत्यारभ्यैकैकामाहुतिं हुत्वा मन्थे संस्रवमवनयत्यपरयोपमन्थन्या पुनर्मथ्नाति ॥२-३॥

अथैनमभिमृशति भ्रमदसीत्यनेन मन्त्रेण ॥४॥

ज्येष्ठायेत्यादिमन्त्रेषु ध्वनितमर्थमाह—एतस्मादेवेति । द्वे द्वे आहुती हुत्वेत्युक्तं तत्र सर्वत्र द्वित्वप्रसङ्गं
२५ प्रत्याचष्टे—रेतस इत्यारभ्येति । संस्रवः स्रुवावलिप्तमाज्यम् ॥२-३॥

मन्थद्रव्यस्य प्राणदेवताकत्वात्प्राणेनैकीकृत्य सर्वात्मकत्वं तथा च सर्वदेहेषु प्राणरूपेण त्वं भ्रमदसि प्राणस्य चलनात्मकत्वात्तद्रूपत्वाच्च । तत्राग्निरूपेण च त्वं ज्वलदसि प्रकाशात्मकत्वादग्नेस्तद्रूपत्वाच्च । तदनु ब्रह्मरूपेण त्वं पूर्णमसि । नभोरूपेण प्रस्तब्धं निष्कम्पमसि सर्वैरविरोधित्वात्सर्वमपि जगदेकसभवदात्मन्यन्तर्भाव्यापरिच्छिन्नतया स्थितं वस्तु त्वमसि । प्रस्तोत्रा यज्ञारम्भे त्वमेव हिंकृतमसि । तेनैव यज्ञमध्ये हिंक्रियमाणं चासि । उद्गात्रा च ३० यज्ञारम्भे तन्मध्ये चोद्गीथमुद्गीयमानं चासि । अध्वर्युणा त्वं श्रावितमसि । आग्नीध्रेण च प्रत्याश्रावितमसि । आर्द्रे मेघोदरे सम्यग्दीप्तमसि । विविधं भवतीति विभुः । प्रभुः समर्थो भोग्यरूपेण सोमात्मना स्थितत्वादन्नं भोक्तृरूपेणा-ग्न्यात्मना ज्योतिःकारणत्वान्निधनं लयोऽध्यात्माधिदैवयोर्वागादीनामग्न्यादीनां च संहरणात्त्वं संवर्गोऽसीत्यभिमर्शन-मन्त्रस्यार्थः ॥४॥

अथैनमुद्यच्छत्याम ँस्याम ँहि ते महि स हि राजे-
शानोऽधिपतिः स मा ँराजेशानोऽधिपतिं करोत्विति ॥५॥

अथैनमाचामति तत्सवितुर्वरेण्यम् । मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः । भूः स्वाहा । भर्गो देवस्य धीमहि । मधु नक्तमुतोषसो मधुमत्पार्थिव ँरजः । मधु द्यौरस्तु नः पिता । भुवः स्वाहा । धियो यो नः प्रचोदयात् । मधुमान्नो वनस्पतिर्मधुमा ँअस्तु सूर्यः । माध्वीर्गावो भवन्तु नः । स्वः स्वाहेति । सर्वां च सावित्रीमन्वाह सर्वाश्च मधुमतीरहमेवेद ँसर्वं भूयासं भूर्भुवः स्वः स्वाहेत्यन्तत आचम्य पाणी प्रक्षाल्य जघनेनाग्निं प्राक्शिराः संविशति प्रातरादित्यमुपतिष्ठते दिशामेकपुण्डरीकमस्यहं मनुष्याणामेकपुण्डरीकं भूयासमिति यथेतमेत्य जघनेनाग्निमासीनो व ँशं जपति ॥६॥ ५

त ँहैतमुद्दालक आरुणिर्वाजसनेयाय याज्ञवल्क्यायान्तेवासिन उक्त्वोवाचापि य एन ँशुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥७॥ १०

एतमु हैव वाजसनेयो याज्ञवल्क्यो मधुकाय पैङ्ग्यायान्तेवासिन उक्त्वोवाचापि य एन ँशुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥८॥

अथैनमुद्यच्छति सह पात्रेण हस्ते गृह्णात्यामंस्यामंहि ते महीत्यनेन ॥५॥

अथैनमाचामति भक्षयति गायत्र्याः प्रथमपादेन मधुमत्यैकया व्याहृत्या च प्रथमया प्रथमग्रासमाचामति। १५ तथा गायत्रीद्वितीयपादेन मधुमत्या द्वितीयया द्वितीयया च व्याहृत्या द्वितीयं ग्रासम् । तथा तृतीयेन गायत्रीपादेन तृतीयया मधुमत्या तृतीयया च व्याहृत्या तृतीयं ग्रासम् । सर्वां सावित्रीं सर्वाश्च मधुमतीरुक्त्वाऽहमेवेदं सर्वं भूयासमिति चान्ते भूर्भुवः स्वः स्वाहेति समस्तं भक्षयति । यथा चतुर्भिर्ग्रासैस्तद्द्रव्यं सर्वं परिसमाप्यते तथा पूर्वमेव निरूप्येत् । यत्पात्रावलिप्तं तत्पात्रं सर्वं निर्णिज्य तूष्णीं पिबेत् । पाणी प्रक्षाल्याप आचम्य जघनेनाग्निं पश्चादग्नेः प्राक्शिराः संविशति । प्रातः संध्यामुपास्याऽऽदित्यमुपतिष्ठते दिशामेकपुण्डरीकमित्यनेन मन्त्रेण । २० यथेतं यथागतमेत्याऽऽगत्य जघनेनाग्निमासीनो वंशं जपति ॥६॥

तं हैतमुद्दालक इत्यादि सत्यकामो जाबालोऽन्तेवासिभ्य उक्त्वोवाचापि य एनं शुष्के स्थाणौ निषिञ्चे-ज्जायेरन्नेवास्मिञ्शाखाः प्ररोहेयुः पलाशानीत्येवमन्तमेनं मन्थमुद्दालकात्प्रभृत्यैकैकाचार्यक्रमागतं सत्यकाम

आमंसि त्वं सर्वं विजानासि वयं च ते तव महि महत्तरं रूपमामंहि मन्यामहे । स हि प्राणो राजादिगुणः स च मा तथाभूतं करोत्वित्युद्यमनमन्त्रस्यार्थः ॥५॥ २५

तत्सवितुर्वरेण्यं वरणीयं श्रेष्ठं पद धीमहीति सम्बन्धः । वाता वायुभेदा मधु सुखमृतायते वहन्ति । सिन्धवो नद्यो मधु क्षरन्ति मधुररसान्स्रवन्ति । ओषधीश्चास्मान्प्रति माध्वीर्मधुरसाः सन्तु । देवस्य सवितुर्भर्गस्तेजोऽन्नं वा प्रस्तुतं पदं चिन्तयामः । नक्तं रात्रिरुतोषसो दिवसाश्च मधु प्रीतिकराः सन्तु । पार्थिवं रजो मधुमदनुद्वेगकरमस्तु । द्यौश्च पिता नोऽस्माकं मधु सुखकरोऽस्तु । यः सविता नोऽस्माक धियो बुद्धीः प्रचोदयात्प्रेरयेत्तस्य तद्वरेण्यमिति सवन्धः । वनस्पति सोमोऽस्माकं मधुमानस्तु । गावो रश्मयो दिशो वा माध्वीः सुखकराः सन्तु । अन्तशब्दादिति- ३० शब्दाच्चोपरिष्टादुक्त्वेत्यनुषङ्गः । एवं ग्रासचतुष्टये निवृत्ते सत्यवशिष्टे द्रव्ये किं कर्तव्यं तत्राऽऽह—यथेति । पात्रा-वशिष्टस्य परित्यागं वारयति—यदिति । निर्णिज्य प्रक्षाल्येति यावत् । पाणिप्रक्षालनवचनसामर्थ्यात्प्राप्तं शुद्ध्यर्थं स्मार्तमाचमनमनुजानाति—अप आचम्येति । एकपुण्डरीकशब्दोऽखण्डश्रेष्ठवाची ॥६॥

तमेत नापुत्रायेत्यादेरर्थमाह—विद्येति । शिष्यः श्रोत्रियो मेधावी धनदायी प्रियः पुत्रो विद्यया विद्यादातेति षट् तीर्थानि संप्रदानानि ॥७–१३॥ ३५

इति बृहदारण्यकोपनिषद्भाष्यटीकायां षष्ठाध्यायस्य तृतीयं ब्राह्मणम् ॥३॥

एतमु हैव मधुकः पैङ्ग्यश्चूलाय भागवित्तयेऽन्तेवासिन उक्त्वोवाचापि य एनं शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥९॥

एतमु हैव चूलो भागवित्तिर्जानकय आयस्थूणायान्तेवासिन उक्त्वोवाचापि य एनं शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥१०॥

५ एतमु हैव जानकिरायस्थूणः सत्यकामाय जाबालायान्तेवासिन उक्त्वोवाचापि य एनं शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥११॥

एतमु हैव सत्यकामो जाबालोऽन्तेवासिभ्य उक्त्वोवाचापि य एनं शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति तमेतं नापुत्राय वाऽनन्तेवासिने वा ब्रूयात् ॥१२॥

चतुरौदुम्बरो भवत्यौदुम्बरः स्रुव औदुम्बरश्चमस औदुम्बर इध्म औदुम्बर्या उपमन्थन्यौ

१० दश ग्राम्याणि धान्यानि भवन्ति व्रीहियवास्तिलमाषा अणुप्रियंगवो गोधूमाश्च मसूराश्च खल्वाश्च खलकुलाश्च तान्पिष्टान्दधनि मधुनि घृत उपसिञ्चत्याज्यस्य जुहोति ॥१३॥

इति बृहदारण्यकोपनिषदि षष्ठाध्यायस्य तृतीयं ब्राह्मणम् ॥३॥

अथ षष्ठाध्यायस्य चतुर्थं ब्राह्मणम्

एषां वै भूतानां पृथिवी रसः पृथिव्या आपोऽपामोषधय ओष-

१५ धीनां पुष्पाणि पुष्पाणां फलानि फलानां पुरुषः पुरुषस्य रेतः ॥१॥

आचार्यो बहुभ्योऽन्तेवासिभ्य उक्त्वोवाच। किमन्यदुवाचेत्युच्यते—अपि य एनं शुष्के स्थाणौ गतप्राणेऽप्येनं मन्थ भक्षणाय संस्कृतं निषिञ्चेत्प्रक्षिपेज्जायेरन्नुत्पद्येरन्नेवास्मिन्स्थाणौ शाखा अवयवा वृक्षस्य प्ररोहेयुश्च पलाशानि पर्णानि यथा जीवतः स्थाणोः किमुतानेन कर्मणा कामः सिध्येदिति। ध्रुवफलमिदं कर्मेति कर्मस्तुत्यर्थमेतत्। विद्याधिगमे षट्तीर्थानि तेषामिह सप्राणदर्शनस्य मन्थविज्ञानस्याधिगमे द्वे एव तीर्थे अनुज्ञायेते पुत्रश्चान्ते-

२० वासी च ॥७-१२॥

चतुरौदुम्बरो भवतीति व्याख्यातम्। दश ग्राम्याणि धान्यानि भवन्ति ग्राम्याणां तु धान्यानां दश नियमेन ग्राह्या इत्यवोचाम। के त इति निर्दिश्यन्ते—व्रीहियवास्तिलमाषा अणुप्रियंगवोऽणवश्चाणुशब्दवाच्याः क्वचिद्देशे। प्रियंगवः प्रसिद्धाः कङ्गुशब्देन। खल्वा निष्पावा वल्लशब्दवाच्या लोके खलकुलाः कुलत्थाः। एतद्व्यतिरेकेण यथाशक्ति सर्वौषधयो ग्राह्याः फलानि चेत्यवोचामायाज्ञिकानि वर्जयित्वा ॥१३॥

इति बृहदारण्यकोपनिषद्भाष्ये षष्ठाध्यायस्य तृतीयं ब्राह्मणम् ॥३॥

२५ यादृग्जन्मा यथोत्पादितो यैर्वा गुणैर्विशिष्टः पुत्र आत्मनः पितुश्च लोक्यो भवतीति तत्संपादनाय ब्राह्मणमारभ्यते। प्राणदर्शिनः श्रीमन्थं कर्म कृतवतः पुत्रमन्थेऽधिकारः। यदा पुत्रमन्थं चिकीर्षति तदा श्रीमन्थं कृत्वर्तुकालं पत्न्याः प्रतीक्षत इत्येतद्रेतस ओषध्यादिरसतमत्वस्तुत्याऽवगम्यते। एषां वै चराचराणां भूतानां पृथिवी रसः सारभूतः। सर्वभूतानां मध्विति ह्युक्तम्। पृथिव्या आपो रसः। अप्सु हि पृथिव्योता च प्रोता च। अपामोषधयो

३० रसः। कार्यत्वाद्रसत्वमोषध्यादीनाम्। ओषधीनां पुष्पाणि। पुष्पाणां फलानि। फलानां पुरुषः। पुरुषस्य रेतः।

उक्तगुण स कथ प्राणोपासकस्य वित्तार्थिनो मन्थाख्य कर्मोक्त्वा ब्राह्मणान्तरमुत्थापयति—यादृगिति। उक्तगुण स कथं स्यादित्यपेक्षायामिति शेषः। तच्छब्दो यथोक्तपुत्रविषयः। यदस्मिन्ब्राह्मणे पुत्रमन्थाख्य कर्म वक्ष्यते तद्भवति सर्वाविकारविषयमित्याशङ्क्याऽऽह—प्राणेति। पुत्रमन्थस्य कालनियमाभावमाशङ्क्याऽऽह—यदेति। किमत्र गमकमित्याशङ्क्य रेतःस्तुतिरित्याह—इत्येतदिति। पृथिव्याः सर्वभूतसारत्वे मधुब्राह्मण प्रमाणयति—सर्वभूतानामिति। तत्र

३५ गार्गिब्राह्मणं प्रमाणमित्याह—अप्सु हीति। अपां पृथिव्याश्च रसत्वं कारणत्वादुक्तमोषध्यादीनां कथमित्याशङ्क्याऽऽह—कार्यत्वादिति। रेतोऽसृजतेति प्रस्तुत्य रेतसस्तत्र तेजःशब्दप्रयोगात्तस्य पुरुषे सारत्वमैतरेयके विवक्षितमित्याह—

स ह प्रजापतिरीक्षांचक्रे हन्तास्मै प्रतिष्ठां कल्पयानीति स स्त्रियँ ससृजे ताँ सृष्ट्वाऽध उपास्त तस्मात्स्त्रियमध उपासीत स एतं प्राञ्चं ग्रावाणमात्मन एव समुदपारयत्तेनैनामभ्यसृजत् ॥२॥ तस्या वेदिरुपस्थो लोमानि बर्हिश्चर्माधिषवणे समिद्धो मध्यतस्तौ मुष्कौ स यावान्ह वै वाजपेयेन यजमानस्य लोको भवति तावानस्य लोको भवति य एवं विद्वानधोपहासं चरत्यासाँ स्त्रीणाँ सुकृतं वृङ्क्तेऽथ य इदमविद्वानधोपहासं चरत्याऽस्य स्त्रियः सुकृतं वृञ्जते ॥३॥ ५ एतद्ध स्म वै तद्विद्वानुद्दालक आरुणिराहैतद्ध स्म वै तद्विद्वान्नाको मौद्गल्य आहैतद्ध स्म वै तद्विद्वान्कुमारहारित आह बहवो मर्या ब्राह्मणायना निरिन्द्रिया विसुकृतोऽस्माल्लोकात् प्रयन्ति य इदमविद्वाँसोऽधोपहासं चरन्तीति बहु वा इदँ सुप्तस्य वा जाग्रतो वा रेतः स्कन्दति ॥४॥

"सर्वेभ्योऽङ्गेभ्यस्तेजः संभूतम्" इति श्रुत्यन्तरात् ॥१॥

यत एवं सर्वभूतानां सारतममेतद्रेतोऽतः का नु खल्वस्य योग्या प्रतिष्ठेति स ह स्रष्टा प्रजापतिरीक्षांचक्रे। १० ईक्षां कृत्वा स स्त्रियं ससृजे। ता च सृष्ट्वाऽध उपास्त मैथुनाख्यं कर्माधउपासनं नाम कृतवान्। तस्मात्स्त्रियमध उपासीत श्रेष्ठानुश्रयणा हि प्रजाः। अत्र वाजपेयसामान्यक्लृप्तिमाह—स एतं प्राञ्चं प्रकृष्टगतियुक्तमात्मनो ग्रावाणं सोमाभिषवोपलस्थानीयं काठिन्यसामान्यात्प्रजननेन्द्रियमुदपारयदुत्पूरितवान्स्त्रीव्यञ्जनं प्रति तेनैनां स्त्रियमभ्यसृजदभिसंसर्गं कृतवान् ॥२॥

तस्या वेदिरित्यादि सर्वं सामान्यं प्रसिद्धम्। समिद्धोऽग्निर्मध्यतः स्त्रीव्यञ्जनस्य तौ मुष्कावधिषवणफलके १५ इति व्यवहितेन संबध्यते। वाजपेययाजिनो यावान्लोकः प्रसिद्धस्तावान्विदुषो मैथुनकर्मणो लोकः फलमिति स्तूयते। तस्माद्बीभत्सा नो कार्येति। य एवं विद्वानधोपहासं चरत्यासां स्त्रीणां सुकृतं वृङ्क्त आवर्जयति। अथ पुनर्यो वाजपेयसंपत्तिं न जानात्यविद्वान्रेतसो रसतमत्वं चाधोपहासं चरति। आऽस्य स्त्रियः सुकृतमावृञ्जतेऽविदुषः ३॥

एतद्ध स्म वै तद्विद्वानुद्दालक आरुणिराहाधोपहासाख्य मैथुनकर्म वाजपेयसम्पन्नं विद्वानित्यर्थः। तथा नाको मौद्गल्यः कुमारहारितश्च। किं त आहुरित्युच्यते—बहवो मर्या मरणधर्मिणो मनुष्या ब्राह्मणा अयन येषां ते २० ब्राह्मणायना ब्रह्मबन्धवो जातिमात्रोपजीविन इत्येतत्। निरिन्द्रिया विश्लिष्टेन्द्रिया विसुकृतो विगतसुकृतकर्माणोऽविद्वांसो मैथुनकर्मासक्ता इत्यर्थः। ते किमस्माल्लोकात्प्रयन्ति परलोकात्परिभ्रष्टा इति मैथुनकर्मणोऽत्यन्तपापहेतुत्वं दर्शयति—य इदमविद्वांसोऽधोपहासं चरन्तीति। श्रीमन्थं कृत्वा पत्न्या ऋतुकालं ब्रह्मचर्येण प्रतीक्षते यदीद रेतः स्कन्दति बहु वाऽल्पं वा सुप्तस्य वा जाग्रतो वा रागप्राबल्यात् ॥४॥

सर्वेभ्य इति ॥१॥ २५

श्रेष्ठमनुश्रयन्तेऽनुसरन्तीति श्रेष्ठानुश्रयणाः। पशुकर्मणि स्वारस्येन प्राणिमात्रस्य प्रवृत्तेर्वृथा विधिरित्याशङ्क्याऽऽह—अत्रेति। अवाच्यं कर्म सप्तम्यर्थः ॥२॥

मुष्कौ वृषणौ योनिपार्श्वयोः कठिनौ मांसखण्डौ तत्राधिषवणशब्दितसोमफलकदृष्टिः। यच्चाऽऽनुडुहं चर्म सोमकण्डनार्थं तद्दृष्टी रहस्यदेशस्य चर्मणि कर्तव्येत्याह—ताविति। उपास्तिप्रकारमुक्त्वा फलोक्तेस्तात्पर्यमाह—वाजपेयेति। स्तूयते मैथुनाख्यं कर्मेति शेषः। स्तुतिफलमाह—तस्मादिति। इतिशब्दः स्तुतिफलदर्शनार्थः। उपास्तेर- ३० धिकं फलमाह—य एवमिति। अविदुषो दुर्व्यापारनिरतस्य प्रत्यवायं दर्शयति—अथेति ॥३॥

अविदुषामतिगर्हितमिदं कर्मेत्यत्राऽऽचार्यपरम्परासम्मतिमाह—एतद्धेति। पशुकर्मणो वाजपेयसंपन्नत्वमिदंशब्दार्थः। अविदुषामवाच्ये कर्मणि प्रवृत्तानां दोषित्वमुपसंहर्तुमितिशब्दः। विदुषो लाभमविदुषश्च दोषं दर्शयित्वा क्रियाकालात्प्रागेव रेत स्खलने प्रायश्चित्तं दर्शयति—श्रीमन्थमिति। यः प्रतीक्षते तस्य रेतो यदि स्कन्दतीति योजना ॥४॥ ३५

तदभिमृशेदनु वा मन्त्रयेत यन्मेऽद्य रेतः पृथिवीमस्कान्त्सीद्यदोषधीरप्यसरद्यदपः । इदमहं तद्रेत आददे पुनर्मामैत्विन्द्रियं पुनस्तेजः पुनर्भगः । पुनरग्निर्धिष्ण्या यथास्थानं कल्पन्तामित्यनामिकाङ्गुष्ठाभ्यामादायान्तरेण स्तनौ वा भ्रुवौ वा निमृज्यात् ॥५॥ अथ यद्युदक आत्मानं पश्येत्तदभिमन्त्रयेत मयि तेज इन्द्रियं यशो द्रविणं सुकृतमिति ५ श्रीर्ह वा एषा स्त्रीणां यन्मलोद्वासास्तस्मान्मलोद्वाससं यशस्विनीमभिक्रम्योपमन्त्रयेत ॥६॥ सा चेदस्मै न दद्यात्काममेनामवक्रीणीयात्सा चेदस्मै नैव दद्यात्काममेनां यष्ट्या वा पाणिना वोपहत्यातिक्रामेदिन्द्रियेण ते यशसा यश आदद इत्ययशा एव भवति ॥७॥ सा चेदस्मै दद्यादिन्द्रियेण ते यशसा यश आदधामीति यशस्विनावेव भवतः ॥८॥

स यामिच्छेत्कामयेत मेति तस्यामर्थं निष्ठाय मुखेन मुखं संधायोप-
१० स्थमस्या अभिमृश्य जपेदङ्गादङ्गात्संभवसि हृदयादधिजायसे ।
स त्वमङ्गकषायोऽसि दिग्धविद्धमिव मादयेमाममूं मयीति ॥९॥

तदभिमृशेदनुमन्त्रयेत वाऽनुजपेदित्यर्थः । यदाऽभिमृशति तदाऽनामिकाङ्गुष्ठाभ्यां तद्रेत आददे इत्येवमन्तेन मन्त्रेण पुनर्मामित्येतेन निमृज्यादन्तरेण मध्ये भ्रुवौ भ्रुवोर्वा स्तनौ स्तनयोर्वा ॥५॥

अथ यदि कदाचिदुदक आत्मानमात्मच्छायां पश्येत्तत्राप्यभिमन्त्रयेतानेन मन्त्रेण—मयि तेज इति । श्रीर्ह
१५ वा एषा पत्नी स्त्रीणां मध्ये यद्यस्मान्मलोद्वासा उद्गतमलवद्वासास्तस्मात्तां मलोद्वाससं यशस्विनीं श्रीमतीमभिक्रम्याभिगत्योपमन्त्रयेतेदमद्याऽऽवाभ्यां कार्यं यत्पुत्रोत्पादनमिति त्रिरात्रान्त आप्लुताम् ॥६॥

सा चेदस्मै न दद्यान्मैथुनं कर्तुं काममेनामवक्रीणीयादाभरणादिना ज्ञापयेत् । तयाऽपि सा नैव दद्यात्काममेनां यष्ट्या वा पाणिना वोपहत्यातिक्रामेन्मैथुनाय । शप्स्यामि त्वां दुर्भगां करिष्यामीति प्रख्याप्य तामनेन मन्त्रेणोपगच्छेदिन्द्रियेण ते यशसा यश आदद इति । सा तस्मात्तदभिशापाद्वन्ध्या दुर्भगेति ख्याताऽयशा एव
२० भवति ॥७॥

सा चेदस्मै दद्यादनुगुणैव स्याद्भर्तुस्तदाऽनेन मन्त्रेणोपगच्छेदिन्द्रियेण ते यशसा यश आदधामीति तदा यशस्विनावेवोभावपि भवतः ॥८॥

स यां स्वभार्यामिच्छेदियं मां कामयेतेति तस्यामर्थं प्रजननेन्द्रियं निष्ठाय निक्षिप्य मुखेन मुखं संधायोपस्थमस्या अभिमृश्य जपेदिमं मन्त्रमङ्गादङ्गादिति ॥९॥

२५ मे ममाद्याप्रासकाले यद्रेतः पृथिवीं प्रत्यस्कान्त्सीद्रागातिरेकेण स्कन्नमासीदोषधीः प्रत्यप्यसरद्गमद्यच्चापः स्वयोनिं प्रति गतमभूत्तदिदं रेतः संप्रत्याददेऽहमित्यादानमन्त्रार्थः । केनाभिप्रायेण तदादानं तदाह—पुनरिति । तत्पुना रेतोरूपेण बहिर्निर्गतमिन्द्रियं मां प्रत्येतु समागच्छतु । तेजस्त्वग्गता कान्तिः । भगः सौभाग्यं ज्ञानं वा । तदपि सर्वं रेतोनिर्गमात्तदात्मना बहिर्निर्गतं सन्मां प्रत्यागच्छतु । अग्निर्धिष्ण्यं स्थानं येषां ते देवास्तद्रेतो यथास्थानं कल्पयन्त्विति मार्जनमन्त्रार्थः ॥५॥

३० अयोनौ रेतःस्खलने प्रायश्चित्तमुक्तं रेतोयोनावुदके रेतःसिचश्छायादर्शने प्रायश्चित्तं दर्शयति—यथेत्यादिना । निमित्तान्तरे प्रायश्चित्तान्तरप्रदर्शनप्रक्रमार्थोऽथशब्दः । मयि तेज प्रभृति देवाः कल्पयन्त्विति मन्त्रयोजना । प्रकृतेन रेतःसिचा यस्यां पुत्रो जनयितव्यस्तां स्त्रियं स्तौति—श्रीरित्यादिना । कथं सा यशस्विनी न हि तस्याः ख्यातिरस्ति तत्राऽऽह—यदिति । रजस्वलाभिगमनादि प्रतिषिद्धमित्याशङ्क्य विशिनष्टि—त्रिरात्रेति ॥६॥

ज्ञापयेदात्मीयं प्रेमातिरेकमिति शेषः । बलादेव वशीकृता भार्या पशुकर्मार्थं कथमुपगच्छेदित्याकाङ्क्षायामाह—
३५ शप्स्यामीति ॥७–८॥

भर्तुर्भार्यावशीकरणप्रकारमुक्त्वा पुरुषद्वेषिण्यास्तस्यास्तद्विषये प्रीतिसंपादनप्रकारं दर्शयति—स यामित्यादिना । हे रेतस्त्वं मदीयात्सर्वस्मादङ्गात्समुत्पद्यसे विशेषतश्च हृदयादन्नरसद्वारेण जायसे स त्वमङ्गानां कषायो रसः सन्विषलिप्तशरविद्धा मृगीमिवामूं मदीयां स्त्रियं मे मादय मद्वशां कुर्वित्यर्थः ॥९॥

अथ यामिच्छेन्न गर्भं दधीतेति तस्यामर्थं निष्ठाय मुखेन मुखँ संधायाभि-
प्राण्यापान्यादिन्द्रियेण ते रेतसा रेत आदद इत्यरेता एव भवति ॥१०॥

अथ यामिच्छेद्दधीतेति तस्यामर्थं निष्ठाय मुखेन मुखँ संधायापा-
न्याभिप्राण्यादिन्द्रियेण ते रेतसा रेत आदधामीति गर्भिण्येव भवति ॥११॥

अथ यस्य जायायै जारः स्यात्तं चेद्द्विष्यादामपात्रेऽग्निमुपसमाधाय प्रतिलोमँ शर- ५
बर्हिस्तीर्त्वा तस्मिन्नेताः शरभृष्टीः प्रतिलोमाः सर्पिषाऽक्ता जुहुयान्मम समिद्धेऽहौषीः
प्राणापानौ त आददेऽसाविति मम समिद्धेऽहौषीः पुत्रपशूँस्त आददेऽसाविति मम
समिद्धेऽहौषीरिष्टासुकृते त आददेऽसाविति मम समिद्धेऽहौषीराशापराकाशौ त
आददेऽसाविति स वा एष निरिन्द्रियो विसुकृतोऽस्माल्लोकात्प्रैति यमेवंविद्ब्राह्मणः
शपति तस्मादेवंविच्छ्रोत्रियस्य दारेण नोपहासमिच्छेदुत ह्येवंवित्परो भवति ॥१२॥ १०

अथ यामिच्छेन्न गर्भं दधीत न धारयेद्गर्भिणी मा भूदिति तस्यामर्थमिति पूर्ववत्। अभिप्राण्याभि-
प्राणनं प्रथमं कृत्वा पश्चादपान्यादिन्द्रियेण ते रेतसा रेत आदद इत्यनेन मन्त्रेणारेता एव भवति न गर्भिणी
भवतीत्यर्थः ॥१०॥

अथ यामिच्छेद्दधीत गर्भमिति तस्यामर्थमित्यादि पूर्ववत्। पूर्वविपर्ययेणापान्याभिप्राण्यादिन्द्रियेण ते
रेतसा रेत आदधामीति गर्भिण्येव भवति ॥११॥ १५

अथ पुनर्यस्य जायायै जार उपपतिः स्यात्तं चेद्द्विष्यादभिचरिष्याम्येनमिति मन्येत तस्येदं कर्म। आम-
पात्रेऽग्निमुपसमाधाय सर्वं प्रतिलोमं कुर्यात्तस्मिन्नग्नावेताः शरभृष्टीः शरेषीकाः प्रतिलोमाः सर्पिषाऽक्ता घृताभ्यक्ता
जुहुयान्मम समिद्धेऽहौषीरित्याद्या आहुतीरन्ते सर्वासामसाविति नामग्रहणं प्रत्येकम्। स एष एवंविदं ब्राह्मणः
शपति स विसुकृतो विगतपुण्यकर्मा प्रैति। तस्मादेवंविच्छ्रोत्रियस्य दारेण नोपहासमिच्छेन्नर्मापि न कुर्यात्किमुताद्योप-
हासं हि यस्मादेवंविदपि तावत्परो भवति शत्रुर्भवतीत्यर्थः ॥१२॥ २०

तस्याः स्वविषये प्रीतिमापाद्यावाच्यकर्मानुष्ठानदशायामभिप्रायविशेषानुसारेणानुष्ठानविशेषं दर्शयति—
अथेत्यादिना। तत्र तत्राथशब्दस्तत्तदुपक्रमार्थो नेतव्यः। पशुकर्मकाले प्रथमं स्वकीयपुंस्त्वद्वारा तदीयस्त्रीत्वे वायुं
विसृज्य तेनैव द्वारेण ततस्तदादानाभिमानं कुर्यादित्याह—अभिप्राण्येति ॥१०॥

भर्तुरेवाभिप्रायान्तरानुसारिणं विधिमाह—अथ यामित्यादिना। स्वकीयपञ्चमेन्द्रियेण तदीयपञ्चमेन्द्रियाद्रेतः
स्वीकृत्य तत्पुत्रोत्पत्तिसमर्थं कृतमिति मत्वा स्वकीयरेतसा सह तस्मिन्निक्षिपेत्तदिदमपाननं प्राणनं च तत्पूर्वकं २५
रेतःसेचनम् ॥११॥

सम्प्रति प्रासङ्गिकमाभिचारिकं कर्म कथयति—अथ पुनरिति। द्वेषवताऽनुष्ठितमिदं कर्म फलवदिति वक्तुं
द्विष्यादित्यधिकारिविशेषणम्। आमविशेषणं पात्रस्य प्रकृतकर्मयोग्यत्वख्यापनार्थम्। अग्निमित्येकवचनादुपसमाधान-
वचनाच्चाऽऽवसथ्याग्निरत्र विवक्षितः। सर्वं परिस्तरणादि तस्य प्रतिलोमत्वे कर्मणः प्रतिलोमत्वं हेतूकर्तव्यम्। मम
स्वभूते योषाग्नौ यौवनादिना समिद्धे रेतो हुतवानसि ततोऽपराधिनस्तव प्राणापानावाददे फडित्युक्त्वा होमो ३०
निर्वर्तयितव्यः। तदन्ते चाऽसावित्यात्मनः गत्रोर्वा नाम गृह्णीयात्। इष्टं श्रौतं कर्म सुकृतं स्मार्तम्। आशा प्रार्थना
वाचा यत्प्रतिज्ञातं कर्मणा नोपपादितं तस्य प्रतीक्षा पराकाशः। यथोक्तहोमद्वारा शापदानस्य फलं दर्शयति—स एष
इति। एववित्त्वं मन्थकर्मद्वारा प्राणविद्यावत्त्वम्। तस्मादेवंवित्त्वं परदारगमने यथोक्तदोषज्ञातृत्वम्। तच्छब्दोपात्तं
हेत्वन्तरमाह—एवंविदपीति ॥१२॥

अथ यस्य जायामार्तवं विन्देत्त्र्यहं कंसेन पिबेदहतवासा नैनां वृषलो न वृषल्युपहन्यात्त्रिरात्रान्त आप्लुत्य व्रीहीनवघातयेत् ॥१३॥

स य इच्छेत्पुत्रो मे शुक्लो जायेत वेदमनुब्रुवीत सर्वमायुरियादिति क्षीरौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवै ॥१४॥

अथ य इच्छेत्पुत्रो मे कपिलः पिङ्गलो जायेत द्वौ वेदावनुब्रुवीत सर्वमायुरियादिति दध्योदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवै ॥१५॥

अथ य इच्छेत्पुत्रो मे श्यामो लोहिताक्षो जायेत त्रीन्वेदाननुब्रुवीत सर्वमायुरियादित्युदौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवै ॥१६॥

अथ य इच्छेद्दुहिता मे पण्डिता जायेत सर्वमायुरियादिति तिलौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवै ॥१७॥

अथ य इच्छेत्पुत्रो मे पण्डितो विगीतः समितिंगमः शुश्रूषितां वाचं भाषिता जायेत सर्वान्वेदाननुब्रुवीत सर्वमायुरियादिति मांसौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवा औक्षेण वार्षभेण वा ॥१८॥

अथ यस्य जायामार्तवं विन्देदृतुभावं प्राप्नुयादित्येवमादिग्रन्थः श्रीर्ह वा एषा स्त्रीणामित्यतः पूर्वं द्रष्टव्यः सामर्थ्यात् । त्र्यहं कंसेन पिबेदहतवासाश्च स्यात् । नैनां स्नातामस्नातां च वृषलो वृषली वा नोपहन्यान्नोपस्पृशेत् । त्रिरात्रान्ते त्रिरात्रव्रतसमाप्तावाप्लुत्य स्नात्वाऽहतवासा स्यादिति व्यवहितेन संबन्धः । तामाप्लुतां व्रीहीनवघातयेद्व्रीह्यवघाताय तामेव विनियुञ्ज्यात् ॥१३॥

स य इच्छेत्पुत्रो मे शुक्लो वर्णतो जायेत वेदमेकमनुब्रुवीत सर्वमायुरियाद्वर्षशतं क्षीरौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ समर्थौ जनयितवै जनयितुम् ॥१४॥

दध्योदनं दध्ना चरुं पाचयित्वा द्विवेदं चेदिच्छति पुत्रं तदैवमशननियमः ॥१५॥

केवलमेव स्वाभाविकमोदनम् । उदग्रहणमन्यप्रसङ्गनिवृत्त्यर्थम् ॥१६॥

दुहितुः पाण्डित्यं गृहतन्त्रविषयमेव वेदेऽनधिकारात् । तिलौदनं कृसरम् ॥१७॥

विविधं गीतो विगीतः प्रख्यात इत्यर्थः । समितिंगमः सभां गच्छतीति प्रगल्भ इत्यर्थः । पाण्डित्यस्य पृथग्ग्रहणात् । शुश्रूषितां श्रोतुमिष्टां रमणीयां वाचं भाषिता संस्कृताया अर्थवत्या वाचो भाषितेत्यर्थः । मांसमिश्रमोदनं मांसौदनम् । तन्मांसनियमार्थमाह—औक्षेण वा मांसेन । उक्षा सेचनसमर्थः पुंगवस्तदीयं मांसम् । ऋषभस्ततोऽप्यधिकवयास्तदीयमार्षभं मांसम् ॥१८॥

आभिचारिकं कर्म प्रसङ्गागतमुक्त्वा पूर्वोक्तमृतुकालं ज्ञापयति—अथेति । श्रीर्ह वा एषा स्त्रीणामित्येतदपेक्षया पूर्वत्वम् । पाठक्रमादर्थक्रमस्य बलवत्त्वे हेतुमाह—सामर्थ्यादिति । अर्थवशादिति यावत् ॥१३॥

किं पुनरवघातनिष्पन्नैस्तण्डुलैरनुष्ठेयं तदाह—स य इति । बलदेवसादृश्यं वा शुद्धत्वं वा शुक्लत्वम् ॥१४॥

स्वाभाविकमोदनं पाचयति चेत्किमर्थमुदग्रहणं तद्व्यतिरेकेणौदनपाकासम्भवादित्याशङ्क्याऽऽह—उदग्रहणमिति । क्षीरादेरिति शेषः ॥१६॥

वेदविषयमेव तत्पाण्डित्यं किं न स्यादत आह—वेद इति ॥१७॥

समितिर्विद्वत्सभा तां गच्छतीति विद्वानेवोच्यतामिति चेन्नेत्याह—पाण्डित्यस्येति । सर्वशब्दो वेदचतुष्टयविषयः । औक्षेणेत्यादितृतीया सहार्थे । देशविशेषापेक्षया कालविशेषापेक्षया वा मांसनियमः । अथशब्दस्तु पूर्ववाक्येषु यथारुचि विकल्पार्थः ॥१८॥

अथाभिप्रातरेव स्थालीपाकावृताऽऽज्यं चेष्टित्वा स्थालीपाकस्योपघातं जुहोत्यग्नये स्वाहाऽनुमतये स्वाहा देवाय सवित्रे सत्यप्रसवाय स्वाहेति हुत्वोद्धृत्य प्राश्नाति प्राश्येतरस्याः प्रयच्छति प्रक्षाल्य पाणी उदपात्रं पूरयित्वा तेनैनां त्रिरभ्युक्षत्युत्तिष्ठातो विश्वावसोऽन्यामिच्छ प्रपूर्व्या सं जायां पत्या सहेति ॥१९॥

अथैनामभिपद्यतेऽमोऽहमस्मि सा त्वँ सा त्वमस्यमोऽहं सामाहमस्मि ऋक्त्वं द्यौरहं पृथिवी त्वं तावेहि सँरभावहै सह रेतो दधावहै पुँसे पुत्राय वित्तय इति ॥२०॥ ५

अथास्या ऊरू विहापयति विजिहीथां द्यावापृथिवी इति तस्यामर्थं निष्ठाय मुखेन मुखँ संधाय त्रिरेनामनुलोमामनुमार्ष्टि विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिँशतु। आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते। गर्भं धेहि सिनीवालि गर्भं धेहि पृथुष्टुके। गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजौ ॥२१॥ १०

अथाभिप्रातरेव कालेऽवघातनिर्वृत्तांस्तण्डुलानादाय स्थालीपाकावृता स्थालीपाकविधिनाऽऽज्यं चेष्टित्वाऽऽज्यसंस्कारं कृत्वा चरुं श्रपयित्वा स्थालीपाकस्याऽऽहुतीर्जुहोत्युपघातमुपहत्योपहत्याग्नये स्वाहेत्याद्याः। गार्ह्यः सर्वो विधिर्द्रष्टव्योऽत्र हुत्वोद्धृत्य चरुशेषं प्राश्नाति स्वयं प्राश्येतरस्याः पत्न्यै प्रयच्छत्युच्छिष्टम्। प्रक्षाल्य पाणी आचम्योदपात्रं पूरयित्वा तेनोदकेनैनां त्रिरभ्युक्षत्यनेन मन्त्रेणोत्तिष्ठात इति सकृन्मन्त्रोच्चारणम् ॥१९॥

अथैनामभिमन्त्र्य क्षीरौदनादि यथापत्यकामं भुक्त्वेति क्रमो द्रष्टव्यः। संवेशनकालेऽमोऽहमस्मीत्यादिमन्त्रेणाभिपद्यते ॥२०॥ १५

अथास्या ऊरू विहापयति विजिहीथां द्यावापृथिवी इत्यनेन। तस्यामर्थमित्यादि पूर्ववत्। त्रिरेनां शिरःप्रभृत्यनुलोमामनुमार्ष्टि विष्णुर्योनिमित्यादि प्रतिमन्त्रम् ॥२१॥

कदा पुनरिदमोदनपाकादि कर्तव्य तदाह—अथेति। कोऽसौ स्थालीपाकविधिः कथं वा तत्र होमस्तत्राऽऽह—गार्ह्य इति। गृहे प्रसिद्धो गार्ह्यः। अत्रेति पुत्रमन्थकर्मोक्तिः। अतो मद्भार्यातः सकाशाद्धो विश्वावसो गन्धर्व २० त्वमुत्तिष्ठान्या च जाया प्रपूर्व्या तरुणी पत्या सह संक्रीडमानामिच्छाहं पुनः स्वामिमां जायां समुपैमीति मन्त्रार्थः ॥१९॥

अभिपत्तिरालिङ्गनम्। कदा क्षीरौदनादिभोजनं तदाह—क्षीरेति। भुक्त्वाऽभिपद्यत इति सम्बन्धः। अहं पतिरमः प्राणोऽस्मि सा त्वं वागसि कथ तव प्राणत्वं मम वाक्त्वमित्याशङ्क्य वाचः प्राणाधीनत्ववत्तव मदधीनत्वादित्यभिप्रेत्य सा त्वमित्यादि पुनर्वचनम्। ऋगाधारं हि साम गीयते। अस्ति च मदाधारत्व तव। तथा च मम २५ सामत्वमृक्त्व च तव। द्यौरहं पितृत्वात्पृथिवी त्वं मातृत्वात्तयोर्मातापितृत्वसिद्धेरित्यर्थ.। तावावा संरभावहै सरम्भमुद्यमं करवावहै। एहि त्वमागच्छ। कोऽसौ संरम्भस्तमाह—सहेति। पुस्त्वयुक्तपुत्रलाभाय रेतोधारणं कर्तव्यमित्यर्थः ॥२०॥

ऊर्वोः सम्बोधनं द्यावापृथिवी इति। विजिहीथा विश्लिष्टे भवेतं युवामित्यर्थः। विष्णुर्व्यापनशीलो भगवान्भवत्या योनिं कल्पयतु पुत्रोत्पत्तिसमर्थां करोतु। त्वष्टा सविता तव रूपाणि पिंशतु विभागेन दर्शनयोग्यानि करोतु। ३० प्रजापतिर्विराडात्मा मदात्मना स्थित्वा त्वयि रेत. समासिञ्चतु प्रक्षिपतु। धाता पुनः सूत्रात्मा त्वदीयं गर्भं त्वदात्मना स्थित्वा दधातु धारयतु पुष्णातु च। सिनीवाली दर्शाहर्देवता त्वदात्मना वर्तते। सा च पृथुष्टुका विस्तीर्णस्तुतिभीः सिनीवालि पृथुष्टुके गर्भमिमं धेहि धारय। अश्विनौ देवौ सूर्याचन्द्रमसौ स्वकीयरश्मिमालिनौ तव गर्भं त्वदात्मना स्थित्वा समाधत्ताम् ॥२१॥

हिरण्मयी अरणी याभ्यां निर्मन्थतामश्विनौ । तं ते गर्भं हवामहे दशमे मासि सूतये । यथाऽग्निगर्भा पृथिवी यथा द्यौरिन्द्रेण गर्भिणी । वायुर्दिशां यथा गर्भ एवं गर्भं दधामि तेऽसाविति ॥२२॥

सोष्यन्तीमद्भिरभ्युक्षति । यथा वायुः पुष्करिणीं समिङ्गयति
५ सर्वतः । एवा ते गर्भ एजतु सहावैतु जरायुणा । इन्द्रस्यायं व्रजः कृतः सार्गलः सपरिश्रयः । तमिन्द्र निर्जहि गर्भेण सावरां सहेति ॥२३॥

जातेऽग्निमुपसमाधायाङ्क आधाय कंसे पृषदाज्यं संनीय पृषदाज्यस्योपघातं जुहोत्यस्मिन्सहस्रं पुष्यासमेधमानः स्वे गृहे । अस्योपसन्द्यां मा च्छैत्सीत्प्रजया च पशुभिश्च स्वाहा । मयि प्राणांस्त्वयि मनसा जुहोमि स्वाहा । यत्कर्मणात्यरीरिचं
१० यद्वा न्यूनमिहाकरम् । अग्निष्टत्स्विष्टकृद्विद्वान्स्विष्टं सुहुतं करोतु नः स्वाहेति ॥२४॥

अन्ते नाम गृह्णात्यसाविति तस्याः ॥२२॥

सोष्यन्तीमद्भिरभ्युक्षति प्रसवकाले सुखप्रसवनार्थमनेन मन्त्रेण । यथा वायुः पुष्करिणीं समिङ्गयति सर्वतः । एवा ते गर्भ एजत्विति ॥२३॥

अथ जातकर्म । जातेऽग्निमुपसमाधायाङ्क आधाय पुत्रं कंसे पृषदाज्यं संनीय संयोज्य दधि घृते पृषदाज्य-
१५ स्योपघातं जुहोत्यस्मिन्सहस्रमित्याद्यावापस्थाने ॥२४॥

ज्योतिर्मय्यावरणी प्रागासतुर्याभ्यां गर्भमश्विनौ निर्मथितवन्तौ तं तथाभूतं गर्भं ते जठरे दधावहे दशमे मासि प्रसवार्थम् । आधीयमानं गर्भं दृष्टान्तेन दर्शयति—यथेति । इन्द्रेण सूर्येणेति यावत् । असाविति पत्युर्वा निर्देशः । तस्या नाम गृह्णातीति पूर्वेण संबन्धः ॥२२॥

समिङ्गयति स्वरूपोपघातमकृत्वैव चालयतीत्येतत् । एवा त एवमेव तव स्वरूपोपघातमकुर्वन्नेजतु गर्भश्चलतु ।
२० जरायुणा गर्भवेष्टनमांसखण्डेन सहावैतु निर्गच्छतु । इन्द्रस्य प्राणस्यायं व्रजो मार्गः सर्वकाले गर्भाधानकाले वा कृतः । सार्गल इत्यस्य व्याख्या सपरिश्रय इति । परिवेष्टनेन जरायुणा सहित इत्यर्थः । तं मार्गं प्राप्य त्वमिन्द्र गर्भेण सह निर्जहि निर्गच्छ । गर्भनिःसरणानन्तरं या मांसपेशी निर्गच्छति सावरा तां च निर्गमयेत्यर्थः ॥२३॥

घृतमिश्रं दधि पृषदाज्यमित्युच्यते । उपघातमित्याभीक्ष्ण्य पौनःपुन्यं विवक्षितम् । पृषदाज्यस्याल्पमल्पमादाय पुनः पुनर्जुहोतीत्यर्थः । अस्मिन्स्वे गृहे पुत्ररूपेण वर्धमानो मनुष्याणां सहस्रं पुष्यासमनेकमनुष्यपोषको
२५ भूयासमस्य मत्पुत्रस्योपसन्द्यां संततौ प्रजया पशुभिश्च सह श्रीर्मा विच्छिन्ना भूयादित्याह—अस्मिन्निति । मयि पितरि ये प्राणाः सन्ति तान्पुत्रे त्वयि मनसा समर्पयामीत्याह—मयीति । अत्यरीरिचमित्यतिरिक्तं कृतवानस्मीह कर्मण्यकरमकरवं तत्सर्वं विद्वानग्निः स्विष्टं करोतीति स्विष्टकृद्भूत्वा स्विष्टमनधिकं सुहुतमन्यूनं चास्माकं करोत्वित्यर्थः ॥२४॥

---

१. व्रजत्यनेनेति व्रजः मार्गः ।

अथास्य दक्षिणं कर्णमभिनिधाय वाग्वागिति त्रिरथ दधि मधु घृतं संनीयानन्तर्हितेन जातरूपेण प्राशयति । भूस्ते दधामि भुवस्ते दधामि स्वस्ते दधामि भूर्भुवः स्वः सर्वं त्वयि दधामीति ॥२५॥
अथास्य नाम करोति वेदोऽसीति तदस्य तद्गुह्यमेव नाम भवति ॥२६॥
अथैनं मात्रे प्रदाय स्तनं प्रयच्छति यस्ते स्तनः शशयो यो मयोभूर्यो रत्नधा वसुविद्यः सुदत्रः । येन विश्वा पुष्यसि वार्याणि सरस्वति तमिह धातवे करिति ॥२७॥ ५

अथास्य मातरमभिमन्त्रयते । इलाऽसि मैत्रावरुणी वीरे वीरमजीजनत् । सा त्वं वीरवती भव याऽस्मान्वीरवतोऽकरदिति । तं वा एतमाहुरतिपिता बताभूरतिपितामहो बताभूः परमां बत काष्ठां प्रापच्छ्रिया यशसा ब्रह्मवर्चसेन य एवंविदो ब्राह्मणस्य पुत्रो जायत इति ॥२८॥

इति बृहदारण्यकोपनिषदि षष्ठाऽध्यायस्य चतुर्थं ब्राह्मणम् ॥४॥ १०

अथास्य दक्षिणं कर्णमभिनिधाय स्वं मुखं वाग्वागिति त्रिर्जपेत् । अथ दधि मधु घृतं संनीयानन्तर्हितेना-व्यवहितेन जातरूपेण हिरण्येन प्राशयत्येतैर्मन्त्रैः प्रत्येकम् ॥२५॥

अथास्य नामधेयं करोति वेदोऽसीति । तदस्य तद्गुह्यं नाम भवति वेद इति ॥२६॥

अथैनं मात्रे प्रदाय स्वाङ्कस्थं स्तनं प्रयच्छति यस्ते स्तन इत्यादिमन्त्रेण ॥२७॥

अथास्य मातरमभिमन्त्रयत इलाऽसीत्यनेन । तं वा एतमाहुरित्यनेन विधिना जातः पुत्रः पितरं पितामहं १५ चातिशेत इति श्रिया यशसा ब्रह्मवर्चसेन परमां निष्ठां प्रापदित्येवं स्तुत्यो भवतीत्यर्थः । यस्य चैवंविदो ब्राह्मणस्य पुत्रो जायते स चैवं भवतीत्यध्याहार्यम् ॥२८॥

इति बृहदारण्यकोपनिषद्भाष्ये षष्ठाध्यायस्य चतुर्थं ब्राह्मणम् ॥४॥

अस्य जातस्य शिशोरित्यर्थः । त्रयीलक्षणा वाक्त्वयि प्रविशत्विति जपतोऽभिप्रायः । एतैर्मन्त्रैर्भूस्ते दधामीत्यादिभिरिति शेषः ॥२५॥ २०

वेदनाम्ना व्यवहारो लोके नास्तीत्याशङ्क्याऽऽह—तदस्येति । यत्तद्वेद इति नाम तदस्य गुह्यं भवति । वेदनं वेदोऽनुभवः सर्वस्य निजं स्वरूपमित्यर्थः ॥२६॥

हे सरस्वति यस्ते स्तनः श[स]शयः शयः फलं तेन सह वर्तमानो यश्च सर्वप्राणिनां स्थितिहेत्वन्नभावेन जातो यश्च रत्नधा अन्नस्य पयसो वा धाता यश्च वसु कर्मफलं तद्विन्दतोति वसुवित् । यश्च सुष्ठु ददातीति सुदत्रो येन च स्तनेन विश्वा विश्वानि वार्याणि वरणीयानि देवादीनि भूतानि त्वं पुष्यसि तं स्तनं मदीयपुत्रस्य धातवे पानाय २५ मदीयभार्यास्तने प्रविष्टं कुर्वित्यर्थः ॥२७॥

इला स्तुत्या भोग्याऽसि । मित्रावरुणाभ्यां संभूतो मैत्रावरुणो वसिष्ठस्तस्य भार्या मैत्रावरुणी सा चारुन्धती तद्वत्त्वं तिष्ठसीति भार्यां संबोधयति—मैत्रावरुणीति । वीरे पुरुषे मयि निमित्तभूते भवती वीरं पुत्रमजीजनत् । सा त्वं वीरवती जीववहुपुत्रा भव । या भवती वीरवतः पुत्रसंपन्नानस्मानकरत्कृतवतीति मन्त्रार्थः । पितरमतीत्य वर्तत इत्यतिपिता । अहो महानेव विस्मयो यत्पितरं पितामहं च सर्वमेव वशमतीत्य सर्वस्मादधिकस्त्वं जातोऽसीत्यर्थ. । ३० न केवलं पुत्रस्यैवेयं स्तुतिरपि तु यथोक्तपुत्रसंपन्नस्य पितुरपीत्याह—यस्येति ।

इति बृहदारण्यकोपनिषद्भाष्यटीकायां षष्ठाध्यायस्य चतुर्थं ब्राह्मणम् ॥४॥

अथ षष्ठाध्यायस्य पञ्चमं ब्राह्मणम्

अथ वꣳशः । पौतिमाषीपुत्रः कात्यायनीपुत्रात्कात्यायनीपुत्रो गौतमीपुत्राद्गौतमीपुत्रो भारद्वाजीपुत्राद्भारद्वाजीपुत्रः पाराशरीपुत्रात्पाराशरीपुत्र औपस्वस्तीपुत्रादौपस्वस्तीपुत्रः पाराशरीपुत्रात्पाराशरीपुत्रः कात्यायनीपुत्रात्कात्यायनीपुत्रः कौशिकीपुत्रात्कौशिकी-
५ आलम्बीपुत्राच्च वैयाघ्रपदीपुत्राच्च वैयाघ्रपदीपुत्रः काण्वीपुत्राच्च कापीपुत्राच्च कापीपुत्रः ॥१॥

आत्रेयीपुत्रादात्रेयीपुत्रो गौतमीपुत्राद्गौतमीपुत्रो भारद्वाजीपुत्राद्भारद्वाजीपुत्रः पाराशरीपुत्रात्पाराशरीपुत्रो वात्सीपुत्राद्वात्सीपुत्रः पाराशरीपुत्रात्पाराशरीपुत्रो वार्कारुणीपुत्राद्वार्कारुणीपुत्रो वार्कारुणीपुत्राद्वार्कारुणीपुत्र आर्तभागीपुत्रादार्तभागीपुत्रः शौङ्गीपुत्राच्छौङ्गीपुत्रः सांकृतीपुत्रात्सांकृतीपुत्र आलम्बायनीपुत्रादालम्बायनीपुत्र आलम्बीपुत्रादालम्बी-
१० पुत्रो जायन्तीपुत्राज्जायन्तीपुत्रो माण्डूकायनीपुत्रान्माण्डूकायनीपुत्रो माण्डूकीपुत्रान्माण्डूकीपुत्रः शाण्डिलीपुत्राच्छाण्डिलीपुत्रो राथीतरीपुत्राद्राथीतरीपुत्रो भालुकीपुत्राद्भालुकीपुत्रः क्रौञ्चिकीपुत्राभ्यां क्रौञ्चिकीपुत्रौ वैदभृतीपुत्राद्वैदभृतीपुत्रः कार्शकेयीपुत्रात्कार्शकेयीपुत्रः प्राचीनयोगीपुत्रात्प्राचीनयोगीपुत्रः सांजीवीपुत्रात्सांजीवीपुत्रः प्राश्नीपुत्रादासुरिवासिनः प्राश्नीपुत्र आसुरायणादासुरायण आसुरेरासुरिः ॥२॥

१५ याज्ञवल्क्याद्याज्ञवल्क्य उद्दालकादुद्दालकोऽरुणादरुण उपवेशेरुपवेशिः कुश्रेः कुश्रिर्वाजश्रवसो वाजश्रवा जिह्वावतो जिह्वावान्बाध्योगाद्बाध्योगोऽसिताद्वार्षगणादसितो वार्षगणो हरितात्कश्यपाद्धरितः कश्यपः शिल्पात्कश्यपाच्छिल्पः कश्यपः कश्यपान्नैध्रुवेः कश्यपो नैध्रुविर्वाचो वागम्भिण्या अम्भिण्यादित्यादादित्यानीमानि शुक्लानि यजूꣳषि वाजसनेयेन याज्ञवल्क्येनाऽऽख्यायन्ते ॥३॥

२० अथेदानीं समस्तप्रवचनवंशः । स्त्रीप्राधान्यात् गुणवान्पुत्रो भवतीति प्रस्तुतम् । अतः स्त्रीविशेषणेनैव पुत्रविशेषणादाचार्यपरम्परा कीर्त्यते । तानीमानि शुक्लानीत्यव्यामिश्राणि ब्राह्मणेन । अथवा यानीमानि यजूंषि

सांनिध्यात्खिलकाण्डस्य वंशोऽयमिति शङ्कां निवर्तयन्वंशब्राह्मणतात्पर्यमाह—अथेति । विद्याभेदादतीतस्य काण्डद्वयस्य प्रत्येकं वंशभावत्वेऽपि नास्य पृथक्त्वभागित्वं खिलत्वेन तच्छेषत्वात् । तथा च समाप्तौ पठितो वंशः
२५ समस्तस्यैव प्रवचनस्य भविष्यतीत्यर्थः । पूर्वौ वंशौ पुरुषविशेषितौ तृतीयस्तु स्त्रीविशेषितस्तत्र किं कारणमित्याशङ्क्याऽऽह—स्त्रीप्राधान्यादिति । तदेव स्फुटयति—गुणवानिति । कीर्त्यते ब्राह्मणेनेति संबन्धः । शुक्लानि यजूंषीत्यस्य व्याख्यानमव्यामिश्राणीति । दोषैरसंकीर्णानि पौरुषेयत्वदोषद्वाराभावादित्यर्थः । अयातयामान्यदुष्टान्यगतार्थानीत्यर्थः ।

१. ब्राह्मणेन मिश्रितत्वात् कृष्णयजूंषि इत्युक्तेः तदभावात् शुक्लित्वमित्यपि बोध्यम् ।

समानमासांजीवीपुत्रात्सांजीवीपुत्रो माण्डूकायनेर्माण्डूकायनिर्माण्डव्यान्माण्डव्यः कौत्सात्कौत्सो माहित्थेर्माहित्थिर्वामकक्षायणाद्वामकक्षायणः शाण्डिल्याच्छाण्डिल्यो वात्स्याद्वात्स्यः कुश्रेः कुश्रिर्यज्ञवचसो राजस्तम्बायनाद्यज्ञवचा राजस्तम्बायनस्तुरात्कावषेयात्तुरः कावषेयः प्रजापतेः प्रजापतिर्ब्रह्मणो ब्रह्म स्वयंभु ब्रह्मणे नमः ॥४॥

इति बृहदारण्यकोपनिषदि षष्ठाध्यायस्य पञ्चमं ब्राह्मणम् ॥५॥    ५
इति वाजसनेयके बृहदारण्यकोपनिषदि षष्ठोऽध्यायः ॥६॥
इति वाजसनेयकबृहदारण्यकक्रमेणाष्टमोऽध्यायः ॥८॥
इति शुक्लयजुर्वेदीया बृहदारण्यकोपनिषत् संपूर्णा

ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते। पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥

ॐ शान्तिः शान्तिः शान्तिः    १०

तानि शुक्लानि शुद्धानीत्येतत्। प्रजापतिमारभ्य यावत्पौतिमाषीपुत्रस्तावदधोमुखो नियताचार्यपूर्वक्रमो वंशः समानमासांजीवीपुत्रात्। ब्रह्मणः प्रवचनाख्यस्य। तच्चैतद्ब्रह्म प्रजापतिप्रबन्धपरम्परयाऽऽगत्यास्मास्वनेकधा विप्रसृतमनाद्यनन्तं स्वयंभु ब्रह्म नित्यं तस्मै ब्रह्मणे नमः। नमस्तदनुवर्तिभ्यो गुरुभ्यः ॥१-४॥

इति बृहदारण्यकोपनिषद्भाष्ये षष्ठाध्यायस्य पञ्चमं ब्राह्मणम् ॥५॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्यस्य श्रीशंकरभगवतः कृतौ    १५
बृहदारण्यकोपनिषद्भाष्ये षष्ठोऽध्यायः ॥६॥

पाठक्रमेण मनुष्यादिः प्रजापतिपर्यन्तो वंशो व्याख्यातः। संप्रत्यर्थक्रममाश्रित्याऽऽह—प्रजापतिमिति। अधोमुखत्वं पाठक्रमापेक्षयोच्यते। तत्रापि प्रजापतिमारभ्य सांजीवीपुत्रपर्यन्तं वाजसनेयिशाखासु सर्वास्वेको वंश इत्याह—समानमिति। प्रवचनाख्यस्य वंशात्मनो ब्रह्मण संबन्धात्प्रजापतिर्विद्यां लब्धवानित्याह—ब्रह्मण इति। तस्याधिकारिभेदादवान्तरभेदं दर्शयति—तच्चेति। प्रजापतिमुखप्रबन्धः प्रपञ्चः सैव परम्परा तयेति यावत्। तस्य परमात्मरूपं स्वयंभूत्वमभिदधाति—अनादीति। तस्यापौरुषेयत्वेनासंभावितदोषतया प्रामाण्यमभिप्रेत्य विशिनष्टि—नित्यमिति। आदिमध्यान्तेषु कृतमङ्गला ग्रन्था प्रचारिणो भवन्तीति मन्वानः सन्नाह—तस्मै ब्रह्मणे नम इति ॥१-४॥    २०

नमो जन्मादिसम्बन्धहेतुविध्वंसहेतवे। हरये परमानन्दपरिज्ञानवपुभृते ॥१॥
नमस्त्रय्यन्तसंदोहसरसीरुहभानवे। गुरवे परपक्षौघध्वान्तध्वंसपटीयसे ॥२॥

इति बृहदारण्यकोपनिषद्भाष्यटीकाया षष्ठाध्यायस्य पञ्चम वंशब्राह्मणम् ॥५॥    २५

इति श्रीमत्परमहंसपरिव्राजकाचार्यशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानकृताया
बृहदारण्यकोपनिषद्भाष्यटीकाया षष्ठोऽध्याय. ॥६॥

•

# भूमिका

अथेदानी काण्वशाखीयबृहदारण्यकभाष्यस्य सटीकटिप्पणस्य मुद्रणानन्तरं माध्यन्दिनशाखीयबृहदारण्यकोपनिषदः श्रीविद्यारण्यमुनिविरचितांदीपिकां मुद्राप्य श्रीमहेशानुसन्धानकेन्द्रः आत्मानं कृतार्थं मन्यते तत्प्रकाशनेन। यतो हि श्रीभगवत्पादीयभाष्यं तट्टीका. श्रीसुरेश्वराचार्यप्रणीतं तद्वार्तिकं सर्वमपि काण्वशाखीयपाठमेवानुसरति। माध्यन्दिनपाठश्च बहुषु स्थलेषु विभिन्नप्रस्थानो दृश्यते, तयोरेकवाक्यतां सम्पाद्यैव वेदान्तार्थः निर्णेतव्यो भवति, स्पष्टमिदं ब्रह्मसूत्रे तद्भाष्ये च।

तथा हि—ब्रह्मसाक्षात्कृतवतो विदुषः शरीरपतनकाले प्राणाः उत्क्रामन्ति, न वा उत्क्रामन्ति इति सन्देहे—"उत्क्रामन्ति" इति पूर्वपक्षः। अत्र च माध्यन्दिनशाखामवलम्ब्य कृतस्य पूर्वपक्षस्य तत्रैव स्थलान्तरे स्पष्टमनुत्क्रान्तिमनूद्य परिहरति। एव मैत्रेयीब्राह्मणे "सा होवाच मैत्रेय्यत्रैव मा भगवान् मोहान्तामपीपित् न वा अहमिमं विजानामी"ति मैत्रेय्याः मोहः "एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति" इति याज्ञवल्क्यवचनं श्रुतवत्याः मुक्तौ नश्यतीति मोहः सञ्जातः। तत्र समाधानं माध्यन्दिनैरेवोच्यते—"नाहं मोहं ब्रवीम्यविनाशी वा अरेऽयमात्मा मात्राऽसंसर्गस्त्वस्य भवति" इति न तु काण्वैः, अनेन मुक्तस्य विषयज्ञानाभावः न तु स्वरूपनाश इति समाधानं स्पष्टम्।

एवं ज्योतिर्ब्राह्मणे काण्वपाठे "स हि स्वप्नो भूत्वेमं लोकमतिक्रामति मृत्यो रूपाणि" इति स्वप्ने कार्यकरणातिक्रमः उक्तः। स न युक्तः स्वप्नेऽपि स्वाप्नशरीरेन्द्रियाणां सद्भावात् इति शङ्कायाः नोत्तरमुपलभ्यते। माध्यन्दिने तु—"सधीः स्वप्नो भूत्वेमं लोकमतिक्रामति" इति पाठो दृश्यते। अनेन जीवः स्वप्ने बुद्धिसहित एव वर्तते, तेन बुद्धिगतसंस्कारोत्पन्नान् विषयान् सेवते—इत्यभिप्रायलाभात् न पूर्वोक्तशङ्कावकाशः।

एवञ्च पाठद्वयस्यापि बृहदारण्यकोपनिषद्भाष्याध्येतॄणामवश्यं-ज्ञातव्यत्वे सिद्धे को वा माध्यन्दिनपाठः? तदीया टीका वर्तते वा न वेति संशयानानामस्माकं वेदार्थनिर्णये अत्यन्तप्रामाणिकत्वेन प्रसिद्धानां श्रीविद्यारण्यगुरूणां दीपिका पूनानगरस्थभण्डारकरलिखितपुस्तकभण्डारे समुपलब्धा। तां च पुस्तकालयाधिपानां V. G. राहुरकर महोदयाना माहाय्येन लेखयित्वा हस्तलिखित ग्रन्थमशुद्धिबहुलमपि संशोध्य श्रीमहेशानुसन्धानकेन्द्रसंस्थापकाना श्रीमहेशानन्दगिरिमहामण्डलेश्वराणामनुज्ञयाऽत्र भाष्येण सह समयोजयाम।

इयञ्च श्रीविद्यारण्यकृता टोका विस्तृता स्पष्टा भाष्यानुसारिणी च दृश्यते। परन्तु माध्यन्दिनशाखीयशतपथब्राह्मणस्यान्तिमभागापन्नायाः उपनिषदः टीकारूपा दीपिकेति व्यवह्रियते यथा—ऐतरेयारण्यकान्तर्गतायाः ऐतरेयोपनिषदः टीका श्रीविद्यारण्यकृता दीपिकेति। एवं तैत्तिरीयारण्यकान्तर्गततैत्तिरीयोपनिषद्व्याख्या तैत्तिरीयोपनिषद्दीपिकेति। अत्र च अन्तिमभागे विद्यारण्यश्रीपाददीपिकाया अनुपलम्भात् तदनुसारिण्या द्विवेदगङ्गटीकाया योजनेन ग्रन्थः पूरितः।

अस्या उपनिषदः द्वे टीके इत. पूर्वमेव मुद्रिते अभूताम्। तयोरेकः द्विवेदगङ्गविरचितत्वेन शतपथब्राह्मणस्य १८५० तमे क्रिस्ताब्दे बर्लिन (Berlin) नगरे मुद्रितस्य सव्याख्यस्यान्तिमभागस्यत्वेन तत्रैव सूचिता। श्रीविद्यारण्यटीकया सार्द्धं तस्याः तोलने क्रियमाणे अस्या एव श्रीविद्यारण्यकृतदीपिकायाः संक्षेपरूपा सा भूयस्सु प्रदेशेषु प्रतिलिपिरूपा चेति प्रमीयमाणा द्विवेदगङ्गानाम्ना सम्पादकेन स्वकृतित्वेन मुद्रितेति प्रतीयते। अन्या तु नित्यानन्दविरचितत्वेन आनन्दाश्रममुद्रिता, सा च काण्वपाठानुसारिण्यपि अस्या एव टीकायाः काण्वपाठानुसारेण योजन कृत्वा सङ्क्षिप्य मुद्रापितेति स्पष्टं प्रकाशते। परन्तु उभयमपि श्रीविद्यारण्यकृतस्यैव संक्षेपरूपमिति सुस्पष्टम्। अस्माभिस्तु मूलभूता विस्तृता दीपिका प्रकाशितेति विशेषेणास्य ग्रन्थस्यापूर्वता नापैति। अत्र मूलग्रन्थं लेखयित्वा प्रेषणेनोपकृतवतां श्रीराहुरकरमहाभागानां कृतज्ञता निवेदयामः। इति।

—सम्पादकः

एस० सुब्रह्मण्यशास्त्री

# विषयसूचिका

## प्रथमोऽध्यायः



## द्वितीयोऽध्यायः



## तृतीयोऽध्यायः



## ॥ चतुर्थोऽध्यायः ॥



## पञ्चमोऽध्यायः



## षष्ठोऽध्यायः

ॐ

माध्यन्दिनशाखीया

# बृहदारण्यकोपनिषत्

श्रीविद्यारण्यमुनिविरचितदीपिकासहिता

**ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।**
**पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥**
**ॐ शान्तिः शान्तिः शान्तिः**

•

## अथ प्रथमोऽध्यायः

### प्रथमं ब्राह्मणम्

**द्वया ह प्राजापत्याः । देवाश्चासुराश्च ततः कानीयसा**
**एव देवा ज्यायसा असुरास्त एषु लोकेष्वस्पर्धन्त ॥ १ ॥**

ॐ नमो ब्रह्मादिभ्यो ब्रह्मविद्यासम्प्रदायकर्तृभ्यो वंशऋषिभ्यो नमो गुरुभ्यः । द्वया ह प्राजापत्या इत्येव-
माद्या षड[नवा]ध्यायी माध्यन्दिनीयब्राह्मणोपनिषत् । तस्या इयमल्पग्रन्था वृत्तिरारभ्यते । उपनिषच्छब्देन मुख्यया
वृत्त्या ब्रह्मविद्यैव वाच्या । उप समीपस्थं प्रत्यगात्मैकत्वं नीतिनिश्चितं तत्तत्पराणां सहेतुसंसारं सादयतीत्युप- १५
निषदिति व्युत्पत्तेः । ग्रन्थस्तु विद्यासमर्पकत्वेनोपचारादुपनिषदित्युच्यते । उत्तरारण्यकत्वं चास्य नियमपूर्वक-
मरण्येऽनूच्यमानत्वात् । अथ कर्मकाण्डज्ञानकाण्डयोर्नियतपौर्वापर्ये सम्बन्धोऽभिधीयते । विद्योत्पत्त्यपेक्षितविवेकवैराग्यश-
मादिमुमुक्षुत्वसम्पत्तिहेतुसत्त्वशुद्धिसम्पादकतया कर्मकाण्डस्य प्राथम्यम् । तज्जनितशुद्ध्यपेक्षया तत्त्वज्ञानजनकत्वात्
ज्ञानकाण्डस्य नियतमुत्तरभावित्वमित्युपायोपेयभावः काण्डयोः सम्बन्ध इति ब्रूमः । पूर्वमग्निरहस्यकाण्डसमाप्तावश्व-
मेधाग्निब्राह्मणाभ्यां समुच्चितयोः केवलयोर्वा ज्ञानकर्मणोर्मृत्य्वात्मभावः परं फलमित्युक्तम् । अथेदानी- २०
मृत्य्वात्मभावसाधनभूतयोः कर्मज्ञानयोर्यत उद्भवस्तस्योद्भावकस्योपास्यप्राणस्य स्वरूपनिर्णयार्थमुद्गीथब्राह्मण-
मारभ्यते । प्राणोपास्तिर्हि ज्ञानकर्मोत्पत्तिप्रतिबन्धकीभूतरागाद्यपध्वस्तिहेतुः । तस्याः पाप्ममृत्य्वतिक्रमणावान्तर-
फलत्वात् । कोऽसौ पाप्मा मृत्युः कुतो वा तस्योद्भवः केन वा तस्यातिक्रमणं कथं वेति वीक्षायामेतत्सर्वं
स्पष्टयितुमाख्यायिकामनुसृत्य द्वया हेत्यादिश्रुतिः प्रवर्तते । अत्र हशब्दः पूर्ववृत्तावद्योतकः प्रजापतिशब्दश्च भविष्य-
द्वृत्तिमाश्रित्य यजमानविषयकः, तथा च द्वयाः द्विप्रकाराः ह किल प्राजापत्याः प्रजापतेर्हिरण्यगर्भस्य अतीत- २५
जन्मनि यजमानावस्थस्यापत्यभूता गोलकावस्था वागादयः प्राजापत्याः । के ते द्विप्रकारा इत्यत आह—देवाश्चा-
सुराश्चेति । शास्त्रीयज्ञानकर्मवासनावासिता द्योतनात्मका देवाः । प्रत्यक्षानुमानजनित-दृष्टप्रयोजनकस्वाभाविक-
ज्ञानकर्मवासनावासिता असुराः । स्वेष्वेवासुषु रमणात्सुरेभ्यो देवेभ्योऽन्यत्वाद्वाऽसुराः । नेन्द्रविरोचनादयः प्राणा-
धिकारादित्यर्थः । यस्माद्वागादीनामासुरीवृत्तिर्बहुला ततस्तस्माद्देवाः कानीयसा एव अल्पीयांस एव । कनीयांस
एव कानीयसाः । स्वार्थे वृद्धिः । अल्पा एव देवाः शास्त्रीयप्रवृत्तेरत्यन्तयत्नसाध्यत्वात् । ज्यायसः ज्यायांसो बहुतरा ३०
असुराः शास्त्रानाधेयस्वाभाविकप्रवृत्तेर्बहुलत्वात् ।

ते देवासुराः एषु लोकेषु ब्रह्मादिस्थावरान्तेषु शास्त्रीयाशास्त्रीयज्ञानकर्मसाध्येषु निमित्तभूतेषु
सत्स्वस्पर्धन्त स्पर्द्धां कृतवन्तः । तेषां देवासुराणां सात्त्विकतामससत्त्वानुसारेण शमकामादिवृत्त्युद्भवाभिभवौ
स्पर्द्धा । कदाचित्प्राणानां शास्त्रजनितवृत्त्युद्भवाद्देवानां जये सति धर्मवृद्धेर्वागाद्युपहितस्य यजमानस्य धर्म-
प्राधान्यादामानुपादाप्रजापतेश्चोत्कर्षः । तद्विपरीतवृत्त्युद्भवाच्चासुराणां जये सत्यधर्मवृद्धेरामानुपादा स्याणोश्चा- ३५
पकर्षः । साम्ये च मनुष्यत्वप्राप्तिरित्यर्थः ॥ १ ॥

ते ह देवा ऊचुः । हन्तासुरान्यज्ञ उद्‌गीथेनात्ययामेति ॥ २ ॥
ते ह वाचमूचुः । त्वं न उद्‌गायेति तथेति तेभ्यो वागुदगायत् । यो वाचि भोगस्तं देवेभ्य आगायद्यत्कल्याणं वदति तदात्मने तेऽविदुरनेन वै न उद्‌गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाविध्यन्स्स यः स पाप्मा यदेवेदमप्रतिरूपं वदति स एव स पाप्मा ॥ ३ ॥
अथ ह प्राणमूचुः । त्वं न उद्‌गायेति तथेति तेभ्यः प्राण उदगायद्यः प्राणे भोगस्तं देवेभ्य आगायद्यत्कल्याणं जिघ्रति तदात्मने तेऽविदुरनेन वै न उद्‌गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाविध्यन्स्स यः स पाप्मा यदेवेदमप्रतिरूपं जिघ्रति स एव स पाप्मा ॥ ४ ॥
अथ ह चक्षुरूचुः । त्वं न उद्‌गायेति तथेति तेभ्यश्चक्षुरुदगायद् यश्चक्षुषि भोगस्तं देवेभ्य आगायद्यत्कल्याणं पश्यति तदात्मने तेऽविदुरनेन वै न उद्‌गात्रात्येष्यन्तीति

असुराणां बाहुल्यात्तैरभिभूयमाना अल्पा देवा किं कृतवन्त इत्यत आह—ते ह देवा ऊचुरित्यादिना। ते देवा असुरैरभिभूयमाना आहु. किलोचुरुक्तवन्तः हन्तेदानीमस्मिन् यज्ञे ज्योतिष्टोमाख्ये उद्‌गीथेनोद्‌गीथकर्मपदार्थकर्तृप्राणस्वरूपाश्रयणेन असुरानत्ययामातिगच्छाम. असुरानभिभूय स्वं देवभावं प्रतिपद्यामहे इत्यन्योन्यमुक्तवन्त इत्यर्थः। उद्‌गीथकर्मपदार्थकर्तृस्वरूपाश्रयणं च ज्ञानकर्मभ्या भवति। तत्र कर्म तदेतानि जपेदिति विधास्यमान मन्त्रजपलक्षणम्। ज्ञानं त्विहाख्यायिकया परीक्ष्यमाणमशुद्धवागादिप्रत्याख्यानेन विशुद्धप्राणोपासनरूपमित्यर्थः ॥२॥

इह शुद्धादिगुणविशिष्टप्राणविज्ञानस्य विधित्सितत्त्वात्तस्य स्वरूपनिर्धारणाय परीक्षाप्रकार आरभ्यते। ते ह वाचमूचुरित्यादिकण्डिकाषट्केन। तत्र प्रथमं वाग्देवतापरीक्षामाह—ते ह वाचमूचुरिति। ते पूर्वोक्ता देवा ह उक्तप्रकारेण विनिश्चित्य वाचं वागभिमानिनीमग्न्याख्यामेवोद्‌गानकर्त्रीं "असतो मा सद्‌गमये" त्यादिमन्त्रप्रकाश्यां च देवता मत्वा त्वं नो अस्मभ्यमुद्‌गाय औद्‌गात्रं कर्म कुर्वित्यूचुरुक्तवन्तः। एवं देवैर्नियुक्ता वाग्देवता तथेति तथास्त्विति तान्नियोक्तॄन्प्रत्युक्त्वा स्वसामर्थ्यमविचार्य उद्‌गानकर्तृत्वं मन्त्रप्रकाश्यत्वं चात्मनोऽङ्गीकृत्य तेभ्योऽर्थिभ्योऽर्थायोदगायदुद्‌गानं कृतवती। क. पुनरनेन कर्मणा कार्यविशेष. कृत इत्यपेक्षाया यथा प्रकृते ज्योतिष्टोमे द्वादशस्तोत्रात्मके उद्‌गात्रा त्रिषु पवमानाख्येषु स्तोत्रेषु यजमानार्थमुद्‌गानं क्रियतेऽवशिष्टेषु नवसु स्तोत्रेषु वाचनिकार्त्विज्यफलक स्वार्थं तद्वदत्रापि द्विविधमुद्‌गानमिति कथयितुं तं कार्यविशेषमाह—यो वाचि भोग इति। यो वाचि निमित्तभूताया सत्या वागादिसमुदायस्य भोगः सुखविशेषस्तं देवेभ्योऽर्थिभ्योऽर्थाय आगायदागानेन प्रापितवती।

यत्पुनः कल्याणं शोभनं वदति यथाशास्त्रं वर्णानभिनिर्वर्तयति तदात्मने स्वार्थमेव तद्ध्यसाधारणं वह्निवाग्देवतायाः कर्म यत्सम्यग्वर्णोच्चारणम्। एवं वाग्देवतायाः कल्याणवदनरूपासाधारणविषया सग लक्षणं रन्ध्रस्यावसरं प्रतिलभ्यासुरा स्वकार्योद्युक्ता जाता इत्याह—तेऽविदुरिति। तेऽसुराः कामादिप्रवृत्तेर्दैवैः शमादिना कृत्वा प्रच्याव्यमानाः देवहृद्‌गतमविदुर्विदितवन्तः। किं तदित्यत आह—अनेन वै न उद्‌गात्रात्येष्यन्तीति। अनेन वै उद्‌गात्रा शास्त्रजनितकर्मज्ञानरूपेण नोऽस्मान् स्वाभाविककर्मज्ञानात्मकान् देवा अत्येष्यन्ति अतिगमिष्यन्ति इत्येव विदित्वा तमुद्‌गातारं वाग्रूपमभिद्रुत्य वेगेनाभिगम्य स्वेनाऽऽसगलक्षणेन पाप्मनाऽविध्यन् ताडितवन्तः संयोजितवन्त इति यावत्। एवमसुरैः प्रजापतेर्वाचि पाप्मा क्षिप्त इति कुतोऽवगम्यते तत्राह—स यः स पाप्मेति। यः स पाप्मा साधकावस्थस्य प्रजापतेर्वाचि प्रक्षिप्तः स एषोऽनुमानेन प्रत्यक्षीक्रियते। कोऽसौ यदेव येनैव प्रयुक्ता सतीयं वागिदमप्रतिरूपमननुरूपं शास्त्रप्रतिषिद्धमसभ्यस्त्रीवर्णनप्रेतादिवर्णनाऽनृतादि वदति स एव य एवं प्रजासु प्रतिकूलवदनहेतुत्वेनानुमितः स एव पाप्मा सः कारणभूतप्रजापतिवाचि गतः। तथा चाद्यसकाराभ्या कारणस्थं पाप्मानमनूद्य तस्यैव कार्यस्थत्वमुच्यते। उत्तराभ्या तु कार्यस्थं पाप्मानमनूद्य तस्यैव कारणस्थत्वमुच्यत इति भावः। कारणानुविधायि हि कार्यमिति ॥ ३ ॥

अथ ह प्राणं प्राणदेवतामूचुरित्यारभ्य एवमु खल्वित्यतः प्राक्तनो ग्रन्थः समानार्थकः "अथ ह चक्षुरूचु." "अथ ह श्रोत्रमूचुः" "अथ ह मन ऊचु.' एताः कण्डिका स्पष्टार्थाः। कल्याणाकल्याणकार्यदर्शनादनुक्तेषु

तमभिद्रुत्य पाप्मनाऽविध्यन्त्स यः स पाप्मा यदेवेदमप्रतिरूपं पश्यति स एव स पाप्मा ॥ ५ ॥
अथ ह श्रोत्रमूचुः । त्वं न उद्गायेति तथेति तेभ्यः श्रोत्रमुदगायद्यः श्रोत्रे भोगस्तं
देवेभ्य आगायद्यत्कल्याणं शृणोति तदात्मने तेऽविदुरनेन वै न उद्गात्रात्येष्यन्तीति
तमभिद्रुत्य पाप्मनाविध्यन्त्स यः स पाप्मा यदेवेदमप्रतिरूपं शृणोति स एव स पाप्मा ॥ ६ ॥
अथ ह मन ऊचुः । त्वं न उद्गायेति तथेति तेभ्यो मन उदगायद्यो मनसि भोगस्तं ५
देवेभ्य आगायद्यत्कल्याणं संकल्पयति तदात्मने तेऽविदुरनेन वै न उद्गात्रात्येष्यन्तीति
तमभिद्रुत्य पाप्मनाविध्यन्त्स यः स पाप्मा यदेवेदमप्रतिरूपं संकल्पयति स
एव स पाप्मैवमु खल्वेता देवताः पाप्मभिरुपासृजन्नेवमेनाः पाप्मनाऽविध्यन् ॥ ७ ॥
अथ हेममासन्यं प्राणमूचुः । त्वं न उद्गायेति तथेति तेभ्य एष प्राण उदगायत्तेऽ-
विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाविध्यत्सन्त्स यथाश्मा- १०
नमृत्वा लोष्टो विध्वंसेतैवं हैव विध्वंसमाना विष्वञ्चो विनेशुस्ततो
देवा अभवन् परासुरा भवत्यात्मना परास्य द्विषन्भ्रातृव्यो भवति य एवं वेद ॥ ८ ॥

ते होचुः । क्व नु सोऽभूद्यो न इत्थमसक्तेत्यय-
मास्येऽन्तरिति सोऽयास्य आङ्गिरसोऽङ्गानां हि रसः ॥९॥

त्वगादिष्वप्यसुरवेधोऽनुमीयत इत्याह—एवमु खल्वेता देवताः पाप्मभिरुपासृजन्निति । एवं वागादिवदेव खल्व- १५
नुक्ता अपि एतास्त्वगादिदेवताः कर्मभूताः पाप्मभिः स्वैः स्वैरिन्द्रियासंगैरुपासृजन् संसर्गं कृतवन्तः असुरा इति
शेषः । तेषामपि कल्याणाकल्याणस्पर्शवत्त्वात् । भेदभ्रमव्यावृत्त्यर्थं एतदेव व्याचष्टे—एवमेनाः पाप्मनाऽविध्यन्निति ।
एनास्त्वगादिदेवता कर्मभूताः एवं वागादिवत् पाप्मना अविध्यन् विद्धवन्तोऽसुरा इत्यर्थः ॥ ४-७ ॥

एवं वागादयो मृत्योरतिक्रमणेऽसमर्था इति निश्चित्याऽशरणाः सन्तो देवा मृत्यवतिगमनाय मुख्यं
प्राणं प्रार्थितवन्त इत्याह—अथ हेममासन्यं प्राणमूचुरिति । अथ वागादिषु नैराश्यानन्तरं ह इममित्यभिनय- २०
प्रदर्शनार्थम् । आसन्यम् आस्ये भवमासन्यं मुखान्तर्विलस्थं मुख्यं प्राणं मूचुरित्यादि समानम् । ततस्तेऽसुराः
पूर्वाभ्यासवशात् मुख्यप्राणमभिद्रुत्य पाप्मनोकलक्षणेन अविव्यत्सन् व्यधनं कर्तुमिष्टवन्तः । ते च दोषासंसर्गिणं सन्तं मुख्यं
प्राणं स्वेनासंगदोषेण संसृक्ष्यमाणाः सन्तो विष्वञ्चो नानागतयो विनेशुर्विनष्टा विध्वस्ता इत्यन्वयः । तत्र कथमिवेति
प्रसिद्धो दृष्टान्तः यथा लोके पाषाणचूर्णनाय प्रक्षिप्तो लोष्टः पांसुपिण्डोऽश्मानं पाषाणं ऋत्वा गत्वा प्राप्य स्वयं
विध्वसेत विस्रसेत विचूर्णीभवेत् । एवं हैव एवमेव खलु विध्वंसमाना विशीर्यमाणा असुरा अपि विनष्टाः । असुर- २५
विनाशे सति यद्वृत्तं तदाह—ततो देवा अभवन् परासुरा इति । ततस्तस्मादसुरविनाशाद्देवत्वप्रतिबन्धकपाप्मभ्यो
वियोगान्मुख्यप्राणाश्रयबलाद्देवा वागादयो वक्ष्यमाणस्वस्वरूपेणाग्न्याद्यात्मकेनाभवन् असुराः परा अभवन्
इत्यनुषङ्गः पराभूता विनष्टा न पुनः प्ररोहिण इत्यर्थः । उक्ताख्यायिकाक्रमेण यजमानावस्थप्रजापतिवदन्योऽप्याधु-
निकस्तत्प्राप्तिकामः श्रुतिप्रकाशितेन मार्गेण मुख्यं प्राणमात्मत्वेनोपगम्य "अस्मि प्राण इत्युपासीते"ति
सफलामुपासनां विदधाति—भवत्यात्मना परास्य द्विषन् भ्रातृव्यो भवति य एवं वेदेति । एवं यथोक्त वक्ष्य- ३०
माणदूर्नामादिगुणं च प्राणं यो वेदोपास्ते स आत्मना प्रजापतिस्वरूपेण भवति । अस्योपासकस्य प्रजापतित्व-
प्रतिपक्षभूतः पाप्मा द्विषन् भ्रातृव्यो द्वेष्टा शत्रुर्यः स च पराभवति लोष्टवद्विशीर्यंत इत्यर्थः ॥ ८ ॥

एवं वक्ष्यमाणत्वेन स्थिनैरयास्यास्याङ्गिरसदूर्भिर्गुणैर्विशिष्टं प्राणकर्मकोपासनविधानपूर्वकं भवत्यात्मने-
त्यादिनोक्तम् । अथाऽऽख्यायिकामेवानुसृत्य त्रिविधं फलं स्फुटयति—ते होचुरित्यारभ्याऽऽत्मनेऽन्नाद्यमित्यतः प्राक्तनेन
ग्रन्थेन । तत्तद्देवताभावफलासाधारणगुणकथनार्थमाह—ते इति । ते वागादयः प्रजापतिप्राणाः मुख्येन प्राणेन ३५
परिप्रापितदेवस्वरूपाः फलावस्थाः सन्तो ह इत्येवमूचुरुक्तवन्तः किमित्याह—क्व न्विति । नु इति वितर्के यो
नोऽस्मानित्थमसक्त सयोजितवान् देवभावाय आत्मत्वेनोपगमितवान् । स क्व कस्मिन्नभूदित्येवं लोकत्रदेवोप-

**सा वा एषा देवता । दूर्नाम दूरँ ह्यस्या मृत्युर्दूरँ ह वा अस्मान्मृत्युर्भवति य एवं वेद ।।१०।।**
**सा वा एषा देवता । एतासां देवतानां पाप्मानं मृत्युमपहत्य यत्रासां दिशामन्तस्तद्गमयांचकार तदासां पाप्मनो विन्यदधात्तस्मान्न जनमियान्नान्तमियान्नेत् पाप्मानं मृत्युमन्ववायानीति ।।११।।**
**सा वा एषा देवता । एतासां देवतानां पाप्मानं मृत्युमपहत्याथैना मृत्युमत्यवहत् ।।१२।।**

**स वै वाचमेव प्रथमामत्यवहत् । सा यदा मृत्युमत्यमुच्यत**
**सोऽग्निरभवत् सोऽयमग्निः परेण मृत्युमतिक्रान्तो दीप्यते ।।१३।।**
**अथ प्राणमत्यवहत् । स यदा मृत्युमत्यमुच्यत स वायुर-**
**भवत् सोऽयं वायुः परेण मृत्युमतिक्रान्तः पवते ।।१४।।**
**अथ चक्षुरत्यवहत् । तद्यदा मृत्युमत्यमुच्यत स आदित्योऽ-**
**भवत् सोऽसावादित्यः परेण मृत्युमतिक्रान्तस्तपति ।।१५।।**

कारिणं स्मरन्तो विचार्यमाणाः सन्तोऽयं प्राणः आस्ये मुखे य आकाशस्तस्मिन्नन्तर्मध्ये प्रत्यक्षो वर्तत इति अध्यवस्यन्ति स्म । अनया आख्यायिकया गुणद्वयं सिद्धमित्याह—सोऽयास्य इति । यस्मादेव वागादयः प्राणमास्येऽन्तरुपलभ्यायमास्येऽन्तरिति व्याजह्रुस्तस्मात्स अयास्यः । अत एव आङ्गिरसः कार्यकरणानामात्मा । तत्र हेतु हि यस्मादङ्गाना कार्यकारणाना रसः सार आत्मा तस्मादाङ्गिरस इत्यर्थः ॥ ९ ॥

प्राणस्य स्वतः शुद्धत्वेऽप्यशुद्धवागादिसंबन्धादशुद्धत्वं स्यादिति शङ्का वारयितु पाप्महानिफलासाधारणगुणविशिष्टोपासनमाह—सेति । या प्राप्यासुरा विनष्टाः वै इति अयमास्येन्तरिति निर्द्धारिता । वै एषा वर्तमानोपासकशरीरस्था प्राणरूपा देवता दूर्नाम दूरित्येवं ख्याता, अतः शुद्धा कथं दूर्नामत्वमित्यत आह—दूरं हीति । हि यस्मात् अस्याः प्राणदेवतायाः सकाशात् मृत्युरासङ्गलक्षणः पाप्मा दूर दूरे भवति । एतद्गुणविशिष्टप्राणविदः फलमाह—दूरं हेति । य एवमुक्तप्रकारेण विशुद्धिगुणं प्राण वेदोपास्ते अस्मादुपासकान्मृत्युर्दूरं ह वै दूरे एव किल भवतीत्यर्थः ॥ १० ॥

एतदेव स्पष्टयति—सा वा एषा देवतेति । उक्तार्था । एतासा वागादीना देवताना पाप्मान मृत्युमपहत्यापच्छिद्य यत्रासा दिशामन्तः । शास्त्रीयज्ञानकर्मसंस्कृतजनाधिष्ठितो देशो मध्यदेशः तस्मादतिरिक्तो देशो दिशां प्राच्यादीनामन्तः पराकाष्ठा तत्तत्र दिशामन्ते अन्तस्थे जने च गमयाञ्चकार गमन कृतवती । तत्तत्र दिगन्ते दिगन्तस्थेऽन्त्यजने च आसा वागादीना पाप्मनः कर्मभूतान् विन्यदधात् । विविधं न्यग्भावेनादधात् स्थापितवती । तस्मात्तमन्त्यजनं न इयात् । दर्शनसंभाषणादिभिर्न संसृज्येत । तथा अन्त तज्जननिवासस्थान नेयात् न गच्छेत् नेदिति परिभयार्थे निपातः । यद्यहं गच्छेयं तदा पाप्मानं मृत्युमन्ववायानि अनुगच्छेयमिति भीतो जनमन्तं वा न गच्छेच्छिष्टमात्र इत्यर्थः ॥ ११ ॥

सम्प्रति देवताभावं वक्तुमाह—सा वा एषेति कण्डिकया । अथ पापविमोकानन्तरमेताः वागादिदेवताः कर्मभूताः मृत्युं पूर्वोक्तमतीत्य अवहत् प्रापयत् । स्वं स्व अपरिच्छिन्नमग्न्यादिदेवतात्मरूप प्रापितवतीत्यर्थः ॥ १२ ॥

एवं सामान्योक्तमेव वहनं प्रत्येकमाह—स वै वाचमिति । स प्राणो वाचमेव वाग्देवतामेव प्रथमामुद्गातुरत्यन्तं सनिहितत्वात् प्रधानभूतामत्यवहत् वहनं कृतवान् । सा वाग्यदा यस्मिन्काले मृत्युं पाप्मानमतीत्यामुच्यत मोचिता स्वयं तदा वागेव पूर्वमप्यग्निरेव सती स प्रसिद्धोऽग्निरभवत् । तर्हि पूर्वस्मात् को विशेष इत्यत आह—सोऽयमिति । सोऽयमतिक्रान्तः पाप्मातिक्रान्तोऽग्निः परेण मृत्यो परस्ताद्दीप्यते राजति । प्राङ्मोक्षादध्यात्मं वागात्मना मृत्युप्रतिबद्धो नेदानीमिव दीप्तिमानासीदित्यर्थः ॥ १३ ॥

अथानन्तरं प्राणं नासिकान्तःसंचारिणं घ्राणं; स वायुरभवत् स तु मृत्योः परस्तात् पवते तिर्यग्गच्छतीत्यर्थः । अन्यत्सर्वमुक्तार्थम् ॥ १४ ॥

चक्षुरादित्योऽभवत् । स तु तपति द्योतते ॥ १५ ॥

अथ श्रोत्रमत्यवहत् । तद्यदा मृत्युमत्यमुच्यत ता दिशोऽभवँस्ता इमा दिशः परेण मृत्युमतिक्रान्ताः ॥१६॥

अथ मनोऽत्यवहत् । तद्यदा मृत्युमत्यमुच्यत स चन्द्रमा अभवत्, सोऽसौ चन्द्रः परेण मृत्युमतिक्रान्तो भात्येवँ ह वा एनमेषा देवता मृत्युमतिवहति य एवं वेद ॥१७॥

अथात्मनेऽन्नाद्यमागायत् । यद्धि किञ्चान्नमद्यतेऽनेनैव तदद्यत इह प्रतितिष्ठति ॥१८॥ ५

ते देवा अब्रुवन् । एतावद्वा इदँ सर्वं यदन्नं तदात्मन आगासीरनु नोऽस्मिन्नन्न आभजस्वेति ते वै माऽभिसंविशतेति तथेति तँ समन्तं परिण्यविशन्त तस्माद्यदनेनान्नमत्ति तेनैतास्तृप्यन्त्येवँ ह वा एनँ स्वा अभिसंविशन्ति भर्ता स्वानाँ श्रेष्ठः पुर एता भवत्यन्नादोऽधिपतिर्य एवं वेद ॥१९॥

तथा श्रोत्रं दिशोऽभवत् । दिशः प्राच्यादिविभागेनावस्थिताः ॥ १६ ॥ १०

तथा मनश्चन्द्रमा भाति । वागादीनामग्न्यादिदेवतात्वप्राप्तावप्युपासकस्य किमायातमित्यत आह—एवमिति । य उपासक एवमग्न्याद्यात्मकवागादिपञ्चकविशिष्टं प्राणमात्मत्वेन वेद प्राणोऽहमित्युपास्ते तमेनमुपासकमेव ह वै पूर्वयजमानवदेवैषा प्राणदेवता मृत्युमतीत्य वहति । वैराजं पदं प्रापयतीति यावत् । "त यथा यथोपासते तदेव भवती"ति श्रुतेः ॥ १७ ॥

उपास्यस्य प्राणस्य कार्यकरणसघातविधारकत्वं नाम गुणान्तरं वक्तुमाह—अथेति । यथा वागादिभिरात्मार्थमागानं कृतं तथा मुख्योऽपि प्राणस्त्रिषु पवमानेषु सर्वप्राणसाधारणमागानं कृत्वा अथानन्तर शिष्टेषु नवसु स्तोत्रेष्वात्मन आत्मार्थमन्नाद्यमागायदागीतवान् । अन्नं च तदाद्यं चान्नाद्यम् । अद्यमानमन्नमित्यर्थः । कथं पुनस्तदन्नाद्य प्राणेनात्मार्थमागीतमिति गम्यत इत्यत्र हेतुमाह—यद्धीति । यत्किचेति सामान्यान्नमात्रपरामर्शार्थः । हीति हेतौ । हि यस्माल्लोके प्राणिभिर्यत्किंचन सामान्यतोऽन्नमात्रमद्यते भक्ष्यते तदन्नमात्रमनेनैव प्राणेनैवाद्यते तस्मात्स्वार्थमेतदागानम् । अन इति प्राणस्याख्या प्रसिद्धा । अनशब्दः सान्तः शकटवाची यस्त्वन्यः स्वरान्तः स प्राणपर्यायः अनितेर्धातोर्व्युत्पन्नत्वात् । एतेन इदशब्दशङ्काऽप्यपास्ता । ननु तर्ह्येतस्यापि वागादिवत्स्वार्थमागानादासङ्गपाप्मवेध. स्यादित्यत आह—इहेति । इहान्ने देहाकारपरिणते प्राणः प्रतितिष्ठति तदनुसारिणश्च वागादय स्थितिभाजोऽतस्तत्स्थित्यर्थं प्राणस्यान्नम् । अतो न पाप्मवेधस्तस्मिन्नस्तीत्यर्थः ॥ १८ ॥ २०

नन्वेवं प्राणस्यैव स्वातन्त्र्येणान्नकृतोपकारभाजित्वं वागादीना तु तद्द्वारकमिति कथ निश्चेतुं शक्यते यन्निश्चयादनेनैवेत्येवकारस्य सार्थकत्व स्यादित्यतस्तन्निर्णयार्थमाह—ते देवा इति । ते वागादय स्वविषयद्योतनात् देवा अब्रुवन्नुक्तवन्तो मुख्यं प्राण इदं सर्वं वै प्रसिद्धं यदन्न प्राणस्थितिकरं तदेतावत् नातोऽधिकमस्ति । तत्पुनस्त्वमात्मन आत्मार्थमागासीरागीतवानसि आगानेन आत्मसात् कृतवानसीत्यर्थः । वयं चान्नमन्तरेण स्थातु नोत्सहामहे । अतोऽनु पश्चान्नोऽस्मानन्नन्न आत्मार्थे तवान्न आभजस्व आभाजयस्व णिचो लोपश्छान्दसः । अस्मांश्चान्नभागिन कुर्विति तैरुक्तः प्राणस्ते यूय यद्यन्नार्थिनो वै तर्हि मामभिसम्विशत । आभिमुख्येन समन्ततो निविशतेत्यब्रवीदिति शेषः । ३०

एवमुक्तवति प्राणे ते देवास्तथास्त्वित्यंगीकृत्य तं प्राणं समन्तं समन्तात् परिवेष्ट्य न्यविशन्त निश्चयेनाविशन्त । त प्राण परिवेष्ट्य निविष्टवन्तो यस्मात् तस्माल्लोके यदन्नमनेन प्राणेनात्ति भक्षयति तेनैव प्राणान्नेनैवैता वागादयो देवतास्तृप्यन्ति, न स्वातन्त्र्येण वागादीनामन्नसम्बन्धः । अतोऽनेनैवेत्यवधारणं सार्थकम् । एतद्गुणविज्ञानफलं दर्शयन्ती श्रुति. सफलं गुणजातमुपदिशति—एवमिति । य उपासको वागादयः प्राणाश्रयाः स च प्राणोऽहमेवेति वेदोपास्ते । तमेनमुपासकमेवं ह वै यथा प्राणं वागादयः एवमेव खलु स्वा ज्ञातयोऽभिसंविशन्ति आश्रयन्ति । ज्ञातीनामाश्रयणीयो भवतीत्यभिप्राय. । तथैवमभिसंनिविष्टानां स्वाना ज्ञातीना प्राणवदेव वागादीना स्वान्नेन भर्ता भवति श्रेष्ठ. पूज्यः पुर एता अग्रतो गन्ता अन्नादो व्याधिरहित. दीप्ताग्निरधिपतिरधिष्ठाय पालयिता । स्वतन्त्र. पतिः भवतीति प्राणवदेव वागादीनामिति च प्रत्येकं बोध्यम् ॥ १९ ॥ ३५

य उ हैवंविदम्। स्वेषु प्रति प्रतिर्बुभूषति न हैवालं भार्येभ्यो भवत्यथ य एवैतमनु भवति यो वैतमनु भार्यान् बुभूर्षति स हैवालं भार्येभ्यो भवति ॥२०॥ सोऽयास्य आङ्गिरसः। अङ्गानां हि रसः प्राणो वाऽङ्गानां रसस्तस्माद्य-स्मात्कस्माच्चाङ्गात्प्राण उत्क्रामति तदेव तच्छुष्यत्येष हि वाऽङ्गानां रसः ॥२१॥ एष उ एव बृहस्पतिः। वाग्वै बृहती तस्या एष पतिस्तस्मादु बृहस्पतिः ॥२२॥ एष उ एव ब्रह्मणस्पतिः। वाग्वै ब्रह्म तस्या एष पतिस्तस्मादु ब्रह्मणस्पतिः ॥२३॥ एष उ एव साम। वाग्वै सामैष सा चामश्चेति तत्साम्नः सामत्वम्। यद्वेव समः प्लुषिणा समो मशकेन समो नागेन सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेण तस्माद्वेव सामाश्नुते साम्नः सायुज्यं सलोकतां य एवमेतत्साम वेद ॥२४॥

सम्प्रति प्राणविद्या स्तोतुं तद्विद्यावद्विद्वेषिणो दोषमाह—य उ हेति। उ आश्चर्ये ह निश्चयेन एवंविद प्रति स्वेषु ज्ञातिषु मध्ये प्रतिकूलो बुभूषति प्रतिस्पर्द्धी भवितुमिच्छति स प्राण प्रतिस्पर्द्धिनोऽसुरा इव भार्येभ्यो भरणीयेभ्य आत्मीयेभ्यो न है वालं समर्थो भवति भरणीयान् भर्तुं नैव पर्याप्तो भवतीत्यर्थः। अथ प्राणवदनुरक्तस्य लाभं दर्शयति—अथेति। अथ पुनर्य एव ज्ञातीनां मध्य एतं प्राणविदं वागादय इव प्राणमनुगतोऽनुरक्तो भवति। यो वा अपि एतमेवंविदमन्वेवाऽनुवर्तयन्नेवात्मीयान् भार्यान् बुभूर्षति भर्तुमिच्छति यथैव प्राणानुवृत्त्या वागादय आत्मबुभूर्षव आसन् स एव ह निश्चयेन भार्येभ्यो भर्तुमलं पर्याप्तो भवतीति समानमित्यर्थः ॥ २० ॥

पूर्वोक्तायास्यत्वेन प्रतिज्ञातं यदाङ्गिरसत्वं तदेव सोऽयास्य आङ्गिरसोऽङ्गाना हि रस इत्यनेनानूद्य प्राणो वै प्रसिद्धोऽङ्गाना रस इति प्रतिज्ञायते। तत्कथमिति हेत्वपेक्षायां प्राणो हीत्यादिवाक्यम्। अत्रैवमन्वयः यस्मात्कस्माच्चाङ्गाद्यतः कुतश्चिदनिर्धारिताच्छरीरावयवात् प्राण उत्क्रामति अपसर्पति तदेव तत्रैव तदङ्गं शुष्यति शोषमुपैति नीरसं भवति नान्यदित्यन्वयव्यतिरेकाभ्यां हि यस्मात् प्राणो वै एवाङ्गानां रसः प्रसिद्धस्तस्मादेव हि वै प्राणोऽङ्गाना कार्यं स्थूलशरीरं प्रत्यक्षतो रूप्यमाण रूपात्मकं करणं च ज्ञानक्रिया-शक्तिमत्कर्मभूत तयोरात्मा प्राण इति समुदायार्थः ॥ २१ ॥

अथ बृहस्पत्यादिनामराशिवर्मकं प्राणोपासनं वक्तुमेष उ एव इत्यादि कण्डिकाचतुष्टयम्। तत्र न केवल रूपकर्मभूतयोः कार्यकरणयोरेवात्मा प्राणः किं तर्हि नामभूतानामृग्यजुःसाम्नामात्मेति सर्वात्म-कतया प्राणं स्तुवन्ती महीकरोत्युपास्यत्वायाऽऽह—एष उ एवेति। उरप्यर्थः एष प्रकृत आङ्गिरस प्राणो "बृहस्पतिर्देवाना पुरोहित आसीदि"ति श्रुतेः प्रसिद्धं देवपुरोहितत्व व्यावर्तयितुमाह—वाग्वै बृहतीति। सस हि गायत्र्यादीनि प्रधानानि छन्दांसि तेषां मध्यमं छन्दो बृहतीत्युच्यते। सा च बृहती षट्त्रिंशदक्षरा प्रसिद्धा "वाग्वा अनुष्टुबि"ति चयनप्रकरणे उक्तत्वादनुष्टुभोऽपि वाक्त्वं प्रसिद्धं सा द्वात्रिंशदक्षरा अष्टाक्षरैश्चतुर्भिः पादैः षट्त्रिंशदक्षरायां बृहत्यामन्तर्भवति। अवान्तरसंख्याया महासंख्यामामन्तर्भावादित्येवं वागनुष्टुब्बृहत्योश्चैक्येन वागात्मिका बृहती 'सा ऋचो व्यौहत् द्वादशबृहतीसहस्राण्येतावत्यो हर्चो याः प्रजापति-सृष्टा' इति श्रुतेः बृहत्यां सर्वा ऋचोऽन्तर्भवन्ति। तस्याः बृहत्याः रूपाया एव प्राणः पतिः स्थित्युत्पादनहेतुत्वात्। तस्मादु बृहस्पतिरित्युपसंहारः ॥ २२ ॥

तस्या यजुर्वेदात्मकत्वमाह—एष उ ब्रह्मणो यजुर्वेदस्य पतिः। कथ ? वाग्वै वाग्विशेषरूपं यजुरेव ब्रह्म वेदाधिकारात्। तस्या एष पतिरित्यादि समानम् ॥ २३ ॥

अथास्य सामवेदात्मकत्वमाह—एष उ एव सामेति। कथं वाग्वैसा। अम एषः। सर्वस्त्रीलिङ्गशब्दाभिधेय-वस्तुविषयो हि सर्वनाम साशब्दः सा वै वाक्। सर्वपुंल्लिङ्गशब्दाऽभिधेयवस्तुविषयो अमः शब्दः। अम एष प्राणः "केन मे पौंस्नानि नामान्याप्नोषीति प्राणेनेति ब्रूयात्" "केन मे स्त्रीनामानीति वाचे"ति श्रुत्यन्तरात् वाक् प्राणाभिधानभूतौ सामशब्दौ। तथा सति प्राणनिर्वर्त्यस्वरपदवाक्यादिसमुदायमात्रं गीतिः सामशब्देनाभिधीयते। नन्वेतावता कस्य सामत्वं मुख्यमित्यत आह—सा चामश्चेति। इत्येतद्व्युत्पत्तेर्वागुपसर्जनः प्राण एव मुख्यः साम-

एष उ वा उद्गीथः । प्राणो वा उत्प्राणेन हीदँ सर्व-
मुत्तब्धं वागेव गीथोच्च गीथा चेति स उद्गीथः ॥२५॥

तद्धापि ब्रह्मदत्तश्चैकितानेयः । राजानं भक्षयन्नुवाचायं त्यस्य राजा मूर्धानं विपातयता-
द्यदितोऽयास्य आङ्गिरसोऽन्येनोदगायदिति वाचा च ह्येव स प्राणेन चोदगायदिति ॥२६॥

तस्य हैतस्य साम्नो यः स्वं वेद । भवति हास्य स्वं तस्य वै स्वर
एव स्वं तस्मादार्त्विज्यं करिष्यन्वाचि स्वरमिच्छेत तया वाचा
स्वरसम्पन्नयार्त्विज्यं कुर्यात्तस्माद्यज्ञे स्वरवन्तं दिदृक्षन्त एवाथो
यस्य स्वं भवति भवति हास्य स्वं य एवमेतत्साम्नः स्वं वेद ॥२७॥

शब्द वाच्य' एकवचननिर्देशादिति भावः । यस्माद्वागुपसर्जनस्य प्राणस्य सामत्वं मुख्यं तत्तस्मादव्येतृप्रसिद्धस्यापि साम्नो मुख्यसामशब्दवाच्यप्राणनिर्वर्त्यत्वेन गौणमेव सामत्वम् । अस्यैव प्राणस्य सामत्वमुपासनार्थमाह— यद्वेवेति । यत् उ एव इति च्छेदः । उशब्दो विकल्पार्थः प्रकारान्तरद्योतकः, यस्माद्वा अयं प्राणः सूत्रात्मा लिङ्गात्मना प्लुषिणा पुत्तिकाशरीरेण समस्तुल्यः मशकेन मशकशरीरेण समो नागेन हस्तिशरीरेण सम एभिस्त्रिभिर्लोकै-स्त्रैलोक्यात्मकप्राजापत्यशरीरेण समोऽनेन सर्वेण हिरण्यगर्भजगद्रूपेण समस्तुल्य एव पुत्तिकादिशरीरेषु गोत्वादिवत् कार्त्स्न्येन परिसमाप्तस्तस्मादेव साम । एवं प्राणस्य समत्वं सिद्धमित्यर्थः । एतद्गुणकप्राणोपासनफलमाह— अश्नुत इति । य एवं यथोक्तमेतत्सामगुणकं प्राणं वेदोपास्ते स साम्नः प्राणस्य सायुज्यं सयुग्भावं समानदेहेन्द्रि-याभिमानतामश्नुते व्याप्नोति । सलोकतां प्राणसमानलोकतां वाऽश्नुते भावनाविशेषतः फलविशेष इति भावः ॥२४॥

इदं च फलं मध्यप्रदीपन्यायेनोभयतः सम्बन्धमवधेयमितीमामेव फलश्रुतिमनुसृत्य गुणान्तरमाह—एष उवेति । एष प्राणो वा उद्गीथः । उद्गीथो नाम सामावयवो भक्तिविशेषो नोद्गानं सामाधिकारात् । कथमुद्गीथः प्राण ? हि यस्मात्प्राणेनेदं सर्वं जगदुत्तव्धं ऊर्ध्वंस्तव्धमुत्तम्भितं विधृतमिति यावत् । तस्मात्प्राणो वा उत् । तथा वागेव गीथा अभिव्यक्तिरूपा गायतेः शब्दार्थत्वात्सा वागेव । उद्गीथशब्दाभ्यां प्राण एव वाच्य इत्याह— उच्च गीथा चेति । एतद्विग्रहात्सर्ववागुपसर्जन' प्राण एवोद्गीथ इत्यर्थः ॥ २५ ॥

अथ तद्धापीत्यादिवाक्यस्य प्रकृतानुपयोगमाशंक्य उद्गीथदेवता प्राणो न वागादिरित्युक्तार्थदार्ढ्यायाऽऽख्या-यिकामाह—तद्धापीति । तत्रैतस्मिन्नुक्तार्थे ह आख्यायिकापि श्रूयते ह स्म । चिकितानस्यापत्यं चैकितानिस्तस्यापत्यं युवा चैकितानेयो ब्रह्मदत्तनामा विश्वसृजां पूर्वऋषीणां सत्रे राजानं सोमं भक्षयन्नुवाच उक्तवान् । अत्रायास्या-ङ्गिरसशब्देनोद्गातोच्यत एतादृक्प्राणोपासकत्वात्तस्य । यत् यदि स आङ्गिरस उद्गाता विश्वसृजां पूर्वऋषीणां सत्रे इतोऽस्मात् पूर्वोक्तात् वागुपसर्जनात् प्राणादन्येन देवतान्तरेणोदगादुद्गानं कृतवान् तदा त्यस्य तस्यानृतवादी स्यामित्यर्थः । विपातयतादिति आशिषि तो. स्थाने तातङ्ङादेश एवमुद्गीथदेवता प्राण एवेत्याख्यायिकया निर्धारित-मर्थं श्रुतिः स्वेन वचसोपसंहरति—वाचेति । सोऽयास्य आङ्गिरस उद्गाता वाचा च प्राणप्रधानया प्राणेन च स्वस्यात्मभूतेनोदगायदित्येपोऽर्थः शपथेन निर्द्धारित इत्यर्थः ॥ २६ ॥

एवमुद्गीथदेवता प्राण एवेति निर्द्धार्य तस्य स्वसुवर्णप्रतिष्ठागुणविधानार्थमुत्तरकण्डिकात्रयमवतारयति— तस्येत्यादिना । तस्य विशुद्ध्यादिगुणवत्तया प्रकृतस्य ह एतस्य बृहस्पत्यादिगुणवत्तया निरूपितस्य साम्न. नामशब्द-वाच्यस्य प्राणस्य स्वं धनं यो वेद अस्य विज्ञातुर्ह स्वं धनं भवति । एवं फलेन प्रलोभ्याऽभिमुखीकृतं शुश्रूषुं प्रत्याह— तस्य वा इति । तस्य वै साम्न' स्वर एव कण्ठगतमाधुर्यमेव स्वं विभूषणम् । तेन हि भूषितमुद्गानमृद्धिमल्लक्ष्यते । यस्मादेवं तस्मादार्त्विज्यमृत्विक्कर्मोद्गानं करिष्यन् वाचि विषये स्वरमिच्छेत ।

इच्छामात्रेण सौस्वर्यासम्भवात्तद्धेतुदन्तधावनतैलपानादि कुर्यादित्यर्थादवगम्यते । एतत्तु प्रासङ्गिक फलम् । तयैवसंस्कृतया स्वरसम्पन्नया वाचार्त्विज्यमृत्विक्कर्म कुर्यात् । स सौस्वर्यस्य सामभूषणत्वे गमकमाह—तस्मादिति । यस्मात्स्वभूतेन स्वरेण भूषितं साम तस्माद्यज्ञे स्वरवन्तमुद्गातारं दिदृक्षन्त एव द्रष्टुमिच्छन्त एव धनिनमिव जना.

**तस्य हैतस्य साम्नो यः सुवर्णं वेद । भवति हास्य सुवर्णं तस्य वै स्वर एव सुवर्णं भवति हास्य सुवर्णं य एवमेतत्साम्नः सुवर्णं वेद ॥२८॥**

**तस्य हैतस्य । साम्नो यः प्रतिष्ठां वेद प्रति ह तिष्ठति तस्य वै वागेव प्रतिष्ठा वाचि हि खल्वेष एतत्प्राणः प्रतिष्ठितो गीयतेऽन्न इत्यु हैक आहुः ॥२९॥**

५ **अथातः पवमानानामेवाभ्यारोहः । स वै खलु प्रस्तोता साम प्रस्तौति स यत्र प्रस्तुयात्तदेतानि जपेदसतो मा सद्गमय तमसो मा ज्योतिर्गमय मृत्योर्माऽमृतं गमयेति ॥३०॥**

**स यदाहासतो मा सद्गमयेति । मृत्युर्वा असत्सदमृतं मृत्योर्मामृतं गमयामृतं मा कुर्वित्येवैतदाह ॥३१॥**

१० प्रसिद्धं हि लोके । धनिन दिदृक्षन्ते लौकिका इति । एवं सिद्धं गुणविज्ञानफलसम्बन्धमुपसंहरति—अथो अपि यस्य स्वं धनं भवति भवति हास्य स्वं य एवमेतत्साम्नः स्वं वेदेत्युक्तार्थम् । एतच्च कण्ठनिष्ठं माधुर्यं बाह्यधनसौस्वर्यस्य ध्वनिगतत्वादित्यर्थः ॥ २७ ॥

इदानी लाक्षणिकवर्णज्ञानपूर्वकं वर्णोच्चारणं वर्णनिष्ठत्वादान्तरं धनमित्याह—तस्येति । तस्य हैतस्य साम्न. सुवर्णं कण्ठ्योऽयं दन्त्योऽयमिति लक्षणज्ञानपूर्वकं सुष्ठुवर्णोच्चारणं सामशब्दवाच्यस्य प्राणस्याऽऽन्तर
१५ धनमिति यो वेद अस्योपासकस्य सुवर्णं लोकप्रसिद्धमेव हिरण्यं भवति । किं तत्सुवर्णमिति शुश्रुषवे प्राह—तस्येति । तस्य साम्नः स्वर एव कण्ठ्यादिलक्षणो व्याख्यातः सुवर्णं भवति हास्य सुवर्णं य एवमेतत्साम्नः सुवर्णं वेदेति पूर्ववदुपसंहारः ॥ २८ ॥

प्रतितिष्ठत्यस्यामिति प्रतिष्ठा वाक् ता प्रतिष्ठा साम्नो गुणं यो वेद स प्रतितिष्ठति ह । पूर्ववत्फलेन प्रलोभिताय का प्रतिष्ठेति शुश्रुषव आह—तस्य वै साम्नो वागेव जिह्वामूलादीन्यष्टौ स्थानानि प्रतिष्ठा वागिति
२० जिह्वामूलादीना स्थानानामाख्या सैव प्रतिष्ठा । हि यस्मादेष प्राणो वाचि जिह्वामूलोर.कण्ठदन्तोष्ठनासिकाताळुषु स्थानेषु प्रतिष्ठितः सन् खलु निश्चितमेतद्गानं गीयते गीतिभावमाप्यते । तस्मात् साम्नो वागेव प्रतिष्ठेति सम्बन्ध । मतान्तरमाह—अन्न इति । अन्नेऽन्नपरिणामे देहे प्रतिष्ठितो गीयत इत्येके अन्ये उह खल्वाहु उ इति । एकीयपक्षस्या निन्दितत्वाद्विकल्पेन प्रतिष्ठागुणविज्ञानं कुर्याद्वाग्वा प्रतिष्ठाऽन्नं वेति ॥ २९ ॥

इदानीमेवं प्राणविज्ञानवतो मन्त्रजपविधित्सयाऽऽह—अथात इति । अथ प्राणविज्ञानकथनानन्तरम् ।
२५ यस्माच्चेवं विदुषा प्रयुज्यमान जपकर्म देवभावाभ्यारोहफलम् । अतस्तस्मात्तद्विधीयते तस्य चोद्गीथसम्बन्धात् सर्वत्रोद्गानकाले प्राप्तौ पवमानानामेवेति वचनात् पवमानेषु त्रिष्वपि कर्तव्यताया प्राप्ताया पुनः कालसंकोच करोति—स वै खलु प्रस्तोता साम प्रस्तौतीति । एतत्प्रसिद्धम् । ततः किं सिद्धमित्यत आह—स इति । स प्रस्तोता यत्र यस्मिन्काले साम प्रस्तुयात्प्रारभेत तत्तस्मिन्काले एतानि जपेत् ।

अस्य च जपकर्मणोऽभ्यारोह इत्याख्या । आभिमुख्येनारोहत्यनेन जपकर्मणा एवंविद्देवभावमित्य-
३० भ्यारोहः । एतानीति बहुवचनात् त्रीणि यजूंषि द्वितीयानिर्देशात् । ब्राह्मणोत्पन्नत्वाच्च यथा पठित एव स्वर प्रयोक्तव्यो न मान्त्रः । एतच्च जपकर्म याजमानम् । एतानि कानीत्यपेक्षायामाह—असतो मा सद्गमय तमसो मा ज्योतिर्गमय मृत्योर्माऽमृतं गमयेति ॥ ३० ॥

अयमितिशब्दो मन्त्रत्रयसमाप्तिद्योतकः मन्त्रार्थस्य तिरोहितत्वात् ब्राह्मणं प्रतीकग्रहणपूर्वक स्वयमेव व्याचष्टे—स यदिति । स मन्त्रोऽसतो मा सद्गमयेति यदाह यदुक्तवान् । कोऽसावर्थ इत्युच्यते मृत्युर्वा असत् स्वाभाविककर्मविज्ञाने मृत्युरित्युच्यते । अत्यन्ताधोभावहेतुत्वादसच्छब्दवाच्यता सदमृतं सत् । शास्त्रीयकर्मविज्ञाने
३५ उच्येते । अमरणहेतुत्वादमृतम् । पदार्थमुक्त्वा वाक्यार्थमाह—मृत्योरिति । मृत्योः स्वाभाविककर्मज्ञानात्मकात् मामममृतं शास्त्रीयकर्मविज्ञाने गमय देवभावसाधनात्मभावमापादयेत्यर्थः । अथ तात्पर्यार्थमाह—अमृतमिति । मामममृतममृतत्वसाधनयोग्यस्वभावं कुरु सम्पादयेत्येवैतन्मन्त्रवाक्यमाह ॥ ३१ ॥

तमसो मा ज्योतिर्गमयेति । मृत्युर्वै तमो ज्योतिरमृतं मृत्योर्मामृतं गमयाऽमृतं मा कुर्वित्येवैतदाह मृत्योर्माऽमृतं गमयेति नात्र तिरोहितमिवास्ति ॥३२॥ अथ यानीतराणि स्तोत्राणि । तेष्वात्मनेऽन्नाद्यमागायेत्तस्माद्‌ तेषु वरं वृणीत यं कामं कामयेत तँ स एष एवंविदुद्‌गाताऽऽत्मने वा यजमानाय वा यं कामं कामयते तमागायति तद्धैतल्लोकजिदेव न हैवालोक्यताया आशास्ति य एवमेतत्साम वेद ॥३३॥ ५

इति प्रथमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

अथ प्रथमाध्याये द्वितीयं ब्राह्मणम्

आत्मैवेदमग्र आसीत् । पुरुषविधः सोऽनुवीक्ष्य नान्यदात्मनोऽपश्यत्सोऽहमस्मीत्यग्रे व्याहरत्ततोऽहंनामाभवत्तस्मादप्येतर्ह्यामन्त्रितोऽहमयमित्येवाग्र उक्त्वाऽथान्यन्नाम प्रब्रूते यदस्य भवति ।१।

तथा द्वितीयमन्त्रं व्याचष्टे—तमसो मा ज्योतिर्गमयेति । अस्मिन्मन्त्रे तमःशब्देनाशास्त्रीयकर्मज्ञानमूलमज्ञानमुच्यते आवरणात्मकत्वात्तस्य । तदेव मृत्युर्वै मरणहेतुत्वात् । ज्योतिरमृतम् । पूर्वोक्ततमोविपरीतदेवस्वरूपज्ञानं ज्योतिरुच्यते । प्रकाशात्मकत्वात्तदेवामृतमविनाशात्मकत्वादिति पदार्थमुक्त्वा वाक्यार्थमाह—मृत्योरिति । मृत्योरज्ञानात्मकादसुरभावादमृतं ज्ञानात्मकदेवभावं गमय । तात्पर्यार्थमाह—अमृतमिति । अमृतं देवं मा मां कुरु प्राजापत्यं फलभावमापादयेत्यर्थ । एवमुक्तमन्त्रद्वयाभ्यामनतिरिक्तार्थतया तृतीयमन्त्रस्याव्याख्येयत्वमाह- मृत्योरिति । मृत्योरसाधनभावादसाध्यभावाच्चामृतं साधनभावं साध्यभावं च गमयेति । प्रसिद्धार्थतयैव अत्रास्मिन् तृतीये मन्त्रे तिरोहितमिवान्तर्हितमिवार्थरूपं पूर्वयोरिव मन्त्रयोरप्रकटमपूर्वं नास्ति पूर्वयोरेव मन्त्रयो समुच्चितोऽर्थस्तृतीयेन मन्त्रेणोक्त इत्यर्थः ॥ ३२ ॥ १०, १५

प्राणवदुद्‌गातुरपि स्वार्थं गानमस्तीत्याह—अथ यानीति । अथ त्रिषु पवमानेषु यजमानोद्‌गानकरणानन्तरं यानीतराण्यवशिष्टानि नव स्तोत्राणि तेषु स्तोत्रेषु प्राणविदुद्‌गाताऽऽत्मने आत्मार्थमन्नाद्यमन्नं च तदाद्यं चान्नाद्यमागायेत् आगानेन संपादयेत् । अस्योद्‌गातुः सर्वफलसाधकत्वमाह—तस्मादिति । यस्मात् स एष उद्‌गाता एवंविद्यथोक्तप्राणवित् प्राणवदेव आत्मने आत्मार्थं वा यजमानाय वा यं कामं कामयत इच्छति तमागायत्यागानेन साधयति । तस्माद् तस्मादेव यजमानस्तेषु नवसु स्तोत्रेषु प्रयुज्यमानेषु यं कामं कामयेत इच्छेत तं कामं वरं वृणीत प्रार्थयेदित्यन्वयार्थः । एवं कर्मसमुच्चितादुपासनात् फलसिद्धावाशङ्कासंभवाभावेऽपि केवलादुपासनात्तत्सिद्धिशङ्का स्यात्ता निरस्यति—तद्धैतदिति । य एतमेवं प्राणं यथोक्तं निर्द्धारितमहिमानमा एवमभिमानाभिव्यक्तेरहमस्मि प्राण इति वेदोपास्ते तस्य कर्मानधिकृतस्यापि तद्धैतत् प्राणदर्शनं केवलमपि लोकजिदेव लोकसाधनमेव न ह एवालोक्यतायै अलोकार्हत्वायाऽऽशाऽस्ति । आशंसनं प्रार्थना नैवास्ति । तथा चोपासनासहितं कर्म सकृदेवानुष्ठित सदवृष्टद्वारा फलसाधनं केवलोपासनं तु नैरन्तर्येणासकृदनुष्ठितं तत्साधनमित्यर्थ. ॥ ३३ ॥ २०, २५

इति श्रीविद्यारण्यमुनिविरचितमाध्यन्दिनशाखीयबृहदारण्यकोपनिषद्दीपिकाया
प्रथमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

एवं ज्ञानकर्मभ्यां समुच्चिताभ्यां प्रजापतित्वप्राप्तिर्व्याख्याता । इदानीमस्य प्रजापते फलभूतस्य जगत्सर्जनस्थितिसंहारेषु स्वातन्त्र्यं स्तोतुं ज्ञानकर्मणोर्वैदिकयो. फलोत्कर्षो वर्णयितव्यः इत्येवमर्थमात्मैवेदमग्र आसीदिति पुरुषविधब्राह्मणमारभ्यते वक्ष्यमाणब्रह्मविद्याधिकारहेतुभूतवैराग्योत्पादनाय । आत्मैवेति । तत्रात्मशब्देन ३०

स यत्पूर्वोऽस्मात्सर्वस्मात्सर्वान्पाप्मन औषत्तस्मात्पुरुष
ओषति ह वै स तं योऽस्मात्पूर्वो बुभूषति य एवं वेद ॥ २ ॥
सोऽबिभेत्तस्मादेकाकी बिभेति स हायमीक्षांचक्रे यन्मदन्यन्नास्ति कस्मान्नु
बिभेमीति तत एवास्य भयं वीयाय कस्माद्ध्यभेष्यद्द्वितीयाद्वै भयं भवति ॥ ३ ॥
स वै नैव रेमे । तस्मादेकाकी न रमते स द्वितीयमैच्छत्
स हैतावानास यथा स्त्रीपुमांसौ, संपरिष्वक्तौ ॥ ४ ॥

प्रजापतिः प्रथमोऽण्डजः शरीरी वैदिकज्ञानकर्मफलभूतोऽभिधीयते इदं दृश्यमानं शरीरभेदजातं तेन प्रजापति-शरीरेणाविभक्तमग्रे शरीरान्तरोत्पत्तेः प्रागात्मैवासीत् । कस्यात्मनोऽत्र ग्रहणमित्यत आह—पुरुषविध इति । पुरुषाकारः शिरःपाण्यादिलक्षणो मन्वादीनां स्रष्टा विराट् स प्रथमः सम्भूतोऽनुवीक्ष्य कोऽहं किं लक्षणो वाऽस्मीत्यन्वा-लोच्यात्मनः स्वशरीरादन्यद्वस्त्वन्तरं नापश्यत् ददर्श, केवलं स्वात्मानमेव सर्वात्मानमपश्यत् । आलोचनकार्यमाह—सोऽहमिति । पूर्वजन्मश्रौतविज्ञानसंस्कृतसाधकावस्थप्रजापतिवत्फलावस्थोऽपि विराडात्माऽहमस्मि सर्वात्मे-त्यग्रे प्रथमं व्याहरद्व्याहृतवान्यस्मात्ततस्तस्मादहंनामाऽभवत् । यस्मात्कारणे प्रजापतावेवं वृत्तं तस्मात्तत्कार्य-भूतोऽपि लोक एतर्ह्येतस्मिन्नपि काल आमन्त्रितः कस्त्वमिति पृष्टोऽहमयमित्येवाग्रे प्रथममुक्त्वा कारणात्मा-भिधानेनात्मानमभिधायाथानन्तरमन्यद्विशेषपिण्डाऽभिधानं यदस्य पुरुषस्य मातापितृकृतं देवदत्तो यज्ञदत्त इति वा नाम भवति तन्नाम प्रब्रूते कथयति ॥ १ ॥

एवमुपासनार्थं प्रजापतेरहंनामोक्त्वेदानीं पुरुषनामनिर्वचनमाह—स यदिति । स प्रजापति पूर्वस्मिन् जन्मनि साधकावस्थायां सम्यक्कर्मज्ञानभावनानुष्ठानैरहमहमिकयाऽस्मात्प्रजापतित्वप्रतिपित्सुसमुदाया-त्सर्वस्मात्पूर्वः प्रथमः सन्सम्यक्कर्माद्यनुष्ठानानि कृत्वाऽऽसङ्गाज्ञानलक्षणान् सर्वान्पाप्मन. प्रजापतित्वप्रतिबन्ध-कारणभूतान्यद्यस्मादौषददहत्तस्मात्पुरुषः । एतद्गुणविज्ञानफलमाह—ओषतीति । प्रजापतिवदन्योऽपि यः कश्चि-देवं पुरुषगुणः प्रजापतिरहमस्मीत्युपास्ते सर्वोऽस्मीति सोऽप्योषति ह दहत्येवाभिभवत्येव तं क ? योऽस्मादेवभूतोपास-कात्पूर्वं प्रथमः सन्प्रजापतित्वमात्मनो बुभूषति भवितुमिच्छति तमित्यर्थः ॥ २ ॥

यदिद स्तोतुमभिप्रेतं प्राजापत्यलक्षणं ज्ञानकर्मफल तदपि नैव संसारविषयमत्यक्रामदितीममर्थं प्रदर्शयिष्यन्नाह—सोऽबिभेदिति । योऽयं प्रथमः शरीरी पुरुषविधो व्याख्यात. स प्रजापतिरबिभेद्भीतवान् । अहमेकाकी कोऽपि मा हनिष्यतीत्यात्मनाशविषयविपरीतज्ञानवत्त्वाद्भयं प्राप्तवानित्यत्र कार्यगतेन भयलिङ्गेन कारणे प्रजापतौ तदनुमेयमित्याह—तस्मादिति । यस्मादयं पुरुषविधः शरीरकरणवानात्मनाशविपरीतदर्शन-वत्त्वात् प्रजापतिरबिभेत् । तस्मादेकाकित्वाविशेषादद्यतनोऽप्येकाकी स्वविनाशमाशङ्क्य बिभेति । किं च यथा-ऽस्मदादिभी रज्जुस्थाण्वादौ सर्पपुरुषादिभ्रमजनितभयनिवृत्तये विचारेण तत्त्वज्ञानं संपाद्यते तथा प्रजापतिरपि भयस्य तद्धेतोश्च विपरीतधियो ध्वस्तिहेतुं तत्त्वज्ञानं विचार्य सम्पादितवानित्यतोऽप्यस्य संसारान्तर्भूतत्वमित्या-शयेनाह—स हेति । ह किल सोऽयं प्रजापतिरीक्षाचक्रे विचारयामास । कथम् ? यद्यस्मान्मत्तोऽन्यदात्मव्यति-रेकेण वस्त्वन्तरं प्रतिद्वन्द्वीभूतं नास्ति तस्मादहं प्रत्यक्चैतन्याद्वितीयब्रह्मरूपः कस्मान्नु बिभेमीति । एवं विचारोत्पन्न-तत्त्वज्ञानफलमाह—तत इति । तत एव यथाभूताद्वितीयात्मदर्शनादेवास्य प्रजापतेर्भयं सकारणं वीयाय विस्पष्ट गतवत् । तस्य प्रजापतेर्यद्भयं तत्केवलाविद्यानिमित्तमेव परमार्थदर्शनेऽनुपपन्नमित्याह—कस्मादिति । द्वितीयाद्वै द्वितीयादेव भय भवति न तु स्वस्मात्स्वस्य भयं द्वितीयं च वस्त्वन्तरमविद्याप्रत्युपस्थापितमेव । न ह्यदृश्यमान द्वितीयं भयजन्महेतुः "तत्र को मोहः कः शोक एकत्वमनुपश्यत" इति मन्त्रवर्णात् । "मायामात्रमिद द्वैतमद्वैत परमार्थत" इति माण्डूक्यश्रुतेश्च । तत्त्वज्ञाने च सत्यज्ञानाभावात्तन्मूलद्वैतदर्शनानुपपत्तेरयं कस्माद्ध्यभेष्यत्कुतो हि भीतिमलप्स्यत् । परमार्थनिरूपणावस्थायां न कुतश्चित् भीतवानित्यर्थः ॥ ३ ॥

एवं प्रजापतेर्भयाद्याविष्टत्वेन संसारान्तर्भूतत्वमुक्तमिदानीं तत्रैवारत्याविष्टत्वं हेत्वन्तरमाह—स वै नैवेति । स वै प्रजापतिर्नैव रेमे रतिं नान्वभवदरत्याविष्टोऽभूदस्मदादिवदेव यतस्तस्मादाधुनिकोऽप्ये-काकित्वादिधर्मवत्त्वादेवैकाक्यसहायस्सन् न रमते रतिं नानुभवति । रतिर्नामेष्टार्थसंयोगजा क्रीडा, तत्प्रसङ्गिन

**स इममेवात्मानं द्वेधाऽपातयत्ततः पतिश्च पत्नी चाभवतां तस्मादिदमर्धबृगलमिव स्व इति ह स्माह याज्ञवल्क्यस्तस्मा-दयमाकाशः स्त्रिया पूर्यत एव तां समभवत्ततो मनुष्या अजायन्त ॥ ५ ॥**

**सो हेयमीक्षांचक्रे । कथं नु माऽऽत्मन एव जनयित्वा सम्भवति हन्त तिरोऽसानीति ॥ ६ ॥**

**सा गौरभवत् । वृषभ इतरस्तां समेवाभवत्ततो गावोऽजायन्त ॥ ७ ॥** ५

**बडवेतराऽभवत् । अश्ववृष इतरो गर्दभीतरा गर्दभ इतरस्तां समेवाभवत्तत एकशफमजायत॥८॥**

इष्टवियोगान्मनस्याकुलीभावोऽरतिरित्युच्यते । अरत्याविष्टस्य प्रजापतेस्तन्निरसनोद्योगप्रकारमाह-स द्वितीयमिति । स प्रजापतिर्द्वितीयमरत्यपनोदसमर्थं स्त्रीवस्त्वैच्छदिष्टवान् । तस्य चैवं स्त्रीविषयं गृध्यतोऽतिविषयासक्तस्य स्त्रिया परिष्वक्तस्येवात्मन्यभिमाने संजाते स ह प्रजापतिस्तेनैवाभिमानेन सत्यसंकल्पत्वादेतावानेतावत्परिमाण आस बभूव । कियत्परिमाण इत्यपेक्षायामाह—यथेति । यथा लोके स्त्रीपुमांसावरत्यपनोदनाय सम्परिष्वक्तावन्योन्यं गाढमालिङ्गितौ यत्परिमाणौ स्यातां तथा तत्परिमाणो बभूवेत्यर्थः ॥ ४ ॥ १०

स विराडात्मा विराट्स्वरूपानुपमर्दनेनैवेमं परिष्वक्तस्त्रीपुंसपरिमाणमात्मानं शरीरमेतावत्परि-माण द्वेधाऽपातयद्द्विप्रकारं पातितवान् । इममेवेत्यवधारणात्सशब्देन कर्तृतया विराड्ग्रहणमविरुद्धम् । क्षीरस्य सर्वोपमर्दनं दधिभावापत्तिवन्न विराट् सर्वोपमर्देनैतावानास । किं तर्हि आत्मना व्यवस्थितस्यैव विराजः सत्य-सङ्कल्पत्वादात्मव्यतिरिक्तं तु परिष्वक्तस्त्रीपुंसपरिमाणं शरीरान्तरं बभूवेति तद्द्विधाकरणे कर्मेति बोध्यम् । १५ ततस्तस्मात्पातनात्पतिर्मन्वाख्यः पत्नी शतरूपाख्या चाभवतां बभूवतुः । लोकप्रसिद्धयोर्दम्पत्योरुक्ते निर्वचने लोका-नुभवमनुकूलयति—तस्मादिति । यस्मात्पतिपत्न्यावेकशरीरविभक्ते तस्मात्स्वः स्वस्य आत्मनः इदं शरीरं प्राक् स्त्र्युद्वहनादर्धबृगलमिव बृगलं विदलमर्धं च तद्बृगलं चार्धबृगलं शुक्त्यादिविभागवदर्धविदलमेवेत्यर्थः । अत्रा-ऽभियुक्तसम्मतिमाह—इति हेति । यज्ञवक्ता यज्ञवल्कस्तस्यापत्यं याज्ञवल्क्यो देवरातिर्ब्रह्मणोवाऽपत्यमित्यर्थः । स ह किल इतीत्थमाह स्मोक्तवान् । द्वेधापातने सत्येको भागः पुरुषोऽपरस्तु स्त्रीत्यत्रैव हेत्वन्तरमाह— २० तस्मादयमिति । यस्मादुद्वहनात्प्रागवस्थायामयमाकाशः पुरुषार्धः स्त्र्यर्धशून्योऽसम्पूर्णो वर्तते ।

तस्मात्पुनरुद्वहनादनन्तरं स्त्रिया प्राप्तस्त्र्यर्धेनेतरो भागः पूर्यत एव यथा विदलार्धोऽसम्पूर्णः सम्पुटीकरणेन पुनः सम्पूर्णः क्रियते तद्वदिति । अथ मिथुनद्वारिकां सृष्टिमाह—तां समभवदिति । स प्रजा-पतिर्मन्वाख्यस्तां शतरूपाख्यामात्मनो दुहितरं पत्नीत्वेन कल्पितां समभवन्मिथुनभावमुपगतवान् । ततस्तस्मा-त्तथाविधोपगमनान्मनुष्या अजायन्तोत्पन्ना इत्यर्थः ॥ ५ ॥ २५

इदानीं गवादिसृष्टिं प्रस्तौति—सो हेयमिति । सेयं शतरूपा उ ह किल "न सगोत्रां समानप्रवरां भार्यां विन्देते" ति दुहितृगमने स्मार्तं प्रतिषेधमनुस्मरन्ती ईक्षाञ्चक्रे विचारयामास । कथंन्विदमकृत्यं यन्मामात्मनः स्वस्मादेव जनयित्वोत्पाद्य सम्भवत्युपगच्छति । यद्यप्ययं निर्घृणः स्मार्तं प्रतिषेधमस्मरन्मां न मुञ्चति । अहं तु तं स्मरन्ती हन्त इदानीं तिरोऽसानि जात्यन्तरेण तिरोभूता भवानीति ॥ ६ ॥

एवं विचार्य सा शतरूपा गौरभवत् । उत्पाद्यप्राणिकर्मभिश्चोद्यमानायाः शतरूपाया मनोश्च पुनः पुनः सैव मतिरभवदिति बोध्यम् । इतरो मनुर्ऋषभो भूत्वा तामेव गां समभवत् पूर्ववत् सम्भोगं कृतवान् ततस्तस्माद्-गोवृषभसम्बन्धाद्गावोऽजायन्त ॥ ७ ॥ ३०

इतरा शतरूपा वडवाऽश्वाऽभवत् । इतरो मनुरश्ववृषभोऽभवत् । अश्वश्चासौ वृषश्च अश्ववृषः प्रजनन-समर्थोऽश्व इत्यर्थः । इतरा शतरूपा गर्दभी । इतरो मनुर्गर्दभः । अभवदिति प्रत्येकं सम्बन्धः । तामेव वडवां गर्दभीं च समभवत् । ततो वडवाश्वसंयोगाद्गर्दभीगर्दभसंयोगाद्गर्दभाश्वजातीययोर्द्वापत्याच्चैकशफमेकखुरमश्वा-श्वतरगर्दभाख्यं त्रयमजायत ॥ ८ ॥ ३५

अजेतराभवत् । बस्त इतरोऽविरितरा मेष इतरस्तां समेवाभवत्ततोऽजावयो-ऽजायन्तैवमेव यदिदं किंच मिथुनमा पिपीलिकाभ्यस्तत्सर्वमसृजत ॥ ९ ॥

सोऽवेत् । अहं वाव सृष्टिरस्म्यहँ हीदँ सर्वमसृक्षीति ततः
सृष्टिरभवत्सृष्ट्याँ हास्यैतस्यां भवति य एवं वेद ॥१०॥

अथेत्यभ्यमन्थत् । स मुखाच्च योनेर्हस्ताभ्यां चाग्निमसृजत
तस्मादेतदुभयमलोमकमन्तरतोऽलोमका हि योनिरन्तरतः ॥११॥

तद्यदिदमाहुः । अमुं यजामुं यजेत्येकैकं देवमेतस्यैव सा विसृष्टिरेष उ ह्येव सर्वे देवाः ॥१२॥

अथ यत्किंचेदमार्द्रम् । तद्रेतसोऽसृजत तदु सोम एतावद्वा
इदँ सर्वमन्नं चैवान्नादश्च सोम एवान्नमग्निरन्नादः ॥१३॥

इतरा शतरूपाऽजाऽभवत् । इतरो मनुःबस्तश्छागः । इतरा शतरूपाऽविः । इतरो मनुर्मेष. । तामेवाजामविं च समभवत् । ततस्तस्मात्सम्भवनादजावयोऽजाश्चावयश्चाजावयो जातिविशेषा अजायन्त । विशेषाणामानन्त्यात्प्रत्येकमुपदेशासम्भवं मन्वानस्तिर्यक्सृष्टिं संक्षिप्योपसहरति—एवमेवेति । यदिदं किंच यत्किंचेद मिथुन स्त्रीपुंसलक्षणं द्वन्द्वमापिपीलिकाभ्यः पिपीलिका अभिव्याप्य सर्वं जगदेवमेव पशुन्यायेनैव सृष्टवानित्यर्थः ॥ ९ ॥

वक्ष्यमाणाग्निसोमेन्द्रादिसृष्टिं सिद्धवत्कृत्य सर्वां सृष्टिमुपसंहरति—सोऽवेदिति । स प्रजापतिरिदं सर्वं जगत्सृष्ट्वाऽवेदवगतवान् । कथम् ? अहं वावाऽहमेव सृष्टिरस्मि सृज्यत इति सृष्टिः यन्मया सृष्टं जगन्मदभेदत्वादहमेवास्मि न मत्तो व्यतिरिच्यते कर्तृक्रिययोर भेदोपचारादिति भावः ।

इदं सृष्ट जगदहमेवं कुतः इत्यत आह—अहं हीति । हि यस्मादिदं सर्वं जगदहमेवासृक्षि । सृष्टिशब्देनात्मानमेवाभ्यधात्प्रजापतिः । तत्तस्मात्प्रजापति. सृष्टिरभवत् सृष्टिनामा बभूव । स्रष्टुरेतद्गुणविद. फलमाह—सृष्ट्या हेति । प्रजापतिवदन्योऽपि यः कश्चित्साध्यात्माधिभूताऽधिदैवं जगदहमस्मीति स्वात्मनोऽनन्यत्वेन वेद अस्योपासकस्यैतस्या सृष्ट्यामेतस्मिन् जगति ह खलु स्रष्टृत्वं भवतीत्यर्थ. ॥ १० ॥

एवमनुग्राह्यसृष्टिमुक्त्वाऽनुग्राहकसृष्टिं प्रस्तौति—अथेतीति । अथशब्दोऽनुग्राह्यसर्गानन्तर्यार्थ । इतिशब्दो मन्थनप्रकाराभिनयप्रदर्शनार्थः । स प्रजापतिरेवमिद मिथुनात्मकं जगत्सृष्ट्वाऽथानन्तरमित्यनेन प्रकारेण मुखे हस्तौ प्रक्षिप्याऽभ्यमन्थत् । आभिमुख्येन मन्थनमकरोत् । मुखहस्ताभ्या मथित्वा स प्रजापतिर्मुखाच्च योनेर्हस्ताभ्या च योनिभ्यामग्निं ब्राह्मणजातेरनुग्रहकर्तारमसृजत सृष्टवान् । मुखादेरग्निं प्रति योनित्वे गमकमाह—तस्मादेतदुभयमिति । यस्माद्दाहकस्याऽग्नेर्हस्तौ मुखं चैतदुभयं योनिस्तस्मादेतदुभयमप्यन्तरतोऽभ्यन्तरेऽलोमक लोमवर्जितम् । या हि स्त्रीणा योनिः सा ह्यन्तरतोऽलोमकेत्येतत्सामान्यादुभयस्यास्याग्नियोनित्वं तथा ब्राह्मणोऽपि मुखादेव जज्ञे प्रजापतेस्तस्मादेकयोनित्वात् ज्येष्ठेनेवानुजोऽनुगृह्यतेऽग्निना ब्राह्मणस्तस्माद्ब्राह्मणोऽग्निदेवत्यो मुखवीर्यश्चेति श्रुतिस्मृतिसिद्धम् ॥ ११ ॥

क्षत्रादिदेवतासर्गमिहानुक्तं वक्ष्यमाणमप्युक्तवदुपसंहरति सृष्टिसाकल्यानुकीर्त्यै सृज्यस्य सृष्टेरनन्यत्वात्सृष्ट प्रजापतिरेवेत्युक्तस्यार्थस्य स्तुत्यभिप्रायेण अविद्वन्मतं निन्दितुमुपन्यस्यति—तद्यदिदमिति । तत्र कर्मप्रकरणे केवलयाज्ञिका यागकाले यदिदं वच आहुरमुमग्निं यजामुमिन्द्रं यजेत्यादि नाम शस्त्रस्तोत्रकर्मादिभिन्नत्वाद्भिन्नमेवाग्न्यादिदेवमेकैकं मन्यमाना आहुरित्यभिप्रायः । तन्न तथा विद्यादिति वाक्यशेषः । एतस्याऽनादरणीयत्वे हेतु वदन् अनुग्राहकसृष्टिमुपसंहरति—एतस्यैवेति । यस्माद्यः सर्वो देवभेदः एतस्यैव प्रजापतेरेव सा विसृष्टिः उ पुनर्हीत्यवधारणे । एष प्रजापतिः प्राण एव सर्वे देवाः नान्यदेवतान्तरमस्तीत्यर्थः ॥ १२ ॥

एकस्यैव प्रजापतेर्द्विधोपास्यत्वायाग्निसर्गमुक्त्वाऽन्नसर्गमाह—अथ यत् किंचेदमिति । अथाग्निसर्गानन्तरम् । यत्किञ्चेदं लोक आर्द्रं द्रवात्मक तत्प्रजापतो रेतस आत्मनो बीजादसृजत सृष्टवान् । द्रवात्मकश्च

सैषा ब्रह्मणोऽतिसृष्टिः । यच्छ्रेयसो देवानसृजताथ यन्मर्त्यः सन्नमृ-
तानसृजत तस्मादतिसृष्टिरतिसृष्ट्यां हास्यैतस्यां भवति य एवं वेद ॥१४॥

तद्धेदं तर्ह्यव्याकृतमासीत् । तन्नामरूपाभ्यामेव व्याक्रियतासौ नामायमिदंरूप इति
तदिदमप्येतर्हि नामरूपाभ्यामेव व्याक्रियतेऽसौ नामायमिदंरूप इति ॥१५॥

स एष इह प्रविष्टः । आ नखाग्रेभ्यो यथा क्षुरः क्षुरधानेऽवहितः
स्याद्विश्वम्भरो वा विश्वम्भरकुलाये तं न पश्यन्त्यकृत्स्नो हि सः ॥१६॥

सोमस्तस्माद्यदार्द्रं प्रजापतिना रेतसः सृष्टं तदु सोम एव। स्रष्टव्यान्तरशङ्कां वारयति—एतावद्वै इति। इद सर्वं दृश्यमानं जगदेतावद्वै इति। इदं सर्वं दृश्यमानं जगदेतावद्वै एतावदेव किं ? यत् अन्नं चान्नादश्चैव नातोऽधिकम्। कस्य सोमत्वमग्नित्वं चेत्यपेक्षायामाह—सोम एवान्नमिति। यदद्यतेऽन्नं तदेव सोमः। य एवान्नाद-सोऽग्निरेवार्थबलाद्ध्यवधारणम्। अग्निरपि चकोरपक्षिण प्रत्यन्नत्वदर्शनादद्भिरद्यमानत्वदर्शनाच्च। सोमस्यापि क्वचिदिज्यमानतयाऽत्तृत्वावगमाच्चाग्निरपि संहार्यश्चेत्सोम एव सोमोऽपि सहर्ता चेदग्निरेवेत्यर्थः॥ १३॥

अनुग्राहकदेवसृष्टिं शिष्ट्वा तदुपासकस्य फलोक्त्यर्थमादौ देवसृष्टिं स्तौति—सैषेति। सा एषा सृष्टि-र्ब्रह्मणः प्रजापतेरतिसृष्टिरात्मनोऽप्यधिकतरा का सेत्याह–यद्यस्मात् श्रेयसः प्रशस्यतरानात्मनः सकाशाद्देवान-सृजत तस्मात्सैषा देवसृष्टिरतिसृष्टिः। ननु "अग्निर्मूर्द्धे" त्यादिश्रुतेरग्न्यादयोऽस्यावयवास्तत्कथं तत्सृष्टिस्ततोऽप्यति-शयवतीत्याशङ्क्य प्रजापतेर्यजमानावस्थापेक्षया देवसृष्टेरुत्कृष्टत्ववचनमविरुद्धमित्याशयेन परिहर्तुमाह–अथ यदिति। अथ यद्यस्माद्यजमानावस्थ. प्रजापतिर्मर्त्यो मरणधर्मान् अमृतानमरणधर्मिणो देवान् कर्मज्ञानवह्निना सर्वान्स्वस्य पाप्मन ओषित्वाऽसृजत। ततस्तस्मादियं देवसृष्टिरतिसृष्टिरुत्कृष्टज्ञानकर्मणोः फलमित्यर्थः। एतादृग-प्रजापत्युपासकस्य फलमाह—अतिसृष्ट्यां हेति। य एवं सृष्ट्यात्मा प्रजापतिरहमेवेति वेदास्योपासकस्यैतस्या-मतिसृष्ट्या देवादिप्रपञ्चे ह किल भवति प्रजापतिवत्स्रष्टृत्वमिति शेषः॥ १४॥

एतावतोक्तस्य व्याकृतस्य जगतोऽव्याकृतावस्था बीजभूतां सबीजसंसारोद्धरणायाह—तद्धेदं तर्हीति। तदिद व्याकृत जगत्तर्हि तदोत्पत्तेः प्राक्कालेऽव्याकृतमनभिव्यक्तनामरूपं ह किलासीदबभूव। तदव्याकृतं जगन्नाम-रूपाभ्या नाम्ना रूपेण च स्वयमेव व्याक्रियत व्याक्रियत इति कर्मकर्तृप्रयोगादात्मनैव विस्पष्टं नामरूपविशेषाव-धारणमर्याद व्यक्तभावमापद्यते। तदेव स्पष्टयति—असौ नामेति। अयं पुरुषादिपदार्थोऽसौनामा देवदत्तो यज्ञदत्त इति वा नामास्येत्यसौनामा, इद शुक्लं कृष्णं वा रूपमस्येत्यसाविदंरूप इत्येव व्याक्रियत इति सम्बन्धः। असौ-शब्द सोऽन्तोऽव्ययत्वेन ज्ञेयः। अव्याकृतमेव व्याकृतात्मना व्यक्तमित्येतत्सुप्तप्रबुद्धदृष्टान्तेन स्पष्टयति—तदिदमप्येतर्हीति। तदिदं सुप्तमव्याकृतं वस्त्वेतर्ह्येतस्मिन्नपि काले नामरूपाभ्यामेव व्याक्रियतेऽसौनामायमिदं रूप इत्युक्तार्थम्॥ १५॥

तद्धेदमित्यत्र मूलकारणमुक्त्वा तन्नामरूपाभ्यामित्यादिना तत्कार्यमुक्तं इदानीं तस्मिन्कार्ये स्रष्टुः प्रवेशमाह—स एष स्रष्टा परमात्मैवेह ब्रह्मादिस्तम्बपर्यन्तेषु देहेषु अव्याकृते नामरूपे व्याकुर्वन् प्रविष्टः यथा जलादौ सूर्यादेः प्रतिबिम्बलक्षणः प्रवेशो दृश्यते तथाऽऽत्मनोऽपि सृष्टे कार्ये काल्पनिकः प्रवेश इत्यर्थः। का पुनरस्य प्रवेशस्य मर्यादेत्याशंक्याऽऽह—आनखाग्रेभ्य इति। आनखाग्रेभ्योनखाग्रं मर्यादीकृत्य प्रविष्टः नखाग्रमर्यादं ह्यात्मनश्चैतन्य-मुपलभ्यते। तत्र कथमिव प्रविष्ट इत्याकांक्षापूर्वकं दृष्टान्तद्वयमुत्थापयति—यथेति। यथा लोके क्षुरधाने क्षुरोधीयतेऽ-स्मिन्निति क्षुरधान तस्मिन् नापितोपस्कराधाने क्षुर एकदेशेऽवहित. प्रवेशितोऽवस्थितः स्यात्। यथा वा जाठर-त्वेन विश्वस्य भरणात् विश्वम्भरोऽग्नि. विश्वंभरकुलायेऽग्न्याधारभूतकाष्ठादिलक्षणे नीडे सर्वतो व्याप्यावस्थित। तथाऽऽत्मा सामान्यतो विशेषतश्च सुषुप्त्यादौ देह व्याप्यावस्थित इत्यर्थः। इदानीं व्याकृताज्जगत आत्मान पृथक्कर्तुं तन्न पश्यन्तीति वाक्यम्। त प्राणनादिक्रियाविशिष्टमात्मानं तत्रैव प्रविष्टं सन्त पश्यन्तोऽपि केवलं पूर्णमात्मान न पश्यन्ति-नोपलभन्ते। तत्र प्राणनादिक्रियाविशिष्टस्यादर्शने हेतुमाह—अकृत्स्नोऽहीति। हि यस्मात् स प्राणनादिक्रियाविशिष्ट आत्मा अकृत्स्नोऽसमर्थोऽसंपूर्ण इति यावत्॥ १६॥

**प्राणन्नेव प्राणो नाम भवति वदन्वाक्पश्यँश्चक्षुः। शृण्वञ्छ्रोत्रं मन्वानो मनस्तान्यस्यैतानि कर्मनामान्येव स योऽत एकैकमुपास्ते न स वेदाकृत्स्नो ह्येषोऽत एकैकेन भवति ।।१७।।**

**आत्मेत्येवोपासीत। अत्र ह्येते सर्व एकं भवन्ति तदेतत्पदनीयमस्य सर्वस्य यदयमात्माऽनेन ह्येतत्सर्वं वेद यथा ह वै पदेनानुविन्देदेवं कीर्तिं श्लोकं विन्दते य एवं वेद ।।१८।।**

**तदेतत्प्रेयः पुत्रात्। प्रेयो वित्तात् प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मा स योऽन्यमात्मनः प्रियं ब्रुवाणं ब्रूयात्प्रियँ रोत्स्यतीतीश्वरो ह तथैव स्यादात्मानमेव प्रियमुपासीत स य आत्मानमेव प्रियमुपास्ते न हास्य प्रियं प्रमायुकं भवति ।।१९।।**

कुतः पुनस्तस्याऽकृत्स्नत्वमित्यत आह—**प्राणन्नेवेति**। प्राणन्नेव प्राणनक्रियामेव कुर्वन्नात्मा प्राणो नाम प्राणाभिधानो भवति नान्या क्रिया कुर्वन्नात्मा वाग्वक्तीति व्युत्पत्ते. प्राणनवदनाभ्यामनुक्तकर्मेन्द्रियव्यापार उपलक्ष्यते। पश्यन् दर्शनक्रियां कुर्वन्नात्मा चक्षुः चष्टे इति व्युत्पत्तेः। शृण्वन्नात्मा श्रोत्रं शृणोतीति व्युत्पत्ते.। दृष्टिश्रुतिभ्यामनुक्तज्ञानेन्द्रियव्यापार उपलक्ष्यते। मन्वानो मननक्रिया कुर्वन्नात्मा मनः मनुते इति व्युत्पत्तेः। तान्येतानि प्राणादिनामान्यस्यात्मनः कर्मनामान्येव कर्मजानि। नामान्येव पाचकपाठकादिवत्। न वस्तुविषयाण्यतो न कृत्स्नवस्त्ववद्योतकानि।

अकृत्स्नदर्शी नात्मदर्शीत्याह—**स योऽत इति**। स योऽतोऽस्मात्प्राणनादि। क्रियासमुदायादेकैक प्राणमिति वा चक्षुरिति वा विशिष्टमनुपसंहृतेतरक्रियात्मकमात्मान मनसाऽयमात्मेत्युपास्ते चिन्तयति स न वेद न जानाति कृत्स्नमात्मानम्। कुत इत्यत आह—**अकृत्स्नो हीति**। हि यस्मादेष आत्मा। अतोऽस्मात्प्राणनादिसमुदायात्प्रविभक्त एकैकेन प्राणादिविशेषणेन विशिष्टो भवति तस्मादकृत्स्नोऽसमस्त इतरधर्मान्तरानुपसंहारात्। अकृत्स्नदर्शी तु न ब्रह्मात्मतत्त्वदर्शीत्यर्थः॥ १७ ॥

कथं पुनः ब्रह्मात्मतत्त्वदर्शीत्याकाङ्क्षापूर्वकं विद्यासूत्रमवतारयति—**आत्मेत्येवेति**। यस्य प्राणादीनि विशेषणानि यान्युक्तानि स तानि सर्वाण्याप्नुवन्नात्मेत्युच्यते। तमात्मेत्येवोपासीत न केनचिद्विशेषणेन विशिष्टमात्मानं चिन्तयेदित्यर्थः। एवं हि असौ स्वेन वस्तुरूपेण गृह्यमाणः कृत्स्नो भवति। कृत्स्नत्वे हेतुमाह—**अत्र हीति**। हि यस्मात्। अत्रास्मिन्निरुपाधिक आत्मनि एते सर्वे प्राणनादिकर्मजनामाभिधेयाः प्राणाद्युपाधिकृता विशेषा एकं भवन्त्यभिन्नतां प्रतिपद्यन्ते जलसूर्यप्रतिबिम्बभेदा इवाऽऽदित्ये तस्मादात्मेत्येवोपासीत। न चानात्मनोऽपि विद्यमानत्वात्कथमात्मन एवोपासने नियमविधानं क्रियत इत्यत आह—**तदेतदिति**। अस्य सर्वस्यानात्मपदार्थस्य तदेतत्प्रकृतमात्मस्वरूपं पदनीयं गमनीयमन्वेषणीयमिति यावत् नान्यत्। अस्य सर्वस्येति निर्द्धारणार्था षष्ठी। अस्मिन् सर्वस्मिन्नित्यर्थ. किं तद्? यदयमात्मा यदेतदात्मतत्त्वम्। अस्यैव पदनीयत्वे हेतुमाह—**अनेन ह्येतदिति**। अनेनेतीत्थम्भावे तृतीया। अनेनात्मज्ञानेन हि यस्मात्सर्वमनात्मजातमन्यदेतत्सर्वं समस्तं वेद जानाति। कथं पुनरेतत्पदनीयमित्यत आह—**यथा ह वा इति**। यथा ह वै लोके गवादिखुराङ्कितो देशः पदमित्युच्यते। तेन पदेनान्विष्यमाणो नष्टं विवित्सित गोसुवर्णादि वस्त्वनुविन्देल्लभेत एवमनेन प्रकारेण श्रुत्यादिनाऽऽत्मनि लब्धे सर्वमनुलभत इत्यर्थः। इदानी गुणज्ञानफलमाह—**कीर्तिश्लोकमिति**। य एवं यथोक्तं नामरूपानुप्रवेशेन ख्याति गतमात्मेत्यादिनामरूपाभ्या प्राणनादिसङ्गति श्लोकं च प्राप्तवन्तमात्मानं वेद। स तद्वदेव कीर्तिं प्रख्यातिं श्लोकं च मित्रैः सह सघातं विन्दते लभत इत्यर्थः॥ १८ ॥

कुतोऽन्यत्सर्वमनादृत्यात्मतत्त्वमेव विज्ञेयमित्याशङ्काया लोकदृष्टिमवष्टभ्याऽऽह—**तदेतदिति**। तदेतदात्मतत्त्वं पुत्रात् प्रियत्वेन प्रसिद्धात् प्रेयः प्रियतरं पुत्रो हि लोके प्रियः प्रसिद्धस्तस्मादपि प्रियतरमिति निरतिशयप्रियत्वं दर्शयति। तथा वित्ताद्दैवमानुषात् परोक्षज्ञानहिरण्यरत्नादेः प्रेयः प्रियतरं तथा पुत्रादेरन्यस्मात्प्रियत्वेन प्रसिद्धात्सर्वस्मात्प्रेयः प्रियतरं। तत्कस्मादात्मतत्त्वमेव प्रियतरं न प्राणादी-

**तदाहुः । यद्ब्रह्मविद्यया सर्वं भविष्यन्तो मनुष्या मन्यन्ते ।**
**किमु तद्ब्रह्मावेद्यस्मात्तत्सर्वमभवदिति ॥२०॥**

**ब्रह्म वा इदमग्र आसीत् । तदात्मानमेवावेदहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवत्तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणाम् ॥२१॥**

त्युच्यते—अन्तरतरमिति । बाह्यात्पुत्रवित्तादेः प्राणपिण्डसमुदायो ह्यन्तरोऽभ्यन्तरः आत्मनः सन्निकृष्टस्तस्मादप्यन्तरादतिशयेनान्तरतरं यदयमात्मा यदेतदात्मतत्त्वम् । यो हि लोके निरतिशयप्रियः स सर्वप्रयत्नेन लब्धव्यो भवति तथाऽयमात्मा सर्वलौकिकप्रियेभ्यः प्रियतमस्तस्मात्तल्लाभे महान्यत्न आस्थेय इत्यर्थः । नन्वनात्मनोऽपि पुत्रवित्तादेः प्रियत्वमनुभूयत इति कस्मात् पुनरात्मप्रियोपादानेनैवेतरहान क्रियत इत्यत आह—स योऽन्यमिति । यः कश्चिदात्मप्रियवादी स अन्यमनात्मविशेषं पुत्रादिकमात्मनः सकाशात् प्रियं ब्रुवाणं प्रति ब्रूयात् वदेत् । किं तव पुत्रादिलक्षणं प्रियमभिमतं तर्हि मन्दोऽसि यतस्त्वत्प्रियं रोत्स्यत्यावरणं प्राणसंरोधं प्राप्स्यति विनङ्क्ष्यतीति यावत् । स कस्मादेवं ब्रवीतीत्यपेक्षायामाह—ईश्वरो होति । यस्मादेवं वक्तुमसावीश्वरो ह समर्थः पर्याप्त एव तस्मादेवं वदेत् । कुतोऽस्येश्वरत्वमवगम्यत इत्याशङ्कायां यथाभूतार्थवादित्वादित्याह—तथैवेति । यस्मात्प्रियत्वेन कल्पितमनात्मवस्तु विनङ्क्ष्यतीति यत्तेनोक्तं तत्तथैव स्यादविसंवाद्येव भवेत् । यथाभूतार्थवादी हि स तस्मादस्येश्वरत्वमवगम्यते । एवमनात्मन्यमुख्या प्रीतिरिति स्थिते फलितमाह—आत्मानमेवेति । तस्मादन्यत्प्रियमुज्झित्वाऽऽत्मानमेव प्रियमुपासीत चिन्तयेत् । तत्फलमाह—स य आत्मानमेवेति । अस्योपासकस्य प्रियं प्राणादिकं प्रमायुक्तं प्रमरणशीलं ह किल न भवतीत्येतत्प्रियगुणफलविधानार्थं मुख्यस्य फलस्य सर्वभावापत्तेर्वक्ष्यमाणत्वादित्यर्थः ॥ १९ ॥

आत्मेत्येवोपासीतेति सूत्रिता ब्रह्मविद्या । यदर्था कृत्स्नाऽप्युपनिषत् । तस्यैतस्य सूत्रस्य व्याचिख्यासु श्रुतिः प्रयोजनाभिधित्सयोपोद्घातं करोति—तदाहुरिति । तदित्यनन्तरवाक्येऽवद्योत्यं वक्ष्यमाणं वस्तु ब्रह्म विविदिषवो नित्यनिरतिशयश्रेयः प्रतिपित्सवो ब्राह्मणा आहुः—किमाहुरित्याह—यद्ब्रह्मविद्यया ब्रह्म परमात्मा तद्यया वेद्यते सा ब्रह्मविद्या तया ब्रह्मविद्यया सर्वं निरवशेषं भविष्यन्तः सर्वात्मका भविष्याम इत्येवं मनुष्या यन्मन्यन्ते सम्भावयन्ति । मनुष्यग्रहणं विशेषतोऽधिकारज्ञापनार्थम् । मनुष्या एव हि विशेषतोऽभ्युदयनिःश्रेयससाधनेऽधिकृता इत्यभिप्रायः । तत्र विप्रतिषिद्धं वस्तु लक्ष्यते अतः पृच्छामः—किमु तद्ब्रह्मेति उ इति प्रश्ने । तद्ब्रह्म किं यस्य विज्ञानात्सर्वं भविष्यन्तो मनुष्या मन्यन्ते । तद्ब्रह्म किमवेत्किमज्ञासीद्यस्माद्विज्ञानात्तद्ब्रह्म सर्वमभवदिति त्रयः प्रश्नाः । तद्ब्रह्म किं आत्मस्वरूपमतिरिक्तं वेति प्रथमः । किं वाऽवेदिति स्वरूपं तदतिरिक्तं वाऽज्ञासीदिति द्वितीयः । यस्मात्तत्सर्वमभवदिति सर्वभावापत्तिरपि किं विद्यमानैवाऽभिव्यज्यते नूतना वाऽऽपाद्यत इति तृतीय इत्यर्थः ॥ २० ॥

एतेषां प्रश्नानां क्रमेण सर्वदोषानागन्धितप्रतिवचनमाह—ब्रह्म वा इदमिति । अग्रे प्राक्प्रतिबोधादपीद शरीरस्थं प्रमात्रादिसाक्षिभूतं त्वंपदलक्ष्यं ब्रह्म वै ब्रह्मैवासीत् । वै शब्दोऽवधारणार्थः तद्ब्रह्माविद्याविशिष्टतया विकारित्वेन व्यवस्थितं नासि त्वं संसारी किन्तु सकलधर्मरहितचिदानन्दैकरसं ब्रह्मैवासीति दयालुनाऽऽचार्येण कथञ्चित्प्रतिबोधितमात्मानमेवाहं ब्रह्म प्रमात्रादिसाक्ष्यशनायाद्यतीतं नेति नेत्यस्थूलादिलक्षणमस्मि भवामीत्येवमवेदज्ञासीत् । तस्मादेवं विज्ञानात्तद्ब्रह्म सर्वमभवत् । अब्रह्मारोपणाविद्यापगमात्तत्कार्यस्यासर्वत्वस्य निवृत्त्या स्वाभाविकं सर्वत्वं प्राप्तवदित्यर्थः । यद्ब्रह्मविद्यया सर्वं भविष्याम इति मनुष्या मन्यन्त इति यत्पृष्टं किमुत ब्रह्मावेद्यस्मात्तत्सर्वमभवदिति च तन्निर्णीतम् । ब्रह्मविद्यायामग्निहोत्रादाविव मनुष्यत्वाद्यधिकारिविशेषनियमो नास्तीत्याह—तद्यो यो देवानामिति । तत्तत्र देवाना मध्ये यो यो देवः प्रत्यबुध्यत प्रतिबुद्धवानात्मानं यथोक्तेन विधिनाऽऽत्मबोधनादेव स स देवस्तद्ब्रह्म सर्वात्मकमभवन्न साधनान्तरेणेति तथर्षीणां तथा मनुष्याणां मध्ये यो यः प्रत्यबुध्यत स स तद्ब्रह्माभवदिति पूर्वेण सम्बन्धः ॥ २१ ॥

अस्या ब्रह्मविद्यायाः सर्वभावापत्तिः फलमित्येतस्यार्थस्य दार्ढ्याय श्रुतिर्मन्त्रमुदाहरति—तद्धैतत्पश्यन्निति । तद्ब्रह्मैतदात्मानमेवाहं ब्रह्मास्मीति पश्यन् तस्मादेव ब्रह्मणो दर्शनादृषिर्वामदेवाख्यः प्रतिपेदे ह मनुरभवं सूर्यश्चेति

तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे । अहं मनुरभवꣳ सूर्यश्चेति तदिदमप्येतर्हि य एवं वेदाहं ब्रह्मास्मीति स इदꣳ सर्वं भवति तस्य ह न देवाश्च नाभूत्या ईशत आत्मा ह्येषाꣳ स भवत्यथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवꣳ स देवानाम् यथा ह वै बहवः पशवो ५ मनुष्यं भुञ्ज्युरेवमेकैकः पुरुषो देवान्भुनक्त्येकस्मिन्नेव पशावादीयमानेऽप्रियं भवति किमु बहुषु तस्मादेषां तन्न प्रियं यदेतन्मनुष्या विद्युः ।।२२।।

ब्रह्म वा इदमग्र आसीत् । एकमेव तदेकꣳ सन्न व्यभवत् तच्छ्रेयोरूपमत्यसृजत क्षत्रं यान्येतानि देवत्रा क्षत्राणीन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान इति

मन्त्रं प्रतिपेदे प्रतिपन्नवान् ह किल । स एतस्मिन् ब्रह्मात्मदर्शेऽवस्थित एतं मन्त्र ददर्श । तदेतद्ब्रह्म पश्यन्निति १० ब्रह्मविद्या परामृश्यते सर्वात्मभावं फलं च प्रतिपेदे इत्यर्थः ।

ननु महता देवादीना वीर्यातिशयवत्त्वाद्ब्रह्मविद्यया सर्वभावापत्तिर्युज्यते कथ पुनरिदानीं कलिकालवर्तिनां मनुष्याणां विशेषतोऽल्पवीर्यत्वात्सर्वभावापत्तिरित्यत आह—तदिदमप्येतर्हीति । तदिदं प्रकृतं यत्सर्वभूतानुप्रविष्टं ब्रह्मैतर्ह्येतस्मिन्नपि वर्तमाने काले यः कश्चिद् व्यावृत्तबाह्यौत्सुक्य आत्मानमेवोपाधिजनितभ्रान्तिविज्ञानाध्यारोपितविशेषवर्जितं सकलसंसारधर्मातीतं ब्रह्मैवाहमस्मीति वेदानुसन्धत्ते । स एतादृग्ब्रह्मविज्ञानादविद्याकृतासर्वत्व- १५ निवृत्त्येदं सर्वं भवति । नन्वविद्यावतः कर्मिणोऽमृतत्वप्राप्तिमुद्दिश्य कर्मभ्यो व्युत्थानमिच्छतो देवकृतविघ्नसंभवव- द्विद्यावतोऽपि वार्तमानिकस्य पुरुषस्य देवकृतविघ्नसम्भवान्न फलप्राप्तिरित्यत आह—तस्य ह नेति । तस्य यथोक्तप्रकारेण ब्रह्मात्मज्ञानवतो देवाश्च न महावीर्या देवा अप्यभूत्यै सर्वात्मकब्रह्मभावस्याऽभवनाय नेशते ह किल न पर्याप्ताः किमुतान्ये ब्रह्मविद्याफलप्राप्तौ विघ्नकरणेऽदेवादयः ईशत इति का शङ्केत्यर्थः । तत्र हेतुर्हि यस्मात् स ब्रह्मविदेषां देवानामात्मा शास्त्रप्रकाशितब्रह्मस्वरूपो भवति । एव सोपपत्तिकं विद्यासूत्रमुक्त्वा सम्प्रत्यविद्यासूत्रमाह— २० अथ योऽन्यामिति । अथ सोपपत्तिकविद्यासूत्रकथनानन्तरं यः कश्चिदब्रह्मवित्स्वात्मनि कर्तृत्वमङ्गीकृत्यान्यामात्मनो व्यतिरिक्तां देवतामन्योऽहमुपास्यदेवतायाः सकाशादस्म्यन्योऽसौ मत्त उपासनीयो देव इत्येवं भेददृष्ट्योपास्ते स्तुतिनमस्कारयागबल्युपहारप्रणिधानध्यानादिना स उपासको न वेदोपास्योपासकयोस्तत्त्व न विजानाति । न केवलमेवंभूतोपासकोऽविद्यादोषवानेव किं तर्हि पशुसदृशोऽपि भवतीत्याह—यथा पशुरिति । यथा पशुर्गवाश्वादिर्दोहनवाहनाद्युपकारैरुपभुज्यत एवमेव सोऽविद्वान्देवानां मध्य एकैकस्यापि देवस्य पशुवदनेकैरुपकारैरुपभोग्यो भवति । २५ लोकपशोर्मनुष्यपशौ यथोक्त विशेषं वक्तुं श्रुतिः स्वयमेवाह—यथा ह वा इति । यथा ह वै लोके बहवो गोश्वादय. पशवो मनुष्यमात्मनोऽधिष्ठातारं स्वामिन दोहनवाहनादिना भुञ्ज्युः पालयेयु । एवं बहुपशुस्थानीयोऽयं कर्मी पुरुष एकैक एव देवानिन्द्रादीन् स्तुतिनमस्कारादिक्रियया भुनक्ति पालयति देवग्रहणमृषिपित्रादीनामप्युपलक्षणं परम् । अत एव मनुष्याणा पशुभावाद्व्युत्थानं देवा द्विषन्तीत्याह—एकस्मिन्नेवेति । यथा लोके बहुपशुमतोऽपि एकस्मिन्नेव पशौ व्याघ्रादिनाऽऽदीयमानेऽपाह्रियमाणेऽप्रियं भवति । तथा बहुषु बहुपशुस्थानीय एकैकस्मिन्पुरुषे पशुभावाद्व्यु- ३० तिष्ठति देवानामप्रियं भवतीति किमु वक्तव्यम् । अत एवाविद्यावता पशुभावाद्व्युत्थानसाधनं तत्त्वज्ञानमपि देवा द्विषन्तीत्याह—तस्मादेषामिति । यस्मान्मनुष्याणां पशुभावाद्व्युत्थानं देवानामप्रियं तस्मात्कारणादेतद्ब्रह्मात्मतत्त्वं मनुष्याः कथञ्चन विद्युर्विजानीयुस्तदेषां देवाना न प्रियं नेष्टमित्यर्थ. ।। २२ ।।

अथेत्यभ्यमन्थदित्यत्रानुग्राहकदेवतासर्गं प्रक्रम्याऽनेनैव सृष्टिरुक्ता नेन्द्रादीनाम् । अत्रत्वविद्यां प्रस्तुत्य तेषां, सृष्टिरुच्यते—ब्रह्म वा इदमग्र आसीदेकमेवेत्यादिना । अविद्वान् कैः कर्मभिः केषा देवानां भोग्य इत्यथोऽयं ३५ वात्मेत्यादिना विशेषतो दर्शयितुम् । आत्मैवेदमग्र आसीदित्यत्र यदात्मशब्देनोक्तं स्रष्टृ ब्रह्म तदग्निं सृष्ट्वाऽग्निवात्मेत्यादिना विशेषतो... रूपापन्नं ब्राह्मणजात्यभिमानवदस्मिन्नवाक्ये ब्रह्मशब्देनाभिधीयते । वै निश्चितम् । अग्रे क्षत्रादिसर्गात्पूर्वमिदं क्षत्रादिभेदजातं ब्रह्मैवैकमभिन्नमासीन्न क्षत्रादिभेदं तद्ब्राह्मणजात्यभिमान्यग्न्यात्मकं ब्रह्मैकं केवलं परिपालयितृ-

**तस्मात्क्षत्रात्परं नास्ति तस्माद्ब्राह्मणः क्षत्रियमधस्तादुपास्ते राजसूये क्षत्र एव तद्यशो दधाति सैषा क्षत्रस्य योनिर्यद्ब्रह्म तस्माद्यद्यपि राजा परमतां गच्छति ब्रह्मैवान्तत उपनिश्रयति स्वां योनिं य उ एनँ हिनस्ति स्वाँ स योनिमृच्छति स पापीयान्भवति यथा श्रेयाँसँ हिँसित्वा ॥२३॥**

**स नैव व्यभवत् । स विशमसृजत यान्येतानि देवजातानि गणश आख्यायन्ते वसवो रुद्रा आदित्या विश्वेदेवा मरुत इति ॥२४॥** ५

**स नैव व्यभवत् । स शौद्रं वर्णमसृजत पूषणमियं वै पूषेयँ हीदँ सर्वं पुष्यति यदिदं किञ्च ॥२५॥**

क्षत्रादिशून्यं सन्न व्यभवन्न विभूतवत्कर्मणे नालमासीदित्यर्थः। तद्ब्रह्म ब्राह्मणोऽस्मि ममेत्थं कर्त्तव्यमित्यात्मनो ब्राह्मणजातिनिमित्तकर्मकर्तृत्वविभूत्यै श्रेयोरूपं प्रशस्तरूपमत्यसृजत अतिशयेन सृष्टवत्। किं तत्। यत्सृष्टं क्षत्रियजाति तदेव क्षत्रं। व्यक्तिभेदेन प्रदर्शयति—यान्येतानि। प्रसिद्धानि देवत्रा देवेषु क्षत्राणीति जात्याख्यायां पक्षे बहुवचनस्मरणाद्व्यक्तिबहुत्वाद्वा भेदोपचारेण बहुवचनम्। कानि पुनस्तानीत्याह तत्राभिषिक्ता एव विशेषतो निर्दिश्यन्ते—इन्द्र इत्यादिना; इन्द्रो देवानां राजा, वरुणो यादसां, सोमो ब्राह्मणानां, रुद्रः पशूना, पर्जन्यो विद्युदादीनां, यमो धर्मराजः पितृणा, मृत्युर्यमदूतो रोगादीनाम्, ईशान ईश्वरो भासां राजेत्येवमादीनि देवेषु क्षत्राणि तदन्विन्द्रादिक्षत्रदेवताधिष्ठितानि मनुष्यक्षत्राणि सोमसूर्यवंश्यानि पुरुरव.प्रभृतीनि सृष्टान्येव द्रष्टव्यानि। तदर्थं एव हि देवक्षत्रसर्गः प्रस्तुतः। यस्मात् ब्रह्मणाब्राह्मणेभ्योप्यतिशयेन क्षत्रं सृष्टं तस्मात्कारणात्क्षत्रात् परमुत्कृष्टं नास्ति। क्षत्रस्य नियन्तृत्ववदुत्कर्षे हेत्वन्तरमाह—तस्माद्ब्राह्मण इति। यस्मात्क्षत्रं ब्राह्मणजातेरपि नियन्तृ तस्माद्ब्राह्मणः क्षत्रियस्य कारणभूतोऽप्यधस्ताद् व्यवस्थितः सन् राजसूये यज्ञे उपरि स्थितं क्षत्रियमुपास्ते ब्राह्मणस्तदात्मीयं ब्राह्मणाख्यं यशः ख्यातिरूपं क्षत्रे एव दधाति स्थापयति। राजसूयाभिषिक्तेनाऽऽसन्द्यां स्थितेन राज्ञा "ब्रह्मन्नित्येव प्रथममामन्त्रयत" इत्यादिनाऽऽमन्त्रितो ऋत्विक् "त्वं ब्रह्मासी"तीतरः प्रत्याहेति यत्तदेतदभिधीयते क्षत्र एव तद्यशो दधातीति। १० १५ २०

नन्वेवं क्षत्रे स्वकीयं यशः समर्पयतो ब्राह्मणस्यापकृष्टत्वं स्यादित्यत आह—सैषेति। यद्ब्रह्म ब्राह्मणजातिः सैषा क्षत्रस्य योनिरुत्पत्तिकारणम्। अत उत्कृष्ट एव ब्राह्मणः तस्मात् यद्यपि राजा राजसूयाभिषेककाले परमतां राजसूयाभिषेकगुणं परमत्वं गच्छति प्राप्नोति तथाप्यन्ततोऽन्ते कर्मपरिसमाप्तौ ब्रह्मैव ब्राह्मणजातिमेव स्वा योनिं पुरोहितमुपनिश्रयत्याश्रयति। पुर एनं दधातीति पुरोहित इति व्युत्पत्तेः। य उ यः पुनर्बलाभिमानात्प्रमादाद्वैन स्वयोनिभूतं ब्राह्मणं हिनस्ति तिर्यग्भावेन पश्यति स्वामात्मीयामेव योनिमृच्छति स्व प्रसवं विच्छिनत्ति विनाशयति स एतत्कर्म कृत्वा पापीयान्पापतरो भवति। पूर्वमपि क्षत्रिय. क्रूरत्वात्पाप एव आत्मप्रसवहिंसया तु सुतरा पाप इति तरवर्थस्य ईयसुनः प्रयोगः सार्थकः। यथा लोके श्रेयांसं प्रशस्ततरं हिंसित्वा परिभूय पापतरो भवति तद्वदित्यर्थः॥ २३॥ २५

कर्माङ्गभूतद्रव्योपार्जनार्थं वैश्यसृष्टिमाह—स नैवेति। स ब्राह्मणाभिमान्यग्निपुरुष. क्षत्रसर्गात्पूर्वमिव कर्मणे समर्थो नैव व्यभवद्वित्तोपार्जयितुरभावात्। तदर्थं स ब्राह्मणाभिमान्यग्निर्विशमसृजत। कः पुनरसौ विट् यान्येतानि देवजातानि य एते देवजातिभेदा इत्यर्थः। देवजातानीति स्वार्थे निष्ठा। य एते गणशो गण गण कृत्वाऽऽख्यायन्ते कथ्यन्ते। गणप्राया हि विशः। प्रायेण संहता हि वित्तोपार्जने समर्था नैकैकशः वसवोऽष्टसंख्यो गणस्तथैकादश रुद्रा. द्वादशादित्याः, त्रयोदश विश्वेदेवा विश्वाया अपत्यानि सर्वे वा देवा मरुतः सप्त सप्त सङ्ख्याताः सप्तगणा.॥ २४॥ ३०

परिचारकसृष्टिमाह—स इति स नैव व्यभवत्पूर्ववत्परिचारकाभावात्। स शौद्रं वर्णमसृजत। शूद्र एव शौद्र. स्वार्थे वृद्धि.। कः पुनरसौ शौद्रो वर्णो य. सृष्टस्तत्र देवशूद्रमाह—पूषणमिति। पुष्यतीति पूषा त पूषणं, कः पुनरसौ पूषेति। विशेषतस्तं निर्दिशति—इयमिति। इय वै पृथिवी पूषा। कथमित्यपेक्षायां स्वयमेव ३५

**स नैव व्यभवत् । तच्छ्रेयोरूपमत्यसृजत धर्मं तदेतत्क्षत्रस्य क्षत्रं यद्धर्म-स्तस्माद्धर्मात्परं नास्त्यथो अबलीयान्बलीयाँसमाशँसते धर्मेण यथा राज्ञैवं यो वै स धर्मः सत्यं वै तत्तस्मात्सत्यं वदन्तमाहुर्धर्मं वदतीति धर्मं वा वदन्तँसत्यं वदतीत्येतद्ध्येवैतदुभयं भवति ॥२६॥**

**तदेतद्ब्रह्म क्षत्रं विट्शूद्रः । तदग्निनैव देवेषु ब्रह्माभवद्ब्राह्मणो मनुष्येषु क्षत्रियेण क्षत्रियो वैश्येन वैश्यः शूद्रेण शूद्रस्तस्मादग्नावेव देवेषु लोक-मिच्छन्ते ब्राह्मणे मनुष्येष्वेताभ्याँ हि रूपाभ्यां ब्रह्माभवत् ॥२७॥**

निर्वचनमाह—इयं हीति । इयं वै पृथिवी पूषा । कथमित्यपेक्षायां स्वयमेव निर्वचनमाह—इयं हीति । इयं पृथिवी हि खल्विदं सर्वं यदिदं किञ्च यत्किञ्चेदं प्राणिजातं तत्पुष्यति पुष्णातीत्यर्थः ॥ २५ ॥

क्षत्रस्योग्रत्वात्तन्नियन्तृधर्मसर्गमाह—स नैवेति । स चतुरो वर्णान्सृष्ट्वापि नैव व्यभवत् । तत्स्रष्टृ ब्रह्म क्षत्रस्योग्रत्वादनियताशङ्कया श्रेयोरूपं धर्ममत्यसृजतातिशयेन सृष्टवत् । तदेतत्सृष्टं श्रेयोरूप क्षत्रस्य क्षत्रं क्षत्रस्यापि नियन्तृ उग्रादप्युग्रं यद्धर्मो यो धर्मश्चेतनभूतो देवतात्मकस्तस्मात्क्षत्रस्यापि नियन्तृत्वाद्धर्मात्परं नियन्तृभूतं किञ्चिन्नास्ति धर्मेण हि नियम्यन्ते सर्वे ।

तत्कथमित्यत आह—अथो अबलीयानिति । अथो अप्यबलीयान्दुर्बलतरो बलीयासमात्मनो बलवत्तर-मपि धर्मेण बलेन जेतुमाशसते कामयते इच्छतीति यावत् । तदेवोदाहरति—यथा राज्ञैवमिति । यथा लोके राज्ञा सर्वबलवत्तमेनापि स्पर्द्धमानः कुटुम्बिक एवं । तस्माद्धर्मस्य सर्वबलवत्तरत्वात्सिद्ध सर्वनियन्तृत्वम् । धर्मस्यो-त्कृष्टत्वेन नियन्तृत्वे सत्यादभिन्नत्वं हेत्वन्तरमाह—यो वै स धर्म इति । य एव धर्मश्शास्त्रार्थत्वेनानुष्ठीय-मानस्स शास्त्रार्थत्वेन ज्ञायमानस्तत्प्रसिद्धं सत्यमेव । अत्र यथोक्ते विवेके लोकप्रसिद्धिं प्रमाणयति—तस्मात्सत्य-मिति । यस्माद्धर्मसत्ययोरभेदस्तस्माद्व्यवहारकाले सत्यं यथाशास्त्रं वदन्तं पुरुष धर्मं लोकानुष्ठेयत्वेन प्रसिद्ध लौकिकं न्यायं वदन्तीत्याहुर्धर्मसत्यविवेकज्ञाः समीपस्थाः । तथा पूर्वोक्तवदनवैपरीत्येन धर्मं लौकिकं व्यवहार वदन्तं सत्यं वदति शास्त्रादनपेतं वदतीत्याहुः । उक्तमभेदमुपसंहरति—एतद्धीति । हि यस्मादेव तस्मादेतदुभय सत्यधर्माख्य ज्ञायमानमनुष्ठीयमानं च एतद्धर्म एव भवति । तस्मात्स धर्मो ज्ञानानुष्ठानलक्षणः शास्त्रज्ञानिन-मितराश्च सर्वानेव विनियमयति । तस्मात्स क्षत्रस्यापि क्षत्रमित्यर्थः ॥ २६ ॥

ननु पुनरुक्तिर्व्यर्थेत्याशंकायां पूर्वत्र देवेषु दर्शितस्य वर्णविभागस्य मनुष्येषु योजनार्थमुक्तानुवादपूर्वकं देवसर्गमुपसंहरति—तदेतद् ब्रह्मेति । ब्रह्मक्षत्र विट् शूद्र इति तदेतच्चातुर्वर्ण्यं सृष्टम् । सृष्टवर्णचतुष्टयनिविष्ट-मवान्तरविभागमभिधातुमारभते—तदग्निनैवेति । तदग्निरूपापन्नं सृष्टृब्रह्माग्निनैव नान्यदेवान्तरस्वरूपेण क्षत्रादि-विकारप्राप्तिमन्तरेण केवलमग्निरूपेणैव देवेषु ब्रह्म ब्राह्मणजातिरभवत् । तदेवाग्निरूपापन्न स्रष्टृब्रह्म तेनैव रूपेण मनुष्येषु ब्राह्मणो ब्राह्मणजातिरभवदित्यनुषज्यते । इतरेषु वर्णेषु त्वग्निब्राह्मणलक्षणं विकारान्तर प्राप्य स्रष्टृब्रह्माभवदिति दर्शयति—क्षत्रियेण क्षत्रिय इत्यादिना । क्षत्रियेणेन्द्रादिदेवक्षत्रियेण नियन्त्रितोऽनुगृहीतश्च क्षत्रियो मनुष्यः क्षत्रियः । सोमसूर्यवंश्यः पुरूरवइक्ष्वाकुप्रभृतिको देवमानुषब्राह्मणरूपेण विकृतात्स्रष्टृब्रह्मणः सका-शादभवत् । तथा वैश्येन वस्वादिदेववैश्येनाधिष्ठितो वैश्यो मनुष्यवैश्योऽभवत् । शूद्रेण देवशूद्रेण पूष्णाऽधिष्ठित-शूद्रो मनुष्यशूद्रोऽभवदित्यर्थः । यस्मात्क्षत्रादिषु विकारापन्नं स्रष्टृ ब्रह्म अग्नौ ब्राह्मणे एव चाविकृत तस्माद्देवेषु देवानां मध्येऽग्नावेवाग्निसम्बद्धकर्मकृत्वैव लोकं कर्मफलमिच्छन्ते प्रार्थयन्ते । कर्मफलदानार्थमेव हि तद्ब्रह्मकर्माधि-करणत्वेनाग्निरूपेण व्यवस्थितम् ।

तस्मात्तस्मिन्नग्नौ कर्म कृत्वा तत्फलं प्रार्थयन्त इत्युपपन्नम् । मनुष्येषु मनुष्याणा मध्ये कर्मपि ब्राह्मणे ब्राह्मणजातौ ब्राह्मण्यप्रयुक्त-मनुष्यमवलम्ब्य कर्मफलभोगापेक्षायामग्न्यादिनिमित्तक्रियापेक्षामन्तरेणापि जप्यादिकर्ममात्रेण लोकमिच्छन्ते इति सम्बध्यते । कथमग्निब्राह्मणयोरेव कर्मफलमिच्छन्तीत्यत्र हेतुमाह—एताभ्यां हीति । हि यस्मात्तत्स्रष्टृब्रह्म तदेताभ्यामग्निब्राह्मणलक्षणाभ्यां साक्षाद्रूपवदभवत् ॥ २७ ॥

**अथ यो ह् वा अस्माल्लोकात्स्वं लोकमदृष्ट्वा प्रैति स एनमविदितो न भुनक्ति यथा वेदो वाऽननूक्तोऽन्यद्वा कर्माकृतं यदि ह् वा अप्यनेवंविन्महत्पुण्यं कर्म करोति तद्धास्यान्ततः क्षीयत एवात्मानमेव लोकमुपासीत स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयतेऽस्माद्ध्येवात्मनो यद्यत्कामयते तत्तत्सृजते ।।२८।।**

**अथो अयं वा आत्मा । सर्वेषां भूतानां लोकः स यज्जुहोति यद्यजते तेन देवानां लोकोऽथ यदनुब्रूते तेन ऋषीणामथ यत्प्रजामिच्छते यत्पितृभ्यो निपृणाति तेन पितृणामथ यन्मनुष्यान्वासयते यदेभ्योऽशनं ददाति तेन मनुष्याणामथ यत्पशुभ्यस्तृणोदकं विन्दति तेन पशूनां यदस्य गृहेषु श्वापदा वयाँ्स्या-पिपीलिकाभ्य उपजीवन्ति तेन तेषां लोको यथा ह वै स्वाय लोकायारिष्टि-मिच्छेदेवँ् हैवंविदे सर्वदा सर्वाणि भूतान्यरिष्टिमिच्छन्ति तद्वा एतद्विदितं मीमाँ्सितम् ।।२९।।**

केचिदग्न्यादिसाध्यकर्मणा मोक्षमिच्छन्ति तान्प्रत्याह—अथ यो ह् वा इति। अथ शब्दः पूर्वपक्ष-व्यावृत्यर्थः। यो ह् वं य. कश्चित्स्व लोकं परमात्माख्यमहं ब्रह्मास्मीत्यदृष्ट्वाऽविदित्वाऽस्माल्लोकात्सांसारिकात्पिण्ड-ग्रहणलक्षणात्प्रैति म्रियते तमेन स स्वो लोक परमात्माऽविदितोऽविद्यया व्यवहितः सन् शोकमोहभयादिदोषापन-यनेन न भुनक्ति। अन्यद्वा कृष्यादिकर्माकृतं स्वात्मनाऽनभिव्यञ्जितमात्मीयफलप्रदानेन न भुनक्ति न पालयति। अत्र दृष्टान्तमाह्—यथा वेद इति। यथा लोके वेदोऽननूकोऽनधीतः कर्माद्यवबोधकत्वेन न भुनक्ति तद्वदात्मा स्वो लोकः स्वेनैकान्त्यात्मस्वरूपेणानभिव्यञ्जितोऽविद्यादिप्रहाणेन न भुनक्त्येव। तथाप्यश्वमेधादेर्महतः कर्मणोऽनुष्ठानान्मोक्षो भविष्यतीत्यत आह्—यदि ह् वा अपीति। उ पुनः ह् किल वै निश्चितं संसारमण्डले यः कश्चितमहात्माऽप्यनेवं-विद्यथोक्तेन विधिना स्व लोकमविद्वान्सन्महद्वहु अश्वमेधादि पुण्यं कर्मं इष्टफलमेव नैरन्तर्येण करोति। अनेनैवाऽऽ-नन्त्यं मम भविष्यतीति तत्कर्मास्याऽविदुषो ह् निश्चितमन्ततः फलभोगस्यावसाने क्षीयत एव कृतकत्वात्स्वप्न-विभूतिवत्। तस्मादात्मानमेवलोक प्रत्यग्ब्रह्मैकत्वलक्षणमुपासीताशेषानात्मदृष्टिपरिहारेण निरन्तरमनुसन्धीत। तत्फलमाह्—स य आत्मानमेवेति। स यः कश्चिदुक्तरीत्याऽऽत्मानमेव लोकमुपास्ते। अस्योपासकस्य ह् निश्चितं कर्म न क्षीयते कर्माभावादेव। किञ्च स आत्मोपासको यद्यदिष्टं कामयते तत्तदस्माद्ध्येवात्मनः सकाशात्सृजते न साधनान्तरमपेक्षत इत्यर्थः॥ २८॥

अत्राविद्वान् वर्णाश्रमाद्यभिमानो धर्मेण नियम्यमानो देवादिकर्मकर्तव्यतया पशुवत्परतन्त्र इत्युक्तम्। कानि पुनस्तानि कर्माणि यत्कर्त्तव्यतया परतन्त्रो भवति? के वा ते देवादयो येषा कर्मभिः पशुवदुपकरोतीति। तदुभय प्रपञ्चयति—अथो अयं वा आत्मेति। अथो इत्यय वाक्योपन्यासार्थः अय यः प्रकृतो गृही कर्माधि-कृतोऽविद्वान् शरीरेन्द्रियसघातविशिष्टः पिण्ड आत्मेत्युच्यते। अयं वै सर्वेषा देवादीना पिपीलिकान्ताना भूताना प्राणिना लोको भोग्य आत्मेत्यर्थ। सर्वेषा वर्णाश्रमादिविहितैः कर्मभिरुपकारित्वात्। कै. पुन. कर्मविशेपरुपकुर्वन् केषा भूतविशेषाणा लोक इत्याह्—स यज्जुहोतीति। स गृही यज्जुहोति यजते यागो देवतामुद्दिश्य द्रव्यपरित्यागः स एवासेचनाधिको होमः। तेन होमयागलक्षणेन कर्मणाऽवश्यकर्त्तव्यत्वेन प्रतिवद्धः सन्पशुवत्परतन्त्रो देवानामिन्द्रादीना लोको भोग्यः। अथापि यदनुब्रूते स्वाध्यायमधीतेऽहरहस्तेनर्षीणां लोक.। लोक इति प्रत्येक सम्वध्यते। अथ यत्प्रजामिच्छते प्रजार्थमुद्यमं करोति। इच्छा चोत्पत्त्युपलक्षणार्था प्रजा-मुत्पादयतीत्यर्थ.। यत्पितृभ्यो निपृणाति पिण्डोदकादिकं प्रयच्छति। तेनोभयविधकर्मणाऽवश्यकर्त्तव्यत्वेन पितृणा भोज्यत्वेन परतन्त्रः। अथ यन्मनुष्यान् गृहे भूम्युदकादिदानेन वासयते, यच्च एभ्यो वसद्भ्योऽर्थिभ्यो वाऽशन भोजनं ददाति। तेनोभयविधकर्मणा मनुष्याणाम्। अथ यत्पशुभ्यः तृणोदकं विन्दति लम्भयति तेन पशूनाम्। यदस्य कर्मिणो गृहेषु आपिपीलिकाभ्यः पिपीलिकाभि. सह श्वापदा मार्जारादयः वयांसि पक्षिणः स्वकणवलिभाण्ड-प्रक्षालनादिकमुपजीवन्ति तेन तेषां लोक उपभोग्यः। एवमुपकारिणं देवादयोऽप्युपकुर्वन्तीत्याह्—यथा ह वा इति। यथा ह् वै लोके स्वाय लोकाय स्वस्मै देहायारिष्टिमविनाशमिच्छेत्पोषणरक्षणादिभि. सर्वतः परिपालयेदेवं ह्

**आत्मैवेदमग्र आसीत् । एक एव सोऽकामयत जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यादथ कर्म कुर्वीयेत्येतावान्वै कामो नेच्छँश्चनातो भूयो विन्दे-त्तस्मादप्येतर्ह्येकाकी कामयते जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यादथ कर्म कुर्वीयेति स यावदप्येतेषामेकैकं न प्राप्नोत्यकृत्स्न एव तावन्मन्यते तस्यो कृत्स्नता ॥३०॥**

**मन एवास्यात्मा । वाग्जाया प्राणः प्रजा चक्षुर्मानुषं वित्तं चक्षुषा हि तद्विन्दति श्रोत्रं दैवँ श्रोत्रेण हि तच्छृणोत्यात्मैवास्य**

एवमेवैवविदे सर्वभूतभोग्योऽहमनेन प्रकारेण मयाऽवश्यमृणिवत्प्रतिकर्त्तव्यमित्येवमात्मानं परिकल्पितवते सर्वाणि भूतानि देवादीनि यथोक्तान्यरिष्टिमविनाशमिच्छन्ति । सर्वत. संरक्षन्ति कुटुम्बिनः पशूनिव । ननु तथापि नास्य होमादेः स्वस्य कर्त्तव्यत्वमित्यत आह—**तद्वा एतदिति** । तद्वै एतत्तदेतदेव यथोक्ताना कर्मणामृणवदवश्यकर्त्तव्यत्व भूतयज्ञो मनुष्ययज्ञः पितृयज्ञो देवयज्ञो ब्रह्मयज्ञ इति पञ्चमहायज्ञप्रकरणे विदितं विज्ञातम् । ननु श्रुतमप्यविचारित नानुष्ठेयमित्यत आह—**मीमांसितमिति** । "ऋण ह वै जायते योऽस्ति स जायमान एव देवेभ्य ऋषिभ्यः पितृभ्यो मनुष्येभ्य" इत्यादिनाऽर्थवादेन एतदवश्यकर्त्तव्यत्वमवदानप्रकरणे विचारितमित्यर्थः ॥ २९ ॥

ननु येन प्रयुक्तो मनुष्यो ग्रहग्रस्त इवावशः स्वात्मलोकबहिर्मुखीभूतो दुःखात्मके कर्मण्येव प्रवर्तत इति स कः प्रवर्तक इत्यपेक्षाया काम एवेति निर्णयार्थमाह—**आत्मैवेदमग्र आसीदिति** । अत्रात्मशब्देन स्वाभाविक्याऽविद्यया युक्तः कार्यकरणसघातलक्षणो ब्रह्मचार्यभिधीयते । तथा चाग्रे दारसम्बन्धात्प्रागिदं प्रसिद्ध जायादिभेदरूपं ब्रह्मचार्यात्मा एक एवासीत् नासीत्पृथग्भूतम् । स ब्रह्मचार्यात्मा स्वाभाविक्याऽविद्यावासनया वासितोऽकामयत कामितवान् । कथमित्यत आह—**जाया मे स्यादिति** । जाया कर्माधिकारहेतुभूता मे मम कर्त्तु. स्यात्तया विनाऽहमनधिकृत एव कर्मणि । अतः कर्माधिकारसंपत्तये जाया भवेत् । अथ पुत्रसाधन-भूतजायासम्पत्त्यनन्तर प्रजायेय प्रजारूपेणाऽहमेवोत्पद्येय । अथ कर्मानुष्ठानसाधनभूत गवादिलक्षणं वित्तं मे मम स्यात् । अथ पुत्रगवादिलक्षणमानुषवित्तसपत्त्यनन्तरं नित्यनैमित्तिककाम्याख्य विविधमपि कर्माहं कुर्वीय । एतावान् वै प्रसिद्धजायापुत्रवित्तकर्माण्येव हि काम. कामयितव्यो विषयः । यद्यपि फलैषणाप्यस्ति तथापीय साधनैषणैव मनुष्यलोक-पितृलोक-देवलोकरूपफलविषयापि भवति साधनेऽपि कामानामानन्त्यात्कथमवधारण-मित्यत आह—**नेच्छंश्चेति** । यस्मादिच्छंश्चनेच्छन्नप्यतो फलतत्साधनलक्षणाद्भूयोऽधिकतर न विन्देन्न लभेत । अतोऽवधारणं युक्तम् । तथा चैवमविदुष एषणापरपर्यायः काम एव कर्ममार्गप्रवृत्तिहेतुरिति निश्चिते आधुनिकी-मपि कामपूर्वकप्रवृत्ति प्रमाणयति—**तस्मादप्येतर्हीति** । यस्मादेवमविदुषः प्रजापतेश्च स वै नैव रेमे स द्वितीय-मैच्छदित्यादिना स्त्र्यादिविषयेच्छाऽऽसीत्तस्मादप्येतर्ह्येतस्मिन्नपि काले स्वाभाविक्याऽविद्यया युक्त. प्राग्दारक्रियात एकाकी सन्कामयते जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यादथ कर्मकुर्वीयेत्युक्तार्थं वाक्यम् । स एव कामयमान. संपादयंश्च जायादीन् यावदेतेषा यथोक्ताना जायादीना मध्य एकैकमपि न प्राप्नोति तावदकृत्स्नोऽसपूर्णोऽह-मित्येवमात्मानं मन्यते । पारिशेष्यात्समस्तानेवैतान्यदा सम्पादयति तदा तस्य कृत्स्नता यदा तु कृत्स्नता सम्पादयितुं न शक्नोति तदा तस्य कृत्स्नत्वसम्पादनोपायमाह—**तस्यो कृत्स्नतेति** । उ पुनस्तस्याऽकृत्स्नत्वाभि-मानिनः कृत्स्नतैवं भवति ॥ ३० ॥

कथ ? अयं कार्यकरणजातमिति मनसः प्रधानत्वादात्मेवात्मा यथा कुटुम्बपतिर्जायादीनामात्मैव जायादि-चतुष्टयस्य तदनुकारित्वादेवमिहापि मन आत्मा परिकल्प्यते कृत्स्नतायै । तथा वाक् जाया वाचो मनोऽनुवृत्तित्व-सामान्यात् । वागिति चोदनालक्षणशब्दव्यापारवती मनसा श्रोत्रद्वारेण गृह्यतेऽवधार्यते प्रयुज्यते वेति मनसो जायेव वाक् प्राण प्रजेति वाङ्मनसाभ्या जायापतिस्थानीयाभ्या प्रसूयते । प्राणः कर्मार्थमिति प्राणः प्रजेव चक्षुर्दर्शनक्रियावन्मानुष मनुष्यसम्बन्धि वित्तं कुतः ? हि यस्माच्चक्षुषा तत्प्रकृतं गवादिलक्षणं ते मानुषं वित्तं विन्दति लभते श्रोत्रं श्रवणक्रियावद्दैवं देवसम्बन्धिवित्तम् । कुतः ? हि यस्मात्तद्दैव वित्तं देवतादिविषयविज्ञानलक्षणं श्रोत्रेण शृणोति विज्ञानस्य श्रोत्राधीनत्वाच्छ्रोत्रमेव तदिति ।

**कर्मात्मना हि कर्म करोति स एष पाङ्क्तो यज्ञः पाङ्क्तः पशुः पाङ्क्तः पुरुषः पाङ्क्तमिँ्सर्वं यदिदं किञ्च तदिदँ्सर्वमाप्नोति यदिदङ्किञ्च य एवं वेद ॥३१॥**

इति बृहदारण्यकोपनिषदि प्रथमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

अथ प्रथमाध्याये तृतीयं ब्राह्मणम्

**यत्सप्तान्नानि मेधया तपसाऽजनयत्पिता । एकमस्य साधारणं द्वे देवानभाजयत् ।　५
त्रीण्यात्मनेऽकुरुत पशुभ्य एकं प्रायच्छत् । तस्मिन्सर्वं प्रतिष्ठितं यच्च प्राणिति यच्च न । कस्मात्तानि न क्षीयन्तेऽद्यमानानि सर्वदा । यो वै तामक्षितिं वेद सोऽन्नमत्ति प्रतीकेन । स देवानपिगच्छति स ऊर्जमुपजीवतीति श्लोकाः ॥ १ ॥**

एवं साधनं सम्पादितवतोऽस्योक्तकृत्स्नत्वाभिमानिन आत्मैव शरीरमेवऽऽत्मादिवित्तान्तैर्निर्वर्त्यं कर्म। हि यस्मादात्मना शरीरेण कर्म करोति। एवं कृत्स्नता सम्पन्नाः तस्मात् स एष पाङ्क्तः पञ्चभिर्नि-　१० र्वृत्तो दर्शनात्मको यज्ञः। कथं पुनरस्य पञ्चत्वसम्पत्तिमात्रेणैव यज्ञत्वमित्याशङ्कायां बाह्ययज्ञस्यापि पाङ्क्त-माह—पाङ्क्तः पशुरिति। पशु पशुसाध्यो यज्ञः पाङ्क्तः पुरुषः पुरुषसाध्यो यज्ञः पाङ्क्त एव पशुर्गवादि। पशुत्वेऽप्यधिकृतत्वेन विशेष पुरुषस्येति पृथक् पुरुषग्रहणम्। यथोक्तमनआदिपञ्चत्वयोगादुभावपि पाङ्क्तौ। किं बहुना पञ्चभूतात्मकं हैरण्यगर्भं जगदपि पाङ्क्तमेवेत्याह—पाङ्क्तमिदं सर्वमिति। इदं सर्व कर्मसाधनफलात्मकं यदिदं किञ्च यत्किञ्चिदस्ति तत्सर्वं पाङ्क्तमेव एतत्सम्पादनफलमाह—तदिदं सर्वमिति। य एवमुक्त-　१५ प्रकारेण पाङ्क्तं यज्ञमात्मानं वेद सम्पादयति स तदिदं सर्वं जगदात्मत्वेनाप्नोति सर्वकर्मफलं प्राप्नोतीति यावत् ॥ ३१ ॥

इति श्रीविद्यारण्यमुनिविरचितमाध्यन्दिनशाखीयबृहदारण्यकोपनिषद्दीपिकाया
प्रथमाध्याये द्वितीय ब्राह्मणम् ॥ २ ॥

एव कामप्रयुक्तेन गृहस्थेनाऽन्येन वा पाङ्क्तज्ञानकर्मभ्यां वा केवलज्ञानेन वाऽद्यमानत्वेन सृष्टस्यान्न-भूतस्य जगत उपासनार्थं विभागेन सप्तधा निरूपयितुं च सप्तान्नब्राह्मणं प्रवर्तते। तत्र संक्षेपतः सविनियोगान्न-　२० प्रकाशकान् सूत्रभूतान् मन्त्रानुदाहरति—यत्सप्तान्नानीति। पिता क्षेत्रज्ञो ज्ञानकर्माधिकारी मेधया प्रज्ञया पाङ्क्तोपासनया तपसा जायादिसाधनपाङ्क्तकर्मणा सप्तान्नानि यत्प्रसिद्धमजनयत्। यदिति पदमजनयदिति क्रियाया विशेषणम्। अत्र ज्ञानकर्मणी एव हि मेधातप.शब्दवाच्ये तयो. प्रकृतत्वात्। तन्मध्ये यत् क्षुच्छान्तिकरं सर्वैरद्यते तदेकमन्नमस्य सर्वस्याऽत्तृवर्गस्य साधारणं, द्वे अन्ने वक्ष्यमाणे हुतप्रहुताख्ये, हविः प्रक्षेपबलिहरण-लक्षणे। दर्शपूर्णमासाख्ये वा देवानभाजयत् देवस्रातकृतवान्। त्रीणि मनोवाक्प्राणलक्षणान्यन्नान्यात्मने　२५ स्वार्थमेवाकुरुत। एक पयोघृतरूपमन्नं पशुभ्यश्चतुष्पाद्द्विपादात्मकेभ्यः प्रायच्छत् दत्तवान्। पयसोऽन्नत्वे हेतु-माह—तस्मिन्सर्वमिति। यच्च प्राणिति प्राणनचेष्टा करोति। यच्च न प्राणनचेष्टां करोति तत्सर्वं तस्मिन् पयसि प्रतिष्ठितम्। अग्निहोत्राद्या हूयमानस्य पयसः सर्वजगत्कारणत्वात्। तानि सर्वैः सर्वदाऽद्यमानान्यन्नानि कस्मान्न क्षीयन्त इति प्रश्नरूपो मन्त्र.। तत्र पुरुषेण अनवरतमुत्पाद्यमानत्वादन्नक्षयो न भवतीत्युत्तरमभि-प्रेत्यान्नाक्षयहेतुत्वेन पुरुषस्याक्षितित्वगुणविज्ञाने फलमाह—यो वै तामिति। यो वै निश्चितमेतामक्षितिमन्ना-　३० क्षयकारणं वेद स प्रतीकेन मुखेन मुख्यया वृत्त्याऽन्नमत्ति। स विज्ञाता देवानपिगच्छति देवत्वं प्राप्नोति स ऊर्जममृत चोपजीवति। अमृतभाक्त्वा भवतीति श्लोका मन्त्रा उक्तार्था इत्यर्थ.॥ १ ॥

**यत्सप्तान्नानि मेधया तपसाऽजनयत्पितेति । मेधया हि तपसाऽजनयत्पिता एकमस्य साधारणमितीदमेवास्य तत्साधारणमन्नं यदिदमद्यते स य एतदुपास्ते न स पाप्मनो व्यावर्तते मिश्रं ह्येतत् ॥ २ ॥**

**द्वे देवानभाजयदिति । हुतं च प्रहुतं च तस्माद्देवेभ्यो जुह्वति च प्र च जुह्वत्यथो आहुर्दर्शपूर्णमासाविति तस्मान्नेष्टियाजुकः स्यात् ॥ ३ ॥**

**पशुभ्य एकं प्रायच्छदिति । तत्पयः पयो ह्येवाग्रे मनुष्याश्च पशवश्चोपजीवन्ति तस्मात्कुमारं जातं घृतं वैवाग्रे प्रतिलेहयन्ति स्तनं वाऽनुधापयन्ति ॥ ४ ॥**

एतेषां मन्त्राणां तिरोहितार्थत्वेन प्रतीकग्रहणपूर्वकं तदर्थव्याख्यानाय ब्राह्मणं प्रवर्तते—**यत्सप्तान्नानि मेधया तपसाऽजनयदिति** । तत्र भागो मेधया तपसा च पिता पूर्वोक्तोऽजनयदिति । हि प्रसिद्धावद्योतकेन हिशब्देन व्याख्यातः । प्रसिद्धं ह्युक्तार्थयोर्मेधातपसोर्जगत्कारणत्वमुक्तसप्तान्नविनियोजकं मन्त्रभागं प्रतीकपूर्वकं व्याचष्टे । एकमस्य साधारणमिति मन्त्रेऽस्य भोक्तृसमुदायस्य तत्साधारणमन्नमिदमेव किं ? यदिदं सर्वैः प्राणिभिरहन्यहन्यद्यते भुज्यते । एतस्य सर्वसाधारणस्यान्नस्याऽसाधारणीकुर्वतो दोषं दर्शयति—**स य एतदिति** । स य कश्चिदेतत्साधारणं सर्वप्राणभृत्स्थितिकर भुज्यमानमन्नमुपास्ते तत्परो भवतीत्यर्थः । उपासनं हि नाम तत्परत्वं दृष्टं लोके गुरुमुपास्ते राजानमुपास्त इत्यादौ । तस्मात्स्वशरीरस्थित्यर्थान्नोपयोगप्रधानो नादृष्टार्थकर्मप्रधान इत्यर्थः । स एवंभूतः पाप्मनोऽधर्मान्न व्यावर्तते न विमुच्यते । तथा च स्मृतिः—

> "नात्मार्थं पाचयेदन्नं न वृथा घातयेत्पशून् ।
> न चैकः स्वयमश्नीयाद्विधिवर्जं न निर्वपेत् ॥ इति ।
>
> इष्टान्भोगान्हि वो देवा दास्यन्ते यज्ञभाविताः ।
> तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः ॥ इति ।
>
> अदत्त्वा तु य एतेभ्यः पूर्वं भुङ्क्तेऽविचक्षणः ।
> स भुञ्जानो न जानाति श्वगृध्रैर्जग्धिमात्मनः ॥ इत्यादि ।

कुतः पुनः पाप्मनो न व्यावर्तत इत्याह—**मिश्रं ह्येति** । हि यस्मादेतदन्नं मिश्रं सर्वप्राणिसाधारणम् ॥ २ ॥

द्वे देवानभाजयदिति मन्त्रपदं ये द्वे अन्ने सृष्ट्वा पिता देवानभाजयत् के ते द्वे इत्याह **हुतं च** । हुतमित्यग्नौ हवनं प्रहुतं च हुत्वा बलिहरणम् । यस्माद्द्वे एते अन्ने हुतप्रहुते पिता देवानभाजयत्तस्मादेतर्ह्यपि काले गृहिणः देवेभ्यो जुह्वति देवेभ्य इदमन्नमस्माभिर्दीयमानमिति मन्वाना जुह्वति प्रजुह्वति च हुत्वा बलिहरणं च कुर्वत इत्यर्थः । एतस्य पूर्णयज्ञत्वं सूचयितुं पक्षान्तरमाह—**अथो (अपि अन्ये) आहुः** । यद्वाऽन्ये पित्रा देवेभ्यः प्रत्तेन ते हुतप्रहुते किं तर्हि दर्शपूर्णमासौ । श्रौतयोरेव दर्शपूर्णमासयोर्देवान्नत्व प्रसिद्धतरम् । यस्माद्द्वे देवानभाजयदिति देवार्थमेते दर्शपूर्णमासाख्येऽन्ने पित्रा प्रक्लृप्ते । तस्मात्तयोर्देवार्थत्वाविघाताय इष्टियाजुक इष्टियजनशीलो न स्यात् न भवेत् । इष्टिशब्देन किल काम्या इष्टयः ताच्छील्ये विहितस्योकञ्प्रत्ययस्यात्र प्रयोगात् काम्येष्टियजनप्रधानो न स्यादित्यर्थः ॥ ३ ॥

पश्वन्नविषयं मन्त्रपदमादाय तदर्थं कथयति—**पशुभ्य इति** । पशुभ्यो द्विपाच्चतुष्पाद्भ्यो यदेकमन्नं पिता प्रायच्छदिति मन्त्र उक्तं तदन्नं पयः कुतः एतदवगम्यत इत्यत्राह—**पयो ह्येति** । हि यस्मादग्रे प्रथमं मनुष्याः पशवश्च पय एवोपजीवन्ति यस्मात्तेनैवान्नेन वर्तन्ते । यथाऽऽदौ पित्रा विनियोगः कृतस्तस्मादिदानीतना अपि लेहयन्ति प्राशयन्ति स्तनं वा स्तनं चानुधापयन्ति पश्चात् पाययन्ति । अत्रैवर्णिकाना तु यथासम्भवं स्तनमेवाग्रे धापयन्तीति बोधव्यम् ॥ ४ ॥

**अथ वत्सं जातमाहुः । अतृणाद इति तस्मिन्सर्वं प्रतिष्ठितं यच्च प्राणिति यच्च नेति पयसि हीदँ सर्वं प्रतिष्ठितं यच्च प्राणिति यच्च न ॥ ५ ॥**

**तद्यदिदमाहुः । संवत्सरं पयसा जुह्वदप पुनर्मृत्युं जयतीति न तथा विद्याद्यदहरेव जुहोति तदहः पुनर्मृत्युमपजयत्येवं विद्वान्सर्वँ हि देवेभ्योऽन्नाद्यं प्रयच्छति कस्मात्तानि न क्षीयन्तेऽद्यमानानि सर्वदेति ॥ ६ ॥**

**पुरुषो वा अक्षितिः । स हीदमन्नं पुनः पुनर्जनयते यो वैतामक्षितिं वेदेति पुरुषो वा अक्षितिः स हीदमन्नं धिया धिया जनयते कर्मभिर्यद्धैतन्न कुर्यात्क्षीयेत ह सोऽन्नमत्ति प्रतीकेनेति मुखं प्रतीकं मुखेनेत्येतत्स देवानपिगच्छति स ऊर्जमुपजीवतीति प्रशँसा ॥ ७ ॥**

पशूनां पयोऽन्नमित्यत्र लोकप्रसिद्धिं प्रमाणयति—अथ वत्सं जातमिति । द्विपात्पश्वधिकारविच्छेदार्थोऽथशब्दः । जातं वत्समाहु. कियत्प्रमाणो वत्स इत्येवं पृष्टाः सन्तोऽतृणाद इत्याहुः तृणमत्तीति तृणादो न तृणादोऽतृणादः । नाद्यापि तृणमत्ति अतीव बाल' पयसैवाद्यापि वर्तत इत्यर्थः । यच्चाग्रे जातकर्मादौ घृतमुपजीवन्ति यच्चेतरे पय एव तत्सर्वमपि पय एव घृतस्यापि पयोविकारत्वात् । कस्मात्पुनः सप्तमं सत्पशुअन्नं चतुर्थत्वेन व्याख्यायते । अग्निहोत्रादि कर्म हि पय. साधनाश्रयमिति पयसः साधनत्वाविशेषात्पश्वन्नं चतुर्थत्वेन व्याख्यातम् । तस्मिन्सर्वं प्रतिष्ठितं यच्च प्राणिति यच्च नेति मन्त्रभागः । तस्मिन्पश्वन्ने पयसि सर्वमध्यात्माऽधिभूताऽधिदैवलक्षणं कृत्स्नं जगत्प्रतिष्ठितं यच्च प्राणिति प्राणनचेष्टावन्मनुष्यपश्वादि यच्च न यच्च न प्राणिति स्थावरं शैलादि । तत्र हिशब्देनैव प्रसिद्धावद्योतकेन व्याख्यातम् । अग्निहोत्राहुतिविपरिणामात्मकं च जगत्कृत्स्नमिति "ते वा एते आहुती हुते उत्क्रामतस्ते अन्तरिक्षमाविशत" इत्यादयः श्रुतिवादाः क्रमेणाग्निहोत्राहुत्योर्गर्भाकारप्राप्तिं दर्शयन्ति अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं तत. प्रजाः ॥ इत्यादयः स्मृतिवादाश्चेति पयसः सर्वजगदाधारत्वं श्रुतिस्मृतिप्रसिद्धम् ॥ ५ ॥

सर्वं पयसि प्रतिष्ठितमिति विधित्सितदर्शनस्तुतये मतान्तरं निन्दितुमुद्भावयति—तद्यदिदमिति । संवत्सरं वर्षपर्यन्तं पयसा जुह्वदग्निहोत्रं कुर्वन्पुनर्मृत्युम पजयति । पुनर्मरणाय न जायत इति यदिदं ब्राह्मणवादा आहुस्तन्न तथा विद्यात् तन्न तथा द्रष्टव्यं संवत्सरेण किल त्रीणि षष्टिशतान्याहुतीनां सप्तशतानि विंशतिश्चेति याजुष्मतीरिष्टका अभिसंपद्यमानाः संवत्सरस्य चाहोरात्राणि सवत्सरमग्निं प्रजापतिमाप्नुवन्ति एवं कृत्वा संवत्सरं जुह्वदपजयति पुनर्मृत्युमितः प्रेत्य देवेषु संभूत. पुनर्न म्रियत इत्यर्थः । तर्हि कथं विद्यादित्यत आह—यदहरेवेति । यदुक्तं पयसि हीदं सर्वं प्रतिष्ठितं पय आहुतिविपरिणामात्मकत्वात्सर्वस्य जगत इति । एवं विद्वान् सन् यदहरेव यस्मिन्नेव दिवसे जुहोत्याहुतिप्रक्षेपं करोति तदहस्तस्मिन्नेव दिवसे पुनर्मृत्यु पुनर्मरणमपजयति । सकृन्मृत्वा शरीरेण वियुज्यमानः पुनर्मरणाय परिच्छिन्नं शरीरं गृह्णातीत्यर्थः । न संवत्सराभ्यासमपेक्षते । एव विद्वानेकेनैवाह्ना जगदात्मत्वं प्रतिपद्यत इति भावः । तत्र हेतुमाह—सर्वंहीति । हि यस्मात्सर्वं समस्तं देवेभ्यः सर्वेभ्योऽन्नाद्यमन्नं च तदाद्यं चान्नाद्यं सायं प्रातराहुतिप्रक्षेपेण प्रयच्छति ददाति । तस्माद्युक्तं सर्वमाहुतिमयमात्मानं कृत्वा सर्वदेवान्नरूपेण सर्वदेवैरेकात्मभावं गत्वा सर्वदेवमयो भूत्वा पुनर्न म्रियत इति भावः । "कस्मात्तानि न क्षीयन्तेऽद्यमानानि सर्वदे"ति मन्त्रेण यदा पित्राऽन्नानि सृष्ट्वा सदा पृथक् पृथक् भोक्तृभ्यः प्रत्तानि तदा प्रभृत्येव तैर्भोक्तृभिः सर्वदा नैरन्तर्येणाद्यमानानि कस्मात्पुनर्न क्षीयन्त इति प्रश्ने कृते ब्राह्मणमुत्तरमाह— ॥ ६ ॥

पुरुषो वा इति । पुरुषो वै योऽन्नाना भोक्ता स एवाक्षितिरन्नाक्षयहेतुः । ननु प्रत्युत क्षयहेतु' भोक्ता कथमस्याक्षये हेतुत्वमित्यत आह—स हीदमिति । हि यस्मात्स पुरुषो भोक्तापि इदं भुज्यमानं सप्तविध कार्यकारणलक्षणं क्रियाफलात्मकमन्नं पुनः पुनर्भूयो भूयो जनयते उत्पादयति । यथा पूर्वं पिता मेधया प्रज्ञया जायादिसम्बन्धेन च पाङ्क्तकर्मणाऽन्नानां स्रष्टा भोक्ता चासीत्तथा येभ्यो दत्तान्यन्नानि तेऽपि तेषामन्नानां भोक्तारोऽपि सत. पितर एव मेधया तपसा च तान्यन्नानि यतो जनयन्ति । तस्मात्पितुरिव पुरुषस्य जनकत्वमन्नवाद्भवत्येव पुरुषो-

त्रीण्यात्मनेऽकुरुतेति । मनो वाचं प्राणं तान्यात्मनेऽकुरुतान्यत्रमना अभूवं नादर्शमन्यत्रमना अभूवं नाश्रौषमिति मनसा ह्येव पश्यति मनसा शृणोति ॥ ८ ॥

कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव तस्मादपि पृष्ठत उपस्पृष्टो मनसा विजानाति ॥ ९ ॥

५ यः कश्च शब्दो वागेव सा । एषा ह्यन्तमायत्तैषा हि न प्राणोऽपानो व्यान उदानः समानोऽन इत्येतत्सर्वं प्राण एवैतन्मयो वा अयमात्मा वाङ्मयो मनोमयः प्राणमयः ॥१०॥

क्षयहेतुः । "यो वै तामक्षितिं वेदे"ति मन्त्रभागे पुरुषो वै भोक्तैव अक्षितिरक्षयहेतुरुच्यते । हि यस्मात्स पुरुषो भोक्तापीदमन्नं सप्तविधं धिया धिया तत्तत्कालभाविन्या तया तया प्रज्ञया कर्मभिश्च वाङ्मनःकायचेष्टितैर्जनयते । उक्तमेव हेतुं व्यतिरेकद्वारोपपादयति—यद्धैतदिति । यद्यदि यदेतत्सप्तविधमन्नमुक्तं तत्प्रज्ञया कर्मभिश्च क्षणमात्र-
१० मपि न कुर्यान्न सम्पादयेत् । तर्हि सातत्येन भुज्यमानत्वा क्षीयेत ह विच्छिद्येत किल यस्माद्यथैवायं पुरुषो नैरन्तर्येणान्नानां भोक्ता यथाप्रज्ञं यथाकर्म्म चान्नं करोत्यपि ततः सातत्येन कर्तृत्वात् पुरुषोऽक्षितिस्तस्माद्भुज्यमानान्यन्नानि न क्षीयन्त इति भावः । सोऽन्नमत्ति प्रतीकेनेति मन्त्रे प्रतीकं मुखं मुख्यत्वं प्राधान्यमिति प्राधान्येनैवाऽन्नानां पितुः पुरुषस्याक्षितित्वं यो वेद स मुखेन मुख्यत्वेन प्राधान्येनान्नमत्ति । नान्नं प्रति गुणभूतः स भोक्तैव भवति न भोज्यतामापद्यते । "स देवानपिगच्छति स ऊर्जमुपजीवती"ति मन्त्रे देवात्मभावं प्रतिपद्यते ऊर्जममृतं
१५ चोपजीवतीति यदुक्तं सोपासनप्रशंसा प्रशस्तिमात्रं नापूर्वार्थोऽस्तीत्यर्थः ॥ ७ ॥

एवं पाठक्रममुल्लङ्घ्यार्थक्रमवशात्साधनभूतमन्त्रचतुष्टयं व्याख्यायेदानी पाङ्क्तस्य कर्मण फलभूतमन्नत्रयं कार्यत्वाद्विस्तीर्णविषयत्वाच्च पूर्वेभ्योऽन्नेभ्य. पृथगुत्कृष्टं तद्व्याख्यानार्थं उत्तरो ग्रन्थ आब्राह्मणपरिसमाप्तेः । त्रीण्यात्मने कुरुतेति मन्त्रेण मनोवाचं प्राणमित्येवं तानि त्रीण्यन्नानि पिता सृष्ट्वाऽऽदावात्मन आत्मार्थमकुरुत कृतवान् । तेषां मध्ये मनसोऽस्तित्वं प्रति संशये प्रमाणमाह—अन्यत्र मना इति । पुरोवस्थितं गजं त्वं दृष्टवानिति
२० केनचित् पृष्टः वदति अन्यत्र विषयान्तरे गतं मे मनो यस्य सोऽहमन्यत्रमना अभूवमासमतो नादर्शं दृष्टवानस्मि । तथेदं मदीयं वचः श्रुतवानसीति पृष्टः आह अन्यत्रमना अभूवं अतो श्रौषं न श्रुतवानस्मीति हि यस्मात्सर्वो लोक आत्मसाक्षिकं मनसैव पश्यति मनसैव शृणोति तद्व्यग्रत्वे दर्शनाद्यभावात् । तस्मात्सिद्धं प्रत्यक्षादिप्रमाणक मनसोऽस्तित्वम् ॥ ८ ॥

किं पुनर्मनस. स्वरूपमित्यतस्तदाह—काम इति । कामः स्त्रीव्यतिकराभिलाषादिः । सङ्कल्प प्रत्युपस्थित-
२५ विषयविकल्पनं शुक्लनीलादिभेदेन । विचिकित्सा संशयज्ञानम् । श्रद्धाऽदृष्टार्थेषु कर्मसु देवतादिषु चास्तिक्यबुद्धिः । अश्रद्धा तद्विपरीता बुद्धि. । धृतिर्धारणं देहाद्यवसादे सत्युत्तम्भनम् । अधृतिस्तद्विपर्ययं. । ह्रीर्लज्जा । धीः प्रज्ञा । भीर्भयमित्येतदेवमादिकं सर्वं मन एव । मनसोऽन्त.करणस्य रूपाण्येतानि वृत्तिवृत्तिमतोरभेदात् । पुनरपि मनसोऽस्तित्वे कारणमाह—तस्मादपीति । यस्माच्चक्षुषो ह्यगोचरे पृष्ठतोऽपि केनचिदुपस्पृष्टः कश्चिद्धस्तस्यायं स्पर्शोजानोरयं स्पर्श इति मनसा विजानाति विवेकेन प्रतिपद्यते तस्मादस्ति विवेकप्रतिपत्तिकारणं मन इति ॥ ९ ॥

३० इह कर्मणां फलभूतानि त्रीण्यन्नानि मनोवाक्प्राणाख्यानि । अध्यात्ममधिभूतमधिदैवं च व्याचिख्यासितानि तत्राध्यात्मिकानां वाङ्मन.प्राणानां मनो व्याख्यातम् । अथेदानीमाध्यात्मिकाया वाचः स्वरूपमाह—यः कश्च शब्द इति । लोके यः कश्च शब्दो ध्वनिस्ताल्वादिव्यंग्यः प्राणिभि. वर्णादिलक्षण इतरो वादित्रमेघादिनिर्मित. सर्वो वर्णो वर्णात्मको ध्वनिः सा प्रकृता वागेव । इदं तावद्वाचः स्वरूपमुक्तम् । अथ तस्याः कार्यमुच्यते—एषा हीति । हि यस्मादेषा प्रकाशमात्रस्वरूपा वागन्तमभिधेयावसानमभिधेयनिर्णयमायत्ताऽनुगता । अत एव पुन
३५ स्वयं नाभिधेयवत्प्रकाश्या किन्तु प्रदीपादिवत्प्रकाशात्मकत्वात्प्रकाशिकैव । प्रदीपादिप्रकाशः प्रकाशान्तरेण न प्रकाश्यते तद्वद्वाक्स्वयं प्रकाशिकैव न प्रकाश्येत्यनवस्था श्रुतिः परिहरति—एषा हि नेति । प्रकाशात्मकत्वमेम वाच कार्यमित्यर्थः । अथाध्यात्मिकप्राणविषयं वाक्यमवतारयितुं प्राणास्तित्वे प्रमाण कथयन्प्राणस्वरूपमाह—प्राण इति । प्राणो मुखनासिकाभ्यन्तरचारी हृदयवृत्तिः । प्रणयनात् प्राण । मूत्रपुरीषादेरपनयनान्नाभिमय दोऽधोवृत्ति-

त्रयो लोका एत एव । वागेवायं लोको मनोऽन्तरिक्षलोकः प्राणोऽसौ लोकः ॥११॥
त्रयो वेदा एत एव । वागेवर्ग्वेदो मनो यजुर्वेदः प्राणः सामवेदः ॥१२॥
देवाः पितरो मनुष्या एत एव । वागेव देवा मनः पितरः प्राणो मनुष्याः ॥१३॥
पिता माता प्रजैत एव । मन एव पिता वाङ्माता प्राणः प्रजा ॥१४॥
विज्ञातं विजिज्ञास्यम् । अविज्ञातमेत एव यत्किञ्च विज्ञातं ५
वाचस्तद्रूपं वाग्घि विज्ञाता वागेनं तद्भूत्वावति ॥१५॥
यत्किञ्च विजिज्ञास्यम् । मनसस्तद्रूपं मनो हि विजिज्ञास्यं मन एनं तद्भूत्वावति ॥१६॥
यत्किञ्चाविज्ञातम् । प्राणस्य तद्रूपं प्राणो ह्यविज्ञातः प्राण एनं तद्भूत्वावति ॥१७॥
तस्यै वाचः पृथिवी शरीरम् । ज्योतीरूपमयमग्नि-
स्तद्यावत्येव वाक्तावती पृथिवी तावानयमग्निः ॥१८॥ १०

वृत्तिरपानः। हृदयादारभ्य नाभिपर्यन्तं वर्तमानो व्यायच्छत्कर्मा वीर्यवत्कर्महेतुश्च व्यानः। प्राणापानयोर्नियमनकर्मेत्यर्थः । उत्कर्षोर्ध्वगमनादिहेतुरापादतलमस्तकस्थान ऊर्ध्ववृत्तिरुदानः। भुक्तस्य पीतस्य च सम नयनात्समानः कोष्ठस्थानोऽन्नपक्ता। अन इत्येतेषां वृत्तिविशेषाणा सामान्यभूता सामान्यदेहचेष्टाभिसंबन्धिनी वृत्तिरुच्यते। एतत्सर्वं प्राणादिवृत्तिजातमाध्यात्मिकः साधारणासाधारणवृत्तिमान्प्राण एव वृत्तिवृत्तिमतोरभेदात्। व्याख्यातान्याध्यात्मिकानि मनोवाक्प्राणाख्यान्यत्र। अतस्तेषा वागादीनां समुच्चितं स्वरूपं दर्शयति—एतन्मयो वेति। अयमात्मा प्राजा- १५ पत्यैर्वाङ्मनःप्राणैरारब्धः कार्यकारणसङ्घातः पिण्ड एतन्मय एतद्विकारः विकारे मयट्। एतदेव विवृणोति—वाङ्मयो मनोमयः प्राणमय इति एतन्मय इत्यस्य स्फुटीकरणम् ॥१०॥

एवं वागादीनामाध्यात्मिकीं विभूतिमुक्त्वाऽधिभौतिकीं विभूतिमाह—त्रयो लोका इति। त्रयो लोका भूर्भुवः-स्वरित्याख्या एत एव वाङ्मनःप्राणा एव। एतदेव विशेषतो विवृणोति—वागेवायमिति। वागेवायं भूर्लोकः। मनोऽन्तरिक्षलोकः। प्राणोऽसौ परोक्षः स्वर्लोकः ॥११॥ २०

एषामेव वागादीनां त्रयो वेदा इति वेदत्रयात्मकत्वमुक्तम् ॥१२॥

देवाः पितरो मनुष्या इति देवपितृमनुष्यात्मकत्वम् ॥१३॥

पिता माता प्रजेति पितृमातृप्रजात्मकत्वम् ॥१४॥

विज्ञातं विजिज्ञास्यम् अविज्ञातमिति विज्ञातविजिज्ञास्याविज्ञातवस्त्वात्मकत्वं चाह। तत्र विशेषः यत्किंच विज्ञातं विस्पष्टं ज्ञानं वाचस्तद्रूपं; तत्र स्वयमेव हेतुमाह—वाग्घीति। हि यस्माद्वाग्विज्ञाता प्रकाशात्मकत्वात्। २५ याऽन्यानपि विज्ञापयति सा कथमविज्ञाता भवेदिति भावः। एवं वाग्विशेषविदः फलमाह—वागेनमिति। एनं वाग्विभूतिविदं वाक् विज्ञातं भूत्वाऽवति प्रति[परि]पालयति विज्ञातरूपेणैवास्यान्नत्वं भोज्यता प्रतिपद्यत इत्यर्थः ॥१५॥

तथा यत्किंच विजिज्ञास्यं विस्पृष्टं ज्ञातुमिष्टं तत्सर्वं मनसो रूपं; हि यस्मान्मनः संदिह्यमानाकारत्वाद्विजिज्ञास्यं पूर्ववन्मनोविभूतिविदः फल मन एनं तद्विजिज्ञास्य भूत्वाऽवति विजिज्ञास्यरूपेणैवान्नत्वमापद्यते ॥१६॥

तथा यत्किंचाविज्ञातं विज्ञानागोचरं न च संदिह्यमानं प्राणस्य तद्रूपं हि यस्मात्प्राणोऽविज्ञातोऽविज्ञातरूपः ३० प्राण एन तद्भूत्वाऽवति। अविज्ञातरूपेणैवास्य प्राणोऽन्नं भवतीत्यर्थः। यथा शिष्यैरविवेकिभिः संदिह्यमानोपकारा अपि गुरवः। पुत्रादिभिश्चातिबालैरविज्ञातोपकाराः पित्रादयः। तेषां भोज्यत्वमापद्यन्ते तथा मनःप्राणयोरपि संदिह्यमानाविज्ञातयोरन्नत्वोपपत्तिरिति भावः ॥१७॥

एवं वाङ्मनःप्राणानामाधिभौतिकं विस्तारमुक्त्वाऽधिदैविकं विस्तारमाह—तस्यै वाच इति। तस्यै तस्याः प्रजापतेरन्नत्वेन प्रस्तुताया वाचः पृथिवी शरीरं बाह्य आधारः ज्योतीरूपं प्रकाशात्मकं करणमाधेयभूतमयं पार्थिवोऽग्निः। ३५

**अथैतस्य मनसः द्यौः शरीरं ज्योतीरूपमसावादित्यस्तद्यावदेव मनस्तावती द्यौस्तावानसावादित्यस्तौ मिथुनँ समैतां ततः प्राणोऽजायत स इन्द्रः स एषोऽसपत्नो द्वितीयो वै सपत्नो नास्य सपत्नो भवति य एवं वेद ॥१९॥**

**अथैतस्य प्राणस्यापः। शरीरं ज्योतीरूपमसौ चन्द्र-**
५ **स्तद्यावानेव प्राणस्तावत्य आपस्तावानसौ चन्द्रः ॥२०॥**

**त एते सर्व एव समाः। सर्वेऽनन्ताः स यो हैतानन्तवत उपास्तेऽन्त-वन्तँ स लोकं जयत्यथ यो हैताननन्तानुपास्तेऽनन्तँ स लोकं जयति ॥२१॥**

आधाराधेयभूतमुभयं पृथिव्यग्नी प्रजापतेर्वागेव। अध्यात्ममधिभूतं च या वाक् परिच्छिन्ना तस्या आधिदैविकवागंशत्वा-दंशांशिनोश्च तादात्म्यात्तया सह तुल्यपरिमाणत्वं दर्शयति—तद्यावतीति। तत्राध्यात्माधिभूतभेदभिन्ना सती वाक्
१० यावत्येव यावत्परिमाणैव भवति। तत्र सर्वत्राधारत्वेन व्यवस्थिता कार्यभूता पृथिवी तावत्येव तावत्परिमाणैव भवति। अयं च पार्थिवोऽग्निराधेयः करणरूपो ज्योतीरूपेण पृथिवीमनुप्रविष्टस्तावानेव भवति ॥१८॥

अध्यात्ममधिभूतं च मनःप्राणयोराधिदैविकमनःप्राणांशत्वात्तादात्म्याभिप्रायेण तुल्यपरिमाणत्वमाह—**अथैतस्य मनस इति**। अथाधिदैविकवाग्विभूतिव्याख्यानानन्तरमेतस्य प्राजापत्यान्नत्वेनोक्तस्य मनसो द्यौर्द्युलोकः शरीरं कार्यमाधारः। असावादित्यो ज्योतीरूपं करणमाधेयः। तत्तत्र यावत्परिमाणमेवाध्यात्ममधिभूतं वा मनस्तावती
१५ तावद्विस्तारा तावत्परिमाणा ज्योतीरूपस्य करणस्य मनस आधारत्वेन व्यवस्थिता द्यौः। असावादित्यो ज्योतीरूपं करणमाधेयं तावान् तावत्परिमाण एव। तत्र मन एवास्यात्मा वाग्जाया प्राणः प्रजेत्यध्यात्मम्। मन एव पिता। वाङ् माता। प्राणः प्रजेत्यधिभूतम् च वाङ्मनसयोः प्रजात्वं प्राणस्योक्तं तथाधिदैवेपि प्राणस्य तत्प्रजात्व वाच्यमि-त्यभिप्रेत्याह—**तौ मिथुनमिति**। तावग्न्यादित्यौ। आधिदैविके वाङ्मनसे मातापितरौ मिथुनं मैथुन्यमितरेतरससर्गं समैतां समगच्छेताम्। नन्वादित्यस्य मनसः प्राणं प्रति पितृत्वम्। ( वाच्यमित्यभिप्रेत्याह ) वाचो वाऽग्नेः मातृत्वं च
२० कथम्? उच्यते सावित्रं पाकमाग्नेयं च प्रकाशभूते कार्यसिद्ध्यंदर्शनात् तयोर्जनकत्वं सिद्धमिति बो·यम्। ततस्तयोरेव सगमनात्प्राणो वायुरजायत परिस्पदनाय कर्मणे जातः। वायोरिन्द्रत्वासपत्नत्वगुणविशिष्टस्योपासनमभिप्रेत्याह—**स इन्द्र इति**। स प्राणः इन्द्र परमेश्वरः तथा स एषः प्राणोऽसपत्नोऽविद्यमानः सपत्नो यस्यासावसपत्नः कः पुनः सपत्नो नाम प्रतिपक्षत्वेनोपगतो द्वितीयो वै संपन्नः शत्रुरित्युच्यते। तेन द्वितीयत्वेऽपि सति वाङ्मनसे न सपत्नत्व भजेते। असपत्न-गुणकप्राणोपासने फलवाक्यं प्रमाणयति—नास्येति। य एवासपत्नं यथोक्त प्राणं वेदास्योपासकस्य सपत्नः प्रतिपक्षो न
२५ भवति ॥१९॥

अथाधिदैविकयोर्वाङ्मनसयोर्विभूतिनिर्देशानन्तरमेतस्य प्रकृतस्य प्राजापत्यान्नस्य प्राणस्यापः शरीरमाधारः पूर्ववत्। असौ चन्द्रो ज्योतीरूप करणमाधेयः तत्तत्राध्यात्मादिभेदेषु प्राणो यावानेव यावत्परिमाणः तावद्व्याप्ति-मत्यस्तावत्परिमाणा, आपस्तास्वप्स्वनुप्रविष्टः करणभूतोऽसौ चन्द्र आधेयोऽध्यात्ममधिभूतं च तावान् तावद्व्याप्ति-मानेव ॥२०॥

३० इदानीमेषामाध्यात्मिकाधिभौतिकाधिदैविकानां वाङ्मनःप्राणानां ध्यानार्थं समत्वादिगुणमाह—**त एत इति**। ते एते वाङ्मनःप्राणाः सर्वे एव समास्तुल्याः। सर्वे व्याप्तिमन्तो यावत्प्राणिगोचरं साध्यात्माधिभूत व्याप्य व्यवस्थिताः अत एवानंताः यावत्संसारभाविनः कार्यकरणात्मका इत्यर्थः। तेषु परिच्छिन्नत्वेन ध्याने दोषमाह—**स इति**। स यः कश्चिद्धैतान्प्रजापतेः पितुरात्मभूतानन्तवतः परिच्छिन्नानध्यात्मरूपेण वाऽधिभूतरूपेण वोपास्ते स च तदुपासनानुरूपमेव फलमन्तवन्तं लोकं जयति परिच्छिन्न एव जायते नैतेषामात्मभूतो भवतीत्यर्थः। अथ पुनर्यो
३५ हैतान्वागादीननन्तान्सर्वात्मकात्सर्वप्राण्यात्मभूतानपरिच्छिन्नानुपास्ते सोऽनन्तमेव लोकं जयत्यनन्तो भवतीत्यर्थः ॥२१॥

स एष संवत्सरः । प्रजापतिः षोडशकलस्तस्य रात्रय एव पञ्चदश कला ध्रुवैवास्य षोडशी कला स रात्रिभिरेवा च पूर्यतेऽप च क्षीयते सोऽमावास्यांँ रात्रिमेतया षोडश्या कलया सर्वमिदं प्राणभृदनुप्रविश्य ततः प्रातर्जायते तस्मादेतांँ रात्रिं प्राणभृतः प्राणं न विच्छिन्द्यादपि कृकलासस्यैतस्या एव देवताया अपचित्यै ॥२२॥

यो वै स संवत्सरः । प्रजापतिः षोडशकलोऽयमेव स योऽयमेवंवित्पु- ५
रुषस्तस्य वित्तमेव पञ्चदश कला आत्मैवास्य षोडशी कला स
वित्तेनैवा च पूर्यतेऽप च क्षीयते तदेतन्नभ्यं यदयमात्मा प्रधिर्वित्तं
तस्माद्यद्यपि सर्वज्यानिं जीयत आत्मना चेज्जीवति प्रधिनाऽगादित्येवाहुः ॥२३॥

ननु फलवद्ध्यानविषयेऽन्नत्रये व्याख्याते वक्तव्याभावात्किमुत्तरग्रन्थेनेत्याशंकायामुच्यते पिता पाक्तेन कर्मणा
सप्तान्नानि सृष्ट्वा त्रीण्यन्नान्यात्मार्थमकरोदित्युक्तम् । तान्येतानि पाक्तकर्मफलभूतानि व्याख्यातानि तेषु त्रिष्वप्यन्नेषु १०
पांक्तत्वावगतय आत्माजाया प्रजावित्तं कर्म चेति पञ्चकं संग्रहीतव्यम् । तत्र पृथिव्यग्नी माता दिवादित्यौ पिता योऽय-
मनयोरन्तरा प्राण. स प्रजेति व्याख्यातम् । तत्र वित्तकर्मणी सम्भावयितव्ये इत्येतदर्थं उत्तरो ग्रन्थ आरभ्यते । स एष
संवत्सर इति । योऽयं त्र्यन्नात्मा प्रजापतिः प्रकृतः स एष संवत्सरः संवत्सरात्मना विशेषतो निर्दिश्यते । षोडशकलः
षोडश कला अवयवा यस्य स षोडशकलः संवत्सरात्मा कालरूपः । त एव षोडश कला आह—तस्य रात्रय
एवेति । तस्य कालात्मनः प्रजापतेः रात्रय एवाहोरात्राणि तिथय एव प्रतिपदाद्याः पञ्चदशकलाः ध्रुवैव नित्यैव १५
व्यवस्थिताऽस्य प्रजापतेः षोडशी षोडशानां पूरणी कला । एतासां कलाना वित्तत्वं वक्तु साधर्म्यमाह—स रात्रिभिरे-
वेति । स चन्द्रात्मा प्रजापती रात्रिभिरेव प्रतिपदाद्याभिस्तिथिभिरुक्तकलारूपाभिरुपचीयमानाभिः शुक्लपक्ष आपूर्यते
वर्द्धते । कृष्णपक्षे ताभिरेवाऽपचीयमानाभिः कलाभिरपक्षीयते अमावास्यायां रात्रिमिति । स कालात्मा प्रजापतिरमा-
वास्यां रात्रिं रात्रौ या ध्रुवा कला व्यवस्थितोक्ता एतया षोडश्या कलया सर्वमिदं प्राणभृत्प्राणिजातं स्थावरजंग-
मात्मकमनुप्रविश्य यदपः पिबति यच्चौषधीरश्नाति तत्सर्वमेवौषध्यात्मना व्याप्यामावास्या रात्रिमवस्थाय ततोऽ- २०
परेद्यु' प्रातर्जायते द्वितीयया कलया संयुक्तो भवति । एवमसौ प्रजापतिः पाक्तात्मकः संवृत्तः । एवं प्रजापतेः पांक्तकर्म-
फलत्वमुक्त्वा प्रासङ्गिकमर्थमाह—तस्मादेतां रात्रिमिति । यस्मादेव चन्द्र एतां रात्रिं सर्वप्राणिजातमनुप्रविष्टो ध्रुवया
कलया वर्तते तस्माद्धेतोरेताममावास्यां रात्रिं प्राणभृतः प्राणिनः प्राणं न विच्छिन्द्यात् प्राणिनो न प्रमापयेदिति । किं
बहुना कृकलासस्यापि सरटस्यापि प्राणं न विच्छिन्द्यात् । स हि पापात्मा दृष्टोऽप्यमङ्गल इति कृत्वा स्वभावेनैव
प्राणिभिर्हिंस्यते । निषेधप्रयोजनमाह—एतस्या एव देवतायाः सोमदेवताया अपचित्यै पूजार्थमित्यर्थः ॥२२॥ २५

यत्पूर्वमाधिदैविकत्र्यन्नात्मकप्रजापत्युपासनमुक्तं तदहमस्मि प्रजापतिरित्यहंग्रहेण कर्त्तव्यमित्याह—यो वा
इति । यो वै परोक्षाभिहितः संवत्सरः प्रजापतिः षोडशकलः स नैवात्यन्तं परोक्षो मन्तव्यो यस्मादयमेव स प्रत्यक्ष
उपलक्ष्यते । कोऽसौ ? योऽयं पुरुष एवं यथोक्त त्र्यन्नात्मक प्रजापतिमात्मभूत वेत्ति । सोऽयं प्रत्यक्षः प्रजापति. केन
सामान्येन प्रजापतिरित्यत आह—तस्येति । तस्यैवंविदः पुरुषस्य गवादिवित्तमेव पञ्चदशकला. कलावदुपचयापचय-
धर्मित्वात् । [illegible]स्य विदुष आत्मैव पिण्ड एव षोडशी कला ध्रुवास्थानीया स विद्वाञ्चन्द्रवद्वित्तेनैवाऽऽपूर्यतेऽपक्षीयते च । ३०
आत्मैव ध्रुवा कलेत्युक्तं तदेव रथचक्रदृष्टान्तेन स्पष्टयति—तदेतन्नभ्यमिति । नाभिश्चक्रपिण्डिका, अरनाभ्यै हितं नाभिमर्हं-
तीति वा नभ्यं तदेतल्लोके प्रसिद्धम् । चक्रपिण्डिकास्थानीयं किं तद्यदयमात्मा योऽयं पिण्डः शरीरम् । प्रधिः परिवार-
स्थानीयं बाह्यं वित्तं चक्रस्येवारनेम्यादि । एवंसति फलितमाह—तस्माद्यद्यपीति । यस्माच्छरीरं रथचक्रपिण्डिका-
स्थानीयं तस्माद्यद्यपि सर्वज्यानिं सर्वस्वापहरणं जीयते हीयते ग्लानिं प्राप्नोति तथापि चेद्यद्यात्मना शरीरेण नाभि-
स्थानीयेन जीवति तदा प्रधिना बाह्येन परिवारेणाऽयमागात् क्षीणोऽयं यथा चक्रमरनेमिविमुक्तमेवमाहुर्लौकिकाः । ३५
जीवंश्चेदरनेमिस्थानीयेन वित्तेन पुनरुपचीयत इति वाक्यार्थः ॥२३॥

अथ त्रयो वाव लोकाः। मनुष्यलोकः पितृलोक देवलोक इति सोऽयं मनुष्यलोकः पुत्रेणैव जय्यो नान्येन कर्मणा कर्मणा पितृलोको विद्यया देवलोको देवलोको वै लोकाना ँ श्रेष्ठस्तस्माद्विद्यां प्रश ँ सन्ति ॥२४॥
अथातः सम्प्रत्तिः। यदा प्रैष्यन्मन्यतेऽथ पुत्रमाह त्वं ब्रह्म त्वं यज्ञस्त्वं लोक इति स पुत्रः प्रत्याहाहं ब्रह्माहं यज्ञोऽहं लोक इति ॥२५॥
यद्वै किञ्चानूक्तम्। तस्य सर्वस्य ब्रह्मेत्येकता ये वै के च यज्ञास्तेषा ँ सर्वेषां यज्ञ इत्येकता ये वै के च लोकास्तेषा ँ सर्वेषां लोक इत्येकतैतावद्वा इद ँ सर्वमेतन्मा सर्व ँ सन्नयमितोऽभुनजदिति तस्मात्पुत्रमनुशिष्टं लोक्यमाहुस्तस्मादेनमनुशासति स यदैवंविदस्माल्लोकात्प्रैत्यथैभिरेव प्राणैः सह पुत्रमाविशति स यद्यनेन किञ्चिदक्षणयाऽकृतं भवति तस्मादेन ँ सर्वस्मात्पुत्रो मुञ्चति तस्मात्पुत्रो नाम स पुत्रेणैवास्मिँल्लोके प्रतितिष्ठत्यथैनमेते दैवाः प्राणा अमृता आविशन्ति ॥२६॥

नन्वन्नत्रयात्मनि प्रजापतावहंग्रहोपासनस्य सफलस्योक्तत्वाद्वक्तव्याभावादुत्तरग्रन्थवैयर्थ्यमित्याशंकायामुच्यते। एवं पाक्तेन दैववित्तविद्यासंयुक्तेन कर्मणा त्र्यन्नात्मकप्रजापतिभावो व्याख्यातः। अनन्तरञ्च जायादिवित्तं परिवारस्थानीयमित्युक्तम्। तत्र पुत्रकर्मापरविद्याना लोकप्राप्तिसाधनत्वमात्रं सामान्येनावगत न पुनः पुत्रादीनां लोकप्राप्तिफलं प्रति विशेषसम्बन्धनियमोऽवगतः। स वक्तव्य इति तत्प्रदर्शनार्थं अथ त्रयो वावेतिकण्डिका प्रणीयते। अथशब्दो वाक्योपन्यासार्थः। वावेत्यवधारणार्थः। शास्त्रोक्तसाधनार्हा लोकास्त्रय एव न न्यूना नाधिका वा। के ते इत्यत आह—मनुष्यलोकः पितृलोको देवलोक इति। केन कः साध्य इत्यपेक्षायामाह—सोऽयमिति। तेषा मध्ये सोऽय मनुष्यलोकः पुत्रेणैव साधनेन जय्यो जेतव्यः साध्यो नान्येन कर्मणा विद्यया वेति वाक्यशेषः। कर्मणाऽग्निहोत्रादिलक्षणेन केवलेन पितृलोको जेतव्यो न पुत्रेण नापि विद्यया। विद्ययाऽपरविद्यया देवलोको जेतव्यो न पुत्रेण नापि कर्मणेत्यनुषज्यते। देवलोको वै प्रसिद्धो लोकाना त्रयाणा मध्ये श्रेष्ठः प्रशस्यतमस्तस्माद्देवलोकसाधनत्वाद्विद्या प्रशंसन्ति स्तुवन्ति ॥२४॥

एवं साध्यलोकत्रयफलभेदेन विनियुक्तानि पुत्रकर्मविद्याख्यानि त्रीणि साधनानि। जाया तु पुत्रकर्मार्थत्वान्न पृथक्साधनमिति पृथक् नाभिहिता। वित्तञ्च कर्मसाधनत्वान्न पृथक्साधनम्। विद्याकर्मणोर्लोकजयहेतुत्व स्वात्मप्रतिलाभेनैव भवतीति प्रसिद्धम्। पुत्रस्य त्वक्रियात्मकत्वात्केन प्रकारेण लोकजयहेतुत्वमिति न ज्ञायतेऽतस्तद्वक्तव्यमित्यथानन्तरमारभ्यते—अथात इति। अथ पुत्रकर्मविद्याख्याना साधनाना साध्यविशेषसम्बन्धकथनानन्तरं यतः पुत्रस्यैतल्लोकसाधनत्वं कथमिति न ज्ञायतेऽतस्तत्कथयितुं संप्रति संप्रदानमारभ्यते। पुत्रे पिता वक्ष्यमाणप्रकारेण स्वात्मव्यापारसम्प्रदानं करोति तेन संप्रत्तिसज्ञकमिदं कर्म सप्रेत्युपसर्गद्वयपूर्वकाद्दाधातोः स्त्रियां क्तिन्निति क्तिनि "अच उपसर्गात्त" इति सूत्रेणाऽऽत्तं प्रत्तमितिवत्संप्रत्तिरिति बोद्धव्यम्। तत्कर्म कस्मिन्काले कर्त्तव्यमित्यपेक्षायामाह—यदा प्रैष्यन्निति। स पिता यदा यस्मिन्काले प्रैष्यन्प्रव्रजिष्यामि मरिष्यामीति वाऽरिष्टदु स्वप्नादिदर्शनेन मन्यतेऽथ तदा पुत्रमाहूयाह—त्वं ब्रह्म त्वं यज्ञस्त्वं लोक इति। स एवमुक्तः पुत्रः पूर्वमेवानुशिष्टत्वात्प्रत्याह प्रतिवचनमाह—अहं ब्रह्माहं यज्ञोऽहं लोक इति ॥२५॥

एतद्वाक्यत्रयस्यार्थस्तिरोहित इति मन्वाना श्रुतिर्व्याख्यानाय प्रवर्तते—यद्वै किंचेति। यत्किञ्चानुक्तमविशिष्टमधीतमनधीतं च तस्य सर्वस्यैव ब्रह्मेत्येतस्मिन्पदे एकतैकत्वपदार्थः। योऽध्ययनव्यापारो मम कर्त्तव्य आसीदेतावन्तं कालं वेदविषयः स इत ऊर्ध्वं त्वं ब्रह्म त्वत्कर्तृकोऽस्त्विति वाक्यार्थः। तथा ये वै के च यज्ञा अनुष्ठेयाः सन्तो मयाऽनुष्ठिताश्च तेषा यज्ञ इत्यस्मिन् पद एकत्वं मत्कर्तृका यज्ञा य आसन् त इत ऊर्ध्वं त्वं यज्ञस्त्वत्कर्तृका भवन्त्वित्यर्थः। तथा ये वै के च लोका मया जेतव्याः सन्तो जिता अजिताश्च तेषा सर्वेषा लोक इत्येतस्मिन्पद एकता त इत ऊर्ध्वं त्वं लोकस्त्वया जेतव्या इत्यर्थः। इत ऊर्ध्वं मयाऽध्ययनयज्ञलोकजयकर्तव्यसकल्पस्त्वयि समर्पितोऽह तु कर्तव्यताबन्धनविषयात्संकल्पान्मुक्तोऽस्मीति वदतः पितुरभिप्रायं श्रुतिराह—एतावद्वेति। यद्गृहिणा कर्तव्य यदुत वेदा अध्येतव्याः

**पृथिव्यै चैनमग्नेश्च । दैवी वागाविशति सा वै दैवी वाग्यया यद्यदेव वदति तत्तद्भवति ॥२७॥**
**दिवश्चैनमादित्याच्च । दैवं मन आविशति तद्वै दैवं मनो येनानन्द्येव भवत्यथो न शोचति ॥२८॥**

**अद्भ्यश्चैनं चन्द्रमसश्च । दैवः प्राण आविशति स वै दैवः प्राणो यः संचरꣳश्चासं-**
**चरꣳश्च न व्यथतेऽथो न रिष्यति स एष एवंवित्सर्वेषां भूतानामात्मा भवति यथैषा**
**देवतैवꣳस यथैतान्देवताꣳसर्वाणि भूतान्यवन्त्येवꣳहैवंविदꣳसर्वाणि भूतान्यवन्ति यद्** ५
**किञ्चेमाः प्रजाः शोचन्त्यमैवासां तद्भवति पुण्यमेवामुं गच्छति न ह वै देवान्पापं गच्छति ॥२९॥**

यज्ञा यष्टव्याः लोकाश्च .जेतव्या इदं सर्व एतावद्वै एतत्परिमाणमेव। एतत्सर्वं सन्नयं पुत्रः सर्व ह्येमं भारं मदधीनं मत्तोऽपच्छिद्यात्मनि निधायेतोऽस्माद्बन्धहेतुभूताल्लोकान्मामभुनजत्पालयिष्यतीति। छन्दसि लुङ् [ लङ् लिटः ] इति छन्दसि कालनियमाभावात् लृडर्थे लङ्। इदानी पुत्रानुशासनस्य फलवत्त्वमाह—तस्मात्पुत्र इति। यस्मादेवं संपन्नः पुत्रः पितरमस्माल्लोकात्कर्त्तव्यताबन्धेनातो मोचयिष्यति तस्मात्पुत्रमनुशिष्टं लोक्यं पितुर्लोकहितमाहुर्ब्राह्मणास्तस्मा- १० दुक्तहेतोरेवेदानीन्तना अपि पितर एनं पुत्रमनुशासति शिक्षयन्ति लोक्योऽयमस्माकं स्यादिति मन्वानाः। कृतसंप्रत्तिकः पिता किं करोतीत्यपेक्षायामाह—स यदेति। स पुत्रसमर्पितकर्त्तव्यताक्रतुः पिता "अहमस्म्यनन्ता अध्यात्मादि- भेदविस्तरा वाङ्मनप्राणाः" इत्येवंविदेवंभावनो यदा यस्मिन्कालेऽस्माल्लोकात्प्रैति म्रियतेऽथ तदैभिरेव प्राणैः प्रकृतै- र्वाङ्मनप्राणैरेव सह सार्द्धं पुत्रमाविशति व्याप्नोति। मृतोऽपि पिताऽनुशिष्टपुत्रात्मनाऽस्मिन्नेव लोके वर्तते। नास्मादत्यन्त व्यावृत्त. फलरूपेण च परत्र वर्तत इति भावः। इदानी पुत्रनिर्वचनमाह—स यद्यनेनेति। स पुत्रो १५ यदि कदाचिदनेन पित्राऽक्ष्णया कोणच्छिद्रतोऽन्तरा कर्त्तव्यं किंचिदकृतं भवति तस्मादकृतात्कर्त्तव्यतारूपात्सर्वस्मात्सर्व- लोकप्राप्तिप्रतिबन्धरूपादेनं पितर मुञ्चति मोचयति। तत्सर्वं स्वयमनुशिष्टस्सन् पितुः च्छिद्रं पूरयित्वा पितरं त्रायते। तस्मात्पुत्रो नामेदं तत्पुत्रस्य पुत्रत्वम्। इदानी पितुः पुत्रतादात्म्येनैतल्लोकावस्थानमुक्तं निगमयति—स पुत्रेणैवेति। स पिता मृतोऽपि सन्नेवविधेन पुत्रेणाऽमृतोऽस्मिन्नेव लोके प्रतितिष्ठति वर्तते। एव प्रासंगिकं निरूप्य प्रकृतं पितर- मेवाधिकृत्याह—अथैनमिति। पुत्रप्रकरणविच्छेदार्थोऽथशब्दः। एनं कृतसंप्रत्तिकं पितरमेते वागादयः प्राणा दैवा २० हैरण्यगर्भा अमृता अमरणधर्माण आविशन्ति ॥२६॥

कथमित्यपेक्षायां तेषामावेशनप्रकारमाह—पृथिव्यै चैनमिति। पृथिव्ये पृथिव्या अग्नेश्च सकाशाद्दैव्यधि- दैवात्मिका वागेनं कृतसंप्रत्तिकं पितरमाविशति। सा हि दैवी वाक् पृथिव्यग्निलक्षणाऽऽध्यात्मिकासंगादिदोषैर्निरुद्धा विदुषस्तद्दोषापगम आवरणभङ्गे सत्युदकमिव प्रदीपप्रकाशवच्च व्याप्नोतीत्यर्थः। कीदृग्विधेत्यत आह—सा वै दैवी वागिति। सा च दैवी वागनृतादिदोषरहिता शुद्धा। यया दैव्या वाचा यद्यदेवात्मने परस्मै वा वदति तत्तद्भवत्य- २५ मोघाऽप्रतिबद्धाऽस्य वाग्भवतीत्यर्थः ॥२७॥

तथा दिवो द्युलोकादादित्याच्च दैव मन एवं पितरमाविशति। किं तदित्यत आह—तद्वै दैवं मन इति। तच्च दैवं मन. स्वभावनिर्मलत्वाद्येन मनसाऽऽनन्द्येव सुख्येव भवति। अथो अपि न शोचति शोकादिनिमित्ता- सयोगात् ॥२८॥

तथा अद्भ्यश्चन्द्रमसश्च साकाशाद्दैवः प्राण एनं पितरमाविशति। स वै दैवः प्राणः। स किंलक्षण इत्यत आह— ३० यो जंगमेषु संचरन् स्थावरेषु चाऽसंचरन् न व्यथते। न दुःखनिमित्तेन भयेन युज्यते। अथो अपि न रिष्यति न विनश्यति न हिंसामापद्यते। एवंविदः फलमाह—स एष इति। स एवं यथोक्तं त्र्यन्नात्मदर्शनं वेत्ति स एप सर्वेषां भूतानामात्मा भवति। सर्वेषां भूतानां मनो भवति वाग्भवतीत्येवं सर्वभूतात्मतया सर्वज्ञश्च भवतीत्यर्थः। यथैषा पूर्वसिद्धा हिरण्यगर्भदेवतैवमेव नास्य सर्वज्ञत्वसर्वकृत्त्वे वा क्वचित्प्रतिघातः। किं च स इति दृष्टान्तनिर्देशः। यथैता हिरण्यगर्भदेवतामिज्यादिभिः सर्वाणि भूतान्यवन्ति पालयन्ति पूजन्त्येवं हैवमेव एवंविदं सर्वाणि भूतान्य-२५ वन्तीज्यादिलक्षणा पूजा सततं प्रयुञ्जत इत्यर्थः। नन्वस्य विदुषः सर्वप्राणिनामात्मत्वेन तत्कार्यकरणात्मत्वात्सर्व- प्राणिदुःखेरस्य संबन्ध. स्यादित्यत आह—यद् किंचेति। उ पुनर्यत्किंचेमाः प्रजाः प्रजाः शोचन्त्यवसीदन्त्यमैव

अथातो व्रतमीमाँसा । प्रजापतिर्ह कर्माणि ससृजे तानि सृष्टान्य-
न्योन्येनास्पर्धन्त वदिष्याम्येवाहमिति वाग्दध्रे द्रक्ष्याम्यहमिति
चक्षुः श्रोष्याम्यहमिति श्रोत्रमेवमन्यानि कर्माणि यथाकर्म ॥३०॥

तानि मृत्युः श्रमो भूत्वोपयेमे। तान्याप्नोत्तान्याप्त्वा मृत्युरवारुन्ध तस्माच्छ्राम्य-
५ त्येव वाक्श्राम्यति चक्षुः श्राम्यति श्रोत्रमथेममेव नाप्नोद्योऽयं मध्यमः प्राणः ॥३१॥

तानि ज्ञातुं दध्रिरे । अयं वै नः श्रेष्ठो यः संचरँश्चासंचरँश्च न व्यथतेऽथो न
रिष्यति हन्तास्यैव सर्वे रूपं भवामेति त एतस्यैव सर्वे रूपमभवँस्तस्मादेत
एतेनाख्यायन्ते प्राणा इति तेन ह वाव तत्कुलमाख्यायते यस्मिन्कुले भवति
य एवं वेद य उ हैवंविदा स्पर्धतेऽनुशुष्य हैवान्ततो म्रियत इत्यध्यात्मम् ॥३२॥

१० सहैव प्रजाभिस्तच्छोकादिनिमित्तं दुःखसंयुक्तमासां प्रजानां भवति परिच्छिन्नबुद्धिजनितत्वात् । अमुं प्राजापत्ये पदे वर्तमानमेवविदं पुण्यमेव शुभमेव फलमभिप्रेत गच्छति प्राप्नोति । पुण्यमिति निरतिशयं हि पुण्यं तेन कृतं तत्फलमेव गच्छति । न ह वै नैव ह स्फुटं देवान्पापं फलं दुःखं गच्छति । पापफलस्यावसराभावात् ॥२९॥

त एते सर्वे समाः सर्वेऽनन्ता इत्यविशेषेण वाङ्मनःप्राणानामुपासनमुक्तं नान्यतमगतो विशेष उक्तः । किमेव प्रतिपत्तव्य किम्वा विचार्यमाणे व्रतमुपासनं प्रति कश्चिद्विशेषः प्रतिपत्तु शक्यत इति जिज्ञासायामाह—अथात
१५ इति । अथोपासनोक्त्यनंतरं यतो जिज्ञासाऽस्त्यत एषा वागादीनां प्राणानां मध्ये कस्य कर्म व्रतत्वेन धारयितव्यमिति मीमांसा = उपासनकर्मविचारणा प्रवर्तते व्रतमित्यवश्यानुष्ठेयं कर्मोच्यते प्रवृत्ताया मीमांसाया प्राप्तव्रतमभग्नत्वेन धारणीयमिति निर्द्धारणार्थमाख्यायिकां प्रणयति—प्रजापतिर्हेति । ह—शब्द किलार्थे । प्रजापतिः किल कर्माणि वागादीनि करणानि ससृजे सृष्टवान् । कर्मार्थानि हि तानीति कर्माणीत्युच्यन्ते । तानि पुनः सृष्टान्यन्योन्येन, इतरेतरम-स्पर्द्धंत स्पर्द्धां संघर्षं चक्रुः । कथमित्यपेक्षायां स्पर्द्धाप्रकारमेवाह वदिष्याम्येवेति । वदिष्याम्येव स्वव्यापाराद्वदनादनु-
२० परतैवाह स्यामिति वाग्व्रतं दध्रे धृतवती यद्यन्योऽपि मत्समोऽस्ति स्वव्यापारादनुपरन्तुं शक्तः सोऽपि दर्शयत्वात्मनो वीर्यमिति । तथा द्रक्ष्याम्यहमिति चक्षुर्व्रतं दध्रे श्रोष्याम्यहमिति श्रोत्रं व्रत दध्रे । एवममुना प्रकारेण वागादिवदन्यानि कर्माणि त्वगादीनि करणानि यथा कर्म यद्यस्य कर्मेति स्वीयं स्वीयं व्यापारमनुसृत्य व्रत दध्रिरे इति शेषः ॥३०॥

प्रजापतेर्वागादिषु श्रमद्वारा स्वकर्मप्रच्युतिरासीदित्याह—तानि मृत्युरिति । मृत्युर्मारकः श्रमरूपी भूत्वा तानि वागादीनि करणान्युपयेमे संजग्राह । कथमित्यपेक्षायामाह—तानीति । स्वव्यापारे प्रवृत्तानि तानि करणानि
२५ मृत्युराप्नोच्छ्रमरूपेणात्मानं दर्शितवानाप्त्वा प्राप्य च तानि करणानि मृत्युरवारुन्ध अवरोधं कृतवान् । स्वकर्मभ्यः प्रच्यावितवानित्यर्थः । अत्र कार्यगतश्रमलिङ्गकं प्रमाणमाह—तस्माच्छ्राम्यत्येवेति । यस्मात्प्रजापतेर्वागादीनि श्रमविद्धानि तस्मादद्यापि वदनकर्मणि प्रवृत्ता वाक्श्राम्यत्येव श्रमरूपिणा मृत्युना संयुक्ता स्वकर्मतः प्रच्यवते । तथा श्राम्यति चक्षुः श्राम्यति श्रोत्रम् । अथ वागादीनां भग्नव्रतत्वनिर्धारणानन्तर योऽयं मध्यमः प्राण इममेव मुख्यं प्राणं श्रमरूपीमृत्युर्नाऽऽप्नोन्न प्राप्तवान् । तेनाद्याप्यश्रान्त एव स्वकर्मणि प्रवर्तते ॥३१॥

३० तथापि कथं प्राणस्यैव व्रतं धार्यमित्यपेक्षायामाह—तानीति । तानि वागादीनि करणानि तं प्राण ज्ञातुं दध्रिरे धृतवन्ति मनः कथं ? अयं वै प्राणो नोऽस्माकं मध्ये श्रेष्ठः प्रशस्यतमोऽभ्यधिकः । यस्माद्यः सञ्चरश्चास चरंश्च न व्यथतेऽथापि न रिष्यति न विनश्यति । तस्य श्रेष्ठत्वे फलितमाह—हंतेति । हन्तेदानी सर्वे वयमस्यैव प्राणस्य रूपमसाम प्राणमात्मत्वेन प्रतिपद्येमहीति । एवं विनिश्चित्य ते सर्वे वागादयः एतस्यैव प्राणस्य रूपमभवन्प्राणरूपमेवात्मत्वेन प्रतिपन्नाः प्राणव्रतमेव दध्रिरेऽस्मद्व्रतानि न मृत्योर्वारणाय पर्याप्तानीत्यभिप्रायेण ।
३५ एवं करणानां प्राणरूपत्वमुक्त्वा तन्नामत्वमाह—तस्मादेत इति । यस्मात्प्राणेन चलनात्मना प्रकाशात्मना च स्वेन रूपेण रूपवंतीतराणि करणानि । न हि प्राणादन्यत्र चलनात्मकत्वमुपपद्यते । चलनव्यापारपूर्वकाण्येव

**अथाधिदेवतम् । ज्वलिष्याम्येवाहमित्यग्निर्दध्रे तप्स्याम्यहमित्यादित्यो भास्याम्यहमिति चन्द्रमा एवमन्या देवता यथादैवतꣳस यथैषां प्राणानां मध्यमः प्राण एवमेतासां देवतानां वायुर्म्लोचन्ति ह्यन्या देवता न वायुः सैषाऽनस्तमिता देवता यद्वायुः ॥३३॥**

**अथैष श्लोको भवति । यतश्चोदेति सूर्योऽस्तं यत्र च गच्छतीति प्राणाद्वा एष उदेति प्राणेऽस्तमेति तं देवाश्चक्रिरे धर्मꣳस एवाद्य स उ श्व इति यद्वा एतेऽमुर्ह्यध्रियन्त तदेवाप्यद्य कुर्वन्ति तस्मादेकमेव व्रतं चरेत्प्राण्याच्चैवापान्याच्च नेन्मा पाप्मा मृत्युराप्नवदिति यद्यु चरेत्समापिपयिषेत्तेनो एतस्यै देवतायै सायुज्यꣳसलोकतां जयति य एवं वेद ॥३४॥**

**इति प्रथमाध्याये तृतीयं ब्राह्मणम् ॥३॥**

हि करणानि सर्वदा स्वव्यापारेषु लक्ष्यन्ते। तस्मादेते वागादय एतेन प्राणाभिधानेनाख्यायन्ते प्राणा इत्येवमभिधीयन्ते। संप्रति विद्याफलमाह—तेन ह वावेति। य एवं सर्वकरणानां प्राणतमतां प्राणशब्दाभिधेयत्वं च वेति स विद्वान्यस्मिन् कुले जातो भवति तत्कुलं तेन ह वाव तेनैव विदुषाऽऽख्यायते लौकिकैरमुष्येदं कुलमिति विद्वन्नाम्नैव प्रथितं भवति। किं च यः कश्चिदु हैवंविदा प्राणात्मदर्शिना सह प्रतिपक्षी सन् स्पर्द्धते सोऽस्मिन्नेव शरीरेऽनुशुष्य दीर्घकालं शोषं गत्वैव ह किलान्ततो म्रियते न सहसाऽनुपद्रुतो म्रियत इति भावः। एवमुक्तं प्राणदर्शनमुपसंहरति—इत्यध्यात्ममिति। इत्येवमध्यात्मं प्राणादिदर्शनमुक्तम्। उक्तोपसंहारोऽधिदैवतप्रदर्शनार्थः ॥३२॥

अथानन्तरमधिदैवतं देवताविषय दर्शनमुच्यते। कस्य देवताविशेषस्य व्रतधारणं श्रेय इति मीमांस्यते। अध्यात्मवत्सर्वं ज्ञेयम्। ज्वलिष्याम्येवाहमित्यग्निर्व्रतं दध्रे इत्यादि यथादैवतं स्वं स्वं देवताव्यापारमनतिक्रम्याऽन्या देवता विद्युदाद्या व्रतं दध्रिर इत्यर्थः। स इति दृष्टान्तोऽध्यात्मं यथा वागादीनामेषां प्राणानां मध्ये मध्यमः प्राणो मृत्युनाऽनाप्तः स्वकर्मणो न प्रच्यावितः स्वेन प्राणव्रतेनाभग्नव्रतः। एवमेतासामग्न्यादीनां देवतानां मध्ये वायुरपि मृत्युनाऽनाप्तः। स्वेनैव वायुव्रतेनाभग्नव्रतः। एतदेव प्रकटयति—म्लोचन्तीति। हि यस्मादाध्यात्मिकवागादिवदन्या अग्न्याद्या देवता म्लोचन्त्यस्तं यन्ति स्वकर्मभ्य उपरमन्ते न वायुरस्तं याति यथा मध्यमः प्राणोऽनः सैषाऽनस्तमिताऽविनाशिव्रता देवता यद्वायुर्योऽयं वायुः एवमध्यात्ममधिदैवं च मीमांसित्वा वायोर्व्रतमभग्नमिति निर्धारितम् ॥३३॥

उक्तार्थदार्ढ्याय मन्त्रमवतारयति—अथैष इति। अथाप्येतस्यैवार्थस्य प्रकाशक एव श्लोको मन्त्रो भवति। यतश्च यस्माद्वायोः प्राणाच्च क्रमेणाऽधिदैवतं सूर्योऽध्यात्मं च चक्षुः प्रातःकाले पुरुषस्य प्रबोधककाले च यथाक्रममुदेत्युद्गच्छति। यत्र वायौ प्राणे चापरसंध्यासमये पुरुषस्य स्वापसमये च यथाक्रमं सूर्यश्चक्षुश्चास्तं गच्छतीति मन्त्रप्रथमार्द्धस्थयच्छब्दार्थं श्रुतिराह—प्राणादिति। प्राणादधिदैवाध्यात्मरूपादेव सूर्योऽधिदैवतमध्यात्मं च चक्षुरुदेति। प्राण एवास्तमेति। यतश्चेत्यादिश्लोके अपूर्णताज्ञापनार्थं प्राणादित्यादि। ब्राह्मणव्यवहितं श्लोकस्योत्तरार्द्धमाह—तं देवा इति। देवा वागादयोऽग्न्यादयश्च तं धर्मं वायुव्रतं प्राणव्रतं चावश्यानुष्ठेयमिति चक्रिरे धृतवन्तः। स एव प्राणवायुव्रतलक्षणो धर्म एवाद्येदानीमनुवर्तते। स उ स एव धर्मः श्वोपि भविष्यत्यपि कालेऽनुवर्तिष्यते च देवैरिति मन्त्रोत्तरार्द्धं संक्षेपतः श्रुतिर्व्याकरोति—यद्वा एत इति। अमुर्हि अमुष्मिन् काले एते वागादयोऽग्न्यादयश्च यद्वै यदेव वायुव्रतं प्राणव्रतं चाध्रियन्त तदेव व्रतमद्यापि कुर्वन्त्यनुवर्तन्तेऽभग्नत्वेन देवैः मीमांसितं ते अनुगच्छन्तीत्यर्थः।

अग्निरहस्ये इदमेवोक्तम्। "यदा वै पुरुषः स्वपिति प्राणं तर्हि वागप्येति प्राणं चक्षुः प्राणं मनः प्राणं श्रोत्रं तदा प्रबुध्यते प्राणादेवाधि पुनर्जायन्त इत्यध्यात्मम् अथाधिदैवतं यदा वा अग्निरनुगच्छति वायुं तर्ह्यनूद्वाति तस्मादेनमुदवासीदित्याहुर्वायुं ह्यनूद्वाति यदाऽऽदित्योऽस्तमेति वायुं तर्हि प्रविशति वायुं चन्द्रमा वायौ दिशः प्रतिष्ठिता वायोरेवाधि पुनर्जायन्त" इति। अनुगच्छति गाम्यति वायुमनु तदधीन एव। उद्वात्यस्तमेति उदवानीदस्तगत इत्यर्थः। प्रकरणार्थमुपसंहरति—तस्मादेकमेवेति। यस्माद्वागादयोऽग्न्यादयो वा परिस्पन्दविरहिणा न स्थातुमर्हन्ति तेन तैः सर्वैर्देवैरनु-

अथ प्रथमाध्याये चतुर्थं ब्राह्मणम्

**त्रयं वा इदं नाम रूपं कर्म । तेषां नाम्नां वागित्येतदेषामु-**
**क्थमतो हि सर्वाणि नामान्युत्तिष्ठन्त्येतदेषाँ सामैतद्धि**
**सर्वैर्नामभिः सममेतदेषां ब्रह्मैतद्धि सर्वाणि नामानि बिभर्ति ॥१॥**

५ **अथ रूपाणाम् । चक्षुरित्येतदेषामुक्थमतो हि सर्वाणि रूपाण्युत्तिष्ठन्त्येतदेषाँ सामैतद्धि सर्वैं रूपैः सममेतदेषां ब्रह्मैतद्धि सर्वाणि रूपाणि बिभर्ति ॥२॥**

वर्त्यंते प्राणव्रतमेवैकम् । तस्मादन्योऽप्येकमेव व्रतं चरेत् । अध्यात्म प्राणव्रतमधिदैवं च वायुव्रतमित्येकमेव व्रतं धार्यमित्यर्थः । किं तदित्यत आह—प्राण्याच्चैवेति । प्राण्यात्प्राणनव्यापारं कुर्यादपान्यादपाननव्यापारं कुर्यात् । न हि प्राणनापाननलक्षणस्य प्राणव्यापारस्योपरमोऽस्ति । तस्मादिन्द्रियान्तरव्यापारं हित्वा तदेवैकं व्रतं चरेदित्यर्थः ।
१० एतत्प्राणव्रताकरणं बाधकमाह—नेन्मेति । नेच्छब्दः परिभये । नेन्मा मां पाप्मा श्रमरूपी मृत्युराप्नुवत्प्राप्नुवत्प्राप्नुयात् । यद्यहमस्माद्व्रतात्प्रच्युतः स्यां तर्हि मृत्युना ग्रस्त एवाहमित्येवं त्रस्तो धारयेत्प्राणव्रतमित्यभिप्रायः । प्राणव्रतस्य सकृदनुष्ठानमाशंक्य सर्वेन्द्रियव्यापारनिवृत्तिरूपं संन्यासलक्षणं प्राणव्रतमामरणमनुवर्तयेदित्याह—यद्यु चरेदिति । उ पुनर्यदि कदाचिच्चरेत्प्रारमेत्प्राणव्रत तर्हि समापिपयिषेत्समापयितुमिच्छेत् । यदि ह्यस्मात् व्रतादुपरमेत्प्राणः परिभूतः स्यात् देवाश्च । तस्मात्समापयेदेव सर्वभूतेषु वागादयोऽन्यादयश्च मदात्मका एवाहं च सूत्ररूपप्राणात्मा सर्वात्मा
१५ परिस्पदकृदित्येवमुपासकस्य फलमाह–तेनेति । तेन उ तेनानेन प्राणात्मप्रतिपत्त्यैतस्यै देवतायै एतस्या एव प्राणदेवतायाः सायुज्य सयुग्भावमेकात्मकत्वं विज्ञानप्रकर्षापेक्षं, सलोकतामेकस्थानत्व विज्ञाननिकर्षापेक्षं जयति प्राप्नोतीत्यर्थ. ॥२३॥

इति श्रीविद्यारण्यमुनिविरचितमाध्यन्दिनशाखीयबृहदारण्यकोपनिषद्दीपिकाया
प्रथमाध्याये तृतीयं ब्राह्मणं ॥३॥

अथ योऽन्या देवतामुपास्त इत्यत्र सूचिताया अविद्यायाः साध्यसाधनलक्षणो व्याकृताऽव्याकृतरूपो विस्तर
२० इयता ग्रंथेन निरूपितः । इदानी प्रतिपत्तिसौकर्यार्थं तस्यैव नामरूपकर्मात्मत्वेनोपसंहारं वक्तुमुपसहारब्राह्मणं प्रवर्तते—त्रयं वेति । इदं यथोक्तं व्याकृताऽव्याकृतात्मकं जगत्त्रयं वै त्र्यात्मकमेव । किं तत्त्रयमित्याह—नामरूपं कर्मेति । सर्वस्य जगतो नामादिमात्रत्वं कथमवधार्यंत इत्यत आह—तेषामिति । तेषां यथोपन्यस्ताना नामरूपकर्मणां मध्ये एषां नाम्नां नामविशेषाणां यज्ञदत्तो देवदत्त इत्येवमादीना वागित्येतस्य शब्दस्य योऽर्थः शब्दसामान्यमात्रमेतदुक्थ कारणमुपादानं सैन्धवलवणकणानां सैन्धवाचल इव यः कश्च शब्दो वागेव सेत्युक्तत्वाद्वागिति शब्दसामान्यमुच्यते । 
२५ उक्थत्वमुपपादयितुं हेतुमाह–अतो हीति । हि यस्मादतोऽस्माद्वाक्शब्दाभिधेयान्नामसामान्यात्सर्वाणि नामानि यज्ञदत्तो देवदत्त इत्येवमादिप्रविभागान्युत्तिष्ठन्त्युत्पद्यन्ते प्रविभज्यन्ते लवणाचलाल्लवणकणा इव । कार्याणा कारणेऽन्तर्भाववद्विशेषाणा सामान्येऽन्तर्भावात् । कथ सामान्यविशेषभाव इति सामत्वं साधयति—एतदिति । एतच्छब्दसामान्यमेषा नामविशेषाणां साम समत्वात्साम सामान्यमित्यर्थः । समत्वमेव साधयति—एतद्धीति । हि यस्मादेतद्वाग्रूप शब्दसामान्यं सर्वैर्नामभिरात्मविशेषैः समं तुल्यं नामविशेषाणां नाममात्रादात्मलाभात् । तस्मादविशेषात् तत्रैवान्तर्भाव इत्यर्थः । 
३० तथैषा नामविशेषाणामेतद्वाक्छब्दवाच्यं वस्तु ब्रह्म आत्मा ततः शब्दमात्रान्नामविशेषाणामात्मलाभो भवतीत्यर्थः । एव तदेव साधयति—एतद्धीति । हि यस्मादेतद्वाग्रूपं शब्दसामान्यं सर्वाणि नामानि स्वरूपप्रदानेन बिभर्ति धारयति । एवं सामान्यविशेषोपपत्तेरात्मप्रदानोपपत्तेश्च नामविशेषाणा शब्दमात्रता सिद्धा एवमुत्तरयोरपि कार्यकारणत्वोपपत्तेः यथोक्तं सर्वं योज्यम् ॥१॥

अथ नामव्याख्यानानन्तरं रूपाणां सितासितप्रभृतीना चक्षुरिति तच्च रूपसामान्यं तदपि प्रकाश्यमात्रं ।
३५ एतदेव रूपविशेषाणामुक्थमुक्थमित्यादि पूर्ववत् ॥२॥

अथ कर्मणाम्। आत्मेत्येतदेषामुक्थमतो हि सर्वाणि कर्माण्युत्तिष्ठन्त्येतदेषाँ सामैतद्धि सर्वैः कर्मभिः सममेतदेषां ब्रह्मैतद्धि सर्वाणि कर्माणि बिभर्ति तदेतत्त्रयँ सदेकमयमात्माऽऽत्मो एकः सन्नेतत्त्रयं तदेतदमृतँ सत्त्येन च्छन्नं प्राणो वा अमृतं नामरूपे सत्यं ताभ्यामयं प्राणश्छन्नः ॥३॥ ५

इति प्रथमाध्याये चतुर्थं ब्राह्मणम् ॥४॥

इति माध्यन्दिनशाखीयबृहदारण्यकोपनिषदि प्रथमोऽध्याय ॥१॥

इति बृहदारण्यकक्रमेण चतुर्थोऽध्यायः ॥४॥

## अथ द्वितीयोऽध्यायः

### अथ द्वितीयाध्याये प्रथमं ब्राह्मणम्

दृप्तबालाकिर्हानूचानो गार्ग्य आस। स होवाचाजातशत्रुं काश्यं ब्रह्म ते ब्रवाणीति स होवाचाजातशत्रुः सहस्रमेतस्यां वाचि दद्मो जनको जनक इति वै जना धावन्तीति ॥१॥ १०

अथ रूपव्याख्यानानन्तरं कर्मणा सर्वकर्मविशेषाणां मननदर्शनचलनात्मकानामात्माऽऽत्मशब्दवाच्यशरीर-निर्वर्त्यकर्मसामान्यमित्येतदेषामुक्थमित्यादि पूर्ववत्। आत्मना शरीरेण कर्म करोति शरीरे च सर्वकर्माभिव्यज्यतेऽ-तस्तत्स्थत्वादात्मनः कर्मात्मेत्युच्यते। एवं नामरूपकर्मात्मत्वेन सक्षिप्तस्यापि जगतः पुनः संक्षेपतामाह—तदेतत्त्रय- १५ मिति। तदेतद्यथोक्तं नामरूपकर्माख्य त्रयं त्रिदण्डविष्टम्भवत्परस्परं संहतं सदेकम्। केनैकत्वमित्यपेक्षायामात्मनेत्याह—अयमिति। अयं प्रत्यक्ष आत्मा कार्यकरणसङ्घातः पिण्ड एतन्मयो वा अयमात्मेत्यादिनाऽन्नत्रयतया व्याख्यातः। एवं नामादित्रयस्य देहमात्रत्वे कथं व्यवहारासाकर्यमित्याशंक्याह—आत्मो एक इति। उ पुनरात्मा कार्यकरण-सङ्घातः पिण्ड एकः सन्नध्यात्माधिभूताधिदैवभावेन व्यवस्थितमेतदेव नामरूपं कर्मेति त्रयं नामादिभिन्नस्य देहस्या-गृह्यमाणत्वाद्व्यवहारासाकर्यमित्यर्थः। एकस्मिन्नपि सङ्घाते कार्यकरणरूपेणावान्तरविभागमाह—तदेतदमृतमिति। २० तदेतद्वक्ष्यमाणममृतम्। सत्यस्येत्यस्य वाक्यस्यार्थं श्रुतिःस्वयमेवाह—प्राणोवा अमृतमिति। प्राणो वै लिङ्गात्मा करणात्म-कोऽन्तरुपष्टंभक आत्मभूतोऽविनाशी। अमृतममृतभूतः स्थूलदेहे गच्छत्यपि यावन्मोक्षस्थायित्वान्नामरूपे पंचीकृतभूतात्मके शरीरावस्थे कार्यात्मके सत्यं सत्यशब्दवाच्ये। सच्च त्यं भूतपञ्चकं ते के? नामरूप इत्यर्थः। ताभ्यां बाह्याभ्यां शरीरात्मकाभ्यामुपजनापायधर्मिभ्या नामरूपाभ्यामयं क्रियात्मकस्तयोरुपष्टंभकः प्राणः छन्नोऽप्रकाशीकृतः। अतः प्रत्यगात्मतत्त्व सुतरां दुर्विज्ञेयमिति तज्ज्ञानेऽत्रहितैर्भाव्यमिति भावः। एतदेव संसारतत्त्वमविद्याविषयं प्रदर्शितम्॥३॥ २५

इति श्रीविद्यारण्यमुनिविरचितमाध्यन्दिनशाखीयबृहदारण्यकोपनिषद्दीपिकाया प्रथमाध्याये चतुर्थं ब्राह्मणम् ॥४॥

अथ प्रथमेऽध्याये सूचितयोर्विद्याविद्ययोरविद्या प्रपञ्चिता। संप्रति विद्यां प्रपञ्चयितुं श्रुतिर्द्वितीयमध्याय-मारभते। तत्र वक्तृश्रोतृरूपाख्यायिकयाऽविद्याविषयमेव ब्रह्मात्मत्वेनोपगतो गार्ग्यो ब्राह्मणो वक्ता पूर्वपक्षवाद्युप-स्थाप्यते। मुख्यब्रह्मात्मदर्शी राजा अजातशत्रुः श्रोता सिद्धान्तवादी चोपस्थाप्यते श्रुत्या। एवं हि यतः पूर्वपक्ष- ३० सिद्धान्ताख्यायिकारूपेण समर्थ्यमानोऽर्थः श्रोतुश्चित्तवशमेतीति सुखप्रतिपत्त्यर्थमजातशत्रुब्राह्मण प्रवर्तते—दृप्तबाला-किर्हेति। दृप्तोऽसम्यग्ब्रह्मवित्त्वादेव गर्वितो बलाकाया अपत्य बालाकिर्दृप्तश्चासौ बालाकिश्चेति दृप्तबालाकिर्हशब्द ऐतिह्यार्थः आख्यायिकायाः। अनूचानोऽनुवचनसमर्थो वाग्मी गार्ग्यो गर्गगोत्रापत्यं ब्राह्मणः आस बभूव। स ह पुनः क्वचित्कालविशेषेऽजातशत्रुमजातशत्रुनामानं राजानं काश्यं काशीराजमभिगम्य हे राजन्! ते तुभ्यं ब्रह्म मुख्यं ब्रवाणि कथयामीत्युवाचोक्तवान्। स श्रद्धादिसंपन्नोऽजातशत्रुरेतस्या ब्रह्म ते ब्रवाणीत्यस्या वाचि वचनमात्रे गवा ३५ सहस्रं दद्म इति तं ब्राह्मणं प्रत्युवाच। ननु साक्षाद्ब्रह्मकथनमेव सहस्रदाने निमित्त कस्मान्नेष्यत इत्याशंकाया श्रुती

स होवाच गार्ग्यः । य एवासावादित्ये पुरुष एतमेवाहं
ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा
अतिष्ठाः सर्वेषां भूतानां मूर्धा राजेति वा अहमेतमुपास इति
स य एतमेवमुपास्तेऽतिष्ठाः सर्वेषां भूतानां मूर्धा राजा भवति ॥२॥

५ स होवाच गार्ग्यः । य एवासौ चन्द्रे पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचा-
जातशत्रुर्मा मैतस्मिन्संवदिष्ठा बृहन्पाण्डरवासाः सोमो राजेति वा अहमेत-
मुपास इति स य एतमेवमुपास्तेऽहरहर्ह सुतः प्रसुतो भवति नास्यान्नं क्षीयते ॥३॥

स होवाच गार्ग्यः । य एवायं विद्युति पुरुष एतमेवाहं ब्रह्मोपास इति स
होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठास्तेजस्वीति वा अहमेतमुपास इति
१० स य एतमेवमुपास्ते तेजस्वी ह भवति तेजस्विनी हास्य प्रजा भवति ॥४॥

स होवाच गार्ग्यः । य एवायमाकाशे पुरुष एतमेवाहं ब्रह्मोपास इति स
होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठाः पूर्णमप्रवर्तीति वा अहमेतमुपास
इति स य एतमेवमुपास्ते पूर्यते प्रजया पशुभिर्नास्यास्माल्लोकात्प्रजोद्वर्तते ॥५॥

राज्ञोऽभिप्रायमाह—जनको जनक इतीति । वैशब्दो जनको दाता जनकः श्रोतेति प्रसिद्धघवद्योतनार्थः । जनको
१५ हि जनकः शुश्रूषुरिति वै ब्रह्म शुश्रूषवो विवक्षव. प्रतिजिघृक्षवश्च जना ब्राह्मणा धावन्त्यभिगच्छन्ति । तस्मात्तत्सर्वं
मय्यपि संभावितवानसीति मुख्यब्रह्मकथनं विनैव तद्वचनमात्रेणैव सहस्रं दद्म इति राज्ञोऽभिप्राय इत्यर्थः ॥१॥

एवमभिमुखीभूतं शुश्रूषुं राजानं प्रति स गार्ग्यो ह किलोवाच । य एवासावादित्ये चक्षुषि चैकोऽभिमानी
पुरुषश्चक्षुर्द्वारेणेह हृदि प्रविष्टोऽहं कर्ता भोक्ता चेत्यवस्थितमेव पुरुषमस्मिन्कार्यकरणसङ्घातेऽहं ब्रह्मोपासे निरन्तरं
पश्यामि तत्तमेव पुरुषं ब्रह्म तुभ्य ब्रवीमि त्वमप्युपास्वेत्युक्ते सोऽजातशत्रुर्होवाच मामेति हस्तेन विनिवारयन् हे गार्ग्य !
२० एतस्मिन् विज्ञेये ब्रह्मणि मा मा सवदिष्ठा मा संवादं कार्षीरहमिदं जानामि । मा मेति "आबाधे चे"ति द्विर्वचनम् । अथ
चेन्मन्यसे जानीषे त्वं ब्रह्ममात्रं न तु तद्विशेषणोपासनफलानीति तन्न मन्तव्यं यत सर्वमेतदह जाने इत्याह—अतिष्ठा
इति । अतीत्य सर्वाणि भूतानि तिष्ठतीत्यतिष्ठाः सर्वेषा भूतानां मूर्द्धा शिरः पूज्य राजा च राजते दीप्यत इति व्युत्पत्ते-
र्दीप्तिगुणोपेतत्वाद्राजा एतैर्विशेषणैर्विशिष्टमेतद्ब्रह्माऽहमस्मिन्कार्यकरणसङ्घाते कर्तृ भोक्तृ चेत्येतं पुरुषमुपासेऽनवरतं
पश्यामि । य एवमुक्तगुणत्रयविशिष्टमेतमुपास्ते सोऽतिष्ठाः सर्वेषा भूताना मूर्द्धा च राजा च भवतीति । यथागुणोपासनमेव
२५ हि फलम् । तं यथा यथोपासते तदेव भवतीति श्रुतेः ॥२॥

एवं संवादेनादित्यब्रह्मण्यजातशत्रुणा प्रत्याख्याते चन्द्रमसि ब्रह्मान्तरं गार्ग्यः प्रतिपन्नवानित्याह सहोवाच
गार्ग्यः । य एवासौ चन्द्रे मनसि चैकः पुरुषो भोक्ता कर्ता चेति पूर्ववद्विशेषणम् । बृहन्महन्पाण्डर शुक्ल वासो यस्य स
पाण्डरवासाः चन्द्राभिमानिनः प्राणस्य अप्शरीरत्वात्सोमो राजेति चन्द्रमा लतात्मकश्च सोमो योऽभिषूयते तं बुद्धिनिष्ठं
च पुरुषमेकीकृत्याहं ब्रह्मोपासे । अस्योपासकस्य प्रकृत्यात्मके यज्ञे ह किलाहरहः प्रत्यहं सोमः सुतोऽभिषुतो भवति ।
३० विकृत्यात्मके च यज्ञे प्रसुतः प्रकृष्ट सुतो भवति । यथोक्तोपासकस्य प्रकृतिविकृत्यनुष्ठानसामर्थ्यं लीलालभ्य भवतीत्यर्थः ।
अस्यान्नात्मनोपासकस्यान्नं च न क्षीयते अन्नाक्षय्यत्वोपासनानुसारित्वादुपपन्नमित्यर्थः ॥३॥

संवाददोषेण चन्द्रब्रह्मण्यपि प्रत्याख्याते ब्रह्मान्तरमाहेत्यादि सर्वत्र बोध्यम् । तथा विद्युति त्वचि हृदये चैका
देवता तेजस्वीति तस्या विशेषणं तेजस्वीह भवतीति तेजस्विनी हास्य प्रजा भवतीति च फलम् । विद्युता बहुत्वस्याङ्गी-
करणादात्मनि प्रजाया चेति फलबाहुल्यम् ॥४॥

३५ तथा आकाशे हृदये चैक पूर्णमप्रवर्ति चेति विशेषणद्वयम् । अप्रवर्तिमत्वमक्रियावत्वं वा पूर्णत्वविशेषण-
फलमिदं पूर्यते प्रजया पशुभिरप्रवर्तित्वविशेषणफल नास्यास्माल्लोकात्प्रजोद्वर्तते विच्छिद्यत इति प्रजासन्ताना-
विच्छित्तिः ॥५॥

स होवाच गार्ग्यः । य एवायं वायौ पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा इन्द्रो वैकुण्ठोऽपराजिता सेनेति वा अहमेतमुपास इति स एतमेवमुपास्ते जिष्णुर्हापराजिष्णुर्भवत्यन्यतस्त्यजायी ॥६॥
स होवाच गार्ग्यः । य एवायमग्नौ पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा विषासहिरिति वा अहमेतमुपास इति स य एतमेवमुपास्ते विषासहिर्ह भवति विषासहिर्हास्य प्रजा भवति ॥७॥ ५
स होवाच गार्ग्यः । य एवायमप्सु पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठाः प्रतिरूप इति वा अहमेतमुपास इति स य एतमेवमुपास्ते प्रतिरूपँ हैवैनमुपगच्छति नाप्रतिरूपमथो प्रतिरूपोऽस्माज्जायते ॥८॥
स होवाच गार्ग्यः । य एवायमादर्शे पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा रोचिष्णुरिति वा अहमेतमुपास इति स य एतमेवमुपास्ते रोचिष्णुर्ह भवति रोचिष्णुर्हास्य प्रजा भवत्यथो यैः सन्निगच्छति सर्वाँस्तानतिरोचते ॥९॥ १०
स होवाच गार्ग्यः । य एवायं दिक्षु पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा द्वितीयोऽनपग इति वा अहमेतमुपास ति स य एतमेवमुपास्ते द्वितीयवान्ह भवति नास्माद्गणश्छिद्यते ॥१०॥ १५
स होवाच गार्ग्यः । य एवायं यन्तं पश्चाच्छब्दोऽनूदेत्येतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा असुरिति वा अहमेतमुपास इति स य एतमेवमुपास्ते सर्वँ हैवास्मिँल्लोक आयुरेति नैनं पुरा कालात्प्राणो जहाति ॥११॥

तथा वायौ प्राणे हृदि चैका तस्या विशेषणमिंद्रः परमेश्वरः वैकुण्ठोऽप्रसह्यः । न पराजितपूर्वः मरुतां गणत्वप्रसिद्धेरेकस्मिन् वायावपराजिता सेनेति गुणः संभवतीति बोध्यम् । विशेषणविशेषत्रयस्य फलत्रयं क्रमेण व्युत्पादयति– २० जिष्णुरित्यादिना । जिष्णुर्जयशीलोऽपराजितस्वभावः अन्यतस्त्यजायीति । अन्यतस्त्यानामन्यमातृतो जाताना सपत्नानां जयशीलो भवति ॥६॥

तथा अग्नौ वाचि हृदि चैका विषासहिरिति विशेषणम् । यद्वविर्विष्यते क्षिप्यते तत्सर्वं भस्मीकरणेन सहते इति विषासहिरग्निः फलोक्तौ विषासहिः परेषां मर्षयिता । अग्नीना बाहुल्यादुपासकस्यात्मनि प्रजायां च दीप्ताग्नित्वं सिध्यति विद्युतामिवेति बोध्यम् ॥७॥ २५

अप्सु रेतसि हृदि चैका । तस्या विशेषणं प्रतिरूपोऽनुरूपः श्रुतिस्मृत्यप्रतिकूल इत्यर्थः । फलं प्रतिरूपं श्रुतिस्मृतिशासनानुरूपमेवैतमुपासकमुपगच्छति प्राप्नोति नाप्रतिरूपं न विपरीतम् । अथो अन्यच्च फलमस्मादुपासितुः प्रतिरूपः श्रुतिस्मृत्यनुकूलः पुत्रो जायते न विपरीत इत्यर्थः ॥८॥

आदर्शे प्रसादस्वभावे चान्यत्र खड्गादौ हार्दे सत्त्वशुद्धिस्वाभाव्ये चैका । तस्या विशेषण रोचिष्णुः दीप्तिस्वभाव. फलं च तदेव रोचिष्णुत्वम् । अथो अन्यच्च यैः सह सन्निगच्छति संबध्यते तान्सर्वानतिरोचते रोचनाधार- ३० बाहुल्यात्फलबाहुल्यम् ॥९॥

दिक्षु कर्णयोर्हृदि चैकाऽश्विनौ देवाववियुक्तस्वभावौ । तस्य देवस्य गुणो द्वितीयवत्त्वमनपगत्वं च अन्योन्यमवियुक्तता दिशामश्विनोश्चैवधर्मत्वात्तदेव फलमुपासकस्य द्वितीयवत्त्वं साधुभृत्यपरिवृतत्वमस्मादुपासकाद्गणः समूहश्च न छिद्यते विच्छेदं न प्राप्नोतीत्यर्थः ॥१०॥

यन्तं गच्छन्तं पश्चात्पृष्ठतो य एवायं शब्दोऽनूदेत्युत्पद्यतेऽध्यात्मं च जीवनहेतुः प्राणस्तमेकीकृत्यैतमेवोपासे ३५

स होवाच गार्ग्यः । य एवायं छायामयः पुरुष एतमेवाहं ब्रह्मोपास इति स
होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा मृत्युरिति वा अहमेतमुपास इति स य
एतमेवमुपास्ते सर्वं हैवास्मिँल्लोक आयुरेति नैनं पुरा कालान्मृत्युरागच्छति ॥१२॥
स होवाच गार्ग्यः । य एवायमात्मनि पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचा-
५ जातशत्रुर्मा मैतस्मिन्संवदिष्ठा आत्मन्वीति वा अहमेतमुपास इति स य एतमेव-
मुपास्त आत्मन्वी ह भवत्यात्मन्विनी हास्य प्रजा भवति स ह तूष्णीमास गार्ग्यः ॥१३॥

स होवाचाजातशत्रुः । एतावन्नू३ इत्येतावद्धीति नैतावता
विदितं भवतीति स होवाच गार्ग्य उप त्वाऽयानीति ॥१४॥

स होवाचाजातशत्रुः । प्रतिलोमं वै तद्यद्ब्राह्मणः क्षत्रियमुपेयाद्ब्रह्म मे
१० वक्ष्यतीति व्येव त्वा ज्ञपयिष्यामीति तं पाणावादायोत्तस्थौ तौ ह
पुरुषं सुप्तमाजग्मतुस्तमेतैर्नामभिरामन्त्रयांचक्रे बृहन्पाण्डरवासः सोम
राजन्निति स नोत्तस्थौ तं पाणिनाऽऽपेषं बोधयांचकार स होत्तस्थौ ॥१५॥

तस्य विशेषः असुर्जीवनहेतुः प्राणः तस्य फलं सर्वं सम्पूर्णं यावत्कर्मोपात्तं ह किल आयुरस्मिन्लोक एति गच्छति कर्म-
परिच्छिन्नकालात् पूर्वं रोगादिना पीड्यमानमप्येन प्राणो न जहाति न त्यजति ॥११॥
१५ छायायां बाह्ये तमस्यध्यात्मं चावरणात्मकेऽज्ञाने हृदि चैका देवता तस्या विशेषणं मृत्युः फलं सर्वं पूर्ववद्
एतावांस्तु विशेषो यन्मृत्योरागमनात्प्राग्रोगादिपीडाया अभावः ॥१२॥
व्यस्तानि ब्रह्माण्युपन्यस्य समस्तब्रह्मोपदिशति आत्मनि प्रजापतौ बुद्धौ च हृदि चैका । तस्या विशेषण-
मात्मन्वी आत्माऽस्यास्तीत्यात्मन्वी स्वतन्त्रः । फलमात्मन्वी । आत्मन्विनी ह किलास्य प्रजा भवति । फलस्यात्मगा-
मित्वात् न प्रजाया तदभिधानमुचित्तमित्याशङ्काया बुद्धिबहुत्वात्प्रजायां संपादनम् । एवमजातशत्रुणा स्वयं परिज्ञा-
२० तत्वेनैव क्रमेण प्रत्याख्यातेषु ब्रह्मसु स गार्ग्यो ह किल क्षीणब्रह्मविज्ञानोऽप्रतिभासमानोत्तरस्तूष्णीमवाक्षिरा
आस बभूव ॥१३॥
त तथाभूतमालक्ष्य सोऽजातशत्रुर्होवाचैतावन्न्विति । किमेतावदेव ब्रह्म निर्ज्ञातमाहोस्विदधिकमप्यस्तीति
विचारार्था प्लुतिः । गार्ग्य आह—एतावद्धीति । एतावदेव नातः परं विदितमस्ति । अजातशत्रुराह नैतावता विदितेन
ब्रह्म विदितं भवति । किमर्थं गर्वितोऽसि ब्रह्म ते ब्रवाणीति किमेतावद्विदितं विदितमेव न भवतीति नैतावता विदितं
२५ भवतीति ब्रुवता राज्ञाऽधिकं ब्रह्म ज्ञातव्यमस्तीति दर्शित भवति । तच्चानुपसन्नाय न वक्तव्यमित्याचारविधिज्ञो गार्ग्यः
स्वयमेव ह किलोवाच यथाऽन्यं शिष्यो गुरुमुपेयात्तथाह त्वा त्वामुपायान्युपगच्छानीत्यर्थः ॥१४॥
एवमुक्तः सोऽजातशत्रुर्होवाच प्रतिलोम वै विपरीतमेव तद्यद्ब्राह्मण उत्तमवर्णः आचार्यत्वेऽधिकृतः सन्
क्षत्रियमनाचार्यस्वभावमुपेयादुपगच्छेच्छिष्यवृत्त्या ब्रह्म मे वक्ष्यतीत्येवम् । एतदाचारविधिशास्त्रेषु निषिद्ध "अनुव्रज्या च
शुश्रूषा यावदध्ययनं गुरोः" "नाब्राह्मणे गुरौ शिष्यो वासमात्यन्तिकं वसेत् । अब्राह्मणादध्ययनमापत्काले विधीयते ॥"
३० इत्यादिना । तस्माद्धे गार्ग्य त्वमाचार्य एव सन् तिष्ठाहं तु त्वा त्वा यस्मिन् विदिते ब्रह्म विदितं भवति तन्मुख्यं वेद्य
ब्रह्म विज्ञपयिष्याम्येव विज्ञप्तिमेव करिष्यामि । एव प्रतिज्ञातब्रह्मबोधार्थमुपक्रमत इत्याह—तं पाणाविति । त गार्ग्यं
सलज्जमालक्ष्य विस्रम्भजननाय पाणौ हस्ते आदाय गृहीत्वा उत्तस्थौ उत्थितान् । ततस्तौ ह गार्ग्याजातशत्रू क्वचिद्राज-
गृहप्रदेशे सुप्त पुरुष प्रत्याजग्मतुरागतौ तं च सुप्तं पुरुषं प्राप्य बृहन्पाण्डरवासः सोम राजन्नित्येतैर्नामभिरामन्त्रयाञ्चक्रे ।
राज्ञा एवामामन्त्र्यमाणोऽपि स सुप्तः पुरुषो नोत्तस्थौ नोत्थितवान् । तमप्रतिबुध्यमान पुरुष पाणिना हस्तेनाऽऽपेषमापि-
३५ ष्यापिष्य बोधयाञ्चकार प्रतिबोधितवान् । ततः स पुरुषो ह किलोत्तस्थावुत्थितवान् । तथा च बृहन्पाण्डरवास इत्यादि-
प्राणात्मचन्द्रादिनाम्ना असंबोधनेन गार्ग्याभिमतप्राणदेवतातिरिक्त एवात्माऽस्मिञ्छरीरे कर्ता भोक्ता न प्राण इति

स होवाचाजातशत्रुः । यत्रैष एतत्सुप्तोऽभूद्य एष विज्ञानमयः पुरुषः क्वैष तदाभूत्कुत एतदागादिति तदु ह न मेने गार्ग्यः ॥१६॥

स होवाचाजातशत्रुः । यत्रैष एतत्सुप्तोऽभूद्य एष विज्ञानमयः पुरुषस्तदेषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते ॥१७॥

तानि यदा गृह्णाति । अथ हैतत्पुरुषः स्वपिति नाम तद्गृहीत एव प्राणो भवति गृहीता वाग्गृहीतं चक्षुर्गृहीतं श्रोत्रं गृहीतं मनः ॥१८॥ ५

स यत्रैतत्स्वप्न्यया चरति । ते हास्य लोकास्तदुतेव महाराजो भवत्युतेव महाब्राह्मण उतेवोच्चावचं निगच्छति ॥१९॥

निर्णीतम् । अन्यथोच्छ्वासनिःश्वासरूपेण व्याप्रियमाणस्य प्राणस्य न संबोधनाश्रवणमनुत्थानं च भवेदापेषणेन वा प्राणशरीरसंघातमात्रो भोक्ता नेति निश्चितमन्यथा संघातमात्राविशेषात् स्पर्शमात्रेणाप्युत्थानं स्यादिति भावः ॥१५॥ १०

स ह किलाजातशत्रुरेवं व्यतिरिक्तात्मास्तित्वं प्रतिपाद्याऽस्यात्मनः स्वाभाविकस्वरूपबोधनार्थं स्वयमेव गार्ग्यं प्रत्युवाच हे गार्ग्य य एष प्रसिद्धो विज्ञानमयः पुरुषः विज्ञायत अनेनेति व्युत्पत्त्या संकल्पविकल्पाद्यात्मकमन्तःकरणं बुद्धिर्विज्ञानमुच्यते । तन्मयस्तत्प्रायस्तस्मिन्नुपलभ्यस्तेन चोपलभ्यो इत्यर्थः । पुरि देहे शेत इति पुरुषः । एष यत्र यस्मिन् पाणिपेषणप्रतिबोधात् प्राक्काले एतत्स्वप्नं यथा भवति तथा सुप्तोऽभूत् तदा एष विज्ञानमयः पुरुषः क्व कस्मिन् स्वाभाव्ये कीदृग्विधे स्वरूपे स्थितोऽभूत् । कुतः कीदृग्विधात् स्वरूपात् प्रच्युतः सन् एतदागमनं यथा १५ स्यात्तथाऽऽगादागतः पाणिपेषोत्तरकालमिति । एवमधिकरणमपादानं चोभयं पृष्टो गार्ग्यः किमुक्तवानित्यत आह—तदु हेति । उ पुनर्यद्विज्ञानमयस्य पुरुषस्य स्वापे संवेशनस्थानं यतश्च स्थानाज्जागरिते कार्यकरणसंघाते चेतसि [पुनरा]गमनं तदुभयं स्वरूपभूतं वक्तुं प्रष्टुं वा प्रतिभानरहितो गार्ग्यो ह किल न मेने न ज्ञातवान् ॥१६॥

जागरिते कर्तृत्वभोक्तृत्वादिकं नात्मनः स्वाभाविकं किन्तु वागाद्युपाधिसंबन्धकृतमेव स्वापे तद्व्यतिरेकेण कर्तृत्वादेर्व्यतिरेकदर्शनादिति दर्शयितुं प्रश्नानुवादपूर्वकं प्रथमप्रश्नस्योत्तरमाहेति श्रुतिर्दर्शयति—**स होवाचाजातशत्रुरिति**। यत्र यस्मिन् काले सुप्तोऽभूद्य एष विज्ञानमयः पुरुषस्तस्मिन्काले एषां प्राणानां वागादीनां विज्ञानं स्वस्वविषयगतप्रतिनियतप्रकाशनसामर्थ्यं विज्ञानेनान्तःकरणोपादानाज्ञानजनितेनान्तःकरणगताभिव्यक्तिविशेषविज्ञानेन चैतन्याभासलक्षणेनादाय गृहीत्वाऽन्तर्हृदये हृदयस्य मध्ये य आकाशः आकाशशब्देन जीवस्य स्वाभाविकस्वरूपभूतः परमात्मोच्यते । तस्मिन्स्वाभाविकेऽसांसारिपरमात्मन्याकाशे शेते लिङ्गोपाधिसंबन्धकृत विशेषात्मस्वरूपमुत्सृज्याविशेषे स्वाभाविके आत्मन्येव केवल वर्तत इत्यभिप्रायः ॥१७॥ २५

यदा शरीरेन्द्रियाध्यक्षतामुत्सृजति तदासौ स्वात्मनि वर्तत इति कथमवगम्यत इत्यपेक्षायां नामप्रसिध्येत्याह—तानि यदेति । तानि वागादीनि विज्ञानसाधनानि यदा यस्मिन्काले गृह्णात्यादत्तेऽथ तदा ह किल पुरुष इति पुरुषस्यैतत्स्वपिति नामातोऽस्य ह प्रसिद्धं गौणमेव स्वपितीत्येतन्नाम भवति स्वमेवात्मानमप्येत्यपिगच्छतीति स्वपितीत्युच्यत इति व्युत्पत्तेः । स्वपितीति नाम प्रसिद्ध्याऽऽत्मनः संसारधर्मविलक्षणे रूपेऽवगतेऽपि नात्र युक्तिरस्तीत्याशङ्कायामाह—तद्गृहीत एवेति । तत्तत्र स्वापकाले गृहीत एव प्राणो भवति प्राण इति घ्राणेन्द्रियं वागादिप्रकरणात् ३० गृहीता वाक् चक्षुः श्रोत्र मनश्च गृहीतं भवतीति । तथा च वागादिसंबन्धाभावात्स्वापे कर्तृत्वाद्यसंबन्धः जागरिते च वागादिसंबन्धात् कर्तृत्वादिकमतोऽन्वयव्यतिरेकाभ्यां वागाद्युपाधिकमात्मनः संसारित्वमिति निश्चितम् ॥१८॥

ननु दर्शनलक्षणाया स्वप्नावस्थाया वागादिसंबन्धाभावेपि कर्तृत्वादिसंसारस्य दर्शनाद्व्यतिरेकासिद्धिरित्याशङ्काया तत्रापि जाग्रद्वासनायाः सत्त्वात्परिकल्पितस्य स्वप्नप्रपञ्चस्य मृषात्वान्न व्यतिरेकासिद्धिरित्यतः स्वपत

१. चैतन्याभासलक्षणेनेत्यत्रैव वक्ष्यते ।

**स यथा महाराजो जानपदान्गृहीत्वा स्वे जनपदे यथाकामं परिवर्तेतैवमेवैष एतत्प्राणान्गृहीत्वा स्वे शरीरे यथाकामं परिवर्तते ॥२०॥**

**अथ यदा सुषुप्तो भवति । यदा न कस्यचन वेद हिता नाम नाड्यो द्वासप्ततिः सहस्राणि हृदयात्पुरीततमभिप्रतिष्ठन्ते ताभिः प्रत्यवसृप्य पुरीतति शेते ॥२१॥**

५ **स यथा कुमारो वा महाब्राह्मणो वा । अतिघ्नीमानन्दस्य गत्वा शयीतैवमेवैष एतच्छेते ॥२२॥**

शुद्धत्वमेवेत्यभिप्रेत्याह—स यत्रेति । स प्रकृत आत्मा यत्र यस्मिन् काले दर्शनलक्षणया स्वप्न्यया स्वप्नवृत्त्या चरति वर्तते । तदाह—प्रसिद्धोऽस्यात्मनस्तेऽनन्तरं वक्ष्यमाणलोकाः कर्मफलानि । के ते इत्यत आह—तदुतेवेति । तत्तत्र स्वप्नकाले उतापि महाराज इव भवति महाराजत्वमिवास्य सोऽयं लोकः न पुनर्जागरिते इव साक्षान्महाराजत्वम् । तथा उत महाब्राह्मण इव । उताप्युच्चावचम् । उच्चं च देवत्वाद्यवचं च तिर्यक्त्वादीत्युच्चावचमिव निगच्छति नितरां प्राप्नोतीत्यर्थः ॥१९॥

१० तथा चेवशब्दप्रयोगाद्व्यभिचारदर्शनाच्चैते महाराजत्वादयो लोका मृषैव नास्यात्मभूता इत्युक्तमर्थं दृष्टान्तपूर्वकमाह—स यथेति । स यथा दृष्टान्तो यथा महाराजः सार्वभौमो जानपदान् जनपदे देशे भवान् राजोपकरणभूतान् भृत्यानन्यांश्च तथाविधान् गृहीत्वोपादाय स्व आत्मीये एव जनपदे जयादिनोपार्जिते यथाकामं यो यः कामो यस्य तं काममनतिक्रम्य यथेच्छं परिवर्तेत परिक्रामेदित्यर्थः । एवमेव एष विज्ञानमय आत्मा एतदिति ग्रहणक्रियाया विशेषणं एतद्ग्रहणं यथा स्यात्तथा प्राणान्वागादीन् गृहीत्वा जागरितस्थानेभ्य उपसंहृत्य स्वशरीरे
१५ स्व एव देहे न बहिर्यथाकामं परिवर्तते । कामकर्मभ्यामुद्भासिता पूर्वानुभूतवस्तुसदृशा वासना अनुभवतीत्यर्थः । तस्मादसौ विज्ञानमयो द्रष्टा दृश्येभ्यः स्वप्नजागरितलोकेभ्योऽन्यो विशुद्ध इति सिद्धम् ॥२०॥

दर्शनवृत्तौ स्वप्ने वासनाराशेर्दृश्यत्वाद् संसारधर्मतेत्यात्मनो विशुद्धताऽवगता । तत्र यथाकामं परिवर्तेत इति कामवशात् परिवर्तनमुक्तं द्रष्टृदृश्यसंबन्धश्चास्य स्वाभाविक इत्यशुद्धतेत्याशङ्काया तत्संबन्धस्य सुषुप्तौ व्यतिरेकदर्शनेनास्वाभाविकत्वाच्छुद्धत्वमेवास्य स्वभाविकमिति वक्तुमाह—अथ यदेति । अथ पुनर्यदा यस्मिन्काले जाग्रत्स्वप्नयो-
२० द्रष्टा दर्शनवृत्तिं स्वप्नं हित्वा सुषुप्तः सुष्ठु सुप्तो विशेषज्ञानाभावेन संप्रसाद स्वस्वरूपब्रह्मैक्य गतो भवति सलिलमिवान्यसंबन्धकालुष्यं हित्वा स्वाभाव्येन प्रसीदतीत्यर्थः । कदा सुषुप्तो भवति यदा यस्मिन् काले न कस्यचन न कंचन विषय वेद विजानाति कस्यचन वा शब्दादेः संबन्धिवस्त्वन्तरं किंचन न वेद । अस्मिन्पक्षे किंचनेत्यध्याहार्यम् । केन पुनः क्रमेण सुषुप्तो भवतीत्यत आह—हिता नामेति । हिता नाम हितफलप्राप्तिनिमित्तत्वाद्धिता इत्येवं नाम्न्यो नाड्यः शिरा देहस्यान्नरसविपरिणामभूतास्ताश्च द्वाभ्यामधिका सप्ततिर्द्वासप्ततिः सहस्राणि हृदयात्पुरीततमभि-
२५ प्रतिष्ठन्ते । हृदयं नामोदरवक्षःप्रदेशयोर्मध्यस्थितः पुण्डरीकाकारो मांसपिण्डस्तत्परिवेष्टन पुरीतदित्युच्यते । इह पुनस्तदुपलक्षितं शरीर पुरीतच्छब्देनाभिप्रेतम् । तथा च हृदयात्पुरीतत शरीरमभिप्रतिष्ठन्त इति कृत्स्नं शरीर व्याप्नुवन्त्योऽश्वत्थपर्णराजय इव बहिर्मुखाः प्रवृत्ता अभितो निस्सरन्तीत्यर्थः । ततः किमित्यत आह—ताभिरिति । ताभिर्नाडीभिः कृत्वा जाग्रद्विषयाया बुद्धेः कर्मवशात् प्रत्यवसर्पणमनुविज्ञानमय आत्मा प्रत्यवसृप्याथेन्द्रियाण्युपसंहृत्य पुरीतति शरीरे शेते । अग्निवत्तप्त लोहपिण्डमविशेषेण संव्याप्य वर्तत इत्यथ. । ननु पूर्वं विज्ञानमयो हृदयाकाशे
३० ब्रह्मणि शेत इत्युक्त्वेदानी पुरीतति शयनमाचक्षाणस्य कथं न पूर्वापरविरोधः स्यादिति चेत् । सत्य, स्वाभाविके एव स्वात्मनि वर्तमानोऽपि कर्मानुगतबुद्ध्यनुवृत्तित्वात्पुरीतति शेत इत्युपचाराद्युच्यतेऽतो नोक्तविरोध. ॥२१॥

उक्तं शयनं दृष्टान्तपूर्वकमाह—स यथेति । सर्वसंसारदुःखवियुक्तेयमवस्थेत्यत्र स इति दृष्टान्तः । यथा कुमार अत्यन्तबालो वा महाब्राह्मणो वा अत्यन्तपरिपक्वविद्याविनयसंपन्नो यथोक्तकृदतिघ्नीमतिशयने दुःखं हन्तीत्यतिघ्नी । आनन्दस्य सुखस्यावस्था ता गत्वा प्राप्य शयीत दुःखाननुविद्धसुखस्वाभाव्येऽवतिष्ठेत । एवमेवैष विज्ञानमयः
३५ सर्वसंसारधर्मातीत एतच्छयनं यथा स्यात्तथा शेते सुषुप्तो वर्तत इत्यर्थः ॥२२॥

**स यथोर्णनाभिस्तन्तुनोच्चरेत् । यथाग्नेः क्षुद्रा विष्फुलिङ्गा व्युच्चरन्त्येवमेवा-
स्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि सर्व एत
आत्मानो व्युच्चरन्ति तस्योपनिषत्सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम् ॥२३॥**

**इति द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥१॥**

अथ द्वितीयाध्याये द्वितीयं ब्राह्मणम् ५

**यो ह वै शिशुम् । साधानँ सप्रत्याधानँ सस्थूणँ-
सदामं वेद सप्त ह द्विषतो भ्रातृव्यानवरुणद्धि ॥१॥**

**अयं वाव शिशुर्योऽयं मध्यमः प्राणः तस्येदमेवाधानमिदं
प्रत्याधानं प्राणः स्थूणान्नं दाम तमेताः सप्ताक्षितय उपतिष्ठन्ते ॥२॥**

एवं क्वैप तदाभूदि[त्य]स्य पूर्वप्रश्नस्य प्रतिवचनमुक्तम् । अनेन च प्रश्ननिर्णयेन विज्ञानमयस्य स्वभावतो १० विशुद्धेरसंसारित्वं चोक्तम् । इदानी तस्याद्वितीयत्वं प्रकटयितुं कुत एतदागादिति द्वितीयप्रश्नस्यापाकरणार्थं प्रति-वचनमाह—प यथेति । स इति दृष्टान्तो यथा लोके ऊर्णनाभिर्लूताख्यः कीटविशेपोऽसहाय एव सन् तन्तुना स्वात्मनोऽविभक्तेनोच्चरेदुद्गच्छेत् । न च तस्योद्गमने स्वतोऽतिरिक्तं कारकान्तरमस्ति । यथा चैकरूपादेकस्मादग्नेः क्षुद्रा अल्पा विष्फुलिङ्गा अग्न्यवयवा व्युच्चरन्ति । विविधं नाना वोच्चरन्त्युद्गच्छन्ति प्रसर्पन्ति । यथेमौ दृष्टान्तौ कारकभेदाभावेऽपि प्रवृत्तिं प्राक्प्रवृतेः स्वभावत एकत्व च दर्शयतः । एवमेवास्मादात्मनो विज्ञानमयस्य प्राक्प्रतिबोधा- १५ त्स्वापे यत्स्वरूपं तस्मादेतस्मादात्मनः सकाशात्सर्वे प्राणा वागादयः सर्वे लोका भूरादयः सर्वकर्मफलभूताः सर्वे देवाः प्राणलोकाधिष्ठातारोऽग्न्यादयः सर्वाणि भूतानि ब्रह्मादिस्तम्बपर्यन्तानि प्राणिजातानि सर्व एत आत्मानः । उपाधि-सम्पर्कजनितप्रवुद्ध्यमानविशेषात्मानो व्युच्चरन्ति । यस्मादात्मनः स्थावरजङ्गममिदं जगदग्निविष्फुलिङ्गवदनिशं व्युच्चरति । यस्मिन्नेव जलबुद्बुदवत्प्रलीयते यदात्मकं च स्थितिकाले वर्तते तस्यात्मनो ब्रह्मण उपनिषदुपममीपं नितरा सादयति गमयति विज्ञानात्मानमिति व्युत्पत्तेरुपनिषदित्यात्मनोऽभिधायकः शब्दः । काऽसावुपनिपदित्यत २० आह—सत्यस्य सत्यमितीति । किं पुनः सत्यं किं वा सत्यस्य सत्यमित्यत आह—प्राणा वै सत्यमिति । सच्च त्यच्चेति व्युत्पत्तेः तेषा प्राणाना मध्ये एव उक्त आत्मा सत्यमबाध्य रूपमित्यर्थः ॥२३॥

इति श्रीविद्यारण्यमुनिविरचितमाध्यन्दिनशाखीयबृहदारण्यकोपनिपद्दीपिकाया
द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥१॥

एवं प्राणा वै सत्यमित्यादिब्राह्मणभागेन व्याख्याताया अप्युपनिषदो विशेषतोऽर्थप्रकाशनाय ब्राह्मणद्वयम् । २५ तत्र प्राणा वै सत्यमित्यंशेनोक्तायाः प्राणोपनिषदो व्याख्यानाय शिशुब्राह्मणं प्रवर्तते—यो ह वै शिशुमिति । यो ह वै साधानं सप्रत्याधानं सस्थूणं सदामं च शिशुं वेदोपास्ते स ह किल सप्त सप्तसंख्याकान् चक्षुर्द्वयं नासिकाद्वय श्रोत्रद्वयं मुखमिति चैव सप्त द्विषतो द्वेषकर्तॄन् भ्रातृव्यान् शत्रून् अवरुणद्धि अपावृणोति विनाशयति जितेन्द्रियो भवति इत्यर्थः । भ्रातृव्या हि द्विविधाः द्विपन्तोऽद्विपन्तश्च । तत्र सप्तशीर्पण्याः प्राणा विपयोपलब्धिद्वाराणि तत्प्रभवा विपयरागाः सहजत्वाद्भ्रातृव्यास्ते ह्यस्य स्वात्मस्थां दृष्टिं विपयविपयां कुर्वन्ति तेन प्रत्यगात्मेक्षणप्रतिपेधकरत्वात्ते द्वेष्टारो ३० भ्रातृव्या इति भावः ॥१॥

एवं फलश्रवणेनाभिमुखीभूताय जिज्ञासवे आह—अयं वावेति । अयं वावायमेव शिशुरिव शिशुः विपये-ष्वितरकरणवदपटुत्वात् । कोऽसौ सोऽयं मध्यमः शरीरमध्यस्थः प्राणो लिङ्गशरीरात्मा पञ्चधा शरीरमाविष्टो बृहत्पाण्डरवासः सोमराजन्नित्युक्तः पड्वीशशङ्कुनिदर्शनाद्यस्मिन्वाङ्मनःप्रभृतीनि करणानि विपक्तानि स एव शिशुरित्यर्थः । तस्य शिशो प्राणस्य वत्सस्थानीयस्य करणात्मन इदं कार्यात्मकं शरीरमेवाधानमाधीयतेऽस्मिन्नित्या- ३५ धानमधिष्ठानम् । तस्य प्राणस्येदं प्रसिद्धं शिरो मस्तकं प्रत्याधानं प्रदेशविशेषेषु प्रतिप्रत्याधीयत इति प्रत्याधान प्राणो

**तद्या इमा अक्षन्लोहिन्यो राजयः । ताभिरेनं रुद्रोऽन्वायत्तोऽथ या अक्षन्नाप-स्ताभिः पर्जन्यो या कनीनका तयाऽऽदित्यो यच्छुक्लं तेनाग्निर्यत्कृष्णं तेनेन्द्रोऽधरयैनं वर्तन्या पृथिव्यन्वायत्ता द्यौरुत्तरया नास्यान्नं क्षीयते य एवं वेद ॥३॥**

**तदेष श्लोको भवति । अर्वाग्बिलश्चमस ऊर्ध्वबुध्नस्तस्मिन्यशो निहितं विश्वरूपम् । तस्यासत ऋषयः सप्त तीरे वागष्टमी ब्रह्मणा संविदानेति ॥४॥**

५

**अर्वाग्बिलश्चमस ऊर्ध्वबुध्न इति । इदं तच्छिर एष ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्नस्तस्मिन्यशो निहितं विश्वरूपमिति प्राणा वै यशो विश्वरूपं प्राणानेतदाह तस्यासत ऋषयः सप्त तीर इति प्राणा वा ऋषयः प्राणानेतदाह वागष्टमी ब्रह्मणा संविदानेति वाग्घ्यष्टमी ब्रह्मणा संवित्ते ॥५॥**

१० बलापर्यायाऽन्नपानजनिता शक्तिः स्थूणाऽवष्टम्भो बलावष्टम्भो हि प्राणोऽस्मिञ्छरीरेऽवतिष्ठत इत्यर्थः । तस्य प्राणस्यान्नं भुक्तमशनं दाम उभयतः पाशं वत्सस्येव बन्धनं बन्धनरज्जुरित्यर्थः । इदानी तस्यैव शिशोः प्रत्याधाने शिरस्यारूढस्य चक्षुषि काश्चन उपनिषद उच्यन्ते—तमेता इति । तं करणात्मकं शरीरेऽन्नबन्धनं चक्षुष्यूढं प्राणमेता वक्ष्यमाणाः सप्तसंख्याका अक्षितय अक्षितिहेतुत्वात् अक्षितय उपतिष्ठन्ते उपस्थानं कुर्वन्ति । यद्यपि "उपान्मन्त्रकरण" इति आदित्यं गायत्र्योपतिष्ठत इतिवन्मन्त्रकरणे उपपूर्वस्य तिष्ठतेरात्मनेपदं विहितम् । इहापि सप्तदेवताभिधानानि
१५ मन्त्रस्थानीयानि करणान्यतस्तिष्ठतेरत्राप्यात्मने पद न विरुद्धम् ॥२॥

कास्ता अक्षितय इत्यत आह—तद्या इमा इति । तत्र या इमा. प्रसिद्धा अक्षन्नक्षणि नेत्रे लोहिन्यो लोहिता राजयो रेखास्ताभिः रेखाभिर्द्वारभूताभिरेनं मध्यम प्राणं रुद्रोऽन्वायत्तोऽनुगत उपतिष्ठत इत्यर्थः । अथानन्तर-मक्षन्नक्षणि या आपो धूमादिसंयोगेनाभिव्यज्यमानास्ताभिरद्भिर्द्वारभूताभिः पर्जन्यो देवतात्मा अन्वायत्तः । या कनीनका चक्षुषि दृक्शक्तिस्तया कनीनकया द्वारभूतया आदित्यो मध्यमं प्राणमुपतिष्ठते । यच्छुक्लं चक्षुषि तेनैन-
२० मग्निरुपतिष्ठते । यत्कृष्णं चक्षुषि तेनेन्द्रोऽन्वायत्तोऽधरयाऽधस्तन्या वर्तन्या पक्ष्मणा एनं मध्यमप्राणं पृथिव्यन्वायत्ता । अधरत्वसामान्यात् । द्यौः स्वर्गं उत्तरयोपरिभागस्थया वर्तन्या पक्ष्मणा अन्वायत्ता ऊर्ध्वत्वसामान्यात् । एवं-विधोपास्तिफलमाह—नास्यान्नमिति । य एवमुक्तप्रकारेण प्राणस्यान्नभूताः सप्ताक्षितीर्वेदास्योपासकस्यान्न न क्षीयते ॥३॥

उक्ता रुद्रादिदेवताः प्राणोपासनाद्वागाद्यात्मका एव संवृत्ता इति वागादय एवात्र रुद्रादिशब्दाभिधेया इत्यभि-
२५ प्रेत्योक्तेऽर्थे मन्त्रसंमतिमाह—तत्तत्रैतस्मिन्नर्थे एष श्लोको मन्त्रो भवति । अर्वाग्बिलश्चमस इत्यादिमन्त्रसमाप्ति-द्योतकेतिशब्दान्त. ॥४॥

तं मन्त्रं प्रतीकग्रहणपूर्वकं व्याकरोति—अर्वाग्बिलश्चमस ऊर्ध्व बुध्न इत्यस्मिन्मन्त्रभागे तत्प्राणस्य प्रत्याधानत्वेनोक्तमिदं प्रसिद्धं शिर एवैषोऽर्वाग्बिलोऽवाङ्मुख ऊर्ध्वबुध्न उर्ध्वासनश्चमसः चमत्यस्मिन्निति व्युत्पत्त्या चमस. पात्रविशेषः उक्तः । कथं, हि यस्मादेव शिरोलक्षणश्चमसोऽर्वाग्बिलोऽधस्थितस्यैव मुखस्य बिलरूपत्वाच्छिरसो
३० बुध्नाकारस्योपरिभागे दृश्यमानत्वाच्च तस्माच्छिर एवोक्तलक्षणश्चमसः । तस्मिञ्छिरसि विश्वरूप नानारूपं यशो निहितं स्थितं यथा सोमश्चमसे इति मन्त्रभागः । किं पुनस्तद्यशः प्राणा. श्रोत्रादयः सप्त पूर्वोक्तास्तेषु प्रसृता वागादयश्च वै प्रसिद्धं विश्वरूपं विषयाणामनेकत्वेनानेकरूपं शब्दादिज्ञानलक्षणं यशः शिरसि निहितम् । अतः प्राणानेव एतद्यश इति मन्त्रभाग आह । तस्य शिरोलक्षणस्य चमसस्य तीरे पार्श्वे सप्त ऋषय आसत वर्तन्ते इति मन्त्रः । प्राणाः करणाश्रयाः परिस्पन्दात्मकाः सप्त वायव एव ऋषयः । प्रसिद्धऋषिवदेषा शब्दादिविषयद्रष्टृत्वात्तदाश्रयत्वेन तद्रूपत्वादृषित्वमतः
३५ प्राणानेतन्मन्त्रवाक्यमाह । ब्रह्मणा शब्दराशिना वेदेन सह संविदाना संसर्गं गच्छन्ती शब्दराशिमुच्चारयती वागष्टम्यष्ट-सङ्ख्यापूरणीति मन्त्रोक्तेऽर्थे ब्राह्मणं हेतुमाह—वाग्घीति । हि यस्मादष्टमी वाग्ब्रह्मणा वेदेन सह संवित्ते संसर्गं प्राप्नोति । वक्तृत्वात्तृत्वभेदेन द्विधा वागिष्टा । तत्र वक्तृत्वेनाष्टमी सप्तमी चात्तृत्वेनेत्यविरोध इति भावः ॥५॥

इमावेव गोतमभरद्वाजौ । अयमेव गोतमोऽयं भरद्वाज इमावेव विश्वामित्र-
जमदग्नी अयमेव विश्वामित्रोऽयं जमदग्निरिमावेव वसिष्ठकश्यपाव-
यमेव वसिष्ठोऽयं कश्यपो वागेवात्रिर्वाचा ह्यन्नमद्यतेऽत्तिर्ह वै
नामैतद्यदत्रिरिति सर्वस्यात्ता भवति सर्वमस्यान्नं भवति य एवं वेद ॥६॥

इति द्वितीयाध्याये द्वितीयं ब्राह्मणम् ॥२॥ ५

अथ द्वितीयाध्याये तृतीयं ब्राह्मणम्

द्वे वाव ब्रह्मणो रूपे । मूर्तं चैवामूर्तं च मर्त्यं चामृतं च स्थितं च यच्च सच्च त्यं च ॥१॥
तदेतन्मूर्तम् । यदन्यद्वायोश्चान्यरिक्षाच्चैतन्मर्त्यमेतत्स्थितमेतत्सत् ॥२॥
तस्यैतस्य मूर्तस्य । एतस्य मर्त्यस्यैतस्य स्थितस्यैतस्य
सत एष रसो य एष तपति सतो ह्येष रसः ॥३॥ १०
अथामूर्तम् । वायुश्चान्तरिक्षं चैतदमृतमेतद्यदेतत्त्यम् ॥४॥

के ते सप्त ऋषय इत्यपेक्षायामाह—इमावेवेति । इमौ प्रसिद्धावेव कर्णौ भरद्वाजौ । अयमेव दक्षिणः कर्णो गौतमोऽयमेवोत्तरः कर्णो भरद्वाजो विपर्ययेण वा । चक्षुषी उपदिशन्नुवाचेमावेव विश्वामित्रजमदग्नी अयमेव दक्षिणं चक्षुर्विश्वामित्रोऽयमेवोत्तरं जमदग्निः विपर्ययेण वा । इमावेव नासापुटौ वसिष्ठकश्यपौ । अयमेव दक्षिणो नासापुटो वसिष्ठोऽयमेवोत्तरः कश्यपः विपर्ययेण वा । वागेवात्रिः । अदनक्रियायोगादत्रिः । हि यस्मात् वाचाऽन्नमद्यते भक्ष्यते १५ तस्माद्वाचोऽत्तिरिति ह वै प्रसिद्धं नामैतदत्तृत्वादत्तिरिति । अत्तिरेव सन् यदत्रिरिति श्रुत्या व्यपदिश्यते नाम तत्परोक्षे-णैव परोक्षप्रिया इव हि देवा इत्युक्तत्वात् । सप्रत्यत्रिनिर्वचनविज्ञानस्य प्राणयाथात्म्यवेदनस्य च फलमाह—सर्वस्यात्तेति । य एवमुक्तमत्रिनिर्वचनं प्राणयाथात्म्यं च वेद स मध्यमः प्राणो भूत्वाऽऽधानप्रत्याधानगतः सर्वस्यान्न-जातस्यात्ता भोक्तैव भवति न भोज्यं । सर्वमस्योपासकस्यान्नं भवति । भोज्याद्व्यावर्तत इत्यर्थः ॥६॥

इति श्रीविद्यारण्यमुनिविरचितमाध्यन्दिनशाखीयबृहदारण्यकोपनिषद्दीपिकाया २०
द्वितीयाध्याये द्वितीयं ब्राह्मणम् ॥२॥

अथ कथमेषां प्राणानां सत्यत्वं कथं वा ततोऽप्यात्मनः सत्यत्वमिति जिज्ञासायां कार्यद्वारेण सत्यात्मकाना स्वरूपावधारणार्थं मूर्तामूर्तब्राह्मणं प्रवर्तते—द्वे वावेति । यदपोहद्वारेण नेति नेतीत्यादिना निर्दिधारयिषितं ब्रह्म तस्य ब्रह्मणो मायामये द्वे वाव द्वे एव रूपे । रूप्यते ज्ञाप्यतेऽरूपं परं ब्रह्म याभ्यामविद्याध्यारोप्यमाणाभ्यां रूपाभ्यां ते रूपे । के ते इत्यत आह—मूर्तं चैवामूर्तं चेति । मूर्तामूर्तयोः प्रत्येकमर्थप्रतिपादकानि विशेषणान्याह—मर्त्यं च मरणधर्मि । २५ अमृतं च तद्विपरीतम् । स्थितं च स्थास्नु परिच्छिन्नमिति यावत् । यच्च एति व्याप्नोतीति यत् अपरिच्छिन्नं स्थितविप-रीतं सच्च प्रत्यक्षेणोपलभ्यमानासाधारणधर्मवत् । त्यं च त्यत् तद्विपरीत त्यदित्येव सर्वदा परोक्षाभिधानार्हम् ॥१॥

के ते मूर्तामूर्ते कस्य वा कानि विशेषणानीति विशेषो न ज्ञायत इत्यत आह—तदेतन्मूर्तमिति । यद्वा-योश्चान्तरिक्षाच्च भूतद्वयादन्यत्परिशिष्टं पृथिव्यादिभूतत्रयं तन्मूर्तं मूर्च्छितावयवमितरेतरानुप्रविष्टावयवं घन संहत-मित्यर्थ. । अत एवैतद्भूतत्रयं मर्त्यं मरणधर्मि । अत एवैतत्स्थित परिच्छिन्नम् । अत एवैतत्सत् विशेष्यमाणा- ३० साधारणधर्मवत् । चतुर्णां धर्माणामन्योन्याव्यभिचाराद्यथेष्टं विशेषणविशेष्यभावो हेतुहेतुमद्भावश्च निश्चेतव्यः ॥२॥

उक्तविशेषणचतुष्टयवतो भूतत्रयस्य सारिष्ठं कार्यं विशेषणानुवादपूर्वकमाह—तस्यैतस्य मूर्तस्यैतस्य स्थितस्यै-तस्य सत इति विशेषणविशिष्टस्य पृथिव्यादिभूतत्रयस्य एव रसः सारः । कोऽसौ य एष मण्डललक्षणः सविता तपति । तत्र हेतुर्हि यस्मान्मूर्तादिविशेषणचतुष्टयं मण्डलेऽवसीयते । तस्मात् सतः सदादिचतुष्टयविशेषणविशिष्टस्य भूतत्रय-स्यैष मण्डलभूतो रसः सार. एतच्चाधिदैविकस्य कार्यात्मकस्य ब्रह्मणो रूपम् ॥३॥ ३५

अथेदानीममूर्तमुच्यते—वायुश्चान्तरिक्षं च यत्परिशेषितं भूतद्वयमेतदमूर्तं मूर्तविपरीतं ब्रह्मणो रूपम् । शेषं पूर्ववत् ॥४॥

तस्यैतस्यामूर्तस्य । एतस्यामृतस्यैतस्य यत एतस्य त्यस्यैष रसो
य एष एतस्मिन्मण्डले पुरुषस्त्यस्य ह्येष रस इत्यधिदैवतम् ॥५॥
अथाध्यात्मम् । इदमेव मूर्तं यदन्यत्प्राणाच्च यश्चाय-
मन्तरात्मन्नाकाश एतन्मर्त्यमेतत्स्थितमेतत्सत् ॥६॥
५ तस्यैतस्य मूर्तस्य । एतस्य मर्त्यस्यैतस्य स्थित-
स्यैतस्य सत एष रसो यच्चक्षुः सतो ह्येष रसः ॥७॥
अथामूर्तम् । प्राणश्च यश्चायमन्तरात्मन्नाकाश एतदमृतमेतद्यदेतत्त्यम् ॥८॥
तस्यैतस्यामूर्तस्य । एतस्यामृतस्यैतस्य यत एतस्य त्यस्यैष
रसो योऽयं दक्षिणेऽक्षन्पुरुषस्त्यस्य ह्येष रसः ॥९॥
१० तस्य हैतस्य पुरुषस्य रूपम् । यथा माहारजनं वासो यथा
पाण्ड्वाविकं यथेन्द्रगोपो यथाग्न्यर्चिर्यथा पुण्डरीकं यथा
सकृद्विद्युत्तं सकृद्विद्युत्तेव ह वा अस्य श्रीर्भवति य एवं वेद ॥१०॥

एतस्यामूर्तादिचतुष्टयविशेषणविशिष्टस्य भूतद्वयस्यैष रसः कोऽसौ य एष एतस्मिन्मण्डले पुरुषः करणात्मको हिरण्यगर्भः प्राणस्तत्र हेतुः । हि यस्माद् त्यस्यामूर्तस्यैष मण्डलस्थः पुरुषो रसः पूर्ववत्सारिष्ठः । एतच्चाधिदैविकस्य
१५ करणात्मकस्य ब्रह्मणो रूपम् । एवमुक्तमाधिदैविकं विभागमुपसंहरति—इत्यधिदैवतमिति ॥५॥

अथानन्तरमध्यात्मं मूर्तामूर्तयोर्विभाग उच्यते । तत्र इदमेव मूर्तं; किं ? यत् प्राणाच्च शरीरस्थाद्रुच्छ्वासात्मकाद्वायोर्यश्चायमन्तरात्मन्नभ्यन्तर आत्मन्याकाशः तस्माच्चान्यच्छरीरारम्भकं भूतत्रयमेतन्मर्त्यमित्यादिपूर्वेण समानम् ॥६॥

एतस्य सत एष रसो यच्चक्षुरित्याध्यात्मिकस्य शरीरारंभकस्य कार्यस्यैष रसः सारः । तेन हि सारेण
२० समस्तमिदं शरीरं सारवत् यथाधिदैवतमादित्यमण्डलेन ॥७॥

एवमाध्यात्मिकस्य कार्यात्मकस्य ब्रह्मणो रूपं निरूप्य करणात्मकस्य रूप निरूपयितुमाह—अथामूर्तमिति । अथाधुना प्राणश्च यश्चायमन्तरात्मन् शरीरे आकाशः पूर्वोक्तस्तदमूर्तस्य रूपं परिशेषितं भूतद्वयम् । अन्यत्पूर्ववत् ॥८॥

एतस्य त्यस्यैष रसः सारो योऽयं दक्षिणेऽक्षन् दक्षिणेऽक्षिण पुरुषो लिङ्गशरीरात्मेत्यर्थः ॥९॥

अथास्य करणात्मनो वासनामयं रूपं निरूपयितुमाह—तस्य हैतस्येति । तस्याधिदैविकस्य पुरुषस्य प्रकृतस्य
२५ लिङ्गात्मनो ह किल एतस्याध्यात्मिकस्य लिङ्गपुरुषस्य मनसो वासनामयमिदं रूपम् । यथा लोके माहारजनं वासः महारजनं हरिद्रा तया रक्तं महारजनं वासो वस्त्रम् । एवं स्त्र्यादिविषयसंयोगे सति तादृशं रञ्जनाकारं चित्तस्य वासनारूपमुत्पद्यते । येनासौ पुरुषो रक्त इत्युच्यते वस्त्रादिवत् । यथा च लोके पाण्ड्वाविकमवेरिदमाविकमूर्णादि पाण्डुरं भवति तथाऽन्यद्वासनारूपं यथा च लोक इन्द्रगोपो वर्षाकाले कीटविशेषः कौसुम्भवदत्यन्तरक्तो भवति । एवमेवास्य वासनारूपं क्वचिद्विषयविशेषापेक्षया रागस्य तारतम्यं क्वचित्पुरुषचित्तवृत्त्यपेक्षयेति बोध्यम् । यथा लोकेऽ-
३० ग्न्यर्चिःभास्वरं भवति तथा क्वचित् कस्यचिद्वासनारूपम् । यथा च पुण्डरीकं शुक्लं तद्वदपि कस्यचिद्वासनारूपं यथा च लोके सकृद्विद्युत्तं सकृद्विद्योतनं सर्वतः प्रकाशकं भवति तथा ज्ञानप्रकाशविवृद्ध्यपेक्षया कस्यचिद्धिरण्यगर्भादिवासनारूपमुपजायते सत्वादितारतम्यादिति भावः । चरमोक्तहिरण्यगर्भवासनारूपोपासनफलमाह—सकृद्विद्युत्तेवेति । एवं यथोक्तं यत्तु वासनारूपमन्तेऽभिहितं सकृद्विद्योतनमिवेति तत्किल हिरण्यगर्भस्याऽव्याकृतात्प्रादुर्भवतस्तडिद्वत्सकृदेव व्यक्तीभवतीति । तत्तदीयं हिरण्यगर्भस्य वासनारूपं यो वेदास्योपासकस्य सकृद्विद्युत्तेव सकृद्विद्युत्तेव सकृद्विद्युदिव श्रीः
३५ ख्यातिर्ह वा एवमेव भवतीत्यर्थः हवा इत्यवधारणार्थौ निपातौ ॥१०॥

अथात आदेशः। नेति नेति न ह्येतस्मादिति नेत्यन्यत्परमस्त्यथ
नामधेयँ सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम् ॥११॥

इति द्वितीयाध्याये तृतीयं ब्राह्मणम् ॥३॥

अथ द्वितीयाध्याये चतुर्थं ब्राह्मणम्

मैत्रेयीति होवाच याज्ञवल्क्यः। उद्यास्यन्वा अरेऽहमस्मात्स्था- ५
नादस्मि हन्त तेऽनया कात्यायन्यान्तं करवाणीति ॥१॥
सा होवाच मैत्रेयी। यन्म इयं भगोः सर्वा पृथिवी वित्तेन पूर्णा
स्यात्कथं तेनामृता स्यामिति नेति होवाच याज्ञवल्क्यो यथैवोपकरण-
वतां जीवितं तथैव ते जीवितँ स्यादमृतत्वस्य तु नाशास्ति वित्तेनेति ॥२॥
सा होवाच मैत्रेयी। येनाहं नामृता स्यां किमहं १०
तेन कुर्यां यदेव भगवान्वेद तदेव मे ब्रूहीति ॥३॥

एवं सत्यस्येति षष्ठ्यन्तस्थूलसूक्ष्मप्रपञ्चात्मकहेयभूतसत्यशब्दार्थं व्याख्यायोपादेयभूतप्रथमान्तसत्यशब्दार्थव्याख्यानमारभ्यते—अथात आदेश इति। अथ सत्यस्य स्वरूपनिर्देशानन्तरं यत्सत्यस्य सत्यं तदेवावशिष्यते यस्मादतस्तस्मात्तस्य सत्यस्य ब्रह्मणो नेति नेतीत्येवमादेशो निर्देशः। तथा च नेति नेतीति वीप्सया मूर्तामूर्तंतद्वासनात्मकाविद्यातत्कार्यसर्वनिषेधावधित्वेन च तत्साक्षित्वेन च साक्षाद् ब्रह्म निर्दिष्टं भवति। तस्य निःसाक्षिकस्य च निषेधा- १५ संभवात्। ननु कस्मादेवं ब्रह्म निर्दिश्यत इत्यत आह—न ह्येतस्मादिति। विषयीकर्तव्या यावन्तः पदार्थास्ते सर्वे नकारद्वयस्य विषयाः सन्तो निर्दिश्यन्त इति कृत्वा नेति नेत्येतस्मादन्यन्निर्देशनं हि यस्मान्नास्ति तस्मादयमेव निर्देशो ब्रह्मणः यथा ग्रामो ग्रामो रमणीय इत्युक्ते राष्ट्रनिविष्टरमणीयसर्वग्रामसंग्रहः। एवं प्रकृतेऽपि नेति नेतीति वीप्सया व्याप्तव्यसर्वप्रकारसंग्रह इति भावः। तस्योपनिषदिति प्रतिज्ञातमुपसंहरति—अथ नामधेयमिति। यत उक्तप्रकारेण परमार्थसत्यं परं ब्रह्मैव अथातो युक्तमुक्तं ब्रह्मण उपनिषदिति नामधेयमभिधानम्। नामैव नामधेयम्। किं तत् सत्यस्य २० सत्यमिति। प्राणा वै सत्यं तेषामेष सत्यमिति व्याख्यातार्थम् ॥११॥

इति श्रीविद्यारण्यमुनिविरचितमाध्यन्दिनशाखीयबृहदारण्यकोपनिषद्दीपिकाया
द्वितीयाध्याये तृतीयं ब्राह्मणम् ॥३॥

दृप्तबालाकिर्हेति द्वितीयेऽध्याये ब्रह्मविद्याविषयं प्रत्यगात्मानं ब्रह्म ते ब्रवाणि व्येव त्वा ज्ञपयिष्यामीति प्रस्तुत्य च तद्ब्रह्मैकमद्वयं सर्वविशेषशून्यं क्रियाकारकफलस्वभावसत्यवाच्याशेषभूतधर्मप्रतिषेधद्वारेण नेति नेतीति विज्ञा- २५ पितम्। अस्या ब्रह्मविद्याया अङ्गत्वेन संन्यासविधित्सयैवाख्यायिकारूप मैत्रेयीब्राह्मणमारभ्यते—मैत्रेयीति होवाचेति। याज्ञवल्क्यो नाम ऋषिर्हं किल मैत्रेयीति स्वभार्यामामन्त्र्योवाच। किम्। अरे हे मैत्रेयि! अहमस्माद्गृहस्थात् स्थानादाश्रमादुद्यास्यन् वै ऊर्ध्वं पारिव्राज्याख्यमाश्रमान्तरं यास्यन्नेवास्मि भवाम्यतस्ते तवानुमतिं प्रार्थयामीत्यर्थः। किं चान्यत्। ते तवानया द्वितीयया भार्यया कात्यायन्या सहान्त विच्छेदं करवाणि द्रव्यविभागं कृत्वा वित्तेन युवां संविभज्य गमिष्यामीति भावः ॥१॥ ३०

सैवमुक्ता मैत्रेयी ह उवाच। भगो भगवन् मे मम यद्यदीयं सर्वा सागरपरिखा पृथिवी वित्तेन धनेन पूर्णा स्यात् तदा कथं किं तेन पृथिवीपूर्णवित्तसाध्येनाग्निहोत्रादिकर्मणाऽहममृताऽमरणधर्मिणी मुक्ता स्यां भवेयमिति प्रश्ने कृते नेति नैवामृता स्या इत्युत्तरं ह किल याज्ञवल्क्य उवाचोक्तवान्। किं तर्हि वित्तेन भवेदित्यत आह—यथैवेति। यथैव लोक उपकरणवता साधनसंपत्तियुक्तानां जीवितं सुखोपायभोगसंपत्त्या कालक्रमणं तथैव तद्वदेव तव जीवितं स्यात्। न तु पुनर्वित्तेन वित्तसाध्येन कर्मणाऽमृतत्वस्य मोक्षस्याऽऽशा तृष्णाऽस्ति आशापि न कर्तव्येति ३५ भावः ॥२॥

सैवमुक्ता मैत्रेयी ह प्रत्युवाच। यद्येव येनाहममृता न स्या तेन वित्तेनाहं किं कुर्यां किन्तु यदेव केवलममृतत्वसाधनं भगवान् ज्ञानसंपन्नो भवान् वेद विजानाति तदेवामृतत्वसाधनं मे मह्यं ब्रूहि इत्युपदिशेत्यर्थः ॥३॥

स होवाच याज्ञवल्क्यः । प्रिया बतारे नः सती प्रियं भाषस एह्यास्स्व व्याख्यास्यामि ते व्याचक्षाणस्य तु मे निदिध्यासस्वेति ब्रवीतु भगवानिति ॥४॥

स होवाच याज्ञवल्क्यः । न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवति न वा अरे जायायै कामाय जाया प्रिया भवत्यात्मनस्तु कामाय जाया ५ प्रिया भवति न वा अरे पुत्राणां कामाय पुत्राः प्रिया भवन्त्यात्मनस्तु कामाय पुत्राः प्रिया भवन्ति न वा अरे वित्तस्य कामाय वित्तं प्रियं भवत्यात्मनस्तु कामाय वित्तं प्रियं भवति न वा अरे ब्रह्मणः कामाय ब्रह्म प्रियं भवत्यात्मनस्तु कामाय ब्रह्म प्रियं भवति न वा अरे क्षत्रस्य कामाय क्षत्रं प्रियं भवत्यात्मनस्तु कामाय क्षत्रं प्रियं भवति न वा अरे लोकानां कामाय लोकाः प्रिया भवन्त्यात्मनस्तु कामाय लोकाः १० प्रिया भवन्ति न वा अरे देवानां कामाय देवाः प्रिया भवन्त्यात्मनस्तु कामाय देवाः प्रिया भवन्ति न वा अरे भूतानां कामाय भूतानि प्रियाणि भवन्त्यात्मनस्तु कामाय भूतानि प्रियाणि भवन्ति न वा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवत्यात्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदꣳ सर्वं विदितम् ॥५॥

१५ ब्रह्म तं परादात् । योऽन्यत्रात्मनो ब्रह्म वेद क्षत्रं तं परादाद्योऽन्यत्रात्मनः क्षत्रं वेद लोकास्तं परादुर्योऽन्यत्रात्मनो लोकान्वेद देवास्तं परादुर्योऽन्यत्रात्मनो देवान्वेद भूतानि तं परादुर्योऽन्यत्रात्मनो भूतानि वेद सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेदेदं ब्रह्मेदं क्षत्रमिमे लोका इमे देवा इमानि भूतानीदꣳ सर्वं यदयमात्मा ॥६॥

एवं वित्तसाध्येऽमृतत्वसाधने प्रत्याख्याते स्वाभिप्रायसंपत्तौ तुष्टः स ह याज्ञवल्क्य उवाच । अरे मैत्रेयि बतेत्यनु- २० कम्पाया नोऽस्माकं पूर्वमपि प्रिया सतीष्टा भवती त्वमिदानीमपि प्रियमेव भाषसे । अतस्त्वमेहि आगच्छ । आस्स्व उपविश । यत्त्वेष्टममृतत्वसाधनमात्मज्ञानं तद्व्याख्यास्यामि कथयिष्यामि । व्याचक्षाणस्य तु व्याख्यानं कुर्वतो मे मम वाक्यान्यर्थतो निदिध्यासस्व निश्चयेन ध्यातुमिच्छ इति । याज्ञवल्क्येनैवमुक्ता मैत्रेयी ब्रवीतु भगवानिति प्रत्युवाचेत्यर्थः ॥४॥

स याज्ञवल्क्योऽमृतत्वसाधनं वैराग्यमुपदिदिक्षुः जायापतिपुत्रादिभ्यः सकलसुखसाधनेभ्यः तत्संन्यासाय २५ विरागमुत्पादयन्नुवाच । अरे मैत्रेयि वै प्रसिद्धमेतल्लोके यत्पत्युर्भर्तुः कामाय प्रयोजनाय जायायाः पतिः प्रियो न भवति । किं तर्ह्यात्मनस्तु कामाय प्रयोजनायैव भार्यायाः पतिः प्रियो भवति । तथा न वा अरे जायाया इत्यादि समानम् । शेषं तु प्रसिद्धार्थम् । न वा अरे सर्वस्य कामायेति सर्वग्रहणमुक्तानुकार्थम् । तस्माल्लोकप्रसिद्धमेतदात्मैव प्रियो नान्यदिति । तदेतत्प्रेयः पुत्रादित्युपन्यस्तं तस्यैतद् वृत्तिस्थानीयं प्रपञ्चितम् । तस्मादात्मप्रीतिसाधनत्वादन्यत्र गौणी प्रीतिरात्मन्येव मुख्या । तस्मादरे मैत्रेयि परमप्रेमास्पदभूत आत्मा वा आत्मैव द्रष्टव्यो दर्शनविषयमापादयितव्यः ३० केनोपायेनेत्यत आह—श्रोतव्य इति । श्रोतव्यः पूर्वमाचार्यतः आगमतश्च पश्चान्मन्तव्यस्तर्कतः ततो निदिध्यासितव्यो निश्चयेन ध्यातव्यः । एवं हि श्रवणमनननिदिध्यासनसाधनैः निष्पादितैरात्मनि साक्षात्कृते किं स्यादित्यत आह— आत्मनो वा इति । अरे मैत्रेयि श्रवणेन श्रुत्वोपपन्नेन मत्या मननेन विज्ञानेन निदिध्यासनेन दृढीकृतेनाऽऽत्मनो वै दर्शनेन साक्षात्काररूपेणेदं सर्वं स्थावरजङ्गमात्मकमनात्मभूतमखिलं विदितमेव विज्ञातमेवेति ॥५॥

ननु कथमस्मिन्विदितेऽन्यत्सर्वं विदितं भवेदित्याशङ्कायामात्मव्यतिरेकेणान्यस्याभावादिति दर्शयितुमाह— ३५ ब्रह्म तमिति । यः कोऽप्यात्मनः सकाशादन्यत्र पार्थक्येन ब्रह्म ब्राह्मणजातिं वेद मन्यते । तमयथार्थदर्शिनं पुरुष

स यथा दुन्दुभेर्हन्यमानस्य । न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय
दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीतः ॥७॥
स यथा वीणायै वाद्यमानायै । न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय
वीणायै तु ग्रहणेन वीणावादस्य वा शब्दो गृहीतः ॥८॥
स यथा शङ्खस्य ध्मायमानस्य । न बाह्याञ्छब्दाञ्छक्नुयाद्-  ५
ग्रहणाय शङ्खस्य तु ग्रहणेन शङ्खध्मस्य वा शब्दो गृहीतः ॥९॥
स यथार्द्रैधाग्नेरभ्याहितस्य । पृथग्धूमा विनिश्चरन्त्येवं वा अरेऽस्य
महतो भूतस्य निश्श्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथ-
र्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनु-
व्याख्यानानि व्याख्यानान्यस्यैवैतानि सर्वाणि निश्श्वसितानि ॥१०॥  १०

ब्रह्म ब्राह्मणजातिः परादात्परादध्यात् पराकुर्यात्कैवल्यासम्बन्धिनं कुर्यात् । अयमनात्मस्वरूपेण मां पश्यतीत्य-पराधादिति भावः । परमात्मा हि सर्वेषामात्मा तथा क्षत्रं क्षत्रियजातिस्तं परादादित्यादि पूर्ववत् ॥६॥

उक्तं सर्वमनूद्य तस्यात्मानतिरिक्तत्वमित्युपसंहरति—इदं ब्रह्मेत्यादिना । यदयं योऽयमात्मा द्रष्टव्यः श्रोतव्य इति प्रकृतः स एवेदं सर्वमुक्तं च न ततः पृथगस्तीत्यर्थः । यस्मादात्मनो जायत आत्मन्येव लीयत आत्ममयं च स्थितिकाल एवमात्मन्यस्तीत्यादिप्रत्ययमाश्रित्य चिन्मात्रानुगमात्सर्वत्र चित्स्वरूपतैवेति गम्यते । यत्स्वरूपव्यतिरेकेण  १५ यस्याग्रहणं तस्य तदात्मकत्वमेवेति व्याप्तौ दृष्टान्तत्रयमाह—स यथा दुन्दुभेरिति । स इति दृष्टान्तो यथा लोके दुन्दुभेर्यदिर्हन्यमानस्य दण्डादिना ताड्यमानस्य बाह्यान् बहिर्भूतान् शब्दान् शब्दविशेषान् दुन्दुभिशब्दसामान्या-न्निष्कृष्टान् दुन्दुभिशब्दविशेषान् उच्चनीचादीन् ग्रहणाय ग्रहीतुं न शक्नुयात् न समर्थो भवेत् कथं तर्हि दुन्दुभिशब्द-विशेषाणां ग्रहणमित्यत आह—दुन्दुभेस्त्विति । दुन्दुभेस्तु दुन्दुभिशब्दसामान्यस्य ग्रहणेन तु दुन्दुभ्याघातस्य वा दुन्दुभेराहननमाघातस्तस्य दुन्दुभ्याघातविशिष्टस्य शब्दसामान्यस्य ग्रहणेन तु शब्दो दुन्दुभिशब्दविशेषो गृहीतः  २० स्यात् । यथैवं शब्दविशेषाः शब्दसामान्यान्नातिरिच्यन्ते तथा स्फुरणात्मकब्रह्मसामान्यात् स्फोर्यमाणाः पदार्था नातिरिच्यन्त इत्यर्थः ॥७॥

तथा स यथा वीणायै वाद्यमानाया इति । वीणाया वाद्यमानाया इत्यर्थः । षष्ठ्यर्थे चतुर्थी । समानमन्यत् । तथा स यथा स शङ्खस्य ध्मायमानस्य शब्देन संयोज्यमानस्यापूर्यमाणस्येत्यर्थः न बाह्यान् शब्दान् शक्नुयादित्येव-मादि पूर्ववत् । अनेकदृष्टान्तोपादानमिह सामान्यबहुत्वख्यापनार्थम् । अनेके हि विलक्षणाश्चेतनाचेतनरूपाः सर्वेऽपि  २५ पदार्थाः स्थितिकाले प्रज्ञानघनप्रत्यगात्मैकत्वं गता इति द्योतनार्थमित्यर्थः ॥८-९॥

एवं स्थितिकाले जगतो ब्रह्मैकत्वमवगमय्योत्पत्तिकालेऽपि तथाऽवगमयितुं कार्याणामुत्पत्तेः प्राक्कारणाद-भिन्नत्वं दर्शयितुमाह—स यथेति । स इति दृष्टान्तो यथाऽऽर्द्रैधैः कार्ष्ठैरिद्धोऽग्निरार्द्रैधाग्निस्तस्मादभ्याहितादभितः प्रज्वालितात् पृथक् नानाप्रकारं धूमा विनिश्चरन्ति विनिर्गच्छन्ति । अभ्याहितस्येति पञ्चम्यर्थे षष्ठी धूमग्रहणं विस्फुलिङ्गादीनामप्युपलक्षणपरम् । धूमविस्फुलिङ्गादयो विनिर्गच्छन्तीत्यर्थः । तथा ऋग्वेदादिप्रपञ्च उत्पत्तेः प्राक्  ३० न ब्रह्मणः पृथगस्तीत्यभिप्रेत्य दार्ष्टान्तिकमाह—एवं वेति । यथा अयं दृष्टान्तः एवं वै एवमेवाऽरे मैत्रेयि अस्य प्रकृतस्य परमात्मनो महतोऽनवच्छिन्नस्य भूतस्य परमार्थस्वभावस्यैतद्वक्ष्यमाणं निःश्वसितमयत्नोत्पादितं निःश्वसित-मिव निःश्वसितं किमेतदित्यत आह—यदृग्वेद इति । यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इति चतुर्विधं मन्त्र-जातम् । अथर्वणाऽङ्गिरसा च दृष्टा मन्त्रा अथर्वाङ्गिरसः । इतिहास उर्वशीपुरूरवसोः सवादादिरूपो ब्राह्मणभागो यथा "उर्वशी हाप्सरा" इत्यादि ब्राह्मणमेव । पुराणं "असद्वा इदमग्र आसीदि" त्यादि । विद्या देवजनविद्या । वेदः  ३५ सोऽयमित्याद्या । उपनिषदः "प्रियमित्येनदुपासीते" त्याद्याः, श्लोकाः ब्राह्मणप्रभवाः "तदप्येष श्लोक" इत्यादयः । सूत्राणि वस्तुसंग्राहकाणि वाक्यानि वेदे यथा "आत्मेत्येवोपासीते" त्येवमादीनि । अनुव्याख्यानानि मन्त्रविवरणानि ।

स यथा सर्वासामपाँ समुद्र एकायनम् । एवँ सर्वेषाँ स्पर्शानां त्वगेकायनमेवँ सर्वेषां गन्धानां नासिके एकायनमेवँ सर्वेषाँ रसानां जिह्वैकायनमेवँ सर्वेषाँ रूपाणां चक्षुरेकायनमेवँ सर्वेषाँ शब्दानाँ श्रोत्रमेकायनमेवँ सर्वेषाँ संकल्पानां मन एकायनमेवँ सर्वेषां वेदानाँ हृदयमेकायनमेवँ सर्वेषां कर्मणाँ हस्तावेकायनमेवँ सर्वेषामध्वनां पादावेकायन मेवँ सर्वेषामानन्दानामुपस्थ एकायनमेवँ सर्वेषां विसर्गाणां पायुरेकायनमेवँ सर्वासां विद्यानां वागेकायनम् ॥११॥

स यथा सैन्धवखिल्यः । उदके प्रास्त उदकमेवानुविलीयेत नाहास्योद्ग्रहणायेव स्याद्यतो यतस्त्वाददीत लवणमेवैवं वा अर इदं महद्भूतमनन्तमपारं विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्तीत्यरे ब्रवीमीति होवाच याज्ञवल्क्यः ॥१२॥

व्याख्यानानि अर्थवादाः । अथवा अनुव्याख्यानानि वस्तुसंग्राहकवाक्यविवरणवाक्यानि यथा "प्राणा वै सत्यमि"त्यस्य शिशुमूर्तामूर्तब्राह्मणे । व्याख्यानानि "मेधया हि तपसा जनयत्पिते"त्येवमादीनि मन्त्रविवरणानि । एतान्युक्तानि ऋग्वेदादीनि मन्त्रब्राह्मणात्मकान्यस्यैवेश्वरस्य निःश्वसितानि । तथा च पुरुषबुद्धेः प्रयत्नपूर्वकत्वमन्तरेणैव नियतरचनावतः पूर्वसिद्धस्यैव वेदस्य सुप्तप्रबुद्धवत् सृष्टिसमयेऽभिव्यक्तत्वोक्तेर्वेदः स्वार्थे निरपेक्ष एव प्रमाणम् । अत एव "इदं सर्वं यदयमात्मे"ति वेदस्याप्रामाण्यकारणनिरासार्थं वाऽस्याः श्रुतेः प्रवृत्तिरिति भावः ॥१०॥

अथ प्रलयकालेऽप्यस्य प्रपञ्चस्य ब्रह्मात्मकत्वं प्रतिपत्तव्यमिति दृष्टान्तपूर्वकमाह—**स यथा सर्वासामपामिति** । स दृष्टान्तो यथा येन प्रकारेण सर्वासा नदीवापीतडागादिगतानामपां समुद्रोऽब्धिरुदकसामान्यमेकायनमेकगमनमेकप्रलयोऽविभागप्राप्तिरित्यर्थः । यथाऽयं दृष्टान्त एवं सर्वेषां स्पर्शानां मृदुकठिनादीना वायोरात्मभूतानां त्वगेकायनं त्वगिति त्वग्विषयं स्पर्शसामान्यमात्रमाश्रयः । तथा सर्वेषा गन्धाना पृथिवीविशेषाणा नासिके घ्राणविषयसामान्यम् । तथा सर्वेषा रसानामविशेषाणा जिह्वेन्द्रियविषयसामान्यम् । रूपाणा तेजोविशेषाणा चक्षुश्चक्षुर्विषयसामान्यम् । तथा शब्दानामाकाशविशेषाणा श्रोत्रविषयसामान्य एतान्यपि विषयविशेषसामान्यानि मनोविषये सङ्कल्पेऽन्तर्भवन्ति । तेषा सङ्कल्पपूर्वकत्वात् । सर्वेषा सङ्कल्पविशेषाणां मनोविषयसामान्यम् । सङ्कल्पमात्रमयनम् । तस्य सङ्कल्पस्य चाध्यवसायपारतन्त्र्यदर्शनाद्बुद्धिविषयविशेषेषु वेदशब्दवाच्येष्वध्यवसायेष्वन्तर्भावः । सर्वेषा वेदानामिति । सर्वासा विद्याना हृदय बुद्धिसामान्यं विज्ञानमात्रमेकायनं तदपि कारणभूते प्रज्ञानघने ब्रह्मणि लीयत इति बोध्यम् । तथा सर्वेषा कर्मणां हस्तावेकायनमित्यादिना कर्मेन्द्रियाणा तद्विषयविशेषाणामादानगमनानन्दविसर्गवेदनानां च तत्तत्सामान्येषु लयस्तेषा च प्राणे प्राणस्यापि कारणात्मनीत्यभिप्रायः श्रुत्योच्यत इति भावः ॥११॥

एवं प्राकृतिकप्रलयप्रदर्शनेन सर्वमूलप्रकृतिभूतमद्वयात्मतत्त्वमित्यवगमितमिद सर्वं यदयमात्मेति प्रतिज्ञातत्वात् । इदानी ब्रह्मविद्ययाऽविद्यानिरोधद्वारेण योऽयमात्यन्तिकः प्रलयस्तद्दर्शयितु दृष्टान्तमुपादत्ते—**स यथेति** । स दृष्टान्तो यथा लोक सैन्धवखिल्य स्यन्दनात्सिन्धुरुदकं तस्य विकारस्तत्र भवो वा सैन्धवः स चासौ खिल्यो लवणशकलश्चेति सैन्धवखिल्यः स्वार्थे यत्प्रत्ययः । उदके सिन्धौ स्वयोनौ प्रास्तः प्रक्षिप्तः सन् खिल्यारम्भकत्वेन तदवयवभूतमुदकं विलीयमानमनु पश्चाद्विलीयेतैवोदकभावमापद्येतैव । अस्य विलीनस्य खिल्यस्योद्ग्रहणायोद्धृत्य पूर्ववद्ग्रहीतुं नैव कश्चित् सुनिपुणोऽपि समर्थः स्यात् । अत्र इवशब्दोऽनर्थकः । कस्मात् ? यतो यतः यस्माद्यस्माद्देशात्तदुदकमाददीत गृहीत्वाऽऽस्वादयेत्तत्र तत्र लवणं लवणास्वादमेव तदुदक न तु खिल्यभावः । यथाऽयं दृष्टान्तः एवं वै एवमेव अरे मैत्रेयि इदं परमात्माख्यं विलीनखिल्यभावं ब्रह्मतत्त्वं महद्भूतं महच्च तद्भूतं च महद्भूतं सर्वमहत्तरत्वादाकाशादिकारणत्वाच्च महत् । त्रिष्वपि कालेषु स्वरूपाव्यभिचारात् सर्वदैव परिनिष्पन्नं भूतमिति त्रैकालिको निषा प्रत्यय:

**सा होवाच मैत्रेयी । अत्रैव मा भगवानमूमुहन्न प्रेत्य संज्ञास्तीति ॥१३॥**

**स होवाच याज्ञवल्क्यः । न वा अरेऽहं मोहं ब्रवीम्यलं वा अर इदं विज्ञानाय ॥१४॥**

**यत्र हि द्वैतमिव भवति । तदितर इतरं पश्यति तदितर इतरं जिघ्रति तदितर इतरमभिवदति तदितर इतरँ‌ं शृणोति तदितर इतरं मनुते तदितर इतरं विजानाति ॥१५॥** ५

**यत्र त्वस्य सर्वमात्मैवाभूत् । तत्केन कं पश्येत्तत्केन कं जिघ्रेत्तत्केन कमभिवदेत्तत्केन कँ‌ं शृणुयात्तत्केन कं मन्वीत तत्केन कं विजानीयाद्येनेदँ‌ं सर्वं विजानाति तं केन विजानीयाद्विज्ञातारमरे केन विजानीयादिति ॥१६॥**

**इति द्वितीयाध्याये चतुर्थं ब्राह्मणम् ॥४॥**

अथवा भूतशब्दः परमार्थवाची महच्च तत्पारमार्थिकं चेत्यर्थः । अनन्तं न विद्यत अन्तःकारणं पूर्वावधिभूतं यस्य तदनन्तम् । अपारं न विद्यते पार उत्तरावधिभूतं कार्यं यस्य तदपारम् । विज्ञानघन एव विज्ञानं विज्ञप्तिर्विज्ञानं च तद्घनश्चेति विज्ञानघनः घनशब्दो जात्यन्तरप्रतिषेधार्थो यथा सुवर्णघनोऽयोघन इति । एवशब्दोऽवधारणार्थः । स विज्ञानघनो विशुद्धज्ञप्तिमात्रैकरस एवात्मा, एतेभ्यो भूतेभ्यः कार्यकारणविषयाकारपरिणतेभ्यो नामरूपात्मकेभ्यः सत्यशब्दवाच्येभ्यो हेतुभूतेभ्यो मनुष्योऽहं ब्राह्मणोऽहमित्यादिखिल्यभावेन समुत्थाय सम्यगुत्थायोदकात् सूर्यचन्द्रादिप्रतिबिम्बवत् । तानि कार्यकरणविषयाकारेण परिणतानि भूतानि आत्मनो विशेषात्मखिल्यभावहेतुभूतानि शास्त्राचार्योपदेशेन ब्रह्मविद्यया प्रविलापितानि विनश्यन्ति सन्ति अनु पश्चादुदकादिहेत्वपनये चन्द्रसूर्यादिप्रतिबिम्बवदेष विशेषात्मखिल्यभावो विनश्यति । तथा चाविद्याकार्यरूपखिल्यभावहेत्वपगमे प्रज्ञानघनमनन्तमपारं स्वच्छं व्यवतिष्ठत इत्यर्थः । अस्यां च कैवल्यावस्थाया विशेषज्ञानं नास्तीत्याह—न प्रेत्येति । अरे मैत्रेयि एवं कार्यकरणसङ्घातेभ्यो विमुक्तस्य ब्रह्मविदः प्रेत्य विमुच्य संज्ञाऽहमसावमुष्यपुत्रो ममेदं क्षेत्र धनं सुखी दुःखीत्येवमादिलक्षणं विशेषसंज्ञा विशेषज्ञानं नास्तीत्यहं ब्रवीमीत्येवं ह किल परमार्थदर्शनं याज्ञवल्क्यो मैत्रेय्यै भार्यायै,उवाचोक्तवान् ॥१२॥

एवं प्रतिबोधिता सा मैत्रेयी ह किलोवाच उक्तवती । अत्रैवैतस्मिन्नेवैकस्मिन्वस्तुनि ब्रह्मणि पूर्वं विज्ञानघन एवेति प्रतिज्ञाय पुनर्न प्रेत्य संज्ञास्ति विज्ञानघन संज्ञाभाव च विरुद्धधर्मत्वमाचक्षाणो भगवान् पूजावान् मा माममूमुहन्मोहं कृतवान् । न ह्युष्ण. शीतश्चाग्निरेव एको भवत्यतो मूढास्म्यत्रेत्यर्थः ॥१३॥

एवमुक्त स याज्ञवल्क्यो ह प्रतिवचनमुवाच । अरे मैत्रैय्यहं मोहं न वै ब्रवीमि मोहन वाक्यं नैव ब्रवीमीत्यर्थः । न प्रेत्य संज्ञास्तीति तु विशेषविज्ञानानामभावस्यैवोक्तत्वादत्र अरे मैत्रेयि शृणु यन्महद्भूतमनन्तमपारं प्रज्ञानघनस्वरूपं यथा व्याख्यातमिदमेव विज्ञानाय विज्ञातुमल पर्याप्तं इति याज्ञवल्क्य उक्तवानित्यर्थः ॥१४॥

अथैवमुक्तं विशेषविज्ञानाभावमन्वयव्यतिरेकाभ्यां दृढीकुर्वन्नाह—यत्र हीति । यत्र यस्मिन् अविद्याकल्पिते कार्यकरणसङ्घातोपाधिजनिते विशेषात्मनि खिल्यभावे हि प्रसिद्ध द्वैतमिव परमार्थतोऽद्वैते ब्रह्मणि भिन्नमिवात्मनो वस्त्वन्तर भासमान भवति तत्तत्र तस्मिन्काले इतरोऽसौ परमात्मनः खिल्यभूत आत्मा परमार्थचन्द्रादेरिवोदकचन्द्रादिप्रतिबिम्बद्रष्टेतरेण चक्षुरादिकरणेनेतरं द्रष्टव्यं रूपादिपदार्थं पश्यति । एवमितरो घ्रातेतरेण घ्राणेनेतरं जिघ्रति तथाऽभिवदति शृणोति मनुते विजानाति । इयमविद्यावदवस्था ॥१५॥

यत्र तु ब्रह्मविद्ययाऽविद्या नाशमुपगमिता तत्रात्मव्यतिरेकेणान्यस्याभाव इति व्यतिरेकं दर्शयितुमाह—यत्र त्वस्येति । यत्र तु विद्यावस्थायामस्य ब्रह्मविदः सर्वं कर्तृकर्मक्रियाफलादिकमात्मन्येव प्रविलापितं सदात्मैवाभूदात्मैव संवृत्तं तत्र तस्यामवस्थाया केन करणेन कं द्रष्टव्यं विषयं कः पश्येत् तथा जिघ्रेत् इत्यादि विजानीयादित्यन्तं व्याख्येयम् । न कोऽपि केनापि कमपि विजानीयात् करणादिकारकानुपपत्तेः एव कैवल्यावस्थायां विशेषविज्ञानाभावमन्वयव्यतिरेकाभ्या प्रतिपाद्य तत्रैव कैमुतिकन्यायं दर्शयितुमविद्यावस्थायामपि साक्षिणो ज्ञानाविषयत्वमाह—येनेदमिति । यत्राप्यविद्यावस्थायामन्योऽन्यं पश्यति तत्रापि येन कूटस्थबोधेन व्याप्तो लोकः सर्वमिद विजानाति तं साक्षिणं केन करणेन को वा विज्ञाता विजानीयात् न केनापीत्यर्थः । येन चक्षुरादिना लोको जानाति तस्य विषयग्रहणेनैवो-

अथ द्वितीयाध्यायस्य पञ्चमं ब्राह्मणम्

इयं पृथिवी । सर्वेषां भूतानां मध्वस्यै पृथिव्यै सर्वाणि भूतानि मधु यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मँ शारीरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥१॥

५ इमा आपः । सर्वेषां भूतानां मध्वासामपाँ सर्वाणि भूतानि मधु यश्चायमास्वप्सु तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मँ रैतसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥२॥

अयमग्निः । सर्वेषां भूतानां मध्वस्याग्नेः सर्वाणि भूतानि मधु यश्चायमस्मिन्नग्नौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं वाङ्मयस्तेजो-

१० मयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥३॥

अयमाकाशः । सर्वेषां भूतानां मध्वस्याकाशस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्नाकाशे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मँ हृद्याकाशस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥४॥

पक्षीणत्वाच्च साक्षिणि प्रवृत्तिरिति भावः। किं पुनर्वक्तव्यं विद्यावस्थस्यासंसारिण. आत्मनो ज्ञानविषयत्व इत्याह—

१५ विज्ञातारमिति । अरे मैत्रेयि यः पुनः केवलोऽद्वयोविद्यावस्थो विज्ञातैव वर्तते तं विज्ञातारं केन करणेन विजानीयात् न केनापीति भावः ॥१६॥

इति विद्यारण्यमुनिविरचितमाध्यन्दिनशाखीयबृहदारण्यकोपनिषद्दीपिकाया द्वितीयाध्याये चतुर्थं ब्राह्मणम् ॥४॥

पूर्वं मैत्रेयीब्राह्मण इदं सर्वं यदयमात्मेति प्रतिज्ञातस्यात्मोत्पत्तिस्थितिलयत्वं हेतुमुक्त्वा प्रतिज्ञातस्यार्थस्य निगमनार्थं मधुब्राह्मणमारभ्यते—इयं पृथिवीति । इयं प्रसिद्धा पृथिवी सर्वेषां भूतानां ब्रह्मादिस्तम्बपर्यन्तानां

२० प्राणिनां मधु कार्यं मध्विव मधु । यथैको मध्वपूपोऽनेकैर्मधुकरैः निर्वर्तित एवमियं पृथिवी सर्वभूतनिर्वर्तितेत्यर्थः । तथाऽस्यै पृथिव्या अस्याः पृथिव्याः सर्वाणि भूतानि मधु कार्यम् । किं चास्यां पृथिव्या यश्चायं तेजोमयश्चिन्मात्रप्रकाशमयोऽमृतमयोऽमरणधर्मा पुरुषः यश्चायमध्यात्ममात्मानं शरीरमधिकृत्य वर्तत इत्यध्यात्मम् । शारीरः शरीरे भवः पूर्ववत्तेजोमयोऽमृतमयः पुरुषः सर्वलिङ्गाभिमानीत्येवमुभयविधोऽपि पुरुषः सर्वेषां भूतानामुपकारकत्वात् करणत्वेन मधु । सर्वाणि भूतान्यस्य कार्यत्वेन मध्विति चशब्दसामर्थ्याद्व्याख्येयम् । पृथिवी सर्वाणि भूतानि पार्थिवः पुरुषः शारीर-

२५ श्चेत्येवमेतच्चतुष्टयमेकं मधु सर्वभूतकार्यम् । सर्वाणि च भूतान्यस्य पृथिव्यादेः कार्यमतोऽस्य पृथिव्यादेः परस्परमुपकार्योपकारकभावः । यस्मादेकस्मात् कारणादेतज्जातं तदेवैकं परमार्थतो ब्रह्म । इतरत् कार्यं वाचारम्भणं विकारो नामधेयमात्रमित्याशयेनाह—अयमेवेति । अयमेव स योऽयं पूर्वं मैत्रेय्यै इदं सर्वं यदयमात्मेति प्रतिज्ञातः स एवात्मा अयं उक्तश्चतुर्विधमध्वात्मको नान्यः । इदं चतुष्टयकल्पनाधिष्ठानब्रह्मविषयं ज्ञानम[मृतम]मृतत्वसाधनम् । इदमेवात्मतत्त्वं "ब्रह्म ते ब्रवाणि" "ज्ञपयिष्या"मीत्यध्यायादौ प्रकृतं ब्रह्म । यद्विषया विद्या ब्रह्मविद्येत्युच्यते ।

३० इदमेव सर्वं सर्वाप्तिसाधनम् । यस्माद्ब्रह्मणो विज्ञानात्सर्वं भवति नान्यत्किंचिदस्तीत्यर्थः । एवमन्येऽपि मधुपर्याया व्याख्येयाः ॥१॥

तथा आपो मधु । अध्यात्मं रैतसः पुरुष रेतसि भवो रैतसः रेतस्यपां विशेषतोऽवस्थानम् । "आपो रेतो भूत्वा शिश्नं प्राविशन्नि"ति श्रुत्यन्तरात् ॥२॥

तथा अग्निर्मधु । वाङ्मयो वागभिमानी पुरुषोऽग्नेरध्यात्मम् । वाच्यग्नेर्विशेषतोऽवस्थानम् । "अग्निर्वाग्भूत्वा-

३५ मुखं प्राविशदि"ति श्रुतेः ॥३॥

तथाऽऽकाशो मधु । अध्यात्मं हृद्याकाशो हृदयाकाशः "य एषोन्तर्हृदय आकाश"इत्यादिना पूर्वं व्याख्यातः ॥४॥

अयं वायुः । सर्वेषां भूतानां मध्वस्य वायोः सर्वाणि भूतानि मधु यश्चायमस्मिन्वायौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं प्राणस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥५॥

अयमादित्यः । सर्वेषां भूतानां मध्वस्यादित्यस्य सर्वाणि भूताति मधु यश्चायमस्मिन्नादित्ये तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं चाक्षुषस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥६॥

अयं चन्द्रः । सर्वेषां भूतानां मध्वस्य चन्द्रस्य सर्वाणि भूतानि मधु यश्चायमस्मिँश्चन्द्रे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं मानसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥७॥

इमा दिशः । सर्वेषां भूतानां मध्वासां दिशाँ सर्वाणि भूतानि मधु यश्चायमासु दिक्षु तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मँ श्रौत्रः प्रातिश्रुत्कस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥८॥

इयं विद्युत् । सर्वेषां भूतानां मध्वस्यै विद्युतः सर्वाणि भूतानि मधु यश्चायमस्यां विद्युति तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं तैजसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥९॥

अयँ स्तनयित्नुः । सर्वेषां भूतानां मध्वस्य स्तनयित्नोः सर्वाणि भूतानि मधु यश्चायमस्मिन्स्तनयित्नौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मँ शाब्दः सौवरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥१०॥

अयं धर्मः । सर्वेषां भूतानां मध्वस्य धर्मस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्धर्मे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं धार्मस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥११॥

तथा वायुर्मधु । अध्यात्मं प्राणो घ्राणेन्द्रियम् । "वायुः प्राणो भूत्वा नासिके प्राविशदि"ति श्रुत्यन्तरात् । ना शरीरारम्भकत्वेनोपकारान्मधुत्वम् । तदन्तर्गतानां तेजोमयादीना करणत्वेनोपकारान्मधुत्वम् ॥५॥

तथाऽऽदित्यो मधु । चाक्षुषः पुरुषोऽध्यात्मम् । "आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशदि"ति श्रुतेः ॥६॥

तथा चन्द्रो मधु । अध्यात्मं मानसः "चन्द्रमा मनो भूत्वा हृदयं प्राविशदि"ति श्रुतेः ॥७॥

तथा दिशो मधु । यद्यपि दिशः श्रोत्रमध्यात्मं तथापि शब्दप्रतिश्रवणवेलायां तु विशेषतः सन्निहितो भवतीपात्मं; प्रतिश्रुत्क इति विशेषणम् । प्रतिश्रुत्कायां प्रतिश्रवणवेलायां भवः प्रातिश्रुत्कः "दिशः श्रोत्रं भूत्वा कर्णौ शन्नि"ति श्रुतेः ॥८॥

विद्युत्त्वगिन्द्रियं मधु । तेजसि भवस्तैजसोऽध्यात्मम् ॥९॥

तथा स्तनयित्नुः पर्जन्यो मधु शब्दे भवः शाब्दः । यद्यप्यध्यात्मं शब्दे भव इति व्युत्पत्त्या शाब्द. पुरुषस्तथाऽपि ८ विशेषतो भवति इति सौवर इति विशेषणम् । स्वरे भवः सौवर. ॥१०॥

सर्वेषां शरीरिणा प्रत्येकं स्तनयित्वन्ताः पृथिव्यादयो भूतगणा देवतागणाश्च कार्यकारणसंघातात्मनोपन्तो मधु भवन्तीत्युक्तम् । ते येन प्रयुक्ता. शरीरिभि. संबध्यमाना मधुत्वेनोपकुर्वन्ति तद्वक्तव्यमितीदमारभ्यते— ं धर्म इति । धर्मस्य शास्त्रैकगम्यत्वेन परोक्षत्वादयमिति निर्देशानर्हत्वेऽपि पृथिव्यादेर्धर्मकार्यस्य प्रत्यक्षत्वात् रणस्याभेदमोपचारिकमादाय प्रत्यक्षघटादिवदयं धर्म इति व्यपदेशोपपत्तिरिति भावः । तच्छ्रेयोरूपमत्यसृजत धर्ममि-

इदँ सत्यम् । सर्वेषां भूतानां मध्वस्य सत्यस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्सत्ये तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मँ सात्यस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥१२॥

इदं मानुषम् । सर्वेषां भूतानां मध्वस्य मानुषस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्मानुषे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं मानुषस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥१३॥

अयमात्मा । सर्वेषां भूतानां मध्वस्यात्मनः सर्वाणि भूतानि मधु यश्चायमस्मिन्नात्मनि तेजोमयोऽमृतमयः पुरुषो यश्चायमात्मा तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ॥१४॥

स वा अयमात्मा । सर्वेषां भूतानामधिपतिः सर्वेषां भूतानाँ राजा तद्यथा रथनाभौ च रथनेमौ चाराः सर्वे समर्पिता एवमेवास्मिन्नात्मनि सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि सर्व एत आत्मानः समर्पिताः ॥१५॥

त्यादौ व्याख्यातः श्रुतिस्मृतिलक्षणः। क्षत्रादीनामपि नियन्ता पृथिव्यादीनां परिणामहेतुत्वाज्जगतो वैचित्र्यकृत्प्राणिभिरनुष्ठीयमानरूपोऽयमिति प्रत्यक्षेण व्यपदेश्यो धर्मोऽपूर्वाख्यो मधु। स च सामान्यरूपेण विशेषरूपेण च कार्यारम्भकस्तत्र पृथिव्यादि, प्रयोक्तरि धर्मे सामान्यरूपेण तदारम्भकत्वमाह—यश्चायमस्मिन्धर्मे इति। कार्यकरणसंघातकर्तरि तु धर्मे विशेषरूपेण कार्यकरणारम्भकत्वमाह—यश्चायमध्यात्मं धार्म इति। कार्यकरणसंघातकर्तरि धर्मे भवो धार्मः ॥११॥

सत्यमपि धर्मवद्द्विविधं तत्र सामान्यरूपेण पृथिव्यादिषु कारणत्वेनानुगतमित्याह—यश्चायमस्मिन् सत्य इति। विशेषरूपं तु सत्यसंघातत्त्वेनानुगतमित्याह—यश्चायमध्यात्मं सात्य इति। सत्ये भवः सात्यः ॥१२॥

धर्मसत्याभ्यां प्रयुक्तोऽयं कार्यकरणसंघातविशेषो येन जातिविशेषेण संयुक्तो भवति तं निर्दिशति—इदम् मानुषमिति। तत्र मानुषादिजातिविशिष्टा एव सर्वे प्राणिनिकायाः परस्परोपकार्योपकारकभावेन वर्तमाना दृश्यन्ते। अतो मानुषादिजातिरपि सर्वेषां भूतानां मधु। यद्यपि मानुषादिजातिरेकैव तथापि निर्देष्टुः स्वशरीरनिविष्टा जातिराध्यात्मिकी शरीरान्तराश्रिता तु बाह्येत्यभिप्रेत्य तद्विशिष्टं पुरुषं निर्दिशति—यश्चायमस्मिन्मानुषे इति। निर्देष्टुः शरीरनिष्ठत्वादाध्यात्मिकीति तद्विशिष्टं निर्दिशति यश्चायमध्यात्मं मानुष इति ॥१३॥

यः पुनर्मानुषादिजातिविशिष्टः कार्यकरणसंघातस्तस्य मधुत्वमाह—अयमात्मेति। अयमात्मोक्तजातिविशिष्टो देहो न तु चेतनः सर्वेषां भूतानां मधु। यश्चायमस्मिन्नात्मनि तेजोमयोऽमृतमयः पुरुषः सोऽमूर्तरसः सर्वात्मकश्चेतनो निर्दिश्यते। अत्राध्यात्मविशेषाभावादध्यात्मं स न निर्दिश्यते इत्यभिप्रेत्याह—यश्चायमात्मेति। यस्तु परिशिष्टो विज्ञानमयो यदर्थोऽयं देहलिङ्गसंघात आत्मा स यश्चायमात्मेत्युच्यते। तेजोमयोऽमृतमयः पुरुषः इति पूर्ववत् ॥१४॥

अस्यान्तिमपर्यायोक्तस्यात्मनः स्वरूपमाह—स वा अयमात्मेति। यस्मिन्नात्मनि खिल्यदृष्टान्तवचसा प्रवेशितस्तेन परेणात्मना तादात्म्यं गतो विद्वान् आत्मशब्दार्थस्तस्मिन्नविद्याकृतकार्यकरणसंघातोपाधिविशिष्टे जीवे ब्रह्मविद्यया परमार्थात्मनि प्रवेशिते सति सर्वैरुपास्यः स वै सर्वोऽयमात्माऽव्यवहितपूर्वपर्याये तेजोमयोऽमृतमय इत्यादिना निर्दिष्टो विज्ञानमयः स सर्वेषां भूतानामधिपतिः सर्वभूताना स्वतन्त्रः न कुमारामात्यवत् स्वातन्त्र्यं किं तर्हि सर्वेषां भूतानां राजा। अधिपतिरिति राजत्वविशेषणम्। कश्चिद्राजोचितवृत्तिमाश्रित्य राजा भवति स राजपरतन्त्रत्वान्न स्वतन्त्र इति तद्व्यवच्छेदार्थमधिपतिविशेषणमिति भाव.। अस्मिन् सर्वात्मभूते ब्रह्मविदि सर्वं जगत्सर्वमर्पितमिति दृष्टान्तोपादानपूर्वकमाह—तद्यथेति। तत्प्रसिद्धं निदर्शनं यथा रथनाभौ च रथचक्रपिण्डिकायां रथनेमौ च वलयभूतायां सर्वेऽराः समर्पिताः समारोपिताः यथाऽयं दृष्टान्तः। एवमेवैतस्मिन्नात्मनि परमात्मभूते ब्रह्मविदि सर्वे प्राणा वागादयः सर्वे लोका भूरादयः सर्वे देवा अग्न्यादयः सर्वाणि भूतानि ब्रह्मादिस्तम्बपर्यन्तानि सर्वं एत आत्मनो जल-

इदं वै तन्मधु। दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच तदेतदृषिः पश्यन्नवोचत्।
तद्वां नरा सनये दंस उग्रमाविष्कृणोमि तन्यतुर्न वृष्टिम्।
दध्यङ् ह यन्मध्वाथर्वणो वामश्वस्य शीर्ष्णा प्र यदीमुवाचेति ॥१६॥

इदं वै तन्मधु। दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच तदेतदृषिः
पश्यन्नवोचत्। आथर्वणायाश्विना दधीचेऽश्व्यं शिरः प्रत्यैरयतम्। ५
स वां मधु प्रवोचदृतायन्त्वाष्ट्रं यद्दस्रावपि कक्ष्यं वामिति ॥१७॥

इदं वै तन्मधु। दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच। तदेतदृषिः
पश्यन्नवोचत्। पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः। पुरः स
पक्षी भूत्वा पुरः पुरुष आविशदिति स वा अयं पुरुषः
सर्वासु पूर्षु पुरिशयो नैनेन किञ्चनानावृतं नैनेन किञ्चनासंवृतम् ॥१८॥ १०

चन्द्रवत् प्रतिशरीरानुप्रवेशिनोऽविद्याकल्पिता· समर्पिताः सर्वं जगदस्मिन्समर्पितमिति भावः। स एष सर्वात्मभावो व्याख्यातः ॥१५॥

एवं साकल्येन निरूपितायां ब्रह्मविद्यायां स्तुत्यर्थं प्रवर्ग्यप्रकरणस्थिताख्यायिकासंक्षेपकौ मन्त्रौ श्रुतिः प्रस्तावपूर्वकमवतारयति—इदं वा इति। वैशब्दः स्मरणार्थः यत्प्रवर्ग्यप्रकरणे सूचितं परन्तु नाविष्कृतं तद्वै तदेवेदं मधु। इहैव पृथिवीत्यादिनाऽनन्तरनिर्दिष्टम्। दध्यङ्नामा ब्राह्मणोऽथर्वणो गोत्रापत्यमाथर्वणोऽश्विभ्यां देवभिषग्भ्यामनेन प्रपञ्चेनोवाचोक्तवान्। तदेवैतत्कर्म ऋषिर्मन्त्रः पश्यन्नुपलभमान उवाच उक्तवान्। कथमित्यत आह—तद्वान्नरेति। १५
हे नरा नरौ नेतारावाश्विनो अहं स्तोता वा, युवयोः संबन्धि तत् प्रसिद्धमुग्रमुद्घूर्णमन्यैर्दुःशकं दंसः कर्म सनये धनलाभार्थं युवाभ्यां लाभलब्धाभ्यां पुराकृतं आविष्कृणोमि प्रकटीकरोमि। तत्र दृष्टान्तः तन्यतुर्न तन्यतुरिव यथा तन्यतुर्मेघस्थः शब्दो वृष्टिं मेघान्तरवर्तमानमुदकं प्रवर्षणेन सर्वत्र प्रकटयति तद्वत्। अत्र नकार इवार्थः उपमार्थीयः "उपरिष्टादुपचारस्तस्य येनोपमिमीते" इति यास्कोक्तेः। "अश्वन्नत्वा वारवन्तमि"तिवत् ज्ञेयः। तत् किं कर्म? ह इति २० प्रसिद्धौ। आथर्वणोऽथर्वपुत्रो दध्यङ् एतन्नामा मुनिः यद्यदाऽश्वस्य हयस्य शीर्ष्णा युष्मत्सामर्थ्यात् प्रतिनिहितेन शिरसा वां युवाभ्या इदं मधु। इमां मधुविद्या यत्प्रोवाच प्रोक्तवान्। तदानीमश्वस्य शिरसः संधानलक्षणं पुनर्मानुषस्य शिरसः प्रतिसधानलक्षणं च यद्भवदीयं कर्म तदाविष्कृणोमीति संम्बन्धः ॥१६॥

आविष्कृणोमीति प्रतिज्ञाते क्रूरकर्म मधुनि किं इत्यपेक्षायामिदं वै तन्मध्वित्याद्युक्तार्थमेव ब्राह्मणं स्वानुवादपूर्वकं मन्त्रान्तरमाह—आथर्वणायेति। हे आश्विना, आश्विनौ युवामाथर्वणायाऽथर्वणः पुत्राय दधीचे दध्यङ्नाम्ने २५ महर्षयेऽश्वसंबन्धि शिरो मस्तकं प्रत्यैरयतं प्रत्यधत्तं तदीयं मानुपं शिरः प्रच्छिद्यान्यत्र निधाय आ(अ)श्व्येन शिरसा तमृपि समयोजयतमित्यर्थः। स महर्षिः वां युवाभ्यां मधु मधुविद्यां प्रवोचत् प्रावोचत् प्रोक्तवान्। स किमित्येवं जीवितसंदेहमारुह्य स्वशिरश्छेदपूर्वमश्वशिरसा मधूक्तवानित्यत आह—ऋतायन्निति। युवाभ्या प्रवर्ग्यविद्यां मधुविद्यां च वक्ष्यामीति पुराकृतां प्रतिज्ञां सत्या कुर्वन्परिपालयितुमिच्छन् जीवितादपि हि सत्यधर्मपरिपालना गुरुतरेत्येतस्य लिङ्गमेतत्। किं तन्मध्वित्यत आह—त्वाष्ट्रमिति। त्वष्टाऽऽदित्यस्तस्य संवन्धि त्वाष्ट्रम्। "तद्वृङ्ङिति पपात ३० तत्पतित्वाऽसावादित्योऽभवदि"ति। (श० ब्रा० १४-१-१०) तत्प्रतिसंधानार्थं प्रवर्ग्यकर्म तत्र प्रवर्ग्यकर्माङ्गभूतं यद्विज्ञान तत्त्वाष्ट्रं मध्वेव न प्रावोचदपि तु यत्कक्ष्यं गोप्यं रहस्यं परमात्मसम्बन्धि विज्ञानं मधु मधुब्राह्मणेनोपसंहृतमध्यायद्वयप्रकाशितं तच्च वां युवाभ्यां प्रवोचदित्यनुवर्तत इत्यर्थः ॥१७॥

प्रवर्ग्यकर्मार्थयोः प्रथमद्वितीययोरध्याययोरर्थः प्रवर्ग्यसंबद्धाख्यायिकोपसंहृताभ्यामुक्ताभ्यां प्रकाशितः। इदानी ब्रह्मविद्यार्थयोस्तृतीयचतुर्थाध्याययोरर्थ उत्तराभ्यां प्रकाशयितव्य इत्यत आह—इदं वै तदिति। उक्तार्थं ब्राह्मणमनूद्य ३५

इदं वै तन्मधु । दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच तदेतदृषिः पश्यन्नवोचत् । रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय । इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शता दशेत्ययं वै हरयोऽयं वै दश च सहस्राणि बहूनि चानन्तानि च तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूरित्यनुशासनम् ॥१९॥

५ अथ वंशः । तदिदं वयं शौर्पणाय्याच्छौर्पणाय्यो गौतमाद्गौतमो वात्स्याद्वात्स्यो वात्स्याच्च पाराशर्याच्च पाराशर्यः साङ्कृत्याच्च भारद्वाजाच्च भारद्वाज औदवाहेश्च शाण्डिल्याच्च शाण्डिल्यो बैजवापाच्च गौतमाच्च गौतमो बैजवापाय-

प्रवर्तते पुरश्चक्र इति । प्रकरणबलादीश्वरोऽव्याकृते नामरूपे व्याकुर्वाणो भूतादिसर्गपुरःसरं पञ्चीकृतेभ्यो भूतेभ्यो भूरादीन् लोकान् सृष्ट्वा पुरः पुराणि शरीराणि द्विपदो द्विपादुपलक्षितानि मनुष्यशरीराणि चक्रे कृतवान् तथा चतुष्प-
१० दश्चतुष्पादुपलक्षितानि पुरः पशुशरीराणि चक्रे । एवं शरीराणि नानाविधानि सृष्ट्वा स ईश्वरः पुरस्तादात्मप्रवेशात् पूर्वं पक्षी लिङ्गशरीरी भूत्वा पुरः शरीराणि पुरुषः पुरुषरूपः सन् आविशत् प्रविवेश । इतिशब्दो मन्त्रसमाप्तिद्योतकः । कथमात्मनः पुरुषत्वमित्याशङ्कायां श्रुतिस्तद्व्युत्पादयति—स वा अयमिति । स वै स एवायमात्मा सृष्ट्यादिकर्तृतया प्रकृतः सर्वासु पूर्षु सर्वशरीरेषु पुरि शेत इति व्युत्पत्त्या पुरिशयः सन् पुरुष इत्युच्यते । नन्वेवमाधाराधेयनिर्देशाद् द्वैतापत्तिः स्यादित्यत आह—नैनेनेति । एनेनानेन परमात्मना किञ्चन किञ्चिदपि अनावृतमनाच्छादितं नास्ति ।
१५ तथैतेन किञ्चन असंवृतमेतदननुप्रवेशितं नास्ति । तथा च परमात्मैवान्तर्बहिर्भावेन कार्यकरणरूपेण व्यवस्थितो न ततोऽन्यत्किञ्चिदस्तीति पुरश्चक्र इति मन्त्रः संक्षेपत आत्मैकत्वमाचष्ट इत्यर्थः ॥१८॥

इदं वै तन्मध्वित्यादि पूर्ववत् । एवं शरीरेषु प्रविष्टः परमात्मा किं रूप इत्यत आह—रूपं रूपमिति । स ईश्वरो रूपं रूपमुपाधिभेदं देहं देहं प्रति प्रतिरूपो रूपान्तरप्रतिबिम्बो बभूव । ननु किमर्थमसौ प्रतिबिम्बभावमापद्यते तत्राह—तदस्येति । तत्प्रतिबिम्बत्वमस्यात्मनो निरुपाधिकस्य रूपं स्वरूपं प्रतिचक्षणायात्मयाथात्म्यप्रति-
२० ख्यानायेति भावः । इन्द्रः परमेश्वरो मायाभिः नामरूपविषयमिथ्याभिमानात्मना परिणताभिः पुरुरूपो बहुरूपो ईयते । अयनाय शास्त्राचार्यादिभेदेन तत्त्वप्रकाशनायेत्यर्थः । यदि हि नामरूपे न व्याक्रियेते तदाऽस्यात्मनो निरुपाधिकं प्रज्ञानघनाख्यं रूपं न प्रतिख्यायेत यदा पुनः कार्यकरणात्मना नामरूपे व्याकृते भवतस्तदाऽस्य रूपं प्रतिख्यायेत प्रतीयेत मिथ्यैव जलसूर्यवत् । मायाभिरिति बहुवचनं विक्षेपाणां बाहुल्यादुपपन्नं तथापि परमात्मनो बहुरूपत्वे किं निमित्तमित्यत आह—युक्ता हीति । रथे युक्ता वाजिन इव हि यस्मादस्य प्रतीचो रथस्थानीये
२५ शरीरे युक्ताः हरय इन्द्रियाणि शता शतानि दश च प्राणिभेदबाहुल्यात् शतानि दश च भवन्ति प्रत्यञ्चं स्वविषयान् प्रतिहरन्ति हरणादिन्द्रियाणि हरयः । इतिशब्दो मन्त्रसमाप्तिद्योतकः । नन्वस्य हरय इति संबन्धप्रतीतेरयमन्यः परमेश्वरोऽन्ये हरय इत्येवं द्वैतापत्तिरित्यत आह—अयं वा इति । अयं वै अयमेवात्मा हरय इन्द्रियादिरूपेणास्यैवाविद्यया भानात् । अयं वै अयमेवात्मा दश च सहस्राणि बहूनि चानन्तानि च हरिशब्दितानीन्द्रियाणि प्राणिभेदस्यानन्त्यात् । इदानीमस्यात्मनः पारमार्थिकं स्वरूपमाह—तदेतद्ब्रह्मेति । न विद्यते पूर्वं कारणं यस्य तदपूर्वम् । न विद्यतेऽपरं
३० कार्यं यस्येतदनपरम् । न विद्यते अन्तराले जात्यन्तरं वस्तु यस्य तदनन्तरम् । न विद्यते बाह्यं बहिर्भूतं वस्तु यस्मात्तदबाह्यम् । यदेतादृशं ब्रह्म तदेवैतत्समस्तं जगत् । न तद्व्यतिरेकेणास्ति । किं पुनस्तद्ब्रह्मात्मनोऽर्थान्तर-मित्याशङ्कायां नेत्याह—अयमात्मेति । अयं प्रत्यगात्मैव ब्रह्म । कोऽसौ प्रत्यगात्मा तत्राह—सर्वानुभूरिति । यः सर्वात्मना सर्वमनुभवति स सर्वानुभूः द्रष्टा श्रोता मन्ता विज्ञाता स एव प्रत्यगात्मेत्यर्थः । अयमेव सर्ववेदान्तानामर्थ इत्युपसंहरतीति । इतीत्थमनुशासनं सर्ववेदान्तोपदेशः । एतदमृतमभयं चेत्यनर्थनिवृत्तिद्वाराऽऽनन्दावाप्तिरूप-
३५ शास्त्रार्थः परिसमाप्तः ॥१९॥

अथेदानीं ब्रह्मविद्यार्थस्य मधुकाण्डस्य स्तुत्यर्थः स्वाध्यायार्थो जपार्थश्च ब्रह्मविद्याया अथ वंश आरभ्यते—

नाच्च वैष्टपुरेयाच्च वैष्टपुरेयः शाण्डिल्यांच्च रौहिणायनाच्च रौहिणायनः शौनकाच्चात्रेयाच्च रैभ्याच्च रैभ्यः पौतिमाष्यायणाच्च कौण्डिन्यायनाच्च कौण्डिन्यायनः कौण्डिन्यात्कौण्डिन्यः कौडिन्यात्कौण्डिन्यः कौण्डिन्याच्चाग्निवेश्याच्च ॥२०॥

अग्निवेश्यः सैतवात् । सैतवः पाराशर्यात्पाराशर्यो जातूकर्ण्याज्जातूकर्ण्यो भारद्वाजाद्भारद्वाजो भारद्वाजाच्चासुरायणाच्च गौतमाच्च गौतमो भारद्वाजाद्भारद्वाजो बैजवापायनाद्बैजवापायनः कौशिकायनेः कौशिकायनिर्घृतकौशिकाद्घृतकौशिकः पाराशर्यायणात्पाराशर्यायणः पाराशर्यात्पाराशर्यो जातूकर्ण्याज्जातूकर्ण्यो भारद्वाजाद्भारद्वाजो भारद्वाजाच्चासुरायणाच्च यास्काच्चासुरायणस्त्रैवणेस्त्रैवणिरौपजन्धनेरौपजन्धनिरासुरेरासुरिर्भारद्वाजाद्भारद्वाज आत्रेयात् ॥२१॥

आत्रेयो माण्टेः । माण्टिर्गौतमाद्गौतमो गौतमाद्गौतमो वात्स्याद्वात्स्यः शाण्डिल्याच्छाण्डिल्यः कैशोर्यात्काप्यात्कैशोर्यः काप्यः कुमारहारितात्कुमारहारितो गालवाद्गालवो विदर्भीकौण्डिन्याद्विदर्भीकौण्डिन्यो वत्सनपातो वाभ्रवाद्वत्सनपाद्वाभ्रवः पथः सौभरात्पन्थाः सौभरोऽयास्यादाङ्गिरसादयास्य आङ्गिरस आभूतेस्त्वाष्ट्रादाभूतिस्त्वाष्ट्रो विश्वरूपात्त्वाष्ट्राद्विश्वरूपस्त्वाष्ट्रोऽश्विभ्यामश्विनौ दधीच आथर्वणाद्दध्यङ्ङाथर्वणोऽथर्वणो दैवादथर्वा दैवो मृत्योः प्राध्वँसनान्मृत्युः प्राध्वँसनः प्रध्वँसनात्प्रध्वँसन एकर्षेरेकर्षिर्विप्रजित्तेर्विप्रजित्तिर्व्यष्टेर्व्यष्टिः सनारोः सनारुः सनातनात्सनातनः सनगात्सनगः परमेष्ठिनः परमेष्ठी ब्रह्मणो ब्रह्म स्वयंभु ब्रह्मणे नमः ॥२२॥

इति बृहदारण्यकोपनिषदि द्वितीयाध्याये पञ्चमं ब्राह्मणम् ॥५॥

इति बृहदारण्यकोपनिषदि द्वितीयोऽध्यायः ॥२॥

इति बृहदारण्यकक्रमेण पंचमोऽध्यायः ॥५॥

अथ वंश इति । वंश इव वंशो यथा वेणुर्वंशः पर्वणः पर्वणो भिद्यते तद्वदग्रात्प्रभृत्या मूलप्राप्तेरयं वंशोऽध्यायद्वयस्याचार्यपरम्पराक्रमो वंश इत्युच्यते । तत्र प्रथमान्त. शिष्य. पञ्चम्यन्त आचार्यो बोद्धव्यः ॥२०॥

अग्निवेश्यः सैतवादाचार्यादधीतवान् ॥२१॥

आत्रेयो माण्टेरधीतवान् । परमेष्ठी विराड्ब्रह्मणो हिरण्यगर्भादधीतवान् । हिरण्यगर्भः स्वयं प्रतिभातवेद इति तत आचार्यपरम्परा नास्ति । यत्पुनर्ब्रह्म वेदाख्यं तत्स्वयंभु नित्यं तस्मै ब्रह्मणे स्वयम्भुवे वेदरूपेणावस्थिताय नमो वाङ्मनःकायकृत. प्रह्वीभावो भवत्वित्यर्थः ॥२२॥

इति श्रीविद्यारण्यमुनिविरचितमाध्यन्दिनशाखीयबृहदारण्यकोपनिषद्दीपिकाया

द्वितीयाध्याये पञ्चमं ब्राह्मणम् ॥५॥

## अथ तृतीयोऽध्यायः

### अथ तृतीयाध्यायस्य प्रथमं ब्राह्मणम्

जनको ह वैदेहः । बहुदक्षिणेन यज्ञेनेजे तत्र ह कुरुपञ्चालानां
ब्राह्मणा अभिसमेता बभूवुस्तस्य ह जनकस्य वैदेहस्य विजि-
५ ज्ञासा बभूव कःस्विदेषां ब्राह्मणानामनूचानतम इति ॥१॥
स ह गवाᳬँ सहस्रमवरुरोध । दश दश पादा एकैकस्याः शृङ्ग-
योराबद्धा बभूवुस्तान्होवाच ब्राह्मणा भगवन्तो यो वो ब्रह्मिष्ठः
स एता गा उदजतामिति ते ह ब्राह्मणा न दधृषुः ॥२॥
अथ ह याज्ञवल्क्यः स्वमेव ब्रह्मचारिणमुवाचैताः सोम्योदज सामश्रवा३
१० इति ता होदाचकार ते ह ब्राह्मणाश्चुक्रुधुः कथन्नु नो ब्रह्मिष्ठो ब्रुवीतेति ॥३॥
अथ ह जनकस्य वैदेहस्य होताऽश्वलो बभूव । स हैनं पप्रच्छ त्वं नु खलु
नो याज्ञवल्क्य ब्रह्मिष्ठोऽसी३ इति स होवाच नमो वयं ब्रह्मिष्ठाय
कुर्मो गोकामा एव वयᳬँ स्म इति तᳬँ ह तत एव प्रष्टुं दध्रे होताऽश्वलः ॥४॥

एवमागमप्रधानेन मधुकाण्डेनोक्तमेवार्थमुपपत्तिभिर्निरूपयितुमुपपत्तिप्रधानं याज्ञवल्कीयं काण्डमारभ्यते । तत्र
१५ प्रस्तावं कर्तुं विज्ञानस्तुत्यर्था विद्याप्राप्त्युपायदानप्रदर्शनार्था वाऽऽख्यायिकाऽऽश्वलब्राह्मणेनारभ्यते—जनको ह वैदेह इत्यादिना । विदेहेषु भवो वैदेहो जनको जनकनामा राजा ह किल बभूव स च बहुदक्षिणेन यज्ञेन शाखान्तरप्रसिद्धेन बहुदक्षिणाविशिष्टेनाश्वमेधेन वा, ईजे अयजत् । तत्र तस्मिन् यज्ञे ह विद्वद्बाहुल्येन प्रसिद्धाना कुरूणां पञ्चालानां च देशानां ब्राह्मणा निमन्त्रिता दर्शनकामा वाऽभिसमेता अभिसंगता बभूवुः । तत्र महान्तं विद्वत्समुदायं दृष्ट्वा ह किल तस्य जनकस्य वैदेहस्य यजमानस्य कःस्वित् को नु खल्वेषां ब्राह्मणानां मध्येऽनूचानतमः सर्वे इमे अनूचानाः
२० कःस्विदेषामतिशयेनानूचानोऽनुवचनसमर्थो ब्रह्मिष्ठ इति विजिज्ञासा विशेषेण ज्ञातुमिच्छा बभूव ॥१॥

पश्चात्स जनको ह्यनूचानविषयोत्पन्नजिज्ञासः सन् तद्विज्ञानोपायार्थं गवा प्रथमवयसां धेनूना सहस्रमवरुरोध गोष्ठेऽवरोधं कारयामास । किं विशिष्टास्ता गावोऽवरुद्धा इत्यत आह—दश दशेति । तासामेकैकस्या गोः शृङ्गयो-र्विषय दश दश पादाः पलचतुर्भागः पाद एवं भूताः सुवर्णस्य दश दश पादा आवद्धा बभूवुः शृङ्गयोरिति द्विवचनादे-कैकस्मिन् शृङ्गे पञ्च पञ्च पादा आवद्धा इत्यर्थः । एवं गा अवरुद्धय जनकस्तान् ब्राह्मणान् ह किलोवाच हे ब्राह्मणा
२५ वेदाध्ययनसंपन्नास्तदर्थनिष्ठा भगवन्तः पूजार्हा यो वो युष्माकं मध्ये ब्रह्मिष्ठोऽतिशयेन ब्रह्मज्ञः स एता गा उदजता नयतु । ते ब्राह्मणा ह किलैवमुक्ता न दधृषुः आत्मनो ब्रह्मिष्ठता प्रतिज्ञातुं न प्रगल्भाः संवृत्ता इत्यर्थः ॥२॥

अथानन्तरमप्रगल्भभूतेषु ब्राह्मणेषु ह किल याज्ञवल्क्यः स्वमात्मीयमेव ब्रह्मचारिणमन्तेवासिनमुवाच । किं ? हे सौम्य सामश्रवा३ इति प्लुतिर्दूरादाह्वानार्था । सामविधिं शृणोतीति सामश्रवास्तस्य संबुद्धी हे सामश्रवः यतो यजुर्वेदविदो याज्ञवल्क्यात्सामविधिश्रवणमनुपपन्नमित्यर्थाच्चतुर्वेदो याज्ञवल्क्य इति सिद्धम् । हे सामश्रवः एता गा
३० उदजोद्गमयास्मद्गृहान् प्रति । एवं गुरुवचनं श्रुत्वा ह किल ब्रह्मचारी ता गा उदाचकारोत्कालितवानाचार्यगृह प्रति नीतवानित्यर्थः । एवं ब्रह्मिष्ठाय निर्दिष्टगवामपहरणाद्याज्ञवल्क्येनात्मनो ब्रह्मिष्ठता प्रतिज्ञातेति अस्माकम-ब्रह्मिष्ठता प्रतिज्ञायत इति मन्वानास्ते ह ब्राह्मणाश्चुक्रुधुः क्रुद्धवन्तः तेषां क्रोधाभिप्रायमाह—कथमिति । कथमयं नोऽस्माकमेकैकप्रधानानामग्रे ब्रह्मिष्ठोऽस्मीति ब्रुवीत कथयेत् । इतिशब्दोऽभिप्रायसमाप्तिद्योतकः ॥३॥

अथ हैवं क्रुद्धेषु ब्राह्मणेषु जनकस्य यजमानस्याश्वलोऽश्वलनामा होता ऋत्विग्बभूवासीत् । स ब्रह्मिष्ठाभिमानी
३५ राजाश्रयत्वाच्च धृष्ट एनं याज्ञवल्क्यं ह पप्रच्छ पृष्टवान् कथं हे याज्ञवल्क्य नोऽस्माकमग्रे त्वं नु खलु ब्रह्मिष्ठोऽसी३ इति प्लुतिर्निर्भर्त्सनार्था । अनौद्धत्यं ब्रह्मविदो लिङ्गमिति सूचयन्ती श्रुतिर्याज्ञवल्क्यकृतमुत्तरं दर्शयति—स हेति ।

याज्ञवल्क्येति होवाच । यदिदँ सर्वं मृत्युनाप्तँ सर्वं मृत्युनाऽभिपन्नं केन यजमानो मृत्योराप्तिमतिमुच्यत इति होत्रर्त्विजाऽग्निना वाचा वाग्वै यज्ञस्य होता तद्येयं वाक्सोऽयमग्निः स होता सा मुक्तिः साऽतिमुक्तिः ॥५॥

याज्ञवल्क्येति होवाच । यदिदँ सर्वमहोरात्राभ्यामाप्तँ सर्वमहोरात्राभ्यामभिपन्नं केन यजमानोऽहोरात्रयोराप्तिमतिमुच्यत इत्यध्वर्युणर्त्विजा चक्षुषाऽऽदित्येन चक्षुर्वै यज्ञस्याध्वर्युस्तद्यदिदं चक्षुः सोऽसावादित्यः सोऽध्वर्युः सा मुक्तिः सातिमुक्तिः ॥६॥ ५

याज्ञवल्क्येति होवाच । यदिदँ सर्वं पूर्वपक्षापरपक्षाभ्यामाप्तँ सर्वं पूर्वपक्षापरपक्षाभ्यामभिपन्नं केन यजमानः पूर्वपक्षापरपक्षयोरा-प्तिमतिमुच्यत इति ब्रह्मणर्त्विजा मनसा चन्द्रेण मनो वै यज्ञस्य ब्रह्मा तद्यदिदं मनः सोऽसौ चन्द्रः स ब्रह्मा सा मुक्तिः साऽतिमुक्तिः ॥७॥ १०

स याज्ञवल्क्यो होवाच वयं ब्रह्मिष्ठाय नमस्कुर्मः तर्हि किमिति ब्रह्मिष्ठपणभूता गावः स्वगृहं प्रति प्रस्थापिता इत्यत आह—गोकामा इति । वयं गोकामा एव स्मः । अतो गोग्रहणं कृतवन्त इति । तं ब्रह्मिष्ठप्रतिज्ञं सन्तं तत एव ब्रह्मिष्ठपणस्वीकरणादेव होताऽश्वलः प्रष्टुं दध्रे मनो धृतवान् ॥४॥

पूर्वत्र व्याख्याते मधुकाण्डे यदुद्गीथप्रकरणं तस्मिन्नासङ्गपाप्मनो मृत्योरत्यय. समुच्चितेन कर्मणा संक्षेपतो व्याख्यातस्तस्यैवोद्गीथदर्शनस्य परीक्षाविपयोऽयं प्रश्नप्रतिवचनरूपो विस्तर आरभ्यते—याज्ञवल्क्येति होवाचेति । १५ हे याज्ञवल्क्येति प्रथमं मुनेराभिमुख्यमापादयितुं संबोध्योवाच । अस्य कर्मणो यदिदं साधनजातमृत्विगग्न्यादिलक्षणं मृत्युना कर्मलक्षणेन स्वाभाविकाज्ञानजासङ्गसहितेनाऽऽप्तं व्याप्तं किञ्चाभिपन्नं च मृत्युना वशीकृतं च । अथ केन दर्शनलक्षणेन साधनेन यजमानो मृत्योराप्तिमतीत्य मृत्युगोचरत्वमतिक्रम्य मुच्यते स्वतन्त्रो मृत्योरवश्यो भवतीत्यर्थः । इत्येवमश्वलेन पृष्टो याज्ञवल्क्य उत्तरमाह—होत्रर्त्विजाग्निना वाचेति । एतस्याभिप्रेतमर्थं श्रुतिः स्वयमेव व्याचष्टे—वाग्वा इति । "यज्ञो वै यजमान" इति श्रुतेः यज्ञस्य यजमानस्य याऽध्यात्मं वाग्सैवाधियज्ञे होता । तत्रैवं सति २० येयं यज्ञस्य यजमानस्य वाक् सेयं प्रसिद्धोऽग्निरधिदैवं स एव वागैक्यमापन्नोऽग्निर्होता स होताऽग्निरूपेण दृष्टः सा मुक्तिर्मृत्योरतिक्रमणरूपाया मुक्तेः साधनं सोक्तरूपा मुक्तिरेवातिमुक्ति. फलभूताया अग्न्यादिभावपत्तिरूपाया अतिमुक्तेः साधनम् । तथा चाध्यात्मिकादाधिभौतिकाच्च परिच्छिन्नरूपाद्वाग्घोतृलक्षणात्साधनद्वयादपरिच्छिन्नाधिदेवताग्निरूपेण होतरि दृष्टिः मुक्तिसाधनमित्यर्थ ॥५॥

स्वाभाविकादज्ञानासङ्गप्रयुक्तात्कर्मलक्षणान्मृत्योरतिमुक्तिर्व्याख्याता । तस्य कर्मणः सासङ्गस्य मृत्योराश्रय- २५ भूताना दर्शपूर्णमासादिकर्मसाधनानां यो विपरिणामहेतुः कालस्तस्मात्कालात्पृथगतिमुक्तिर्वक्तव्येतीदमारभ्यते क्रियानु-ष्ठानव्यतिरेकेणापि क्रियायाः प्रागूर्ध्वं च साधनविपरिणामहेतुत्वेन कालस्य व्यापारदर्शनात्तस्मात् कालात् पृथगति-मुक्तिर्वक्तव्येति । स च कालो द्विरूपोऽहोरात्राभ्यामाप्तमित्यादिना । अहोरात्राभ्या हि सर्वं जायते वर्द्धते विनश्यति च । तथा यज्ञसाधनं यज्ञस्य यजमानस्य चक्षुरध्वर्युश्च ताभ्या नश्यति चेति संबन्धः शिष्टान्यक्षराणि पूर्ववद्योज्यानि यजमानस्य चक्षुरध्वर्युश्चेति साधनद्वयमध्यात्माधिभूतपरिच्छेदं हित्वाऽपरिच्छिन्नाधिदैवतादित्यात्मना दृष्टं सन्मुक्तिः ३० सा मुक्तिरेवातिमुक्तिरिति पूर्ववत् । आदित्यात्मभावमापन्नस्य हि नाहोरात्रे संभवत इत्यर्थः ॥६॥

इदानी तिथ्यादिलक्षणात्कालादतिमुक्तिरुच्यते । वृद्धिक्षयशून्ययोरहोरात्रयोरादित्यः कर्त्ता न प्रतिपदादीनां तिथीनां तासा तु वृद्धिक्षयोपगमनेन चन्द्रमाः कर्त्ता । अत आदित्यप्राप्त्याऽऽहोरात्रात्ययवच्चन्द्रप्राप्त्या पूर्वापरपक्षात्यय इत्याह—याज्ञवल्क्येति होवाच । यदिदं सर्वं पूर्वपक्षापरपक्षाभ्यामाप्तमित्यादिना । ब्रह्मणर्त्विजा मनसा चन्द्रेणेत्यक्षर-न्यासः तत्राध्यात्मं यज्ञस्य यजमानस्य यदिदं प्रसिद्ध मनः सोऽसौ चन्द्रोऽधिदैवम् । मनोऽध्यात्म चन्द्रमा अधिदैवतमिति ३५ हि प्रसिद्धम् । स एव चन्द्रो ब्रह्मर्त्विक् तेन यजमानस्य मनो ब्रह्मेति च साधनद्वयमपरिच्छिन्नाधिदैवतचन्द्रात्मना दृष्टं सन्मुक्तिरित्यर्थः ॥७॥

**याज्ञवल्क्येति होवाच । यदिदमन्तरिक्षमनारम्बणमिवाथ केनाक्रमेण यजमानः स्वर्गं लोकमाक्रमत इत्युद्गात्रर्त्विजा वायुना प्राणेन प्राणो वै यज्ञस्योद्गाता तद्योऽयम्प्राणः स वायुः स उद्गाता सा मुक्तिः साऽतिमुक्तिरित्यतिमोक्षा अथ सम्पदः ॥८॥**

५ **याज्ञवल्क्येति होवाच । कतिभिरयमद्यर्ग्भिर्होतास्मिन्यज्ञे करिष्यतीति तिसृभिरिति कतमास्तास्तिस्र इति पुरोनुवाक्या च याज्या च शस्यैव तृतीया किं ताभिर्जयतीति पृथिवीलोकमेव पुरोऽनुवाक्यया जयत्यन्तरिक्षलोकं याज्यया द्यौर्लोकं शस्यया ॥९॥**

**याज्ञवल्क्येति होवाच । कत्ययमद्याध्वर्युरस्मिन्यज्ञ आहुतीर्होष्यतीति तिस्र इति कतमास्तास्तिस्र इति या हुता उज्ज्वलन्ति या हुता अतिनेदन्ति या हुता**
१० **अधिशेरते किं ताभिर्जयतीति या हुता उज्ज्वलन्ति देवलोकमेव ताभिर्जयति दीप्यत इव हि देवलोको या हुता अतिनेदन्ति मनुष्यलोकमेव ताभिर्जयत्यतीव हि मनुष्यलोको या हुता अधिशेरते पितृलोकमेव ताभिर्जयत्यध इव हि पितृलोकः ॥१०॥**

यजमानस्य कालान्मृत्योरतिमुक्तिर्व्याख्याता सोऽतिमुच्यमानः केनावष्टम्भेन परिच्छेदविषयं मृत्युमतीत्य फलं प्राप्नोतीत्यत आह—**याज्ञवल्क्येति होवाच । यदिदमन्तरिक्षमित्यादिना ।** यदिदं प्रसिद्धमन्तरिक्षमाकाशोऽनारंबणमना-
१५ लम्बनमिव भासत इति शेषः । इव शब्दादस्त्येव तत्रालम्बनं तत्तु न ज्ञायत इत्यभिप्रायः । यत्तदज्ञायमानमालम्बनं तत्केनेति सर्वनाम्ना पृच्छ्यते । अन्यथा फलप्राप्तेरसंभवात् । येनाक्रमेणावष्टम्भेन यजमानः कर्मफलं प्रतिपद्यमानोऽतिमुच्यते किं तदिति प्रश्नविषयः । *अथ केनाक्रमेणा*वष्टम्भेन यजमानः स्वर्गं लोकमाक्रमते स्वर्गं लोकं फलं प्राप्नोत्यतिमुच्यत इत्यर्थः । उद्गात्रर्त्विजा वायुना प्राणेनेति । उद्गातर्त्विगधिभूत परिच्छिन्नं रूपम् । अध्यात्मं च प्राणः एतद्द्वयमपरिच्छिन्नेन वायुरूपेण पश्यति तेन वायुना प्राणेनावलम्बनेन । कर्मफलं स्वर्गंलोकं प्राप्नोत्यतिमुच्यत्यभिप्रायः ।
२० एवमनुक्तवगादीनामपि वाय्वात्मना दर्शनं वक्तव्यमित्यभिप्रेत्योपसंहरति—**इतीति ।** इतीत्युपसहारार्थं वचनम् । इत्येवंप्रकारा । मृत्योरतिमोक्षा इत्यर्थः । अथ संपदः । अथाधुना संपद उच्यन्ते । संपन्नाम महता फलवतामश्वमेधादिकर्मणा कर्मत्वादिना सामान्येनाल्पीयस्सु कर्मसु विवक्षितफलसिद्ध्यर्थं संपत्तिः संपदुच्यते । यथाशक्त्यग्निहोत्रादिनिवर्तनेनाश्वमेधादिकर्म मया निवर्त्यंत इति ध्यानं संपदित्यर्थः । यद्वा फलस्यैव देवलोकादेरुज्ज्वलत्वादिसामान्येनाज्याद्याहुतिषु संपादनं संपदित्यर्थः । अतः संपद आरभ्यन्ते ॥८॥

२५ संपदामारंभमुपपाद्य प्रश्नवाक्यमुत्थापयति—**याज्ञवल्क्येति होवाचेति ।** अभिमुखीकरणाय । कतिभिः कतिसंख्याभिर्ऋग्भिऋग्जातिभिरय होताद्याऽस्मिन्यज्ञे करिष्यति शस्त्रं शंसिष्यति । इत्येवमश्वलेन पृष्टो याज्ञवल्क्य आह—**तिसृभिर्ऋग्जातिभिरिति ।** एवमुत्तरमुक्तवन्तं याज्ञवल्क्य प्रति पुनस्तासां स्वरूप पृच्छति कतमास्ता इति संख्येयविषयोऽयं प्रश्नः । पूर्वस्तु संख्याविषयः । किंस्वरूपास्तास्तिस्रः ऋग्जातय इति पृष्ट उत्तरमाह—**पुरोनुवाक्या चेति ।** प्रयोगकालात् होत्रा प्रयुज्यमाना ऋग्जातिः पुरोनुवाक्येत्युच्यते । यागार्थं प्रयुज्यमाना ऋग्जातिर्याज्या । शस्त्रार्थं
३० प्रयुज्यमाना ऋग्जातिः शस्या । सैव तृतीया त्रिसंख्यापूरणी । याः काश्चन ऋच स्तोत्रीया वा अन्या वा ताः सर्वा एतास्वेव तिसृषु ऋग्जातिष्वन्तर्भवतीत्यर्थः । एतासां फलं पृच्छति—**किं ताभिरिति ।** ताभि. पुरोवाक्याद्याभिर्ऋग्जातिभिर्यजमानः किं जयति किं फलं प्राप्नुयात् । उत्तरमाह—**पृथिवीलोकमेवेति ।** पुरोनुवाक्यया पृथिवीलोकमेव जयति लोकसंबन्धसामान्यादन्तरिक्षलोकं याज्यया मध्यत्वसामान्यात् । द्यौर्लोक द्युलोकं शस्यया जयत्यूर्ध्वत्वसामान्यात् ॥९॥

३५ एवमृग्जातिषु फलसंपादने विहितेऽध्वर्यूकृताहुतिषु फलसंपादनजिज्ञासया पृच्छति—**याज्ञवल्क्येति होवाच ।** वाचकत्ययमद्याध्वर्युरित्यादिना । समानार्थकमेतत् । या हुता समिदाज्याहुतय उज्ज्वलन्ति या हुताः मांसाद्याहुतयोऽति-

याज्ञवल्क्येति होवाच । कतिभिरयमद्य ब्रह्मा यज्ञं दक्षिणतो देवताभिर्गोपायिष्यतीत्येकयेति कतमा सैकेति मन एवेत्यनन्तं वै मनोऽनन्ता विश्वे देवा अनन्तमेव स तेन लोकं जयति ॥११॥

याज्ञवल्क्येति होवाच । कत्ययमद्योद्गाताऽस्मिन्यज्ञे स्तोत्रियाः स्तोष्यतीति तिस्र इति कतमास्तास्तिस्र इति पुरोनुवाक्या च याज्या च शस्यैव तृतीयाधिदेवतमथाध्यात्मं कतमास्ता या अध्यात्ममिति प्राण एव पुरोनुवाक्याऽपानो याज्या व्यानः शस्या किं ताभिर्जयतीति यत्किञ्चेदं प्राणभृदिति ततो ह होताऽश्वल उपरराम ॥१२॥ ५

इति बृहदारण्यकोपनिषदि तृतीयाध्याये प्रथमं ब्राह्मणम् ॥१॥

नेदन्ति अतीव शब्दं कुर्वन्ति या हुताः पयःसोमाहुतयो अधिशेरतेऽधि भूमेरधो गत्वा शेरते । किं ताभिर्जयतीति ताभिरेव निष्पादिताभिराहुतिभिः किं जयतीति पृष्ट आह—या हुता उज्ज्वलन्तीति । या उज्ज्वलनयुक्ता आहुतयो निर्वर्तिताः १० ताभिराहुतिभिर्देवलोकमेव जयति । एता उज्ज्वलन्त्य आहुतयो निर्वर्त्यमानाः साक्षाद्देवलोकस्य कर्मफलस्य रूपं देवलोकाख्यमुज्ज्वलं फलमेव मया निर्वर्त्यत इत्येवं संपादयति । कथमित्यपेक्षायामुज्ज्वलत्वसामान्यादित्याह—दीप्यत इवेति । हि यस्माद्देवलोको दीप्यत इव भासत इव उज्ज्वल इवेत्यभिनयप्रदर्शनार्थ इवशब्दः । तथा या हुता अतिनेदन्ते । अतीव शब्दं कुर्वन्ति ताभिराहुतिभिर्मनुष्यलोकं जयति । हि यस्मादतीवातिकुत्सितशब्द इव मनुष्यलोकः पापप्रचुरस्य हि मनुष्यलोकः हि यस्मादतीवातिकुत्सितशब्द इव मनुष्यलोकः पापप्रचुरस्य हि मनुष्यलोकस्य यातना । १५ यत्र हा हताः स्म इति कुत्सितशब्दो भवति । या हुता आहुतयोऽधिशेरते ताभिराहुतिभिः पितृलोकमेव जयति । उपरितनसाध्यादिलोकापेक्षया पापप्रचुरत्वेनाधोगमनापेक्षया वा पितृलोकोऽध इव वर्तत इत्यर्थः ॥१०॥

याज्ञवल्क्येति होवाचेति पूर्ववत् । अद्यायं ब्रह्मा ऋत्विगाहवनीयस्य दक्षिणतो ब्रह्मासने स्थित्वा कतिभिर्देवताभिर्यज्ञं गोपायिष्यति रक्षिष्यति । कतिभिरिति पूर्वयोः कण्डिकयोः प्रश्नप्रतिवचनेषु तिस्र इति प्रसङ्गदृष्ट्येहापि बहुवचनेनैव प्रश्नोपक्रमः क्रियते । अथवा प्रतिवादिव्यामोहार्थं बहुवचनं बोद्धव्यम् । इतर आह—एकयेति । यया २० दक्षिणतो ब्रह्मासने स्थित्वा यज्ञं गोपायति सैका देवतेत्यर्थः । कतमा सैकेति मन एवेति मन एव देवता । मनसा हि ध्यानेनैव ब्रह्मा व्याप्रियते । ततो मन एवैका देवता तया यज्ञं गोपायतीति भावः । अस्मिन्मनसि संपाद्यमान फलमपृष्टमपि मुनिराह—अनन्तं वै मन इति । वैशब्दः प्रसिद्धयवद्योतनार्थः । तच्च मनो वृत्तिभेदेनानन्तं वै प्रसिद्धम् । तदानन्त्याभिमानिनो विश्वेदेवाः सर्वे देवाश्चानन्ताः तस्मात्स उपासकस्तेन मनसि वैश्वदेवदृष्ट्यध्यासेनानन्त्यसामान्यादनन्तमेव लोकं जयतीत्यर्थः ॥११॥ २५

याज्ञवल्क्येति होवाचेति पूर्ववत् । कति स्तोत्रियाः स्तोष्यत्ययमुद्गातेति । स्तोत्रिया नाम गीतिविशिष्टा ऋग्जातयः । समानमन्यत् । प्रतिवचनमुपादत्ते पुरोनुवाक्या च यज्या च शस्यैव तृतीया अधिदेवतमिति । एताश्च पुरोनुवाक्यादयो व्याख्याताः । अधिदेवतमिति यज्ञाधिकारादधियज्ञमिति बोद्धव्यम् । अधियज्ञं पुरोनुवाक्यादयो गीतिरूपेण वर्तमाना अधियज्ञसंज्ञका इत्येतदवगतम् । परन्तु केन रूपेणैता पुनरध्यात्मं भवन्तीति पृच्छति—कतमास्ता इति । या अध्यात्मं स्तोत्रियास्तिस्र ऋचः कास्ता इति पृष्ट उत्तरमाह—प्राण एव पुरोनुवाक्येत्यादिना । प्राण एव ३० पुरोनुवाक्या प्राणपुरोनुवाक्ययोः पकारादित्वसामान्यात् । अपानो याज्या अपानयाज्ययोः प्राणपुरोनुवाक्याभ्यामानन्तर्यसामान्यात् व्यानः शस्या "अप्राणन्ननपानन्नृचमभिव्याहरती"ति श्रुत्यन्तरे शस्त्रप्रयोगस्य प्राणापानव्यापारव्यतिरेकेण सिद्धत्वाद्व्याने शस्यादृष्टिरिति भावः । एवं प्राणादिषु पुरोनुवाक्यादिदृष्टिकरणस्य फलं पृच्छति—किं ताभिर्जयतीति । एवं पृष्ट उत्तरमाह—यद् किञ्चेदं प्राणभृदिति । प्राणभृत् प्राणिजातं यत्किञ्चेदमस्ति तत्सर्वं जयति सर्वप्राण्यात्मकभूरादिलोकत्रयसख्यासामान्यात् । पूर्वं विशेषत उक्तस्य सामान्येनोक्तिरियम् । ततो ह तस्मादात्मनः ३५ प्रश्ननिर्णयादसावश्वलो होता नायमस्मद्गोचर इत्यभिप्रायेणोपरराम ॥१२॥

इति श्रीविद्यारण्यमुनिविरचितमाध्यन्दिनशाखीयबृहदारण्यकोपनिषद्दीपिकायां तृतीयाध्याये प्रथमं ब्राह्मणम् ॥१॥

अथ तृतीयाध्यायस्य द्वितीयं ब्राह्मणम्

अथ हैनं जारत्कारव आर्तभागः पप्रच्छ। याज्ञवल्क्येति होवाच कति ग्रहाः कत्यतिग्रहा इत्यष्टौ ग्रहा अष्टावतिग्रहा ये तेऽष्टौ ग्रहा अष्टावतिग्रहाः कतमे त इति ॥१॥

५ प्राणो वै ग्रहः। सोऽपानेनातिग्रहेण गृहीतोऽपानेन हि गन्धाञ्जिघ्रति ॥२॥
जिह्वा वै ग्रहः। स रसेनातिग्रहेण गृहीतो जिह्वया हि रसान्विजानाति ॥३॥
वाग्वै ग्रहः। स नाम्नाऽतिग्रहेण गृहीतो वाचा हि नामान्यभिवदति ॥४॥
चक्षुर्वै ग्रहः। स रूपेणातिग्रहेण गृहीतश्चक्षुषा हि रूपाणि पश्यति ॥५॥
श्रोत्रं वै ग्रहः। स शब्देनातिग्रहेण गृहीतः श्रोत्रेण हि शब्दाञ्छृणोति ॥६॥
१० मनो वै ग्रहः। स कामेनातिग्रहेण गृहीतो मनसा हि कामान्कामयते ॥७॥
हस्तौ वै ग्रहः। स कर्मणाऽतिग्रहेण गृहीतो हस्ताभ्यां हि कर्म करोति ॥८॥

त्वग्वै ग्रहः। स स्पर्शेनातिग्रहेण गृहीतस्त्वचा हि स्पर्शान्वेदयत इत्यष्टौ ग्रहा अष्टावतिग्रहाः ॥९॥

एवं काललक्षणात्कर्मलक्षणाच्च मृत्योरतिमुक्तिर्व्याख्याता। इदानीं बन्धज्ञानं विना ततो विश्लेषायोगा-
१५ न्मुमुक्षोः सप्रयोजकबन्धज्ञानार्थत्वेन ग्रहातिग्रहलक्षणाद्बन्धान्मृत्योरतिमुक्तिं वक्तुमाख्यायिकामनुसृत्यार्तभागब्राह्मणमारभ्यते—**अथ हैनं जारत्कारव इति**। हशब्द ऐतिह्यार्थः। अथानन्तरमश्वले उपरते एनं प्रकृतं याज्ञवल्क्यं जरत्कारुगोत्रो जारत्कारवः ऋतभागस्यापत्यमार्तभागः पप्रच्छ। याज्ञवल्क्येति होवाचेत्यभिमुखीकरणाय पूर्ववत्। कति ग्रहाः कत्यतिग्रहाः इतिशब्दो वाक्यपरिसमाप्त्यर्थः। मुक्त्यतिमुक्तिप्रतियोगित्वेन सामान्यतः प्रसिद्धग्रहाः कति कतिसंख्याका अतिग्रहाश्च कतिसंख्याका इति संख्याविषयोऽयं प्रश्नः। एवं पृष्ट उत्तरमाह—**अष्टौ ग्रहा अष्टावतिग्रहा इति**। ततः संख्येयान्पृच्छति ये तेऽष्टौ ग्रहा अष्टावतिग्रहाश्चाभिहितास्ते कतमे के इत्यर्थः ॥१॥
२०

एवं पृष्ट उत्तरमाह—**प्राणो वै ग्रह इति**। प्राण इति घ्राणमुच्यते। प्रकरणाद्वायुसहितः स प्राणाख्यः प्राणो ग्रहवत् परवशताहेतुत्वाद्ग्रहः। अपानेनेति गन्धेनाऽतिग्रहेण ग्रहीतः अपश्वासोऽत्रापानशब्दार्थः। अपानसचिवत्वादपानो गन्ध उच्यते। कथं तेन ग्रहीत इत्यत आह—अपानेन हीति। हि यस्मादपानेनान्तर्मुखश्वासेन गन्धान् लोको जिघ्रति। अपानोपहृतं गन्धं घ्राणेन सर्वो लोको जिघ्रतीत्यतस्तेन प्राणो गृहीत इत्यर्थः ॥२॥

२५ जिह्वा वै ग्रहः स जिह्वाख्यो ग्रहो रसेनातिग्रहेण गृहीतः। जिह्वया ज्ञातं हि रसं सर्वो लोको रसयति तदेतदुच्यते जिह्वया हि रसान् विजानातीति ॥३॥

वाग्वै ग्रहोऽध्यात्मपरिच्छिन्नयाऽऽसङ्गविषयास्पदयाऽसत्यानृतासभ्यबीभत्सादिवचनेषु व्यापृतया हि वाचा लोको गृहीतोऽपहृतस्तेन वाग्ग्रहः। ग्रह इव ग्रहः स वागाख्यो ग्रहो नाम्ना वक्तव्येन विषयेणातिग्रहेण गृहीतः वक्तव्यासङ्गेन हि प्रयुक्ता वाक् सर्वानर्थैर्युज्यत इति प्रसिद्धमित्यभिप्रेत्याह—वाचा हीति। हि यस्माल्लोको नाम वक्तव्यार्थया
३० वाचा नामान्यभिवदति ॥४॥

चक्षुर्ग्रहो रूपमतिग्रहः ॥५॥
श्रोत्रं ग्रहः शब्दोऽतिग्रहः ॥६॥
मनो ग्रहः कामोऽतिग्रहः ॥७॥
हस्तौ ग्रहः कर्माऽतिग्रहः ॥८॥
३५ त्वग्ग्रहः स्पर्शोऽतिग्रहः इत्येवं घ्राणाद्यास्त्वगन्ता अष्टौ ग्रहाः गन्धाद्याः स्पर्शान्ताः अष्टावतिग्रहा इत्यर्थः ॥९॥

**याज्ञवल्क्येति होवाच । यदिदꣲ सर्वं मृत्योरन्नं का स्वित्सा देवता यस्या मृत्युरन्नमित्यग्निर्वै मृत्युः सोऽपामन्नमप पुनर्मृत्युं जयति ॥१०॥**

**याज्ञवल्क्येति होवाच । यत्रायं पुरुषो म्रियते किमेनं न जहातीति नामेत्यनन्तं वै नामानन्ता विश्वे देवा अनन्तमेव स तेन लोकं जयति ॥११॥**

**याज्ञवल्क्येति होवाच । यत्रायं पुरुषो म्रियत उदस्मात्प्राणाः क्रामन्त्याहो३ नेति नेति होवाच याज्ञवल्क्योऽत्रैव समवनीयन्ते स उच्छ्वयत्याध्मायत्याध्मातो मृतः शेते ॥१२॥** ५

**याज्ञवल्क्येति होवाच । यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यं मनश्चन्द्रं दिशः श्रोत्रं पृथिवीꣲ शरीरमाकाशमात्मौषधीर्लोमानि वनस्पतीन्केशा अप्सु लोहितं च रेतश्च निधीयते क्वायं तदा पुरुषो भवतीत्याहर सौम्य हस्तम् ॥१३॥**

उपसंहृतेषु ग्रहातिग्रहेषु पुनराह—याज्ञवल्क्येति होवाचेति । पूर्ववत् । यदिदं व्याकृतं सर्वं जगन्मृत्योरन्नं मृत्युना ग्रहातिग्रहलक्षणेन ग्रस्तमुत्पत्तिविनाशशालित्वाज्जगतः कास्वित्का नु सा देवता यस्या देवताया मृत्युरप्यन्नं भवेत् । यदि मृत्योरपि मृत्युं वक्ष्यति मुनिस्तर्हि तस्यापि मृत्य्वन्तरमित्यनवस्था स्यात् । अथ न वक्ष्यति तदाऽस्माद् ग्रहातिग्रहलक्षणान्मृत्योर्मोक्षो नोपपद्यते तस्य विनाशकाभावादिति प्रष्टुरभिप्रायः । अस्ति मृत्योर्मृत्युरित्युत्तरमाह—**अग्निर्वै मृत्युरिति** । अग्निर्वै प्रसिद्धो मृत्युः सर्वविनाशकत्वात् सोऽप्यग्निरपामन्नमद्भिर्भक्ष्यमाणत्वात् । एवं मृत्योरपि मृत्युर्ब्रह्मात्मसाक्षात्कारलक्षणो दृष्टः । सर्वमृत्योर्मृत्य्वन्तरानुपपत्तेर्नानवस्थेति भावः । तेन सर्वमृत्युना ग्रहातिग्रहलक्षणे बन्धने नाशिते संसारान्मोक्ष उपपन्नो भवतीत्येतत् प्रसाधितम् । अतो बन्धमोक्षाय पुरुषप्रयासः सफलो भवतीत्यर्थः । एवमुक्तस्य सर्वमृत्योर्मृत्यूत्पादने किं फलमित्यत आह—**अप पुनरिति** । ब्रह्मात्मसाक्षात्कारेण सर्वमृत्युना ग्रहातिग्रहलक्षणे मृत्यौ भक्षिते सति विद्वान्पुनर्मृत्युं पुनर्मरणमपजयति निराकरोति पुनर्मरणाय न जायत इत्यर्थः ॥१०॥ १० १५

एवं परमात्मदर्शनेन मुक्तस्य किं प्राणा एव समवनीयन्त आहोस्वित्तत्प्रयोजकमपि सर्वम् अथ प्राणा एव न तत्प्रयोजकं सर्वम् । तर्हि प्रयोजके विद्यमाने पुनः प्राणानां प्रसङ्गोऽथ सर्वमेव कामकर्मादिकं ततो मोक्ष उपपद्यत इत्येवमर्थ उत्तरप्रश्नोऽयमित्यभिप्रायवानाह—**याज्ञवल्क्येति होवाच । यत्रायं पुरुषो म्रियते किमेनं न जहातीति** । यत्र यस्मिन् कालेऽयं पुरुषो विद्वान् म्रियते तदैनं किं न जहाति न त्यजतीति । एव पृष्ट उत्तरमाह—**नामेतीति** । सर्वमेवैनं जहाति नाममात्रं तु न जहाति । सर्वे समवनीयन्ते नाममात्रं तु न लीयत इत्यर्थः । तत्कुत इत्यपेक्षायामाह—**अनन्तं वै नामेति** । आकृतिसम्बन्धात् । नित्यं वै प्रसिद्धं नाम शुको मुक्त इतिवद् व्यवहारपारम्पर्यात् । ब्रह्मविद्या स्तोतुमाह—**अनन्ता इति** । अनन्ता वै प्रसिद्धा विश्वेदेवा अतस्तान्नाम्नाऽऽनन्त्याधिकृतान् विश्वान्देवान् ब्रह्मास्मीति दर्शनेनात्मत्वेनोपगम्य स विद्वान् तेन दर्शनेनानन्तमेव लोकं जयतीत्यर्थः ॥११॥ २० २५

यत्तु साक्षात्कारज्ञाने जाते विद्वान्न म्रियते । न च तस्य प्राणा अत्यन्तं समवनीयन्ते किन्तु जीवन्मुक्तत्वेन सर्वदा तिष्ठतीति तन्निराकर्तुमाह—**याज्ञवल्क्येति होवाचेति** । पूर्ववत् । परमात्मसाक्षात्काररूपेण सर्वमृत्युना सविलासाज्ञानमृत्यौ नाशिते सति विद्वानयं पुरुषो यत्र यस्मिन्काले म्रियते तदाऽस्मात् म्रियमाणाद्ब्रह्मविदः सकाशात् प्राणा घ्राणादयो ग्रहा गन्धादयश्चातिग्रहा वासनारूपा अन्तस्था. सप्रयोजका उत्क्रामन्त्यूर्ध्वं गच्छन्त्याहोस्विन्नेति प्लुतिविचारणार्था । इति पृष्टो नेति नोत्क्रामन्तीति होवाच याज्ञवल्क्यः किन्तु अत्रैव परब्रह्मण्येकता गतेऽस्मिन् विदुष्येव समवनीयन्ते । एकीभावेन समवसृज्यन्ते प्रविलीयन्त ऊर्मय इव समुद्रे । तर्हि मृतप्रसिद्धिः कथमित्यपेक्षाया तस्यादेहविषयत्वादित्याह—**स उच्छ्वयतीति** । स मुक्तदेह उच्छ्वयत्युच्छूनतां प्रतिपद्यते । आध्मायति बाह्येन वायुना दृतिवदापूर्यते । आध्मातो मृतो निश्चेष्टः शेतेऽतो देहस्यैव मरणधर्मता । बन्धननाशे मुक्तस्य न क्वचिद्गमनमिति वाक्यार्थः ॥१२॥ ३० ३५

अथ केन प्रयुक्तं ग्रहाऽतिग्रहलक्षणं बन्धनमित्येतन्निर्दिधारयिषया पृच्छति—**याज्ञवल्क्येति होवाचेति** । यत्र यस्मिन्समयेऽस्य पुरुषस्याऽसम्यग्दर्शिनः शिरःपाण्यादिमतो मृतस्य वाग्वागधिष्ठात्री देवताऽग्निमप्येति अपिगच्छति । प्राणो घ्राणं तदधिष्ठात्री देवता वातमप्येति । चक्षुरादित्यम् । अप्येति सर्वत्र सम्बध्यते । मनश्चन्द्रम् । दिशः श्रोत्रम् ।

आर्तभागेति होवाच । आवमेवैतद्वेदिष्यावो न नावेतत्सजन इति तौ होत्क्रम्य मन्त्रयांचक्रतुस्तौ ह यदूचतुः कर्म हैव तदूचतुरथ ह यत्प्रशशंसतुः कर्म हैव तत्प्रशशंसतुः पुण्यो वै पुण्येन कर्मणा भवति पापः पापेनेति ततो ह जारत्कारव आर्तभाग उपरराम ॥१४॥

५ इति बृहदारण्यकोपनिषदि तृतीयाध्याये द्वितीयं ब्राह्मणम् ॥२॥

अथ तृतीयाध्यायस्य तृतीयं ब्राह्मणम्

अथ हैनं भुज्युर्लाह्यायनिः पप्रच्छ । याज्ञवल्क्येति होवाच मद्रेषु चरकाः पर्यव्रजाम ते पतञ्चलस्य काप्यस्य गृहानैम तस्यासीद्दुहिता गन्धर्वगृहीता तमपृच्छाम कोऽसीति सोऽब्रवीत् सुधन्वाङ्गिरस इति तं यदा लोकानामन्तानपृच्छामाथैनमब्रूम क्व पारिक्षिता
१० अभवन् क्व पारिक्षिता अभवन्निति तत्त्वा पृच्छामि याज्ञवल्क्य क्व पारिक्षिता अभवन्निति ॥१॥

पृथिवी शरीरम् । आकाशमात्मेत्यत्रात्मशब्देनात्माधिष्ठानं हृदयाकाशमुच्यते । स आकाशमप्येति लोमान्योषधीरपियन्ति । केशा वनस्पतीनपियन्ति । लोहितं रेतश्चाप्सु निधीयत इति पुनरादानलिङ्गम् । तदा तस्मिन्काले ऽयं पुरुषः क्व कस्मिन्नाश्रये भवति किमाश्रितः कार्यकरणसङ्घातमुपादत्त इति पृष्ट उत्तरं वक्तुमुपोद्घातमाह—आहरेति । हे सौम्य हस्तं करमाहर देहीति ॥१३॥

१५ हे आर्तभागेत्यामन्त्र्य ह किलोवाचाऽऽवमित्यावामेवैकान्ते गत्वैतस्य त्वत्पृष्टस्य वेदितव्यं यत्तत्वं तद्वेदिष्यावो निरूपयिष्यावः । "प्रथमायाश्च द्विवचने भाषायामि"त्यत्र भाषायामित्युक्तत्वादावमिति ह्रस्वत्वं छान्दसम् । कुत इत्यपेक्षायामाह—न नाविति । यस्मान्नो आवयोरेतद्वस्तु सजने जनसमुदाये निर्णेतुं न शक्यते । अनेकवादिविप्रतिपत्तेरित्यत एकान्ते गमिष्यावो विचारणायेति शेषः । एवमुक्त्वा यन्निर्णेतुं तर्क्यते अनेकवादिविप्रतिपत्तेरित्यत एकान्त गमिष्यावो विचारणायेति । श्रुतिः स्वमुखेनैवाचष्टे—तौ हेति । तौ ह याज्ञवल्क्यार्त्तभागौ सजनाद्देशादुत्क्रम्य मन्त्रया-
२० चक्रतुरादौ लौकिकवादिपक्षाणामेकैकं परिगृह्य विचारितवन्तावित्यर्थः । तौ ह विचार्य सर्वानेव पूर्वपक्षान् स्वभाववादादीनपोह्य यदूचतुरुक्तवन्तौ—तच्छृणु । कर्म हैवाश्रयं पुनः पुनः कार्यकरणोपादानहेतुं तत्तत्र विचारावस्थायामेकान्ते स्थित्वोचतुरुक्तवन्तौ । न केवलमूचतुरथ ह अपि तु कालकर्मदैवेश्वरेष्वभ्युपगतेषु हेतुषु यत्प्रशशंसतुः कर्मैव ह तत्प्रशशंसतुः कर्मैव प्रधानं कारणमिति । प्रशंसापदोपपादितं प्राधान्यमुपसंहरति—पुण्यो वा इति । यस्मादेवं ग्रहातिग्रहादिरूपकार्यकरणोपादानं कर्मप्रयुक्तमिति निर्द्धारितं तस्मात्पुण्येन शास्त्रविहितेन कर्मणा देवादिषु जायमानः पुण्य
२५ पुण्यात्मा वै भवति पापेन शास्त्रनिषिद्धेन कर्मणा स्थावरादिषु जायमानः पापः पापात्मा भवति । तत एव प्रश्ननिर्णयानन्तरं जारत्कारव आर्तभागो मनसाप्यचिन्तनीयपराजयोऽयमित्यभिप्रायेणोपरराम ॥१४॥

इति श्रीविद्यारण्यमुनिविरचितमाध्यन्दिनशाखीयबृहदारण्यकोपनिषद्दीपिकायां
तृतीयाध्याये द्वितीय ब्राह्मणम् ॥२॥

अथेहानन्तरप्रपाठकान्ते पुण्यो वै पुण्येन कर्मणा भवतीति श्रुत्या पुण्यमेव कर्म सर्वपुरुषार्थसाधनमित्युक्तं
३० तत्र मोक्षस्यापि पुरुषार्थत्वादुत्तमेन पुण्योत्कर्षेण मोक्षो भविष्यतीत्याशङ्क्याह निरासार्थम् । विद्यासंयुक्तस्यापि कर्मणो मोक्षारम्भकत्वासम्भवान्न मोक्षार्थीनि कर्माणीत्यतः कर्मफलानां संसारत्वप्रदर्शनायैव भुज्युब्राह्मणमारभ्यते—अथ हैनं भुज्युर्लाह्यायनिरिति । अथ जारत्कारवोपरमानन्तरं भुज्युरिति नामवान् लह्यस्यापत्यं लाह्यस्तस्यापत्यं लाह्यायनिरेनं पप्रच्छेत्यादि पूर्ववत् । स्वविद्याया गुरूपदेशपूर्वकत्वं ज्ञापयितुमाख्यायिकामारचयति—मद्रेषु चरका इति । मद्रा नाम जनपदास्तेषु देशेष्वध्ययनार्थं व्रतचरणाच्चरका विद्यार्थिनोऽध्वर्यवो वा पर्यव्रजाम पर्यटितवन्तः । ते वय पतञ्चलस्य
३५ पतञ्चलनाम्नः काप्यस्य कपिगोत्रस्य गृहानावसथानैम आगच्छाम पर्यटितवन्तः तस्य पतञ्चलस्य दुहिता पुत्री गन्धर्वगृहीता गन्धर्वेणामानुषेण केनचित्सत्त्वेन गृहीताऽऽसीत् । तं पतञ्चलदुहितर्याविष्टगन्धर्वं कोऽसि कस्त्वमसि किं

**स होवाच उवाच वै तदगच्छन्वै ते तत्र यत्राश्वमेधयाजिनो गच्छन्तीति क्व न्वश्वमेधयाजिनो गच्छन्तीति द्वात्रिँशतं वै देवरथाह्न्यान्ययं लोकस्तँ समन्तँल्लोकं द्विस्तावत्पृथिवी पर्येति तां पृथिवीं द्विस्तावत्समुद्रः पर्येति तद्यावती क्षुरस्य धारा यावद्वा मक्षिकायाः पत्रं तावानन्तरेणाकाशस्तानिन्द्रः सुपर्णो भूत्वा वायवे प्रायच्छत्तान्वायुरात्मनि धित्वा तत्रागमयद्यत्र पारिक्षिता अभवन्नित्येवमिव वै स वायुमेव प्रशशँस तस्माद्वायुरेव व्यष्टिर्वायुः समष्टिरप पुनर्मृत्युं जयति सर्वमायुरेति य एवं वेद ततो ह भुज्युर्लाह्यायनिरुपरराम ॥२॥** ५

इति बृहदारण्यकोपनिषदि तृतीयाध्याये तृतीयं ब्राह्मणम् ॥३॥

नामासीति सर्वे वयमपृच्छम । स गन्धर्वः पुनरस्मानब्रवीन्नामतोऽहं सुधन्वा गोत्रतः आङ्गिरस इति । तत्स्वरूपं ज्ञात्वा तं गन्धर्वं प्रति यदा यस्मिन्काले लोकानामन्तानवसानान्यपृच्छाम । अथ तदैनं गन्धर्वं प्रति पारिक्षिताः परितो दुरितं क्षीयते येन स परिक्षिदश्वमेधस्तद्याजिनः पारिक्षिताः क्वाभवन् क्व गता बभूवुरित्यब्रूम पृष्टवन्तो वयमित्यतः १० क्व पारिक्षिता अभवन्निति । सर्वं स च गन्धर्वोऽस्मभ्यमब्रवीत्तेनैतस्य प्रश्नस्य गन्धर्वेण दत्तोत्तरज्ञः सोऽहं विद्यासम्पन्नो हे याज्ञवल्क्य क्व पारिक्षिता अभवन्निति तत्सर्वं त्वा त्वां पृच्छामि गन्धर्वोपदिष्टं सर्वं त्वं चेज्जानासि तर्हि वद नो चेत्त्वमज्ञानेन विगृहीतोऽसीत्यभिप्रायः । प्रथमा च क्व पारिक्षिता अभवन्नित्युक्तिर्गन्धर्वप्रश्नार्था । द्वितीया तु यो हि क्व पारिक्षिता अभवन्निति प्रश्नो गन्धर्वं प्रति कृतस्तस्य प्रत्युक्तिः सर्वं सोऽस्मभ्यमब्रवीदिति विवक्षया तदनुरूपप्रतिवचनार्था । तृतीया तु मुनिं प्रति प्रश्नार्थेति विभागो बोद्धव्यः ॥१॥ १५

अज्ञानादिनिग्रहं परिहरन्नुत्तरमाह—स होवाचेति । स याज्ञवल्क्यो भुज्युं प्रति गन्धर्वोक्तप्रत्युक्तिमुवाच हे भुज्यो स गन्धर्वस्तुभ्यमिति वै तदुत्तरमुवाच । वैशब्दो गन्धर्वाल्लब्धस्य ज्ञानस्य स्मरणार्थः इति प्रतीकम् । ते तदानीन्तनाः पारिक्षितास्तत्रागच्छन् । यत्र तस्मिन् पूर्वतना अश्वमेधयाजिनो गच्छन्ति । पूर्वतना अश्वमेधयाजिनः क्व नु कुत्र गच्छन्तीति पृष्टे उत्तरं वक्तुं तेषां गतिविवक्षया तावद्भुवनकोशपरिमाणमाह—द्वात्रिंशतं वा इति । द्वे अधिके त्रिंशत् । द्वात्रिंशत्तं देवः आदित्यस्तस्य रथो देवरथस्तस्य गत्या एकेनाह्ना यावद्देशपरिमाणं परिच्छिद्यते २० तदेकं देवरथाह्न्यं तद्द्वात्रिंशद्गुणितं सदेतावन्ति देवरथाह्न्यानि तावत्परिमाणोऽयं लोको लोकालोकगिरिणा परिक्षिप्तः ससागरः सर्वेषां प्राणिनां कर्मफलोपभोगहेतुभूतः लोक्यते सूर्यादिभिः प्रकाश्यते इति । स एष एतावान् लोकोऽतः परमलोकः तं च लोकं समन्तं समन्ततः पृथिवी द्विस्तावदिति लोकपरिमाणाद्द्विगुणपरिमाणा पर्येति परितो व्याप्य तिष्ठति । "रविचन्द्रमसोर्यावन्मयूखैरवभास्यते ससमुद्रसरिच्छैला तावती पृथिवीस्मृते"ति स्मृतेः । तथैव तां पृथिवीं पृथिवीपरिमाणाद्द्विस्तावदिति द्विगुणपरिमाणः समुद्रः समन्तं पर्येति व्याप्नोति । यं घनोदमाचक्षते २५ पौराणिकाः । उक्तं हि "अण्डस्यास्य समन्तात्तु संनिविष्टोऽमृतोदधिः । समन्ताद्घनतोयेन धार्यमाणः स तिष्ठतीति ॥" एवं यथोक्तनीत्या लोकादिपरिमाणे स्थिते सदृष्टान्तमण्डकपालयोर्विवरपरिमाणमाह—तद्यावतीति । तत्तत्र व्यवहारभूमौ यावती यावत्परिमाणा क्षुरस्य धाराऽग्रं वा । अथवा यावत्सौक्ष्म्येण युक्तं मक्षिकायाः पत्रं पक्षस्तावांस्तावत्परिमाणः कपालयोरन्तरेण मध्ये आकाशोऽवकाशः । यद्विवक्षयेदं सर्वमुक्तं तदाह—तानिन्द्र इति । तेनाकाशद्वारेण तान्पारिक्षितानश्वमेधयाजिनः प्राप्तानिन्द्रः परमेश्वरोऽश्वमेधे सुपर्णाकारेण चितोऽग्निः स सुपर्णः पक्षपुच्छाद्यात्मकः पक्षी भूत्वा ३० वायवे प्रायच्छत्प्रदत्तवान् । स्वस्य स्थूलत्वेनोक्तछिद्रद्वाराऽण्डाद्बहिर्गमनासम्भवाद्युक्तं वायवे प्रदानमिति भावः । वायुः पुनस्तान्पारिक्षितानात्मनि स्वस्मिन् धित्वा स्थापयित्वा स्वात्मभूतान्कृत्वा तत्र तस्मिन्नगमयद्गमितवान् । यत्र पूर्वेऽतिक्रान्तकालिकाः पारिक्षिता अश्वमेधयाजिनोऽभवन्निति । इतिशब्द आख्यायिकासमाप्त्यर्थः । एवमाख्यायिकया निर्णीतमर्थमाख्यायिकातोऽपसृत्य श्रुतिरेव स्वमुखेनास्मभ्यमाचष्टे—एवमिव वा इति । एवमिव वा एवमेव स गन्धर्वो वायुमेव क्रियाशक्तिप्रधानं सूत्रमेव पारिक्षितानां गतिं प्रशशंस तुष्टाव । यस्माद्वायुः स्थावरजङ्गमानां ३५ भूतानामन्तरात्मा बहिश्च स एव । तस्माद्वायुरेव व्यष्टिरध्यात्माधिभूताधिदैवभावेन व्यावृत्तरूपो विविधाऽष्टिर्व्याप्तिः तथा वायुरेव समष्टिः समा अनुगतरूपा केवलेन सूत्रात्मनाऽष्टिर्व्याप्तिः एतद्विज्ञानफलमाह—अपपुनरिति । य एवं समष्टिव्यष्टिरूपवाय्वात्मकत्वेनात्मानं वेद अवगच्छति स पुनर्मृत्युं पुनर्मरणमपजयति । सकृन्मृत्वा पुनर्न म्रियत इत्यर्थः ।

सर्वमायुरेति प्राप्नोति ततो ह आत्मनः प्रश्ननिर्णयाद्भुज्युर्लाह्यायनिरुपरराम। स एवाप्रतिभारूपं निग्रहं प्राप्तवानिति भावः ॥२॥

इति श्रीविद्यारण्यमुनिविरचितमाध्यन्दिनशाखीयबृहदारण्यकोपनिषद्दीपिकाया
तृतीयाध्याये तृतीयं ब्राह्मणम् ॥३॥

अथ तृतीयाध्यायस्य चतुर्थं ब्राह्मणम्

**अथ हैनं कहोडः कौषीतकेयः पप्रच्छ। याज्ञवल्क्येति होवाच यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तं मे व्याचक्ष्वेत्येष त आत्मा सर्वान्तरः कतमो याज्ञवल्क्य सर्वान्तरो योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येत्येतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति**

एवं पुण्यपापप्रयुक्तैर्ग्रहातिग्रहैर्गृहीतः पुनः पुनर्ग्रहातिग्रहांस्त्यजन्नुपाददच्चाब्रह्मस्थावरं पुण्योत्कर्षादप्यविमुच्यमानः संसरत्येवेति ब्राह्मणत्रयेणोक्तमिदानीं तस्य बन्धमोक्षसाधनं ससंन्यासमात्मज्ञानं वक्तव्यमिति कहोडब्राह्मणमारभ्यते—**अथ हैनं कहोडः कौषीतकेय इति**। अथानन्तरं ह किलैनं कहोडो नामतः कुषीतकस्यापत्यं कौषीतकेयः पप्रच्छ याज्ञवल्क्येति होवाचेति पूर्ववत्। यदिति परात्मतत्त्वं विशेष्य तस्य साक्षादपरोक्षाद्ब्रह्मेत्येवमन्तं विशेषणं परोक्षत्वादिभ्रमव्युदासार्थम्। य इति जीवात्मा विशेष्यस्तस्य सर्वान्तर इति विशेषण परिच्छिन्नत्वादिभ्रमव्यावृत्त्यर्थम्। तथा च यद्ब्रह्म बृहत्तमं अपरोक्षादिति विभक्तिव्यत्ययेनापरोक्षमगौण; श्रोत्रं ब्रह्मेत्यादि यथा गौणं न तथा गौणमित्यर्थः। य आत्मा प्रत्यगात्मा सर्वान्तर सर्वस्मादव्यवहितस्। अपरोक्षात्सर्वस्याभ्यन्तरो यः यद्यः शब्दाभ्यां सामानाधिकरण्येनानुगतः। प्रसिद्ध आत्मा ब्रह्मेति तं ब्रह्माभिन्नं प्रत्यगात्मानं मे मह्यं व्याचक्ष्व विस्पष्टं कथय यथा शृङ्गे गृहीत्वा गां दर्शयति तद्वदित्यर्थः। इत्येवमुक्तो याज्ञवल्क्य. प्रत्याह—**एष त आत्मा सर्वान्तर** इत्येतद्विशेषणं साक्षादित्यादिसर्वविशेषणोपलक्षणार्थम्। तथा च उक्तविशेषणैरुपलक्षितो ब्रह्मात्मैकत्वलक्षणः। स एष ते तव कार्यकरणसङ्घातस्यात्मा। पुनः पृच्छति—**कतम इति**। तत्र पिंड एकस्तस्याभ्यन्तरे लिङ्गात्मा करणसंघातो द्वितीयः यश्च परमार्थात्मस्वरूपस्तृतीयस्तेषु मध्ये हे याज्ञवल्क्य कतम. सर्वान्तरः सर्वान्तरत्वादिविशेषणैर्विशिष्टस्त्वया विवक्षित इति पृष्टश्चरमं पक्ष गृहीत्वोत्तरमाह—**योऽशनायापिपास इति**। अशितुमिच्छाऽशनाया। पातुमिच्छा पिपासा। ते अशनायापिपासे योऽत्येतीति वक्ष्यमाणेन संवन्धः। प्राणैकधर्मत्वादशनायापिपासयोः समस्योपादानम्। शोक मोहमित्यरतिवाचिना शोकशब्देन तत्कार्यभूतः काम उच्यते। इष्टं वस्तूद्दिश्य चिन्तयतो यदरमणं तृष्णाभिभूतस्य कामवीज; तेन हि कामो दीप्यते मोहो विपरीतप्रत्ययप्रभवोऽविवेकः सम्यग्ज्ञानविरोधाद्भ्रमाविद्याशब्दवाच्यः। कामस्य शोको मोहो दु.खस्य हेतुरिति भिन्नकार्यत्वाच्छोकमोहयोरसमासकरणम्। तौ च मनोधिकरणौ। जरां मृत्युमिति शरीरविपरीणामो वलीपलीतादिलिङ्गो जरा। शरीरविच्छेदो विपरीणामावसानो मृत्युः। अत्येत्यतिक्रामतीति प्रत्येक संवध्यते। जरामृत्यू च शरीराधिकरणौ। स एष ते आत्मा सर्वान्तर इति पूर्वेणान्वयः। एवमुक्तज्ञानाङ्गं पारिव्राज्यं वक्तुमाह—**एतं वै तमात्मानमिति**। योऽसौ साक्षादव्यवहितोऽपरोक्षादगौणो ब्रह्मादिस्तम्बपर्यन्ताना भूताना सर्वान्तर आत्मा अशनायापिपासादिभिः ससारधर्मै. सदा न स्पृश्यते। तमेतं वा आत्मान स्वं तत्त्वं विदित्वा परं ब्रह्म सदा सर्वसंसारविनिर्मुक्तं नित्यतृप्तमयमेवाहमस्मीति श्रुत्याचार्याभ्यां ज्ञात्वा ब्राह्मणा ब्रह्मनिष्ठा ब्राह्मण्यजातिमन्तो वा पुत्रैषणाया पुत्रार्थं एषणा पुत्रैषणा पुत्रोत्पत्तिमुद्दिश्य दारसग्रहेच्छालक्षणा तस्याः दारसग्रहमकृत्वेत्यर्थः। वित्तैषणायाश्चेति वित्तं द्विविध मानुषं दैव च। मानुषं गवादि। दैव विद्या। तस्य कर्मसाधनस्य गवादेरुपादानरूपा-आदानरूपेच्छा विशेषेणानेन कर्म कृत्वा पितृलोकं जेष्यामीति, विद्यासंयुक्तेन वा देवलोकं केवलया वा हिरण्यगर्भविद्यया दिव्येन वित्तेन देवलोक जेष्यामीति इच्छा लोकैषणा। एताभ्य एषणाभ्यो व्युत्थाय वैपरीत्येनोत्थानं कृत्वा सन्यासं विधायेत्यर्थः। अथानन्तरं शेषकाले देहस्थित्यर्थं भिक्षाचर्यं भिक्षार्थं संचरणं चरन्ति कुर्वन्ति। फलेच्छासाधनं संक्रामतीति न्यायाल्लोकैषणैवैकेत्याह—या ह्येवेति। या हि प्रसिद्धा पुत्रैषणा सैव वित्तैषणा दृष्टफलसाधनत्वादिसामान्यात्। या पुत्रैषणयैकत्वमापन्ना वित्तैषणा कर्मार्था सा लोकैषणैव। साध्यलोकैषणायाः ... एषणायाः। एवमेकत्वेऽपि लोकैषणायाः साधनमन्तरेणासिद्धेः साधनभेदेन द्वैविध्य विदित्वा भिक्षाचर्यं चरन्ति स्म। तस्मात्तत्रोऽपि

**या ह्येव पुत्रैषणा सा वित्तैषणा या वित्तैषणा सा लोकैषणोभे ह्येते एषणे एव भवतस्तस्मात्पण्डितः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेद्बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिरमौनं च मौनं च निर्विद्याथ ब्राह्मणः स ब्राह्मणः केन स्याद्येन स्यात्तेनेदृश एव भवति य एवं वेद ततो ह कहोडः कौषीतकेय उपरराम ॥१॥**

इति बृहदारण्यकोपनिषदि तृतीयाध्यायस्य चतुर्थं ब्राह्मणम् ॥४॥ ५

अथ तृतीयाध्यायस्य पञ्चमं ब्राह्मणम्

**अथ हैनमुषस्तश्चाक्रायणः पप्रच्छ । याज्ञवल्क्येति होवाच यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तं मे व्याचक्ष्वेत्येष त आत्मा सर्वान्तरः कतमो याज्ञवल्क्य सर्वान्तरो यः प्राणेन प्राणिति स त आत्मा सर्वान्तरो योऽपानेनापानिति स त आत्मा सर्वान्तरो यो व्यानेन व्यनिति स त आत्मा सर्वान्तरो य उदानेनोद- १० निति स त आत्मा सर्वान्तरो यः समनेन समानिति स त आत्मा सर्वान्तरः स होवाचोषस्तश्चाक्रायणो यथा वै ब्रूयादसौ गौरसावश्व इत्येवमेवैतद्व्यपदिष्टं**

ब्रह्मविद्ब्राह्मण एषणाभ्यो व्युत्थाय पाण्डित्यं शास्त्रोत्था बुद्धिः पण्डा तद्वान्पडितः। वेदान्तवाक्यविचारलक्षणं श्रवणा-परपर्यायं निर्विद्य निःशेषं विदित्वाऽऽत्मविज्ञानं निरवशेषं कृत्वाऽनन्तरं बाल्येन तिष्ठासेत्। श्रवणज्ञानोत्पन्नाशेपानात्म-दृष्टितिरस्कारसामर्थ्यं बलं तस्य भावो बाल्येन बलभावेन विषयैरनाकृष्ट. सन् तिष्ठासेत् स्थातुमिच्छेद्। बाल्यशब्दाभिधेयं १५ मननं कुर्यादित्यर्थ.। बाल्य च पाण्डित्य च निर्विद्य नि.शेषं कृत्वाऽथानन्तर मुनिः मौनवान् धारावाहिकात्मप्रत्यय-प्रवाहवान् तिष्ठासेदित्यनुषज्यते। निदिध्यासनं कुर्यादित्यर्थः। एवममौनं चोक्तार्थपांडित्यबाल्यशब्दाभिधेय श्रवण-मननाख्य निर्विद्य मौन चोक्तार्थमुनिशब्दवाच्यनिदिध्यासनाख्यं च निर्विद्याथानन्तरं ब्राह्मणो निरुपचरितब्राह्मण्यवान् साक्षात्कृतब्रह्मैव स्यात्। कृतकृत्यो भवेदित्यर्थः। उक्तं ब्राह्मण्य प्राप्तवतो ब्रह्मविदः समाचारं पृच्छति—स ब्राह्मण इति। स ब्राह्मणः केन चरणेन स्याद्भवेत्। अनियतं तस्य चरणमित्युत्तरमाह—येनेति। येन चरणेन भवेत्। तेनेदृश २० एवेति येन केनचिदव्यवस्थितेन च रणेनेदृश एव कृतकृत्य एव ब्राह्मणो भवति। विहितमाचरतो निषिद्धं च त्यजतः शुद्धबुद्धेः श्रुताद्वाक्यात् सम्यग्धीरुत्पद्यते। तस्य च वासनावशाद् व्यवस्थितैव चेष्टा नाव्यवस्थितेति न यथेष्टाचरण-प्रयुक्तो दोष इति स्तुत्यर्थं येन केनचिच्चरणेनेति बोद्धव्यम्। इदानीं विज्ञानफलमाह—य एवं वेदेति। यो ब्राह्मण एवमेतद्ब्रह्माण्य वस्थानमशनायाद्यतीतात्मस्वरूपं नित्यतृप्तमिति वेद जानाति सोऽपीदृश एवोक्तलक्षण एव ब्राह्मणो भवतीत्यनुषज्यते। ततो ह कहोलः कौषीतकेय उपरराम ॥१॥ २५

इति श्रीविद्यारण्यमुनिविरचितमाध्यन्दिनशाखीयबृहदारण्यकोपनिषद्दीपिकायां
तृतीयाध्याये चतुर्थं ब्राह्मणम् ॥४॥

एवं ब्राह्मणत्रयेण सप्रयोजकं बन्धनमुक्तं चतुर्थे च कहोलब्राह्मणे बन्धध्वंसि ससंन्यासमात्मज्ञानमभिहितम्। साम्प्रतं यो बद्धः संसरति सोऽस्ति नास्ति वेति अस्तित्वे च किंलक्षणो देहादीनामन्यतमस्तेभ्यो विलक्षणो वेति विमर्शे आत्मनो देहादिभ्यो विवेकेनाधिगमायोषस्तब्राह्मणमारभ्यते—अथ हैनमुषस्तश्चाक्रायण इति। अथानन्तरं ह ३० चक्रस्यापत्यं चाक्रायण उषस्तनामा ब्राह्मण एन प्रकृतं याज्ञवल्क्यं पप्रच्छेत्यादि पूर्ववत्। पूर्वस्मात् कहोडप्रश्नात् कश्चिद्विशेपं वक्तु पूर्वोक्ते एव प्रश्नप्रतिवचनेऽनुवदति यः साक्षादित्यारभ्य यः प्राणेन प्राणितीत्यन्त. प्राक्तनेन ग्रन्थेन। यद्विशेपकथनायायमनुवादस्तं पूर्वानुक्तं विशेपमाह—यः प्राणेनेति। यः प्राणेन मुखनासिकासंचारिणा प्राणिति प्राणचेष्टा करोति येन प्राणः प्रणीयत इत्यर्थ.। स ते तव कार्यकरणसंघातस्यात्मोक्तविशेपणविशिष्टो विज्ञानमयः। एवं योऽपानेनापानिति यो व्यानेन व्यनितीत्यादि व्याख्येयम्। सर्वा. कार्यकरणसंघातगताः प्राणनादिचेष्टा दारु- ३५ यन्त्रस्येव येन क्रियन्ते स कार्यकरणसंघातविलक्षणो विज्ञानमयश्चेष्टयिताऽस्ति यतो या खल्वचेतनप्रवृत्तिः सा चेतनाधिष्ठानपूर्विका यथा रथादिप्रवृत्तिरिति बोध्यम्। प्रश्नप्रतिवचनयोरननुरूपत्वमाशङ्कते—सहोवाचोषस्तश्चा-

भवति यदेव साक्षादपरोक्षाद्‌ब्रह्म य आत्मा सर्वान्तरस्तं मे व्याचक्ष्वेत्येष त आत्मा सर्वान्तरः कतमो याज्ञवल्क्य सर्वान्तरो न दृष्टेर्द्रष्टारं पश्येर्न श्रुतेः श्रोतारँ शृणुया न मतेर्मन्तारं मन्वीथा न विज्ञातेर्विज्ञातारं विजानीया एष त आत्मा सर्वान्तरोऽतोऽन्यदार्तं ततो होषस्तश्चाक्रायण उपरराम ॥१॥

५ इति बृहदारण्यकोपनिषदि तृतीयाध्यायस्य पञ्चमं ब्राह्मणम् ॥५॥

अथ तृतीयाध्यायस्य षष्ठं ब्राह्मणम्

अथ हैनं गार्गी वाचक्नवी पप्रच्छ। याज्ञवल्क्येति होवाच यदिदँ सर्वमप्स्वोतं च प्रोतं च कस्मिन्न्वाप ओताश्च प्रोताश्चेति वायौ गार्गीति कस्मिन्नु वायुरोतश्च प्रोतश्चेत्याकाश एव गार्गीति कस्मिन्न्वाकाश ओतश्च प्रोतश्चेत्यन्तरिक्षलोकेषु गार्गीति

१० कस्मिन्न्वन्तरिक्षलोका ओताश्च प्रोताश्चेति द्यौलोकेषु गार्गीति कस्मिन्नु द्यौर्लोका ओताश्च प्रोताश्चेत्यादित्यलोकेषु गार्गीति कस्मिन्न्वादित्यलोका ओताश्च प्रोता-श्चेति चन्द्रलोकेषु गार्गीति कस्मिन्नु चन्द्रलोका ओताश्च प्रोताश्चेति नक्षत्रलोकेषु

क्रायण इति। हे मुने यथा कश्चिदाह अहमश्वं वा गां वा प्रत्यक्षं दर्शयामीति पूर्वं प्रतिज्ञाय पश्चाद्यश्चलत्यसौ गौर्यो वा धावत्यसावश्व इति चलनादिलिङ्गैर्यथा वै निश्चितं ब्रूयाद्व्यपदिशेदेवमेव ब्रह्म प्रत्यक्षं दर्शयामीति मत्प्रश्नानुसारेण

१५ प्रतिज्ञाय प्राणनादिलिङ्गैरेतद्‌ब्रह्म व्यपदिष्टं भवति त्वया। तथा च तद्व्यपदिशतस्ते प्रतिज्ञाहानिरनवधेयवचनता च स्यादिति भावः। किं बहुना गोतृष्णानिमित्तं व्याजं त्यक्त्वा मत्प्रश्नानुसार्युत्तरं वदेत्यभिप्रायवान् पूर्वोक्तमेव प्रश्नमनुवदति-यदेव साक्षादित्यादि व्याचक्ष्वेत्यन्तेन। यथा मया प्रथमं प्रतिज्ञातस्तवात्मैवलक्षण इति ता प्रतिज्ञा-मनुवर्ते एवेत्याशयवान् पूर्वोक्तमेवोत्तरमनुवदति एष त आत्मा सर्वान्तर इति। नन्वसौ गौरसावश्व इति प्रत्यक्षेणा-सावात्मेत्यात्मानं दर्शयेत्येवंलक्षणो मत्प्रश्नो नानुसृतः स्यादित्याशयवान् पूर्वोक्तमेव प्रश्नान्तरमनुवदति—कतमो

२० याज्ञवल्क्य सर्वान्तर इति। सत्यमेतादृशश्चेत्तव प्रश्नस्तर्हि नैवानुसृतः स्यादात्मनो दृष्ट्यादिसाक्षित्वाद्घटादिवद्-विषयीकर्तुमशक्यत्वादित्यभिप्रेत्याह—न दृष्टेर्द्रष्टारमिति। दृष्टेर्दर्शनवृत्तेरनित्याया लौकिक्याः कर्मभूताया द्रष्टार-मलौकिक्या स्वात्मरूपया नित्यया दृष्ट्या व्याप्तारं हे उषस्त त्वं न पश्येर्न पश्यसि नैव कदाचिदपि विषयत्वेन दृष्टेर्द्रष्टा स्फुरतीत्यर्थः। तथा श्रुतेः श्रवणवृत्तेः तथा मतेः केवलाया मनोवृत्तेः तथा विज्ञाते केवलाया बुद्धिवृत्तेः समानमन्यत्। एवमुक्तस्य दृष्ट्यादिसाक्षिणोऽन्यत् किञ्चिद्वास्तवं नास्तीत्युपसहरति—एष त आत्मा सर्वान्तर इति। एष सर्वैरुक्त-

२५ विशेषणैर्विशिष्टस्ते तवाऽऽत्मा अत एतस्मादुक्तरूपादात्मनोऽन्यदार्तं विनाशि रज्जुसर्पादिवन्मिथ्याभूतमित्यर्थः। ततो होषस्तश्चाक्रायण उपररामेति पूर्ववत् ॥१॥

इति श्रीविद्यारण्यमुनिविरचितमाध्यन्दिनशाखीयबृहदारण्यकोपनिषद्दीपिकाया तृतीयाध्याये पञ्चमं ब्राह्मणम् ॥५॥

पूर्वब्राह्मणयोर्यत्साक्षादपरोक्षाद्‌ब्रह्म य आत्मा सर्वान्तर इत्यत्र यः सर्वान्तर आत्मोक्तस्तस्य स्वरूपाधिगमाय

३० शाकल्यब्राह्मणात् प्राक्तनब्राह्मणत्रयमारभ्यते। तत्रानात्मभूतान् सर्वान् पदार्थांस्तावत् गार्गी ब्राह्मणेनाह—अथ हैनं गार्गी वाचक्नवीति। अथानन्तरमेनं मुनिं गार्गी नामतो वचक्नोर्दुहिता वाचक्नवी। पप्रच्छेत्यादिपूर्ववत्। यदिदं सर्वं भूभूधरादिकं पार्थिवं धातुजातमप्सूदके स्वकारणे ओतं च दीर्घपटतन्तुवत्। प्रोतं च तिर्यक्तन्तुवत्। सर्वतोऽन्त-र्बहिर्भूताभिरद्भिर्व्याप्तमित्यर्थः। अन्यथा सक्तुमुष्टिवद्विशीर्येत। तथा च यथेयं पञ्चीकृता पृथिवी कार्यत्वात् च कारणभू-तासु पञ्चीकृतास्वप्सु ओता प्रोता च तद्वदपामपि कार्यत्वात् कस्मिन्नु खलु आप ओताश्च प्रोताश्चेत्यनुमानविषया पृष्टो

३५ मुनिरुत्तरमाह—वायौ गार्गीति। हे गार्गि। वायौ पञ्चीकृते आप ओताश्च प्रोताश्च। कस्मिन् खलु वायुरोतश्च प्रोतश्चे-त्याकाश एव गार्गीति, कस्मिन्न्वाकाश ओतश्च प्रोतश्चेत्यन्तरिक्षलोकेषु पक्ष्यादिगतिहेतुभूतेषु तान्येव पञ्चीकृतानि भूतानि संहतान्यन्तरिक्षलोका उच्यन्ते। बहुवचनं त्वारम्भकभूताना बहुत्वापेक्षया बोध्यम्। प्रजापतिलोकाः

गार्गीति कस्मिन्नु नक्षत्रलोका ओताश्च प्रोताश्चेति देवलोकेषु गार्गीति कस्मिन्नु देवलोका ओताश्च प्रोताश्चेति गन्धर्वलोकेषु गार्गीति कस्मिन्नु गन्धर्वलोका ओताश्च प्रोताश्चेति प्रजापतिलोकेषु गार्गीति कस्मिन्नु प्रजापतिलोका ओताश्च प्रोताश्चेति ब्रह्मलोकेषु गार्गीति कस्मिन्नु ब्रह्मलोका ओताश्च प्रोताश्चेति स होवाच गार्गि मातिप्राक्षीर्मा ते मूर्द्धा व्यपप्तदनतिप्रश्न्या वै देवता अतिपृच्छसि गार्गि मातिप्राक्षीरिति ततो ह गार्गी वाचक्नव्युपरराम ॥१॥ ५

इति बृहदारण्यकोपनिषदि तृतीयाध्याये षष्ठं ब्राह्मणम् ॥६॥

अथ तृतीयाध्यायस्य सप्तमं ब्राह्मणम्

अथ हैनमुद्दालक आरुणिः पप्रच्छ। याज्ञवल्क्येति होवाच मद्रेष्ववसाम पतञ्चलस्य काप्यस्य गृहेषु यज्ञमधीयानास्तस्यासीद्भार्या गन्धर्वगृहीता तमपृच्छाम कोऽसीति सोऽब्रवीत्कबन्ध आथर्वण इति ॥१॥ १०

सोऽब्रवीत्। पतञ्चलं काप्यं याज्ञिकांश्च वेत्थ नु त्वं काप्य तत्सूत्रं यस्मिन्नयं च लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानि भवन्तीति सोऽब्रवीत्पतञ्चलः काप्यो नाहं तद्भगवन्वेदेति ॥२॥

विराट्शरीरारम्भकपञ्चीकृतपञ्चमहाभूतात्मकाः ब्रह्मलोकेषु हिरण्यगर्भलोकेष्वपञ्चीकृतपञ्चभूतात्मकेषु ओतप्रोतभावेन वर्तन्ते। शेषं सुबोधम्। एवं पूर्ववदनुमानेन सूत्रमपि ब्रह्मलोकाश्रयं पृच्छन्ती गार्गीं प्रतिषेधति—स होवाचेत्यादिना। स याज्ञवल्क्यो ह उवाच। हे गार्गि यासु देवतासु ब्रह्मलोका ओतप्रोतभावेन वर्तन्ते ताः प्राणात्मभूताः सूत्रदेवता आनुमानिकत्वप्रश्नविषयतामतीत्य वर्तमाना अनुमानेन मा प्राक्षीर्मा पृच्छेत्यर्थः। प्रतिषेधातिक्रमे दोषमाह—मा ते मूर्द्धेति। पृच्छन्त्याश्च ते तव मूर्द्धा मस्तको मा व्यपप्तद्विस्पष्टमापतेत्। मूर्द्धपातप्रसङ्गं प्रकटयन् प्रतिषेधमुपसंहरति। अनतिप्रश्न्या वै देवता इति देवतानां स्वः प्रश्न आगमविषयः तं प्रश्नविषयमतिक्रान्तो गार्ग्याः प्रश्न आनुमानिकत्वात्। स प्रश्नो यासामिन्द्रादिदेवतानां विद्यते ता अतिप्रश्न्याः। एतास्तु न अतिप्रश्न्या अनतिप्रश्न्याः। स्वप्रश्नविषया एव केवलागमगम्या इत्यर्थः। तां अनतिप्रश्न्यां सूत्रदेवतां वै अतिपृच्छसि। अतो हे गार्गि मर्तुं चेन्नेच्छसि तर्हि मातिप्राक्षीरित्यनुग्रहार्थो निषेधः। ततो ह गार्गी वाचक्नव्युपररामेत्युपसंहारः पूर्ववत् ॥१॥ १५ २०

इति श्रीविद्यारण्यमुनिविरचितमाध्यन्दिनशाखीयबृहदारण्यकोपनिषद्दीपिकायां तृतीयाध्याये षष्ठं ब्राह्मणम् ॥६॥ २५

एवं गार्गिब्राह्मणे सूत्रादर्वाकिन व्यापकमुक्तमिदानीमागमैकगम्यं सूत्रं तदन्तर्गतमन्तर्यामिणं च निर्वक्तुमन्तर्यामिब्राह्मणमारभ्यते—अथ हैनमुद्दालक आरुणिरिति। अथ गार्ग्या मूर्द्धपातभयादुपरतेरनन्तरमुद्दालको नामतोऽरुणस्यापत्यमारुणिर्हैनं याज्ञवल्क्यं पप्रच्छेति पूर्ववत्। स्वस्य सूत्रादिविद्याया आचार्योपदेशपूर्वकत्वेनागमविषयत्वं ज्ञापयितुमाख्यायिकामाह—मद्रेष्ववसामेति। मद्रेषु देशेषु पतञ्चलस्य पतञ्चलनाम्नः काप्यस्य कपिगोत्रस्य गृहेषु यज्ञमधीयाना यज्ञशास्त्राध्ययनं कुर्वाणाः शिष्याः सन्तो वयमवसाम उषितवन्तः तस्य पतञ्चलस्य भार्या गन्धर्वगृहीता गन्धर्वेणा मानुषेण सत्त्वविशेषेण गृहीताऽऽविष्टाऽऽसीत्। तं गन्धर्वं पतञ्चलसहिता वयं याज्ञिकास्त्वं कोऽसीत्यपृच्छाम। एवं पृष्टः स गन्धर्वोऽस्मभ्यमब्रवीत्। किं? अहं नाम्ना कबन्धोऽथर्वणस्यापत्यमाथर्वण इति ॥१॥ ३०

स गन्धर्वः पतञ्चल काप्यं याज्ञिकांश्च तच्छिष्यानस्मान् प्रत्यब्रवीत्। किं? हे काप्य नु वितर्के त्वं तत्सूत्रं वेत्थ जानीषे। किं तत्सूत्रमित्याकाङ्क्षाया तद्विशिनष्टि—यस्मिन्नयं चेति। यस्मिन्सूत्रेऽयं च लोक इदं च जन्म परश्च लोकः पर च प्रतिपत्तव्यं जन्म सर्वाणि च भूतानि ब्रह्मादिस्तम्बपर्यन्तानि संदृब्धानि सग्रथितानि स्रगिव सूत्रे विष्टब्धानि भवन्तीति पृष्टः स पतञ्चलः काप्योऽब्रवीत्। किं? हे भगवन् इति संपूजयन्नहं तत्सूत्रं न वेद न जानामीति ॥२॥ ३५

सोऽब्रवीत्। पतञ्चलं काप्यं याज्ञिकाँश्च वेत्थ नु त्वं काप्य तन्मन्त-र्यामिणं य इमं च लोकं परं च लोकँ सर्वाणि च भूतान्यन्तरो यमयतीति सोऽब्रवीत्पतञ्चलः काप्यो नाहं तं भगवन्वेदेति ॥३॥

सोऽब्रवीत्। पतञ्चलं काप्यं याज्ञिकाँश्च यो वै तत्काप्य सूत्रं विद्यात्तं चान्त-र्यामिणँ स ब्रह्मवित्स लोकवित्स देववित्स वेदवित्स यज्ञवित्स भूतवित्स आत्मवित्स सर्वविदिति तेभ्योऽब्रवीत्तदहं वेद तच्चेत्त्वं याज्ञवल्क्य सूत्रमविद्वाँस्तं चान्तर्यामिणं ब्रह्मगवीरुदजसे मूर्धा ते विपतिष्यतीति ॥४॥

वेद वा अहं गौतम। तत्सूत्रं तं चान्तर्यामिणमिति यो वा इदं कश्च ब्रूयाद्वेद वेदेति यथा वेत्थ तथा ब्रूहीति ॥५॥

वायुर्वै गौतम तत्सूत्रम्। वायुना वै गौतम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानि भवन्ति तस्माद्वै गौतम पुरुषं प्रेतमाहुर्व्यस्रँसिषतास्याङ्गानीति वायुना हि गौतम सूत्रेण संदृब्धानि भवन्तीत्येवमेवैतद्याज्ञवल्क्यान्तर्यामिणं ब्रूहीति ॥६॥

एवमुक्तः स गन्धर्वः पुनरुपाध्यायं पतञ्चलं काप्यं याज्ञिकांश्चास्मान् प्रत्यब्रवीत्। किं? हे काप्य त्वं नु वितर्के तं सूत्रान्तर्गतमन्तर्यामिणं वेत्थ कोऽसावन्तर्यामीत्याकाङ्क्षायां तं विशिनष्टि—य इमं च लोकमिति। य इमं च लोक-मित्येतदुक्तार्थं योऽन्तरोऽभ्यन्तरः सन् यमयति दारुयन्त्रमिव भ्रमयति स्वं स्वमुचितं व्यापारं कारयतीति यावत्। एवमुक्तः स पतञ्चलः काप्यो हे भगवन्निति संपूजयन् विनयेनाब्रवीत्। नाहं तं सूत्रान्तर्गतमन्तर्यामिणं च वेदेति ॥३॥

एवं विनयं दृष्ट्वा स गन्धर्वः स्वस्याचार्यत्वकामः सन् फलेन प्रलोभयितुं पतञ्चलं काप्यं याज्ञिकांश्चाब्रवीत्। स देवांश्चाग्न्यादीन् लोकिनस्तेन नियम्यमानान्वेत्ति हे काप्य तत्सूत्रं तस्यैव सूत्रस्य नियन्तारं सूत्रान्तर्गतमन्तर्यामिणं च वै निश्चितं यः कश्चिद्विद्याद्विजानीयात्। स ब्रह्मवित् ब्रह्म परमात्मा स लोकवित् लोकांश्च भूरादीनन्तर्यामिणा नियम्य-मानान्वेत्ति। स वेदांश्च सर्वप्रमाणभूतान्वेत्ति स यज्ञान् वेदविहितान् ज्योतिष्टोमादीन् वेत्ति स आत्मानं कर्तृत्वभोक्तृत्व-विशिष्टं तेनैवान्तर्यामिणा नियम्यमानं वेत्ति सर्वं च जगत्तथाभूतं वेत्तीति सर्ववित्। एवं सूत्रतदन्तर्गतान्तर्यामिणोर्विज्ञाने श्रुते प्रलुब्धेभ्योऽभिमुखीभूतेभ्यस्तेभ्योऽस्मभ्यमाचार्यमुख्येभ्यो गन्धर्वः सूत्रान्तर्यामिणोः स्वरूपमब्रवीत्। तत्स्वरूपमहं वेद गन्धर्वाल्लब्धागमः सन् जानामि। किमेतावतेत्यत आह—तच्चेत्त्वमिति। हे याज्ञवल्क्य त्वं यदि तदुक्तविशेषण-विशिष्टं सूत्रं तमन्तर्यामिणं चाविद्वानजानन्नब्रह्मवित्सञ्चेद् ब्रह्मगवीर्ब्रह्मविदां स्वभूता गा अन्यायेनोदजसे उन्नयसि तर्हि मच्छापदग्धस्य ते तव मूर्धा मस्तको विपतिष्यति विस्पष्टं पतिष्यति ॥४॥

एवमुक्तो याज्ञवल्क्य आह—वेद वा अहमिति। गौतम इति गोत्रं यस्य उद्दालकस्यैव स गौतमस्तत्सम्बोधनं हे गौतम! अहं याज्ञवल्क्योऽपि गन्धर्वाद्विदितं तत्सूत्रं तमन्तर्यामिणं वेद जानामीत्येवमुक्तो गौतमः प्रत्याह—यो वा इदमिति। यः कश्चित् प्राकृतोऽपि यत्त्वयोक्तं वेदेति वै निश्चितमात्मानं श्लाघयन् ब्रूयात्। किं तेन गर्जितेन कार्येण दर्शय यथा वेत्थ जानासि तथा ब्रूहीति ॥५॥

एवमुक्तो याज्ञवल्क्यो ब्रह्मलोका यस्मिन्नोताश्च प्रोताश्च वर्तमाने काले यथा पृथिव्यप्सु तत्सूत्रमागमगम्यं वक्तव्यमिति तदर्थं प्रत्याह—वायुर्वै गौतमेति। हे गौतम तद्गन्धर्वोक्तसूत्रं वायुर्वै वायुरेव नान्यत्। तथा च यदात्मकं पञ्चभूतानि दश बाह्यानीन्द्रियाणि पञ्चवृत्तिः प्राण एकश्चतुर्विधमन्तःकरणमित्येव सप्तदशविधं लिङ्गं प्राणिनां कर्म-वासनासमवायि समष्टिव्यष्ट्यात्मकं सूक्ष्मं पृथिव्यादीनामाकाशवद्विष्टम्भकं यस्य सप्त सप्त मरुद्गणा बाह्या भेदाः समुद्र-स्येवोर्मयः तदेतद्वायव्यं तत्त्वं सूत्रमित्यभिधीयते। न तु वायुमात्रं तस्य विधारणे स्वातन्त्र्याभावात्। उक्तस्य वायु-तत्त्वस्य सूत्रत्वं विद्वत्प्रसिद्ध्या साधयति वायुर्वै गौतमेत्यादिनोक्तार्थकेन। प्रसिद्धमेतत्सूत्रविदामित्यर्थः। पुनर्लोक-प्रसिद्ध्यापि तत् साधयति—तस्माद्वै गौतमेति। हे गौतम यस्मात् सूत्रात्मकेन वायुना सर्वं विधृतं तस्मात्प्रेतं मृतं

य: पृथिव्यां तिष्ठन्। पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी
शरीरं यः पृथिवीमन्तरो यमयति स त आत्मान्तर्याम्यमृतः ।।७।।

योऽप्सु तिष्ठन्। अद्भ्योऽन्तरो यमापो न विदुर्यस्यापः
शरीरं योऽपोऽन्तरो यमयति स त आत्मान्तर्याम्यमृतः ।।८।।

योऽग्नौ तिष्ठन्। अग्नेरन्तरो यमग्निर्न वेद यस्याग्निः　　　५
शरीरं योऽग्निमन्तरो यमयति स त आत्मान्तर्याम्यमृतः ।।९।।

य आकाशे तिष्ठन्। आकाशादन्तरो यमाकाशो न वेद यस्याकाशः
शरीरं य आकाशमन्तरो यमयति स त आत्मान्तर्याम्यमृतः ।।१०।।

यो वायौ तिष्ठन्। वायोरन्तरो यं वायुर्न वेद यस्य वायुः
शरीरं यो वायुमन्तरो यमयति स त आत्मान्तर्याम्यमृतः ।।११।।　　　१०

य आदित्ये तिष्ठन्। आदित्यादन्तरो यमादित्यो न वेद यस्यादित्यः
शरीरं य आदित्यमन्तरो यमयति स त आत्मान्तर्याम्यमृतः ।।१२।।

यश्चन्द्रतारके तिष्ठन्। चन्द्रतारकादन्तरो यं चन्द्रतारकं न वेदय स्य चन्द्र-
तारकं शरीरं यश्चन्द्रतारकमन्तरो यमयति स त आत्मान्तर्याम्यमृतः ।।१३।।

पुरुषं शरीर मृतलक्षणज्ञा आहुः कथयन्ति अस्य मृतस्याङ्गानि करादीनि व्यस्रंसिषत विस्रस्तान्यभवन्। सूत्रापगमे हि　१५
मण्यादीनां प्रोतानामवस्रंसनं दृष्टमेव वायुः सूत्रम्। अतो वायुना हि गौतम सूत्रेण संदृब्धानि संग्रथितान्यङ्गानि
भवन्तीति निगमयति। एवं निरूपितं सूत्रस्वरूपमङ्गीकृत्योद्दालकोऽन्तर्यामिस्वरूपं पृच्छति—एवमेवैतदिति। हे
याज्ञवल्क्य एतत्सूत्रमेव सम्यगुक्तम्। इदानीं तु सूत्रान्तर्गतमन्तर्यामिणं ब्रूहीति ।।६।।

एवमुक्तो याज्ञवल्क्य आह—यः पृथिव्यामिति। यः पृथिव्या तिष्ठन् वर्तमानो भवति सोऽन्तर्यामी। एवमुक्ते
सर्वं पृथिव्यां तिष्ठतीति सर्वत्र प्रसंगो माभूदिति विशिनष्टि। पृथिव्या अन्तरोऽभ्यन्तर इति। तत्र पृथिव्यभिमानिनी　२०
देवतैवान्तर्यामी स्यादित्यत आह—यं पृथिवीति। पृथिवी पृथिव्यभिमानिनी देवतापि यमन्तर्यामिणं न वेद मय्यन्यः
कश्चिद्वर्तत इति न जानाति। नियन्तुरीश्वरस्य लौकिकनियन्तृवत्कार्यकरणवत्त्वमाशङ्क्याह—यस्येति। यस्यान्तर्यामिणः
पृथिव्येव शरीरं नान्यत्। पृथिवीदेवतायाः शरीरं तदेव शरीरं यस्येति शरीरग्रहणं करणोपलक्षणार्थम्। तस्याः
पृथिवीदेवतायाः स्वकर्मप्रयुक्तं हि कार्यकरणं च। अस्यान्तर्यामिणस्तु स्वकर्माभावान्नित्यमुक्तत्वात्। परार्थकर्त्तव्यता-
स्वभावत्वात्परस्य यत्कार्यं करणं च तदेवास्य न स्वत इत्यर्थः। देवताकार्यकरणस्येश्वरसाक्षिमात्रसान्निध्येन हि　२५
नियमेन प्रवृत्तिनिवृत्ती स्यातामित्यत आह—यः पृथिवीमिति। यां नियम्यपृथिवीदेवताकार्यकरणाभ्यामेव कार्यकरण-
वानीश्वरो नारायणाख्योऽन्तरोऽभ्यन्तरः सन् पृथिवीदेवता यमयति साक्षितया स्वव्यापारे नियमेन प्रवर्तयति। एष ते
तव कार्यकरणसङ्घातस्य मम सर्वभूताना चेत्युपलक्षणार्थमेतत्। सर्वेपामात्मा यस्त्वयान्तर्यामी पृष्ट एपोऽमृतः सर्व-
ससारधर्मवर्जित इत्यर्थः ।।७।।

एवमेव योऽप्सु तिष्ठन्नित्यादयः कण्डिका व्याख्येयाः ।।८।।　　　३०
योऽग्नौ ।।९।।
य आकाशे ।।१०।।
यो वायौ ।।११।।
य आदित्ये ।।१२।।
यश्चन्द्रतारक इति द्वन्द्वैकवद्भावः ।।१३।।　　　३५

यो दिक्षु तिष्ठन्। दिग्भ्योऽन्तरो यं दिशो न विदुर्यस्य दिशः
शरीरं यो दिशोऽन्तरो यमयति स त आत्मान्तर्याम्यमृतः ॥१४॥
यो विद्युति तिष्ठन्। विद्युतोऽन्तरो यं विद्युन्न वेद यस्य विद्युच्छरीरं
यो विद्युतमन्तरो यमयति स त आत्मान्तर्याम्यमृतः ॥१५॥
५ यस्स्तनयित्नौ तिष्ठन्। स्तनयित्नोरन्तरो यँ स्तनयित्नुर्न वेद यस्य स्तनयित्नुः शरीरं
य स्तनयित्नुमन्तरो यमयति स त आत्मान्तर्याम्यमृत इत्यधिदेवतमथाधिलोकम् ॥१६॥
यः सर्वेषु लोकेषु तिष्ठन्। सर्वेभ्यो लोकेभ्योऽन्तरो यँ सर्वे लोका
न विदुर्यस्य सर्वे लोकाः शरीरं यः सर्वांल्लोकानन्तरो
यमयति स त आत्मान्तर्याम्यमृत इत्यु एवाधिलोकमथाधिवेदम् ॥१७॥
१० यः सर्वेषु वेदेषु तिष्ठन्। सर्वेभ्यो वेदेभ्योऽन्तरो यँ सर्वे वेदा
न विदुर्यस्य सर्वे वेदाः शरीरं यः सर्वान्वेदानन्तरो
यमयति स त आत्मान्तर्याम्यमृत इत्यु एवाधिवेदमथाधियज्ञम् ॥१८॥
यः सर्वेषु यज्ञेषु तिष्ठन्। सर्वेभ्यो यज्ञेभ्योऽन्तरो यँ सर्वे यज्ञा
न विदुर्यस्य सर्वे यज्ञाः शरीरं यः सर्वान्यज्ञानन्तरो
१५ यमयति स त आत्मान्तर्याम्यमृत इत्यु एवाधियज्ञमथाधिभूतम् ॥१९॥
यः सर्वेषु भूतेषु तिष्ठन्। सर्वेभ्यो भूतेभ्योऽन्तरो यँ सर्वाणि भूतानि
न विदुर्यस्य सर्वाणि भूतानि शरीरं यः सर्वाणि भूतान्यन्तरो
यमयति स त आत्मान्तर्याम्यमृत इत्यु एवाधिभूतमथाध्यात्मम् ॥२०॥
यः प्राणे तिष्ठन्। प्राणादन्तरो यं प्राणो न वेद यस्य प्राणः
२० शरीरं यः प्राणमन्तरो यमयति स त आत्मान्तर्याम्यमृतः ॥२१॥
यो वाचि तिष्ठन्। वाचोऽन्तरो यं वाङ्न वेद यस्य
वाक्शरीरं यो वाचमन्तरो यमयति स त आत्मान्तर्याम्यमृतः ॥२२॥
यश्चक्षुषि तिष्ठन्। चक्षुषोऽन्तरो यं चक्षुर्न वेद यस्य चक्षुः
शरीरं यश्चक्षुरन्तरो यमयति स त आत्मान्तर्याम्यमृतः ॥२३॥

२५ यो दिक्षु ॥१४॥
यो विद्युति ॥१५॥
यस्तनयित्नौ इत्यधिदैवतमन्तर्यामिविषयं दर्शनं देवतासूकम्। अथानन्तरमधिलोकेषु अन्तर्यामिदर्शनमुच्यत इत्यर्थः ॥१६॥
सर्वेषु लोकेषु। लोका भोगस्थानानि इत्यु एवमेवाधिलोकमथाधिवेदमिति पूर्ववद्व्याख्येयम् ॥१७॥
३० यः सर्वेषु वेदेष्वित्यु एवमेवाधिवेदमथाधियज्ञमिति पूर्ववत् ॥१८॥
यः सर्वेषु यज्ञ इति सामान्यतः कर्माणि निर्दिश्यन्ते। इत्यु एवाधियज्ञमथाधिभूतमिति पूर्ववत् ॥१९॥
यः सर्वेषु भूतेष्वित्युरावाधिभूतमथाध्यात्ममिति पूर्ववत् ॥२०॥
यः प्राणे घ्राणाख्ये वायुसहिते ॥२१॥
यो वाचि ॥२२॥
३५ यश्चक्षुषि ॥२३॥

यः श्रोत्रे तिष्ठन् । श्रोत्रादन्तरो यं श्रोत्रं न वेद यस्य श्रोत्रं शरीरं यः श्रोत्रमन्तरो यमयति स त आत्मान्तर्याम्यमृतः ॥२४॥

यो मनसि तिष्ठन् । मनसोऽन्तरो यं मनो न वेद यस्य मनः शरीरं यो मनोऽन्तरो यमयति स त आत्मान्तर्याम्यमृतः ॥२५॥

यस्त्वचि तिष्ठन् । त्वचोऽन्तरो यं त्वङ्न वेद यस्य त्वक्शरीरं यस्त्वचमन्तरो यमयति स त आत्मान्तर्याम्यमृतः ॥२६॥

यस्तेजसि तिष्ठन् । तेजसोऽन्तरो यं तेजो न वेद यस्य तेजः शरीरं यस्तेजोऽन्तरो यमयति स त आत्मान्तर्याम्यमृतः ॥२७॥

यस्तमसि तिष्ठन् । तमसोऽन्तरो यं तमो न वेद यस्य तमः शरीरं यस्तमोऽन्तरो यमयति स त आत्मान्तर्याम्यमृतः ॥२८॥

यो रेतसि तिष्ठन् । रेतसोऽन्तरो यं रेतो न वेद यस्य रेतः शरीरं यो रेतोऽन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः ॥२९॥

य आत्मनि तिष्ठन् । आत्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्मान्तर्याम्यमृतः ॥३०॥

अदृष्टो द्रष्टा । अश्रुतः श्रोताऽमतो मन्ताऽविज्ञातो विज्ञाता नान्योऽस्ति द्रष्टा नान्योऽस्ति श्रोता नान्योऽस्ति मन्ता नान्योऽस्ति विज्ञातैष त आत्मान्तर्याम्यमृतोऽतोऽन्यदार्तं ततो होद्दालक आरुणिरुपरराम ॥३१॥

इति बृहदारण्यकोपनिषदि तृतीयाध्याये सप्तमं ब्राह्मणम् ॥७॥

यः श्रोत्रे ॥२४॥

यो मनसि ॥२५॥

यस्त्वचि ॥२६॥

यस्तेजसि । तेजः प्रकाशः शास्त्रीयज्ञानम् ॥२७॥

यस्तमसि बाह्य आवरणात्मके ॥२८॥

यो रेतसि प्रजनने ॥२९॥

य आत्मनि जीवात्मनि ॥३०॥

कस्मात्पुनः कारणान्महाभागाः पृथिव्यादिदेवता मनुष्यादिवत् स्वात्मनि तिष्ठन्तमात्मनो नियन्तारमन्तर्यामिणं न विदुरित्यत आह—अदृष्टो दृष्टेति । न दृष्टोऽदृष्टः कस्यचिच्चक्षुर्दर्शनस्य विषयत्वमनापन्नः सन् दृशिस्वरूपत्वाच्चक्षुषि सन्निहितत्वाच्च स्वयं द्रष्टा तद्वदश्रुतः श्रोत्रविषयत्वमनापन्नः सन् स्वयमलुप्तश्रवणशक्तिः सकलश्रोत्रेषु सन्निहितत्वाच्छ्रोता तथाऽमतो मनः संकल्पविषयमनापन्नः दृष्टश्रुते एव हि सर्वः संकल्पयति । अदृष्टत्वादश्रुतत्वादेवामतोऽलुप्तमननशक्तित्वात्सर्वमनस्सु सन्निहितत्वाच्च मन्ता । तथाऽविज्ञातो निश्चयगोचरं रूपादिवत् सुखादिवद्वाऽनापन्नः स्वयं त्वलुप्तविज्ञानशक्तित्वात्तत्सन्निहितत्वाच्च विज्ञाता । ननु तथाप्येवं नियन्तृनियन्तव्यादिभेदेन च भेदः स्यादित्याशंकायामाह—नान्योऽस्ति द्रष्टेति । एतदन्तर्यामिणोऽन्योऽपरो द्रष्टा नास्ति । तथा नान्योऽस्ति श्रोतेत्यादि व्याख्येयम् । उपपादितमन्तर्यामिस्वरूपमुपसंहरति—एष त आत्मेति । अमृतः सर्वसंसारधर्मवर्जितः सर्वसंसारिणां कर्मफलविभागकर्तैष ते तवाऽऽत्माऽन्तर्यामी । अतोऽस्मादीश्वरादात्मनोऽन्यदार्तम् । ततो होद्दालक आरुणिरुपरराமेति पूर्ववत् ॥३१॥

इति श्रीविद्यारण्यमुनिविरचितमाध्यन्दिनशाखीयबृहदारण्यकोपनिषद्दीपिकायां तृतीयाध्याये सप्तमं ब्राह्मणम् ॥७॥

अथ तृतीयाध्यायस्याष्टमं ब्राह्मणम्

अथ ह वाचक्नव्युवाच । ब्राह्मणा भगवन्तो हन्ताहमिमं याज्ञवल्क्यं द्वौ प्रश्नौ प्रक्ष्यामि तौ चेन्मे विवक्ष्यति न वै जातु युष्माकमिमं कश्चिद्ब्रह्मोद्यं जेतेति तौ चेन्मे न विवक्ष्यति मूर्द्धास्य विपतिष्यतीति पृच्छ गार्गीति ॥१॥

५ सा होवाच । अहं वै त्वा याज्ञवल्क्य यथा काश्यो वा वैदेहो वोग्रपुत्र उज्ज्यं धनुरधिज्यं कृत्वा द्वौ बाणवन्तौ सपत्नातिव्याधिनौ हस्ते कृत्वोपोत्तिष्ठेदेवमेवाहं त्वा द्वाभ्यां प्रश्नाभ्यामुपोदस्थां तौ मे ब्रूहीति पृच्छ गार्गीति ॥२॥

सा होवाच । यदूर्ध्वं याज्ञवल्क्य दिवो यदवाक्पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते कस्मिंस्तदोतं च प्रोतं चेति ॥३॥

१० स होवाच । यदूर्ध्वं गार्गि दिवो यदवाक्पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षत आकाशे तदोतं च प्रोतं चेति ॥४॥

पूर्वस्मिन्ब्राह्मणे सूत्रान्तर्यामिणौ प्रश्नप्रत्युक्तिभ्यां निर्द्धारितौ । सम्प्रत्यशनायादिविनिर्मुक्तं निरुपाधिकं साक्षादपरोक्षात्सर्वान्तरं ब्रह्म वक्तुमक्षरब्राह्मणं प्रवर्तते—अथ ह वाचक्नव्युवाचेति । अथ सोपाधिकवस्तुनिर्द्धारणानन्तरं पूर्वं याज्ञवल्क्येन निषिद्धा मूर्द्धपातभयादुपरता सती पुनः प्रष्टुं ब्राह्मणानुज्ञां प्रार्थयन्ती ह किल वचक्नोर्दुहिता १५ वाचक्नवी पुनरुवाच । किम् ? हे ब्राह्मणा भगवन्तः पूजावन्तो मम वचः शृणुतेति शेषः । हंत यद्यनुमतिर्भवतामस्ति तर्हि अहमिमं याज्ञवल्क्य पुनर्द्वौ प्रश्नौ प्रक्ष्यामि तौ प्रश्नौ चेद्यदि कथञ्चिन्मे मह्यं विवक्ष्यति विस्पष्टं कथयिष्यति तर्हि जातु कदाचिद्युष्माक मध्ये कश्चित् काऽप्यमन्यतम इमं याज्ञवल्क्यं ब्रह्मोद्य ब्रह्मवेदन प्रति न वै नैव जेता जयकर्ता भवेदिति शेष. । अन्यच्च शृणुत तौ प्रश्नौ चेद्यदि मे मह्यं न विवक्ष्यति विस्पष्टं वक्तु समर्थो न भविष्यति तर्हि अस्य याज्ञवल्क्यस्यैव मूर्द्धा शिरो विपतिष्यति विस्पष्टं पतिष्यतीत्येवमुक्ता ब्राह्मणा अनुज्ञा प्रददुः पृच्छ गार्गि प्रश्नं कुर्विति । २० सैवं लब्धानुज्ञा गार्गी ह याज्ञवल्क्य प्रत्युवाच—हे याज्ञवल्क्य त्वा त्वामहं द्वौ प्रश्नौ प्रक्ष्यामीत्यनुपज्यते । कौ ताविति जिज्ञासायां तयोर्दुरुत्तरत्वं द्योतयितुं दृष्टान्तपूर्वकं तौ प्रश्नावाह—यथा काश्यो वेति । यथा काश्यो वा काशिषु भवः काश्यो लोके शूरत्वेन प्रसिद्धो वैदेहो वा विदेहानां राजा उग्रपुत्रः शूरान्वय इत्यर्थः । उज्ज्यमिति उद्गतं याति गच्छति विस्तृतं भवतीत्युज्ज्यमवतारितज्याकं धनुश्चापं पुनरधिज्यं कृत्वाऽऽरोपितज्याकं विधाय द्वौ बाणवन्तौ बाणशब्देन शराग्रे यो वंशखण्डः संधीयते स उच्यते तेन विनापि शरो भवत्यतो बाणवन्ताविति विशिनष्टि । २५ सपत्नातिव्याधिनाविति तयोरेव विशेषण सपत्नं शत्रुमतिशयेन वेद्धुं शीलं ययोस्तौ शत्रोरतिशयेन पीडाकरौ । ईदृशौ द्वौ शरौ हस्ते कृत्वोपोत्तिष्ठेच्छत्रोः समीपत आत्मानं दर्शयेदेवमेवाह त्वा शरस्थानीयाभ्यां प्रश्नाभ्यामुपोदस्था त्वत्समीप उत्थितवत्यस्मि ततस्त्वं ब्रह्मविच्चेत्तर्हि तौ प्रश्नौ तयोर्मया क्रियमाणयोः प्रश्नयोरुत्तरं मे मह्यं ब्रूहि । एवमुक्तो याज्ञवल्क्यो हे गार्गि पृच्छ यथेष्टं प्रश्नं कुर्वित्युक्तवानिति शेषः ॥२॥

सैवमुक्ता गार्गी होवाचापृच्छत् । हे याज्ञवल्क्य यद्दिवो द्युसंज्ञितादुपरितनाण्डकपालादूर्ध्वमुपर्यस्ति । यच्च ३० पृथिव्या अधस्तनाण्डकपालादवागधो वर्तते । यच्च द्यावापृथिवी अन्तरा द्यावापृथिव्योरण्डकपालयोर्मध्येऽस्ति । ये च इमे प्रसिद्धे द्यावापृथिवीस्ततः यद्भूतमतीतं च यद्भवद्वर्तमानं स्वव्यापारस्थं च भविष्यद्वर्तमानकालादूर्ध्वकालभावि लिङ्गगम्यं च यत्सर्वदैवमाचक्षते कथयन्त्यागमतस्तत्सर्वं द्वैतजातं जगद्यस्मिन्नेकं भवतीत्यर्थस्तत्सूत्रसंज्ञं पूर्वोक्तं प्रोतं च कस्मिन्नोत च पृथिवीधातुरिवाप्स्वित्यर्थः ॥३॥

स याज्ञवल्क्य उवाच । हे गार्गि यत्त्वयोक्तं ऊर्ध्वं दिव इत्यादि तत्सर्वं यत्सूत्रमाचक्षते तद्व्याकृतं जगदात्मकं ३५ सूत्रमाकाशेऽव्याकृतशब्दवाच्ये नारायणाख्येऽन्तर्यामिणि ओतं च प्रोतं च उत्पत्तौ स्थितौ लये चेत्येवं त्रिष्वपि कालेषु पृथिवीधातुरप्स्विव वर्तत इत्यर्थः ॥४॥

सा होवाच । नमस्ते याज्ञवल्क्य यो म एतं
व्यवोचोऽपरस्मै धारयस्वेति पृच्छ गार्गीति ॥५॥

सा होवाच । यदूर्ध्वं याज्ञवल्क्य दिवो यदवाक्पृथिव्या यदन्तरा द्यावापृथिवी
इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते कस्मिंस्तदोतं च प्रोतं चेति ॥६॥

स होवाच । यदूर्ध्वं गार्गि दिवो यदवाक्पृथिव्या यदन्तरा द्यावापृथिवी
इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षत आकाश एव
तदोतं च प्रोतं चेति कस्मिन्न्वाकाश ओतश्च प्रोतश्चेति ॥७॥ ५

स होवाच । एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलोहि-
तमस्नेहमच्छायमतमोऽवाय्वनाकाशमसङ्गमस्पर्शमगन्धमरसमचक्षुष्कमश्रोत्रमवा-
गमनोऽतेजस्कमप्राणममुखमनामागोत्रमजरममरमभयममृतमरजोऽशब्दमविवृत- १०
मसंवृतमपूर्वमनपरमनन्तरमबाह्यं न तदश्नोति कश्चन न तदश्नोति कश्चन ॥८॥

सैवमपाकृतप्रथमप्रश्ना गार्गी उवाच हे याज्ञवल्क्य यस्त्वं मे ममैतं दुर्वचं प्रश्नं व्यवोचो विशेषेणापाकृत-वानसि अतस्ते तुभ्यं नमोस्तु। अपरस्मै द्वितीयाय प्रश्नाय धारयस्व दृढीकुर्वात्मानमित्यर्थः। इतर आह पृच्छ गार्गीति ॥५॥

सा होवाच—यदूर्ध्वं याज्ञवल्क्येत्यादिप्रश्नः प्रतिवचनं चोक्तस्यैवार्थस्यावधारणार्थं पुनरुच्यते न किंचिदपूर्वम-र्थान्तरमुच्यते। गार्ग्या सर्वं यथोक्तं प्रत्युच्चार्य कस्मिन्नेव तदोतं च प्रोतं चेत्युक्तार्थेन वाक्येन पुनरधिकरणमेव पृष्ट-मित्यर्थः ॥६॥ १५

एवं पृष्टः स याज्ञवल्क्यो होवाच—हे गार्गि यत्त्वमूर्ध्वं दिव इत्यादि पृष्टवत्यसि तदाकाश एव ओतप्रोत-भावेन वर्तत इत्यवधारितवान् याज्ञवल्क्यः। द्वितीयं प्रश्नमाह—कस्मिन्न्वाकाश इति। कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेत्याकाश एव तावत्कालत्रयातीतत्वाद्दुर्वाच्यस्ततोऽपि कष्टतरमक्षरं यस्मिन्न्वाकाश ओतश्च प्रोतश्चेत्यतोऽवाच्य-मिति कृत्वा न प्रतिपद्यते साऽप्रतिपत्तिर्नाम निग्रहस्थानं तार्किकसमये। अथावाच्यमपि वदति विप्रतिपत्तिर्नाम निग्रह-स्थानं यदवाच्यस्य वदन सा हि विरुद्धाप्रतिपत्तिरतो दुर्वचं प्रश्नं मन्यते गार्गीति भावः ॥७॥ २०

तद्दोषद्वयमपि परिजिहीर्षन्नाह-सहोवाचेति। स याज्ञवल्क्यो ह उवाच। हे गार्गि यत्त्वं कस्मिन्न्वाकाश इत्या-दिनाऽव्याकृताधिष्ठानं पृष्टवत्यसि एतदक्षरं वैतत् न क्षरति न क्षीयते वाऽक्षरं गुह्यब्रह्म ब्राह्मणा ब्रह्मविदोऽभिवदन्ति कथयन्ति। ब्राह्मणाभिवादनकथनेन नाहमवाच्य वक्ष्यामि। न च न प्रतिपद्येयमित्येवं दोषद्वयं परिहरति। एवमपाकृते प्रश्ने पुनर्गार्ग्याः प्रतिवचनं तु द्रष्टव्यम्। ब्रूहि किं तदक्षरं यद्ब्राह्मणा अभिवदन्तीत्युक्तो याज्ञवल्क्य आह—अस्थूल-मित्यादि। स्थूलादन्यदस्थूलं तत्। एवं तर्हि अणु अणोरन्यदनणु अस्तु तर्हि ह्रस्वं ह्रस्वादन्यदह्रस्वम्। एवं तर्हि दीर्घं नापि दीर्घमदीर्घम्। एवमेतैश्चतुर्भिः परिमाणप्रतिषेधैर्द्रव्यधर्मप्रतिषेधेन न द्रव्यं तदक्षरमिति भाव.। अस्तु तर्हि आग्नेयो गुणो लोहितः ततोप्यन्यदलोहितं भवतु तर्ह्यपां गुणः स्नेहः ततोप्यन्यदस्नेहम्। अस्तु तर्हि आग्नेयो गुणो लोहि-तस्ततोप्यन्यदलोहितम्। अस्तु तर्हि छाया अदीप्तिः तस्याप्यन्यद्। अवायुः। अस्तु तर्ह्याकाशम्। अनाकाशम्। अस्तु तर्हि जतुवत्सङ्गात्मकम्। असङ्गम्। तर्हि स्पर्शोऽस्तु। अस्पर्शं। तर्हि गन्धोऽस्तु। अगन्धम्। तर्हि रसोऽस्तु। अरसम्। तथाऽचक्षुष्कं नहि चक्षुरस्य करणं विद्यतेऽतोऽचक्षुष्कम्। तथाऽश्रोत्रं "पश्यत्यचक्षुः स शृणोत्यकर्णः" इति मन्त्रवर्णात्। तथा अवाक्। तथाऽमनः तथा अतेजस्कम्। अविद्यमानमग्न्यादिप्रकाशवत्तेजोऽस्य तदतेजस्कम्। तथाऽप्राणम्। आध्यात्मिको वायुः प्रतिपिध्यते अप्राणमिति। तर्हि मुखं द्वारमस्तु। न विद्यते मुखं प्रसिद्धं यस्य तदमुखम्। अनाम नामरहितम्। अगोत्रं न विद्यते गोत्रं यस्य तदगोत्रम्। गोत्रादन्यद्वा। अजरं वृद्धत्वधर्मरहितम्। अमरम् मरण-धर्मवर्जितं। तद्यपिक्षिकममरत्वमिन्द्रादिवद्भविष्यति। अतो अभयं सर्वथा भीतिवर्जितम्। अत एवामृतम्। अथवा मृतत्ववर्जितमित्यर्थः। अरजः न विद्यते रजो यस्मिंस्तदरजः रजसोऽन्यद्वा। अशब्दं न विद्यते शब्दो यस्मिंस्तदशब्दं २५ ३० ३५

एतस्य वा अक्षरस्य। प्रशासने गार्गि द्यावापृथिवी विधृते
तिष्ठत एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ
तिष्ठत एतस्य वा अक्षरस्य प्रशासने गार्ग्यहोरात्राण्यर्धमासा
मासा ऋतवः संवत्सरा विधृतास्तिष्ठन्त्येतस्य वा अक्षरस्य
५ प्रशासने गार्गि प्राच्योऽन्या नद्यः स्यन्दन्ते श्वेतेभ्यः पर्वतेभ्यः
प्रतीच्योऽन्या यां यां च दिशमेतस्य वा अक्षरस्य प्रशासने गार्गि
ददतं मनुष्याः प्रशंसन्ति यजमानं देवा दर्व्यं पितरोऽन्वायत्ताः ॥९॥

**यो वा एतदक्षरमविदित्वा गार्गि। अस्मिँल्लोके जुहोति ददाति तपस्यत्यपि बहूनि वर्षसहस्राण्यन्तवानेवास्य स लोको भवति यो वा एतदक्षरमविदित्वा गार्ग्यस्माल्लो-**
१० **कात्प्रैति स कृपणोऽथ य एतदक्षरं गार्गि विदित्वाऽस्माल्लोकात्प्रैति स ब्राह्मणः ॥१०॥**

शब्दादन्यद्वा। अविवृतं। न विवृतमित्यविवृतं। असंवृतम्। न संवृतमाकारो यस्य तदसंवृतम्। अपूर्वम् अविद्य-मानं पूर्वं यस्य तस्य तदपूर्वम्। अनपरम्। अविद्यमानमपरं यस्य तदनपरम्। अनन्तरम्। अविद्यमानमन्तरं छिद्रं यस्य तदनन्तरम्। अबाह्यम्। विद्यते न बाह्यं यस्येत्यबाह्यम्। अपरिच्छिन्नमित्यर्थः। अनात्मव्यक्तीनामानन्त्येन प्रत्येकं निषेधाशक्तेर्भोक्तृभोग्यात्मनैकीकृत्य प्रतिषेधति—**न तदश्नोति कश्चनेत्यादिना**। तदक्षरं कचन कश्चिदपि विषयं
१५ नाश्नोति नाश्नाति। न भुंक्ते इत्यर्थः। कश्चन कोपि लोकस्तदक्षरं नाश्नोति नाश्नातीत्यर्थः। 'अश भोजने' इति धातोः क्र्यादिगणस्थात्व्यत्ययो बहुलमिति व्यत्ययेन श्नुः प्रत्ययो बोध्यः। अत एव परस्मैपदमप्यनुपपन्नम् ॥८॥

एवमशेषविशेषणनिषेधावधित्वेन तत्साक्षित्वेन चाक्षरास्तित्वे सिद्धेऽपीदानी तस्यैवाऽविद्यकेशितव्यसबन्धादी-श्वरात्मभूतस्यास्तित्वायानुमानप्रमाणमुपन्यस्यति—**एतस्य वा अक्षरस्येति**। यदेतदधिगतमक्षरं सर्वान्तरं साक्षादपरोक्षाद् ब्रह्म, य आत्माऽशनायादिधर्मातीत एतस्यैवाक्षरस्य प्रशासन आज्ञाया हे गार्गि द्यावापृथिवी द्यौश्च पृथिवी च द्यावा-
२० पृथिवी द्विवचनलोपः छान्दसः। ते विधृते हस्तगतपाषाणादिवत् तिष्ठतो वर्तेते। अतस्तदस्त्येव "येन द्यौरुग्रा पृथिवी च दृढा येन स्वस्तभितं येन नाक" इति मन्त्रवर्णात्। तथा हे गार्गि एतस्योक्तरूपस्याक्षरस्य प्रशासन आज्ञाया सूर्या-चन्द्रमसौ सूर्यश्च चन्द्रमाश्च सूर्याचन्द्रमसौ विधृतौ नियतौ तिष्ठतो वर्तेते भृत्यादिवत्। तथाऽहोरात्राणि अर्द्धमासा मासा ऋतवः संवत्सरा इत्येते कालावयवाः सर्वस्यातीतानागतवर्तमानस्य जनिमतः कलयितारो विधृतास्तिष्ठन्ति नियता वर्तन्ते यथा लोके प्रभुणा नियमितो गणकः सर्वमायं व्ययं चाप्रमत्तो गणयति तथा प्रभुस्थानीयमेषा काला-
२५ वयवानां नियन्तृ तदक्षरमस्त्येव। तथा प्राच्यः प्रागञ्चनाः पूर्वदिग्गमना नद्यो गङ्गाद्या अन्याश्च श्वेतेभ्यो हिमवदादिभ्यः पर्वतेभ्यो गिरिभ्यः स्यन्दन्ते। अन्यथापि प्रवर्तितु मुत्सहन्त्यो यथा प्रवर्तिता एव नियताः प्रवर्तन्ते तदेतत्प्रशास्तुः लिङ्गं तथा प्रतीच्यः प्रतीचीदिग्गमना सिन्ध्वाद्या नद्योऽन्याश्च नद्यो या या च दिशमनुप्रवृत्तास्ता अक्षरप्रशासनादद्यापि तथैव प्रवर्तन्ते तदपि लिङ्गं। किञ्च ददतं दुःखार्जितान् गोहिरण्यादीन् प्रयच्छन्तं पुरुषं मनुष्या 'हिरण्यदा अमृतत्वं भजन्ते' इत्यादिप्रमाणज्ञा अपि प्रशंसन्ति स्तुतिं कुर्वते। तथा चैतस्य प्रशंसनस्य फलसंबन्धफलकत्वेन तत्कर्त्रक्षरं सिद्धम्।
३० न च स्वातंत्र्येण देवादिकर्तृक एव फलसंबन्ध इति वाच्यम्। तेषामपीश्वराधीनत्वादित्याह—**यजमानं देवा इति**। देवा इन्द्रादयोऽन्यथा जीवितुं समर्था अपि जीवन निमित्तीकृत्य च पुरोडाशाद्युपजीवनप्रयोजनेनानीश्वरमपि यजमान-मन्वायत्ता अनुगताः तथा पितरोऽर्यमादयो दर्व्यं दर्वीहोममन्वायत्ता अनुगता इत्यर्थः। यो न कस्यचित् प्रकृतित्वेन विकृतित्वेन वा वर्तते स दर्विहोमः दर्वीसाध्यो होमो दर्व्यं तं। तथा च देवादीनामपि मनुष्याधीनत्वाख्यहीनवृत्ति-भावत्वं नियन्तृकल्पकमित्यर्थः ॥९॥

३५ किञ्च यस्याज्ञानेन नियता संसारोपपत्तिर्यद्विज्ञानेन च संसारविच्छेदस्तदस्त्यक्षरमिति साधयितुं कर्मणामेव मोक्षहेतुत्वमिति पक्षं निराकरोति—**यो वा एतदक्षरमिति**। हे गार्गि यो वै कश्चित्पुरुष एतदक्षरमविदित्वाऽविज्ञायाऽ-स्मिन्लोके कर्मलोके जुहोति देवतोद्देशेन सङ्कल्पितं द्रव्यमग्नौ प्रक्षिपति। तथा ददाति गो हिरण्यादिकं प्रयच्छति।

**तद्वा एतदक्षरं गार्गि। अदृष्टं द्रष्टृश्रुतं श्रोत्रमतं मन्त्रविज्ञातं विज्ञातृ नान्यदस्ति द्रष्टृ नान्यदस्ति श्रोतृ नान्यदस्ति मन्तृ नान्यदस्ति विज्ञात्रेतद्वै तदक्षरं गार्गि यस्मिन्नाकाश ओतश्च प्रोतश्चेति ॥११॥**

**सा होवाच। ब्राह्मणा भगवन्तस्तदेव बहुमन्यध्वं यदस्मान्नमस्कारेण मुच्याध्वै न वै जातु युष्माकमिमं कश्चिद्ब्रह्मोद्यं जेतेति ततो ह वाचक्नव्युपरराम ॥१२॥** ५

इति बृहदारण्यकोपनिषदि तृतीयाध्यायस्याष्टमं ब्राह्मणम् ॥८॥

अथ तृतीयाध्यायस्य नवमं ब्राह्मणम्

**अथ हैनं विदग्धः शाकल्यः पप्रच्छ। कति देवा याज्ञवल्क्येति स हैतयैव निविदा प्रतिपेदे यावन्तो वैश्वदेवस्य निविद्युच्यन्ते त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेत्योमिति होवाच ॥१॥** १०

यद्यपि बहून्यनेकानि वर्षसहस्राणि तपस्यति। तपश्चान्द्रायणादिकमाचरति। तथाप्यस्य कर्त्तुः स लोकोऽन्तवानेव भवति। तत्साङ्गमपि क्रियमाणं कर्म तत्फलोपभोगान्ते क्षीयत एव न नित्यमोक्षफलकं भवतीत्यर्थः। तथा हे गार्गि यो वा एतदक्षरमहं ब्रह्मास्मीत्यविदित्वाऽस्माल्लोकात् कर्मलोकात् प्रैति म्रियते। स कृपणः पणक्रीतो दासादिरिव दीनः कर्मफलस्यैव भोक्ता। न तु मोक्षस्येत्यर्थः। अथ तु य एतदक्षरं श्रुत्याचार्योपदेशाभ्यामहं ब्रह्मास्मीति विदित्वाऽस्माल्लोकात्प्रैति। स ब्राह्मणो ब्रह्मविन्मुक्त इत्यर्थः ॥१०॥ १५

अग्नेर्दहनप्रकाशकत्ववत्स्वाभाविकमस्याक्षरस्य प्रशास्तृत्व मित्याह—**तद्वा एतदक्षरं गार्गीति**। हे गार्गि, एतद्वै तदक्षरमस्थूलादिवाक्येनावगमितमदृष्टं न केनचिद्दृष्टं दृष्ट्यविषय.स्वयं द्रष्टृ दृशिरूपत्वादेवाश्रुतं श्रोत्राविषयत्वात्स्वयं च श्रोतृ श्रुतिस्वरूपत्वादेवममतं मनसोऽविषयत्वात् स्वय मन्तृ मतिस्वरूपत्वादेव स्वयमविज्ञातं बुद्धेरविषयत्वात्स्वयं विज्ञातृ विज्ञानस्वरूपत्वात्। किञ्च एतस्य नानात्वशङ्कां निराकरोति—**नान्यदस्ति द्रष्टृ** इत्यादिना। प्रकृताक्षरादन्यद्द्रष्टृ दर्शनक्रियाकर्तृ नास्त्येतदेव दर्शनक्रियाकर्तृ एवं नान्यदस्ति श्रोतृ इत्यादि व्याख्येयम्। एवं २० सजातीयस्वगतनानात्वं निराकृत्येदानीं विजातोयानामनात्मनां रज्जुभुजङ्गादिवत्परिकल्पितत्वं प्रदर्शयितुं उपसंहारव्याजेन तन्नानात्वं प्रतिषेधति—**एतद्वै तदक्षरं गार्गीति**। हे गार्गि यस्मिन्नाकाश ओतश्च प्रोतश्च यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरोऽशनायादिसंसारधर्मातीत एतद्वै तदक्षरं तत्पर ब्रह्मैतत्पृथिव्यादेराकाशान्तस्य सत्यस्य सत्यमित्यर्थः ॥११॥

सा गार्गी उक्तप्रश्नद्वयनिर्णयश्रोत्री उवाच—हे ब्राह्मणा भगवन्तस्तदेव बहु मन्येध्वं बहुमन्यध्वं बहुमानविषयं २५ कुरुध्वं प्रमाणीकुरुध्वमित्यर्थं। किं तदद्यदस्माद्याज्ञवल्क्यान्नमस्कारेण मुच्येध्वं मुच्यध्वमस्मै नमस्कारं कृत्वाऽस्मादात्मनो यन्मोचनं तदेव बहुमन्यध्वमित्यर्थः। जयस्त्वस्य मनसापि नाशङ्कनीयः किमुत कार्यतः। कस्मात् न वै जातु कदाचिदपि युष्माकं मध्ये कश्चित् कोऽपीमं याज्ञवल्क्यं ब्रह्मोद्यं ब्रह्मवदनं प्रति नैव जेता। प्रश्नौ चेन्मह्यं वक्ष्यति न वै जेता भवितेति पूर्वमेव मया प्रतिज्ञातमद्यापि ममायमेव निश्चयो ब्रह्मोद्यं प्रत्येतत्तुल्यो न कश्चिद्विद्यत इति ततो ह एवं ब्राह्मणानां हितमुपदिश्य वाचक्नव्युपरराम ॥१२॥ ३०

इति श्रीविद्यारण्यमुनिविरचितमाध्यन्दिनशाखीयबृहदारण्यकोपनिषद्दीपिकाया तृतीयाध्यायेऽष्टमं ब्राह्मणम् ॥८॥

एवं यत्साक्षादित्यादि प्रस्तुत्य सर्वान्तरत्वनिरूपणद्वारा साक्षात्वादिकमार्थिकं कहोडादिब्राह्मणत्रयेण निर्द्धारितम्। ततोऽन्तर्यामिब्राह्मणे यः पृथिव्यां तिष्ठन्नित्यादिश्रुत्या व्याकृतविषये सूत्रभेदेषु पृथिव्यादिषु नियम्येषु तस्य नियन्तृत्वमुक्तम्। इदानीं नियन्तव्यानां देवताभेदानां प्राणान्तसङ्कोचानन्त्यपर्यन्तविकासद्वारा प्रकृतस्यैव ब्रह्मणः ३५ साक्षात्वापरोक्षत्वेऽधिगन्तव्ये इति कृत्वा प्रथम देवतासङ्कोचविकासोक्तिरनन्तर वस्तुनिर्देश इत्येतदर्थं शाकल्यब्राह्मणमारभ्यते—**अथ हैनं विदग्धः शाकल्य इति**। अथ गार्गिप्रश्ननिर्णयानन्तरमेनं याज्ञवल्क्यं शकलस्यापत्यं

कत्येव देवा याज्ञवल्क्येति। त्रयस्त्रिँ शदित्योमिति होवाच कत्येव देवा याज्ञ-
वल्क्येति षडित्योमिति होवाच कत्येव देवा याज्ञवल्क्येति त्रय इत्योमिति
होवाच कत्येव देवा याज्ञवल्क्येति द्वावित्योमिति होवाच कत्येव देवा
याज्ञवल्क्येत्यध्यर्ध इत्योमिति होवाच कत्येव देवा याज्ञवल्क्येत्येक
५ इत्योमिति होवाच कतमे ते त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेति ॥२॥

स होवाच। महिमान एवैषामेते त्रयस्त्रिँ शत्त्वेव देवा इति
कतमे ते त्रयस्त्रिँ शदित्यष्टौ वसव एकादश रुद्रा द्वादशादि-
त्यास्त एकत्रिँ शदिन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिँ शाविति ॥३॥

कतमे वसव इति। अग्निश्च पृथिवी च वायुश्चान्तरिक्षं चादित्यश्च
१० द्यौश्च चन्द्रमाश्च नक्षत्राणि चैते वसव एतेषु हीदं सर्वं वसु हित-
मेते हीदं सर्वं वासयन्ते तद्यदिदं सर्वं वासयन्ते तस्माद्वसव इति ॥४॥

कतमे रुद्रा इति। दशेमे पुरुषे प्राणा आत्मैकादशस्ते यदास्मा-
न्मर्त्याच्छरीरादुत्क्रामन्त्यथ रोदयन्ति तद्यद्रोदयन्ति तस्माद्रुद्रा इति ॥५॥

शाकल्यो विदग्ध इत्येवंनामा पप्रच्छ हे याज्ञवल्क्य कति कियत्संख्याका देवा इत्येव पृष्टः स याज्ञवल्क्यो यावन्तो
१५ यावत्संख्याका देवा वैश्वदेवस्य शस्त्रस्य निविदि उच्यन्ते श्रूयन्ते तावतो देवान् ह किल एतया वक्ष्यमाणया निविदा प्रतिपेदे। यां संख्यां शाकल्यः पृष्टवान् तां संख्यां निविद्द्वारा ज्ञातवानित्यर्थः। निविन्नाम देवतासंख्यावाचकानि मन्त्रपदानि कानिचिद्वैश्वदेवे शस्त्रे शस्यन्ते। तान्येव निवित्संज्ञकानि मन्त्रपदानि दर्शयति—त्रयश्च त्री च शतेति। त्रयश्च देवाः देवाना त्रीणि च शतानि पुनरप्येवं त्रयश्च त्री च सहस्रेति त्रीणि सहस्राणि। इयं त्वेषा मध्यमा संख्या बहुवचनादुत्तमाऽनन्तसंख्योक्तैव वेदितव्या। अनन्ता वै विश्वेदेवा इति पूर्वमुक्तत्वात्। उक्ता संख्या शाकल्योऽङ्गीकरो-
२० तीत्याह—ओमिति होवाचेति। ओमित्यङ्गीकारे। एवमेषा षडधिकत्रिशताधिकत्रिसहस्रलक्षणा मध्यमा संख्या सम्यक्त्वया ज्ञातेत्यर्थः ॥१॥

पुनस्तेषामेव देवानां संकोचविषया संख्या पृच्छति—कत्येव देवा याज्ञवल्क्येति। त्रयस्त्रिंशत्षट्त्रयो द्वावध्यर्द्ध एक इति देवतासंकोचविकासविषया संख्या पृष्ट्वा पुनः संख्येयस्वरूपं पृच्छति—कतमे ते त्रयश्च त्री च शता त्रयश्च। त्री च सहस्रेति व्याख्यातार्थम् ॥२॥

२५ स एवं पृष्टो याज्ञवल्क्यो ह उवाच। एषा त्रयस्त्रिंशतो देवानामेते त्रयश्च त्री च शतेत्यादयो महिमानो विभूतयः परमार्थतस्तु त्रयस्त्रिंशदेव देवा इति। कतमे ते त्रयस्त्रिंशदिति शाकल्येन पृष्ट इतर आह—अष्टौ वसव एकादश रुद्रा द्वादशादित्यास्ते एते एकत्रिंशत् इन्द्रश्चैव प्रजापतिश्चेति त्रयस्त्रिंशौ त्रयस्त्रिंशतः पूरणाविति ॥३॥

एवं सकोचादिभूतसंख्यानिर्णये कृते संख्येयान्देवान् क्रमेण पृच्छति—कतमे वसव इति। उत्तरमाह—अग्निश्च पृथिवी चेति। अग्न्याद्या नक्षत्रान्ता एते वसवः। कथ हि यस्मादेतेष्वग्न्यादिषु कर्मफलसाधनात्मकं सर्वं
३० वसु हितं स्थितं तस्माद्वसवः हि यस्माच्चैतेऽग्न्यादयः प्राणिना कर्मफलाश्रयत्वेन कार्यकरणसंघातरूपेण तन्निवासत्वेन च विपरिणमन्तो जगदिदं सर्वं वासयन्ते यस्माद्वासयन्ते तस्माद्युक्तं तेषा वसुत्वमित्यर्थः ॥४॥

तथा कतमे रुद्रा इति। पुरुषे शरीरिणि इमे प्रसिद्धा दश प्राणाः ज्ञानेन्द्रियकर्मेन्द्रियरूपा आत्मा मनश्चैका-दशानां संख्यापूरणः। कथमेषा रुद्रत्वमित्यत आह—ते यदेति। ते प्राणा यदा यस्मिन्काले मर्त्यात् म्रियमाणाच्छरीरा-दुत्क्रामन्त्यथ तदा संबन्धिभूतान् प्राणिनो रोदयन्ति तत्तस्मिन्नुत्क्रामन्तिकाले यस्माद्रोदयन्ति संबन्धिनस्तस्माद्रुद्रा
३५ इति सिद्धं निर्वचनम् ॥५॥

कतम आदित्या इति । द्वादश मासाः संवत्सरस्यैत आदित्या एते हीदँ सर्वमाददाना यन्ति तद्यदिदँ सर्वमाददाना यन्ति तस्मादादित्या इति ॥६॥

कतम इन्द्रः कतमः प्रजापतिरिति । स्तनयित्नुरेवेन्द्रो यज्ञः प्रजापतिरिति कतमः स्तनयित्नुरित्यशनिरिति कतमो यज्ञ इति पशव इति ॥७॥

कतमे षडिति । अग्निश्च पृथिवी च वायुश्चान्तरिक्षं चाऽऽदित्यश्च द्यौश्चैते षडित्येते ह्येवेदँ सर्वँ षडिति ॥८॥ ५

कतमे ते त्रयो देवा इति । इम एव त्रयो लोका एषु हीमे सर्वे देवा इति कतमौ तौ द्वौ देवावित्यन्नं चैव प्राणश्चेति कतमोऽध्यर्ध इति योऽयं पवत इति ॥९॥

तदाहुः । यदयमेक एव पवतेऽथ कथमध्यर्ध इति यदस्मिन्निदँ सर्वमध्यार्ध्नोत्तेनाध्यर्ध इति कतम एको देव इति स ब्रह्म त्यदित्याचक्षते ॥१०॥ १०

पृथिव्येव यस्याऽऽयतनम् । चक्षुर्लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणँ स वै वेदिता स्याद्याज्ञवल्क्य वेद वा अहं तं पुरुषँ सर्वस्यात्मनः परायणं यमात्थ य एवायँ शारीरः पुरुषः स एष वदैव शाकल्य तस्य का देवतेति स्त्रिय इति होवाच ॥११॥

कतम आदित्या इति । संवत्सरात्मकस्य कालस्य येऽवयवा द्वादश मासाः स्वाभिमानिदेवताविशिष्टा एते १५ आदित्याः । कथं ? हि यस्मादेते मासाभिमानिनो देवाः पुनः पुनः परिवर्तमानाः प्राणिनामायूंषि कर्मफलं चेतीदं सर्वमाददानाः गृह्णान्त उपाददत एव यन्ति गच्छन्ति ते यस्मादिदं सर्वमाददाना यन्ति तस्मादादित्या इति ॥६॥

कतम इन्द्रः कतमः प्रजापतिरिति । स्तनयित्नुर्मेघनादाभिमानिनी देवतैवेन्द्रः । यज्ञः प्रजापतिः कतमः स्तनयित्नुरिति । अशनिरिति । अशनिर्वज्रापरपर्यायं वीर्यं बलं तस्य मेघनादाभिमानीन्द्रनिष्ठत्वेनेन्द्रत्वम् । कतमो यज्ञ इति पशव इति । पशूनां हि यज्ञसाधनाश्रयत्वाद्यज्ञस्य रूपत्वाच्च पशवो यज्ञ इत्युच्यते ॥७॥ २०

कतमे षडिति । अग्निश्च पृथिवी चेति । चन्द्रमसं नक्षत्राणि वर्जयित्वा वसुत्वेन पठिता अग्न्यादय एव षड्भवन्ति । हि यस्मात्त्रयस्त्रिंशदादि यदुक्तमिदं सर्वं देवजातमेतेऽग्न्यादय एव षड्भवन्ति सर्वो हि वस्वादिविस्तर एतेष्वेव षट्स्वन्तर्भवतीत्यर्थः ॥८॥

कतमेते त्रयो देवा इति । इम एव त्रयो लोका इति पृथिवीमग्निं चैकीकृत्यैको देवः । अन्तरिक्षं वायुं वैकीकृत्य द्वितीयः । दिवमादित्यं चैकीकृत्य तृतीय. । एवमेते एव त्रयो देवा हि यस्मादेषु अग्न्याद्याः सर्वे देवा २५ अन्तर्भवन्ति । तेन एत एव त्रयो देवा इत्युक्तम् । कतमौ तौ द्वौ देवाविति । अन्नं चैव प्राणश्चेत्येतौ द्वावेव देवौ । अनयो. सर्वेषामुक्तानां देवानामन्तर्भावः । कतमोऽध्यर्द्ध इति । योऽयं वाह्यो वायुः पवते वाति सोऽध्यर्द्धं इति शेषः तत्तत्राध्यर्द्धशब्दस्य वायुविषय उक्ते सति शाकल्यादयो वादिन आहुश्चोदयन्ति । यद्यतोऽयं वायुरेक एव पवते वात्यथातः कथमध्यर्द्ध इत्याक्षेपः । योगमाश्रित्य परिहरति—यदस्मिन्निति । यद्यस्मादस्मिन्वायौ सतिइदं सर्वं चराचरमध्यार्ध्नोत् । अधिकामृद्धि प्रापत्तेन हेतुनाऽध्यर्द्धो वायुरित्यर्थः । कतम एको. देव इति—स ब्रह्मेति । स इति प्राणः ३० परामृश्यते । अध्याध्याय्यां तथा दर्शनात् स प्राणो ब्रह्म सर्वदेवात्मत्वात् । सूत्रात्मरूपेण सर्वकार्याणा भरणाच्च कारणभूतो महद्ब्रह्मेत्युच्यते । तस्मात्तं प्राणं त्यदिति परोक्षाभिधायकेन शब्देनाचक्षते । तद्ब्रह्मेति कथयन्ति प्राणविद इति शेषः । साक्षान्निर्देष्टुमशक्यत्वादिति भावः ॥९-१०॥

तदेवं संकोचविस्तराभ्यां प्राणस्वरूपमुक्तम् । इदानीं तस्यैव प्राणस्य ब्रह्मणः पुनरष्टधा भेदो ध्यानार्थमुपदिश्यते—पृथिव्येव यस्याऽऽयतनमित्यादिना । यस्य देवस्य पृथिव्येवाऽऽयतनमाश्रयः शरीरं चक्षुर्लोकः लोकयत्यनेनेति ३५

रूपाण्येव यस्यायतनम् । चक्षुर्लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणꣳ स वै वेदिता स्याद्याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्वस्यात्मनः परायणं यमात्थ य एवासावादित्ये पुरुषः स एष वदैव शाकल्य तस्य का देवतेति चक्षुरिति होवाच ॥१२॥

५ आकाश एव यस्यायतनम् । चक्षुर्लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणꣳ स वै वेदिता स्याद्याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्वस्यात्मनः परायणं यमात्थ य एवायं वायौ पुरुषः स एष वदैव शाकल्य तस्य का देवतेति प्राण इति होवाच ॥१३॥

काम एव यस्यायतनम् । चक्षुर्लोको मनोज्योतिर्यो वै तं पुरुषं
१० विद्यात्सर्वस्यात्मनः परायणं स वै वेदिता स्याद्याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्वस्यात्मनः परायणं यमात्थ य एवासौ चन्द्रे पुरुषः स एष वदैव शाकल्य तस्य का देवतेति मन इति होवाच ॥१४॥

लोकः । आलोकनसाधनम् । चक्षुषा लोकयति पश्यति सोऽयं चक्षुर्लोकः मनसा ज्योतिषा संकल्पविकल्पादिकार्यं करोति यः सोऽयं मनोज्योतिः पृथिवीशरीरश्चक्षुर्दर्शनो मनसा संकल्पयिता पृथिव्यभिमानी कार्यकरणसंघातवान् देव
१५ इत्यर्थः । यो वा एव विशिष्टं तं पुरुषं सर्वस्यात्मनः । आध्यात्मिकस्य कार्यकरणसंघातस्यात्मन. परमयनं पर आश्रयस्तं परायणं मातृजेन त्वङ्मांसरुधिररूपेण क्षेत्रस्थानीयेन बीजस्थानीयस्य पितृजस्यास्थिमज्जाशुक्ररूपस्य करणात्मनश्च परमयनं विद्याद्विजानीयात् स वै स एव वेदिता स्याद्य एतदेवं वेत्ति स एव पण्डितः स्यादित्यभिप्रायः । हे याज्ञवल्क्य त्वं तमजानन्नेव पण्डिताभिमानीत्याशयेन संबोधयति हे शाकल्य । वै निश्चितमहं तं पुरुषं वेद जानामि त्वं य सर्वस्यात्मनः परायणमात्थ कथयसि तमाह । वेद इत्युक्ते शाकल्यस्य वचनं द्रष्टव्यं यदि त्वं वेत्थ तं पुरुषं तर्हि
२० ब्रूहि किं विशेषणोऽसौ । शृणु यद्विशेषणः स इत्याह—य एवायं शारीर इति । पार्थिवांशे शरीरे भवः शारीरो मातृजकोशत्रयरूप इत्यर्थः । स एष देवो यस्त्वया पृष्टो हे शाकल्य किंत्वस्ति तत्र वक्तव्यं विशेषणान्तरं तद्वदेव पृच्छेत्यर्थः । एवं प्रक्षोभितः स शाकल्योऽमर्षवशग आह तोत्रार्दितो गज इव । तस्य शारीरस्य देवस्य का देवता किमुत्पत्तिकारणमेव विवक्षितम् । शाकल्यं प्रति मुनिरुत्तरमाहेति श्रुतिरस्मान्प्रत्याह—स्त्रिय इति होवाचेति । स्त्रीभिर्भुक्तस्यान्नस्य रसो हि मातृजस्य लोहितस्य निष्पत्तिहेतुस्तस्मादन्नरसाल्लोहितं निष्पद्यते स्त्रीणा लोहिताच्च
२५ त्वङ्मांसरुधिररूपं बीजस्यास्थिमज्जाशुक्रात्मकस्याश्रयभूतं शरीरं भवतीति स्त्रीभ्यो निष्पत्तिरिति भावः । एवं पर्यायसप्तकमाद्यपर्यायेण तुल्यार्थत्वान्न पृथग्व्याख्यानापेक्षमित्युत्तरपर्यायेषु येषां पदानामर्थभेदस्तान्येव पदानि व्याख्यायन्ते ॥११॥

रूपाण्येव यस्यायतनमिति । रूपाणि शुक्लकृष्णादीनि । चक्षुर्लोक इत्यादि सर्वं पूर्ववत् । य एवासावादित्ये पुरुष इति सर्वेषां हि रूपाणां विशिष्टं कार्यमादित्ये पुरुषः तस्य का देवतेति चक्षुरिति होवाचेति । चक्षुषो ह्यध्यात्मनः
३० आदित्यस्याधिदैवतस्य निष्पत्तिः ॥१२॥

आकाश एव यस्यायतनम् । य एवायं वायौ पुरुष इति । आकाशायतनस्य हि पुरुषस्य विशिष्टमायतनं वाह्यो वायुस्तस्य का देवतेति प्राण इति होवाच । प्राणाद्धयध्यात्मनो वायोरप्यधिदैवतस्य निष्पत्तिः ॥१३॥

काम एव यस्यायतनम् । स्त्रीव्यतिकराभिलाषः कामः, कामशरीरः पुरुष इत्यर्थः । य एवासौ चन्द्रे पुरुष इति । कामायतनस्य देवस्य हि चन्द्रो विशिष्टं कार्यं कामिना हि चन्द्रे प्रीतिविशेषो जायते । तस्य का देवतेति
३५ मन इति होवाच मनसो ह्यध्यात्मनः चन्द्रस्याधिदैवतस्य निष्पत्तिः ॥१४॥

तेज एव यस्यायतनम् । चक्षुर्लोको मनोज्योतिर्यो वै तं पुरुषं
विद्यात्सर्वस्यात्मनः परायणँ स वै वेदिता स्याद्याज्ञवल्क्य वेद वा
अहं तं पुरुषँ सर्वस्यात्मनः परायणं यमात्थ य एवायमग्नौ पुरुषः
स एष वदैव शाकल्य तस्य का देवतेति वागिति होवाच ॥१५॥

तम एव यस्यायतनम् । चक्षुर्लोको मनोज्योतिर्यो वै तं पुरुषं ५
विद्यात्सर्वस्यात्मनः परायणँ स वै वेदिता स्याद्याज्ञवल्क्य वेद वा
अहं तं पुरुषँ सर्वस्यात्मनः परायणं यमात्थ य एवायं छायामयः
पुरुषः स एष वदैव शाकल्य तस्य का देवतेति मृत्युरिति होवाच ॥१६॥

आप एव यस्यायतनम् । चक्षुर्लोको मनोज्योतिर्यो वै तं पुरुषं
विद्यात्सर्वस्यात्मनः परायणँ स वै वेदिता स्याद्याज्ञवल्क्य वेद वा १०
अहं तं पुरुषँ सर्वस्यात्मनः परायणं यमात्थ य एवायमप्सु पुरुषः
स एष वदैव शाकल्य तस्य का देवतेति वरुण इति होवाच ॥१७॥

रेत एव यस्यायतनम् । चक्षुर्लोको मनोज्योतिर्यो वै तं पुरुषं
विद्यात्सर्वस्यात्मनः परायणँ स वै वेदिता स्याद्याज्ञवल्क्य वेद वा
अहं तं पुरुषँ सर्वस्यात्मनः परायणं यमात्थ य एवायं पुत्रमयः पुरुषः १५
स एष वदैव शाकल्य तस्य का देवतेति प्रजापतिरिति होवाच ॥१८॥

शाकल्येति होवाच याज्ञवल्क्यः । त्वाँ स्विदिमे
ब्राह्मणा अङ्गारावक्षयणमक्रता३ इति ॥१९॥

तेज एव यस्यायतनम् । य एवायमग्नौ पुरुष इति । तेज आयतनस्य हि देवस्याग्नौ विशेषावस्थानम् । तस्य का देवतेति वागिति होवाच । वाचो ह्याध्यात्मिक्या अग्नेरधिदैवतस्य निष्पत्तिः ॥१५॥ २०

तम एव यस्यायतनम् । तम इति शार्वराद्यन्धकारः प्रगृह्यते । अध्यात्मं छायामयोऽज्ञानमयः पुरुषः तस्य का देवतेति मृत्युरिति होवाच । मृत्युरधिदैवतं तस्य निष्पत्तिकारणं "मृत्युनैवेदमावृतमासीदि"ति श्रुतेः ॥१६॥

आप एव यस्यायतनम् । साधारणाः सर्वा आपः प्रगृह्यन्ते । य एवायमप्सु पुरुष इति वापीकूपतडागाद्याश्रयास्वप्सु विशेषावस्थानम् । तस्य का देवतेति वरुण इति होवाच । वरुणाद्धि वाप्याद्यपान्निष्पत्तिः ॥१७॥ २५

रेत एव यस्यायतनम् । य एवायं पुत्रमयः पुरुष इति रेत आयतनस्य हि विशेषायतनं पुत्रः पुत्रमय इति चास्थिमज्जाशुक्राणि पितुर्जातानि प्रगृह्यन्ते । तस्य का देवतेति प्रजापतिरिति होवाच । प्रजापतिः पितेत्युच्यते पितृतो हि पुत्रस्योत्पत्तिः ॥१८॥

एवमष्टधा देवलोकपुरुषभेदेन त्रिधा त्रिधाऽऽत्मानं विभज्यावस्थितः एकैको देवः प्राणभेद एवोपासनार्थमुपदिष्टः । अधुना दिग्विभागेन पञ्चधा विभक्तस्य सर्वस्य जगतो हृदयात्मन्युपसंहारार्थं श्रुतिः प्रवर्तते । तत्र याज्ञवल्क्यो यदप्यस्यावशिष्टं तन्मां पृच्छत्विति चेतसि निधाय तूष्णीम्भूतं शाकल्यं ग्रहेणेवाऽऽवेशयन्नाह—शाकल्येति होवाच याज्ञवल्क्य इति । हे शाकल्य स्विदिति वितर्के । नूनमिमे ब्राह्मणास्त्वामङ्गारावक्षयणमङ्गारा अवक्षीयन्ते निरुध्यन्ते यस्मिन् संदंशादौ तदङ्गारावक्षयणं संदंशादि । तदक्रता३ इति प्लुतिर्विचारणार्था । अक्रत कृतवन्त इति याज्ञवल्क्य उवाच । त्वमङ्गारस्थानीयेन मया दह्यमानमात्मानं न बुध्यसे इत्यभिप्रायः ॥१९॥ ३०

याज्ञवल्क्येति होवाच शाकल्यः। यदिदं कुरुपञ्चालानां ब्राह्मणानत्यवादीः किं ब्रह्म विद्वानिति दिशो वेद सदेवाः सप्रतिष्ठा इति यद्दिशो वेत्थ सदेवाः सप्रतिष्ठाः ॥२०॥

किंदेवतोऽस्यां प्राच्यां दिश्यसीति। आदित्यदेवत इति स आदित्यः कस्मिन्प्रतिष्ठित इति चक्षुषीति कस्मिन्नु चक्षुः प्रतिष्ठितं भवतीति रूपेष्विति चक्षुषा हि रूपाणि पश्यति कस्मिन्नु रूपाणि प्रतिष्ठितानि भवन्तीति हृदय इति हृदयेन हि रूपाणि जानाति हृदये ह्येव रूपाणि प्रतिष्ठितानि भवन्तीत्येवमेवैतद्याज्ञवल्क्य ॥२१॥ किंदेवतोऽस्यां दक्षिणायां दिश्यसीति। यमदेवत इति स यमः कस्मिन्प्रतिष्ठित इति दक्षिणायामिति कस्मिन्नु दक्षिणा प्रतिष्ठिता भवतीति श्रद्धायामिति यदा ह्येव श्रद्धत्तेऽथ दक्षिणां ददाति श्रद्धायां ह्येव दक्षिणा प्रतिष्ठिता भवतीति कस्मिन्नु श्रद्धा प्रतिष्ठिता भवतीति हृदय इति हृदयेन हि श्रद्धत्ते हृदये ह्येव श्रद्धा प्रतिष्ठिता भवतीत्येवमेवैतद्याज्ञवल्क्य ॥२२॥

एवमुक्तं हितोपदेशं शाकल्यो विपरीतार्थं गृहीत्वा चोदयतीत्याह—याज्ञवल्क्येति होवाच शाकल्य इति। हे याज्ञवल्क्य त्वं यदिदं कुरुपञ्चालानां ब्राह्मणानत्यवादीरत्युक्तवानसि स्वयं भीतास्त्वामङ्गारावक्षयणं कृतवन्त इति। तत्किं ब्रह्म विद्वान् जानन् सन्नेवं ब्रह्मणानधिक्षिपसीति शाकल्य उवाच। एवमुक्तो याज्ञवल्क्यो मम दिग्विषयं ब्रह्मविज्ञानं तावदस्तीत्याह—दिशो वेदेति। अहं दिशो वेद जाने दिग्विषयं विज्ञानं ममास्तीत्यर्थः। तच्च न केवलं दिङ्मात्रं जाने, अपि तु सदेवा देवैर्दिगधिष्ठातृभिः सह वर्तमानाः। किं च सप्रतिष्ठाः दिशो वेत्थ जानासीति सफलं दिग्विज्ञानं यदि त्वया प्रतिज्ञातम् ॥२०॥

तर्हि हे याज्ञवल्क्य त्वमस्यां प्राच्यां दिशि किं देवतोऽसि का देवता यस्यासौ किंदेवतः कया देवतया त्वं प्राचीदिग्रूपेण संपन्न इत्यर्थः। अस्या दिशः का देवतेति प्रष्टव्ये किंदेवत इति प्रश्नकरणं मुनेर्दिगुपासनात्तादात्म्यसंपत्तिजतिति बोधयितुम्। स हि याज्ञवल्क्यो दिक्षु पञ्चधा विभक्तं दिगात्मभूतं हृदयात्मानं तद्द्वारेण सर्वं जगदात्मत्वेनोपगम्याहमस्मि दिगात्मेति पूर्वाभिमुखो व्यवस्थित आह—आदित्यदेवत इति। प्राच्यां दिशि आदित्यो देवता यस्य मम सोऽहमादित्यदेवतः तया देवतया प्राचीदिग्रूपमापन्न इत्यर्थः। सदेवा इत्येदुक्तं स प्रतिष्ठा इति तु वक्तव्यमित्याह—स आदित्यः कस्मिन् प्रतिष्ठित इति। स्वोत्पत्तिकारणे एव प्रतिष्ठितत्वमाह—चक्षुषीति। चक्षोः सूर्यो अजायतेति मन्त्रवर्णात्। कार्यं हि कारणे प्रतिष्ठितं भवति पुनश्चक्षुरुत्पादकं पृच्छति कस्मिन्नु चक्षुः प्रतिष्ठितं भवतीति उत्तरमाह—रूपेष्विति। अत्र हेतुमाह—चक्षुषा हि रूपाणि पश्यतीति। अतो रूपारब्धं चक्षुर्व्यञ्जकस्य व्यंग्यसमानजातीयत्वात्। रूपोत्पादकं पृच्छति। कस्मिन्नु रूपाणि प्रतिष्ठितानि भवन्तीति। उत्तरमाह—हृदय इति। हृदयमिति वुद्धिमनसी एकीकृत्य निर्देशो न तु मांसखण्डविषयः। हृदयारब्धानि रूपाणि रूपाकारेण हृदयं परिणतम्। अत्र हेतुर्हि यस्माद्धृदयेन हृदयस्थबुद्ध्या सर्वो लोको रूपाणि सर्वाणि जानाति बुद्ध्यभिन्नमनोमात्रकल्पितानीति स्मरतीत्यर्थः। तस्माद्धृदये ह्येव सर्वाणि वासनात्मकानि रूपाणि प्रतिष्ठितानि भवन्तीत्युपसंहृते शाकल्योऽङ्गीकरोति—एवमेवैतदिति। हे याज्ञवल्क्य एतत् त्वदुक्तमेवमेव मयाऽप्येवं ज्ञायत इत्यर्थः ॥२१॥

किं देवतोऽस्या दक्षिणायां दिश्यसीति पूर्ववत्सामान्यतोऽर्थो बोद्धव्यः। विशेषस्तु कथ्यते तव दक्षिणायां दिशि का देवता? यम देवत इति। मम दक्षिणादिग्भूतस्य यमो देवता। स यमो धर्मराजः कस्मिन् प्रतिष्ठित इति दक्षिणायामिति। सयमा हि दक्षिणा दिक् यमस्य तत्राधिपत्यात्। कस्मिन्नु दक्षिणा प्रतिष्ठिता भवतीति पृष्टो मुनिर्दक्षिणा दक्षतेः समर्थयति "कर्मणो व्यृद्धं समर्द्धयती"ति (नि. १-७) निरुक्तमाश्रित्योत्तरमाह—श्रद्धायामिति। श्रद्धा नाम भक्तिसहिताऽऽस्तिक्यबुद्धिर्दित्सुत्वलक्षणा। तस्यां कथं प्रतिष्ठिता दक्षिणेति। हि यस्माद्यदैव श्रद्धत्ते श्रद्धां करोति। अथ तदा दक्षिणां

किंदेवतोऽस्यां प्रतीच्यां दिश्यसीति । वरुणदेवत इति स वरुणः कस्मिन्प्रतिष्ठित इत्यप्स्विति कस्मिन्न्वापः प्रतिष्ठिता भवन्तीति रेतसीति कस्मिन्नु रेतः प्रतिष्ठितं भवतीति हृदय इति तस्मादपि प्रतिरूपं जातमाहुर्हृदयादिव सृप्तो हृदयादिव निर्मित इति हृदये ह्येव रेतः प्रतिष्ठितं भवतीत्येवमेवैतद्याज्ञवल्क्य ॥२३॥

किंदेवतोऽस्यामुदीच्यां दिश्यसीति । सोमदेवत इति स सोमः कस्मिन्प्रतिष्ठित इति दीक्षायामिति कस्मिन्नु दीक्षा प्रतिष्ठिता भवतीति । सत्य इति तस्मादपि दीक्षितमाहुः सत्यं वदेति सत्ये ह्येव दीक्षा प्रतिष्ठिता भवतीति कस्मिन्नु सत्यं प्रतिष्ठितं भवतीति हृदय इति हृदयेन हि सत्यं जानाति हृदये ह्येव सत्यं प्रतिष्ठितं भवतीत्येवमेवैतद्याज्ञवल्क्य ॥२४॥ ५

किंदेवतोऽस्यां ध्रुवायां दिश्यसीति । अग्निदेवत इति सोऽग्निः कस्मिन्प्रतिष्ठित इति वाचीति कस्मिन्नु वाक्प्रतिष्ठिता भवतीति मनसीति कस्मिन्नु मनः प्रतिष्ठितं भवतीति हृदय इति कस्मिन्नु हृदयं प्रतिष्ठितं भवती ॥२५॥ १०

अहल्लिकेति होवाच याज्ञवल्क्यः । यत्रैतदन्यत्रास्मन्मन्यासै यत्रैतदन्यत्रास्मत्स्याच्छ्वानो वैनदद्युर्वयांसि वैनद्विमथ्नीरन्निति ॥२६॥

ददाति नाश्रद्दधद्दक्षिणा ददाति । तस्माच्छ्रद्धाया ह्येव दक्षिणा प्रतिष्ठितेति । कस्मिन्नु श्रद्धा प्रतिष्ठितेति हृदय इति । हृदयस्यहि वृत्तिः श्रद्धा हि । यस्माद्धृदयेन श्रद्धत्ते । वृत्तिश्च वृत्तिमत्प्रतिष्ठिता भवति तस्माद्धृदये ह्येव श्रद्धा प्रतिष्ठिता भवतीत्येवमेवैतद्याज्ञवल्क्येति पूर्ववत् ॥२२॥ १५

किं देवतोऽस्यां प्रतीच्या दिश्यसीति । तस्यां वरुणोऽधिदेवता मम । स वरुणः कस्मिन्प्रतीष्ठित इत्यप्स्विति । अपां हि वरुणः कार्यं "श्रद्धा वा आपः श्रद्धातो वरुणमसृजते"ति श्रुत्यन्तरात् । आपश्च रेतसि प्रतिष्ठिता इति "रेतसो ह्यापः सृष्टा"इति श्रुत्यन्तरात् । तच्च रेतो हृदये यस्माद्धृदयस्य कार्यं रेतः कामो हृदयस्य वृत्तिः कामिना हि हृदया- २० द्रेतोऽधिस्कन्दति । अत्रैव लोकप्रसिद्धिमाह—तस्मादपीति । तस्मादपि प्रतिरूपमनुरूपं पुत्र जातमाहुर्लौकिकाः अस्य पितुर्हृदयादिवायं पुत्र' सृप्तो विनिःसृतः हृदयादिव निर्मितो यथा सुवर्णेन निर्मित' कुण्डल एवमित्यर्थः ॥२३॥

किं देवतोस्यामुदीच्यां दिश्यसीति सोमदेवत इत्यत्र सोमलतां सोमदेवतां चैकीकृत्य निर्देशः । सोमो दीक्षायां प्रतिष्ठित इति । दीक्षितो हि यजमानः सोमं क्रीणाति क्रीतेन सोमेनेष्ट्वा ज्ञानवान् सोमदेवताधिष्ठितां सौम्यामुत्तरा दिश प्रतिपद्यत इति भावः । सा च दीक्षा सत्ये यस्मात्प्रतिष्ठिता तस्मादपि तस्मादेव .दीक्षितं सत्यं वदेत्याहुः । २५ कारणनाशे कार्यनाशो मा भूदित्यभिप्रायवन्तः पण्डिता इति शेषः ॥२४॥

किं देवतोऽस्या ध्रुवाया दिश्यसीति मेरोः समन्ततो वसतामव्यभिचारादूर्ध्वा दिक्ध्रुवेत्युच्यते । ऊर्ध्वायां हि प्रकाशभूयस्त्वादग्निर्देवता स चाऽग्निर्वाचि प्रतिष्ठितः सा च वाङ्मनसि प्रतिष्ठिता मनसा (वाङ्मयो) वाग् धृता । मनो वेद पुरस्ताद्वाच इत्थं वदामैतदवादीरित्यलग्नमिव ह वै वाग् वदेद्यन्मनो न स्यात्तस्मादाह—धृता मनसे'ति एवमध्वरे श्रुतत्वात् वाचो मनसि प्रतिष्ठितत्वं युक्तम् । तच्च मनो विलासरूपत्वादर्थान्मनोद्वारा हृदय उपसंहार उक्तस्तच्च ३० सर्वात्मक हृदयं पृच्छति—कस्मिन्नु हृदयं प्रतिष्ठितं भवतीति ॥२५॥

एव पृष्टो याज्ञवल्क्य उत्तरमाह—अहल्लिकेतीति । अहनि लीयत इति व्युत्पत्तेर्नूनं त्वं प्रेतीभूतोऽसीति लक्ष्यते । यतो यत्किञ्चित्प्रेतवद्भापस इति प्रेतनाम्ना शाकल्यं सबोधयन् ह याज्ञवल्क्य उवाच । यत्र यस्मिन्काले एतद्धृदयमस्य शरीरस्यात्मभूतमस्मदस्मत्त एतस्माच्छरीरादन्यत्र क्वचिद्देशान्तरे वर्तत इति यदि मन्यासै मन्यसे यत्र यदा एतद्धृदय- मस्मदस्मत्तोऽस्माच्छरीरादन्यत्र देशान्तरे स्याद्भवेत् तदा श्वानो वा एनं शरीरमद्युर्भक्षयेयुः वयांसि वा पक्षिणो ३५ गृध्राद्य एतच्छरीरं विमथ्नीरन् विलोडयेयुर्विकर्षेरन्निति । तस्मान्मयि शरीरे एव हृदयं प्रतिष्ठितम् । तच्छरीरमपि नामकर्मरूपात्मकत्वाद्धृदये प्रतिष्ठितमित्यर्थादुक्तमित्यर्थः ॥२६॥

कस्मिन्नु त्वं चात्मा च प्रतिष्ठितौ स्थ इति। प्राण इति कस्मिन्नु प्राणः प्रतिष्ठित इत्यपान इति कस्मिन्न्वपानः प्रतिष्ठित इति व्यान इति कस्मिन्नु व्यानः प्रतिष्ठित इत्युदान इति कस्मिन्नूदानः प्रतिष्ठित इति समान इति ॥२७॥

स एष नेति नेत्यात्मा। अगृह्यो न हि गृह्यतेऽशीर्यो न हि शीर्यतेऽसङ्गोऽसितो
५ न सज्यते न व्यथत इत्येतान्यष्टावायतनान्यष्टौ लोका अष्टौ पुरुषाः स यस्तान्पुरुषान्व्युदुह्य प्रत्युह्यात्यक्रामीत्तं त्वौपनिषदं पुरुषं पृच्छामि तं चेन्मे न विवक्ष्यसि मूर्धा ते विपतिष्यतीति तँ ह शाकल्यो न मेने तस्य ह मूर्धा विपपात तस्य हाप्यन्यन्मन्यमानाः परिमोषिणोऽस्थीन्यपजह्रुः ॥२८॥

एवं कार्यकरणयोर्हृदयशरीरयोरन्योन्यप्रतिष्ठोक्ता। अतस्ते अपि कुत्र प्रतिष्ठिते इति पृच्छति—कस्मिन्न्विति।
१० देहात्मानौ ऊर्ध्ववृत्त्यात्मके प्राणे प्रतिष्ठितौ। कस्मिन्नु प्राणः प्रतिष्ठित इत्यपाने इति। साऽपि प्राणवृत्तिरपानवृत्त्या चेन्न निगृह्यते तर्हि प्रागेव गच्छेत्। स चापानो व्याने मध्यस्थवृत्तिरूपे, अन्यथोभयोरूर्ध्वाधोगमनमेव भवेत्। स च व्यान उदाने नाभिस्थवृत्तिरूपे कीलकस्थानीये। तिस्रोऽपि वृत्तयस्तत्र चेन्न निबद्धाः तर्हि नानागतयो भवेयु स चोदानः समाने सूत्रात्मशब्दवाच्ये। समानप्रतिष्ठा ह्येताः सर्वा वृत्तयः इत्यर्थः ॥२७॥

सोऽपि समानोऽन्तर्यामिणि सोप्यक्षरे कूटस्थे ब्रह्मणीत्यर्थाद्दर्शितमेवेति मत्वा श्रुतिः स्वयमेव ब्रह्मणः स्वरूप-
१५ माह—स एष इति। य. सूत्राश्रयान्तर्यामित्वकल्पनाधिष्ठानभूतः स परमात्मा एष प्रत्यगात्मैव मूर्तामूर्तब्राह्मणे नेति नेतीत्येवं सकलोपाधिनिषेधेन निर्दिष्ट आत्मा निषेधद्वारा निर्दिष्टमेव स्पष्टयति—अगृह्य इत्यादिना। सोऽयमात्मा न गृह्योऽगृह्यः यस्मात्सर्वकार्यधर्मातीतः तस्मादगृह्यः। कुतो यस्मान्न हि गृह्यते। यद्धि करणगोचर व्याकृतं वस्तु तद्-गृहणगोचरमिदं तु तद्विपरीतमात्मतत्त्वं तथाऽशीर्यः यद्धि मूर्तं संहतं शरीरादि तच्छीर्यते। अयं तु तद्विपरीतोऽतो न हि शीर्यते। तथा असंङ्गोऽमूर्तः तथाऽसितोऽबद्धः मूर्तान्तरेण संबद्धयमानः सज्जते। अयं च तद्विपरीतोऽतो न सज्यते। तथा
२० अबद्धत्वान्न व्यथत इति। अथ पुनः पूर्वामिवाख्यायिकामनुसृत्यायं प्रेतीभूतोऽब्रह्मवित्सन्नेव मा ब्रह्म पृच्छतीति सापराधत्व संपादयितुं याज्ञवल्क्यः पृच्छति—एतान्यष्टावायतनानीत्यादिना। एतान्युक्तानि पृथिव्यादीन्यष्टावायतनानि। अष्टौ लोकाश्चक्षुर्लोको मनो ज्योतिरित्येवरूपा अष्टौ पुरुषाः शारीरः पुरुष इत्यादयः तान् शारीरप्रभृतीनष्टौ पुरुषान् य. कश्चिद्ब्रह्मज्ञ आयतनलोकपुरुषेत्येतत्त्रिकभेदेन व्युदुह्य विक्षिप्य लोकस्थितिमुपपाद्य पुनः प्राचीदिगादिद्वारेण हृदयात्मनि प्रत्युह्योपसंहृत्य पश्चाद्धृदयाद्यात्मत्वलक्षणमपि समानान्तमुपाधिधर्मानत्यक्रामदतिक्रान्तवान् स्वेनैवात्मना व्यवस्थितस्त
२५ ब्रह्मज्ञमौपनिषदमुपनिषत्स्वेव विज्ञेयं नान्यप्रमाणगम्यं पुरुषमशनायादिधर्मवर्जितं हे शाकल्य त्वा त्वा ब्रह्मविद्याभि-मानिनं पृच्छामि। तं चेत् पुरुषं मे मह्यं न विवक्ष्यसि विस्पष्टं न कथयिष्यसि तर्हि ते तवाब्रह्मविदो ब्रह्मवित्त्वाभि-मानिनो मूर्द्धा शिरो विपतिष्यति विस्पष्ट पतिष्यतीति। इतिशब्द आख्यायिकासमाप्तिद्योतकः।

एवं शापे दत्ते किं वृत्तमिति जिज्ञासायां श्रुतिरेवाह—तं ह शाकल्य इति। तमौपनिषदं पुरुष शाकल्यो न मेने ह न विज्ञातवान् किल। तस्य ह शाकल्यस्य मूर्द्धा विपपात विपतितः। ब्रह्मविद्विद्वेषे परलोकविरोधोऽपि स्यादिति
३० दर्शयितुमष्टाध्याय्यां निर्वृत्ताख्यायिकार्थमिह सूचयति—तस्य हाप्यन्यदिति। न केवलमसौ मृत एवं किं च तस्य शाकल्य-स्याग्निहोत्रेण संस्कारार्थं शिष्यैर्वस्त्रखण्डेन बद्ध्वा गृहान् प्रति नीयमानान्यस्थीन्यपि परिमोषिणस्तस्करा अन्यद्धनमे-तैर्नीयत इति मन्यमानाः सन्तोऽपजह्रुरपहृतवन्त इत्यर्थः। पूर्ववृत्ताख्यायिकेहसूचिता अष्टाध्याय्यां किल शाकल्येन सह याज्ञवल्क्यस्य समानान्त एव संवादो निर्वृत्तः तत्र याज्ञवल्क्येन शापो दत्तो पुरेऽतिथ्ये मरिष्यसि न तेऽस्थीनि च गृहान्प्राप्स्यन्तीति स ह तथैव ममार तस्य हाप्यन्यन्मन्यमानाः परिमोषिणोऽस्थीन्यपजह्रुस्तस्मान्नोपवादी स्याद्-
३५ तद्ध्येवंवित्परो भवतीति। पुरेऽतिथ्ये पञ्चम्यर्थे चतुर्थी। आगामिन्यास्तिथेः पुरस्तादेवेति। अस्थीनि च नेत्यत्र च नशब्दोऽप्यर्थः। उपवादी परिभवकर्तेति सम्मतिश्रुतेरर्थः। ब्रह्मविदि विनीतेन भवितव्यमित्याचारार्थम्। महतीहीय ब्रह्मविद्या यतः तन्निष्ठावज्ञायामैहिकामुष्मिकविरोधः स्यादिति विद्यास्तुतये चेह सैवाख्यायिका सूचितेति भावः ॥२८॥

अथ ह याज्ञवल्क्य उवाच। ब्राह्मणा भगवन्तो यो वः कामयते
स मा पृच्छतु सर्वे वा मा पृच्छत यो वः कामयते तं वः
पृच्छानि सर्वान्वा वः पृच्छानीति ते ह ब्राह्मणा न दधृषुः ॥२९॥

तान्हैतैः श्लोकैः पप्रच्छ—

यथा वृक्षो वनस्पतिस्तथैव पुरुषोऽमृषा।
तस्य पर्णानि लोमानि त्वगस्योत्पाटिका बहिः ॥३०॥　५

त्वच एवास्य रुधिरं प्रस्यन्दि त्वच उत्पटः।
तस्मात्तदातुन्नात्प्रैति रसो वृक्षादिवाहतात् ॥३१॥

मांसान्यस्य शकराणि किनाटं स्नाव तत्स्थिरम्।
अस्थीन्यन्तरतो दारूणि मज्जा मज्जोपमा कृता ॥३२॥　१०

यद्वृक्षो वृक्णो रोहति मूलान्नवतरः पुनः।
मर्त्यः स्विन्मृत्युना वृक्णः कस्मान्मूलात्प्ररोहति ॥३३॥

यस्य ब्रह्मणो नेति नेतीत्यन्यप्रतिषेधद्वारेण निर्देशः कृतस्तस्यैवेदानीं विधिमुखेन निर्देशः कर्तव्यो जगतो मूलं च वक्तव्यमित्येतदर्थं श्रुतिराख्यायिकामेव पुनरनुसृत्य ब्राह्मणानुमतिमनापाद्य ब्रह्मस्वं नीयमानमनर्थाय स्यादिति न्यायं दर्शयितुं ब्राह्मणानुमतिसंप्राप्तिहेतुभूतं पराजयं कर्तुं याज्ञवल्क्यो ब्राह्मणान् पृष्टवानित्याह—अथ हेति। ह उवाच वो युष्माकं मध्ये यो 'याज्ञवल्क्यं पृच्छानी'ति कामयते इच्छति स मा मां पृच्छतु सर्वे वा यूयं मा मां पृच्छत। यद्वा वो युष्माकं मध्ये "याज्ञवल्क्यो मां पृच्छत्वि"ति यः कामयते तं पुरुषं वो युष्माकं मध्ये वर्तमानमहं पृच्छानि सर्वान्वा वो युष्मानहं पृच्छानीत्येवमुक्ता अपि ते ब्राह्मणाः न दधृषुः किञ्चिदपि प्रत्युत्तरं दातुं न प्रगल्भाः संवृत्ता इत्यर्थः ॥२९॥　१५

जगत्कारणं प्रष्टुं तावत्पुरुषवृक्षयोः साधर्म्यं श्लोकत्रयेणाह—तान्हैतैः श्लोकैरिति। तानप्रगल्भानपि ब्राह्मणानेतैर्वक्ष्यमाणैः श्लोकैर्ह किल पप्रच्छ। यथा लोके वृक्षस्तस्य विशेषणं वनस्पतिरिति। तच्च वृक्षस्य महत्त्वस्योक्तेर्न पुनरुक्तिरिति भावः। अपुष्पाः फलवन्तो ये ते वनस्पतयः स्मृता इति यथाऽश्वत्थस्तथैव तत्सधर्मैव पुरुषः इत्येतदमृषा न मिथ्या सत्यमेवैतत्। यत्तस्तस्य पुरुषस्य लोमानि तत्स्थानीयानि वनस्पतेः पर्णानि। त्वगस्य पुरुषस्य। वृक्षस्य तु तत्स्थानीया बहिरुत्पाटिका सर्वापेक्षया बहिर्भूता नीरसा त्वक् ॥३०॥　२०

त्वच एव सकाशादस्य पुरुषस्य रुधिरं प्रस्यन्दि प्रस्यन्दते निःसरतीति प्रस्यन्दिः। वृक्षस्यापि त्वचः सकाशादेवोत्पटो वृक्षनिर्यासः प्रस्यन्दी निःसरतीति शेषः। एवमुक्तं साधर्म्यमनुभवेन निगमयति—तस्मात्तदिति। यस्माद्वनस्पतेः पुरुषस्य च सर्वमेवं समानं तस्मात्तदातुन्नाद्धिसितात्पुरुषात्तद्रुधिरं प्रैति निर्गच्छति। आहताच्छिन्नाद्वृक्षाद्वनस्पतेः रस इव निर्यासो यथा प्रैतीति शेषः ॥३१॥　२५

किं चास्य पुरुषस्य मांसानि वनस्पतेः सूतशोणितस्थानीयानि शकराणि शकलानीत्यर्थः। किनाटं नाम वृक्षस्य शकलेभ्योऽभ्यन्तरं काष्ठसलग्नं वल्कलरूपमुच्यते। तत्स्थानीयं पुरुषस्य स्नावाऽस्थिसंलग्नो धातुविशेषस्तदुभयं किनाटं स्नावा च स्थिरं दृढं पुरुषस्य स्नावोत्तरतोऽभ्यन्तरतोऽस्थीनि भवन्ति। तथा वृक्षस्य किनाटस्याभ्यन्तरतो दारूणि काष्ठानि। मज्जा मज्जैव वनस्पतेः पुरुषस्य च मज्जोपमा कृता मज्जाया उपमा मज्जोपमा नान्यो विशेषोऽस्तीत्यर्थः। मज्जाशब्देनोभयत्रास्थिकाष्ठगतः सार उच्यते ॥३२॥　३०

अथ वृक्षपुरुषयोर्वैधर्म्यकथनपुरःसरं जगत्कारणं पृच्छति—यद्वृक्ष इत्यादिना। यद्यदि वृक्षो वृक्णश्छिन्नः पुनः पुनरपि मूलान्नवतरः पूर्वस्मादभिनवतरो रोहति प्ररोहति प्रादुर्भवति। स्विदिति वितर्के मर्त्यो मनुष्यो मृत्युना　३५

**रेतस इति मा वोचत जीवतस्तत्प्रजायते । जात एव न जायते को न्वेनं जनयेत्पुनः । धानारुह उ वै वृक्षोऽञ्जसा प्रेत्य सम्भवः । यत्समूलमुद्वृहेयुर्वृक्षं न पुनराभवेत् । मर्त्यः स्विन्मृत्युना वृक्णः कस्मान्मूलात्प्ररोहति । विज्ञानमानन्दं ब्रह्म रातेर्दातुः परायणम् । तिष्ठमानस्य तद्विद इति ॥३४॥**

५ इति तृतीयाध्याये नवमं ब्राह्मणम् ॥९॥

अथ तृतीयाध्यायस्य दशमं ब्राह्मणम्

**जनको ह वैदेह आसांचक्रे । अथ ह याज्ञवल्क्य आवव्राज स होवाच जनको वैदेहो याज्ञवल्क्य किमर्थमचारीः पशूनिच्छन्नण्वन्तानित्युभयमेव सम्राडिति होवाच यत्ते कश्चिदब्रवीत्तच्छृणवामेति ॥१॥**

१० यमेन वृक्णो मारितः कस्मान्मूलात् कारणात् प्ररोहति पुनर्जायते । यदेतस्माद्विशेषणात् प्राक् वृक्षपुरुषयोः सर्वसामान्यमवगतम् । अयं तु वनस्पतौ विशेषो दृश्यते यत् छिन्नस्य प्ररोहणं न तु पुरुषे मृत्युना वृक्णे पुनः प्ररोहणं दृश्यते । भवितव्यं तु कुतश्चित् प्ररोहणेन तस्मान्मृतस्य पुरुषस्य कुतः प्ररोहणमिति युष्मानहं पृच्छामीत्यर्थः ॥३३॥

तत्र शङ्कामुद्भाव्य निराचष्टे—रेतस इति । हे ब्राह्मणा रेतसः सकाशात्पुरुषः प्ररोहतीति मा वोचत मैवं वक्तुमर्हत । कस्माद्यस्माज्जीवतः पुरुषात्तद्रेतः प्रजायते न मृतात् । अतो न रेतः कारणमित्यर्थः । अय भावः, न १५ चात्र मृतपुरुषशब्देनैकः शरीरी अभिधीयते किन्तु प्रलयकाले विलीनं सर्वमेव शरीरजातं जगदभिधीयते । तदा च तदानीं जीवतः कस्यापि पुरुषस्याभावात् मृतस्य च रेतसोऽसद्भावाच्च रेतः कारणमिति । इदानी स्वभाववादमवलम्ब्य चोदयति—जात एवेति । यस्तु मृतः सः पुनर्नैव जायते जातत्वादेवेति जनिष्यतो हि सम्भवः पृष्टव्यो न जातस्यायं तु जात एवातोऽस्मिन् विषये प्रश्न एव नोपपद्यत इति चेत्तन्न । नेति पृथक् वाक्यम् । यन्मतं जात एवेति तन्न । किं तर्हि मृतः पुनरपि जायत एवान्यथाऽकृताभ्यागमनकृतप्रणाशप्रसङ्गः स्यादतो वः पृच्छामि । एनं मृतं पुरुषं नु वितर्के २० पुनः को जनयेदुत्पादयेत् । अपि च । धानारुह उ वै वृक्षः धानाबीजं वटकणिकादि । तस्याः सकाशाद्रोहतीति धानारुहः उशब्दोऽप्यर्थः । न केवलं काण्डरुह एव किन्तु बीजरुहोऽपि वृक्षो भवति । वैशब्द. प्रसिद्धिद्योतकः । तथा च यथा यथा वै वृक्षः काण्डरुहो धानारुहश्च प्रेत्य मृत्वाऽञ्जसा सम्भवः काण्डाद्धानातोऽपि प्रेत्य सम्भवो भवेदिति प्रसिद्धं न तथा मृतस्य पुरुषस्य पुनरुत्पत्तौ किञ्चिदपि कारणं दृश्यते । भवितव्य च तेनेति भावः । यद्यदि वृक्षं समूलं सहमूलेन धानाया वोद्वृहेयुरुद्यच्छेयुरुत्पाटयेयुस्तदा न पुनराभवेत्पुनरागत्य न भवेत् । तस्माद्वः पृच्छामि सर्वस्यैव २५ जगतो मूलं मर्त्यः स्विन्मृत्युना वृक्णः कस्मान्मूलात् प्ररोहतीत्यनन्तरमेव व्याख्यातार्थम् । तन्न विजज्ञुर्ब्राह्मणा यतो मृतः पुनः प्ररोहति ब्राह्मणैर्जगतो मूलं न विज्ञातमतो ब्रह्मिष्ठत्वात् याज्ञवल्क्येन गावो हृता ब्राह्मणाश्च जिताः । समाप्ताऽऽख्यायिका । यज्जगतो मूलं येन च शब्देन साक्षाद्व्यपदिश्यते ब्रह्म यद्याज्ञवल्क्यो ब्राह्मणान् पृष्टवान् तत्स्वेन रूपेण श्रुतिरस्मभ्यमाह—विज्ञानमानन्दमिति । विज्ञप्तिर्विज्ञानं कूटस्थचिन्मात्ररूपम् । तच्चानन्द न विषयविज्ञानवद्दुःखानुविद्धं किं तर्हि प्रसन्नं शिवमतुलमनायासं नित्यतृप्तमेकरसमित्यर्थः । किं तदुभयविशेषणवत् ब्रह्माक्षरं रातेर्धनस्य ३० दक्षिणारूपस्य दातुः कर्मकृतो यजमानस्य परायण परागतिः कर्मफलस्य प्रदातृ । ब्रह्मणः सर्वफलदातृत्व भाष्यकृद्भिः समर्थितं "फलमत उपपत्तेरि"त्यस्मिन्नधिकरणे । अधिकरणार्थस्तत एवावसेयः । किं चैषणाभ्यो व्युत्थाय तस्मिन्नेव मोहातीते ब्रह्मणि तिष्ठत्यकर्मकृदिति तिष्ठमानस्तस्य तदेव ब्रह्म वेत्तीति तद्वित् तस्य ब्रह्मणि तिष्ठमानस्य तद्विदो ब्रह्मविदश्च परायणं परागतिरिति । इतिशब्दः समाप्तिद्योतकः ॥३४॥

इति श्रीविद्यारण्यमुनिविरचितमाध्यन्दिनशाखीयबृहदारण्यकोपनिषद्दीपिकाया
तृतीयाध्याये नवमं ब्राह्मणम् ॥९॥

३५ एवं शाकल्यब्राह्मणे सच्चिदानन्दं ब्रह्म निर्द्धारितम् । इदानीं तस्यैव प्राणाद्यधिष्ठात्रीषु वाय्वादिदेवतासु ब्रह्मदृष्टिद्वारा निर्णयाय षडाचार्यब्राह्मणं कूर्चब्राह्मण चेति ब्राह्मणद्वयमारभ्यते । ब्राह्मणद्वयस्य त्वाख्यायिका—आचार्य-

**अब्रवीन्म उदङ्कः शौल्बायनः। प्राणो वै ब्रह्मेति यथा मातृमान्पितृमानाचार्यवान्ब्रूयात्तथा तच्छौल्बायनोऽब्रवीत्प्राणो वै ब्रह्मेत्यप्राणतो हि किं स्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मेऽब्रवीदित्येकपाद्वा एतत्सम्राडिति ॥२॥**

**स वै नो ब्रूहि याज्ञवल्क्य। प्राण एवायतनमाकाशः प्रतिष्ठा प्रियमित्येनदुपासीत का प्रियता याज्ञवल्क्य प्राण एव सम्राडिति होवाच प्राणस्य वै सम्राट्कामायायाज्यं याजयत्यप्रतिगृह्यस्य प्रतिगृह्णात्यपि तत्र वधशङ्का भवति यां दिशमेति प्राणस्यैव सम्राट् कामाय प्राणो वै सम्राट्परमं ब्रह्म नैनं प्राणो जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति ॥३॥**

व्रतश्रद्धादिसंपन्नेन विद्या लब्धव्येत्याचारप्रदर्शनार्था बोद्धव्या। जनको ह वैदेह आसांचक्रे आसनं कृतवान् दर्शनकामेभ्य आस्थायिकां दत्तवानित्यर्थः। अथ ह तस्मिन्नेवावसरे याज्ञवल्क्यं यथावत्संपूज्य ह जनक उवाचोक्तवान् "हे याज्ञवल्क्य किमर्थमचारीरा"गतोऽसि किं पुनरपि पशून् गा इच्छन् आहोस्विदण्वन्तान् सूक्ष्मान्तान् सूक्ष्मवस्तुनिर्णयान् प्रश्नान्मत्तः श्रुत्वा तदुत्तरं वक्तुमागतोऽसीति। पृष्टः किमुक्तवानित्यत आह—उभयमेवेति। हे सम्राट् हे सार्वभौमोभयमेव पशून् प्रश्नांश्चेति द्वयमपि ममागमने निमित्तमिति ह मुनिरुवाच। सम्राडिति। "राजा वै राजसूयेनेष्ट्वा भवति। सम्राट् वाजपेयेने"त्युक्तत्वाद्वाजपेययाजिनो लिङ्गं, यद्वा हिमवत्सेतुपर्यन्तस्य देशस्य राजेति सूचितम्। राज्ञाऽज्ञातमर्थमुपदेष्टुकामो मुनिः पृच्छति—यत्ते कश्चिदिति। अनेकाचार्यसेवी हि भवानिति ते तुभ्यं कश्चिदाचार्यो यदब्रवीत्तद्वयं शृणवाम उपदेशस्य सदसत्परीक्षार्थमिति। इतर आह—अब्रवीन्म उदङ्कः शौल्बायनः प्राणो वै ब्रह्मेति। उदंको नामतः। शुल्बस्यापत्यं शौल्बायनः प्राणो वायुदेवता ब्रह्मेति मे मह्यमुक्तवान् उदंकोपदिष्टमर्थं स्तोतुकामो याज्ञवल्क्यस्तस्याप्तत्वप्रयोजकभूतं शुद्धित्रयमाह—यथा मातृमानिति। यस्य पुत्रस्य सम्यगनुशास्त्री माता विद्यते स मातृमान्। तत ऊर्ध्वं यस्य पिताऽनुशास्ता वर्तते स पितृमान्। उपनयनादूर्ध्वमासमावर्तनादाचार्यो यस्यानुशास्ता विद्यते स आचार्यवान्। एवमाचार्यत्वप्रयोजकभूतशुद्धित्रयसंयुक्तः कश्चिदाचार्यो यथा स्वशिष्याय ब्रूयात् तथाऽसौ शौल्बायनस्तुभ्यं तत्प्राणो वै ब्रह्मेत्यब्रवीत्। अत्र मुनिरेव हेतुमाह—अप्राणतो हीति। अप्राणतः प्राणनक्रियामकुर्वतः किं हि स्यान्न हि तस्येह वाऽमुत्र वा किंचन प्रयोजनं स्यात्। यथोक्तब्रह्मविद्यया कृतकृत्यत्वं मन्वानं राजानं प्रत्याह—अब्रवीत्तु त इति। हे राजन् ते तुभ्यं तस्य प्राणदेवस्य ब्रह्मण आयतनं प्रतिष्ठां च तु पुनरब्रवीत् किम्? आयतनं नाम शरीरम्। प्रतिष्ठा नाम त्रिष्वपि कालेषु य आश्रयस्तम्। एवं पृष्टो राजाऽऽह न मेऽब्रवीदिति। तदुभयं शौल्बायनो मे मह्यं नाब्रवीत्। यद्येवं तर्हि हे सम्राडेतदुपासनमेकपाद्वै। एकः पादो यस्य ब्रह्मणस्तदिदमेकपादेव ब्रह्म त्रिभिः पादैः शून्यमुपास्यमानमपि फलाय न भवतीत्यर्थः ॥१-२॥

एवं मुनिनोक्तो राजा सविस्मयं पृच्छति—स वै नो ब्रूहीति। हे याज्ञवल्क्य स त्वं विद्वान्वै नोऽस्मभ्यं ब्रूहि कथय प्रतिष्ठामायतनं चेति शेषः। एवमुक्तो मुनिराह—प्राण एवायतनमिति। प्राण एव घ्राणेन्द्रियमेव प्राणदेवस्य ब्रह्मण आयतनं शरीरम्। आकाशोऽव्याकृताख्यः प्रतिष्ठा तस्योत्पत्तिस्थितिलयकालेषु आश्रयः एतत्प्राणदेवताख्यं ब्रह्म प्रियमित्येतन्नाम्नोपासीत प्रियमितीयमुपनिषद्ब्रह्मणश्चतुर्थः पादः चतुर्भिःपादैर्पूर्णत्वेन फलदत्वात्प्रियमिति कृत्वैतद्ब्रह्मोपासीतेति भावः। प्राणदेवब्रह्मस्वरूपात्प्रियमितीयमुपनिषत् प्रतिष्ठायतनवद्भिन्नाऽभिन्ना वेति जिज्ञासया पृच्छति—का प्रियतेति। हे याज्ञवल्क्य का प्रियतेति। एव पृष्टो मुनिरुवाचोक्तवान्। हे सम्राट् प्राण एव प्राणदेवब्रह्मैव प्रियता न ततो व्यतिरिक्ता प्रियतेति। कथ पुनः प्राण एव प्रियतेत्युच्यते—प्राणस्य वा इति। हे सम्राट् प्राणस्य वै कामाय प्राणाभिरक्षणार्थाय हि पुमानयाज्यं पतितादिमपि याजयति। तथाऽप्रतिगृह्यस्योपादेः प्रतिगृह्णाति। अपि च धनाद्यर्थं या तस्करादिसंकीर्णामपि दिशमेति गच्छति तत्र तस्यां दिशि वधाशंका शस्त्रादिहननिमित्ताशंका भवति तदेतत्सर्वं प्राणस्यैव सम्राट् कामाय तस्मात्प्राणो वै सम्राट् परमं ब्रह्म एवमुपासितुः फलमाह—नैनं प्राण इति। एन यथोक्तब्रह्मविदं प्राणदेवता न जहाति सर्वाणि च भूतान्येनमुपासकमभिक्षरन्ति। बलिदानादिभिः संपूरयन्ति ॥३॥

देवो भूत्वा देवानप्येति । य एवं विद्वानेतदुपास्ते हस्त्यृषभं-
सहस्रं ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः
पिता मेऽमन्यत नाननुशिष्य हरेतेति क एव ते किमब्रवीदिति ॥४॥
अब्रवीन्मे जित्वा शैलिनः । वाग्वै ब्रह्मेति यथा मातृमान्पितृमाना-
५ चार्यवान्ब्रूयात्तथा तच्छैलिनोऽब्रवीद्वाग्वै ब्रह्मेत्यवदतो हि किं स्यादित्य-
ब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मेऽब्रवीदित्येकपाद्वा एतत्सम्राडिति ॥५॥

स वै नो ब्रूहि याज्ञवल्क्य । वागेवायतनमाकाशः प्रतिष्ठा प्रज्ञेत्येनदुपासीतका प्रज्ञता याज्ञवल्क्य वागेव सम्राडिति होवाच वाचा वै सम्राड्बन्धुः प्रज्ञायत ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानानि वाचैव
१० सम्राट् प्रज्ञायन्ते वाग्वै सम्राट् परमं ब्रह्म नैनं वाग् जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति ॥६॥

देवो भूत्वा देवानप्येति । य एवं विद्वानेतदुपास्ते हस्त्यृषभं-
सहस्रं ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः
पिता मेऽमन्यत नाननुशिष्य हरेतेति क एव ते किमब्रवीदिति ॥७॥
अब्रवीन्मे बर्कुर्वार्ष्णः । चक्षुर्वै ब्रह्मेति यथा मातृमान्पितृमानाचार्य-
१५ वान्ब्रूयात्तथा तद्वार्ष्णोऽब्रवीच्चक्षुर्वै ब्रह्मेत्यपश्यतो हि किं स्यादित्य-
ब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मेऽब्रवीदित्येकपाद्वा एतत्सम्राडिति ॥८॥
स वै नो ब्रूहि याज्ञवल्क्य । चक्षुरेवायतनमाकाशः प्रतिष्ठा सत्यमित्ये-
नदुपासीत का सत्यता याज्ञवल्क्य चक्षुरेव सम्राडिति होवाच चक्षुषा
वै सम्राट्पश्यन्तमाहुरद्राक्षीरिति स आहाद्राक्षमिति तत्सत्यं भवति
२० चक्षुर्वै सम्राट्परमं ब्रह्म नैनं चक्षुर्जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति ॥९॥

य एवं विद्वानेतत्प्राणदेवतारूपं ब्रह्मोपास्त इहैव देवो भूत्वा आविर्भूतदेवभावो भूत्वा पुनः शरीरपातोत्तर-कालं देवानप्येत्यपिगच्छति। विद्यानिष्क्रयार्थं प्रतिजज्ञे इत्याह—हस्त्यृषभमिति। हस्तितुल्य ऋषभो यस्मिन् गोसहस्रे तदेवभृतं सहस्रं ददामीति ह जनको वैदेह उवाच। एवमुक्तः स याज्ञवल्क्य उवाच ह। अननुशिष्य शिक्षामकृत्वा शिष्यं कृतार्थमकृत्वा शिष्याद्धनं न हरेतेति मे पिताऽमन्यत मन्यते स्म ममाप्ययमेवाभिप्राय इत्यर्थः।
२५ क एव कश्चिद्देवः ते तुभ्यं किमब्रवीदिति ॥४॥

एवं मुनिना पृष्टो राजाऽऽह—अब्रवीन्मे जित्वा शैलिन इति। जित्वा नामतः शिलिनस्यापत्यं शैलिनः वाग्वै ब्रह्मेति वागभिमानिनी देवताऽग्निरित्यादिपूर्ववत्। अवदतो मूकस्य स वै नो ब्रूहि देवता ह वागेवायतनम्। आकाशः प्रतिष्ठा एतद्वाग्देवताख्यं ब्रह्म प्रज्ञेत्युपासीत। का प्रज्ञतेति पृष्टो मुनिर्वाग्देवतैव प्रज्ञता न ततो व्यतिरिक्तेत्यत्र हेतुमाह—वाचा वै सम्राडिति। वाचा वै वाग्देवतयैव बन्धुः प्रज्ञायतेऽयमस्माकं बन्धुरित्युक्ते प्रकर्षेण
३० ज्ञायते सर्वैरिति शेषः। तथा ऋग्वेदादीनि व्याख्यानान्तानि मैत्रेयीब्राह्मणे उक्तार्थानि वाचैव प्रज्ञायन्तेऽतो वाग्वै परमम् ब्रह्म ॥५-६॥

देवो भूत्वेति व्याख्यातम् ॥७॥

अब्रवीन्मे बर्कुर्वार्ष्णः इति। बर्कुरिति नामतो वृष्णस्यापत्यं वार्ष्णः। चक्षुरिति तदधिष्ठात्री देवता। आदित्यः अपश्यतो हीति विशेषः स वै न इति। तस्य चक्षुरेव चक्षुरिन्द्रियमेवायतनं सत्यमित्यादि ब्रह्मण
३५ उपनिषत्। चक्षुषः सत्यत्वं साधयति—चक्षुषा वा इति। हे सम्राट् चक्षुषा पश्यन्तं वै पुरुषं लोका आहुस्त्वं हस्तिनम-द्राक्षीरिति स चेदद्राक्षमित्याह तदा तत्सत्यमेव भवतीति भावः ॥८-९॥

देवो भूत्वा देवानप्येति। य एवं विद्वानेतदुपास्ते हस्त्यृषभꣳ सहस्रं ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति क एव ते किमब्रवीदिति ॥१०॥

अब्रवीन्मे गर्दभीविपीतो भारद्वाजः। श्रोत्रं वै ब्रह्मेति यथा मातृमान्पितृमानाचार्यवान्ब्रूयात्तथा तद्भारद्वाजोऽब्रवीच्छ्रोत्रं वै ब्रह्मेत्यश्रृण्वतो हि किꣳ स्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मेऽब्रवीदित्येकपाद्वा एतत्सम्राडिति ॥११॥ ५

स वै नो ब्रूहि याज्ञवल्क्य। श्रोत्रमेवायतनमाकाशः प्रतिष्ठाऽनन्त इत्येनदुपासीत काऽनन्तता याज्ञवल्क्य दिश एव सम्राडिति होवाच तस्माद्वै सम्राड् यां कां च दिशं गच्छति नैवास्या अन्तं गच्छत्यनन्ता हि दिशः श्रोत्रं हि दिशः श्रोत्रं वै सम्राट्परमं ब्रह्म नैनꣳ श्रोत्रं जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति ॥१२॥ १०

देवो भूत्वा देवानप्येति। य एवं विद्वानेतदुपास्ते हस्त्यृषभꣳ सहस्रं ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति क एव ते किमब्रवीदिति ॥१३॥

अब्रवीन्मे सत्यकामो जाबालः। मनो वै ब्रह्मेति यथा मातृमान्पितृमानाचार्यवान्ब्रूयात्तथा तत्सत्यकामोऽब्रवीन्मनो वै ब्रह्मेत्यमनसो हि किꣳ स्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मेऽब्रवीदित्येकपाद्वा एतत्सम्राडिति ॥१४॥ १५

स वै नो ब्रूहि याज्ञवल्क्य। मन एवायतनमाकाशः प्रतिष्ठाऽऽनन्द इत्येनदुपासीत काऽनन्दता याज्ञवल्क्य मन एव सम्राडिति होवाच मनसा वै सम्राट् स्त्रियमभिहार्यति तस्यां प्रतिरूपः पुत्रो जायते स आनन्दो मनो वै सम्राट्परमं ब्रह्म नैनं मनो जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति ॥१५॥ २०

देवो भूत्वा देवानप्येति। य एवं विद्वानेतदुपास्ते हस्त्यृषभꣳ सहस्रं ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति क एव ते किमब्रवीदिति ॥१६॥

देवो भूत्वा ॥१०॥

गर्दभीविपीत इति नामतो भारद्वाज इति गोत्रजः श्रोत्रे तदभिमानिनी दिग्देवता ॥११॥ २५

श्रोत्रमेव श्रोत्रेन्द्रियमेवायतनम्। दिशोऽनन्तत्वं साधयति—तस्माद्वा इति। कश्चित् पुमान्। यां कां च प्राचीमुदीचीं वा दिशं गच्छति सोऽस्या दिशोऽन्तं नैव गच्छति नैव प्राप्नोति। अतोऽनन्ता हि दिशः। तथापि श्रोत्रब्रह्मणः किमायातमित्यत आह—श्रोत्रं हि दिश इति। दिग्भागो हि पार्थिवाधिष्ठानावच्छिन्नः श्रोत्रमित्युच्यतेऽतस्तयोरेकत्वमित्युपपन्नं तस्माद्दिगानन्त्यमेव श्रोत्रस्यानन्त्यम् ॥१२॥

देवो भूत्वा ॥१३॥ ३०

सत्यकाम इति नामतो जबालाया अपत्यं जाबालः। मनो वै ब्रह्मेति मनोऽधिष्ठात्री चन्द्रो देवता ॥१४॥

मन एवायतनमिति करणोक्तिः मनस आनन्दत्वं साधयति—मनसा वै इति। हे सम्राट् मनसा स्त्रियमभिहार्यति कातिकर्मनामसुपठितः ( नि० ७.३.२ ) तस्या स्त्रिया प्रतिरूपः पितृभावनानुरूपः पुत्रो जायते स पुत्र आनन्दः आनन्दहेतुत्वात् ॥१५॥

देवो भूत्वा ॥१६॥ ३५

अब्रवीन्मे विदग्धः शाकल्यः । हृदयं वै ब्रह्मेति यथा मातृमान्पितृमानाचार्यवान्ब्रूयात्तथा तच्छाकल्योऽब्रवीद्धृदयं वै ब्रह्मेत्यहृदयस्य हि किं स्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मेऽब्रवीदित्येकपाद्वा एतत्सम्राडिति ॥१७॥

स वै नो ब्रूहि याज्ञवल्क्य । हृदयमेवायतनमाकाशः प्रतिष्ठा स्थितिरित्येनदुपासीत का स्थितिता याज्ञवल्क्य हृदयमेव सम्राडिति होवाच हृदयं वै सम्राट् सर्वेषां भूतानां प्रतिष्ठा हृदयेन हि सर्वाणि भूतानि प्रतितिष्ठन्ति हृदयं वै सम्राट्परमं ब्रह्म नैनं हृदयं जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति ॥१८॥

देवो भूत्वा देवानप्येति । य एवं विद्वानेतदुपास्ते हस्त्यृषभं सहस्रं ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥१९॥

इति बृहदारण्यकोपनिषदि तृतीयाध्याये दशमं ब्राह्मणम् ॥१०॥

अथ तृतीयाध्यायस्यैकादशं ब्राह्मणम्

अथ ह जनको वैदेहः कूर्चादुपावसर्पन्नुवाच । नमस्ते याज्ञवल्क्यानु मा शाधीति स होवाच यथा वै सम्राण्महान्तमध्वानमेष्यन्रथं वा नावं वा समाददीतैवमेवैताभिरुपनिषद्भिः समाहितात्माऽस्येवं वृन्दारक आढ्यः सन्नधीतवेद उक्तोपनिषत्क इतो विमुच्यमानः क्व गमिष्यसीति नाहं तद्भगवन्वेद यत्र गमिष्यामीत्यथ वै तेऽहं तद्वक्ष्यामि यत्र गमिष्यसीति ब्रवीतु भगवानिति ॥१॥

विदग्धो नामतः शकलस्यापत्यं शाकल्यः हृदयं वै ब्रह्मेति हृदयाभिमानिनी देवता प्रजापतिरुच्यते ॥१७॥

हृदयमेवायतनमित्याध्यात्मिकहृदयोक्तिः । हृदयस्य स्थितितां साधयति—**हृदयं वै सम्राट् सर्वेषां भूतानां प्रतिष्ठेति** । हि यतो हृदयेन सर्वाणि भूतानि नामरूपकर्मात्मकानि प्रतितिष्ठन्ति तस्माद्धृदयं परमं ब्रह्म ॥१८॥

देवो भूत्वेति पूर्ववत् ॥१९॥

इति श्रीविद्यारण्यमुनिविरचितमाध्यन्दिनशाखीयबृहदारण्यकोपनिषद्दीपिकायां तृतीयाध्यायस्य दशमं ब्राह्मणम् ॥१०॥

पूर्वस्मिन् षडाचार्यब्राह्मणे कानिचिदुपासनानि ज्ञानसाधनान्युक्तानि । इदानीं तैर्ज्ञेयस्य ब्रह्मणो जागरादिद्वारा ज्ञानार्थं कूर्चब्राह्मणमारभ्यते—**अथ ह जनको वैदेह इति** । अथानन्तरं ह किल जनको वैदेहः कूर्चादासनविशेषादुत्थायोपसमीपमवसर्पन् तत्पादयोः पतन्नित्यर्थः । उवाचोक्तवान् । हे याज्ञवल्क्य ते तुभ्यं नमो नतिरस्त्विति शेषः । त्वं तु मामामनुशाधि शिक्षय । येन परमात्मज्ञानेन विनाऽहमकृतार्थ एव तत्तत्त्वज्ञानमुपदिशेति भावः । इतिशब्दो वाक्यपरिसमाप्त्यर्थः मुमुक्षवे द्वयं वाच्यं ज्ञानं तत्साधनं च । तत्र ज्ञानसाधनं राज्ञोऽस्तीति दृष्टान्तपूर्वकं कथयतीत्याह—**स होवाचेति** । स एवं प्रार्थितो याज्ञवल्क्यः होवाच हे सम्राट् यथा वै लोके पुमान् महान्तं दीर्घमध्वानं मार्गं स्थलेन जलेन वैष्यन् गमिष्यन् यथाक्रमं रथं वा नावं वा समाददीत सम्यक् प्रकारेण गृह्णीयात् । एवमेवैताभिः प्रियमित्येतदुपासीतेत्याद्युक्ताभिरुपनिषद्भिः समाहितात्मा संयुक्तात्माऽत्यन्तसंस्कृतान्तःकरणोऽसि । न केवलमुपनिषत्समाहितः किञ्चैवं वृन्दारकः पूज्य आढ्यश्चेश्वरो न दरिद्र इत्यर्थः । धनादिसंपन्नोऽपि सन्नधीतवेदः अधीतो वेदो येन सोऽयमधीतवेदः आचार्यैरुक्ता उपनिषदो यस्मै तुभ्यं स त्वमुक्तोपनिषत्कः एव सर्वविभूतिसंपन्नोऽपि सन् भयमध्यस्थ एवेति यावत्पर ब्रह्म न विदितं तावदकृतार्थ एवेति बोधयितुं ज्ञानसाध्यां प्रणाड्योपासनफलभूतां मुक्तिं पृच्छति—**इतो विमुच्यमान इति** । इतोऽस्माद्देहाद्विमुच्यमान एताभिर्नौरथस्थानीयाभिरुपासनाभिः समाहितोऽपि सन् क्व कस्मिन् गमिष्यसि किं वस्तु प्राप्स्यसीत्येवं पृष्टो राजाऽऽह—**नाहमिति** । हे भगवन् पूजावन् अहं तद्गन्तव्यं वस्तु न वेद न जाने यत्र गमिष्यामि यत्र गतः कृतार्थः । एवमुक्तो मुनिराह—**अथ वै तेऽहमिति** । ते तुभ्यमहं तद्वस्तु वक्ष्यामि कथयिष्यामि यत्र गमिष्यसि यत्र गतः कृतार्थः स्याः इत्यर्थः । राजा आह—**ब्रवीतु भगवानिति** । यदि भगवान् प्रसन्नस्तर्हि ब्रवीतु

**स होवाच । इन्धो वै नामैष योऽयं दक्षिणेऽक्षन्पुरुषस्तं वा एतमिन्धꣳ सन्तमिन्द्र इत्याचक्षते परोक्षेणेव परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः ॥२॥**

**अथैतद्वामेऽक्षिणि पुरुषरूपम् । एषाऽस्य पत्नी विराट्तयोरेष सꣳस्तावो य एषोऽन्तर्हृदय आकाशोऽथैनयोरेतदन्नं य एषोऽन्तर्हृदये लोहितपिण्डोऽथैनयोरेतत्प्रावरणं यदेतदन्तर्हृदये जालकमिवाथैनयोरेषा सृतिः सञ्चरणी यैषा हृदयादूर्ध्वा नाड्युच्चरति ॥३॥** ५

**ता वा अस्यैताः । हिता नाम नाड्यो यथा केशः सहस्रधा भिन्न एताभिर्वा एतदास्रवदास्रवति तस्मादेष प्रविविक्ताहारतर इव भवत्यस्माच्छारीरादात्मनः ॥४॥**

कथयत्वित्यर्थः ॥१॥

इदानीं विश्वतैजसप्राज्ञानुवादेन वक्तव्यतया प्रतिज्ञातं तुरीयं ब्रह्म प्रतिपादयितुमादौ वैश्वानराभिन्नं जाग्रदभिमानिनं विश्वं दर्शयति—स होवाच इन्धो वै नामैष इति । स याज्ञवल्क्यो होवाच इन्धे दीप्यते जागरिते स्थूलार्थभोक्तृत्वेन सदा स्फुरणादितीन्धो नाम वै प्रसिद्ध एवाऽऽदित्यान्तर्गतः पुरुषश्चक्षुर्वै ब्रह्मेति पुरोक्तः कोऽसाविन्धो नामेति । अधिदैवतं पुरुषमुक्त्वाऽध्यात्मं तमाह—योऽयमिति । योऽयं दक्षिणेऽक्षन्नक्षणि पुरुषोऽध्यात्मरूपमापन्नः तं वा एतं पुरुषं दीप्तिगुणत्वादस्येन्ध इति प्रत्यक्षनाम तमिन्धं सन्तमिन्द्र इति परोक्षेणैवेन्द्र इत्याचक्षते । इवशब्दोऽवधारणार्थः परोक्षेणैव कथयन्तीत्यर्थः । कुतः ? हि यस्माद्देवा. परोक्षप्रिया इव परोक्षनामग्रहणप्रिया एव अपि च प्रत्यक्षनामग्रहणं द्विषन्तीति प्रत्यक्षद्विषः ॥२॥ १५

एकस्यैव वैश्वानरस्योपासनार्थं प्रासङ्गिकमिन्द्रश्चेन्द्राणी चेति मिथुनं कल्पयति—अथैतद्वामेऽक्षणि पुरुषरूपमित्यादिना । प्रासङ्गिकध्यानाधिकारार्थोऽथशब्दः । अथैतदेवोक्तपुरुषरूपं वामेऽक्षिणि अक्षिण गत सदस्यैवोक्तस्येन्द्रस्य भोक्तुर्वैश्वानरस्य एषा विराट् पत्नी भोग्यत्वात् । तथा च यदेतन्मिथुन जागरिते विश्वशब्दवाच्यं तदेवैकं स्वप्ने तैजस शब्दवाच्यमित्यर्थादुक्तमेव । अत एवास्य स्वप्नावस्थस्य मिथुनस्थानमाह—तयोरेष इति । तयोरिन्द्रेन्द्राण्योः स्वप्नावस्थामापन्नयोरेष संस्तावः संभूय यत्रान्योन्यं संस्तव कुर्वति । स एष सस्तावः कोऽसौ य एष प्रसिद्धोऽन्तर्हृदये हृदयस्य २० मासपिण्डस्यान्तर्मध्ये आकाशः सुषिः स इत्यर्थः । अथैनयोरुक्तावस्थयोरिन्द्रेन्द्राण्योरेतद्वक्ष्यमाणमन्न भोज्यं स्थितिहेतुः । किं तत्? य एषोऽन्तर्हृदये लोहितपिण्ड इति । प्रथमं तावज्जग्धमन्नं द्वेधा परिणमते तत्र यत्स्थूलं तदधो गच्छति यदन्यत्सूक्ष्मं तत्पुनरग्निना पच्यमानं द्वेधा परिणमते तयोर्मध्ये यो मध्यमो रसः स पाञ्चभौतिकं शरीरमुपचिनोति यः पुनरणिष्ठो रस स एषः लोहित एव पिण्डो लोहितपिण्डः । ननु लोके भुक्तवतोः स्वपतोश्च प्रावरणं दृष्टं तथाऽनयोरपि प्रावरणेन भवितव्य किं तदित्यपेक्षायामाह—अथैनयोरेतत्प्रावरणमिति । अथ भोगस्वप्नानन्तरमेनयोः २५ पूर्वोक्तयोरेतत्प्रावरणं यदेतदन्तर्हृदये जालकमिवानेकनाडीछिद्रबहुलत्वाज्जालकवत्प्रतिभासमानमित्यर्थः । इदानी तयोः स्वप्नाज्जागरितगमनायेति सचरणी । का सा ? दशागमनमाह । अथैनयोरेषा सृतिरिति । अथ स्वापानन्तरं जाग्रत्स्थानमाजिगमिषतोरेनयोर्दम्पत्योरेषा सृतिः शोभना सृतिः मार्गः संचरणी सञ्चरत. स्वप्नाज्जागरितमनयेति संचरणी का सा? यैष हृदयाद्धृदयदेशादूर्ध्वाभिमुखा सती नाडी उच्चरति उद्गच्छति सा सृतिरित्यर्थ. ॥३॥

इदानी विश्वतैसयोरत्यन्तविवेको भोक्तुश्च सूक्ष्मतेत्येतत्प्रदर्शनार्थमिन्द्रियाश्रिताना नाड्यन्तराणा परिमाणं ३० सदृष्टान्तमाह—ता वा अस्यैता हिता इति । यथा लोके एकः केशः सहस्रधा भिन्नोऽत्यन्तं सूक्ष्मो भवति । एव सूक्ष्मा अस्य पुरुषस्य देहसम्बन्धिन्य एताः स्वप्नाज्जाग्रद्गमनादिव्यवहारहेतुभूता नाड्यः शिरा हिता नाम हिता इत्येवं नाम्ना ख्याता अन्तर्हृदये प्रतिष्ठिता सन्तीति शेषः । हृदयाच्च विरूढास्ताः सर्वत्र कदम्बकेसरवद्युगपत्स्थानविशेषेषु प्रसृताः सत्यो व्यवस्थिता इत्यर्थ । उक्तनाडीनामुपयोगकथनपूर्वकं सूक्ष्मतमत्वकथनप्रयोजनमाह—एताभिर्वा एतदास्रवदिति । एताभिर्नाडीभिरत्यन्तसूक्ष्माभिर्वै एवैतं देहमास्रवद्गच्छत् शरीरं व्याप्नुवत् । पूर्वोक्तसूक्ष्मतरमन्नं ३५ कर्तृ आस्रवति करणान्त.करणक्षेत्रज्ञदेवतारूपान् व्याप्नोतीत्यर्थः । यदर्थमेतासां सूक्ष्मतमत्वमुक्तं तत्प्रयोजनमाह—तस्मादेष प्रविविक्ताहारतर इवेति । यस्मान्नाड्याश्रित सूक्ष्ममन्नं देवताद्वारा भुञ्जान. सन्नयं लिङ्गात्मा करणदेवताः करणान्यन्तःकरणं च लिङ्गाख्य प्रीणयति राजस्थानीयेन चिदात्मनाऽनधिष्ठिताना भोगे स्वातन्त्र्याभावात् । तस्मादेष तैजसः प्रविविक्ताहारतरः अतिशयेन विविक्ताहार इति विग्रहः । कस्मात्प्रविविक्ताहारतरत्वमित्यत आह—अस्माच्छा-

तस्य वा एतस्य पुरुषस्य । प्राची दिक्प्राञ्चः प्राणा दक्षिणा दिग्दक्षिणाः प्राणाः प्रतीची दिक्प्रत्यञ्चः प्राणा उदीची दिगुदञ्चः प्राणा ऊर्ध्वा दिगूर्ध्वाः प्राणा अवाची दिगवाञ्चः प्राणाः सर्वा दिशः सर्वे प्राणाः ॥५॥
स एष नेति नेत्यात्मा । अगृह्यो न हि गृह्यतेऽशीर्यो न हि शीर्यतेऽसङ्गोऽसितो न सज्यते न व्यथतेऽभयं वै जनक प्राप्तोऽसीति होवाच याज्ञवल्क्यः स होवाच जनको वैदेहो नमस्ते याज्ञवल्क्याभयं त्वागच्छताद्यो नो भगवन्नभयं वेदयस इमे विदेहा अयमहमस्मीति ॥६॥

इति तृतीयाध्यायैकादशं ब्राह्मणम् ॥११॥
इति माध्यन्दिनशाखीयबृहदारण्यकोपनिषदि तृतीयोऽध्यायः ॥३॥
इति ब्राह्मणक्रमेण षष्ठोऽध्यायः ॥६॥

रीरादात्मन इति । शरीरात्स्थूलशरीरोपाधेर्वैश्वानरादात्मनः सकाशादिति यावत् । तस्य हि मूत्रपुरीषादिस्थूलापेक्षया पिण्डोपचयकरमप्यन्नं प्रविविक्तमेव लिङ्गस्थितिकरं त्वन्नं ततोऽपि सूक्ष्मतरम् । इवशब्द उपमार्थः । तथा च यथा प्रविविक्ताहारो विश्वः तथाऽयं तैजसो न प्रविविक्ताहार एव किन्तु प्रविविक्ताहारतर इति योजना ॥४॥

विश्वतैजसयोरेव श्रुत्या साक्षान्निर्दिष्टत्वात्तैजसस्य प्राज्ञद्वारा तुरीयब्रह्मात्मनि लयः साक्षादेव निर्देष्टव्य इत्यभिप्रेत्य तुरीये लीनस्य तैजसस्य लयात्प्रागवस्थायां परिच्छेदहेतुभूता येऽध्यात्मप्राणास्तेषां लयानन्तरं संवृतावस्थोपन्यासव्याजेन तैजसस्य प्राज्ञद्वारा तुरीये लयं दर्शयति—तस्य वा एतस्य पुरुषस्य । प्राची दिक् प्राञ्चः प्राणा इति । स एष हृदयभूतस्तैजसः सूक्ष्मभूतेन प्राणेन विध्रियमाणः प्राण एव भवति । तस्य वा एतस्य पुरुषस्य विदुषः क्रमेण वैश्वानरात्तैजसं प्राप्तस्य तस्याकार्यकारणाखण्डतुरीयपदाविष्टस्य तैजसस्य ये प्राञ्चः प्रागञ्चन्तीति प्राञ्चः प्राणा नासाद्वाराऽग्रतः सञ्चरन्तस्ते प्राचीदिगेव संवृत्ताः । अध्यात्मादिपरिच्छिन्नाः प्राणाः सर्वासु दिक्षु स्थिताः । विदुषस्तुरीयपदप्राप्तस्य परिच्छेदहेतुनाशात्तस्मिन्नेकीभूताः सन्तस्तत्तद्दिङ्मात्रं संवृत्ताः प्रत्यङ्मात्रे लीना इत्यर्थः । एवं दक्षिणा दिग् दक्षिणाः प्राणा इत्यादि व्याख्येयम् । तथा चोपाधिभूतानां लयं दर्शयन्ती श्रुतिरुपहितस्याप्यात्मनो लयं कारणात्मनि दर्शितवतीति भावः ॥५॥

एवं सर्वोपसंहारं कृत्वाऽवस्थितस्य पुरुषस्य विदुषः किं स्वरूपमित्यपेक्षायामविद्यातत्कार्यभावाभावसाक्षित्वेन तद्विलक्षणं निष्प्रपञ्च स्वरूपमिति दर्शयति—स एष नेति नेत्यात्मेत्यादिना । न व्यथत इत्यन्तेन । व्याख्यातार्थं वाक्यम् । इदानीं यत्प्रत्यगात्मस्वरूपज्ञापनार्थं ब्राह्मणहृदयात्मको ग्रन्थ उपदिष्टस्तस्य ज्ञानस्याऽपरोक्षानुभवरूपस्य फलमाह—अभयं वा इति । हे जनक त्वमभय जन्ममरणादिनिमित्तभयाभावं वै निश्चयेन प्राप्तोऽसि नातः परं तव शोक इति ह याज्ञवल्क्य उवाचोक्तवान् । एतावता"अथ वै तेऽहं तद्वक्ष्यामी"ति यत्प्रतिज्ञातं तदुपदिष्टम् । इदानीं शिष्यं कृतार्थमकृत्वा ततो दक्षिणा न ग्राह्येति मुनिमतं स्मरन् राजा दक्षिणां दित्सुर्ममानुभवपर्यन्तं ज्ञानं कृतार्थताहेतुभूतं जातमिति ज्ञापितवानित्याह श्रुतिः—स होवाच जनको वैदेहो नमस्ते याज्ञवल्क्येति । स जनक उवाच हे याज्ञवल्क्य साक्षादात्मानमेव दत्तवते ते तुभ्यं किमहं विद्यानिष्क्रयाय दास्ये तस्मात्तुभ्यं नमो नमस्कारोऽस्तु । स्वात्मनि सम्पन्न ज्ञानं ज्ञापयित्वा गवादीनां दक्षिणानामेतज्ज्ञानाननुरूपत्वमभिप्रेत्य दक्षिणान्तरं निवेदयति—अभयं त्वाऽऽगच्छताद्यो नो भगवन्नभयमिति । हे भगवन् यस्त्वं नोऽस्मान् अभयं ब्रह्म वेदयसे ज्ञापयसि अज्ञानव्यवधानापनयनेन प्रापितवानसीति यावत् । तत्त्वा त्वामप्यभयं गच्छतादगच्छतु । इमे विदेहास्तव यथेष्टं भोगाय सन्तु । अयं चाहं तव दासभावे स्थितोऽस्मि । यथेष्टं मा राज्यं च प्रपद्यस्वेति वाक्यार्थः । इदं दक्षिणादानं व्यवहारदृष्टिमवष्टभ्यैवोक्तं तत्त्वतस्तु नास्त्येव दक्षिणेति राज्ञोऽभिप्रायः । अद्वितीयब्रह्मात्मैक्यमनुभवतः स्वात्मातिरिक्तस्य वस्तुनोऽभावात् । तदुक्तम् "अहं ममेत्यविद्याधीः स हेतुर्नाशिता यदा । पूर्णात्मनि तदा दृष्टे कः कस्मै किं च दित्सती"ति ॥६॥

इति श्रीविद्यारण्यमुनिविरचितमाध्यन्दिनशाखीयबृहदारण्यकोपनिषद्दीपिकायां तृतीयाध्यायस्यैकादशं ब्राह्मणम् ॥११॥

## अथ चतुर्थोऽध्यायः

### अथ चतुर्थाध्यायस्य प्रथमं ब्राह्मणम्

**जनकँ ह वैदेहं याज्ञवल्क्यो जगाम । स मेने न वदिष्य इत्यथ ह यज्जनकश्च वैदेहो याज्ञवल्क्यश्चाग्निहोत्रे समूदतुस्तस्मै ह याज्ञवल्क्यो वरं ददौ स ह कामप्रश्नमेव वव्रे तँ हास्मै ददौ तँ ह सम्राडेव पूर्वः पप्रच्छ ॥१॥** ५

**याज्ञवल्क्य किंज्योतिरयं पुरुष इति । आदित्यज्योतिः सम्राडिति होवाचाऽऽदित्येनैवायं ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते विपर्येतीत्येवमेवैतद्याज्ञवल्क्य ॥२॥**

**अस्तमित आदित्ये याज्ञवल्क्य । किंज्योतिरेवायं पुरुष इति चन्द्रज्योतिः सम्राडिति होवाच चन्द्रेणैवायं ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते विपर्येतीत्येवमेवैतद्याज्ञवल्क्य ॥३॥**

मधुकाण्डे तावत् बुध्यनुप्रविष्ट ईश्वरोऽविद्ययाऽकृत्स्नत्वमापन्न इति "तन्न पश्यन्त्यकृत्स्नो हि स" इत्यादि- १० नोक्तम् । पुनस्तान्येवाविद्यानिरासेन स्वरूपावस्थानं चागमप्राधान्येन निर्धारितम् । एवं मधुकाण्डे निरूपित आत्मा यत्साक्षादपरोक्षादित्यादिलक्षणो जल्पन्यायमवलम्ब्याखण्डप्रत्यक्त्वेन निरूपितस्तस्यैव वादन्यायेन स्वरूपनिर्णयाय वागादिदेवतासु ब्रह्मदृष्टिद्वारा, इन्धो ह वा इत्यादिना जागराद्यवस्था अनुसृत्य महता तर्केणानेकविप्रतिपत्तिनिरास- द्वारेण देहादिव्यतिरिक्तशुद्धस्वयप्रकाशानतिशयानन्दस्वभावलक्षणं पूर्वोक्तमेवात्मानमधिगमयितुं ज्योतिर्ब्राह्मण- मारभ्यते—जनकं ह वैदेहं याज्ञवल्क्यो जगामेति । विद्याग्रहणे शिष्यस्य श्रद्धादिलक्षणाचारविधिप्रकाशनार्था ब्रह्म- १५ विद्यास्तुत्यर्था चेयमाख्यायिका । ऐतिह्यद्योतको हशब्दः । जनकं वैदेहं प्रति याज्ञवल्क्यो योगक्षेमार्थं जगाम गतवान् । स गच्छन् याज्ञवल्क्यो, राज्ञेऽहं किंचिदपि न वदिष्य इति मेने विचारयामास । यद्वा सम् एनेनेतिच्छेदः । तथा चैनेन राज्ञाऽहं सवदिष्य इत्यभिप्रायवान् वैदेहं जनकं जगामेत्यर्थं । ननु न वदिष्य इति संकल्पेऽपि राजकृतेषु प्रश्नेषूत्तर- दानेन मुनेः स्वप्रतिज्ञाहानौ को हेतुरित्यपेक्षाया संवदिष्य इति च व्याख्यायां वरदानमेव हेतुरिति कथयितुं कर्मकाण्ड- वृत्तामाख्यायिकामाह—अथ ह यज्जनकश्च वैदेह इत्यादिना । ह किल यत् यत्र कर्मकाण्डे वैदेहो जनको याज्ञवल्क्यश्च २० परस्परमग्निहोत्रे निमित्ते समूदतुः संवादं कृतवन्तौ । तत्र जनकस्याग्निहोत्रविषयं विज्ञानं विशदमुपलभ्य परितुष्टो याज्ञवल्क्यस्तस्मै जनकाय किल वरं ददौ वर वृणीष्वेत्युक्तवानित्यर्थः । स जनको ह किल कामप्रश्नमेवेच्छाप्रश्नमेव वव्रे वरं वृतवान् । तं च वरं याज्ञवल्क्यो हास्मै राज्ञे ददौ दत्तवान् । एवं प्राप्तवरो राजा किं कृतवानित्याह—तं ह सम्राडेवेति । पूर्व इत्यत्र लिङ्गमविवक्षितम् । न वदिष्य इत्यागतं तूष्णीभूतं तं सम्राडेव पूर्वः पूर्वं पप्रच्छ लब्ध- वरत्वात्पृष्टवानिति भावः ॥१॥ २५

किं पप्रच्छेत्यपेक्षायां प्रत्यगात्मचैतन्यस्वरूपं जिज्ञासमानः कार्यकरणसङ्घातात्मा पुरुषो ज्योतिर्निवर्त्यमासन- गमनादिकार्यं स्वाभिन्नेनैव ज्योतिषाऽनुगृहीतं निर्वर्तयति किं वा स्वव्यतिरिक्तेनेति संदिहानः पृच्छति—याज्ञवल्क्य किंज्योतिरयं पुरुष इतीति । हे याज्ञवल्क्यायं पुरुषः कार्यकरणसङ्घातरूपः शिर पाण्यादिमान् पिण्डः किंज्योतिः किं ज्योतिरस्य विद्यते स किं ज्योतिर्येन ज्योतिषाऽनुगृहीतोऽयमासनादिव्यवहारं करोतीति पृच्छत इत्यर्थः । तत्किं देहादि तदतिरिक्तं वेति प्रष्टुरभिप्रायज्ञो मुनिरयं हि राजा व्यतिरिक्तं ज्योतिरेव पृच्छतीति तथाविधमेवेतरसर्व- ३० ज्योतीरहितस्वप्नाद्यवस्थायां विविक्ततया बोधयितुकामो जागरिते तावद्दृष्टान्तभूतान्यादित्यादीनि वागन्तानि ज्योतींष्युपन्यस्यतीति दर्शयति—आदित्य ज्योतिः सम्राडिति होवाचेत्यादिना । आदित्यो ज्योतिर्यस्यासावादित्य- ज्योतिः पुरुष इति होवाचेत्यर्थः । तदेवोपपादयति—आदित्येनैवायं ज्योतिषाऽऽस्त इति । आदित्येनैव चक्षुषोऽनुग्राहकेण देहकरणाद्यतिरिक्तेनैवायं प्राकृतः पुरुष आस्त उपविशति पल्ययते पर्येति गच्छतीति यावत् "उपसर्गस्यायतौ" ( पासू० ८।२।१९ ) इति अयतिपरस्य लत्वम् । गत्वा क्षेत्रमरण्यं वा तत्र कर्म कुरुते पश्चाद्विपर्येति भूयो निवर्तत ३५ इत्यर्थः । सङ्घातादिव्यतिरिक्तमेव ज्योतिरासनादिकारणमित्युक्तं राजाऽङ्गीकरोति एवमेवैतद्याज्ञवल्क्येति ॥२॥

यद्यप्येकेनैवादित्यपर्यायेण व्याप्तिग्रहसम्भवस्तथापि बहवो दृष्टान्ता व्याप्तिं द्रढयन्तीति मत्वा प्रश्नप्रति- वचनाभ्या ज्योति पर्यायान्तराणि दर्शयति—"अस्तमित आदित्य" इत्यादिकण्डिकाचतुष्टयेन "कतम आत्मे"त्यतः

**अस्तमित आदित्ये याज्ञवल्क्य । चन्द्रमस्यस्तमिते किंज्योति-रेवायं पुरुष इत्यग्निर्ज्योतिः सम्राडिति होवाचाग्निनैवायं ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते विपर्येतीत्येवमेवैतद्याज्ञवल्क्य ॥४॥**

**अस्तमित आदित्ये याज्ञवल्क्य । चन्द्रमस्यस्तमिते शान्तेऽग्नौ किंज्योति-रेवायं पुरुष इति वाग्ज्योतिः सम्राडिति होवाच वाचैवायं ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते विपर्येतीति तस्माद्वै सम्राडपि यत्र स्वः पाणिर्न विनिर्ज्ञायतेऽथ यत्र वागुच्चरत्युपैव तत्र न्येतीत्येवमेवैतद्याज्ञवल्क्य ॥५॥**

**अस्तमित आदित्ये याज्ञवल्क्य । चन्द्रमस्यस्तमिते शान्तेऽग्नौ शान्तायां वाचि किंज्योतिरेवायं पुरुष इत्यात्मज्योतिः सम्राडिति होवाचात्मनैवायं ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते विपर्येतीति ॥६॥**

**कतम आत्मेति । योऽयं विज्ञानमयः पुरुषः प्राणेषु हृद्यन्तर्ज्योतिः स समानः सन्नुभौ लोकौ सञ्चरति ध्यायतीव लेलायतीव सधीः स्वप्नो भूत्वेमं लोकमतिक्रामति ॥७॥**

प्राक्तनेन । पदविशेषोऽत्र व्याख्यायते । किंज्योतिरेवायं पुरुष इति प्रश्नं दृढीकर्तुं सर्वत्रैवकारः चन्द्रो ज्योतिरस्य स चन्द्रज्योतिः ॥३॥

एवमग्निर्ज्योतिरस्य सोऽग्निज्योतिरित्येवं सर्वत्र बोद्धव्यम् । अग्निनैवायमित्येतत्प्रभावन्मण्यादीनामप्युप-लक्षणम् । ततोऽपि पुरुषप्रवृत्तिदर्शनादित्यर्थः ॥४॥

वाचैवायमित्यत्र वाक्पदेन शब्दः परिगृह्यते नेन्द्रियं तस्मिन् शब्दाख्ये विषये श्रोत्रसम्बद्धेऽप्यासनादिज्योतिः कार्यदर्शनात् । ननु शब्दस्याऽऽदित्यादिवज्ज्योतिष्ट्वस्याप्रसिद्धेः कथं तस्य ज्योतिष्ट्वेनासनादिकार्यहेतुतेति चेत् । उच्यते । प्रथमं तावच्छ्रोत्रसम्बद्धे शब्दाख्ये विषये श्रोत्रेन्द्रियं दीप्यते, दीप्ते च तस्मिन् मनसि विवेक उपजायते । तेन च मनसा पुरुषो बाह्यां चेष्टां प्रतिपद्यते । "मनसा ह्येव पश्यति मनसा शृणोती"ति श्रुतेरित्येतत्सर्वमभिप्रेत्याह— **तस्माद्वै सम्राडपि यत्र स्वः पाणिरिति ।** यस्माच्छब्दाख्यया वाचा ज्योतिषाऽयं व्यवहरति तस्मात्प्रसिद्धं वाचो ज्योतिष्ट्वम् । कथं ? यत्र यस्मिन् काले प्रावृड्रात्र्यादौ स्वः स्वकीयोऽपि पाणिर्हस्तो न विनिर्ज्ञायते विस्पष्टं न दृश्यतेऽथ तस्मिन् काले बाह्यज्योतिषोऽभावेन सर्वचेष्टानिरोधे प्राप्ते यत्र यस्मिन् प्रदेशे वागुच्चरति- कश्चित् श्वा भवति गर्दभो वा रौति तेन शब्देन ज्योतिषा तत्र तस्मिन् प्रदेशे उपन्येत्युपगच्छत्येव सन्निहितो भवति मार्गं गृहं वा प्रतिपद्यत इति यावत् । एतद्वाग्ज्योतिर्ग्रहणं गन्धादेरप्युपलक्षणपरं तेषामपि शब्दवत्प्रवृत्तिहेतुत्वादिति भावः ॥५॥

एतावता यो व्यवहारः स व्यवहर्तुर्देहेन्द्रियाद्यतिरिक्तज्योतिःसाध्यो यथा आदित्यादिसाध्यो जाग्रद्व्यवहार इति व्याप्तिः सिद्धा । एवं सिद्धायां व्याप्तौ स्वप्नसुषुप्त्योरपि बन्धुसंगमवियोगदेशान्तरगमनादेरुत्थानस्य च ज्योतिः-कार्यस्य दर्शनाद्भवितव्यं तत्राप्यतिरिक्तेन केनचिज्ज्योतिषेत्यनुमानतो ज्योतिर्मात्रे सिद्धे उपन्यस्ताना ज्योतिषा तत्र योग्यानुपलब्धिबाधितत्वात् केन ज्योतिषा तदाऽसौ व्यवहारं करोतीति तद्विशेषं राजा पृच्छतीति दर्शयति—**अस्तमित आदित्य इत्यादिना ।** उत्तरमाह—**आत्मज्योतिः सम्राडिति होवाचेति ।** आत्मैव ज्योतिरस्य स तथा । आत्मेति कार्यकरणातिरिक्तं तदवभासकमपराधीनप्रकाशं ज्योतिरभिधीयते । तस्यात्मनो ज्योतिषोऽर्थादन्तःस्थस्य सूर्यादि-विलक्षणस्य कार्येणान्वयमाह—**आत्मनैवायं ज्योतिषाऽऽस्त इत्यादिना ॥६॥**

यद्यपि संघातानुग्राहकमात्मज्योतिः संघातातिरिक्तं तद्विजातीयं चेति न्यायतो निर्णीतं तथापि सूक्ष्मन्यायस्य दुर्विज्ञेयत्वादनुग्राहकादित्यादेरनुग्राह्यसंघातसमानजातीयत्वदर्शनाच्च बुद्ध्यादिव्यतिरिक्तत्वनिश्चयाभावात्सन्दिहानो राजा पृच्छति—**कतम आत्मेतीति ।** कोऽसावात्मा किंस्वरूप इति प्रश्नार्थः । बुद्ध्यवभासकः स्वयमनवभास्यमान आत्मेति प्रतिवचनमाह—**योऽयं विज्ञानमयः पुरुषः प्राणेष्विति ।** हे राजन् य आत्मा त्वया पृष्टः सोऽयं विज्ञानमयः विज्ञायतेऽनेनेति व्युत्पत्तेः विज्ञानं बुद्धिस्तन्मयस्तत्प्रायो विज्ञानमयः पुरुषो नित्यं पूर्णं इत्यर्थः । "पुरुष एवेदं सर्वमि"ति

**स वा अयं पुरुषो जायमानः। शरीरमभिसम्पद्यमानः पाप्मभिः सꣳसृज्यते स उत्क्रामन्म्रियमाणः पाप्मनो विजहाति मृत्यो रूपाणि ॥८॥**

**तस्य वा एतस्य पुरुषस्य। द्वे एव स्थाने भवत इदं च परलोकस्थानं च सन्ध्यं तृतीयꣳ स्वप्नस्थानं तस्मिन्सन्ध्ये स्थाने तिष्ठन्नुभे स्थाने पश्यतीदं च परलोकस्थानं च ॥९॥**

श्रुतेः। प्राणेष्विति सामीप्यलक्षणा सप्तमी विज्ञानमयस्य तद्व्यतिरेकप्रदर्शनार्था। यो हि येषु भवति स तद्व्यतिरिक्त एव भवति। अतः प्राणेष्विति प्राणेभ्यो व्यतिरिक्त इत्यर्थः। एवं प्राणसमीपस्थो विज्ञानमय इत्युक्ते प्राणसाजात्यं तस्य स्यादतो विशिनष्टि—हृद्यन्तर्ज्योतिरिति। हृच्छब्दो मांसपिण्डविषयस्तात्स्थ्यादत्र हृच्छब्देन लक्षणया बुद्धिरुच्यते। हृदि बुद्धावन्तर्वर्तमानं ज्योतिरात्मा आत्मनैवायं ज्योतिषास्त इत्यादौ तस्यैव ज्योतिष्ट्वेन प्रकृतत्वात्। पूर्णो बुद्धिदर्पणाभिव्यक्तः सर्वावभासकः शुभ्रो निरतिशयस्वप्रकाशस्वभाव आत्मेति वाक्यार्थः। एवमात्मनो नित्यमुक्तस्याविद्यया बुद्ध्यादितादात्म्याध्यासादेव संसारित्वमिति दर्शयितुं सूक्ष्मदेहादतिरिक्ततया आत्मनः शुद्धत्वदर्शनाय वा स्वप्नं प्रक्रमते—**स समानः सन्निति।** यो हृद्यन्तर्ज्योतिः पुरुष आत्मा स च समानः सन् हृच्छब्दवाच्याया बुद्धेः प्रकृतत्वात्सन्निहितत्वाच्च तया समानः सदृशोऽन्योन्यधर्माध्यासेन तप्तायःपिण्डवत्तादात्म्यमापन्नः सन्नुभौ लोकौ प्रतिपन्नप्रतिपत्तव्याविहलोकपरलोकावनु क्रमेणोपात्तदेहेन्द्रियसंघातं त्यजन्नन्यं चोपाददत्सञ्चरति परिभ्रमति। आत्मा सञ्चरतीति भ्रमो न तस्य स्वतः सञ्चरणमित्यर्थः। एतदेव प्रत्यक्षेणाभिनीय दर्शयति—**ध्यायतीव लेलायतीवेति।** यतो ध्यानव्यापारवतीं बुद्धिं तत्स्थेन चित्स्वभावज्योतीरूपेणावभासयंस्तत्सदृश आत्मा ध्यायतीव ध्यानं करोतीव यथा चतुष्कोणं लोहपिण्डमवभासकत्वेनानुगतो वह्निश्चतुष्कोण इव प्रतीयते तद्वत्। तथा लेलायतीव चलतीव। बुद्ध्यादिषु करणेषु प्राणादिषु वायुषु च चलत्सु तदवभासकतया तत्समान आत्मापि चलस्वभाव इति प्रतीयते। यथा चलन्त्यां नावि तत्स्थेन तीरस्था वृक्षाश्चलन्तीवेति प्रतीयन्ते तद्वत्। न तु ज्योतीरूपस्यात्मनः परमार्थतो ध्यानं चलनं वेत्यर्थः। कुतो हेतोरेतदवगम्यत इत्याह—**सधीः स्वप्न इति।** प्रकृत आत्मा यस्मात्सधीः बुध्यैक्यमापन्नः स्वप्नो भूत्वा स्वप्नाकारपरिणतधीवृत्त्यवभासकत्वेन तदाकारो भूत्वेमं लोकं जागरितलक्षणं लौकिकशास्त्रीयव्यवहारास्पदकार्यकरणसंघातमतिक्रामति अतीत्य क्रामति तदभिमानं त्यजतीत्यर्थः ॥७॥

यथैकस्मिन्देहे स्वप्नजागरिते सञ्चरत आत्मनो देहाद्यतिरेक उक्त एवं देहभेदेऽपि उच्यत इति दर्शयति—**स वा अयं पुरुषो जायमान इति।** सोऽयं प्रकृतः पुरुषो जायमानः पाप्मभिः संसृज्यतः इत्यन्वयः। नात्मनो जायमानत्वं घटादिवत्स्वरूपेण निष्पद्यत्वमानत्वं किं तु शरीरं देहेन्द्रियादिसंघातमभिसपद्यमानस्तत्रात्मभावं प्रतिपद्यमान इत्यर्थः। जायमाने शरीर आत्माभिमान एव जायते इत्युक्तं भवति। वैशब्दोऽवधारणार्थोऽभिसंपद्यमान एवेत्यत्र संबध्यते। पाप्मशब्दो धर्मस्याप्युपलक्षकः पाप्मशब्देन देहसंबन्धहेतुमात्रं विवक्षितं "न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ती"ति श्रुत्यन्तरात्। तथा च पाप्मभिर्धर्माधर्माश्रयैः कार्यकरणैः संसृज्यते संयुज्यते शरीरस्यात्मत्वेनाभिमन्यमानः पुरुष इत्यर्थः। स एव पुनर्देहाद्यारम्भकीभूतकर्मक्षये सति म्रियमाणः सन्नुत्क्रामन् शरीरान्तरं प्रत्यूर्ध्वं क्रामंस्तानेव संसृष्टान् पाप्मनः कार्यकरणलक्षणान् विजहाति परित्यजति, तत्राभिमानत्यागमात्रेणैव तैर्वियुज्यत इत्यर्थः। म्रियमाण इत्यस्य व्याख्या उत्क्रामन्निति। तथा मृत्यो रूपाणि च विजहातीत्यन्वयः। मृत्युरज्ञानं तस्य रूपाण्यहङ्कारादिकार्यकरणानि रूप्यन्ते प्रतीयन्ते न प्रमीयन्त इति रूपाणि। अतः संचरणादिकं नात्मनः स्वाभाविकं वह्नेरिवौष्ण्यस्वभावः स्वाभाविके सति परित्यागायोगादिति ज्ञेयम् ॥८॥

एवमुत्क्रामन् म्रियमाणः शरीरमभिसंपद्यमान इत्यागमवगात्परलोकास्तित्वे सिद्धेऽपि प्रत्यक्षेण न तत्सिद्धं परलोकविषयं च प्रत्यक्षं नास्त्यतो नास्ति परलोक इत्याशङ्क्यास्ति परलोकः प्रत्यक्षसिद्ध इति प्रतिपादनाय "तस्मिन् सन्ध्ये स्थाने" इत्यारभ्य "स यत्राय प्रस्वपिती"त्यतः प्राक्तनो ग्रन्थः प्रवर्तिष्यते। प्रथमं तदुपोद्घातत्वेन स्थानभेदं दर्शयति—**तस्य वा एतस्य पुरुषस्य द्वे एव स्थाने भवत इति।** वै प्रसिद्धौ। तस्यैतस्य प्रकृतस्य पुरुषस्य द्वे एव स्थाने भवतः न तृतीयं चतुर्थं वा स्थानमस्तीति यावत्। के ते द्वे स्थाने ? इदं च यद्वर्तमानं प्रतिपन्नजन्मशरीरेन्द्रियविषयसम्बन्धिसुखादिवेदनाविशिष्टं प्रत्यक्षतोऽनुभूयमानं परलोक एव स्थानं परलोकस्थानं तदेतच्छरीरादिवियोगोत्तर कालानुभाव्यं द्वितीयं देहद्वयव्यतिरिक्तस्वप्नदेहस्यापि विद्यमानत्वात् कथं द्वे एवेत्यवधार्यते, इत्यस्योत्तरं सन्ध्यं

**अथ यथाक्रमोऽयं परलोकस्थाने भवति । तमाक्रममाक्रम्योभयान्पाप्मन आनन्दाँश्च पश्यति स यत्रायं प्रस्वपितीत्यस्य लोकस्य सर्वावतो मात्रामपादाय स्वयं विहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपित्यत्रायं पुरुषः स्वयंज्योतिर्भवति ॥१०॥**

**न तत्र रथा न रथयोगा न पन्थानो भवन्ति । अथ रथान्रथयोगान्पथः सृजते न तत्रानन्दा मुदः प्रमुदो भवन्त्यथानन्दान्मुदः प्रमुदः सृजते न तत्र वेशान्ताः स्रवन्त्यः पुष्करिण्यो भवन्त्यथ वेशान्ताः स्रवन्तीः पुष्करिणीः सृजते स हि कर्ता ॥११॥**

तृतीयमिति । यत्तृतीयं स्वप्नस्थानं तत्सन्ध्यं इहलोकपरलोकयोः सन्धौ भवं सन्ध्यं न स्थानान्तरम् । यद्वा स्वप्नस्तृतीयमेव स्थानं त्रयाणां पूरणं तृतीयमिति पूरणप्रत्ययश्रवणात् । इदानी यदर्थमुपोद्घातः कृतस्तद्दर्शयति—**तस्मिन्सन्ध्ये स्थाने तिष्ठन्नेते उभे स्थान इति ।** सन्ध्ये स्थाने स्वप्नभूमौ तिष्ठन् वर्तमान सन् इदं च परलोकस्थानं चेत्युभे स्थाने पश्यति । एतदुक्तं भवति । आद्ये वयसि यं स्वप्नं पश्यति तं पूर्वजन्मानुभूतविषयमेव तद्वासनावासितः सन् पश्यति तदानीं बालस्यैहिकपुत्राद्यनुभवाभावात् । मध्यमे तु वयसीन्द्रियाणा स्थूलार्थग्रहणसामर्थ्यादिहजन्मन्यनुभूतविषयकमेव स्वप्नं प्रायः पश्यति । अन्त्ये वयसि पुनः परलोकयियासुर्विद्याकर्मादिसभृतो भाविजन्मविषयकं स्वप्नं प्रायः पश्यति तस्मादन्ते वयस्यादौ चेह जन्मन्यसंभाव्यमानस्य दर्शनं परलोकसद्भावे प्रत्यक्षं प्रमाणमिति ॥९॥

ननु स्वप्नस्थानं गत आत्मा किमाश्रितः सन्केन विधिना परलोकं पश्यतीत्यपेक्षायामाह—**अथ यथाक्रमोऽयं परलोकस्थाने भवतीति ।** अथेति वाक्योपक्रमार्थः । आक्रामत्यनेनेत्याक्राम आश्रयोऽवष्टम्भो विद्याकर्मपूर्वप्रज्ञालक्षणः यादृश आक्रमो यस्य सोऽयं यथाक्रमोऽयं पुरुषः परलोकस्थाने प्रतिपत्तव्ये निमित्ते यथाक्रमो भवति यादृशेन परलोकप्रतिपत्तिसाधनेन विद्याकर्मपूर्वप्रज्ञालक्षणेन युक्तो भवति तमाक्रमं परलोकस्थानायोन्मुखीभूतं बीजभूतमाक्रम्यावष्टभ्योभयान्पाप्मनः पापफलानि दुःखानि आनन्दान्धर्मफलभूतान् सुखविशेषाश्च पश्यतीत्यर्थ । पूर्वमादित्यादिज्योतिरभावेऽपि आसनादिज्योतिःकार्यदर्शनादयं पुमानात्मज्योतिषैव व्यवहरतीत्युक्तम् । इदानीमादित्यादिज्योतिर्भिरसंस्पृष्टश्चिदात्मा यथा साक्षादेव प्रत्यग्भावेन स्वप्रकाश इत्यवगन्तुं शक्यते तथा प्रदर्शनायाह—**स यत्रायं प्रस्वपितीति ।** स प्रकृत आत्मा यत्र यस्मिन्काले प्रस्वपिति प्रकर्षेण स्वय स्वप्नमनुभवतीत्यर्थः । स च सन्ध्याख्यं स्वप्नं प्रतिपद्यमानः किमाश्रयः केन विधिना प्रतिपद्यत इत्याकाक्षायामाह—**अस्य लोकस्य सर्वावत इति ।** अस्य दृष्टस्य लोकस्य जागरितलक्षणस्य स्थूलदेहस्य कथंभूतस्य सर्वावतः सर्वमवतीति सर्वावान् तस्य । सर्वावत्वं चास्य 'अथो अयं वा आत्मा सर्वेषा भूताना लोक' इत्यादौ व्याख्यातम् । यद्वा सर्वा भूतभौतिकमात्रा अध्यात्मादिविभागयुक्ताः संसर्गकारणभूता अस्य विद्यन्त इति सर्ववान्, सर्ववानेव सर्वावान् दैर्घ्यं छान्दसम् । तस्य सर्वावतो मात्रामेकदेशमवयवमपादायापच्छिद्य गृहीत्वा जाग्रद्दृष्टवासनावासितः सन्नित्यर्थः । इदानी केन विधिना स्वप्नं प्रपद्यत इत्यत आह—**स्वयं विहत्येत्यादिना ।** स्वप्नं प्रतिपद्यमान आत्मा स्वय स्वेनैव स्वरूपेण न तु करणतद्देवतादिना विहत्य देहं पातयित्वा निश्चेष्टं कृत्वा तथा स्वयमेव स्वकर्मानुसारिस्वप्नदेहं प्रातिभासिकं निर्माय निष्पाद्य स्वेन भासेतीत्थम्भावे तृतीया । स्वेनात्मीयेन मात्रोपादानलक्षणेन भासा दीप्त्या सर्ववासनात्मकेनान्तःकरणवृत्तिप्रकाशरूपेणेति यावत् । स्वेन ज्योतिषेति कर्तरि तृतीया । स्वेनात्मज्योतिषाऽलुप्तदृक्स्वभावेन निर्मितं वस्तु विषयीकुर्वन् प्रस्वपीतीति प्रस्वापप्रकार उक्त इत्यर्थः । फलितमाह—**अत्रायं पुरुष इति ।** अत्रैतस्यां स्वापावस्थायामयं पुरुष आत्मा स्वयमेव ज्योतिर्भवति आदित्यादेस्तदानीमभावादिन्द्रियाणा चोपसंहृतत्वान्मनसश्च विषयाकारेणैवोपक्षयात् परिशेषादात्मा स्वयंज्योतिरित्यर्थः ॥१०॥

ननु स्वप्नेऽपि सर्वस्यादित्यादेर्दृश्यमानत्वात्कथं 'परिशेषात् स्वयं ज्योतिष्ट्वसिद्धिरित्याशङ्कायां तस्य सर्वस्य वासनामात्रनिर्मितत्वात्तत्रात्मा विविक्तः स्वयं ज्योतिरिति निश्चेतुं स्वप्ने बाह्यरथाद्यभाव तावदाह—**न तत्र रथा न रथयोगा न पन्थानो भवन्तीति ।** तत्र स्वप्ने रथाः प्रसिद्धाः । रथैर्युज्यन्त इति रथयोगा अश्वादयः पन्थानो रथमार्गाः एते प्रत्येकं न भवतीति तत्र तत्र सम्बध्यन्ते न सन्त्येवेत्यर्थः । रथाद्यभावोक्तिस्तदनुग्राहकेन्द्रियालोकादेरप्युपलक्षणार्था । ननु स्वप्ने रथादीनामभावश्चेत्तर्हि कथ भासन्त इत्याशङ्क्य रथादिसाधनाना वृक्षादीनामभावेऽपि वासनामात्रनिर्मिता

**तदप्येते श्लोकाः । स्वप्नेन शारीरमभिप्रहत्यासुप्तः सुप्तानभिचाकशीति । शुक्रमादाय पुनरैति स्थानँ हिरण्मयः पौरुष एकहँसः ॥१२॥**

**प्राणेन रक्षन्नपरं कुलायं बहिष्कुलायादमृतश्चरित्वा ।**
**स ईयतेऽमृतो यत्र कामँ हिरण्मयः पौरुष एकहँसः ॥१३॥**

**स्वप्नान्त उच्चावचमीयमानो रूपाणि देवः कुरुते बहूनि ।** ५
**उतेव स्त्रीभिः सह मोदमानो जक्षदुतेवापि भयानि पश्यन् ॥१४॥**

**आराममस्य पश्यन्ति । न तं कश्चन पश्यतीति तं नाऽऽयतं बोधयेदित्याहुर्दुर्भिषज्यँ हास्मै भवति यमेष न प्रतिपद्यते ॥१५॥**

भासन्ते इत्याह—अथ रथान्रथयोगान्पथः सृजत इति । अथापि सर्वानेव रथादीन् वासनात्मकान् सृजते । एतच्च सर्वावतो मात्रामित्यादिनोक्तस्य प्रपञ्च इत्यर्थः । एवमन्यस्यापि स्वप्ने दृश्यमानस्य बाह्यवस्त्वभावप्रदर्शनपुरःसरं १० वासनात्मत्वं दर्शयति—न तत्रानन्दा मुदः प्रमुद इति । तत्र स्वप्ने आनन्दाः सुखसामान्यानि । मुदः पुत्रादिसंबन्धनिमित्ता हर्षाः । मुद एव प्रकर्षोपेताः प्रमुदः वेशान्ताः क्षुद्रसरांसि । स्रवन्त्यो नद्यः । पुष्करिण्यस्तडागाः । आनन्दादयो वेशान्ताश्च स्वप्ने न भवन्तीत्यथ तु तत्सर्वं सृजत इति पूर्ववद्व्याख्या । इदं त्वात्मनैवायं ज्योतिषाऽऽस्त इत्यादेः प्रपञ्चः । कथमेतत्सर्वमात्मा सृजतीत्याशङ्क्याह—स हि कर्तेति । हि यस्मात्स आत्मा कर्ता तस्मात्सृजतीति योजना । न ह्यत्र कर्तृत्वं वास्तवमात्मनोऽभिप्रेतं किन्तु परिणममानवासनासाक्षितामात्रमेवेत्यर्थः ॥११॥ १५

इदानीमुक्तेऽर्थे मन्त्राणामपि सम्मतिरस्तीत्याह—तदप्येते श्लोका इति । तत्तस्मिन्नुक्तेऽर्थे स्वयंज्योतिष्ट्वादिलक्षणे एते वक्ष्यमाणाः श्लोकाः मन्त्राः सन्तीति शेषः । तत्र स्वप्नप्रवेशतत्साक्षिकत्वप्रकाशकं मन्त्रार्धं पठति—स्वप्नेन शारीरमिति । स आत्मा स्वप्नेन स्वप्नभावेन वासनामात्रोपग्रहेण शारीरमिति स्वार्थे वृद्धिः । शरीरमभिप्रहत्य निश्चेष्टमापाद्यालुप्तदृक्शक्तिस्वभाव्यात् स्वयमसुप्तः सन् सुप्तान्वासनाकारेणोद्भूतान् अन्तःकरणवृत्त्याश्रयान् बाह्याध्यात्मिकान् सर्वानेव भावान् स्वेन रूपेण प्रत्यस्तमितानभिचाकशीति । अलुप्तया आत्मदृष्ट्याऽभितः सर्वात्मना पश्यत्यवभासय- २० तीत्यर्थः । स्वाप्नभोगक्षये पुनर्जागरितमेतीति द्वितीयार्धेन दर्शयति—शुक्रमादायेति । शुक्रं शुद्धं ज्योतिष्मदिन्द्रियादिमात्रारूपमादाय गृहीत्वा पुनः स्वप्नहेतुकर्मोपरमणानन्तरं जाग्रद्भोगहेतुकर्मणा जागरितं स्थानमैति आ एति आगच्छति । हिरण्मयश्चैतन्यज्योतिः स्वभावः पौरुषः स्वार्थे वृद्धिः । एकहंसः एकश्चासौ हंसश्चेत्येकहंसः हन हिंसागत्योरित्यस्य रूपं हन्ति । एक एव जाग्रत्स्वप्नाविहलोकपरलोकौ हन्ति गच्छति हिनस्तीति वा एकहंस इत्यर्थः ॥१२॥

पुनरपि स्वप्नगत विशेषं वक्तुं मन्त्रान्तरं पठति—प्राणेन रक्षन्निति । प्राणेन पञ्चवृत्तिकेनापरं निकृष्टमनेका- २५ शुचिसघातत्वादत्यन्तबीभत्सं कुलायं कौ पृथिव्या लीयत इति कुलायं नीडं शरीरमिति यावत् । रक्षन् पालयन् अन्यथा मृतभ्रान्तिः स्यात्सा मा भूदिति रक्षन् स्वयं चामृतोऽसङ्गः सन् तस्मात्कुलायाद्बहिश्चरित्वा । यद्यपि शरीरस्थ एव स्वप्नं पश्यति तथापि तस्यात्मनो देहस्याकाशस्येव तत्सम्बन्धाभावाद्बहिश्चरणमिव कृत्वेत्युच्यते । बुद्धिसंचरणात्तदनुकुर्वन् संचरणमिव कृत्वा यत्र कामं यत्र यत्र विषयेषूद्भूतवृत्तिः कामो भवति तं काममममृतोऽमरणधर्मा सन्नीयते गच्छति प्राप्नोतीत्यर्थः ॥१३॥ ३०

पुनरपि स्वप्नस्य विशेषान्तरमाह—स्वप्नान्त इति । स्वप्नान्ते स्वप्नस्थाने उच्चं देवादिभावमवचं तिर्यगादिभाव च । उच्च चावचं चेत्युच्चावचमिति समाहारद्वन्द्वः स्वकर्मोद्भासितं वासनामयमुत्कृष्टं निकृष्टं च स्वेनैवात्मना स्वयमीयमानो गम्यमानः प्राप्नुवन् देवो द्योतनात्मको रूपाणि वासनामयानि शरीरजातानि बहून्यसंख्येयानि कुरुते । तत्सत्तास्फूर्तिप्रदत्वेनानुवर्तते । उत अपि स्त्रीभिः सह मोदमान इव क्रीडमान इव उत अपि जक्षदिव वयस्यादिभिः सह हसन्निवापि भयानि बिभेत्येभ्य इति भयानि सिंहव्याघ्रादीनि पश्यन्निव भवतीत्यर्थः । तथा चेवशब्दप्रयोगा- ३५ द्वास्तवहेत्वभावाच्च स्वप्ने सुखभयाद्यनुभवोऽविद्यामयो मृषेति भावः ॥१४॥

एव स्वप्ने निरूपिते किं पर्यवसितमिति अपेक्षायां तत्रात्मा विविक्तः स्वयंज्योतिः पर्यवसित इति प्रदर्शनाय मन्त्रशेषं पठति—आराममस्य पश्यन्ति । अस्यात्मनः आराम क्रीडनं ग्रामनगरयोपिदन्नाद्ययानमार्गादिलक्षणं

**अथो खल्वाहुः। जागरितदेश एवास्यैष यानि ह्येव जाग्रत्पश्यति तानि सुप्त इत्यत्रायं पुरुषः स्वयंज्योतिर्भवतीत्येवमेवैतद्याज्ञवल्क्य सोऽहं भगवते सहस्रं ददाम्यत ऊर्ध्वं विमोक्षायैव ब्रूहीति ॥१६॥**

**स वा एष एतस्मिन्स्वप्नान्ते। रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं**

५ वासनानिर्मितमेव पश्यन्ति सर्वे जना इति शेषः। नतु तमात्मान तत्र विविक्तदृग्रूपत्वेनावभासकं कश्चन कोऽपि न पश्यति। तस्मादात्मा स्वप्नेऽदृश्य एव सन्नवभासयति इति सिद्धमात्मनः स्वयंज्योतिष्ट्वमित्यर्थः। इतिशब्द उदाहरण-समाप्त्यर्थः। अहो भाग्यहीनता लोकस्य यच्छक्यदर्शनमप्यहरहर्विविक्ततयाऽनुभूयमानमप्यात्मानमयमहमस्मीति न पश्यतीति लोकं प्रति शिरस्ताडमनुक्रोशति मन्त्रात्मिकेयं श्रुतिरित्यभिप्रायः। किं च स्वप्नं गत आत्मा विविक्त एवेत्यत्र लोकप्रसिद्धिरप्यस्तीत्याह—**तं नायतमिति**। तमात्मानं सुप्तमायतं भृशं न बोधयेदित्याहुश्चिकित्सका जनाः लोके

१० कथयन्तीत्यर्थः। जाग्रद्देहगतेन्द्रियद्वारलक्षणाः प्रबोधनाडीः परित्यज्यात्मा स्वप्ननाडीः प्रविष्टो विविक्त एव स्वप्ने वर्तत इति लोकः प्रायः पश्यतीति ज्ञायते। अत एव नाडीव्यत्यासगमनशङ्कयैव सुप्तं न बोधयेद्भृशमित्यनुशास्ति लौकिक इत्यभिप्रायः। भवत्वेवं स्वप्ने विविक्तस्तथापि भृशमप्रबोधने को हेतुरित्यत आह—**दुर्भिषज्यं हास्मा इति**। यस्माद्देशाच्छुक्रमादायापसृतस्तं यमिन्द्रियदेशमेष आत्मा पुनर्न प्रतिपद्यते सहसा प्रबोधितः कदाचिद्व्यत्यासेनेन्द्रिय-मात्राः प्रवेशयति। ततश्चाऽऽन्ध्यबाधिर्यादिदोषप्राप्तावस्मै देहाय दुःस्फुटं दुर्भिषज्यं दुःखेन भिषक्कर्म भवति कष्टेन

१५ चिकित्सनीयो देहो भवतीत्यर्थः ॥१५॥

इदानीमन्यदीयं मतं स्वयं ज्योतिष्ट्वविघातकं दुष्टमित्यस्मात् बोधयितुं स्वमतपरिशुद्धये च तदुपन्यसति—**अथो खल्वाहुर्जागरितदेश एवास्यैष इत्यादिना**। अथो अपि खलु अन्ये आहुः किं ? एषः प्रसिद्धो जागरितदेश एवास्य विषयो न तु सन्ध्यमिदं स्थानान्तरमिहलोकपरलोकाभ्या व्यतिरिक्तमित्यर्थः। जागरितदेशस्यैव स्वप्नविषयत्वे हेतुमप्याचक्षत इत्याह—**यानि ह्येव जाग्रदिति**। हि यस्मात् हस्त्यादीनि पदार्थजातानि यानि जाग्रज्जागरिते देशे

२० पश्यति लौकिकस्तान्येव सुप्तोऽपि पश्यतीत्यर्थः। इतिशब्दो मतान्तरोपन्याससमाप्त्यर्थः। ननु कथमेतावता स्वयं-ज्योतिष्ट्वविघात इति चेच्छृणु। यदि जागरितदेश एवायं स्वप्नो जातस्तदा जागरित इव स्वप्नेऽपि कार्यकरणसंघात-मिश्रितत्वेन न ततो व्यतिरिक्तं स्वयंज्योतिः सिध्येदिति स्वयंज्योतिष्ट्वं बाधितं स्यादिति। अयं च पूर्वः पक्षो "ऽग्निहोत्रं जुहोति" "यवागूं पचती"ति न्यायेनार्थक्रमपरिग्रहेण स यत्रायं प्रस्वपितीत्यतः प्रागेवावगन्तव्यः पूर्वपक्षस्य प्राथम्य-मित्यस्यैव क्रमस्य न्याय्यत्वात् सन्ध्यस्थानस्य तृतीयत्वाक्षेपकत्वेन तत्रोचितत्वाच्चेति द्रष्टव्यम्। नैतत्सारं, स

२५ यत्तत्रेत्यादिना युक्तितः, प्रमाणेन स्वप्नस्य मृषात्वनिरूपणं कृतमित्येतत्सूचयन्ती श्रुतिरुत्तरमाह—**अत्रायं पुरुषः स्वयंज्योतिर्भवतीति**। अक्षरार्थः पूर्ववत्। एवं मुनिना स्वयंज्योतिरात्मेति सपरिकरमुपसंहारे कृते मुनिवचनं राजाऽङ्गीकरोति—**एवमेवैतद्याज्ञवल्क्येति**। हे याज्ञवल्क्य एतद्भगवतोक्तं स्वप्नादावात्मनः स्वयंज्योतिष्ट्वमेवमेव। ततः किं कृतवान्राजेत्याह—**सोऽहं भगवते सहस्रं ददामीति**। यस्त्वयैवं बोधितः सोऽहं जनको भगवते गुरवे तुभ्यं विद्यानिष्क्रयार्थं सहस्रं ददामि अर्थाद्गवामिति संबध्यत इत्यर्थः। कतम आत्मेति पृष्टे योऽयं विज्ञानमय इत्यादिना

३० देहेन्द्रियमनोबुद्धिप्राणाहंकृतिविलक्षण स्वयंज्योतिरात्मेति प्रतिवचनेन निर्णीय मुनिरुपरतः। राज्ञा तु कामप्रश्नवर-प्राप्त्यवष्टम्भेन कामकर्मादिसकल-संसारधर्मातीतस्वरूपस्याङ्गिभूतस्य विजिज्ञासितस्य मोक्षेऽनिर्धारितत्वात्तन्निश्चयाय मुनिमपृच्छदिति दर्शयति—**अत ऊर्ध्वं विमोक्षायैव ब्रूहीतीति**। विशिष्टो मोक्षो भवत्यनेनेति विमोक्षः सम्यग्ज्ञानं, यतः स्वयंज्योतिष्ट्वरूपं मोक्षमार्गमात्रमेव निर्णीतमतः कारणादूर्ध्वं मार्गनिर्णयादनन्तरं विमोक्षायैव मोक्षसाधनभूता-द्वितीयब्रह्मात्मज्ञानायैव ब्रूहि यथा मोदत्रासादिजनको मृत्युरात्मनः स्वभावो न भवति तथा मामुपदिशेत्यर्थः ॥१६॥

३५ एवं राज्ञा नियुक्तो मुनिर्मोदत्रासाद्यभावप्रदर्शनपुरःसरं तत्कारणभूतः कर्मलक्षणो मृत्युर्नात्मनः स्वभाव इति दर्शयितुं प्रवर्तमानस्तावत् स्वप्नस्थानाज्जागरितदेशागमनमाह—**स वा एष एतस्मिन्स्वप्नान्त इति**। य एषः स्वप्ने दर्शितः स्वयंज्योतिः स प्रकृतः आत्मा वै प्रसिद्धः स्वप्नान्ते स्वप्नस्थाने रत्वा स्त्रीपुत्रादिसापेक्षं मनोवाक्कायचेष्टा-लक्षणं रमणं कृत्वा वासनामात्रसाधनः सन् चरित्वा इतस्ततोऽनेकधाऽऽचरणं कृत्वा दृष्ट्वैव पुण्य च पापं चेति पुण्य पुण्यफलं, सुखं च पापं च पापफलं दुःखं चानुभूयैव पुनः स्वप्नादूर्ध्वं प्रति पूर्वसमादगमनात्प्रातिलोम्येन। न्यायं

**प्रतियोन्याद्रवति बुद्धान्तायैव स यदत्र किञ्चित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुष इत्येवमेवैतद्याज्ञवल्क्य सोऽहं भगवते सहस्रं ददाम्यत ऊर्ध्वं विमोक्षायैव ब्रूहीति ॥१७॥**

**तद्यथा महामत्स्यः । उभे कूले अनुसञ्चरति पूर्वं चापरं चैवमेवायं पुरुष एता उभावन्तावनुसञ्चरति स्वप्नान्तं च बुद्धान्तं च ॥१८॥**

**तद्यथास्मिन्नाकाशे श्येनो वा सुपर्णो वा विपरिपत्य श्रान्तः** ५

निश्चयेनागमनं यथा स्यात्तथा प्रतियोनि जागरितसर्गाय पूर्वंगृहीतवासनामयस्थानं प्रत्याद्रवति आगच्छतीत्यर्थः। किमर्थमित्यत आह बुद्धान्तायैव जागरणायैव जागरणानुभवायैवेत्यर्थः। अत्र दृष्ट्वैवेत्येवकारादात्मनः स्वप्ने पुण्यपापकर्तृत्वं व्यावर्तते। स्थानात्स्थानान्तरप्राप्तावभ्यासं दर्शयितुं पुनःशब्दप्रयोगः। प्रतिशब्दः प्रातिलोम्यवाची जागरितात्स्वापं- स्वप्नात्सुषुप्तमित्यानुलोम्यं तद्विपरीतं प्रातिलोम्यम्। निशब्दो निश्चयवाची अयनमायो गमनम्। इणो धातोर्गत्यर्थाद्भावार्थे यमिविहिते आय इति रूपम्। योनिशब्दो वासनावचनः। ननु स्वप्ने आत्मा रत्यादिकं १० करोति चेत्तत्फलेनापि संबध्यते यथा जागरिते कर्म कुर्वंस्तत्फलेन संबध्यते इत्याशङ्कां वारयति—**स यत्तत्र किञ्चित्पश्यत्यनन्वागतस्तेन भवतीति**। स आत्मा तत्र स्वप्ने यत्किमपि पुण्यपापफलं पश्यति तेन दृष्टेनानन्वागतोऽननुबद्धो भवतीत्यक्षरार्थः। स्वप्ने तावदात्मनः कर्तृत्वं न वास्तवमित्युक्तं अतो न स्वप्नकृतेन कर्मणाऽऽत्मा बध्यते। यदि वस्तुतः कर्ता सन् बद्ध्येत तर्हि स्वप्नकृतेनापेयपानादिना स्वात्मानं पापकारिणं मन्येत लोकः। न च कश्चिदपि तथा मन्यते। न वा स्वप्नेऽहमपेयपानमकार्षमित्युक्तवन्तं प्रामाणिका गर्हयन्तस्तत्संसर्गं परिहरन्ति। ननु— १५

स्वप्ने चेदिन्द्रियदौर्बल्यात्स्त्रिय दृष्ट्वा क्षरेद्यदि। प्रायश्चित्तं तु तस्योक्तं प्राणायामास्तु षोडश॥

इति वचनेन स्वप्ने रेतःस्खलननिमित्तप्रायश्चित्तविधानमात्मनः स्वप्ने कर्मसंबन्धाभावे नोपपद्यत इति चेत्। शृणु नैतत्स्वप्नसंभोगनिमित्तं प्रायश्चित्तं किन्तु सत्यादेवेन्द्रियलक्षणादाधाराद्रेतसः क्षरणनिमित्तं तस्य जागरिते प्रपन्नत्वनिमित्तं च। अन्यथा परनारीसंगमनिमित्तमपि प्रायश्चित्तं विदध्यात् न स्कन्ननिमित्तमात्रम्। तस्मान्न स्वप्नकृतेन कर्मणा तत्फलेन चात्मा संबध्यत इति तात्पर्यार्थः। कथं स्वप्नदृष्टेनात्माऽनन्वागत इत्यपेक्षायां हेतुमाह—**असङ्गो ह्ययं** २० **पुरुष इतीति**। हि यस्मादयं पुरुषोऽसङ्गस्तस्मादनन्वागत इत्यर्थः। मुनिनोक्तमात्मनः कर्मासंबन्धं राजाऽङ्गीकरोति—**एवमेवैतद्याज्ञवल्क्येति**। हे याज्ञवल्क्य एतद्भगवतोक्तं स्वप्ने आत्मनः कर्मासबद्धत्वमेवमेवेत्यङ्गीकृत राजेत्यर्थः। मुनिनिरूपितेऽर्थे स्वात्मनो दार्ढ्यं सूचयन् राजा दक्षिणा प्रतिजानीते—**सोऽहं भगवते सहस्रं ददामीति**। उक्तार्थमेतत्। राजा मुनेः स्वस्मिन्नेराकांक्ष्यशङ्का वारयति—**अत ऊर्ध्वं विमोक्षायैव ब्रूहीतीति**। कर्मप्रविवेकस्यापि मोक्षैकदेशत्वाद्विमोक्षायैव ब्रूहीति पृष्टवानित्यर्थः ॥१७॥ २५

एवं स वा एष एतस्मिन्स्वप्नान्ते इत्यनया कण्डिकया स्वतन्त्रज्योतिरात्माऽवस्थाद्वयेऽपि कामकर्मप्रयुक्तस्थानद्वयसंचरणसंसारधर्मैरसस्पृष्टोऽवशीकृतोऽसङ्गत्वादिति प्रतिपादितम्। तत्र संचरन्नपि कथं तेन न वशीक्रियत इत्यत्र दृष्टान्त उच्यते। यद्वा स्वप्नान्तबुद्धान्तात्मकावस्थाद्वयस्य व्यभिचारात्तदनुस्यूतस्यात्मनस्तद्विलक्षणत्वं तत्कामकर्मात्मकादासङ्गान्मृत्योर्विविक्तत्वं च यद्दर्शितं तत्रेदानीं दृष्टान्तमाह—**तद्यथा महामत्स्य इति**। तत्तत्रैतस्मिन्नुक्ते तद्यत्प्रसिद्धमिति वा यथालोके महामत्स्यः महांश्चासौ मत्स्यश्चेति महामत्स्यो नादेयस्रोतसाऽप्रकम्प्योऽवशीकृतो ३० मत्स्योऽत्र दृष्टान्तः महच्छब्दविशेषणेन तादृग्रूपस्य विवक्षितत्वात्। तथा च यथा स मत्स्यो नद्याः पूर्वमपरं चेत्युभे कूले तीरे तटौ अनुक्रमेण संचरति स्रोतश्च विष्टम्भयन् स्वच्छन्दचारी तटाभ्यां भिन्न एव सन् संचरतीत्यर्थः। उक्तदृष्टान्ते दार्ष्टान्तिकं योजयति—**एवमेवायं पुरुष एता उभावन्तावनुसंचरतीति**। यथाऽयं दृष्टान्त एवमेवायं पुरुषः स्वप्नान्तं च स्वप्नं बुद्धान्तं च जागरितमित्येतावुभावन्तौ अनुक्रमेण सचरति। अतोऽवस्थाद्वयेप्युक्तरूप एवात्मेत्यर्थः। अतोऽस्यात्मनः संसारित्वमाविद्यकमेव न स्वतस्तस्या निवृत्ताया तु स्वतःसिद्धैव तस्य मुक्तिरिति स वाऽयं पुरुषो ३५ जायमान इत्यारभ्य मत्स्यवाक्यान्तस्य ग्रन्थस्य समुदायार्थः ॥१८॥

एवं महामत्स्यदृष्टान्तोपन्यासेनावस्थाद्वयेऽपि यद्यपि कार्यकरणादिभ्यो व्यतिरिक्तं नित्यशुद्धबुद्धमुक्तस्वभावमात्मस्वरूपं दर्शितं तथाप्येकैकस्मिन्वाक्ये एकैकव्यतिरेकस्यैव प्रदर्शनान्न पुंजीकृत्य तथाविधमात्मस्वरूपं दर्शितम्। अतः सुषुप्तौ तथाविधमात्मस्वरूपं सकृदेव सुखं प्रतिपत्तुं शक्यमिति तद्वाऽस्यैतदाप्तकाममित्यादिना तथा दर्शयितुं

संहृत्य पक्षौ सल्लयायैव ध्रियत एवमेवायं पुरुष एतस्मा अन्ताय धावति यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति ॥१९॥

ता वा अस्यैताः । हिता नाम नाड्यो यथा केशः सहस्रधा भिन्नस्तावताऽणिम्ना तिष्ठन्ति शुक्लस्य नीलस्य पिङ्गलस्य हरितस्य लोहितस्य पूर्णा अथ यत्रैनं ५ घ्नन्तीव जिनन्तीव हस्तीव विच्छाययति गर्तमिव पतति यदेव जाग्रद्भयं पश्यति

तथाविधसुषुप्तिप्राप्तौ दृष्टान्तत्वेन श्येनवाक्यं प्रवर्तत इति श्रीमतां शंकराचार्याणामवतारिका। वार्तिककृदवतारिका तु एवं स्वप्नबुद्धान्तयोः संचरत आत्मनः संसारविलक्षणत्वे महामत्स्यदृष्टान्त उक्तः। इदानीं सुषुप्तावपि तद्विलक्षणत्वं दर्शयितुं श्येनादिदृष्टान्तमाह—तद्यथास्मिन्नाकाशे श्येनो वा सुपर्णो वेति। श्येनो महाकायो मन्दवेगः पक्षिविशेषः सुपर्णस्तु वेगवत्तरोऽल्पविग्रहः। तथा च तत्प्रसिद्धं निदर्शनं यथा लोकेऽस्मिन् प्रसिद्धे भौतिक आकाशे १० श्येनो वा सुपर्णो वा पक्षी विपरिपत्य विविधं परिपतनं कृत्वा भक्षणादानार्थमनेकशो भ्रान्त्वा श्रान्तः परिपतेन लक्षणेन कर्मणा खिन्नः सन्पक्षौ संहृत्य संगमय्य संप्रसार्य पक्षयोः स्वनीडगमनाभिमुख्यमापाद्य सल्लयाय नीडायैव ध्रियते स्वात्मनैव स्वयं धार्यत इत्यर्थः। सम्यक् लीयते अस्मिन्निति सल्लयो नीडस्तस्मै। दार्ष्टान्तिकमाह—एवमेवायं पुरुष इति। यथायं दृष्टान्त एवमेवायं पुरुषः आत्मा जाग्रत्स्वप्नयोः परिभ्रमणेन श्रान्तः सन् तच्छ्रमस्य हानार्थमेतस्मै प्रसिद्धायान्ताय जाग्रत्स्वप्नयोरन्तोऽवसानं यस्मिन् अज्ञाते ब्रह्मणि सोऽन्तस्तस्मा अन्तायाज्ञातब्रह्मलक्षणस्वनीडाय १५ धावतीत्यर्थः। अन्तशब्दस्य यथोक्तब्रह्मविषयत्वं परिशेषयितुं विशेषद्वयमाह—यत्र सुप्तो न कंचन कामं कामयत इति। यत्र यस्मिन्नन्ते सुप्तः पुमान् कंचन कमपि काममभिलाषगोचरं न कामयते न कंचन स्वप्नं च पश्यति सोऽन्तशब्दवाच्यः तस्मा एतस्मा अन्ताय धावतीत्यन्वयः ॥१९॥

ननु जाग्रत्स्वप्नोपाध्यपगमेन सुषुप्तिगतस्याप्यात्मनो न ब्रह्मैकत्वं, तत्रापि भेदहेतोरविद्यायाः सत्त्वादित्याशङ्क्य न तावदविद्याऽऽत्मनः स्वभावस्तथा सति चैतन्यवत्तदनिवृत्तेरमोक्षापत्तेः, अस्वभावत्वे तु कामकर्मादिवत्तन्निवृत्तेः २० मोक्ष उपपद्यते इति विचारपुरस्सरमस्वभावत्वकथनद्वाराऽविद्याकामकर्मादिहीनतयानिरूपितात्मस्वरूपस्य प्रत्यक्षेण प्रदर्शनेच्छयोत्तरा कण्डिका प्रवर्तते—ता वा अस्यैता हिता नाम नाड्य इति। याः पूर्वं प्रकृतास्ता वै प्रसिद्धा अस्य शिरः पाण्यादिलक्षणस्य संघातस्य हिता इत्येवं नामवत्यो नाड्यः शिराः यथा लोके केशो वाग्रः सहस्रधा भिन्नः सन्यावत्परिमाणो भवति तावता तावत्परिमाणेनाणिम्नाऽणुत्वेन तिष्ठन्ति अर्थात् हृदये इति गम्यते। हृदयादूर्ध्वा नाड्युच्चरतीति नाडीनां हृदयाद्विप्रसृतत्वश्रवणादित्यर्थः। एताश्च सूक्ष्मा नाड्यो धातुवैषम्यवशाद्भुक्तान्नरसस्य नाना- २५ विधैः परिमाणैः पूर्यन्ते तासु चैव विधासु सकलदेहव्यापिनीषु प्रत्यगात्मोपाधिभूतं जाग्रद्दृष्टपदार्थवासनाश्रयं स्फटिकमणिवत् स्वच्छं लिङ्गं तिष्ठतीत्यभिप्रेत्याह—शुक्लस्य नीलस्य पिङ्गलस्य हरितस्य लोहितस्य पूर्णा इति। षष्ठ्यस्तृतीयार्थे शुक्लेन पूर्णा इत्येव प्रत्येकं संबध्यते। श्लेष्मबाहुल्ये वातपित्तयोर्गुणत्वेन संसर्गाद्भुक्तान्नरसो नाडीस्थः श्वेतो भवति। वातभूयस्त्वे सतीतरयोर्गुणत्वान्नाडीस्थोऽन्नरसो नीलो भवति। पित्तबाहुल्यादितरयोरुपसर्जनत्वे सति नाडीस्थो रसः पिङ्गलो भवति। वातश्लेष्माधिक्येन पित्ते मन्दे सति नाडीस्थोऽन्नरसो हरितो भवति। तेषां च ३० धातूनां साम्ये नाडीस्थो रसोऽत्यन्तं लोहितो भवति। एवं विधान्नरसव्याप्तानां नाडीनामपि तादृशा वर्णा जायन्ते। तदुक्तं सुश्रुते—

"अरुणाः शिरा वातवहा नीलाः पीत्तवहाः शिराः। असृग्वहास्तु रोहिण्यो गौर्यः श्लेष्मवहाः शिराः॥"

इत्यादि। तथा च तासु नाडीसु पुरुषस्य स्वापकाले धर्मादिनिमित्तवशात्पूर्वोक्तं लिङ्गं स्वगतचिदाभाससहितं मिथ्यैव नानाकारमवभासत इति भावः। भवत्वेवं यथोक्तासु नाडीषु यथोक्तस्य लिङ्गस्यावस्थितिः कथमेतावता कार्यद्वाराऽ- ३५ विद्यासिद्धिरित्याकाङ्क्षायामाह—अथ यत्रैनं घ्नन्तीव जिनन्तीवेति। अथ मूलाविद्याकार्यत्वादविद्यात्मके पूर्वोक्ते लिङ्गे प्रागुक्तनाडीसु व्यवतिष्ठमाने सति यत्र यस्मिन् स्वप्नकाले एनं स्वप्नदृशं केचन शत्रवोऽन्ये वा तस्करादयो घ्नन्तीव। अन्ये केचिज्जिनन्तीव वशीकुर्वन्तीव दासादिरूपेण कदाचिदेनं हस्ती विच्छाययतीव विद्रावयतीवेति यावत्। विच्छगतौ "गुपूधूपविच्छिपणिपनिभ्य आय" (पा० सू० ३.१.२८) इति स्वार्थे आयप्रत्ययः। तथा गर्तं जीर्णकूपादिकं प्रति पततीव वस्तुतो हननादिकारकाभावेऽपि मृषैव स्वप्नद्रष्टुरेवं विषयो वासनानिमित्तः प्रत्ययोऽविद्याख्यो जायते

**तदत्राविद्यया भयं मन्यतेऽथ यत्र राजेव देव इवाहमेवेदं सर्वमस्मीति मन्यते सोऽस्य परमो लोकोऽथ यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति ॥२०॥**

**तद्वा अस्यैतत्। आत्मकाममाप्तकाममकामं रूपं तद्यथा प्रियया स्त्रिया संपरिष्वक्तो न बाह्यं किञ्चन वेद नाऽऽन्तरमेवमेवायं शारीर आत्मा प्राज्ञेनाऽऽत्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद नाऽऽन्तरम् ॥२१॥** ५

सर्वत्रेवशब्दप्रयोगादित्यर्थः। निकृष्टाधर्मोद्भासितान्तःकरणवृत्त्याश्रयवासनावशाद्दुःखात्मक एवंविधः प्रतिभासो भवतीति भावः। एवं स्वप्नस्य मिथ्यात्ववर्णने को हेतुरित्यपेक्षायामाह—**यदेव जाग्रद्भयं पश्यतीति**। यदेव जागरितो भयं भयहेतुहस्त्यादिकं पश्यति तदेव भयकारणमत्रास्मिन् स्वप्नेऽविद्यया वासनात्मिकया मृषैवोद्भूतयाऽऽत्मा मन्यते पश्यति। अतो मृषैव स्वप्न इत्यर्थः। एतेन वाक्येन कार्यद्वाराऽधर्मसहकारिकाऽनात्मस्वभावाऽविद्या दर्शिता। यतो यदा कदाचिद्विद्यायां तिरोधीयमानायामविद्याया चोत्कृष्यमाणायामेव घ्नन्तीवेत्यादिनोक्तं प्रत्यक्षत उपलभ्यत इति। १० इदानीं धर्मसहकारिका च तां शुभवासनात्मिकामनात्मभूतामविद्या तत्कार्यप्रदर्शनद्वारा निरूपयति—**अथ यत्र राजेव देव इवेति**। अथाविद्यायामपकृष्यमाणायां विद्यायामुत्कृष्यमाणायां सत्यां यत्र स्वप्नकाले राजेव देव इवेति स्वात्मानं मन्यते पश्यतीत्यन्वयः। यदा जागरे राज्येऽभिषिक्तो राजाऽस्मीत्यभिमानवान्भवति तदा तद्वासनावासितः स्वप्नेऽपि राजाऽहमस्मीति स्वात्मानं मन्यते। तथा जागरे देवादिविषयोपास्तिरूपा विद्या यस्य प्रदृष्टुर्जाता। तदा तद्वासनावासिततया देवोऽहमस्मीति स्वप्नहेतुकर्मोद्भवे मन्यते इत्यर्थः। एतदपि दर्शनं मृषैव इवशब्दप्रयोगादित्यव- १५ गन्तव्यम्। इदानी सत्येवात्मनि विद्योत्कर्षवशादविद्याया विनाश्यमानत्वादपि तस्या अनात्मस्वभावतेत्यभिप्रेत्यात्म-विद्योत्कर्षवता सर्वात्मभावलक्षण मोक्षफलमात्मस्वरूपमपि स्वप्ने प्रत्यक्षतोऽनुभूयत इत्याह—**अहमेवेदं सर्वमस्मीति मन्यत इति**।

अहमेवेद सर्वं सर्वात्मकं ब्रह्म न मत्तोऽन्यदिति दर्शनेन यदा जागरे आत्मा ध्वस्ताविद्यातत्कार्यो भवति तदा स्वप्नेऽपीदं सर्वमहमेव चिन्मात्रं मदतिरेकेण नास्ति किञ्चिदिति मन्यते जानाति स सर्वात्मभावोऽस्यात्मनः पूर्वोक्तान् २० लोकानपेक्ष्य परमः पूर्णो लोको विद्यया संपादितः। इदं तु दर्शनं परमार्थविषयमेव। न त्वाविद्यकं पूर्ववदत्रेवशब्द-प्रयोगाभावात्। अन्यत्सर्वमाविद्यकं तत्रेवशब्दप्रयोगादित्यर्थः। उक्तस्य लोकस्य यथोक्तविषयत्वं दर्शयितुं विशेषण-द्वयमाह—**अथ यत्र सुप्तो न कञ्चन कामं कामयत इत्यादिना**। अक्षरार्थः पूर्ववत् ॥२०॥

एवमविद्या आत्मस्वभावो न भवतीति निर्णीतं यः पुनरेकत्र पुञ्जीकृत्य नित्यशुद्धत्वादिलक्षण आत्मा दर्शयितु-मिष्टः स पूर्वकण्डिकामध्येऽहमेवेदं सर्वमस्मीति मन्यते सोऽस्य परमो लोक इत्यनेन संगृहीतः। स एवेदानी व्यक्ताविद्या- २५ विहीना सुषुप्त्यवस्थामवलम्ब्य कण्डिकाद्वयेन प्रकटीकुर्वन्नाह—**तद्वा अस्यै तदात्मकाममाप्तकाममकामं रूपमिति**। तदेतत्प्रसिद्धमस्य सर्वात्मभावमापन्नस्यात्मनो रूप स्वरूपमित्यन्वयः। किं तदित्यपेक्षायामाह—**आत्मकाममिति**। आत्मैव कामो यस्मिन्रूपे तदात्मकामम्। सुखसाक्षात्कारो हि काम्यत इति कामः स चात्मैव। काम्यन्त इति कामाः सुखादयस्ते आप्ता यस्मिन् रूपे तदाप्तकामम्। परमानन्दरूपब्रह्मैकत्वसंपन्नो जागरादाविव स्वात्मव्यतिरिक्तस्य काम्यमानस्य पदार्थजातस्याभावात्सुषुप्तावाप्तकाम रूपमित्यर्थः। यत एवाप्तकाममेतद्रूपमत एवाकामं कामाश्रयत्व- ३० रहितम्। "कामः सङ्कल्प" इत्यत्र मनस एव तदाश्रयत्वावधारणान्नात्माश्रयत्वं कामस्येत्यर्थः। सुषुप्तौ भेदाभावादेव विशेषविज्ञानाभावो न त्वात्मनः स्वयज्योतिष्ट्वाभावात्। तस्मात्स्वयंज्योतीरूपस्यात्मनः सुषुप्तौ सर्वैकत्वमेव विशेष-विज्ञानाभावे हेतुरिति वक्तु तावद्दृष्टान्तमाह—**तद्यथा प्रियया स्त्रिया सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमिति**। तत्तत्र सुप्तावेकत्वे सति विशेषविज्ञानाभावेऽयं दृष्टान्त यथा लोके स्त्रिया स्त्रीगुणोपेतया प्रियया मनोहरणसमर्थया कामुकया संपरिष्वक्तः सम्यक्परिष्वक्तः परिष्वङ्गफलं स्त्रीचिह्ने पुरुषस्यानुप्रवेशलक्षणं व्यामिश्रीभाव किञ्चिदपि ३५ न वेद इदं मत्तोऽन्यद्वस्त्विति न जानाति न वाऽऽन्तरमहं सुखीदुःखीवेत्येवंलक्षण वेद जानाति परिष्वङ्गात्पूर्वं यथा बाह्यमान्तरं च स्फुटं वेद तथा परिष्वक्तो न वेद संभोगफलप्राप्तिलक्षणैकत्वापत्तिवशादित्यर्थः। अत्र स्त्रीपुरुषयोः परिष्वङ्गे तत्फलरूपेऽवाच्यकर्मणि तत्फलैकत्वाधीनबाह्याभ्यन्तरविज्ञानाभावे च समानेऽपि पुंसः प्राधान्यात्परिष्वक्तो न वेदेति तस्य निर्देशः कृत इति भावः। दार्ष्टान्तिकमाह—एवमेवाय शारीर आत्मा यो भूतमात्रासंसर्गात् सैन्धव-

**तद्वा अस्यैतत् । अतिछन्दोऽपहतपाप्माभयं रूपमशोकान्तरमत्र पिताऽपिता भवति माताऽमाता लोका अलोका देवा अदेवा वेदा अवेदा यज्ञा अयज्ञा अत्र स्तेनोऽस्तेनो भवति भ्रूणहाऽभ्रूणहा पौल्कसोऽपौल्कस-**

खिल्यवत् प्रविभक्तः सन् जलादौ चन्द्रप्रतिबिम्बवदिह कार्यकरणेषु स्वकारणे विलीनेषु सत्सु भूतमात्रासंसर्गरहितः
५ प्राज्ञेन निरतिशयपरिपूर्णज्ञानरूपेण परमार्थेन स्वाभाविकेन स्वेनात्मना परज्योतीरूपेणाविद्यासाक्षिणा सम्परिष्वक्तोऽत्यन्तमेकीभूतः सन् सर्वात्मा न बाह्यं किंचन वस्त्वन्तरं स्वविलक्षणं किंचिद्वेद नाप्यान्तरमयमहं देवदत्तो ब्राह्मणः सुखी दुःखी वेति न वेद न विशेषतः किमपि जानातीत्यर्थः ॥२१॥

एवं सुषुप्तिमुपेयुषः पुरुषस्य विशेषविज्ञानाभावे स्वाभाविकात्मैकत्वमेव हेतुर्न स्वयंज्योतिष्ट्वाभाव इति दृष्टान्तेनोपपादनान्नात्मनः कामादिवत्स्वयंज्योतिष्ट्वमस्वभाव इति प्रासङ्गिकं परिसमाप्येदानी प्रकृतं रूपं स्पष्टीकरोति—
१० **तद्वाअस्यैतदतिछन्दोऽपहतपाप्माभयं रूपमशोकान्तरमिति ।** यस्मादयं सुषुप्तौ परमात्मना सहैक्यापत्त्या सर्वात्मा संवृत्तस्तस्मादस्यात्मनस्तदेतत्पूर्वप्रकृतं रूपं स्वरूपं वै प्रसिद्धं वक्ष्यमाणलक्षणमित्यन्वयः। कीदृशं तदित्यपेक्षायां कामकर्मभयशोकहीनमिति विशेषणचतुष्टयेन विशिनष्टि-अतिच्छन्द इति। छन्दः कामोऽतिक्रान्तोऽस्मात्तदतिच्छन्दः कामवर्जितमिति यावत् । छन्दःशब्दस्य गायत्र्यादिछन्दोविषयत्वेऽप्यत्र कामवाचित्वं छन्दःशब्दस्य बोध्यम्। स्वच्छन्द इत्यादौ दर्शनात्। न कञ्चन कामं कामयत इति कामस्य प्रकृतत्वात् तत्प्रयोज्यकर्मवाचिपाप्मपदेन सह पाठाच्च
१५ कामविषय एव छन्दःशब्दो विवक्षितः। तस्य रूपविशेषणत्वादतिछन्द इति भवति। तथा अपहतपाप्मा अपहत पाप्मा धर्माधर्मलक्षणो यस्मिन्रूपे तदपहतपाप्म धर्माधर्मविवर्जितमिति यावत्। पाप्मभिः संसृज्यते पाप्मनो विजहातीत्युपक्रमानुसारेण पाप्मशब्दो धर्माधर्मविषय इति बोध्यम्। तथा अभयम्। न विद्यते भयं यत्र रूपे तदभयम्। तथा अशोकान्तरमिति। न विद्यते शोकान्तरं मध्ये यस्य तदशोकान्तरं शोकशून्यमिति यावत्। सुषुप्तौ विक्षेपकाज्ञानाभावात् कूटस्थमेवात्मरूपमवतिष्ठत इत्यर्थः। एवमाविद्यककामादिरहितमात्मस्वरूपं प्रत्यक्षतः प्रदर्श्येनी तद्धेतु-
२० भूतकर्माख्याविद्यासम्बन्धरहितत्वमप्यात्मनः सुषुप्तौ प्रत्यक्षमित्याह—**अत्र पिताऽपिता भवतीत्यादिना ।**

अतिच्छन्दोपहतपाप्माभयं रूपमित्याद्युक्तस्यात्मरूपस्यात्र सुषुप्तिस्थाने पिता जनयिताऽप्यपिता भवति तस्य हि पितृत्वं पुत्रं प्रति जनयितृत्वसंबन्धहेतुकर्मनिमित्तं कर्मणाऽस्मिन्कालेऽसंबद्ध एव तस्मात् पितुरपि तत्रापितृत्वमेव। सामर्थ्यात्पुत्रोऽपि तत्रापुत्र इति गम्यते। उभयोर्जन्यजनकतालक्षणसंबन्धनिमित्तकर्महेतुकं हि पितृत्वं पुत्रत्वं च तत्कर्मातिक्रमश्चापहतपाप्मेत्यत्रोक्तः। अतः पुत्रोऽपि तत्रापुत्रो भवतीति। तथैव माताऽमाता। लोकाः कर्मविद्याभ्यां
२५ जिताश्च अलोकाः अस्य तत्कर्मसंबन्धाभावात्। देवाः कर्माङ्गभूता अदेवाः तत्कर्मसंबन्धाभावात्। वेदाः प्रमाणत्वेन प्रमेयत्वेन च साध्यसाधनसंबन्धाभिधायका मन्त्रब्राह्मणलक्षणाः अधीता अध्येतव्याश्च अवेदाः। यज्ञा अग्निष्टोमादिकर्मरूपाः कृताः कर्तव्याश्च अयज्ञाः ते हि पुरुषेण सह कर्मनिमित्तमेव सबध्यन्ते। कर्म परमात्मैकत्वमापन्ने सुषुप्ते पुरुषे नास्ति तदतिक्रमस्य तत्रोक्तत्वादित्यर्थः। न केवलशुभकर्मसंबन्धातीतः आत्मा किं तर्ह्यशुभैरत्यन्तघोरैः कर्मभिरसम्बन्ध एव सुषुप्तौ वर्तत इत्याह—**अत्र स्तेनोऽस्तेनो भवतीत्यादिना ।** अत्र सुषुप्तिस्थाने परमात्मनैकीभूतोऽयमात्माऽस्तेनो
३० भवति। अत्र स्तेनशब्देन ब्राह्मणसुवर्णहर्त्तोच्यते महापातकी भ्रूणघ्ना सह पाठात्। षोडशमाषपरिमितं काञ्चनं सुवर्णं तावत्ततोऽधिकं वा ब्राह्मणस्यापहर्ता स्तेन इति यावत्। स तेन महापातकेन तस्मिन्काले विनिर्मुक्तो भवतीत्यर्थः। तथा मुख्यब्रह्महा भ्रूणहा न प्रेरयित्रनुमन्त्रादिसाधारणः। तदुक्तं "वरिष्ठो ब्रह्महा चैव भ्रूणहेत्यभीधीयत" इति। स भ्रूणहा तदाऽभ्रूणहा भवतीत्यर्थः। न खल्वेवं केवलमागन्तुकेन घोरकर्मणा विनिर्मुक्तः किं तर्ह्यत्यन्तं निकृष्टजातिप्रापकेण सहजेनापि कर्मणा विनिर्मुक्त एवायमित्याह—**पौल्कसोऽपौल्कसश्चाण्डालोऽचाण्डाल इति ।** शूद्राया ब्राह्मण्यां शूद्राज्जातो जात्या
३५ ऊजातो निषादस्तस्मात्क्षत्रियायां जातः पुल्कसः, पुल्कस एव पौल्कसः स्वार्थेऽण्। तथा ब्राह्मण्यां शूद्राज्जातो जात्या चाण्डालः चण्डाल एव चाण्डालः एतौ पौल्कसचाण्डालौ तदानी जातिनिमित्तकर्मणाऽसंबन्धादपौल्कसोऽचाण्डालश्च भवेतामित्यर्थः। तथाऽऽश्रमहेतुभूतैरपि कर्मभिस्तदा मुक्त इत्याह—**श्रमणोऽश्रमणस्तापसोऽतापस इति ।** श्रमणः परिव्राट् स यत्कर्मनिमित्तो भवति तेन विनिर्मुक्तत्वादश्रमणः तथा तापसो वानप्रस्थोऽतापस इत्यर्थः। अत्र परिव्राड्वानप्रस्थग्रहणं वर्णाश्रमहेतूनां सर्वेषामपि कर्मणामुपलक्षणार्थम्। इदानी मोहोत्थानां संबन्धानामनन्तत्वेन तेषां कल्प-

श्चाण्डालोऽचाण्डालः श्रमणोऽश्रमणस्तापसोऽतापसोऽनन्वागतं पुण्येनानन्वागतं पापेन तीर्णो हि तदा सर्वाञ्छोकान्हृदयस्य भवति ॥२२॥
यद्वै तन्न पश्यति । पश्यन्वै तद्द्रष्टव्यं न पश्यति न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत् ॥२३॥
यद्वै तन्न जिघ्रति । जिघ्रन्वै तद्घ्रातव्यं न जिघ्रति न हि घ्रातुर्घ्राणाद्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यज्जिघ्रेत् ॥२४॥ ५
यद्वै तन्न रसयति विजानन्वै तद्रसन्न रसयति न हि रसयितु रसाद्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्रसयेत् ॥२५॥

कोटिभिरपि संख्यातुमशक्यत्वात् तत्प्रापकाणां कर्मणां द्वैविध्येनोपसंहारपूर्वकं सर्वकर्मातीतत्वमाह—अनन्वागतं पुण्येनानन्वागतं पापेनेति। अपहतपाप्माऽभयं रूपमित्यनेनोपक्रान्तस्यानुवर्तमानत्वादनन्वागतमिति रूपविषयो नपुंसकनिर्देशः। तथा च तदात्मरूपं पुण्येन शास्त्रविहितेन कर्मणाऽनन्वागतमसम्बद्धं तथा पापेन विहिताकरणप्रतिषिद्धक्रियालक्षणेनाप्यनन्वागतमात्मरूपमित्यर्थः। ननु तत्र सर्वपुण्यपापासंबद्धत्वे को हेतुरित्यपेक्षायां तद्धेतुभूतकामात्यय एवेत्याह—तीर्णो हि तदा सर्वाञ्छोकान् हृदयस्य भवतीति। हृदयं पुण्डरीकाकारो मांसपिण्डः तात्स्थ्यादिह हृदयशब्दो बुद्धिवचनः। शोकशब्द इह कामवाची। कामः खल्विष्टप्रार्थनालक्षणोऽप्राप्तं वियुक्तं वा इष्टवस्तूद्दिश्य संतप्यमाने पुंसि शोकत्वं प्रतिपद्यतेऽतो युक्त शोकशब्दस्य कामवाचित्वं न कञ्चन कामं कामयते अतिच्छन्द इत्यादिना सहपाठाच्च। तथा च हि यस्मादतिच्छन्द इत्यादिवाक्योक्तरूपोऽयमात्मा तदा तस्मिन् सुषुप्तिकाले हृदयस्य हृदयस्थाया बुद्धेः संबन्धिनः सर्वान्शोकान् कामान् तीर्णोऽतिक्रान्तो भवति "सता सोम्य तदा सम्पन्नो भवती"ति छान्दोग्ये सुषुप्तौ परमात्मैक्यापत्तेरुक्तत्वात्कामाश्रयाया बुद्धेः सुषुप्तावभावाच्चेत्यर्थः। ततश्च सुषुप्तौ कामनिवृत्त्या तत्कार्यभूतसकलकर्मनिवृत्तेर्युक्तं तत्रात्मनः पुण्यपापाभ्यामनन्वागतत्वमिति वाक्यार्थः ॥२२॥ १० १५

कामकर्मादिवत्सुषुप्तौ विशेषविज्ञानाभावान्न स्वयंज्योतिष्ट्वमात्मनः स्वभाव इति चोदिते स्त्रीपुंसपरिष्वङ्गदृष्टान्तेनैकत्वापत्तिवशाद्विज्ञानाभावो न स्वयंज्योतिष्ट्वाभावादिति समाधिरुक्तः। तत्र चार्थाद्विशेषाभावादेव विशेषविज्ञानाभाव इत्यपि सूचितम्। तदिदानीं चोद्यानुवादपूर्वकमतितरां स्पष्टीकर्तुं प्रवर्तते—यद्वै तन्न पश्यति पश्यन्वै तद् द्रष्टव्यं न पश्यतीत्यादिना। वै इत्यवधारणार्थः। तत्तत्र सुषुप्तावात्मा नैव पश्यतीति यज्जानीषे तत्तथा मा मंस्थाःयतस्तत्र स्वरूपचैतन्येन सर्वसाक्षित्वात्पश्यन्नेव सन् द्रष्टव्यं पदार्थजातं न पश्यतीत्यभिसंभवतीति स्वरूपदर्शनं विशेषादर्शनं च प्रतिज्ञायत इत्यर्थः। पश्यन्नेवास्ते इत्यस्यां प्राथमिकप्रतिज्ञाया तावद्धेतुमाह—न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यत इति। हिः हेतौ। द्रष्टुर्या सर्वसाक्षिभूता दृष्टिः यद्वा द्रष्टुः कूटस्थचिन्मात्रस्य स्वरूपभूता या दृष्टिस्तस्या हि यस्माद्विपरिलोपो विनाशो नैव विद्यते। अग्निस्वभावभूतौष्ण्यस्येव तस्मात्तज्जाग्रत्स्वप्नवत्सुषुप्तावप्यात्मा स्वयंज्योतिरेवेत्यर्थः। ननु दृष्टेः कर्ता हि द्रष्टा यतोऽनित्यक्रियाकर्तृविषय एव तृजन्तशब्दप्रयोगो न नित्यदृष्टिस्वरूपो द्रष्टेति चेन्नैष दोषः। सविता प्रकाशयितेत्यादौ प्रकाशरूपेऽपि सवितरि तृचो दर्शनात्। तस्मान्नित्यदृष्टिस्वरूप एवात्मेति सिद्धम्। आत्मदृष्टेर्नित्यत्वं साधयति—अविनाशित्वादिति। अविनाशित्वमपरिणमित्वम्। तस्माद्विनाशहेतुभूतपरिणामहीनत्वादित्यर्थः। विशेषविज्ञानाभावप्रतिज्ञाया हेतुमाह—न तु तद् द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येदिति। तत्तत्र द्वितीयं प्रमातृस्वरूपसाभासाऽन्तःकरणलक्षणं न त्वस्ति। तत आत्मस्वरूपादन्यच्चक्षुरादिलक्षणं न त्वस्ति ततो विभक्तं रूपादिलक्षणं च न त्वस्ति यत्पश्येत्प्रमाता प्रमाणेनेति योजना। तत इत्यपादानं सर्वत्रानुषञ्जनीयम्। तथा च स्वरूपचैतन्यस्य सत्त्वेऽपि प्रमातृकरणविषयकृतत्वाद्विशेषदृष्टेस्तेषां च सुषुप्तावभावात्तत्कार्यविशेषदृष्टेरप्यभावः। अतो विशेषविज्ञानाभावो नात्मनः प्रकाशाभावकृत इति स्वयंज्योतिष्ट्वं तस्यावधारयतीत्यर्थः ॥२३॥ २० २५ ३० ३५

यद्वै तन्न जिघ्रति ॥२४॥
यद्वै तन्न रसयति ॥२५॥

यद्वै तन्न वदति। वदन्वै तद्वक्तव्यं न वदति न हि वक्तुर्वचो विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्वदेत् ॥२६॥
यद्वै तन्न शृणोति। शृण्वन्वै तच्छ्रोतव्यं न शृणोति न हि श्रोतुः श्रुतेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यच्छृणुयात् ॥२७॥
यद्वै तन्न मनुते। मन्वानो वैतन्मन्तव्यं न मनुते न हि मन्तुर्मतेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यन्मन्वीत ॥२८॥
यद्वै तन्न स्पृशति। स्पृशन्वै तत्स्प्रष्टव्यं न स्पृशति न हि स्प्रष्टुः स्पृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्स्पृशेत् ॥२९॥
यद्वै तन्न विजानाति। विजानन्वै तद्विज्ञेयं न विजानाति न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्विजानीयात् ॥३०॥

सलिल एको द्रष्टाऽद्वैतो भवति। एष ब्रह्मलोकः सम्राडिति
हैनमुवाचैषास्य परमा सम्पदेषोऽस्य परमो लोक एषोऽस्य परम
आनन्द एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति ॥३१॥

यद्वै तन्न वदति ॥२६॥
यद्वै तन्न शृणोति ॥२७॥
यद्वै तन्न मनुते ॥२८॥
यद्वै तन्न स्पृशति ॥२९॥
यद्वै तन्न विजानाति। इत्येते पर्यायाः पूर्वेण समानार्थाः। यद्यपि मनोविज्ञानयोश्चक्षुरादिसहकारित्वात् ततो न पृथग्ग्रहणार्हता तथापि चक्षुरादिनिरपेक्षतयापि भूतभविष्यद्वर्तमानविषयव्यापारः स्मरणादिरूपो दृष्ट इति तयोः पृथग्ग्रहणमिति बोध्यम् ॥३०॥

एवं यद्वै तन्न पश्यतीत्यादि विस्तरेणोक्तरूपस्य प्राज्ञेनात्मना सम्परिष्वक्तस्यात्मनः स्वरूपोपसंहारार्थमाह—सलिल एको द्रष्टाऽद्वैतो भवतीति। सलिल इव सलिलः सलिलवच्छुद्ध इति यावत्। अनेन विजातीयसंबन्धशून्यत्वमुक्तम्। सजातीयभेदव्युदासायैक इति विशेषणम्। न त्वेकसंख्यावैशिष्ट्यार्थम्। "साक्षी चेता केवलो निर्गुणश्चे"त्यगुणत्वश्रुतिविरोधात्। यस्मात्सजातीयविजातीयभावस्य द्रष्टव्यस्याभावस्तस्मादकारकस्वभावत्वादद्रष्टेति पूर्णात्मकज्योतिरभिधीयते। द्रष्टेति पदच्छेदे उक्तविशेषद्वयोपलक्षितस्यात्मनो जडत्वशङ्कावारणार्थमद्रष्टेति विशेषणम्। सजातीयविजातीयभेदरहितत्वेऽपि धर्मधर्मिभावलक्षणः स्वगतो भेदः स्यादित्याशङ्क्य तन्निवृत्त्यर्थमद्वैत इति विशेषणम्। द्विधेतं द्वीतं द्वीतस्य भावो द्वैतं तन्न विद्यते यस्मिन् सोऽद्वैत एकरस इत्यर्थः। एतेनात्मनो भिन्नाभिन्नत्वसंभावनाप्यप्रामाणिकीति दर्शितम्। इदानीमत ऊर्ध्वं विमोक्षायैव ब्रूहीति यत्पुनः पुनः पृष्टं तस्योत्तरमुक्तवान् मुनिरिति श्रुतिरस्मान् प्रत्याह—एष ब्रह्मलोकः सम्राडिति हैनमुवाचेति। आत्मनोऽत्यन्तं सन्निहितत्वादेष इति निर्देशः। एष सुषुप्त्यवस्थामापन्नः प्रत्यगात्मा ब्रह्मलोकः लोकनं लोकः ब्रह्मैव लोको ब्रह्मलोकः स्वयंज्योतीरूपं ब्रह्मैवेति यावत्। अत्र षष्ठीतत्पुरुषग्रहेऽद्वैतश्रुतिविरोधः इति द्रष्टव्यम्। हे सम्राड्राजन्निति संबोध्य इत्येवमुक्तप्रकारेण ह किल एनं राजानं जनकमुवाच उपदिष्टवान् याज्ञवल्क्य इति शेषः। कथं पुनरुवाचेत्यपेक्षायामाह—एषाऽस्य परमा संपदिति। एषाऽस्य विज्ञानमयस्य परमा उत्कृष्टा संपद्विभूतिरकृतकत्वात्। अन्यास्तु विपरीता हेया इत्यर्थः। एष एव यथोक्तोऽस्य विज्ञानमयस्य सुषुप्तौ परमात्मैक्यमापन्नस्य परमो मोक्षलक्षणो लोकः लोकनाल्लोकः स्वयंज्योतिः स्वभावाल्लोकशब्दस्य मुख्यवृत्तिविषयः स्वाभाविकः। अन्यस्तु साध्यत्वात् क्षयिष्णुः लोकशब्दस्यामुख्यवृत्तिविषयो गौणो हेय इत्यर्थः। एष एव यथोक्तोऽस्य सुषुप्तस्य परमः स्वरूपानुभवलक्षणो मुख्यो निरतिशय आनन्दः पूर्णानन्दः विषयेन्द्रियसबन्धजनिता आनन्दाः परिच्छिन्ना अमुख्याः अपरमा हेया इत्यर्थः। किं च वस्तुतो नास्त्येवात्मसुखातिरिक्तं वैषयिकमपि

**स यो मनुष्याणां राद्धः समृद्धो भवति । अन्येषामधिपतिः**
**सर्वैर्मानुष्यकैः कामैः संपन्नतमः स मनुष्याणां परम आनन्दः ॥३२॥**
**अथ ये शतं मनुष्याणामानन्दाः । स एकः पितॄणां जितलोकानामानन्दाः ॥३३॥**
**अथ ये शतं पितॄणां जितलोकानामानन्दाः । स एकः**
**कर्मदेवानामानन्दो ये कर्मणा देवत्वमभिसंपद्यन्ते ॥३४॥**
**अथ ये शतं कर्मदेवानामानन्दाः । स एक आजान-**
**देवानामानन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतः ॥३५॥**

सुखमित्याह—एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति । एतस्यैव ब्रह्मानन्दस्य मात्रां कलां पूर्णस्याप्या-नन्दस्याविद्योत्थानेकबुद्धिवृत्त्यवच्छेदवशात् मात्राशब्दार्हाः विषयेन्द्रियसंबन्धकाले विभाव्यमानाः अन्यानि अविद्यया ब्रह्मणोऽन्यत्वेन परिकल्पितानि ब्रह्मादिस्तम्बपर्यन्तानि भूतान्युपजीवन्ति उपभुञ्जते तावन्मात्रेणैवानन्दीनि १० भवन्तीत्यर्थः ॥३१॥

यथा लोके लवणावयवैर्लवणाब्धिं लोको बोधयति तथा मानुषानन्दमारभ्य ब्रह्मानन्दपर्यन्तमुत्तरोत्तर-शतगुणितातिशयशालिना परब्रह्मानन्दावयवानां प्रतिपादनद्वारेणावयविनं निवृत्तगणितभेदमनतिशयं ब्रह्मानन्दं दर्शयितुमुत्तरा श्रुतिः प्रवर्तते। तत्र तावत् परमकाष्ठा गतस्य मानुषानन्दस्य स्वरूपमाह—**स यो मनुष्याणां राद्धः समृद्धो भवतीति** । मनुष्याणा मध्ये यः कश्चित् भोगक्षमावयवैराध्यात्मिके राद्धः संसिद्ध इत्यन्तः साधनसंपत्तिरुच्यते । १५ संसिद्धाप्यन्तः साधनसंपद् बाह्यसाधनसंपदभावे भोगासंभवान्न फलवतीत्यत उच्यते—**समृद्ध इति** । समृद्धो बाह्यो-पभोगसाधनैः स्रक्चन्दनालङ्कारादिभिः संपन्न इति यावत् । एतदुभयसाधनसंपन्नत्वेऽपि आधिपत्यं विना न निरङ्कुशो भोगः स्यादित्यतो विशेषणमन्येषामधिपतिरिति । अन्येषा समान जातीयाना स्वतन्त्रोऽधिपतिर्न माण्डलिक इति यावत् । ननु बाह्यसाधनसंपत्तिं वदत्समृद्धपदं देवसाधनस्यापि बाह्यत्वाविशेषात्तत्संपत्तिमपि वदत्येव संकोचकाभावादतो मानुषा-नन्दस्यापि गन्धर्वानन्दादिष्वन्तर्भावोपपत्तेरस्य पृथग्ग्रहणमनर्थकमितीमा शङ्का मानुष्यकैरित्यनेन परिहरन्ती श्रुतिः २० पूर्वोक्तविशेषणसंपत्तिं स्पष्टयति—**सर्वैर्मानुष्यकैः कामैः संपन्नतम इति** । मनुष्येषु भवैर्मानुष्यकैः कामैर्भोगोपकरणैः सर्वैरसंकुचितैः संपन्नतमोऽतिशयेन संपन्नः सपन्नतमो युधिष्ठिरादिसदृशः स मनुष्याणां परम आनन्दः आनन्दानन्दिनोर-भेदादेवंविधः पुमानानन्द इति निर्देश इत्यर्थः ॥३२॥

एवंविधमनुष्यानन्दैः शतगुणितैः समानः पितृलोकवासिनामेक आनन्द इत्याह—**अथ ये शतं मनुष्याणा-मानन्दा इति** । आनन्दान्तरोपक्रमार्थोऽथशब्दः मनुष्याणा ये उक्तप्रकाराः शतं शतगुणिता आनन्दभेदाः स एक एवा- २५ नन्दः पितॄणा दक्षिणमार्गानुयायिनामित्यन्वयः । के ते पितर इत्यतस्तान्विशिनष्टि—**जितलोकानामिति** । श्राद्धपिण्ड-पितृयज्ञादिकर्मादिभिः पितृतर्पणद्वारा जितो लोको यैस्ते । यद्वा जिता लोका येषामिति जितलोकास्तेषां पितॄणा-मित्यर्थः ॥३३॥

तथा पितृलोकानन्दोऽपि शतगुणीकृत एक एव कर्मदेवानन्द इत्याह—**अथ ये शतं पितॄणां जितलोकाना-मानन्दा इति** । व्याख्यानं प्राग्वत् । के कर्मदेवा इत्यपेक्षायामाह—**ये कर्मणा देवत्वमभिसंपद्यन्त इति** । येऽग्निहोत्रादि- ३० श्रौतकर्मणा देवत्वमभिसंपद्यन्ते देवलोकं प्राप्नुवन्ति ते कर्मदेवा इत्यर्थः ॥३४॥

तथा कर्मदेवानामानन्दः शतगुणीकृतः सन् स्वाभाविकदेवानामेक आनन्द इत्याह—**अथ ये शतं कर्म-देवानामानन्दा इति** । मनुष्यादिसर्गस्य प्रवृत्तेः प्रागेव ये देवत्वं प्राप्तास्ते आजानदेवा उच्यन्ते ते तु सूक्ष्मव्यापि-शरीरधारिणो महात्मान इत्यर्थः । इदानीमाजानदेवेभ्यः पृथक् आनन्दस्तदुपास्त्यधिकारिण आजानदेवानन्दात्प्राक्तनानन्देषु जातवैराग्यस्याजानदेवाद्यानन्देषु सतृष्णस्य मनुष्यदेहे एव जीवतः श्रोत्रियस्यापि समान एवेत्याह—**यश्च श्रोत्रियोऽ-** ३५ **वृजिनोऽकामहत इति** । अर्थज्ञानान्तमेकशाखाविषयमध्ययनं यस्यास्ति स श्रोत्रियशब्देनोच्यते । "श्रोत्रियंश्छन्दोऽ-धीते ( पा सू० ५.२.८४ ) इति पाणिनिनोक्तत्वात् । वृजिनं पापं तत्र विद्यते यस्य सोऽवृजिनः पापरहितः कृत्स्नवेदोक्त-कारित्वात् । अकामहतः आजानदेवावधि पूर्वानन्देषु वितृष्ण इति यावत् । चकारादेवंविधस्य पूर्वानन्देषु विरक्तस्या-

अथ ये शतमाजानदेवानामानन्दाः । स एको देव-
लोक आनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतः ॥३६॥
अथ ये शतं देवलोक आनन्दाः । स एको गन्धर्वलोक
आनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतः ॥३७॥
५ अथ ये शतं गन्धर्वलोक आनन्दाः । स एकः प्रजा-
पतिलोक आनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतः ॥३८॥
अथ ये शतं प्रजापतिलोक आनन्दाः । स एको ब्रह्म-
लोक आनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहत एष
ब्रह्मलोकः सम्राडिति हैनमनुशशासैतदमृतं, सोऽहं
१० भगवते सहस्रं ददाम्यत ऊर्ध्वं विमोक्षायैव ब्रूहीति ॥३९॥
स वा एष एतस्मिन्सम्प्रसादे । रत्वा चरित्वा दृष्ट्वैव
पुण्यं च पापञ्च पुनः प्रतिन्यायं प्रतियोन्याद्रवति

जानदेवानन्दसमान एवानन्द इति प्रदर्शितमित्यर्थः । एवमुत्तरत्रापि श्रोत्रियाणां पूर्वपूर्वानन्देषु वैराग्यमुत्तरोत्तरा-नन्देष्वभिलाषश्चेत्युभयं तत्तदानन्दसाम्यप्रयोजनं तत्तदुपासकानामिति द्रष्टव्यम् । श्रोत्रियस्य चेहानन्दोपदेश उपास्यो-
१५ पासकयोस्तुल्यानन्दप्रदर्शनद्वारा परब्रह्मविदस्तदानन्दलाभप्रदर्शनार्थमित्यभिप्रायः ॥३५॥

आजानदेवानन्दः शतगुणितः सन् उपास्येन्द्रादिनिवासभूमौ तदुपासके च एक आनन्द इत्याह—**अथ ये शतमाजानदेवानामानन्दा इति**। देवानां सृष्ट्यादिभूतानां यष्टव्यानां निसर्गसिद्धदेवापेक्षयाप्युत्कृष्टानां लोकः स्थानं तस्मिन् । शेषं पूर्ववत् ॥३६॥

देवलोकानन्दः शतगुणित एक एवानन्दो गन्धर्वलोके तदुपासके च भवतीत्याह—**अथ ये शतं देवलोक**
२० **आनन्दा इति**। व्याख्यानं पूर्ववत् । गार्गिब्राह्मणेऽपि देवलोकानां गन्धर्वलोकेष्वोतप्रोतभाव उक्तस्तथैवात्रापि देव-लोकानन्तर्यं गन्धर्वलोकस्य युक्तम् ॥३७॥

गन्धर्वलोकानन्द. शतगुणित एक एवानन्दो विराट्शरीरे तदुपासके च भवतीत्याह—**अथ ये शतं गन्धर्वलोक आनन्दा इति**। प्रजापतिलोको विराट् शरीरे । शेषं पूर्ववत् ॥३८॥

विराडानन्दः शतगुणीकृतो हिरण्यगर्भस्य तदुपासकस्य चैक आनन्द इत्याह—**अथ ये शतं प्रजापतिलोक**
२५ **आनन्दा इति**। ब्रह्मलोके हिरण्यगर्भात्मा तस्मिन्नित्यर्थः गन्धर्वादिष्वानन्दोत्कर्षापकर्षौ तत्र तत्र सत्त्वशुद्धितार-तम्याद् ब्रह्मानन्दमात्राविर्भावतारतम्यमपेक्ष्य निर्दिश्यते । यश्च श्रोत्रिय इत्यादि मानुषादिपर्यायेष्वपि योज्यम् । यतः श्रोत्रियत्वादियुतः सार्वभौमत्वादिसुखमनुभवति । अतः पूर्वेष्वपि योजयितुं युक्तम् । पूर्वं "सलिल एको द्रष्टे"त्युपक्रम्य "मात्रामुपजीवन्ती"त्यन्तेन कार्यकरणविनिर्मुक्तो यः प्रत्यगात्मा निरतिशयानन्दः परिपूर्णः प्रतिज्ञातः स एव "स यो मनुष्याणामि"त्यारभ्य "स एको ब्रह्मलोक आनन्द" इत्यन्तेन प्रतिपादितस्तस्येदानीमुपसंहारमाह—**एष ब्रह्मलोकः**
३० **सम्राडिति हैनमनुशशासैतदमृतमिति**। एष वितृष्णश्रोत्रियप्रत्यक्षो निरतिशयानन्दो ब्रह्मलोक एतदमृतमिदं मुख्यं मोक्षस्वरूपमिति । एवं जनकं ह किलानुशशास अनुशासितवान् उपदिष्टवानित्यर्थः। एवं मुनिकृतमुपसंहारं श्रुत्वा राजोवाचेत्याह—**सोऽहं भगवते सहस्रं ददाम्यत ऊर्ध्वं विमोक्षायैव ब्रूहीति**। यथोक्तरीत्या सम्यग्ज्ञाने निर्द्धारितेऽपि तन्निर्द्धारणात्प्रागिव यन्मुक्तये परं साधनं तस्मादूर्ध्वमपि मह्यं ब्रूहीति विद्यानिष्क्रयार्थं सहस्रदानप्रतिज्ञापूर्वकं राजा मुनिं पप्रच्छेत्यर्थः ॥३९॥

३५ तत्र तद्यथाऽस्मिन्नाकाश इति वाक्यमारभ्य एष ब्रह्मलोकः सम्राडिति हैनमनुशशासैतदमृतमित्यन्तं वाक्य-जातं सुषुप्तिविषयं तथा च सुषुप्तिप्रविष्ट आत्मा स इदानीं संसाररूपं दार्ष्टान्तिकप्रदर्शनार्थं जाग्रद्भूमिं प्रापयितव्यः सुषुप्तौ दार्ष्टान्तिकसम्बन्धस्यात्यन्तं स्पष्टयितुमशक्यत्वादित्यभिप्रेत्यात्मनः सुषुप्तिस्थानाज्जागरितस्थानप्राप्तिमाह—स

**बुद्धान्तायैव स यदत्र किञ्चित्पश्यत्यनन्वागतस्तेन**
**भवत्यसङ्गो ह्ययं पुरुष इत्येवमेवैतद्याज्ञवल्क्य सोऽहं**
**भगवते सहस्रं ददाम्यत ऊर्ध्वं विमोक्षायैव ब्रूहीति ॥४०॥**

**अत्र ह याज्ञवल्क्यो बिभयाञ्चकार । मेधावी राजा सर्वेभ्यो**
**मान्तेभ्य उदरौत्सीदिति स यत्राणिमानं न्येति जरया वोपतपता** ५
**वाऽणिमानं निगच्छति यथाऽऽम्रं वोदुम्बरं वा पिप्पलं**
**वा बन्धनात्प्रमुच्यतैवमेवायं शारीर आत्मैभ्योऽङ्गेभ्यः**
**सम्प्रमुच्य पुनः प्रतिन्यायं प्रतियोन्याद्रवति प्राणायैव ॥४१॥**

वा एष एतस्मिन्त्संप्रसादे रत्वा चरित्वे त्यादिना । सम्यक् प्रसीदत्यस्मिन्निति सप्रसादः सुषुप्तिस्थानं, तस्मिन्सम्प्रसादे "तीर्णो हि तदा सर्वाञ्छोकान् हृदयस्य भवति" "सलिल एको द्रष्टाद्वैतो भवती"ति चोक्तत्वात्तदवस्थान्तरापेक्षया १० सुषुप्तौ प्रसादातिशयाच्चेति भावः। बुद्धान्ताय जागरणायेत्यर्थः। अक्षरार्थः पूर्ववत् । अत्रापि स राजा विद्यानिष्क्रयार्थंसहस्रदानप्रतिज्ञापूर्वकं मुनिं पुनः पप्रच्छेत्यर्थः ॥४०॥

ततः किं वृत्तमित्यपेक्षायामाह—अत्र ह याज्ञवल्क्यो बिभयाञ्चकारेति । अत्र विमोक्षायैव ब्रूहीत्यस्मिन् वाक्ये श्रुते सति ह किल याज्ञवल्क्यो बिभयाञ्चकार भीतवानित्यर्थः। ननु कुतोऽस्य मुनेर्भयं किं वक्तृत्वासामर्थ्यादुत्तराज्ञानाद्वेत्याशङ्कायां नैतदुभयमस्य भयकारणं सर्वज्ञत्वात् । किन्त्वयं राजा मेधावान् कामप्रश्नव्याजेन मोक्षफलक- १५ ज्ञानलक्षणं मदीयं सर्वस्व ग्रहीष्यतीत्येतदेव भयकारणमित्येतदाह—मेधावी राजा सर्वेभ्यो माऽन्तेभ्य उदरौत्सीदितीति । यतोऽयं राजा मेधावी प्रज्ञाशाली अतो मा मामन्तेभ्य. प्रश्ननिर्णयावसानेभ्यः उत् अरौत्सीत् आवृणोत् पुनः पुनरवरोधं कृतवानित्यर्थः। इतिशब्दो भयहेतुकथनरूपश्रुतिवचनसमाप्त्यर्थः । जनको हि कामप्रश्नवरापदेशेन मम सर्वस्वं ग्रहीष्यति, अतो हेतोर्मया भेतव्यमेव न हि योग्येऽपि पात्रे मुक्तिफलं ज्ञान सहसोपदेष्टव्यमित्यभिप्रायः।

ननु किं ज्योतिरेवायमित्याद्युक्ता. प्रश्ना आदित्यज्योतिरित्यादिभिर्निर्णीताश्चेत्किमनिर्णीतमुद्दिश्यात उर्ध्वं विमो- २० क्षायैव ब्रूहीति राज्ञः प्रश्न इति चेत् । सत्यं । यद्यपि पूर्ववत् सहेतुकौ संसारमोक्षौ मुनिनोक्तौ तथापि तत्र या चात्मनः स्वप्नजागरणयोः सञ्चरणोक्तिः सा सर्वा तस्य लोकद्वयसञ्चरणरूपसंसारदृष्टान्तायैवोक्ता । यः पुनस्तस्य संप्रसादोक्तिः सा तु मोक्षदृष्टान्तार्थेत्येवममन्यत राजा । अतो दार्ष्टान्तिकजिज्ञासयाऽत ऊर्ध्वमिति प्रश्न उपपद्यते । तत्र "स यत्राणिमानं न्येती"त्यारभ्य "इति नु कामयमान" इत्यन्तो ग्रन्थ उभावन्तावनुसञ्चरतीत्यादौ सूचितसहेतुसंसाररूपदार्ष्टान्तिककथनपरो वोध्यः। "अथाकामयमान" इत्यारभ्य आ शारीरकब्राह्मणसमाप्तेः ससाधनमोक्षरूपदार्ष्टान्तिककथन [पर] २५ इति सामान्यसङ्गतिः। इदानीं स्वप्नाज्जागरणप्राप्तिवल्लोकान्तरं गच्छत्यात्मेत्यस्यार्थस्य सुखप्रतिपत्त्यर्थं तावदाह—स यत्राणिमानं न्येतीति । स प्रकृतः शिरः पाण्यादिमान्देहो यत्र यस्मिन्काले अणिमानमणोर्भावं कार्श्यं न्येति नितरामतिशयेनेति गच्छति प्राप्नोतीत्यर्थः। नन्वयमणिमानमपि कस्माद्धेतोर्गच्छतीत्यपेक्षायामाह—जरयावोपतपता वाऽणिमानं निगच्छतीति । जरया वा स्वयमेव कालपक्वफलवज्जीर्णोऽणिमान निगच्छति । उपतपता वोपतपतीत्युपतपज्ज्वरादिरोगस्तेनोपतपता वाऽणिमानं निगच्छति तेन ह्युपतपमानो विषमाग्नितया भुक्तान्नजरणाभावादन्नरसे- ३० नानुपचीयमानः पीडां कार्श्यमापद्यत एवेत्यर्थ.। जराभिभवो रोगादिपरिपीडनं कार्श्यापत्तिश्चेत्येतेऽनर्थाः शरीरवतोऽवश्यम्भाविन इत्येतदपि लोकप्रसिद्धं श्रुत्या वैराग्यार्थमेवोच्यत इति भावः। ततः कथं शरीरं विमुञ्चतीत्यपेक्षायां दृष्टान्तमाह—यथाऽऽम्रं वोदुम्वरं वेति । यथा दृष्टान्तो लोके आम्र फलमुदुम्वरं वा फल पिप्पल वा फलं वन्धनात् वृन्तेन सह फलं येन रसेन बध्यते स रसो वन्धनहेतुत्वाद्बन्धनम् । वृन्तमेव वा बन्धनम् । यस्मिन्फलं रसेन बध्यते तद्बन्धनं तस्माद्बन्धनात् प्रमुच्यते वाताद्यनेकनिमित्तवशाद्विच्छिद्यत इत्यर्थः। दार्ष्टान्तिकमाह—एवमेवायं ३५ शारीर आत्मैवैभ्योऽङ्गेभ्य इति । यथाऽयं दृष्टान्त एवमेवायं शारीर आत्मा शरीरे स्थूले भवः शारीर आत्मा लिङ्गोपाधिको लिङ्गदेह एवात्मप्रकाशित एभ्योऽङ्गेभ्यो देहावयवेभ्यश्चक्षुरादीन्द्रियस्थानेभ्यः संप्रमुच्य सम्यगेकीभावेन

**तद्यथाऽनः सुसमाहितम् । उत्सर्जद्यायादेवमेवायँ शारीर आत्मा प्राज्ञेनात्मनाऽन्वारूढ उत्सर्जद्याति ॥४२॥**

**तद्यथा राजानमायन्तम् । उग्राः प्रत्येनसः सूतग्रामण्योऽन्नैः-पानैरावसथैः प्रतिकल्पन्तेऽयमायात्ययमागच्छतीत्येवँ हैवंविदँ सर्वाणि भूतानि प्रतिकल्पन्त इदं ब्रह्मायातीदमागच्छतीति ॥४३॥**

प्रकर्षेण निर्लेपतया मुक्त्वा पुनर्वारंवारं प्रतिन्याय प्रतिगमनं यथागतं तथा प्रतियोनि प्रतिस्थानविशेषं प्रतिविद्या-कर्मपूर्वसंस्कारवशादाद्रवति गच्छतीत्यर्थः । यथा स्वप्नाज्जागरितं ततः स्वप्नमिति पुनः पुनः पुमान् प्रतिपद्यते तथैव पुनर्देहान्तरमिति प्रतिपादनार्थः पुनः शब्दः प्रतिन्यायमिति शब्दावयवार्थः पूर्ववत् । किमर्थमित्यपेक्षायामाह—**प्राणायैवेति** । प्राणाय प्राणव्यूहायैव प्राणानां स्थानविशेषविन्यासेनावस्थानाय देहान्तरग्रहणायेत्यर्थः ॥४१॥

इदानीं लोकाल्लोकान्तरं गच्छत्यात्मेत्यस्यार्थस्य सुखप्रतिपत्त्यर्थं दृष्टान्तमाह—**तद्यथा नः सुसमाहित-मुत्सर्जद्यायादिति** । तत्र दृष्टान्तो यथा लोके अनः शकटं सु सुष्ठु भृशं वा समाहितमुलूखलमुसलशूर्पभाण्डादिगृहोप-करणेनान्नाद्येन च सम्पन्नं भाराक्रान्त सदुत्सर्जत् नानाविध शब्दं कुर्वद्यायाद्गच्छेत् शाकटिकेनाधिष्ठितं सदित्यर्थः । दार्ष्टान्तिकमाह—**एवमेवायं शारीर आत्मेति** । यथाय दृष्टान्त एवमेवायं शारीरः शरीरे स्थूले भव आत्मा लिङ्गो-पाधिकः स्वप्नबुद्धान्ताविव जन्ममरणभ्यां कार्यकरणसयोगवियोगलक्षणाभ्यामिहलोकपरलोकानुसंचारी सन् प्राज्ञेन परेणात्मना स्वयंज्योतिःस्वभावेनाऽन्वारूढोऽधिष्ठितोऽवभास्यमान उत्सर्जत् मरणकाले मर्मकृन्तनसंभूतवेदना-पीडितमानसो हि हिक्कालक्षणं शब्दं कुर्वन् याति गच्छति । आत्मज्योतिषाऽवभास्यमाने लिङ्गे प्राणप्रधाने गच्छति सति तदुपाधिक आत्मा गच्छतीव न तु परमार्थतो निरुपाधिक आत्मा गच्छति ॥४२॥

नन्वस्य मुमूर्षोः कुतो देहान्तरं यदसौ गच्छेत् तत्कर्तुरभावात् । न तावत् स्वयं कृतं स्यात् देहेन्द्रियवि-युक्तस्य तन्निर्माणेऽसामर्थ्यात् । नचान्यकृतं राज्ञो गृहनिर्मातृभृत्यादिवदस्य देहनिर्मात्रन्याभावादिति शङ्कायां स्वकर्मो-पार्जितान्येव भूतानि तत्कर्मप्रेरितानि तद्विद्याकर्मपूर्वप्रज्ञानुसारतः शुभमशुभं वा देहं कृतकर्मोपभोगार्थं कृत्वा प्रतीक्षन्त इत्येवं समाधास्यमानेऽर्थे दृष्टान्तमाह—**तद्यथा राजानमायन्तमुग्राः प्रत्येनस इति** । उग्रा जातिविशेषाः यद्वा उग्रे हिंस्रे कर्मणि राज्ञा नियुक्ताः क्रूरकर्माण उग्राः प्रत्येनसः एनः पापं तद्वानिह एनः शब्देनोच्यते । तथा च एन एनः पापिनं पापिनं प्रति शासनार्थं नियुक्ताः क्रूरकर्माणः प्रत्येनस उग्रेभ्यो भिन्नाधिकारा इति यावत् । सूताः ब्राह्मण्यां क्षत्रियाज्जाताः संकरजातिविशेषा रथवाहनकोविदाः ग्रामण्यो ग्रामनेतारः सूता ग्रामण्यश्चेति द्वन्द्वः । तथा च तत्तत्र दृष्टान्तो यथा लोके राजानं राज्याभिषिक्तमायान्तमागच्छन्तमुग्राः प्रत्येनसः सूतग्रामण्यो राजकीया एतैराज्ञ आगमनं बुद्ध्वा तदागमनात्पूर्वमेवान्नैर्भक्ष्यभोज्यलेह्यचोष्यलक्षणैश्चतुर्विधैः पानैः क्षीरोदकादिभिरावसथैश्च प्रासाद-गोपुरतोरणाभिः प्रतिकल्पन्ते निष्पन्नैरेव प्रतीक्षन्त इत्यर्थः । किं कुर्वन्तः प्रतीक्षन्त इत्यत आह—**अयमायात्ययमा-गच्छतीति** । अयं राजा आयाति अयं आगच्छतीत्येवं वदन्तः सन्तः प्रतीक्षन्ते पुनरुक्तिरादरार्थेत्यर्थः । दार्ष्टान्तिक-माह—**एवंहैवंविदं सर्वाणि भूतानि प्रतिकल्पन्त इति** । यथाऽय दृष्टान्त एव ह किल एवंविद कर्मफलवेदितार संसारिणं सर्वाणि भूतानि पञ्चभूतानि शरीरकर्तॄणि करणानुग्रहीतॄणि चादित्यादीनि संसारिकर्मप्रयुक्तानि तैरेव कर्मफलोपभोगसाधनैः शरीरादिभिः प्रतिकल्पन्ते प्रतीक्षन्ते स्वात्मनि देहाद्याकारपरिणते आत्माभिव्यक्तिं काङ्क्षन्ते इत्यर्थः । तानि भूतानि कथं प्रतीक्षन्त इत्यपेक्षायामाह—**इदं ब्रह्मायातीदमागच्छतीति** । इदं ब्रह्म भोक्तृ कर्तृ वाऽस्माकमायात्यागच्छतीत्यादरेण वदन्तः प्रतीक्षन्त इत्यर्थः । संसारिणि जीवेऽप्यसंसारिब्रह्मशब्दप्रयोगस्तु तस्य वस्तुतो ब्रह्माभिन्नत्वज्ञापनार्थः । कथं वाऽस्य ब्रह्मास्मीति मतिर्भवेदिति तत्त्वबोधनार्थं वा श्रुत्या कृत इति भावः । अत्र शरीरारम्भकत्वमात्मनो वर्तते इत्येतावानेवांशो विवक्षितो न तु पूर्वं भूतानि राजभृत्यवद्देहमारभ्य प्रतीक्षन्ते पश्चादात्मा राजवत्तत्र गच्छतीत्यंशोऽपि शरीरारम्भकभूतैः सहैवात्मनो गमनमिति सिद्धान्तस्थितः प्रतीक्षणाद्युपन्या-सस्तु एवंविदमित्युक्तकर्मफलोत्क्रान्तिवेदनस्तुत्यर्थं इति ज्ञातव्यम् ॥४३॥

**तद्यथा राजानं प्रयियासन्तम् । उग्राः प्रत्येनसः सूतग्रामण्य उपसमा-
यन्त्येवꣳ हैवंविदꣳ सर्वे प्राणा उपसमायन्ति यत्रैतदूर्ध्वोच्छ्वासी भवति ॥४४॥**

**इति चतुर्थाध्याये प्रथमं ब्राह्मणम् ॥१॥**

अथ चतुर्थाध्यायस्य द्वितीयं ब्राह्मणम्

**स यत्रायꣳ शारीर आत्माऽबल्यन्नीत्य । संमोहमिव न्येत्यथैनमेते प्राणा अभिसमायन्ति स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामति ॥१॥** ५

एवमात्मनो वर्तमानदेहं हित्वा देहान्तरं जिगमिषतस्तन्निर्माणे सहायसंपत्तिरुक्ता । इदानीं गच्छन्तं संसारिणं केऽनुगच्छन्ति? अनुगच्छन्तोपि किं स्वातन्त्र्येण संसारिकर्मप्रयुक्तया वाऽनुगच्छन्तीति जिज्ञासायां संसारिकर्मप्रेरिता एव वागादयोऽनुगच्छन्तीति निर्णेतुं तावद्दृष्टान्तमाह—**तद्यथा राजानं प्रयियासन्तमुग्राः प्रत्येनसः सूतग्रामण्य उपसमायन्तीति** । तत्तत्र दृष्टान्तो यथा प्रयियासन्तं प्रकर्षेण यातुमिच्छन्तं राजानं पूर्वोक्ता उग्रादय उप समीपे सम्यगेकीभावेन १० आयन्त्यागच्छन्ति राज्ञा सह गमनार्थमनाज्ञप्ता एव केवलं तज्जिगमिषाभिज्ञा इत्यर्थः । दार्ष्टान्तिकमाह—**एवं हैवं विदं सर्वे प्राणाः उपसमायन्तीति** । यथायं दृष्टान्त एवं ह किल एवंविदं कर्मफलवेदितारं संसारिणं प्रयियासन्तं मरणकाले सर्वे प्राणा वागादय उपसमायन्ति अनाकारिता एव सन्तस्तत्कर्मप्रेरिताः सहगमनार्थमुप समीपे सम् एकीभावेन आयन्त्यागच्छन्तीत्यर्थः । एवमात्मना सह गच्छन्तः प्राणाः स्वाश्रयेणापञ्चीकृतभूतपञ्चकेन शरीरारम्भकीभूतेन सहैव गच्छन्ति आश्रयगमनमन्तरेणाश्रयिणो गमनासंभवादिति द्रष्टव्यम् । अचेतनानामपि रथादीनां चेतनाधिष्ठितानां प्रवृत्ति- १५ वद्वागादीनामपि भोक्तृकर्मनियन्त्रितानां प्रवृत्तित्वात् संभवतीति भावः । कस्मिन्काले इदं दुःखात्मकं गमनमित्य-पेक्षायामाह—**यत्रैतदूर्ध्वोच्छ्वासी भवतीति** । एतदिति क्रियाविशेषणम् । तथा च मृतावुपस्थितायामुदानाख्ये वायौ प्रबले सत्येतदूर्ध्वोच्छ्वासित्वं यथा स्यात्तथा यत्र यस्मिन्काले ऊर्ध्वोच्छ्वासी भवति तस्मिन्काले तद्गमनमित्यर्थः । मरणावसरे हि प्राणाः सर्वेषु प्राणिषु क्लेशमादधतीत्युत्सर्गः । शास्त्रोक्तोत्क्रान्तिवेदिनि तु पुरुषे न ते क्लेशाधायिनो ज्ञानमाहात्म्यादिति भावः ॥४४॥ २०

इति श्रीविद्यारण्यमुनिविरचितमाध्यन्दिनशाखीयबृहदारण्यकोपनिषद्दीपिकायां
चतुर्थाध्याये प्रथमं ब्राह्मणम् ॥१॥

प्रस्तुते संसारोपवर्णने अयं शारीर आत्मा एभ्योऽङ्गेभ्यः संप्रमुच्येत्यादिना साकल्येन संप्रमोक्षणादि सूत्रितम् । तदिदानीं कस्मिन्काले कथं वेति जिज्ञासायां सविस्तरं संसरणं वर्णयितव्यमित्याशयवती उत्तरा श्रुतिस्तदर्थं प्रवर्तते स यत्रायं शारीर आत्माऽबल्यं नीत्य संमोहमिव न्येत्यथैनमेते प्राणा अभिसमायन्तीति । तद्यथाऽनः सुसमाहितमित्यादौ २५ प्रकृतः सोऽयं शारीर आत्मा यत्र यस्मिन्काले जराद्युक्तहेतुभिरभिभवे सति अबल्यमिवाऽबलभावमिव दौर्बल्यमिव नीत्येति नितरामित्वा प्राप्य यदा संमोहमिव संमूढतामिवाविवेकतामिव नि नितरामेति याति । अथ तदा एनमात्मानं करणस्वामिनं प्रति एते प्राणा वागादयोऽभिसमायन्ति आभिमुख्येन सम्यक् निर्लेपतया स्वस्थानात् आयन्ति आगच्छन्ति करणानि सामस्त्येनात्माभिमुखान्यायान्तीत्यर्थः । ननु समोहमिवेत्यत्रैव श्रुत इवशब्दः कथमबल्यमित्य-त्रापि सबद्धो व्याक्रियते इति चेत् । शृणु । संमोहो हि करणानां स्वस्थानादादार्ढ्यवशात् स्वगोचरेष्ववशकतया ३० व्याकुलीभावः । स च मोहकार्यभूतदेहनिष्ठो न स्वात्मनिष्ठस्तस्य तु देहैक्याध्यासवशादात्मा संमोहं न्येतीत्येतदुपचर्यत इत्यात्मनि संमोहस्योपचरितत्वद्योतनार्थमिव शब्द प्रयुक्तः । अबल्यं नीत्येत्यत्र च ल्यप्प्रत्ययश्रुतेरबल्यस्य संमोहेन समानकर्तृकताऽवगता । अतस्तत्प्रत्ययादात्मनः कर्तृत्व वक्तव्यं तच्च तस्य साक्षान्नोपपद्यतेऽसंगत्वादमूर्तत्वादजर इत्यादि-श्रुतेरबल्यहेतुजराद्यभिभवासंबद्धत्वाच्च । तस्मात्तत्राप्युपचरितत्वं द्योतयितुमिवशब्दमाकृष्य व्याख्यानमुचितम् । उभयत्राप्यात्मनि कर्तृत्वस्य परोपाधिनिमित्तकत्वस्य तुल्यत्वादिति । कथं करणान्यात्मानमभिमुखतः सामस्त्येना- ३५ यान्तीत्यपेक्षायां तदागमनप्रकारमाह—**स एतास्तेजोमात्राः समभ्याददान इत्यादिना** । स प्रकृतोऽविद्वानात्मा तेजोमात्राः तेजःशब्देन भूतपञ्चकमुच्यते । मीयन्ते विषया याभिस्ता मात्रा इति व्युत्पत्तेर्विषयप्रकाशहेतुभूतानि चक्षुरादि-करणानि मात्राः अंशास्तेजोमात्राः रूपादिप्रकाशकानि करणानीति यावत् । ताः समभ्याददानः सम्यक् निःशेषमा-

**स यत्रैष चाक्षुषः। पुरुषः पराङ्पर्यावर्ततेऽथारूपज्ञो भवत्येकीभवति न पश्यतीत्याहुरेकीभवति न जिघ्रतीत्याहुरेकीभवति न रसयतीत्याहुरेकीभवति न वदतीत्याहुरेकीभवति न शृणोतीत्याहुरेकीभवति न मनुत इत्याहुरेकीभवति न स्पृशतीत्याहुरेकीभवति न विजानातीत्याहुः ॥२॥**

५ **तस्य हैतस्य। हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुष्टो वा मूर्ध्नो वाऽन्येभ्यो वा शरीरदेशेभ्यस्तमुत्क्रामन्तं प्राणोऽनूत्क्रा-**

भिमुख्येनाददान उपसंहरमाणो मृतिकाले हृदयमेव हृदयस्थां बुद्धिमेवान्ववक्रामत्यन्वागच्छति बुद्धावेवाभिव्यक्तविज्ञानो भवतीत्यर्थः। समभ्याददान इति शानच्प्रत्ययप्रयोगादात्मनः करणादानस्वात्मोपसंहारयोर्यौगपद्यं दर्शितम्। करणोपाधिमन्तरेणात्मनः स्वतः संकोचविकासयोरभावात्। हृदयमेवेत्येवकारः स्वप्नसुषुप्तिव्यावृत्यर्थः स्वप्ने हि
१० देहस्थानेकनाडीगतान् वासनात्मकान् विषयान् भुञ्जानस्तदनुसरन्नात्माऽवतिष्ठते। सुषुप्तौ च कारणब्रह्मात्मनाऽग्निरिव तप्तलोहं देहं संव्याप्य तिष्ठति तदुभयमुत्क्रान्तिकाले नास्तीति भावः ॥१॥

एवं हृदि करणोपसंहरणेन स्वात्मोपसंहरणे सति किं स्यादित्यपेक्षायां करणानुग्राहकनिवृत्तिनिमित्तकं रूपाद्यदर्शनं स्यादित्याह—**स यत्रैष चाक्षुषः पुरुषः पराङ्पर्यावर्ततेऽथारूपज्ञो भवतीति**। यो भोक्तृकर्मप्रयुक्तो यावद्देहधारणं चक्षुषोऽनुग्रहं कुर्वंश्चक्षुपि वर्तते आदित्यपुरुषः स एव चाक्षुषः पुरुष आदित्यांशः स्वप्रयोजक-
१५ भोक्तृकर्मक्षये सति यत्र यस्मिन्काले भोक्ताभोगेभ्यः पराङ्मुखः सन् स्वांशिभूतदेवतारूप प्रति पर्यावर्तते, आसमन्ताद्भावेन परिवर्तते अथ तदा मुमूर्षुररूपज्ञो भवति। रूपं न जानातीत्यर्थः। ननु तद्ग्रहानुग्राहकादित्यांशे गते चक्षुषोऽत्यन्ताभाव एव स्यादतश्चक्षुरभाव एव मुमूर्षोररूपज्ञत्वव्यवहारहेतुः स्यादितीमामाशंका परिहरति—**एकी भवति न पश्यतीत्याहुरिति**। चक्षुर्देवतादित्यांशस्य चक्षुष्यनुग्रहनिवृत्तिद्वारेणांशिदेवतयैक्ये सति यदा चक्षुर्लिङ्गात्मना एकीभवति तदा मुमूर्षुः पार्श्वस्था न पश्यतीत्याहुः। अतश्चक्षुषः स्वानुग्रहनिवृत्तौ स्वस्य हृदये
२० लिङ्गात्मन्येकीभाव एव मुमूर्षोररूपज्ञत्वव्यवहारः न तु चक्षुरभाव इत्यर्थ.। एवमेकीभवति न जिघ्रतीत्याहुरित्यादिना विजानातीत्याहुरित्यन्तं व्याख्येयम्। अत्र घ्राणेन्द्रियस्य "अथ प्राणमत्यवहदि"त्याद्युद्गीथब्राह्मणोक्तो वायुरनुग्राहकदेवता रसनस्य वरुणः सोमो वा। तस्याबात्मकत्वात्। वाचो वह्निः श्रोत्रस्य दिशः मनसश्चन्द्रमाः स्पर्शस्य वायुः बुद्धेः प्रजापतिरिति तत्तदिन्द्रियाणां क्रमेण देवता बोद्धव्याः। अत्र पाठक्रमो नोत्क्रान्तिक्रमाभिधायकः कस्यचित् श्रोत्राद्युत्क्रमणस्यैव प्रथमं दर्शनात्। अतोऽत्रानियत एव क्रम इति भावः। एवं मरणकाले रूपदर्शनराहित्ये देवतानिवृत्तिः
२५ करणानां हृदये लिङ्गात्मनैकीभावश्चेत्यर्थद्वयं साधकमित्युक्तम् ॥२॥

इदानी करणेषूपसंहृतेषु सत्सु निष्क्रमणसाधनीभूतो योऽन्तर्व्यापारो भवति तमाह—**तस्य हैतस्य हृदयस्याग्रं प्रद्योतत इति**। तस्य लिङ्गोपाधिकस्य ह किलैतस्य प्रकृतस्योपसंहृतकरणस्य मुमूर्षोर्हृदयस्य हृदयच्छिद्रस्य अग्रं नाडीमुखं प्रद्योतते प्रकाशते। यथा स्वप्नं प्रतिपित्सोर्जाग्रद्वासनादानरूपेण स्वेन भासा चैतन्यज्योतिषा च करणव्यतिरेकेण 'हृदये वासनाप्रकाशात्मकं ज्ञानं भवतीति ज्योतिर्ब्राह्मणे श्रुतं तथा मृतिदशायामपि तेजोमात्रादान-
३० कृतेन वासनारूपेणात्मचैतन्यज्योतिषा च प्राप्यदेहादिविषयबुद्धिवृत्त्यात्मना हृदयाग्रप्रद्योतनं भवति। तेन हृदयाग्रे प्रद्योतेन प्रद्योतिते एष आत्मा विज्ञानमयो लिङ्गोपाधिको निष्क्रामति लिङ्गगमनात्स्वयमपि तदवष्टम्भेन निर्गच्छतीत्यर्थः। ननूक्तप्रद्योतनेन कर्मार्जितं लोकं पश्यन्नात्मा मरणकाले हृदयात्केन मार्गेण निर्गच्छतीत्याकांक्षाया तमाह—**चक्षुष्टो वा मूर्ध्नो वेति**। यद्यस्य आदित्यलोकप्राप्तिनिमित्तं ज्ञानं कर्म वा स्यात्तदाऽसौ चक्षुष्टश्चक्षुषः सकाशान्निष्क्रामति। यदि ब्रह्मलोकप्राप्तिनिमित्तं ज्ञानं कर्मं वा स्यात् मूर्ध्नो द्वारा निष्क्रामति यथा यथा कर्म यथा
३५ ज्ञानमन्येभ्यः शरीरदेशेभ्यः श्रोत्रादिभ्यः सकाशान्निष्क्रामतीत्यर्थः। तस्मात्सत्कर्मैवानुष्ठेयमिति भावः। ननु निर्गच्छतां प्राणाना मध्ये कस्य प्राधान्यमित्यपेक्षायामाह—**तमुत्क्रामन्तं प्राणोऽनूत्क्रामतीति**। यथाकर्म यथाश्रुतं 'विज्ञानात्मानमुत्क्रामन्तं परलोकाय प्रस्थितं परलोकायोद्भूताभिप्रायमनुसृत्य प्राणः सर्वाधिकारिस्थानीयो राज्ञ इवाधिकारी राजानमनूत्क्रामति तं च प्राणमनूत्क्रामन्तमनुगच्छन्तं सन्तं सर्वे प्राणा वागादयः प्रधानस्य परिवारस्थानीया अनूत्क्रामन्तीत्यर्थः। न चात्रानुशब्दः क्रमावद्योतकः किन्तु विज्ञानमयादेः प्राधान्यद्योतकः तथा हि

**मति प्राणमनूत्क्रामन्त्ँ सर्वे प्राणा अनूत्क्रामन्ति संविज्ञानमेवान्ववक्रामति**
**स एष ज्ञः सविज्ञानो भवति तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च ॥३॥**

**तद्यथा तृणजलायुका। तृणस्यान्तं गत्वाऽऽत्मानमुपसँ्हरत्येवमेवायं**
**पुरुष इदँ् शरीरं निहत्याविद्यां गमयित्वाऽऽत्मानमुपसँ्हरति ॥४॥**

वागादयो हि प्राणा मुख्यप्राणाधीना इत्युद्गीथब्राह्मणे निर्णीतम्। अतो वागाद्यपेक्षया मुख्यप्राणस्य प्राधान्यं तथा ५
मुख्यप्राणोऽपि स्थित्युत्क्रमणादौ भोक्तुः कर्माधीनः। अतो मुख्यप्राणापेक्षया विज्ञानात्मनः प्राधान्यम्। इदं च
प्राधान्यमभिप्रेत्येहानुशब्दः प्रयुक्तः। लिङ्गावभास्यानां लिङ्गस्य चोत्क्रमणदेशकालभेदाभावान्न क्रमार्थोऽनु
शब्द इति भावः। एवं म्रियमाणस्यार्थसिद्धमाह—संज्ञानमेवान्ववक्रामतीति। यथोत्क्रमणात्प्राक् स्वकर्मानुसारि-
भाविदेहविज्ञानसहितो भवति तथोत्क्रान्त्यनन्तरं संज्ञानमेव विशेषज्ञानोद्भासितमेव गन्तव्यमन्ववक्रामति अनु-
गच्छतीत्यर्थः। तथा च दुःखहानिमिच्छता मरणकाले स्वातन्त्र्यार्थं तत्साधनोपनिषद्विहितशमादौ यत्नवता भवितव्यम्। १०
किं च सर्वशुभकर्मविधायित्वेन अशुभकर्मनिषेधित्वेन च शास्त्रस्येह कर्मभूमौ महानारम्भो दृश्यते। सोऽपि मृतिकाले
स्वातन्त्र्यार्थं पुण्योपचयकर्तव्यतां दर्शयति। अतस्तदपि यथाधिकारं कर्तव्यमिति प्रकरणार्थः। यदुक्तं हृदयाग्रप्रद्योतनं
तदेव स्पष्टयति—स एष ज्ञः सविज्ञानो भवतीति। स एष मुमूर्षुरात्मा ज्ञो ज्ञातृस्वभाव एव सन् सविज्ञानः पूर्व-
प्रज्ञाख्यभावनाप्रधानेन विज्ञानेन सह वर्तमानो भवति स्वप्ने इव विशेषविज्ञानवान् भवतीत्यर्थः। एतच्च सविज्ञानत्वं
कर्मवशादेवास्य भवति न स्वतन्त्रतः। स्वातन्त्र्येण हि सविज्ञानत्वे सर्वः कृतकृत्यः स्यान्नैव तु तल्लभ्येत। १५
तस्मात्कर्मणोद्भाव्यमानेन भाविदेहविषयकान्तःकरणवृत्त्याश्रितवासनात्मकविशेषज्ञानेन सर्वो लोकोऽन्तकाले
सविज्ञानो भवतीति भावः। पूर्वं शकटवत् संभृतसंभार उत्सर्जंद्यातीत्युक्तम्। तत्रेदानीं किं तस्य परलोकाय प्रस्थितस्य
पाथेयं शाकटिकसंभारस्थानीयं परलोकं गत्वा यद्भुङ्क्ते तत्र शरीराद्यारम्भकं च किमिति जिज्ञासायामाह—
**तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा चेति।** प्रमाणादप्रमाणाद्वा जातं सम्यक्ज्ञानसंशयमिथ्याज्ञानसाधारणं
संसारहेतुभूतं ज्ञानमात्रमिह विद्याशब्देनोच्यते न परमात्मज्ञानं तस्य संसारविरोधित्वात्। शास्त्रतो लोकतो वा २०
स्वभावतो वा यद्दृष्टादृष्टार्थरूपं वाङ्मनःकायसाध्यं तत्सर्वमिह कर्मशब्देनोच्यते। क्रियमाणस्य कर्मणस्तत्फलस्य च
भुक्तस्य यः संस्कारो हृदि संश्रितः सा पूर्वप्रज्ञोच्यते। इह विद्याकर्मणोः कार्यकोटित्वात्समस्य वचनं कृतम्।
पूर्वप्रज्ञायास्तदुद्भवे प्राधान्यार्थं पृथक्करणम्। प्राधान्य तस्या भुज्यमानस्य कर्मणः परिशेषरूपत्वाज्जायमानस्य
मूलत्वाच्च। न चैतस्याः कर्माद्यनुष्ठानादौ प्रयोजकत्वमेव नास्ति कुतः प्राधान्यमिति वाच्यं पूर्वप्रज्ञोद्भवानुद्भव-
निमित्तकस्य बहुतरस्य कार्यस्य दर्शनात्। तथा हि—केषाञ्चित् कासुचित् क्रियासु चित्रकर्मादिलक्षणासु विनैवेहाभ्यासं २५
जन्मत एवारभ्य कौशलं दृश्यते केषाञ्चित् पुनरत्यन्तसुगमास्वपि क्रियासु रज्जुनिर्माणादिलक्षणास्वकौशलं दृश्यते
अतः पूर्वप्रज्ञया विना कर्मणि तत्फलभोगे वा न कस्यचित् प्रवृत्तिरिति युक्तं तस्याः प्राधान्यम्। अथवा विद्याकर्मभ्यां
च पूर्वप्रज्ञाया उद्भवात्तयोः कारणकोटित्वात्समस्यवचनम्। इतरस्याः कार्यत्वात्पृथग्ग्रहणं सर्वथापि कार्यकारण-
कोट्योर्द्वैराश्यसिध्यर्थमित्थं निर्देशः। तस्मादेतत्त्रयं विद्याकर्मपूर्वप्रज्ञाख्यं शाकटिकसंभारस्थानीयं परलोकपाथेयमिति।
तथा च तं परलोकाय गच्छन्तं विद्या च कर्म च विद्याकर्मणी। उक्तरूपे समन्वारभेते सम्यगन्वारभेते अनुगच्छतः। ३०
पूर्वप्रज्ञा चोक्तलक्षणा समन्वारभते इति वाक्ययोजना। तस्मादेव विद्याकर्मपूर्वप्रज्ञाख्यं त्रयं देहान्तरप्रतिपत्त्युप-
भोगसाधनं; तस्माद्विद्याकर्मादि शुभमेव समाचरेच्छुभफलायेति प्रकरणार्थः ॥३॥

एवं संभृतविद्यादिसंभारो देहान्तरं प्रतिपद्यमानः कथं तत्प्रतिपद्यते इत्यत्रार्थे दृष्टान्तमाह—तद्यथा तृणजलायुका
तृणस्यान्तं गत्वात्मानमुपसंहरती। तत्तत्र उद्भूतवासनस्य म्रियमाणस्य तया वासनया देहान्तरसंचारेऽयं दृष्टान्तः—यथा
येन प्रकारेण तृणजलायुका तृणस्यान्तमवसानं गत्वा अर्थात्तृणान्तरमाश्रित्यात्मानमात्मनः पूर्वावयवमुपसंहरति ३५
अग्रिमावयवस्थाने इत्यर्थः। दार्ष्टान्तिकमाह—एवमेवायं पुरुष इदं शरीरं निहत्याविद्या गमयित्वाऽऽत्मानमुपसंहरतीति।
यथाऽयं दृष्टान्त एवमेवायं पुरुषो यः प्रकृतः संसारीदं शरीरं पूर्वोपात्तं निहत्य स्वप्नप्रतिपित्सुरिव पातयित्वाऽविद्यां
गमयित्वाऽचेतनं कृत्वाऽऽत्माभिमानत्यागेन प्रसारितया वासनयाऽर्थाच्छरीरान्तरं गृहीत्वाऽऽत्मानमुपसंहरति तत्रैवाह-

**तद्यथा पेशस्कारी । पेशसो मात्रामपादायान्यन्नवतरं कल्याणतरꣳ रूपं तनुत एव-मेवायं पुरुष इदꣳ शरीरं निहत्याविद्यां गमयित्वाऽन्यन्नवतरं कल्याणतरꣳ रूपं तनुते पित्र्यं वा गान्धर्वं वा ब्राह्मं वा प्राजापत्यं वा दैवं वा मानुषं वाऽन्येभ्यो वा भूतेभ्यः ॥५॥**

**स वा अयमात्मा । ब्रह्म विज्ञानमयो मनोमयो वाङ्मयः प्राणमयश्चक्षु-**
५ **र्मयः श्रोत्रमयः आकाशमयो वायुमयस्तेजोमय आपोमयः पृथिवीमयः**

मित्यात्मभावं प्रतिपद्यते न पूर्वदेहे इत्यर्थः । एतेनैतदपास्तं यद्वदन्ति **पौराणिकाः** तृणजलायुकादृष्टान्ताद्देहान्तरं गृहीत्वा पूर्वदेहं मुञ्चत्यात्मेति स्थूलदेहविशिष्टस्यैव परलोकगमनमिति । यस्माद्देहनिर्गमनात्प्रागवस्थायामेव यथोक्ता हृदयस्था वासना विद्याकर्मनिमित्तं भाविदेहं स्पृशति जीवोऽपि तत्राभिमानं करोति पुनस्तु पूर्वदेहं त्यजतीत्येतस्मिन्नर्थे तृणजलायुकादृष्टान्तः श्रुत्या दर्शितः । तस्मात्पूर्वदेहविशिष्टस्यैव परलोकगमनमित्ययुक्तमिति ॥४॥

१० एवं जलूकावद्वासनयैव शरीरान्तरं गच्छत आत्मनस्तदारम्भकाणि पञ्चभूतानीति "तद्यथा राजानमित्या"-दावुक्तम् । तत्र किं नित्योपात्तमेव भूतपञ्चकं पूर्वपूर्वदेहद्वयोपमर्द्देनान्यदन्यद्देहद्वयमारभते किं वाऽन्यदन्यदेव भूत-पञ्चकमन्यमन्यं देहं जनयतीति संदेहे तद्भूतपञ्चकोत्पत्तावपि कारणान्तरस्य मृग्यत्वान्मायायाः सर्वकारणत्वेऽपि तत्तद्देहारम्भसमये तत्तदुपादानभूतपंचकोत्पादकत्वे प्रमाणाभावात्प्रसिद्धदेहारम्भकभूतपंचकव्यक्तिभेदे माना-भावाच्च न द्वितीयः पक्षः संभवतीत्यभिप्रेत्य प्रथमपक्षमेवाङ्गीकारयितुं दृष्टान्तमाह—**तद्यथा पेशस्कारीति** ।
१५ तत्तत्र नित्योपात्तमेव मायामयं भूतपञ्चकं प्रतिदेहारम्भमुपादानमित्यस्मिन्नर्थे दृष्टान्तः—यथा लोके पेशः सुवर्णं तत्करोतीति पेशस्कारी सुवर्णकारः पेशसः सुवर्णस्य मात्रा पूर्वरचनामपादायापच्छिद्योपमृद्यान्यत्पूर्वस्माद्रचना-विशेषाद्भिन्नम् नवादपि नवं नवतरमभिनवतरं कल्याणादपि कल्याणं कल्याणतरमतिशोभनं रूपान्तरभूतं निर्मिनोतीत्यर्थः । दार्ष्टान्तिकमाह—**एवमेवायं पुरुष इदं शरीरं निहत्येत्यादिना** । रूपं संस्थानविशेषं देहान्तरं अन्यत्तु पूर्ववत् । किं तदारभ्यमाणं शरीरमित्यपेक्षायामाह—**पित्र्यं वा गान्धर्वं वा ब्राह्मं वा प्राजापत्यं वा दैवं वा मानुषं**
२० **वेति** । पितृभ्यो हितं पित्र्यं पितृलोकोपभोग्यमिति यावत् । एवं तत्तल्लोकोपभोगयोग्यं तत्तन्नामकं व्याख्येय, ब्रह्म हिरण्यगर्भः तल्लोकोपभोगयोग्यं ब्राह्मं प्रजापतिर्विराट् तल्लोकोपभोगभोग्यं प्राजापत्यं वा शरीरं तनुत इति प्रत्येक-मभिसंबध्यते । देहव्यक्तीनामानन्त्येन प्रत्येकं कथयितुमशक्यत्वादनुक्तं सर्वं सामान्यशब्देन गृह्णाति अन्येभ्यो वा भूतेभ्य इति । यथाकर्म यथाश्रुतमन्येभ्यो भूतेभ्यः प्रेततिर्यगादिभ्यः सकाशात् शरीरं तनुत इति संबध्यते । तस्मा-द्वर्तमानदेहारम्भकाण्येव भूतानि शरीरान्तरारम्भकाणि तद्वशाच्चास्य संसरणमिति भावः ॥५॥

२५ योऽयमात्मनः संसारसंबन्धः स वास्तवो न भवति किन्त्वौपाधिक एवेति तदुपाधीन् दर्शयितुमात्मनो वास्तवस्वरूपमाह—**स वा अयमात्मा ब्रह्मेति** । स प्रकृतः संसारी वैशब्दस्तत्स्मृत्यर्थः । अयमविद्यातत्कार्य-विनिर्मुक्तः स्वप्रकाशापरोक्ष आत्मा कूटस्थः साक्षी चिद्धातुरेवम्भूतः सोऽयमात्मा वै ब्रह्म अशनायाद्यतीतः परमात्मैवास्य संसारिणो वास्तवं रूपमित्यर्थः । ब्रह्मैव सन्नयमात्माऽविद्ययाऽब्रह्मवत् प्रतिपन्नः सम्यक् ज्ञानात्तद्ध्वंसे ब्रह्मैवावतिष्ठत इति भावः । इदानीं यत्प्रयुक्तं एवंविधब्रह्मात्मनो बन्धस्तानुपाधीनाह—**विज्ञानमयो मनोमयो वाङ्मयः प्राणमय**
३० **इति** । विज्ञानं बुद्धिस्तन्मयस्तत्प्रायः बुद्ध्यैक्याध्यासाद्धि तद्धर्मस्य कर्तृत्वादेरात्मन्यारोपोऽतस्तत्प्रायः । अस्मिन्प्रकरणे सर्वोऽपि मयट्प्रायार्थो न तु विकारार्थः । मनसः सन्निकर्षान्मनोमयः विज्ञानमयत्वं चित्तमयत्वोपलक्षणं मनोमयत्व-महङ्कारमयत्वोपलक्षणमिति च द्रष्टव्यम् । वदनव्यापारकाले वाङ्मयः स प्राणः पञ्चवृत्तिकस्तन्मयस्तत्प्रायः यथारूपदर्शनकाले चक्षुर्मयः शब्दश्रवणकाले श्रोत्रमयः । एतच्च रसनादेः कर्मेन्द्रियाणां चोपलक्षणपरमित्यर्थः । एवं प्राण-बुद्ध्यादिद्वारेण चक्षुरादिकरणमयः सन्नात्मा शरीरारम्भकभूतमयोऽपि भवतीत्याह—**आकाशमयो वायुमयस्तेजोमय**
३५ **आपोमयः पृथिवीमय इति** । आकाशशरीरारम्भे आकाशमयः । तथा वायव्यशरीरारम्भे वायुमयः । तैजसशरीरारम्भे तेजोमयः तथा वरुणलोकेष्वाप्यशरीरारम्भे आपोमयः पार्थिवशरीरारम्भे पृथिवीमयः । एवं कार्यकरणसंघातमयः सन्नात्मा तत्राभिव्यज्यमानान्तरात्मवृत्त्युपाधिकश्च भवतीत्याह—**क्रोधमयोऽक्रोधमयो हर्षमयोऽहर्षमय इति** । प्राप्ता-प्राप्तवस्त्वन्तरदर्शनेन तद्विषयाभिलाषः स्वविषयभोगावसानमन्तरेण केनचित्प्रतिहन्यमानश्चेद्द्रवति तदा क्रोधरूपेण परिणमते तन्मयः क्रोधमयः स क्रोधो यदि केनचिदुपायेन, निवर्तितः स्यात्तदा प्रसन्नं चित्तमक्रोधं तन्मयोऽक्रोधमय

**क्रोधमयोऽक्रोधमयो हर्षमयोऽहर्षमयो धर्ममयोऽधर्ममयः सर्वमयस्तद्यदेतदिदं-मयोऽदोमय इति यथाकारी यथाचारी तथा भवति साधुकारी साधुर्भवति पापकारी पापो भवति पुण्यः पुण्येन कर्मणा भवति पापः पापेनेति ॥६॥**

**अथो खल्वाहुः। काममय एवायं पुरुष इति स यथाकामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत्कर्म कुरुते यत्कर्म कुरुते तदभिसम्पद्यते इति ॥७॥** ५

इत्यर्थः। तथा इष्टवस्तुसंयोगनिमित्तो हर्षस्तन्मयो हर्षमयः इष्टवस्तुवियोगनिमित्तोऽहर्षस्तन्मयोऽहर्षमयः एवमक्रोधहर्षमयत्वे क्रोधाहर्षमयत्वे वाऽऽत्मनः क्रमेण पुण्यापुण्यमयत्वं भवतीत्याह—**धर्ममयोऽधर्ममय इति**। न हि क्रोधादिभिर्विना धर्माधर्मप्रवृत्तिरुपपद्यत इत्यर्थः। एवं धर्माधर्ममयः सन् सर्वप्रायो भवतीत्याह—**सर्वमय इति**। सर्वस्य व्याकृताव्याकृतस्य जगतो धर्माधर्मकार्यत्वेन तयोः फलं प्रतिपद्यमानस्तन्मयः सन् सर्वमयो भवतीत्यर्थः। ननु व्याकृतमयत्वस्य प्रत्यक्षसिद्धत्वेऽप्यव्याकृतमयत्वस्य तदभावात् कथं सर्वमयत्वं ज्ञातुं शक्यते इत्याकाङ्क्षायामपरोक्षेण १० कार्यलिङ्गेन तत्कारणीभूतः परोक्षोऽपि धूमाद्वह्निरिव ज्ञातुं शक्यत इत्यभिप्रेत्य सर्वमयत्वं साधयति—**तद्यदेतदिदं-मयोऽदोमय इतीति**। यत्किमपि कर्म शुभाशुभचेष्टारूपं साक्षादुपलभ्यते तदिदमित्येवोच्यते। तेन प्रत्यक्षेण लिङ्गेन भावनारूढं परोक्षं तत्कारणत्वेनानुमीयमानमद इत्युच्यते। तथा च यदा यस्मिन्समयेऽयमात्मा गृह्यमाणविषयादिमयः तदा इदंमय इत्यर्थः। तथा कार्येणानुमीयमानभावनात्मकविषयादिमयोऽदोमयः। तदिति पदं सर्वमयत्वसाधनोपसंहारार्थम्। तदिदं सर्वमयत्वं सिद्धमित्यर्थः। इदानीं विज्ञानमयादिवाक्यार्थं संक्षिप्याह—**यथाकारी**। यथाऽऽचरितुं [कर्तुं] १५ शीलमस्यास्तीति यथाकारी। यथाऽऽचरितुं शीलमस्यास्तीति यथा यथाचारी। स तथा तादृशो भवति करणचरणानुरूपो भवतीत्यर्थः। करणं नामविधिप्रतिषेधगम्या नियतक्रिया। चरणं त्वनियतक्रियेति विशेषः। एवं यथाकारीत्याद्यनूद्यतथा भवतीत्येतद्व्याचष्टे—**साधुकारी साधुर्भवति पापकारी पापो भवतीति**। साधुरुत्कृष्टः पितृगन्धर्वादिलोके भवति। पापो निकृष्ट एव स्थावरादौ भवति जायत इत्यर्थः। ननु साधुकारीत्यादौ ताच्छील्यप्रत्ययश्रवणाद्भूयोभ्यासादेव पुण्यपापसम्बन्धो भवति न सकृदनुष्ठानादित्याशङ्काया प्राप्ताया सकृदनुष्ठानादपि पुण्यपापसम्बन्धो भवत्येवेति दर्शयितुं २० शङ्काबीजं ताच्छील्यप्रत्ययं विहाय पुण्यः पुण्येन कर्मणा भवति पापः पापेनेतीति पुण्यः पुण्यवान् पापः पापवान्। तथा च पुण्यपापकर्माभ्यासे तत्फलातिशयो भवतीत्येवंपरतैव ताच्छील्यप्रत्ययोपादानस्य न तु सकृदनुष्ठानात्तत्फलसम्बन्धाभावपरतेत्यर्थः। यत एवमुत्कृष्टापकृष्टयोनिप्राप्तौ पुण्यापुण्ययोरेव साधारणकारणत्वमितरेषां तु साधारणत्वमतः सर्वदा पुण्यमेवानुष्ठेयं नेतरदिति भावः ॥६॥

पुण्यपापयोरेव संसारासाधारणकारणत्वमिति यदिदमुक्तं तत्पूर्वपक्षीकृत्येदानीं कामस्यैवासाधारणकारणत्व- २५ मिति सिद्धान्तमभिप्रेत्याह—**अथो खल्वाहुः काममय एवायं पुरुष इतीति**। पूर्वपक्षानन्तरं सिद्धान्तप्राप्तेर्योग्यताद्योतकोऽथोशब्दः। खलु निश्चये। स्थूलदृश एके आचार्याः पुण्यापुण्यमयोऽयं पुरुष इत्याहुः कथयन्ति। अन्ये पुनर्बन्धमोक्षकुशलाः अयं पुरुषः खलु काममय एव कामो विषयाशा तन्मय इत्याहुः। न चैवं सत्यविद्यायाः संसारहेतुत्वानुपपत्तिः तस्याः स्वतस्तद्धेतुत्वानुपपत्तेरिष्टत्वात् सहकार्यपेक्षायां तु कामस्यैव प्राधान्यात्। काम एवासाधारणं कारणं संसारस्य उक्तयोः पुण्यापुण्ययोरपि तदभावेऽनुदयात्। ३०

अकामतः क्रिया काचिद्दृश्यते नेह कस्यचित्। यद्यद्धि कुरुते किञ्चित्तत्तत्कामस्य चेष्टितम् ॥

इति मनुस्मरणात्। "कामान्यः कामयते मन्यमानः स कामभिर्जायते" इति कामस्यैवासाधारणकारणत्वाद्युक्तं काममय एवेत्यवधारणमित्यर्थः। कया प्रनाड्या कामस्य संसारकारणत्वमित्यपेक्षायामाह—**स यथा कामो भवति तथा क्रतुर्भवति यथा क्रतुर्भवति इत्यादिना**। स आत्मा सामान्यतः काममयः सन् यथाकामो यादृशेन कामविषयेण युक्तो भवति तथाक्रतुः क्रतुर्नामाध्यवसायो यदनन्तरा क्रिया वर्तते। काम एव ईषदभिलापमात्रे यस्मिन्विषयेऽभिव्यक्तो ३५ भवति स तस्मिन् विषयेऽविहन्यमानः स्फुटीभवन् क्रतुत्वमापद्यते तन्मय आत्मा भवतीति यावत्। स यथा क्रतुर्भवति यादृशकर्मविषयेण क्रतुना युक्तो भवति तत्कर्म कुरुते। यद्विषयः क्रतुः स्वयं तत्फलसिद्धये तद्योग्यं कर्म

**तदेष श्लोको भवति । तदेव सक्तःसह कर्मणैति लिङ्गं मनो यत्र निषक्तमस्य । प्राप्यान्तं कर्मणस्तस्य यत्किंचेह करोत्ययम् । तस्माल्लोकात्पुनरैत्यस्मै लोकाय कर्मण इति नु कामयमानोऽथाकामयमानो योऽकामो निष्काम आत्मकाम आप्तकामो भवति न तस्मात्प्राणा उत्क्रामन्त्यत्रैव समवनीयन्ते ब्रह्मैव सन्ब्रह्माप्येति ॥८॥**

५ निर्वर्तयतीति यावत् । यत्कर्म कुरुते तदभिसम्पद्यते तदभीष्टं फलमभिसम्पद्यते प्राप्नोति । तस्मात् सर्वमयत्वे काममयत्वं हेतुरित्यर्थः ॥७॥

ब्राह्मणोक्तेऽर्थे मन्त्रसम्मतिमाह—**तदेष श्लोको भवति तदेव सक्तःसह कर्मणैतीति** । तत्तत्र ब्राह्मणोक्तेऽर्थे एषोऽर्द्धश्लोको मन्त्रो भवति । अस्योद्भूताभिलाषस्य लिङ्गं सप्तदशावयवात्मकं मनःप्रधानत्वान्मनःशब्दवाच्यम् । यद्वा प्रमात्रादिसाक्षी येन साक्ष्येण मनसा लिङ्ग्यते तन्मनो लिङ्गमिति । तल्लिङ्गं मनो यत्र यस्मिन् गन्तव्ये फले १० निषक्तं निश्चयेन सक्तं भवति तन्मनः तद्गन्तव्यफलरूपापन्नं सत्कर्मणा फलारम्भकीभूतकर्मणा सह तदेव गन्तव्यं फलमिति गच्छतीत्यर्थः । तथा च यदभिलाषाद्यत्कर्मकृतवांस्तत्र मनोऽभिषङ्गवशात्तेन कर्मणा सहास्य तत्फलप्राप्तिरिति वाक्यार्थे स्थिते कामो मूलं संसारस्येत्यवगतम् । तथा च "पर्याप्तकामस्य कृतात्मनश्च इहैव सर्वे प्रविलीयन्ति कामाः" इति श्रुत्यन्तरादवाप्तपरमपुरुषार्थस्य शुद्धबुद्धेर्जीवन्मुक्तस्य ब्रह्मविद इहैव जीवदवस्थायामेव कामविनाशश्रवणादर्थाद्विद्यमानान्यपि कर्माणि कामहीनस्य निष्फलप्रसवानीत्यवगतेः काम एव संसारे हेतुरिति भावः । ननु १५ कामप्रधानः संसरति चेत्कर्मफलभोगानन्तरं कामाभावान्मुक्तिरेव भविष्यतीत्याशङ्कायामाह—**प्राप्यान्तं कर्मण इत्यादिना** । अयं फलासक्तः कामी इहास्मिन्लोके यत्किञ्चित्कर्म करोति तस्य कर्मणो भोगेनान्तमवसानं प्राप्य कर्मफलभोगसमाप्तिं गत्वा तस्माल्लोकाद्भुक्तभोगात्पुनरैति आगच्छति अस्मै लोकाय कर्मणे कर्मप्रधानत्वादस्य लोकस्य कर्मण इति विशेषणम् । अस्मिन्मनुष्यलोके कर्मकरणार्थमित्यर्थः । तस्मादेवं फलासक्तस्सन्कर्म कृत्वा तत्फलभोगार्थं गच्छति ततश्च पुनः कर्मकरणार्थमागच्छतीत्येवंभूतसंसरणप्रवाहस्य विना ब्रह्मज्ञानमनुच्छेदान्न कर्मफलभोगावसाने २० मुक्तिः शक्येति भावः । इदानीमज्ञानकारणककाम एव संसारासाधारणकारणमित्युक्तमुपसंहरति—**इति नु कामयमान इति** । इत्येवं नु खलु कामयमानः संसरतीति शेषः । एवमियता प्रबन्धेनावस्थाद्वयदृष्टान्तस्य दार्ष्टान्तिकभूतः संसारः सकारणको दर्शितः । इदानी योषिदालिङ्गनेनेव पुंसः सुषुप्तिं प्राप्तस्यात्मनः कामादिहीनं रूपं मोक्षदृष्टान्तभूतं यदतिच्छन्दोवाक्येनोक्तं तस्य दार्ष्टान्तिकभूतं सोपायं मोक्षस्वरूपमाह—**अथाकामयमान इत्यादिना** । अथशब्दः संसारप्रकरणविच्छेदार्थः । यस्मात् कामयमान एवैवं संसरति तस्मादकामयमानो विद्वान्न क्वचित्संसरति न २५ तस्मात्प्राणा उत्क्रामन्तीति वचनात्कामाभावे तदुत्थसंसरणहेतुकर्माभावाच्च । किं तर्हि ब्रह्मैव सन् ब्रह्माप्येतीत्यग्रिमेणान्वयः । कुतोऽकामयमानः स्यादित्यत आह—**योऽकाम इति** । बाह्येषु शब्दाद्यर्थेषु दृष्टश्रुतिपूर्वकाः कामा यस्य न सन्ति सोऽकाम इत्यर्थः । अकामोऽपि कुतो हेतोरित्यत आह—**निष्काम इति** । अतिग्रहशब्दिताः शब्दादिवासनात्मका अन्तस्था ये कामास्ते निर्गता यस्मात्स निष्कामः । अतोऽकामपदेन बाह्या निरस्यन्ते । निष्कामपदेन तद्धेतुभूता आन्तरा इत्यपौनरुक्त्यमित्यर्थः । कथं च निष्कामत्वं भवतीत्यपेक्षायामाह—**आत्मकाम इति** । आत्मैव ३० सर्वमिति ज्ञानेन सर्वशब्दादिप्रपञ्चस्यात्ममात्रत्वे प्रतिपन्ने स्वातिरिक्तकामयितव्यराहित्यमात्मकामत्वम् । अतः शब्दादिसाध्यसुखस्याप्यात्ममात्रत्वादात्मैव कामो यस्य स आत्मकाम इत्यर्थः । अत एव आप्तकाम इति । आप्ताः कामा येन स आप्तकामः आत्मकामत्वादाप्तकामत्वमित्यर्थ. । अर्थादात्मैकत्वज्ञानाभावे अकामयमानत्वासम्भवात् संसरो दुर्वार इत्यात्मज्ञानाय यतितव्यमिति सूचितं भवति । किमेवंविधस्य भवतीत्यपेक्षाया मोक्ष एव भवतीत्याह—**न तस्मात्प्राणा उत्क्रामन्त्यत्रैव समवनीयन्ते ब्रह्मैव सन् ब्रह्माप्येतीति** । तस्मादकामयमानाद्विदुषः सकाशात्प्राणा वागादयो नोत्क्रा-३५ मन्ति कामाभावेन कर्माभावे सति गमनकारणाभावात् किन्तु तप्तलोहनिक्षिप्तोदकबिन्दुवदत्रैव ब्रह्मस्वरूपे एव समवनीयन्ते सम्प्रलीयन्ते इत्यर्थः । स वा अकामयमानो जीवन्नेव ब्रह्मैव सन् सुषुप्त्यवस्थायामिवापरिच्छिन्ननिर्विशेषाद्वैतालुप्तचिज्ज्योतिःस्वभाव एव सन् ब्रह्माप्येति प्राप्नोति । नित्यप्राप्तत्वादेवाप्येति शब्देन प्राप्तिरूपचर्यत इत्यर्थः ॥८॥

**तदेष श्लोको भवति । यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत इति ॥९॥ तद्यथाऽहिनिर्ल्वयनी । वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदं शरीरं शेतेऽथायमनस्थिकोऽशरीरः प्राज्ञ आत्मा ब्रह्मैव लोक एव सम्राडिति होवाच याज्ञवल्क्यः सोऽहं भगवते सहस्रं ददामीति होवाच जनको वैदेहः ॥१०॥** ५

इदानी काममयः संसरतीति ब्राह्मणोक्तेऽर्थे यथा पूर्वप्रकरणे मन्त्रोदाहरणं कृतं तथाऽत्राप्युक्तेऽर्थे मन्त्रमुदाहरति—**तदेष श्लोको भवति यदा सर्वे प्रमुच्यन्त इति**। तत्तस्मिन्नुक्ते मोक्षतत्साधनेऽर्थे एप श्लोको मन्त्रो भवति। अस्यात्मकामस्य ब्रह्मविदो यदा यस्मिन्काले विद्यापरिपाकावस्थायां हृदि श्रिता ये कामास्तृष्णात्वेन व्यवह्रियमाणा द्विविधेन्द्रियप्रवृत्तिहेतुभूताः सन्तो जगज्जनका वासनात्मकास्ते सर्वे समस्ताः प्रमुच्यन्ते समूलतो विशीर्यन्ते न तु सुषुप्ताविव कारणात्मनाऽवतिष्ठन्ते। अथातो हेतोः समूलकामवियोगलक्षणात्तदा मर्त्यो मरणधर्माऽपि सन्नमृतोऽ- १० मरणधर्मा भवतीति यावत्। ततश्च कामवियोगादमृतो भवतीति निर्देशसामर्थ्यादविद्यालक्षणा अनात्मविषयाः कामा मृत्यवो भवन्तीत्यवगम्यते। किं तदमृतत्वं क्व वा भवतीत्यत उच्यते—**अत्र ब्रह्म समश्नुत इति**। अत्रास्मिन्नेव शरीरे स्थितः सन् ब्रह्म समश्नुते ब्रह्मीभूतो भवति ब्रह्मभावापत्तिलक्षणो मोक्ष एवामृतत्वं तच्च ज्ञानिशरीरे एव कामनिवृत्त्याऽभिव्यज्यते स्वतः सिद्धमेवेत्यर्थः ॥९॥

ननु विदुषः सर्वात्मविद्ययाऽऽत्ममात्रत्वेन प्राणादिषु बाधितेष्वप्यसौ देहे चेद्वर्तते ततोऽस्य पूर्ववद्देहित्वाद्विद्या- १५ वैयर्थ्यमेवेत्याशङ्कायां तन्निराकरणार्थं तावद्दृष्टान्तमाह—**तद्यथाऽहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीतेति**। तत्तत्र दृष्टान्तो यथा लोकेऽहिः सर्पो यस्या त्वचि नितरा लीयते सा सर्पत्वगहिनिर्ल्वयनी। सा मृता अहिदेहवियुक्ता वल्मीके सर्पाश्रये प्रत्यस्ता प्रतिक्षिप्ता सर्पेणानात्मभावेन परित्यक्ता सती शयीत वर्तेत सर्पश्च यथा तत्र निर्गमनप्रवेशौ कुर्वन्नपि निर्ममाहंकृतिको वर्तेत इत्यपरो दृष्टान्तोऽत्रार्थाद्विवक्षित इत्यर्थः। निर्मोकदृष्टान्तस्य तावद्दार्ष्टान्तिकमाह—**एवमेवेदं शरीरं शेत इति**। यथायं दृष्टान्त एवमिदं शरीरं स्थूलं सूक्ष्मं च सर्पस्थानीयेन मुक्तेन परित्यक्तं मृतमिव २० सम्बन्धवर्जितं शेते विद्यया सम्बन्धहेतोरविद्यायाः समुच्छेदादिति भावः। ननु दृष्टान्ते सर्पतन्निर्मोकयोर्भेदेनावस्थितिवद्दार्ष्टान्तिकेऽपि विद्वत्तद्देहयोस्तथा स्यादन्यथा देहदेहिभावासिद्धेरिति चेत्, न, यथा अहिनिर्मोकयोः पूर्ववदिदानी मिथः सम्बन्धो नास्ति तद्वद्विद्वत्तद्देहयोरपि पूर्ववन्मिथ्याभिमानाख्यः सम्बन्ध इदानी नास्तीत्येतावन्मात्रार्थस्यात्र विवक्षितत्वादित्यभिप्रेत्य सर्पदृष्टान्तस्य दार्ष्टान्तिकमाह—**अथायमनस्थिकोऽशरीरः प्राज्ञ आत्मा ब्रह्मैव लोक एव सम्राडिति होवाच याज्ञवल्क्य इति**। अथशब्दो हेत्वर्थः। अथ सकारणस्य देहस्य, त्यागादित्यर्थः। अयमात्मा २५ आत्मस्वरूपापन्नो विद्वाननस्थिकः अस्थीनि मरणधर्मकशरीरगतमज्जास्थिस्नावमेदःसृक्त्वचामुपलक्षणम्। न विद्यते अस्थि मरणधर्मकं मज्जादिकं यस्मिन्सोऽनस्थिकः अमृत इत्यर्थः। तथा चाग्निरहस्ये श्रूयते (१०.१.३)। "उभयं हैतदग्रे प्रजापतिरास मर्त्यं चैवामृतं चेति प्रकृत्य अथ पुरीषन्निवपति तद्धास्यैतदस्थ्येव तद्धैतन्मर्त्यं मर्त्यं ह्यस्थी"ति। अमृतः कुतो हेतोरित्यत आह—अशरीरः अविद्यादृष्ट्या शरीरस्थो स्वदृष्ट्याऽशरीर एव। अत एव प्राज्ञः साक्षी। स चैतद्विशेषणविशिष्टो विद्वान् ब्रह्मैव अशनायादिवर्जितः परमात्मैव। ब्रह्मशब्दस्य कमलासनादिविषयत्वं वारयितुं ३० लोक एव स्वप्रकाश एवेति विशेषणं बोध्यम्। याज्ञवल्क्यो मुनिः सम्राडिति राजानं सम्बोध्य इत्येवं ह किल उवाच उक्तवान्। तथा चास्यैकरसब्रह्मभूतस्य विदुषो देहसम्बन्धहेत्वज्ञानध्वस्तौ पूर्ववच्छरीराभिमानाभावान्न विद्यावैयर्थ्यमिति नहि तत्र शङ्केति भावः। यः पूर्वं मुनिना विमोक्षार्थः कामप्रश्नो वरो दत्तः स यद्यपि सहेतुको बन्धमोक्षार्थलक्षणो दृष्टान्तपूर्वको जनकयाज्ञवल्क्याख्यायिकारूपधारिण्या श्रुत्या सविस्तरो निर्णीतस्तथापि मोक्षसाधनात्मज्ञानहेतुसंन्यासस्य पूर्वमसकृदुक्तत्वेपि ज्ञानोत्पत्त्यन्तरङ्गभूतशमादीनां तत्रानुक्तत्वात्तैः सह भूयोऽपि सन्यासो विद्यासाधनत्वेन ३५ विधातव्य इति वक्तव्यशेषसम्भवात् सहस्रदानमेव राजा स्वजिज्ञासानिवृत्त्यभावं सूचयन् प्रतिजज्ञे न सर्वस्वमित्यभिप्रेत्याह श्रुतिः—**सोऽहं भगवते सहस्रं ददामीति होवाच जनको वैदेह इति**। सोऽहमित्थं विमोक्षितवते भगवते सहस्रं ददामीत्यादि पूर्ववत्। नन्वेवं वक्तव्यं शेषोऽस्ति चेद्राजा पूर्ववदत ऊर्ध्वं विमोक्षायैव ब्रूहीति कस्मान्नापृच्छदिति चेत्। सत्यं शास्त्रे आलोच्यमाने ज्ञानादन्यन्न साक्षान्मोक्षसाधनमीक्ष्यते। संन्यासादेस्तु तद्द्वारैव साधनत्वादिति विवक्षन्

तदप्येते श्लोकाः ।

अणुः पन्था विततः पुराणो माँ स्पृष्टोऽनुवित्तो मयैव ।
तेन धीरा अपियन्ति ब्रह्मविद उत्क्रम्य स्वर्गं लोकमितो विमुक्ताः ॥११॥

तस्मिञ्छुक्लमुत नीलमाहुः पिङ्गलँ हरितं लोहितं च ।
एष पन्था ब्रह्मणा हानुवित्तस्तेनैति ब्रह्मवित्तैजसः पुण्यकृच्च ॥१२॥

विमोक्षायेति नापृच्छत् । विदुषो हि निःशेषक्लेशोपशमात्मकस्वरूपावस्थितस्य स्वतः सिद्धः संन्यासादिर्न ज्ञानसाधनम् । किन्तु "संन्यासेन तनुं त्यजेदिति" स्मृतेः प्रतिपत्तिकर्मानुष्ठानमिति न तत्र जिज्ञासा । विविदिषोः पुनः "त्यजतैव हि तज्ज्ञेयं त्यक्तुः प्रत्यक्परं पदमि"ति वचनाज्ज्ञानार्थत्वेन संन्यासः सपरिकरो वक्तव्य इति युक्तं तदर्थं सहस्रदानमिति भावः ॥१०॥

अथाकामयमान इत्यादिब्राह्मणेन "यदा सर्वे प्रमुच्यन्त" इति मन्त्रेण च ज्ञानादेव मुक्तिरिति यः संक्षिप्तोऽर्थस्तस्यैव विवरणार्थाः श्लोका मन्त्राः सन्तीति शेषः । अणुः स्थूलादिनिखिलविशेषातीतत्वात् विततो वितीर्णो विश्रुत इति यावत् दुर्विज्ञेयत्वादनन्तात्मावगाहित्वाद्वा । पुराणः चिरन्तनो नित्यश्रुतिप्रकाशितत्वात् एवंभूतः पन्था ऐकात्म्यज्ञानलक्षणो मार्गः स मां स्पृष्टः शास्त्राचार्योक्तितो मामनुप्राप्तः । यद्वा तृतीयार्थे द्वितीया मामितिमया स्पृष्टो लब्ध इति यावत् । न केवलं लब्धः किन्तु मयैव चानुवित्तः । अनुवेदनं नाम विद्यायाः परिपाकापेक्षया फलावसानतालक्षणा निष्ठा प्राप्तिर्भुजेरिव तृप्त्यवसानता । तथा चानुवित्तः उक्तलक्षणां निष्ठां प्रापितः एवकारो मयानुवित्त एवेत्ययोगव्यवच्छेदार्थः सर्वथा नान्ययोगव्यवच्छेदार्थः । "तद्यो यो देवानां प्रत्यबुध्यते"ति श्रुत्या ब्रह्मविद्यायाः सर्वसाधारणत्वोक्तेरिति भावः । एवकारोऽत्रान्ययोगव्यवच्छेदको न भवतीत्येतदेवाह—**तेन धीरा अपियन्ति ब्रह्मविद उत्क्रम्य स्वर्गलोकमितो विमुक्ता इति** । न केवल मयैवायं मार्गोऽनुवित्तः किन्त्वन्येऽपि ये ब्रह्मविदः प्रज्ञावन्तो धीराः सदा निर्द्वन्द्वा जीवन्त एव विमुक्ताः सन्त इतोऽस्माच्छरीरादुत्क्रम्य शरीरपातानन्तरमेव ते न ब्रह्मविद्यामार्गेण स्वर्गं परमानन्दलक्षणं मोक्षं प्रकरणात् न तु त्रिविष्टपलक्षणं लोकं स्वप्रकाशमपियन्ति अपिगच्छन्तीत्यर्थः ॥११॥

यथोक्तेऽस्मिन्मोक्षमार्गेऽविद्योपप्लुताशया यथारुचि विचित्राणि दर्शनानि कल्पयन्तीत्याह—**तस्मिञ्छुक्लमुतनीलमाहुरिति** । तस्मिन् ब्रह्मज्ञानलक्षणे मोक्षमार्गे शुक्लमतिसशुद्धं ब्रह्मेत्याहुः आहुरिति सर्वत्रानुषङ्गः । अपरे शरद्व्योमवद्ब्रह्म नीलमिति । अन्ये तु वह्निज्वालावत् पिङ्गलमिति । केचित् पुनर्वैदूर्यमणिवद्धरितं ब्रह्मेति । अपरे तु जपाकुसुमवल्लोहितमिति । चकारो ब्रह्मणः शब्दस्पर्शादितादात्म्यकल्पनासमुच्चयार्थः । प्राप्यस्यादित्यादिब्रह्मणः शुक्लादिरूपत्वमुपेत्य तत्प्राप्तिमार्गेऽर्वाग्दृशो विवदन्ते इत्यर्थः । वस्तुतस्तूपासनामार्ग एवैवंविधो न मोक्षमार्गः । तथा हि उपासको हि नाडीद्वारा आदित्यादिलोकं प्रति निष्क्रामति नाडीनां च शुक्लस्य नीलस्य पिङ्गलस्य हरितस्य लोहितस्य पूर्णा इति नाडीखण्डेऽनेकवर्णात्मकत्वस्योक्तत्वादुपास्यस्यादित्यादिब्रह्मणः शुक्लादिविशिष्टो मार्ग उपासनामार्ग एव । न तु ब्रह्मविद्यालक्षणो मोक्षमार्गो निर्गुणश्रुतिविरोधात् । तस्मादाप्तकामतया निर्गुणब्रह्मात्मविषयज्ञानमेव मोक्षमार्ग इत्येतदाह—**एष पन्था ब्रह्मणा हानुवित्त इति** । यथा तैलादिविषये प्रदीपस्य ज्वलनानुपपत्तौ तेजोमात्रे निर्वाणमिष्यते तथा स्थूलसूक्ष्मात्मकस्य सर्वस्यैव कामस्य ज्ञानात्प्रक्षये सति प्रवृत्त्यनुपपत्तौ अत्रैव प्रत्यगात्ममात्रे कार्यकरणानामेकीभावेनावस्थानमित्येष पन्था ज्ञानमार्गो ब्रह्मणा परमात्मस्वरूपेण ब्राह्मणेन त्यक्तसर्वैषणेनानुवित्तः पूर्वोक्तनिष्ठां प्रापित इत्यर्थः । एवं विप्रतिपत्तिनिराकरणपुरःसरं मोक्षमार्गं निश्चित्य तेन धीरा अपियन्तीत्यत्रोक्तं निगमयति—**तेनैति ब्रह्मवित्तैजसः पुण्यकृच्चेति** । अन्योऽपि ब्रह्मवित्तेन ब्रह्मविद्यामार्गेण मोक्षमेति प्राप्नोति ब्रह्मवित्त्वे हेतुस्तैजस इति तेजसि शुद्धसत्त्वे भवस्तैजसः क्षपिताशेषकल्मषतया आत्मप्रवणबुद्धिरिति यावत् । तैजसत्वे हेतुः पुण्यकृदिति । इष्टापूर्तलक्षणं पुण्यं करोतीति पुण्यकृच्चकार उक्तहेतुहेतुमद्भावक्रमसमुच्चयार्थो न ज्ञानकर्मणोः समसमुच्चयार्थः तदुक्तं "कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते" इति च । "किंच अर्थस्य मूलं निकृतिः क्षमा च कामस्य रूपं च वपुर्वयश्च । धर्मस्य यागा दिदया दमश्च मोक्षस्य सर्वोपरमः क्रियाभ्य" इति चतुर्विधे पुरुषार्थे साधनभेदोपदेशाच्च । नात्र समुच्चयोऽभिमत इत्यर्थः ॥१२॥

अन्धं तमः प्रविशन्ति येऽसम्भूतिमुपासते ।
ततो भूय इव ते तमो य उ सम्भूत्याँ रताः ॥१३॥
असूर्या नाम ते लोकाः । अन्धेन तमसाऽऽवृताः ।
ताँस्ते प्रेत्यापिगच्छन्त्यविद्वाँसोऽबुधाः जनाः ॥१४॥
तदेव सन्तः । तदु तद्भूवामो न चेदवेदी महती विनष्टिः । ५
ये तद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवोपयन्ति ॥१५॥
आत्मानं चेद्विजानीयात् । अयमस्मीति पूरुषः ।
किमिच्छन्कस्य कामाय शरीरमनुसञ्चरेत् ॥१६॥
यस्यानुवित्तः प्रतिबुद्ध आत्मा । अस्मिन्सन्देहे गहने प्रविष्टः ।
स विश्वकृत्स हि सर्वस्य कर्ता तस्य लोकः स उ लोक एव ॥१७॥ १०

प्रस्तुत ज्ञानमार्गस्तुत्यर्थं मार्गान्तरं निन्दति—अन्ध तमः अदर्शनात्मकं तमो मोहादिपदवाच्यं संसारनियामकं प्रविशन्ति प्रपद्यन्ते । के ? ते ये असम्भूतिं सम्भवनं सम्भूतिः सा यस्य कार्यस्य सा सम्भूतिस्तस्या अन्या असम्भूतिर्देवता-प्रकृतिः कारणमव्याकृताख्यं तामसंभूतिं अव्याकृताख्या प्रकृतिं कारणमविद्याकामकर्मबीजभूतामदर्शनात्मिकामुपासते अनुवर्तन्ते इति यावत् । ततस्तस्मादपि भूय इव बहुतरमिव ते तमः प्रविशन्ति । के ? ये उ तु सम्भूत्यां कार्ये ब्रह्मणि हिरण्यगर्भाख्ये रताः आसक्ता उपनिषदर्थानपेक्षिण इति यावत् । अतो युक्तमात्मज्ञानहीनानां तेषामविद्याऽऽयतन- १५ मित्यर्थः ॥१३॥

नन्वेवं यदि तेऽदर्शनलक्षणं तमः प्रविशन्ति तर्हि का क्षतिरित्याशङ्कायामाह—असुर्या नाम ते लोका इति । ये लोका अन्धेन तमसाऽऽवृता व्याप्तास्ते लोका असुर्यास्तीव्रदुःखसमन्विता नाम प्रसिद्धाः असुषु रमन्ते इति व्युत्पत्तेः परमात्मभावमद्वयमपेक्ष्य देवादयोऽप्यसुरास्तेषां स्वभूता असूर्या निकृष्टा इति यावत् । ताल्लोकान् ते प्रेत्य मृत्वा अपि-गच्छन्ति । अप्ययमेकीभावः तं प्राप्नुवन्ति के ? ये अविद्वांसः न केवलं सामान्यतोऽविद्वांसः किन्तु अबुधा आत्माव- २० गमवर्जिता. जनाः प्राकृता जनधर्मिणो वा । अतो दुःखप्राप्तेः सुखहानिरेव क्षतिरित्यर्थः ॥१४॥

न केवलं ब्रह्मविदो विद्यया कृतकृत्यत्वे श्रुतिप्रतिपत्तिरेव किन्तु स्वानुभवसम्वादोऽप्यस्तीत्याह—तदेव सन्तस्तदु तद्भूवाम इति । तदेव तत्रैव प्रसिद्धेऽनेकानर्थसङ्कुले देहे एवाज्ञानदीर्घनिद्राऽऽहिताः सन्तो वर्तमाना वयं तदु तदानीमेव कथंचित् कल्मषक्षयात्तद्ब्रह्म भवामो वर्त्तामहे । अहो कृतार्था वयमित्यभिप्रायः । ब्रह्मभावज्ञाने सति कृतार्थत्वं श्रुत्यनुभवाभ्यामुक्त्वा तदभावे दोषमाह—न चेदवेदी महती विनष्टिरिति । यद्ब्रह्मतत्त्वं न चेद्विदितवन्त- २५ स्तर्ह्यहमवेदी अविद्वान् भवेयमिति शेषः । वेदनं वेदः सोऽस्यास्तीति वेदो न वेदी अवेदी । तदा महती अनन्तपरिमाणा जन्ममरणादिलक्षणा विनष्टिर्विनशनं स्यादिति शेषः । एवं पूर्वार्द्धेनोक्तमेवार्थमुत्तरार्द्धेन प्रपञ्चयति—ये तद्विदुरमृतास्ते भवन्तीति । यथा वयं ब्रह्मविदो भूत्वाऽस्माद्विनशनाद्विमुक्ता एवं ये तद्ब्रह्म विदुस्तेऽप्यमृता मुक्ता भवन्ति अथ पुनर्ये एवं न विदुस्ते इतरेऽब्रह्मविदो जननमरणादिलक्षण दुःखमेवोपयन्ति प्रतिपद्यन्ते न कदाचिदपि दुःखान्निवर्तन्त इत्यर्थः ॥१५॥

तदेव मार्गान्तरनिन्दाव्याजेनात्मज्ञानमार्गः स्तुतः पुनरपि तत्स्तुत्यर्थमेव तन्निष्ठस्य कामक्लेशराहित्यं दर्श- ३० यति—आत्मानं चेद्विजानीयादिति । "अयमात्मा ब्रह्म" "अहं ब्रह्मास्मि" "तत्त्वमसी"त्यादिवाक्यात् पुरुषः पुमानयं परमात्माख्योऽहमेवेत्यात्मानं हृत्स्थमशनायाद्यतीतं च तत्कथंचित्सत्वशुद्धिनो यः जानीयात्तर्हि स किमिच्छन् सर्वस्य वस्तुजातस्यात्ममात्रत्वात्स्वरूपव्यतिरिक्तं किं वस्तु फलभूतमिच्छेन्न किञ्चिदपीत्याक्षेपार्थः किंशब्दः । तदेव प्रकटयति कस्य कामाय कस्मै फलाय शरीरमनुसञ्चरेत् अनुसञ्ज्वरेत् शरीरोपाधिकृतदुःखमनु दुःखी स्यात् शरीराद्भिन्नत्वेनात्मनः साक्षात्कृतत्वान्न तद्दुःखेन विद्वान् दुःखी स्यादित्यर्थः ॥१६॥ ३५

न केवलमात्मविचाररसिकस्य कायक्लेशराहित्यं किन्तु कृतकृत्यता चास्तीत्याह—यस्यानुवित्तः प्रतिबुद्ध आत्मेति । अस्मिन् प्रसिद्धे देहे तेजोवन्नादिभिर्भूतैः सदिह्यते समुपचीयते इति सन्देहो देहस्तस्मिन्सन्देहे । कथंभूते आध्यात्मिकादीनामर्थानामतिसङ्कराद्गुणप्रधानभावेन पृथक्करणायोग्यतया गहने दुर्विज्ञेये जन्मभूयंवत्प्रविष्ट आत्मा

यदैतमनुपश्यति । आत्मानं देवमञ्जसा ।
ईशानं भूतभव्यस्य न तदा विचिकित्सति ॥१८॥
यस्मिन्पञ्च पञ्चजनाः । आकाशश्च प्रतिष्ठितः ।
तमेव मन्य आत्मानं विद्वान्ब्रह्मामृतोऽमृतम् ॥१९॥
५ यस्मादर्वाक्संवत्सरः । अहोभिः परिवर्तते ।
तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम् ॥२०॥
प्राणस्य प्राणम् । उत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो ये मनो विदुः ।
ते निचिक्युर्ब्रह्म पुराणमग्र्यं मनसैवाप्तव्यं नेह नानास्ति किञ्चन ॥२१॥

यस्य ब्राह्मणस्य यद्वा येन ब्राह्मणेनानुवित्तोऽनुलब्धः प्रतिबुद्धः अहमस्मि परं ब्रह्मेत्येवं प्रत्यगात्मत्वेन साक्षात्कृतश्च
१० वर्तते इति शेषः । स ब्राह्मणो विश्वकृद्विश्वस्य कर्ता कृतकृत्यः पूर्ण इत्यर्थः । ननु विश्वकृत्त्वं परप्रयुक्तमेव स्यादित्यत आह—तस्य लोक इति । तस्य ब्राह्मणस्य सर्वोऽपि प्रपञ्चो लोक आत्मेत्यर्थः । ननु तर्हि लोकलोकिनोर्भेद एव स्यादित्यत आह—स उ लोक एवेति । सोऽपि ब्राह्मणः सर्वस्य प्रपञ्चस्य लोक एवात्मैवेत्यर्थः । तथा च येन ब्राह्मणेन प्रत्यगात्मा प्रतिबुद्धतयाऽनुवित्तः स न संसारी किं तु पर एव यस्माद्विश्वकर्त्ता सर्वस्य चात्मा सर्वं चास्यात्मा तस्माद्यः परमात्मा सर्वप्रकारभेदरहितः पूर्णतया वर्तते स एवाहमस्मीत्यात्माऽनुसन्धातव्य इति तात्पर्यार्थः ॥१७॥

१५ किं च विदुषो विहिताकरणादिप्रयुक्तं भयं नास्तीति विद्यां स्तोतुं मन्त्रान्तरमाह—यदैतमनुपश्यतीति । यदा पुनः कथंचित्परमकारुणिकं कश्चिदाचार्यं प्राप्य ततो लब्धप्रसादः सन्ननु पश्चादेत हृदयस्थमात्मानं देवं द्योतनात्मकम् । यद्वा यथा कर्मानुरूपं सर्वप्राणिकर्मफलानां दातारं देवं भूतभव्यस्य कालत्रयस्येशानं स्वामिनमञ्जसा साक्षात्पश्यति अहं ब्रह्मास्मीत्यात्मत्वेन विजानाति । तदा तदानीं न विचिकित्सति न संशयानो भवति अहमस्मि सर्वात्मा परं ब्रह्मेति निश्चितमतिर्भवतीत्यर्थः । "विचिकित्सा तु संशय" इत्यमरः । यद्वा न विचिकित्सति न निन्दति सर्वस्यात्म-
२० मात्रत्वदर्शने निन्दनीयस्य स्वस्य परस्य वाऽभावादित्यर्थः । यद्वा तद्दर्शनानन्तरं स्वात्मानमकृतार्थत्वेन न गर्हयतीत्यर्थः ॥१८॥

इदानीं तस्यात्मनोऽमृतत्वं सर्वाधिष्ठानत्वेन साधयति—यस्मिन्पञ्च पञ्च जना इति । यस्मिन्ब्रह्मणि पञ्च संख्याताः पञ्चजना पञ्चजनसञ्ज्ञकाः गन्धर्वाः पितरो देवा असुरा रक्षांसि आकाशान्ताः प्रतिष्ठिताः । यद्वा प्राणादयो वाक्यशेषादिति न्यायेन प्राणश्चक्षुः श्रोत्रमन्नं मनश्चेति पञ्च जनाः प्रतिष्ठिताः आकाशश्च यस्मिन्सूत्रमोतं च प्रोतं च
२५ सोऽव्याकृताख्यश्च यस्मिन्प्रतिष्ठितः "एतद्वै"तदक्षरं गार्गि यस्मिन्नाकाश ओतश्च प्रोतश्चेत्युक्तत्वात् । तमेवात्मानं ब्रह्मामृतं विद्वानहममृत इति मन्ये जाने । मर्त्यत्वस्याऽज्ञानमात्रकृतत्वात्तस्य च नष्टत्वादित्यर्थः ॥१९॥

नन्वीश्वरोऽपि कालावच्छिन्नोऽतो न कालत्रयं प्रत्यस्येश्वरत्वसम्भव इत्यत आह—यस्मादर्वाक्संवत्सर इति । अयं संवत्सराख्यः स्वावयवैरहोरात्रैः कार्यजातं परिच्छिन्दन् यस्मादीश्वरादर्वागेव परिवर्तते न तमपि परिछिनत्ति । एवमीश्वरस्य समस्तविक्रियाहेतुकालातिक्रमणोक्त्या जन्मादिविकाराः प्रतिषिद्धा वेदितव्याः । एवंभूतं तदीश्वरात्मकं
३० ज्योतिष्मन्तश्च ते प्रसिद्धाः तस्मादायुः कामेनायुर्गुणेन ब्रह्मोपास्यमित्यर्थः ॥२०॥

पूर्वतरस्मिन् मन्त्रे पञ्चजनप्रतिष्ठाभूतब्रह्मविदमृतो भवतीत्युक्तम् । कथं पुनरेवंविधब्रह्मविद्योदयः स्यादित्यपेक्षायां तदुदयप्रकारमाह—प्राणस्य प्राणमिति । प्राणनादिक्रिया कुर्वन्हि प्राणः स्वस्यानात्मत्वजडत्वाभ्यां सत्तास्फूर्त्योः स्वतोऽसम्भवान्नित्यसिद्धस्वप्रकाशात्मज्योतिषा भास्यमान एव स्फूर्त्तिं कुरुते । अतस्तस्य ब्रह्म प्राणस्यापि प्राणं तथा चक्षुरादीनामपि ब्रह्मप्रकाशशक्त्यनधिष्ठितानां काष्ठलोष्टादिसमत्वेन दर्शनादिक्रियायामस्वातन्त्र्यात्तद्व-
३५ भासकमात्मज्योतिः चक्षुषोऽपि चक्षुरित्यादितुल्यं व्याख्यानम् । उतशब्दोऽप्यर्थः । तथा च विमतानि केनचिदधिष्ठितानि वर्तन्ते करणत्वाद्वास्यादिवदित्येवं प्राणादिव्यापारानुमितास्तित्वं तद्विलक्षणत्वेन शुद्धं प्रत्यगात्मानं ये विदुस्ते ब्राह्मणा अग्र्यमग्रे भवम् । अत एवं पुराणं चिरन्तनं ब्रह्म निचिक्युः निश्चयेन ज्ञातवन्तः । अत एव त्वंपदार्थपरिशोधन-

**मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति । मनसैवानुद्रष्टव्यमेतदप्रमयं ध्रुवम् ॥२२॥ विरजः पर आकाशात् । अज आत्मा महान्ध्रुवः । तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः । नानुध्यायाद्बहूञ्छब्दान्वाचो विग्लापनं हि तदिति ॥२३॥ स वा अयमात्मा । सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति**

प्रकारेण यथोक्तब्रह्मविबोधयः स्यादिति भावः । एवंविधब्रह्मावाप्तौ किं साधनमित्यपेक्षाया श्रवणादिसंस्कृतं मन एव यथोक्तप्रकारब्रह्मधीसाधनमित्याह—**मनसैवाप्तव्यमिति** । उक्तलक्षण ब्रह्म मनसैवाप्तव्यं प्राप्यं न साधनान्तरेणेत्यर्थः । यद्यपि "यतो वाचो निवर्तन्ते अप्राप्य मनसा सहे"त्यादिना मनसैवाप्तव्यमित्युच्यते । अत एव वृत्तिव्याप्यं ब्रह्मेत्यभ्युपगच्छन्ति शास्त्रतः । नन्वेवमाप्त्राप्तव्यादिभावेन भेदः स्यादित्याशङ्कायामाह—**नेह नानास्ति किञ्चनेति** । इहावाप्तिविषये ब्रह्मणि किञ्चिदपि नाना भेदोऽविद्याध्यारोपणव्यतिरेकेण परमार्थतो नास्तीत्यर्थः ॥२१॥

इदानी भेददर्शननिन्दया नानात्वाभावं द्रढयति—**मृत्योः स मृत्युमाप्नोति** । इवशब्दोऽभिनयार्थः । य इह ब्रह्मणि नानेव पश्यति स मृत्योर्मरणात् पुनर्मृत्युमाप्नोति जन्ममरणसंसारचक्रे परिभ्रमतीत्यर्थः । द्वैताभावे कथमनुद्रष्टव्यमित्यपेक्षायामाह—**मनसैवानुद्रष्टव्यमिति** । यस्मादेतादृशं ब्रह्म तस्मान्मनसैव श्रवणादिकमनुद्रष्टव्यं साक्षात्कर्त्तव्यं यस्मादेकरसं तस्मादेतद्ब्रह्माप्रमयमप्रमेयम् । तथा ध्रुवं नित्यमविचालीत्यर्थः ॥२२॥

उक्तं ध्रुवत्वं सोपस्करमुपपादयति—विरजः पर आकाशादिति । धर्माधर्मादिलक्षणं रजो विगतं यस्मात्स विरजः अत अकाशादव्याकृताख्यात्परो व्यतिरिक्तः । अत एवाजो न जायत इत्यजः जननिषेधाच्चास्ति-विपरिणमते वर्द्धते अपक्षीयते विनश्यतीत्युक्ताः सर्वे भावविकारा निषिद्धा वेदितव्यास्तेषां जन्मादित्वात् । एवंभूत आत्मा किंपरिमाण इत्युच्यते महान् परिमाणतो महत्तमः "यस्मात्परं नापरमस्ति किञ्चिद्यस्मान् नाणीयो न ज्यायोऽस्ति किञ्चि"दिति श्रुत्यन्तरात् । तस्माद्ध्रुवो अविनाशीत्यर्थ. । यथोक्तं वस्तुदर्शनं निगमयति-**तमेव धीरो विज्ञायेति** । धीरो धीमान्ब्राह्मणस्तमेव नित्यशुद्धत्वादिलक्षणमात्मानं विज्ञाय पदार्थशुद्धिं सम्पाद्य शास्त्रत उपदेशतश्च प्रज्ञां वाक्यार्थज्ञानलक्षणामशेषशोकाकाङ्क्षाशान्तिरूपां परमपुरुषार्थहेतुभूतां तत्त्वमस्यादिवाक्यवशात् कुर्वीत सम्पादयेदित्यर्थः । बहुशास्त्राध्ययने दोषमाह—**नानुध्यायाद्बहूञ्छब्दानिति** । बहून्प्रभूतान्शब्दान्नानुध्यायान्नानुचिन्तयेत् । बहुशब्दाध्ययननिषेधहेतुः वाचो विग्लापनं हि तदिति । हि यस्माद्बहुशब्दाध्ययनं वाचो वागिन्द्रियस्य विग्लापनं विशेषेण ग्लानिकरं श्रमजनकं तस्माद्बहुशब्दान्नानुध्यायेदित्यर्थः । इतिशब्दो मन्त्रोदाहरणसमाप्त्यर्थः । अत्र बहुशब्दाभ्यासप्रतिषेधसामर्थ्यादात्मयाथात्म्यावबोधहेत्वल्पशब्दाभ्यासोऽनुज्ञायते । अन्या वाचो विमुञ्चथ ओमित्येवं ध्यायथ आत्मानमित्याथर्वणश्रुतेरिति भावः ॥२३॥

पूर्वं "तदेव सक्तस्सह कर्मणैती"त्यादिमन्त्रेण "स यत्रायं शारीर आत्माऽबल्यमि"त्यादिब्राह्मणेन च कामादिहेतुसहितो मुमुक्षूणां हेयत्वेनोक्तो "यदा सर्वे प्रमुच्यन्त" इत्यादिमन्त्रेण अथाकामयमान इत्यादिब्राह्मणेन च तेषामेवाभिलषितः सम्यग्धीहेतुको मोक्ष उक्तः । पुनश्च तत्स्वरूपमणुः पन्था वितर इत्यादिश्लोकैः प्रपञ्चितम् । इदानी विविदिषावाक्येन ब्रह्मात्मनि कृत्स्नस्य वेदस्य काम्यराशिवर्जितस्य विनियोगकथनार्थमस्मिन्नध्याये उक्तं सफलमात्मज्ञानम्-स वा अयमात्मेत्यारभ्य एषां लोकानामसम्भेदायेत्येवमन्तेनानूद्यते । सशब्देन ज्योतिर्ब्राह्मणोक्तविज्ञानमयलक्षणं जीवं परामृश्य तमेव वैशब्देन स्मारयित्वा तस्य विरजः पर आकाशादज आत्मेत्यव्यवहितोक्तेन परेणात्मनैक्यमितिशब्देन श्रुतिर्निदिशतीति "स वा अयमि"ति पदत्रयसमुदायार्थः । इत्यमुक्तमात्मज्ञानमनूद्य तत्फलमाह—**सर्वस्य वशीत्यादिना** । सर्वस्य ब्रह्मेन्द्रादेर्वशी सर्वो हि ब्रह्मेन्द्रादिगणोऽस्य वशे वर्त्तत इति यावत् । "एतस्य वा अक्षरस्य प्रशासन" इत्यादिनोक्तत्वात् । सर्वस्यैतद्वशवर्त्तित्वे हेतुः यतः सर्वस्य ब्रह्मेन्द्रादेरीशानः स्वामी । ननु यथा बलवत्तरामात्यादीन्प्रति राजपुत्रस्य राजादिकृतमेवेशत्वं तद्वदेवास्यापि स्यादित्यतः सर्वस्याधिपतिरिति विशेषणम् । अधिपतिरधिष्ठाय पालयिता महाराजवत्स्वतन्त्र इति यावत् । अधिपतित्वादीशानः ईशत्वाच्च वशीत्यर्थः । किं च सर्वमिदं प्रशास्ति यदिदं किञ्चेति । यत्किञ्चिदिदं सर्वं जगत् प्रशास्ति । नन्वेवं शासनाल्लोकवत् धर्माधर्मसंयोग ईश्वरात्मनः स्यादित्यत आह—स न साधुना कर्मणा भूयानिति । सोऽधिपतिर्विद्वान् साधुना शास्त्रविहितेन कर्मणा पूर्वावस्थातो भूयान्न भवति न वर्द्धते असाधुना शास्त्रप्रतिषिद्धेन कर्मणा प्रागवस्थातो नो एव

**यदिदं किञ्च स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयानेष भूताधिपतिरेष लोकेश्वर एष लोकपालः स सेतुर्विधरण एषां लोकानामसंभेदाय ॥२४॥**

**तमेतं वेदानुवचनेन विविदिषन्ति । ब्रह्मचर्येण तपसा श्रद्धया यज्ञेनानाशकेन चैतमेव विदित्वा मुनिर्भवत्येतमेव प्रव्राजिनो लोकमीप्सन्तः प्रव्रजन्ति ॥२५॥**

५ कनीयानल्पीयान् अल्पतरो न भवत्येवेत्यर्थः। पालनादिकर्तुः तज्जन्यधर्मादिफलसम्बन्धः कथं नास्तीत्यभिप्रेत्य
विद्वांसं विशिनष्टि-एष भूताधिपतिरेष लोकेश्वर इति। यस्मादेष विद्वान् भूताधिपतिर्भूतमात्रस्य स्थावरजङ्गमात्म-
कस्याधिपतिस्तत्सत्तानियामकः कार्याणां कारणाधीनसत्ताकत्वात्। तथा एष ईश्वरो लोकेश्वरः लोकस्य धर्मादेरपि
ईशितुं शीलमस्य स लोकेश्वरो धर्मादेरपि नियमनशीलः इत्यर्थः। तस्मान्न कामकर्माविद्यापरतन्त्राविद्वज्जीववदस्य
धर्मादिसम्बन्धोऽस्ति। तथा एष लोकपालः लोकान् जनिमत्कार्याणि भूतानि तत्स्फूर्तिरूपेण तत्र तत्र चेतनारूपेण च
१० पालयतीति लोकपालः। किं च यथोदकप्रवाहविष्टम्भकः सेतुस्तद्वदेव स परमात्मा सेतुः किंविशिष्टः विधरणो
विधारण यथा सेतुः सीमादिव्यवस्थां विधारयति तथा वर्णाश्रमादिव्यवस्थाया विधारयितेत्यर्थः। किमर्थम्? एषां
भूरादिब्रह्मलोकान्ताना लोकानामसम्भेदाय। सम्भेदः सांकर्यं तदभावाय। एवं राजवैलक्षण्यान्नास्य तद्धर्मादिसम्बन्ध
इत्यर्थः ॥२४॥

यदर्थमेषाऽस्मिन्नध्याये 'वाचो' विग्लापनं हि तदि'ति श्लोकान्तेन 'विहिता सफला ब्रह्मविद्याऽनूदिता तं
१५ काम्यैकदेशवर्जितस्य कृत्स्नस्य कर्मकाण्डस्य विद्यायां परम्परया विनियोगं दर्शयति—**तमेत वेदानुवचनेन 'वविदिषन्ति
ब्रह्मचर्येण तपसा श्रद्धया यज्ञेनानाशकेन चेति**। त्रयाणामपि वर्णानामध्ययनादावधिकृतत्वादत्र द्विजमात्रमधिकारि
बोद्धव्य वेदो मन्त्रब्राह्मणात्मकोऽनूच्यते गुरूच्चारणानन्तरं पठ्यते इति वेदानुवचनं वेदाध्ययनम्। तथा च द्विजोऽ-
धिकारी तमेतं मन्त्रोक्तविशेषणमौपनिषदं पुरुष वेदानुवचनेन नित्यस्वाध्यायलक्षणेनान्त.करणशुद्धिद्वारा विविदिषन्ति
वेदितुमिच्छन्ति न तु विदन्त्येव स्वातन्त्र्येणेश्वरात्मविषयाया बुभुत्साया अपि दुर्लभत्वात्त त्वौपनिषद पुरुषमिति
२० तद्धितश्रुतेः पुरुषस्येश्वरस्योपनिषदेकगम्यत्वावगमाच्च न साक्षाद्वेदनार्थं वेदानुवचनादीनि किं तु विविदिषार्थमेवेति।
तथा ब्रह्मचर्येण स्त्रीपरिग्रहनिवृत्तिलक्षणेन नैष्ठिकेन ब्रह्मचारिकर्मणा। तथा तपसा नियमेन शास्त्रीयपारलौकिक-
जपाद्यङ्गविधिवशात् शीतादिद्वन्द्वसहनं तपस्तेन तपसा। तथा श्रद्धयाऽदृष्टार्थेषु कर्मसु देवताज्ञानादिषु च वेदबोधि-
तेष्वास्तिक्यबुद्धिः श्रद्धा तया। यज्ञेन द्रव्ययज्ञेन ज्ञानयज्ञेन च तथाऽनाशकेन कामानशनलक्षणेन च विविदिषन्तीति
प्रत्येकं सम्बन्धः। अत्र कामानशनमेवानाशकं न तु भोजनाभावस्तथा सति मरणसम्भवेनात्मविविदिषोत्पत्तेरनव-
२५ काशात्। यद्वा सकल्पपूर्वकं मरणान्तमशनवर्जनमनाशकम्। वेदानुवचनादेरनाशकस्य चैहिकविविदिषासाधनत्वे
नियमाभावादैहिकस्यापि साधनस्य जन्मान्तरविविदिषाद्वारा मुक्तिहेतुत्वाच्च। तथा चास्मिन् जन्मनि साधनचतुष्टय-
सम्पत्तिश्चेन्न जाता तर्ह्यामरणान्तिकमनशनं कुर्यात्। यदा पुनरिहैव साधनचतुष्टयसम्पन्नो भवति तदाऽऽमरणमनशन
दूरादेव त्यजेत्। तस्य 'श्रोतव्यो मन्तव्य"इत्यादिश्रुत्या श्रवणादावेव नियुक्तत्वादिति भावः। तस्माद्वेदे यानि काम्यानि
कर्माण्युक्तानि गर्भवासाधनर्थहेतव इति यदा ज्ञायन्ते तदा तेषु जिहासोपावर्तते। ततश्च नित्याद्यनुष्ठानात्परिशुद्ध-
३० बुद्धेर्विविदिषाद्वारा कर्मणो मुक्तिहेतुत्वे सिद्धे काण्डद्वयस्यैकवाक्यता सिद्धेति तात्पर्यं बोद्धव्यम्। एवं कर्मकाण्डोक्त-
रध्ययनादिकर्मभिरुत्पन्नवेदनेच्छातः किं स्यादित्यत आह—**एतमेव विदित्वा मुनिर्भवतीति**। उक्तैरुपायै. शुद्धिद्वारा
विविदिषोत्पत्तौ गुरुपादोपसर्पणं श्रवणानुष्ठानं चेत्यनेन क्रमेणैतमेव मोक्षप्रकरणे मन्त्रब्राह्मणाभ्यामुक्तलक्षणात्मानमेव
विदित्वा साक्षात्कृत्य मुनिर्भवति मननशीलो योगी भवतीत्यर्थः। एतमेवेत्यवधारणात् प्रत्यगात्मवेदनमेव मुनित्व-
हेतुर्न कर्मभेदतद्भेदज्ञानादिका। अत अविद्याऽविरोध्यविद्योत्थकर्मत्यागिनां संन्यासिनामेव मुनित्वं भवति न
३५ कर्मिणामित्यर्थादुक्तं भवति। इदानीमर्थोक्तं सन्यासं मुनिप्राप्यात्मलोकमिच्छता तत्साधनत्वेन विदधाति—**एतमेव
प्रव्राजिनो लोकमीप्सन्तः प्रव्रजन्तीति**। एतमेव प्रकृतमात्मानं स्वलोकमन्त.करणशुद्धिद्वारा ईप्सन्त आप्तुमिच्छन्तो
विविदिषन्तः प्रव्राजिनः प्रव्रजनशिला वैराग्यातिशयशालिनो मुमुक्षवः प्रव्रजन्ति प्रकर्षेण सर्वाणि कर्माणि सन्यस्यन्तीति
सन्यासो विधीयते। "आग्नेयोऽष्टाकपालो भवती"तिवदित्यर्थः। एतमेव लोकमीप्सन्त इत्यवधारणात् वाह्यलोकत्र-
येप्सुना न पारिव्राज्येऽधिकार इति गम्यते। नहि गङ्गाद्वारं प्रति जिगमिषोः काशीनिवासिनः पूर्वाभिमुखगमनं

**एतद्ध स्म वै तत्पूर्वे ब्राह्मणा अनूचाना विद्वांसः प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोक इति ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति या ह्येव पुत्रैषणा सा वित्तैषणा या वित्तैषणा सा लोकैषणोभे ह्येते एषणे एव भवतः ॥२६॥**

**स एष नेति नेत्यात्मा। अगृह्यो न हि गृह्यतेऽशीर्यो न हि शीर्यतेऽसङ्गोऽसितो न सज्यते न व्यथत इत्यतः पापमकरवमित्यतः कल्याणमकरवमित्युभे उभे ह्येष एते तरत्यमृतः साध्वसाधुनी नैनं कृताकृते तपतो नास्य केनचन कर्मणा लोको मीयते ॥२७॥** ५

साधनम्। सोऽयं मनुष्यलोक. पुत्रेणैव जय्यो नान्येन कर्मणा, कर्मणा पितृलोको विद्यया देवलोक इति श्रुत्या बाह्य-लोकत्रयार्थिनां पुत्रादिसाधनान्तरस्य नियमितत्वात् ॥२५॥

नन्वत्र कथं संन्यासे विधिरिति निश्चेतुं शक्यते प्रव्रजन्तीति वर्तमानोपदेशादिति संशये अनन्यथासिद्धार्थ- १० वादवशाद्विधिरेव निश्चेय इत्यभिप्रेत्यास्य विधित्वनिर्णयहेतुमर्थवादं दर्शयति—**एतद्ध स्म वै तत्पूर्वे ब्राह्मणा अनूचाना विद्वांसः प्रजां न कामयन्त इत्यादिना**। ह स्मेत्येतौ वृत्तार्थौ निपातौ। वैशब्दः स्मरणार्थः। तदेतदितिपदाभ्यां तदेतदात्म-लोकार्थिना पारिव्राज्ये कारणमुच्यत इति श्रुतेः प्रतिज्ञा गम्यते। अत्र प्रजाशब्दः कर्मोपासनयोरप्युपलक्षणार्थः। तथा च तदेतत्पारिव्राज्ये स्पष्ट कारण ह किल वै स्मर्यते पूर्वेऽतिक्रान्तकालिका ब्राह्मणजातिमन्तो अनूचाना अनूवचन-समर्था विद्वासः आत्मज्ञाः प्रजां तदुपलक्षिते कर्मविद्ये च न कामयन्ते स्म पुत्रादिसाधनानि नानुतिष्ठन्तीत्यर्थः। १५ ननु पुत्रादिसाधन परित्यजता तेषा कोऽभिप्राय इत्यत आह—**किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोक इतीति**। येषा नोऽस्माक परमार्थदर्शिनामयं नित्यसन्निहितोऽशनायादिवर्जितः आत्मैव लोकः पुरुषार्थः ते वयं प्रजया पुत्रकर्मापरविद्याभिर्लोकत्रयसाधनभूताभिः किं करिष्यामः। लोकत्रयहेतुपुत्रादिसाध्यं नैव पश्याम इति पुत्रादिक-माक्षिपन्तीत्यर्थ.। इतिशब्दोऽभिप्रायसमाप्तिद्योतकः। ननु ते पूर्वे ब्राह्मणा एवं साध्यसाधनव्यवहारं निन्दन्तस्तस्या-विद्वद्विषयत्वमापाद्य किं कृतवन्त इत्यपेक्षायामाह—**ते ह पुत्रैषणायाश्चेत्यादि**। एषणे एव भवत इत्यन्तं व्याख्यातम्। २० यस्मादेवं पूर्वे विद्वासः प्रजादिभ्यो निवृत्ताः प्रव्रजिता एव तस्मादधुनातना अपि प्रव्रजेयुरित्येवमर्थवादवाक्यं विधिवाक्य-मन्तरेणासबद्ध्यमानं स्वसंबन्धसिद्धये लोकमोप्सन्तः प्रव्रजन्तीत्यस्य संन्यासविधिवाक्यत्वं निश्चाययतीति सिद्धम् ॥२६॥

नन्वेवमप्यात्मलोकार्थिना किमिति नियमेन पारिव्राज्यमेव विधीयते कर्मणामपि तत्साधनत्वेनानुष्ठेयत्वा-दित्याशङ्कायां तस्यात्मलोकस्योत्पाद्यादिविलक्षणत्वेन कर्मासंबन्धान्न कर्म तदर्थिनाऽनुष्ठेयमित्यभिप्रेत्याह—**स एष नेति नेत्यात्मेत्यादिना व्यथत इत्यन्तं**। व्याख्यातार्थमेतच्छाकल्यब्राह्मणे। ननु य एवं सर्वैपणाविनिवृत्तः स एव नेति २५ नेत्यादिलक्षणमात्मानमात्मत्वेनावगम्य तद्रूपेणैव वर्तते तस्य कर्मानारभमाणस्य ब्रह्मविदः किं स्यादित्यपेक्षायामाह—**अतः पापमकरवमित्यादि**। अतोऽस्मान्निमित्ताच्छरीरधारणादिहेतोरविवेककृताद्रागादेः पापमपुण्यं कर्माकरवं कृतवानस्मि कष्टं खलु मम वृत्तमनेन कर्मणाऽहं नरकं प्रतिपद्ये इति कर्मक्रुनः चेतःपरितापःपूर्वोक्त-लक्षण ब्रह्मविदं न तरति न व्याप्नोति। तथाऽतः फलविषयकामनिमित्तात् कल्याणं यज्ञादिलक्षणं पुण्यं शोभनं कर्माकरवं कृतवानस्मि अतोऽहं देहान्तरेऽस्य फलं सुखमुपभोक्ष्ये इत्येषोऽपि हर्षः तं न तरति न व्याप्नोतीत्यर्थः। ३० इत्येवमुभे द्वे पापपुण्यफले कष्टहर्षरूपे तं न तरत इति शेषः। एवं यथोक्तात्मविदस्तापहर्षासंस्पर्शे को हेतुरित्यपेक्षायां तमाह—**उभे ह्येष एते तरत्यमृतः साध्वसाधुनीइति**। अमृतोऽमरणधर्मा एष ब्रह्मविदुभे एते साध्वसाधुनी पुण्यपाप-लक्षणकर्मणी हि निश्चितं तरति अतिक्रामति आरब्धानारब्धयोर्भोगज्ञानाभ्यां क्षीणत्वादपूर्वस्य चाकर्तृत्वेना-संश्लेषादित्यर्थः। इतश्चात्मविदो धर्मादिसंबन्धो नास्तीत्याह—**नैनं कृताकृते तपतः** कृतं नित्याद्यनुष्ठानमकृतं तस्यैवा-करणमेतेअपि कृताकृते क्रमेण फलदानप्रत्यवायोत्पादाभ्यामब्रह्मविदमिवैनं ब्रह्मविदं न तपतो नोद्वेजयत इत्यर्थः। किञ्च ३५ नास्य केनचन कर्मणा लोको मीयत इति। अस्य ब्रह्मविदः केनचन केनापि कर्मणा शास्त्रप्रसिद्धेनापि लोकः पुरुषार्थो न मीयते न हिंस्यते। "मीञ्"हिंसायामिति धातुः। ततश्च तत्त्वज्ञानात्प्राक्कालिकयोर्ज्ञानाग्निना भस्मीकरणा-दुत्तरकालिकयोस्त्वकर्तृत्वेनासंश्लेपाच्छरीरारम्भकयोस्तूपभोगेनैव क्षयाद्ब्रह्मविदः कर्मकार्यसम्बन्धाभावान्न कर्मसम्बन्ध इति तात्पर्यार्थः ॥२७॥

**तदेतदृचाभ्युक्तम् । एष नित्यो महिमा ब्राह्मणस्य न कर्मणा वर्धते नो कनीयान् । तस्यैव स्यात्पदवित्तं विदित्वा न कर्मणा लिप्यते पापकेनेति तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः श्रद्धावित्तो भूत्वाऽऽत्मन्येवात्मानं पश्येत्सर्वमेनं पश्यति सर्वोऽस्यात्मा भवति सर्वस्यात्मा भवति सर्वं**

५ **पाप्मानं तरति नैनं पाप्मा तरति सर्वं पाप्मानं तपति नैनं पाप्मा तपति विपापो विजरो विजिघत्सोऽपिपासो ब्राह्मणो भवति य एवं वेद ॥२८॥**

एवमुक्ते ब्रह्मविद्याफले मन्त्रं संवादयति—**तदेतदृचाभ्युक्तमेष नित्यो महिमा ब्राह्मणस्येत्यादिना** । तदेतद्-ब्राह्मणेनोक्तं वस्तुतत्त्वं ऋचा मन्त्रेणाभ्युक्तं प्रकाशितम् । कथं ? ब्राह्मणस्य ब्रह्मविदस्त्यक्तसर्वैषणस्य एष साधननिस्पृहो नेति नेत्यादिलक्षणः स्वरूपभूतो महिमा ऐश्वर्यविशेषः स्वाभाविकत्वान्नित्यः अन्ये त्वविद्याकामकर्मकृता महिमानो न १० नित्या इत्यर्थः । कुतो विद्वन्महिम्नो नित्यतेत्यपेक्षायां हेतुमाह—**न कर्मणा वर्द्धते नो कनीयानिति** । शुभलक्षणेन कृतेन कर्मणा एष महिमा न वर्द्धते वृद्धिलक्षणां विक्रियां न प्राप्नोति । तथाऽशुभेन कर्मणा नो कनीयान् नायमपक्षय-लक्षणां विक्रियां प्राप्नोति । एताभ्यां च निषेधाभ्यामन्या अपि विक्रिया निषिद्धास्तासामप्युपचयापचयहेतुत्वात् । अतोऽविक्रियत्वान्नित्य एष महिमेत्यर्थः । अस्य महिम्नो नित्यत्वेपि किं स्यादित्यपेक्षाया स्वस्वरूपं तत्पदार्थलक्षणं जानीयादित्याह—**तस्यैव स्यात्पदविदिति** । यत एष नित्यस्तस्मात्तस्यैव महिम्नस्त्वपदार्थस्य पदवित्पदस्य वेदिता १५ पद्यते गम्यते ज्ञायत इति पदं स्वरूपं तत्पदार्थभूतं ब्रह्मैव तस्य पदस्य वेदिता स्यात् । मुमुक्षुर्वाक्यार्थज्ञानार्थं तत्पदवेदिता भवेदित्यर्थः । ननु पदवेदनेऽपि किं स्यादित्यापेक्षायामाह—**तं विदित्वा न कर्मणा लिप्यते पापकेनेतीति** । तं महिमानं स्वरूपं पदं विदित्वा ज्ञात्वा पापकेन धर्माधर्मलक्षणेन कर्मणा न लिप्यते न सम्बध्यते । उभयस्यापि संसारहेतुत्वाविशेषात्पापकमित्युभयमपि गृह्यते । एवं सति धर्मशब्दप्रयोगेप्युभयग्रहसम्भवो यद्यपि स्यात् तथापि धर्माधर्मयोर्हेयत्वद्योतनार्थं पापशब्दप्रयोग इत्यर्थः । इतिशब्दश्चर्क्समाप्त्यर्थः । तर्ह्येतत्पदसाक्षात्कारः कथं स्यादित्य-२० पेक्षायामाह—**तस्मादेवंविच्छांतो दांत उपरतस्तितिक्षुः श्रद्धावित्तो भूत्वात्मन्येवात्मानं पश्येदिति** । यस्मादेवमकर्म-सम्बन्ध्येष ब्राह्मणस्य महिमा नेति नेत्यादिलक्षणः तस्मात्कारणादेवंवित् आत्मा कर्मतत्फलसम्बन्धशून्य इत्यापाततो जानन् प्रथमं श्रान्तः संसारदुःखेन तप्तः खिन्नो वा उपरतबाह्येन्द्रियव्यापार इति यावत् । "श्रमु" तपसि खेदे चेत्यस्य धातोर्निष्ठान्तं रूपं श्रान्त इति । उक्तं च—निवृत्तेन्द्रियलौल्यस्तु श्रान्तः शान्तश्च कथ्यते । तपः क्लेश [ह्] दान्तो ह्यन्तर्वाणिस्तु शास्त्रविदिति । अनन्तरं दान्तोऽन्तःकरणतृष्णातो निवृत्तः । न हि बाह्यकरणाना २५ विषयाभिनिवेशनिवृत्तिमन्तरेणान्तःकरणस्य विषयाभिषङ्गो व्यावर्तते । उपरतः सर्वैषणाविनिर्मुक्तो विधिना त्यक्तसर्व-कर्मा सन्यासी । तितिक्षुः जीवनविच्छेदातिरिक्तशीतोष्णादिद्वन्द्वसहिष्णुः श्रद्धावित्तः । श्रद्धा आस्तिक्यबुद्धिरेव वित्तं साधनं यस्य स श्रद्धावित्त इन्द्रियान्तःकरणचलनरूपव्यापारव्यावृत्त्या तदेकाग्र्यवानिति यावत् । एतच्च बाल्यं च पाण्डित्यं च निर्विद्येत्येवमुक्तम् । एतावता यत्र कर्तुः स्वातन्त्र्यं तेषां कर्मणा निवृत्तिः श्रान्तादिपदैरुक्तः यत्र तु सम्यग्धीविरोधिनिद्रालस्यादौ पुंसो न स्वातन्त्र्यं तन्निवृत्तिः श्रद्धावित्त इतिपदेनेति भेदः । तथा चैवंप्रकारेण ३० श्रद्धावित्तो भूत्वाऽऽत्मन्येव स्वे कार्यकरणसंघाते एवात्मानं प्रत्यक्चेतयितारं पश्येत् साक्षात्कुर्यात् । तथा च श्रमाद्यनुष्ठानमिह विधीयत इति विवक्षितमित्यर्थः । तर्हि किं तावत्परिमाणमेवात्मानं पश्येन्नेत्याह—**सर्वमेनं पश्यतीति** । सर्वं समस्तमेनमात्मानं पश्यति नान्यदात्मव्यतिरिक्तं किमपि पश्यति जाग्रत्स्वप्नसुषुप्त्याख्यस्थानत्रयं हित्वा मननान्मुनिर्भवतीत्यर्थः । कुतो हेतोरित्यत आह—**सर्वोऽस्यात्मा भवति सर्वस्यात्मा भवतीति** । अस्य ब्रह्मविदः सर्वः समस्तः प्रपञ्च आत्मा भवति । किं च सर्वस्य प्रपञ्चस्य स्वयमात्मा भवति । यथोक्तैः साधनैरुदिते ३५ साक्षात्कारे सति किं स्यादित्यपेक्षायामाह—**सर्वं पाप्मानं तरतीति** । अयं तु ब्रह्मवित्सर्वपाप्मानमुक्तरूपं तरत्यात्म-भावेन व्याप्नोत्यतिक्रामतीत्यर्थः । किं चैवमात्मानं पश्यन्तमेनं ब्राह्मणं पाप्मा पुण्यापुण्यलक्षणः काम्यनिषिद्धाचरणरूपो न तरति न व्याप्नोतीत्यर्थः । इतश्च विदुषो न कर्मसम्बन्धोऽस्तीत्याह—**सर्वं पाप्मानं तपतीति** । ब्रह्मवित्सर्वं पाप्मानं कृताकृतलक्षणं सर्वात्मदर्शनरूपवह्निना तपति भस्मीकरोतीत्यर्थः । किञ्च नैनं पाप्मा तपतीति । एनं ब्रह्मविदं पाप्मा कृताकृतलक्षण उक्तरूप इष्टफलप्रत्यवायोत्पादनाभ्यां न तपतीत्यर्थः । एवं कर्मासम्बन्धे किं भवतीत्यत आह—**विपापो** ४० **विजरो विजिघत्सोऽपिपासो ब्राह्मणो भवतीति** । एवंवित् विपापो विगतः पापो धर्माधर्मलक्षणो यस्य स विपापः ।

**स वा एष महानज आत्मा। अन्नादो वसुदानः स यो हैवमेतं महान्तमजमात्मानमन्नादं वसुदानं वेद विन्दते वसु ॥२९॥**

**स वा एष महानज आत्मा। अजरोऽमरोऽभयोऽमृतो ब्रह्माभयं वै जनक प्राप्तोऽसीति होवाच याज्ञवल्क्यः सोऽहं भगवते विदेहान्ददामि माञ्चापि सह दास्यायेति ॥३०॥**

**स वा एष महानज आत्मा। अजरोऽमरोऽभयोऽमृतो ब्रह्माभयं वै ब्रह्माभयꣳ हि वै ब्रह्म भवति य एवं वेद ॥३१॥** ५

**इति बृहदारण्यकोपनिषदि चतुर्थाध्याये द्वितीयं ब्राह्मणम् ॥२॥**

विगता जरा यस्मात्स विजरः। विगता जिघत्सा अत्तुमिच्छा यस्मात्स विजिघत्सः। न विद्यते पिपासा पातुमिच्छा यस्य सोऽपिपासः। एवंभूत एतस्यामवस्थायां मुख्यब्राह्मणो भवति। एतस्माद्ब्रह्मस्वरूपावस्थानात्प्राग्गौणं ब्राह्मण्यमित्यर्थः। एवमुपास्यस्वरूपं दर्शयित्वा तदुपासनफलमाह—य एवं वेदेति। य एवं पूर्वोक्तगुणविशिष्टमात्मानं वेद १० उपास्ते ह स्मैवंभूत आत्मेति पूर्वोक्तविपापादिगुणविशिष्ट एव भवतीति शेषः ॥२८॥

एवं निरुपाधिकब्रह्मज्ञानात्कैवल्यं फलमुक्तं सम्प्रति सोपाधिकब्रह्मध्यानादभ्युदयफलं दर्शयिष्यँस्तत्स्वरूपमाह—स वा एष महानज आत्माऽन्नादो वसुदान इति। योऽयं जनकयाज्ञवल्क्याख्यायिकायां विख्यातो विज्ञानात्मा स वै स एष महानज आत्मा। अन्नादः सर्वभूतस्थः सन् सर्वान्नात्ता। यद्वाऽन्नशब्देन चराचरात्मकं जगद्गृह्यते। तस्यात्ता संहारकः। तथा वसु धनं भोगसाधनं सर्वप्राणिकर्मफलं ददातीति वसुदानः एवमुपास्यस्वरूपं दर्शयित्वा १५ तदुपासनफलमाह—स यो हैवमेतं महान्तमजमात्मानमन्नादं वसुदानं वेद विन्दते वस्विति। य एवं पूर्वोक्तमहदादिगुणविशिष्टमात्मानं वेद उपास्तेऽहमस्म्येवंभूत आत्मेति स वसु कर्मफलं विन्दते लभते सर्वात्मत्वादेवेत्यर्थः। अनया कण्डिकया रातेर्दातुः परायणमित्युक्तस्यैव कर्मफलस्योपसंहारः कृत इत्यपौनरुक्त्यं द्रष्टव्यम् ॥२९॥

इदानी सफलां विद्यां मन्त्रब्राह्मणाभ्यामुपदिष्टामुपसंहरति—याज्ञवल्क्य इति श्रुतिरस्मान्प्रति दर्शयति। स वा एष महानज आत्माऽजरोऽमरोऽभयोऽमृतो ब्रह्माभयं वै जनक प्राप्तोऽसीति होवाच याज्ञवल्क्य इति। यो ब्राह्मणा- २० दावुक्तो विज्ञानमयो जन्ममरणादिसन्ततिमान् त्वंपदवाच्यभूतः सोऽयं सशब्देनोच्यते वै शब्दः प्रसिद्धार्थः। एषशब्देन तु विद्यया प्रध्वस्ताज्ञानतत्कार्यो नित्यमुक्तस्त्वंपदलक्ष्य उच्यते। तस्य शुद्धस्य त्वंपदार्थस्य महानित्यादिविशेषणं तथा च स वा एष यथोक्तः प्रत्यगात्मा महान् सत्यज्ञानादिलक्षणोऽपरोक्षः परमात्मैवेति वाक्यार्थः। एवमहं ब्रह्मेति वाक्योत्थपरमात्मैकत्वविज्ञानादविद्यातत्कार्ये प्रध्वस्ते सति प्रत्यगात्मनो यद्रूपं तदिदानीमुच्यते अज इत्यादिपदैः। यस्माद्रज्जुसर्पादिवदात्मा विनाऽविद्या कार्यकरणात्मना न जायते तस्मादजो जन्मरहितः अत एवाजरः कालावच्छिन्न- २५ देहादिवन्न जीर्यतीत्यर्थः। अमरः प्राणत्यागरूपमरणरहितः। अत एवामृतो निरन्वयनाशशून्यः। अत्र जननप्रतिषेधेनैव विकारान्तराणां तन्मूलत्वात्तत्प्रतिषेधस्याप्यर्थसिद्धत्वेऽपि शब्दतः प्रतिषेधो जरादीनां पारमार्थिकत्वशङ्काव्यावृत्त्यर्थः। यत एवं सर्वविकारशून्योऽत एवाभयः। भयं हि नामाविद्याकार्यं तत्प्रतिषेधेन भावविकारप्रतिषेधेन चाविद्यापि प्रतिषिद्धा वेदितव्येति भावः। हे जनक सम्राट् अभयं वै अविद्याकार्यरहितमेव ब्रह्म परमात्मतत्त्वं त्वं प्राप्तोऽसि इत्येवं ह किल याज्ञवल्क्य उवाचेत्यर्थः। राजा तु आत्मीयमशेषविद्यालाभं द्योतयितुं सर्वस्वदानं प्रतिजज्ञे इत्याह—सोऽहं ३० भगवते विदेहान् ददामि मां चापि सह दास्यायेति दासकर्मणे ददामीति चशब्दात् सम्बध्यते। इतिशब्दो निरूपितायाः सर्ववेदानुशासनरूपाया विद्यायाः परिसमाप्तिद्योतक इत्यर्थः ॥३०॥

इदानी तिष्ठमानस्य तद्विदः परायणमित्युक्तस्यैव ब्रह्मात्मैक्यज्ञानफलस्योपसंहारार्थमग्रिमा श्रुतिः प्रवर्तते—स वा एष महानित्यादि। ब्रह्मेति पदपर्यन्तमक्षरार्थः पूर्ववत्। कथं पुनरभयगुणविशिष्टस्यात्मनो ब्रह्मत्वमत आह—अभयं वै ब्रह्मेति। एवं विषयपरिशोधनेन विद्यास्वरूपमुक्त्वा विद्याफलं कथयति—अभयं हि वै ब्रह्म भवति य एवं ३५ वेदेति। एवं यथोक्तमात्मानमभयं ब्रह्म यो वेद सोऽभयं ब्रह्मैव हि भवति मुक्त एव भवतीत्यर्थः। य इह "स वा एष महानि"त्यादिनाऽन्ते सङ्क्षिप्तोऽर्थः स एव सर्वोपनिषत्प्रतिपाद्यः एष एव सर्वस्यास्य शास्त्रस्य तात्पर्यार्थं इति ॥३१॥

इति श्रीविद्यारण्यमुनिविरचितमाध्यन्दिनशाखीयबृहदारण्यकोपनिषद्दीपिकायां चतुर्थाध्याये द्वितीयं ब्राह्मणम् ॥२॥

अथ चतुर्थाध्यायस्य तृतीयं ब्राह्मणम्

अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुः। मैत्रेयी च कात्यायनी च तयोर्ह मैत्रेयी ब्रह्मवादिनी बभूव स्त्रीप्रज्ञैव तर्हि कात्यायनी सोऽन्यद्वृत्तमुपाकरिष्यमाणः ॥१॥

याज्ञवल्क्यो मैत्रेयीति होवाच। प्रव्रजिष्यन्वा अरेऽहमस्मा-
५ त्स्थानादस्मि हन्त तेऽनया कात्यायन्याऽन्तं करवाणीति ॥२॥

सा होवाच मैत्रेयी। यन्नु म इयं भगोः सर्वा पृथिवी वित्तेन पूर्णा स्यात्स्यां न्वहं तेनामृताहो३ नेति नेति होवाच याज्ञवल्क्यो यथैवोपकरणवतां जीवितं तथैव ते जीवितं स्यादमृतत्वस्य तु नाशास्ति वित्तेनेति ॥३॥

सा होवाच मैत्रेयी। येनाहं नामृता स्यां किमहं
१० तेन कुर्यां यदेव भगवान्वेद तदेव मे ब्रूहीति ॥४॥

स होवाच याज्ञवल्क्यः। प्रिया खलु नो भवती सती प्रियम-वृतद्धन्त खलु भवति तेऽहं तद्वक्ष्यामि व्याख्यास्यामि ते वाचं तु मे व्याचक्षाणस्य निदिध्यासस्वेति ब्रवीतु भगवानिति ॥५॥

स होवाच याज्ञवल्क्यः। न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु
१५ कामाय पतिः प्रियो भवति न वा अरे जायायै कामाय जाया प्रिया भवत्या-त्मनस्तु कामाय जाया प्रिया भवति न वा अरे पुत्राणां कामाय पुत्राः प्रिया भवन्त्यात्मनस्तु कामाय पुत्राः प्रिया भवन्ति न वा अरे वित्तस्य कामाय

पूर्वंभागप्रधानेन मधुकाण्डेन ब्रह्मात्मतत्त्वं निर्द्धारितम्। पुनस्तस्यैव तत्त्वस्यास्तित्वमुपपत्तिप्रधानेन याज्ञवल्कीयेन काण्डेन पक्षप्रतिपक्षपरिग्रहं कृत्वा जयपराजयप्रधानजल्पन्यायतो विचारितम्। तदेव चास्मिन्नध्याये शिष्याचार्य-
२० सम्बन्धेन तत्त्वनिर्णयप्रधानेन वादन्यायेन सविस्तरं विचार्योपसंहृतम्। अथेदानीमस्य निगमनस्थानीय मैत्रेयीब्राह्मणमारभ्यते। यद्वा मधुकाण्डे मैत्रेयीब्राह्मणेनागमबलान्मुक्तिसाधनभूता संन्याससहिता आत्मविद्योक्ता। सैवाधुना न्यायप्रधाने मुनिकाण्डेऽपि मुक्तिहेतुत्वेन न्यायतो मन्तव्येत्येतदभिप्रायेणेदं ब्राह्मणं प्रवर्तते। अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुरित्यादि। तत्र वाक्याक्षराणां व्याख्यानं पूर्ववदेवात्रापि प्रतिपत्तव्यम्। यानि त्वक्षराण्यत्राधिकानि तानि व्याख्यास्यामः। हेतुप्रधानवाक्यानन्तरमागमप्रधानेन मैत्रेयीब्राह्मणेन प्रतिज्ञातार्थो निगम्यत, इत्येवं हेत्वपदेशानन्त-
२५ र्यार्थोऽथशब्दः। हशब्दः पूर्ववृत्तावद्योतकः याज्ञवल्क्यस्य मुनेर्ह किल मैत्रेयी कात्यायनी चेति द्वे भार्ये बभूवतुः। तयोः पत्न्योर्मध्ये ह किल मैत्रेयी ब्रह्मवादिनी ब्रह्मवदनशीला बभूव। कात्यायनी तु स्त्रीप्रज्ञैव स्त्रिया उचिता या प्रज्ञा गृहप्रयोजनान्वेषणलक्षणा सैव विद्यते यस्या सा स्त्रीप्रज्ञैव बभूवेत्यनुषङ्गः। एवं सति स याज्ञवल्क्यः पूर्वस्माद्गार्हस्थ्यलक्षणाद्वृत्तादन्यत्पारिव्राज्यलक्षणं वृत्तं वर्तनमुपाकरिष्यमाण उपाचिकीर्षुः सन् हे मैत्रेयीति ज्येष्ठा भार्यामामन्त्र्य ह किल तामुवाचेत्युत्तरवाक्येन सम्बन्धः ॥१॥

३० प्रव्रजिष्यन् प्रकर्षेण व्रजिष्यन् सन्न्यसिष्यन्नित्यर्थः ॥२॥

यन्नुम इति पाठान्तरं स्यान्वहं तेनामृताहो नेतीति च पाठान्तरम्। स्या भवेयमाहो इति पक्षान्तरद्योतको निपातः ॥३॥

सा होवाच मैत्रेयी पूर्ववत् ॥४॥

प्रिया खलु नो भवती सती प्रियमवृतद्धन्त खलु भवति तेऽहं तद्वक्ष्यामीति पाठान्तरे वाचमित्यधिकं भवती
३५ त्वमित्यर्थे। अवृतत् अवर्तयत् वर्तितवत्यसि णिचो लोपः छान्दसो बोध्यः। हे भवति ते तुभ्यं तुष्टोऽहं हन्त खलु तदमृतत्वसाधनं वक्ष्यामि व्याख्यास्यामीत्यादिसमानम् ॥५॥

न वा अरे वेदानां कामाय यज्ञानां कामाय चेति पर्यायद्वयमधिकं सुगमार्थम्। आत्मा वा अरे इति मैत्रेय्यात्मनि

वित्तं प्रियं भवत्यात्मनस्तु कामाय वित्तं प्रियं भवति न वा अरे ब्रह्मणः कामाय ब्रह्म प्रियं भवत्यात्मनस्तु कामाय ब्रह्म प्रियं भवति न वा अरे क्षत्रस्य कामाय क्षत्रं प्रियं भवत्यात्मनस्तु कामाय क्षत्रं प्रियं भवति न वा अरे लोकानां कामाय लोकाः प्रिया भवन्त्यात्मनस्तु कामाय लोकाः प्रिया भवन्ति न वा अरे देवानां कामाय देवाः प्रिया भवन्त्यात्मनस्तु कामाय देवाः प्रिया भवन्ति न वा अरे वेदानां कामाय वेदाः प्रिया भवन्त्यात्मनस्तु कामाय वेदाः प्रिया भवन्ति न वा अरे यज्ञानां कामाय यज्ञाः प्रिया भवन्त्यात्मनस्तु कामाय यज्ञाः प्रिया भवन्ति न वा अरे भूतानां कामाय भूतानि प्रियाणि भवन्त्यात्मनस्तु कामाय भूतानि प्रियाणि भवन्ति न वा अरे सर्वस्य कामाय सर्वं प्रियं भवत्या-त्मनस्तु कामाय सर्वं प्रियं भवत्यात्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनि वा अरे दृष्टे श्रुते मते विज्ञात इदꣳ सर्वं विदितम् ॥६॥

ब्रह्म तं परादात् । योऽन्यत्रात्मनो ब्रह्म वेद क्षत्रं तं परादाद्योऽन्यत्रात्मनः क्षत्रं वेद लोकास्तं परादुर्योऽन्यत्रात्मनो लोकान्वेद देवास्तं परादुर्योऽन्य-त्रात्मनो देवान्वेद वेदास्तं परादुर्योऽन्यत्रात्मनो वेदान्वेद यज्ञास्तं परादुर्योऽन्यत्रात्मनो यज्ञान् वेद भूतानि तं परादुर्योऽन्यत्रात्मनो भूतानि वेद सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेदेदं ब्रह्मेदं क्षत्रमिमे लोका इमे देवा इमे वेदा इमे यज्ञा इमानि भूतानीदꣳ सर्वं यदयमात्मा ॥७॥

स यथा दुन्दुभेर्हन्यमानस्य न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीतः ॥८॥

स यथा वीणायै वाद्यमानायै । न बाह्याञ्छब्दाञ्छक्नुयाद्-ग्रहणाय वीणायै तु ग्रहणेन वीणावादस्य वा शब्दो गृहीतः ॥९॥

स यथा शङ्खस्य ध्मायमानस्य । न बाह्याञ्छब्दाञ्छक्नुयाद्-ग्रहणाय शङ्खस्य तु ग्रहणेन शङ्खध्मस्य वा शब्दो गृहीतः ॥१०॥

स यथार्द्रैधाग्नेरभ्याहितस्य । पृथग्धूमा विनिश्चरन्त्येवं वा अरेऽस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथ-र्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्या-ख्यानानि व्याख्यानानि दत्तꣳ हुतमाशितं पायितमयं च लोकः परश्च लोकः सर्वाणि च भूतान्यस्यैवैतानि सर्वाणि निःश्वसितानि ॥११॥

वा अरे दृष्टे श्रुते मते विज्ञाते इति च पाठान्तरं समानार्थम् ॥६॥

वेदास्तं परादुर्यज्ञास्तं परादुरित्यधिकं सुगमम् ॥७॥

स यथा दुन्दुभेर्हन्यमानस्य ॥ ८ ॥

स यथा वीणायै वाद्यमानायै ॥ ९ ॥

स यथा शंखस्य ध्मायमानस्य ॥१०॥

दत्तं दाननिमित्तं धर्मजातं हुतं होमनिमित्तम् आशितमन्नदाननिमित्तं पायितं पेयदाननिमित्तं धर्मजातम् । अयं च लोक इदं च जन्म परश्च लोकः प्रतिपत्तव्यं च जन्म सर्वाणि च भूतानि ब्रह्मादि स्थावरान्तानि ॥११॥

स यथा सर्वासामपाँ समुद्र एकायनम् । एवँ सर्वेषाँ स्पर्शानां त्वगेकायनमेवँ सर्वेषां गन्धानां नासिके एकायनमेवँ सर्वेषाँ रसानां जिह्वैकायनमेवँ सर्वेषाँ रूपाणां चक्षुरेकायनमेवँ सर्वेषाँ शब्दानाँ श्रोत्रमेकायनमेवँ सर्वेषाँ संकल्पानां मन एकायनमेवँ सर्वेषां वेदानाँ हृदयमेकायनमेवँ सर्वेषां कर्मणाँ हस्तावेकायनमेवँ सर्वेषामध्वनां पादावेकायनमेवँ सर्वेषामानन्दानामुपस्थ एकायनमेवँ सर्वेषां विसर्गाणां पायुरेकायनमेवँ सर्वासां विद्यानां वागेकायनम् ॥१२॥

स यथा सैन्धवघनः । अनन्तरोऽबाह्यः कृत्स्नो रसघन एव स्यादेवं वा अर इदं महद्भूतमनन्तमपारं कृत्स्नः प्रज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञाऽस्तीत्यरे ब्रवीमीति होवाच याज्ञवल्क्यः ॥१३॥

सा होवाच मैत्रेयी । अत्रैव मा भगवान्मोहान्तमापी-
पदन्न वा अहमिदं विजानामि न प्रेत्य संज्ञास्तीति ॥१४॥

स होवाच याज्ञवल्क्यः । न वा अरेऽहं मोहं ब्रवीम्यविनाशी
वा अरेऽयमात्माऽनुच्छित्तिधर्मा मात्राऽसँसर्गस्त्वस्य भवति ॥१५॥

यद्वै तन्न पश्यति । पश्यन्वै तद्द्रष्टव्यं न पश्यति न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत् ॥१६॥

यद्वै तन्न जिघ्रति । जिघ्रन्वै तद्घ्रातव्यं न जिघ्रति न हि घ्रातुर्घ्राणाद्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यज्जिघ्रेत् ॥१७॥

यद्वै तन्न रसयति । विजानन्वै तद्रसन्न रसयति न हि रसयितू रसाद्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्रसयेत् ॥१८॥

यद्वै तन्न वदति । वदन्वै तद्वक्तव्यं न वदति न हि वक्तुर्वचो विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्वदेत् ॥१९॥

स यथा सर्वासामपां समुद्रः एकायनमिति समानम् ॥१२॥

स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एव स्यादिति पाठान्तरम् । प्रलयावस्थात्मरूपबोधकं सुगमार्थम् ॥१३॥

मोहान्तमापीपदन्न वाऽहमिदं विजानामीति पाठान्तरम् । अत्रैव प्रज्ञाघने न प्रेत्य संज्ञाऽस्तीति वदन् भगवान् मा मां मोहान्तं मोहमध्यं आपीपदद्‌आपादितवान्संमोहितवानित्यर्थः । अतोऽहमिमात्मतत्वमुक्तलक्षणं न वै नैव विज्ञानामीत्यर्थः ॥१४॥

अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा मात्राऽसंसर्गस्त्वस्य भवतीति पाठान्तरम् । अरे मैत्रेयि अहं मोहं न ब्रवीमि यतोऽयं प्रकृत आत्मा अविनाशी विनष्टुं शीलं यस्य स विनाशी न विनाशी अविनाशी । तत्र हेतुर्यतोऽनुच्छित्तिधर्मा उच्छित्तिरुच्छेदो विकारो यस्य स उच्छित्तिधर्मा न उच्छित्तिधर्मा अनुच्छित्तिधर्मा । अविक्रिय इत्यर्थः । तर्ह्यात्मनः कथं संसारादिविक्रियासंबन्ध इत्याह—तु पुनः अस्य प्रकृतस्यात्मनो मात्रासंसर्गश्चक्षुरादिकरणसम्बन्धो भवति । मीयन्ते विषया आभिस्ता मात्रा इति विषयप्रकाशहेतुभूतानि चक्षुरादिकरणानि मात्रास्ताभिः संसर्गः संबन्धः ॥१५॥

यद्वै तन्न पश्यतीदं कण्डिकाष्टकं ज्योतिर्ब्राह्मणे व्याख्यातम् ॥१६॥

यद्वै तन्न जिघ्रति ॥१७॥

यद्वै तन्न रसयति ॥१८॥

यद्वै तन्न वदति ॥१९॥

यद्वै तन्न शृणोति । शृण्वन्वै तच्छ्रोतव्यं न शृणोति न हि श्रोतुः श्रुतेर्विपरि-
लोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यच्छृणुयात् ॥२०॥
यद्वै तन्न मनुते । मन्वानो वै तन्मन्तव्यं न मनुते न हि मन्तुर्मतेर्विपरि-
लोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यन्मन्वीत ॥२१॥
यद्वै तन्न स्पृशति । स्पृशन्वै तत्स्प्रष्टव्यं न स्पृशति न हि स्प्रष्टुः स्पृष्टेर्विपरि- ५
लोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्स्पृशेत् ॥२२॥

यद्वै तन्न विजानाति । विजानन्वै तद्विज्ञेयं न विजा-
नाति न हि विज्ञातुर्विज्ञानाद्विपरिलोपो विद्यतेऽविनाशि-
त्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्विजानीयात् ॥२३॥

यत्र वा अन्यदिव स्यात् । तत्रान्योऽन्यत्पश्येदन्योऽन्यज्जिघ्रेदन्योऽन्यद्रसयेद- १०
न्योऽन्यदभिवदेदन्योऽन्यच्छृणुयादन्योऽन्यन्मन्वीतान्योऽन्यत्स्पृशेदन्योऽन्यद्विजानीयात् ॥२४॥

यत्र त्वस्य सर्वमात्मैवाभूत् । तत्केन कं पश्येत्तत्केन कं जिघ्रेत्तत्केन
कँ रसयेत्तत्केन कमभिवदेत्तत्केन कँ शृणुयात्तत्केन कं मन्वीत
तत्केन कँ स्पृशेत्तत्केन कं विजानीयाद्येनेदँ सर्वं विजानाति तं
केन विजानीयाद्विज्ञातारमरे केन विजानीयादित्युक्तानुशासनाऽसि १५
मैत्रेय्येतावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्यः प्रवव्राज ॥२५॥

अथ वंशः । तदिदं वयं शौर्पणाय्याच्छौर्पणाय्यो गौतमाद्गौतमो वात्स्याद्वात्स्यो
वात्स्याच्च पाराशर्याच्च पाराशर्यः साङ्कृत्याच्च भारद्वाजाच्च भारद्वाज

यद्वै तन्न शृणोति ॥२०॥
यद्वै तन्न मनुते ॥२१॥ २०
यद्वै तन्न स्पृशति ॥२२॥
यद्वै तन्न विजानाति ॥२३॥

एवमविद्योत्थद्वैते सत्येव विशेषविज्ञानमात्रास्तदभावे तु तदभाव इत्यन्वयव्यतिरेकाभ्यामौपाधिकमात्मनो विशेषविज्ञानमिति दर्शयितुं न तु तद्द्वितीयमस्ति। ततोऽन्यद्विभक्तमिति व्यतिरेको दर्शितः। इदानीमन्वयमाह—यत्र वा अन्यदिव स्यात्तत्रान्योऽन्यत्पश्येदित्यादिना। यत्र वै यस्मिन्नेव जागरिते स्वप्ने वा अन्यदिवात्मनो वस्त्वन्तरमिवा- २५ विद्याप्रत्युपस्थापितं स्याद्भवेत्तत्र तस्मिन्नवस्थाविशेषेऽन्योऽविद्याकल्पिताद्वस्त्वन्तराद्भिन्नमिवात्मानं मन्यमानोऽन्यत्स्व-स्माद्विभक्तं स्वाविद्योत्थं वस्त्वन्तरं पश्येदुपलभेत। जिघ्रेदित्यादि समानम् ॥२४॥

एतावता एतेभ्यो भूतेभ्य इत्यत्र सूचितो भूताविद्योपाधिकः संसार इति व्याख्यातम्। इदानी महद्भूतमनं-तमपारमित्यादि सूचितं ब्रह्मदर्शनं व्याख्यास्यन् भूतोपाध्यभावेन विशेषविज्ञानलक्षणसंसाराभाव इति पुनर्व्यतिरेक-माह—यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येदित्यादिना। उक्तानुशासनाऽसि मैत्रेय्येतावदरे खल्वमृतत्वमिति ३० होक्त्वा याज्ञवल्क्यः प्रवव्राजेत्यधिकम्। हे मैत्रेयि इत्येवं त्वमुक्तानुशासना उक्तमनुशासनं ससन्यासात्मज्ञानलक्षणं यस्याः सा त्वमुक्तानुशासनाऽसि भवसि। ननु तथापि किं वक्तव्यान्तरं किंचिन्न भविष्यति उत न हीत्याशयेनाह—अरे मैत्रेयि यत्त्व मां पृष्टवत्यसि यदेव भगवान् वेद तदेव मे ब्रूहीति तदमृतत्वममृतत्वसाधनमेतावदेव खलु निश्चितम्। यदेतत्स संन्याससमात्मपरिज्ञानं न त्वधिकं किंचिदस्ति। तस्मादेतावदेव त्वयाऽमृतत्वसाधनं विज्ञेयमित्येव ह किल प्रियायै भार्यायै यथोक्तमात्मज्ञानमुक्त्वा यदृच्छया याज्ञवल्क्यः प्रवव्राज प्रव्रजितवान् यत्पूर्वं प्रतिज्ञातं प्रव्रजिष्यन्नस्मीति ३५ तच्चकारेत्यर्थः। एतावता परिसमाप्तो ब्रह्मविद्याख्यः सकलोऽपि शास्त्रार्थः ॥२५॥

इदानी याज्ञवल्कीयकाण्डप्रवर्तकगुरुशिष्यपरम्पराकथनाय वंशप्रतिपादकं कण्डिकात्रितयमारभ्यते अथ वंश

औदवाहेश्च शाण्डिल्याच्च शाण्डिल्यो वैजवापाच्च गौतमाच्च गौतमो वैजवा-
पायनाच्च वैष्टपुरेयाच्च वैष्टपुरेयः शाण्डिल्याच्च रौहिणायनाच्च रौहिणायनः
शौनकाच्च जैवन्तायनाच्च रैभ्याच्च रैभ्यः पौतिमाष्यायणाच्च कौण्डिन्याय-
नाच्च कौण्डिन्यायनः कौण्डिन्याभ्यां कौण्डिन्या और्णवाभेभ्य और्णवाभाः
५ कौण्डिन्यात्कौण्डिन्यः कौण्डिन्यात्कौण्डिन्यः कौण्डिन्याच्चाऽग्निवेश्याच्च ॥२६॥

आग्निवेश्यः सैतवात् । सैतवः पाराशर्यात्पाराशर्यो जातूकर्ण्याज्जातूकर्ण्यो भार-
द्वाजाद्भारद्वाजो भारद्वाजाच्चासुरायणाच्च गौतमाच्च गौतमो भारद्वाजाद्भारद्वाजो
वलाकाकौशिकाद्वलाकाकौशिकः काषायणात्काषायणः सौकरायणात्सौकरायणस्त्रै-
वणेस्त्रैवणिरौपजन्धनेरौपजन्धनिः सायकायनात्सायकायनः कौशिकायनेः कौशिका-
१० यनिर्घृतकौशिकाद्घृतकौशिकः पाराशर्यायणात्पाराशर्यायणः पाराशर्यात्पाराशर्यो
जातूकर्ण्याज्जातूकर्ण्यो भारद्वाजाद्भारद्वाजो भारद्वाजाच्चासुरायणाच्च यास्काच्चा-
सुरायणस्त्रैवणेस्त्रैवणिरौपजन्धनेरौपजन्धनिरासुरेरासुरिर्भारद्वाजाद्भारद्वाज आत्रेयात् ॥२७॥

आत्रेयो माण्टेः । माण्टिर्गौतमाद्गौतमो गौतमाद्गौतमो वात्स्याद्वात्स्यः शाण्डिल्या-
च्छाण्डिल्यः कैशोर्यात्काप्यात्कैशोर्यः काप्यः कुमारहारितात्कुमारहारितो गाल-
१५ वाद्गालवो विदर्भीकौण्डिन्याद्विदर्भीकौण्डिन्यो वत्सनपातो बाभ्रवाद्वत्सनपाद्बाभ्रवः
पथः सौभरात्पन्थाः सौभरोऽयास्यादाङ्गिरसादयास्य आङ्गिरस आभूतेस्त्वाष्ट्रादा-
भूतिस्त्वाष्ट्रो विश्वरूपात्त्वाष्ट्राद्विश्वरूपस्त्वाष्ट्रोऽश्विभ्यामश्विनौ दधीच आथर्व-
णाद्दध्यङ्ङाथर्वणोऽथर्वणो दैवादथर्वा दैवो मृत्योः प्राध्वꣳसनान्मृत्युः प्राध्वꣳसनः
प्रध्वꣳसनात्प्रध्वꣳसन एकर्षेरेकर्षिर्विप्रजितेर्विप्रजितिर्व्यष्टेर्व्यष्टिः सनारोः सनारुः
२० सनातनात्सनातनः सनगात्सनगः परमेष्ठिनः परमेष्ठी ब्रह्मणो ब्रह्म स्वयंभु ब्रह्मणे नमः ॥२८॥

इति बृहदारण्यकोपनिषदि चतुर्थाध्यायस्य तृतीयं ब्राह्मणम् ॥३॥

इति बृहदारण्यकोपनिषदि चतुर्थोऽध्यायः ॥४॥

इति बृहदारण्यकक्रमेण सप्तमोऽध्यायः ॥७॥

२५ इत्यारभ्य ब्रह्मणे नम इत्यन्तम् । अथ सांगोपांगस्य सफलस्यात्मविज्ञानस्य प्रबन्धनानन्तरं याज्ञवल्कीयकाण्डस्य वंशः कथ्यते इति शेषः । प्रथमान्तः शिष्यः पञ्चम्यन्तो गुरुरिति मधुकाण्डवद्व्याख्येयम् ॥२६॥

आग्निवेश्यः सैतवात् ॥२७॥

आत्रेयो मांटेः ॥२८॥

इति श्रीविद्यारण्यमुनिविरचितमाध्यन्दिनशाखीयबृहदारण्यकोपनिषद्दीपिकाया

३० चतुर्थाध्याये तृतीयं ब्राह्मणम् ॥३॥

इति बृहदारण्यकोपनिषदि चतुर्थोऽध्याय ॥४॥

इति बृहदारण्यकक्रमेण सप्तमोऽध्याय ॥७॥

# अथ पञ्चमोऽध्यायः

## अथ पञ्चमाध्यायस्य प्रथमं ब्राह्मणम्

**पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते। पूर्णस्य पूर्णमादाय पूर्णमेवाव-
शिष्यत ओ३म् खं ब्रह्म खं पुराणं वायुरं खमिति ह स्माऽऽह
कौरव्यायणीपुत्रो वेदोऽयं ब्राह्मणा विदुर्वेदैनेन यद्वेदितव्यम् ॥१॥** ५

**इति बृहदारण्यकोपनिषदि पञ्चमाध्यायस्य प्रथमं ब्राह्मणम् ॥१॥**

तदेव यद्विज्ञानं केवलममृत्वसाधनं स आत्मा निरुपाधिकोऽशनायाद्यतीतो यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरो नेति नेत्यादिलक्षणः काण्डद्वये निर्द्धारितः। अधुना तस्यैवोपाधिवैशिष्ट्यमापन्नस्य प्रमाणप्रमेयादि-व्यवहारविषतामुपगतस्याभ्युदयफलानि क्रममुक्तिफलानि कर्मसमृद्धयर्थानीति त्रिविधोपासनानि पूर्वत्रानुक्तानि वक्तव्यानीत्येतदर्थं खिलकाण्डं प्रवर्तते। पूर्वत्रानुक्तं वक्तव्यत्वेन परिशिष्टं खिलमिति हि खिललक्षणम्। तत्र सर्वो- १० पास्त्यङ्गभूतान् ओकारो दमो दानं दयेति पदार्थान् विधित्सन्ती श्रुतिः पूर्वमात्मयाथात्म्यविज्ञानप्रसिद्धये मिथ्याभूत-कार्यकारणसंबन्धमाश्रित्य तात्पर्येण व्याख्यातस्य ब्रह्मणः शुद्ध स्वरूपं पूर्वोपात्तकार्यकारणसंबन्धस्य हेयत्वं द्योतयितुमनुवदति—**पूर्णमद** इति मन्त्रेण। अद इति परोक्षाभिधायि सर्वनाम। पूर्णमिति वेदान्ते अन्तशून्यं वा दान्तशान्तपूर्णदस्तस्पष्टछन्नज्ञप्ता इति कर्तरि निष्ठान्त निपातितम्। तथा चादः परोक्षं ब्रह्म पूर्णमाकाशवद्व्यापि निरन्तरं निरुपाधिकं चेत्यर्थः। अनेन लक्ष्यं तत्पदार्थं दर्शयित्वा लक्ष्यं त्वपदार्थं दर्शयति—**पूर्णमिदमिति**। यदिदं नामरूपो- १५ पाधिविशिष्टव्यवहारापन्नं तदपि केवलेन स्वेन निरुपाध्यात्मना परमात्मस्वरूपेण पूर्णं व्यापि न तूपहितेन विशिष्टेन रूपेण पूर्णमित्यर्थः। एवं लक्ष्यौ तत्त्वंपदार्थावुक्तौ तावेव वाच्यभूतौ कथयस्त्वंपदार्थस्य पूर्णत्वे हेतुं दर्शयति—**पूर्णात्पूर्णमुदच्यत इति**। पूर्णात्कारणात्मनोऽविद्यामयात्पूर्णमेवोदच्यत उद्रिच्यते उद्गच्छतीत्यर्थः। संप्रत्यैक्यज्ञानफलमाह—**पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यत इति**। पूर्णस्य कार्यात्मनो ब्रह्मण पूर्णं पूर्णत्वमादाय गृहीत्वाऽऽत्मरूपैकरसत्वमा-पाद्य अविद्याकृतं भूतमात्रोपाधिसंसर्गजन्यत्वावभासं विद्यया तिरस्कृत्य पूर्णमेवानन्तरमबाह्यं प्रज्ञानघनैकरसस्वभावं २० केवलं ब्रह्मावशिष्यत इत्यर्थः। "ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेदहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवदि"त्युपक्रम-स्थः श्रुत्यर्थं एवानेन मन्त्रेणोपसहृतस्तत्र "पूर्णमदः पूर्णमिदमि"त्यनेन"ब्रह्म वै"ति पदस्यार्थ उक्तः। "पूर्णात्पूर्णमि"-त्यादिमन्त्रशेषेण "इदमग्र आसीदि"त्यादेरर्थ उक्तः। अत्र एकवाक्यत्वेनोपक्रमोपसंहारयोरैकरूप्यश्रुतितात्पर्यलिङ्गात् शास्त्रप्रतिपाद्यं ब्रह्मात्मैक्यमेवेति तात्पर्यार्थः। अधुना ध्यानविधानार्थं तस्मिन्विनियुक्तं मन्त्रं तावदाह—**ॐ खं ब्रह्मेति**। इह ध्यानसाधनत्वेनैवोङ्कारस्योपदेशः। अत्र ब्रह्मपदमोङ्कारालम्बनस्य विशेषस्याभिधानं तस्य ब्रह्मशब्दस्य बृहद्वस्तु- २५ सामान्यवाचिनः सर्वत्र प्रसक्तौ खमिति विशेषणम्। नीलमुत्पलमितिवत् खब्रह्मणोः सामानाधिकरण्यात्तयोरेक-त्वसिद्धिः। तथा च यथा विष्ण्वङ्गाङ्किताया शिलादिप्रतिमायां विष्णुबुद्धिः क्रियते तथोङ्कारे खं ब्रह्मेत्युपासनं कर्त्तव्य-मिति वाक्यार्थः। अस्मिन्मन्त्रे खंशब्दाद्भौतिकखप्रतीतिर्माभूदित्यभिप्रायेण मन्त्रविनियोजकं ब्राह्मणं प्रवर्तते—**खं पुराणमित्यादि**। पुराणं चिरन्तन खं परमात्माकाशमिति यावत्। तथा च खमिति विशेषणेन बृहदर्थसामान्यवाचिनो ब्रह्मशब्दस्यानादिकारणचैतन्यविषयत्व निश्चितमित्यर्थः। नन्वस्य कारणब्रह्मणोऽतीन्द्रियत्वात्कथमोङ्कारे तदुपास्य- ३० मित्यत. कल्पान्तरमाह—**वायुरं खमिति ह स्माह कौरव्यायणीपुत्र इति**। वायुः विद्यते यस्मिन् तद्वायुरं ख भौतिका-काशं तदवच्छिन्न ब्रह्मोङ्कारालम्बनम्। भौतिकाकाशे खशब्दप्रयोगस्य बहुलमुपलंभादिति कौरव्यायणीपुत्रः ह किल आह स्मोक्तवान्। एव सति कारणब्रह्माकाशब्रह्मपक्षयोरुभयोरपि श्रौतत्वाविशेषादोङ्कारे दृष्टिद्वयमैच्छिकमिति भावः। एवमोङ्कारप्रतीके कार्यकारणोभयविधं ब्रह्म ध्येयमित्यभिप्रेत्योङ्कारस्य वेदत्वनिरुक्त्या ब्रह्मवाचकत्वं साध-यति—**वेदोऽयं ब्राह्मणा विदुः**। **वेदैनेन यद्वेदितव्यमिति**। यस्माद्यद्वेदितव्य प्रकाश्यमानमभिधीयमानं ब्रह्म तदनेनो- ३५ ङ्कारेण वेद साधकः पुमान् विजानाति उपलभते तस्माद्वेदोऽयमोङ्कार इति ब्राह्मणा विदुरित्यन्वयः। यद्यपि ब्रह्मात्म-शब्दा ब्रह्मणो वाचकाः सन्ति तथापि श्रुतिप्रामाण्यादोङ्कारो ब्रह्मणो नेदिष्ठमभिधानमतिप्रियतमं नामेत्यवगम्यते।

१. पा० ७-२-२७

अथ पञ्चमाध्यायस्य द्वितीयं ब्राह्मणम्

**त्रयाः प्राजापत्याः । प्रजापतौ पितरि ब्रह्मचर्यमूषुर्देवा मनुष्या असुराः ॥१॥**

**उषित्वा ब्रह्मचर्यं देवा ऊचुः । ब्रवीतु नो भवानिति तेभ्यो हैतदक्षरमुवाच द इति व्यज्ञासिष्टा३ इति व्यज्ञासिष्मेति होचुर्दाम्यतेति न आत्थेत्योमिति होवाच व्यज्ञासिष्टेति ॥२॥**

**अथ हैनं मनुष्या ऊचुः । ब्रवीतु नो भवानिति तेभ्यो हैतदेवाक्षरमुवाच द इति व्यज्ञासिष्टा३ इति व्यज्ञासिष्मेति होचुर्दत्तेति न आत्थेत्योमिति होवाच व्यज्ञासिष्टेति ॥३॥**

**अथ हैनमसुरा ऊचुः । ब्रवीतु नो भवानिति तेभ्यो हैतदेवाक्षरमुवाच द इति व्यज्ञासिष्टा३ इति व्यज्ञासिष्मेति होचुर्दयध्वमिति न आत्थेत्योमिति होवाच व्यज्ञासिष्टेति तदेतदेवैषा दैवी वागनुवदति स्तनयित्नुर्द द द इति दाम्यत दत्त दयध्वमिति तदेतत्त्रय शिक्षेद्दमं दानं दयामिति ॥४॥** १०

**इति बृहदारण्यकोपनिषदि पञ्चमाध्यायस्य द्वितीयं ब्राह्मणम् ॥२॥**

इतरस्यापि वेदस्य वेदत्वं तु वेदितव्यवेदनहेतुत्वादेव तस्माद्विशिष्टोऽयमोङ्कारो ब्रह्मोपास्तिसाधनत्वेन प्रतिपत्तव्य इत्यर्थः ॥१॥.

इति श्रीविद्यारण्यमुनिविरचितमाध्यन्दिनशाखीयबृहदारण्यकोपनिषद्दीपिकाया

१५ पञ्चमाध्याये प्रथमं ब्राह्मणम् ॥१॥

एवमाभ्यन्तरसर्वोपास्तिसाधनोमोङ्कार इत्युक्तम् । इदानी बाह्यं दमादिसाधनत्रयं विधातव्यं तेनापि विशिष्ट एव बाह्याभ्यन्तरशुचिः सन् सर्वोपास्तिष्वधिक्रियतेऽतस्तद्विधानायार्थवादमाह—**त्रयाः प्रजापत्याः प्रजापतौ पितरि ब्रह्मचर्यमूषुरिति** । त्रयास्त्रिप्रकाराः प्राजापतेरपत्यभूताः प्रजापतौ विराडात्मनि पितरि समीपे शिष्याः सन्तो ब्रह्मचर्यमूषुरिति । ब्रह्मचर्यमूषुरुषितवन्तः । के ते प्राजापत्या इत्यपेक्षायामाह—**देवा मनुष्या असुरा इति** । २० सुबोधम् ॥१॥

ततस्ते किं कृतवन्त इत्यपेक्षायामाह—**उषित्वा ब्रह्मचर्यं देवा ऊचूरिति** । ते देवा मनुष्या असुराश्च ब्रह्मचर्यमुषित्वा क्रमेण प्रश्नं कुर्वाणाः प्रथमं देवा ऊचुरुक्तवन्त इत्यर्थ. । किमित्यपेक्षायामाह—**ब्रवीतु नोभवानिति** । भवान्नोऽस्मभ्यमनुशासनं ब्रवीतु कथयत्वित्यर्थः । एवं देवैरनुशासने प्रार्थिते प्रजापतिः किमाहेत्यपेक्षयामाह—**तेभ्यो हैतदेवाक्षरमुवाच द इतीति** । तेभ्योऽर्थिभ्यो ह किल द इत्येदक्षरं वर्णमात्रमुवाचोक्तवान् । देवानेवं शिक्षयित्वा तेषा २५ स्वोपदिष्टविद्याप्रतिपत्तिपरीक्षार्थं पिता पृष्टवानिति दर्शयति—**व्यज्ञासिष्टा इतीति** । प्लुतिर्विचारार्था मयोपदिष्टस्याक्षरस्यार्थं यूयं विज्ञातवन्तो नवेति प्रश्नार्थः । एवं पृष्टे देवोक्तं वचनं कथयति—**व्यज्ञासिष्मेति होचुरिति** । विज्ञातवन्तो वयमित्यूचुरित्यर्थः । यद्येवं तर्ह्युच्यतां किं मयोक्तमिति प्रजापतेराकांक्षाया स्वाभिप्रायानुसारेण देवैरवगतमर्थं दर्शयति—**दाम्यतेति न आत्थेतीति** । स्वभावतोऽदान्ता यूयमतो दाम्यन दान्ता भवतेति त्वं नोऽस्मानात्थ कथयसीत्युक्त इत्यर्थः । देवोक्तं प्रजापतिरङ्गीकृतवानित्याह—**ओमिति होवाचेति** । ओंशब्दार्थमेव विशदयति—**व्यज्ञासिष्टेतीति** । ३० सम्यक् ज्ञातं भवद्भिरित्यङ्गीकृतवानित्यर्थ. । समानमुत्तरपर्यायद्वयेऽपि व्याख्यानम् ॥२॥

स्वभावतो लुब्धा यूयमतो दत्त यथाशक्त्यान्नादिकं विभजतेति नोस्मानात्थ किमन्यद्ब्रूयान्नो हितमिति स्वाभिप्रायानुसारेण मनुष्यादयोऽर्थं गृहीतवन्त इति एवमसुरपर्यायतात्पर्यार्थः । प्रजापतेरनुशासनं प्रागासीदीत्यत्र लिङ्गमाह—**तदेवैषा दैवी वागनुवदतीति** । तदेतत्प्रजापतेरनुशासनमेषा दैवी वागनुवदति तेन रूपेण प्रवर्तत इत्यर्थः । कैषा दैवी वाक्कथं वा सा श्रूयत इत्यपेक्षायामाह—**स्तनयित्नुर्द द द इतीति** । अत्र विसन्धिकरणं तु सर्वत्र वर्णान्तरापोहार्थम् । ३५ स्तनयित्नुः एषा दैवी वाक् दकारत्रयोच्चरणेन स्तनयित्नुशब्दानुकरणमात्रं विवक्षितम् । न तु त्रित्वं प्रमाणाभावादित्यर्थः । ननु तर्हि त्रिर्दकारोच्चारणं किमर्थं तेषां च को वाऽर्थं इत्यत आह—**दाम्यत दत्त दयध्वमितीति** । दमो दानं दयेत्यर्थत्रयमुपलक्षयितुं त्रिर्दकारोच्चारणमित्यर्थः । यमर्थं विधातुमयमाख्यायिकारूपोऽर्थवादो विधेयस्तावकत्वेन

अथ पञ्चमाध्यायस्य तृतीयं ब्राह्मणम्

**वायुरनिलममृतं भस्मान्तं शरीरम्। ओ३म्। क्रतो स्मर। क्लिबे स्मराग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान्। युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नम उक्तिं विधेमेति ॥१॥**

इति बृहदारण्यकोपनिषदि पञ्चमाध्यायस्य तृतीयं ब्राह्मणम्

अथ पञ्चमाध्यायस्य चतुर्थं ब्राह्मणम्

**एष प्रजापतिर्यद्धृदयम्। एतद्ब्रह्मैतत्सर्वं तदेतत्त्र्यक्षरँ हृदयमिति हृ**

प्रवृत्तस्तमर्थमिदानी विदधाति—तदेतत्त्रयं शिक्षेत् उपदध्यात् प्रजापतेरनुशासनमस्माभिः कर्तव्यमिति मतिं कुर्यादघुनातनो मनुष्य इत्यर्थः ॥३-४॥

इति श्रीविद्यारण्यमुनिविरचितमाध्यन्दिनशाखीयबृहदारण्यकोपनिषद्दीपिकाया पञ्चमाध्याये द्वितीयं ब्राह्मणम् ॥२॥ १०

मुक्तस्यापि शरीरपातेऽधुना कथममृतत्वमाध्यात्मिकवाय्वादिप्रतिबन्धादित्यत आह—वायुरनिलममृतमिति। ममामृतस्य सत्यस्य शरीरपाते सति तत्स्थः आध्यात्मिकप्राणरूपो वायुरनिलं बाह्यममृतमाधिदैविकं प्रति गच्छत्विति शेषः। एतद्वायुग्रहणमन्येषामपि देवानामुपलक्षणार्थम्। अन्येऽपि देवाः स्वां स्वा प्रकृतिं गच्छन्त्वित्यर्थः। नन्वेवं देहस्थदेवतानामप्रतिबन्धकत्वेऽपि देहस्यैव सूक्ष्मतां गतस्य प्रतिबन्धकत्वान्नामृतत्वसिद्धिरित्यत आह—भस्मान्तं शरीरमिति। भस्मान्तं सत्पृथिवी प्रति यातु भस्मान्तलिङ्गात्कर्मिण एवैतदुपस्थानं न संन्यासिनामिति गम्यते। तेषां दाहासम्भवादित्यर्थः। एवमुपस्थानमुक्त्वाऽग्नेरुपस्थानमाह—ॐ३ क्रतो स्मर क्लिबे स्मरेति। ओमिति क्रतो इति चाग्निदेवतासम्बोधनार्थावेव शब्दौ, अवतीत्यो स्वरः सर्वरक्षकः स च जाठरप्रतीकत्वेनोपासितत्वादग्निः अग्निश्च क्रतुसाध्यत्वेन क्रतुसाधनत्वेन चक्रतुरित्युच्यते। तथा च हे ॐ क्रतो अग्ने स्मर इति इष्टां गतिं जिगमिषता मया स्मरणे त्वं नियुज्यसे अन्तकाले हि त्वया स्मरणे कृते सति इष्टा गतिः प्राप्यतेऽतः प्रार्थ्यसे क्लिबे कृताय लोकाय स्मर पुनरप्यग्निविषयं प्रार्थनान्तरमाह—अग्ने नय सुपथेति। हे देव द्योतनात्मकाग्ने त्वं विश्वानि वयुनानि सर्वाणि प्रज्ञानानि विद्वान् ज्ञानवाचिवयुनपदं कर्मपूर्वप्रज्ञयोरुपलक्षणार्थम्। एतानि विद्वान् जानन्हि त्वमस्मान् त्वदुपासकान् सुपथा शोभनेनोत्तरेण शुक्लेन मार्गेण पुनरावृत्तिरहितेन नय प्रापय, किमर्थं राये धनाय कर्मफलभोगायेति यावत् किं चास्मदस्मत्तो जुहुराणं कुटिलं वञ्चनात्मकं देवयानप्राप्तिप्रतिबन्धकमेनः पापं युयोधि वियोजय विनाशयेत्यर्थः। वयं तु देहावसानकालेऽन्यत्कर्तुमशक्ता इदानी ते तुभ्यं भूयिष्ठं बहुतमं नमस्कारवचनं विधेम समर्पयेम नमस्कारमात्रसमर्पणेन परिचरेम। तच्च त्वया सर्वाधिकत्वेन ग्राह्यमित्यर्थः। इतिशब्दः समाप्तिद्योतकः ॥१॥ १५ २० २५

इति श्रीविद्यारण्यमुनिविरचितमाध्यन्दिनशाखीयबृहदारण्यकोपनिषद्दीपिकायां पञ्चमाध्याये तृतीयं ब्राह्मणम् ॥३॥

इदानी सोपाधिकस्य ब्रह्मणो निरुपाधिकस्वरूपेऽनधिकृतानां ध्यानभेदोक्त्यर्थमुत्तरं ग्रन्थजातं प्रवर्तते। तत्र प्रजापतिर्देवादीनामनुशास्तेति सामान्यतः श्रवणादक्षादिष्वपि प्रजापतित्वशङ्का मा भूदिति प्रजापतिं विशिनष्टि—एष प्रजापतिर्यद्धृदयमिति। हृदयशब्दस्तत्स्थबुद्धिविषयः। यस्मिन् हृदये शाकल्यब्राह्मणे किंदेवतोऽस्यामित्यादिना नामरूपकर्मणा दिग्विभागेनोपसंहार उक्तस्तद्धृदयेन व्याप्तत्वात्। अतो हृदयं ब्रह्मैव दीर्घकालादरनैरन्तर्येण भावेनोपास्यमित्यर्थः। ननु कथं हृदयस्य प्रजापतिना सहैक्यमुच्यते हृदयस्य सूक्ष्मत्वात्प्रजापतेश्च सर्वात्मकत्वादित्यत आह—एतत्सर्वमिति। एतद्धृदयं सर्वात्मकं शाकल्यब्राह्मणोक्तरीत्या। एवं प्रजापतिरपि त्र्यन्नब्राह्मणोक्तरीत्या सर्वात्मकः। अत उभयोः सर्वात्मकत्वाद्युक्तं तयोरैक्यवचनमित्यर्थः। एवमुपास्यत्वेन सिद्धस्य हृदयस्य स्तुत्यर्थं तन्नामाक्षरैकदेशोपासनमाह—तदेतत्त्र्यक्षरमित्यादिना। तदेतत्प्रसिद्धं हृदयं नाम त्र्यक्षरं त्रीण्यक्षराणि यस्येति व्युत्पत्तेरित्यर्थः। कानि पुनस्त्रीण्यक्षराणीत्यपेक्षायां सफलदर्शनं प्रथमाक्षरं तावदाह—हृ इत्येकमक्षरमभिहरन्त्यस्मै स्वाश्चान्ये ३० ३५

इत्येकमक्षरमभिहरन्त्यस्मै स्वाश्चान्ये च य एवं वेद द इत्येकमक्षरं ददत्यस्मै स्वाश्चान्ये च य एवं वेद यमित्येकमक्षरमेति स्वर्गं लोकं य एवं वेद ॥१॥

इति बृहदारण्यकोपनिषदि पञ्चमाध्यायस्य चतुर्थं ब्राह्मणम्

अथ पञ्चमाध्यायस्य पञ्चमं ब्राह्मणम्

५ तद्वै तदेतदेव तदास । सत्यमेव स यो हैवमेतन्महद्यक्षं प्रथमजं वेद सत्यं ब्रह्मेति जयतीमाँल्लोकाञ्जित इन्न्वसावसद्य एवमेतन्महद्यक्षं प्रथमजं वेद सत्यं ब्रह्मेति सत्यँ ह्येव ब्रह्म ॥१॥

इति बृहदारण्यकोपनिषदि पञ्चमाध्यायस्य पञ्चमं ब्राह्मणम्

च य एवं वेदेति । यस्मादस्मै हृदयब्रह्मणे स्वा इन्द्रियाणि अन्ये च विषयाः शब्दादयः स्वं स्वं कार्यमभिहरन्ति हृदयं च १० भोक्त्रर्थं स्वविषयसुखादिकमभिहरति तस्माद्धृदयनामाक्षरत्वेन सम्बद्धं हरतेराहरतिकर्मणो हृ इत्येवं यो वेद अस्मै विदुषे स्वा ज्ञातयः सम्बन्धिनोऽभिहरन्ति बलिमिति वाक्यशेषः । पूर्ववद्द्वितीयाक्षरमाह—द इत्येकमक्षरं ददत्यस्मै स्वाश्चान्ये च य एवं वेदेति । यस्मात्पूर्वोक्ताः स्वा अन्ये च हृदयब्रह्मणे स्वं स्वं वीर्यं ददति ददते प्रयच्छन्तीत्यर्थः । हृदयं च भोक्त्रे तद्ददाति तस्माद्दातेर्दानकर्मणो द इत्येतद्रूपं हृदयनामाक्षरत्वेन सम्बद्धं यो वेद अस्मै विदुषे स्वाश्चान्ये च स्वं स्वं वीर्यं ददति प्रयच्छन्तीत्यर्थः । "दद"दाने इत्यस्य धातोरात्मनेपदिनोऽपि भौवादिकस्य व्यत्ययेन परस्मैपदं १५ बोद्धव्यम् । तथा तृतीयमक्षरमाह—यमित्येकमक्षरमेति स्वर्गलोकं य एवं वेदेति । अस्मात्स्वा अन्ये च विषया हृदयब्रह्म प्रति यन्ति हृदयं च भोज्यं प्रत्येति । तस्मादिणो गत्यर्थस्य यमित्येतद्रूपं हृदयनामाक्षरत्वेन सम्बद्धं यो वेद स विद्वान्स्वर्गलोकं प्रत्येति गच्छति । एतत्फलमत्र विज्ञानानुरूपमेवेत्यर्थः । तथा च हृदयनामाक्षरैकदेशोपासनादपि विशिष्टं फलं प्राप्नोति । किमु वक्तव्यं हृदयस्वरूपोपासनादिति हृदयस्तुत्यर्थमेव नामाक्षरोपासनोपन्यासो न तु पुनः नामाक्षरोपासनानि त्रीणि हृदयस्वरूपोपासनमपरमिति चत्वारि ॥१॥

२० इति श्रीविद्यारण्यमुनिविरचितमाध्यन्दिनशाखीयबृहदारण्यकोपनिषद्दीपिकायां पञ्चमाध्याये चतुर्थं ब्राह्मणम् ॥४॥

अत्रोपासनान्तरं विधित्सन्ती श्रुतिराह—तद्वै तदेतदेव तदासेति । अत्र प्रथमतस्तच्छब्दो हृदयाख्यब्रह्म-परामर्शि वैशब्दः स्मरणार्थस्तदुच्यते विधान्तरेणेत्येवं हृदयाख्यब्रह्मण एव विधान्तरप्रतिज्ञार्थो द्वितीयस्तच्छब्दः । किं तद्विद्यान्तरमित्यपेक्षायां वक्ष्यमाणं विद्यान्तरमेतदेवेत्यनेन शब्देनोक्ता । तस्य पूर्वोक्तहृदयब्रह्मणा सामानाधिकरण्य-२५ प्रदर्शनार्थस्तृतीयस्तच्छब्दः । तथा च तद्वै हृदयं ब्रह्म एतदेव वक्ष्यमाणप्रकारं तदासेति पर्यवसितोऽर्थः । कोऽसौ वक्ष्यमाणः प्रकार इत्यपेक्षायामाह—सत्यमेवेति । यद्ब्रह्म हृदयात्मनोक्तं तत्सत्यमेव सच्च त्यच्च सत्यं पञ्चभूतात्मकमाधिदैविकं तत्त्वं हिरण्यगर्भात्मकमित्यर्थः । तस्य स्वरूपकथनपूर्वकं तद्विज्ञानफलमाह—यो हैवमेतन्महद्यक्षं प्रथमजं वेद सत्यं ब्रह्मेति जयतीमाल्लोकानिति । यः साधको महदपरिच्छेद्यं महत्त्वाद्यक्षं पूज्यं प्रथमजं सर्वस्माद्विराडादेः संसारिणः -सकाशात्पूर्वमेवोत्पन्नमेवंविधं सत्यं ब्रह्म वेद स इमान् लोकान् जयति यथा सत्येन ब्रह्मणा इमे लोका आत्म-३० सात्कृतास्तद्वदित्यर्थः । कैमुतिकन्यायेन फलान्तरमाह—जित इन्न्वासासदिति । इन्नु इत्थ य यथा सत्येन ब्रह्मणाऽनु-तात्मा शत्रुर्जितस्तथाऽनेनाप्युपासकेनासौ शत्रुर्जितोऽसदस्तु भवतु । तथा च लोका येन जितास्तस्य शत्रुजये किं वक्तव्यमित्यर्थः । कथमीदृग्विज्ञानादुपासकस्येदं फलमित्यपेक्षायामुक्तोपास्यानुवादपूर्वकं हेतुमाह—य एवमेतं महदित्यादि सत्यं ह्येव ब्रह्मेत्यन्तं, हि यस्मात्सत्यमेव ब्रह्मोक्तरीत्या लोकजिच्छत्रुजिच्च तस्मादुपासकस्याप्युपासनानुरूपमुक्तं फलं युक्तमेवेत्यर्थः ॥१॥

३५ इति श्रीविद्यारण्यमुनिविरचितमाध्यन्दिनशाखीयबृहदारण्यकोपनिषद्दीपिकायां पञ्चमाध्याये पञ्चमं ब्राह्मणम् ॥५॥

अथ पञ्चमाध्यायस्य षष्ठं ब्राह्मणम्

आप एवेदमग्र आसुः। ता आपः सत्यम-
सृजन्त सत्यं ब्रह्म ब्रह्म प्रजापतिं प्रजापतिर्देवान् ॥१॥
ते देवाः सत्यमित्युपासते। तदेतत्त्र्यक्षरँ सत्यमिति स इत्येकमक्षर-
न्तीत्येकमक्षरममित्येकमक्षरं प्रथमोत्तमे अक्षरे सत्यं मध्यतोऽनृतं तदेत- ५
दनृतँ सत्येन परिगृहीतँ सत्यभूयमेव भवति नैवं विद्वाँसमनृतँ हिनस्ति ॥२॥
तद्यत्तत्सत्यम्। असौ स आदित्यो य एष एतस्मिन्मण्डले
पुरुषो यश्चायं दक्षिणेऽक्षन्पुरुषस्तावेतावन्योन्यस्मिन्प्रतिष्ठितौ

इदानीं सत्यब्रह्मस्तुत्यर्थं तस्य प्रथमजत्वं साधयति—आप एवेदमग्र आसुरिति। अग्निहोत्रादिकर्मसु हूयमाना आहूतयः पयः सोमादिका अत्रापूशब्देनोच्यन्ते। तथा च यथोक्ता आपो जगतो बीजभूता अव्याकृतात्मनि १० अवस्थिता एवेदं सर्वं नामरूपात्मकं विकारजातं जगदग्रे सृष्टेः पूर्वमासुः नान्यत्किञ्चिद्विकारजातमासीदिति वाक्यार्थः। इदानीमप्शब्दोपलक्षितान्मूलकारणात् सूत्रोत्पत्तिमाह—ता आपः सत्यमसृजन्तेति। उक्तलक्षणाः पुनः आपो भूतान्तरसहिताः सत्य सूत्रात्मक हिरण्यगर्भमसृजन्त सृष्टवत्यः। एतेन सत्यस्य ब्रह्मणः प्रथमजत्वं सिद्धमित्यर्थः। एतस्य पूर्वोपक्रान्ताद्वयसत्यब्रह्मणः सकाशाद्भिन्नत्वशङ्कां वारयति—सत्यं ब्रह्मेति। एवं सत्यस्य ब्रह्मणः प्रथमजत्वं निरूप्य तस्यैव महत्त्वं साधयति—ब्रह्म प्रजापतिमिति। तत्सत्यं ब्रह्म हिरण्यगर्भाख्यं प्रजापतिं प्रजानां पतिं १५ विराजमसृजतेत्यनुषङ्गः। तथा च सर्वजगदात्मकविराडात्मस्रष्टृत्वात्सूत्रात्मकं सत्यं ब्रह्म महदित्यर्थः। इदानीं तस्य यक्षत्वं निरूपयितुमुत्पन्नाद्विराडात्मनः सकाशादिन्द्रादिदेवतासृष्टिमाह—प्रजापतिर्देवानिति। असृजतेत्यत्राप्यनुषङ्गः देवतासृष्टिश्रुतिरपि महत्त्वसाधनायेति वा व्याख्या बोध्या ॥१॥

अथ यक्षत्वमाह—ते देवाः सत्यमित्युपासत इति। यस्मादेव सृष्टास्ते देवाः पितरमपि विराजमतीत्य सत्यं ब्रह्मोपासत इत्यतो यक्षं तदित्यर्थः। तथा चैव सिद्धं प्रथमजं महद्यक्षं सत्यं ब्रह्म सर्वात्मनोपास्यमिति भावः। हृदयब्रह्म- २० वदस्यापि सत्यस्य ब्रह्मणः स्तुत्यर्थं वर्णत्रयात्मकं नामाऽऽह—तदेतत् त्र्यक्षरं सत्यमितीति। तदेतत्सत्यमिति नाम त्र्यक्षर-मित्यर्थः। कानि तान्यक्षराणीत्यपेक्षायामाह—स इत्येकमक्षरं तीत्येकमक्षरममिति। भवत्वेवमक्षरत्रयं ततः किमित्य-पेक्षायामक्षरस्वरूपदर्शनानुरूपं फल कथयितुं तेषां स्वरूपं तावदाह—प्रथमोत्तमे अक्षरे सत्यं मध्यतोऽनृतं तदेतदनृतं सत्येन परिगृहीतं सत्यभूयमेव भवतीति। तत्र तेषां प्रथमोत्तमे अक्षरे सकारम्कारौ सत्यममृतं मृत्युरूपाभावात्। मध्यतो मध्ये वर्तमानं तीत्यक्षरमनृतं मृत्युरूपं मृत्य्वनृतयोः सामान्यात्। तदेतदनृतं तीकाराख्यं मृत्युरूपं २५ सत्येन सकारम्कारलक्षणेन परिगृहीतं व्याप्तमन्तर्भावितम्। अतस्तस्याकिञ्चित्वात्सत्यभूयमेव सत्यबाहुल्यमेव भवतीत्यर्थः। एव सत्यबाहुल्यमनृतस्य मृत्योरकिञ्चित्करत्वं च विजानतः फलमाह—नैवं विद्वांसमनृतं हिनस्तीति। एवमित्थं सत्यबाहुल्यं सर्वस्य मृत्योरनृतस्याकिञ्चित्करत्वं विद्वांसं जानन्तमनृतं कदाचित्प्रमादोक्तं न हिनस्ति स्वफल-दानेन न व्याप्नोति बुद्धिपूर्वकस्यानृतस्य विदुषोऽपि बाधकत्वादित्यर्थः ॥२॥

एवं विशिष्टसत्योपास्तिमुक्त्वेदानीं तस्यैवाध्यात्मिकाधिदैविकसंस्थानभेदवैशिष्ट्यं कल्पयित्वा तदुपास्त्यर्थ- ३० माह—तद्यत्तत्सत्यमसौ स आदित्य इति। यत्सत्यं ब्रह्मैवोक्तं तदसौ स प्रसिद्धः कोऽसौ आदित्यः। कः पुनरादित्यः? य एष एतस्मिन् प्रसिद्धमण्डले पुरुषो मण्डलाभिमानी यश्च दक्षिणेऽक्षन्दक्षिणेऽक्षिणि पुरुषः सोऽसौ सत्यब्रह्मेत्यर्थः। ननु प्रदेशभेदवर्तिनोः स्थानभेदेन भेदादुपासनाभेद. स्यादित्याशङ्कायामाह—तावेतावन्योन्यस्मिन् प्रतिष्ठिताविति। तावेतावादित्याक्षिस्थौ पुरुषावेकस्यैव सत्यब्रह्मणः स्थानविशेषौ यस्मादन्योन्यस्मिन्नादित्यश्चाक्षुषे चाक्षुषश्चादित्ये प्रतिष्ठितौ अतस्तयोर्भिन्नत्वेनैव प्रतिभासमानत्वेऽपि वस्तुतो भेदाभावान्नोपासनाभेद इत्यर्थः। कथं तावन्योन्यस्मि- ३५ न्प्रतिष्ठिताविल्यपेक्षायां परस्परोपकार्योपकारकभावेनेत्याह—रश्मिभिर्वा एषोऽस्मिन्प्रतिष्ठितः प्राणैरयममुष्मिन्निति। आदित्योऽस्मिंश्चक्षुष्यध्यात्मे रश्मिभिः प्रकाशेनोपकुर्वन् प्रतिष्ठितः। अयं च चाक्षुषः प्राणैश्चक्षुरादिभिरिन्द्रियैर्मण्डल प्रकाशयन्नमुष्मिन्नादित्येऽधिदेवते प्रतिष्ठितोऽनयोरुपकार्योपकारकभावस्य प्रसिद्धत्वादित्यर्थः। इदानीं ज्ञानाधिकारि-

रश्मिभिर्वा एषोऽस्मिन्प्रतिष्ठितः प्राणैरयममुष्मिन्स यदोत्क्रमिष्य-न्भवति शुद्धमेवैतन्मण्डलं पश्यति नैनमेते रश्मयः प्रत्यायन्ति ॥३॥

य एष एतस्मिन्मण्डले पुरुषः। तस्य भूरिति शिर एकꣳ शिर एकमेत-दक्षरं भुव इति बाहू द्वौ बाहू द्वे एते अक्षरे स्वरिति प्रतिष्ठा द्वे प्रतिष्ठे
५ द्वे एते अक्षरे तस्योपनिषदहरिति हन्ति पाप्मानं जहाति च य एवं वेद ॥४॥

अथ योऽयं दक्षिणेऽक्षन्पुरुषः। तस्य भूरिति शिर एकꣳ शिर एकमेतदक्षरं भुव इति बाहू द्वौ बाहू द्वे एते अक्षरे स्वरिति प्रतिष्ठा द्वे प्रतिष्ठे द्वे एते अक्षरे तस्योपनिषदहमिति हन्ति पाप्मानं जहाति च य एवं वेद ॥५॥

इति बृहदारण्यकोपनिषदि पञ्चमाध्यायस्य षष्ठं ब्राह्मणम् ॥६॥

१० अथ पञ्चमाध्यायस्य सप्तमं ब्राह्मणम्

विद्युद्ब्रह्मेत्याहुः। विदानाद्विद्युद्विद्यत्येनꣳ सर्वस्मा-त्पाप्मनो य एवं वेद विद्युद्ब्रह्मेति विद्युद्ध्येव ब्रह्म ॥१॥

इति बृहदारण्यकोपनिषदि पञ्चमाध्यायस्य सप्तमं ब्राह्मणम् ॥७॥

पुमान्कथं नाम हितमाचरेदित्यभिप्रायवती श्रुतिश्चक्षुरादित्यपुरुषप्रसङ्गागतमरिष्टदर्शनमाह—स यदोत्क्रमिष्यन् भवति
१५ शुद्धमेवैतन्मण्डलं पश्यतीति। सोऽस्मिञ्छरीरे भोक्ता विज्ञानमयो यदा यस्मिन्काले उत्क्रमिष्यन्प्राणास्त्यक्ष्यन्भवति तदा स विज्ञानमयश्चाक्षुष एतद्रविमण्डलं शुद्धं शुद्धमेव विरश्म्येव केवलं चन्द्रमण्डलमिव तिष्ठमानत्वादित्यर्थः। संसारिणः परलोकहिताय यत्कर्तव्यस्तत्र सावधानार्थं प्रासङ्गिकमरिष्टदर्शनं प्रदर्श्येदानीं प्रकृतयोरुपकारकत्वमुक्तं निगमयति—नैनमेते रश्मयः प्रत्यायन्तीति। एते रश्मय एनं चाक्षुषं पुरुषं न प्रत्यायन्ति स्वामिनः कर्मानुरोधेन पूर्वमागच्छन्तोऽपि तत्कर्मक्षये पुनर्नावर्तन्त इत्यर्थः ॥३॥

२० एवं स्थानद्वयसम्बन्धिसत्यब्रह्मणो ध्यानमुक्त्वा तस्यैव प्रत्येकं व्याहृत्यवयवकत्वेन ध्यानमाह—कण्डिका-द्वयेन। य एष एतस्मिन्मण्डले पुरुषस्तस्य भूरिति शिर इत्यादिना। य एष एतस्मिन्मण्डले पुरुषः सत्यनामा तस्य भूरिति प्रथमा व्याहृतिः शिरः उभयोः प्राथम्यसाम्यादित्यर्थः। एवं प्रथमव्याहृतौ शिरोदृष्ट्यध्यारोपे सामान्यान्तरमाह—एकं शिर एकमेतदक्षरमिति। यथा शिर एकं तथा भूरित्यक्षरमप्येकं ततो युक्तं तत्र तदध्यारोपणमित्यर्थः। द्वितीय-व्याहृतावादित्यपुरुषबाहुदृष्टिमाह—भुव इति बाहू इति। तत्र द्वित्वं सामान्यं नियामकमाह—द्वौ बाहू द्वे एते अक्षरे
२५ इति। तृतीयायां व्याहृतौ पाददृष्टिमाह—स्वरिति प्रतिष्ठेति। प्रतितिष्ठत्यनयेति प्रतिष्ठा पादौ तत्र सामान्यमाह—द्वे प्रतिष्ठे द्वे एते अक्षरे इति। सुवरिति वर्णविश्लेषेणैते अक्षरे द्वे इत्यर्थः। एवमुपास्यब्रह्मणः अभिमुखीकरणार्थं रहस्यनामाह—तस्योपनिषदहरितीति। तस्य व्याहृत्यवयवस्य सत्यब्रह्मणोऽहरित्युपनिषत् रहस्यनाम येनाभिधाने-नाभिधीयमानं ब्रह्म लोकवदभिमुखीभवति तदिदं नामेत्यर्थः। उपास्तिफलमाह—हन्ति पाप्मानं जहाति च य एवं वेदेति। आङ्पूर्वकस्य हन्तेर्जहातेर्वा डस्प्रत्यये कृते ह्रस्वत्वे चोपसर्गस्य टिलोपे च सति सिद्धमहरित्येतद्रूपं हन्ते-
३० र्जहातेश्चेति। यो वेद स पाप्मानं हन्ति जहाति च त्यजति चेत्यर्थः ॥४॥

एवमाधिदैविकं व्याहृत्यवयवं ब्रह्मोक्त्वाऽऽध्यात्मिकमाह—अथ योऽयं दक्षिणेऽक्षन्पुरुष इत्यादि पूर्ववत्। अस्यापि रहस्यं नाम अहमितीति। पूर्वोक्तप्रक्रिययैवास्य प्रत्यगात्मभूतत्वात् हन्तेर्जहातेश्चैतद्रूपमहमिति यो वेद स हन्ति पाप्मानमित्येतत्सर्वं पूर्ववत् ॥५॥

इति श्रीविद्यारण्यमुनिविरचितमाध्यन्दिनशाखीयबृहदारण्यकोपनिषद्दीपिकायां
पञ्चमाध्याये षष्ठं ब्राह्मणम् ॥६॥

३५ एतस्यैव सत्यब्रह्मणोऽशेषपापध्वंसकमुपासनान्तरमाह—विद्युद्ब्रह्मेत्याहुरिति। आहुर्ब्राह्मणा इति शेषः। तस्य निर्वचनमाह—विदानाद्विद्युदिति। मेघान्धकारस्य विदानादवखण्डनाद्विदारणाद्विद्युत्। पापहेत्वज्ञानान्धकारस्य

अथ पञ्चमाध्यायस्याष्टमं ब्राह्मणम्

**मनोमयोऽयं पुरुषः। भाः सत्यस्तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवो वैवमयमन्तरात्मन्पुरुषः स एष सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति यदिदं किं च य एवं वेद ॥१॥**

इति बृहदारण्यकोपनिषदि पञ्चमाध्यायस्याष्टमं ब्राह्मणम् ॥८॥ ५

अथ पञ्चमाध्यायस्य नवमं ब्राह्मणम्

**वाचं धेनुमुपासीत। तस्याश्चत्वारः स्तनाः स्वाहाकारो वषट्कारो हन्तकारः स्वधाकारस्तस्यै द्वौ स्तनौ देवा उपजीवन्ति स्वाहाकारं च वषट्कारं च हन्तकारं मनुष्याः स्वधाकारं पितरस्तस्याः प्राण ऋषभो मनो वत्सः ॥१॥**

इति बृहदारण्यकोपनिषदि पञ्चमाध्यायस्य नवमं ब्राह्मणम् ॥९॥ १०

विदारणात् ब्रह्म विद्युदित्यर्थः। एवमुपासितुः फलमाह—**विद्यत्येनं सर्वस्मात्पाप्मनो य एवं वेद विद्युद्ब्रह्मेतीति**। यो विद्युद्ब्रह्मेत्येवं वेद एनमुपासकं सर्वस्मात्समस्तात्पाप्मानः पापाद्विद्यति अवखण्डयति पृथक्करोतीत्यर्थः। ब्रह्मेति शेषः। फलस्योपास्यानुगुणत्वमाह—**विद्युद्ध्येव ब्रह्मेति**। हि यस्माद्ब्रह्म विद्युत्तमोमूलकपापविदारकमेव तस्माद्युक्तं तदेव फलमित्यर्थः ॥१॥

इति श्रीविद्यारण्यमुनिविरचितमाध्यन्दिनशाखीयबृहदारण्यकोपनिषद्दीपिकाया
पञ्चमाध्याये सप्तमं ब्राह्मणम् ॥७॥ १५

उपाधीनामनेकत्वात्प्रत्येकमनेकविशेषणत्वात्तस्यैव प्रकृतस्य ब्रह्मणो मनउपाधिकस्योपासनं विधित्सन्ती श्रुतिराह—**मनोमयोऽयं पुरुषो भाः सत्य इति**। अयं पुरुषो मनोमयो मनःप्रायो मनस्युपलभ्यमानत्वान्मनसा चोपलभ्यमानत्वाच्च मनस्यहमित्यभिज्ञानवत्त्वाद्वा भाः सत्यः भा एव सत्यं स्वरूपं यस्य सोऽयं भाः सत्यो भास्करः सर्वार्थावभासकमनोमयत्वादित्यर्थः। तस्य ध्यानार्थमौपाधिकं स्वरूप कथयन्ती स्थानविशेषमाह—**तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवोवेति**। यथा व्रीहिर्वा यवो वा परिमाणत एवंपरिमाणो विज्ञानमयस्तस्मिन्प्रसिद्धेऽन्तर्हृदये हृदय- २० मध्ये योगिभिर्दृश्यत इति शेषः। इदं चौपाधिकं परिमाणं स्वाभाविकं चानन्त्यमेवेत्यभिप्रेत्य दार्ष्टान्तिकमाह—**एवमयमन्तरात्मन्पुरुषः स एष सर्वस्य वशीत्यादि**। यथा दृष्टान्तः एवमात्मन्यन्तरात्मनि हृदयाकाशे अयं पुरुषो योगिभिर्दृश्यत इति शेषः। स एषः सर्वस्य वशीत्यादि यदिदं किंचेत्यन्तं शारीरकब्राह्मणे व्याख्यातार्थम्। उपासितुः फलमाह—**य एवं वेदेति**। एवंविधं मनोमयं ब्रह्मोपासतस्तादृग्रूपापत्तिरेव फलम्। 'तं यथा यथोपासत'इति श्रुतेः नाफलमित्यनादरणोऽयमिदमित्यर्थो बोध्यः ॥१॥ २५

इति श्रीविद्यारण्यमुनिविरचितमाध्यन्दिनशाखीयबृहदारण्यकोपनिषद्दीपिकाया
पञ्चमाध्यायेऽष्टमं ब्राह्मणम् ॥८॥

अथ पुनस्तस्यैव ब्रह्मणो वाङ्मयधेनुसबन्धेनोपासनं महाफलार्थमाह—**वाचं धेनुमुपासीतेति**। वाक्शब्देनात्र वेदत्रयी ग्राह्या न तु करणं तत्स्थानं वा तद्देवता वा तदन्यतमेषु स्वाहाकारादीनामसंभवादतो वाच वेदत्रयीलक्षणं धेनुरिव धेनुरतामुपासीत सदाऽनुवर्तेतेत्यर्थः। एवमुपासननिमित्तधेनुसाम्यमाह—**तस्याश्चत्वारः स्तना इति**। हन्त- ३० शब्दोऽपेक्षितार्थवाचकः। शेषः प्रसिद्धार्थः। स्वामिभ्यो धेनुः पय इव वाग्धेनुरेतैश्चतुर्भिस्स्तनैर्देवादिभ्योऽन्नं क्षरतीत्यर्थः। क. कं स्तनमुपजीवतीत्यपेक्षायां विनियोगभेदमाह—**तस्यै द्वौ स्तनौ देवा उपजीवन्तीत्यादिना**। **स्वधाकारं पितर इत्यन्तेन**। तस्यै तस्या धेन्वाः स्वाहावषड्भ्यां हि देवेभ्यो हविर्दीयते देवाः स्वाहाकारं च वषट्कारं चोपजीवन्ति हन्तेति हि मानुषेभ्योऽन्नं प्रयच्छति। अतो हन्तकारं मनुष्या उपजीवन्तीत्यनुषङ्गः। स्वधेति हि पितृभ्यः कव्यं ददाति। अतः स्वधाकारं पितर उपजीवन्तीति प्रसिद्धमित्यर्थः। कः पुनरस्याः प्रसूतिहेतुः सेक्ता ? को वा पुनस्तन्य- ३५ प्रस्रवहेतुर्वत्स इत्यपेक्षाया तावाह—**तस्याः प्राण ऋषभो मनो वत्स इति**। प्राणेन हि बललक्षणेन वाक्प्रसूयते

अथ पञ्चमाध्यायस्य दशमं ब्राह्मणम्

**अयमग्निर्वैश्वानरः । योऽयमन्तः पुरुषे येनेदमन्नं पच्यते यदिदमद्यते तस्यैष घोषो भवति यमेतत्कर्णावपिधाय शृणोति स यदोत्क्रमिष्यन्भवति नैतं घोषं शृणोति ॥१॥**

इति बृहदारण्यकोपनिषदि पञ्चमाध्यायस्य दशमं ब्राह्मणम् ॥१०॥

अथ पञ्चमाध्यायस्यैकादशं ब्राह्मणम्

**एतद्वै परमं तपः । यद्व्याहितस्तप्यते परमं हैव लोकं जयति य एवं वेदैतद्वै परमं तपो यं प्रेतमरण्यं हरन्ति परमं हैव लोकं जयति य एवं वेदैतद्वै परमं तपो यं प्रेतमग्नावभ्यादधति परमं हैव लोकं जयति य एवं वेद ॥१॥**

इति बृहदारण्यकोपनिषदि पञ्चमाध्यायस्यैकादशं ब्राह्मणम् ॥११॥

अप्राणस्य वागुच्चारणादर्शनात् । अतः तस्याः धेन्वाः प्राण ऋषभः । तथा मनसा ह्यालोच्य वाक् स्वाहाद्यर्थं क्षरति "यद्वै मनसा ध्यायति तद्वाचा वदती"ति श्रुतेः । अतो मनो वत्स इत्यर्थः एतदुपासकस्य यथोक्तवागुपाधिकब्रह्मप्रतिपत्तिरेव फलं तं यथा यथोपासत इति श्रुतेरिति भावः ॥१॥

इति श्रीविद्यारण्यमुनिविरचितमाध्यन्दिनशाखीयबृहदारण्यकोपनिषद्दीपिकायां पञ्चमाध्याये नवमं ब्राह्मणम् ॥९॥

प्रकृतस्यैव ब्रह्मणः कौक्षेयाग्नित्वमापन्नस्यापरोक्षत्वं दर्शयितुं पुनरुपासनान्तरमाह—**अयमग्निर्वैश्वानर इति** । कोऽसावग्निरित्यत आह—**योऽयमन्तः पुरुष इति** । अन्तः शरीरे इत्यर्थः । स किं शरीरारम्भको नेत्याह—**येनेदमन्नं पच्यत इति** । किं तदन्नमित्यत आह—**यदिदमद्यत इति** । तस्माद्यदिदमद्यतेऽन्नं तद्येन पच्यते स विराडात्मा प्रजापतिर्जाठरोऽग्निरित्यर्थः । तत्सद्भावे किं मानमित्यपेक्षायामाह—**तस्यैष घोषो भवतीति** । तस्याग्नेरन्नं पचमानस्यैष घोषः शब्दो भवतीत्यर्थः । कोऽसौ घोष इत्यपेक्षाया प्रत्यक्ष एवेत्याह—**यमेतत्कर्णावपिधाय शृणोतीति** । एतदिति क्रियाविशेषणमङ्गुलिभ्यां कर्णावपिधाय पिधानं कृत्वा यं घोषमेतच्छ्रवणं यथा स्यात्तथा शृणोति स घोषो यथोक्तवैश्वानरसद्भावे प्रमाणमित्यर्थः । **नैतं घोषं शृणोतीति** । सोऽत्र शरीरे भोक्ता यदोत्क्रमिष्यन्नित्यादि स्पष्टार्थम् ॥१॥

इति श्रीविद्यारण्यमुनिविरचितमाध्यन्दिनशाखीयबृहदारण्यकोपनिषद्दीपिकायां पञ्चमाध्याये दशमं ब्राह्मणम् ॥१०॥

एवं ब्रह्मोपासनानि कानिचित्सफलानि । इदानीमब्रह्मोपासनानि कानिचित्फलवन्ति दर्शयति—**एतद्वै परमं तपो यद्व्याहितस्तप्यत इति** । व्याहितो व्याधियुक्तो ज्वरादिपरिगृहीतः सन् यत्तप्यते एतद्वै निश्चितं परमं तप दुःखसामान्यात् । व्याधिनाऽभिभूयमानस्तमनिन्दन्नविषीदंश्च संस्तपस्तप्यते मयेति बुद्धिं कुर्यादित्यर्थः । एवं चिन्तयतः किं फलं भवतीत्यपेक्षायामाह—**परमं हैव लोकं जयति य एवं वेदेति** । य एवं ज्वरादिपीडनं तप इति वेद स परम तपसोऽनुकूलं लोकं जयति प्राप्नोतीत्यर्थः । तथोपासनान्तरमाह—**एतद्वै परमं तपो यं प्रेतमरण्यं हरन्तीति** । यं प्रेतं मामृत्विजो ज्ञातयो वाऽरण्यं प्रत्यभिहरन्ति—**एतद्वै परमं तप इति** । मुमूर्षावस्थायां चिन्तयेत् । वानप्रस्थवत् ग्रामादरण्यगमनसामान्यात् । स तपोनुरूपं लोकं जयतीत्यर्थः । तथा पुनरुपासनान्तरमाह—**एतद्वै परमं तपो यं प्रेतमग्नावभ्यादधतीति** । यं प्रेतं ज्ञातयोऽग्नावभ्यादधति प्रक्षिपन्ति एतद्वै परमं तप इति मरणात् प्रागेव चिन्तयेत् । अग्निप्रवेशसामान्यात् । सोऽग्निप्रवेशानुरूपं लोकं जयतीत्यर्थः । अत्र परमलोकशब्दैः तत्तदुपासनयोग्यफलभेदस्य विवक्षितत्वान्नोपासनैक्यशङ्केति भावः ॥१॥

इति श्रीविद्यारण्यमुनिविरचितमाध्यन्दिनशाखीयबृहदारण्यकोपनिषद्दीपिकायां पञ्चमाध्याये एकादशं ब्राह्मणम् ॥११॥

अथ पञ्चमाध्यायस्य द्वादशं ब्राह्मणम्

**यदा वै पुरुषः। अस्माल्लोकात्प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्ध्वं आक्रमते स आदित्यमागच्छति तस्मै स तत्र विजिहीते यथा डम्बरस्य खं तेन स ऊर्ध्वं आक्रमते स चन्द्रमसमागच्छति तस्मै स तत्र विजिहीते यथा दुन्दुभेः खं तेन स ऊर्ध्वं आक्रमते स लोकमागच्छत्यशोकमहिमं तस्मिन्वसति शश्वतीः समाः ॥१॥** ५

इति बृहदारण्यकोपनिषदि पञ्चमाध्यायस्य द्वादशं ब्राह्मणम् ॥१२॥

अथ पञ्चमाध्यायस्य त्रयोदशं ब्राह्मणम्

**अन्नं ब्रह्मेत्येक आहुः। तन्न तथा पूयति वा अन्नमृते प्राणात्प्राणो ब्रह्मेत्येक आहुस्तन्न तथा शुष्यति वै प्राण ऋतेऽन्नादेते ह त्वेव देवते एकधाभूयं भूत्वा परमतां गच्छतः ॥१॥** १०

इदानीमस्मिन्प्रकरणे उक्तानां सर्वोपासनानां गतिमनुक्तं च फलं च दर्शयितुमिदं ब्राह्मणमारभ्यते—**यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति तस्मै स तत्र विजीहीते इति।** यदा यस्मिन्काले आयुषः क्षयात् पुरुषो विद्वानस्माल्लोकात्प्रैति शरीरं परित्यजति स उपासकस्तदा वायुमागच्छति स च वायुःस्तिमितरूपस्तिर्यग्भूतोऽभेद्योऽन्तरिक्षे तिष्ठंस्तस्मै संप्राप्ताय विदुषे तदर्थं तत्र स्वात्मनि विजीहिते स्वात्मावयवान्विगमयति छिद्रीकरोत्यात्मानमित्यर्थः। कियत्परिमाणं तच्छिद्रं कियत इत्यपेक्षायामाह—**यथा रथचक्रस्य खं तेन स ऊर्ध्वं आक्रमत इति।** यथा यावत्परिमाणं रथचक्रस्य खं छिद्रं तावत्परिमाणेन छिद्रेण स विद्वानूर्ध्वं ऊर्ध्वमाक्रमते उपरि गच्छतीत्यर्थः। स उदूर्ध्वं गच्छन् क्व गच्छतीत्यपेक्षायामाह—**स आदित्यमागच्छति तस्मै स तत्र विजिहीते यथा डम्बर खं तेनेत्यादिना। यथा दुन्दुभेः खं तेन स ऊर्ध्वं आक्रमत इत्यन्तेन।** डम्बरो वादित्रविशेषः स्पष्टार्थः। एवमुपर्युपरिगच्छतः कुत्र विश्राम इत्यपेक्षायां विराडात्मनीत्याह—**स लोकमागच्छत्यशोकमहिमं तस्मिन्वसति शश्वतीः समा इति।** उपासको लोकं प्रजापतिमागच्छति किं विशिष्टमशोकं मानसेन दुःखेन विवर्जितमहिमं हिमवर्जितं शारीरदुःखविवर्जितम्। यद्वा आभ्यां पदाभ्यां क्रमेण दुःखतत्साधनराहित्यमुच्यते। तं लोकमागत्य तस्मिन् शश्वतीर्नित्याः समाः सम्वत्सरान् बहूनवान्तरकल्पांश्च वसति वासं करोति एतदनुक्तफलोपासनफलमुक्तमित्यर्थः ॥१॥ १५ २०

इति श्रीविद्यारण्यमुनिविरचितमाध्यन्दिनशाखीयबृहदारण्यकोपनिषद्दीपिकायां पञ्चमाध्याये द्वादशं ब्राह्मणम् ॥१२॥ २५

इदानीं पुनः प्रकृतब्रह्मोपासनमेवानुवर्तयन्ती श्रुतिः "वै रं" इति गुणद्वयविशिष्टान्नप्राणोपाधिकब्रह्मोपासनं विशिष्टफलकं विधातुमादावेतस्यैवोपास्यत्वनिर्णयार्था युक्तीराह—**अन्नं ब्रह्मेत्येक आहुस्तन्न तथेत्यादिना परमतां गच्छति इत्यन्तेन।** अन्नं ब्रह्मेत्येक आचार्या आहुस्तत्तथा न ग्रहीतव्यं यतः प्राणाद्भक्षकादृते विनाऽन्नं पूयति क्लिद्यते पूतिभावमापद्यत इति वै प्रसिद्धम्। तथा प्राणो ब्रह्मेत्येक आचार्या आहुस्तत्तथा न ग्रहीतव्यम्। यतः प्राणाद्भक्षकादृते विनाऽन्नं पूयति क्लिद्यते पूतिभावमापद्यत इति वै प्रसिद्धम्। ब्रह्म न क्लिद्यते न शुष्यति शोषमुपैति वै प्रसिद्धम्। 'अक्लेद्योऽशोष्य एव चे'ति स्मृतेः यस्मादेवमेकैकस्य ब्रह्मत्वं नोपपद्यते तस्मात् ह किल एते एव नु देवते अन्नप्राणलक्षणे एकधाभूयमेकधाभावं भूत्वा परमतां परमत्वं गच्छतो ब्रह्मत्वं प्राप्नुत इत्यर्थः। अन्नप्राणयोरेकत्वेन ब्रह्मदृष्टिः कार्येत्येतमर्थमितिहासोक्त्या द्रढयति—**तद्धस्माह प्रातृदः पितरं किंस्विदेवैवं विदुषे साधु कुर्यात्किमेवास्मा असाधु कुर्यादिति।** तदेतदन्नप्राणैकत्वब्रह्मदर्शनं विद्वान् किल प्रातृदनामा ऋषीश्वरो हृष्टः सन् स्वपितरं प्रत्याह स्म किं स्विदिति वितर्के यथा मया ब्रह्मपरिकल्पितमेवं विदुषे साधु शोभनं पूजां किंस्वित् कुर्यात् न किञ्चिदस्य कर्तव्यमतिशिष्यतेऽनेन सर्वस्यापि प्राप्तव्यस्य प्राप्तत्वात्। तथाऽस्मै विदुषे असाध्वशोभनं वा किमेव कुर्यात् न किञ्चिदपि ३० ३५

तद्ध स्माऽऽह प्रातृदः पितरम्। किं स्विदेवैवं विदुषे साधु कुर्यात्किमेवास्मा असाधु कुर्यादिति स ह स्माऽऽह पाणिना मा प्रातृद कस्त्वेनयोरेकधाभूयं भूत्वा परमतां गच्छतीति ॥२॥

तस्मा उ हैतदुवाच। वीत्यन्नं वै व्यन्ने हीमानि सर्वाणि भूतानि

५ विष्टानि रमिति प्राणो वै रं प्राणे हीमानि सर्वाणि भूतानि रतानि सर्वाणि ह वा अस्मिन्भूतानि विशन्ते सर्वाणि भूतानि रमन्ते य एवं वेद ॥३॥

इति बृहदारण्यकोपनिषदि पञ्चमाध्यायस्य त्रयोदशं ब्राह्मणम् ॥१३॥

अथ पञ्चमाध्यायस्य चतुर्दशं ब्राह्मणम्

उक्थम्। प्राणो वा उक्थं प्राणो हीदं सर्वमुत्थापयत्युद्धास्मा

१० उक्थविद्वीरस्तिष्ठत्युक्थस्य सायुज्यं सलोकतां जयति य एवं वेद ॥१॥

कुर्याल्लोक इति शेषः। अस्य निरस्ताशेषासाधुत्वात्। इतिशब्दः प्रातृदवचनसमाप्तिद्योतक इत्यर्थः। एवमन्नप्राणयोरेकत्वविज्ञानवतो न साधुकरणेन महत्त्वं नाप्यसाधुकरणेन खण्डितत्वं किं तु तस्य कृतकृत्यत्वमेवेति पुत्रेणोक्ते सति नैतावन्मात्रविज्ञानात्कृतकृत्यता पुरुषस्य किंत्वस्ति ज्ञातव्यान्तरमित्यभिप्रेत्य पिता पुत्रं वारयतीत्याह—**स ह स्माह पाणिना मा प्रातृद कस्त्वेनयोरेकधाभूयं भूत्वा परमतां गच्छतीति।** स पिताऽऽह किल हे प्रातृदेति पुत्रं सम्बोध्य

१५ पाणिना हस्तेन वारयत्। मामैवं वोच इत्याह स्म प्रत्यषेधदित्यर्थः। एनयोरन्नप्राणयोरेकधाभूयं भूत्वा कस्तु को वा विद्वान् परमतां गच्छति न कश्चिदपि तस्मान्नैवं वक्तुमर्हसि कृतकृत्योऽसाविति इत्यर्थः ॥१-२॥

कथं तर्हि ज्ञानात्कृतकृत्यः स्यादित्यपेक्षायामन्नप्राणयोः सशक्तिकयोरेकत्वविज्ञानात्तथा स्यान्न केवलयोरेकत्वविज्ञानादित्याशयवान् पिता तयोः शक्तिभूतं गुणद्वयं क्रमेणोपदिष्टवानिति कथयति—**तस्मा उ हैतदुवाच वीत्यन्नं वै** वीत्यादिना। सर्वाणि भूतानि रतानीत्यन्तेन। तस्मै प्रातृदाय उ ह किल पिता वि रं इत्येतदन्नप्राणयोः क्रमेण गुण-

२० द्वयमुवाचोपदिष्टवानिति योजना। किं तद्वीत्यपेक्षायामाह—**अन्नं वैवीति।** कुतोऽन्नं वि हि यस्मादिमानि प्रसिद्धानि सर्वाणि भूतानि अन्ने विष्टानि प्रविष्टानि अन्नमाश्रित्य स्थितान्यतोऽन्नं वीत्युच्यत इति यावत्। किं तत् रमित्यत आह—**प्राणो वै रमिति।** कुतश्च प्राणो रं प्रसिद्धं हि यस्मात् प्राणे बलात्मके सर्वाणि भूतानि रतानि सक्तानि यथेष्टं विहृतानि वर्तन्त इति शेषः। अतः प्राणो रमित्युच्यत इत्यर्थः। तथा च सर्वभूताश्रयत्वलक्षणविशब्दवाच्यगुणकमन्नं सर्वभूतरतिलक्षणम्। रशब्दवाच्यगुणकश्च प्राणस्तथाविधयोरेव तयोरेकत्वमापन्नयोः परमत्वमिति तथाविधमेव

२५ ब्रह्मोपासितव्यमिति समुदायार्थः। इदानीमेवंविदः फलमाह—**सर्वाणि ह वा अस्मिन्भूतानि विशन्ते इत्यादि। य एवं वेदेत्यन्तम्।** स्पष्टार्थम् ॥३॥

इति श्रीविद्यारण्यमुनिविरचितमाध्यन्दिनशाखीयबृहदारण्यकोपनिषद्दीपिकायां पञ्चमाध्याये त्रयोदशं ब्राह्मणम् ॥१३॥

पुनस्तस्यैव ब्रह्मण उक्थादिगुणपूगविशिष्टत्वेनोपासनमाह—**उक्थमित्यादिना।** महाव्रताख्ये क्रतौ प्रधानभूतं

३० शस्त्रमुक्थशब्दार्थः। किमात्मकं तदुक्थमित्यत आह—**प्राणो वा उक्थमिति।** प्राणो ह्यध्यात्मेषु मुख्यं उक्थं च सर्वशस्त्राणां प्रधानमतः प्राण उक्थगुण उपास्य इत्यर्थः। ननु प्राणे कथमुक्थशब्दप्रवृत्तिरित्यपेक्षायां योगवशादित्याह—**प्राणो हीदं सर्वमुत्थापयतीति।** हि यस्मादिदं सर्वं चराचरात्मकं प्राण उत्थापयति। अप्राणस्योत्थानाशक्तेरतः प्राण उत्थापनादुक्थमित्यर्थः। एतदुपासनस्य क्रमेण दृष्टमदृष्टं च फलमाह—**उद्धास्मादुक्थविद्वीर इत्यादिना।** उत् ह अस्मै इति च्छेदः। पञ्चम्यर्थे चतुर्थी छान्दसी। य एवमुक्थस्वरूपं प्राणं वेद अस्मादुपासकादुक्थवित्प्राणविद्वीरः पुत्र

३५ उत्तिष्ठति उत्पद्यते इत्येतत् दृष्टं फलम्। उक्थस्य प्राणस्य सायुज्यं सलोकता चोपासनातारतम्याज्जयति प्राप्नोत्येतद् दृष्टं फलमित्यर्थः ॥१॥

यजुः । प्राणो वै यजुः प्राणे हीमानि सर्वाणि भूतानि युज्यन्ते युज्यन्ते हास्मै
सर्वाणि भूतानि श्रैष्ठ्याय यजुषः सायुज्यँ सलोकतां जयति य एवं वेद ॥२॥
साम । प्राणो वै साम प्राणे हीमानि सर्वाणि भूतानि सम्यञ्चि सम्यञ्चि हास्मिन्
सर्वाणि भूतानि श्रैष्ठ्याय कल्पन्ते साम्नः सायुज्यँ सलोकतां जयति य एवं वेद ॥३॥
क्षत्रम् । प्राणो वै क्षत्रं प्राणो हि वै क्षत्रं त्रायते हैनं प्राणः क्षणितोः ५
प्र क्षत्रमात्रमाप्नोति क्षत्रस्य सायुज्यँ सलोकतां जयति य एवं वेद ॥४॥

इति बृहदारण्यकोपनिषदि पञ्चमाध्यायस्य चतुर्दशं ब्राह्मणम् ॥१४॥

अथ पञ्चमाध्यायस्य पञ्चदशं ब्राह्मणम्

भूमिरन्तरिक्षं द्यौरिति । अष्टावक्षराण्यष्टाक्षरँ ह वा एकं गायत्र्यै पदमेतदु
हास्या एतत्स यावदेषु लोकेषु तावद्ध जयति योऽस्या एतदेवं पदं वेद ॥१॥ १०

इदानीं प्राणस्योत्कृष्टतागुणवत्त्वेनोपासनमाह—यजुः प्राणो वै यजुरिति। यतः प्राणो वै यजुरतः प्राणो यजुरित्युपासीतेत्यर्थः। प्राणे यजुःशब्दप्रवृत्तिं दर्शयति—प्राणे हीमानि सर्वाणि भूतानि युज्यत इति। हि यस्मात्प्राणे सति सर्वाणि भूतानि परस्परं युज्यन्ते न ह्यसति प्राणे कस्यचित्केनचिद्योगसामर्थ्यं दृष्टमतो युनक्तीति यजुरिति योगवशात्प्राणो यजुरित्यर्थः। एवमुपासितुः पूर्ववत् फलमाह—युज्यन्ते हास्मै सर्वाणि भूतानि श्रैष्ठ्यायेति। श्रैष्ठ्याय श्रेष्ठभावायायं श्रेष्ठो भवत्वित्यभिप्रायेण युज्यन्ते। उद्यमं कुर्वन्तीत्यर्थः शेषं समानम् ॥२॥ १५

इदानी प्राणस्य सर्वप्राणिसम्यग् गमनहेतुत्वगुणेनोपासनमाह—साम प्राणो वै सामेति। यतः प्राणो वै साम अतस्तं सामेत्युपासीतेत्यर्थः। पूर्ववत् प्राणस्य सामत्वं साधयति—प्राणे हीमानि सर्वाणि भूतानि सम्यञ्चीति। सम्यगञ्चन्ति संगच्छन्ते इति सम्यञ्चीत्यर्थः। शेषं पूर्ववत्। पूर्ववदुपासनाफलमाह—सम्यञ्चि हास्मिन्सर्वाणि भूतानि श्रैष्ठ्याय कल्पन्त इति। न केवलं सम्यञ्चि संगच्छमानान्येवापि तु तानि अस्मिन्नुपासके श्रैष्ठ्याय श्रेष्ठभावाय कल्पन्ते क्लृप्तानि भवन्तीत्यर्थः। शेषं स्पष्टार्थम् ॥३॥ २०

इदानी प्राणस्य पालकगुणवत्त्वेनोपासनमाह—क्षत्रं प्राणो वै क्षत्रमिति। यस्मात्प्राणः क्षत्रमिति वै न प्रसिद्धं तस्मात्तं क्षत्रमित्युपासीतेत्यर्थः। पूर्ववत् प्राणस्य क्षत्रशब्दवाच्यत्वं साधयति—प्राणो हि वै क्षत्रं त्रायतो हैनं प्राणः क्षणितोरिति। एनं देहपिण्डं प्राणो ह क्षणितोः शस्त्रादिर्हिंसितं पुनर्मांसपूरणं कुर्वन् यस्मात् त्रायते पालयति तस्मात् क्षतत्राणात् प्राणो वै प्रसिद्धं क्षत्रमित्यर्थः। एतद्वेदनफलमाह—प्रक्षत्रमात्रमाप्नोति। प्रशब्द आप्नोतीत्यनेन सम्बध्यते क्षत्रमात्रं प्राप्नोति प्राण एव भवतीत्यर्थः। 'मात्रं कार्त्स्न्येऽवधारणे' इत्यमरः। यद्वा क्षत्र प्राणं प्राप्नोति २५ किंविशिष्टम्। आ सामस्त्येन त्रायते पालयतीत्यात्रं अस्तशेषम्। शेषं पूर्ववत् ॥४॥

इति श्रीविद्यारण्यमुनिविरचितमाध्यन्दिनशाखीयबृहदारण्यकोपनिषद्दीपिकाया
पञ्चमाध्यायस्य चतुर्दशं ब्राह्मणम् ॥१४॥

पूर्वं हृदयं सत्यमित्यादिबहूपाधिसमाश्रयं बहुफलकं ब्रह्मोपासनमुक्तम्। इदानी सर्वोपाध्युपसंहारिगायत्र्युपाधिकब्रह्मोपासनं वक्तुमिदं ब्राह्मणमारभ्यते। गायत्रीछन्दो हि सर्वछन्दसां प्रधानं तत्प्रयोक्तृवागादिप्राणत्राणसामर्थ्यात् ३० सर्वछन्दः स्वरूपभूतप्राणात्मकत्वाच्च। किं च ब्राह्मणस्य गायत्रीतो जन्म श्रूयते श्रुत्यन्तरे। तस्माद्गायत्र्याः प्रधानभूतत्वात्तदुपाधिकब्रह्मोपासनविधानायाह—भूमिरन्तरिक्षं द्यौरित्यष्टावक्षराण्यष्टाक्षरं हवा एकं गायत्र्यै पदमिति। दि औ इति विश्लेषे सति भूमिरित्यादीत्यष्टावक्षराणि ह वै प्रसिद्धानि तत्सवितुर्वरेणियमिति वर्णविश्लेषेणाष्टावक्षराणि ह वै प्रसिद्धं गायत्र्या एकं पदं प्रथमपाद इत्यर्थ. । गायत्रीप्रथमपादस्य त्रैलोक्यनाम्नश्च संख्यासामान्यप्रयुक्तं कार्यमाह—एतदुहास्या एतदिति। एतत् उ ह अस्या इति च्छेदः। अस्या गायत्र्या एतत्प्रथमपादस्वरूपम् ह खलु एतदेव भूम्यादि ३५ त्रैलोक्यलक्षणमेवेत्युपासीतेत्यर्थः। एवं प्रथमपादविदः फलमाह—स यावदेषु लोकेषु तावद्ध जयति योऽस्या एतदेवं पदं वेदेति। यः पुमानस्या गायत्र्या एतदुक्तत्रैलोक्यात्मकं पदं वेद स पुमान् यावदेषु त्रिषु लोकेषु जेतव्यमस्ति तावत्सर्वं ह खलु जयतीत्यर्थः ॥१॥

ऋचो यजूँषि सामानीति । अष्टावक्षराण्यष्टाक्षरँ ह वा एकं गायत्र्यै पदमेतदु हैवास्या एतत्स यावतीयं त्रयी विद्या तावद्ध जयति योऽस्या एतदेवं पदं वेद ॥२॥
प्राणोऽपानो व्यान इति । अष्टावक्षराण्यष्टाक्षरँ ह वा एकं गायत्र्यै पदमेतदु हैवास्या एतत्स यावदिदं प्राणि तावद्ध जयति योऽस्या एतदेवं पदं वेद ॥३॥
५ अथास्या एतदेव तुरीयं दर्शतं पदं परोरजा य एष तपति यद्वै चतुर्थं तत्तुरीयं दर्शतं पदमिति ददृश इव ह्येष परोरजा इति सर्वमु ह्येष रज उपर्युपरि तपत्येवँ हैव श्रिया यशसा तपति योऽस्या एतदेवं पदं वेद ॥४॥
सैषा गायत्री । एतस्मिँस्तुरीये दर्शते पदे परोरजसि प्रतिष्ठिता तद्वै तत्सत्ये प्रतिष्ठिता चक्षुर्वै सत्यं चक्षुर्हि वै सत्यं तस्माद्यदिदानीं द्वौ विवदमानावेयाताम्
१० अहमदर्शमहमश्रौषमिति य एवं ब्रूयादहमदर्शमिति तस्मा एव श्रद्दध्यात् ॥५॥

एवं प्रथम पादे भूम्यादिलक्षणाशेषरूपराश्युपसंहार उक्तः । इदानीं द्वितीयपादे नामराश्युपसंहारमभिप्रेत्य तस्य त्रैविद्यात्मकत्वमाह—ऋचो यजूंषि सामानीतीति । एकं पदं द्वितीयः पाद इत्यर्थः । शेषं प्राग्वत् । पूर्ववत् संख्यासामान्यप्रयुक्तं कार्यमाह—एतदुहैवास्या एतदिति । अस्या गायत्र्या एतद्द्वितीयं पदमेतदेव त्रैविद्यात्मकमेवेत्युपासीताष्टत्वसामान्यादित्यर्थः । एवं द्वितीयपादविदः फलमाह—स यावतीयं त्रयी विद्या तावदिति । यावती इयं त्रयी
१५ विद्या त्रय्या विद्यया यावत्फलजातमवाप्यते तावद्ध खलु गायत्र्या द्वितीयं पदमेवं विद्वान् जयतीत्यर्थः ॥२॥

अथ तृतीयपादे कर्मोपसंहारमभिप्रेत्य तस्य त्रैलोक्यत्रैविद्यात्मसर्वजगद्विधृतिलक्षणप्राणाद्यात्मकत्वमाह—प्राणोपानो व्यान इतीति । प्राणः अपानः वियान इति विश्लेषेणाष्टावक्षराणि अन्यत्समानम् । यावदिदं प्राणिजातमस्ति तावज्जयति । सुगममन्यत् । एवं नामरूपकर्मात्मकं जगद्गायत्रीपादत्रयात्मनोपसंहृतमित्यर्थः ॥३॥

इदानीमभिधानरूपायास्त्रिपदाया गायत्र्या अभिधेयभूतादित्यात्मकहिरण्यगर्भाभिधानाय चतुर्थं पादमारभ्यते—
२० अथास्या एतदेवेत्यादिना । अथ शब्दात्मकगायत्रीकथनानन्तरमस्याः प्रकृतायास्त्रिपदाया गायत्र्या अभिधेयभूतमेतदेव वक्ष्यमाणमित्यर्थः । किं तदित्यत आह—तुरीयं दर्शतं पदं परोरजा य एष तपतीति । तुरीयादिपदानां गूढार्थत्वात्स्वयमेव तत्तत्प्रतीकग्रहणेन व्याकुर्वती श्रुतिस्तावत्तुरीयपदस्यार्थमाह—यद्वै चतुर्थं तत्तुरीयमिति । यच्चतुर्थं वै प्रसिद्धं लोके तदस्मिन्वाक्ये तुरीयशब्देनोच्यत इत्यर्थः । अनन्तरं पदं गृहीत्वा व्याकरोति—दर्शतं पदमिति ददृश इव ह्येष इति । एष मण्डलान्तर्गतः पुरुषो हि यस्माद्ददृश इव दृश्यत इव न तु साक्षाद्दृश्यते ईश्वरस्यातीन्द्रियत्वात्
२५ तस्माद्दर्शतं पदमित्युच्यत इत्यर्थः । वाक्यशेषं तदेकदेशग्रहणपूर्वकं व्याकरोति—परोरजा इति सर्वमुह्येष रज उपर्युपरि तपतीति । उ हि एष इति च्छेदः प्रवृत्तिकारणीभूतः सङ्गाद् समुत्पद्यमानो रञ्जनात्मको रागो रज इत्युच्यते । यद्वा सर्वे लोका रजःशब्देनोच्यन्ते 'रज्यमानत्वाल्लोका रजांस्युच्यन्ते' इति यास्कः । सर्वमेव वै प्रसिद्धं रजोजातमुपर्युपरि हि यस्मादेव सविता तपति रजःशब्दवाच्यात्सर्वस्मादुपरिष्टादेव तपन्वर्तत इति यावत् । अतो रजसः परं इति परोरजा उच्यत इत्यर्थः । ननु सर्वं रजस्तपति इत्येतावतैव सवितुः सर्वाधिपत्यस्य सिद्धत्वादु-
३० पर्युपरीति व्यर्था वीप्सेति चेत् न; सर्वशब्दस्य संकुचितवृत्त्या कतिपयलोकाधिपत्य सवितुरिति शङ्कानिवृत्त्यर्थत्वाद्वीप्सायाः सार्थकत्वोपपत्तिरतो न शङ्कावकाश इति भावः । एवं चतुर्थपादविज्ञानफलमाह—एवं हैव श्रिया यशसा तपति योऽस्या एवदेवं पदं वेदेति । श्रिया वसुदीप्त्या सुगममन्यत् ॥४॥

एवमभिधानाभिधेयात्मिकां गायत्रीं व्याख्यायाभिधानस्याभिधेयतन्त्रत्वमाह—सैषा गायत्र्येतस्मिंस्तुरीये दर्शते पदे परोरजसि प्रतिष्ठिता तद्वै तत्सत्ये प्रतिष्ठितेति । सैषा त्रैलोक्यत्रैविद्यसर्वप्राणस्वरूपत्वेनोक्ता त्रिपदा
३५ गायत्री एतस्मिन्नुक्तलक्षणे तुरीये दर्शते पदे परोरजसि मूर्तामूर्तरसभूते आदित्ये प्रतिष्ठिता तद्वै प्रसिद्धं यत्सत्यं तत्तस्मिन् सत्येऽध्यात्मे प्रतिष्ठिता बोद्धव्येत्यर्थः । किं पुनस्तत्सत्यमित्यत आह—चक्षुर्वै सत्यमिति । कुतश्चक्षुः सत्यमित्यत आह—चक्षुर्हि वै सत्यमिति । कुतश्चक्षुः सत्यमित्यत आह—चक्षुर्हि वै सत्यमिति । चक्षुः सत्यमिति हि यस्माद्वै प्रसिद्धमित्यर्थः । कुतः पुनश्चक्षुषः सत्यत्वप्रसिद्धिरित्याशंक्य सत्यप्रतिपत्तिहेतुत्वादिति परिहारमभिप्रेत्य तस्य सत्यत्वं

तद्वै तत्सत्यं बले प्रतिष्ठितम् । प्राणो वै बलं तत्प्राणे प्रतिष्ठितं तस्मादाहुर्बलꣳ सत्यादोजीय इत्येवम्वेषा गायत्र्यध्यात्मं प्रतिष्ठिता ॥६॥ सा हैषा गयाꣳस्तत्रे । प्राणा वै गयास्तत्प्राणाꣳस्तत्रे तद्यद्गयाꣳस्तत्रे तस्माद्गायत्री नाम स यामेवामूमन्वाहैषैव सा स यस्मा अन्वाह तस्य प्राणाꣳस्त्रायते ॥७॥ ताꣳहैके । सावित्रीमनुष्टुभमन्वाहुर्वागनुष्टुबेतद्वाचमनुब्रूम ५

सर्वजनानुभवप्रमाणसिद्धमित्युपपादयति—तस्माद्यदिदानीं द्वौ विवदमानावेयातामहमद्राक्षमहमश्रौषमितीति । एको ब्रूते यत्पृथुबुध्नोदराकारं वस्त्वहमद्राक्षं दृष्टवानस्मि । अपरो ब्रूते तद्वस्तु तथा न भवतीत्यहमश्रौषमित्येवं विवदमानौ विरुद्धं भाषमाणौ द्वाविदानीं सांप्रतमेयातामागच्छेतां तयोर्मध्ये य एवाहमद्राक्षमिति ब्रूयात्तस्मै एव श्रद्दध्याम श्रद्धां करवाम । न पुनरहमश्रौषमिति यो ब्रूयात् तस्मै श्रोतुर्मृषाश्रवणस्यापि संभवात् । न हि निर्दुष्टचक्षुषो मृषादर्शनसंभवः यद्यपि निर्दुष्टश्रोत्रश्रुतिरपि न मृषा तथापि ततो दृष्टिर्बलीयसी श्रुतवादिनः सकाशात् दृष्टवादिनि लोकस्य संप्रत्यय- १० दर्शनात् । निर्दुष्टश्रोत्रस्य सम्यक् शब्दं गृह्णतोऽपि तद्वाच्ययाथात्म्यविषयसन्देहसंभवाच्च । तस्मात्संप्रतिपत्तिहेतुत्वाच्चक्षुः सत्यम् । तस्मिन्सत्ये चक्षुषि त्रिपदा गायत्री प्रतिष्ठितेति वाक्यार्थः ॥५॥

सत्यस्यापि स्वातन्त्र्यं वारयति—तद्वै तत्सत्यं बले प्रतिष्ठितमिति । किं तद्बलमित्यत आह—प्राणो वै बलं तत्प्राणे प्रतिष्ठितमिति । वै प्रसिद्धं प्राणो बल तत्तस्मिन् बलात्मके प्राणे सत्यं प्रतिष्ठितमित्यर्थः । सत्यं बले प्रतिष्ठितमित्यत्र लोकप्रसिद्धिं प्रमाणयति—तस्मादाहुर्बलं सत्यादोजीय इतीति । यस्माद्बले सत्यं प्रतिष्ठितं तस्माल्लोका १५ आहुर्बलं सत्यादोजीयः ओजस्तरमिति । इतिशब्द आहुरित्यनेन संबध्यते । यस्मिन्यदाश्रितं भवति तदाश्रिताद्बलवत्तरमिति हि लोके प्रसिद्ध न हि दुर्बलं बलवत. क्वचिदाश्रयभूत दृष्टमित्यर्थः । एवं त्रिपदा गायत्र्यधिदैवते आदित्ये प्रतिष्ठिता सा चाध्यात्मं चक्षुर्द्वारा प्राणे प्रतिष्ठितेत्येवं प्राणाढ्या गायत्र्याः सूत्रात्मत्वं सिद्धमित्याह—एवम्वेषा गायत्र्यध्यात्मं प्रतिष्ठितेति । एवं उ एवेति च्छेदः एषा गायत्री एवमुक्तक्रमेण अध्यात्ममध्यात्मे सर्ववेदाद्यात्मके सूत्रात्मभूते प्राणे प्रतिष्ठिता । अतोऽध्यात्मं प्राणरूपा सती जगत आत्मेत्यर्थः ॥६॥ २०

इदानीं गायत्रीनामनिर्वचनेन तस्या जगज्जीवनहेतुत्वमाह—सा हैषा गयांस्तत्र इत्यादिना । सैषा ईश्वरात्मिका गायत्री ह किल गायन्तीति गयास्तानाद्यान् तत्रे त्रातवती रक्षितवतीत्यर्थः । के पुनर्गया इत्यपेक्षायामाह—प्राणा वै गयास्तत्प्राणांस्तत्र इति । प्राणा वागादयो वै प्रसिद्धाः गयाः, शब्दनिष्पत्तिहेतुत्वात् । तत् तान् गयान् प्राणास्तत्रे सा गायत्रीत्यर्थः । ततः किं सिद्धमित्यपेक्षायामाह—तद्यद्गयांस्तत्रे तस्माद्गायत्री नामेति । तत्तत्र प्रयोक्तृशरीरे गायत्र्याः प्राणजीवनत्वमुक्त्वा तस्या एव ब्राह्मण्यमूलत्वेन स्तुत्यर्थमाह—स यामेवामूमन्वाहैषैव सेति । २५ स आचार्योऽष्टवर्षमाणवकमुपनीय याममूं गायत्रीमेव पादशोऽर्द्धर्चशः समस्तामन्वन्वाह अनुवक्ति । "पच्छोऽर्धर्चशः सर्वां च तृतीयेन सहानुवर्तयन्नि"ति गृह्यवाक्यात्[1] । सा माणवकायोपदेष्टव्या प्रसिद्धा एषैवोक्तजगत्प्राणात्मिका गायत्र्येव नान्येत्यर्थः । कुत एव गायत्र्येवेति निश्चय इत्यत आह—स यस्मा अन्वाह तस्य प्राणांस्त्रायत इति । स गायत्र्युपासक आचार्यः सादरः सन् यस्मै वटवे इमां गायत्रीमन्वाहाऽनुवक्ति । तस्य प्राणान्स नरकादिपतनाद्यस्मात्त्रायते तस्माद्गायत्र्येवेति निश्चयो नात्र सन्देह इत्यर्थः ॥७॥ ३०

मतान्तरं दृष्ट्वा वटवे उपदेश्या गायत्री इयमेव न भविष्यतीति विभ्रमो मा भूदित्यभिप्रेत्य मतान्तरं दूषयितुमुपन्यस्यति—तां हैतामेके सावित्रीमनुष्टुभमन्वाहुरित्यादिना । एके शाखिनस्तत्सवितुर्वृणीमहे वयं देवस्य भोज्यम् । श्रेष्ठं सर्वधातमं तुरं भगस्य धीमहीत्यनुष्टुभमनुष्टुप्छन्दस्कां तां प्रसिद्धां सावित्रीं सवितृदेवताकामुपनीतायान्वाहुरनुवदन्तीत्यर्थ. । तेषामभिप्रायमाह—वागनुष्टुबेतद्वाचमनुब्रूम इति । वागनुष्टुबिति "तद्य एव महिमा यद्वीर्यमि"त्यग्निरहस्ये[2] प्रतिपादितत्वादनुष्टुब्वाक् तस्याश्च वाचः साक्षात्सरस्वतीरूपत्वाद्वागात्मिकाऽनुष्टुबेव वटवे वक्तव्या तत्समर्पणे ३५ हि सरस्वती समर्पिता स्यादतो वयमेतदनुष्टुल्लक्षणां वाचं सरस्वतीमेवापेक्ष्यमाणां माणवकायानुब्रूम इति वदन्तस्ता-

१. पारस्कर० २-३

२. १०-३-१-४

इति न तथा कुर्याद्गायत्रीमेवानुब्रूयाद्यदि ह वा अपि-
बह्विव प्रतिगृह्णाति न हैव तद्गायत्र्या एकञ्चन पदं प्रति ॥८॥
स य इमाꣳस्त्रीँल्लोकान्। पूर्णान्प्रतिगृह्णीयात्सोऽस्या एतत्प्रथमं
पदमाप्नुयादथ यावतीयं त्रयी विद्या यस्तावत्प्रतिगृह्णीयात्सोऽस्या
५ एतद्द्वितीयं पदमाप्नुयादथ यावदिदं प्राणि यस्तावत्प्रतिगृह्णीया-
त्सोऽस्या एतत्तृतीयं पदमाप्नुयादथास्या एतदेव तुरीयं दर्शतं पदं
परोरजा य एष तपति नैव केनचनाऽऽप्यङ्कुत उ एतावत्प्रतिगृह्णीयात् ॥९॥
तस्या उपस्थानम्। गायत्र्यस्येकपदी द्विपदी त्रिपदी चतुष्पद्यपदसि
न हि पद्यसे। नमस्ते तुरीयाय दर्शताय पदाय परोरजसेऽसावदो

१० मेवोपदिशन्तीत्यर्थः। इतिशब्द एकीयमतस्य समाप्तिद्योतनार्थः। दूषयति—न तथा कुर्याद्गायत्रीमेवानुब्रूयात्तदूपदेशे हि सर्वमपि पुमर्थसाधनजातं बटव उपदिष्टं स्यात्। तस्यास्त्रैलोक्यत्रैविद्यसर्वप्राणात्मत्वकथनेन सर्वात्मकत्वस्योक्तत्वात् अनुष्टुबुपदेशे तु सरस्वतीमात्रमेवोपदिष्टं स्यात्तस्याः सर्वात्मकत्वस्याश्रवणात्। तस्माद्गायत्रीलाभे सर्वस्यापि सरस्वत्यादेर्लाभात्तामेवोपदिशेन्नानुष्टुभमित्यर्थः। एवं प्रसङ्गाद्गायत्रीं निश्चित्येदानीं गायत्रीज्ञानफलकथनाभिप्रायेण तद्विदं स्तौति—यदि ह वा अपि बह्विव प्रतिगृह्णाति न हैव तद्गायत्र्या एकंचन पदं प्रतीति। ह किल यद्यपि उक्तलक्षण-
१५ गायत्रीवित् बह्विव विदुषः सर्वात्मकत्वेन तदन्यस्य बहुत्वाभावाद्बह्विवेत्युच्यतेऽतो बह्विव प्रतिगृह्णाति तथापि तत्प्रतिग्रहजातं गायत्र्या एकंचन एकमपि पदं प्रति पादविज्ञानफलं प्रति नैव ह किल पर्याप्तं दूरतस्तु दोषावायकत्व तस्येत्यर्थः ॥८॥

एवं गायत्रीविदः प्रतिगृह्णतः सामान्येन दोषाभावमुक्त्वा विशेषतोऽपि तमाह—स य इमांस्त्रीन् लोकान् पूर्णान् प्रतिगृह्णीयादित्यादिना। सोऽस्या एतत् तृतीयं पदमाप्नुयादित्यन्तेन। स यो गायत्रीविद्गोऽश्वादिधनपूर्णानिमान्भू-
२० रादींस्त्रींल्लोकान्प्रतिगृह्णीयात् स प्रतिग्रहोऽस्या गायत्र्या एतत्पूर्वोक्तं प्रथमं पदमवाप्नुयात् प्रथमपादविज्ञानफलं तेन भुक्तं स्यान्नत्वधिकदोषोत्पादकः स प्रतिग्रह इति यावत्। शेषमेवमेव व्याख्येयम्। तथा च त्रैलोक्यावच्छिन्नस्य त्रैविद्यावच्छिन्नस्य सर्वप्राण्यवच्छिन्नस्य च प्रतिग्रहे पादत्रयविज्ञानफलमेवानेन भुक्तं स्यान्नाधिकदोषभाक्त्वं तस्येति गायत्रीविज्ञानस्तुत्यर्थमेव श्रुत्यैव कल्पयित्वोच्यते न तु वस्तुत एवं दाता प्रतिगृहीता वा संभवति। यद्यप्येवं संभाव्यते तथापि नासावस्य प्रतिग्रहोपराधक्षम इति स्तुतिसिद्धेः। एवं च सति न शूद्राद्युपादानकप्रतिग्रहनिषेधकशास्त्रविरोध
२५ इत्यर्थः। यथैवं संभावितप्रतिगृहादीनां पादत्रयविज्ञानफलक्षय एवं तुरीयपादविज्ञानस्य फलक्षयः संभावयितुमपि न शक्यते तत्फलस्यानन्त्यादित्याह—अथास्या एतदेव तुरीयं दर्शतं पदमित्यादिना। लोकाद्यात्मकपदत्रयविज्ञानफलभोगोक्त्यानन्तर्यमथशब्दार्थः। तुरीयपदविज्ञानफलस्यानन्तरं वा तत्फलं केनचन केनापि प्रतिग्रहादिना नैवाप्यं नैव प्राप्यं येन तत्क्षयः स्यादित्यर्थः। कुतस्तदवधार्यत इत्यत आह—कुत उ एतावत्प्रतिगृह्णीयादिति। चतुर्थपादविज्ञानसमानप्रतिग्राह्यस्य वस्तुनोऽसंभवादित्यर्थः ॥९॥

३० एवमुक्तगायत्र्युपासनासंग्रहविषयमेवमुक्तम्। ऐहिकफलविशेषोपायकथनार्थमवतारयितुं—तस्या उपस्थानमिति। तस्या गायत्र्या उपस्थानमुपेत्य स्थानं नमस्करणमनेन मन्त्रेण कर्तव्यमिति शेषः। कोऽसौ मन्त्र इत्यपेक्षायामाह—गायत्र्यस्येकपदीत्यादिनाऽसावदो मा प्रापदित्यन्तेन। हे गायत्रि त्वं त्रैलोक्यात्मकपादेनैकपदी असि भवसि त्रैविद्यरूपपादेन त्वं द्विपदी प्राणाद्यात्मकपादेन त्वं त्रिपदी। मण्डलान्तर्गतपुरुषलक्षणेन पादेन त्वं चतुष्पदी असीति सर्वत्रानुषङ्गः। एवं चतुर्भिः पादैस्त्वमुपासकैः पद्यसे ज्ञायसे इति गायत्र्याश्चतुष्पादात्मकं ध्येयस्वरूपमुक्तम्। तथा हे
३५ गायत्रि त्वं परेण निरुपाधिकेन स्वेनात्मनाऽपदसि पद्यसे ज्ञायसे येन तत्पदं न विद्यते यस्याः सा त्वमपदसि। कुतः हि यस्मात् केनापि न पद्यसे न ज्ञायसे नेति नेत्यादि लक्षणत्वात्तादृग्रूपस्य च चक्षुराद्यविषयत्वात्। अतस्त्वमपदसीति गायत्र्या ज्ञेयस्वरूपमुक्तम्। अथ पादत्रयापेक्षया चतुर्थपादस्य प्राधान्यमभिप्रेत्य तस्य नमस्करणमुच्यते। यत्तूक्तं निरुपाधिकं स्वरूपं सर्वदृग्विषयो न भवति। अतस्ते तुभ्यं व्यवहारविषयाय दर्शताय पदाय परोरजसे उक्तार्थाय नमो

मा प्रापदिति यं द्विष्यादसावस्मै कामो मा समर्द्धीति वा न
हैवास्मै स कामः समृध्यते यस्मा एवमुपतिष्ठतेऽहमदः प्रापमिति वा ॥१०॥
एतद्ध वै तज्जनको वैदेहः। बुडिलमाश्वतराश्विमुवाच
यन्नु हो तद्गायत्रीविदब्रूथा अथ कथँ हस्तीभूतो
वहसीति मुखँ ह्यस्याः सम्राण्न विदाञ्चकरेति होवाच ॥११॥ ५
तस्या अग्निरेव मुखम्। यदि ह वा अपि बह्विवाग्नाव-
भ्यादधति सर्वमेव तत्संदहत्येवँ हैवैवंविद्यद्यपि बह्विव पापं
करोति सर्वमेव तत्संप्साय शुद्धः पूतोऽजरोऽमृतः सम्भवति ॥१२॥

इति बृहदारण्यकोपनिषदि पञ्चमाध्यायस्य पञ्चदशं ब्राह्मणम् ॥१५॥

इति पञ्चमोऽध्यायः ॥५॥ १०

इति बृहदारण्यकक्रमेणाष्टमोऽध्यायः ॥८॥

नतिः प्रह्वीभावोऽस्त्विति शेषः। एवं नमस्करणमुक्त्वा शेषेण यथोक्तनमस्कारप्रयोजनमुच्यते—असौ शत्रुः पाप्मा। त्वत्प्राप्तिविघ्नकरः अदः पाप्मरूपस्य शत्रोर्यत्त्वत्प्राप्तिविघ्नकर्तृत्वं मम तच्च मा प्रापत् मा प्राप्नोतु इतिशब्दः पापक्षयफलोपस्थानमन्त्रपरिसमाप्त्यर्थः। इदानीं प्रवृद्धद्वेषवन्तं प्रत्युक्तोपस्थानमन्त्रे ऊहप्रदर्शनेनाभिचारिकं उपस्थाना-न्तरमाह—यं द्विष्यादसावस्मै कामो मा समर्द्धीति वेति। विद्वान् यं प्रति स्वयं द्विष्यात् द्वेषं कुर्यात् असौ शत्रुरमुक- १५ नामेति तस्य नाम गृहीत्वा अस्मै अमुकनाम्ने शत्रवे कामोऽभिलषितोऽर्थो मा समृद्धि। समृद्धिं माऽत्र प्राप्नोत्विति। तथा चासावदो मा प्रापदित्यस्य स्थाने असावस्मै कामो मा समृद्धीत्यूहं कृत्वा गायत्र्यसीत्यादिपूर्वोक्तेन मन्त्रेणाभिचरन्नु-पतिष्ठेतेति वाक्यार्थः। एवमुपस्थानमन्त्रोक्तफलस्य यादृच्छिकत्वशङ्कां वारयति—न हैवास्मै स कामः समृध्यते यस्मा एवमुपतिष्ठत इति। यस्मै यदर्थमेवमुपतिष्ठते तस्मै शत्रवे स कामो ह खलु नैव समृध्यते नैव संपद्यत इत्यर्थः। कामिनं प्रत्याभ्युदयिकमुपस्थानान्तरमाह—अहमदः प्रापमिति वेति। अहं अदो देवदत्ताभिलषितं मदभिलषितं वा २० प्राप्यं प्राप्नुयामित्यर्थः। अत्राप्यसावदो मा प्रापदित्यस्य स्थाने अहमदः प्रापमिति पदप्रक्षेपं कृत्वा पूर्वोक्तमन्त्रेणोप-स्थानं कार्यमिति वाक्यार्थः ॥१०॥

गायत्रीमुखज्ञानमन्तरेण तद्विज्ञानं पूर्णं न भवतीत्यतस्तद्विधानार्थं तत्स्तुतिभूतमर्थवादं तावदाह—एतद्ध वै तज्जनको वैदेहो बुडिलमाश्वतराश्विमुवाचेति। तत्तत्र गायत्रीविज्ञानविषये एतद् ह किल वै स्मर्यते जनको वैदेहो बुडिलं बुडिलनामानम्। अश्वतरस्यापत्यमाश्वतराश्विं प्रत्युवाचोक्तवानित्यर्थः। किमुवाचेत्यपेक्षायामाह—यन्नु हो २५ तद्गायत्रीविदब्रूथा अथ कथं हस्तीभूतो वहसीतीति। यन्नु इति वितर्के हो आश्चर्यमेतत्। तदिति यदर्थो यत्त्वं गायत्रीविदस्मीत्यब्रूथा अथ पूर्वापरविरुद्धमिदं तर्हि कथं प्रतिग्रहदोषेण हस्तीभूतो हस्तीभूत्वा वृथाभिमानं वहसि इति-शब्दो वैदेहोक्तिसमाप्तिद्योतनार्थः। गायत्रीवित्त्वं प्रतिग्रहवचनं चेति परस्परविरुद्धमिति। जनकेनोक्तो बुडिलः किमुक्त-वानित्यपेक्षायामाह—मुखं ह्यस्याः सम्राण्न विदाञ्चकरेति होवाचेति। हे सम्राडस्या गायत्र्या मुखमिति ॥११॥

एवमुक्तस्य गायत्रीमुखविज्ञानस्य फलं सदृष्टान्तरमाह—यदि ह वा अपि बह्विवाग्नावभ्यादधतीत्यादिना। ३० उभावपीवशब्दाववधारणार्थौ यथा लोको बहुतरमपीन्धनमग्नौ निक्षिपति तत्सर्वमग्निर्दहत्येव। एवं गायत्र्या अग्निर्मुखमित्येवंविदुपासक; स्वयमग्निमुखगायत्र्यात्मा सन् यद्यपि बह्विव बह्वेव पापं प्रतिग्रहादिदोषं करोति तत्सर्वं पापजातं संप्साय सम्यग्भक्षयित्वाऽग्निवत् शुद्धः पापसंस्पर्शरहितः पूतश्च प्रतिग्रहजनितपापफलसंबन्धरहितः संभवती-त्यग्रिमेण क्रियापदेन संबन्धः गायत्रीविज्ञानस्य क्रममुक्तिफलत्वं दर्शयति—अजरोऽमृतः संभवतीति। एवं गायत्र्या-त्माऽजरोऽमृतश्च कर्मरहितः संभवतीत्यर्थः ॥१२॥ ३५

इति श्रीविद्यारण्यमुनिविरचितमाध्यन्दिनशाखीयबृहदारण्यकोपनिषद्दीपिकायां
पञ्चमाध्याये पञ्चदशं ब्राह्मणम् ॥१५॥

इति बृहदारण्यकोपनिषदि पञ्चमोऽध्यायः ॥५॥

इति बृहदारण्यकक्रमेणाष्टमोऽध्यायः ॥८॥

## अथ षष्ठोऽध्यायः

### अथ षष्ठाध्यायस्य प्रथमं ब्राह्मणम्

**श्वेतकेतुर्ह वा आरुणेयः । पञ्चालानां परिषदमाजगाम स आजगाम जैवलं प्रवाहणं परिचारयमाणं तमुदीक्ष्याभ्युवाद कुमारा३ इति**
५ **स भो३ इति प्रतिशुश्रावानुशिष्टो न्वसि पित्रेत्योमिति होवाच ॥१॥**
**वेत्थ यथेमाः प्रजाः । प्रयत्यो विप्रतिपद्यान्ता३ इति नेति होवाच वेत्थ यथेमं लोकं पुनरापद्यान्ता३ इति नेति हैवोवाच वेत्थ यथाऽसौ लोक एवं बहुभिः पुनः पुनः प्रयद्भिर्न सम्पूर्यता३ इति नेति हैवोवाच ॥२॥**

ओङ्कारदमादित्रयं वाय्वादिदेवतावाचकपूर्वकमग्न्युपासनं ब्रह्माब्रह्मोपासनानि तत्फलं तदर्थावगतिरित्येतेऽर्था
१० अस्मिन् खिलकाण्डे पञ्चमाध्याये निर्वृत्ताः । सम्प्रति प्राधान्येनाब्रह्मोपासनानि सफलानि श्रीमन्थादिकर्म च सर्वं वक्तव्यमित्येतदर्थः षष्ठोऽध्यायः प्रवर्तते । तत्र कर्मकाण्डे ज्ञानकाण्डे वा यद्वस्तु प्राधान्येन नोक्तं तदस्मिन्काण्डे वक्तव्यमस्य खिलाधिकारत्वात्तथा च तद्वक्तुमिदं श्वेतकेतुब्राह्मणमिति सामान्यसङ्गतिः । पूर्वं "द्वया ह" इत्युद्गीथब्राह्मणे स्वाभाविकज्ञानकर्मलक्षणः पाप्मा सूचितः परन्तु तस्येदं कार्यमिति विपाकस्तु नोक्तः । तथा शास्त्रीययोरपि ज्ञानकर्मणो केवलेन कर्मणा पितृलोको विद्यासहितेन विद्यामात्रेण वा देवलोक इति विपाको ब्रह्मविद्यारम्भप्रयोजकीभूतवैराग्य-
१५ सिध्यर्थं त्र्यन्नात्मप्रतिपत्त्यन्तेन ग्रन्थेन प्रदर्शितः । अस्य तु विपाकस्य प्रतिपत्तिमार्गो नोक्तः । स च वक्तव्यः तथा पञ्चमाध्याये ज्ञानकर्मसमुच्चयकारिणां मुमूर्षूणामग्ने नय सुपथेति मार्गयाचनं कृतं, तत्र सुपथेति विशेषणादनेकेषा पथां सद्भावो मन्त्रेण प्रदर्शितः । एतावन्तः कर्मविपाकप्रतिपत्तिमार्गा इति तु नोक्तमतो विहितस्य केवलस्य कर्मणस्त-त्सहितस्य विज्ञानस्य च निषिद्धयोश्च तयोः क्रमेण दक्षिणोदगधोमार्गा इति कथनायेदं ब्राह्मणं प्रवर्तत इत्येका विशेषसंगतिः । 'एतावदरे खल्वमृतत्वम्' 'अमृतत्वस्य तु नाशास्ति वित्तेने'त्यत्र कर्मव्युदासेन ज्ञानमेवामृतत्वसाधन-
२० मित्युक्तं तत्र हेतुर्नोक्तस्तत्कथनायेदं ब्राह्मणमित्यपरा विशेषसङ्गतिः । आख्यायिका तु धनं मानं च हित्वा यत्नपूर्वकं वृद्धेन ब्राह्मणेनाऽब्राह्मणादपीयं पञ्चाग्निविद्या गृहीतेति तस्यास्तुत्यर्थं प्रणीतेति—**श्वेतकेतुर्ह वा आरुणेय इति** । ह शब्द एतिह्यार्थः । श्वेतकेतुर्नामतोऽरुणस्यापत्यमारुणिः तस्यापत्यमारुणेयः पितृमतः सकाशादधीतविद्यादार्ढ्यार्थं विद्वज्जनविशिष्टत्वेन प्रसिद्धानां देशविशेषाणां परिषदं समाजगामागतवान् । आगत्य ब्राह्मणान् विद्योत्कर्षवशाज्जित्वा राजानमपि जेष्यामीति गर्वेण स श्वेतकेतुर्जैवलं जीवलस्यापत्यं पञ्चालानां राजानं परिचारयमाणं स्वभृत्यैरात्मनः
२५ परिचर्यां कारयन्तं प्रवाहणनामानं प्रत्याजगाम । स तु राजा पूर्वमेव तस्य विद्यागर्वं श्रुत्वा शमादिब्राह्मणधर्मा-द्व्युत्थितत्वात्सन्मार्गप्रवृत्त्यर्थं विनेतव्योऽयमिति मत्वा तं श्वेतकेतुमुदीक्ष्योत्प्रेक्ष्यागतमात्रमेव कुमारा३इति बाल-वत्सम्बोध्याभ्युक्तवान् प्लुतेर्भर्त्सनार्थत्वाद्भर्त्सितवानिति यावत् । एवमुक्तः सोऽपि कुमारो भो ३ इति प्लुत्या सम्बोध्य प्रतिशुश्राव । यद्यपि भो इति प्रतिवचनमाचार्यं प्रत्येवोचितं न क्षत्रियं प्रति, तस्य हीनत्वात् । तथापि क्रोधवशात्तथा प्रतिवचनं कृतवानित्यर्थः । एवं कृतप्रतिवचनं ब्राह्मणं राजाऽपृच्छत् । सोऽपि तथेत्युत्तरमुक्तवानिति
३० दर्शयति—**अनुशिष्टोऽन्वसि पित्रेत्योमिति प्रत्युवाचेति** । नुशब्दो विमर्शार्थः । कुमार किं त्वं पित्राऽनुशिष्टोऽनुशासितो नु वादायोत्सेकसमावेशात्त्वेत्थं पृच्छामीति राज्ञोऽभिप्रायः । अहं त्वनुशिष्टोऽस्मि यदि तव संशयस्तर्हि तन्निरासाय मां पृच्छेत्योमिति वक्तुरभिप्रायः ॥१॥

एवमुक्तवन्तं ब्राह्मणं राजा पृच्छति—**वेत्थ यथेमाः प्रजाः प्रयत्यो विप्रतिपद्यान्ता३इतीति** । वेत्थानासि किं यथा येन प्रकारेण इमाः प्रसिद्धाः प्रजाः प्रयत्यो म्रियमाणा विप्रतिपद्यान्ता विप्रतिपद्यन्ते नाडीरूपेण साधारण-
३५ मार्गेणाभ्युदयं गच्छतां यत्र मार्गे द्वैविध्यप्रतिपत्त्या विप्रतिपत्तिः तद्विप्रतिपत्तिविषयं मार्गं किं जानासि यदि त्वमस्मिन् विषये पित्राऽनुशिष्टोऽसि तर्हि ब्रूहीत्यर्थः । इतरोक्तमाह—**नेति होवाचेति** । प्रश्नान्तरं प्रतिवचनं च दर्शयति—**वेत्थ यथेमं लोकं पुनरापद्यान्ता३इति नेति हैवोवाचेति** । परलोकगताः प्रजाः पुनरिमं लोकं यथा आपद्यान्ते आपद्यन्ते

**वेत्थ यतिथ्यामाहुत्यां हुतायाम् । आपः पुरुषवाचो भूत्वा समुत्थाय वदन्ती३ इति नेति हैवोवाच वेत्थो देवयानस्य वा पथः प्रतिपदं पितृयाणस्य वा यत्कृत्वा देवयानं वा पन्थानं प्रतिपद्यते पितृयाणं वा ॥३॥ अपि हि न ऋषेर्वचः श्रुतम् । द्वे सृती अशृणवं पितॄणामहं देवानामुत मर्त्यानाम् । ताभ्यामिदं विश्वमेजत्समेति यदन्तरा पितरं मातरं चेति नाहमत एकञ्चन वेदेति होवाच ॥४॥ अथ हैनं वसत्योपमन्त्रयाञ्चक्रे । अनादृत्य वसतिं कुमारः प्रदुद्राव स आजगाम पितरं तं होवाचेति वाव किल नो भवान्पुराऽनुशिष्टानवोच** ५

आगच्छन्ति तथा किं त्वं वेत्थेति प्रश्नो नेत्युत्तरमित्यर्थः । तथा तृतीयं प्रश्नं प्रतिवचनं चाह वेत्थ यथाऽसौ लोकः एवं बहुभिरित्यादिना । एवं प्रसिद्धेन जराज्वरादिमरणहेतुना पुनः पुनरसकृत् प्रयद्भिर्म्रियमाणैर्बहुभिः प्राणिभिरसौ १० परलोको यथा येन प्रकारेण न सम्पूर्यते तत्किं वेत्थेत्यादि पूर्ववदित्यर्थः ॥२॥

तथा चतुर्थप्रश्नमाह—**वेत्थ यतिथ्यामाहुत्यां हुतायामित्यादिना** । यतिथ्या यत्संख्याकायामाहुत्यामाहुतौ हुतायामापः पुरुषाकारपरिणताः सत्यः पुरुष इति वाक् वाचकीभूता यासां ताः पुरुषशब्दवाच्या भूत्वा समुत्थाय सम्यगुत्थायोद्भूता. सत्यो यथा वदनादिव्यापारं कुर्वन्ति तथा किं वेत्थेत्यादि पूर्ववत् । पुनः प्रश्नान्तरमाह—वेत्थो देवयानस्य वा पथः प्रतिपदं पितृयाणस्य वेति वेत्थ३इतिच्छेदः देवयानस्य यथा मार्गस्य प्रतिपदं प्रतिपद्यतेऽनयेति १५ प्रतिपत्साधनं तां प्रतिपदं पितृयाणस्य वा पथः प्रतिपदं वेत्थेत्यर्थः । किं तत्प्रतिपच्छब्दवाच्यमित्यपेक्षायां श्रुतिः स्वयमेव तदाह—**यत्कृत्वा देवयानं वा पन्थानं प्रतिपद्यते पितृयाणं वेति** । यत्कर्मकृत्वा देवयानं पन्थानं मार्गं पितृयाणं वा पन्थानं प्रतिपद्यते सा प्रतिपत्तां प्रतिपद वेत्थेति योजना ॥३॥

ननु मार्गद्वयमेव नास्ति तत्सद्भावे प्रमाणाभावात् त्वं तूत्प्रेक्षामात्रेण मम व्यामोहार्थं पृच्छसीत्याशङ्क्याह—**अपि हि न ऋषेर्वचः श्रुतमिति** । हि यस्मात्कर्मविपाकप्रक्रियायां मार्गद्वयप्रकाशकमृषेर्मन्त्रस्यापि वचो वाक्यं २० नोऽस्माकं श्रुतमस्तीति शेषः । किं तदृषेर्वच इत्यपेक्षायामाह—**द्वे सृती अशृणवं पितॄणामहमिति** । अहं मर्त्यानां मनुष्याणां सृती द्वौ मार्गावशृणवं श्रुतवानस्मि । मनुष्या एव हि कर्माधिकारित्वात्कर्मफलं प्रतिपद्यन्तेऽतो मनुष्यसम्बन्धिन्यावेव सृती तयोर्मध्ये एका पितॄणा पितृलोकसम्बद्धा । मनुष्याणां पितृलोकप्रापिकेति यावत् । द्वितीया तु उत अपि देवानां देवलोकसम्बन्धा देवलोकप्रापिकेत्यर्थः । तर्हि किं मनुष्या एव संसारिणो नेतरे देवादय इत्याशङ्क्याया मन्त्रस्यार्द्धान्तरं पठति—**ताभ्यामिदं विश्वमेजत्समेतीति** । इदं विश्वं देवादिस्थावरान्तं समस्तमेज- २५ त्स्थानात्स्थानान्तरं प्राप्नुवत् स ताभ्यां सृतिभ्यामेव समेति सम्यगागच्छति । एवमपि मनुष्याणामिति वचनं कर्मसु तेषां प्राधान्यद्योतनार्थं बोध्यमित्यर्थः । यद्वाऽसंस्कृतानां तत्त्वज्ञानरहितानां मार्गान्तरं वारयति—ताभ्यामिदमिति । अक्षरार्थः समानः । ते च सृती क्व वर्तेते इत्यपेक्षायामाह—**यदन्तरा पितरं मातरं चेतीति** । यत् या पितरं मातरं चान्तरा पितृ-मातृस्थानीययोर्द्यावापृथिव्योरण्डकपालयोर्मध्ये ते द्वे सृती वर्तेते असौ वै पितेयं मातेति मध्यमकाण्डे तृतीयप्रपाठकान्त्यब्राह्मणे द्यावापृथिव्योः पितृमातृत्वमुक्तम् । इतिशब्दो मन्त्रसमाप्तिद्योतनार्थः । एव राज्ञा ३० कृतप्रश्नपञ्चकस्योत्तरमाहेति दर्शयति—**नाहमत एकंचन वेदेति होवाचेति** । अतोऽस्मात्प्रश्नसमुदायादेकंचन एकमपि प्रश्नमहं न वेदेत्यवाक्शिराः श्वेतकेतुरुवाचेत्यर्थः । यद्यपि पूर्वप्रश्नेष्विव पञ्चमेऽपि प्रश्ने नेत्येव प्रतिवचनमुचितं प्रक्रमानुसारात्तावता चरितार्थत्वाच्च तथापि राजा मा प्रति प्रश्नान्तरं माकरोदित्यभिप्रायेण—**नाहमत एकंचन वेदेति** प्रतिवचनं कृतवान्मुनिरिति भावः ॥४॥

ततः किं वृत्तमित्यपेक्षायामाह—**अथ हैनं वसत्योपमन्त्रयांचक्र इत्यादिना** । अथ एवं विद्यागर्वापनय- ३५ नानन्तरं ह किल एनं प्रकृत श्वेतकेतुं शान्तदर्पमालक्ष्य वसत्या वसतिप्रयोजनेन राजोपमन्त्रयांचक्रे इह वसतु भवान् मद्दत्तमर्घपाद्याचमनीयादि गृहाणेत्युपमन्त्रणं कृतवान् । एवमुपमन्त्रितः कुमारः श्वेतकेतुः कुमारत्वादेव

१ शत. १२-८-१-२१

इति कथं सुमेध इति पञ्च मा प्रश्नान्राजन्यबन्धुरप्राक्षीत्ततो
नैकञ्चन वेदेति होवाच कतमे त इतीम इति ह प्रतीकान्युदाजहार ॥५॥
स होवाच । तथा नस्त्वं तात जानीथा यथा यदहं किञ्च वेद सर्वमहं तत्तु-
भ्यमवोचं प्रेहि तु तत्र प्रतीत्य ब्रह्मचर्यं वत्स्याव इति भवानेव गच्छत्विति ॥६॥

५ स आजगाम गौतमः । यत्र प्रवाहणस्य जैवलेरास तस्मा
आसनमाहार्योदकमाहारयाञ्चकाराथ हास्मा अर्घं चकार ॥७॥
स होवाच । वरं भवते गौतमाय दद्म इति स होवाच प्रतिज्ञातो
म एष वरो यां तु कुमारस्यान्ते वाचमभाषथास्तां मे ब्रूहीति ॥८॥

ह्रीतो रोषाच्च तदुक्तवसतिमनादृत्यानंगीकृत्य प्रदुद्राव निर्गतवान् । निर्गत्य च स पितरं प्रत्याजगाम आगत्य च तं
१० पितरं प्रत्युवाच ह किलशब्दो राजोक्तप्रश्नपरामर्शार्थः । वावशब्देन तस्यैव पित्रनुशासनस्य वञ्चनत्वं लिङ्गं द्योतते । तेन लिंगेनानुमितं प्रासाशेषविद्योऽसीत्यैवंविधपित्रनुशासनस्य वञ्चनत्वं किल शब्देन स्मार्यते । तथा च हे पितस्त्वं पुरा समावर्तनकाले नोऽस्मान् सर्वाभिर्विद्याभिरनुशिष्टानशेषतोऽननुशिष्यैवावोचोऽवोचत् भवान् । अतो मां वञ्चितवानसीति सोपालम्भं पुत्रवचः श्रुत्वा पिता आह—कथं सुमेध इतीति । सुष्ठु मेधा यस्यासौ सुमेधा-स्तस्य संबुद्धिर्हे सुमेधः कथं त्वं नानुशिष्टोऽसि तद्वदेति पितोक्तवानित्यर्थः । एवमुक्तोऽननुशिष्टत्वकारणं पुत्र आह—
१५ पञ्च मा प्रश्नान् राजन्यबन्धुरप्राक्षीत् ततो नैकंचन वेदेति होवाचेति । राज्ञः पुत्रा राजन्यास्ते बन्धवो यस्य स राजन्यबन्धुः राजन्याभास इति परिभववचनमेतत्स राजन्यबन्धुर्मा मां पञ्च पञ्चसंख्याकान् प्रश्नान् अप्राक्षीत् पृष्टवान् तस्मात्प्रश्नपञ्चकादेकंचन एकमपि प्रश्नमहं न वेद । न हि यथावदनुशिष्टस्यान्यतः परिभवः सम्भवत्यतो नाहं त्वया सम्यगनुशिष्ट इति ह किल पुत्रः पितरमुवाचोक्तवान् । के ते प्रश्ना इति पिता पृच्छतीत्याह—कतमेत इतीति । एवं प्रष्टः पुत्रः किमाहेत्यपेक्षायां राजकृतप्रश्नांस्तत्प्रतीकग्रहणेन निवेदितवानित्याह—इम इति ह
२० प्रतीकान्युदाजहारेति । इमे ते प्रश्ना इति ह किल प्रतीकानि मुखानि प्रश्नानामेकदेशानुदाजहारोदाहृत-वानित्यर्थः ॥५॥

एवं पुत्रोक्तं साकल्येनावगत्य पिता स्वात्मनि वञ्चकत्वं परिहृतवानित्याह—स होवाच तथा नस्त्वं तात जानीथा इत्यादिना । हे तात वत्स यथा येन प्रकारेण यत्किंच विज्ञानजातमहं वेद तत्सर्वं तथा तेन प्रकारेण तुभ्यमवोचमित्येवं जानीथाः । न वञ्चितवानिति पुत्रं प्रत्युवाचेत्यर्थः । मया यत्किञ्चिज्ज्ञायते तत्सर्वमेवोपदिष्टम् ।
२५ राजपृष्टा तु विद्या तदन्तराश्रितैवातो नाहं तां जानामीत्यवोचदिति भावः । कथं तर्हि सा विद्याऽस्माभिः प्राप्येत्य-पेक्षायां पिता आह—प्रेहि तु तत्र प्रतीत्य ब्रह्मचर्यं वत्स्याव इतीति । तद्विज्ञानं यद्यवाप्तुमिच्छसि तर्हि प्रेहि आगच्छ तत्र राज्ञः समीपे प्रेत्य गत्वा आवा ब्रह्मचर्यं वत्स्यावो विद्यार्थम् । एवं पित्रोक्त इतर आह—भवानेव गच्छत्विति । अहं तस्य मुखं निरीक्षितुं नोत्सहे अतो भवानेव तत्र गच्छतु यातु ॥६॥

एवं पुत्रेणोक्तः पिता किं कृतवानित्यपेक्षायामाह—आजगाम गौतमो यत्र प्रवाहणस्य जैवलेरासेति ।
३० प्रवाहणस्य जैवलेरिति षष्ठीद्वयं प्रथमार्थे जीवलस्यापत्यं जैवलिः प्रवाहणनामा राजा यत्रास आस्थायिकां कृतवान् तत्र स आरुणिर्गौतमो गौतमगोत्रो मुनिराजगामागतवानित्यर्थः । ततो राजा किं कृतवानित्यपेक्षायामाह—तस्मा आसनमाहार्योदकमाहारयांचकाराथ हास्मा अर्घं चकारेति । ततो राजा तस्मै गौतमायानुरूपमासन भृत्यैराहार्यं अर्घपाद्यादिसिद्धये उदकं तैरेवाहारयाञ्चकाराथानान्तरमस्मै गौतमाय पुरोधसा सार्द्धं मन्त्रपूर्वकमर्घ चकार मधुपर्कं कृतवानित्यर्थः ॥७॥

३५ ततः किं कृतवानित्यपेक्षायामाह—स होवाच वरं भगवते गौतमाय दद्म इतीति । हे ब्राह्मण गौतमाय भवते तुभ्यं वरमपेक्षितलक्षणं वयं दद्मः तव यदपेक्षितं तद्दास्यामीति—स राजाऽऽह किलोवाच । एवं राजकृतापेक्षित-दानप्रतिज्ञा श्रुत्वा गौतमः किमाहेति तदाह—स होवाच प्रतिज्ञातो म एष वर इति । हे राजन् एष मे मह्यं वरस्त्वयाऽऽचनायैत्वेव प्रतिज्ञातोऽतस्त्वं स्वकृतप्रतिज्ञायामात्मानं दृढीकुर्विति स ह गौतम उवाचेत्यर्थः । दृढीकृत-

**स होवाच। दैवेषु वै गौतम तद्वरेषु मानुषाणां ब्रूहीति ॥९॥**
**स होवाच। विज्ञायते हास्ति हिरण्यस्यापात्तं गोअश्वानां दासीनां प्रवराणां परिधानानां मा नो भवान्बहोरनन्तस्यापर्यन्तस्याभ्यवदान्यो भूदिति स वै गौतम तीर्थेनेच्छासा इत्युपैम्यहं भवन्तमिति वाचा ह स्मैव पूर्व उपयन्ति ॥१०॥**
**स होपायनकीर्त्या उवाच। तथा नस्त्वं गौतम माऽपराधास्तव च पितामहा यथेयं विद्येतः पूर्वं न कस्मिँश्चन ब्राह्मण उवास तां त्वहं तुभ्यं वक्ष्यामि को हि त्वैवं ब्रुवन्तमर्हति प्रत्याख्यातुमिति ॥११॥** ५

एवात्मा त्वं तु वश्य [वद] यदपेक्षितमिति चेत्तत्राह—यां तु कुमारस्यान्ते वाचमभाषथास्तां मे ब्रूहीति। कुमारस्य मत्पुत्रस्यान्ते समीपे यान्तु प्रश्नरूपवाचएव; गौतमस्य प्राधान्यं श्रुत्वा राजा किमुक्तवानिति तदाह—स होवाच देवेषु वै गौतम तद्वरेष्विति। स राजोवाच हे गौतम यस्त्वया प्रार्थ्यते वरस्तदयं वरो देवेषु देवप्रार्थनीयेषु वरेषु १० वर्तते स हि न मानुषप्रार्थ्यः अविजानता त्वयैतत्पृष्टमित्यर्थः। कथं तर्हि प्रतिज्ञेत्याशंक्य यां मानुषवरविवक्षये-त्याह—मानुषाणां ब्रूहीतीति मानुषाणां गोऽश्वादिलक्षणवराणां मध्येऽन्यतमं वरं प्रार्थय तस्यैव दानप्रार्थनयोर्योग्य-त्वादित्यर्थः ॥८-९॥

तस्य मानुष्यवरान्तर्भावात् यामभाषयास्तां मे ब्रूहीति स एव वरो मया प्रार्थ्य इत्यर्थः। तस्य सर्वस्य मम विद्यमानत्वात् स मया न प्रार्थ्यत इत्याह—स होवाच विज्ञायते हास्तीत्यादिना। बहुतरस्यापि हिरण्यस्याऽऽपात्तं १५ प्राप्तमस्ति। एतत्त्वयापि ह किल विज्ञायते इति सह गौतम उक्तवान्। तथा गोअश्वाना गवामश्वाना च दासीनां प्रवाराणां परिवाराणां परिधानानां परिधानयोग्यक्षौमादीनामप्यापात्तमिति प्रत्येकमनुषज्यते। तथा च मानुषस्य वरणीयस्य सर्वस्यापि मम विद्यमानत्वान्न मया संप्रार्थ्यते किं तु त्वत्प्रतिज्ञानुसारेण मदिष्टमन्यदेव त्वया देयमित्युक्त-वान् इति वाक्यार्थः। कस्तर्हि भवतोऽभिप्रेतो वर इत्यत आह—मा नो भवान् बहोरनन्तस्यापर्यन्तस्याभ्यवदान्यो भूदितीति। भवान् भाग्यवांस्त्वमन्यस्मिन्नर्थिजने वदान्यो दानशीलो भूत्वा नोऽस्मानेवाभिलक्ष्याऽस्मान्प्रति बहोः २० प्रभूतस्यानन्तफलस्यापर्यन्तस्यापरिसमाप्तिकस्य पुत्रपौत्रादिगामिन एवंभूतस्य दैववित्तस्याऽवदान्यः कदर्योविभवे सत्यदाता मा भूद्भवानित्युक्तवान् गौतम इत्यर्थः। एवं याचितं दैववरं दातुं प्रत्याख्यातु चाऽशक्यत्वेन चिन्तामापन्नो राजाऽऽह—स वै गौतम तीर्थेनेच्छासा इतीति। हे गौतम स त्वं वै प्रसिद्धतीर्थेन उपसदनशास्त्रविहितेन मार्गेण मत्तो विद्यामवाप्तुमिच्छासे इच्छस्व अन्यथाऽदेयत्वादित्येवं राज्ञा स्मारितशास्त्रार्थो गौतम आह—उपैम्यहं भवन्तमितीति। अहं भवन्तमुपैमि शिष्यत्वेनोपगच्छामीत्यर्थः। नन्वेवं गौतमो राजानं प्रति शिष्यवृत्तिं कुर्वाणः शास्त्रार्थे विरोध- २५ माचरतीत्यत आह—वाचा ह स्मैव पूर्व उपयन्तीति। पूर्वे किल ब्राह्मणा विद्यामर्थयमानाः सन्तः क्षत्रियान् क्षत्रिया वैश्यान् वा विद्याप्राप्त्यसम्भवावस्थाया शिष्यवृत्त्या वाचैवोपगच्छन्ति स्म नोपायनशुश्रूषादिभिरित्यर्थः ॥१०॥

अतो राजा वृद्धस्थितिं परिपालयन्मुनिना पादोपसर्पणे कीर्तितमात्रे उपदिष्टवानित्याह—सहोपायनकीर्त्या-उवाचेति। स राजा प्रवाहणनामा ह किल उपायनमुपगमनं पादोपसर्पणं तस्य कीर्तौ कीर्तनमात्रे उवाचोन वान्नोपायनेन-नमस्कारयदित्यर्थः। एवं ब्राह्मणपीडनेन राजा सापराधमात्मानं मत्वा तत्क्षमापयन्नाह—तथा नस्त्वं गौतम मापरा- ३० धास्तव च पितामहा यथेति। हे गौतम तव च पितामहा अस्मत्पितामहेषु यथाऽपराधं क्षमते स्म तथा त्वमपि नोऽस्मान्प्रति मा अपराधा अपराधं मा कार्षीरस्मदीयोऽपराधः क्षन्तव्यः। पितामहाना वृत्तमस्मास्वपि भवता रक्षणीयमित्यर्थः। नन्वेवं किमिति प्रार्थनं क्रियते विद्यैव मह्यं किमिति नोपदिश्यते इत्यत आह—इयं विद्येतः पूर्वं न कस्मिंश्चित् ब्राह्मण उवास। तां त्वहं तुभ्य वक्ष्यामीति। इय विद्येत पूर्व कस्मिश्चिदपि ब्राह्मणे नोवास नोषितवती इति च त्वमपि जानीषे किन्तु सर्वदा क्षत्रियपरंपरयैवैयमागतेति कृत्वा सा स्थितिर्मयापि रक्षणीया यदि शक्यते ३५ रक्षितुमित्यभिप्रायेणोक्तं देवेषु वै गौतम तद्वरेषु मानुषाणां ब्रूहीति न पुनरदेयेवेत्यभिप्रायेण। इतः परं तु न शक्यते रक्षितुमतस्तामेतादृशीं विद्यामहं वक्ष्यामीत्युक्तवानित्यर्थः। कथं पुनर्न शक्यते रक्षितुमित्यत आह—को हि त्वैवं ब्रुवन्तमर्हति प्रत्याख्यातुमितीति। तवाहं शिष्योऽस्मीत्येवं ब्रुवन्तं त्वां भवन्त हि यस्मात् कोऽप्यन्योऽपि प्रत्याख्यातुं निराकर्तुं नार्हति तस्मादहं पुनस्तुभ्यं कथं न वक्ष्यामीति प्रत्याख्यास्ये किन्तु वक्ष्याम्येवेत्युक्तवान् राजेत्यर्थः ॥११॥

**असौ वै लोकोऽग्निर्गौतम । तस्यादित्य एव समिद्रश्मयो धूमोऽह-**
**रर्चिश्चन्द्रमा अङ्गारा नक्षत्राणि विष्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ**
**देवाः श्रद्धां जुह्वति तस्या आहुतेः सोमो राजा सम्भवति ॥१२॥**

**पर्जन्यो वा अग्निर्गौतम । तस्य संवत्सर एव समिदभ्राणि**
**धूमो विद्युदर्चिरशनिरङ्गारा ह्रादुनयो विष्फुलिङ्गास्तस्मिन्नेत-**
**स्मिन्नग्नौ देवाः सोमं जुह्वति तस्या आहुतेर्वृष्टिः सम्भवति ॥१३॥**

इदानीं मनुष्यजन्मस्थितिलयानां यतिथ्यामित्यादिचतुर्थप्रश्ननिर्णयाधीनतया तस्य प्राधान्यात् प्राथम्ये सति अर्थक्रममाश्रित्याविवक्षितं पाठक्रमं भङ्क्त्वा चतुर्थप्रश्नस्यैव निर्णयमाह—**असौ वै लोकोऽग्निर्गौतम तस्यादित्य एव समिद्रश्मयो धूम इत्यादिना ।** वैशब्दः प्रसिद्धद्युलोकस्मरणार्थः । हे गौतम असौ वै प्रसिद्धो द्युलोक आहवनीयोऽग्नि-
१० स्तस्मिंस्तद्दृष्टिः कर्तव्या तस्य द्युलोकाग्नेरादित्य एव समित्समिन्धनात् । आदित्येन हि द्युलोकः समिध्यतेऽत इन्धनत्वसामान्यादादित्ये समिद्दृष्टिः कार्या । रश्मयो धूम इति पश्येत् तयोरादित्यसमिद्भ्यामुद्भवसामान्यात् । अहरर्चिरुभयोः प्रकाशात्मत्वसामान्यात् । चन्द्रमा मण्डलात्मा अङ्गारः उभयोरुपशान्तत्वसामान्यात् । नक्षत्राणि विष्फुलिंगा अग्निकणाः विक्षेपात्मत्वसामान्यादल्पप्रकाशत्वसामान्याद्वा । तस्मिन्नेवंगुणविशिष्टे द्युलोकाग्नौ देवा इन्द्रादयः श्रद्धां द्रव्यस्थानीयां जुह्वति प्रक्षिपन्ति । तस्या आहुतेः सकाशात् सोमः पितृणा ब्राह्मणाना च राजा-
१५ ऽधिपतिः संभवत्युत्पद्यत इत्यर्थः । ननु कथं द्युलोकादेराहवनीयाग्नित्वं कथं च कर्मानधिकारिणामिन्द्रादीनां होमकर्तृत्वम् । कथं वा प्रत्ययरूपायाः श्रद्धाया होम्यत्वं कीदृग्विधो वा तस्या होमः कश्च पुनः सोमः कीदृशो वा तस्य संभव इति । उच्यते । यथा जीवदवस्थायामाहवनीयादिविस्फुलिंगान्तैः साधनैर्विशिष्टमग्निहोत्रं हुतं तथैव तदग्निहोत्रं शरीरपातादूर्ध्वमपूर्वीभूतमव्याकृतावस्थमपि प्रातिस्विकशक्तियुक्तैः सूक्ष्मैः तैः साधनैर्विशिष्टमेव सदस्माल्लोकादमुं लोकमुत्क्रम्य तथैवाहवनीयस्थानीयं द्युलोकमारभते । ते वा एते आहुती हुते उत्क्रामतस्ते
२० अन्तरिक्षमाविशतस्ते अन्तरिक्षमेवाहवनीयं कुर्वाते इति दिवमेवाहवनीयं कुर्वाते इत्याद्यष्टाध्यायीकाण्डेषूक्तत्वात्[1] । अतो युक्तमसौ वै लोकोऽग्निरिति द्युलोकस्याहवनीयाग्नित्ववचनमिति । ये एव जीवदवस्थायां यजमानस्याध्यात्मिकाः प्राणा अग्निहोत्रस्य होतारोऽभूवन् त एव तच्छरीरान्ते तत्कर्मफलभोगाय द्युलोकपर्जन्यादिसंबन्धयोग्याकारेण परिणममाना आधिदैविकरूपमापन्ना इन्द्रादिशब्दवाच्याः सन्तोऽग्निहोत्रकर्मफलपरिणामकाले तद्भोक्तृत्वलक्षणं तत्र तत्र होतृत्वं प्रतिपद्यन्त इति युक्तं देवा जुह्वतीति वचनमिति । तथाऽत्र श्रद्धाशब्देन भूतान्तरसहिता आप एवो-
२५ च्यन्ते 'श्रद्धा वा आप' इति श्रुतेः । ताश्च द्रवद्रव्यत्वात्पय सोमादिलक्षणा एवेत्यवोचाम । अतो युक्तं श्रद्धाया होम्यत्व-वचनमिति । तासां चापां कर्तुः शरीरभावाय द्युलोकं प्रति प्रवेशनमेव होम इत्युच्यत इति सोमो नाम चन्द्रमण्डल-वर्ती प्रकाशात्मा पुरुषः । ननु चन्द्रसोमयोः को विवेक इति चेत् शृणु । चन्द्र इत्यप्रकाशस्वरूपं मण्डलमुच्यते चन्द्र-शब्दवाच्याब्रकेण तुल्यरूपत्वात् ताः प्रकाशस्वभावा वृद्धिक्षयधर्माश्च तदन्तर्गतो देवः सोम इत्यभिधीयते सोमशब्द-वाच्यलतागतवृद्धिक्षयवत्त्वसामान्यात् । अतो मण्डलात्मत्वेन शुक्लपक्षे क्रमेणाप्यायते । तदेतदाप्यायनं सोमलोके
३० कर्तृशरीरात्मकस्य सोमस्य सम्भव इति द्रष्टव्यम् ॥१२॥

स सोमः पर्जन्याग्नौ हुतः सन् वृष्टिरूपेण परिणमत आह—**पर्जन्यो वा अग्निर्गौतमेति कण्डिकया ।** पर्जन्यो वृष्ट्युपकरणाभिमानी देवतात्माऽग्निः । स च आहुत्यावृत्तिक्रमेण द्वितीयः आहुत्याधारः तस्य संवत्सर एव समित् संवत्सरेण हि शरदादिग्रीष्मान्तैः स्वावयवैर्विपरिवर्तमानेन पर्जन्याग्निः दीप्यते । अभ्राणि धूमस्तेषां धूमप्रभवत्व-प्रसिद्धेर्धूमवदुपलभ्यमानत्वाद्वा विद्युदर्चिः प्रकाशाश्रयभूताअङ्गाराः उपशान्तत्वकठिनत्वसामान्याभ्यां ह्रादुनयः स्तनयितु-
३५ शब्दा विस्फुलिंगाः विक्षेपानेकत्वसामान्याभ्याम् । तस्मिन्नेतस्मिन्पर्जन्याग्नौ देवाः प्रागुक्ताः सोमं राजानं प्रागुक्तं जुह्वति तस्याः सोमाहुतेः सकाशाद्वृष्टिः संभवत्युत्पद्यत इत्यर्थः ॥१३॥

---

1. शत. ११.६.२.६-७

अयं वै लोकोऽग्निर्गौतम। तस्य पृथिव्येव समिद्वायुर्धूमो
रात्रिरर्चिर्दिशोऽङ्गारा अवान्तरदिशो विष्फुलिङ्गास्तस्मिन्नेत-
स्मिन्नग्नौ देवा वृष्टिं जुह्वति तस्या आहुतेरन्नं सम्भवति ॥१४॥

पुरुषो वा अग्निर्गौतम। तस्य व्यात्तमेव समित्प्राणो
धूमो वागर्चिश्चक्षुरङ्गाराः श्रोत्रं विष्फुलिङ्गास्तस्मिन्नेत-　　　५
स्मिन्नग्नौ देवा अन्नं जुह्वति तस्या आहुते रेतः सम्भवति ॥१५॥

योषा वा अग्निर्गौतम। तस्या उपस्थ एव समिल्लोमानि धूमो
योनिरर्चिर्यदन्तः करोति तेऽङ्गारा अभिनन्दा विष्फुलिङ्गास्तस्मिन्नेत-
स्मिन्नग्नौ देवा रेतो जुह्वति तस्या आहुतेः पुरुषः सम्भवति स
जायते स जीवति यावज्जीवत्यथ यदा म्रियतेऽथैनमग्नये हरन्ति ॥१६॥　　　१०

एवमुत्पन्ना वृष्टिरस्मिन् लोके हुता सत्यन्नरूपेण परिणमत इत्याह—अयं वै लोकोऽग्निर्गौतमेति कण्डिकया। अयं लोकः पृथिव्यभिमानिदेवताया देहभूतः प्राणिजन्मोपभोगाश्रयः क्रियाकारकफलविशिष्टस्तृतीयोऽग्निः तस्याग्नेः पृथिव्येव पृथिव्यभिमानिदेवतैव समित्, तया ह्ययं लोकोऽनेकप्राणिभोगसम्पन्नतया समिध्यते वायुर्धूमः उभयोः पार्थिवद्रव्याश्रितत्वेनोत्थानसामान्यात्। रात्रिरर्चिरुभयोः समित्सम्बन्धप्रभवत्वसामान्यात्। अग्नेः समित्संबन्धेन ह्यर्चिः संभवति तथा एतल्लोकरूपाग्नेः पृथिवीरूपसमित्संबन्धेन च रात्रिः तस्याः पृथिवीछायारूपत्वात् दिशोऽङ्गराः १५ उभयोरुपशान्तत्वसामान्यात्। अवान्तरदिशो विस्फुलिङ्गा उभयोर्विक्षेपात्मत्वसामान्यात्। तस्मिन्नेतस्मिन्पृथिवी-लोकाग्नौ देवा वृष्टिं जुह्वति तस्या आहुतेः सकाशादन्नमदनीयं व्रीह्यादिर्निष्पद्यत इत्यर्थः ॥१४॥

तदन्नं पुनः पुरुषाग्नौ हुतं सद्रेतोरूपेण परिणमत इत्याह—पुरुषो वा अग्निर्गौतमेति कण्डिकया। प्रसिद्धः शिरःपाण्यादिमान्पुरुषश्चतुर्थोऽग्निः तस्य व्यात्तं विवृत्तं मुखं समित् समिधाऽग्निरिव पुरुषोऽपि वचनस्वाध्यायादौ विवृतेन मुखेन दीप्यते प्राणोऽध्यात्मवायुर्धूमः मुखसमिद्ध्यामुत्थानसामान्यात्। वाक् शब्दोऽर्चिरुभयोरभिधेयव्यञ्जकत्व- २० सामान्यात्। चक्षुरङ्गारा उपशमसामान्यात् प्रकाशाश्रयत्वसामान्याद्वा। श्रोत्रं विस्फुल्लिगा विक्षेपसामान्यात्। तस्मिन्नेतस्मिन् पुरुषाग्नौ देवा आध्यात्मिका वागादयस्ते स्वेनाधिदैविकरूपेण देवत्वाद्देवा अन्नं जुह्वति तस्या आहुतेः सकाशाद्रेतः प्रसिद्धं संभवतीत्यर्थः ॥१५॥

तत्तु रेतः पुनर्योषाग्नौ हुतं सत्पुरुषाकारेण परिणमत इत्याह—योषा वा अग्निर्गौतमेत्यादिना। पुरुषः संभवतीत्यन्तेन। योषा स्त्री पञ्चमोऽग्निस्तस्या उपस्थ एव समित् तेन हि योषित् समिध्यते लोमानि रोमाणि धूमः २५ उभयोरुपस्थसमिद्ध्यामुत्थानसामान्यात्। योनिरिन्द्रियाश्रयप्रदेशोऽर्चिः वर्णसामान्यात्। यत्कर्म अन्तःकरोति मैथुनव्यापाररूपं ते अगाराः ते खल्वग्नेरुपशान्तिहेतवस्तथेदमपि कर्म योषिदग्नेः पुरुषस्य च तेजोवीर्यादिनाशकत्वे-नोपशान्तिकरमतस्तस्मिन् कर्मण्यङ्गारदृष्टिर्युक्ता। तस्मात्कर्मण उत्पन्ना अभिनन्दाः सुखलवा विस्फुलिंगाः क्षुद्रत्व-सामान्यात्। तस्मिन्नेतस्मिन् योषिदग्नौ देवा अध्यात्मप्राणरूपा रेतो जुह्वति तस्या आहुतेः पुरुषः शिरः पाण्यादिमानु-त्पद्यते। एतावता ग्रन्थेन वेत्थ यतिथ्यामिति चतुर्थप्रश्नस्याग्निहोत्रे हुताः पयोघृतादिलक्षणा आपो भूतसूक्ष्मलक्षणा भूता- ३० न्तरसहिता पूर्वोक्ताग्निपरिपाकतः सूक्ष्मत्वं हित्वा करचरणादिरूपेण विपरिणम्य स्थूलता गच्छन्त्यः पुरुषाख्यां लभन्त इत्येतादृशो निर्णय उक्त इत्यर्थः। एवभूतस्य स्वाभाविकव्यापारमाह—स जायते स जीवतीति। एवं क्रमेण स पुरुषो जायते उत्पद्यतेऽसौ जीवति। कियन्त कालमित्यपेक्षायामाह—यावज्जीवतीति। यावत्कालपर्यन्तमस्मिञ्छरीरे स्थितिनिमित्तं कर्म तस्य क्षये सति यदा यस्मिन् काले म्रियतेऽथ तदा एनं मृतं पुरुषमग्नयेऽन्त्यर्थमन्त्याहुत्यै ऋत्विजो हरन्ति क्षिपन्तीत्यर्थः ॥१६॥　　　३५

तस्याग्निरेवाग्निर्भवति । समित्समिद्धूमो धूमोऽर्चिरर्चिरङ्गारा
अङ्गारा विष्फुलिङ्गा विष्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवाः
पुरुषं जुह्वति तस्या आहुतेः पुरुषो भास्वरवर्णः सम्भवति ॥१७॥

ते य एवमेतद्विदुः । ये चामी अरण्ये श्रद्धां सत्यमुपासते तेऽर्चिरभि-
सम्भवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान्षण्मासा-
नुदङ्ङादित्य एति मासेभ्यो देवलोकं देवलोकादादित्यमादित्याद्वैद्युतं
तान्वैद्युतात्पुरुषो मानस एत्य ब्रह्मलोकान्गमयति ते तेषु ब्रह्म-
लोकेषु पराः परावतो वसन्ति तेषामिह न पुनरावृत्तिरस्ति ॥१८॥

एवं पञ्चाग्निविदो गतिं विवक्षुर्वक्ष्यमाणगत्युपयोगिदेहप्रदर्शनार्थमन्त्येष्टिं निरूपयन्ती श्रुतिः एवमग्निजत्वात्त-ल्लयत्वाच्च पुरुषस्याहमग्न्यात्मेति ध्यानसिद्धये षष्ठमग्निमन्त्याहुत्यधिकरणं प्रसिद्धसमिदादिविशिष्टमनारोपितं दर्शयति—**तस्याग्निरेवाग्निर्भवतीति**, कण्डिकया । तस्मिन्नेतस्मिन् प्रसिद्धेऽग्नौ देवा ऋत्विजः पुरुषमन्त्याहुतिं जुह्वति प्रक्षिपन्तीत्यर्थः । एवं हुते पुरुषे सति किं स्यादित्यपेक्षायामाह—**तस्या आहुतेः पुरुषो भास्वरवर्णः संभवतीति** । तस्या आहुतेर्भास्वरवर्णोऽतिशयदीप्तिमान् सात्त्विकः पुरुषः संभवत्युत्पद्यते निषेकादिभिरन्त्याहुत्यन्तैः कर्मभिर्दर्शन-विशिष्टैः संस्कृतत्वादयं भास्वरवर्णः । केवलकर्मिणा राजसानामुभयहीनाना तामसाना च पित्र्यादिलोककीटादिदेहप्राप्ते-र्वक्ष्यमाणत्वादित्यर्थः ॥१७॥

एवं पञ्चाग्निविदो मृतस्य गतिं वक्तुं मार्गविप्रतिपत्तितत्साधनविषययोः प्रथमपञ्चमयोः प्रश्नयोर्निर्णयार्थ-माह—**ते य एवमेतद्विदुर्येचामी अरण्ये श्रद्धां सत्यमुपासते तेऽर्चिरभिसंभवन्तीति** । ते प्रसिद्धा ये एवमुक्ताग्निसमिद्धू-मार्चिरङ्गारविस्फुलिंगाहुतिविशिष्टान्पञ्चाग्नीन्विदुस्तेऽर्चिरभिसंभवन्तीत्यन्वयः । अत्र ते ये विदुरिति बहुवचनात्त्रै-वर्णिका गृहस्था एवाधिकारिणः पञ्चाग्निदर्शने तस्य गृहस्थकर्मसंबद्धत्वात् । अत एवये चामी अरण्ये वानप्रस्थाः श्रवणाद्य-नधिकृता आश्रमधर्ममात्रनिरताः संन्यासिनश्च श्रद्धामितिकर्तव्यतया प्राप्तामनुष्ठाय सत्यं सत्याख्यं ब्रह्मोपासते तेऽर्चि-रभिसंभवन्तीति तेषा पृथक् साधनाभिधानम् । सम्यग्ज्ञाननिष्ठानां परमहंसानां तु 'न तस्मात्प्राणा उत्क्रामन्ती'ति श्रुतिप्रामाण्यात्प्राणोत्क्रमणाभावेन देवयानमार्गप्रवेशाभावात् तत्साधनेऽनधिकारात् । नैष्ठिकब्रह्मचारिणामपि गुरु-परतन्त्रतयोपासने स्वातन्त्र्याभावात् । तेषां चोत्तरमार्गप्रतिपत्तिस्तु गुरुशुश्रूषापूर्वकगुरुकुलवासादेव सभवति—

अष्टाशीतिसहस्राणां मुनिनामूर्ध्वरेतसाम् । उत्तरेणार्यम्णः पन्थास्तेऽमृतत्वं हि भेजिरे ॥ इति स्मृतेः ।

अतः परिशेषाद्गृहस्थानामेवाधिकारः । अर्चिःशब्देनात्रार्चिरभिमानिनी देवतोत्तरमार्गलक्षणा गृह्यते न तु ज्वलनात्मनोऽर्चिषो ग्रहणं तस्यास्थिरत्वात् परिव्राजकानां च साक्षात्संबन्धाभावाच्च । अतो अर्चिरभिमानि-देवतामेवाभिसंभवन्ति प्रतिपद्यन्त इत्यर्थः । ततः क्व गच्छन्तीत्यपेक्षायामहरादिदेवताप्राप्तिक्रमेण अपुनरावृत्तिलक्षणं हिरण्यगर्भलोकं गच्छन्तीत्याह—**अर्चिषोऽहरह्न आपूर्यमाणपक्षमित्यादिना** । **तेषामिह न पुनरावृत्तिरस्तीत्यन्तेन** । अत्राहरादिशब्दैस्तदभिमानिन्यो देवता एव विवक्षिता न तु कालविशेषाः तथा चार्चिषोऽर्चिर्देवतायाः सकाशादहः अहर्देवतामभिसंभवन्ति प्रतिपद्यन्त इत्येवं प्रत्येकं योज्यम् । आपूर्यमाणपक्षः शुक्लपक्षदेवता । एवं शुक्लपक्षदेवतया अतिवाहिता यान् षण्मासानुदङ् उत्तरां दिशमादित्यः सूर्यं एति तान्षण्मासानुत्तरायणाभिमानिदेवतारूपान्प्रतिपद्यन्ते देवलोकस्तदभिमानिनी देवता आदित्यः प्रसिद्धः वैद्युतो विद्युदभिमानिनी देवता अनेन क्रमेण विद्युद्देवतां प्राप्तास्ता-नुपासकान्वैद्युतात्सकाशान्मानसो ब्रह्मणा मनसा सृष्टो ब्रह्मलोकवासी पुरुषः कश्चिदेत्याऽऽगत्य ब्रह्मलोकान् गमयति नयति । ब्रह्मलोकाख्यस्य सूत्रदेहस्य सामान्यविशेषात्मना बहुत्वमपेक्ष्य बहुवचनप्रयोगः । उपासनातारतम्यात्सायुज्य-समानैश्वर्यसालोक्यापेक्षया वा । ब्रह्मलोकान् प्राप्ता उपासकास्तेषु ब्रह्मलोकेषु स्वयं पराः प्रकृष्टाः सन्तः परावतः प्रकृष्टान् ब्रह्ममानमितान् संवत्सरान्ब्रह्मायुरवधिकान्शतसंख्याकान्वसन्ति तेषामुपासकानामिहास्मिन्कल्पे पुनरावृत्तिर्नास्ति कल्पान्तरे त्वावर्तन्त एव इमं मानवमावर्तं नावर्तन्त इति छान्दोग्ये इमं मानवमित्यावृत्तेर्विशेषणात् स्वश्रुतौ इहेत्या-वृत्तेर्विशेषणाच्च । अतो नात्यन्तानावृत्तिपरमिदं वाक्यमित्यर्थः ॥१८॥

**अथ ये यज्ञेन दानेन। तपसा लोकं जयन्ति ते धूममभिसम्भवन्ति धूमा-द्रात्रिँ रात्रेरपक्षीयमाणपक्षमपक्षीयमाणपक्षाद्यान्षण्मासान्दक्षिणाऽऽदित्य एति मासेभ्यः पितृलोकं पितृलोकाच्चन्द्रं ते चन्द्रं प्राप्यान्नं भवन्ति ताँ-**

एवं देवयानमार्गं ससाधनमुक्त्वा पितृयाणमार्गमाह—**अथ ये यज्ञेन दानेन तपसा लोकं जयन्ति ते धूममभि-संभवन्तीत्यादिना**। अथ पुनर्ये नैवं विदुरुक्तरीत्याऽग्निहोत्रसंबन्धिपदार्थषट्कस्यैव केवलं वेदितारः केवलकर्मिणो ५ यज्ञेनाग्निहोत्रदर्शपूर्णमासज्योतिष्टोमादिलक्षणेन दानेन वेदेर्बहिरपि समीचीनदेशकालसंपत्तौ सत्पात्रेषु द्रव्यत्याग-लक्षणेन तपसा यज्ञाङ्गदीक्षापयोव्रतादिव्यतिरिक्तकृच्छ्रचान्द्रायणादिरूपेण लोकं पितृलोकं जयन्ति प्राप्नुवन्ति ते तत्प्राप्तिसाधनमार्गभूता धूमाभिमानिनी देवतामभिसंभवति प्रतिपद्यन्ते धूमदेवता प्राप्तास्ते तयातिवाहिता रात्र्यादि-देवताक्रमेण चन्द्रं गच्छन्तीत्याह—**धूमाद्रात्रिं रात्रेरपक्षीयमाणपक्षमित्या पितृलोकाच्चन्द्रमित्यन्तेन**। यथोत्तरमार्ग-भूतानामर्चिरादीनां देवतात्वमातिवाहिकत्वं च विवक्षितं तथा पितृयाणमार्गभूताना धूमादीनामपि देवतात्वम्, आति- १० वाहिकत्वं च विवक्षितमेव। अपक्षीयमाणपक्षः कृष्णपक्ष. देवतात्वमातिवाहिकत्वं च विवक्षितम्। तथा पितृलोकशब्दस्तु न देवताविषयः किन्तु प्रसिद्धपित्रधिष्ठितलोकविषय एव चन्द्रमुकलक्षणमण्डलात्मानं प्रतिपद्यन्त इत्यर्थः। अन्यत् सुगमम्। एवं पितृलोके चन्द्रं प्राप्तानां कः समाचार इत्यपेक्षाया ते देवभोग्या भवन्तीति दर्शयति—**ते चन्द्रं प्राप्यान्नं भवन्तीत्यादिना तत्र भक्षयन्तीत्यन्तेन**। ते कर्मिणश्चन्द्रं प्राप्यान्नं भवन्ति भोग्यतामापद्यन्त इति यावत्। आप्यायस्वा-पक्षीयस्वेति न मन्त्रः किन्तु आप्याय्याप्याय्यापक्षय्यापक्षय्येतिप्रकारप्रदर्शनार्थः। तथा च यज्ञे ऋत्विजश्चमसस्थं १५ सोमं पुनः पुनराप्याय्यापक्षय्य ह्रासं कृत्वा भक्षयन्ति। तथा भोगभूमौ प्राप्तास्तानन्नभूतान् देवाः स्वामिन एवैनान्सोम-लोके लब्धशरीरान्कर्मिण उपकरणभूतान् भृत्यानिव कर्मानुरूपफलदानेन विश्रमाभ्यनुज्ञानलक्षणमाप्यायनं कृत्वा स्वनियोगकरणेनाविश्रामलक्षणमपक्षय च कुर्वन्तो भक्षयन्ति उपभुञ्जते न तु खादन्ति। तथा सति चन्द्रलोकप्राप्तेरन-र्थार्थत्वेन तत्साधनस्याननुष्ठानप्रसंगादित्यर्थः। एवं ते य एवमेतद्विदुर्येचामी अरण्ये श्रद्धां सत्यमुपासत इत्यथ ये यज्ञेन दानेन चैव तपसा लोकं जयन्तीति च दक्षिणोत्तरमार्गप्रतिपत्तिसाधनोक्त्या पञ्चमप्रश्नं निर्णीय तेऽर्चिरभिसंभवन्ति ते २० धूममभिसंभवन्तीत्यादिना च दक्षिणोत्तरमार्गप्रदर्शने प्रथमं प्रश्नं च नीर्णीयेदानीमेतल्लोकप्राप्तिप्रकारप्रदर्शनेन द्वितीय-तृतीयप्रश्नयोर्निर्णयमाह—**तेषां यदा तत्पर्यवैतीत्यादिना। त एवमेवानु परिवर्तन्त इत्यन्तेन**। तेषां कर्मिणां यदा यस्मिन्काले तद्यज्ञदानादिलक्षणं सोमलोकप्रापकं कर्म पर्यवैति परिगच्छति सर्वात्मना क्षीयते अथ तदा ते इममेव प्रसिद्धमाकाशमभिनिष्पद्यन्ते। याभिर्द्युलोकाग्नौ हुताभिः श्रद्धाशब्दवाच्याभिरद्भिः सोमलोके कर्मिणामुपभोगायाम्मयं शरीरमारब्धं ताः पुनः कर्मक्षयाद्धिमपिण्ड इवातपसंपर्कात्प्रविलीनाः.....................( अपूर्णा )। २५

इति श्रीविद्यारण्यमुनिविरचितमाध्यन्दिनशाखीयबृहदारण्यकोपनिषद्दीपिकायां
षष्ठाध्यायस्य प्रथमं ब्राह्मणम् ॥१॥

## श्रीद्विवेदगङ्गव्याख्या मुख्यार्थप्रकाशिका[1]

एवं देवयानं मार्गं ससाधनमुक्त्वा पितृयाणं मार्गमाह—**ये नैवं विदुः** केवलकर्मिणः लोकं पितृलोकं जयन्ति प्राप्नुवन्ति। पितृलोकशब्दः प्रसिद्धपित्रधिष्ठितलोकविषयः चन्द्रस्तूकलक्षणो मण्डलात्मा। ते कर्मिणश्चन्द्रं प्राप्य ३० देवान्नं भवन्ति भोग्यतामापद्यन्ते। आप्याय्याप्याय्यापक्षय्यापक्षय्येति प्रकारप्रदर्शनार्थः। तथा च यथा यज्ञे ऋत्विजश्चम-सस्थं सोम पुनः पुनराप्याय्यापक्षय्य ह्रासं कृत्वा भक्षयन्ति तथा तत्र भोगभूमौ प्राप्तास्तानन्नभूतान्देवा. स्वामिन-इवैनान्सोमलोके लब्धशरीरान्कर्मिण उपकरणभूतान्भृत्यानिव कर्मानुरूपफलदानेन विश्रमाभ्यनुज्ञानलक्षणमाप्यायनं कृत्वा स्वनियोगकरणेनाविश्रामलक्षणमपक्षयं च कुर्वन्तो भक्षयन्ति उपभुञ्जते न तु खादन्ति तथा सति चन्द्रलोक-प्राप्तेरनर्थार्थत्वेन तत्साधनस्याननुष्ठानप्रसङ्गादित्यर्थः। एवं ते य एवमेतदित्यथ ये यज्ञेनेति च दक्षिणोत्तरमार्गप्रति- ३५ पत्तिसाधनोक्त्या पञ्चमं प्रश्नं निर्णीय तेऽर्चिरभीत्यादिना च दक्षिणोत्तरमार्गप्रदर्शनेन प्रथमं प्रश्नं च निर्णीये-दानीमेतल्लोकप्राप्तिप्रकारप्रदर्शनेन द्वितीयतृतीयप्रश्नयोर्निर्णयमाह—**तेषां यदेति**। तेषां कर्मिणां यस्मिन्काले

१. श्रीद्विवेदगङ्गस्य व्याख्या मुख्यार्थप्रकाशिका अन्यत्र च प्रकाशितपूर्वा तयाऽध्यायः पूर्यते।

स्तत्र देवा यथा सोमꣳ राजानमाप्यायस्वापक्षीयस्वेत्येवमेनाꣳस्तत्र भक्ष-
यन्ति तेषां यदा तत्पर्यवैत्यथेममेवाऽऽकाशमभिनिष्पद्यन्त आकाशाद्वायुं
वायोर्वृष्टिं वृष्टेः पृथिवीं ते पृथिवीं प्राप्यान्नं भवन्ति त एवमेवानुपरि-
वर्तन्तेऽथ य एतौ पन्थानौ न विदुस्ते कीटाः पतङ्गा यदिदं दन्दशूकम् ॥१९॥

५ इति बृहदारण्यकोपनिषदि षष्ठाध्यायस्य प्रथमं ब्राह्मणम् ॥१॥

अथ षष्ठाध्यायस्य द्वितीयं ब्राह्मणम्

यो ह वै ज्येष्ठं च श्रेष्ठं च वेद । ज्येष्ठश्च श्रेष्ठश्च स्वानां भवति प्राणो वै
ज्येष्ठश्च श्रेष्ठश्च ज्येष्ठश्च श्रेष्ठश्च स्वानां भवत्यपि च येषां बुभूषति य एवं वेद ॥१॥

यो ह वै वसिष्ठां वेद । वसिष्ठः स्वानां भवति वाग्वै
१० वसिष्ठा वसिष्ठः स्वानां भवति य एवं वेद ॥२॥

तद्यज्ञदानादिलक्षणं सोमलोकप्रापकं कर्म परिगच्छति सर्वात्मना क्षीयते तदा ते इममेव प्रसिद्धमाकाशमभिनिष्पद्यन्ते याभिर्द्युलोकाग्नौ हुताभिः श्रद्धाशब्दवाच्याभिरद्भिः सोमलोके कर्मिणामुपभोगायाम्मयं शरीरमारब्धं ताः पुनः कर्मक्षयाद्धिमपिण्ड इवातपसम्पर्कात्प्रविलीनाः सत्यः आकाशं प्राप्तास्तद्वदेव सूक्ष्मभावं प्रतिपद्यन्त इति भावः। ते पृथिवी प्राप्य व्रीहियवाद्यन्नं भवन्ति अन्नभावोऽत्र व्रीह्यादिसंश्लेषमात्रं बोद्धव्यम्। ते पुनरन्नभूता रेतः सिक्पुरुषाग्नौ हुता
१५ रेतोभूता योषाग्नौ हुताः पुरुषाख्या अग्निहोत्रादिकर्मानुतिष्ठन्तो म्रियमाणास्तेन धूमादिमार्गेण सोमलोकं गच्छन्ति कर्मफलभोगाय ततः कर्मक्षये सतीमं लोकं पुनरागच्छन्तीत्येवमेव कर्मिणोऽनु वारं वारं कर्मवायुसमीरिता आ ब्रह्मज्ञानाद् घटीयन्त्रवच्चक्रीभूताः परिभ्रमन्ति। एवं स्थानद्वयमावृत्तिसहितमुक्त्वा स्थानान्तरमाह—अथ य इति। कीटाः गोमयादिकुत्सितस्थानेषु क्रमयो जायन्ते पतङ्गाः शलभाः दन्दशूकं दशनशीलं दंशमशकपन्नगादिलक्षणम्। अतोऽस्यां गतौ निमग्नस्य पुनरुद्धारदौर्लभ्यादिमां गतिं जुगुप्सद्भिः स्वाभाविकज्ञानकर्मप्रहाणेन शास्त्रीयज्ञानकर्मणी दक्षिणोत्तर-
२० मार्गप्रतिपत्तिसाधनभूते समाश्रयणीये। ततोऽपि परममुक्तिहेतुभूततत्त्वज्ञानाय यत्नः कर्तव्य इति वाक्यार्थः। तथा च द्वितीयः प्रश्न आकाशादिद्वारागमनकथनान्निर्णीतः परलोकं गतानां पुनरावृत्तिकथनेन तृतीयप्रश्नश्च निर्णीतः ॥१९॥

इति श्रीद्विवेदगङ्गविरचितमाध्यन्दिनारण्यकोपनिषद्व्याख्याया मुख्यार्थप्रकाशिकाया
षष्ठाध्यायस्य प्रथमं ब्राह्मणम् ॥१॥

पूर्वं गायत्रीब्राह्मणे सत्स्वपि वागादिषु प्राणस्यैव गायत्र्यात्मकत्वं किमुक्तमित्याकाङ्क्षायां प्राणस्य ज्येष्ठत्वादि-
२५ गुणवत्त्वादिति परिहारमभिप्रेत्य तस्यैव ज्येष्ठत्वादिनिर्दिधारयिषयेदं ब्राह्मणं प्रवर्तते। यद्वा सत्स्वपि चक्षुरादि-षूक्थब्राह्मणे ,उक्थयजुःसामक्षत्रादिभावैः प्राणस्यैवोपासनमभिहितं तत्र हेतुमात्रापेक्षायां ज्येष्ठत्वश्रेष्ठत्वादि-हेतुमात्रकथनायेदं ब्राह्मणं प्रवर्तते। इह तु स्वतन्त्रमेव प्राणोपासनं विधीयते। वक्ष्यमाणप्राणोपासनस्य गुणभेदात्फल-भेदाच्च। तत्र तावदुपासकसम्पत्त्यर्थं फलं कथयति—यो ह वा इति। ननु निषेककाले प्राणस्येव वागादीनामपि शुक्र-शोणितसम्बन्धस्याविशिष्टत्वात्कथमवधार्यते प्राणो वै ज्येष्ठश्च श्रेष्ठश्चेति चेत् सत्यम् तथापि नाप्राणं शुक्रं प्ररोहतीति
३० निषेककालादारभ्य प्राणस्यैव गर्भवृद्धिहेतुतया प्रथमो वृत्तिलाभो न चक्षुरादेरतोऽवगम्यते चक्षुरादिषु प्राणस्यैव ज्येष्ठत्वम् ॥१॥

इदानीं प्राणस्यैव वसिष्ठत्वप्रतिष्ठात्वसम्पत्त्वायतनत्वप्रजातित्वलक्षणाः पञ्च गुणा इति दर्शयितुं प्रथमं तेषा-मेकैकस्य क्रमेण वाक्चक्षुःश्रोत्रमनोरेतसां गुणत्वमाह। अतिशयेन वासयतीति वसिष्ठा निवासार्थस्य वसे रूपं वाग्मिनो ह्यतिशयेन वसन्ति वासयन्ति चान्यान्। यद्वा अतिशयेन वस्त इति वसिष्ठा आच्छादनार्थस्य वसे रूपं
३५ वाग्मिनो हि वाचाऽन्यानभिभवन्ति ॥२॥

यो ह वै प्रतिष्ठां वेद । प्रतितिष्ठति समे प्रतितिष्ठति दुर्गे चक्षुर्वै प्रतिष्ठा चक्षुषा हि समे च दुर्गे च प्रतितिष्ठति प्रतितिष्ठति समे प्रतितिष्ठति दुर्गे य एवं वेद ॥३॥

यो ह वै सम्पदं वेद । सँ हास्मै पद्यते यं कामं कामयते श्रोत्रं वै सम्पच्छ्रोत्रे हीमे सर्वे वेदा अभिसम्पन्नाः सँ हास्मै पद्यते यं कामं कामयते य एवं वेद ॥४॥

यो ह वा आयतनं वेद । आयतनँ स्वानां भवत्यायतनं जनानां मनो वा आयतनमायतनँ स्वानां भवत्यायतनं जनानां य एवं वेद ॥५॥ ५

यो ह वै प्रजातिं वेद । प्रजायते प्रजया पशुभी रेतो
वै प्रजातिः प्रजायते प्रजया पशुभिर्य एवं वेद ॥६॥

ते हेमे प्राणाः अहँ श्रेयसे विवदमाना ब्रह्म जग्मुः को नो वसिष्ठ इति तद्धोवाच यस्मिन्व उत्क्रान्त इदँ शरीरं पापीयो मन्यते स वो वसिष्ठ इति ॥७॥ १०

वाग्घोच्चक्राम । सा संवत्सरं प्रोष्याऽऽगत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्यथाऽकडा अवदन्तो वाचा प्राणन्तः प्राणेन पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण विद्वाँसो मनसा प्रजायमाना रेतसैवमजीविष्मेति प्रविवेश ह वाक् ॥८॥

चक्षुर्होच्चक्राम । तत्संवत्सरं प्रोष्याऽऽगत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्यथाऽन्धा अपश्यन्तश्चक्षुषा प्राणन्तः प्राणेन वदन्तो वाचा शृण्वन्तः श्रोत्रेण विद्वाँसो मनसा प्रजायमाना रेतसैवमजीविष्मेति प्रविवेश ह चक्षुः ॥९॥ १५

श्रोत्रँ होच्चक्राम । तत्संवत्सरं प्रोष्याऽऽगत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्यथा बधिरा अशृण्वन्तः श्रोत्रेण प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा विद्वाँसो मनसा प्रजायमाना रेतसैवमजीविष्मेति प्रविवेश ह श्रोत्रम् ॥१०॥

मनो होच्चक्राम । तत्संवत्सरं प्रोष्याऽऽगत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्यथा मुग्धा अविद्वाँसो मनसा प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण प्रजायमाना रेतसैवमजीविष्मेति प्रविवेश ह मनः ॥११॥ २०

रेतो होच्चक्राम । तत्संवत्सरं प्रोष्याऽऽगत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्यथा क्लीबा अप्रजायमाना रेतसा प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण विद्वाँसो मनसैवमजीविष्मेति प्रविवेश ह रेतः ॥१२॥ २५

मनो वा आयतनं विषयाणामिन्द्रियाणां च ॥५॥

रेतः शब्देनात्र प्रजननेन्द्रियं लक्ष्यते ॥६॥

एवमुक्ता वसिष्ठत्वादिगुणा न वागादिगताः किं तु मुख्यप्राणगता एवेति दर्शयितुं तावदाख्यायिकामधिकरोति—वागादयोऽहंश्रेयसेऽहं श्रेयानित्येतस्मै प्रयोजनाय विवदमाना विरुद्धं भाषमाणा ब्रह्म प्रजापतिं प्रति गतवन्तः । तत् ब्रह्म विराडात्मकं कर्तृभूतं तान्प्रत्युवाच ॥७॥ ३०

अकडाः मूकाः ॥८-११॥

रेतः प्रजननेन्द्रियम् ॥१२॥

अथ ह प्राण उत्क्रमिष्यन् । यथा महासुहयः सैन्धवः पड्वीशशङ्कून्संवृहेदेवँ हैवेमान्प्राणान्संववर्ह ते होचुर्मा भगव उत्क्रमीर्न वै शक्ष्यामस्त्वदृते जीवितुमिति तस्य वै मे बलिं कुरुतेति तथेति ॥१३॥

सा ह वागुवाच । यद्वा अहं वसिष्ठाऽस्मि त्वं तद्वसिष्ठोऽसीति चक्षुर्यद्वा अहं

५ प्रतिष्ठाऽस्मि त्वं तत्प्रतिष्ठोऽसीति श्रोत्रं यद्वा अहँ संपदस्मि त्वं तत्संपदसीति मनो यद्वा अहमायतनमस्मि त्वं तदायतनमसीति रेतो यद्वा अहं प्रजातिरस्मि त्वं तत्प्रजातिरसीति तस्यो मे किमन्नं किं वास इति यदिदं किंचाऽऽश्वभ्य आ क्रिमिभ्य आ कीटपतङ्गेभ्यस्तत्तेऽन्नमापो वास इति न ह वा अस्यानन्नं जग्धं भवति नानन्नं प्रतिगृहीतं य एवमेतदनस्यान्नं वेद ॥१४॥

१० तद्विद्वाँसः श्रोत्रियाः । अशिष्यन्त आचामन्त्यशित्वाऽऽचामन्त्येतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते तस्मादेवंविदशिष्यन्नाचामेदशित्वाचामेदेतमेव तदनमनग्नं कुरुते ॥१५॥

इति बृहदारण्यकोपनिषदि षष्ठाध्यायस्य द्वितीयं ब्राह्मणम् ॥२॥

अथ षष्ठाध्यायस्य तृतीयं ब्राह्मणम्

स यः कामयेत । महत्प्राप्नुयामित्युदगयन आपूर्यमाणपक्षे पुण्याहे द्वादशाहमुपसद्व्रती

१५ महाश्चासौ सुहयश्च । सिन्धुदेशे भवः सैन्धवः । पड्वीशाश्च ते शङ्कवश्च ते पड्वीशशङ्कवः पादबन्धनशङ्कवस्तान्संवृहेत् उद्यच्छेत् परीक्षणायाश्वारोहे आरूढे सति युगपच्चतुरोऽपि शङ्कूनुत्खनेत् । संववर्ह चिच्छेद स्वस्थानाद् भ्रंशितवान् । बलिं करम् ॥१३॥

वागादयः स्वस्वासाधारण्येनोक्तानेव गुणान्मुख्यप्राणस्य बलित्वेन समर्पयामासुः । यन्मम वसिष्ठत्वं तद्वसिष्ठत्वगुणस्तवैव । एवं वागादिभिर्दत्तं बलिदानमङ्गीकृत्य प्राणः स्वात्मनोऽन्नवाससी पृच्छति—तस्यवै म इति । भक्ष्यमाणा

२० आपः सर्वास्तव वास आच्छादनस्थानीयाः । इदानी तत्स्तुत्यर्थमर्थवादमाह—न हेति । यः एतत्सर्वप्राणिभिरद्यमानं सर्वमन्नमनस्य प्राणस्यैवान्नमित्येवं वेद पश्यति अस्य प्राणान्नविदोऽनदनीयं नैव ह किल भक्षितं भवति यद्यपि कदाचिदनेनाभक्ष्यमपि भक्षितं स्यात्तदाऽसौ तद्दोषेण न लिप्यते । तथा यद्यप्ययमप्रतिग्राह्यं हस्त्यादिकं प्रतिगृह्णाति तदप्यन्नमेव भोग्यं वस्तु प्रतिग्राह्यमनेन प्रतिगृहीतं स्यान्न तत्प्रतिग्रहदोषेण लिप्यत इति विद्यैव स्तूयते न वस्तुतस्तस्य दोषाभावः अभक्ष्यभक्षणाप्रतिग्राह्यप्रतिग्रहयोर्निषिद्धत्वात् ॥१४॥

२५ आपो वास इत्यनेन भक्ष्यमाणास्वप्सु विहितवासोदृष्टेरर्थवादमाह । आचामन्ति अपो भक्षयन्ति । अनं प्राणमुभयतोऽपा भक्षणेनानग्नमाच्छादितं कुर्वन्तः अपोशनलक्षणवासोदानेनानग्नं कुर्मं इति श्रोत्रिया मन्यन्ते ॥१५॥

इति श्रीद्विवेदगङ्गविरचितमाध्यन्दिनारण्यकोपनिषद्व्याख्याया मुख्यार्थप्रकाशिकाया षष्ठाध्यायस्य द्वितीयं ब्राह्मणम् ॥२॥

एवं प्राणोपासनसाधनीभूते ज्ञानकर्मणी दर्शिते तत्र ज्ञान वित्तानपेक्षम् । कर्म तु दृष्टादृष्टार्थविषय वित्तसाध्यम्

३० अतो येनोपायेन प्रत्यवायानुत्पादकेन वित्तोपार्जनं कर्त्तव्यं तदुपायभूतं श्रीमन्थाख्यं कर्म प्रदर्शयितुं ब्राह्मणान्तरमारभ्यते । अधिकारिनिरूपणपुरःसरं सेतिकर्त्तव्यताकं सम्भारमाह—यः कर्माधिकृतो गृही प्राणविन्महत्वं प्राप्नुयामित्येवं कामयते स पुण्यदिवसमेवारभ्य द्वादशदिवसपर्यन्तमुपसद्व्रतो भूत्वा । उपसदो नाम ज्योतिष्टोमे इष्टिविशेषाः प्रवर्ग्याहस्सु प्रसिद्धाः तासु यद्व्रत स्तनोपचयापचयाभ्या पयोभक्षणं भूमिशयनं ब्रह्मचर्य वाङ्नियमश्चेति चतुष्टय यजमानस्य प्रसिद्धं तत्सर्वं स्तनोपचयापचयेतिकर्तव्यताशून्यमत्रोपादीयते । तथा चोपसत्सु व्रतमुपसद्व्रतं तद्विद्यते

३५ यस्य स उपसद्व्रतीति समासः । न तूपसदः एव व्रतमिति कर्मधारयः सामानाधिकरण्यलक्षणः समासः तस्य श्रौतत्वेनेह मन्थाख्ये स्मार्ते कर्मण्युपसद्ग्रहणायोगात् । तस्मात्पयोभक्षणादिमात्रोपसद्व्रती भूत्वा सर्वौषधं सर्वासा-

भूत्वौदुम्बरे कँसे चमसे वा सर्वौषधं फलानीति संभृत्य परिसमुह्य परिलिप्याग्नि-
मुपसमाधायाऽऽवृताऽऽज्यँ सँस्कृत्य पुँसा नक्षत्रेण मन्थँ संनीय जुहोति ॥१॥

यावन्तो देवास्त्वयि जातवेदः । तिर्यञ्चो घ्नन्ति पुरुषस्य कामान् ।
तेभ्योऽहं भागधेयं जुहोमि ते मा तृप्ताः कामैस्तर्पयन्तु स्वाहा ॥२॥

या तिरश्ची निपद्यसे अहं विधरणी इति । तां त्वा घृतस्य धारया यजे ५
सँराधनीमहँ स्वाहा प्रजापते न त्वदेतान्यन्य इति तृतीयां जुहोति ॥३॥

ज्येष्ठाय स्वाहा श्रेष्ठाय स्वाहेति । अग्नौ हुत्वा मन्थे सँस्रवमवनयति प्राणाय
स्वाहा वसिष्ठायै स्वाहेत्यग्नौ हुत्वा मन्थे सँस्रवमवनयति वाचे स्वाहा
प्रतिष्ठायै स्वाहेत्यग्नौ हुत्वा मन्थे सँस्रवमवनयति चक्षुषे स्वाहा सम्पदे
स्वाहेत्यग्नौ हुत्वा मन्थे सँस्रवमवनयति श्रोत्राय स्वाहायतनाय स्वाहेत्यग्नौ १०
हुत्वा मन्थे सँस्रवमनयति मनसे स्वाहा प्रजात्यै स्वाहेत्यग्नौ हुत्वा
मन्थे सँस्रवमवनयति रेतसे स्वाहेत्यग्नौ हुत्वा मन्थे सँस्रवमवनयति ॥४॥

भूताय स्वाहेति । अग्नौ हुत्वा मन्थे सँस्रवमवनयति भविष्यते
स्वाहेत्यग्नौ हुत्वा मन्थे सँस्रवमवनयति विश्वाय स्वाहेत्यग्नौ हुत्वा
मन्थे सँस्रवमवनयति सर्वाय स्वाहेत्यग्नौ हुत्वा मन्थे सँस्रवमवनयति ॥५॥ १५

मौषधीनां समूहं वक्ष्यमाणव्रीह्यादिधान्यदशकमवश्यसम्पाद्यमन्यदपि धान्यविशेषं फलानि चानिषिद्धान्यमादकानि भक्ष्याणि तत्कालतद्देशलभ्यानि अन्यदपि पुष्पादिकं सम्भरणीयं सर्वं सम्भृत्य। पुण्याहे पुण्यदिवसे आत्मनः कर्मसिद्धिकरे पुंसा पुंनामकेन हस्तादिना नक्षत्रेण संयुक्ते व्रतान्त्यदिवसे। परिलेपनादिना दृष्टार्थतया परिशुद्धे देशे स्वगृह्योक्तविधिना परिमुह्योपलिप्योल्लिख्योद्धृत्याभ्युक्ष्येत्यदृष्टार्थतया पञ्च भूसंस्कारान्कृत्वा। तस्मिन्संस्कृते स्थाने अग्निमुपसमाधायेत्यत्राग्नेरेकवचनश्रवणात्स्मार्तमेवावसथ्याग्निं सस्थाप्याग्नेरुत्तरतो वक्ष्यमाणपात्रासादनं दक्षिणतो २० ब्रह्मासनं च दत्वा पवित्रकरणाद्याज्यनिर्वपणावधि स्वगृह्योक्तं सर्वं विधाय। आवृता इतिकर्तव्यतया अस्य कर्मणः स्मार्तत्वात्स्थालीपाकोक्तकर्त्तव्यतया आज्यं संस्कृत्य स्रुवं च प्रतपनादिना संस्कृत्येध्माधानाघारपर्यन्तं तूष्णीमेव सर्वं स्वगृह्योक्तं विधाय। अग्नये स्वाहा सोमाय स्वाहेति मन्त्राभ्यामाज्यभागौ हुत्वा उदुम्बरवृक्षमये कंसे कंसाकारे वर्तुलाकारे चमसे चमसाकारे वा पात्रे मन्थमुक्तसर्वौषधफलाना पिष्टं दधिमधुघृतैरुपसिच्य वक्ष्यमाणोपमन्थनी-द्वयमध्ये एकयोपमन्थन्योपमथ्य संनीय अग्नेः स्वस्य च मध्ये दक्षिणाश्रिते देशे संस्थाप्यौदुम्बरेण स्रुवेण संस्कृतमाज्यं २५ गृहीत्वा वक्ष्यमाणैर्मन्त्रैर्जुहुयात् ॥१॥

कैर्मन्त्रैराज्यं होतव्यमित्यपेक्षायामाहुतित्रयाङ्गभूतं मन्त्रत्रयं देवताप्रार्थनात्मकं तावदाह। जातं जातं वेत्ति जाते जाते प्राणिनि जाठरत्वेन विद्यत इति वा जातवेदा. तस्य सम्बुद्धिः त्वयि त्वदधीना यावन्तो देवा वक्रमतयः सन्तः मम अभीप्सितार्थान्प्रतिबन्धन्ति ॥२॥

भो जातवेदः या देवता तिरश्ची कुटिलमतिर्भूत्वाऽहमेव विधरणी सर्वस्य धारयित्री इति च मन्यत इति ३० शेषः। तां तिरश्ची देवता त्व निपद्यसे व्याप्नोषि। संराधनी सर्वसाधनी देवतां ता त्वा त्वामहं यजे। तृतीया-हुतिमन्त्रस्य स्वश्रुतौ विद्यमानत्वात्प्रतीकग्रहणं श्रुत्या कृतम् प्रजापत इति। अस्मिन्नाहुतित्रये संस्रवो न धर्त्तव्योऽ-श्रुतत्वात् ॥३॥

एवमाहुतित्रयहोमानन्तर षड्द्वन्द्वाहुतीः प्रतिद्वन्द्व संस्रवावनयनयुक्ताः कर्त्तव्या एकाहुतिश्च रेतसे स्वाहेति संस्रवावनयनयुक्तेत्येवं सप्ताहुतयः कर्त्तव्या इति तत्साधनभूतान्मन्त्रानाह—ज्येष्ठायेति। संस्रव स्रुवालिप्तमाज्यं मन्थे ३५ सिञ्चेत्। अत्र ज्येष्ठश्रेष्ठादे. प्राणलिङ्गात् ज्येष्ठादिगुणकप्राणविद एव मन्थकर्मण्यधिकार इति ध्वनितोऽर्थः ॥४॥

प्रत्येकाहुतिसंस्रवावनयनयुक्ताश्चतस्र आहुतीः समन्त्रका अनुष्ठेया आह ॥५॥

पृथिव्यै स्वाहेति । अग्नौ हुत्वा मन्थे सँस्रवमवनयत्यन्तरिक्षाय स्वाहेत्यग्नौ हुत्वा मन्थे सँस्रवमवनयति दिवे स्वाहेत्यग्नौ हुत्वा मन्थे सँस्रवमवनयति दिग्भ्यः स्वाहेत्यग्नौ हुत्वा मन्थे सँस्रवमवनयति ब्रह्मणे स्वाहेत्यग्नौ हुत्वा मन्थे सँस्रवमवनयति क्षत्राय स्वाहेत्यग्नौ हुत्वा मन्थे सँस्रवमवनयति ॥६॥

५ भूः स्वाहा । अग्नौ हुत्वा मन्थे सँस्रवमवनयति भुवः स्वाहेत्यग्नौ हुत्वा मन्थे सँस्रवमवनयति स्वः स्वाहेत्यग्नौ हुत्वा मन्थे सँस्रवमवनयति भूर्भुवः स्वः स्वाहेत्यग्नौ हुत्वा मन्थे सँस्रवमवनयति ॥७॥

अग्नये स्वाहेति । अग्नौ हुत्वा मन्थे सँस्रवमवनयति सोमाय स्वाहेत्यग्नौ हुत्वा मन्थे सँस्रवमवनयति तेजसे स्वाहेत्यग्नौ हुत्वा मन्थे सँस्रवमवनयति १० श्रियै स्वाहेत्यग्नौ हुत्वा मन्थे सँस्रवमवनयति लक्ष्म्यै स्वाहेत्यग्नौ हुत्वा मन्थे सँस्रवमवनयति सवित्रे स्वाहेत्यग्नौ हुत्वा मन्थे सँस्रवमवनयति सरस्वत्यै स्वाहेत्यग्नौ हुत्वा मन्थे सँस्रवमवनयति विश्वेभ्यो देवेभ्यः स्वाहेत्यग्नौ हुत्वा मन्थे सँस्रवमवनयति प्रजापतये स्वाहेत्यग्नौ हुत्वा मन्थे सँस्रवमवनयति ॥८॥

अथैनमभिमृशति । भ्रमसि ज्वलदसि पूर्णमसि प्रस्तब्धमस्येकसभमसि हिङ्कृतमसि १५ हिङ्क्रियमाणमस्युद्गीथमस्युद्गीयमानमसि श्रावितमसि प्रत्याश्रावितमस्यार्द्रे सन्दीप्तमसि विभूरसि प्रभूरसि ज्योतिरस्यन्नमसि निधनमसि संवर्गोऽसीति ॥९॥

अथैनमुद्यच्छति । आमोऽस्यामँहि ते मयि । स हि राजेशानोऽधिपतिः । स मा राजेशानोऽधिपतिं करोत्विति ॥१०॥

पूर्वोक्तगुणा एव षडाहुतीराह ॥६॥

२० एवं चतस्रः ॥७॥

एवं नव ॥८॥

एवमाज्याहुत्यन्ते यत्कर्मणोत्यरीरिचमिति वक्ष्यमाणमन्त्रेण (६.४.२४) स्विष्टकृद्धोमं कृत्वा संस्रवविशिष्टं मन्थद्रव्यमपरयोपमन्थन्या पुनर्मन्थनीयं तस्या अन्यत्र विनियोगादर्शनादित्येतावानितिकर्तव्यताविशेषो बोद्धव्यः । एवं संस्कृतं मन्थद्रव्यं किं कर्तव्यमित्यपेक्षायामाह अथैवमालोडनानन्तरमेनं मन्थं मन्त्रं पठन् तदर्थं च स्मरन्सन् २५ हस्तेनाभिमृशति हे मन्थ त्वं भ्रमतीति भ्रमः असि भवसि तव चलनात्मकप्राणदेवताकत्वात्त्वं प्राणरूपेण भ्रमसीत्यभिप्रायः । अग्निरूपेण त्वं ज्वलदसि ब्रह्मरूपेण पूर्णं नभोरूपेण प्रस्तब्धं निष्क्रियम् । या खल्वेका सभा जगदात्मिका सा त्वदात्मिकैवेति त्वमेकसभमसि । यज्ञारम्भे प्रस्तोत्रा यद्धि कृतस् तेनैव च यज्ञमध्ये हिंक्रियमाणम् यज्ञारम्भे उद्गातृकृतमुद्गीथस् तेनैव च यज्ञमध्ये उद्गीयमानम् अध्वर्युणा आश्रावितम् आग्नीध्रेण च प्रत्याश्रावितम् त्वमसि । आर्द्रे मेघोदरे सम्यग्विद्युद्रूपेण दीप्तं सदीप्तमसि । विभूर्व्यापकः भाग्यरूपेण प्रभूः समर्थः भोक्तृरूपेणाग्न्यात्मना ज्योतिः ३० भोग्यरूपेण सोमात्मनावस्थितत्त्वात्वमन्नमसि कारणत्वात्त्वमध्यात्माधिदैवयोर्निधनं लयस्थानमसि वागादीनामग्न्यादीनां च संहरणत्वात्वं संवर्गोऽसि ॥९॥

एवं मन्त्रपूतं मन्थद्रव्यं किं कर्तव्यमित्यपेक्षायां तद्विनियोगमाह—उद्यच्छति हस्ते गृह्णाति । मन ज्ञान इत्यस्य धातोराङ्पूर्वस्य कृदन्ते डप्रत्यये टिलोपे च कृते सति आम इत्येतद्रूपं सिद्धम् । हे मन्थ त्वमाम आमन्ता आ समन्ताद्भावेन ज्ञातासि भवसि ते तव मय्युपासके आमनमा समन्ताद्भावेन ज्ञानमस्तीति शेषः । यतस्त्वं ३५ सर्वज्ञोऽसि अतो मामपि जानासीति वाक्यार्थः । स हि प्राणस्त्वं राजा । एवं गुणविशिष्टः स भवान् मा मामधिपतिं तथाभूतमेव करोतु ॥१०॥

अथैनमाचामति । तत्सवितुर्वरेण्यम् । मधु वाता ऋतायते
मधु क्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः । भूः स्वाहा ॥११॥
भर्गो देवस्य धीमहि । मधु नक्तमुतोषसो मधुमत्पार्थिवꣳ-
रजः । मधु द्यौरस्तु नः पिता भुवः स्वाहा ॥१२॥
धियो यो नः प्रचोदयात् । मधुमान्नो वनस्पतिर्मधुमाँ२ । अस्तु सूर्यः । ५
माध्वीर्गावो भवन्तु नः स्वः स्वाहेति सर्वां च सावित्रीमन्वाह
सर्वाश्च मधुमतीः सर्वाश्च व्यहृतीरहमेवेदꣳ सर्वं भूयासं भूर्भुवः स्वः
स्वाहेत्यन्तत आचम्य प्रक्षाल्य पाणी जघनेनाग्निं प्राक्शिराः संविशति ॥१३॥
प्रातरादित्यमुपतिष्ठते । दिशामेकपुण्डरीकमस्यहं मनुष्याणामेक-
पुण्डरीकं भूयासमिति यथेतमेत्य जघनेनाग्निमासीनो वꣳशं जपति ॥१४॥ १०
तꣳहैतमुद्दालक आरुणिः । वाजसनेयाय याज्ञवल्क्यायान्तेवासिन उक्त्वोवाचापि
य एनꣳ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥१५॥
एतमु हैव वाजसनेयो याज्ञवल्क्यः । मधुकाय पैङ्ग्यायान्तेवासिन उक्त्वोवा-
चापि य एनꣳ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥१६॥
एतमु हैव मधुकः पैङ्ग्यः । चूडाय भागवित्तयेऽन्तेवासिन उक्त्वोवाचापि १५
य एनꣳ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥१७॥
एतमु हैव चूडो भागवित्तिः । जानकय आयस्थूणायान्तेवासिन उक्त्वोवाचापि
य एनꣳ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥१८॥
एतमु हैव जानकिरायस्थूणः । सत्यकामाय जाबालायान्तेवासिन उक्त्वोवा-
चापि य एनꣳ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥१९॥ २०
एतमु हैव सत्यकामो जाबालः । अन्तेवासिभ्य उक्त्वोवाचापि
य एनꣳ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः
पलाशानीति तमेतं नापुत्राय वाऽनन्तेवासिने वा ब्रूयात् ॥२०॥

ग्रासचतुष्टयं मन्थस्य कृत्वा पृथक्पृथगवस्थाप्य प्रथमो ग्रासो गायत्रीप्रथमपादमधुमतीप्रथमर्कप्रथमव्याहृति-रूपं मन्त्रमुच्चार्य भक्षणीयः ॥११-१२॥ २५

एतैः सर्वैः सम्पूर्णैर्मन्त्रैश्चतुर्थो ग्रासो भक्षणीय इत्याह—सर्वामिति । अन्ततो भक्षणान्ते शुद्ध्यर्थं स्मार्त-माचमनं कृत्वा हस्तौ प्रक्षाल्य शुद्धाचमनं विधाय अग्नेः पश्चिमतः प्राक्शिरा रात्रौ शयीत ॥१३॥

ततः प्रातःसंध्यामुपास्य भक्तिश्रद्धाभ्यां प्रातरुदयसमये आदित्यं वीक्षमाणः संस्तदुपस्थानं मन्त्रेण कुर्यात् एकपुण्डरीकमखण्डश्रेष्ठः । तत एतद्विद्योपदेशकाचार्यपरम्पराख्यवंशस्य जपः कर्त्तव्य इत्याह—यथेतमिति ॥१४॥

तं मन्थमेतमुक्तेतिकर्त्तव्यताकम् । यः प्राणोपासकः एनमुक्तविधया संस्कृतं मन्थम् । किमुक्तव्यम् अनेन कर्मणा ३० कामः सिध्येदित्यतो ध्रुवफलमिदं कर्मेति कर्मस्तुत्यर्थमेतदुक्तमित्यर्थः ॥१५-१९॥

एवं वंशे पठिते सति समाप्तमेतत्कर्म । अथैतत्प्राणदर्शनात्मकस्य मन्थविज्ञानस्य शिष्यः श्रोत्रियो मेधावी धनदायी प्रियपुत्रो विद्यार्थं विद्यादातेति प्रसिद्धेषु षट्सु विद्यासम्प्रदानभूतेषु मध्ये द्वयमेव सम्प्रदानमिह भवेदित्याह—तमेतं नेति । तमेतं मन्थं मन्थविज्ञानम् ॥२०॥

चतुरौदुम्बरो भवति । औदुम्बरश्चमस औदुम्बरः
स्रुव औदुम्बर इध्म औदुम्बर्या उपमन्थन्यौ ॥२१॥

दश ग्राम्याणि धान्यानि भवन्ति । व्रीहियवास्तिलमाषा अणुप्रियंगवो गोधूमाश्च मसूराश्च खल्वाश्च खलकुलाश्च तान् सार्धं पिष्ट्वा दध्ना मधुना घृतेनोपसिञ्चत्याज्यस्य जुहोति ॥२२॥

५ इति बृहदारण्यकोपनिषदि षष्ठाध्यायस्य तृतीयं ब्राह्मणम् ॥३॥

अथ षष्ठाध्यायस्य चतुर्थं ब्राह्मणम्

एषां वै भूतानां पृथिवी रसः । पृथिव्या आपोऽपामोषधय ओष-
धीनां पुष्पाणि पुष्पाणां फलानि फलानां पुरुषः पुरुषस्य रेतः ॥१॥

स ह प्रजापतिरीक्षां चक्रे । हन्तास्मै प्रतिष्ठां कल्पयानीति स स्त्रियं-
१० ससृजे तां सृष्ट्वाऽध उपास्त तस्मात्स्त्रियमध उपासीत श्रीर्ह्येषा
स एतं प्राञ्चं ग्रावाणमात्मन एव समुदपारयत्तेनैनामभ्यसृजत् ॥२॥

तस्या वेदिरुपस्थः । लोमानि बर्हिश्चर्माधिषवणे समिद्धो मध्यतस्तौ
मुष्कौ स यावान्ह वै वाजपेयेन यजमानस्य लोको भवति तावानस्य
लोको भवति य एवं विद्वानधोपहासं चरत्या स स्त्रीणां सुकृतं
१५ वृङ्क्तेऽथ य इदमविद्वानधोपहासं चरत्याऽस्य स्त्रियः सुकृतं वृञ्जते ॥३॥

पूर्वं सर्वौषधमिति सामान्येनोक्तम् इदमिदमिति विशेषतो वक्तुमनुक्तं स्रुवादिकं च कथयितुमुत्तरं कण्डिकाद्वयं प्रवर्तते । उदुम्बरस्य वृक्षस्य विकार औदुम्बरश्चतुःसंख्याको भवति ॥२१॥

मन्थोपादानभूतग्राम्यधान्यग्रहणे नियममाश्रित्याह । अणुशब्दवाच्यं धान्यं मोरिय इति गूर्जरदेशे पल्यां प्रसिद्धम् प्रियङ्गवस्तत्रैव कङ्गुशब्दवाच्यत्वेन प्रसिद्धाः । खल्वा निष्पावा वल्लशब्दवाच्याः । खलकुलाः कुलत्थाः ।
२० तान् व्रीह्यादीन् चूर्णयित्वा पात्रे निक्षिप्य दधिमधुभ्यां सार्धं घृतेनोपसिञ्चति दध्यादित्रयाक्तं करोति अथ स्वगृह्योक्तविधिनाऽऽज्याभागान्तं कृत्वा पूर्वोक्ता आज्याहुतीर्जुहोति ॥२२॥

इति श्रीद्विवेदगङ्गविरचितमाध्यन्दिनारण्यकोपनिषद्व्याख्याया मुख्यार्थप्रकाशिकाया
षष्ठाध्यायस्य तृतीयं ब्राह्मणम् ॥३॥

एवं प्राणोपासकस्य वित्तार्थिनः श्रीमन्थाख्यं कर्मोपदिश्य तस्यैव विशिष्टपुत्रार्थिनः पुत्रमन्थाख्यं कर्म वक्तुमुत्तरं
२५ ब्राह्मणं प्रवर्तते । तत्रादौ पुत्रोत्पत्तिहेतुरेतो बीजं स्तोतुमाह—एषामिति । रसः सारभूता इयं पृथिवी सर्वेषां भूतानां मध्वित्युक्तत्वात् ( बृद् ३-५-१ ) पृथिव्या आपो रसः सारभूताः यदिदं सर्वमप्स्वोतं च प्रोतं चेति ( बृ० ३-६-१ ) अपां पृथिवीकारणत्वस्य गार्गीब्राह्मणे श्रुतत्वात् । ओषधीनामप्कार्यत्वादोषधयोऽपां रसः ॥१॥

यत एवं सर्वभूतानां सारमेतद्रेतोऽतस्तदावापस्थानं प्रजापतिर्विचारपूर्वकं सम्पादितवानित्याह—स हेति । प्रजापतिर्विराडात्मा । स्त्रियं शतरूपाख्याम् अधः प्रदेशे योन्याख्ये उपास्त मैथुनाख्यामुपासनं कृतवान् । श्रीर्गुणाढ्या ।
३० अस्मिन्कर्मण्यभ्युदयफलार्थं वाजपेयदृष्टिर्विद्या अतस्तदङ्गे प्रजननेन्द्रिये सोमाभिषवपाषाणदृष्टिं कठिनत्वसामान्यमाश्रित्याह—स एतमिति । एतं सोमाभिषवोपलस्थानीयं प्रजननेन्द्रियं समुदपारयत् उत्पूरितवान् स्त्रीव्यञ्जनाभिमुखं कृतवान् । तेन पाषाणवत्कठिनेनैनां स्त्रियमभ्यसृजत् अभि समन्ततो मुहुर्मुहुः संसर्गं कृतवान् ॥२॥

अवाच्ये देशे वेदिदर्शनमाह अवाच्यदेशस्थलोमसु बर्हिर्दृष्टिम् अवाच्यदेशस्थचर्मण्यानडुहचर्मदृष्टिम् । पुरुषवृषणयोः स्त्रीयोन्यन्तर्गतप्रदेशे च क्रमेणाधिषवणफलकवह्निदृष्टी विदधाति मुष्कौ वृषणौ अधिषवणे सोमाभिषवफलके
३५ स्त्रीव्यञ्जनस्य मध्यतो मध्यप्रदेशः समिद्धो दीप्तोऽग्निः । नन्वेवमवाच्ये कर्मणि वाजपेयदर्शने कृते सति किं स्यादित्यत आह—स यावानिति । एवमुपासनतः फलान्तरमप्याह—य एवमिति । अधोपहासमवाच्यं कर्म सुकृतं शुभं कर्म आवृङ्क्ते आवर्जयति स्वीकरोति ॥३॥

एतद्ध स्म वै तद्विद्वानुद्दालक आरुणिराह । एतद्ध स्म वै तद्विद्वान्नाको मौद्गल्य आहैतद्ध स्म वै तद्विद्वान्कुमारहारित आह बहवो मर्या ब्राह्मणायना निरिन्द्रिया विसुकृतोऽस्माल्लोकात् प्रयन्ति य इदमविद्वा ँ सोऽधोपहासं चरन्तीति ॥४॥ बहु वा इद ँ सुप्तस्य वा जाग्रतो वा रेत स्कन्दति । तदभिमृशेदनु वा मन्त्रयेत यन्मेऽद्य रेतः पृथिवीमस्कान्त्सीद्यदोषधीरप्यसरद्यदपः । इदमहं तद्रेत आददे पुनर्मामैत्विन्द्रियं पुनस्तेजः पुनर्भगः । पुनरग्नयो धिष्ण्या यथास्थानं कल्पन्तामित्यनामिकाङ्गुष्ठाभ्यामादायान्तरेण स्तनौ वा भ्रुवौ वा निमृज्यात् ॥५॥

अथ यद्युदक आत्मानं पश्येत् । तदभिमन्त्रयेत
मयि तेज इन्द्रियं यशो द्रविण ँ सुकृतमिति ॥६॥

श्रीर्ह वा एषा स्त्रीणाम् । यन्मलोद्वासास्तस्मान्मलोद्वाससं यशस्विनीमभिक्रम्योपमन्त्रयेत सा चेदस्मै न दद्यात्काममेनामवक्रीणीयात्सा चेदस्मै नैव दद्यात्काममेनां यष्ट्या वा पाणिना वोपहत्यातिक्रामेदिन्द्रियेण ते यशसा यश आदद इत्ययशा एव भवति ॥७॥ स यामिच्छेत् । कामयेत मेति तस्यामर्थं निष्ठाप्य मुखेन मुख ँ सन्धायोपस्थमस्या अभिमृश्य जपेदङ्गादङ्गात्सम्भवसि हृदयादधि जायसे । स त्वमङ्गकषायोऽसि दिग्धविद्धामिव मादयेति ॥८॥

अविदुषामतिगर्हितमिदं कर्मेत्यत्रानेकाचार्यसंमतिमाह—ब्राह्मणा अयनं येषां ते ब्राह्मणायनाः ब्राह्मणजातिमात्रोपजीविनो ब्राह्मणाभासाः निरिन्द्रिया विश्लिष्टेन्द्रिया विसुकृतो विगतपुण्याः सन्तोऽस्माल्लोकात्प्रयन्ति परलोकभ्रष्टा अत्यन्तपापहेतुमैथुनकर्मासक्ता नरकं गच्छन्ति ॥४॥

एवं प्राणोपासकस्य श्रीमन्थं कृतवतो न हि यदा कदाचित्पुत्रार्थिनो भार्योपगतिः किं तु ऋतुकाले । अतस्तं कालं प्रतीक्षमाणस्य प्रमादाद्रेतः पाते प्रायश्चित्तमाह—बह्विति । एवमभिमृष्टमभिमन्त्रितं गृहीतं च रेतः क्व विनियोज्यमित्यपेक्षायां समन्त्रकं तस्य विनियोगमाह—पुनरिति । तेजस्त्वग्गता कान्ति भगः सौभाग्यं ज्ञानं वा । धिष्ण्या अग्नयः शरीराश्रिता देवाः तद्रेतो यथास्थानं स्थानमनतिक्रम्य पुनः कल्पन्ता कल्पयन्तामित्यनेन मन्त्रेण भ्रुवोः स्तनयोर्वा मध्ये निमृञ्ज्यात् लेपयेत् संस्पर्शयेत् ॥५॥

एवमयोनौ रेतस्खलने प्रायश्चित्तमुक्त्वा रेतोयोनावुदकं रेतःसिचस्तत्र स्वछायादर्शने प्रायश्चित्तमाह—यदि कदाचित्प्रमादतः उदके रेतःसिक् आत्मछाया पश्येत् इन्द्रियं रेतो मयि अस्त्वित्यध्याहारः इन्द्रियस्य रेतसो विशेषणानि विज्ञानं कीर्त्तिः वित्तं सत्कर्म तादृग्गुणकपुत्रोत्पादनहेतुत्वात् । तथा च रेत.स्वरूपे जले स्वदृष्टिकृतापराधसमाधिरित्यर्थः ॥६॥

रेतःसिचो देशकालावतिक्रम्य प्रामादिकरेतस्खलनप्रयुक्तं प्रायश्चित्तमभिधायेदानीं प्रकृतेन रेतःसिचा यस्या पुत्रो जनयितव्यस्तां स्तुवन्ती श्रुतिस्तस्यामृतुकालगमनं विधत्ते श्रीर्गुणाढ्या । मलोद्वासा उद्गतमलवद्वस्त्रा तां यशस्विनी वीर्यवत्पुत्रहेतुत्वात्कीर्तिमती वक्ष्यमाणं त्रिरात्रव्रत कृत्वा चतुर्थेऽह्नि स्नाता सतीम् । तदा एना स्वपत्नी वस्त्राभरणभोग्यादिदानेन कामं यथाशक्तिवैभवमपक्रीणीयाद्वशं नयेत् । यद्वा दण्डेन उपहत्य सताड्य कामं यथेष्टं भीतिमुत्पाद्यातिक्रामेत् अभिगच्छेत् । एवं बलात्कारासम्भवे शप्स्यामि त्वा दुर्भगां करिष्यामीति प्रख्याप्य तामनेन मन्त्रेणोपगच्छेदिति पुनरुपायान्तरमाह । इन्द्रियेण यशसा यशोहेतुना पत्रमेन्द्रियेण कृत्वा तव यशो यशोभूतं पुत्रोत्पत्तिकरं रेतोऽहं गृह्णामीति मन्त्रेण रुषा शपेत् सा चैव शप्ता सती अयशा एव अपुत्रैव वन्ध्यैव भवति ॥७॥

एव भर्तुर्भार्यावशीकरणोपायमुक्त्वा पुरुषद्वेषिण्यास्तस्यास्तद्विपर्यये प्रीतिसम्पत्त्युपायमाह—तस्यां तद्योनौ अर्थं प्रजननेन्द्रिय निष्ठाप्य निक्षिप्य । हे रेतस्त्वं मदीयात्सर्वस्मादङ्गात्सम्भूतमसे विशेषतश्च हृदयान्नाडीद्वारेण प्रकटी-

अथ यामिच्छेत् । न गर्भं दधीतेति तस्यामर्थं निष्ठाप्य मुखेन मुखं सन्धा-
याभिप्राण्यापान्यादिन्द्रियेण ते रेतसा रेत आदद इत्यरेता एव भवति ॥९॥
अथ यामिच्छेत् । गर्भं दधीतेति तस्यामर्थं निष्ठाप्य मुखेन मुखं सन्धायापा-
न्याभिप्राण्यादिन्द्रियेण ते रेतसा रेत आदधामीति गर्भिण्येव भवति ॥१०॥

५ अथ यस्य जायायै जारः स्यात् । तं चेद्द्विष्यादामपात्रेऽग्निमुपसमाधाय
प्रतिलोमं शरबर्हिस्तीर्त्वा तस्मिन्नेतास्तिस्रः शरभृष्टीः प्रतिलोमाः सर्पिषाऽक्त्वा
जुहुयान्मम समिद्धेऽहौषीः प्राणापानौ त आददेऽसाविति नाम गृह्णाति
मम समिद्धेऽहौषीः पुत्रपशूँस्त आददेऽसाविति नाम गृह्णाति मम
समिद्धेऽहौषीः प्राणापानौ त आददेऽसाविति नाम गृह्णाति स वा एष
१० निरिन्द्रियो विसुकृदस्माल्लोकात्प्रैति यमेवंविद्ब्राह्मणः शपति तस्मा-
देवंविच्छ्रोत्रियस्य जायाया उपहासन्नेच्छेदुत ह्येवंवित्परो भवति ॥११॥
अथ यस्य जायामार्तवं विन्देत् । त्र्यहं कंसे न पिबेदहतवासा नैनां
वृषलो न वृषल्युपहन्यात्त्रिरात्रान्त आप्लुत्य व्रीहीनवघातयेत् ॥१२॥

भवसि । एवंविधः स त्वमङ्गानां कषायो रसोऽसि अतो विषलिप्तशरविद्धां मृगीमिव मदीयां भार्यां मयि विषये मादय
१५ मदयुक्तां कुरु मद्वशां कुरु ॥८॥

एवं स्ववशामापन्नावाच्यकर्मानुष्ठानदशायामभिप्रायविशेषानुसारेणानुष्ठानविशेषं दर्शयति । रूपभ्रंशयौवनहानि-
भयात् यां स्वभार्यामिच्छेत् गर्भं न धारयेत् गर्भिणी इयं मा भूदिति । अभिप्राण्यापान्यात् पशुकर्मकाले प्रथमं स्वीय-
पुंस्त्वद्वारा तदीयस्त्रीत्वे वायुविसर्जनरूपमभिप्राणनं कृत्वा तेनैव द्वारेण ततस्तदादानलक्षणमपाननं च कुर्यात् ॥९॥

पुनर्भर्तुरेव पूर्वोक्तविपरीताभिप्राये उपायान्तरमाह । स्वकीयपञ्चमेन्द्रियेण तदीयपञ्चमेन्द्रियाद्रेतः स्वीकृत्य
२० तत्पुत्रोत्पत्तिसमयकृतमिति मत्वा स्वकीयरेतसा सह निक्षिपेत् ॥१०॥

प्रासङ्गिकमाभिचारिकं कर्म प्रवृद्धरागवन्तं क्रुध्यन्तमधिकृत्याह । आमपात्रे अपक्वे मृन्मयभाजने उदकादि-
सम्बन्धे सति विशीर्यमाणतया शत्रुभेदनकर्मणि योग्ये परिसमूहनादिपञ्चभूतसंस्कारपूर्वकमग्निमुपसमाधाय
एकवचनादुपधानवचनाच्चावसथ्याग्निमेव प्रज्वाल्यास्य कर्मणः प्रतिलोमत्वात्प्रतिलोमं पश्चिमाग्रं दक्षिणाग्रं वा यथा
स्यात्तथा शरमयं बर्हिः स्तीर्त्वा आस्तीर्य तस्मिन्नग्नौ एताः प्रसिद्धास्त्रिसंख्याकाः शरभृष्टीर्वाणेषीकाः प्रतिलोमाः
२५ विपरीताग्राः घृतेनाभ्यक्ताः कृत्वा जुहुयात् । तव आशापराकाशौ आददे झडिति मन्त्रमुच्चार्य मन्त्रान्ते चासावित्या-
त्मनः शत्रोर्वा नाम गृह्णीयात् आशा प्रार्थना वाचा यत्प्रतिज्ञातं कर्मणा च नोपपादितं तस्य परीक्षा पराकाशः ।
एवविन्मन्थकर्मविद्वान्प्राणदर्शी यं ब्राह्मणं शपति स ब्राह्मणो निर्गतेन्द्रियो गतपुण्यकर्मा सन्नस्माल्लोकाद्गच्छति ।
एवंवित् परदारगमने यथोक्तवक्ष्यमाणदोषवित् श्रोत्रियस्याधीतवेदस्योपासकस्य भार्यया उपहासं नर्मापि न कुर्यात्
किमुताघोपहासम् ॥११॥

३० एवं सफलोऽभिचारः पशुकर्मद्वारा जारप्रसङ्गेनोक्तो न तु प्राधान्येन तस्य सत्पुत्रफलककर्मविरोधित्वात् ।
इदानीं पूर्वप्रस्तुतऽर्तुकालानुष्ठेयं व्रतकलापमुपदिशति । आर्तवमृतुभावः । दिवसत्रयं कंसे कांस्यपात्रे उदकादिकं न
पिबेत् न चाश्नीयात् अनुपहतवासाश्च स्यात् एतत्तु स्नानोत्तरकाले बोध्यम् आर्तवपूर्वकालस्य तु ज्ञातुमशक्यत्वात्
वृषलः शूद्रो वृषली तद्भार्यान्यो वा पापकृत्कश्चिदपि स्नानात्पूर्वमनन्तरं वा नोपस्पृशेत् एतत्सम्भाषणादीनामप्युप-
लक्षणम् अन्यदपि शास्त्रान्तरोक्तं कर्म कुर्यादित्यर्थः । त्रिरात्रान्ते व्रतसमाप्तौ चतुर्थेऽह्नि प्रातःकाले आप्लुत्य स्नात्वा
३५ पूर्वोक्तविशेषणाहतवासाः स्यात् तथा चैवमाप्लुतामहतवस्त्रां तां व्रीहीनवघातयेत् चरुश्रपणार्थं व्रीह्यवघाताय भर्ता
तामेव विनियुञ्ज्यात् ॥१२॥

स य इच्छेत् । पुत्रो मे गौरो जायेत वेदमनुब्रुवीत सर्वमायुरियादिति क्षीरौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवै ॥१३॥
अथ य इच्छेत् । पुत्रो मे कपिलः पिङ्गलो जायेत द्वौ वेदावनुब्रुवीत सर्वमायुरियादिति दध्योदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवै ॥१४॥
अथ य इच्छेत् । पुत्रो मे श्यामो लोहिताक्षो जायेत त्रीन्वेदाननुब्रुवीत सर्वमायुरियादित्युदौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवै ॥१५॥ ५
अथ य इच्छेत् । दुहिता मे पण्डिता जायेत सर्वमायुरियादिति तिलौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवै ॥१६॥
अथ य इच्छेत् । पुत्रो मे पण्डितो विजिगीथः समितिंगमः शुश्रूषितां वाचं भाषिता जायेत सर्वान्वेदाननुब्रुवीत सर्वमायुरियादिति माँसौदनं १० पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवा औक्ष्णेन वार्षभेण वा ॥१७॥
अथाभिप्रातरेव । स्थालीपाकावृताऽऽज्यं चेष्टित्वा स्थालीपाकस्योपघातं जुहोत्यग्नये स्वाहाऽनुमतये स्वाहा देवाय सवित्रे सत्यप्रसवाय स्वाहेति हुत्वोद्धृत्य प्राश्नाति प्राश्येतरस्याः प्रयच्छति प्रक्षाल्य पाणी उदपात्रं पूरयित्वा तेनैनां त्रिरभ्युक्षत्युत्तिष्ठातो विश्वावसोऽन्यामिच्छ प्रपूर्व्याम् । सं जायां पत्या सहेति ॥१८॥ १५

किं पुनरवघातनिष्पन्नैस्तण्डुलैरनुष्ठेयमित्यपेक्षायां तस्मिन्नेव चतुर्थेऽहनि प्रातश्चरुहोमानन्तरं यथाकामं पक्त्वा भक्षणीयमिति क्रममभिप्रेत्य कामनाविशेषे पाकादिविशेषणे भक्षणप्रभेदं तावदाह । गौरो बलदेववच्छुभ्रः शुद्धो वा । अनुब्रुवीत् पठेत् सर्वं शतवर्षप्रमितमायुरवाप्नुयात् । क्षीरेणौदनं स्वभार्ययैव पाचयित्वा घृताप्लुतं तमोदनं कृत्वा ॥१३॥

कपिलो वर्णतः पिङ्गलः पिङ्गाक्षः । दध्यौदनं दध्ना चरुं श्रपयित्वा ॥१४॥

उदौदनमुदकेनौदनं पाचयित्वा उदकं विनौदनपाकस्यासम्भवेन तस्य प्राप्तावप्युदकग्रहणं क्षीरादि- २० निवृत्त्यर्थम् ॥१५॥

दुहितुः पाण्डित्यं स्त्रीणामुचिते गृहकर्मणि कौशलं न तु वेदादिविषयं स्त्रीणां तत्रानधिकारात् तिलमिश्रमोदनं कृसरमित्यर्थः ॥१६॥

विविधं जिगीथ प्रख्यातिरस्य स विजिगीथोऽतिप्रख्यातः । समितिं विद्वत्सभां प्रति पूज्यतया गच्छतीति समितिंगमः प्रगल्भः । श्रोतुमीप्सिता वाणी भाषिता सुसंस्कृतार्थवद्वचनवक्ता । मांसमिश्रितमोदनम् तन्नियममाह उक्षा २५ सेचनसमर्थस्तदीयं मांसमौक्षणम् ततोऽप्यधिकवया ऋषभस्तदीयं मांसमार्षभम् अथ तु मांसनियमो देशकालविशेषापेक्षयावगन्तव्यः गोमांसस्य निषिद्धत्वात्कृष्णमृगविषयं छागविषयं वा उक्षादिवचनमत्र ग्राह्यम् तन्मांसमप्यनुपहृतं क्रीत्वा सम्पाद्यं हिंसाया प्रतिषिद्धत्वात् ॥१७॥

कदा पुनरित्यमोदनपाकादि कर्त्तव्यमित्यपेक्षायां व्रीह्यवघातदिवसे एवेत्यभिप्रेत्य तत्प्राक्कालकर्त्तव्यमाह । चतुर्थदिवसे प्रातःकाल एव स्नानाद्यशेषनित्यानुष्ठानानन्तरं भार्ययावघातनिर्वृत्तान्स्तण्डुलानादाय स्थालीपाकेति- ३० कर्त्तव्यतया आज्य संस्कृत्याधिश्रयणादिसंस्कारं कृत्वा एतच्च व्रीहिसंस्काराणामप्युपलक्षणम् ततश्चरुं श्रपयित्वोद्वास्य स्वगृह्योक्तविधानेनाघारादिनित्याहुतीर्हुत्वा स्थालीपाकस्येति कर्मणि षष्ठी स्थालीपाकस्योपघातं स्थालीपाकमुपहत्योपहत्य स्वल्पं स्वल्पं पौनः पुन्येन गृहीत्वा प्रधानाहुतीर्जुहोति । इति प्रधानाहुतित्रयं हुत्वा स्विष्टकृत चाग्नये स्विष्टकृते स्वाहेति हुत्वा पश्चात्स्थालीस्थं चरुशेषं पात्रान्तरे उद्धृत्य सर्पिषाक्तं कृत्वा पतिः प्रथमं प्रश्नाति प्राश्य च तदेवोच्छिष्टं पत्न्यै प्रयच्छति ततः शुद्ध्यर्थं स्मार्ताचमनं च कृत्वा उदपात्रं पूरयित्वा तेनोदकेन भार्यां त्रिवारमभ्युक्षति विश्वावसुर्नाम ३५ कन्यानामधिपतिर्देवगन्धर्वः भो विश्वावसो देवगन्धर्व त्वं मद्भार्यातः सकाशादुद्गच्छ अन्यां कामपि प्रपूर्व्यां प्रथम-

अथैनामभिपद्यते। अमोऽहमस्मि सा त्वँ सा त्वमस्यमोऽहम्। सामाहमस्मि ऋक्त्वं द्यौरहं पृथिवी त्वम्। तावेहि सँरभावहै सह रेतो दधावहै। पुँसे पुत्राय वित्तय इति ॥१९॥

अथास्या ऊरू विहापयति। विजिहीथां द्यावापृथिवी इति तस्यामर्थं निष्ठाप्य मुखेन मुखँ सन्धाय त्रिरेनामनुलोमामनुमार्ष्टि विष्णुर्योनिं कल्पयतु त्वष्टा
५ रूपाणि पिँशतु। आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते। गर्भं धेहि सिनीवालि गर्भं धेहि पृथुष्टुके। गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजौ ॥२०॥

हिरण्मयी अरणी। याभ्यां निर्मन्थतामश्विनौ देवौ तं ते गर्भं दधामहे दशमे मासि सूतवे। यथाऽग्निगर्भा पृथिवी यथा द्यौरिन्द्रेण गर्भिणी। वायुर्दिशां यथा गर्भ एवं गर्भं दधामि तेऽसाविति नाम गृह्णाति ॥२१॥

१० सोष्यन्तीमद्भिरभ्युक्षति। यथा वातः पुष्करिणीँ समीङ्गयति सर्वतः। एवा ते गर्भ एजतु सहावैतु जरायुणा। इन्द्रस्यायं व्रजः कृतः सार्गडः सपरिश्रयः। तमिन्द्र निर्जहि गर्भेण सावरां सहेति ॥२२॥

युवतिं तरुणो भर्त्रा सह क्रीडमानामिच्छ फर्वतिर्गतिकर्मा प्रकर्षेण फर्व्या गम्या ताम्। अहं पुनर्जायां स्वीयामिमां भार्यां, समिति समुपैमीत्यध्याहारः तत्रावकाशस्तया देय इत्यर्थः ॥१८॥

१५ एवं गन्धर्वं प्रस्थाप्य यथाकाम क्षीरौदनादि भुक्त्वा स्त्रियामालिङ्गेदिति क्रममभिप्रेत्याह। अहं पतिरमः प्राणोऽस्मि त्व सा वागसि कथमावयोरुकरूपत्वमित्याशङ्क्य वाचः प्राणाधीनत्वं प्राणस्य वागाधीनत्वं च प्रसिद्ध-मित्यभिप्रेत्य सा त्वमस्यमोऽहमिति पुनर्वचनम्। तथा अहं सामास्मि त्व च ऋगसि ऋगाधारं हि साम गीयते अस्ति.वावाच्यकर्मसमये मदाधारत्वं तवेत्याधाराधेयभावसामान्यात्। द्यौरहं जनयितव्यस्य पितृत्वात् पृथिवी त्वं तस्य मातृत्वात्। तावावां संरम्भमुद्यमं करवावहै एहि त्वमागछ सह मिलित्वा रेतोधारणमावाभ्यां कार्यम् पुस्त्व-
२० विशिष्टाय पुत्राय वित्तये लाभाय वीर्यवत्पुत्रलाभाय ॥१९॥

विहापयति विश्लेषयति। अवाच्यकर्मान्ते कर्तव्यशेषमुपदिशति त्रिरेनामिति एना योनौ प्रक्षिप्तरेतोबीजां भार्यामनुलोमं मूर्धानमारभ्य पादान्तं मन्त्रमुच्चरंस्त्रिवारं पाणिनानुमार्ष्टि। विष्णुः व्यापनशीलो भगवान्नारायणः तव योनिं कल्पयतु पुत्रोपत्तिसमर्थां करोतु। त्वष्टा सविता तव मम सुतस्य वा रूपाण्यवयवान् पिंशतु विभागशो दर्शनयोग्यान्करोतु। प्रजापतिर्विराडात्मा मदात्मना स्थित्वा। धाता पुनः सूत्रात्मा त्वदीयं गर्भं त्वदात्मना स्थित्वा
२५ पुष्णातु। हे सिनीवाली! अन्नवती! एतत्संज्ञे वा देवी त्वं निषिक्तगर्भं धारय। पृथुर्विस्तीर्णा स्तुका स्तुतिर्यस्याः सा पृथुष्टुका तदात्मना वर्तमाना तस्याः सम्बुद्धिर्हे पृथुष्टुके हे महास्तुते त्वं गर्भं धारय। पुष्करस्रजौ स्वर्णकमला-भरणौ ॥२०॥

हिरण्यमयी हिरण्मय्यौ ज्योतिर्मय्यौ अरणी प्रागभूवतुरिति शेषः याभ्यामरणिभ्या पुरा अमृतरूपं गर्भमश्विनौ निर्मन्थतां निर्मथितवन्तौ तं तथाभूतं गर्भं ते तव जठरे धारयामहे दशमे मासि प्रसोतुम्। इन्द्रेण
३० सूर्येण। अन्ते भर्ता असावहमिति स्वात्मनो नाम गृह्णाति भार्यया वा ॥२१॥

एव गर्भाधानेतिकर्तव्यताजातमुपदिश्यासन्नप्रसवायां भार्यायां कर्तव्यमुपदिशति। यथा वातः वायुः पुष्करिणी तडागं समन्ततः समीङ्गयति स्वरूपोपघातमकृत्वैव चालयति। एवा एवमेव। जरायुणा गर्भवेष्टनचर्मणा मासपेशीरूपेण सह निर्गच्छतु। इन्द्रस्य प्राणस्य गर्भस्य वाऽयं योन्यात्मको व्रजो मार्गः सर्गकाले गर्भाधानकाले वार्गडया निरोधेन सह वर्तमानः सार्गडः कृतः सम्पादितः सपरिश्रयः परिश्रयेण परिवेष्टनेन जरायुणा सहित तं
३५ तथाभूतं मार्गं प्राप्य हे इन्द्र प्राण प्रसूतिमारुतात्म त्वं गर्भेण सह निर्जहि निर्गच्छ तन्निसरणानन्तरं निर्गम्यमान-मांसपेशी सावरशब्दवाच्या तं सावरं च निर्गमय ॥२२॥

जातेऽग्निमुपसमाधाय । अङ्क आधाय कंसे पृषदाज्यमानीय पृषदाज्यस्योपघातं जुहोत्यस्मिन्सहस्रं पुष्यासमेधमानः स्वे गृहे । अस्योपसद्यां मा च्छैत्सीत्प्रजया च पशुभिश्च स्वाहा । मयि प्राणास्त्वयि मनसा जुहोमि स्वाहा ॥२३॥

यत्कर्मणात्यरीरिचम् । यद्वा न्यूनमिहाकरम् ।
अग्निष्टत्स्विष्टकृद्विद्वान्स्विष्टं सुहुतं करोतु स्वाहेति ॥२४॥

अथास्यायुष्यं करोति । दक्षिणं कर्णमभिनिधाय वाग्वागिति त्रिरथास्य नामधेयं करोति वेदोऽसीति तदस्यैतद्गुह्यमेव नाम स्यादथ दधि मधु घृतं संसृज्यानन्तर्हितेन जातरूपेण प्राशयति भूस्त्वयि दधामि भुवस्त्वयि दधामि स्वस्त्वयि दधामि भूर्भुवः स्वः सर्वं त्वयि दधामीति ॥२५॥

अथैनमभिमृशति । अश्मा भव परशुर्भव हिरण्यमस्तृतं भव । आत्मा वै पुत्रनामासि स जीव शरदः शतमिति ॥२६॥

अथास्य मातरमभिमन्त्रयते । इडाऽसि मैत्रावरुणी वीरे वीरमजीजनथाः । सा त्वं वीरवती भव याऽस्मान्वीरवतोऽकरदिति ॥२७॥

अथैनं मात्रे प्रदाय स्तनं प्रयच्छति । यस्ते स्तनः शशयो यो मयोभूर्यो रत्नधा वसुविद्यः सुदत्रः । येन विश्वा पुष्यसि वार्याणि सरस्वति तमिह धातवेऽकरिति ॥२८॥

पुत्रजनने सति तस्मिन्नेव दिने यत्कर्त्तव्यं तदाह । अङ्के उत्सङ्गे संस्थाप्य स्वगृह्योक्तमग्न्युपसमाधानादि कृत्वा कांस्यपात्रे दधिमिश्रितं घृतमवस्थाप्य पृषदाज्यस्योपघातं पृषदाज्यमुपहत्योपहत्य स्वल्पं गृहीत्वा जुहोति । अस्मिन्स्वगृहे अहमेव पुत्ररूपेण वर्धमानो मनुष्याणां सहस्रं पुष्यासमनेकपोषको भूयासम् । अस्य मत्पुत्रस्य उपसद्यां संततौ प्रजया पशुभिश्च सह श्रीर्मा विच्छिन्ना भूत् स्वाहेति होमः । मयि पितरि ये प्राणाः सन्ति तान्पुत्रे समर्पयामि स्वाहा इति प्रधानाहुतिद्वयम् तृतीयाहुतिः स्विष्टकृद्धोमः इति विवेकः ॥२३॥

तृतीयाहुतिमन्त्रमाह ॥२४॥

जातस्य शिशोरायुष्यकर्मोपदिशति । स्विष्टकृद्धोमानन्तरमस्य जातस्य शिशोरायुषे हितमायुष्यमायुर्वृद्धिकरं कर्म करोति । जातस्य शिशोर्दक्षिणं कर्णमभि अभिलक्ष्य पिता स्वमुखं निधाय तत्र विलक्षणा ( त्रयील ) वाक्त्वयि प्रविशत्वित्यभिप्रायवान्वाग्वागिति त्रिवारं जपेत् । एवमायुष्यं कर्म कृत्वा नामधेयं कुर्यात् । वेदोऽनुभवः सर्वस्य निजं स्वरूपं परमात्मलक्षणमसि । गुह्यं गोप्यमेव स्यान्न तु लोकप्रसिद्धम् । दधि मधु घृतमेकीकृत्य अनन्तर्हितेन वस्त्वन्तराव्यवहितेन जातरूपेण हिरण्येन । भूरिति व्याहृत्युपलक्षितमृग्वेदं त्वयि दधामि धारयामि भुव इत्युपलक्षितं यजुर्वेदं स्वरिति सामवेदम् ॥२५॥

इदानी जातं कुमारं पिता हृदि स्पृशति । अश्मेव पाषाण इव दृढः स्थिरश्च भव । परशुरिव वज्र इव यथा तेजःसंघो वज्रः पर्वतान्भिनत्ति तद्वत्सर्वावयवैरिन्द्रियादिभिश्च दृढः दुरितदुःखदुष्टछेदकश्च भव वज्रो वै परशुरिति श्रुतेः ( शत० ३-६-४-१० ) यद्वा परशुः कुठारः सोऽपि लोहमयः । हिरण्यं सुवर्णं यथा त्वमपि अस्तृतम् अच्युतमक्षीणं शुद्धं तेजोमयं तथा त्वमपि अस्तृतो अच्युतोऽक्षीणः शुद्धस्तेजोमयश्च भव । आत्मा देहः सन्वै निश्चयेन पुत्रेतिसंज्ञामात्रेण भिन्नोऽसि न तु स्वरूपेण ॥२६॥

इडा भोग्यासि यद्वा इडापात्र्यसि यस्या पुरोडाशो विभज्यते सा यद्वा इडा पृथिवीरूपा । किं च मैत्रावरुणी मित्रावरुणाभ्यां सम्भूतो मैत्रावरुणो वसिष्ठस्तस्य भार्या मैत्रावरुणी अरुन्धतीत्यर्थः यद्वा मैत्रावरुणी ऋत्विग्विप्रपत्नी यद्वा मित्रावरुणयोरुत्पन्ना । हे वीरे सम्भृतिके ( त्तके त्तिके ) त्वं वीरं पुत्रमजीजनथाः अमीपीः ॥२७॥

अथानन्तरं स्वाङ्कस्थं पुत्रं तन्मात्रे प्रदाय तस्याः स्तनं पिता पुत्रस्य मुखे प्रयच्छति । हे सरस्वति यस्ते स्तनवच्छिशुस्थानीयानां प्राणिनामाप्यायनकारी लौकिकवैदिकसुखस्वरूपस्तनः शशयः शयानस्तव देहे वर्तमानोऽन्यैरप-

तं वा एतमाहुः। अतिपिता बताभूरतिपितामहो बताभूः परमां बत काष्ठां प्राप श्रिया यशसा ब्रह्मवर्चसेन य एवंविदो ब्राह्मणस्य पुत्रो जायत इति ॥२९॥

अथ वंशः। तदिदं वयं भारद्वाजीपुत्राद्भारद्वाजीपुत्रो वात्सीमाण्डवीपुत्राद्वात्सीमाण्डवीपुत्रः पाराशरीपुत्रात्पाराशरीपुत्रो गार्गीपुत्राद्गार्गीपुत्रः पाराशरीकौण्डिनीपुत्रात्पाराशरीकौण्डिनीपुत्रो गार्गीपुत्राद्गार्गीपुत्रो गार्गीपुत्राद्गार्गीपुत्रो बाडेयीपुत्राद्बाडेयीपुत्रो मौषिकीपुत्रान्मौषिकीपुत्रो हारिकर्णीपुत्राद्धारिकर्णीपुत्रो भारद्वाजीपुत्राद्भारद्वाजीपुत्रः पैङ्गीपुत्रात्पैङ्गीपुत्रः शौनकीपुत्राच्छौनकीपुत्रः ॥३०॥

काश्यपीबालाक्यामाठरीपुत्रात्। काश्यपीबालाक्यामाठरीपुत्रः कौत्सीपुत्रात्कौत्सीपुत्रो बौधीपुत्राद्बौधीपुत्रः शालङ्कायनीपुत्राच्छालङ्कायनीपुत्रो वार्षगणीपुत्राद्वार्षगणीपुत्रो गौतमीपुत्राद्गौतमीपुत्र आत्रेयीपुत्रादात्रेयीपुत्रा गौतमीपुत्राद्गौतमीपुत्रो वात्सीपुत्राद्वात्सीपुत्रो भारद्वाजीपुत्राद्भारद्वाजीपुत्रः पाराशरीपुत्रात्पाराशरीपुत्रो वार्कारुणीपुत्राद्वार्कारुणीपुत्र आर्तभागीपुत्रादार्त्तभागीपुत्रः शौङ्गीपुत्राच्छौङ्गीपुत्रः साङ्कृतीपुत्रात्साङ्कृतीपुत्रः ॥३१॥

आलम्बीपुत्रात्। आलम्बीपुत्र आलम्बायनीपुत्रादालम्बायनीपुत्रो जायन्तीपुत्राज्जायन्तीपुत्रो माण्डूकायनीपुत्रान्माण्डूकायनीपुत्रो माण्डूकीपुत्रान्माण्डूकीपुत्रः शाण्डिलीपुत्राच्छाण्डिलीपुत्रो राथीतरीपुत्राद्राथीतरीपुत्रः क्रौञ्चिकीपुत्राभ्यां कौञ्चिकीपुत्रौ वैदभृतीपुत्राद्वैदभृतीपुत्रो भालुकीपुत्राद्भालुकीपुत्रः प्राचीनयोगीपुत्रात्प्राचीनयोगीपुत्रः साञ्जीवीपुत्रात्साञ्जीवीपुत्रः कार्शकेयीपुत्रात्कार्शकेयीपुत्रः ॥३२॥

प्राश्नीपुत्रात्। आसुरिवासिनः प्राश्नीपुत्र आसुरायणादासुरायण आसुरेरासुरिर्याज्ञवल्क्याद्याज्ञवल्क्य उद्दालकादुद्दालकोऽरुणादरुण उपवेशेरुपवेशिः कुश्रेः कुश्रिर्वाजश्रवसो वाजश्रवा जिह्वावतो बाध्योगाज्जिह्वावान्बाध्योगोऽसिताद्वार्षगणादसितो वार्षगणो हरितात्कश्यपाद्धरितः कश्यपः शिल्पात्कश्यपाच्छिल्पः

भुक्तः (स्नुप) सुप्त इवास्ते इति शेषः। तं तादृशं सर्वप्राण्युपकारकं स्तनमिह मदीयभार्यास्तने प्रविष्टा सती (सति) धातवे पानाय अकः कुरु प्रयच्छ। धातव इति धेट् पाने ॥२८॥

एवं मन्त्रवद्गर्भाधानादिकर्मण्यनुष्ठिते सति किं स्यादित्यपेक्षायां महान्स्तुत्यः पुत्रो भवतीत्याह। बत विस्मये। पितरमतीत्य वर्तस इत्यतिपिता त्वमभूः ॥२९॥

इदानीं समस्तस्यापि वेदस्याध्यापकपरम्परामाह। पूर्ववद्विद्याभेदादतीतस्य काण्डद्वयस्य प्रत्येकं वंशभाक्त्वेऽपि नास्य पृथक्त्वभावित्वमस्य (भागित्व ?) खिलकाण्डत्वेन सर्ववेदशेषत्वात् तथा च समासौ पठितोऽयं वंशः समस्तस्यैव प्रवचनस्य भवति नाव्यवहितखिलकाण्डस्यैव। उक्तवेदार्थविज्ञानस्य साकल्येन प्रतिपत्त्यर्थं सर्वत्र प्रवचनसमासौ वंशः कीर्त्तनीयः यतः सर्वज्ञानां तेषां स्मरणे सति सम्यक् ज्ञानभानूदयो भवतीति। पुत्रमन्थकर्मणः स्त्रीसंस्कारार्थत्वेनोक्तत्वात्तत्संनिधानदयं वंशःस्त्रीप्राधान्येनोच्यते ॥३०-३२॥

आदित्येन सूर्येण प्रोक्तत्वादादित्यानि। वाजिशाखावच्छिन्नानां यजुषां सूर्येणोपदिष्टत्वं याज्ञवल्क्येन प्राप्तत्वं च पुराणेषु प्रसिद्धम्। यद्वा आदित्यात्मत्वादादित्यानीति निरुपचरितानीत्यर्थः आदित्यो हि वेदात्मा हिरण्यगर्भः

कश्यपः कश्यपान्नैध्रुवेः कश्यपो नैध्रुविर्वाचो वागम्भिण्या अम्भिण्यादि-
त्यादादित्यानीमानि शुक्लानि यजूंषि वाजसनेयेन याज्ञवल्क्येनाख्यायन्ते ॥३३॥

इति बृहदारण्यकोपनिषदि षष्ठाध्याये चतुर्थं ब्राह्मणम् ॥४॥
इति बृहदारण्यकोपनिषदि षष्ठोऽध्यायः ॥६॥
इति बृहदारण्यकक्रमेण नवमोऽध्यायः ॥९॥　　५

ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥

ॐ शान्तिः शान्तिः शान्तिः

इति माध्यन्दिनीया बृहदारण्यकोपनिषत्

प्रसिद्धः । तत एव हिरण्यगर्भात्सम्प्रदायोक्ततदादिकान्सर्वानेव प्रति पारम्पर्येणागतोऽयं सम्प्रदाय इति युक्तं यजुषामादि- १०
त्यत्वम् । कथम्भूतानि यजूंषि शुक्लानि शुद्धानि यद्वा ब्राह्मणेनामिश्रितमन्त्रात्मकानि ॥३३॥

इति श्रीविद्वज्जनतिलकद्विवेदश्रीनारायणसूनुना द्विवेदगङ्गेन विरचितमाध्यन्दिनारण्यकोपनिषद्व्याख्यायां
मुख्यार्थप्रकाशिकायां षष्ठाध्यायस्य चतुर्थं ब्राह्मणम् ॥४॥

इति बृहदारण्यकोपनिषदि षष्ठोऽध्यायः ॥६॥

इति माध्यन्दिनशाखीयारण्यकक्रमेण नवमोऽध्यायः ॥९॥　　१५

इति श्रीविद्यारण्यमुनिविरचितव्याख्यया
[1]श्रीद्विवेदगङ्गविरचितव्याख्यया
च समलङ्कृता
माध्यन्दिनशाखीयबृहदारण्यकोपनिषत् सम्पूर्णा

१. श्रीद्विवेदगङ्गव्याख्या शेषांशपूरणाय अ० ६, ब्रा० १ मं० १९, पृष्ठसंख्या १४७ तः आरभ्यते ।　　२०

# उपनिषत्कण्डिकानां सूचिका

# माध्यन्दिनशाखीयबृहदारण्यकोपनिषन्मन्त्रसूची

## काण्वशाखीयोपनिषच्छब्दवाक्यकोषः

इ

## ऊ



## ऋ

## ऐ



## ओ



## औ



## क

### फ



### ब

श

## ॥ बृहदारण्यकोपनिषद्भाष्यटीकयोरुद्धृतवाक्यानामाकरः ॥

स्वयंज्योतिः — बृ० ४।३।९
स्वरूपपररूपाभ्यां सर्वम् — श्लो० वा० अभाव० १२
स्वर्गकामश्चैत्यं वदेत् — बौ० अ०
स्वर्गकामोऽग्निहोत्रं जुहुयात्
स्वात्मानाऽऽत्माऽपनीतो भवति

स्वाध्याय एवोत्सृजमानो वाचम् — आ० ध० १।१२।११
स्वाध्यायोऽध्येतव्यः — तै० आ० २।१५
हिरण्यगर्भं पश्यत जायमानम् — श्वे० ३।४।१
हिरण्यदा अमृतत्वं भजन्ते — ऋ० वे० १०।१०७।२
हृदये ह्येव रूपाणि — बृ० ३।९।२०

## प्रकाशिताः ग्रन्थाः

**Published Books**

१. वैदिकसम्प्रदायान्तर्गता औपनिषद दश शान्ति ( *SH ) आचार्य श्री महेशानन्द गिरि
आकार—२० × ३०/१६ पृष्ठ—६+७५
मूल्य : २.५०

२. मानसोल्लास-माधुरी (SH, श्री महेशानन्द गिरि
( श्रीदक्षिणामूर्तिस्तोत्रवार्तिक )
आकार—२० × ३०/१६ पृष्ठ—५८+४१९
मूल्य : २०.००

३. साधनसंग्राम-१ ( H ) श्री महेशानन्द गिरि
आकार—२० × ३०/१६ पृष्ठ—८+४८०
मूल्य : २०.००

४. साधनसंग्राम-२ ( H ) श्री महेशानन्द गिरि
आकार—२० × ३०/१६ पृष्ठ—८+९३
मूल्य : ५.००

५. श्वेताश्वतरोपनिषद् (SH) श्री महेशानन्द गिरि
आकार—२० × ३०/१६ पृष्ठ—२० + ५१२
मूल्य : २०.००

६. ईशावास्योपनिषद् (SH) श्री महेशानन्द गिरि
आकार—२० × ३०/१६ पृष्ठ—२४
मूल्य : १.००

७. कठोपनिषद्-१ ( SH ) श्री महेशानन्द गिरि
( प्रथमाध्यायपर्यन्त )
आकार—२३ × ३६/१६ पृष्ठ—२४+३२०
मूल्य : २०.००

८. स्तुतिकदम्बः ( S ) सं श्री महेशानन्द गिरि
( स्तोत्रसंग्रहः )
आकार—२० × ३०/१६ पृष्ठ—४+११५
मूल्य : १० ००

९. मानवता की ओर ( H ) श्री महेशानन्द गिरि
आकार—२० × ३०/१६ पृष्ठ—१०+२३५
मूल्य : १५ ००

१०. व्यक्तित्व का विकास (H) श्री महेशानन्द गिरि
आकार—२३ × ३६/ ६ पृष्ठ—६+९५
मूल्य : ५.००

११. गीता प्रवेश-१ ( H ) श्री महेशानन्द गिरि
आकार—२२ × ३२/१६ पृष्ठ—१२ × २३०
मूल्य : १५ ००

१२. रुद्राध्याय ( SH ) आचार्य श्री महेशानन्द गिरि
आकार—२० × ३०/१६ पृष्ठ—६३८+१२४
मूल्य : ७५ ००

13. Our Dharma ( E )
Shri Maheshananda Giri
Size—23 × 36/16 Pages—55
Price : 2.50

14. Jivan Yajna ( E )
Shri Maheshananda Giri
Size—20 × 30/16 Pages—13 + 155
Price : 10.00

१५. उपदेशसाहस्री (S) सं० श्री एस. सुब्रह्मण्यशास्त्री
आकारः—२० × ३०/८ पृष्ठाः—३६+१८४
मूल्यम् : ३०.००

१६. सिद्धान्तबिन्दुः (S) सं० श्री एस. सुब्रह्मण्यशास्त्री
आकारः—२० × ३०/८ पृष्ठाः—२२+१७८
मूल्यम् : ३०.००

१७. शतश्लोकी ( S ) सं० श्री एस. सुब्रह्मण्यशास्त्री
आकारः—२० × ३०/८ पृष्ठाः—१२+६०
मूल्यम् : १०.००

१८. पञ्चीकरणम् ( S ) सं० श्री एस. सुब्रह्मण्यशास्त्री
आकारः—२० × ३०/८ पृष्ठाः—१२+४८
मूल्यम् : १०.००

१९. प्रकरणाष्टकम् (S) सं० श्री एस. सुब्रह्मण्यशास्त्री
आकारः—२० × ३०/८ पृष्ठाः—१८८
मूल्यम् : ३०.००

२०. प्रकरणद्वादशी (S) सं० श्री एस. सुब्रह्मण्यशास्त्री
आकारः—२० × ३०/८ पृष्ठाः—७००
मूल्यम् : ८५.००

२१. उपनिषद्भाष्यम्-१ ( S )
सं० श्री एस. सुब्रह्मण्यशास्त्री
( आदितः ८ सटीकोपनिषदाम् )
आकारः—२३ × ३६/८ पृष्ठाः—३४+७४६
मूल्यम् : १५०.००

२२. बृहदारण्यकोपनिषत्सम्बन्धभाष्यवार्तिकम् ( S )
सं० श्री एस. सुब्रह्मण्यशास्त्री
आकारः—२३ × ३६/८ पृष्ठाः—२४०
मूल्यम् : ३०.००

२३. बृहदारण्यकोपनिषद्भाष्यवार्तिकम्-१ ( S )
सं० श्री एस. सुब्रह्मण्यशास्त्री
( प्रथमद्वितीयाध्यायसन्दृब्धम् )
आकारः—२३ × ३६/८ पृष्ठाः—८००
मूल्यम् : १५०.००

---

* S = Samskrit, H = Hindi, E = English

२४. उपनिषद्भाष्यम्-२
सं० श्री एस. सुब्रह्मण्यशास्त्री
( छान्दोग्योपनिषदः )
आकारः—२३ × ३६/८ पृष्ठाः—५४०
मूल्यम् : ११५.००

25. Vedanta Through Shri Shankar's Prakarans (E) Shri Maheshananda Giri
Size—20 × 30/8 Pages—64
Price : 15.00

26. An Introduction to Chhandogya Bhashya (E)
Shri Maheshananda Giri
Size—23 × 36/8 Pages—82
Price : 20.00

27. An Introduction to Brihadaranyak Bhashya ( E )
Shri Swami Maheshanand Giri
Size—23 × 36/8 Pages........
Price : 30.00

२८. उपनिषद्भाष्यम्-३ (S) सं० श्री एस. एस. शास्त्री
( बृहदारण्यकोपनिषदः )
आकारः—२३ × ३६/८ पृष्ठाः—७७५
मूल्यम् : १५०.००

२९. बृहदारण्यकोपनिषद् (S)
सं० श्री एस. सुब्रह्मण्यशास्त्री
( माध्यन्दिनशाखीया श्रीविद्यारण्यदीपिकायुता )
आकारः—२३ × ३६/८ पृष्ठाः—१९२
मूल्यम् : ३०.००

## प्रकाश्यमानाः ग्रन्थाः
## Forthcoming Publications

१. बृहदारण्यकोपनिषद्भाष्यवार्तिकम्-२ ( S ) :
सं० श्री एस. सुब्रह्मण्यशास्त्री
( अध्यायाः-३-४-५-६ )
श्रीमत्सुरेश्वराचार्यकृतवार्तिकमिदं श्रीमदानन्दगिरिविरचितशास्त्रप्रकाशिका-व्याख्योपेतं खण्डद्वये ।

२. ब्रह्मसूत्रभाष्यम्-१ ( S ) :
सं० श्री एस. सुब्रह्मण्यशास्त्री
( भामतीप्रस्थानस्य )
वाचस्पतिमिश्र विरचितभामती—तदीय-टीकाकल्पतरु-तदीयटीकापरिमलोपेतम् ।

३. ब्रह्मसूत्रभाष्यम्-२ ( S ) :
सं० श्री एस. सुब्रह्मण्यशास्त्री
पद्मपादाचार्यविरचितपञ्चपादिका—तट्टीकापञ्चपादिकाविवरण—तट्टीका-ऋजुविवरणसंवृत्तम् ।

४. ब्रह्मसूत्रभाष्यम्-३ ( S ) :
सं० श्री एस. सुब्रह्मण्यशास्त्री
( उभयप्रस्थानटीकानाम् )
अनुभूतिस्वरूपाचार्यविरचितप्रकटार्थ-विवरण, आनन्दगिरिविरचितन्याय-निर्णय, रामानन्दयतिविरचितरत्नप्रभा, चित्सुखाचार्यविरचितभाष्यभावप्रकाशि-केतिटीकाचतुष्टयाङ्कृतम् ।

५. श्रीमद्भगवद्गीता-१-२ ( S )
सं० श्री एस. सुब्रह्मण्यशास्त्री
श्रीशाङ्करभाष्यं, तदीयटीकाभिस्सह, अथ चान्यप्राचीनाचार्यविरचिताभिष्टीकाभिस्साकं खण्डद्वये ।

६. उपदेशसाहस्री ( H ) : श्रीगजानन्द शास्त्री
"मूसलगांवकर" मूलग्रन्थ व आनन्दगिरिटीका का विस्तृत अनुवाद प्रस्तुत किया जायेगा ।

महेश-अनुसन्धान-संस्थानम्
श्रीदक्षिणामूर्तिमठः
डी० ४९/९ मिश्रपोखरा
वाराणसी—२२१ ०१०